Prājña Pāṭhashālā Maṇḍala Grantha Mālā

# *MĪMĀṂSĀKOṢAḤ*

## Part I

*Edited by*

**Kevalānandasaraswati**

**1952 ]** **[ Rs. 35**

# प्रकाशकस्य निवेदनम्



अस्मद्गुरुचरणैः श्रीमत्केवलानन्दसरस्वतीभिः पूर्वमीमांसाकोशः साङ्गः सपरिशिष्टो व्यरचि । तस्य स्वरूपं सविस्तरं तैः स्वयमेव प्रस्तावे विशदीकृतम् । अयं कोशः षट्सु भागेषु विभज्य प्रकाशयितव्योऽस्ति । अस्य संपादनं सर्वथा श्रीपूज्यपादकेवलानन्दस्वामिभिरेव सुदीर्घकालं जैमिनीयतन्त्रस्य तत्संगतानां भाष्य-वार्तिकादिटीकानामन्येषां च मीमांसानिबन्धानां, कल्पसूत्राणां, वेदचतुष्टयस्य च आलोडनं कृत्वा निर्वर्तितमस्ति । अत्र त्वयं विशेषो यत् ऐतिहासिकसरणिमनुरुध्य व्याख्याक्रम उपन्यस्तोऽस्ति । अस्य कोशस्यान्ते परिशिष्टत्रयमन्तर्भावितमस्ति, यत्र भाष्यवार्तिकादिषूद्धृतानां श्रुतिवाक्यानां मूलस्थलनिर्देशपूर्वकं विषमस्थलटिप्पणीसहिता अकारादिवर्णानुक्रमेण सूची, याज्ञिकपदार्थविवेचनकोशः, दर्शपूर्णमासाग्निष्टोमादिप्रकृति-यागप्रयोगाश्च संगृह्यन्ते ।

बहुवित्तव्ययायाससाध्यमिदं प्रकाशनकर्म । ये खलु वैदिकविद्याप्रणयिनः उदारधियस्तैरत्र स्वधनव्ययकरणेनानुपमः पुण्यसंदोहः समधिगन्तव्य इति सविनयं निवेदयामः ।

मुंबईराज्यस्य शिक्षाविभागेन दश सहस्राणि रूप्यकाणि दत्त्वा अस्य प्रकाशनव्ययस्य भारो लघूकृत इति तस्य शतशो धन्यवादान् वितरामः । किंच वर्तकोपाह्वैः महादेवतनूजैः केशवनामधेयैः पञ्च सहस्राणि रूप्यकाणि प्रकाशनव्ययार्थं दत्त्वा परमौदार्यं प्रकटीकृतमिति ते नितरां प्रशंसामर्हन्ति । पुण्यपत्तनविद्यापीठेन प्रथमभागमुद्रणार्थं रूप्यकाणां सहस्रं, मुंबईविद्यापीठेन च पञ्च शतानि रूप्यकाणि दत्त्वा प्रकाशनकार्यमुपकृतमिति तयोर्विद्यापीठयोरनुग्रहं नितराममिनन्दामः ।

मार्गशीर्ष: शुक्ल: ४,<br>शाकः १८७४.

**लक्ष्मणशास्त्री जोशी, तर्कतीर्थः**<br>अध्यक्षः प्राज्ञपाठशालामण्डलस्य<br>मुख्यसंपादकश्च धर्मकोशस्य

# अनुक्रमणिका

ॐ नमो गुरुभ्यः ।

निर्मथ्य निगमसिन्धून् विविधन्यायाभिधानमन्थानैः ।
धर्मसुधामुद्धरते भूयो मुनये नमोऽस्तु जैमिनये ॥

# प्रस्तावः

## मीमांसा प्राचीनैव--

मीमांसा किल बहोः कालात् प्रागेव याज्ञिकानुष्ठानेषु प्रवृत्तेति श्रूयते । ऐतरेयब्राह्मणे तावत् अग्निष्टोमगतदीक्षणीयेष्टौ अग्नाविष्णुदेवताक एकादशकपालः पुरोडाश उक्तः । तस्य अग्निश्च विष्णुश्चेति द्वौ देवौ । तत्रेयमाशङ्का कैश्चित् ब्रह्मवादिभिरुपन्यस्ता ' तदाहुः, यदेकादशकपालः पुरोडाशः, द्वावग्नाविष्णू, का एनयोस्तत्र क्लृप्तिः का विभक्तिः ' इति । तत्र अन्यैर्ब्रह्मवादिभिः प्रत्युक्तं, अष्टाकपालः आग्नेयः, त्रिकपालो वैष्णवः इति । तत्र आग्नेयस्य कथमष्टाकपालत्वनियमः इत्याकाङ्क्षायां ' अष्टाक्षरा वै गायत्री, गायत्रमग्नेश्छन्दः ' इति युक्तिरुदाहृता । अयमर्थः, अग्नेः गायत्रीछन्दसश्च प्रजापतेर्मुखात् समकालमुत्पन्नत्वेन संबद्धत्वात्, गायत्र्याश्च प्रतिचरणमष्टाक्षरत्वात् आग्नेयपुरोडाशस्यापि अष्टाकपालत्वमिति । अथ वैष्णवस्य कथं त्रिकपालत्वमिति चेत्, तत्राह ' त्रिर्हीदं विष्णुर्व्यक्रमत ' यस्मात् विष्णुना सर्वं विश्वं त्रिभिः पादप्रक्रमैर्व्याप्तं, तस्मात् विश्वव्यापकपादप्रक्रमत्रित्वसंबन्धात् विष्णोः पुरोडाशस्य त्रिकपालत्वं युक्तमिति ( ऐब्रा. १।१।६–७ ) ।

तथा अग्नीषोमप्रणयने अध्वर्युणा अनुवचनप्रैषे दत्ते 'सावीर्हि देव प्रथमाय पित्रे इति सावित्रीमन्वाह' इति विधिना होत्रा सवितृदेवताका 'सावीर्हि देव' इत्यादिका ऋक् अनुवक्तव्या इत्युक्तम् । तत्रेयमाशङ्का उद्भाविता ' तदाहुः यदग्नीषोमाभ्यां प्रणीयमानाभ्यां अनु वाचा आह अथ कस्मात् सावित्रीमन्वाह ' इति । अग्नीषोमप्रणयनार्थं अग्नीषोमदेवताका ऋक् अनुवक्तव्या, सवितृदेवताका कथं विधीयते इति । तत्रोत्तरमेवमुक्तम्– ' सविता वै प्रसवानामीशे तस्मात् सावित्रीमन्वाह ' इति । सर्वाणि हि कार्याणि सवितृसंमत्यैव भवन्ति, नहि सवितृप्रकाशं विना पदात् पदमपि चलितुं कश्चित् शक्नोति । तस्मात् सर्वासां कार्यसंमतीनां सविता ईशे ईष्टे । तस्मात् तत्संमतिप्राप्त्यर्थं प्रणयनारम्भे सवितृदेवताकैव ऋक् अनुवक्तव्या इति । अन्यान्यपि अनेकान्युदाहरणानि शङ्कासमाधानात्मकमीमांसासूचकानि ब्राह्मणग्रन्थेषु द्रष्टव्यानि ।

**अथ** ऐतरेयारण्यके (३।२।१२) 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्ते, एतमग्नावध्वर्यवः, एतं महाव्रते छन्दोगाः' इति। बह्वः ऋचः पठितव्या येषां ते बह्वृचा ऋग्वेदिनः महति उक्थे शस्त्रे बृहतीसहस्रात्मके एतं परमात्मानमेव मीमांसन्ते विचारयन्ति। अध्वर्यवः यजुर्वेदिनः अग्नौ अग्निचयनगतमन्त्रेषु परमात्मानं मीमांसन्ते 'युञ्जते मन उत युञ्जते धियः' इत्यादिषु। छन्दोगाः छन्दःसु गानकर्तारः सामवेदिनस्तु महाव्रते महाव्रतगतमन्त्रेषु परमात्मानं मीमांसन्ते इति। अत्र 'मीमांसन्ते' इति साक्षान्मीमांसावाचकपदमेव प्रयुक्तम्।

**मीमांसा नाम** संशयपूर्वकाद्विचारात् जायमानो निर्णयः। सोऽयमर्थः तैत्तिरीयब्राह्मणे उक्तः (२।१।२) कदा चित् पलाय्य गच्छन्तमग्निमवरोद्धुं प्रजापतिः अग्नेः पृष्ठतः अधावत्। न च अतिवेगवन्तमग्निमवरोद्धुं प्रजापतिरशक्नोत्। श्रान्तश्च प्रजापतिर्धर्मव्याप्तोऽभूत्। ततः सः क्व चिदुपविश्य स्वललाटात् स्वेदजलमुन्मृष्टवान्। तच्च जलं घृतरूपेण प्रादुरभूत्। एतस्मिन्नन्तरे होमकालः प्राप्तः। आज्येन च होमः कर्तव्यः, तदानीमन्यस्य द्रव्यस्याभावात्। तेन तदाज्यं होतुं हस्ते गृहीतवान् प्रजापतिः। अपवित्रस्वेदजलजन्यत्वाच्च तस्य घृतस्य प्रजापतिः संदेहं प्राप्नोत्। तदुक्तं 'तद् व्यचिकित्सत्। जुहवानि, मा हौषमिति। तद्विचिकित्सायै जन्म। य एवं विद्वान् विचिकित्सति। वसीय एव चेतयते' इति। अस्यायमर्थः— तत् स्वेदजन्यं घृतं प्रति वि—अचिकित्सत् विचिकित्सां संशयं प्रापत्। कोऽसौ संशयः तमाह, किं जुहवानि अनेन घृतेन किं मया होमः कर्तव्यः, अथवा मा हौषं मया होमो न कर्तव्यः अनेन घृतेन इति। होमयोग्यं न वा घृतमेतत् इति संशयः। तदेतत् विचिकित्सायै विचिकित्सायाः जन्म। सोऽयमेतादृशः संशयः प्रजापतौ उत्पन्न इत्यर्थः। यः कश्चित् विद्वान् एवं प्रजापतिवत् विचिकित्सति संशयं प्राप्य विचारयति, सः वसीय एव श्रेष्ठतममेव चेतयते जानाति, निर्णयं लभते। एवमत्र संशयपूर्वकविचारजन्यो निर्णयः इति स्पष्टमेव मीमांसास्वरूपमुक्तम्।

गवामयनविकृतिरूपस्य उत्सर्गिणामयनस्य संबन्धि किं चिदहः परित्याज्यं, न वा इति विचारितं (तैसं. ७।५।७) 'उत्सृज्यं नोत्सृज्यमिति मीमांसन्ते ब्रह्मवादिनः, तदाहुरुत्सृज्यमेवेति, अमावास्यायां च पौर्णमास्यां चोत्सृज्यमित्याहुः' इति। अत्रापि 'मीमांसन्ते' इति स्पष्टः शब्दः।

बृहदारण्यकोपनिषद्यपि (१।५।२१) 'अथातो व्रतमीमांसा' इत्यारभ्य अध्यात्ममिन्द्रियाणां अधिदैवतं च देवतानां असाधारणं कर्म विचारितम्।

छान्दोग्येऽपि (५।११।१) औपमन्यवादयः 'महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा, किं ब्रह्मेति' इति मीमांसाशब्दः स्पष्टः। 'मीमांसाञ्चक्रुः' इत्येतावतः क्रियापदस्य स्वीकारेऽपि न हानिः।

अथातो होत्राणामेव मीमांसा ( शांश्रौ. १८।२४।३४ )। अत्र होत्रनुष्ठान-विचारानन्तरं होत्रकाणामेव विचारोऽवशिष्टः इति व्याख्यानं आनर्तीयभाष्ये ।

'अथास्तमिते आदित्ये उदकं गृह्णीयात्, न गृह्णीयात् इति मीमांसन्ते ब्रह्मवादिनः' (बौध. १।६।११ ) इत्यत्र पूर्वोत्तरपक्षपरिग्रहेण विचारो मीमांसापदार्थः स्पष्टः ।

' शुचेरश्रद्दधानस्य श्रद्दधानस्य चाशुचेः । मीमांसित्वोभयं देवाः सममन्नमकल्पयन् ॥ ' (बौध. १।१०।५) इत्यत्र गोविन्दस्वामिना विवरणे 'मीमांसित्वा विचार्य' इति व्याख्यातम् । तेन विचारार्थको मीमांसाशब्दः ।

गौतमधर्मसूत्रे ' तत्र प्रायश्चित्तं कुर्यात् न कुर्यात् , इति मीमांसन्ते ' ( १९।४ ) इति संशयमुपन्यस्य ' न कुर्यादित्याहुः ' ( ५ ) इति पूर्वपक्षप्रतिज्ञामुपन्यस्य ' नहि कर्म क्षीयते इति ' ( ६ ) इत्यनेन पूर्वपक्षे युक्तिरुपन्यस्ता । 'कुर्यादित्यपरम् ' ( ७ ) इति सिद्धान्त-प्रतिज्ञामुक्त्वा ' पुनःस्तोमेनेष्ट्वा ' ( ८ ) इत्यादिभिः सूत्रैः तत्साधिकाः श्रुतय उदाहृताः । तेन पूर्वोत्तरपक्षपरिग्रहेण निर्णयान्तो विचारो मीमांसापदार्थः स्पष्टो भवति ।

'तत्र प्रायश्चित्तं कुर्यान्न कुर्यादिति मीमांसन्ते । ( बाध. २२।२ ) न कुर्यादित्याहुः ( ३ ) । नहि कर्म क्षीयते इति ( ४ ) । कुर्यादित्येव तस्माच्छ्रुतिनिदर्शनात् ( ५ ) । ' इति अत्रापि मीमांसापदस्य विशिष्टविचारपरत्वं स्पष्टम् ।

सर्वथाऽपि मानवोत्पत्तिमारभ्यैव मीमांसाया अप्यारम्भः । नापि मानवा एव मीमांसन्ते पशुपक्ष्यादयस्तिर्यञ्चोऽपि भक्ष्यमिदमभक्ष्यं वेति मीमांसित्वैव भक्षयन्ति । वनचटकादयः पक्षिणोऽपि प्रसूतिकाले प्राप्ते स्थानं मीमांसित्वा अनुकूले एव स्थाने अनुकूलरचनं कुलायं निर्मिमते । इति तिर्यक्ष्वपि मीमांसा समस्त्येव । सेयं मीमांसा यथाप्रज्ञं वर्धमाना भूयसीमेव परिणतिं कालेन प्राप्ता । तत्रेदं पण्डितबुद्धिप्रकर्षाधीनं वेदवाक्यार्थनिर्णायकं वाक्यार्थमीमांसाप्रवाहनिष्कर्षरूपं जैमिनिमीमांसादर्शनं ' अथातो धर्मजिज्ञासा ' इत्यारभ्य ' यथा याज्यासंप्रैषो यथा याज्यासंप्रैषः ' इत्यन्तं षोडशाध्यायात्मकम् ।

**मीमांसाकोषावश्यकता—**

मातुः कटिपार्श्वेऽवस्थितः पद्भ्यां रिङ्गमाणो वा बालः मातापित्रादिभिरुच्चारितान् शब्दान् शृण्वन् तत्कृताश्च क्रियाः पश्यन् कियत्या चित् कालकलया अस्य वाक्यस्यायमर्थ इत्यवगच्छति । एवमेव नानाविधान् शब्दान् शृण्वन् पश्यंश्च कर्माणि वाक्यावयवान् पदरूपान् तदर्थांश्चापि भेदेनाकलयति । एवं पदावयवानपि प्रकृतिप्रत्ययरूपान् आपाततोऽवगच्छति । एवं पदानां पदार्थानां च वाच्यवाचकभावं जानन् स्वयमपि तथा व्यवहरति । अशिक्षिता निरक्षरा हालिकाजाविपालादयोऽपि सर्वं व्यवहारं कुर्वन्तो दृश्यन्ते । सोऽयं व्यवहारात् शक्तिग्रह इत्युच्यते । श्रवण-

दर्शनरूपव्यवहारेणैव लिप्यादिज्ञानं विनैव पदपदार्थयोः वाक्यवाक्यार्थयोश्च संबन्धो बोध्यबोधकरूपो व्यवहारेणैव जीवनपर्याप्तो ज्ञायते इत्यर्थः। ततोऽधिकज्ञानमिच्छंस्तु व्यवहारादितरानुपायानवलम्ब्य भूयो ज्ञानं लभते। पदशक्तिग्रहोपायाश्च प्राचीनैरुक्ताः ' शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च। वाक्यस्य शेषाद् विवृतेर्वदन्ति सांनिध्यतः सिद्धपदस्य वृद्धाः॥' वृद्धाः एतेभ्य उपायेभ्यः शक्तिग्रहं वदन्ति। तत्र अशिक्षितस्य व्यवहारो मुख्य उपायः, इतरे केचिद्यथायथं केचित्त नैव संभवन्ति। शिक्षमाणानां च प्रौढानां कोशो व्याकरणं च प्रधानम्। सुशिक्षितानां तु कोश एव मुख्यः उपायः भिन्नभाषाज्ञानादौ। विश्वमेदिन्यादयः कोशाः प्राचीनाः शब्दार्थसंबन्धज्ञानार्थमेव विरचितास्तदात्वे विद्वद्भिः। अमरत्रिकाण्डी तु सर्वेषामेव गीर्वाणवाणीसंपन्नानामुत्तमर्णा। अत एव 'रघुः लघुः (लघुकौमुदी) अमरः' इति त्रयी व्युत्पत्तिज्ञाने मातेवोपयुज्यते इति प्रसिद्धिः। तत्तद्भाषाज्ञानोपकारिणश्च उच्चावचा नानाविधाः कोशाः कोशकारैर्विरचिताः। जागतिकज्ञानार्थं च ज्ञानकोशा अपि महान्तो महद्भिः प्रकटिताः। भूयान् हि कोशग्रन्थानामुपकारः। यथा शब्दार्थकोशा भवन्ति, तथा तत्तच्छास्त्रीयविषयकोशा अपि अतीवोपकारका भवन्ति। एकशास्त्राभ्यासकस्य इतरशास्त्रविषयकोशा यथा सहायका भवन्ति, तथा स्वशास्त्रीयविषयकोशस्यापि भूयानुपकारः। एकैकस्मिन् हि शास्त्रे अनेके ग्रन्था भवन्ति, न चैकेन ते सर्वे ग्रन्था अभ्यसितुं शक्यन्ते, तदा च अभ्यसनीयशास्त्रगतविषयककोशलाभश्चेत् तदा श्रमं कालयापनं च विनैव इष्टविषयांशज्ञानं सहसैव भवितुमर्हति। अस्माभिरेव तावत् धर्मशास्त्रं, वेदान्तं चाभ्यस्यद्भिः मीमांसाविषयकोशं विना भूयोभूयः स्खलनं कष्टं चानुभूतम्। तेनैव च हेतुना मीमांसाकोषनिर्माणबुद्धिरुत्पन्ना। अत एव १८५८ शकीयपौषशुद्धचतुर्थीदिने मीमांसाकोषरचनां संकल्प्य आरम्भः कृतः। एकदा कृतस्य कियतश्चित् लेखस्य अन्यदा मयैव भूयानुपयोगः समभूत्।

वेदोपाङ्गानि चत्वारि पुराणन्यायमीमांसाधर्मशास्त्राणि। तत्र पुराणानि ब्राह्मादीन्यष्टादश तावन्त्येवोपपुराणानि च रामायणमहाभारतसहितानि। न्यायः वैशेषिको गौतमीयः कापिलो लौकिकश्च। धर्मशास्त्रं मन्वादयः स्मृतयः। मीमांसा च विंशत्यध्यायात्मिका पूर्वोत्तरत्वेन द्वेधा विभक्ता षोडशलक्षणी चतुर्लक्षणी चेति। तत्र मीमांसा वाक्यशास्त्रत्वात् पदशास्त्रवत् प्रमाणशास्त्रवच्च सर्वोपकारिणी। सर्वो वाग्व्यवहारः उच्चारणरूपो लेखरूपश्च वाक्यात्मक एव। वाक्यार्थश्च उद्देश्यविधेयभावादिविचारं विना न ज्ञातुं शक्यते। वाक्यार्थनिर्णयश्च विना मीमांसां न सिध्यति। ततश्च निर्णीतवाक्यार्थज्ञानाय वेदानुसारिणां मीमांसैवोपयुज्यते। न केवलं वेदानुसारिणामेव किंतु तदितरेषामपि शब्दान्तरेण प्रकारान्तरेण वा वाक्यमीमांसयैव वाक्यार्थनिर्णयो भवतीति न विवादः। यद्यपि जैमिनिमीमांसा धर्ममीमांसा। धर्मश्च वेदार्थ इति तत्तदधिकरणेषु वेदवाक्यान्येव उदाहृत्य श्रुतिलिङ्गवाक्यादिभिरुपस्कृत्य प्राप्ताप्राप्तविवेकेन उद्देश्यविधेय-

भावं निर्णीय इतरवाक्याविरोधेन वाक्यार्थं निर्णयति मीमांसा। वेदवाक्यार्थनिर्णयसाधकन्यायैरेव स्मृतिपुराणेतिहासकाव्यनाटकाख्यानकाख्यायिकाकथासरित्सागरादिकं सकलमेव गीर्वाणवाणीगतं वाङ्मयं लोकभाषामयं चापि नानाविधं वाङ्मयं विचारगोचरीकर्तुं ज्ञातुं निर्णेतुं शक्येतेति नाश्चर्यम्।

मीमांसा नाम च पूजितविचारः। 'मान पूजायां' इति पूजार्थकमानधातोः 'मान्बधदान्' इत्यादिसूत्रेण सन् प्रत्ययः। अस्य सन्–प्रत्ययस्य च 'मानेर्जिज्ञासायां' इति वार्तिकात् जिज्ञासाऽर्थकता। जिज्ञासाशब्दस्य च ज्ञानेच्छावाचकत्वेऽपि लक्षणया इच्छा-साध्यविचारार्थकता। तथा च मीमांसाशब्दस्य पूजितविचारार्थकता। विचारस्य पूजितत्वं चात्र तर्कोपष्टब्धत्वम्। तर्कश्च ऊहापोहरूपो न्यायरूपश्च। न्यायश्च लोकव्यवहारसिद्धा रीतिः, प्रायश्च पूर्वोत्तरपक्षसाधिका युक्तिः। सैव हि 'तदधिकरणन्यायेन, अदोऽधिकरणन्यायेन' इति न्याय-शब्देन भण्यते। लोकरीतिश्च क्व चित्। अत एव श्रुतिविरुद्धस्मृत्यप्रामाण्याधिकरणस्य 'अश्वैरपहृतं को हि गर्दभैः प्राप्तुमर्हति' इति आधारभूतं न्यायमाचक्षते।

तस्या अस्या मीमांसाया अध्ययनाध्यापनादि नितान्तं तनुतां गच्छति दिनेदिने, उपयोगस्तु भूयान् प्राचीनशास्त्राभ्यासकानां विदुषामाधुनिकानां च। न्यायालयगतानां च प्राचीनधर्मशास्त्रादिवाक्यार्थविचारकाले विना मीमांसां संकटमेवापतति। वेदान्तशास्त्रीयाणां विशेषतश्च धर्मशास्त्रीयाणां ग्रन्थानामभ्यासो विना मीमांसां पदेपदे एव प्रस्खलति। भूयिष्ठान् हि मीमांसासिद्धान्तानाश्रित्य आकरग्रन्थाः प्रवर्तन्ते। 'संयोगपृथक्त्वन्यायेन, ग्रहैकत्वन्यायेन, बला-बलाधिकरणन्यायेन' इत्यादिना हि मीमांसान्यायान् तत्रतत्रोदाहरन्ति। अत एवायं मीमांसा-कोषविरचनप्रयासः सफलः। इत्यलम्।

**कोषस्य विषयः—**

मीमांसाकोषेऽस्मिन् सर्वाण्यधिकरणानि, शास्त्रीया लौकिकाश्च न्यायाः, लघुसिद्धा-न्ताश्चेति त्रितयस्य संग्रहः। तत्र द्वादशलक्षणीस्थानि भाष्यीयाणि, संकर्षकाण्डीयानि भाट्ट-चन्द्रिकास्थानि, तौतातिकमततिलकस्थानि, केवलानन्दीयवृत्त्यधिकरणानि चेति चतुर्विधान्यधि-करणानि। भाष्यीयाधिकरणेषु तावत् प्रथमं अधिकरणार्थबोधकं प्राचीनसंशोधकसंपादितं वा अस्म-न्निर्मितं वा शीर्षकमुपन्यस्तं, ततः सूत्रं अध्याय–चरण–अधिकरण–सूत्राङ्कसहितं, ततो भाष्यं, ततो वार्तिकं, ततः शास्त्रदीपिकास्थाः श्लोकाश्च क्व चित् गद्यभागश्च, ततः मयूखमालिकाऽ-परपर्यायसोमनाथीस्था संगतिः सूत्रार्थः क्व चित् कश्चित् शास्त्रार्थश्च, ततो जैमिनीयन्यायमाला-विस्तरस्थः श्लोकः श्लोकौ श्लोका वा, ततो भाट्टदीपिका, ततो मण्डनाचार्यप्रणीतमीमांसाऽनुक्रमणि-कास्थः अधिकरणार्थप्रतिपादकः श्लोकचरणः, ततः श्रीशंकरभट्टप्रणीतमीमांसासारसंग्रहस्थस्तादृशः

श्लोकचरणः। एतावता भाष्यीयमधिकरणं समाप्यते। किंच आदिमे कियति चित् कोषांशे तत्सदुपाह्वयवैद्यनाथप्रणीतो न्यायबिन्दुरपि संगृहीतः, पश्चात्तु ग्रन्थगौरवभयात् न्यायबिन्दुसंग्रहस्त्यक्तः। एतेषु भाष्यीयाधिकरणेषु भाष्यं तन्त्रवार्तिकं टुप्टीकावार्तिकं भाट्टदीपिका च एतत् त्रयमक्षरशः सर्वं संगृहीतं, भाष्यवार्तिकयोः आकरग्रन्थत्वात् भाट्टदीपिकायाश्च नव्यपद्धत्या परिष्कृतावस्थत्वात्।

संकर्षकाण्डीयानामधिकरणानामपि प्रारम्भे प्राचीनमुपलब्धं क्वचिन्निर्मितकं वा वर्णक्रमेण शीर्षकमुपन्यस्य ततो भाट्टचन्द्रिका भाट्टदीपिकाऽपरपर्याया उपन्यस्ता।

तौतातिकमततिलको नाम भवप्रसादापरपर्यायः अधिकरणार्थप्रतिपादकः प्रायः प्रत्यधिकरणं प्राभाकरमतमनूद्य खण्डयन् भवदेवप्रणीतः शास्त्रदीपिकातः प्राचीनो ग्रन्थः। स च यावति भाष्ये तन्त्रवार्तिकं समस्ति तावानेव। अर्थात् प्रथमाध्यायद्वितीयचरणमारभ्य तृतीयाध्यायान्त एवायम्। तत्रापि द्वितीयाध्यायान्त एवास्माभिरुपलब्धो मुद्रितः इति तावानेव संगृहीतः। तदेतत् द्वितीयविधमधिकरणम्। तत्र चाधिकरणस्यादिमं सूत्रं वर्णक्रमेणोपन्यस्य तत्रतत्र सोऽयं ग्रन्थो निवेशितः।

अथ सर्वेषां सूत्राणां शब्दशोऽर्थज्ञानार्थं नूतना वृत्तिरेवास्माभिः प्रणीता। सा च अधिकरणशो निवेशिता। तत्र आदिमं सूत्रं वर्णक्रमेण प्रथमत उपन्यस्य वृत्त्यधिकरणं संगहीतम्।

तदेवं कोषेऽस्मिन् वर्णक्रमोपबद्धशीर्षकानुसारेण भाष्यीयाण्यधिकरणानि संकर्षाधिकरणानि च उपलभ्येरन्, तौताधिकरणं वृत्त्यधिकरणं च वर्णक्रमोपबद्धतत्तदादिमसूत्रानुसारेणोपलभ्येतेति ज्ञेयम्। एतेषु चतुर्विधेष्वधिकरणेषु आदौ ⧗ एवं डमरुचिह्नं निवेशितम्।

अथ न्यायाः। अक्षाभ्यञ्जनन्यायः, अग्निसंमार्गन्यायः, अङ्गगुणविरोधन्यायः इत्यादयो मीमांसाशास्त्रीयाः, केचित् उत्तरमीमांसाशास्त्रीयाः, केचिच्च व्याकरणशास्त्रीयाः परिभाषारूपा अपि शेखरादौ न्यायशब्देन संबोधिताः, अन्ये च न्यायसुधाकारादिभिः वार्तिकाद्यनेकाकरग्रन्थस्थाः श्लोकरूपाः, ते सर्वे यथालाभमत्र संगृहीताः। एते हि धर्मशास्त्रनिबन्धेषु च इतरनानाविधेषु शास्त्रीयनिबन्धग्रन्थेषु साक्षात् मीमांसानिबन्धेषु च अर्थनिर्णयार्थं प्रमाणत्वेनोपन्यस्ताः। ततश्च तेषां संग्रह आवश्यक एव। एतेषां मीमांसान्यायानां द्वित्रादीन्यपि नामधेयानि तत्रतत्रोपलभ्यन्ते यथा पर्णतान्यायः पर्णमयीन्यायः पर्णमय्यधिकरणं इत्यादि। तत्र एकं किंचिन्नामधेयं अधिकरणादौ शीर्षकत्वेनोपन्यस्तं, अवशिष्टं तु वर्णक्रमे उपन्यस्तम्। किंच शास्त्रीयन्यायवत् लौकिका अपि न्यायाः मीमांसाग्रन्थेष्वेव अधिकरणार्थनिर्णयोपयोगित्वेन उपन्यस्ता भूयांसः। तेऽपि च संग्रहीतव्या एव। यदि च केचिल्लौकिका न्यायाः कोषेऽत्र निवेशनीया एव, तदा किमपराद्धमवशिष्टैः, इति लौकिकन्यायसाहस्र्यादिग्रन्थेषूपलब्धाः सर्वे लौकिका न्यायाः संगृहीता एवास्माभिः।

इमे सर्वे न्याया वर्णक्रमेण तत्रतत्र निवेशिताः । न्यायादौ च अधिकरणवत् डमरुचिह्नं निवेशितम् ।

एवं अधिकरणस्यादौ न्यायस्यादौ चैव केवलं डमरुचिह्नं निवेशनीयमिति दण्डकोऽस्माकम् । परंतु सोऽयं प्रथमत एवानिर्णीतत्वात् १८४ पृष्ठपर्यन्तं मुद्रणप्रणालीं न प्रापत् । ततः परं तु सोऽयं दण्डक एव सर्वत्र स्वीकृतः ।

तत्र न्यायो नाम परार्थानुमानात्मको वाक्यसमुदायः । स च द्व्यवयवो वा बौद्धवत्, त्र्यवयवो वा मीमांसकवत्, पञ्चावयवो वा तार्किकवत् । प्राड्विवाकस्य निर्णयपत्रमपि न्याय एव । इयांस्तु विशेषः, यत् न्याये शरीरलाघवं सूत्रात्मकत्वं च, निर्णयपत्रे तु शरीरगौरवं भाष्यात्मकत्वं चेति । परंतु न्यायः निर्णयः प्रतिज्ञादिपञ्चकं इति पर्यायाः । रीतिः प्रकारः पद्धतिः इत्ययमपि न्यायपदार्थः । तथाहि ' ताः प्रग्राहं शंसति यथा वृषाकपिं, वार्षाकपं हि, वृषाकपेस्तन्न्यायमेति ' इति **ऐतरेयकं** ब्राह्मणम् ( ३०।६।९ ) । अस्यार्थः— ताः नाराशंसीसंज्ञकान् मन्त्रान् प्रग्राहं पादशः प्रगृह्यप्रगृह्य शंसति ब्राह्मणाच्छंसी । यथा वृषाकपिं नाम सूक्तं पादशो विगृह्य शंसति तथा । हि यस्मात् कारणात् इदं शंसनं वार्षाकपं वृषाकपिसंबद्धं कर्तव्यम् । तत् तस्मात् वृषाकपेः नाम सूक्तस्य न्यायं प्रकारं विगृह्यशंसनरूपं एति प्राप्नोति—इति । अत्र सायणाचार्यैः न्यायशब्दस्य प्रकार इत्यर्थः कृतः ।

किंच " स होवाच शुनःशेपः ( अजीगर्तं पितरं ) ' यः सकृत् पापकं कुर्यात्, कुर्यादेनत् ततोऽपरम् । नापागाः शौद्रान्न्यायादसंधेयं त्वया कृतम् " इति ( ऐब्रा. ३३।५।४ ) अत्र सायणः— शौद्रात् न्यायात् नीचजातिसंबन्धिनः क्रूरादाचरणात् न अपागाः अपगतो न भवसि इति । तथा च न्यायः आचरणं रीतिः पद्धतिः इत्यर्थः ।

' यद्यत् अल्पसंख्यं, तत्तत् पूर्वं कुर्वाणाः तांतां संख्यां पूरयन्ति, यया संख्या पूरयितव्या ' यथा त्रयोविंशतिरात्रे पञ्चाहः षडहो द्वादशाहः इति सोदाहरणो न्याय एवोदाहृतः ' एतेन तांतां संख्यां पूरयति ' इति **शाङ्खायनश्रौतसूत्रेण** ( १३।१५।११ ) ।

' वर्णानाश्रमांश्च न्यायतोऽभिरक्षेत् ' ( गौध ११।९ ) इत्यत्र न्यायतः इति लोकशास्त्राविरुद्धेन मार्गेण इति व्याख्यातं मस्करिभाष्ये । ' न्यायाधिगमे तर्कोऽभ्युपायः ' ( २९ ) इत्यत्र ' अधिगमे अवधारणे तर्कः अनुमानम् ' इति मस्करिभाष्यम् । तेन प्रतिज्ञादिपञ्चावयवं परार्थानुमानं न्यायपदार्थः इति व्यक्तम् ।

' आध्यात्मिकान् योगाननुतिष्ठेत् न्यायसहितान् ' इति **आपस्तम्बीय**धर्मसूत्रस्थं (१।२३।१) न्यायसहितान् इति पदं 'उपपत्तिसमन्वितान् ' इति शंकरभगवत्पूज्यपादा व्याचख्युः । तथा च न्यायः उपपत्तिः युक्तिः इत्यर्थः ।

अङ्गानां तु प्रधानैरव्यपदेशः इति न्यायवित्समयः । ( आपध. २।८।१२ ) इति सूत्रं अङ्गानां कल्पसूत्राणां प्रधानवाचिभिः शब्दैः 'छन्दः वेदः ब्राह्मणं ' इत्यादिभिः व्यपदेशो न न्याय्यः इति व्याख्याय न्यायवित्समयः न्यायविदां सिद्धान्तः इति च व्याख्याय **शंकरभगवत्पूज्यपादैः** ' ताविमौ पूर्वपक्षसिद्धान्तौ कल्पसूत्राधिकरणे ( भा. १।३।६ ) स्पष्टं द्रष्टव्यौ ' इत्युक्तम् । तेन अध्वरमीमांसाधिकरणेषु पूर्वपक्षसिद्धान्तसाधकानां बीजभूतानां च युक्तीनां न्यायशब्दवाच्यता ज्ञायते । यथा ' नागृहीतविशेषणा विशेष्ये बुद्धिरुत्पद्यते ' इति आकृत्यधिकरणस्य बीजम् । यथा वा ' अनन्यलभ्यः शब्दार्थः ' इति कर्त्रधिकरणस्य बीजम् । इत्यादि ।

किंच 'तस्याश्च सर्वगामित्वं तन्न्यायत्वात् प्रतीयते । नैकेषामेव सा ह्यस्ति, केषांचिद्वा न विद्यते ॥ ' इति वार्तिकम् ( १।३।४।८ पृ. २१६ ) । तस्याः शब्दशक्तेरित्यर्थः । अत्र सुधा ( पृ. २०७ ) ' तस्मिन् सर्वगामित्वे न्यायः युक्तिः यस्याः शक्तेरस्ति सा तन्न्याया, तद्भावः तन्न्यायत्वम् । कीदृशो न्याय इत्यपेक्षायामाह—नैकेषामिति' इति । अत्र न्यायशब्दस्य युक्तिः इत्यर्थः कण्ठत एवोक्तः सुधाकारेण । मीमांसासूत्रेषु च अनेकवारं न्यायशब्दः प्रयुक्तः । तत्र च सर्वत्र युक्तिः युक्तं योग्यं इत्येवार्थः प्रायः प्रतीयते यथा ' अन्यायश्चानेकशब्दत्वम् । ' इति सूत्रम् ( १।३।८।२६ ) । अत्र भाष्यं—न चैष न्यायः, यत् सदृशाः शब्दाः एकमर्थमभिनिविशमानाः सर्वे अविच्छिन्नपारंपर्या एवेति—इति । लौकिकन्यायसंग्रहकारश्चाह ' सर्वे लौकिका दृष्टान्ताः लौकिक्यः कथाश्च (योगवासिष्ठाद्युक्ताः दामव्यालकटाद्याः) न्यायत्वेन उदाहर्तुं शक्यन्ते' इति । सर्वथाऽपि रीतिः पद्धतिः प्रकारः युक्तिः इत्यर्थमालम्ब्यैव मीमांसाकोषे शास्त्रीया लौकिकाश्च सर्वे न्यायाः संगृहीताः इति निष्कर्षः ।

अथ कोषे तृतीयोंऽशो लघुसिद्धान्ता नाम । न चात्र लघुत्वं अल्पशब्दकत्वम् । के चिद्धि शब्दतो महान्तोऽपि भवन्ति । ततश्च अधिकरणभिन्नः सन् न्यायभिन्नश्च सन् अल्पो वा महान् वा मीमांसाग्रन्थस्थो भागः, इति पारिभाषिका लघुसिद्धान्ताः इति । तेषामादौ च * इति ताराचिह्नं निवेशितम् । लघुसिद्धान्तवाक्यानां निवेशने चेयं रीतिः— किंचिच्छब्दारब्धेषु सिद्धान्तवाक्येषु निवेशनीयेषु तत्रत्यं मुख्यं पदं प्रथमं प्रथमाद्वितीयादिविभक्तिक्रमेण, तत्रापि एकवचनादिक्रमेण निवेशितम् । ततः तद्घटितानि सामासिकानि पदानि यथायोगं वर्णक्रममनुसृत्य निवेशितानि । क चित्तु सिद्धान्तवाक्यानां विषयभेदेन विभागं कृत्वा अर्थानुसारेण निवेशः कृतः, तत्रापि यथायथं वर्णक्रमो न हापितः । सिद्धान्ताश्चैते नानामीमांसाशास्त्रीयग्रन्थेभ्यः उद्धृताः । प्रायः अक्षरशो यथादृष्टा एव । भूयःस्थलेषु तु क चिदक्षरादिपरिवर्तनं कृत्वाऽपि । के चित् शीर्षकरूपाः के चित् तात्पर्योद्धारात्मका अपि भवन्ति । तेन सिद्धान्तप्रदर्शनप्रवणत्वात् यथादृष्टाक्षरात्मकप्राचीनग्रन्थस्थः फक्किकोद्धारादर्शनेऽपि नाक्षेप्तव्यः संपादकः ।

## अस्मदीयो वर्णक्रमः संधिशास्त्रं च—

अ आ इ ई उ ऊ ऋ ॠ ऌ ए ऐ ओ औ इति स्वराः त्रयोदश। ं, ः (अनुस्वारः विसर्गः ) कवर्गः चवर्गः टवर्गः तवर्गः पवर्गः यवर्गः शवर्गः इति व्यञ्जनानि पञ्चत्रिंशत्। एवं ४८ वर्णाः उक्तक्रमेणैव अनुसंधेयाः। ततश्च स्वरोत्तरं व्यञ्जनविचारावसरे आदौ अनुस्वारः, ततो विसर्गः, ततः ककारादिः इति क्रमः स्वीकृतोऽस्माभिः। सोऽयं क्रमो वस्तुतः तान्त्रिकसिद्धो लोकसिद्ध एव च। अनुस्वारविसर्गयोर्व्यञ्जनमध्ये परिगणनमपि च न नवीनम्। उक्तं हि ऋक्प्रातिशाख्ये 'अनुस्वारो व्यञ्जनं वा स्वरो वा (१।५)' इति 'सर्वः शेषो व्यञ्जनान्येव (१।६)' अनेन च सूत्रेण विसर्गस्य व्यञ्जनत्वमेवेति निश्चितं भवति। तत्र अनुस्वारस्य व्यवस्थितविकल्पेन व्यञ्जनत्वमेव स्वीक्रियते इति नापसिद्धान्तप्रसङ्गः। तत्रानुस्वारस्य सर्वत्रैव परसवर्णकरणनियमं काशीकालीघाटादिमुद्रणे स्वीकुर्वन्तः 'सन्नयतः' 'असन्नयतः' इत्येव मुद्रयन्ति। तत्र सम् + नयतः इति वा सत् + नयतः इति वा अवान्तरपदभेद इति संशय एव भवति। दर्शेष्टौ सांनाय्यं कुर्वन् संनयन् उच्यते, अकुर्वंस्तु असंनयन्निति। न चात्र कैश्चिदपि 'सत्' इति अन्तर्गतं पदं स्वीक्रियते, किंतु 'सम्' इत्युपसर्ग एव। तथा सति 'सन्नयतः' 'सान्नाय्यं' इति मुद्रणं संदिग्धमेव पदं दर्शयति। एतादृशस्थले चास्माभिः सर्वत्र यथा संदेहो न स्यात् तथैव रीतिः समाश्रिता। यत्र अखण्डपदैक्यं तत्र नकारस्य मकारस्य वा (लोकदृष्ट्या अनुस्वारस्य) परसवर्ण एव कृतः, यत्र तु 'वा पदान्तस्य' इत्यादिर्विकल्प एव विहितः, तत्र नैव कृतः परसवर्णः। यथा संगतिः, संतर्दनं, संपादनं, सांनाय्यं इति। परंतु प्रसङ्गः, प्रसञ्जनं इत्यादौ परसवर्ण एव स्वीकृतः।

विसर्गस्तु सर्वत्र विसर्ग एव निवेशितः, न तु शरि परे शर् कृतः, नापि खर्परे शरि विसर्गलोपः कृतः। 'यस्तु, विसर्गस्तु' इत्यादौ तु शर् कृतो वा क्व चिन्न वा कृतः। 'य एव' इत्यादौ यत्र 'यः एव' इति वा पदच्छेदः, 'ये एव' इति वा पदच्छेदः, तत्र संधिमकृत्वा 'यः' इति वा 'ये' इति वा अर्थमनुसृत्य निवेशितम्। एवं इको यणचि, आद्गुणः, वृद्धिरेचि, अकः सवर्णे दीर्घः, एङः पदान्तादति, एचोऽयवायावः इत्यादीनां विधीनां प्रवृत्तिः व्यक्तीकरणावश्यकताऽनुसारेण स्वीकृता न वेति ज्ञेयम्। संधिशास्त्रप्रवर्तनाऽऽग्रहिलत्वे कथं वाचककुण्ठीभावप्रसङ्गः तत् किं चिदुदाह्रियते, तत्रैव च अवतरणचिह्ननिवेशोऽपि द्रष्टव्यः। भूतिसहितपरिभाषेन्दुशेखरपुस्तके १४ पृष्ठे— अत ए 'वाणोऽप्रगृह्यस्ये' त्येतदेकवाक्यताप 'न्नादसो मादि' त्येत—इति मुद्रितम्। एतद्वाचने सत्यं वाचकस्य तापो भवति। कथमेतादृशस्य मुद्रणस्य विद्वांसोऽपि साधुतां मन्यन्ते इति मादृशस्यापण्डितस्य खिद्यते चेतः। यदि किल तदेव शेखरवाक्यं— अत एव 'अणोऽप्रगृह्यस्य' इत्येतदेकवाक्यताऽऽपन्न— 'अदसो मात्' इत्येत— इति मुद्रितमभविष्यत् ततः कियती महती हानिरभवि-

ष्यत्। तत्रैव पुस्तके १३३ पृष्ठे –भिन्ने ' ऽप्तृन्नि ' त्यादौ– इति मुद्रितम्। तत्र –भिन्ने ' अप्तृन् ' इत्यादौ– इति मुद्रणे को मुद्रकस्य भ्रमः। प्रायः सर्वत्रैव संधिशास्त्रप्रवर्तने अवतरणचिह्नदाने च वाचकसुखग्रहणविचारो वा सारासारविवेको वा मुद्रणे नैव क्रियते इति महती विवेकभ्रष्टता। सर्वथाऽपि अस्माभिः कोषमुद्रणादौ संधिशास्त्रशैथिल्यमेव वाचकसुखार्थं स्वीकृतम्।

' मोऽनुस्वारः ' इत्यादिविषये च किं चित् साहसं परिभाषारूपमेव स्वीकृतम्। ' प्रयोजनमिति ' इति वा ' प्रयोजनम् इति ' इति वा मुद्रितव्ये ' प्रयोजनं इति ' इत्येव मुद्रितम्। ' ज्ञानमनुमितिः ' इति वा 'ज्ञानम् अनुमितिः' इति वा निवेशनीये ' ज्ञानं अनुमितिः ' इत्येव निवेशितम्। सेयमस्मदीया परिभाषा वाचकसौख्यार्थमेव इति न शास्त्रविद्भिर्दूषणीया वयम्। सर्वथाऽपि संधिशास्त्रशैथिल्यमेव स्वीकृतमस्माभिः गहने गभीरे विषये वाचकपान्थानां सुखेन प्रवेशनायेति ज्ञेयम्। क चित्तु कारणान्तरेण तथा कर्तुं नापारि इत्यपि सत्यम्।

**ग्रन्थकाराः—**

येषां ग्रन्थाः कोषेऽस्मिन् संगृहीताः, येषां चापि संग्रहीतुमशक्याः, तेऽपि तेऽपि च प्रसङ्गसंगत्या विज्ञानार्थं निर्दिश्यन्ते, ये च तदीया ग्रन्थाः स्वीकृताः यथा च, तदपि निर्दिश्यते। तदीयः कालश्च प्राक् विद्वत्साधित एव अनूद्यते यथालाभं, न स्वतन्त्रसंशोधनपूर्वकम्। तद्यथा—

**मीमांसाचार्याः प्राचीनाः—आत्रेयः**। 'फलमात्रेयो निर्देशात्' ४।३।१८, ' मुख्यानन्तर्यमात्रेयः ' ५।२।१८, ' निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसंबन्धः क्रतुषु ब्राह्मणश्रुतेरित्यात्रेयः ' ६।१।२६ इति त्रिवारम्।

**आलेखनः**। ' व्यृद्धभाग्भ्यस्त्वालेखनः ' ६।५।१७ इत्येकदैवं।

**आश्मरथ्यः**। ' अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यः ' ६।५।१६ इत्येकदैव।

**ऐतिशायनः**। ' सर्वेषां वैकमन्त्र्यमैतिशायनस्य ' ३।२।४४, 'स्याद्वाऽस्य संयोगवत् फलेन संबन्धस्तस्मात् कर्मैतिशायनः ' ३।४।२४, ' लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः ' ६।१।६ इति त्रिवारम्।

**कामुकायनः**। ' तथा चान्यार्थदर्शनं कामुकायनः ' ११।१।५८, ' सकृदिज्यां कामुकायनः परिमाणविरोधात् ' ११।१।६२ इति द्विवारम्।

**कार्ष्णाजिनिः**। 'क्रतौ फलार्थवादमङ्गवत् कार्ष्णाजिनिः' ४।३।१७, 'स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् ' ६।७।३५ इति द्विवारम्।

**जैमिनिः।** 'कर्माण्यपि जैमिनिः फलार्थत्वात्' ३।१।४, 'कर्मभेदं तु जैमिनिः' ६।३।४, 'तदावृत्तिं तु जैमिनिः०' ८।३।७, 'अधिकं च विवर्णं च जैमिनिः०' ९।२।३८, 'जैमिनेः परतन्त्रापत्तेः०' १२।१।७ इति पञ्चवारम्।

**बादरायणः।** '०तत् प्रमाणं बादरायणस्यानपेक्षत्वात्' १।१।५, 'अन्ते तु बादरायणः०' ५।२।१९, 'जातिं तु बादरायणः०' ६।१।८, 'विधिस्तु बादरायणः०' १०।८।४४, 'विधिवत् प्रकरणाविभागे प्रयोगं बादरायणः' ११।१।६५ इति पञ्चवारम्।

**बादरिः।** 'द्रव्यगुणसंस्कारेषु बादरिः' ३।१।३, 'निमित्तार्थेन बादरिः०' ६।१।२७, 'कालाभ्यासेऽपि बादरिः कर्मभेदात्' ८।३।६, 'वर्णे तु बादरिः' ९।२।३२ इति चतुर्वारम्।

**लावुकायनः।** 'विप्रतिषेधात्तु गुण्यन्यतरः स्यादिति लावुकायनः' ६।७।३७ इत्येकवारम्।

एवं 'एके, एकेषाम्' इत्येकशब्देनापि अन्यार्थकेन दशैकादशवारम्।

एवं विशेषरूपेण प्राचीनमीमांसाचार्याणां द्वादशलक्षण्यामुल्लेख उपलभ्यते। संकर्षसूत्राणामनुपलब्धत्वात्तु तत्रोल्लिखितानां विषये न किमपि वक्तुं शक्यते, तथापि अग्रे किं चिद्वक्ष्यते।

एतेषु आलेखनः आश्वलायनेन स्वीये श्रौतसूत्रे उल्लिखितः (६।१०।२९) आश्मरथ्यश्च (६।१०।२०)। कात्यायनश्रौतसूत्रे कार्ष्णाजिनिः (१।४४) बादरिश्च (४।९६) उल्लिखितः। किंच एते आचार्याः किमेककालीना भिन्नकालीना वा तथा एकदेशीया भिन्नदेशीया वेत्यपि न किमपि अनुमातुं शक्यते। किंच किमेतेषामपि सर्वेषां कस्य चित् कयोश्चिद्वा मीमांसासूत्रग्रन्था एवासन्, तत्रोपलभ्य च तन्मतस्यात्र जैमिनिना संग्रहः कृतः अथवा संभाषापरिषत्सु व्यक्तिशश्चर्चासु वा तत्तन्मतमुपलब्धं, किंवा गुरुपरंपरया तदुपलब्धं सत् स्वसूत्रेषु संगृहीतं इत्यादि कल्पयितुं न शक्यम्। तथापि निरुक्ते यास्काचार्योल्लिखितप्राचीननिरुक्ताचार्यनामधेयान्यालोच्य अन्यतो वोपलभ्य निरुक्तभाष्यकारेण दुर्गाचार्येण 'त्रयोदश निरुक्तान्यासन्' इति प्रतिपादितं, तथा एतानि प्राचीनमीमांसाचार्यनामानि निभालयद्भिर्देशकालयोर्भेदेनाभेदेन वा तेषां मीमांसाग्रन्था एवासन् इति विकल्पयामस्तावत्।

**जैमिनिः।** प्रमाणभेदशेषत्वादीनां प्रसङ्गान्तानां पदार्थानां विस्तरेण प्रतिपादिकायाः द्वादशलक्षण्याः, प्रकीर्णानां च धर्मविषयाणां प्रतिपादिकायाः संकर्षकाण्डाख्यायाश्चतुर्लक्षण्याः प्रणेता भगवान् महर्षिर्जैमिनिः इति संप्रदायः। उत्तरमीमांसारूपायाश्चतुर्लक्षण्यास्तु प्रणेता भगवान् बादरायणः इति शंकरभगवत्पूज्यपादाः। पूर्वमीमांसायां जैमिनिपदप्रयोगः उत्तरमीमांसायां च बादरायणपदप्रयोगस्तु स्वीयाभिप्रायविशेषप्रदर्शनाय न विरुद्ध इति संप्रदायः। विंशतेरप्यध्या-

यानां जैमिनिरेव प्रणेता इति नैष्कर्म्यसिद्धिः । उभयमीमांसासूत्राणां प्रणेता जैमिन्यादेः कश्चित् शिष्यादिरिति नवीनाः । एवं सत्येव उभयत्र जैमिनिबादरायणपदनिवेशः संगच्छते इति । शास्त्रदीपिकायाष्टीकायां सिद्धान्तचन्द्रिकायां ( तर्कपादे पृ. ४ ) ' गुरुपर्वक्रमात्मकश्च संबन्धो यथाऽत्रैव कैश्चिदुक्तः । तद्यथा– ब्रह्मा प्रजापतये मीमांसां प्रोवाच, सोऽपीन्द्राय, सोऽप्यग्नये, स च वासिष्ठाय, सोऽपि पराशराय, पराशरः कृष्णद्वैपायनाय, सोऽपि जैमिनये, स च स्वोपदेशादनन्तरं इमं न्यायं ग्रन्थे निबद्धवान् इति । क्वचित्तु ब्रह्मा महेश्वरो वा प्रजापतये मीमांसां प्रोवाच, प्रजापतिरिन्द्राय, इन्द्र आदित्याय ( आदित्यो वसिष्ठाय ) इत्येवमादि पाठान्तरम् ' इत्युक्तम् । ' अत उपपन्नं जैमिनिवचनं आकृतिः शब्दार्थ इति ' इति भाष्यकारेण निर्दिष्टोऽयं ( भा. १।१।५ पृ. ५२ ) मीमांसासूत्रकारो जैमिनिः । एतत्प्रणीतानि द्वादशलक्षण्याः सर्वाणि सूत्राणि संगृहीतान्यत्र कोषे ।

**उपवर्षाचार्याः** । पाणिनेर्व्याकरणकारस्य गुरुरयमिति कथासरित्सागरः । पाणिनेः कालस्तु राजवाडेमतेन सनात् प्राचीनमष्टमं शतकम् । चित्रावशास्त्रिणस्तु ' राजवाडेमतेन पाणिनेः कालः १२००–९००, काळेमतेन च सनात् प्राक् ७०० ' इति वदन्ति । भगवत उपवर्षस्य विंशत्यध्यायात्मकमीमांसायां वृत्तिरासीत् । शबराचार्यैर्वृत्तिकारपदेन उपवर्षपदेन चोल्लेखः कृतः परस्तादुदाहरिष्यते । शारीरकभाष्ये भगवत्पूज्यपादैः स्फोटवादे ( १।३।२८ ब्रसू. ) ' वर्णा एव तु शब्दः इति भगवानुपवर्षः ' इति, ' एक आत्मनः शरीरे भावात् ' ( ३।३।५३ ब्रसू. ) इति सूत्रे च ' भगवता उपवर्षेण प्रथमे तन्त्रे आत्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्यामः इत्युद्धारः कृतः ' इति च उल्लेखः कृतः । एतेन च विंशतिलक्षण्यां उपवर्षवृत्तिरासीदिति सिध्यति ।

**भर्तृमित्रादयः** । शाबरभाष्यात् प्राचीना वृत्तिकारा एते ' प्रायेणैव हि मीमांसा लोके लोकायतीकृता । तामास्तिकपथे कर्तुमयं यत्नः कृतो मया ॥ ' ( **श्लोवा. १।१।१।१०** ) । ननु मीमांसायाश्चिरंतनानि भर्तृमित्रादिरचितानि व्याख्यानानि विद्यन्ते, किमनेनेत्यत आह–प्रायेणेति । मीमांसा हि भर्तृमित्रादिभिः अलोकायतैव सती लोकायतीकृता 'नित्यनिषिद्धयोः इष्टानिष्टफलं नास्ति ' इत्यादिबह्वपसिद्धान्तपरिग्रहेण, तामास्तिकपथे कर्तुं वार्तिकारम्भयत्नः कृतो मयेति । **रत्नाकरः** । कृतः कर्तुमारब्धः आदिकर्मणि क्तः । **के.**

तत्र भर्तृमित्राचार्यः मीमांसासूत्रभाष्यकार एव कश्चित् इति बहुसंमतम् । उदाहृतश्लोकवार्तिकात्तु तत्र संशय उत्पद्यते, शाबरभाष्यटीकाकारोऽयं प्राचीनः स्यादिति ततो भाति । तन्निर्णये तु न प्रवर्तामहे । शबराचार्यात् प्राचीनोऽयं सूत्रभाष्यकार इति मत्वा साधयामः ।

**भवदासः** । अयं शबराचार्येभ्यः प्राचीनः सूत्रवृत्तिकृत् । स च ' अथातः ' इत्येकपदं मन्यते । तथा चोक्तं श्लोकवार्तिके ( १।१।१–६३ ) ' समुदायादवच्छिद्य भव-

दासेन कल्पितात्' इति। अत्र रत्नाकरः— नानाऽर्थमपि पदद्वयमेकीकृत्य आनन्तर्यमात्रार्थतया भवदासेन कल्पितं पृथक्कृत्य अवयवस्यैव अथशब्दस्य अष्टमाद्याथशब्दवत् आनन्तर्यार्थत्वम्। इति। 'वृत्त्यन्तरेषु केषां चित् लौकिकार्थव्यतिक्रमः। शब्दानां दृश्यते तेषामुपालम्भोऽय-मुच्यते ॥' ( श्लोवा. १।१।१—३३ ) 'केषां चित् भवदासादीनां वृत्त्यन्तरेषु' इति रत्नाकरः। उपालम्भः अयं— 'लोके येष्वर्थेषु' इत्यादिकं प्रारम्भभाष्यम्।

**शबराचार्यः**— मीमांसाभाष्यकाराः। भाष्यं चेदं सहस्राधिकरणद्वादशलक्षण्या मीमांसायाः चतुर्विंशतिसहस्रम्। तदुपरि प्रस्थानद्वयं प्राभाकरं भाट्टं चेति। संकर्षकाण्डात्मक-चतुर्लक्षण्यामपि आचार्यभाष्यं विद्यते एव। परंतु इदानीं क्वापि नोपलभ्यते इति वदन्ति। संकर्षकाण्डीयभाट्टचन्द्रिकायां प्रदर्शितो भाष्यकारस्तु न शबराचार्यः किंतु देवस्वामी इति चन्द्रिकाकारेणैव अनेकवारं स्पष्टमुक्तत्वात् इति ज्ञेयम्। शबराचार्यप्रणीतं द्वादशलक्षणीभाष्यं अक्षरशः सर्वं संगृहीतं अधिकरणशः पृथक् कृत्वा। 'काश्मीरकोऽयं दीपस्वामिनः पुत्रः। एत-द्विषयकः परंपरागतः श्लोक इत्थं— ब्राह्मण्यामभवद् वराहमिहिरो ज्योतिर्विदामग्रणी राजा भर्तृहरिश्च विक्रमनृपः क्षत्रात्मजायामभूत्। वैश्यायां हरिचन्द्रवैद्यतिलको जातश्च शङ्कुः कृती शूद्रायाममरः षडेव शबरस्वामिद्विजस्यात्मजाः ॥ इति।' इति चित्रावशास्त्रिणः। अप्रमाणमिदमिति के चित्।

**गुरुः बृहतीकारश्च**। वाचस्पतिमिश्रः 'जरत्प्राभाकरमतमुपन्यस्यति' इति ग्रन्थेन मण्डना-चार्यकृतविधिविवेकपङ्क्तिं अवतारयति न्यायकणिकायाम् ( पृ. ९६ )। तेन जरत्प्राभाकरः कश्चित् मण्डनाचार्यात् प्राचीनः सिध्यति। 'जरत्प्राभाकरोन्नीतमर्थं गुरोर्वचसः संगच्छते इत्याह' इत्य-नेन च पुनः जरत्प्राभाकर उदाहृतः (पृ. १०९) अत्र विशेषस्तु जरत्प्राभाकरात् गुरुर्भिन्नः यस्य वचसोऽर्थं जरत्प्राभाकर उन्नयति इति स्पष्टम्। तेन गुरुरन्यः जरत्प्राभाकरश्चान्यः इति वाच-स्पतिराह। १०९ पृष्ठे एव च नवीनास्तु उन्नयन्ति 'अनिरूपितनियोगव्यापारस्य इदं चोद्यं' इत्युपक्रम्य 'कर्तव्यताविषयो हि नियोगो न कर्तव्यतामाह' इति कणिकोक्ता नवीनप्राभाकर-पङ्क्तिः बृहत्यां चोदनासूत्रे २९—३० पृष्ठे ( चौखम्बा ) उपलभ्यते। तेन नव्यप्राभाकरा नाम बृहतीकारा इति वाचस्पतिः प्रतिपादयति इति स्पष्टम्। एतावता गुरुरन्यः, जरत्प्राभाकरो गुरोर्भिन्नः, नवीनप्राभाकरश्च बृहतीकारः ताभ्यां भिन्नः इति सिद्धं भवति। २८१ पृष्ठे विधि-विवेकः 'अलं वा गुरुभिर्विवादेन' इत्याह। अथ साक्षात् बृहत्यामेव १८१ पृष्ठे 'तदिद-मनुपासितगुरोश्चोद्यं' इत्युक्तम्। १०३ पृष्ठे च 'किमनया अनुपासितगुरुकथया विकल्पि-तया' इत्युक्तम्। एतेन बृहतीकारात् गुरुर्भिन्न इति सिद्धमेव भवति। नहि स्वस्यैवायं गुरु-पदेन विमर्श इति कल्पयितुमपि शक्यम्। एतावता **गुरुः, जरत्प्राभाकरः, नवीनप्राभाकरश्च** बृहतीकारः परस्परमत्यन्तभिन्ना इति सिद्धम्।

अत्र **विधिविवेकः** ( पृ. २७९ ) 'एवमनपेक्षतया प्रामाण्यसिद्धेः कार्यान्वयरहितभूतादिकमपि अवगमयितुमलमाम्नायः इति, असमञ्जसमेतत् यदि कार्यरूप एव वेदार्थः, कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः। यस्मात् भूतादिकमर्थं चोदनैव गमयति, कथं कार्यमर्थमेवमवगमयन्ती भूतादिकमपि गमयति' इति।

एवं इत्यादिना आम्नायः इत्यन्तेन 'चोदना हि भूतं भवन्तं भविष्यन्तं' इत्यादि चोदनासूत्रस्थं भाष्यं व्याख्यातम्। अत्र **कणिका** — 'चोदना हि इति भाष्यग्रन्थस्य निबन्धनकृतो व्याख्यानं असमञ्जसं इत्याह—इत्यसमञ्जसमेतत्। सर्वनामपरामृष्टं निबन्धनकृतो व्याख्यानमाह— "यदि कार्यरूप एव वेदार्थः, कथं तर्हि मन्त्रार्थवादाः सोपनिषत्काः भूतार्थाभिधायिनः" इत्याशङ्क्य अवतारितं चोदना हीति। तस्यार्थमाह— यस्मात् भूतादिकमर्थं चोदनैव गमयति' इत्यादिः। अथ अत्रत्यो **बृहती**ग्रन्थः ( पृ. १६, १८ ) 'चोदनेति क्रियायाः प्रवर्तकं वचनमाहुः इति कार्येऽर्थे वेदस्य प्रामाण्यं दर्शयति। तल्लक्षणो धर्म इति वदन् ( एतान्यक्षराणि भाष्यमूले न विद्यन्ते ) कार्यरूप एवेति दर्शयति। चोदना हि भूतमिति। यदि कार्ये एव चार्थे वेदस्य प्रामाण्यं, कथं तर्हि भूताद्यर्थावगतिः मन्त्रार्थवादेषु। तेषामपि हि कार्यार्थतां द्वितीये पादे वक्ष्यति। तदुक्तं ( भाष्ये ) शक्नोत्यवगमयितुं इति'।

अत्र विचार्यम्। निबन्धनग्रन्थस्तावत् नाद्याप्युपलब्धः। मण्डनाचार्योक्तिस्तु प्रकृतोपयोगि निबन्धनग्रन्थस्वरूपं निश्चेयम्। बृहती तु मुद्रिता उपलभ्यते। एवं सति निबन्धनबृहत्योस्तुलना कर्तव्या। ततः निबन्धनं च बृहती च एक एव वा नामभेदेन ग्रन्थः, भिन्नौ वा ग्रन्थौ इति निश्चेतुं शक्यम्। वयं तु प्रतीमः निबन्धनबृहत्योः यद्यपि अर्थत ऐक्यं, तथापि अक्षरशो विचारे महान् भेदः। भिन्ना हि उभयत्र अक्षरपरिपाटी। ननु प्रभाकरगुरुमतप्रतिपादिकायां निबन्धनाख्यटीकायां विद्यमानायां पुनर्बृहतीकारः कस्मात् टीकाऽन्तरमकरोत् इति। उच्यते। साधितं हि प्राक्, यत् गुरुः, जरत्प्राभाकराः, नव्यप्राभाकराश्च भिन्ना इति। तेन सत्यामपि प्राचीनायां टीकायां स्वतः प्रभाकरगुरुप्रणीतायां नव्यमतप्रतिपादनार्थं नव्यप्राभाकरेण बृहती नाम अपरा टीका प्राणायि इति न कश्चिद्दोषः। यथा जैमिनिसूत्रवृत्तयो वा शाबरभाष्यटीका वा नानाकर्तृकाः मतभेदेन भवन्ति तद्वत्। सर्वथाऽपि निबन्धनाख्या भाष्यव्याख्या भिन्ना, सा साक्षात् गुरुप्रणीता स्यात्, बृहती नाम भाष्यव्याख्या च निबन्धनाद्भिन्ना अन्येन केन चित् प्रणीता स्यात्। तस्मात् गुरुरन्यः, जरत्प्राभाकरो भिन्नः, नव्यप्राभाकरो बृहतीकारश्च ताभ्यां भिन्न इत्येव निश्चेतव्यम्। तत्र बृहती शाबरभाष्यस्य टीका तर्कपादीया सर्वा अधिकरणशः संगृहीता तावत्या एव लब्धत्वात्। सा च अर्थज्ञानोपयोगिकंसस्थऋजुविमलांशसहिता।

**टीकाकारः** ( प्राभाकरः ) । टीकाकारीयं मतमुपन्यस्यति—'प्रमाणान्तरागोचरः शब्दमात्रालम्बनः नियुक्तोऽस्मीति प्रत्यात्मवेदनीयः सुखादिवत् अपरामृष्टकालत्रयः लिङादीनामर्थो विधिरिति' (वि. वि. पृ. ४८) **कणिका. पृ. ४८** । विधिविवेकस्था उपन्यस्ता पङ्क्तिरियं बृहत्यां तर्कपादे अवहितैर्गवेषयद्भिरपि नोपलब्धाऽस्माभिः । तथा च कोऽयं टीकाकारो नामेति विचार्यम् । 'टीकाकारः प्रयोजनं दर्शयति— लोके इत्यादिभाष्यस्थेत्यादिना' इति बृहती अवतारिता शालिकनाथेन । 'तत्र टीकाकारः पृच्छति किमनेनावधार्यते इति' ( ऋजु. ३८ ) । 'तदाह भगवान् वार्तिककारः ( प्राभाकरीयः )' इत्युक्त्वा कानि चिद्वार्तिकानि विलिख्य 'तदेतत् टीकाकारो भगवान् न मृष्यति' इत्युक्त्वा 'यथा गुरुदर्शनं किं चिदुच्यते' इति लिखन् शालिकनाथः वार्तिककारं टीकाकारं गुरुं च भिन्नान् सूचयति ( पृ. ९० ) । टीका नाम शाबरभाष्यस्य व्याख्या । सा च अनेकविधा मतभेदेन तत्तेनाचार्येण प्रणीता स्यात् । तत्र साक्षात् गुरुणा प्रणीता निबन्धाख्या निबन्धनाख्या वा एका, अपरा जरत्प्राभाकरप्रणीता, तृतीया च नवीनप्राभाकरेण बृहती लघ्वी चेति द्विविधा प्रणीता । तत्र बृहतीं नाम टीकां शालिकनाथः अनुवदति । त्रयोऽपि च ते टीकाकारा एव । तत्र शालिकनाथः बृहतीटीकाकारं, टीकाकारशब्देन अभ्यधादिति स्वीकारेऽपि न कश्चित् विरोधः । नहि एकेनैव केन चित् टीकाकारेण भाव्यमिति दण्डको दण्डधारिभिरुद्यतः । तथा च वाचस्पत्युक्तः टीकाकारोऽन्यः स्यात् साक्षात् गुरुः, शालिकनाथेन च अन्यष्टीकाकारः उक्तो बृहतीकारः इति स्वीकारेऽपि न कश्चिद्विरोधः ।

**वार्तिककाराः** प्रभाकरपक्षीयाः । उक्तं च ऋजुविमलायां (पृ. ७०) तदाहुर्वार्तिककारमिश्राः 'गम्यमानस्य चार्थस्य नैव दृष्टं विशेषणम् । शब्दान्तरैर्विभक्त्या वा धूमोऽयं ज्वलतीतिवत् ॥' इति । तदाह वार्तिककारः 'यावच्चाव्यतिरेकित्वं स ह्यंशेनापि शक्यते । विपक्षस्य कुतस्तावत् हेतोर्गमकताबलम् ॥' इति ( ऋजु. पृ. ८४ ) । इमौ श्लोकौ भाट्टवार्तिकेषु नोपलभ्येते । तस्मात् प्राभाकरीय एव कश्चित् वार्तिककारः स्यात् । नास्य किमपि कोषे संग्रहीतुं शक्यम् । कोऽयं नामतो वार्तिककारः इति च न ज्ञायते । शालिकनाथेन च अनेका वार्तिकश्लोका उदाहृताः । तत्संग्रहस्तु नास्माभिः कर्तुं पार्यते ।

**भवनाथः** नयविवेकस्य कर्ता । अस्य व्याख्या नयकोशादयः । अयं प्रभाकरमतानुयायी इति प्रभाकरविजयभूमिका । एतं शालिकनाथं चाश्रित्य नन्दीश्वरेण प्रभाकरविजयः प्रणीतः ।

**शालिकनाथः** नन्दीश्वरात् प्राचीनः । अनेन बृहत्यां 'ऋजुविमला' नाम टीका कृता । यस्याः प्रारम्भे 'सृष्ट्वाऽज्ञाननिशाध्वंसिनिबन्धमयवासरम् उद्भासितजगज्जाड्यं नमस्यामः प्रभाकरम् ॥ १ ॥' सूर्यपरः मूलकारपरश्चेति द्व्यर्थः श्लोकः । 'प्रभाकरगुरोर्भावे मितगम्भीरभाषिणः । अञ्जसा व्यञ्जयिष्यन्ती पञ्जिका क्रियते मया ॥ २ ॥'

अत्रत्यप्रभाकरगुरुशब्देन बृहतीकारो ग्राह्यः मङ्गलश्लोकस्थत्वात् इति युक्तम् । परंतु मण्डनाचार्य-वाचस्पतिमिश्रयोर्वचनात् स्वयं बृहतीकारवचनाच्च तथा ग्रहीतुं न शक्यते । तस्मात् शालिक-नाथोक्तिः बृहतीकारासंलग्ना वास्तविकनिबन्धकारप्रभाकरगुरुपरैव स्वीकार्या गत्यभावात् । अनेन श्रीशालिकनाथेन प्रकरणपञ्जिका अनेकप्रकरणघटिता, मीमांसाजीवरक्षा, वाक्यार्थमातृका-वृत्तिश्चेत्यपि ग्रन्थाः प्रणीताः । तत्र मीमांसाजीवरक्षा वाक्यार्थमातृकावृत्तिश्चेति निबन्धौ शब्दशः सर्वौ, प्रभाकरविजयस्थप्रकरणानि वर्जयित्वा अवशिष्टानि प्रकरणपञ्जिकास्थानि प्रकरणानि च संगृहीतानि अस्माभिः ।

**नन्दीश्वरः** प्रभाकरमतानुयायी । केरलब्राह्मणः । प्रभाकरविजयः नाम अनेक-प्रकरणात्मकः निबन्धग्रन्थोऽस्य । तत्र एकविंशतिः प्रकरणान्युपलब्धानि मुद्रितानि । तस्यादौ इमौ श्लोकौ ‘ यदाराधनतामेत्य कृतं कर्माधिकारिभिः । सकलं जायते काले तं वन्दे विष्णुमव्ययम् ॥१॥ नाथद्वयात्तसारेऽस्मिन् शास्त्रे मम परिश्रमः । शुक्तिश्रमायते सिन्धौ हरिणोद्धृतकौस्तुभे ॥’ इति । नाथद्वयं भवनाथशालिकनाथौ । सोऽयं प्रभाकरविजयः सर्वः संगृहीतः प्रकरणानि वर्ण-क्रमेण भित्त्वा । ( सन ५००—६०० ) ।

**भाष्यव्याख्याकाराः** भट्टपादेभ्यः प्राचीना अनेके आसन् । उक्तं च भट्टपादैः ३।४।९ सूत्रोत्तरं— ‘ अतः परं षट् सूत्राणि भाष्यकारेण न लिखितानि । तत्र व्याख्यातारो विवदन्ते । केचिदाहुर्विस्मृतानि, लिखितो ग्रन्थः प्रणष्ट इत्यपरे, फल्गुत्वादुपेक्षितानीत्यन्ये, अनार्षेयत्वात् इत्यपरे, वृत्त्यन्तरकारैस्तु सर्वैर्व्याख्यातानि ’ इति । तत्र किमादिशब्दैः चतुरो व्याख्याकारान् निर्दिश्य पुनः ‘ वृत्त्यन्तरकारैः सर्वैः ’ इति बहुवचनेन सर्वशब्देन च निर्देशात् भूयस्य एव सूत्रव्याख्याः भाष्यव्याख्याश्च प्राचीना आसन् इति स्पष्टं भवति ।

**कुमारिलभट्टपादाः** । (सन ६५०—७५०) शाबरभाष्ये वार्तिकं प्रणीतमेभिः । एतन्नाममाहात्म्येनैव भाट्टप्रस्थानं भाट्टमतं इति प्रसिद्धः प्रवादः । मीमांसासंप्रदायप्रवर्तक आचार्यो-ऽयम् । एभिः श्लोकवार्तिकं, तन्त्रवार्तिकं, टुप्टीका चेति वार्तिकत्रयं प्रणीतम् । तत्र तर्कपादे श्लोक-वार्तिकम् । तत्रापि जिज्ञासासूत्रे श्लोकाः १२८, चोदनासूत्रे २८६, निमित्तसूत्रे २, प्रत्यक्ष-सूत्रे २५४, औत्पत्तिकसूत्रे तत्र च वृत्तिकारग्रन्थे २६, निरालम्बनवादे २०१, शून्यवादे २६१, अनुमानपरिच्छेदे १८८, शब्दपरिच्छेदे १११, उपमानपरिच्छेदे ५४, अर्थापत्तिपरि-च्छेदे ८८, अभावप्रामाण्यवादे (अनुपलब्धिपरिच्छेदे) ५८, चित्राऽऽक्षेपवादे १५, संबन्धाक्षेपवादे ४६, स्फोटवादे १३७, अपोहवादे १७६, वनवादे ९७, संबन्धाक्षेपपरिहारे १४१, चित्राक्षेप-परिहारे १४१, आत्मवादे १४८ ( इत्यौत्पत्तिकसूत्रसमाप्तिः ) । शब्दनित्यत्वाधिकरणे ४४४, वाक्याधिकरणे ३६९, वेदनित्यताऽधिकरणे १९ । संकलनया तर्कपादे वार्तिकश्लोकाः ३८४८ ।

अथ द्वितीयचरणमारभ्य तृतीयाध्यायान्तं तन्त्रवार्तिकम् । चतुर्थाध्यायमारभ्य द्वादशाध्यायान्तं टुप्टीकावार्तिकम् । प्रभाकरविजयभूमिकायामुक्तं— भाष्ये भट्टाचार्याणां पञ्च व्याख्यानानि एका बृहट्टीका, द्वितीया मध्यमटीका, तृतीया टुप्–टीका, चतुर्थी कारिका (श्लोकाः), पञ्चमं तन्त्रवार्तिकम् । तत्र बृहन्मध्यमटीके संप्रति न वर्तेते—इति ।

सुधा—एतदेवाभिप्रेत्य बृहट्टीकायामुक्तं 'अन्तरं यादृशं लोके ब्रह्महत्याऽश्वमेधयोः । दृश्यते तादृगेवेदं विधानप्रतिषेधयोः ॥' इति । पृ. २०१ । 'लक्षणार्थत्वस्य बृहन्मध्यमटीकयोः टुप्टीकायां च निषेधात्' पृ. ९३० । 'यस्य सर्वाणि हवींषि नश्येयुर्वा दुष्येयुर्वा अपहरेयुर्वा आज्येन ता देवताः परिसंख्याय यजेत' इति वचनात् स्विष्टकृद्यागस्य आज्येन करणेन बृहट्टीकायामुक्तेऽपि शेषकार्यान्तराणामकरणं षष्ठे वक्ष्यमाणं सिद्धं भवति—इति । पृ. १९१६.

श्लोकवार्तिकस्थानां तत्तत्प्रकरणवर्तिनः केचिदेव श्लोका उपयुक्तन्यायरत्नाकरसहिताः संगृहीताः । तन्त्रवार्तिकं सर्वम् । टुप्टीका च उपयुक्ततन्त्ररत्नसहिता सर्वा । टुप्टीका च अस्मदीयलिखितादेव गृहीता न मुद्रिता । क्वचित्तु लिखितस्य त्रुटितत्वात् मुद्रितादपि आनन्दाश्रमीयात् संग्रहः कृतः ।

**मण्डनाचार्याः** । एते सुरेश्वराचार्येभ्यो भिन्ना इति केचित्, न भिन्ना इत्यपरे । अनयोः पक्षयोर्विस्तरः ब्रह्मसिद्धिभूमिकायां द्रष्टव्यः । एतत्प्रणीतो भावनाविवेकः सर्वः भट्टोम्बेकप्रणीतटीकांशोपेतः, विधिविवेकः सर्वः वाचस्पतिविरचितन्यायकणिकांशसहितः, मीमांसाऽनुक्रमणिका च प्रायः ऐकैकश्लोकचरणेन एकैकाधिकरणार्थप्रतिपादिका श्लोकात्मिका सर्वा संगृहीता ।

**उम्बेकभट्टः** । अयमेव भवभूतिः प्रसिद्धः कविः इति वदन्ति । तथा सति विदर्भीयपद्मपुरनिवासी ज्ञाननिधिशिष्यः इति केचित् । कुमारिलभट्टशिष्योऽयमित्यन्ये इत्यादि चरित्रकोशे चित्रावशास्त्रिणः । मण्डनाचार्यप्रणीतस्य भावनाविवेकस्य टीका अनेन प्रणीता । सा च भावनाविवेकार्थज्ञानोपयोगिनी यावती तावती संगृहीता भावनाविवेकेन सहैव । (सन ७००–७५०) ।

**वाचस्पतिमिश्राः** । एतत्प्रणीता न्यायकणिका विधिविवेकस्य टीका । एतद्गता बहवोंऽशा विधिविवेकार्थज्ञानोपयोगिनः संगृहीताः, केचिद्वादार्थाश्च, लघुसिद्धान्ताश्चान्ये । (सन ८४१) । महामहिमान एते सर्वेष्वेव शास्त्रेषु आचार्यत्वेन स्वीकृताः प्रमाणभूताः । ब्रह्मसिद्ध्यादौ च टीकाग्रन्था अपि एतैः प्रणीताः ।

**भवदेवः** । अनेन तौतातिकमततिलकः नाम भवप्रसादापरपर्यायो ग्रन्थः प्राणायि । स च यावति तन्त्रवार्तिकं तावत्येव मीमांसाभागे इति वदन्ति । रचना चास्य शास्त्र-

दीपिकावत् । प्रायः प्रत्यधिकरणं च प्राभाकरमतमनूद्य खण्डयत्यसौ । आचार्यपार्थसारथेः सकाशात् प्राचीनोऽयमाचार्यः, तेनास्य क्व चित् खण्डनात् । ग्रन्थोऽयं सर्वः संगृहीतः अधिकरणशः तर्कपादवर्जं अध्यायद्वयात्मकः ।

**पार्थसारथिः** । यज्ञात्मसूनुः वाचस्पतिमिश्रसमकालिक इति के चित् । न्यायरत्नाकरः श्लोकवार्तिकस्य टीका, तन्त्ररत्नं टुप्टीकायाः टीका, न्यायरत्नमाला च अनेकप्रकरणात्मको ग्रन्थः विशेषतः प्राभाकरमतखण्डनपरः, शास्त्रदीपिका द्वादशलक्षणी एते ग्रन्थाः प्रणीता एतैराचार्यैः । तत्र न्यायरत्नाकरः अंशतः, तन्त्ररत्नस्था भूयांसोऽशाः, न्यायरत्नमाला सर्वा, शास्त्रदीपिकास्थाश्च तत्तदधिकरणस्थाः सर्वे संग्रहश्लोकाः, तर्कपादस्थाः प्रायः सर्वे वादार्थाः भूयांसश्च लघुसिद्धान्ताः संगृहीताः । एतत्प्रणीततन्त्ररत्नं विना टुप्टीका परिशीलयितुमशक्येति नातिशयोक्तिः ।

**सोमनाथः** । मयूखमालिका ( सोमनाथी ) शास्त्रदीपिकायाः प्रथमाध्यायद्वितीयपादमारभ्य आद्वादशाध्यायान्ता टीका एतत्प्रणीता । ‘ इति श्रीनिट्टिलकुलतिलकसूरभट्टमहोपाध्यायतनूभवस्य वेङ्कटाद्रियज्वगुरुचरणानुजस्य सोमनाथसर्वतोमुखयाजिनः कृतौ मयूखमालिकायाम् ।’ इति अन्ते उक्तिः । अत्रत्या संगतिः तत्तदधिकरणप्रथमसूत्रार्थः भूयांसः शास्त्रार्थाश्च संगृहीताः । खण्डदेवात् प्राचीनोऽयमिति चिन्नस्वामिनः ।

**माधवाचार्यः** । एतत्प्रणीतः जैमिनीयन्यायमालाविस्तरः द्वादशलक्षणी । तत्रत्याः सर्वे श्लोकाः गद्यग्रन्थश्च कियांश्चित् संगृहीतो न्यायाश्च । ( सन १३४७–८९ )

**सोमेश्वरभट्टः** भट्टमाधवात्मजः । एतत्प्रणीता न्यायसुधा नाम तन्त्रवार्तिकस्य टीका राणकापरपर्याया । ग्रन्थतोऽर्थतश्च महान् ग्रन्थः । तन्त्रसारः नाम ग्रन्थोऽपि प्रणीतोऽनेन ‘ तन्त्रसारे अस्माभिः ’ (सु. पृ. ९६६,१५३९ इ.) इत्युक्तत्वात् । स तु इदानीं नोपलभ्यते । सुधायाः ४७७०६ एतावान् ग्रन्थः मुद्रितः । पञ्चमषष्ठपादौ तु अनुपलब्धत्वान्न मुद्रितौ चौखम्बायाम् । एवं तृतीयाध्यायप्रथमपादस्थानि १–१२ सूत्राणि न मुद्रितानि । ‘ इति श्रीमत्त्रिकाण्डमण्डनप्रतिवसन्तसोमयाजिभट्टमाधवात्मजभट्टसोमेश्वरविरचितायां तन्त्रवार्तिकटीकायां सर्वानवद्यकारिण्यां न्यायसुधाख्यायां ’ इति प्रथमाध्यायान्ते समाप्तिवाक्यम् । अत्रत्याः सर्वे सूत्रार्थाः न्यायाः भूयांसश्च लघुसिद्धान्ताः संगृहीताः । न्यायसुधाऽभ्यासं विना तन्त्रवार्तिकं सम्यक्तया ज्ञातुमशक्यम् ।

**अप्पय्यदीक्षिताः** । रङ्गराजदीक्षितपुत्रः द्रविडः । एतत्प्रणीतः उपक्रमपराक्रमः विधिरसायनं च स्वकीयश्लोकव्याख्यानरूपम् । तत्र उपक्रमपराक्रमस्था भूयांसोऽशाः रसायनस्थाश्च के चिदेव संगृहीताः । ( १५२०–१५९२ ) ।

**शंकरभट्टाः** मीमांसाबालप्रकाशकाराः । एभिरेव मीमांसासारसंग्रहो नाम श्लोकात्मको ग्रन्थो विरचितः, यस्यायमाद्यः श्लोकः ' नत्वा गणेशवाग्रामगुर्वङ्घ्रीन् भट्टशंकरः । सहस्रं वक्ति सिद्धान्तान् सार्धश्लोकशतद्वयात् ॥ ' इति । अन्ते च 'आचार्यैरधिकरणान्युक्तानि सहस्रसंख्यानि । तत्सिद्धान्तान् पादैः ( श्लोकपादैः ) तत्संख्यैर्भट्टशंकरोऽबध्नात् ॥ ' इति । एतावुभावपि ग्रन्थौ शब्दशः संगृहीतौ । ( सन १५७५–१६२५ ) । एभिरेव शास्त्रदीपिकायां प्रकाशाख्या टीका कृता इति तत्कृतोल्लेखादेव ज्ञायते । सा तु अद्यापि नोपलब्धा । एतन्निरासस्तत्रतत्र खण्डदेवैः कृतः परंतु एतान् खण्डदेवो बहु मानयति ।

**गागाभट्टाः** ( १६०३ ) । दिनकरभट्टपुत्रः । भाट्टचिन्तामणेः तर्कपादार्थप्रतिपादकग्रन्थस्य कर्ताऽयम् । शब्दशः सर्वोऽपि मणिः प्रकरणशो भित्त्वा संगृहीतः । गागाभट्टैः सूत्रवृत्तिः कुसुमाञ्जलिर्नाम विरचिता । तदुक्तं ( मणि. पृ. ८८ ) ' इदं गुरुमतं तु मद्विहितसूत्रवृत्तौ मया विचार्य कुसुमाञ्जलौ बहु च भूषितं दूषितम् । अपेक्षितमथाप्युपेक्षितमिदं कठोरत्वतः शिशुप्रतिविबोधनार्थकृतभाट्टचिन्तामणौ ॥ ' इति ।

**खण्डदेवः** । नव्यमीमांसकः । जगन्नाथपण्डितराजपितुः मीमांसायां गुरुः, रुद्रदेवस्य पुत्रः दिवाकरभट्टपुत्रविश्वेश्वरापरपर्यायगागाभट्टस्य शिष्यः ( सने १६५७ विद्यमानः ) । अन्ते संन्यस्य ब्रह्मभूयं गतोऽयं १७२२ संवति प्रौष्ठपद्यां गुरुवासरे काश्याम् । कौस्तुभे शबरकुमारिलभवदेवपार्थसारथिसोमनाथाप्पयदीक्षिताद्युक्तयो युक्तियुक्ता न काश्चिदुपेक्षिताः, अयुक्तिसहाः न काश्चिदपि न समालोचिताः एभिः इत्युक्तं श्रीचिन्नस्वामिभिः कौस्तुभभूमिकायाम् । खण्डदेवेन ग्रन्थत्रयं प्रणीतं मीमांसाकौस्तुभः, भाट्टदीपिका, भाट्टरहस्यं चेति । तत्र मीमांसाकौस्तुभः अर्थवादाधिकरणमारभ्य बलाबलाधिकरणान्त एव मुद्रितः । एतावानेवायं ग्रन्थ इति वदन्ति । भाट्टदीपिकायां तु १०।५।१२ अधिकरणे 'निरूपितं चैतत् रथंतरचरणे कौस्तुभे' इत्युक्तम् । यदि यथाश्रुतार्थ एव सोऽयं दीपिकाग्रन्थः प्रमाणं तदा बलाबलाधिकरणादुत्तरमपि रथंतरचरणान्तः ( ७।२ ) द्वादशाध्यायान्त एव वा भाट्टदीपिकायाः प्रागेव विरचित इति स्वीकर्तव्यम् । बलाबलोत्तरश्च पश्चात् लुप्तः स्यात् । वस्तुतस्तु ' रथंतरचरणे ' इत्यत्र ' रथंतराधिकरणे' इत्येव पाठः स्यात् १०।९।१६ पृ. २६ इत्यत्रेव । काञ्ची–अनन्ताचार्यैः भाट्टरहस्यभूमिकायामुक्तं– ग्रन्थकर्ताऽपि ( खण्डदेवः ) स्वप्रणीतेषु ग्रन्थेषु भाट्टदीपिकाया एकस्या एव संपूर्णतां स्वयमेव वक्ति । तथा च भाट्टदीपिकोपक्रमस्थः श्लोकः ' इतः प्राञ्चोऽखिला ग्रन्था न्यूनतादोषदूषिताः । इयमेकैव पूर्णाऽभूत् शास्त्रेऽस्मिन् भाट्टदीपिका ॥ ' इति । परंतु अयं श्लोकः मैसूरमुद्रितभाट्टदीपिकादौ वा मध्ये वा क चित् अन्ते वा नोपलभ्यते । ग्रन्थादौ च ' पूर्णा अभूत् ' इति भूतनिर्देशो नोपपद्यते, अन्ते तु उपपद्येत । स तु अन्तेऽपि नास्तीति श्लोकोऽयं अन्यस्यैव कस्य चित् स्यात्, न तु ग्रन्थकर्तुः इति कल्पयामः ।

कौस्तुभस्थाः सर्वे न्यायाः केचित् लघुसिद्धान्ताश्च गृहीता अस्माभिः। भाट्टदीपिका च सर्वैव गृहीता। अत्रत्याः सर्वे न्यायाः लघुसिद्धान्ताश्च पृथक् कृत्वा गृहीता एव। भाट्टदीपिकाया आरम्भे 'विश्वेश्वरं नमस्कृत्य खण्डदेवः सतां मुदे। तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकाम्॥' इति मङ्गलश्लोकः। अन्ते च 'जैमिनेर्विमलसूक्तिषु मग्नं शुद्धिमाप विमलं मम चेतः। प्रीतिमेतु नृहरेः पदपद्मे येन जन्मनिवहो न पुनः स्यात्॥' इति श्लोकः। सेयं भाट्टदीपिका अष्टादशसहस्रग्रन्थात्मिका इति काञ्ची—अनन्ताचार्याः।

भाट्टरहस्यं सर्वमेव संगृहीतम्। अयं ग्रन्थः शाब्दबोधविचाररूपः। सोऽयं परिच्छेदचतुष्टयात्मकः इति वदन्ति। तत्र प्रथमपरिच्छेद एव केवलः काञ्ची—अनन्ताचार्यैर्मुद्रितः। रहस्येऽस्मिन् 'स्मृत्वास्मृत्वा मुरारातिं तत्प्रसादावलम्बनात्। रहस्यं भाट्टतन्त्रस्य विशदीकर्तुमीश्महे॥' इति मङ्गलश्लोकः। अन्ते च 'नवीनानां नानामननविशदानामयमहो सुयुक्तीनां पुञ्जैरिह विरचितः कोऽपि जगति। महानर्कस्तर्कप्रथिततमसंजाततमसां सुधाकृन्मीमांसामतकुमुदपूरस्य जयतु॥' इति उपान्त्यः श्लोकः। अत्र सुधाकृत् न्यायसुधाकृत् सोमेश्वरः, पक्षे चन्द्रश्च।

**आपदेवभट्टाः**। ( १७००—१७५० )। मीमांसान्यायप्रकाशः एभिः प्रणीतः। अत्रत्या भूयांसोंऽशाः संगृहीताः लघुसिद्धान्तेषु।

**अनन्तदेवः** आपदेवभट्टसूनुः। भाट्टालंकारो नाम मीमांसान्यायप्रकाशस्य टीका अनेन प्रणीता। अत्रत्याः केचिदंशाः संगृहीताः। ( १७२५—१८०० )

**वासुदेवदीक्षिताः**। एतत्प्रणीता अध्वरमीमांसा—कुतूहलवृत्तिः। अस्याः तृतीयाध्यायचतुर्थपादान्त एव भागः वाणीविलासमुद्रणालये मुद्रितः। शेषो ग्रन्थस्तु अड्यारपुस्तकालये लिखितः संवर्तते। तत्रापि द्वादशोऽध्यायः संकर्षकाण्डीया च वृत्तिर्नास्त्येव। कुतूहलस्थाः सर्वे न्यायाः केचिद्वादार्थाः लघवश्चांशाः संगृहीताः। कुतूहलवृत्तौ शब्देन्दुशेखरोल्लेखात् ( पृ. ७७ ) नागेशात् ( १७००—१७५० ) अर्वाचीनाः। कुतूहलस्य प्रथमाध्यायान्ते 'इति श्रीमत्संततसंतन्यमानश्येनकूर्मषोडशाररथचक्राकाराद्यनेकगुणविराजमानमहाग्निविलसितप्रौढापारिमितमहाध्वरस्य श्रीशहाजिशरभजितुक्कोजिभोसलचोलमहीमहेन्द्रामात्यधुरंधरस्य श्रीमत आनन्दरायविद्वत्सार्वभौमस्य पञ्चपुरुषीपोष्येण तदध्वर्युणा बाल्य एव तद्दयानिर्वर्तितापरिमितमहाग्निविजृम्भितवाजपेयसर्वपृष्ठाप्तोर्यामादिवरिष्ठसोममखसंतर्पितशतमखप्रमुखबर्हिर्मुखेन श्रीमहादेववाजपेययाजिसुतेन अन्नपूर्णागर्भजातेन अपारपदवाक्यप्रमाणपारावारपारीणाग्रजन्मविश्वेश्वरवाजपेययाजिनो लब्धविद्यावैशद्येन वासुदेवदीक्षितविदुषा विरचितायां जैमिनिसूत्रव्याख्यायां अध्वरमीमांसाकुतूहलवृत्तौ' इति समाप्तिसंकल्पः।

**वैद्यनाथः** तत्सदुपाख्यः । एतत्कृतः न्यायबिन्दुः द्वादशाध्यायी लघुर्वृत्तिः । सोऽयं अधिकरणार्थं संक्षिप्तेन ग्रन्थेन साधु निरूपयति । अत्रत्यानि भूयांस्यधिकरणानि संगृहीतानि परंतु न सर्वाणि ।

**रामेश्वरसूरिः** । अनेन **सुबोधिनी** नाम द्वादशलक्षणीसूत्रवृत्तिः १७५९–१७६१ शकवर्षेषु काश्यां विरचिता । अल्पशः सेयं संगृहीता । ( सन १८३७–१८४० )

**मुरारिमिश्रः** । एतत्प्रणीता अङ्गत्वनिरुक्तिः षट्प्रकरणात्मिका नव्यन्यायभाषामयी । तस्या अयमाद्यः श्लोकः 'नमामि तुलजां स्वीयकुलजाद्य(द्या)धिदेवताम् । सर्वाभीष्टफलप्राप्त्यै ब्रह्मादिभिरभिष्टुताम् ॥' इति । समाप्तिसंकल्पश्च ' इति श्रीमन्न्यायमीमांसापारावारपारीणमुरारिमिश्रविरचिताङ्गत्वनिरुक्तौ षट्प्रमाणकमङ्गत्वनिरूपणं समाप्तम् ' इति । अङ्गत्वनिरुक्तिकारोऽयं मुरारिमिश्रो न अनर्घ्यराघवकर्ता, निरुक्तिकारस्य खण्डदेवादपि अर्वाचीनत्वात् अनर्घ्यराघवकर्तुस्तु ९५० सनात् प्राचीनत्वात् । अङ्गत्वनिरुक्तौ च क्व चित् खण्डदेवः खण्डितः अनेकत्र चानुसृत इति स्पष्टम् । अङ्गत्वनिरुक्तिः प्रकरणशो वर्णक्रमेण भित्त्वा सर्वा संगृहीता । मुरारिमिश्रेण केन चित् गोभिलगृह्यसूत्रमपि व्याख्यातं इति गोभिलगृह्यसूत्रभूमिकायां म० म० मुकुन्दशर्मा । स तु अतीवार्वाचीनो नाङ्गत्वनिरुक्तिकारः इति भाति ।

**वैद्यनाथाः** । वेंगल्लूरपुरस्थशंकरपाठशालायां मीमांसाशास्त्राध्यापकपदमलंकुर्वाणाः मीमांसाकण्ठीरवाः एते तर्कपादीयभाष्यव्याख्यां प्रभानाम्नीं प्राणैषुः । अत्रत्याः के चिदंशाः संगृहीताः । सेयं टीका आनन्दाश्रमे भाष्येण सह मुद्रिता । ( सन १८२५–५० )

**भास्करभट्टः** गम्भीराख्यविप्रस्य पुत्रः । संकर्षकाण्डं भाट्टदीपिकया खण्डदेवकृतया रहितमालोच्य तदानीमुपलब्धं देवस्वामिभाष्यमभ्यस्य भाट्टचन्द्रिकां नाम वृत्तिं प्रणिनाय । उक्तं च तेनैव ग्रन्थान्ते ' खण्डदेवकृतभाट्टदीपिका लक्षणैः कतिपयैरसंभृता । इत्युदीक्ष्य बुधभास्करोऽग्निचिद् भारतीं बरिभराम्बभूव ताम् ॥ अद्यावधि कृतिरेषाऽऽद्यन्तविहीनेति दीपिकाख्याऽऽसीत् । षोडशकलाभिरधुना परिपूर्णा भाट्टचन्द्रिकात्वमगात् ॥ ' इति ' तां पूर्णामतनोत् श्रमेण महता गम्भीरजो भास्करः । ' इति च । सेयं भाट्टचन्द्रिका सर्वा अधिकरणशः संगृहीता । तेन सर्वं संकर्षकाण्डं संगृहीतमिति मन्यामहे सूत्रभाष्ययोरनुपलम्भात् चन्द्रिकायाश्च सर्वसंकर्षकाण्डव्यापकत्वात् । भाट्टानुयायी सोऽयं खण्डदेवादर्वाचीनः । भाष्यं चादः न शाबरं किंतु देवस्वामिकृतं, चन्द्रिकाकारेणैव अनेकत्र देवस्वामिभाष्यस्य स्पष्टमुल्लेखात् ।

**रघुनाथशर्मा** श्रीगुलाबरायवर्यात्मजः लौकिकन्यायसंग्रहकर्ता ।

**ठाकुरदत्तशर्मा** मुलताननगरनिवासी । अनेन भुवनेशलौकिकन्यायसाहस्री संपादिता । सा सर्वा संगृहीता । ( सन १९०७ )

येयं ग्रन्थकारमाला प्रदर्शिता, अस्यां ये ग्रन्था निर्दिष्टास्ते केवलमस्माभिरंशतो वा सर्वतो वा संगृहीतास्त एवेति ज्ञेयं, न तु तेनतेन ग्रन्थकारेण तावन्त एव ग्रन्थाः प्रणीता इति भ्रमितव्यम्। अप्पय्यदीक्षितानां ग्रन्थद्वयमेवास्माभिर्निर्दिष्टं, परंतु तैः नानाशास्त्रीयाः शताधिकाः ग्रन्थाः प्रणीता इति सुप्रसिद्धम्। एवमन्येषामपि। यश्च तत्तत्कालनिर्देशः कृतः सोऽपि नास्मत्संशोधितः, अस्माभिः कालसंशोधनस्याकृतत्वादेव। किंतु अन्यैर्विद्वद्भिर्यत् क चिदुक्तं, तदस्माभिः केवलमनूदितम्।

**शब्दशः संपूर्णा गृहीता ग्रन्थाः एते—** अङ्गत्वनिरुक्तिः। टुप्टीका। तन्त्रवार्तिकम्। न्यायरत्नमाला। प्रभाकरविजयः। बृहती। भाट्टचिन्तामणिः। भाट्टदीपिका। भाट्टरहस्यम्। भावनाविवेकः। भाष्यं शाबरम्। मीमांसाजीवरक्षा। मीमांसाबालप्रकाशः। मीमांसाऽनुक्रमणिका। मीमांसासारसंग्रहः। लौकिकन्यायसाहस्री। वाक्यार्थमातृकावृत्तिः। विधिविवेकः। संकर्षकाण्डम्। सूत्राणि जैमिनीयानि।

**अंशभूयस्त्वेन गृहीता ग्रन्थाः—** उपक्रमपराक्रमः। ऋजुविमला। कुतूहलवृत्तिः। जैमिनीयन्यायमालाविस्तरः। तन्त्ररत्नम्। तौतातिकमततिलकः। न्यायकणिका। न्यायबिन्दुः। न्यायसुधा। प्रकरणपञ्जिका। मीमांसाकौस्तुभः। मीमांसान्यायप्रकाशः। शास्त्रदीपिका। श्लोकवार्तिकम्। सोमनाथी।

अन्येऽप्यनेके ग्रन्थाः येषां के चिदेवांशा गृहीता न्याया एव वा, तेषां परस्तात् ग्रन्थसंक्षेपप्रदर्शनसमये निर्देशं करिष्यामः कांश्चित्तु कोषे एव निर्देक्ष्यामः।

**प्राभाकरीया ग्रन्थाः—** बृहती। ऋजुविमला। प्रकरणपञ्जिका। मीमांसाजीवरक्षा। वाक्यार्थमातृकावृत्तिः। प्रभाकरविजयः।

**मीमांसायाः प्रयोजनम्—** मीमांसाप्रयोजनं स्वयं **सूत्रकार** एव 'अथातो धर्मजिज्ञासा' इति धर्मज्ञानमित्याह। **भाष्यकारश्च—** 'धर्माय जिज्ञासा धर्मजिज्ञासा, सा हि तस्य ज्ञातुमिच्छा। स कथं जिज्ञासितव्यः? को धर्मः, कथंलक्षणः, कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति' इत्याह। 'धर्मं प्रति हि विप्रतिपन्ना बहुविदः, के चिदन्यं धर्ममाहुः, के चिदन्यम्। सोऽयमविचार्य प्रवर्तमानः कं चिदेवोपाददानो विहन्येत, अनर्थं च ऋच्छेत्। तस्मात् धर्मो जिज्ञासितव्यः' इति च। एतेन विचारपूर्वकं निर्णयात्मकं धर्मज्ञानं मीमांसायाः फलमिति ज्ञायते। **श्लोकवार्तिके** च (१।१।१।१२७–१२८) 'स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये। मतिर्बहुविदां पुंसां संशयान्नोपजायते॥ के चिदाहुरसावर्थः के चिन्नासावयं त्विति। तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते॥' इत्युक्तम्। **तन्त्रवार्तिकेऽपि** (१।३।९।२३ पृ. ३१०) 'मीमांसा चापि

वेदार्थतत्त्वनिर्णयकारणम् । ' इति । ( १।४।१।१ पृ. ३२० ) ' सर्वत्र हि एतत् विचार्यते किमिदं वाक्यं अस्यार्थस्य प्रमाणं, उतान्यस्येति ' इति च । मीमांसा हि वाक्यशास्त्रम् । यथा व्याकरणं पदशास्त्रं, न्यायः प्रमाणशास्त्रं तद्वत् । प्राप्ताप्राप्तविवेकेन उद्देश्यविधेयभावं विचार्य वेदवाक्यार्थनिर्णयोऽस्मिन् शास्त्रे क्रियते । निर्णीते च वाक्यार्थे कर्तव्याकर्तव्यज्ञानं भवति । तदनया रीत्या कर्तव्यस्य धर्मस्य अकर्तव्यस्य चाधर्मस्य ज्ञानं मीमांसया भवति इति धर्मज्ञानमेव मीमांसायाः प्रयोजनम् ।

**मीमांसाया गृहीतकृत्यं** नाम मूलभूताः सिद्धान्ताः—जगतः पारमार्थिकत्वं मीमांसायाः गृहीतकृत्यम् । अन्यथा स्वर्गपशुपुत्राद्यर्थं धर्मानुष्ठानासंभवः । उक्तं च **श्लोकवार्तिके** निरालम्बनवादे ' प्रमाणत्वाप्रमाणत्वे , पुण्यपापादि , तत्फलम् ।, विध्यर्थवादमन्त्रार्थनामधेयादिकल्पना । १ ॥ , सर्वेषु लक्षणेष्वेवं स्वप्रमाणगणैः स्थितिः ।, वचनव्यक्तिभेदेन पूर्वसिद्धान्तपक्षता । २ ॥ , कर्मभ्यः फलसंबन्धः, पारलौक्यैहलौकिके । सर्वमित्याद्ययुक्तं स्यादर्थशून्यासु बुद्धिषु । ३ ॥' इति । ' स्वप्नादिभोगवच्चापि योपभोगत्वकल्पना । तन्निवृत्त्यर्थमेवेह परमार्थे प्रयत्यते । ११ ॥ नहि स्वप्नसुखाद्यर्थं धर्मे कश्चित् प्रवर्तते । यादृच्छिकत्वात् स्वप्नस्य तूष्णीमास्येत पण्डितैः । १२ ॥ परमार्थफलावाप्तिमिच्छद्भिस्तेन यत्नतः । प्रतिपत्तिर्विधातव्या युक्तिभिर्बाह्यवस्तुषु । १३ ॥' इति च । **बृहतीकारेणापि** औत्पत्तिकसूत्रान्ते उक्तं " यदुक्तं अहंकारममकारौ अनात्मनि आत्माभिमानौ ' इति मृदितकषायाणामेवैतत् कथनीयं, न कर्मसङ्गिनां इत्युपरम्यते । आह च भगवान् द्वैपायनः ( गीता ३।२६ ) ' न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ' इति रहस्याधिकारे " इति ।

किंच, शब्दस्य अर्थेन संबन्धः औत्पत्तिकः स्वाभाविकः अनादिः । जीवात्मा स्थूलदेहभिन्नः परलोकगामी कर्ता भोक्ता नित्यः । शब्दो वर्णात्मकः । वर्णा नित्या व्यापका ध्वनिव्यङ्ग्याः । वाक्यं क्रियाप्रधानं अर्थबोधकम् । वेदराशिः अनादिर्नित्यो न केन चिदपि कृतः । वेदस्य स्वतः प्रामाण्यम् । इति मूलभूताः सिद्धान्ताः । ते च प्रथमे तर्कपादे सूत्रभाष्यवार्तिककारैः प्रतिपादिताः । तानाश्रित्य सर्वा मीमांसा प्रवर्तते ।

**मीमांसायाः तर्कसंग्रहः** लघीयान् । **प्रमाणानि** तावत् षट् लौकिकानि । प्रत्यक्षं, अनुमानं, उपमानं, शब्दः, अर्थापत्तिः, अनुपलब्धिः इति । विधिः, अर्थवादः, मन्त्रः, नामधेयं, स्मृतिः, शिष्टाचारश्च इति षट् धर्मे प्रमाणानि । शब्दान्तरं, अभ्यासः, संख्या, संज्ञा, गुणः, प्रकरणान्तरं इति षट् धर्मभेदकानि प्रमाणानि । श्रुतिः, लिङ्गं, वाक्यं, प्रकरणं, स्थानं ( क्रमः ), समाख्या इति षट् धर्माङ्गताबोधकानि ( विनियोगे ) प्रमाणानि । श्रुतिः, अर्थः, पाठः, स्थानं, मुख्यत्वं, प्रवृत्तिः इति षट् क्रमे प्रमाणानि । वचनं, नाम, लिङ्गं इति त्रीणि

अतिदेशप्रमाणानि। स्थानापत्तिः ऊहे प्रमाणम्। प्रत्याम्नानं, प्रतिषेधः, अर्थलोपः इति त्रीणि बाधे प्रमाणानि।

**पदार्थाः** सप्त द्रव्य–गुण–कर्म–सामान्य–समवाय–शक्ति–अभावरूपाः। तत्र **द्रव्याणि** एकादश पृथिवी–अप्–तेजस्–वायु–आकाश–काल–दिश्–आत्मन्–मनस्–अन्धकार–शब्दरूपाणि। 'अनादिर्हि कालोऽस्माकम्'। (टुप् ६।१।२।५ पृ. १३५६)।

**इन्द्रियाणि** घ्राण–रसन–चक्षुस्–त्वच्–श्रोत्र–मनांसि इति षट्। तत्र घ्राणरसनचक्षुस्त्वचः क्रमेण पृथिव्यप्तेजोवायुप्रकृतीनि। श्रोत्रं दिगात्मकम्। मनः अणुपरिमाणं अन्तरिन्द्रियं स्वातन्त्र्येण आत्मतद्योग्यगुणतद्गतजातिमात्रविषयकम्। बाह्यविषयेषु तस्य न स्वातन्त्र्यम्। **संनिकर्षः** (विषयेन्द्रिययोः) संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायश्चेति त्रिविधः। **गुणाः** विंशतिः रूप–रस–गन्ध–स्पर्श–परिमाण–संयोग–विभाग–परत्व–अपरत्व–गुरुत्व–द्रवत्व–स्नेह–संस्कार–अदृष्ट–सुख–दुःख–इच्छा–द्वेष–यत्नाः। संयोगजसंयोगो नाङ्गीक्रियते। संख्या पदार्थान्तरम्। **कर्म** चलनात्मकं एकमेव। **सामान्यं** परापररूपं द्वेधा। सामान्यस्य सामान्यवता भेदाभेदः। सामान्यं जातिरूपम्। नित्यमेकमनेकानुगतम्। जातिव्यक्त्योः समवायसंबन्धाङ्गीकारेण अभेदसिद्धिः। **भेदाभेदः** सामान्यतद्वतोः, अवयवावयविनोः, गुणगुणिनोः, क्रियाक्रियावतोश्च। **समवायः एकः**। येन संबन्धेन आधेयं आधारस्य स्वानुरक्तबुद्धिजनकं स संबन्धः, न तु अयुतसिद्धसंबन्धः। **शक्तिः** त्रिधा सहजा, आधेया, पदशक्तिश्चेति। **अभावः** त्रिधा ध्वंसः, अत्यन्ताभावः, भेदश्चेति। **ज्ञानानि** सर्वाणि त्रिपुटीविषयकाणि। त्रिपुटी च ज्ञान–आत्म–विषयरूपा इति गुरवः। ज्ञानस्य **प्रामाण्यं** उत्पत्तितः ज्ञप्तितश्च स्वतः एव। **प्रत्यक्षं** ज्ञानं निर्विकल्पकं सविकल्पकं चेति द्वेधा। तत्र निर्विकल्पकं विशेषणविशेष्यभावानापन्नघटघटत्वादिविषयकम्। सविकल्पकं च सविशेष्यकं सप्रकारकं ससंसर्गकं वा। सविकल्पकं च जाति–द्रव्य–गुण–क्रिया–नामविषयकतया पञ्चधा, चाक्षुषादिभेदेन षोढा च। प्रत्यक्षं धर्मे न प्रमाणम्। स्वप्नज्ञानानां बाह्यविषयत्वम्। **ज्ञानलक्षणा प्रत्यासत्तिः** अङ्गीक्रियते। एवं सामान्यलक्षणाऽपि। तृतीया योगजधर्मप्रत्यासत्तिस्तु नाङ्गीक्रियते योगिषु मानाभावात्। न चेतिहासपुराणादि मानं, तस्य अन्यतात्पर्यकत्वात्। **विषयता** अतिरिक्ता। **सृष्टिप्रलयौ** स्वीक्रियेते। **मोक्षः** आत्यन्तिकदुःखाभावः। स च ज्ञानकर्मणोः समुच्चयेन ज्ञानेनैव वा। पार्थसारथिमिश्राश्च मोक्षवादे एवमाहुः— 'सुखदुःखादिसमस्तवैशेषिकात्मगुणोच्छेदो मोक्षः। सुखदुःखोच्छेदश्च धर्माधर्मयोरुच्छेदात्। धर्माधर्मयोरुच्छेदश्च उत्पन्नानां धर्माधर्माणामुपभोगेन नित्यनैमित्तिककर्मानुष्ठानेन आत्मज्ञानेन च, विरोधात्। उत्पाद्यानां च काम्यानुष्ठाननिमित्तानां धर्माणां तदननुष्ठानेनानुत्पादात्। विहिताकरणप्रतिषिद्धानुष्ठाननिमित्तानां चाधर्माणां विहितानुष्ठानेन प्रतिषिद्धाकरणेन च परिहारात्। असति शरीरारम्भे पूर्वशरीरनिपाते च अशरीरः अवस्थितो

मुक्तो भवति ' — इति। ब्रह्मविषयकसविलासाज्ञाननिवृत्तिर्मोक्षः इति भाट्टरहस्ये खण्डदेवः (पृ. ३)। इति संक्षेपः।

**मीमांसकमते देवताः सन्ति न वा।** अत्र **न्यायसुधा**वाक्यमेव उदाह्रियते प्रथमतः।(सुधा. पृ. ६४३) देवतात्वं शब्दमात्रस्य निरस्तम्। ननु शब्दमात्रस्य देवतात्वात् इन्द्रमहेन्द्रशब्दयोश्च भेदात् कथं देवतैक्यं इत्याशङ्क्याह– न चेति। (**न च शब्दमात्रं देवता इति नवमदशमयोरभिधास्यते।** वा. पृ. ४१७) **नवमे** ' अपिवा शब्दपूर्वत्वात् यज्ञकर्म प्रधानं स्याद् गुणत्वे देवताश्रुतिः ' इति सूत्रे (९।१।४।९) भूतभव्यसमुच्चारणन्यायेन देवतायाः यागं प्रति गुणत्वे अभिहिते ' ननु कर्मणोऽपि ईप्सितादभिप्रेतत्वं देवताया गम्यते ' इत्याशङ्क्य ' नास्याः अभिप्रेततामपह्नुमहे। तद्धितशब्देन चतुर्थ्या वा संयुक्तस्य देवतार्थस्य वाक्यादभिप्रेतता गम्यते ' (भा. पृ. १६५२) इति भाष्येण अनर्थकवर्णसमूहस्य प्रातिपदिकत्वाभावे तद्धितचतुर्थीसंयोगायोगात् तत्संयोगाभिधानेन अर्थग्रहणेन (च) शब्दमात्रस्य देवतात्वं निरस्तम्। **दशमे** च ' विधिशब्दस्य मन्त्रत्वे भावः स्यात् तेन चोदना ' (१०।४।१२।२३) इत्यत्र आवाहनादौ येनकेन चित् पर्यायेण देवताऽभिधानसिद्धेः विधिगताग्न्यादिशब्दानादरः इति पूर्वपक्षयित्वा ' आग्नेयोऽष्टाकपालः ' इतिविधिगतेन अग्निशब्देन देवतायाः हविःसंबन्धविधानात् मन्त्रकार्ये देवतोद्देशे विधिगतस्यैव शब्दस्य उच्चारणं कार्यं इति सिद्धान्तिते ' का पुनरियं देवता नाम ' इति पृष्ट्वा इन्द्रादीनां द्युस्थानानां, वेदे वा यत्र ' अग्निर्देवता, वातो देवता ' इत्यादिर्देवताशब्दः प्रयुक्तः, सा देवता इति परमतद्वयं अहःशार्दूलादीनां अनुपसंग्रहापत्तेः निरस्य, स्वमतेन ' सूक्तभाजो हविर्भाजश्च देवताः ' (भा. पृ. १९२७) इति भाष्येण ' अग्निदैवत्यं सूक्तं ' ' अग्निदैवत्यं हविः ' इत्यादिप्रयोगात् ' आहुतिभाजो वा अन्या देवता अन्याः स्तोमभाजश्छन्दोभाजः ' इति लिङ्गाच्च सूक्तस्तुत्यत्वस्य त्यज्यमानहविरुद्देश्यत्वस्य च देवतात्वाभिधानात् अर्थस्यैव स्तुत्यत्वोद्देश्यत्वावगतेः, ' मूर्तानां अमूर्तानां चेतनानामचेतनानां च श्रुत्या कं चिदर्थं प्रति तादर्थ्येन संकल्पनीयानां देवतात्वं भविष्यति ' (भा. पृ. १९२७) इति च भाष्येण मूर्तानां चेतनानां देवतात्वाभिधानात्, ' यस्य वाचकं शब्दमुद्दिश्य स्मृत्वा वा हविः त्यक्ष्यामि इति संकल्पः क्रियते सा (तत्र देवता) भवति ' (भा. पृ. १९२७) इति च भाष्येण उच्चारणार्थत्वात् दिशेः उच्चार्यमाणेन शब्देन ' प्रजापतिं मनसा यजेत ' इत्यादिविधौ वा स्मर्यमाणेन वाच्यस्य देवतात्वाभिधानात्, ' ननु एवं सति सुतरां येनकेन चित् अग्नेः शब्देन निर्देशः करणीयः ' इति चाशङ्क्य ' भवेदेतदेवं, यदि अग्निशब्दः अर्थप्रत्यायनार्थमुच्चार्येत, अर्थोऽपि हविःसंबन्धार्थं प्रत्याय्येत ' इत्युपक्रम्य (भा. पृ. १९२७) ' देवतायाश्च यज्ञसाधनभावो न रूपेण भवति। केन तर्हि? संबन्धिना शब्देन ' इत्यादिना

भाष्येण ( भा. पृ. १९२८ ) शब्दसंबन्धितद्व्यतिरिक्ताभिधानात् शब्दस्य देवतात्वं निरस्तं भवति । इति ।

अथ **कुतूहलस्थं** किंचिदुदाह्रियते । "यत्तु नवमे 'देवता वा प्रयोजयेत्' ( ९।१।४।६ ) इत्यधिकरणे देवतानां विग्रहादिपञ्चकं निराक्रियते, तत् प्रौढिवादमात्रम् ।' 'शब्द एव देवता, न तु अर्थः तथा विग्रहादिपञ्चकरहितोऽर्थः देवता इत्यपि प्रच्छन्नबौद्धप्रलपितमेव' कर्ममीमांसकाः निरीश्वरवादिनः, तेषां देवताविग्रहादिपञ्चकं नास्ति इति प्रवादस्तु प्रच्छन्नबौद्ध-तदेकदेशिविषयः । 'विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे । श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे ॥' इति **श्लोकवार्तिकारम्भे** ( कुमारिल— ) भट्टाचार्यैः ईश्वरस्वरूपाभिधानाच्च ।

**शास्त्रदीपिकायां** तृतीयस्य द्वितीयपादे 'लिङ्गक्रम ( ३।२।७।१९ ) इत्यधिकरणे मन्त्रार्थवादेतिहासपुराणादिषु स्वर्गाधीश्वरलोकपालकत्वासुरजेतृत्वादिरूपेण प्रतिपादितानां कर्मणो बहिरपि सद्भावावगमात् न क्रत्वव्यभिचारः' इत्यभिधानाच्च । तस्मात् वैदिकानामास्तिकानामस्ति देवताविग्रहादिपञ्चकं, इत्यास्तां तावत् । इति ।

**भाट्टदीपिकायां** तु देवताधिकरणे अपूर्वमङ्गीकृत्यैव देवताप्रसादस्य प्रयोजकत्वं निराकृतम् । इह तु तदनङ्गीकृत्य देवताप्रसाद एव प्रयोजकोऽस्तु इत्याशङ्का प्रसङ्गात् निराक्रियते इति प्रस्तुत्य 'कथमपि न विग्रहादिस्वीकारः किंतु शब्दमात्रं देवता, अर्थस्तु प्रातिपदिकानुरोधात् चेतनः अचेतनो वा कश्चित् स्वीक्रियते, न तु विग्रहादिमान् । उपासनादौ 'परं ध्यानमात्रमाहार्यं तस्य इति जैमिनिमतनिष्कर्षः । मम तु एवं वदतोऽपि वाणी दुष्यति इति हरिस्मरणमेव शरणं' इति उपसंहृतम् ।

इदं तु चिन्तनीयं, न जैमिनिना देवतानां निरासः कृतः । 'यज्ञकर्म प्रधानं स्यात् गुणत्वे देवताश्रुतिः' इत्येतावदेव जैमिनिराह ( ९।१।४।९ ) । फलदाने कर्मैव प्रधानं, देवता तु गुणभूता इति मीमांसाशास्त्रस्य गृहीतः सिद्धान्तः इत्येव तु जैमिनितात्पर्यमिति ।

**सूत्राणां संहितया पाठः** । सूत्राणां जैमिनिप्रणीतानां पाठः प्राक् संहितया आसीत् पाणिनिसूत्रवत् इति निश्चीयते । अत एव 'तेष्वदर्शनाद्विरोधस्य इति वा समाप्तिः, तेष्वदर्शनाद्विरोधस्य इत्येवमुपक्रमं वा सूत्रं' इति वार्तिकोक्तिः संगच्छते ( १।३।७ ), सुधा च ( पृ. ९९४ ) 'शिष्यते समाप्तिवत्' इति सूत्रसंहितायां ( २।४।१९–२० ) 'अकारप्रश्लेषेणापि विच्छेदसंभवः' इति ।

सूत्राणां भूयसां श्लोकश्लोकपादादिरूपताऽपि दृश्यते यथा 'प्रधानाच्चान्यसंयुक्तात् सर्वारम्भान्निवर्तते' ( निवर्तेत इति तु पश्चात् विपरिवर्तितं स्यात् । १०।१।५ ), 'तस्यां तु स्यात् प्रयाजवत्' १०।१।६, 'स्थाणौ तु देशमात्रत्वादनिवृत्तिः प्रतीयते' ( प्रतीयेत इति

पश्चात् ) १०।१।१०, ' अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयते ' ११, ' तथाज्यभागाग्निरपि ' १६ । इत्यादि । एवं च इमानि सूत्राणि सर्वाणि पद्यरूपाण्येव, चम्पूवत् गद्यपद्यरूपाणि वा अतिप्राचीने काले स्युः इति कल्पनातरङ्गोऽस्माकम् ।

**उपवर्षाचार्यस्य वृत्तिकारस्य** उल्लेखाः शबराचार्यकृता उदाह्रियन्ते । १।१।५ पृ. २५ भाष्यमाह—" वृत्तिकारस्तु अन्यथेमं ग्रन्थं वर्णयांचकार ' तस्य निमित्तपरीष्टिः ' इत्येवमादिम् । " इत्यारभ्य " स एवासमीचीनः प्रत्ययो नान्य इति " इत्यन्तम् । सोऽयं वृत्तिग्रन्थः कियान् इति विचार्यम् । आनन्दाश्रमीये मीमांसादर्शने पञ्चमसूत्रीयसर्वभाष्यान्ते षष्ठसूत्रीयभाष्यात् प्राक् 'वृत्तिकारमतानुवादः समाप्तः' इति मुद्रितम् । तेन वृत्तिकारस्तु इत्यारभ्य पञ्चमसूत्रीयं सर्वं भाष्यं वृत्तिकारमतं इति स्पष्टं भवति । चौखम्बामुद्रिते **श्लोकवार्तिके** तु निरालम्बनवादात् प्राक् षड्विंशश्लोकान्ते ' वृत्तिकारग्रन्थः समाप्तः ' इति, टीकाभागे च ' इति **न्यायरत्नाकरे** वृत्तिकारमतम् ' इति मुद्रितम् । तेन आनन्दाश्रमीयात् अन्यथा सिध्यति ।

**बृहत्यामपि** निरालम्बनवादात् प्राक् ' अतः सिद्धं यस्य च दुष्टं करणं यस्य च मिथ्येति प्रत्ययः स एवासमीचीनः प्रत्ययो नान्यः इति ' इत्युपसंहृतम् । **ऋजुविमलायां** च, ' अधिकरणार्थमुपसंहरति—— अतः सिद्धमिति ' इत्यनेन बृहतीग्रन्थः अवतारितः । निरालम्बनवादान्ते च शून्यवादात् प्राक् ' दौर्बल्यं च कार्याक्षमत्वं, न कार्यान्तरोत्पत्तिसामर्थ्यं इत्युक्तं वृत्तिकारग्रन्थे ' इत्युक्तत्वात् निरालम्बनवादारम्भात् प्रागेव वृत्तिकारग्रन्थः समाप्त इति स्पष्टं भवति । वृत्तिकारमतारम्भे च ' वक्तव्यं च ( निमित्तपरीक्षणं ) निरालम्बनतानिराकरणार्थम् । तच्च नोक्तं वृत्तिकारेण । वक्तव्यं पुनः किमन्यदर्थान्तरं ? उच्यते, पूर्वोक्तस्य सूत्रत्रयार्थस्य साधनभूतं अन्यदर्थान्तरमनेनोक्तं प्रदर्शयितुम् । तथा च तत्सतोर्व्यत्ययः लक्षणाभिधानं च सर्वप्रमाणानाम् ' इति बृहतीग्रन्थः । ऋजुविमलायां च ' पूर्वोक्तव्याख्याने हि (प्रत्यक्षसूत्रस्य) न लक्षणपरता, किंतु अनिमित्तपरता । अस्मिंस्तु ( वृत्तिकार— ) व्याख्याने लक्षणपरत्वेन तत्संप्रयोगसूत्रस्य प्रदर्शनार्थतया सर्वप्रमाणलक्षणाभिधानं सिध्यति । सर्वप्रमाणलक्षणोपयोगस्तु अव्यभिचारप्रदर्शनेन निरालम्बनत्वनिरासः' इत्युक्तम् । एतेनापि निरालम्बनवादात् प्रागेव वृत्तिकारग्रन्थसमाप्तेर्न कश्चिद्विरोधः । यदि षष्ठाधिकरणात् प्राक्तनः सर्वो वृत्तिग्रन्थः स्यात् तदा शब्दपरिच्छेदे ( पृ. ४५ ) ' गकारौकारविसर्जनीया इति भगवानुपवर्षः ' इति उल्लेखो न संगच्छेत । तस्मात् निरालम्बनवादात् प्रागेव वृत्तिग्रन्थस्य समाप्तिरिति सिद्धम् । १।१।५ पृ. ४५ **भाष्यं** 'अथ गौरित्यत्र कः शब्दः ? गकारौकारविसर्जनीया इति **भगवानुपवर्षः**' इति । शबराचार्यैः वृत्तिकारशब्देन सर्वत्र उपवर्षाचार्यस्यैव परामर्शः कृतः स्यात् इति मन्तव्यम् ।

२।१।७।३२ सूत्रे **वार्तिकं** ' **वृत्तौ** लक्षणमेतेषा- ( मन्त्राणां ) मस्यन्तत्वाऽन्तरूपता । आशिषः स्तुतिसंख्ये च प्रलप्तं परिदेवितम् ॥ प्रैष—अन्वेषण—पृष्ट—आख्यान—

अनुषङ्ग–प्रयोगिताः । सामर्थ्यं चेति मन्त्राणां विस्तरः प्रायिको मतः ॥' इति । **भाष्यं** च 'तच्चैतत् वृत्तिकारेण उदाहरणापदेशेन आख्यातम् । एतदपि प्रायिकमेव' इति ।

२।१।८।३३ सूत्रे च **भाष्यं** 'मन्त्रलक्षणवचनेनैव ( ब्राह्मणलक्षणं ) सिद्धम् । यस्यैतत् लक्षणं न भवति तत् ब्राह्मणं, इति परिशेषसिद्धं ब्राह्मणम् । **वृत्तिकारस्तु** शिष्यहितार्थं प्रपञ्चितवान् इतिकरणबहुलं, इत्याहोपनिबद्धं, आख्यायिकास्वरूपं, 'हेतु-र्निर्वचनं निन्दा प्रशंसा संशयो विधिः । परक्रिया पुराकल्पो व्यवधारणकल्पना ॥ उपमानं दशैते तु विधयो ब्राह्मणस्य तु । एतत् स्यात् सर्ववेदेषु नियतं विधिलक्षणम् ॥' एतदपि प्रायिकम् । इति ।

२।२।११।२६ सूत्रे **भाष्यं**– 'जुहुयादिति शब्दस्य एतत् सामर्थ्यं, यत् होमविशिष्टं प्रयत्नमाह । न तु अत्र होमः साधनत्वेन विधीयते, साध्यत्वेन विशिष्टस्तु प्रयत्नो वाक्येन दध्याश्रितोऽवगम्यते । अत एव च **वृत्तिकारेण** उक्तं होमाश्रितो गुणः फलं साधयिष्यति, यथा राजपुरुषो राजानमाश्रितो राजकर्म करोति इति ।' इति ।

२।३।६।१६ 'विशये प्रायदर्शनात्' इति सूत्रम् । अत्र **भाष्यं** 'तदेतत् अगमकं सूत्रमेव तावत् अनर्थकम् । अथ काऽत्र प्रतिज्ञा, कश्च संदेह इति वक्तव्यम् । **वृत्तिकार**वचनात् प्रतिज्ञां संशयं चावगच्छामः । अत्र भगवानाचार्यः इदमुदाहृत्य "वत्समालभेत वत्सनिकान्ताः ( वत्साः नितरां कान्ताः प्रिया येषां ते ) हि पशवः" इति । इमं संशयमुपन्यस्यति स्म किं यजिमदभिधानः एष आलभतिः, उत आलम्भवचनः इति । तत्र च पूर्वपक्षं प्रतिजानीते स्म यजिमदभिधानः इति' इति । अत्र **वार्तिकं**—'तदिह भगवान् **उपवर्षः** किल धेनुदोहाधिकारे श्रुतमिदं वाक्यमुदाहृतवान् वत्समालभेत इति' इति ।

३।१।३।६ अत्र भाष्यं 'अनवधारणा एषा द्रव्यगुणसंस्कारेषु शेषत्वं बादरिभिने इति । अथेदानीमत्र भगवान् **वृत्तिकारः** परिनिश्चिकाय । द्रव्यगुणसंस्कारेष्वेव नियतो यजिं प्रति शेषभावः, आपेक्षिक इतरेषाम् । यागस्य द्रव्यं प्रति प्रधानभावः, फलं प्रति गुणभावः । फलस्य यागं प्रति प्राधान्यं, पुरुषं प्रति गुणता । पुरुषस्य फलं प्रति प्रधानता, औदुम्बरीसंमानादि प्रति गुणत्वम् । तस्मात् संमता अवधारणा । द्रव्यगुणसंस्काराः यागं प्रति नियोगतो गुणभूता इति' इति । अत्र वार्तिकं '**वृत्तिकार**मतेन सूत्रचतुष्टयं अन्यथा व्याख्यास्यन्नाह—अथात्र भगवान् इति' इति ।

७।२।१।६ 'शास्त्रं चैवमनर्थकं स्यात्' इति सूत्रं 'एवं च सति अतिदेशशास्त्रं अनर्थकं स्यात्, अशक्यार्थत्वात् । तस्मान्न शब्दस्यापि प्रदेशो युक्तः' इति स्वमतेन व्याख्याय भाष्यकार आह '**वृत्तिकारस्तु** मेने गानशास्त्रं औक्थिक्यं अनर्थकं स्यादिति । तस्यायमभिप्रायः, सत्यां गतौ नैवावान् प्रयासः शिष्टानामफलः अभ्युपगन्तुं न्याय्यः इति' इति ।

८।१।२।२ अत्र भाष्यं ' प्रतिपदाख्याने तु गौरवं परिहरद्भिर्**वृत्तिकारैः** सर्वसामान्यः शब्दः परिगृहीतः ( अतिदेशार्थः ) प्रकृतिवत् इति ' इति ।

१०।४।१२।२४ अत्र भाष्यं 'तदुक्तं **वृत्तिकारेण** न वा शब्दपूर्वको ह्यर्थसंप्रत्ययः तस्मादर्थनिष्पत्तिः इति ' इति ।

१०।५।१३।५३-५४ इदमधिकरणं भाष्ये द्वेधा व्याख्यातम् । तत्र पूर्वं व्याख्यानं **वृत्तिकारानु**सारेण, द्वितीयं स्वमतेन । अत एव भाट्टे "अत्र वृत्तिकारेण षोडश्युत्तरे इत्ययं अपूर्वविधिरिति पूर्वपक्षं कृत्वा...'षोडश्युत्तरे ' इत्यनेन ' उत्तरेऽहन् द्विरात्रस्य ' इत्यस्योपसंहारात् द्विरात्रान्तरे षोडशिग्रहणविकल्पस्य बाधः इति सिद्धान्तितम् " इत्युक्तम् । अग्रे च ' भाष्यकारेण तु अन्यथा व्याख्यातम् । तस्यायमाशयः ' इत्यादि प्रतिपादितम् ।

१२।२।७-८।२२-२३ **वृत्तिकारैः** प्राचीनैः सूत्राभ्यामैकाधिकरण्यं स्वीकृतम् । अत्र **भाष्यं** ' ऐकाधिकरण्यं तु एके मन्यन्ते ' इति । **वार्तिकं** च ' भिन्ने एवैते अधिकरणे ' इत्याह । **तन्त्ररत्नं** च ' न्याययोर्विषयभेदात् भिन्ने एवैते अधिकरणे, न तु वाशब्दश्रवणमात्रेण ऐकाधिकरण्यं **वृत्तिकारान्तर**कृतं सम्यगिति मन्तव्यम् ' इति ।

**भाष्यगताः पाठभेदाः** । आनन्दाश्रमीये भाष्ये प्राभाकरीयबृहत्यामनूदिते भाष्ये च ये पाठभेदा उपलब्धास्ते संगृह्यन्ते । तत्र बृहत्यां न सर्वमेव भाष्यमनूदितं, यत्तु यावत्तावदनूदितं, तत्रैव के चित् पाठभेदा दृश्यन्ते तेषामेवायं विचारः । अत्र ' भा. ' इत्यस्य आनन्दाश्रमीयभाष्यपाठः इत्यर्थः ' बृ. ' इत्यस्य च बृहतीस्थभाष्यपाठः इत्यर्थः । तत्तदुपरि कंसे मुद्रितस्य अङ्कद्वयस्य क्रमेण ' पृष्ठं । पङ्क्तिः ' इत्यर्थो ज्ञेयः । येष्वक्षरेषु भेदः तान्यक्षराणि, तत्प्राचीनं तत्पराचीनं चैकमेकमक्षरं स्थूलत्वेन निवेशितानि । विषयद्वयं च पाठभेदासंबद्धमपि भाट्टबृहतीप्रस्थानभेदज्ञानार्थमत्रैव संगृहीतमिति ध्येयं षट्पक्षीविषयकं प्रथममेव, ' उभयमिह चोदनया लक्ष्यते ' इति च क्रमप्राप्तिस्थले ।

' लोके येष्वर्थेषु ' इत्यादेर्भाष्यग्रन्थस्य ' लोक इत्यादिभाष्यस्य षडर्थान् संप्रचक्षते । ' ( श्लोवा. १।१।१-२६ ) इत्यादिना वार्तिककारेण पूर्वभाष्यव्याख्याकारोक्ताः षडर्थाः कथिताः । बृहतीकारेण तु एक एवार्थो यथाश्रुतः कथितः ।

' वेदवा**क्यानां अनेकविधो वि**चार इह वर्तिष्यते ' इति भा. ( ४।२ ), ' वेदवा**क्यार्थे वि**चार इह वर्तिष्यते ' इति बृ. ( ७।८ ) ।

'अपि **च नै**व वयमिह' इति भा. ( ४।३ ), 'अपि **च एवं सति नै**व वयमिह' इति बृ. ( ७।११ ) ।

'धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्चानन्तर्यं प्रकरिष्यति। भिद्येत हि तथा वाक्यम्' इति भा. (५।२), 'धर्मजिज्ञासां प्रतिषेधति, परस्ताच्चानन्तर्यमुपदिशति भिद्येत हि तदा वाक्यम्' इति बृ. (७।१३)।

'वेदानधीत्य इत्येकस्यां विधीयते अनूद्य आनन्तर्यं, विपरीतमन्यस्याम्' इति भा. (५।५), 'वेदानधीत्य इत्येकस्यां, विपरीतमेकस्याम्' इति बृ. (७।१५)।

'किंत्वधीते वेदे द्वयमापतति, गुरुकुलाच्च समावर्तितव्यं वेदवाक्यानि च विचारयितव्यानि। तत्र गुरुकुलात् मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थोऽयमुपदेशः' इति भा. (५।६), 'किं चाधीते वेदे द्वयमापतति गुरुकुलाच्च समावर्तितव्यं, वेदवाक्यानि विचारयितव्यानि तत् मा समावर्तिष्ट कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थ उपदेशः' इति बृ. (८।५)।

'न चाम्नायो नामातिक्रमितव्यः' इति भा. (५।११), 'न चाम्नायोऽतिक्रमितव्यः' इति बृ. (८।१२)।

'नहि अत्र आनन्तर्यस्य' इति भा. (६।५), 'नहि आनन्तर्यस्य' इति बृ. (१०।५)।

'पूर्वकालतायां क्त्वा' इति भा. (६।५), 'पूर्वकालतायां हि क्त्वा' इति बृ. (१०।६)।

'दृष्टार्थता वाऽध्ययनस्य' इति भा. (६।६), 'दृष्टार्थता चाध्ययनस्य' इति बृ. (१०।६)।

'न वा इदं स्नानं अदृष्टार्थं' इति भा. (७।१), 'न च इदं अदृष्टार्थं' इति बृ. (११।२)।

'अन्यस्य कर्मणः' इति भा. (८।१), 'अन्यस्य अपि कर्मणः' इति बृ. (११।१०)।

'कर्तव्येति। किंतु वेदमधीत्य त्वरितेन न स्नातव्यम्' इति भा. (८।२), 'कर्तव्येति। वेदमधीत्य न त्वरितेन स्नातव्यम्' इति बृ. (११।११)।

'क्षेमसुभिक्षोऽयं अतः अहमस्मिन् देशे प्रतिवसामीति' इति भा. (८।४), 'क्षेमसुभिक्षोऽयं देशः अतः अहमस्मिन् देशे वसामीति' इति बृ. (१२।४)।

'धर्माय हि वेदवाक्यानि विचारयितुं अनधीतवेदो न शक्नुयात्' इति भा. (८।७), 'धर्माय हि वेदवाक्यानि अनधीतवेदो विचारयितुं न शक्नुयात्' इति बृ. (१२।८)।

'धर्माय जिज्ञासा' इति भा. (९।१) 'धर्माय हि जिज्ञासा' इति बृ. (१३।४)।

'एतासां प्रतिज्ञानाम्' इति भा. (९।६), 'आसां प्रतिज्ञानाम्' इति बृ. (१४।६)।

'विप्रतिषिद्धमिदमुच्यते, ब्रवीति वितथं चेति' इति भा. (१४।१), 'विप्रतिषिद्ध-मिदमभिधीयते, ब्रवीति च वितथं चेति' इति बृ. (२१।६)।

'उपदेशा हि व्यामोहादपि भवन्ति, असति व्यामोहे वेदादपि भवन्ति' इति भा. (१६।९), 'उपदेशो हि व्यामोहादपि भवति, असति व्यामोहे वेदादपि भवति' इति बृ. (२४।३)।

'विप्लवते हि खल्वपि' इति भा. (१७।२), 'विप्लवते खल्वपि' इति बृ. (२५।९)।

'प्रत्यक्षस्तु वेदवचनेन प्रत्ययः' इति भा. (१७।८), 'प्रत्यक्षस्तु वेदवचनात् प्रत्ययः' इति बृ. (२६।१२)।

'तस्मात् चोदनालक्षणोऽर्थः श्रेयस्करः' इति भा. (१७।९), 'तस्मात् श्रेयस्करो धर्मः' इति बृ. (२७।३)।

'यो हि यागमनुतिष्ठति' इति भा. (१७।१०), 'यो यागमनुतिष्ठति' इति बृ. (२७।९)।

'उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति' इति भाष्यम् (१८।९)। तदा-क्षेपसमाधानाभ्यां भूयो विचार्य 'उभयादिको ग्रन्थः साध्यसाधनसंश्रितः' (श्लोवा. २२०) इत्युक्तम्। तत्र रत्नाकरः (श्लो. २२४) 'भाष्यं चैवं योजनीयं उभयं चोदनया लक्ष्यते साध्यं साधनं च, साध्यमपि द्विविधं अर्थोऽनर्थश्च' इति। बृहत्यां तु नायं प्रयासः स्वीकृतः। तत्र हि एवमुक्तं (२७।६) "अर्थशब्दस्य अन्वयप्रयोजनप्रदर्शनार्थं भाष्यकारेण 'उभयमिह चोदनया लक्ष्यते अर्थोऽनर्थश्चेति' पुनरपि च प्रश्नपूर्वकमिदमुक्तं 'कोऽर्थः? यो निःश्रेयसाय ज्योतिष्टोमादिः, कोऽनर्थः? यः प्रत्यवायाय श्येनादिः' इति निःश्रेयसप्रत्यवायलक्षणं धर्माधर्मत्व-मुक्तम्। एवं चोपदर्शयता उभयं चोदनालक्षणमित्युक्तं भवति" इति। ऋजुविमला च 'भाष्य-कारेण उभयमपि अर्थानर्थत्वेन चोदनालक्षणमित्युक्तम्' इति, 'भाष्याक्षरयोजना—उभयमिह चोद-नया लक्ष्यते अर्थोऽनर्थश्चेति। अर्थः अनिषिद्धफलः, अनर्थश्च निषिद्धफलः। तत्र अनर्थो धर्म उक्तो मा भूत् इत्येवमर्थं अर्थग्रहणम्' इति च।

'नैव श्येनादयः कर्तव्या विज्ञायन्ते' इति भा. (१९।३), 'नैव श्येनादयः कर्तव्यतया विज्ञायन्ते' इति बृ. (२८।५)।

'कथमवगम्यते' इति भा. (२७।७), 'कथमिदमवगम्यते' इति बृ. (पृ. ४९।१०)।

'यदा हि चक्षुरादिभिरुपहतं मनः' इति भा. ( २७।९ ), 'यदि चक्षुरादिभिरुपहतं मनः' इति बृ. ( ५२।७ )।

'न शक्यते प्रत्ययत्वादयमन्यः इति वक्तुम्' इति भा. ( ३०।२ ), 'न शक्यते प्रत्ययादयमन्य इति वदितुम्' इति बृ. ( ५६।७ )।

'अन्यतस्तु स्वप्नप्रत्ययस्य मिथ्याभावः' इति भा. ( ३०।३ ), 'अन्यतो हि स्वप्नज्ञानस्य मिथ्याभावः' इति बृ. ( ५७।१ )।

'अर्थविषया हि प्रत्यक्षबुद्धिः, न बुद्ध्यन्तरविषया' इति भा. ( ३२।१ ), 'अर्थविषया हि प्रत्यक्षा बुद्धिः, न बुद्धिविषया' इति बृ. ( ६३।१ )।

'यदुच्यते' इति भा. ( ३२।३ ), 'यद्युच्येत' इति बृ. ( ६६।५ )।

'ज्ञाते त्वनुमानात्' इति भा. ( ३२।४ ) 'ज्ञाते चानुमानात्' इति बृ. ( ६६।१० )।

'अपिच' नियतनिमित्तः' इति भा. ( ३५।४ ), 'दृष्टश्च नियतनिमित्तः' इति बृ. ( ६९।४ )।

'इतरथा तन्त्वादानेऽपि' इति भा. ( ३५।५) 'इतरथा हि तन्तूपादानेऽपि' इति बृ. ( ६९।५ )।

'जीवति देवदत्ते गृहाभावदर्शनेन' इति भा. ( ३८।२ ), 'जीवतो देवदत्तस्य गृहाभावदर्शनेन' इति बृ. ( ८४।७ )।

'ननु प्रत्यक्षादीनि अन्यानि भवन्तु नाम प्रमाणानि' इति भा. ( ३२।३ ), 'प्रत्यक्षादीनि अन्यानि भवन्तु प्रमाणानि' इति बृ. ( ९५।४ )।

'उपलम्भकानि' इति भा. ( ३९।६ ), 'उपलम्भनानि' इति बृ. (९५।८)।

'दृष्टविरुद्धमपि भवति किं चिद्वचनम्' इति भा. ( ४१।१ ), 'दृष्टविरुद्धं च किं चित् वैदिकं वचनम्' इति बृ. ( १००।४ )।

'शरीरकं व्यपदिशति' इति भा. ( ४१।२ ), 'शरीरं व्यपदिशति' इति बृ. ( १००।६ )।

'न च तत् स्वर्गं लोकं यातीति' इति भा. ( ४१।४ ), 'न च तत् स्वर्गं यातीति' इति बृ. ( १००।६ )।

'एवंजातीयकं प्रमाणविरुद्धं वचनं अप्रमाणम्' इति भा. ( ४१।५ ), 'एवंजातीयकं च प्रमाणविरुद्धं अप्रमाणम्' इति बृ. ( १००।८ )।

'नैव शब्दस्यार्थेन संबन्धः' इति भा. ( ४३।१ ), 'नैव शब्दस्यार्थेन अस्ति संबन्धः' इति बृ. ( १०३।७ )।

'अपौरुषेयता **वा इति** । **कथम्** ।' इति भा. ( ४३।१ ), 'अपौरुषेयता **वा** । **कथम्** ।' इति बृ. ( १०३।८ ) ।

'शब्दोच्चार**णे मुख**स्य' इति भा. ( ४३।२ ), 'शब्दोच्चार**णात् मुख**स्य' इति बृ. ( १०३।९ ) । बृहत्यां १०५, १०७ पृष्ठयोस्तु 'शब्दोच्चारणे' इत्येव भा-पाठः अनूदितः।

'संश्लेष**लक्षणं सं**बन्धं' इति भा. ( ४३।३ ), 'संश्लेष**सं**बन्धं' इति बृ. ( १०३।१० ) ।

'अभिप्रे**त्योच्यते । कार्य**' इति भा. ( ४३।३ ), 'अभिप्रे**त्योच्येत भवता । कार्य**' इति बृ. ( १०३।१० ) ।

'**०श्रयिभावादयस्तु सं**बन्धाः शब्द**स्यानु**पपन्ना एवेति' इति भा. ( ४३।४ ), '**०श्रयियौनादयः सं**बन्धाः [ '०श्रयिसंबन्धाः' इति वा ] शब्द**स्यार्थेनानु**पपन्ना एवेति' इति बृ. ( १०३।११ ) । बृहत्यां १०७ पृष्ठे तु 'यौनादयस्तु संबन्धाः' इति पाठः अनूदितः।

'**यो ह्यत्र**' इति भा. ( ४३।५ ), '**योऽत्र**' इति बृ. ( १०७।५ ) ।

'संज्ञासंज्ञिलक्ष**णः इति**' इति भा. ( ४३।६ ), 'संज्ञासंज्ञिलक्ष**णः संबन्धः इति**' इति बृ. ( १०७।७ ) ।

'पूर्ववर्णजनि**तसं**स्कारसहितः अन्त्यो व**र्णः प्रत्यायकः**' इति भा. ( ४६।१ ), 'पूर्ववर्णजनि**तविशेषसं**स्कारसहितः अन्त्यो व**र्णः वाचकः**' इति बृ. ( ११४।६ ) ।

'असत्यपि अर्थान्तरे एवंजाती**यको भ**वति प्रत्ययः' इति भा. ( ५०।४ ), 'असत्यपि अर्थान्तरे एवंजाती**यके भ**वति प्रत्ययः' इति बृ. ( १२७।६ ) ।

'वृक्षा **अपि न स**न्तीति' इति भा. (५१।३), 'वृक्षा अ**पि नैव स**न्तीति' इति बृ. ( १२८।७ ) ।

'दुष्यतीति वने**ऽपि अस**ति वनप्रत्ययः प्राप्नोतीति' इति भा. ( ५१।५ ), 'दुष्यति वने**ऽपि ते अस**ति वनप्रत्ययः प्राप्नोतीति' इति बृ. ( १३०।२ ) ।

'विस्मरणमुप**पद्येत**' इति भा. ( ५५।२ ), 'विस्मरणमुप**पद्यते**' इति बृ. ( १३७।१ ) ।

'विद्यमानस्याप्यनुपल**म्भनं भ**वतीति' इति भा. ( ५५।३), 'विद्यमानस्याप्यनुपल**म्भो भ**वतीति' इति बृ. ( १३७।२ ) ।

'**उच्यते**' इति भा. ( ६६।३ ), '**अत्रोच्यते**' इति बृ. ( १६६।४ ) ।

'अन्येद्युः **दृष्टे अपरेद्युः** अहमिदमदर्शं' इति भा. ( ६६।३ ), 'अन्येद्युः **दृष्टः परेद्युः** अहमिदमदर्शं' इति बृ. ( १६६।४ ) ।

'अपरो ह्यसौ अन्येद्युः' इति भा. ( ६६।४ ), 'अपरो ह्यसौ यो हि अन्येद्युः' इति बृ. ( १६६।६ )।

'तस्मात् तद्व्यतिरिक्तोऽन्योऽस्ति' इति भा. ( ६६।५ ), 'तस्मान्न व्यतिरिक्तोऽन्योऽस्ति' इति बृ. ( १६६।६ )।

'नूनमसौ अनित्यान्नित्यं अवगच्छतीति' इति भा. ( ६९।१२ ), 'नूनमसौ अनित्यान्नित्यं पश्यतीति' इति बृ. ( १६६।९ )।

'कामं विज्ञानमपह्नूयेत नार्थाः' इति भा. (७१।५), 'कामं विज्ञानमपह्नूयेत नार्थः' इति बृ. ( १८६।५ )।

'नैतदेवं अप्राप्ताश्चेत् संयोगविभागाः श्रोत्रस्योपकुर्युः, संनिकृष्टविप्रकृष्टदेशस्थौ युगपत् शब्दमुपलभेयाताम्' इति भा. ( ७९।१ ), 'नैतदेवं अप्राप्ताश्चेत् उपकुर्वन्ति, संनिकृष्टविप्रकृष्टदेशस्थितौ युगपत् शब्दमुपलभेयाताम्' इति बृ. ( २१८।१ )।

'उत्पादयन्ति यावद्वेगं' इति भा. ( ७९।६ ), 'उत्पादयन्तो यावद्वेगं' इति बृ. ( २२२।६ )।

'यत्तु एकदेशस्य सतः' इति भा. ( ८०।९ ), 'यथैतत् एकस्य सतः' इति बृ. ( २२५।२ )।

'कामं देशा एव भिन्नाः' इति भा. (८२।५), 'कामं देशा एव भिन्नाः स्युः' इति बृ. ( २३१।३ )।

'अन्यत्वे सति सादृश्येन व्यामूढाः' इति भा. ( ८८।२ ), 'अन्यत्वेऽपि सति सादृश्येन व्यामूढाः' इति बृ. ( २४४।४ )।

'बुद्धिकर्मणी अपि ते' इति भा. ( ८८।५ ), 'बुद्धिकर्मणी अपि हि ते' इति बृ. ( २४५।५ )।

'वायुरुद्गतः संयोगविभागैः शब्दो भवति' इति भा. ( ९०।१४ ), 'वायु.... शब्दीभवति' इति बृ. ( २५२।९ )।

'यद्यपि औत्पत्तिकः' इति भा. ( ९१।१० ), 'यदि औत्पत्तिकः' इति बृ. ( २५४।८ )। बृहत्यामेव २७७।४ इत्यत्र 'यद्यपि औत्पत्तिकः' इत्येव अनुवादः कृतः।

'पदानि अमूनि प्रयुक्तानि' इति भा. ( ९२।५ ), 'पदानि हि अमूनि प्रयुक्तानि' इति बृ. ( २७८।१ )।

'कस्मिंश्चित् पदार्थे अवगते' इति भा. ( ९३।३ ), 'कस्मिंश्चित् अर्थे अवगते' इति बृ. ( २७९।४ )।

'प्रथमश्रुतात् कुतश्चित् शब्दात्' इति भा. (९३।७), 'प्रथमश्रुतात् कुतश्चन शब्दात्' इति बृ. (२८०।३)।

'वाक्याद्धि प्रथमावगतादपि प्रतियन्तोऽर्थं दृश्यन्ते' इति भा. (९३।९), 'वाक्याद्धि प्रथमश्रुतादपि प्रतियन्तो दृशन्ते' इति बृ. (२८०।६)। अत्र भाष्येऽपि अव्यवहितोत्तरपङ्क्तौ 'यदि प्रथमश्रुतादवगच्छेयुः' इति श्रुतशब्द एवानूदितः, न अवगतशब्दः। तेन प्रागपि श्रुतशब्द एव भाष्ये स्यादिति भाति।

'ननु पदार्थविद्भिरपि अवगच्छद्भिः अकृत एव वाक्यार्थसंबन्धो भविष्यति' इति भा. (९४।२), 'ननु च पदार्थविद्भिरपि अवगच्छद्भिः अकृतक एव वाक्यार्थसंबन्धोऽवगतो भवति' इति बृ. (२८१।६)।

'पदार्थवेदनेन हि संस्कृता अवगमिष्यन्ति यथा तमेव पदार्थं द्वितीयादिश्रवणेनेति' इति भा. (९४।३), 'पदार्थवेदनेन संस्कृता अवगमिष्यन्ति यथा तमेवार्थं द्वितीयादिश्रवणेनेति' इति बृ. (२८१।७)।

'यदि वाक्येऽन्त्यो वर्णः—प्रत्याययति, उपकारस्तु तदा न पदार्थज्ञानादवकल्पते' इति भा. (९४।४), 'यदि वाक्यान्त्यो वर्णः—प्रत्याययति, क उपकारस्तदानीं पदार्थज्ञानादवकल्पते' इति बृ. (२८१।११)।

'ननु एवं भविष्यति' इति भा. (९४।८), 'ननु एवं संभविष्यति' इति बृ. (२८२।४)।

'तन्न। कथमिव' इति भा. (९४।१०), 'नहि। कथमिव' इति बृ. (२८२।९)।

'मानसादप्याघातात्, यदुच्चारितेभ्यः पदेभ्यः न पदार्था अवधार्यन्ते। तदानीं नियोगतो वाक्यार्थं नावगच्छेयुः, यदि अस्य अपार्थगर्थ्यमभविष्यत्' इति भा. (९७।८), 'मानसादपचारात् उच्चरितेभ्योऽपि पदेभ्यः न पदार्था अवधार्यन्ते, न तदानीं नियोगतो वाक्यार्थमवगच्छन्ति। न च नियोगतो वाक्यार्थं नावगच्छेयुः, यदि अस्य पार्थगर्थ्यमभविष्यत्' इति बृ. (२९२।९)।

'अवगच्छत्येवासौ शुक्लगुणकम्' इति भा. (९८।२), 'अवगच्छत्येवासौ शुक्लगुणकं द्रव्यम्' इति बृ. (२९४।८)।

'नास्य पदसमुदायेन संबन्धः' इति भा. (९८।३), 'नास्य पदसमुदायेन सह संबन्धः' इति बृ. (२०५।५)।

'यत्तु श्रौतः' इति भा. (९८।३), 'यस्तु श्रौतः' इति बृ. (२९५।७)।

'सत्यमेव एवमेतत्' इति भा. (९८।४), 'सत्यमेवमेतत्' इति बृ. (२९५।१०)।

एवमत्र तर्कपादे बृहत्यामनूदितास्वेव भाष्यपङ्क्तिषु अशीतिस्थलेषु आनन्दाश्रमीय-भाष्यात् पाठभेदाः उपलब्धाः । इतरभाष्ये तु कियन्तो वा कीदृशा वा पाठभेदाः स्युरिति कल्पनीयमेव ।

**वार्तिककारकृतं सूत्रभाष्यदूषणम्—**

सूत्रेषु केषु चित् भाष्ये च वार्तिककारेण यत् तत्रतत्र दूषणं प्रदत्तं, क्व चित् अन्यथा च व्याख्यातं तत् सर्वं यथोपलब्धमत्र विचारकाणां कृते उपन्यस्यते । उपन्यासश्च पाठ-क्रमेणैव भविष्यति । तदपि संक्षेपेणैव, विस्तरेणोपन्यासे तु ग्रन्थगौरवप्रसङ्गः । क्वाचित्को वृत्ति-कारनिरासोऽपि वार्तिककृतः अत्रैव स्यात् । यद्यपि वार्तिकप्रदर्शितसूत्रेभ्यो भिन्नेष्वपि सूत्रेषु केषु चित् रचनादिदोषो दृश्यते, स च अत्र प्रस्तावे दोषप्रसङ्गात् प्रदर्शनीय एव तथापि तं भारं सूत्रविचारकेषु प्रक्षिप्य एकमेवोदाहरणमुपन्यस्य साधयामः । एकमुदाहरणं च यथा—'ऋत्विक्फलं करणेष्वर्थवत्त्वात्' ३।८।२६ इति सूत्रे भाष्येण किं ऋत्विक्फलमाशासितव्यं, उत यजमानस्य इति संशयं प्रदर्श्य तस्मात् ऋत्विक्फलमाशासितव्यं इति पूर्वपक्षः प्रदर्शितः । 'स्वामिनो वा तदर्थत्वात्' २७ इति सूत्रे च 'तस्मात् यजमानफलमाशासितव्यं' इति सिद्धान्त उक्तः । अत्र 'ऋत्विक्फलं–स्वामिनः' इति पदाभ्यां विप्रतिपत्तिर्न सिध्यति । 'ऋत्विक् फलमाशंसीत स्वामी फलमाशंसीत' इति वा उभयत्र प्रथमा 'ऋत्विजः फलं, स्वामिनः फलं' इति वा षष्ठयन्तं पठितुं युक्तम् । इति दिक् ।

तत्र तावत् 'लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तद-र्थान्येव सूत्रेषु इत्यवगन्तव्यम् । नाध्याहारादिभिरेषां (सूत्राणां) परिकल्पनीयोऽर्थः परिभाषितव्यो वा' इति शास्त्रारम्भे भाष्यम् । तथापि अनेकेषु सूत्रेषु भाष्यकारैरेव अध्याहारादिकं कृत्वैव व्याख्या कृता । तदेतत् दिक्प्रदर्शनार्थं श्लोकवार्तिके व्याख्यातम् । तद्यथा—'शेषभाजां भवेल्लोप इत्यध्याहारकल्पना' (श्लोवा. १।१।१।५४) 'अपि वा शेषभाजां स्यात् विशिष्टकारणत्वात्' (६।४।२) इति सूत्रे 'लोपः' इति पदस्य अध्याहारं विना 'किं स्यात्' इत्यस्या आका-ङ्क्षायाः न शान्तिः, इत्यध्याहारः स्वीकृतः ।

अथ विपरिणामः । 'विप्रकर्षात् पशोश्चेति विभक्तिः परिणम्यते ।' (५५) 'पशोश्च विप्रकर्षस्तन्त्रमध्ये विधानात्' (१२।२।३२) इति सूत्रे विप्रकर्षशब्दः प्रथमान्तः सन् पञ्चम्यन्तत्वेन, विधानशब्दश्च पञ्चम्यन्तः सन् प्रथमान्तत्वेन विपरिणम्यते अर्थसामीचीन्याय ।

अथ व्यवधानेन अन्वयः । 'पदेन व्यवधानं तु लोके सन्नियमादिति ।' (५५) 'लोके सन्नियमात् प्रयोगसंनिकर्षः स्यात्' (१।१।२६) इति सूत्रे लोके इति पदस्य संनिकर्षः, इत्यनेन अन्वयः । स च 'संनियमात् प्रयोग' इति पदाभ्यां व्यवहितः । 'सूत्रेण व्यवधानं तु पानव्यापदि कल्पितम् ।' (५६) 'दोषात् त्विष्टिर्लौकिके स्यात्' (३।४।२८) 'पानव्यापच्च

तद्वत्' ( ३।४।३२ ) इत्येते सूत्रे सूत्रत्रयेण व्यवहिते, तथापि 'तद्वत्' इति पदेन लौकिकपदं परामृश्यते ।

अथ अन्यथाकरणम् । 'पशुसामानविध्यादौ सूत्रमेवान्यथा कृतम् ।' ( ५६ ) 'तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्' ( ३।६।१८ ) इति सूत्रं सर्वपशूनां समानो विधिः इति आद्यपक्षस्य प्रतिपादकं सत् 'स्थानाच्च पूर्वस्य' ( १९ ) इत्यादिसूत्रासंगतिप्रसङ्गात् तत्संगतिसिद्ध्यर्थं आद्यपक्षमुत्सूत्रं कृत्वा सवनीयस्य इत्यस्मिन् पक्षे अन्यथा कृत्वा योजितं 'तुल्यः सर्वेषां पशुविधिः स्यात् यदि प्रकरणाविशेषो न भवेत्, अस्ति तु प्रकरणविशेषः' इति ( भाष्येण ) ।

अथ वाक्यभेदः । 'अग्नयश्च स्वकालत्वाद् देयधर्मापयातनम् । व्याख्यातं वाक्यभेदेन ।' ( ५७ ) । 'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात्' ( ३।७।३९ ) इति सूत्रे वाक्यभेदमाश्रित्य द्वे अधिकरणे व्याख्याते । किंच 'अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात्' ( ९।४।४१ ) 'शृतोपदेशाच्च' (४२) इति सूत्रद्वयेन अभ्युदितेष्टौ दधिशृतयोः देयधर्माः कर्तव्याः इत्युक्त्वा 'अपनयो वाऽर्थान्तरे विधानात् चरुपयोवत्' (४३) 'लक्षणार्था शृतश्रुतिः' ( ४४ ) इति सूत्रद्वयेन देयधर्माणामपयातनमुक्तम् । तदिदं पूर्वयोः सूत्रयोः, अनयोश्च वाक्यैक्यभावेन ऐकाधिकरण्यात् अभ्युदितेष्टयामेव देयधर्मापयातनमुच्यते इति प्रतिभासमानमपि ततो भित्त्वा अधिकरणान्तरं पशुकामेष्टिविषयं ( भाष्यकारेण ) व्याख्यातम् ।

अथ गौणत्वस्वीकारः । 'गुणकल्पास्त्वमी कृताः ॥ ( श्लोवा. ५७ ) औत्पत्तिकस्तु, गव्यस्य, तथोष्णिक्ककुभोरिति । दर्शनाच्च विशेषस्य तथाऽभ्युदय इत्यपि ॥' ( ५८ ) 'औत्पत्तिकस्तु' इति औत्पत्तिकशब्दः स्वाभाविकः इत्यर्थको गौणः, 'गव्यस्य' इति पदं गोविकारतदवयववाचि सत् गोसंबन्धमात्रेण गवामयनपरं गौणं, 'उष्णिक्ककुभोश्चान्ते दर्शनात्' ( ५।३।६ ) इति ककुप्—पदं त्रिष्टुप्—परं गौणं, 'दर्शनाद् विशेषस्य तथाऽभ्युदये' ( १०।३।५५ ) अयं अभ्युदयशब्दः अभ्युदयसाधनभूते द्वादशाहे गौणः स्वीकृतः ।

१।२।१।१० अत्र भाष्ये प्रजापतिवपोत्खेदनार्थवादस्य कश्चित् गौणोऽर्थो वर्णितः । तत्र 'एतस्मिंस्तु प्रक्रमे सत्यं सालम्बनता किंतु स्तुतित्वमेव हीयते । अतः स्तुतित्वात्यागेनैव स्वार्थसत्यतां वर्णयामः' इत्युपक्रम्य वार्तिके वर्णितम् ।

१।२।१।७ सूत्रे 'स्तुतिशब्दाः स्तुवन्तः क्रियां प्ररोचयमानाः अनुष्ठातॄणामुपकरिष्यन्ति क्रियायाः' इत्यादिभाष्यं यथाश्रुतादन्यथा व्याख्याय 'इदं तु व्याख्यानं नानुमन्यन्ते । यदि हि प्रत्ययोत्खातिः स्यात्' इत्यादिना वार्तिकेन भाष्योक्तस्य विधिप्रत्ययोत्खातिपक्षस्य निरासः कृतः ।

१।२।१।१२ अत्र भाष्ये 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' इति मिश्रलिङ्गमन्त्रयोः' इत्युक्तम्। 'तदुदाहरणं भ्रान्तिलिखितं' इति **वार्तिके** उक्तम्। अनयोर्मन्त्रयोर्मिश्रलिङ्गशून्यत्वात्। 'अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहा' इत्यादिस्तु मिश्रलिङ्गको मन्त्रः इति।

१।३।९।३१ पृ. ३०२ यत्तु भाष्यकारः विपरीतार्थेन द्रव्यशब्देनैव तदाश्रयगुणलक्षणया नञश्च असमर्थसमासमङ्गीकृत्य न द्रव्याश्रयवचनः शब्दो भवेत् आकृतिवादिनः इत्याह, तत् अतिक्लिष्टं व्यधिकरणनिर्दिष्टगुणप्रयोगार्हं च इत्युपेक्षितव्यम्।

१।३।९।३३ पृ. ३११ भाष्यकारेण संशयकारणमुक्तं सामान्यप्रत्ययात् व्यक्तौ च क्रियासंभवात् इति। एतदयुक्तं, व्यक्तेरपि प्रतीयमानत्वात् कथं जातेरेव प्रतीतिरुपन्यस्यते। यदि च व्यक्तिर्न संप्रतीयेत, ततः संशय एव न स्यात् किमभिधीयते अनेनेति। न च क्रियासंभवः अभिधेयत्वे कारणं, व्यक्त्यन्तराणामपि प्रसङ्गात्। तेन पूर्वोक्तमेव संशयकारणं मन्तव्यम्।

२।१।४।९-१२ अस्याधिकरणस्य प्रयोजनं भाष्यकारेण वरुणप्रघासीयशमीमयस्रुक्षु, अवभृथे, तरसमयपुरोडाशेषु चेति उदाहरणत्रये उक्तम्। तत् वार्तिके 'प्रयोजनं तु अधिकरणस्य न सम्यगनुमन्यन्ते' इत्यादिना दूषितम्।

२।३।१३।२६ अत्र वार्तिके 'वृत्त्यन्तरे तु चत्वार्येव भेदकारणानि शब्दान्तरसंज्ञागुणफलानि उदाहृतानि। ....तत्तु अयुक्तमिव दृश्यते .... तस्मादेकशब्दत्वे सत्येव...शब्दान्तरकल्पनं भाष्यान्तरकृतः।' इति वृत्त्यन्तरं दूषितम्।

२।४।१।१ अत्र बह्वृचब्राह्मणे श्रूयते इति भाष्यम्। बह्वृचब्राह्मणे अध्वर्युब्राह्मणे वा श्रूयते इति नातीवाभिनिवेष्टव्यं इति **वार्तिकम्**। (भाष्यकारस्य प्रमाद इत्यर्थः)। 'यावज्जीवमग्निहोत्रं जुहोति' इति श्रुतिवाक्यविषये इदम्।

३।१।४।७ इति तेषामर्थाधिकरणे पूर्वपक्षभाष्ये साधकतया "अवघातादयस्तु पदार्था विधीयन्ते श्रुत्या' इति उक्तम्। तत् 'तच्च एतदयुक्तमिव' इत्यादिना दूषयित्वा 'तेन एवं व्याख्येयं' इत्यादिना प्रकारान्तरेण पूर्वपक्षः साधितो वार्तिके। सविस्तरं प्रतिपादनं तु निबन्धान्तरस्यैव विषयः।

३।१।७।१४ पृ. ७१० यत्तु भाष्यकारेण निर्दोषपरिसंख्याविषयं प्रदर्शयता इष्टानिष्टवचनव्यक्तिद्वयं प्रदर्शितं 'इत्यश्वाभिधानीमिति' 'नेत्यादत्ते इति'। 'मन्त्रस्य रूपादेव आदाने प्राप्तत्वात्' इति च कारणमुक्तम्। तदयुक्तम्।

३।२।६।१९ 'श्रुतिलिङ्गप्रकरणानां अविरोधः इति सूत्रम्। तदिदानीं भाष्यकारो दूषयति' इति वार्तिकम्। अग्रे भाष्यकारेणोक्तं 'नहि एतदेकं वाक्यं, यः कृत्स्नः सूक्तवाकः।

बहून्येतानि वाक्यानि ' इति । तत्र वार्तिकं ' इदमपि तु न युक्तमभिहितं, तन्त्रपदैर्वैश्वानरवाक्यवत् एकवाक्यतायाः प्रत्यक्षत्वात् इत्यादिना अयुक्तता दर्शिता । अन्ते च ' भाष्येऽपि च यावद्देवतं सूक्तवाकसंभवात् एकस्यापि बहुत्वमभिहितं इति द्रष्टव्यं ' इति भाष्यतात्पर्यमुक्त्वा ' तथा सूत्रमपि उभे प्रति स्वदेवतापदसाहित्यमात्रेण कृत्स्नसूक्तवाकशब्दः प्रकरणाविभागात् कल्पितः इत्येवमेव गमयितव्यं इति सर्वेषामविरोधः ' इत्युक्तम् ।

३।२।८।२२ 'यस्तु भाष्यकारेण वाक्यभेदो दर्शितः ( अनपेक्ष्य च प्रकरणं दाशतये मन्त्रे विधीयमाने वाक्यं भिद्येत इति ) स सर्वविशिष्टविधानेषु तुल्यः' इति भाष्यं दूषितं वार्तिके ।

३।३।३।१० सूत्रे भूयस्त्वेन इति पदम् । न तु एतत् भूयस्त्वव्याख्यानं ( भाष्यकृतं ) युक्तम् । इति वार्तिकम् ।

३।३।८।१५ अहीनाधिकरणे पूर्वपक्षे ' यत्तु भाष्यकारेणोक्तं दक्षिणया क्रतुकरणैर्वा न हीयते ( तेन ज्योतिष्टोमः अहीनः ) इति, तदसंबद्धम् ' इत्युक्त्वा असंबद्धता प्रतिपादिता वार्तिकेन ।

३।४।११।३१ "भाष्यान्तरजनितभ्रान्त्यपनयार्थं तु पुनरारम्भः । इतरथा हि शक्यमिदं सूत्रद्वयं ( ' अचोदितं च कर्म भेदात्, सा लिङ्गादार्त्विजे स्यात्' ३।४।११।३०-३१ ) पूर्वाधिकरणेऽपि व्याख्यातुम् । " इति वार्तिकम् । भाष्यान्तरे सौत्रार्त्विजशब्दात् ( अश्वस्य ) प्रतिग्रहीतुः वारुणचतुष्कपालेष्टिः इति सिद्धान्तितम् ।

३।५।५।१८ एतत् सूत्रं भाष्यकारेण अधिकरणान्तरत्वेन व्याख्यातम् । वार्तिकेन तु तत् दूषयित्वा पूर्वाधिकरणशेषतया व्याख्यातम् ।

३।५।५।१८ ' भवन्ति चेदृशान्यधिकरणानि, येषां न्यायेन पूर्वपक्षं कृत्वा वचनेन सिद्धान्तो भवति ( यथा ३।५।५।१८ सूत्राधिकरणं भाष्यकारेण व्याख्यातम् ) न त्वेतत् युक्तं, संदेहाभावात् । ... तस्मान्नैवं वर्णनीयम् ।' इति वार्तिकम् ।

३।५।६।२० अत्र भाष्ये ' अन्यार्थं हि वचनं भक्षं दर्शयति सर्वतः परिहारमाश्विनं भक्षयति ' इत्याद्युक्तम् । वार्तिके तु ' यदि अन्यार्थदर्शनानि भवेयुः, ततः अन्यत्रापि प्राप्तिः स्यात् । वचनानि त्वेतानि । तस्मात् यथोपदेशं भक्षोऽयं, नान्यत्रेति ' इत्युक्तम् ।

३।५।८।२३-२६ अत्र भाष्ये ' औद्गात्रेण संबद्धाः चत्वारः ( सुब्रह्मण्यासहिताः उद्गातारः ) उद्गातृचमसं भक्षयेयुः ' इति सिद्धान्तितम् । सूत्रं च भाष्यपक्षमेव साधयति ' सर्वे तु वेदसंयोगात् ' इति । वार्तिकेन तु ' न तु एतद्युक्तं ' इत्युक्त्वा अयुक्ततां प्रतिपाद्य सूत्रं अन्यथा व्याख्यातम् । सुब्रह्मण्यारहिताः त्रयः एवोद्गातारः उद्गातृचमसं भक्षयेयुः इति सिद्धान्तः स्वीकृतः । याज्ञिकसंमतश्चासौ पक्षः । ' स्तोत्रकारिणां वा ' ( २५ ) इति सूत्रेण प्रतिपादित एवायं पक्षः ।

३।५।१८।४६ 'प्रवृत्तत्वात् प्रवरस्यानपायः' इति सूत्रे प्रवृत्तत्वात् इति पदं प्रवरस्य होत्रर्थं प्राक् प्रवृत्तत्वात् इत्यर्थकतया 'अतिक्रान्तो हि स कथमपनीयेत होतुः' इति भाष्येण व्याख्यातम्। वार्तिके तु सूत्रं यथाभाष्यं व्याख्याय 'इदं तु इह वक्तव्यं' इत्यादिना भाष्यमाक्षिप्य 'अतः एवं सूत्रं नेतव्यं' इत्युपक्रम्य 'याज्यान्तरार्थं प्रवृत्तत्वात्' इत्यन्यथा व्याख्यातम्।

३।७।१।२ अत्र भाष्यकारेण 'प्रकरणात् दर्शपूर्णमासयोरुपकारका एव वेदिबर्हि-र्धर्माः' इत्युक्तम्। तत्र वार्तिके 'यत्तु भाष्यकारेण अतिप्रसङ्गनिवृत्त्यर्थं प्रकरणात् इत्युक्तम्। तत् उत्तरपरिचोदनाऽवताराप्रसङ्गात् अतित्वरितोक्तं इत्युपेक्षणीयं तावत्' इति।

३।७।९।२४ अत्र वार्तिके "यत्तु भाष्यकारेणोक्तं 'तस्मादेषां वरणे संकीर्तनं, न विधिः' इति तत् अविहितवरणनियमप्राप्त्यभावात् अयुक्तम्" इति।

३।७।१८।३८ अत्र भाष्ये 'ब्राह्मणमेव ते (सदस्यत्वेन) समामनन्ति। वरणमपि चमसश्च ब्रह्मण एव। स हि सदसि भवः' इति सदस्यस्य निराकरणमुक्तम्। वार्तिके तु— 'सदस्यं वृणीते' इत्युत्पत्तिसंयोगात्...उपहवादिषु ब्रह्ममन्त्रव्यतिरेकेणास्य मन्त्रः पठ्यते (सदस्योपह्वयस्व इति) .... सर्वे याज्ञिकाश्च भेदेन तं वृण्वते। तस्मादयुक्ता सदस्यनिराक्रिया। .... यत्तु भाष्यकारेण सदस्यनिराकरणपरमुक्तं तत् ऋत्विक्त्वनिराकरणपरस्य अतिरभसवचनं इत्युपक्षेणीयम्' इत्युक्तम्।

४।१।७।१८–२० अत्र भाष्ये उत्तमः प्रयाजः, पशुपुरोडाशः, स्विष्टकृत् इत्येते यागा उदाहरणमित्युक्तम्। तत्र वार्तिके 'अनुदाहरणं स्विष्टकृत्। मन्त्रस्तावत् इष्टदेवतासंकीर्त-नत्वात् दृष्टार्थः' इत्यादिना अनुदाहरणत्वं साधितम्। 'समिदादयोऽपि नोदाहरणम्। तेषु द्रव्यदेवतस्य गुणभूतत्वात् क्रियैव प्रधानभूता। पशुपुरोडाशयागो देवतासंस्कारद्वारेणैवोपकरोति। वपायागस्य तु यागान्तरत्वे नास्ति प्रमाणम्। तस्मादेषोऽपि अनुदाहरणम्।' इति भाष्योदा-हरणानामनुदाहरणत्वमुक्त्वा 'यत्राकृतार्थं द्रव्यं, देवता तु इष्टा यक्ष्यमाणा वा कीर्त्यते यागान्तरं च, तदुदाहरणं' इति उक्तम्। पशुपुरोडाशस्य देवतोद्देशेन यः प्रक्षेपः तस्य अदृष्टादृते नान्यत् प्रयोजनमस्ति (तस्मात् स उदाहरणम्) इति स्पष्टीकृतम्।

४।१।१५।४० 'प्रयाजानुयाजार्थस्य अयमेकदेशः समानीयते इति पूर्वेण न्यायेन अप्रयोजकता' इति अयुक्तो (भाष्य–) ग्रन्थः। 'यदि प्रयाजानुयाजार्थमेतत्, प्रयाजा आत्मीयं द्रव्यं प्रयुञ्जते एव। अतः पूर्वेण उत्तरं न संबध्यते।' इत्युक्तं वार्तिके। ततः मतत्रयेण भाष्य-योजना प्रदर्श्य खण्डिता। अन्ते 'तस्मात् उत्तरग्रन्थानुरोधेन अन्यथा वर्ण्यते' इत्युक्त्वा वर्णितम्।

४।२।१२–१३।२७–२८ "समुदाये कृतार्थत्वात् इति अयुक्तोऽयं (सूत्र–) ग्रन्थः। नहि यागशब्दो द्रव्यदेवताक्रियं त्रितयमपि ब्रवीति, किं तर्हि? यजतिधातुवाच्यम्।

' जुहोतिरासेचनाधिकः ' ( २.८ ) इत्येतदपि ( सूत्रं ) अयुक्तम् । पुरोडाशद्रव्यकेष्वपि जुहोतेर्विद्यमानत्वात् ' मारुतान् जुहोति ' ' एककपालान् जुहोति ' इति । " एवं दूषयित्वा तदेव अन्यथा वर्णितं वार्तिके ।

४।३।१५।३८ अत्र ' कथं रूपावचनं ? देवताऽभावात् ' इति भाष्यमनूद्य 'अयुक्तमिदं' इत्युक्त्वा अयुक्ततां प्रतिपाद्य 'तस्मादन्यथा वर्ण्यते' इति प्रतिज्ञाय अन्यथा वर्णितं वार्तिके ।

५।४।२।३ ' प्रदानोपक्रमा एते ( दध्याग्नेयादिधर्माः ) न पृथक्पदार्था इत्युक्तम् ' इति भाष्यम् । अत्र वार्तिकं ' अग्रन्थोऽयं, लिङ्गदर्शनं च इममेव न्यायं दर्शयति, यस्य पूर्वमवदानं तस्य पूर्वमभिघारणं हेतुवन्निगदेनार्थवादेन ' इति ।

५।४।३।६ अत्र **तन्त्ररत्ने** 'अग्न्याधेयस्य इति न ऋतुनक्षत्रातिक्रमव्यतिरेकजनिता षष्ठी, किंतु अग्न्याधेयस्य प्रकरणे सोमस्य ऋतुनक्षत्रातिक्रमवचनात् इत्यर्थः । सोमकालबाधोऽयं नाधानकालबाध इत्युत्तराधिकरणे स्थास्यति । भाष्यकारस्तु आधानस्यापि कालबाधे प्रस्तुताधिकरणसिद्धिं मन्यमानः अनादरात् आधानकालबाधमेव दर्शितवान् ' इति । **वार्तिकं**— ' पवमानेष्टिव्रात्यपश्वग्निहोत्राणि कृत्वाऽपि सोमो दर्शपूर्णमासयोः प्राक् कर्तव्यः । यथा तु भाष्यकारेणोक्तं, व्रात्यपशुः सोमाङ्गत्वाद्भवति, पवमानेष्टयोऽपि अग्निसंस्कारत्वात् भवन्त्येव । अग्निहोत्रं तु नास्ति ' इति ।

५।४।८।२५ अत्र भाष्ये ' सांनाय्यविकारा अग्नीषोमीयविकाराश्चोदाहरणं ' इत्युक्तम् । वार्तिके तु 'अनुदाहरणमग्नीषोमीयः (पशुः) । तद्विकाराश्चानुदाहरणम् । केवलं आमिक्षा अत्रोदाहरणं ' इत्युक्तम् ।

६।१।२।४ ' न भृग्वादयः भृग्वादिभिः सगोत्राः ' इति भाष्यम् । ' अयुक्तमिदम् । अनादिर्हि कालोऽस्माकम् ' इति **वार्तिकम्** । भाष्योक्तमनादरणीयं इति **शा. भाट्ट** । 'न देवानां देवतान्तरभावात् इति येषां शब्द एव देवता, तेषामपि अयुक्तोऽयं ग्रन्थः ' इति **वार्तिकम्** ।

६।१।४।१७ अत्र भाष्ये ' आध्वर्यवानेव कुर्वन् अध्वर्युः यजतीत्येवमुच्यते ' इत्याद्युक्तम् । तत्र वार्तिकं ' अध्वर्य्वाद्युपन्यासस्त्वयुक्तः । कथं ? व्यापारान्तरे अध्वर्य्वादीनां कर्तृत्वात्, तत्र ( यजेत इति— ) एकवचनस्य नास्ति विघातः ' इत्यादि । किंच ' अवश्यं च सह पत्न्या यष्टव्यं ' इत्यादि भाष्यम् । तत्र वार्तिकं ' इत्यादिस्तु अयुक्तो ग्रन्थः । कथं उद्वाहकाले एव अनयोर्वचनेन द्रव्यसाधारण्यं प्रतिपादितं, धर्मे चार्थे च कामे च नातिचरितव्या इति प्रतिपादितत्वात् ' इति ।

६।१।६।२४ अत्र भाष्यं ' यास्तु आशिषः, यच्च ब्रह्मचर्यं, तत् पुरुषं प्रति गुणभूतं, न तत्रान्यतरेण कृते सिध्यति ' इति । तथा च सूत्रभाष्यकाराभ्यां स्त्रीणां आशीरधिकारः

स्वीकृतः। वार्तिकेन तु 'आशीःशब्देन केशश्मश्रुवपनादयः संस्कारा लक्ष्यन्ते' इत्युक्त्वा स्त्रीणां आशीरधिकारः अपह्नुतः।

६।१।७।२८ अत्र भाष्ये 'वार्हद्गिरं ब्राह्मणस्य साम कुर्यात्' इत्याद्युक्तम्। तत्र वार्तिकं '(इदं) विदेशपाठादनुदाहरणम्' इति। विदेशपाठात् भिन्ने देशे प्रकरणान्तरे पाठात् इत्यर्थः।

६।१।११।४३ 'अत्र्यार्षेयस्य हानं स्यात्' इति सूत्रम्। 'यो न त्र्यार्षेयः स नाधिक्रियते' इति भाष्यम्। वार्तिकं तु 'त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति सोऽधिक्रियते। चतुरार्षेयस्य त्रित्वसंपादने अस्ति सामर्थ्यम्' इत्याह। तथा च त्र्यार्षेयभिन्नस्य पञ्चार्षेयस्यापि अधिकारः स्वीकृतः।

६।५।८।२८–२९ अत्र भाष्ये ज्योतिष्टोमे द्वादशदीक्षापक्षः सिद्धान्तो वर्णितः। तत्र वार्तिकं 'अत्रायुक्तः सिद्धान्तो वर्णितः। तस्मादियमेवावधारणा दीक्षापरिमाणे याथाकामीति' इति। किंच भाष्ये सूत्रद्वयेन ऐकाधिकरण्यं स्वीकृतम्। वार्तिके तु अधिकरणद्वयम्। प्रथमाधिकरणे ज्योतिष्टोमे याथाकाम्यं, द्वितीये च द्वादशाहे द्वादशदीक्षानियमः इति।

६।७।८।१४–१७ अत्र भाष्ये अष्टरात्रान्तर्गते विश्वजिति एकाहविश्वजिद्वत् सर्वस्वदानं इति सिद्धान्त उक्तः। स च सौत्र एव। वार्तिके तु 'अस्मिन्नधिकरणे सिद्धान्तदूषणं' इत्युक्त्वा 'द्वादशाहप्रकृतित्वात् तद्दक्षिणा प्राप्नोति' इति सिद्धान्तितम्।

७।१।१।१ 'पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनां इतिकर्तव्यता चिन्तिता' इति भाष्यम्। तत्र वार्तिके 'एतदयुक्तं' इत्युक्त्वा कथं तर्हि वक्तव्यं इत्याकाङ्क्षायां 'प्रकृतौ विकृतौ च उपदेशश्चिन्तितः। सप्तमेन विकृतीनामतिदेशेन धर्मा भवन्तीति प्रतिपाद्यते' इत्याद्युक्तम्।

७।१।१।२ 'सर्वाण्यपूर्वाणि यजिमन्ति इत्येवमादिः' 'स च यजिसंबन्धः सर्वापूर्वाणां तुल्यः' इत्येवमन्तः अयुक्तोऽयं (भाष्य–) ग्रन्थः, यागः अपूर्वेण अविनाभूतः, न तु अपूर्वं यागेन। 'अपूर्वे चासंभवन्तो यागे क्रियन्ते' इत्यप्ययुक्तम् इति वार्तिकम्। तृतीये सूत्रे च 'एवमपि श्रुत्या सामान्यस्य भावना .... न चैतत् युगपत् भवति इति अयुक्तोऽयं ग्रन्थः' इत्युक्त्वा अयुक्तता दर्शिता। पुनश्च 'एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते, किं तर्हि वाक्यार्थः' इति भाष्यमनूद्य 'इत्यप्ययुक्तं भावार्थाधिकरणविपरीतत्वात्' इति वार्तिकम्। चतुर्थसूत्रे च 'न च तत्र संभवति, अतोऽसौ आकृतिः सहचारिपिण्डलक्षणार्था' इति भाष्यमनूद्य 'अयुक्तमिदं' इत्युक्त्वा दूषणमुक्तं वार्तिके।

७।१।२।६ अत्र वार्तिकं 'अधिकार्थे इतरशब्दे वर्ण्यमाने येऽपि अप्राकृतकार्याः कण्डूकवितोदनादयः, तेषामपि अतिदेशः स्यात् भाष्यकारव्याख्याने यत् समानं तत् इतरत्

इत्याश्रीयमाणे । ( अस्मत्पक्षे पुनः इतरशब्दस्य संनिहितवाचित्वात् तेन ज्यौतिष्टोमिकानुद्दिश्य श्येनेन समानं इत्यनेन विकारमात्रं विधीयते इति न कण्टकवितोदनादिप्राप्तिः इति विशेषः ) । इति ।

७।३।८–९।१९–२५ अत्र भाष्ये प्रथमैश्चतुर्भिः सूत्रैरेकमधिकरणं, उत्तरैस्त्रिभिः सूत्रैर्द्वितीयं इति विभागः । वार्तिके तु सप्तभिरपि सूत्रैरेकमेवाधिकरणं व्याख्यातम् । किंच चातुर्मास्येषु अग्निप्रणयनं दार्शिकं, न सौमिकं इति भाष्यमतम् । न दार्शिकं न सौमिकं किंतु अपूर्वमेव इति वार्तिकमतम् ।

७।३।१२।३०–३२ अत्र भाष्ये गर्गत्रिरात्रे स्तोत्रकाले उपनिधेयोऽग्निः नाहवनीयादिः, नापि धैष्ण्याः, किंतु लौकिक इति सिद्धान्तितम् । वार्तिके तु व्याघारणोत्तरं धिष्ण्यानां लौकिकत्वात् उपनिधेयत्वं स्वीकृत्य ' लौकिकानयने प्रयत्नो न कर्तव्यः ' इत्युक्तम् ।

७।४।२।५ वार्तिके सूत्रं भाष्यं चानूद्य ' अयुक्तमिदं ' इत्युक्त्वा ' तस्मादन्यथा सूत्रं वर्ण्यते ' इति उक्त्वा वर्णितम् ।

७।४।३।१९ 'गवामयने द्वादशाहिकं प्रथममहः इत्येवमादिः मुख्यं वा पूर्वचोदनात् लोकवत् इत्येवमन्तः अयुक्तो ग्रन्थः ' इत्युक्त्वा अयुक्ततां दर्शयित्वा ' तस्मादन्यथा वर्ण्यते ' इत्युक्त्वा सूत्रमन्यथा व्याख्यातं वार्तिके ।

८।१।१।१ ' किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः ' इति भाष्यं व्याख्याय 'एतस्मिन् ग्रन्थार्थे न्यायो न विरुध्यते परस्तु ग्रन्थो न संबध्यते इतरेण ' इत्याद्युक्त्वा ' तस्मात् सर्वधर्मातिदेशः इति निर्मूलोऽयं पक्षः । ईदृशः संशयो युक्तः, किमनियमेन यस्यकस्यचित् सकाशात् इतिकर्तव्यता प्रवर्तते, उत अस्ति कश्चिन्नियम इति ' इत्युक्तं वार्तिके ।

८।१।२।२ "तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगः अनुभूतपूर्वः, संयोगिनोश्चान्यतरो दृश्यमानः इतरमदृश्यमानं अनुमानात् बुद्धौ संनिधापयति ' इत्ययुक्तोऽयं ( भाष्य– ) ग्रन्थः । कथम् ? यथा अग्निधूमयोः संबन्धे अवगते धूमो दृश्यमानः अग्निमवगमयति । एवं निर्वापादयः न शक्नुवन्ति अनुमापयितुं, न चामीषां प्रयाजादीनां च संबन्धोऽस्ति । प्रधानेनैव सह अमीषां संबन्धः । परस्परसंबन्धे नास्ति तेषां प्रमाणम् । " इति वार्तिकम् ।

८।१।३।५ ' अत्र सूत्रं भाष्यं चोभयमप्ययुक्तं ' इत्याद्युक्त्वा ' तस्मादन्यथा वर्ण्यते ' इत्यादिना वर्णितं वार्तिके ।

८।१।१४।२५ ' तस्मिन् प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते ' इति भाष्यमनूद्य इत्येतदयुक्तं यत् क्रत्वर्थं तदतिदिश्यते ' इत्यादि उक्तं वार्तिके ।

८।३।२।३–५ 'सन्ति च तत्र चोदनया प्रवृत्तानि' इत्यादिभाष्यमनूद्य 'इत्येतदयुक्तं' इत्युक्त्वा प्रतिपादितम्। अन्ते च 'एवंवर्णयितव्यमधिकरणं, यथा भाष्यकारेण वर्णितं, तथा बहवो दोषाः' इत्युक्त्वा दोषा वर्णिताः वार्तिके।

९।१।१।१ 'त्रिविधश्चोहः' इति भाष्यमनूद्य 'इत्येतदयुक्तम्। कथं? ऊहो नाम वितर्कणा, सा चैकरूपा' इत्याद्युक्त्वा विषयभेदेन त्रैविध्यमुक्तं इति भाष्यमन्यथा व्याख्यातम्।

९।१।१०।३५ 'अथापि प्रथमं' इत्यादिभाष्यमनूद्य 'नैतद्युक्तं' इत्युक्त्वा 'कथं' इत्यादिना प्रपञ्चयित्वा प्रथमं वर्णकं दूषितं वार्तिके।

९।१।११।३७ 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां अग्नये जुष्टं निर्वपामि' इति निर्वापमन्त्रः। हे हविर्द्रव्य त्वा त्वां प्रति अग्नये अग्न्यर्थं जुष्टं सेवितं भविष्यति इत्यभिप्रायेण निर्वपामि शूर्पे गृह्णामि। तच्च निर्वापकर्म सवितुर्देवस्य प्रसवे अनुज्ञायां सत्यां, सवित्रनुज्ञया इत्यर्थः। किंच अश्विनोर्देवयोर्बाहुभ्यां पूष्णो देवस्य च हस्ताभ्यां निर्वपामि, न मम मर्त्यस्य हस्तेन इति मन्त्रार्थः सरलः। भाष्यकारस्तु 'देवस्य सवितुः प्रसवे देवेन सवित्रा यजमानेन प्रसूते उदिते वा सवितारि। अश्विनोर्बाहुभ्यां (अध्वर्योः) परिक्रयमभिप्रेत्य (परिक्रेत्रोः) यजमानयोर्दंपत्योः बाहुभ्याम्। अश्विनौ हि तौ अग्न्याधेये अश्वदानेन। अशितवन्तौ वा तत् यज्ञफलमश्नुवाते। तद्बाहू इति स्वौ बाहू व्यपदिशति। देवताऽध्वर्य्वोर्वा अश्विनोः एतौ बाहू इति। पूषणं तु यजमानमेव मन्यते पुष्णातेः।' इति। अत्र भाष्ये द्युस्थानाः काश्चिद्देवतास्त्यक्ताश्च स्वीकृताश्चेत्युभयथा।

९।२।३।१७ 'पादप्रगीतेषु पादे एव गानं कर्तव्यं' इत्यादिभाष्यमनूद्य 'एतदयुक्तं भाष्यम्। कथं? ऋचि एवैते सामनी (गोष्ठवासिष्ठसंज्ञके) उत्पन्ने, न पादे' इत्याद्युक्तं वार्तिके।

९।२।४।२४ वर्णकं २ 'एकविंशतिकृत्वः षोडशिनि अभ्यस्यमाने त्रैशोकाभ्यासः' इति ऐकार्थ्याच्चेतिसूत्रस्थं भाष्यमनूद्य 'एतदयुक्तं, नहि द्वादशाहे षोडशिनः एकविंशतिकृत्वः प्रयोगः किं तर्हि सकृदेव प्रयोगः, तस्मादन्यो वाक्यार्थः 'एकविंशः षोडशी' इति सर्वस्तोत्राणि षोडशिनि एकविंशानि भवन्ति, तत्र एकविंशतित्वं संपद्यते' इत्युक्तं वार्तिके।

९।२।९।३३ 'विरामं कृत्वा अनक्षरं गायिष्यते' इति भाष्यमनूद्य 'एतदयुक्तं ऋगक्षराणां साम संस्कारकं समधिगतं योनौ। तत्र यदि अनक्षरं गीयते अयथाप्रकृतिकं स्यात्, अदृष्टार्थं च स्यात् सर्वं चैतदन्याय्यम्' इत्याद्युक्तं वार्तिके।

९।२।१०।३४ अत्र ' ऋक्स्तोभस्वरकालाभ्यासविशिष्टाया गीतिः सामशब्दो वाचकः ' इति भाष्यमनूद्य ' एतदयुक्तं गीतिषु सामाख्या ' इत्युक्तत्वात् । तस्मात् ( सूत्रं ) अन्यथा वर्ण्यते ' इत्युक्त्वा वर्णितं वार्तिके ।

९।२।१६।४७ ' अर्थापत्तितः इह धर्मा भवन्ति न चोदकेन इति ( भाष्यं ) कार्यापत्तिमाह । तदेतदयुक्तम् । कथं ? बृहद्रथंतरयोः अग्निष्टोमे समुच्चयः । यद्यपि अग्निष्टोमस्य बृहद्रथंतरे पृष्ठसाधनत्वेनावगते, तथापि तयोर्वैकल्पिकत्वात् एकस्यैवेदं कण्वरथंतरमापद्यते । एवं चेत् एकस्यैव धर्मान् ग्रहीष्यति इति ' । इति वार्तिकम् ।

९।२।१९।५६—५७ इदं सूत्रद्वयं अधिकरणान्तरत्वेन वर्णितं भाष्ये ' किमुभौ होमौ पौर्णमास्याममावास्यायां च इति एतत् ( भाष्यं ) अयुक्तं......तस्मादन्यथा वर्ण्यते । प्रयोजनसूत्रे एते ' इत्यादिना नाधिकरणान्तरं इत्युक्तं वार्तिके ।

९।३।३।९ ' यूपो वै यज्ञस्य दुरिष्टं, यद्येकं यूपमुपस्पृशेत्, इतिवाक्ययोः एकवाक्यतया अपवृक्ते हि चोद्यते इत्यस्य सूत्रावयवस्य येयं भाष्यकारेण व्याख्या कृता सा न युक्ता तस्मादन्यथा वर्ण्यते ' इति वार्तिके उक्तम् ।

९।४।२।१७—२१ अत्र ' अश्वस्य ' इत्यादिभिः पञ्चभिः सूत्रैः एकमधिकरणं भाष्यकारा व्याचक्षते । वार्तिककारास्तु ' अश्वस्य ' इति सूत्रे ' अयं तावत् सिद्धान्त एव...... न चैतत् पूर्वपक्षसूत्रं समाम्नायस्य बलवत्त्वात्, तथा पक्षव्यावर्तकस्य तुशब्दस्य चोत्तरत्राभावात् ' इत्यनेन प्रथमसूत्रात्मकमेकमधिकरणं उत्तरैश्च चतुर्भिः सूत्रैः अन्यदधिकरणं इत्याहुः ।

१०।१।९।३३ ( ३५ के. ) । ' इमे सूत्रभाष्ये अयुक्ते ' इत्युक्त्वा अयुक्तता प्रतिपादिता वार्तिके ।

१०।१।२।४ ' अपि च दीक्षणीययैव ज्योतिष्टोमे आरम्भार्थः सिध्यति इति अयुक्तोऽयं ( भाष्य— ) ग्रन्थः । पुरुषसंस्कारद्वारेण उपकरोति दीक्षणीया, नारम्भार्थतया ' इति वार्तिकम् ।

१०।२।४।१७ अत्र वार्तिकं ' याऽसौ चतुःसूत्री ( भक्षाणां तु प्रीत्यर्थत्वात् इत्यादिः १४—१७ ) सा अनेन न्यायेन विरुद्धा प्रत्याख्यातव्यैव ' इति ।

१०।२।१६।४७ ' अपि च परिक्रयार्थे सति दक्षिणाऽपनयः स्यात् । चोदकप्राप्तः अन्वाहार्यः अपनीयेत, तत्र चोदको बाध्येत इति अयुक्तोऽयं ( भाष्य— ) ग्रन्थः । कथं ? पत्नीसंयाजवेलायां अन्वाहार्यो दत्तः ' इत्यादि वार्तिकम् ।

१०।२।३१।७१ ' न यूपस्य खलेवालीत्वं, तथा अव्यवहितेन भवतिना संबन्धात् प्रत्यक्षं वाक्यम् । इतरथा व्यवहितेन भवतिना परोक्षं स्यात् इत्ययुक्तमिदं ( भाष्यकृतं ) पूर्व-

पक्षनिराकरणम्। कथं? शब्दस्य धर्मोऽयं क्रमः। अर्थं प्रति शब्दो गुणभूतः .... तस्मात् पूर्वपक्ष-निराकरणमकल्प्यम्। इत्यन्यथा वर्ण्यते' इति वार्तिकम्।

१०।२।३३ (३४)। ७५ अत्र भाष्ये धानाः उदाहरणत्वेन गृहीताः। वार्तिके तु उक्तं—'धाना इत्येतदनुदाहरणं, द्वेधाऽपि अनुपपद्यमानत्वात्' इत्युक्त्वा अनुपपत्तिं प्रसाध्य 'किं तर्हि उदाहरणं? तत्रैव ग्रन्थः' इत्यादिना उदाहरणान्तरं विवृतम्।

१०।३।१।१ अत्र भाष्ये चत्वारि उदाहरणानि उपन्यस्तानि, तत्र 'अवभृथस्ताव-दनुदाहरणं' इत्युक्त्वा अनुदाहरणत्वं साधितं वार्तिके।

१०।४।२२।४४ अत्र वार्तिकं 'भाष्यकारेण यदिदं व्याख्यानं कृतं प्रस्तावोद्गी-थादौ कण्वरथंतरशब्दः इति, तदयुक्तं गीतिषु सामाख्या इति कण्वरथंतरशब्देन साम उच्यते, न ऋक्' इत्यादि।

१०।५।९।३७ अत्र वार्तिकं 'नहीदं वचनं प्रकृतौ प्रतिषेधकम्। किं तर्हि? विकृतौ उपदेशकं इति। जात्युत्तरम्। .... सर्वत्रैवेदं उत्तरं घटते। अत इदमुत्तरं न्यायेन विरुद्धम्। तस्मादसमञ्जसम्। कथं तर्हि अयं ग्रन्थः? उपचयत्वेन' इति।

१०।५।२५।८५ अत्र वार्तिके '(गवामयने त्र्यनीकाविभागविषये—) यदेतत् व्याख्यानं भाष्यकारेण कृतं, इदं नोपपद्यते' इति प्रतिज्ञाय अनुपपत्तिमुक्त्वा स्वमतेन विभागो वर्णितः।

११।१।१।१ अत्र एकशब्दाभिसंयोगात् इति पदस्य व्याख्यानं भाष्ये कृतमनूद्य दूषयित्वा स्वयमन्यथा व्याख्यातम्। तत्र 'अत्र ग्रन्थः य एषां समुदितानामेकः शब्दो वाचकः, तेन एतानि (आग्नेयादीनि) अभिधाय फलसंबन्धः कृतः दर्शपूर्णमासशब्देन इति' इति भाष्यमनूद्य शब्दशो व्याख्याय 'तदयुक्तं, न दर्शपूर्णमासशब्दः समुदायवचनः' इत्यादिना अयुक्ततां प्रदर्श्य 'तस्मात् समुदायिवचनोऽयं' इत्युपसंहृत्य 'एकशब्दाभिसंयोगात् इत्येतदन्यथा वर्ण्यते' इति प्रतिज्ञाय 'भावयेत्' इत्यादिना अन्यथा वर्णनं कृतं भावनावाचकशब्दसंयोगात् इति।

११।१।१।१ 'योऽयं (भाष्ये) नित्यानित्यविरोध उक्तः, स नोपपद्यते' इति प्रतिज्ञाय अनुपपत्तिमुक्त्वा 'तेन तर्हि अन्यथा वर्ण्यते' इत्यादिना अन्यथा वर्णितम्। अत्रैव तृतीयसूत्रे 'अत्र ग्रन्थः विशेषणमपि अविधीयमानं न भवति। न च द्वयोर्विधीयमानयोः परस्पर-संबन्धो भवति इति। अयुक्तमिदं दूषणम्। अरुणादीनामपि अयं दूषणप्रकारः स्यात् यथा भवता वर्णितम्।' इति वार्तिकम्। पुनश्च तत्रैव 'अत्र ग्रन्थः— किं पुनरत्र विशेषणेन कार्यं, यावता रूपवतामाग्नेयादीनां संनिधौ अरूपः .... यजतिशब्दः समुदायवचनः— इति, तद-युक्तम्। यथैव आग्नेयादीनां द्रव्यदेवतेन रूपवत्त्वं, एवं प्रयाजादीनामपि, तत्र न कश्चित् रूपे

विशेषो विद्यते, न च संनिधाने। तस्मात् प्रकृतत्वाविशेषात् सर्वेषामेव फले विधानं स्यात्' इति। पुनश्च 'यदपि च दशपूर्णमासाभ्यां स्वर्गं इति संबन्धः इति, एतदपि भावार्थाधिकरणे निराकृतम्' इति।

११।१।२।६–९ अत्र वार्तिके षष्ठसूत्रस्थं सप्तमसूत्रस्थं च भाष्यमनूद्य तदुक्तः पूर्वपक्षः सिद्धान्तपक्षश्च दूषितः। 'तस्मादेतानि सूत्राणि अन्यथा वर्ण्यन्ते' इत्युक्त्वा चत्वार्यपि सूत्राणि अन्यथा वर्णितानि।

११।१।३।११–१९ "पूर्वस्मिन् अधिकरणे इदमवगतं इतरेतरयुक्तान्यङ्गानि क्रतूपकारं कुर्वन्ति इति। षष्ठे (६।३।१) नित्ये प्रयोगे एकदेशेनाप्यधिक्रियते, (६।३।२) काम्ये तु कृत्स्नामितिकर्तव्यतां यः शक्नोति कर्तुं, सोऽधिक्रियते इति स्थितम्। एतेषु (त्रिषु) अधिकरणेषु स्थितेषु केयं चिन्ता 'काम्येषु किं एकदेशप्रयोगः, उत सर्वाङ्गोपसंहारः' इति। तस्मादयुक्तोऽयं विचारः, गतार्थत्वात्। तेन 'अङ्गानां तु शब्दभेदात्' (५) इत्यारम्य यावत् 'विधेस्त्वेकश्रुतित्वात्' (१६, अवशिष्टं सूत्रत्रयमपि १७–१९ तच्छेषत्वेनैव) इत्येतावत् एकमधिकरणं द्रष्टव्यम्।" इति वार्तिकम्। तथा च भाष्ये ५–१० सूत्रैः एकमधिकरणं, ११–१९ सूत्रैश्चापरम्। वार्तिके तु ५–१९ सूत्रैरेकमेवेति।

११।१।७।३५ 'अत्र (भाष्य–) ग्रन्थः यदा प्रयाजाः, न तदा प्रधानयजिः अपूर्वं वा। यदा च यजिरपूर्वं च, न तदा प्रयाजाः इति। एतदयुक्तम्। कथं? यस्मिन्नेव क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते, तस्मिन्नेव करणमपि भावकत्वेन व्याप्रियते। इतिकर्तव्यताऽपि तस्मिन्नेव (क्षणे) करणमनुगृह्णाति। यदि अन्यस्मिन् क्षणे स्वर्गो भवने कर्तृत्वं प्रतिपद्यते, करणमपि अन्यस्मिन् भावकं, तथा सति भाव्यभावकसंबन्ध एव न स्यात्। तस्मात् यौगपद्यं स्वर्गयागयोः, एवमेव करणेतिकर्तव्यतयोः। तस्मादेषां तुल्यकालता' इति वार्तिकम्।

११।३।९।१९–२२ भाष्ये अग्नियोगविमोकौ प्रधानमात्रार्थौ न साङ्गप्रधानार्थौ इति सिद्धान्तः उक्तः। वार्तिके तु 'नैतद्युक्तं' इत्यादिना भाष्यीयहेतून् निरस्य 'साङ्गप्रधानार्थौ' इति स्वसिद्धान्त उक्तः।

११।४।२।५ 'अयुक्तमिदं (भाष्यकारैः कृतं) व्याख्यानं' इति प्रतिज्ञाय अयुक्तता प्रतिपादिता। 'यदप्युच्यते (भाष्ये) समुदायमुद्दिश्य क्रियते इति तदयुक्तम्। नहि समुदायः फले चोद्यते' इत्यादि च प्रतिपादितं वार्तिके।

११।४।७।२८ (३१) भाष्यव्याख्यानमनूद्य ततो वार्तिके 'एतदयुक्तं' इत्यादिना 'एवं स्थिते विकारेण अविकारेण वा अधिकरणमेव नोत्तिष्ठति' इति दूषयित्वा 'तस्मादन्यथा वर्ण्यते' इत्यादिना अन्यथा वर्णितम्।

१२।१।१२।२४ अत्र भाष्ये अग्न्यन्वाधानस्य देवतापरिग्रहार्थत्वमपि स्वीकृत्योक्तम्। वार्तिके तु 'न देवतापरिग्रहार्थमग्न्यन्वाधानं वस्तुतोऽवगम्यते, नापि शब्दतः' इत्याद्युक्तम्। किंच 'यदप्युक्तं दीक्षणीयया देवतापरिग्रहः कृतः इति एतदप्ययुक्तं' इत्युक्त्वा अयुक्तता प्रतिपादिता।

१२।२।७।२२ अत्र भाष्ये पञ्चदशरात्रः उदाहरणमुक्तम्। तत्र वार्तिकेन 'अस्मिन् सूत्रे पञ्चदशरात्रस्तावत् अनुदाहरणं' इत्यादिना दूषयित्वा 'किं तर्हि अत्रोदाहरणं' इति पृष्ट्वा 'यत्र पञ्च यागाः सह चोद्यन्ते फलं प्रति' इत्यादिना नामधेयादिविशेषराहित्येनैव उदाहरणान्तरमुक्तम्। तन्त्ररत्ने तु 'अग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, इन्द्राय प्रदात्रे पुरोडाशमेकादशकपालं पशुकामः दधि मधु घृतमापो धानाः (तत् संसृष्टं) प्राजापत्यं इति सप्त यागाः' इत्यादिना उदाहरणं स्पष्टीकृतम्। तदेव च भाट्टदीपिकायामुक्तम्।

१२।४।७।२० 'विशेषस्य च (कौण्डिन्यादेः) अन्यपरिच्छिन्नस्य (इतर-ब्राह्मणावच्छिन्नस्य) एकावसायिनः तदसंभवे विषयाभावप्रसङ्गात् मा भूत् इति (भाष्येण) एवं बाधो वर्णितः, सोऽयुक्तः। यत् कारणं, शास्त्रानुग्रहः कार्य इति नास्ति चोदना। यदि शास्त्रानुग्रहमात्रं स्यात्, दधिदाने कृते अनुगृहीतं शास्त्रं इत्युभयत्र दधिदानम्। एतत्तु नेष्यते। तस्मात् य एव बाधोऽस्माभिर्वर्णितः (१।४।११।२१ सूत्रे पुरुषार्थसमासत्तेः इत्या-दिना) नित्यनैमित्तिकयोः, स एव' इति वार्तिकम्।

**अथ भाट्टदीपिकाकारेण** सूत्रवृत्तिभाष्यवार्तिकेषु यत् दूषणादिकमुपन्यस्तं तदु-दाह्रियते। तच्च पाठक्रमेणैव। तत्र कश्चित् वार्तिककृतानुवाद एव भाष्यदूषणात्मकः। (अत्र भाट्टदीपिकायां सूत्रेषु पञ्च, वृत्तिकारविषये त्रयः, भाष्ये २७, वार्तिके २३, भाष्यवार्तिक-मतभेदे ११, प्रभाकरमते २, भवदेवविषये १, सामान्यतः ७, मिलित्वा ८४ वारं किं चिदुक्तम्)।

भाष्यकारैः प्रत्यक्षश्रुतिविरोधे, तदभावेऽपि यत्र लोभादिदर्शनं, तत्र स्मृतेरप्रामाण्यं मूलश्रुतिकल्पनाऽभावात् इति सिद्धान्तितम्। वार्तिककारस्तु यावच्छ्रुतिदर्शनं अननुष्ठानलक्षण-मप्रामाण्यं इत्यभिप्रायं सूत्रमिति प्राह। **भाट्ट.** १।३।२,

भाष्यकारः सृष्टिपदं लिङ्गप्रकरणप्राप्तसृष्ट्यसृष्टिमन्त्रमात्रस्य गौण्या अनुवाद इत्याह। वार्तिककारस्तु मन्त्रविशिष्टोपधानमत्र विधीयते इत्याद्याह। १।४।१७,

भाष्यकारेण 'अभिक्रामं जुहोति' इत्यत्र अनुपात्तस्यापि आख्यातगम्यस्य सद्भावात् तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेवेति सिद्धान्तितम्। तत्तु णमुलन्तस्यास्य पूर्वकालतादिसंबन्धेन जुहोत्यनन्वये नैराकाङ्क्ष्याभावात् जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणा-भावात् अरुणाऽधिकरणेन गतप्रायत्वाच्च वार्तिककारेण अन्यथा व्याख्यातम्। ३।१।१०,

भाष्यकारेण पवमानहविषां अग्न्यङ्गत्वेन स्वरूपेण च असंनिहितत्वात् वरणादीनां सर्वप्रकृतियज्ञाङ्गत्वं, सर्वयज्ञाङ्गत्वं वा इत्युक्तम् । वार्तिककारस्तु पवमानहविषां नाग्न्यङ्गत्वं, वरणादीनां च सर्वयज्ञार्थत्वमेव इत्याह । ३।२।१२,

भाष्यकारः आधानस्य याजुर्वैदिकत्वात् आधानाङ्गसाम्नामपि याजुर्वैदिकं उपांशुत्वमेवेति आह, वार्तिककारस्तु विनियोजकवेदस्वरो ग्राह्यः, नोत्पादकवेदस्वरः इति किं चिद्विषयान्तरं चकार । ३।३।२,

भाष्यकारेण संतर्दनस्य प्रकरणे एव निवेशः इष्टापत्त्या स्वीकृतः । वार्तिककारेण तु विकृतिमात्रे अग्निष्टोमातिरिक्तविवृद्धस्तोमके निवेशः इत्युक्तम् । ३।३।११,

यत्तु मूले ' निवीतं मनुष्याणां ' इति शुद्धमनुष्यप्रधानकातिथ्यादिकर्माङ्गतया विधिः इति पक्षान्तरं सिद्धान्तत्वेनोपन्यस्तं, तत् उपेक्षितम् । प्राकरणिकमनुष्यप्रधानककर्माङ्गत्वमेव सिद्धान्तः । वस्तुतस्तु नायं विधिः । ३।४।१,

द्व्यवदानस्यैव यागसाधनत्वात् अवशिष्टस्य अनुनिष्पन्नप्रतिपत्तिः शेषकार्याणि इति भाष्यकारः । वार्तिककारस्तु अष्टाकपालः कृत्स्न एव हविः, प्रक्षेपस्तु द्व्यवदानस्य प्रतिपत्तिः । जुहोतिना प्रक्षेप एव प्रतिपाद्यते इत्याह । ३।४।१८,

न तावदत्र ( सौत्रामण्यां सुरायाः ) अवशिष्टः शेषोऽस्ति अनवदायैव होमविधानात् , वचनावगतस्य हुतशेषस्य तु प्रतिपत्त्यन्तरविधानेन आतिदेशिकप्रतिपत्तिबाधात् । इदं च सूत्रभाष्यकारमताभिप्रायेणोक्तम् । यदाऽपि वार्तिकोक्तरीत्या देवतासंस्कारार्थं यागान्तरमेव सुरापयोद्रव्यकं विधीयते, तदाऽपि पूर्ववदेव शेषाभावः । ३।५।३,

वरणजन्यादृष्टवत्त्वं अध्वर्युत्वादिकं इति **प्राभाकर**मतमपास्तम् । प्रकृतौ ' होता अवृतः सामिधेनीरन्वाह ' इति वरणात्पूर्वं होतृशब्दप्रयोगात् सत्रेऽपि वरणापत्तेश्च । ३।७।९,

यदपि वार्तिके अग्नीषोमीयाद्यङ्गभूतेषु प्रैषानुवचनेषु एकपदार्थत्वेन होत्रध्वर्य्वोः असंभवात् मैत्रावरुणविधिः इत्युक्तं, तदपि यजेतिशब्दस्य अग्नीषोमीयादौ हौत्रे एव प्रत्यक्षपठितत्वेन समाख्यया आतिदेशिकाध्वर्य्वादिबाधेन होतृप्राप्तेः, तस्य च होतर्यज इति लिङ्गेन बाधेऽपि तत्पुरुषस्य मैत्रावरुणस्यैव यजेतिशब्दे तदेकवाक्यताऽऽपन्नपदान्तरेषु च प्राप्तेः उपेक्षितम् । ३।७।२२,

'तरसाः सवनीयाः पुरोडाशाः' इत्यत्र यदा तु ' पुरोडाशाः सवनीयाः ' इति **भवदेवादि**धृतः पाठः, तदा प्राथमिकत्वात् पुरोडाशकार्यस्यैव उद्देश्यत्वं स्पष्टमेव । ३।८।२३,

यत्तु भाष्यकारादिभिः विशिष्टोपायार्जितं द्रव्यमपि सर्वं क्रत्वर्थमेव इति पूर्वपक्षयित्वा अर्जनं तावत् पुरुषार्थं नियमोऽपि अदृष्टार्थत्वेऽपि पुरुषार्थ एव इति सिद्धान्तितं, तत्

प्रतिग्रहनियमस्य फलकल्पनाभयात् क्रत्वर्थत्वे हिरण्यधारणादेरपि क्रत्वर्थत्वापत्तेः तेन गतार्थत्वाच्च उपेक्षितम् । ४।१।२,

**यत्तु** अत्र भाष्यकारादिभिः लिङ्गमुक्तं स्फ्याद्याकारस्य द्व्यवदानेन विकलत्वात् पूर्वपक्षे परिधानीये कर्मणि यज्ञपात्रकरणकदाहानुपपत्तिरिति, **तत्** पूर्वपक्षे उद्धननाद्यर्थपात्राणां पृथक् सत्त्वात् तेषां च यज्ञसाधनत्वाभावेऽपि आयुधशब्दाभावेन प्रयोजकतयैव यज्ञपात्रत्वोपपत्त्या दाहोपपत्तेः उपेक्षितम् । ४।१।४,

**यत्तु** भाष्यकारादिभिः पूर्वपक्षे वाजिननाशे आमिक्षानाशे इव पुनर्दध्यानयनेन वाजिनोत्पत्तिः, सिद्धान्ते तु आज्येन समापनमिति प्रयोजनमुक्तं, **तत्** षष्ठे हविर्नाशादिनिमित्ते आज्येन समापनस्य विधिबलेन वक्ष्यमाणत्वेन पूर्वपक्षेऽपि तुल्यत्वात् उपेक्षितम् । ४।१।९,

सूत्रादौ ( समानयनं तु इत्यत्र ) तु समानयनपदं तत्कालीनप्रयाजद्रव्यपरं आज्यसंस्कारकस्य समानयनस्य आज्यप्रयोजकत्वसिद्धान्तानुपपत्तेः । ४।१।१५,

सूत्राणि च सुधीभिः अस्मिन्नेवार्थे ( स्वरुः प्रोक्षणादेर्न प्रयोजकः इत्यर्थे ) व्याख्येयानि, न तु भाष्यकारोक्ते ( स्वरुः उत्पत्तेर्न प्रयोजकः इत्यर्थे ) । ४।२।१,

'न च वैमृधवत् अस्य ( आग्निमारुतशस्त्रस्य ) अनुत्पत्तिवाक्यत्वात्, उत्पत्तिवाक्ये च फलापेक्षया प्रकरणात् क्रत्वङ्गत्वकल्पना इति मूलोक्तं युक्तम् । उत्पत्तिवाक्ये तदपेक्षायामपि इष्टसामान्यस्य भाव्यत्वमङ्गीकृत्य वाक्यान्तरेण विनियोगोपपत्तौ दुर्बलप्रमाणेन अङ्गत्वकल्पनाऽनुपपत्तेः । ४।३।१२,

**यत्तु** भाष्यकारेण पौर्णमास्यामाधाने कृते अग्रिमामावास्यायां दर्शेष्ट्यभावात् पूर्वपक्षे अकरणं इत्युक्तं, **तत्** द्वादशरात्रिषु पवमानेष्टिपक्षे आधानोत्तरदिने पौर्णमासकालाभावे च बोध्यम् । ४।४।८,

तत्तत्पदार्थानन्तरं तत्तत्पदार्थाः इत्येवं अनेकपदार्थवृत्तिपौर्वापर्यसमुदायरूपविततिरेव क्रमः इति तु मूलोक्तः पक्षः अशाब्दत्वात् विकृतौ क चित् एकपदार्थलोपे तावत्पदार्थवृत्तिपौर्वापर्यसमुदायस्यासंभवात् व्युत्क्रमेणानुष्ठानेऽपि वैगुण्यानापत्तेः उपेक्षितः । ५।१।१,

**यत्तु** मूले विततिरूपक्रमपक्षमङ्गीकृत्य सर्वस्याप्यस्य एकवाक्यत्वमित्युक्तं, **तत्** अशाब्दायाः विततेर्विधेयत्वायोगात् अनेकदीक्षोद्देशेन विधाने च वाक्यभेदापत्तेः उन्नेतृदीक्षायां कर्तृविधेरावश्यकत्वाच्च उपेक्षितम् । ५।१।१,

मूलोक्तश्रुतिक्रमोदाहरणमनादरणीयम् । ५।१।१,

ऋष्यादीनां अनादित्वात् संसारस्य प्रवरवरणादौ ऋष्यन्तरस्यापि संभवात् अधिकारोऽस्त्येव इति भाष्योक्तं अनधिकारप्रतिपादनमनादरणीयम् । ६।१।२,

यत्तु भाष्ये द्वादशशते षट्पञ्चाशदेकेन अपरेणापि तावदेव इत्येवं विभागः कथितः, स द्वादशशतस्यैव विहितत्वात् तत्रापि उभयोः संसृष्टस्वत्वोपपत्तेः उपेक्षितः। द्वादशशतद्वयनिवृत्तौ वा भाष्यतात्पर्यम्। ६।१।४,

'स्वर्गकामो यजेत' इत्याद्येकवचनश्रवणे मूले तावत् एकत्वमविवक्षितं स्वर्गकामपदस्य स्वर्गमात्रपरत्वात्। अधिकारिपरत्वेऽपि वा तस्योद्देश्यत्वेन तद्विशेषणस्याविवक्षितत्वात्... एको द्वौ बहवः कर्तारः इति पूर्वपक्षः कृतः, तत् फलोद्देश्यकस्य विजातीयस्य पुरुषप्रयत्नस्याप्राप्तत्वेन विधेयत्वेन तत्रतत्र स्थापितत्वात् तद्विशेषणस्य कर्त्रैकत्वस्य विवक्षोपपत्तेः स्वर्गकामपदे तदविवक्षायामपि तत्सामानाधिकरण्ये बाधकाभावात् उपेक्षितम्। ६।२।२,

प्रतिनिधिविचारे कर्तव्ये मूले तावत् द्रव्यस्य क्रियातः अत्यन्तभेदाभावात् द्रव्यभेदे कर्मभेदापत्तेः इत्यादिना पूर्वपक्षिते जगतीतलवर्तिनी एकैव कर्मव्यक्तिः अभिव्यक्तिमात्रं तु भिद्यते इत्यादिना सिद्धान्तितं, तत् द्रव्याश्रितत्वेऽपि क्रियायास्तद्भेदे वैजात्यस्य शङ्कितुमशक्यत्वात् व्यक्त्यैक्यसिद्धान्ते च अपूर्वापह्नवापत्तेः, तस्याभिव्यक्तिजन्यत्वे यजिपदे तल्लक्षणाऽऽपत्तेः उपेक्षितम्। ६।३।२,

मूले उभयविधप्रतिनिध्यपचारे अधिकरणद्वयं कृतं, तत्तु मया स्पष्टत्वादुपेक्षितम्। ६।३।१३,

एकदेशनाशादौ यदि द्व्यवदानग्रहणोत्तरं पात्रीस्थस्य कुम्भीस्थस्य वा नाशः, तदा भाष्यकारमते तावत् द्व्यवदानस्यैव हविष्ट्वात् शेषकार्याभावेऽपि तेनैव यागः। वार्तिककारमते तु यावन्निरुप्तव्रीहिपरिमितपुरोडाशस्य यावद्दुग्धं सांनाय्यस्य च हविष्ट्वात् हविर्नाशसत्त्वेन पात्रीस्थनाशेऽपि आज्येनैव यागः। ६।४१,

**यत्तु** मूले क्रियान्तरत्वपक्षे अधिकरणत्वेन दधिपयसोर्विधानात् लौकिकस्यैव असंस्कृतस्य दध्नो ग्रहणापत्तेः दर्शार्थोत्पादितस्य प्रसक्त्यभावः इत्युक्तं, **तत्** 'सह श्रपयति' इत्यस्य वैयर्थ्यापत्तेस्तुल्यत्वेन हविष्ट्वेनैव विधानस्यावश्यकत्वात् उपेक्षितम्। ६।५।१,

**यत्तु** अत्र भाष्यकारेण पक्षान्तरमुक्तं 'विभजेत् इत्यनेन नापनयविधिः, किंतु पूर्वयागीयं हविः वैकृतीभ्यो देवताभ्यो दद्यात् इति सामान्यतो विभागरूपं दानं उपांशुयाजीयाज्यसाधारण्येन विधीयते। अपनयस्तु पूर्वदेवतानामर्थात्। तत्र विशेषवचनात् द्रव्यान्तराणां व्यवस्थायामपि आज्यस्य सामान्यवाक्यादेव त्रिभ्योऽपि दानं इति' **तत्** अपनयविध्यभावे प्रकृतहविर्ग्रहणे प्रमाणाभावात् सामान्यवाक्यस्यापि कर्मान्तरविषयकसामान्यविधित्वापत्तेः उपेक्षितम्। ६।५।२,

सोमे दीक्षासंख्याविषये भाष्यकाराभिप्रायं वार्तिककाराशयं च पृथगुक्त्वा उभयस्यापि युक्तता सूचिता भाट्टे। ६।५।८,

**यत्तु** मूले अतिदेशसिद्धयर्थं यजिप्रयुक्तत्वं वा धर्माणां, अपूर्वप्रयुक्तत्वं वा इति चिन्तान्तरं कृतं, **तत्** यजिप्रयुक्तत्वेऽपि प्रकृतयजिप्रयुक्तत्वोपपत्तेः, इतरथा अपूर्वप्रयुक्तत्वेऽपि तदनापत्तेः नावमिकेन पौनरुक्त्यापत्तेश्च उपेक्षितम् । ७।१।१,

इतरशब्दस्य संनिहितवाचित्ववत् पूर्वोक्तेतरतत्सदृशवाचित्वमपि लोकसिद्धं, 'चैत्र-मैत्रयोः कम्बलकौशेये प्रदेये, इतरत् विष्णुमित्राय' इत्यत्र संनिहितपूर्वोक्तेतरतत्सदृशवस्त्रादेरेव प्रतीतेः । अतश्च वार्तिककारीया पूर्वोक्तसादृश्यस्य अवाच्यत्वोक्तिः उपेक्षणीया । ७।१।२,

'पञ्चसंचरेषु' इत्यधिकरणे (७।१।३।१७-२१) सूत्रकारभाष्यकारयोर्मत-मुक्त्वा वस्तुतस्तु इत्यादिना तद्विरुद्धं किं चिदुक्त्वा अतो भाष्यमनादृत्य सूत्रमेवं व्याख्येयं इत्युप-क्रम्य "अग्निमथनादिवाक्यानां औचित्येन अतिदेशविधिस्तुत्यर्थत्वात् 'नेतरार्थत्वात्' इति सूत्रं विधायकातिरिक्तिस्तावकत्वरूपप्रयोजनकथनार्थम् । तदेव च अतिदेशवाक्यस्याङ्गविधिपरत्वे लिङ्गं इति लिङ्गदर्शनसूत्रस्यार्थः ।" इत्युक्तम् । ७।१।३,

रथंतराधिकरणे 'अन्ये तु भाष्यस्थाः पक्षाः असंभवदुक्तिकत्वात् न लिखिताः' इत्युक्तम् । ७।२।१,

'भाष्यकारः सप्तभिः सूत्रैः (७।३।१९-२२ [२०-२३ के.], २३-२५ [२४-२६ के.]) अधिकरणद्वयमेवं व्याचख्यौ' इत्युपक्रम्य व्याख्याय अन्ते 'अतः भाष्य-कारमतेऽपि न वार्तिकोक्तदूषणावकाशः' इत्युपसंहृतम् । पुनश्च 'वार्तिककारमतोपपादनं तु' इत्युपक्रम्य तदुपपादितम् । ७।३।७,

वस्तुतस्तु यूपकार्ये खलेवालीविधानात् यूपशब्दस्य न संस्कारादिशक्तत्वं, संस्का-रातिदेशस्तु स्थानापत्त्या इति सूत्रोक्तयूपदृष्टान्तोऽपि असंगत एव । ७।३।९,

भाष्यकारोक्तं अस्य (सौर्यं चरुं निर्वपेत्— प्रयाजेप्रयाजे कृष्णलं जुहोति इत्यस्य) वचनोदाहरणत्वमपि पञ्चमविधिप्रकारापत्तेः अयुक्तम् । ७।४।१,

भाष्यकारस्य तु एतादृशविषये (गुणकामेषु) फलोत्पत्तिं मन्यमानस्य अभिप्रायं न विद्मः । ८।१।५,

**यत्तु** पार्थसारथिना **वार्तिकस्वारस्यात्** आग्नेयैकत्वमभ्युपगम्य (अभिमर्शन-) मन्त्रयोः दृष्टार्थत्वेन विकल्पात् एकस्मिन् आग्नेये प्रधानान्तरसाहित्यानुरोधेन प्रकृतौ व्यवस्थाया-मपि विकृतौ तदभावेन व्यवस्थाकारणाभावात् अव्यवस्थितविकल्पो मन्त्रयोः इति सिद्धान्तितं, **तत्** मन्त्रविकल्पचिन्तायाः द्वादशे संगततया अतिदेशविचाराभावेन अध्यायसंगत्यभावापत्तेः आग्नेय-भेदस्य च स्थापितत्वेन ऐक्यानुपपत्तेः उपेक्षितम् । (वस्तुतोऽत्र वार्तिकनिरासोऽपि अभिप्रेतः) । ८।१।६,

जनकसप्तरात्रे 'चत्वारि त्रिवृन्त्यहानि' इति चत्वार्यनूद्य त्रिवृत्त्वविधानेन त्रिवृत्त्वस्य उत्पन्नशिष्टत्वेन दुर्बलत्वात् गणत्वेनैव सप्तानामपि अह्नां द्वादशाहिकदशाहान्तर्गतसप्ताहविकारत्वं इति भाष्यकाराभिप्रायः। वस्तुतस्तु अयमेव त्रिवृत्त्वविशिष्टकर्मोत्पत्तिविधिः। ८।३।२,

यानि चात्र मूले अनेकानि वर्णकानि कृतानि, तानि पुनरुक्तत्वात् अनुपयुक्तत्वाच्च उपेक्षितानि। मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानि इति ध्येयम्। ९।१।१,

**यत्तु** भाष्यकारेण अश्वमेधे 'त्रैधातवीया दीक्षणीया भवति' इति वचनेन दीक्षणीयाकार्ये यजमानसंस्कारे विहितायां त्रैधातवीयायां पूर्वपक्षे दीक्षणीयाधर्मप्राप्तिः, सिद्धान्ते तु प्रसिद्धत्रैधातवीयाया धर्मा एवेति प्रयोजनमुक्तं, **तन्न,** पूर्वपक्षवत् सिद्धान्तेऽपि स्थानापत्तौ बाधकाभावात्। वस्तुतस्तु नेयं त्रैधातवीया प्रसिद्धत्रैधातवीयायाः कर्मान्तरम्। अतो धर्माकाङ्क्षाविरहेण क्व स्थानापत्त्यतिदेशप्रवृत्तिः ?। ९।१।२,

**यत्तु** भाष्यकारेण मासाग्निहोत्रे तद्भागारम्भके उपांशुत्वस्य ऊहः इति प्रयोजनमुक्तं, **तत्** नामातिदेशप्रापितस्य विरुद्धस्याविरुद्धस्य वा स्वरस्य सत्त्वे चोदनालिङ्गातिदेशप्रापितोपांशुत्वप्राप्त्यनुपपत्तेः उपेक्षितम्। **यदपि** वार्तिकादौ 'पुरस्तादुपसदां सौम्येन प्रचरन्ति' इत्यादौ उपांशुत्वोहः इत्युक्तं, **तदपि** सौम्यमात्रपुरस्कारेण कल्पितस्यातिदेशस्य सामान्यविहितोपांशुत्वातिदेशापेक्षया प्राबल्यादुपेक्षितम्। ९।१।६,

**यत्तु** मूले पूर्वपक्षे ( यज्ञं तन्विष्यन्तौ वाचं यच्छतः इति ) यज्ञशब्दस्य विस्तारविशेषणत्वमनङ्गीकृत्य भागधर्मत्वमुक्तं, **तत्** यज्ञशब्दस्य विस्तारं विना अन्यत्रान्वयस्य दुरुपपादत्वात् भागवाचकपदाश्रवणाच्च उपेक्षितम्। ९।१।७,

**वृत्तिकारेण** तावत् एवं सिद्धान्तितं—न अग्न्यन्वाधानमारम्भपदार्थः, किंतु 'इदं मया कर्तव्यं' इति संकल्पापरपर्यायः अध्यवसायविशेषः। तदर्था अन्वारम्भणीया अन्वाधानरहितायामपि विकृतौ सत्त्वात् कर्तव्यैव। प्रकृतौ च आधानोत्तरं सर्वयावज्जीविकप्रयोगाणां सकृदेव संकल्पकरणात् सकृदेव अन्वारम्भणीया इति। **तन्न,** तत्तत्कालावस्थिततत्तज्जीवनाख्यनिमित्तवशेन तत्तन्नैमित्तिकसर्वयावज्जीविकप्रयोगाणां तत्तत्काले एवोपस्थितत्वेन अध्यवसायापत्तौ सर्वसाधारणाध्यवसाये प्रमाणाभावात्। तस्मात् एवं भाष्यकारादिभिः सिद्धान्तितं— नाध्यवसायवाची आरम्भशब्दः। अप्रवृत्तप्रवर्तनमेव आरम्भः। तदर्था अन्वारम्भणीया कर्तारमारम्भयोग्यं करोति, इति दर्शपूर्णमासोद्देश्यकाप्रवृत्तप्रवर्तनविषयरूपप्रथमप्रयोगीयाद्यपदार्थाङ्गं आरम्भणीया। सा च प्रकृत्यर्थं सकृत् कार्या इति। ९।१।११,

**यत्तु** मूले प्रथमप्रयोगारम्भे क्रियमाणा आरम्भणीया सर्वप्रयोगाणामुपकरोति, **अतः** प्रथमप्रयोगारम्भे कृतैव सर्वेषामुपकारिका इत्युक्तं, **तत्** अन्वारम्भणीयाजन्यस्योपकारस्य याव-

ज्जीवसत्त्वे विकृतिष्वपि प्रसङ्गात् उपकारकत्वापत्तेः, असत्त्वे द्वितीयादिप्रयोगेऽपि उपकारकत्वानापत्तेः उपेक्षितम् । ९।१।११,

**यत्तु** भाष्यकारेण ( देवस्य त्वेत्यादिनिर्वापमन्त्रे ) गौण्या अश्विशब्दः आधाने अश्वदानकरणात् दंपतिपरः इत्यादिना निर्वापविशेषणत्वमुपपादितं, **तत्** वेदे आरोपकपुरुषाभावात् आहार्यारोपाभावमभिप्रेत्य । ९।१।१२,

**यत्तु** भाष्यकारेण 'षष्टिस्त्रिष्टुभो माध्यंदिनं सवनं' इति लिङ्गमपि प्रग्रथने एवोपपद्यते । अत्र हि न यथाश्रुतं सामानाधिकरण्यमुपपद्यते बाधात् । अतो जघन्यमाध्यंदिनसवनपदे एव लक्षणामङ्गीकृत्य माध्यंदिनसवनाङ्गभूता याः सामवेदे समाम्नाताः, ताः षष्टिः इत्यर्थावगतिः इत्युक्तं, **तत्** लक्षणाया आवश्यकत्वे लाघवात् माध्यंदिनसवनस्तोत्रीयाणामेव लक्षणात् ( दाशतयीभ्यः ) आनीतानामपि तत्त्वोपपत्तेः उपेक्षितम् । ९।२।६ वर्णकं २,

**यत्तु** भाष्यकारेण अन्ययोर्वा अनुष्टुभोः समानयनं प्रग्रथनं वा इति चिन्तितं, **तत्** पौनरुक्त्यापत्तेः उपेक्षितम् । ९।२।६ वर्णकं ३,

भाष्यकारीयं नौधसग्रहणं नौधसस्मारकब्राह्मणाच्छंसिस्तोत्रोपलक्षणार्थं, तस्य बृहत्सामकपृष्ठत्वेन श्यैतस्यैव प्रसक्तौ नौधसप्रसक्त्यभावात्, गवामयने अभीवर्तस्यैव ब्रह्मसामत्वेन विशिष्य विहितत्वाच्च । ९।२।६ वर्णकं ४,

मूले तत्कार्यकारित्वरूपां स्थानापत्तिमङ्गीकृत्य तस्याः पञ्चविधत्वमुक्तम् । यद्यपि च सर्वत्र विधिरेव स्थानापत्तौ बीजं, तथापि तत्सहकारीणि पञ्च इति पञ्चविधत्वम् । ९।२।११, मूलोक्तं स्थानापन्नत्वं निरस्य मूलोक्तोदाहरणानामपि अयुक्तत्वं प्रतिपाद्य 'अतो मूलोक्तप्रकारानुपपत्तेः एवं वाच्यं' इत्युक्त्वा प्रकारान्तरं उक्तं उदाहरणानि च विवृतानि भाट्टे । ९।२।११,

भाष्यकारेण कण्वरथंतरे बृहद्रथंतरयोः अविरुद्धसंमीलनादिधर्माणां समुच्चयः विरुद्धोच्चैष्ट्वादीनां तु विकल्पः इति इष्टापत्त्यैव समाहितम् । वार्तिककारस्तु संमीलनादीनां ऐच्छिको विकल्प एव ( न समुच्चयः ) इत्याह । ९।२।१५,

**यत्तु** मूले प्रकृतावेव नावघातस्य तत्त्वेन विधेयता, अपि तु अपूर्वसाधनविशेषोपायत्वेन इत्युक्तं, **तन्न,** तथात्वे प्रकृतावेव व्रीहिपर्यायाणां विदलनादेश्चानुष्ठाने वैगुण्यापत्तेः । ९।३।१,

**यत्तु** मूले एतत्पक्षसाधनार्थं ( षड्विंशतिरस्य वङ्क्रयः इत्यत्र श्रुतपदस्यावृत्तिः इति पक्षस्य ) षड्विंशतिसंख्यापशूभयसंबन्धप्रधानमिदं वाक्यं प्रतिपशु भेदेन तत्संबन्धं प्रकाशयितुं अभ्यसनीयं इति युक्तिरुपन्यस्ता, **सा** संबन्धस्य षष्ठ्यर्थस्य गुणत्वेन प्राधान्यशङ्काऽनुपपत्तेः, वाक्यार्थरूपस्य च अशाब्दत्वेन सुतरां तदनुपपत्तेः, प्राधान्येऽपि च तस्य प्रतिपशूहेनापि प्रकाशनोपपत्तेः अभ्यासे प्रमाणाभावात् उपेक्षिता । ९।४।१,

अत्र च ( ९।४।१७।२१ सूत्रेषु ) सूत्रव्याख्याऽनुरोधेन किंचिद्वैलक्षण्येन भाष्यकारेण ऐकाधिकरण्यं वार्तिककारेण च अधिकरणद्वयमाश्रितं, तत् प्रमेयमात्रलेखनप्रवृत्तेन मया उपेक्षितम् । ९।४।२,

भाष्यकारादिभिरेव समाहितं ( प्रशसा बाहू इत्यत्र ) प्रत्यक्षविहितस्वधितिसत्त्वे मान्त्रवर्णिकशासविधिकल्पनायां गौरवात् प्रशसापदं प्रशस्तत्वपरमेव इति, तत्तु स्वयमेव ' दश प्रयाजानिष्ट्वा आह शासमाहर ' इति वाक्यस्य लिखितत्वात् शासस्यापि पशौ विहितत्वेन उपेक्षितम् । ९।४।४,

**यत्तु** मूले वर्णकान्तरेण ' प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः ' इत्युदाहृत्य कृष्णलेषु वितुषीभावरूपप्रयोजनाभावात् अवघातस्य बाधः इत्युक्तं, **तत्** कृष्णलानां प्रदेयचरुप्रकृतित्वं कृत्वाचिन्तया । १०।१।१,

सौत्रामण्यां आश्विनादिदेवत्यस्य प्राकृतमेव कार्यं, ऐन्द्राग्नादिदेवत्यस्य तु अप्राकृतमिति सूत्रभाष्यकारयोरभिप्रायः । वार्तिककारस्य तु गुणात् कर्मान्तरमेव प्राकृतपशुपुरोडाशकार्यापन्नं दर्शपूर्णमासप्रकृतिकं विधीयते इति । १०।१।९

**यत्तु** मूले यत्र यजमानस्य गुणत्वं, तत्र अस्थ्नामेव शुक्रान्वारम्भादौ अचेतनानामपि अन्वारम्भानुकूलास्थिनिष्ठव्यापाराश्रयतया कर्तृत्वोपपत्तेः अस्थिभिरेव अन्वारम्भादि कार्यमित्युक्तं, **तत्रेदं** वाच्यं, प्रकृतौ हि यजमानपदवाच्यो यागकर्ता जीवात्मैव कर्तृत्वेनोच्यते । शरीरस्य तु न कर्तृत्वम् । आत्मनश्च कर्तृत्वं कृत्याश्रयत्वेनैव, न च मृतस्य तादृशकर्तृत्वसंभवः । अतो वरं प्रधाने एव अनुमतिद्वारकं मृतात्मकर्तृत्वमुपपाद्य अध्वर्युणैव ते कार्याः इति । १०।२।१८,

**यत्तु** मूले प्राकृतगुणकामानां मृताधिकारपक्षे अप्रवृत्तिरित्युक्तं, **तत्** अष्टमे एव तेषां विकृतौ अप्रवृत्तेरित्युक्तत्वात्, कृत्वाचिन्तया कथने प्रयोजनाभावात् उपेक्षितम् । १०।२।१९,

बार्हस्पत्ये सप्तदशशरावे संख्यानुरोधात् सपादचतुःशरावपरिमितं पात्रं कृत्वा तेन चतुर्वारं निर्वापः इत्यर्थः भाष्यकारादिभिः कर्कादिभिश्च सर्वैर्निर्णीतः । **मम** तु प्रतिभाति साक्षात्साधनीभूताग्निहोत्रहवण्याः मुष्टीनां च बाधापेक्षया संख्याया एवैकस्याः मुष्टिपरिच्छेदद्वारा निर्वापसाधनीभूतायाः बाध उचितः । वस्तुतस्तु न तस्या अपि बाधः । यागीययावद्द्रव्यसंस्कारकनिर्वापवृत्तिमुष्टिपरिच्छेदकत्वस्य बाधेऽपि अदोषत्वात् । तत्त्वं तु ईश्वरो वेत्ति । १०।२।२७,

लोके पूर्वं किं चिदवहतानां यवानां भर्जनोत्तरं पुनरवघाते कृते एव धानात्वप्रसिद्धेः प्रयोजनानुरोधेन प्राकृतक्रमं बाधित्वाऽपि भर्जनोत्तरमपि प्राकृतः सधर्मकः अवघातः कर्तव्यः इति भाष्याभिप्रायः । वार्तिककारस्य तु द्विवारमवहतानामेव धानात्वम् । पूर्वमेव सम्यक् वितुषीकृतानां

यवानां भर्जने कृते धानात्वाव्याहतेः। अतो यथाप्रकृत्येव अवघातस्य भर्जनात् पूर्वमेव अनुष्ठानोपपत्तेः नात्र धाना उदाहरणं अपि तु मन्थः इति। १०।२।३३,

**यत्तु** अत्र भाष्यकारेण श्येने 'निवीता ऋत्विजः प्रचरन्ति' इत्याम्नातेन प्रयोगाङ्गभूतकर्तृसंस्कारकेण निवीतेन अतिदेशप्राप्तस्य सर्वकर्मार्थत्वेन विहितस्य चोपवीतस्य बाधमाशङ्क्य अदृष्टार्थत्वात् समुच्चयः इति सिद्धान्तितं, **तत्** अस्यादृष्टार्थत्वे श्राद्धादावपि प्राचीनावीतेन सह उपवीतस्य समुच्चयापत्तेः यावज्जीवैकत्रिसूत्रनवतन्तुकयज्ञोपवीतधारणाश्रितप्रकारविशेषस्य उपवीतत्वनिवीतत्वादेः तत्तत्कर्माङ्गतया विहितस्य समुच्चयासंभवात् उपेक्षितम्। **यदपि** 'संस्थिते षडहे मध्वाशयेत्' इति विहितमध्वशनेन प्राकृतपयोव्रतस्य तस्मिन्नहनि निवृत्तिमाशङ्क्य अदृष्टार्थत्वादेव समुच्चय इत्युक्तं, **तत्** मध्वशनस्य देहवृत्त्यनर्हत्वेन पयोव्रतकार्यकारित्वानुपपत्तेः पूर्वपक्षोत्थानाभावात् सुत्यायां पयोव्रताभावाच्च उपेक्षितम्। १०।४।१,

अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेऽहन् साम भवति, षोडश्युत्तरे' इत्यत्र **वृत्तिकारेण** षोडश्युत्तरे इत्ययमपूर्वविधिः इति पूर्वपक्षं कृत्वा 'षोडश्युत्तरे' इत्यनेन 'उत्तरेऽहन् द्विरात्रस्य' इत्यस्योपसंहारात् द्विरात्रान्तरे षोडशिग्रहणविकल्पस्य बाधः इति सिद्धान्तितम्। भाष्यकारेण तु उपसंहारः इति पूर्वपक्षं कृत्वा स्तावकत्वं इति सिद्धान्तितम्। **१०।५।१३,**

**यत्तु** भाष्यकारेण औपदेशिकीं त्र्यनीकामनुक्त्वैव आतिदेशिकीं द्वादशाहिकीं नवाहःसंबन्धिनीं त्र्यनीकां गावामयनिकपूर्वपक्षासि प्राप्तामुदाहृत्य दण्डकलितवदावृत्त्या पूर्वपक्षं कृत्वा स्वस्थानविवृद्धिसिद्धान्तो लिङ्गदर्शनं च व्याख्यातम्। **तन्न**। द्वादशाहान्तर्गतदशाहप्रवृत्तेरेव सर्वविकृतिषु साधितत्वेन नवाहःसंबन्धित्र्यनीकामात्रप्राप्तेः अयुक्तिसहत्वात्। अतः यथावार्तिकं औपदेशिकीं त्र्यनीकामादायैव अधिकरणं योज्यम्। एतावत्तु वार्तिककारमतेऽपि चिन्तनीयं— यत्र प्रकृतौ न्यूनभागवृत्तिधर्मः, विकृतौ च स भागः अधिकदिनघटितः, अधिकानि च दिनानि न प्राकृततद्भागप्रकृतिकानि यथा अत्रैव औपदेशिकत्र्यनीकाऽभावे कृत्वाचिन्तया, तत्र तद्भागधर्मप्राप्तिः कथमिति। १०।५।२५,

**यत्तु** भाष्यकारेण (मध्वशनस्य) प्रकरणात् द्वादशाहाङ्गत्वमित्युक्तं, **तत्** वैमृधेऽपि तदापत्तेः उपेक्षितम्। **यदपि** तेन मध्वशनस्य यां च यावतीं च मात्रां तृप्तिजननात् तदुत्तरकर्तव्यपदार्थोपकारकत्वप्रतीतेः द्वादशाहाङ्गत्वं इत्युक्तं, **तदपि** तथात्वे तादृशद्वित्रिपदार्थमात्राङ्गत्वापत्तेः उपेक्षितम्। **१०।६।९,**

सूत्राण्यपि अस्मिन्नेवार्थे योजनीयानि। १०।८।१०,

सूत्रभाष्ययोरपि अस्मिन्नेवार्थे (स्वाहाकारवषट्कारयोर्व्यवस्थितविकल्पः इत्यर्थे) **योजना सुधीभिः** ऊहनीया। ११।१।३,

**यत्तु** भाष्यकारेण इदं 'सव्या वा एतर्हि वपा०' इति लिङ्गं अकर्मान्तरत्वे प्रयाजशेषस्य क्रतुपशुवपाऽभिघारणेन रिक्तत्वात् अनभिघृतत्वं युज्यते, कर्मान्तरत्वे तु तदर्थं पुनः प्रयाजकरणात् तेनैव तद्वपाऽभिघारणोपपत्तेः अनभिघृतत्वदर्शनं न युक्तमिति व्याख्यातं, **तत्** कर्मान्तरत्वपक्षेऽपि माध्यंदिनकालीनपशुपुरोडाशसवनीयहविषामिव सवनीयतन्त्रमध्यपातित्वेन प्रसङ्गितया प्रयाजपुनःकरणानापत्तेः उपेक्षितम् । ११।२।११,

भाष्यकारेण तावत् अग्नेः सर्वार्थत्वात् साङ्गप्रधानार्थः अग्नियोगः, अतः अग्नेर्विमोकः सर्वान्ते एव कार्यः इति पूर्वपक्षिते प्रधानान्ते एव विमोकः इति सिद्धान्तितम् । वार्तिककारेण तु भाष्यकारोक्तयुक्त्यैव प्रधानमात्रार्थत्वमग्नियोगस्य पूर्वपक्षीकृत्य साङ्गप्रधानार्थत्वसिद्धान्ते एव सूत्राणि व्याख्यातानि । ११।३।९,

**यत्तु** चोदकप्रयोगविध्योरुभयोः सत्त्वेऽपि प्रयोजनाभावात् ( पशुपुरोडाशे आज्यभागादीनां ) नानुष्ठानं इति **प्राभाकरमतं**, तत् विधिना विहितस्य गुणविशेषविशिष्टस्य प्रयाजादेरननुष्ठाने विहितगुणाभावेन प्रयोजनलाभानुपपत्तेः उपेक्षितम् । **यत्तु** अस्मिन्नधिकरणे मूले प्रयोगविधिमङ्गीकृत्य चोदकलोपेन पूर्वपक्षकरणं, चोदकाङ्गीकारेण प्रयोगविधिमात्रलोपेन च सिद्धान्तकरणं, **तत्** निर्युक्तिकत्वात् प्रयोजनाभावाच्च उपेक्षितम् । १२।१।२,

**यत्तु** अत्र सूत्रकारादिभिः अङ्गीकृत्यैव दीक्षणीयायाः प्रधानमात्रार्थत्वं प्रधानदेवतायां वैश्वदेवग्रहीयायां विश्वशब्दस्य सर्ववाचित्वात् सर्वेषामेव देवानां देवतात्वप्रतीतेः अङ्गदेवतानामपि तत्परिग्रहेण परिग्रहात् प्रसङ्गोपपत्तिः इति समाहितं, **तत्** विश्वदेवशब्दस्य 'आदित्यविश्ववसवः' इति त्रिकाण्डीस्मरणेन गणविशेषे रूढत्वावगतेः दीक्षणीयायाः देवतापरिग्रहार्थत्वपक्षे प्रधानमात्रार्थत्वे प्रमाणाभावाच्च उपेक्षितम् । १२।१।१२,

**यत्तु** भाष्यकारेण पञ्चदशरात्रे अग्निष्टुति प्रथमाहे भूयोऽनुग्रहाय ऐन्द्री कार्या इत्युक्तं, **तत्** सुब्रह्मण्याऽऽह्वानस्य देवताप्रकाशनार्थत्वात् इन्द्रप्रकाशेन च अग्निप्रकाशनरूपकार्यसिद्धेरभावात् भेदेनैव उभयदेवत्यसुब्रह्मण्याकरणावगतेः उपेक्षितम् । १२।२।७,

**वृत्तिकारान्तरैः** भूयस्त्वं न मुख्यत्वस्यापवादकं, किंतु पशुकामेष्ट्यामेव भूयस्त्वेन पूर्वपक्षमभिधाय मुख्यत्वेन सिद्धान्तयित्वा ऐकाधिकरण्येन सूत्रद्वयं व्याख्येयमित्युक्तं, **तत्** लोके प्रथमं अल्पमुख्यावरुद्धस्यापि दुर्गस्य पश्चादागतैरपि बहुभिर्बाधदर्शनात् उपेक्षितम् । १२।२।८,

**यत्तु** भाष्यकारेण सोमान्ते 'संस्थिते यज्ञे प्रस्तरं प्रहरति सस्वरुं' इति पाशुकस्वरोः प्रतिपत्तिदर्शनादपि सवनीयपशुतन्त्रस्य विततत्वं इत्युक्तं, **तत्** स्वरोः पशुत्रयसाधारण्यादेव अन्ते प्रतिपत्तिदर्शनोपपत्तेः नासाधारणं सवनीयतन्त्रविततत्वे लिङ्गं इत्युपेक्षितम् । १२।२।१२,

**यत्तु** सूत्रकारेण एवंविधं ( पशुपुरोडाशतन्त्रित्वेन स्विष्टकृति निर्गुणस्यैवाग्नेः प्राप्तौ स्विष्टकृच्छब्दप्रतिप्रसवार्थत्वेन 'अग्नये स्विष्टकृते समवद्यति' इत्यस्य सार्थक्यं इति यदुक्तं

तत् ) उक्त्वा धात्वर्थ एवात्र विधीयते, स्विष्टकृच्छब्दस्तु अविवक्षितार्थः इति प्रकारान्तरमुक्तं, **तत्** प्रौढिमात्रम् । १२।३।२,

**यत्तु** अत्र भाष्यकारेण सूर्योदयात् पूर्वं अग्निहोत्रहोमाकरणे प्रायश्चित्तद्वयाम्नानमुदाहृतं, **तत्** उदितहोमिनां कालातिक्रमनिमित्तदोषनिर्घातार्थत्वोपपत्तेः इतरथा अनुदितहोमिनां सर्वदा प्रायश्चित्तकरणापत्तेः उपेक्षितम् । १२।३।६.

यदिदं शबराचार्येण वृत्तिकृतां, वार्तिककारेण शबराचार्यस्य भाष्यकारस्य, भाट्टदीपिकया च वार्तिककारस्यापि कियच्चिदन्यथाकरणमुदाहृतं, न तत्र किं चिद्विस्मयावहम् । स्वभाव एव हि निसर्गस्यायम् । आ च मानवानामुत्पत्तेः आ च मानवानामन्तात् प्राचीनैः सार्कं नव्यानां कलहः सततमभूत् भवति भविष्यति च । नव्या हि प्राचीनमवगाह्य तत्र कांश्चित् विद्यमानानविद्यमानानपि वा दोषान् स्वसंमतसूक्ष्मेक्षिकयोपलभन्ते । तांश्च दोषान् परिहरन्तः नवीनं कं चित् सिद्धान्तं नवीनां वा कां चिद्रचनां संस्थापयन्ति पूर्वसिद्धान्तसाधिकां वा युक्तिं परिवर्तयन्ति । अनेनैव न्यायेन नास्तिका आस्तिकान् आस्तिका वा नास्तिकान् दूषयन्ति । नास्तिका अपि परस्परं कलहायन्ते एव, एवमास्तिका अपि । कापिलमतं काणभुजेभ्यो न रोचते, काणभुजमपि अक्षपादीयेभ्यः सर्वांशे न रोचते, एतत् त्रितयमपि मीमांसकेभ्यो न रोचते । मीमांसकेष्वपि प्राचीनान् वृत्तिकारान् भाष्यकारो न सहते, भाष्यकारं वार्तिककारः, वार्तिककारं च नव्यमीमांसकः खण्डदेवः । पुनश्च भवदेवं पार्थसारथिः निरस्यति, पार्थसारथिं च खण्डदेवः, खण्डदेवं च केषु चिदंशेषु अङ्गत्वनिरुक्तिकारो मुरारिमिश्रः । सर्वेष्वेव हि शास्त्रेषु नव्यप्राचीनयोर्नित्य एव कलहः । न चेदं नव्यत्वं प्राचीनत्वं च किंचित्कालावच्छेदेन राजमुद्रामुद्रितं निश्चितम् । ये अद्य नव्याः, ते श्वः प्राचीना भवन्ति । ये परारिसंवत्सरे नव्याः, ते परुत्संवत्सरे प्राचीनाः, ये च परुत् नव्याः, ते ऐषमोऽब्दे प्राचीनाः संपद्यन्ते । कालचक्रं हि यथायथा परिवर्तते तथातथा बुद्धयोऽपि परिवर्तन्ते एव । अत एव नात्र किं चिदाश्चर्यावहम् । आश्चर्यं तु एतावदेव, यत् परिबम्भ्रमदपि सर्वमिदं स्थिरं मन्यामहे इति । इत्यास्तां तावत् । नव्यनव्यमीमांसकैः प्राचीनप्राचीनमीमांसकमतपरिवर्तनमुदाहरतामस्माकमयमेवाभिप्रायो यत् मीमांसाऽपि शास्त्रान्तररीतिं नातिक्रामतीति ।

**याज्ञिकास्तु ।** यज्ञानुष्ठानादौ के चित् पदार्था मीमांसकैः अन्यथा प्रतिपाद्यन्ते याज्ञिकैस्तु अन्यथा । याज्ञिकाः किल स्वस्वीयकल्पसूत्रानुसारेण किं चित् स्वतन्त्रमेव निर्णायकं शास्त्रं निर्मिमते , मीमांसासिद्धान्तांश्च न तथा मन्यन्ते । तत्र कानि चित् स्थलानि भाष्यादौ निर्दिष्टानि । तत्र भाट्टदीपिकाकारेण अनेकत्र याज्ञिकसिद्धान्ताः दूषिताश्च क चित् भूषिताश्च । तेषां संग्रहोऽत्र क्रियते । आदौ भाष्यस्थमेकं स्थलं निर्दिश्य ततो भाट्टदीपिकास्थानि । संकर्षकाण्डीयभाट्टचन्द्रिकास्थान्यपि कानि चित् तत्प्रघट्टके निर्देक्ष्यन्ते ।

तदेतन्न रोचयन्ते **याज्ञिकाः** ऊहं कुर्वन्ति 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो विचर्षणे' इति । **भा.** ९।१।१५।४२-४४.

'इषे त्वा' इत्यादौ छिनद्मि इत्यादिकं पदं प्रयोगकाले याज्ञिकैर्नानुष्ठीयते । केचित्तु अध्याहृतस्यापि उच्चारणमस्त्येव, याज्ञिकानां तु तदननुष्ठानं अनास्थया इत्याहुः । **सोम.** २।१।१६.

याज्ञिकानुष्ठानं चेत् तर्हि तेन अस्तु सः । ( सर्वत्रैव एकपात्रे कर्तृभेदे इव एककर्तरि कारणभेदेऽपि युक्तो भक्षणस्य पृथगनुष्ठानेन समुच्चयः । हारियोजने तु माऽस्तु समुच्चयः इति प्रागुक्तम् ) । **भाट्ट.** ३।५।१०,

अन्तिमस्य चमसभक्षयितुः नानुज्ञाग्रहणं प्रयोजनाभावात्, याज्ञिकास्तु आचरन्ति । ३।५।१२,

याज्ञिकाचारसिद्धः समाख्याभक्षः । ( मीमांसायां यद्यपि समाख्याभक्षो न निर्णीतः संदेहाभावात् तथापि न विरोधः । विस्तरे च ३।५।११ अधिकरणे पूर्वपक्षावसरे उक्त एव ) । ३।५।१६,

याज्ञिकास्तु दिग्वादमेव वदन्ति ( दर्शे पलाशशाखाया आहरणं कर्तव्यं भवति । तत्र 'प्राचीमाहरति' इति विशेषविधिः । तत्र वृक्षस्य प्राग्देशभवां प्राचीं शाखां आहरति इत्यर्थः इति मीमांसा । विहारात् प्राच्यां दिशि यो वृक्षः, तस्य शाखां प्राचीं आहरति इत्यर्थः इति याज्ञिका वदन्ति ) । ४।२।२,

याज्ञिकास्तु चर्वादावपि प्रणीताः कुर्वन्ति । ( पुरोडाशप्रकृतिभूतभर्जितपिष्टसंयवनार्थं प्रणीताः विधीयन्ते । चरुश्रपणार्थमपि प्रणीताः कर्तव्या इति याज्ञिका वदन्ति ) । ४।२।५,

याज्ञिकास्तु यत्र सूर्यावर्तनात् प्राक् प्रतिपत् पञ्चदशी च, तस्मिन्नेव दिने विकृतयः कार्याः, न तु पूर्वदिने पञ्चदश्यां इत्याहुः । **सोम.** ५।४।६ । याज्ञिकैः धूर्तस्वाम्यादिभिः आवर्तनतत्पूर्वसन्ध्योः प्रकृत्यनुष्ठानानन्तरं संधिदिने एव विकृत्यनुष्ठानं इत्याद्युक्तम् । तन्न । ५।४।७,

याज्ञिकानां सांनाय्यस्य सोमात् प्रागपि अनुष्ठानं यत्तु, तत् शाखान्तरे सांनाय्यस्य अग्नीषोमयोः प्रागपि विधानादवगन्तव्यम् । ५।४।८,

याज्ञिकास्तु तां ( मीमांसकमर्यादां ) न मन्यन्ते ( अङ्गुष्ठपर्वन्यूनावर्जनीयातिरिक्तावयवनाशे तु भवत्येव आज्येन यागः । सैव मीमांसकमर्यादा इति प्रागुक्तम् ) । ६।४।१,

याज्ञिकमते तु 'यदि प्रत्तदेवतं ( हविः नश्येत् ) आज्येन शेषं संस्थापयेत्' इत्यापस्तम्बवचनात् अवधेयम् । ( 'यदि अप्रत्तदेवतं हविः व्यापद्येत, अन्यत् हविः तद्दैवत्यं निर्वपेत्' इति आपस्तम्बीयं प्राक्तनं वाक्यम् । शेषं स्विष्टकृतम् ) ।६।४।२,

याज्ञिकास्तु दर्शेष्टौ अर्धनिरुप्ते चन्द्राभ्युदये पदार्थैकदेशस्यापि आर्थिकविधिविहि-तत्वमङ्गीकृत्य अवशिष्टनिर्वापं वैकृतीभ्य एवानुतिष्ठन्ति । ६।५।५,

याज्ञिकाचारात् यत्र वरुणप्रघासेषु स्रुगन्तरोत्पत्तिप्रसक्तिः, तत्रैव हिरण्मयत्व-शमीमयत्वादेः विध्यौचित्येन दक्षिणविहारे एव तन्निवेशात् ऐन्द्राग्नैककपालयोरपि न हिरण्मयत्वाद्यतिदेशः । ७।१।५,

याज्ञिकास्तु पशुबन्धवत् ( मध्यमपर्वणोरग्निप्रणयने ) सौमिकानेव धर्माननु-तिष्ठन्ति । उत्तरवेदिपरिमाणं परं शम्यामात्रं औपदेशिकं कुर्वन्ति । तन्मते 'प्रणयन्ति' इति बहुवचनमपि ब्रह्महोत्रादिसद्भावादुपपद्यते । ७।३।७,

याज्ञिकास्तु असाधारणानामेव ( धर्माणां ) अतिदेशं मन्यन्ते । ( पूर्वग्रन्थस्तु असाधारणधर्माणां साधारणधर्माणां च नवप्रयाजत्वप्रसूनमयत्वादीनां चातिदेशः इत्यादिः चातुर्मास्यविषयको विचारः ) । ७।३।८,

याज्ञिकास्तु आज्येनैव प्रयाजहोमे कृष्णलप्रक्षेपमधिकं कुर्वन्ति । ( सौर्ये शत-कृष्णलचरौ ) । ७।४।१,

राजत्वादेः कर्तृविशेषणत्वात्, तस्य च प्रकृतौ अङ्गत्वात् विकृतौ अतिदेशः । अधिकारी आर्थिकविधिबोध्य एवेति तत्र न शाब्दस्य राजत्वादेरन्वयसंभवः । याज्ञिकास्तु राज-त्वादेः अधिकारिविशेषणत्वमङ्गीकृत्य अनतिदेशं मन्यन्ते । ८।१।४,

याज्ञिकानां अग्न्याधानादिरूपे प्रथमपदार्थे दर्शपूर्णमासारम्भत्वप्रसिद्धिः । ९।१।११,

याज्ञिकानां केषां चित् यवप्रयोगे 'व्रीहीणां मेध' इति पदद्वयरहितमन्त्रप्रयोग इष्ट एव । ९।१।१६,

याज्ञिकानां 'ऋषभं वाजिनं' 'अमावास्या सुभगा' इतिमन्त्रगतपूर्णमासा-मावास्याशब्दयोरेव त्यागवेलायामुद्देशः, न तु पर्वशब्दस्य ( होमयोः पार्वणशब्दबोध्यत्वेऽपि ) । ९।२।१७,

याज्ञिकानां केषां चित् विकृतौ पार्वणहोमाननुष्ठानम् । ९।२।१७,

याज्ञिकसंमतः शासवृद्धौ एव 'प्रशसा बाहू' इत्यत्र ऊहः अनुसंधेयः । ९।४।३(४).

याज्ञिकाः कपालोपधानकाले तेनैव मन्त्रेण स्थाल्या उपधानं कुर्वते । शा. १०।१।१२.

याज्ञिकास्तु आधानाङ्गसंभाराहरणकाले एव पात्राणामुत्पादनात् लाघवेन भाव्यग्निहोत्रहवण्यैव पवमानेष्टिषु निर्वापादिकं कुर्वन्ति । मीमांसाऽनुसारेण तु केन चित् पात्रान्तरेण । **भाट्ट**. १०।२।२६,

याज्ञिकास्तु एवं न कुर्वन्ति, तत्र मूलं चिन्त्यम् । ( पित्र्यादौ यत्र अग्निः कव्यवाहनः स्विष्टकृद्देवता आवापिकस्विष्टकृति, तत्र उत्तमानूयाजेऽपि ' देवो अग्निः कव्यवाहनः स्विष्टकृत् सुद्रविणा मन्द्रः कविः ' इत्यादिः मन्त्रे ऊहः, त्यागे च तद्देवतोल्लेखः इति प्रागुक्तम् । तत् ' एवं ' शब्देन ग्राह्यम् ) । १०।४।२०,

याज्ञिकाचारस्तु एतद्वचनादर्शनमूलकः । ( एतद्वचनं—भाष्यकारलिखितेन ' अग्निं स्विष्टकृतं यजति ' इति वचनेन उत्तमानुयाजे मान्त्रवर्णिकस्य देवस्य देवतात्वाकल्पनात् इति ग्रन्थोक्तं ज्ञेयम् ) । १०।४।२०,

याज्ञिकास्तु वायव्यादिपशौ मनोतायां नैव ऋगन्तरोहमाचरन्ति । वस्तुतस्तु इष्येते एव ऊहबाधौ । १०।४।२२,

( याज्ञिकानां ) धूर्तस्वाम्यादीनां तु वाक्यशेषस्य ( क्लोमानं प्लीहानं पुरीततं इत्यस्य ) उपलक्षणत्वमङ्गीकृत्य अध्यूध्न्या अनस्थित्वेन इडावर्धकत्वात् प्राप्तायां तस्यां होतृनियममात्राङ्गीकरणेन इडाभक्षाबाधकत्वम् । १०।७।४,

याज्ञिकानां यदि तु तथा आचरणं ( प्रतिप्रस्थातृकर्तृकहृदयाद्यवदानभक्षे तस्य भक्षः ) तदा भक्षोत्तरकालीनः प्राकृतः कश्चित् पदार्थः अनुसंधेयः । १०।७।८,

याज्ञिकास्तु तूष्णींहोमेषु अग्निहोत्रधर्मातिदेशं मन्यन्ते । १०।८।५,

याज्ञिकानां दर्शे पूर्णमासे च पृथक् वरणानुष्ठानम् । ११।४।१,

याज्ञिकाश्च एवमेवानुतिष्ठन्ति । प्रथमोपसदि त्र्यहे ( अतीते इत्यध्याहारः ) सुत्यां इति, द्वितीयायां द्व्यहे, तृतीयायां श्वः इति प्रयोक्तव्यम् । ११।४।७,

याज्ञिकास्तु तथा नानुतिष्ठन्ति ( आग्रयणे नवप्रयाजत्वम् ) । **भाट्ट**. १२।२।१५.

भाट्टदीपिकाकारैः याज्ञिकमीमांसकमतभेदो यावानुपदर्शितः स उदाहृतः । अधुना तु अस्माभिरेव आपस्तम्बादिश्रौतसूत्राणि तद्वृत्त्यादिकं चालोड्य याज्ञिकमीमांसकविरोधा दृष्टा निवेश्यन्ते । तत्र च पुनरुक्तिर्यथा न स्यात् तथा प्रायः प्रयतितम् । अत्रत्या विशेषाश्च वर्णक्रमेणैवोदाहृताः । दिक्प्रदर्शनार्थं एव चायं प्रयत्नो, न तु भूयान् इति ज्ञेयम् । वस्तुतस्तु सोऽयं संशोधनस्य पृथगेव विषयः । तत्र सर्वेषां कल्पसूत्राणां परस्परं च मीमांसया च तुलना कर्तव्या भवेत् । तत्तद्भाष्यवृत्त्यादिभिश्च अधिकतया निविष्टा विषया अपि संशोधनीयाः स्युः ।

अवहननादि । ' यजमानस्य पत्नी, सा अभिद्रुत्यावहन्ति । यो वा कश्चिदविद्यमानायाम् । ' अविद्यमानायां अनालम्भुकत्वादिना निमित्तेन असंनिहितायां अभावे च तस्याः

इत्यर्थः अविशेषात् । वक्ष्यति च ' पत्न्यभावे तेजादि लुप्यते ' इति । कर्मचोदना अपि यजमानमेवाधिकुर्वन्ति, न पत्नीं ' ब्राह्मणोऽग्निमादधीत ' ' यजेत स्वर्गकामः ' इत्यादयः । बह्वृचब्राह्मणे चोक्तं ' तस्मादपत्नीकोऽपि अग्निहोत्रमाहरेत् ' इति । किंच उद्घाटितमेतत् कल्पान्तरकारैः पत्न्यभावेऽपि अग्निभावं वदद्भिः । **भरद्वाज**स्तावत् ' अथ यद्यपत्नीकः स्यात्, उभाभ्यां तस्य संस्कारः औपासनाग्निहोत्राभ्याम् ' इति । तथा तलवकारकल्पे **जैमिनिः** ' आहिताग्नेश्चेत् पूर्वं जाया म्रियेत, एनां निर्मन्थ्येन दहेत् संतपनेन वा ' इति । तथा ' आहार्येण अनाहिताग्निं पत्नीं च ' **इत्याश्वलायनः** । किंच आचारोऽप्यत्र दृष्टः शिष्टतमानां पूर्वेषां यथा कण्वविभाण्डकभीष्मादीनां, यथा च भगवतो दाशरथेः । किंच सहाधिकारेऽपि पत्न्याः यजमानसाम्यं तावन्नास्त्येव यथोक्तं **मीमांसकैः** ' तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात् ' इति ( ६।१।६।२४ ) तस्मात् सिद्धं अभावेऽपि पत्न्याः, न कर्मणां निवृत्तिरिति । **रुद्रदत्तः** १।६ । ( एतेन मीमांसावार्तिककारैः विभाण्डकरामचन्द्रभीष्मादीनां यज्ञकरणे १।१।३, अधिकरणे सदाचारप्रामाण्यविचारे कृता चर्चा व्याख्याता । )

आग्रयणेष्टौ उपदिष्टवासोवत्सदक्षिणया प्राकृतान्वाहार्यदक्षिणायाः बाधः मीमांसायां ( १०।३।७ ) प्रतिपादितः । **बौधायनेन** तु श्यामाकाग्रयणे ' अन्वाहार्यमासाद्य वासो ददाति ' इति, व्रीह्याग्रयणे च ' अन्वाहार्यमासाद्य प्रथमजं वत्सं ददाति ' इत्युक्त्वा यवाग्रयणे ' समानं कर्म यथा व्रीह्याग्रयणस्य ' इति अतिदेशः कृतः । तेन वाससो वत्सस्य च यथायथं दक्षिणात्वेन सत्त्वेऽपि अन्वाहार्यदक्षिणायाः समुच्चय उक्तः । इति मीमांसातो भिन्नता । ( बौश्रौ. ३।१२ ) । ' दक्षिणासु समुच्चीयते वासः, श्मामाके ' इति लिङ्गात् । **रुद्रदत्तः** ६।८.

आघारे धारायां चादिसंयोगः इति न प्रस्मर्तव्यम् । **रुद्रदत्तः** २।४ । **मीमांसायां** तु आघारे १२।३।१२ अधिकरणे, धारायां च १२।३।११ अधिकरणे कर्मादिः मन्त्रादिश्च संनिपात्यः इति पूर्वपक्षः, कर्मादिर्मन्त्रान्तश्च संनिपात्यः इति सिद्धान्तः कृतः ।

आधानस्य सोमपूर्वत्वपक्षे ' यः सोमेन यक्ष्यमाणः अग्नीनादधीत, नर्तुं पृच्छेत् न नक्षत्रम् ' इति वचनात् सोमस्य कालबाधः इति ' स्वकाले स्यादविप्रतिषेधात् ' ( ५।४।५। १९–६ ) इत्यधिकरणे मीमांसकैः प्रतिपादितम् । **रुद्रदत्तस्तु** आह– सोमकालस्य अनेन बाधं मन्यन्ते तदयुक्तं, प्रकरणात् आधानकालस्यैव अनेन बाधावगमात्, नक्षत्रग्रहणाच्च । नहि सोमस्य किं चित् नक्षत्रमुपदिष्टं येन तत् निषिध्येत । तस्मात् अयुक्तः सोमकालबाधः । ५।१.

आधानकालः ' वर्षासु रथकारस्य ' । ' ये त्रयाणां वर्णानां एतत् कर्म कुर्युः ' तेषामेष कालः । त्रिषु वर्णेषु अन्तर्भूता एव स्ववृत्तिकर्शिताः ये रथं कुर्वन्ति तेषामयमाधानकालः । **रुद्रदत्तः**. ५।१ । **मीमांसायां** तु रथकाराधिकरणे ( ६।१।१२ । ४४–५० ) रथकारो न त्रैवर्णिकः किंतु जातिविशेषोऽयम् । ' माहिष्येण करण्यां तु रथकारः प्रजायते ' इति याज्ञवल्क्यः ।

वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः, शूद्रायां वैश्यादुत्पन्ना करणी । सौधन्वनापरपर्यायः ऋभुशब्द-वाच्यः रथकारः । तस्येदमाधानं विहितं इति प्रतिपादितम् ।

इष्टौ 'स्योनं ते सदनं करोमि' इत्यादिः अर्धर्चद्वयात्मको मन्त्रः पात्र्यां आज्यो-पस्तरणाङ्गतया बौधायनेनोक्तः ( १।१४ )। आपस्तम्बसत्याषाढौ तु ( सत्या. १।२७।२१ ) पूर्वार्धमात्रेण उपस्तरणापरपर्यायं पुरोडाशस्य सदनकरणं, उत्तरार्धमात्रेण च पुरोडाशस्य तत्र आसादनमाहतुः । **मीमांसायां** च बलाबलाधिकरणान्तर्गते लिङ्गवाक्याधिकरणे वाक्यात् लिङ्गस्य बलीयस्त्वेन आपस्तम्बवदेव सिद्धान्तितं न बौधायनवत् ।

उपांशुयाजः । 'आज्यहविरुपांशुयाजः पौर्णमास्यामेव भवति वैष्णवोऽग्नीषोमीयः प्राजापत्यो वा' । बौधायनादिभिः अमावास्यायामपि उपांशुयाजविधानात् तन्निरासार्थः पौर्ण-मास्यामेव इत्येवकारः । **रुद्रदत्तः** २।६ । इदं सर्वं 'धर्माद्वा स्यात् प्रजापतिः' इत्यधिकरणे ( १०।८।१७।५१–६१ ) प्रतिपादितं **मीमांसायाम्** । कौषीतकिब्राह्मणे तु अमावास्यायामपि उपांशुयाज उक्तः । आपस्तम्बकल्पे तु स न कर्तव्य इत्यन्यदेतत् ।

ऐक्षव्यौ विधृती आतिथ्यायाम् । ऐक्षवी इक्षुपर्णे, काशमूले इति के चित् इति **रुद्रदत्तः** ।१०।१० । 'इक्षुशलाके विधृती' इति **सत्याषाढः** । ७।३।२५ । इक्षुशलाके इक्षुत्वगात्मिके, इक्षुपत्रात्मिके इति के चित् इति **ज्योत्स्ना** । मीमांसावार्तिके तु 'ऐक्षव्यौ विधृती ये च ते इक्ष्ववयवात्मिके । लोके सिद्धे, तथा वेदे काशानामेव मूलके ॥' इति काशमूलत्वमेव सिद्धा-न्तितम् । अत्र पुनर्ज्योत्स्ना ( सत्या. ७।३।२५ ) वाक्यशेषस्य अत्राभावात् काशमूलपरत्वे प्रमाणा-भावेन लौकिक एवार्थो ग्राह्यः इति सत्याषाढमताशयः । आश्वालस्य काशपरत्वे वाक्यशेषो यथा स्पष्टोऽस्ति तथा ऐक्षवीशब्दस्य काशमूलपरत्वे वाक्यशेषो ( यद्यपि ) नास्ति, तथापि अन्वेषणीयः इति मीमांसकमताशयः । इति ।

चतुर्होतृमन्त्राः । 'तेषां ये विहारसंयुक्ताः आहिताग्नेस्तान् प्रतीयात्, उभयो-रितरान्' । तेषां चतुर्होतॄणां मध्ये ये विहारसंयुक्ता भवन्ति यथा 'दर्शपूर्णमासावालभमानः चतुर्होतारं' इत्यादयः, ते आहिताग्नेरेव भवन्ति । ये तु विहारेण असंयुक्ताः यथा 'यः कामयेत प्रजायेयेति' इत्यादिषु दशहोत्रादयः, ते आहिताग्नेरनाहिताग्नेश्च भवन्ति । तत्र आहिताग्नेः आहवनीये औपासने वा होमः । अनाहिताग्नेः औपासने । **रुद्रदत्तः** १४।५ । **मीमांसायां** तु ( ६।८।१।१–१० ) चतुर्होतृहोमेषु अनाहिताग्नेरेवाधिकारः इति सिद्धान्तितम् ।

चन्द्राभ्युदितेष्टिः । नायं विधिरसंनयतः, सांनाय्यसंयोगात् । आह **चाश्वलायनः** सांनाय्ये पुरस्ताच्चन्द्रमस्यभ्युदिते इति । **भरद्वाज**स्त्वाह सोऽयं नासंनयतो विद्यते इत्येकं, विद्यते इत्यपरं इति । **रुद्रदत्तः** ९।१ । **मीमांसायां** तु ( ६।५।१।२१–२४ ) 'सांनाय्यसंयोगान्नासंनयतः स्यात्' इति पूर्वपक्षयित्वा 'औषधसंयोगाद्वोभयोः' इति संनयद-

संनयतोरुभयोः इति सिद्धान्तितम्। चन्द्राभ्युदितेष्टौ कृतायां "पुनरिज्यायास्तु विकल्पः, तदुक्तं 'एकामेव यजेत, द्वे एव यजेत' इति।" इत्युक्त्वा पुनराह **रुद्रदत्तः** "निरुप्तविषये त्रयोऽमी शाखान्तरकल्पा उक्ता भवन्ति यथा प्रकृतिमेव अविकृतां कृत्वा तयैव पुनर्यजेत, अभ्युदितेष्टिं वा कृत्वा प्रकृत्या पुनर्यजेत, औपवसथ्यमात्रं वा वर्धयित्वा पश्चात् यजेत इति। तदेतत् व्यक्तं बौधायनीये (द्वैधे)" इत्यादि।

त्र्यम्बकाणामभिघारणं 'तानभिघार्यानभिघार्य वा' इति विकल्पेनोक्तं **आपस्तम्बीये**। ८।५। मीमांसा**भाष्ये** तु अभिघारणानभिघारणमीमांसावाक्यं अर्थवाद इत्युक्तम्। **शास्त्रदीपिकायां** च 'तस्मान्न विकल्पो नियतमेवाभिघारणं' इति सिद्धान्तितम्।

दाक्षायणयज्ञः। 'दक्षस्य इमे दाक्षाः, तेषामयनं दाक्षायणम्। कः पुनर्दक्षः? य उत्साही।' इति मीमांसा**भाष्यकारः**। (२।३।४।१०)। **रुद्रदत्तस्तु** दाक्षायणेन दृष्टो यज्ञो दाक्षायणयज्ञः, 'यज्ञो दाक्षायणस्य' इति मानववचनात्, सार्वसेनियज्ञः वसिष्ठयज्ञः शौनकयज्ञः इत्यादिभिर्वैरूप्यायोगाच्च इत्याह। **३।५.**

निषादस्थपतिः। 'एतयैवावृता निषादस्थपतिं याजयेत्' (निषादो मृगघातकवृत्तिः, स्थपतिर्महत्तरः, निषादश्चासौ स्थपतिश्च)। सा हि तस्येष्टिः (तदुद्देशेन विहिता। सैव च यावदर्थं अस्याग्निविद्ये अपि आक्षेप्स्यति। लौकिकाग्नौ इष्टिः इत्येके। तत्र 'हविष्कृदाधावेति शूद्रस्य' इत्यादि न प्रस्मर्तव्यम्)। **रुद्रदत्तः** ९।४.

पत्न्याः यावदुक्तमेव कर्म सर्वत्र इति न्यायविदः। ('तस्या यावदुक्तमाशीर्ब्रह्मचर्यमतुल्यत्वात्' ६।१।६।२४ इति मीमांसाऽधिकरणे।) **भरद्वाजेन** तु उक्तं 'आत्मसंस्कारा वपनवर्जं पत्न्याः' इति। **रुद्रदत्तः** ४।१.

पश्वेकादशिन्यां 'प्रतिपशु बर्हींषि वपाश्रपण्यः कुम्भ्यः हृदयशूलाश्च' इति (आपस्तम्ब—) सूत्रम्। तत्र **रुद्रदत्त** आह— ननु 'एकजातीये पशुगणे कुम्भ्यादीनां तन्त्रं, नानाजातीये भेदश्च परिभाषायामुक्तः, न्यायविद्भिश्चोक्तं 'पशुगणे कुम्भीशूलवपाश्रपणीनां प्रभुत्वात् तन्त्रभावः स्यात्' इति (११।४।८।३३ जै.)। तथा 'जात्यन्तरेषु तु भेदः स्यात् पक्तिवैषम्यात्' (जै. १०।४।१०।४०) इति। तत् कोऽस्य विधेर्विषय इति वक्तव्यम्। उच्यते। यत्र एकजातीया अपि पशवः नानादेवता भवन्ति यथा अन्ये सौम्यादयः ऐकादशिनाः, तत्रायं विधिः। यत्र तु एकजातीयाः समानदेवताश्च भवन्ति यथा सप्तदश प्राजापत्याः, तत्र तन्त्रत्वं इति विवेकः। इति। (१४।२) एतेन आपस्तम्बमीमांसयोः विषयभेदेन विरोधः परिहृतः।

पुनराधाने पौनराधेयिकीभिर्दक्षिणाभिः अग्न्याधेयिकीनां दक्षिणानां बाधः इति मीमांसायां 'अग्न्याधेयस्य नैमित्तिके गुणविकारे' इत्यधिकरणे (१०।३।५।३०—३३)

प्रतिपादितम् । आपस्तम्बीये तु ' उभयीर्दक्षिणा ददाति अग्न्याधेयिकीः पौनराधेयिकीश्च ' इति विहितम् । **रुद्रदत्तः** ५।८.

प्रस्तरप्रहरणम् । ' अनूच्यमाने सूक्तवाके मरुतां पृषतयः स्थ इति सह शाखया प्रस्तरं आहवनीये प्रहरति ' । सूक्तवाको नाम इष्टदेवतासंकीर्तनार्थः ' इदं द्यावापृथिवी ' इत्यनुवाकः, तदनुवचनकाले प्रस्तरं प्रहरति । ' न स्वाहा करोति ' मरुतां पृषतयः स्थ इति मन्त्रे स्वाहाकारं न करोति । ननु अजुहोतित्वादेव अप्राप्ते स्वाहाकारे किं प्रतिषेधेन ? सत्यं न प्राप्तः, तथापि परमतेन आशङ्कितः प्रतिषिध्यते । एतद्धि मतं जैमिनीयानां— अस्ति यागविधिः ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति । तत्र याज्यास्थानीयः सूक्तवाकः, प्रस्तरो द्रव्यं, मान्त्रवर्णिक्यो देवताः, प्रहरतिश्च यजत्यर्थः इति । प्रस्तरप्रतिपत्तेस्तु कालविधिः इति सूत्रकृतः ( आपस्तम्बस्य ) अभिप्रायः । अत एवोक्तं ' अनूच्यमाने सूक्तवाके ' इति । **रुद्रदत्तः** ३।२. **मीमांसायां** सूक्तवाकन्याये ( ३।२।५।११–१५ ) ' सूक्तवाके च कालविधिः ' इत्यधिकरणे इदं मतमुक्तम् । आपस्तम्बमते च ' अनूच्यमाने शंयुवाके आहवनीये परिधीन् प्रहरति ' इत्यपि समानमुदाहरणम् । अत एवोक्तं रुद्रदत्तेन ' अनूच्यमाने ' इति पूर्ववत् । पूर्ववत् इति ' अनूच्यमाने सूक्तवाके ' इत्यत्रेवेत्यर्थः ।

प्रवरप्रवरणे ' त्रीन् यथर्षि मन्त्रकृतो वृणीते । अपिवा एकं द्वौ त्रीन् पञ्च ' अपिवा यथासंभवं मन्त्रकृतो वृणीते, एकं एकार्षेयस्य, त्रीन् त्र्यार्षेयस्य, पञ्च पञ्चार्षेयस्येति । तथा **चाश्वलायनः** ' यजमानस्यार्षेयान् प्रवृणीते यावन्तः स्युः ' इति ( १।३।१ ) । अन्ये तु पञ्चार्षेयाणामपि त्रयाणामेव वरणं , एकार्षेयद्व्यार्षेययोस्तु कर्माणि अनधिकार एव , ' एकं वृणीते द्वौ वृणीते इति तु त्रित्वविधेरेव अवयुत्यानुवादः इति मन्यन्ते । तथा च ' अत्र्यार्षेयस्य हानं स्यात् ' ( ६।१।११।४३ ) इति मीमांसकाः । ( तत्तु न युक्तं इत्यभिप्रायः ) । **रुद्रदत्तः** २।५.

प्रस्तरप्रहरणम् । सूक्ता ब्रूहि इति प्रैषमुक्त्वा ' तं ( प्रस्तरं ) उपरीव प्रहरति ' इति **बौधायनेनो**क्तम् ( १।१९ ) । तेन सूक्तवाकानुवचनकाले प्रस्तरप्रहरणं इति सिध्यति, न तु तयोरङ्गाङ्गिभावे तत्र किं चित् प्रमाणम् । आपस्तम्बीयरामकौशिककृतभाष्यटीकायां तु प्रस्तर आहुतिः सूक्तवाको याज्या इति श्रुतिरुदाहृता । शाखाप्रहरणस्य तु न सूक्तवाकः अङ्गं इति च प्रतिपादितम् । प्रस्तरशाखयोः प्रहरणं तु सहैवोक्तम् । **रुद्रदत्तवृत्तौ** तु एतद्धि मतं **जैमिनीयानां** "अस्ति यागविधिः ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति । तत्र याज्यास्थानीयः सूक्तवाकः, प्रस्तरो द्रव्यं , मान्त्रवर्णिक्यो देवताः, प्रहरतिश्च यजत्यर्थः" इति । प्रस्तरप्रतिपत्तेस्तु कालविधिः इति सूत्रकृतः अभिप्रायः । अत एवोक्तं ' अनूच्यमाने सूक्तवाके ' इति । ( ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति कालविधिः इति आपस्तम्बस्याभिप्रायः ) इत्युक्तम् । अत्र **सत्याषाढः—** ' सूक्ता ब्रूहि इति संप्रेष्यति, सूक्तवाकं होता प्रतिपद्यते ( २।१०।२० ) । अध्वर्युः प्रस्तरं

शाखां चानुप्रहरति ' ( २१ ) इति । अत्र **वैजयन्ती** – " यद्यपि जैमिनिमतमाश्रित्य भाष्यकृता उक्तं ' स्वाहाकारान्तो मन्त्रः ' इति तदपि चिन्त्यम् । तस्मात् सूक्तवाकः इष्टदेवता-स्मारकः इष्टानां आज्यभागादिदेवतानां स्विष्टकृदन्तानां संस्कारजनको दृष्टार्थो यागार्थत्वेन अदृष्टार्थः इति सिद्धम् " इति । एवं च सूक्तवाको न प्रस्तरप्रहरणाङ्गं, ' सूक्तवाकेन प्रस्तरं प्रहरति ' इति तु कालार्थः संयोगः इति बौधायनापस्तम्बसत्याषाढानां याज्ञिकानां मतम् । **जैमिनिस्तु** ' सूक्तवाके च कालविधिः परार्थत्वात् ' ३।२।५।११ । सूक्तवाकेन प्रस्तरं प्रहरति इति कालविधिः इति पूर्वपक्षमुपन्यस्य ' उपदेशो वा, याज्याशब्दो हि नाकस्मात् ' । १२ ॥ उपदेशो वा प्रस्तरप्रहरणं प्रति मन्त्रस्य स्यात् । एवं च कृत्वा याज्याशब्दः उपपन्नो भवति ' सूक्तवाक एव याज्या, प्रस्तर आहुतिः ' इति । प्रहरतिश्च यजिः । ' प्रतिपत्तिरिति चेत् ' ।१४ ॥ ' स्विष्टकृद्वदुभयसंस्कारः स्यात् ' ।१५ ॥ स्विष्टकृत् यथा प्रतिपत्तिश्च यागश्च, एवं प्रति-पाद्यैव हि प्रस्तरो यागश्च निर्वर्त्यते इति न दोषः । तस्मात् सूक्तवाकः प्रहरतिमन्त्रः । इति सिद्धान्तमाह । **अत्र कुतूहलं**– संकर्षकाण्डे ( २।४।२ ) ' सूक्तवाको याज्या, प्रस्तर आहुतिरिध्मः प्रथम आहुतीनां हूयते इत्येतेन व्याख्यातम् ' इति सूत्रेण प्रस्तरप्रहरणं इध्माधानं च होम-रूपं, ' सूक्तवाको याज्या, प्रस्तर आहुतिः ' इति ' इध्मः प्रथम आहुतीनां हूयते ' इति च वाक्य-शेषात् होमत्वावगमात् मन्त्रवर्णतो विशिष्य देवतालाभाच्च इति पूर्वपक्षयित्वा, ' प्रशंसा वा संस्कारः प्रस्तरस्य संनिधानात् समिन्धनार्थ इध्मः ' इति सूत्रेण आहुतित्वेन प्रशंसैषा, अतः प्रहरणं प्रस्तरस्य प्रतिपत्तिः स्रुग्धारणोपयुक्तस्य ' प्रस्तरं ' इति द्वितीयान्तेन उपस्थितत्वात्, इध्माधानं च अग्निवृद्ध्यर्थत्वात् दृष्टार्थ इति सिद्धान्तितम् । ' उपदेशो वा याज्याशब्दो हि नाक-स्मात् ' इति सूत्रं तु कृत्वाचिन्ता इत्युक्तं संकर्षभाष्ये देवस्वामिभिः । युक्तं चैतत्, ' अनूच्यमाने सूक्तवाके प्रस्तरं प्रहरति ' इति ' आशास्तेऽयं यजमान इत्युच्यमाने प्रहृतं प्रस्तरमवसृजति ' इति वचनात् । **इति** । तेन सूक्तवाको न प्रस्तरप्रहरणाङ्गमिति ज्ञायते ।

प्रासङ्गिकं च नोत्कर्षेदसंयोगात् । ५।१। १९।२८ ॥ इति मीमांसाऽधिकरणे 'आग्नि-मारुतादूर्ध्वमनुयाजैश्चरन्ति ' इति वचनात् सवनीयपशोरनुयाजानां आग्निमारुतशस्त्रोत्तरमुत्कर्षो भवति । तथापि पशुपुरोडाशार्थयोः दाक्षिणाग्निकयोः पिष्टलेपफलीकरणहोमयोर्नोत्कर्षः इति सिद्धान्तितम् । अत्र **आपस्तम्बः** ' नहि एतेषां प्रासङ्गिकं वैशेषिकमुत्कर्षति ' । एतेषां पुरोडा-शानां प्रसङ्गोपजीव्यं पशुप्रयुक्तमनूयाजादि उत्कृष्यमाणं, वैशेषिकं वाजिनचर्यादि नोत्कर्षति । ( वाजिनचर्या– अन्तर्वेदि यजमानस्य वेदाभिमर्शनं–पिष्टलेपफलीकरणहोमौ– पत्न्या वेदप्रासनं– प्रणीतासु मार्जनं– उपवेषोदसनं– कपालविमोचनं इति ) । ' उत्कर्षेदिति परम् ' अस्तु वा उत्कर्षः । तथाहि, पशोः पुरोडाशानां च दर्शपूर्णमासाभ्यामेव तावत् अवगच्छन्ति धर्मान् । न तु पश्वपेक्षा पुरोडाशानाम् । तत्र तु ये द्वयसाधारणा धर्माः, ते विभुत्वात् तन्त्रेणैव क्रियन्ते ।

वैशेषिकास्तु पृथक्त्वेन, तथा च सति तन्त्राभावित्वात् अनूयाजानां उत्कर्षवचनाच्च तेषामुत्कर्षेण भवितव्यम् । उत्तरेषामपि कर्मणां उत्कर्ष एवावतिष्ठते, तदुत्तरकालं एषां प्रकृतिसिद्धमङ्गत्वं मा बाधीति । तस्मात् युक्तमुत्कर्षवचनमिति । **रुद्रदत्तः** १२।७ । तथा च आपस्तम्बोक्तः उत्कर्षपक्षः **मीमांसा**विरुद्धः ।

ब्रह्मचार्यवकीर्णी । " यो ब्रह्मचारी स्त्रियमुपेयात् स गर्दभं पशुमालभेत ' । आहिताग्नेः ब्रह्मचर्यकाले स्त्रियमुपेयुषोऽयं विधिः, आहिताग्न्यधिकारात् । अथवा प्रसिद्धब्रह्मचारिण एव ग्रहणं रूढेर्बलीयस्त्वात् । तदुक्तं **भरद्वाजेन** यो ब्रह्मचारी स्त्रियमुपेयादिति, कस्यायं वादः ? आहिताग्नेरित्येकं, अनाहिताग्नेरित्यपरम् । इति " । **रुद्रदत्तः** ९।४.

यदीष्टया इत्यादिविधिना पर्वणि सुत्यानियमात् प्रधानत्वाच्च तदनुरोधेन एकादश्यादौ दीक्षा भवति । कल्पान्तरकारैस्तु पर्वणि दीक्षा इत्यपि श्रुतेः मुख्यजघन्यन्यायेन पर्वणि दीक्षामिष्ट्वा तदनुरोधेन अपर्वणि सुत्याऽपि अनुज्ञायते । **सत्याषाढ**स्तावत् ' यदि त्वेका दीक्षा तिस्रश्चतस्रोऽपरिमिता वा , तत्रापर्वणि सुत्यमहः दीक्षा वा ' इति ( ७।१।१० ) । **भरद्वाज**श्चाह ' कथमेकापरेषु दीक्षाकालेषु ? तत्र पर्वणि दीक्षा सुत्या वा , अपर्वणि वा दीक्षां पर्वण्येव सुत्यां संपादयेत् ' इति, तथा ' अमावास्यायां दीक्षते नामावास्यायां सुत्यमहर्भवति ' इति च । **रुद्रदत्तः** । **कौषीतकिः**— ' अमावास्यायां पौर्णमास्यां वा सुत्यमहः दीक्षा वा, शुक्लपक्षे एव वा ' इति । **ऐतरेयके**— ' आमावास्येन वा हविषेष्ट्वा पौर्णमासेन वा तस्मिन्नेव हविषि तस्मिन् बर्हिषि दीक्षेत एषो ( एषा उ ) एका दीक्षा ' इति ( १।१।१२ ) **वैजयन्ती** ७।१।१० । **मीमांसायां** तु ( १२।२।९।२५ ) पर्वणि सुत्या कर्तव्या अपर्वणि दीक्षा इति सिद्धान्तः कृतः । तथा च विरोधः ।

यस्योभयं हविः । 'अत्र ब्राह्मणे कल्पान्तरेषु च अन्यतरदोहार्तौ उभयार्तौ च इज्या ( पञ्चशरावः ) उक्ता । सूत्रकारस्तु उभयार्तौ एव वक्ष्यति , तेन अन्यतरार्तौ नेष्यते । **रुद्रदत्तः** ९।१ । **मीमांसायां** तु ( ६।४।६।२२ ) नोभयविशिष्टा आर्तिः निमित्तं, एकार्तावपि पञ्चशरावः इति सिद्धान्तितम् ।

वासिष्ठो ब्रह्मा ज्योतिष्टोमे । वासिष्ठो वसिष्ठगोत्रजः । 'यो वा कश्चित् स्तोमभागान् विद्यात् ' एवं च ' रश्मिरसि क्षयाय त्वा ' इत्यादीनि यजूंषि सार्थं सविनियोगं च वेद स ब्रह्मा स्यादित्यर्थः । **रुद्रदत्तः** । वासिष्ठो ब्रह्मा दर्शपूर्णमासयोः । ३।६ । **मीमांसायां** ( ६।६।४।२४ ) तु वासिष्ठो नाम स्तोमभागाख्यमन्त्रविदेव न तु वसिष्ठगोत्रजः इति सिद्धान्तितम् । परंतु मीमांसासिद्धान्तः सत्रविषयकः, याज्ञिकोक्तिस्तु दर्शपूर्णमासज्योतिष्टोमविषया इति विषयभेदात् न महान् विरोधः ।

सोमे 'दर्शपूर्णमासप्रकृतीनां अग्न्यन्वाधानं, व्रतोपायनं, आरण्याशनं, जागरणं, अन्वाहार्यस्य दानं, पत्न्याः संनहनं विमोचनं इति न विद्यन्ते' सोमाङ्गैरेव कैश्चित् सिद्धार्थत्वात्। अङ्गान्तरमपि यत् प्रसङ्गादुपजीव्यं, तदपि निवर्तते यथा विद्युदसि इत्यपामुपस्पर्शनं, ब्रह्मवरणं इत्यादि। अग्न्यन्वाधानं तु दीक्षणीयायां क्रियेत पत्न्याश्च संनहनं अनन्यथासिद्धत्वात्। सत्याषाढभरद्वाजौ तु अवभृथोत्तरकालासु उदवसानीयादिषु व्रतोपायनं प्रतिप्रस्नाते। नायमाचार्याभिप्रायः (आपस्तम्बस्येत्यर्थः) पत्नीसंनहनं तु अवभृथोत्तरकालासु अर्थसिद्धं, अवभृथे योक्त्रस्य त्यक्तत्वात्। **रुद्रदत्तः.**

'हविष्कृदेहीति ब्राह्मणस्य, हविष्कृदागहि इति राजन्यस्य, हविष्कृदाद्रव इति वैश्यस्य, हविष्कृदाधाव इति शूद्रस्य'। शूद्रस्येति निषादस्थपत्यर्थम्। **रुद्रदत्तः** १।६.

### अथ संकर्षकाण्डीयाध्यायादिविवरणम् —

संकर्षकाण्डे अध्यायाश्चत्वारः, प्रत्यध्यायं चरणाश्चत्वार इति संकलिताश्चरणाः षोडश। सर्वाण्यधिकरणानि च मिलित्वा ३४२.

| | | | |
|---|---|---|---|
| १ | १ | १५ | |
| | २ | १७ | |
| | ३ | २४ | |
| | ४ | २५ | यूपपादः |
| | | ८१ | |

| | | | |
|---|---|---|---|
| २ | १ | ४१ | इष्टकापादः |
| | २ | १८ | अवदानपादः |
| | ३ | १५ | प्रैषपादः |
| | ४ | २९ | होमपादः |
| | | १०३ | |

| | | | |
|---|---|---|---|
| ३ | १ | २५ | कालपादः |
| | २ | ३६ | अग्निपादः |
| | ३ | २० | ग्रहपादः |
| | ४ | १४ | आर्षेयपादः वरणपादः वा |
| | | ९५ | |

| | | | |
|---|---|---|---|
| ४ | १ | १३ | सामिधेनीपादः |
| | २ | १९ | निगदपादः |
| | ३ | २१ | वषट्कारपादः |
| | ४ | १० | |
| | | ६३ | |

### संकर्षकाण्डस्य शाबरभाष्यादिकृता उल्लेखाः —

संकर्षे स्विष्टकृद्विकारश्च वनस्पतिः इति वक्ष्यति (२।४।२०)। **भा.** १०।४। १६।३२.

संकर्षे 'आ नः प्राण एतु परावतश्चान्तरिक्षात् दिवस्परि आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा इति हिरण्यमभि व्यानिति' इत्यन्तप्रतीकेन विनियोगस्य वक्ष्यमाणत्वात्। **सु. पृ.** ६८६.

संकर्षे 'अहरहर्वा चोदितत्वात्' इति वक्ष्यमाणन्यायेन कौण्डपायिनां होमः प्रत्यहं सकृत् कार्यः। सिद्धान्ते तु कर्मैक्यात् सायं प्रातः (च) प्राकृतः प्रकृतिवदभ्यसितव्यः। **सु. पृ.** ७८८.

संकर्षे द्वितीयेऽध्याये '**मध्यमायामुपसद्यग्निश्चीयते प्रकृत्युपकृतत्वात्**' ( २। १।२६ ) इत्यधिकरणे किं चितौ औत्तरवेदिका धर्माः कार्या न वा इति संदिह्य, अग्न्युत्तरवेद्योः भिन्नकार्यत्वावगमेन अग्नेः उत्तरवेदिकार्यापत्त्यभावावगतेः औत्तरवेदिकधर्मानतिदेशं पूर्वपक्षयित्वा, 'क्रतुं चित्वोत्तरवेद्यामग्निश्चीयते' इतिवचनालोचनया समुच्चयावगमेऽपि चयननिष्पादितस्थलस्य 'अग्निं चिनुते' इति द्वितीयोक्ताग्निसंस्कारार्थत्वे अस्य योग्यतया अग्निधारणात्मकसंस्कारार्थत्वावगमेन 'उत्तरवेद्यामग्निं निदधाति' इति अग्निधारणाख्योत्तरवेदिकार्यापत्त्यवगमात् कार्यैक्येऽपि च 'वेद्यां हवींष्यासादयति' 'बर्हिषि हवींष्यासादयति' इति वेदिबर्हिषोरिव स्थलोत्तरवेद्योरपि पाक्षिकप्राप्त्यभावेन नियमविध्यभावात् अन्योन्यनैरपेक्ष्यानवगतेः समुच्चयाविरोधात् उत्तरवेदिकार्यापत्त्या स्थलाख्यस्याग्नेः तद्धर्मातिदेशं सिद्धान्तयितुं 'उत्तरवेद्या समुच्चीयमानेऽपि चयने उत्तरवेदिकार्यापन्ने उत्तरवेदिधर्मा भवेयुः' इति वदता तत्रत्यभाष्यकृता औत्तरवेदिकधर्मग्राहित्वलक्षणस्य तद्विकारत्वस्य अतद्विकारत्वपूर्वपक्षनिरासपूर्वकं उपपादयिष्यते। सिद्धवच्च समुच्चयोक्त्या अबाधरूपतद्विकारत्वनिरासेन बाधरूपस्य अतद्विकारत्वं तत्र वक्ष्यते। **सु.** पृ. ९४९.

दार्शपौर्णमासिकस्यापि अनृतनिषेधस्य तैत्तिरीयशाखायामेव 'देवानभ्यारोहति य एषां यज्ञमभ्यारोहति' इति दर्शपूर्णमासयाजिनं निर्दिश्य 'तस्यैतद् व्रतं' इत्युपक्रमाम्नानात् पर्युदासत्वापत्तेः संयोगान्तरत्वायोगमाशङ्क्य तस्य **संकर्षे** ( १।३।८ ) दाक्षायणयाजिविषयताया वक्ष्यमाणत्वात् नेह कश्चित् पर्युदासहेतुरस्ति। **सु.** पृ. १३९३.

संकर्षे ( १।१।१५ ) शामित्रस्य आद्यपूर्वपक्षे प्रकृतानां ऋत्विक्चमसाध्वर्यूणां मध्ये, द्वितीये च ऋत्विजां मध्ये, तृतीये च चमसाध्वर्यूणामेव मध्ये केन चित्, सिद्धान्ते च अध्वर्यूणां कार्यता वक्ष्यते। **सु.** ३।७ पृ. २८.

संकर्षणसूत्रं तु 'क्रत्वङ्गं वा चित्यङ्गत्वे नोपपद्यते' इति क्रत्वपूर्वोपयोगाभिप्रायं व्याख्येयम्। **भाट्ट.** ४।३।१५. **सोमनाथस्तु** 'चयनेन अग्निसंस्कारनिष्पत्त्यनन्तरं विधानात् अग्निसंस्कारस्य चयननिष्पन्नस्थण्डिले अग्निनिधानरूपस्य स्वरूपेण फलवत्त्वाभावेन तत्फलतायाः क्रत्वपूर्वनिष्पत्तिपर्यन्तव्यापनादेः संकर्षे सौत्रामण्याः साग्निकत्वङ्गत्वमेव, न तु चयनाङ्गत्वं, न वा अग्न्यङ्गत्वं इति व्यवस्थापनात्' इत्याह। ४।३।१८.

संकर्षे ( २।१।२६ ) 'उत्तरवेद्यां ह्यग्निश्चीयते' इति वचनात् अग्न्युत्तरवेद्योः समुच्चयो वक्ष्यते। **भाट्ट.** १०।८।११.

संकर्षे नानाप्रदानाधिकरणस्य ( २।३।१९ ) 'अन्यार्थप्रदर्शनाच्च' इति गुणसूत्रं भाष्यकारेण **भवस्वामिना** इत्थं व्याख्यातं— "याज्याऽनुवाक्याविनियोगपरं वचनं प्रदानभेदं प्रकाशयति। 'प्रथमामनूच्य मध्यमया यजेत्, मध्यमामनूच्योत्तमया यजेत्, उत्तमा-

मनूच्य प्रथमया यजेत्' एवं सवा अनुवाक्याः सर्वा याज्याश्च भवन्ति " इति । **परिमलः.** ३।३।२८।४३ ब्र. सू.

संकर्षसूत्रं '**अचेतनासत्यायोग्यान्यनुपास्यान्यफलत्वविपर्ययाभ्याम्**' इति अत्यन्तासदुपास्तिनिषेधपरम् । **अद्वैत.** २।४।३२७.

संकर्षकाण्डे चतुर्थस्य तृतीये ( षष्ठेऽधिकरणे वर्णकं २) 'यस्यै देवतायै हविर्गृहीतं स्यात् तां ध्यायेत् वषट्करिष्यन्' इति वाक्यमुदाहृत्य इतिहासपुराणमन्त्रार्थवादप्रत्यायितदेवता-स्वरूपध्यानमत्र विवक्षितं इति पूर्वपक्षयित्वा 'आग्नेयं ऐन्द्रं' इत्यादौ देवताप्रतिपादकस्य अग्न्या-दिशब्दश्रवणात् तस्य च प्रथमोपस्थितस्य त्यागे प्रमाणाभावात् शब्दे कार्यासंभवे तत्येव अर्थे कार्यविज्ञानात्, इह च शब्दे ध्यानसंभवात् देवताशब्दस्यैव ध्यानं इति सिद्धान्तितम् । **कु.** ४।३।६ वर्णकं २.

संकर्षकाण्डे द्वितीयस्य चतुर्थे ( २६ अधि० ) '**ऋताषाडृतधामेति यथार्थ-विनिष्कर्षोऽर्थपृथक्त्वात्**' इत्यधिकरणे 'ऋताषाडृतधामा गन्धर्वः स इदं ब्रह्म क्षत्रं पातु तस्मै स्वाहा, तस्यौषधयोऽप्सरस ऊर्जो नाम ता इदं ब्रह्म क्षत्रं पान्तु ताभ्यः स्वाहा' इत्येवं पुंवाचकाः स्त्रीवाचकाश्च शब्दाः प्रतिहोमं विनिष्कृत्य प्रयोक्तव्याः, उत यथापाठं इति विचारः संगच्छते । **कु.** २।१।१४।४२ पृ. १५०.

'तस्मै स्वाहा ताभ्यः स्वाहा' इत्यतः प्राक् पठिताः 'ऋताषाट् ऋतधामा' इत्यादयः पर्यायाः, ते च 'भुवनस्य पते' इत्यतः प्राक् षडेव भवन्ति । तदेतत् तत्रैवाग्निमा-धिकरणे ( संकर्षकाण्डे २।४।२७ ) 'षड्भिर्जुहोतीति पर्यायवादो यथा सावित्राणि जुहोति' इत्यत्र प्रपञ्चयिष्यते । **कु.** २।१।१।४२.

राष्ट्रभृद्धोममन्त्रेषु यथाम्नानमेव अन्वितोऽपि स्त्रीपरः अंशः पूर्वमन्त्रे प्रयुज्यते अवि-रोधात् । पूर्वमन्त्रे प्रयुज्यमाने एव प्रयुक्तस्य स्त्रीपरस्य अंशस्य उत्तरयजुषि आकाङ्क्षावशेनान्वय-संभवात्, लोके काव्येषु स्त्रीलिङ्गपदव्यवहितानामपि पुंलिङ्गपदानामन्वयदर्शनात् इति संकर्षकाण्डे (२।४।२६) देवस्वामिभाष्ये स्पष्टम् । **कु** २।१।१।४२.

**अग्नेः** मन्त्रस्तुत्यत्वलक्षणदेवतात्वं, समिदादीनां तु हविर्भाजित्वलक्षणं देवतात्वं इत्युभयेषामपि देवतात्वेन संकर्षकाण्डे (२।२।२) वक्ष्यमाणत्वात् । **कु.** २।२।२।२.

संकर्षकाण्डे (२।२।२) द्वितीयस्य द्वितीयपादाद्याधिकरणे 'स यत्रैतदध्वर्युराह समिधो यजेति आग्नेयमेतद्रूपं परोक्षं अग्निं यजेत्येव तदाह' इति श्रुतिः भाष्ये उदाहृता । **कु.** २।२।२।२.

संकर्षकाण्डे द्वितीयाध्यायस्य द्वितीयपादे 'तत्र देवतानामादेशो न विद्यतेऽनाम्ना-नात्' इति पूर्वपक्षसूत्रे 'यज' इति याज्याप्रैषे देवतानामधेयं नादेष्टव्यं इति पूर्वपक्षयित्वा 'विद्यते वाऽन्यार्थदर्शनेभ्यः' इति सूत्रेण 'यत्तनूनपातं यज, इडो यज इति ब्रूयात् जामि स्यात्'

इति प्रयाजेषु देवताऽऽदेशस्य निन्दया तदितरत्र देवताऽऽदेशविधिरनुमीयते इति सिद्धान्तयित्वा **'आम्नातः प्रयाजेषु देवताऽऽदेशस्तस्य प्रतिषेधो वचनमितरेषु'** इति गुणसूत्रेण शाखान्तरे 'तनूनपातं यज' इत्यादिप्रत्यक्षविहितस्य देवताऽऽदेशस्य 'यत्तनूनपातं यज, इडो यजेति ब्रूयात्' इति निन्दा, अतः प्रयाजेभ्योऽन्यत्र न देवताऽऽदेशः 'आश्राव्य ब्रूयादिन्द्रं यजेति' 'आश्राव्य ब्रूयान्मरुतो यजेति' इत्यादिवचनाभावे सति इत्याक्षिप्य **'आम्नातो वैकेषां तद्दर्शयत्यमुष्मा अनुब्रूह्यमुं यजेति'** इति सूत्रेण सर्वत्र याज्याप्रैषादौ देवताऽऽदेशः कर्तव्यः इति शाखान्तरे प्रत्यक्षविहितं, क्व चित् 'इन्द्रं यज' इत्यादिवचनं तु अनुवादः इति समाहितम्। **कु.** २।२।२।२.

न च 'एकविंशतिमनुब्रूयात्' इत्यादौ संख्येयालाभात् न संख्याविशिष्टानुवचनान्तरविधिसंभवः इति वाच्यम्। **'प्रकृतित इत्याश्मरथ्यः'** इति संकर्षचतुर्थद्वितीयपादाधिकरणन्यायेन (१) अनुवचनत्वसामान्यात् नित्यसामिधेन्यनुवचनप्रकृतित्वस्य सत्त्वात्। **कु.** ३।१।११।२२.

संकर्षकाण्डे द्वितीयस्य चतुर्थे (२) **'अदेवतासंयोगेन चोद्यमानेऽर्थगृहीता देवता, यथा भोजनचोदनायां मनुष्ययोगः'** इत्यधिकरणे देवतासंयोगेन विना चोद्यमाने 'उपांशुयाजमन्तरा यजति' इत्यादौ शब्दैकसमधिगम्याया देवताया अभावात् विनैव देवतया द्रव्यमुत्स्रष्टव्यं इति पूर्वपक्षयित्वा, यजिना मन्त्रवर्णतश्च सामान्यविशेषरूपेण देवताऽवगमात् देवतोद्देशेन द्रव्यत्यागः संभवति इति सिद्धान्तयित्वा, तदुत्तराधिकरणे (३) **'सूक्तवाको याज्या, प्रस्तर आहुतिरिध्मः प्रथम आहुतीनां हूयते इत्येतेन व्याख्यातम्'** इति सूत्रेण प्रस्तरप्रहरणं इध्माधानं च होमरूपं, 'सूक्तवाको याज्या प्रस्तर आहुतिः' इति 'इध्मः प्रथम आहुतीनां हूयते' इति च वाक्यशेषात् होमत्वावगमात्, मन्त्रवर्णतो विशिष्य देवतालाभाच्च इति पूर्वपक्षयित्वा, **'प्रशंसा वा, संस्कारः प्रस्तरस्य, संनिधानात्, समिन्धनार्थ इध्मः'** इति सूत्रेण आहुतित्वेन प्रशंसैषा, यतः प्रहरणं प्रस्तरस्य प्रतिपत्तिः स्रुग्धारणोपयुक्तस्य 'प्रस्तरं' इति द्वितीयान्तेन उपस्थितत्वात्, इध्माधानं च अग्निवृद्ध्यर्थत्वात् दृष्टार्थं इति सिद्धान्तितम्। 'उपदेशो वा याज्याशब्दो हि नाकस्मात्' (३।२।५।१२ जै.) इति तु क्त्वाचिन्ता इत्युक्तं तद्भाष्ये देवस्वामिभिः। **कु.** ३।२।५।१३.

संकर्षकाण्डे **'अनुयजतीत्यनुवषट्कारश्चोद्यते'** इति प्रथमाधिकरणे (१।१।१) 'सोमस्याग्ने वीहीत्यनुयजति' इति वाक्यान्तरविहितत्वात् कर्मान्तरं सोमयागाङ्गतया विधीयते इति वक्ष्यते। **कु.** ३।२।१६।३५.

संकर्षकाण्डे '**ऋताषाडृतधामेति यथार्थविनिष्कर्षोऽर्थपृथक्त्वात्**' (२।४।२६) इति पूर्वपक्षयित्वा '**यथासमाम्नातं वा**' इति सूत्रेण यथामन्त्रपाठमेव व्यतिषक्ततया पूर्वपूर्वमन्त्रस्य प्रयोगः 'ताभ्यः स्वाहा' इति सर्वनाम्नः पूर्वपूर्वमन्त्रव्यतिषक्तस्त्रीवाचकाऽदान्तरोपस्थितिमादाय आकाङ्क्षाशान्तेः इति सिद्धान्तयिष्यमाणत्वात्। **कु.** २।३।८।१४.

संकर्षकाण्डे द्वितीयस्य चतुर्थे (१) '**देवतासंयोगेन चोद्यमाने प्रदान आहुतिर्यथा लोके**' इत्यत्र प्रपञ्चयिष्यते (हविषः अग्नौ प्रक्षेपः कार्यः न त्यागमात्रं जुहोत्यर्थः इति)। **कु.** ३।४।१९।४७.

**संकर्षकाण्डीयभाट्टचन्द्रिकायां** आलेखनाश्मरथ्यकार्ष्णाजिनीनां प्राचीनाचार्याणां याज्ञिकानां चोल्लेख उपलब्धः। तत्र सामिधेनीप्रकरणे 'त्रींस्तृचाननुब्रूयात् राजन्यस्य' इति श्रुतम्। ते च तृचाः गायत्रजागतानुष्टुभा उपादेयाः। वैश्यस्य गायत्रत्रैष्टुभानुष्टुभा भवन्ति। 'ता वै गायत्र्यो भवन्ति' इति प्राकृतविधेः नैमित्तिकेन विकारेण बाधः इत्या**लेखनो** मन्यते। **आश्मरथ्यस्तु** 'अष्टावेतानि हवींषि भवन्ति, अष्टाक्षरा गायत्री' इत्यादिवत् अर्थवादमात्रेण छन्दोविशेषपरत्वेन नियमनस्य प्राकृतबाधस्य चायुक्तत्वात् पुनर्विधेः प्रकृतिप्राप्त तृचान्तरपरिसंख्यार्थत्वेन सार्थक्यात् गायत्रा एव प्राकृतास्तृचा ग्राह्या इत्याह। **संकर्ष**. ४।२।१.

वाजपेये प्राजापत्यानामुत्सर्ग उक्तः। तत्र यूपादुन्मोचनमेव उत्सर्गपदार्थः इति **कार्ष्णाजिने**र्मतम्। **संकर्ष**. १।१।४.

'लोकंपृणया उपधाय सूददोहसा अभिमर्शनं कर्तव्यम्।' **याज्ञिकास्तु** उभयोरेकमन्त्रत्वमिच्छन्ति। **संकर्ष**. २।१।४१.

**संकर्षकाण्डीयभाट्टचन्द्रिकायां सूत्रभाष्ययोर्यत् किंचित् निरसनादिकं कृतं, तत् संगृह्यते।** भाष्यमत्र देवस्वामिकृतं न तु शाबरम्।

भाष्ये तु चतुरधिकरणी इयं एकीकृत्य व्याख्याता। 'लिङ्गदर्शनाच्च' इति चरमसूत्रं तु सर्वसाधारण्याय 'शृतं हविः शमितः' इति प्रैषे सति 'शृतमिति त्रिः प्रत्याह' इति लिङ्गं शमनश्रपणयोः समानकर्तृकतां बोधयति इति व्याख्यातम्। श्रपणस्य प्रकृतौ अध्वर्युकर्तृकत्वादिनिश्चयात् इति तदाशयः। **संकर्ष**. १।१।१५,

'दक्षिणापवर्गाः पशवो भवन्ति' इति आहत्यविधानेन ईशानाद्याग्नेयान्तक्रमेण पशुनियोजने सिद्धे तदङ्गेषु यूपेष्वपि प्रधानसंनिकर्षलाभेन तथैव संमाने प्रसक्ते प्रवर्तमानः उदगपवर्गत्वविधिः (उदगपवर्गा यूपा भवन्ति) संभवत्संनिकर्षाविरोधेनैव नेतव्यः। तथा च पशुक्रमेणैव नव यूपा मीत्वा दशमस्य स्थानमतिक्रम्य वेद्यग्निकोणे दशमं मीत्वा तदुदग्भागे एकादशं मिनुयात्। एवं सति द्वयोरेव उत्तमोपोत्तमयोः क्रमोपरोधः स्यात् इति भाष्यकारः। ......आचार्यैस्तु वाचनिकत्वाविशेषात् विकल्प एव प्रकृतौ स्वीकृतः। १।४।२३,

'आवापस्विष्टकृतोर्द्वितीयं पश्चावत्तिनः' इति सूत्रे वाशब्दादेरभावेन पूर्वपक्षनिरासे मानाभावात् एकेषामित्यस्याभावेऽपि द्वावपि शाखाभेदेन सिद्धान्तावेव । २।२।९,

'मध्यादवद्यति' इति विधाय 'यदुभयतोऽवद्येत्' इत्यादिना पूर्वपश्चार्धयोः अवदानं विनिन्द्य 'उत्तरार्धादेवोभे अवद्येत्' इति स्पष्टं विधानात् सौविष्टकृतौ अवदानस्थलादेव द्विरवदानेन हविषः त्रिरवदानसिद्धिः इति तु भाष्याभिप्रायः । २।२।९,

भाष्ये तु प्रस्तरप्रहरणस्यापि केवलसंनिपातित्वमेव समर्थ्य पूर्वोपक्रमात् आरादुपकारकत्वं कृत्वाचिन्तया इत्युक्तम् । २।४।३,

**यत्तु** भाष्ये 'पुण्याहे दैवानि कर्माणि' 'ते वा एते पूते मेध्ये अहनी यजनीये' 'उत्तरमहर्देवता यजते' इति श्रुतिषु अह्नामेव कीर्तनं इह हेतूकृतं, **तत्** तन्त्रप्रक्रमाभिप्रायेण अहोरात्रपरत्वेन च 'अन्यथासिद्धो रात्रिशब्दः' इति वदतः सूत्रकृतः विरुद्धं अहःशब्देऽपि तदुभयसंभवात् । ३।१।३,

भाष्यकृता तु 'द्वाविज्याकालौ' (संकर्ष. ३।१।२ अधि०) इतिसूत्रेण 'यदहरेव पुरस्ताच्च पश्चाच्च दृश्यते, तदहरुपवसेत्, श्वोभूते यजेत' 'या पूर्वा पौर्णमासी साऽनुमतिः, योत्तरा सा राका' इत्यादिवचनैः द्वावपि यागकालावेव इति पूर्वपक्षं प्रापय्य अनेन सूत्रेण (१५। १६ अधि० स्थेन) तेषां प्रत्यक्षतः कालद्वित्वबोधकताऽभावात् 'द्वादश वै संवत्सरस्य पौर्णमास्यः' इत्यादिलिङ्गाच्च एकैक एव कालः इति सिद्धान्तितम् । ३।१।६,

**यत्तु** भाष्ये वर्णकान्तरं, **तत्** अस्यैवाधिकरणस्य पुनरपि वाक्यान्तरेण वर्णनं सिद्धान्तसूत्रे पाठभेदप्रदर्शनैकफलकम् । ३।२।१२,

**यत्तु** भाष्ये अतिग्राह्याणामपि ग्रहत्वात् ग्रहसमानधर्मताऽऽवश्यकतया सवषट्कारमेव एषां प्रदानं, न पुनर्दर्विहोमत्वं इत्युक्तं, **तत्** दधिग्रहादिषु व्यभिचरितत्वात् उत्तराधिकरणान्ते एव 'प्राणाय त्वा' इत्यादिरूपस्य मन्त्रस्य होमे सूत्रकृतैव विनियोगकथनेन तद्विरोधाच्च चिन्त्यम् । ३।३।७,

**यत्तु** भाष्यकारैः असत्कार्यवादनिरासेन संस्कारात्मनः सतः स्वरूपात्मना सत्कार्यवादं समर्थ्य सोमस्य स्वरूपतोऽपि सत्त्वेन तत्र मन्त्रस्य करणत्वेन विधानायोगात् सोमग्रहादयं मन्त्रः उत्कृष्येत इत्युक्तं, **तत्** सोमोत्पादने यागान्तरेऽपि विनियोगसंभवेन 'सागरं तरेत्' इत्यादिविधेरिव अप्रामाण्यापादकत्वात् उपेक्षितम् । ३।३।१३,

भाष्यकारस्तु अत्र्यार्षेयसूत्रे (६।१।४३ जै.) प्रकृतसूत्रे च (संकर्ष. ३।४।२) त्रिपदं पञ्चानामपि उपलक्षणम् । 'परिमाणाच्चिख्यासा' इति त्रिपञ्चसंख्योपलिलक्षयिषा इत्यर्थकं इति व्याचख्यौ । ३।४।२,

सामिधेनीषु ‘त्रिरनवानमनूच्य’ इति । भावनाविशिष्टभावनाऽन्तरविधानात् न वाक्यभेदः इति भाष्यकारः । त्रिरभ्यासोद्देशेन अनवानमात्रविधिः इति तु युक्तम् । ४।१।५,

‘अवाच्यत्वान्नेति चेत् स्यात् संयोगपृथक्त्वात्’ इति (४।१।६ अधिकरणस्थं) सूत्रम् । त्रेधा संयोगे पृथक्त्वव्याख्यानसंभवेऽपि ‘यदि एकैकामेव संतनुयात्’ इति विध्यन्तर-सत्त्वात् इति **यत्तु** भाष्यकृतो व्याख्यानं, **तत्** ‘अवाच्यत्वान्न’ इत्याक्षेपनिरसनासमर्थत्वात् उपेक्ष्यम् । ४।१।६,

**यत्तु** भाष्ये देवताऽऽवोढुः हव्यवोढुश्च एकत्वेन आवहनहव्यवहनाभ्यां स्विष्टकृद्याग-संबन्धात् असति स्विष्टकृति सर्वहुते देवताऽऽवाहनस्यैव लोपः इति, **तन्न** । तत्तद्देवताऽऽवाहने तत्तद्यागानामेव प्रयोजकत्वात्, स्विष्टकृद्देवताऽऽवाहने हव्यवहनस्यैव प्रयोजकत्वात् । स्विष्टकृद्याग-लोपेऽपि तत्तत्प्रयोजकलोपाभावेन देवताऽऽवाहनलोपाभावात् । ४।२।९,

स्रुगादापनमन्त्रे शाखाभेदेन ‘इमे वयं’ ‘स्मो वयं’ इति पाठौ, तयोः विकृतौ विकल्पार्थत्वं इति भाष्ये । ४।३।१,

वषट्कारे वाषट्-- वषट् – वौक्षाट् – षट् इति मन्त्रभेदः । तेषां तुल्यवत् विकल्पः ‘ब्राह्मणस्य’ इत्यादयस्तु अवयुत्यानुवादाः इति **वृत्तिकृतां** मतम् । **भाष्यकार**स्तु आह–ब्राह्मणादि-वाक्यानां वैयर्थ्यस्य अयुक्तत्वात् बृहस्पतिसव– राजसूय– वैश्यस्तोमेषु क्रमेण त एव शब्दा नियताः । नैमित्तिकैरन्येषां बाधात् नित्यस्य । अवशिष्टानां वषट्काराणां च अन्यत्र तुल्यवदेव विकल्पः इति । ४।३।२,

अनुयाजेषु ‘उत्तमेनावान्यात्’ इति वाक्यस्य अनुवादकत्वेन विशेषविधित्वा-भावात् नोपसंहारकत्वम् । सूत्रेऽपि अनुवादपदं अनुवर्तयितव्यं इति भाष्यकारः । ४।३।१४,

‘नामानि गृह्णीयात्’ इत्यस्य एकत्वातिरिक्तसंख्यापरत्वेन सुव्याख्यत्वात् न यज्ञकाम-पदे प्रमाणं इति भाष्याशयः । ४।३।२१.

**मीमांसाकोषस्य प्रथमे भागे भाष्यीयाधिकरणानि** १६२, तौतातिकाधि-करणानि ७, संकर्षाधिकरणानि १०८, केवलानन्दीवृत्त्यधिकरणानि ६७, न्यायाः १९२, लघुसिद्धान्ताश्च २३८० निवेशमलभन्त ।

**इति संक्षेपः ।**

**मार्गशीर्षे सुदि ४**
**भृगुवासरः, शकः १८७४.**

**स्वामी केवलानन्दसरस्वती**

# ग्रन्थसंक्षेपः तद्विवरणं च ।

**अद्वैत**— अद्वैतसिद्धिः श्रीमधुसूदनसरस्वतीप्रणीता निर्णयसागरे १९१७ सने मुद्रिता । अत्र परिच्छेदः, प्रकरणं, सूत्रं इति अङ्कत्रयम् । सूत्रं नाम अत्र अवान्तरवाक्यं भाषान्तरोपयोगि ।

**अद्वैत.चं**— अद्वैतसिद्धेः टीका लघुचन्द्रिका ब्रह्मानन्दी नाम ।

**अद्वैत–चतुर्ग्रन्थी**— महामहोपाध्यायश्रीअनन्तकृष्णशास्त्रिभिः प्रणीता न्यायामृत–अद्वैतसिद्धि–न्यायामृततरङ्गिणी– लघुचन्द्रिकाणां चतुर्णां ग्रन्थानां निष्कर्षरूपा ।

**अलंकारः**— भाट्टालंकारः नाम मीमांसान्यायप्रकाशस्य टीका अनन्तदेवविरचिता चौखम्बायां १९२१ सने मुद्रितः ।

**आपध**— आपस्तम्बधर्मसूत्रम् । प्रश्नः, कण्डिका , सूत्रं इति अङ्कत्रयम् ।

**ऋजु**— ऋजुविमला शाबरभाष्यव्याख्यानरूपाया बृहत्याः टीका श्रीशालिकनाथप्रणीता । चौखम्बायां १९२९ सने मुद्रिता ।

**ऋसं**— ऋग्वेदसंहिता पण्डितसातवळेकरैः औन्धराजधान्यां १९४० सने मुद्रिता । मण्डलं, सूक्तं, ऋक् इत्यङ्कत्रयम् ।

**ऐब्रा**— ऐतरेयब्राह्मणम् । पुण्यपत्तनस्थानन्दाश्रमे १९३० सने मुद्रितम् । अध्यायः, खण्डः सूत्रं इत्यङ्कत्रयम् ।

**ऐब्रासा**— ऐतरेयब्राह्मणस्य सायणप्रणीतं भाष्यम् । आनन्दाश्रमे १९३० सने मुद्रितम् ।

**कणिका**— न्यायकणिका विधिविवेकस्य टीका वाचस्पतिमिश्रविरचिता । काशी-मेडिकल्हॉल । सन १९०७ ।

**कल्पतरुः**— शारीरकशांकरभाष्यस्य भामत्याख्यटीकायाः टीका । निर्णयसागरे १९१७ सने मुद्रितः । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् ।

**कु**— अध्वरमीमांसाकुतूहलवृत्तिः श्रीरंग–वाणीविलासे–मुद्रिता । अध्यायः, पादः, अधिकरणं, सूत्रं इत्यङ्कचतुष्टयम् ।

**के**— केवलानन्दसंपादितं मीमांसादर्शनम् । केवलानन्दप्रणीता मीमांसासूत्रवृत्तिश्च ।

**कैयटः**— व्याकरणमहाभाष्यस्य टीका प्रदीपः नाम । काश्यां मुद्रितः ।

**कौ**— भाट्टकौस्तुभः खण्डदेवविरचितः चौखम्बायां १९३९ सने मुद्रितः । अध्यायः, पादः, अधिकरणं, सूत्रं इत्यङ्कचतुष्टयं पृष्ठाङ्कश्च ।

**जै**— जैमिनिकृतद्वादशलक्षणी । अध्यायः, पादः, अधिकरणं, सूत्रं इत्यङ्कचतुष्टयम् ।

**जैब्रा**— जैमिनिब्राह्मणं सामवेदीयम् ।

**टुप्**— टुप्टीका चतुर्थाध्यायादिद्वादशाध्यायान्तशाबरभाष्यस्य विवरणं भट्टपादप्रणीतम् । आनन्दाश्रमे १९३१ सने मुद्रितं सभाष्यम् । अध्यायः, पादः, अधिकरणं, सूत्रं इत्यङ्कचतुष्टयम् ।

**तत्त्वप्रकाशिका**— परिभाषेन्दुशेखरस्य या टीका भूतिर्नाम, तस्याः टीका । काशी । संवत् २००१ ।

**तत्त्वबोधिनी**— सिद्धान्तकौमुद्याः टीका निर्णयसागरीया १९२०. सने मुद्रिता ।

**ताण्ड्य**— ताण्ड्यब्राह्मणं पञ्चविंशं नाम । अध्यायः, खण्डः, सूत्रं चेति अङ्कत्रयम् ।

**ताण्ड्यसा**—ताण्ड्यब्राह्मणस्य सायणप्रणीतं भाष्यम् ।

**तैसं**— तैत्तिरीयसंहिता । काण्डं, प्रपाठकः, अनुवाकः ।

**तैसंसा**— तैत्तिरीयसंहितायाः सायणप्रणीतं भाष्यम् । आनन्दाश्रमे मुद्रितम् । प्रथमा आवृत्तिः ।

**तौता**— तौतातिकमततिलकः भवप्रसादापरपर्यायः ग्रन्थः भवदेवप्रणीतः मीमांसाचार्य-श्रीचिन्नस्वामिभिः परिष्कृतः मुद्रितः ।

**निरुक्त**— यास्काचार्यप्रणीतं निरुक्तम् । अध्यायः खण्डश्च ।

**नृपू. भा.**— नृसिंहपूर्वतापनीभाष्यं शाङ्करम् ।

**न्यायनिर्णयः**— शांकरशारीरकभाष्यस्य आनंदगिरिकृता टीका । अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम् ।

**न्यायरत्नमाला**— पार्थसारथिप्रणीता चौखम्बायां मुद्रिता ।

**पं**— पङ्क्तिः

**पञ्जिका**— प्रकरणपञ्जिका श्रीशालिकनाथप्रणीता प्राभाकरमतानुसारिणी । अनेकप्रक-रणात्मको ग्रन्थः । चौखम्बायां मुद्रितः ।

**पराक्रमः**— उपक्रमपराक्रमः श्रीअप्पय्यदीक्षितप्रणीतः । लिखितः प्राज्ञपाठशालीय-ग्रन्थालयस्थः । पत्रं, पृष्ठम् ।

**परि**— परिभाषा परिभाषेन्दुशेखरस्था । परिभाषाक्रमाङ्कः ।

**परिमलः**— भामत्याष्टीकाकल्पतरोः टीका । अप्पय्यदीक्षितविरचितः । निर्णय-सागरे १९१७ सने मुद्रितः ।

**पा**— पाणिनिः ।

**पृ**— पृष्ठम् ।

**प्रवि**— प्रभाकरविजयः नन्दीश्वरविरचितः कलिकातायां १९२६ सने मुद्रितः ।

**बाल**— मीमांसाबालप्रकाशः श्रीशंकरभट्टप्रणीतः चौखम्बायां १९०२ सने मुद्रितः ।

**बिन्दुः**— न्यायबिन्दुः तत्सदुपाख्यवैद्यनाथप्रणीतः मीमांसाधिकरणानां संक्षेपेणार्थप्रतिपादको ग्रन्थः मुंबई--गुजरातीमुद्रणालये १९१५ सने मुद्रितः ।

**बृहती**— शाबरभाष्यस्य टीका नव्यप्राभाकरप्रणीता चौखम्बायां १९२९ सने मुद्रिता ।

**बौध**— बौधायनधर्मसूत्रं प्रश्नः पटलं सूत्रं च ।

**ब्र.सू.**— ब्रह्मसूत्रम्-- उत्तरमीमांसासूत्राणि । अध्यायः, पादः, सूत्रं चेति अङ्कत्रयम् । अङ्कचतुष्टये तु तृतीयोऽङ्कः अधिकरणस्य ।

**भगी**— भगवद्गीता । अध्यायः श्लोकश्च ।

**भा**— भाष्यं शाबरम् । पुण्यपत्तनस्थानन्दाश्रमीयम् । अध्यायः, पादः, अधिकरणं, सूत्रं इत्यङ्कचतुष्टयम् ।

**भाट्ट**— भाट्टदीपिका खण्डदेवप्रणीता । अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम् ।

**भावनाविवेकः**— मण्डनाचार्यप्रणीतः काश्यां १९२३ सने मुद्रितः ।

**भूतिः**— परिभाषेन्दुशेखरस्य टीका । काश्यां २००१ विक्रमसंवति मुद्रिता ।

**मणि**—भाट्टचिन्तामणिः श्रीगागाभट्टप्रणीतः चौखम्बायां १९००सने मुद्रितः । तर्कपादमात्रम् ।

**मण्डन**— मण्डनाचार्यप्रणीता मीमांसाऽनुक्रमणिका चौखम्बायां १९२८ सने मुद्रिता ।

**मीन्या**— मीमांसान्यायप्रकाशः श्रीआपदेवप्रणीतः चौखम्बायां १९२० सने मुद्रितः ।

**मुरारि**— मुरारिमिश्रकृता अङ्गत्वनिरुक्तिः आनन्दाश्रमे मीमांसादर्शनस्य तृतीयभागस्यान्ते १९३१ सने मुद्रिता ।

**रत्न**— तन्त्ररत्नं नाम टुप्टीकायाः टीका, पार्थसारथिप्रणीतम् । लिखितं प्राज्ञपाठशालाग्रन्थालयस्थम् ।

**रत्नाकरः**— न्यायरत्नाकरः श्लोकवार्तिकस्य टीका पार्थसारथिमिश्रप्रणीता चौखम्बायां १८९८ सने मुद्रिता ।

**रसायनम्**— विधिरसायनं अप्पय्यदीक्षितप्रणीतं चौखम्बायां १९०१ सने मुद्रितम् ।

**रहस्यं**— भाट्टरहस्यं श्रीखण्डदेवविरचितम् । मीमांसारीत्या शाब्दबोधस्य विचारोऽत्र । काञ्च्यां मुद्रितं द्वितीयं संस्करणम् ।

**लाट्या**— लाट्यायनश्रौतसूत्रं कलिकातायां १८७२ सने मुद्रितम् ।

**वा**— तन्त्रवार्तिकं आनन्दाश्रमे १९३१ सने मुद्रितं सभाष्यम् । अध्यायः, पादः, अधिकरणं, सूत्रं चेति अङ्कचतुष्टयम् ।

**वाध**— वासिष्ठधर्मसूत्रम् ।

**वि**— जैमिनीयन्यायमालाविस्तरः आनन्दाश्रमे १९१६ सने मुद्रितः। द्वितीयावृत्तिः। अध्यायः, पादः, अधिकरणं चेति अङ्कत्रयम्।

**विवि**— विधिविवेकः मण्डनाचार्यकृतः। काशी--मेडिकलहॉल्। १९०७ सने मुद्रितः।

**वृ**— मीमांसासूत्रवृत्तिः सुबोधिनी काश्यां १९२३ सने मुद्रिता।

**वैजयन्ती**— सत्याषाढश्रौतसूत्रस्य वृत्तिः आनन्दाश्रमे १९०७ सने मुद्रिता ससूत्रा।

**व्या.वा.**--व्याकरणवार्तिकम्। अध्यायः, पादः, सूत्रम्। सोद्द्योतविवरणं महाभाष्यम्। काशी।

**शंकर**— श्रीशंकरभट्टप्रणीतः मीमांसासारसंग्रहः काश्यां १९०४ सने मुद्रितः।

**शांश्रौ**— शाङ्खायनश्रौतसूत्रम्। अध्यायः, खण्डः, सूत्रं च। कलिकातायां १८८८ सने मुद्रितं सभाष्यम्।

**शा**— शास्त्रदीपिका पार्थसारथिमिश्रप्रणीता निर्णयसागरे १९१५ सने मुद्रिता। अत्र अध्यायः, पादः, अधिकरणं इति अङ्कत्रयम्।

**शास्त्रप्रकाशिका**— बृहदारण्यकोपनिषच्छांकरभाष्यगतवार्तिकस्य आनन्दगिरिकृता टीका आनन्दाश्रमे मुद्रिता।

**शेखरः**— परिभाषेन्दुशेखरः श्रीनागेशप्रणीतः काश्यां २००१ विक्रमसंवति मुद्रितः।

**श्रीकर**— ब्रह्मसूत्रभाष्यकारः। अध्यायः, पादः, सूत्रं इत्यङ्कत्रयम्।

**श्लोवा**— श्लोकवार्तिकं भट्टपादप्रणीतं तर्कपादस्थं चौखम्बायां १८९८ सने मुद्रितम्।

**संकर्ष**— संकर्षकाण्डस्य भाट्टचन्द्रिका भास्करभट्टप्रणीता नाम वृत्तिः। काश्यां १८९४ सने मुद्रिता मेडिकलहॉल्।

**संग्रहः**— लौकिकन्यायसंग्रहः। आनन्दाश्रमस्थः लिखितः।

**सत्याषाढः**— तैत्तिरीयहिरण्यकेशिशाखीयकल्पसूत्रं आनन्दाश्रमे १९०७ सने मुद्रितम्।

**सदसं**— सर्वदर्शनसंग्रहः।

**समयमयूखः**— श्री जगन्नाथ रघुनाथ घारपुरे इत्येतैः मुद्रितः।

**साम**—सामवेदः पं० सातवळेकरमुद्रितः। तत्र ऋक्क्रमाङ्को मुद्रितः सोऽत्र अङ्कैः प्रदर्श्यते।

**साहस्री**— भुवनेशलौकिकन्यायसाहस्री। मुंबई श्रीवेङ्कटेश्वरमुद्रिता शकः १८३०। साहस्र्यां यो न्यायक्रमाङ्को निवेशितः स एवास्माभिः प्रदर्श्यते।

**सिद्धान्तकौमुदी**— भट्टोजीदीक्षितप्रणीता निर्णयसागरे १९२९ सने मुद्रिता।

**सिद्धान्तचन्द्रिका**— तर्कपादस्थशास्त्रदीपिकायाः टीका रामकृष्णप्रणीता निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता।

**सु—** न्यायसुधा राणकापरपर्याया तन्त्रवार्तिकस्य टीका । अत्र पृष्ठाङ्का एव केवलमुपन्यस्ताः । यत्र च 'सु. ३।७ पृ.' इति स्यात् तत्र सुधायाः तृतीयाध्यायस्य सप्तमाष्टमपादात्मके भागे ग्रन्थान्ते मुद्रिते पृष्ठं अमुकं इत्यर्थः । तत्र भागे किल पृथगेव अङ्का मुद्रिता आदित आरभ्य ।

**सोम—** सोमनाथी मयूखमालिका शास्त्रदीपिकायाष्टीका अर्थवादाधिकरणमारभ्य द्वादशाध्यायान्ता । निर्णयसागरे १९१५ सने शास्त्रदीपिकया सह मुद्रिता । अत्र अध्यायः पादः अधिकरणं इति अङ्कत्रयम् ।

**हरदत्त—** पदमञ्जरीकारः । काशिकायाष्टीका पदमञ्जरी ।

# शुद्धिपत्रकम्

| पृष्ठ | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ५ | २ | ५ | ' धातू | * ' धातू |
| १५ | ” | २० | प्राज | * प्राज |
| ” | ” | ३३ | शाला | * शाला |
| १६ | १ | १२ | ' यूपस्या | * ' यूपस्या |
| ” | ” | ३१ | अग्नेः | * अग्नेः |
| १६ | २ | १८ | अग्नौ | * अग्नौ |
| ” | ” | २४ | ताः पव | * ताः पव |
| ” | ” | ३३ | ' यस्य ' हि | ' यस्य हि |
| ३० | १ | २१ | क्रवन्ते | ऋत्वन्ते |
| ३६ | २ | ३ | अग्नि | अग्नि |
| ६४ | ” | ३० | मत्रा | मन्त्रा |
| ७५ | ” | २४ | राज्य | राज |
| ७७ | १ | २४ | ' ज्योति | ज्योति |
| ८५ | ” | २५ | त्ततः।, | त्ततः। |
| ८८ | २ | ११ | सार्था | सार्थाः |
| ९३ | १ | १९ | ३ ॥ | ३१ ॥ |
| ९४ | ” | ७ | ९।४।८ | ९।४।९ |
| ” | ” | २९ | ९।४।७ | ९।४।७ (८) |
| ११२ | २ | १० | प्राश्वंशे | प्राग्वंशे |
| १४१ | ” | २ | विशिष्टो | विशिष्टो- |
| १९३ | १ | २ | तमान्न | तस्मान्न |
| १५८ | ” | ८ | कास्तुभे | कौस्तुभे |
| १५९ | २ | १३ | सवषु | सर्वेषु |
| १६६ | ” | ६ | तावऽ | ताऽत्र |

| पृष्ठं | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| १७७ | १ | ११ | मुनु | मनु |
| १८६ | २ | २० | 'वैकृतेषु | वैकृतेषु , |
| १९९ | १ | २८ | बन्धि वे | बन्धित्वे |
| २१३ | २ | ६ | श्रत्या | श्रुत्या |
| २३० | १ | २९ | तप्रा | तत्प्रा |
| २३८ | ,, | ३३ | इत्थ | इत्थं |
| २४५ | २ | २८ | तेन | ते न |
| २५२ | १ | १ | नाम | नाम् |
| ,, | ,, | २२ | देशाः | देशाः । |
| ,, | ,, | २३ | सोमे । ८ | सोम. ८ |
| २५६ | ,, | १५ | रात्र | रात्रः |
| २६० | २ | १२ | नाभव | नार्भव |
| २६१ | ,, | ४ | पूरण | पूरणं |
| २७४ | ,, | २० | अथातो | ॐ अथातो |
| २७८ | ,, | ७ | ध्वसा | ध्वंसा |
| २८२ | ,, | १४ | हीन | हीनं |
| २८३ | ,, | ४ | वश्यः | वैश्यः |
| २९० | १ | ३२ | णात्त | णात्तु |
| २९१ | ,, | ८ | रान | रानु |
| २९३ | ,, | २ | 'यत्तु एषा | यत्तु 'एषा |
| ,, | २ | ३४ | साधन | साधनं |
| २९४ | १ | २४ | क्षित | क्षितं |
| ,, | ,, | २७ | कथ | कथं |
| ,, | ,, | ३३ | मुक्त | मुक्तं |
| २९५ | ,, | १८ | पृष्ठ | पृष्ठं |
| २९६ | ,, | २५ | दिक | दिकं |
| ,, | २ | ६ | न | न, |
| ३०० | १ | १२ | साश्व ) | साश्व ) । |

| पृष्ठं | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३०३ | १ | ३३ | यते । अ | यते, अ |
| ” | २ | २६ | न्वयः । | न्वयः, |
| ३०६ | १ | १६ | राशसे | राशंसे |
| ३०७ | ” | ८ | ‘ यथा पु | यथा ‘ पु |
| ३०८ | ” | १४ | युक्त | युक्तं |
| ३१२ | ” | १० | ऋतषु | ऋतुषु |
| ३१६ | २ | ३३ | धमाः | धर्माः |
| ३२३ | ” | ८ | ध्ययन | ध्ययनं |
| ” | ” | १६ | वश्य | वश्यं |
| ३२४ | १ | १० | युक्तव | युक्तैव |
| ” | २ | २२ | दत | दतः |
| ३२५ | १ | ५ | मयध्य | मध्यय |
| ३२७ | ” | १२ | विधिवत् | विधिः |
| ” | ” | ” | संस्कार्य वि | संस्कार्यतया वि |
| ३३३ | ” | २१ | नधिका | नाधिका |
| ३४१ | ” | १ | वेत | वेतं |
| ३५१ | ” | ९ | ह्रिष्यते । | ह्रिष्यते |
| ” | ” | १२ | तद्विशेष | तद्विशेष- |
| ” | ” | २८ | यत्रेद | यत्रेदं |
| ३५२ | २ | १२ | मननु | मनु |
| ” | ” | १५ | सूत्राथ | सूत्रार्थ |
| ” | ” | २६ | वडक्री | वङ्क्री |
| ३५३ | ” | २४ | वान्वयः, | वान्वयः’ |
| ३५४ | ” | १२ | भा. ११ | ११ |
| ३६० | १ | २७ | | अध्वर्योः पृथक् प्रतिप्रस्थात्रा इत्यादिर्लघुसिद्धान्तः पञ्च-म्यन्ताध्वर्युपदारब्धत्वात् १३पङ्क्त्यनन्तरं पठनीयः । |

| पृष्ठं | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ३६६ | १ | ३५ | शङ्का | शङ्का |
| ३६७ | २ | ३ | गमत्व | गमकत्व |
| ३७० | १ | २३, २४ | इति गौतममतस्य निरा | इति निरा |
| ३७२ | ,, | १० | अमन्त्र | मन्त्र |
| ३७४ | २ | २४ | स्रव | स्रुव |
| ३७६ | १ | ३० | सवा सा | सर्वा सा |
| ३८७ | २ | ३० | ) ननु | )। ननु |
| ३९७ | १ | ८ | व्याप्तं, | व्याप्तं |
| ४०४ | २ | १७ | पात्व | पात्वं |
| ४०५ | ,, | २ | पेक्ष | पेक्षं |
| ४०८ | १ | २६ | विनष्टा या | विनष्टाया |
| ४१८ | ,, | २ | व्यवस्था | व्यवस्था- |
| ,, | ,, | १४ | नीय | नीय- |
| ,, | ,, | ३३ | प्रत्यक्ष | प्रत्यक्ष- |
| ४२४ | २ | १४ | ४।३।१५ | ४।३।१४ |
| ४२५ | ,, | ६ | नम् इति। प्रा | नम्। इति प्रा |
| ४२६ | १ | ९ | विधिः। 'त | विधिः, 'त |
| ,, | ,, | ११ | अनुव | ‡ अनुव |
| ,, | ,, | १२ | 'सोमयागे | सोमयागे |
| ४२९ | २ | २७ | ) तद | ), तद |
| ४३० | १ | ११ | इन्द्रं | इन्द्र |
| ४३२ | ,, | १५ | लभ्येत एका | लभ्येत, एका |
| ,, | ,, | २५ | यादशा- | यादृगा- |
| ४४० | २ | १५ | स्मृतिः, | स्मृतिः |
| ४४६ | १ | १० | ३।४।५ | ३।४।९ |
| ४५५ | २ | ३२ | सर्वत्रग्रन्थे | सर्वत्र ग्रन्थे |
| ४६५ | ,, | २९ | यत्तु | * यत्तु |

| पृष्ठं | स्तम्भः | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|---|
| ४६९ | १ | १७ | तम् । तथा | तं, तथा |
| " | " | " | मपि, तत्रा | मपि । तत्रा |
| ४९० | २ | ३३ | न्यव्य | न्याव्य |
| ५०० | " | ७ | नाश्यशब्दाः | नाश्य शब्दाः |
| ५०७ | १ | १४ | विद्याभा | विद्याऽभा |
| ५१७ | " | १६ | तत्रं | तत्र |
| ५३३ | " | २२ | धम | धर्मं |
| ५६६ | २ | १५ | पति० | पतिः ० |
| ५७२ | १ | १० | पुनः श्रुति | पुनःश्रुति |
| ५७५ | २ | १५ | पद्यते, का | पद्यते का |
| ५७७ | " | ११ | विधयो | विधयः |
| ५८७ | " | ४ | ' एवं | एवं |
| " | " | ५ | क्रियते ' | क्रियते |

# मीमांसाकोषः

शबरकुमारिलगुरवो मण्डनभवदेवपार्थसारथयः ।
अन्ये च विश्वमान्या जयन्ति संत्रायमाणास्ते ॥

**अंशांशिन्यायः—** अंशांशिन्यायेन तयोः (जीवब्रह्मणोः) भेदाभेदो युक्तः । **श्रीकर.** ३।२।२९. अंशः अवयवः, अंशः अस्यास्तीति अंशी अवयवी, तयोः न्यायः पद्धतिः रीतिः । शरीरस्य षडवयवाः, शिरः हस्तौ पादौ मध्यं चेति । तत्र शिरआदिका अवयवाः, शरीरं अवयवि । अनयोः भेदेन अभेदेन चेति द्विविधोऽपि व्यवहारो दृश्यते । युक्तिश्चोभयत्रापि समाना । तद्वदन्यत्रापीति । **के.** *अंशांशिन्यायेन परमात्मनः सकलभूतान्तर्यामित्वमुच्यते । **श्रीकर.** ३।३।३५ पृ. ३७४.

**अंशुग्रहः—** 'परा वा एतस्यायुः प्राण एति, योंऽशुं गृह्णाति' अंशुं इत्यत्र यजतेरश्रवणेऽपि नामविशेषबलादेव अपूर्वयागविधिः **इति प्राप्ते,** ग्रहस्यैवात्र विधिः । तस्मात् ज्योतिष्टोमे गुणविधिः इति सिद्धान्तः । **वि.** २।३।९. *अंशुग्रहः ज्योतिष्टोमे एव विधीयते, न तु यागान्तरम् । **भा.** २।३।९।२०. * अंशुग्रहणे विहितं हिरण्यं 'स्तेनं मनोऽनृतवादिनी वाक्' इत्यनेन स्तूयते । तत्र स्तेनमिति प्रच्छन्नं रूपं लक्ष्यते, अनृतवादिनी इति प्रायेण अनृतवदनस्वभावत्वं लक्ष्यते । मनः स्तेनवत् प्रच्छन्नं, वाक् प्रायेण अनृतवदनशीला, हिरण्यं तु तद्दोषद्वयरहितं इति । **कु.** १।२।१।११.

**अंश्वदाभ्यग्रहयोः संयोगपृथक्त्वेन काम्यत्वं नित्यत्वं च ॥** औपानुवाक्ये विहितयोरंश्वदाभ्ययोर्मा-व्याकाङ्क्षायां न्यायानुसंधानसापेक्षज्योतिष्टोमोपकारापेक्षया 'भ्रातृव्यवताऽदाभ्यो ग्राह्यो बुभूषताऽंशुः' इतिवचनेन वैरिमरणादेरेव फलस्य झटित्युपस्थितेः काम्यावेवैतौ ग्रहौ **इति प्राप्ते,** 'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते, परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाति' इति वचनयोर्वैयर्थ्यापत्तेः संयोग-पृथक्त्वेनोभयार्थत्वम् । अग्निहोत्रस्येवोत्पत्तिविधिफल-विधिपरत्वेनोभयसार्थक्येऽपि प्राकरणिकाभ्यां विधिभ्यां क्रत्वर्थत्वमनपोह्यमेव । **संकर्ष.** ३।३।१५.

**अंश्वदाभ्यग्रहौ—** अंश्वदाभ्यग्रहयोः उत्पत्ति-वाक्यस्य अनारभ्याधीतत्वेऽपि विनियोजकं वाक्यं ज्योतिष्टोमप्रकरणाधीतम् । 'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' इति । **वि.** ३।६।११. * अंश्वदाभ्यशब्दाभ्यां सोमे अपरौ ग्रहाभ्यासौ विधीयेते, न यागान्तरम् । **भा.** २।३।९।२०. * अंश्वदाभ्यौ विधीयमानौ न कर्म भिन्तः । यस्मिन् कर्मणि भवतः तत्रापरौ ग्रहाभ्यासौ विज्ञायेते, न कर्मान्तरे इति । **भा.** १०।६।१३।३८. * अंश्वदाभ्यग्रहौ क्रतुशेषः, न तु सवनशेषः इति आदौ सकृदेव ग्राह्यौ, न प्रतिसवनम् । **भा.** ५।३।६।१५–१६. * अंश्वदाभ्यादीनां येषामनारभ्याधीतानां प्राकरणिको विनियोगः, तत्रापि विधिपाठबलादेव अनुष्ठानसिद्धिः । अत एव न तयोरन्ते करणं, अपि तु प्रातःसवने एव धाराग्रहेभ्यः पूर्वमेव । **भाट्ट.** ५।३।६. *एकधना-सादनोत्तरं अध्वर्युः दधि–अंशु–अदाभ्य–उपांशु–अन्तर्या-मग्रहैः क्रमात् प्रचरति । तावदयं होता वाचं नियम्य आस्ते । **ऐब्रासा.** ८।३।१.

**अंश्वदाभ्ययोः दधिग्रहानन्तरं यागः ॥** औपानुवाक्यकाण्डे च प्रकरणेऽवभृथात्परतश्चांश्वदाभ्य-विधिद्वयं पठ्यते, तन्मन्त्रौ तूपांश्वादिभ्यः पूर्वमाम्नातौ । तत्रानारभ्याधीते सर्वक्रतूनामुपस्थित्यविशेषेऽपि द्विरुक्त-

त्वादिदोषपरिहारानुगुणनिवेशानुसंधानसापेक्षात् तस्मात् प्राकरणिकवाक्यस्य प्रबलत्वेन तत्रैवांश्वदाभ्ययोरुत्पत्तिविधी । एतदनुवादेनौपानुवाक्यकाण्डे गुणविधयः, तेषां प्रधानविधिपारतन्त्र्येणैव प्रकृतिगामित्वसंभवात् । तस्मादवभृथानन्तरमेव पाठक्रमात्तयोः प्रचार इति प्राप्ते, ‘ भूयस्त्वेनोभयश्रुति ’ ( ३।३।३।१० ) इति न्यायेनौपानुवाक्ये एव गुणविधिबाहुल्यात्प्रधानविधिरपि । तत्र च प्राकृताङ्गान्तरैः सह पाठक्रमाभावादितरग्रहप्रचारकाले एव तयोः प्रचारः । वस्तुतस्तु औपानुवाक्ये एव विधिस्वीकारेऽपि तस्य प्रकृतौ ‘ अन्ते तु बादरायणः ’ इति न्यायेन ( ५।२।९।१९ ) क्लृप्तक्रमकग्रहाणां परत एव निवेशे प्राप्ते प्राकरणिकपुनःपाठवैयर्थ्यपरिहाराय तस्य क्रमार्थकत्वं स्वीकर्तुं युक्तमिति न पूर्वोत्तरपक्षयोः फलभेदः । यदि ब्राह्मणपाठात्प्रबलेन मन्त्रपाठेनोपांश्वन्तर्यामादिग्रहेभ्यः पूर्वमेव प्रचारः इत्युच्यते, तर्हि तत एव पूर्वपक्षेऽपि तत्रानुष्ठानं सिध्यति । वस्तुतः ‘ व्यवनीयापो दधिग्रहेण चरित्वांश्वदाभ्यौ चरति ’ इति श्रौतक्रमेणैव सिद्धेः प्राप्तिसूत्रमेवैतत् । एवं पशुशीर्षोपधानेऽपि । **संकर्ष.** ३।३।१४.

**अंश्वदाभ्ययोरपि सादनादयो ग्रहधर्माः सन्ति ।**

**आराच्छिष्टमसंयुक्तमितरैरसंनिधानात् ।३।६।११।३२ ॥**

**भाष्यं**—दूरात् यत् शिष्यते ज्योतिष्टोमस्य यथा औपसदानुवाक्यकाण्डे अंश्वदाभ्यौ । तत्र संदेहः; किं ज्योतिष्टोमसमाम्नाता ग्रहधर्माः कर्तव्या उत नेति । किं प्राप्तम् ? न कर्तव्याः, असंनिधानात् । यथा ‘ पयसा मैत्रावरुणं श्रीणाति ’ इति वचनात् मैत्रावरुणस्यैव श्रयणं, न सर्वेषाम् । एवमिदमपि धर्मजातं प्रकरणस्थानामेव, न सर्वेषामिति ।

**वा**—प्रसङ्गात् वाक्यप्रकरणविरोधाविरोधौ विचार्येते । तत्र स्थानं बाधित्वा प्राकरणिकग्रहार्थां ग्रहधर्माः इति प्रतीतेः अनारभ्याधीतार्थत्वं अशक्यं प्रत्येतुम् । तेन असंयुक्तमित्याह ( आराच्छिष्टमिति सूत्रम् ) ।

**संयुक्तं वा तदर्थत्वाच्छेषस्य तन्निमित्तत्वात् ।३३॥**

**भाष्यं**—संयुक्तं वा धर्मैः एवंजातीयकं स्यात् अप्रकरणस्थमपि । कुतः ? यतः प्रकरणात् वाक्यं बलीयः । ननु अन्यत्र क्रियमाणा ज्योतिष्टोमस्य नोपकुर्युः । उच्यते । उपकरिष्यन्ति । अंश्वदाभ्ययोः तदर्थत्वात् ज्योतिष्टोमार्थत्वात् । तच्छेषोऽयं ग्रहधर्मः ग्रहनिमित्तो ज्योतिष्टोमस्योपकारकः । यावान् ग्रहो ज्योतिष्टोमस्योपकरोति तस्य सर्वस्य भवितुमर्हति । तस्मात् अंश्वदाभ्ययोरपि ग्रहधर्माः कर्तव्याः इति ।

**वा**—प्रकरणस्य अविशेषकत्वात् ज्योतिष्टोमापूर्वसाधनस्यैव एते इत्येवं सुराग्रहादिभ्यो निवर्तमानाः प्रकरणे व्यवतिष्ठन्ते । येषां तु अप्रकरणाधीतानामपि तदस्ति, ते पूर्वेणैव न्यायेन वाक्यसंयोगात् धर्मवन्तो भवितुमर्हन्ति । अंश्वदाभ्यादीनामपि धर्मवत्ता ।

**निर्देशाद् व्यवतिष्ठेत । ३४ ॥**

**भाष्यं**—यदुक्तं, यथा ‘ मैत्रावरुणं पयसा श्रीणाति’ इति, तदुक्तम् । श्रयणे वचनात् प्रकरणं बाधित्वा व्यवस्थानम् । इह तु विपरीतम् । तत्र सर्वेषु ग्रहेषु प्रकरणं, विशिष्टेषु वाक्यम् । इह तु सर्वेषु ग्रहेषु वाक्यं, विशिष्टेषु प्रकरणम् । तस्मात् अप्रकरणस्थस्यापि धर्मा इति ।

**वा**— मैत्रावरुणादिश्रयणादीनां प्राकरणिकसर्वार्थत्वबाधेन वाक्यात् व्यवस्था । अत्र तु प्राकरणिकव्यवस्थाबाधेन वाक्यात् सर्वार्थत्वं इत्यदृष्टान्तः ।

**शा**—ते ( ग्रहधर्माः ) किं अनारभ्याधीतयोः अंश्वदाभ्ययोरपि संभवन्ति उत प्राकरणिकानामेवेति संशयः । ‘ तत्र प्रकरणादेते तद्वर्तिग्रहमात्रगाः । नाऽनारभ्य समाम्नातग्रहार्थाः स्युरसंनिधेः ॥ ’ ( इति पूर्वपक्षन्यायः ) । उच्यते । ’ ग्रहाणां प्रक्रिया ( प्रकरणं ) नास्ति, यथा धर्मव्यवस्थितिः । नापि प्रकरणं तेषां विशेषणतयेष्यते ॥ यजेः प्रकरणं तेन प्रकृतेन विशेषणात् । धर्मास्तत्साधनानां हि ग्रहाणां शेषतामियुः ॥ ये चानारभ्य विहिता ये च प्रकरणे ग्रहाः । सर्वे तत्साधनत्वात् तद्धर्मसंबन्धमाप्नुयुः ॥ ’ ( इति सिद्धान्तन्यायः ) ।

**सोम**— समानविधानप्रसङ्गामता प्रासङ्गिकी संगतिः । सूत्रार्थस्तु—आरात् दूरे, शिष्टं अनारभ्या-

धीतमिति यावत्, तत् अंश्वदाभ्यग्रहद्वयं धर्मैरसंबद्धं, तेषां संनिधानात् आरभ्याधीतग्रहैरेव संबन्धादिति (इतरैः संनिधानात् इति सूत्रे पाठोऽत्र। )

**वि**— 'ग्रहधर्मा अनारभ्योक्तांश्वदाभ्यद्वये नहि। विद्यन्ते वा, प्रकरणादाद्यो, वाक्यादिहान्तिमः ॥' तस्मात् सन्ति तयोर्धर्माः।

**भाट्ट**— ग्रहधर्माणां ग्रहस्वरूपे आनर्थक्यप्रसक्तौ ग्रहयागाभ्यासापूर्वसाधनत्वमेव ग्रहपदेन लक्ष्यते दीक्षणीयावाङ्नियमन्यायेन (९।१।२ वर्णकं २) न तु ज्योतिष्टोमापूर्वसाधनत्वम्। अतश्च प्रकरणोपस्थितापूर्वसाधनत्वस्यैव लक्षणात् न अनारभ्याधीतांश्वदाभ्ययागाभ्यासापूर्वसाधनत्वं धर्माणां **इति प्राप्ते,** प्रकरणादन्येषामिव अनुष्ठानसादेश्यात् अनारभ्याधीतानामपि उपस्थितेः वाक्यसंकोचे प्रमाणाभावादेव सर्वार्थत्वम्। अत एव प्रबलेन दुर्बलेन वा प्रमाणेन साधनत्वेनावगतानां सर्वेषामेव हविषां वेद्यादिकमङ्गम्। वस्तुतस्तु अंश्वदाभ्ययोः अनारभ्योत्पन्नयोरपि प्राकरणिकेन वाक्येनैव क्रत्वङ्गता इति तुल्यत्वमेव।

**न्यायबिन्दुः**— ग्रहधर्माः प्राकरणिकग्रहाणामेव **इति प्राप्ते,** यागसाधनत्वाविशेषात् अनारभ्याधीतानामपि इति सिद्धान्तः।

**मण्डन**— 'अंशुग्रहाङ्गं प्रकृतिस्थधर्माः।'

**शंकर**— 'ग्रहधर्माश्च सर्वार्थाः।'

**अंश्वदाभ्याधिकरणम्।** अंश्वदाभ्यग्रहयोरनारभ्याधीतयोर्ज्योतिष्टोमे एव विधानम्।

**अद्रव्यत्वात् केवले कर्मशेषः स्यात्।२।३।९।२०॥**

**भाष्यं**— न कस्य चिदपि प्रकरणे श्रूयते 'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते' इति। तथा 'परा वा एतस्यायुः प्राण एति, योंऽशुं गृह्णाति' इति। तत्र संदेहः, किं यागान्तरमेतत् ग्रहणकं उत ज्योतिष्टोमयागे ग्रहविधिः इति। किं प्राप्तं? यागान्तरमिति। कुतः? अपूर्वनामधेयसंयोगात्। न प्रकृतौ एतन्नामधेयको यागोऽस्ति। न ग्रहः कश्चित् योऽभ्यस्येत। तस्मात् यागान्तरम्। ननु द्रव्यदेवतं न श्रूयते। मा भूत् द्रव्यदेवतं, साक्षादेव यजतिशब्दो विद्यते। तस्मात् कर्मान्तरं अदाभ्यसंज्ञकं अंशुसंज्ञकं (च) यागं करोति इत्येवं प्राप्तम्। **एवं प्राप्ते ब्रूमः।** अद्रव्यदेवताके केवले नामधेये श्रूयमाणे ब्रूमः, ज्योतिष्टोमे एव ग्रहाभ्यासविशेषविधानं इति। कुतः? एतत्तावत् ग्रहस्य नामधेयं, न यागस्य, ग्रहणेन साक्षात् संबन्धात्, व्यवहितत्वाद्यागस्य। अंशुरिति च मुक्तसंशयमेव ग्रहनामधेयम्। न च ग्रहभेदे यागभेदो भवति। न च द्रव्यदेवतं श्रूयते, यतो गृह्णातिः यजिमद्वचनो भवेत्। यदप्युक्तं, साक्षादत्र यजतिशब्दो विधायक इति, नैवं शक्यं कर्मान्तरं विधातुम्। विहितयागवचनो हि सः, विशेषाभावात्। तस्मात् यजतिना ज्योतिष्टोमः एवोच्यते। अंश्वदाभ्यशब्दाभ्यामपि अपरौ ग्रहाभ्यासौ विधीयेते इति सिद्धम्।

**वा**— अनारभ्याधीतयोः अंश्वदाभ्यग्रहयोः आलम्भादिवत् (२।३।६।१६) त्रेधा संदेहः। तद्वदेव च पक्षद्वयं निराकृत्य यजिमती चोदना इति प्रतिज्ञायते। किंच 'प्रकृतादपि भेत्तृत्वं नामधेये व्यवस्थितम्। किमुताप्रकृतेभ्योऽत्र, यत्र नैवास्त्यभेदधीः॥' नह्येतन्नामधेयं प्रकृतौ कस्य चित् प्रसिद्धं, यस्य पुनःश्रुतिसामर्थ्यात् द्विरभ्यासः क्रियते। तस्मात् गृह्णातिचोदनासामान्येन ज्योतिष्टोमप्रकृतिः (तिकः) एकाहोऽयं चोद्यते इति मन्यामहे। न च वत्सालम्भतुल्यत्वम्। एकत्र यजतेः प्रत्यक्षत्वात् अन्यत्र च अव्यभिचारिण्या संज्ञया अन्यत्वे कल्पिते, गृह्णातिना समस्तज्योतिष्टोमधर्मप्राप्तेः द्रव्यदेवतासंबन्धसिद्धिः। अतो यागान्तरत्वम्। **इति प्राप्ते** अभिधीयते। 'ग्रहणं नामधेयं च केवलं यत्र गम्यते। वत्सालम्भादपि न्यूनं तदद्रव्यतयेष्यते॥' देवता तावत् दूरभ्रष्टैव (**सुधा**— 'सोमाय यजते' इत्यस्य अनुवाद्ययागविशेषत्वायोगात्, पश्चात् श्रुतत्वाच्च सोमाय गृहीत्वा इत्यन्वयाप्रतीतेः 'यत्ते सोमादाभ्यं नाम जागृवि तस्मै ते सोम सोमाय स्वाहा' इतिमन्त्रवर्णप्राप्तदेवतानुवादोपपत्तेश्च देवताविधित्वायोगात् दूरभ्रष्टता उक्ता)। यत् गृह्यमाणं द्रव्यं, तदपि न केन चिदुपात्तम्। नहि जात्या गुणेन च विना द्रव्यमुपलक्षयितुं शक्यम्। न च योगेऽनवधारिते ज्योतिष्टोमवद्भावोऽस्ति, येन सोमग्रहणमेतत् इति विज्ञायेत। न च गृह्णातिः ज्योतिष्टोमं न व्यभि-

चरति, उपादानमात्रवचनत्वात् । न चैते यागनामनी, येन तं भिन्द्याताम् । ग्रहणसामानाधिकरण्याद्धि तन्नामत्वमनयोः । इष्यते एवास्माभिः अत्र ग्रहणभेदः । न च तावता यागान्तरत्वं भवति । द्रव्यदेवतासंयोगेऽपि च एवंजातीयकानां यजिमत्त्वं निराकृतं 'अचोदकाश्च संस्काराः' (२।२।६।१८) इति । अत्र पुनस्तदपि न विद्यते । योऽपि अदाभ्यवाक्ये यजतिः, सोऽपि रेवतीवारवन्तीयपूर्वपक्षन्यायेन ( २।२।१२।२७ ) संक्रान्तविधिशक्तिना प्रत्ययेन विधीयते । तस्मात् यागमनूद्य ग्रहणविधानमेवैतत् । अंशोः कथं यागसंबन्ध इति चेत् ? गृह्णातिसामान्योपस्थितेन ज्योतिष्टोमेन इति **केचित्** । अस्त्येव तु अनयोः तैत्तिरीयाणां ज्योतिष्टोमप्रकरणे (तैसं. ६।६।९–१०) पुनःश्रवणम् । तदन्यत्रप्रयोजनत्वात् कर्मविनियोगं करिष्यति । यथा सामदश्यस्य अनारभ्यवादेन सामिधेनीसंबन्धितया उत्पत्तेः, प्राकरणिकैश्च वचनैः विनियोगात् अर्थवत्त्वं, एवमिहापि द्रष्टव्यम् । तेन 'संस्कारश्चाप्रकरणेऽकर्मशब्दत्वात्' (२।३।५।१२) इत्ययमेव पक्षः ।

**शा**—किं ज्योतिष्टोमे ग्रहणविधिः उत यागान्तरविधिः । तदर्थं च किं अंशुं अदाभ्यं इति यागनामनी ग्रहणनामनी वेति । तत्र ग्रहणस्य संस्कारत्वात् अवघातादिवत् नामधेयानर्हत्वात् यागनामत्वं 'अदाभ्यं यजते' इति । नाम च प्रकृतादपि भेदकं इत्युक्तं ( भा. २।२।८।२२ ) किमुत अप्रकृतादेव ज्योतिष्टोमात् । अंशौ तु यद्यपि यजतिर्न श्रुतः, तथापि संज्ञयैव तावत् कर्मान्तरं कल्प्यते । तच्च गृह्णातिचोदनासामान्यात् ज्योतिष्टोमप्रकृतिकं इति तदीयविध्यन्तप्राप्तेः द्रव्यदेवतासंबन्धात् यागो भविष्यति । तस्मात् यागान्तरे इति । उच्यते । 'संस्काराणां न नामानि वार्यन्ते राजशासनात् । आनन्तर्यादतः स्यातां ग्रहयोरेव नामनी ॥ अंशौ तावद्यजिर्नास्ति श्रुतस्तन्नामता कुतः । अदाभ्ये श्रूयमाणोऽपि व्यवधानान्न नामभाक् ॥ तदिह ग्रहयोरेव भेदो नामवशाद् भवेत् । न तु यागस्य, तेनात्र विधीयेते ग्रहावुभौ ॥ तयोर्गृह्णात्युपस्थानात् ज्योतिष्टोमेन संगतिः ॥ अथवा तैत्तिरीयाणामनयोर्विनियोजकम् । अस्ति प्रकरणे वाक्यं तेन तादर्थ्यमेतयोः ॥ अदाभ्ये श्रूयमाणोऽपि गुणसंक्रान्तशक्तिना । विधिना न विधातव्यो यागस्तेन न भिद्यते ॥ अंशौ त्वश्रुत एवेति विधेयौ केवलौ ग्रहौ ॥ '

**सोम**—अप्रकृतत्वोक्त्यैव पूर्ववत् प्रत्यभिज्ञाविरहात् यागान्तरविधिः इति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु—अद्रव्यत्वात् द्रव्यस्य तदुपलक्षितदेवतायाश्चालाभात् केवले गृह्णातौ कर्मशेषः ज्योतिष्टोमकर्माङ्गविधिरेव स्यात् इति ।

**वि**— 'यददाभ्यं गृहीत्वेति गृह्णात्यंशुमिति द्वयम् । तद्यागो वा गुणो, यागः स्याददाभ्यांशुनामतः ॥, ग्रहयोरेव नाम स्यादानन्तर्याद्विधिस्तयोः । गुणोऽतस्तस्य वाक्येन ज्योतिष्टोमाभिगामिना ॥ ' इति ।

**भाट्ट**—अनारभ्य श्रुतं 'एष ह वै हविषा हविर्यजति योऽदाभ्यं गृहीत्वा सोमाय जुहोति, परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाति' इति । अत्र हविः सोमः, स एव देवता, स एव द्रव्यमिति प्रथमस्यार्थवादस्यार्थः । प्राण आयुर्मर्यादामभिवर्धयते इति द्वितीयस्यार्थः । तत्र न तावत् ग्रहणमेव ज्योतिष्टोमे विधीयते, संस्काररूपस्य ग्रहणस्य अवघातादिवत् अंश्वदाभ्यनामकत्वानुपपत्तेः, द्वितीयान्तयोस्तयोः संस्कार्यद्रव्यनामत्वाङ्गीकारे तु अव्यभिचरितक्रतुसंबन्धाभावात् न द्रव्यमात्रोद्देशेन ग्रहणविधिसंभवः । अतो द्रव्यदेवताविशिष्टयागान्तरविधानमेवेदम् । अदाभ्यपदेन हिंसानर्हसोमाख्यद्रव्यस्य, अंशुपदेन च निर्यासद्रव्यस्य अभिधानात् । द्वितीया चोभयत्र सक्तुन्यायेन (२।१।४।१२) । देवता तु एकत्र सोमः, अन्यत्र 'प्रजापतये स्वाहा' इतिमन्त्रवर्णात् प्रजापतिः । गृह्णातिश्च आद्ये अनुवादः, द्वितीये यागलक्षकः । तयोश्च यागयोः प्राकरणिकैतत्समानजातीयतैत्तिरीयशाखास्थवाक्यात् ज्योतिष्टोमाङ्गत्वं **इति प्राप्ते,** गृह्णातौ यागलक्षणायां प्रमाणाभावात्, आद्यवाक्ये गुणसंक्रान्तशक्तिना विधिना ग्रहणस्यैव विधेयत्वावगमाच्च उभयत्रापि ग्रहणमेव उक्तसंज्ञकं उक्तसंज्ञकद्रव्यसंस्कारकत्वेन वा विधीयते । एवं च विनियोगभङ्गोऽपि द्वितीयायाः न कल्पितो भवति ।

देवता तु सोमरूपा आद्यवाक्ये ग्रहणे एवान्वेति, इति देवताविशिष्टं ग्रहणमेव तत्र विधीयते। द्वितीये तु 'उपयामगृहीतोऽसि प्रजापतये त्वा जुष्टं गृह्णामि' इतिमन्त्रवर्णात् ग्रहणाङ्गतया देवताप्राप्तिर्द्रष्टव्या। होममन्त्रस्तु उत्तरभावियागोपकारकत्वमादाय नेयः। देवताविशिष्टग्रहणद्वये च प्राकरणिकवाक्येन ज्योतिष्टोमाङ्गत्वस्य तदुपपाद्यत्वस्य च बोधोपपत्तेः न कश्चिद्विरोधः। **प्रयोजनं** पूर्वपक्षे यागस्याङ्गत्वात् यथाशक्तिन्यायविषयत्वं, सिद्धान्ते प्रधानत्वान्नेति।

**न्यायबिन्दुः**— 'योऽदाभ्यं गृहीत्वा सोमाय यजते' 'योंऽशुं गृह्णाति' इति वाक्ययोः कर्मान्तरविधिः संज्ञाभेदात्। ग्रहणसंस्कारविधौ तु तस्य नामधेयादर्शनात् तदनुपपत्तिः। अंशुवाक्ये यागाश्रवणेऽपि गृह्णातिलिङ्गात् ज्योतिष्टोमातिदेशेन द्रव्यदेवताप्राप्तौ यागसिद्धिः **इति प्राप्ते**, अंश्वदाभ्यग्रहयोरेव ज्योतिष्टोमे विधानं, संस्कारस्यापि नामवत्त्वे बाधकाभावात्। न तु यागविधिः, गुणमात्रे विधितात्पर्यात्, अंशौ यागाश्रवणाच्चेति सिद्धान्तः।

**मण्डन**— 'अदाभ्यः प्रकृतौ ग्राह्यः।'

**शंकर**— 'अंश्वदाभ्यौ ग्रहावेव।'

*अंश्वदाभ्याधिकरणम्। २।३।९, ३।६।११ इदं द्वयमपि अंश्वदाभ्याधिकरणमेव। तत्र पूर्वाधिकरणे अंश्वदाभ्यशब्दयोः ग्रहनामतया ज्योतिष्टोमाङ्गत्वं साधितम्। उत्तरत्र तु तयोः ग्रहधर्मवत्ता साधिता इति भेदः। **के.** * अंश्वदाभ्याधिकरणे 'प्रकरणात् वाक्यं बलीयः' इत्येव बीजं न्यायत्वेन स्वीकृतं भाष्ये। **के.** * अंश्वदाभ्यन्यायेन उपांश्वन्तर्यामशब्दयोरपि नामत्वम्। **सोम.** पृ. ६७. * 'अद्रव्यत्वात् केवले कर्मशेषः स्यात्' (२।३।९।२०) इति अंश्वदाभ्यन्यायेन यागान्तरत्वायोगात्। **सु.** पृ. ८८०.

**अकर्मकत्वम्**—अकर्मकः धातुः। 'साक्षादव्यभिचारेण धात्वर्थो यत्र कर्मभाक्। सकर्मकः स धातुः स्यात् पारंपर्ये त्वकर्मकः॥' आसनशयनादौ हि न नियमेन आनन्तर्येण वा इदं तदिति वा कर्म निरूप्यते, तेन अकर्मका अभिधीयन्ते। पचिगम्यादीनां तु विक्लिद्यत्तत्संयुज्यमानसाक्षात्संबन्धिकर्माव्यभिचारात् सकर्मकत्वम्। न तु भावनाविशेषणे कश्चित् विशेषः। **वा.** २।१।१।१ पृ. ३८५. * अकर्मकत्वं धातोः फलसमानाधिकरणव्यापारवाचित्वम्। **रहस्य.** पृ. ४९.

'धातूपात्तफलसमानाधिकरणव्यापारवाचित्वं' इति वैयाकरणमतम्। पृ. ८९. * अकर्मकाख्यातानामपि तत्—(करोति) सामानाधिकरण्यदर्शनात् 'किं करोति? आस्ते' 'किं करोति? शेते' इति सिद्धा एवमादिष्वपि सकर्मिका भावना। तस्मात् सकर्मकाकर्मकयोरविशेषात् 'आसनेन भावयेत्' इत्यपि प्रयोगसिद्धिः। **वा.** २।१।१।१ पृ. ३८५. * धात्वर्थसाध्यस्य कर्मणः अकर्मकेषु अभावात् न सर्वेषां सकर्मकत्वापत्तिः। भावनानिबन्धनस्य कर्मणः सर्वत्र भावात् न अकर्मकेभ्यः भावनाऽनुपपत्तिः। **सु.** पृ. ५८५. * पुरुषनिष्ठव्यापारवाचित्वेन कर्मानाकाङ्क्षत्वात् अकर्मकत्वं द्रष्टव्यम्। **रहस्य.** पृ. ५१.

**अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात्। ३।४।४।१२॥**

क्रतुसंयुक्तं दर्शपूर्णमासप्रकरणाधीतं अकर्म कर्माभावप्रतिपादकं अनृतवदननिषेधकं 'नानृतं वदेत्' इति वाक्यं, संयोगात् पुरुषरूपकर्तृवाचकाख्यातसमभिव्याहारात् पुरुषार्थं स्यात्, न विधिः। यदि तु स्मृत्यैव पुरुषार्थतया अनृतवदनं निषिद्धं इत्युच्येत तदा श्रौतोऽयं निषेधः नित्यानुवादः स्यात्, इति पूर्वः पक्षः।

**विधिर्वा संयोगान्तरात्। १३॥**

पूर्वपक्षसूत्रेण प्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह। विधिरयं नानुवादः, संयोगान्तरात्। नियमानुष्ठानेन पुरुषस्य संबन्धः स्मर्यते। पदार्थप्रतिषेधेन इह संयोगः पुरुषस्य। कथमन्यत् श्रूयमाणं अन्यस्यानुवादो भविष्यति। स नाम अनुवादो भवति, यः अत्यन्तसमानार्थत्वेन अवधार्यते। विधिप्रतिषेधयोश्च फलभेदादर्थभेदः। विधिः श्रेयःसिद्ध्यै, प्रतिषेधः पापानिवर्तनायेति। तस्मात् अनृतवदननिषेधस्य विधिरेवायं, इति सिद्धान्तः। **के.**

'ꕤ **अकामस्य क्रिया का चित् दृश्यते नेह कर्हि चित्। यद्यद्धि कुरुते जन्तुस्तत्तत्कामस्य चेष्टितम् ॥**' ( मनुः २।४ ) इति न्यायः। अनेन पुंसः सकलकर्माचरणकारणं सर्वानर्थबीजं काम एवेति बोधितमिति। योग्यत्वायोग्यत्वविचारमन्तरेण वस्तु दृष्टं श्रुतं च कामयति पुमांसमिति कामः। वैषयिकी प्रबलेच्छा अत्र कामशब्देनोच्यते। अत एवोक्तं भगवता—' काम एष क्रोध एष रजोगुणसमुद्भवः। महाशनो महापाप्मा विद्ध्येनमिह वैरिणम् ॥' ( भगी. ३।३७ ) इति। **साहस्री.** ५२२.

ꕤ **अकार्यत्वाच्च ततः पुनर्विशेषः स्यात्। ६।७।३।४ ॥**

विश्वजिति यागे भूमिदानमिव अश्वदानमपि न कर्तव्यं इति चशब्दार्थः। ततः गोसुवर्णादिधनात् पुनः अश्वदानस्य अकार्यत्वात् ' न केसरिणो ददाति ' इति अकर्तव्यत्वाभिधानात् हेतोः विशेषः स्यात्। गवादिधनदानात् अश्वरूपधनदानस्य निषिद्धत्वरूपो विशेषः। तस्मात् विश्वजिति अश्वा न देया इति सिद्धान्तः। **के.**

* अकार्यत्वाच्च ततः पुनर्विशेषः स्यात् ( ६।७।३।४ ) इत्यत्र सर्वस्वदानेऽपि विश्वजिति प्रतिषिद्धत्वात् अश्वादीनामदानं इति वक्ष्यति। **चा.** ३।१०।२८ पृ. ९६१.

ꕤ **अकाले कृतमकृतं स्यात्** इति न्यायेन चतुर्थीकरणादूर्ध्वं विष्णोरावाहनस्य निरर्थकत्वात्। **वि.** १०।१।१ वर्णकं ३। अकाले अयोग्ये विपरीते वा काले कृतमपि कर्म निष्फलं भवति, इति तत् अकृतमिव स्यात्। यथा अकृते न फलं, तथा कृतेऽपि न फलं तद्वत्। **के.** * अकाले प्रारम्भस्य दोषजनकत्वं सामान्यमुखेन। **भाट्ट.** ६।५।१. * अकालकृतमकृतं इति प्रसिद्धिः। **रसायन.** पृ. २०७.

ꕤ **अकृतः सोऽपि नास्तीति पुनःकरणवाच्छनम्।** श्रुतायां भावनायां करणत्वेऽपि अग्निहोत्रादेः धात्वर्थस्य ' अकृतः सोऽपि० ' इति न्यायेन अर्थाक्षिप्तायां धात्वर्थनिष्पादिकायां ईप्सितत्वात् प्राधान्यं युक्तम्। **सु.** पृ. ६६४.

ꕤ **अकृतव्यूहाः पाणिनीयाः** इति न्यायः। न कृतः विशिष्टः ऊहो यैस्ते अकृतव्यूहाः। पाणिनीया इति पदं उपलक्षणमात्रम्। बुद्धिमन्तः ऊहापोहकुशलाः पुरुषा निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्तीत्यर्थः। **साहस्री.** ३४८. * न कृतः विशिष्टः ऊहो निश्चयः शास्त्रप्रवृत्तिविषयः यैः इत्यर्थः। भाविनिमित्तविनाशः इत्यध्याहारः। बहिरङ्गेण अन्तरङ्गस्य निमित्तविनाशे पश्चात् संभाविते अन्तरङ्गं नेति यावत्। **कैयटस्तु** न कृतः व्यूहः विशिष्टस्तर्कः निमित्तकारणविनाशेऽपि कार्यस्थितिरूपो यैः इत्यर्थमभिप्रैति। निमित्तापाये नैमित्तिकस्याप्यपायः इति यावत्। **शेखर.** परि. ५६. निमित्तं विनाशोन्मुखं दृष्ट्वा तत्प्रयुक्तं कार्यं न कुर्वन्ति इत्यर्थः ( परिभाषायाः ) इति **सिद्धान्तकौमुदी**-परिभाषाप्रकरणान्ते। ऊह्यते तर्क्यते इत्यूहः कार्यम्। विशिष्टो य ऊहः विनाशोन्मुखनिमित्तकं कार्यम्। अकृतः व्यूहो यैस्ते अकृतव्यूहाः इति **तत्त्वबोधिनी**। पाणिनिना प्रोक्तं व्याकरणं अधीयते विदन्ति वा पाणिनीयाः वैयाकरणाः इत्यर्थः। **के.**

ꕤ **अक्लृप्ताभावकस्य अभावकल्पनापेक्षया क्लृप्ताभावस्यैव तत्कल्पनं उचितं** इति न्यायः। **साहस्री.** ६२.

ꕤ **अक्लृप्ता लक्षणा क्लृप्तया लक्षणया बाध्यते।** यथा ' ऋग्भिः प्रातर्दिवि ( पूर्वाह्णे दिवि ) देव ईयते यजुर्वेदे तिष्ठति मध्ये अह्नः। सामवेदेनास्तमये महीयते वेदैरशून्यस्त्रिभिरेति सूर्यः ॥' इत्यत्र ऋगादिशब्दानां वेदपरा लक्षणा क्लृप्ता, इति ' उच्चैर्ऋचा क्रियते ' इत्यत्र ऋगादिशब्दा एव वेदपराः न वेदपदं ऋगादिलक्षकं तल्लक्षणाया अक्लृप्तत्वात्। **बाल.** पृ. १४३.

ꕤ **अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टार्थस्य च संसिद्धौ को विद्वान् यत्नमाचरेत् ॥** अक्के गृहकोणे। स्पष्टमन्यत्। ( अर्के अक्वे इति च पाठः )। यदि निजगृहकोणे माक्षिकं विन्देत तर्हि तल्लाभाय पर्वतं प्रति गमनं व्यर्थम्। तथा स्वात्मनि ब्रह्म

विज्ञाय ब्रह्मवेत्ता तदन्वेषणाय तीर्थादिषु न प्रयतते इति भावः । एवमन्यत्रापि यत्र अल्पायासेन अभीष्टसिद्धिर्जायते, तत्र बह्वायाससाध्ये प्रेक्षावतां न प्रवृत्तिः इति प्रदर्शनाय अस्य न्यायस्य प्रवृत्तिः । **साहस्री. ६.**

**अक्ताधिकरणम् ।**

**संदिग्धेषु वाक्यशेषात् । १।४।१३।२४ ॥**

**भाष्यं**— 'अक्ताः शर्करा उपदधाति, तेजो वै घृतम्' इति श्रूयते । तत्र संदेहः, किं घृततैलवसानामन्यतमेन द्रव्येण अञ्जनीयाः शर्करा उत घृतेनैवेति । कथं सदेहः ? अञ्जनसामान्येन वाक्यस्योपक्रमः, घृतेन विशेषेण निगमनं, यथोपक्रमं निगमयितव्यं एकस्मिन् वाक्ये । तत्र यद्वा सामान्यमादौ विशेषोपलक्षणार्थं विवक्ष्यते, यद्वा निगमने विशेषः सामान्यलक्षणार्थः, तदा आरम्भनिगमनयोः किं समञ्जसं इति संशयः । एवं संदिग्धेषु उपक्रमे सामान्यवचने विरोधाभावात् न विशेषः परिकल्प्यः । निगमने तु उपजातः सामान्यप्रत्ययः इति विरोधात् लक्षणार्थं घृतवचनम् । यथा सृष्टिषु असृष्टिषु च सृष्टिशब्दः, एवं घृतमघृतं च घृतमित्युच्यते । संदिग्धेषु **एवं प्राप्ते ब्रूमः** । सामान्यवचनेन विशेषापेक्षिणा उपक्रमो वाक्यस्य विशेषे निगमनवशेन । कुतः ? नहि सामान्यं विहितं, येन विरोधो निगमनस्य । कथमविहितम् ? संदिग्धेषु विधानशब्दाभावात् । नहि विधानशब्दोऽस्ति, 'अक्ताः शर्करा उपदधाति' इति वर्तमानकालनिर्देशात् । नापि सामान्यस्य साक्षात् स्तुतिः । प्रत्यक्षं तु घृतस्य स्तवनम् । श्रुत्या घृतस्य स्तुतिः, लक्षणया सामान्यस्य, श्रुतिश्च लक्षणाया ज्यायसी । तस्मात् घृतविधानम् ।

एवं 'वासः परिधत्ते, एतद्वै सर्वदेवत्यं वासो यत् क्षौमम्' इति । तथा 'इमां स्पृष्ट्वोद्गायेत्, इमां ह्यौदुम्बरीं विश्वा भूतान्युपजीवन्ति' इति ।

**वा**— 'विधिस्तुत्योः सदा वृत्तिः समानविषयेष्यते । तस्मादेकत्र संदिग्धमितरेणावधार्यते ॥' किं पुनरत्र संदेहकारणं ? विधौ सामान्यग्रहणं इति **केचित्** । तदयुक्तम् । तत्र तावन्मात्रनिर्णयात् । स्यादेतत् । कथं निर्विशेषं सामान्यं संभवतीति ? घृतवत् इति वदामः । तत्रापि च नवपुराणगव्यमाहिषादिसंदेहस्तदवस्थः । तेन यथा अत्र घृतमात्रनिर्णयात् असंदेहः, विशेषानभिधानेऽपि सर्वैः कार्यसिद्धिः, एवमिहापि स्नेहनसमर्थद्रव्यमात्रग्रहणात् असंदेहः । तस्मात् अर्थवादे घृतश्रवणात् संशयः **इत्यपरे** । तथापि न युक्तः, विशेषप्रतिपत्त्या निर्णीतत्वात् । नहि, 'गौरानीयतां शुक्लः' इत्यत्र कैश्चित् संदिह्यते । विषम उपन्यासः । कथं ? 'विधौ यदि विशेषः स्यात् संदेहः कस्य वा भवेत् । स्तुतिस्थे त्वितरस्यापि तुल्यैवैषा विचारणा ॥' यदि ह्येवं भवेत् 'अक्ताः शर्करा उपदधाति घृतेन' इति, ततो नैव किं चित् विचार्येत । अथ तु अञ्जनवाक्यवत् इहापि एवं श्रूयेत 'गामानय शुक्लः प्रशस्तः' इति, ततोऽस्त्येव संदेहकारणं, इति एतदपि उदाहरणमेव स्यात् । अतः अन्यत्र सामान्यं, अन्यत्र च विशेषः, इत्येतस्मात् संदेहः । **केचित्तु** संशयदर्शनादेव विधिस्तुत्योः वाक्यान्तरत्वमाचक्षते । 'यदि ह्येकं भवेद्वाक्यं विशेषे तत् समाप्यते । विशेषावगमात्तत्र न संदेहः प्रसज्यते ॥' वाक्यभेदे पुनः एकं सामान्ये परिसमाप्तं, अन्यत् विशेषपरं इति युक्तः संदेहः । यत्तु 'विधिना त्वेकवाक्यत्वात्' ( १।२।१।७ ) इति, तत् अङ्गप्रधानवाक्यानामिव पश्चात् संबन्धसद्भावाभिप्रायेण । तथाहि । 'स्वार्थबोधे समाप्तानामङ्गाङ्गित्वाद्यपेक्षया । वाक्यानामेकवाक्यत्वं पुनः संहत्य जायते ॥' न तु एतद्युक्तमिव । ये हि पदसंघाताः कर्मौपयिकेषु अर्थेषु पर्यवस्यन्ति, तेषां नानावाक्यत्वं युक्तम् । न तु अर्थवादानां एकवाक्यत्वात् प्राक् प्रयोजनलाभः, इति प्रथममेव एकवाक्यता । दुर्लभतरश्च संदेहः स्यात्, अन्योन्यनिरपेक्षयोः सामान्यविशेषयोः इतरत्रेतरत्र च पर्यवसानात् । यदेव हि यत्रोपात्तं तदेव तत्रासंदिग्धं गृह्यते, सामान्यसमाप्तश्च अत्र विधिः, पश्चात् विशेषः स्यात् । मन्त्रवर्णवत् इति चेत्, एवमपि तदधिकरणविषयत्वात् ( ६।८।१०।३० ) पौनरुक्त्यप्रसङ्गः। तस्मात् एकवाक्यतायामेव उपक्रमोपसंहारयोः सामान्यविशेषविषयत्वेन विप्रतिपत्तेः, अवश्यंभाव्येकगोचरत्वाच्च किमधीना कस्य प्रवृत्तिः इति जायते संदेहः कस्य सामञ्जस्यमिति । यत् श्रुतिवृत्तं तत् सम-

ञ्जसं, न लक्षणावृत्तम् । तत्र च ' स्तुतीनां विध्यधीनत्वादनुवादाच्च लक्षणा । मुख्यत्वात्तु विधेर्नासावविरोधाच्च कल्प्यते ॥ ' विधीयमानं हि स्तोतव्यं, न तु स्तुत्यं विधेयं, अप्राप्तार्थश्च विधिः, इति न श्रौतार्थात् प्रच्यवते । यद्यपि तावत् अर्थवादोपक्रमत्वं भवेत्, ततः प्रथमज्ञानानुरोधेन कदा चित् विधिः वशीक्रियेत, विध्युपक्रमं तु इदं ' अक्ताः शर्कराः ' इति । तस्मात् निर्दिष्टसामान्ये यदि अर्थवादो न तादर्थ्ये प्रतिपद्यते, ततः अनर्थको भवति इत्यशक्तः स्वतन्त्रीभवितुं, विनाऽपि चार्थवादेन विध्युद्देशः समर्थत्वात् न युक्तः तद्वश्यः कर्तुम् । अर्थवादस्तु अगतित्वात् विधिवशेन वर्तते, विशेषश्च सामान्यं अव्यभिचारात् शक्नोति लक्षयितुं, न सामान्यं व्यभिचारात् विशेषम् । तस्मात् घृतशब्दः स्नेहमात्रलक्षणार्थः । ' कामं वा सोऽर्थवादोऽस्तु सामान्यस्थो घृते विधिः । विना स्तुत्या विधानं तु स्नेहद्रव्यान्तरे भवेत् ॥ ' यथा ऐन्द्रेणापि मन्त्रेण सोमो गृह्यमाणो न केवलं तदर्थो भविष्यति, अन्यदेवत्यस्य अमन्त्रग्रहणोपपत्तेः, एवं अनर्थवादकं तैलवसयोर्विधानम् । यत्रैव चांशे स्तुतिर्दृश्यते तत्र विध्युद्देशस्य प्ररोचनाशक्तिः अपगच्छति, अन्यत्र तु अविहतशक्तिना विधानं, इति सर्वस्नेहग्रहणम् । उच्यते । ' समाप्यते विधिः कश्चित् कदा चिन्नाप्ररोचितः । घृते प्ररोचनां दृष्ट्वा विधिस्तत्रानुमीयते ॥ ' यद्यपि तावत् विधिप्रक्रमे तैलवसयोरप्युपादानं, तथापि प्ररोचनातो विधिर्घृते दृश्यते, नेतरयोः, इत्यनुपादातव्ये । कल्पयितव्या च तद्विषया विधेः प्ररोचनाशक्तिः, क्लृप्ता च घृते । तस्यां च सत्यां काल्पनिकी वाक्यं भिनत्ति । घृते च क्लृप्तां गृह्णन् इतरत्र च कल्पयन् वैरूप्येणापि विधिर्भिद्यते । तस्मात् विध्युद्देशोऽपि तैलादिभ्योऽपनीयते । यद्यपि च सामान्यशब्दः स्यात्, तथापि न कश्चिद्विशेषः । तत्र सामान्यान्यथाऽनुपपत्त्या यत्र क्व चन अनुश्रुते विशेषे अपेक्षिते, वाक्यशेषात् घृते एव प्रत्ययो भवति । घृते च शब्दार्थे, यदि श्रुत्यनुरोधेन अत्यन्ताश्रुततैलादिग्रहणं क्रियते, किं विरुध्यते ? संदेहमात्रं हि तत्र बाधितं, न तु प्रमाणं किं चित् । क्रियामात्रमेव चेह चोदितं, न द्रव्यम् । तत्र न यावत् किं चित् द्रव्यमाक्षिप्येत, यदि कश्चिदपि श्रुतिलिङ्गो न स्यात् । घृतार्थवाददर्शनात्तु अवश्यकर्तव्यायां अश्रुतद्रव्यविधिकल्पनायां, नान्यत्र प्रमाणमस्ति इत्यङ्गीकृत्य घृताञ्जनविधिर्गम्यते । तत्र भ्रान्त्युत्पन्नतैलाद्याकाङ्क्षा निर्मूलत्वात् बाध्यमाना न दुष्येत इत्यविरोधः । तैलादिग्रहणे च लक्षणात्रयं स्यात् । क्रियया द्रव्यद्रव्येण च विशेषः, घृतशब्देन च सामान्यं लक्षयितव्यम् । तस्मात् घृतग्रहणं प्रमाणमिति सिद्धम् । **वृत्त्यन्तरे** तु अत्रैव मन्त्रवर्णोऽप्युदाहृतः । तत्र तु घृतेन किं करिष्यते इति वक्तव्यम् ।

**सु**— प्राणभृदादिशब्दानां लिङ्गसमवायात् तल्लिङ्गतल्लिङ्गेषु प्रवृत्तौ उक्तायां घृतशब्दस्यापि घृताघृतोक्तेषु लिङ्गसमवायात् प्रवृत्तिः प्राप्ता अत्रापोद्यते इति अनन्तरसंगतिः । प्रतिपादितप्रामाण्योपयोगिद्वाराणामपि तद्विशेषोपयोगिद्वारान्तरप्रतिपादनात् पादाध्यायसंगतिः । ... संदिग्धावधारणरूपप्रामाण्यविशेषोपयोगिद्वारान्तरप्रतिपादनाच्च पादलक्षणसंगतिः । पृ. ५२३.

विध्युद्देशस्य अर्थवादकृतप्ररोचनां विना पर्यवसानासंभवेऽपि अर्थवादानर्थक्यपरिहाराय अर्थवादैकवाक्यत्वाभ्युपगमेऽपि विध्युद्देशस्य बलीयस्त्वेन स्नेहमात्रस्य अञ्जनसाधनत्वनिश्चयावगतेः प्ररोचनां विना पुंसः प्रवर्तयितुमशक्यत्वात्, अर्थवादसंनिधौ च अर्थवादानपेक्षस्य विध्युद्देशस्य प्रवर्तकत्वायोगेन अर्थवादात् घृताख्यविशेषग्रहणात् पर्यवसानाभ्युपगमे तु घृतस्यैव साधनत्वनिश्चयात्, प्ररोचनां विना पर्यवसानसंभवासंभवसंदेहात् स्नेहमात्रेण अक्तव्याः शर्कराः घृतेनैव वा इति संदेहः संभवति, इति परिहारेण संदेहः समायातः । .....विध्युद्देशो अञ्जनसाधनद्रव्यानुपादानात् संदिग्धार्थस्य दौर्बल्यं वक्तुं युक्तं, न तु निश्चितार्थस्य । अक्ताधिकरणपूर्वपक्षे (१।४।१३) विध्युद्देशस्य उपक्रमस्थत्वात् बलीयस्त्वोपपत्तिः । पृ. ११६८.

**शा**—स्तावकत्वेन प्रामाण्यं अर्थवादस्योक्तम् । इदानीं संदिग्धार्थनिर्णयेऽपि क्व चित् प्रामाण्यं प्रतिपाद्यते इति संगतिः । किं घृततैलवसानामन्यतमेन केन

चित् अञ्जनं कर्तव्यं उत घृतेनैव, तदर्थं च किं विध्युद्देशार्थवादयोर्विरोधोऽस्ति न वा इति संशयः । 'तत्राक्ता इति शब्देन येन केन चिदञ्जनम् । प्रतीयते, विधिश्चायं बलीयानर्थवादतः ॥ प्राधान्यात् प्रक्रमस्थत्वादप्राप्तविषयत्वतः । तद्बाधाद् घृतशब्दोऽयं लक्षणार्थो भविष्यति ॥' **इति प्राप्ते ब्रूमः ।** 'विधेर्यदि विरोधः स्याद् भवेदेवं, न चास्त्यसौ । नहि सामान्यशब्दोऽयं विशेषेण विरुध्यते ॥' तस्मात् घृतेनैवाञ्जनम् । १।४।१९.

**सोम**— नामधेयापवादत्वेन प्रसक्तार्थवादप्रसङ्गात् पादसंगतिर्बोध्या । **सूत्रार्थस्तु**—(उत्तरसूत्रानुकर्षणेन इत्थं भवति ) संदिग्धविधौ अर्थवादरूपाद्वाक्यशेषात् तद्विषयत्वकल्पना इति ।

**वि**—' शर्करा उपधत्तेऽक्तास्तेजो वै घृतमत्र किम् । तैलादिनाऽञ्जिता अक्ता घृतेनैवाऽथवाऽञ्जनम् ॥, तैलादिनाऽपि मुख्यत्वादसंजातविरोधनात् । अप्राप्तार्थत्वतश्चास्य विधेर्वादाद् बलित्वतः ॥ , सामान्यमननुष्ठेयं विशेषस्तु विधौ नहि । घृतेनैवाञ्जनं वाक्यशेषात् संदिग्धनिर्णयात् ॥ अर्थवादगता चेयं स्तुतिर्घृतमुपेयुषी । बोधयन्ती विधेयत्वं घृतस्य गमयेद्विधिम् ॥ ' १।४।१९.

**भाट्ट**— ' अक्ताः शर्करा उपदधाति ' इत्यत्र अक्ता इत्यनेन अविशेषात् यत्किंचिदञ्जनसाधनद्रव्यस्य विधिना निर्णीतत्वात् उपसंहारस्थेन ' तेजो वै घृतं ' इत्यनेन संकोचानुपपत्तेः नार्थवादस्य संदिग्धार्थनिर्णये प्रामाण्यं **इति प्राप्ते,** विधेरविशेषप्रवृत्तत्वेनैव घृतमात्रग्रहणेनापि उपपत्तेः इतराक्षेपकत्वे प्रमाणाभावात्, उपक्रमस्य अविरोधेनैवोपपत्तौ उपसंहारस्थस्यापि अर्थवादस्य उपलक्षणत्वे प्रमाणाभावात्, विध्यर्थवादयोः एकवाक्यत्वेन एकविषयकत्वस्य आवश्यकत्वाच्च युक्तं वाक्यशेषस्य संदिग्धार्थनिर्णयेऽपि प्रामाण्यं, इति घृतेनैव अञ्जनम् । १।४।१९.

**न्यायबिन्दुः**— 'अक्ताः शर्करा उपदधाति, तेजो वै घृतम् ' इत्यत्र येन केन चित् तैलादिना अञ्जनं कार्यं, वाक्यशेषस्थघृतशब्दस्य तु स्तावकत्वादुपलक्षणत्वमात्रं **इति प्राप्ते,** विध्यपेक्षितविशेषस्य अर्थवादेन नियमनं युक्तम् । अतो घृतेनैवाञ्जनं इति सिद्धान्तः । १।४।१८.

**मण्डन**—' संदेहे निर्णयः स्तुतेः ।' १।४।१९.

**शंकर**— ' स्तुत्या संदिग्धनिर्णयः । ' १।४।१९.

***अक्ताधिकरणम्**— ' अक्ताः शर्कराः ' इत्युपक्रमगतं संदिग्धं अक्तपदं वाक्यशेषगतेन घृतपदेन निर्णीयते, न तु बाध्यते । शीघ्रप्रवृत्तिकप्रत्यक्षश्रुतिप्रापिते घृतरूपविशेषे सति उपक्रमस्थेनापि द्रवद्रव्यसामान्येन तैलादिविशेषो नाक्षिप्यते नैराकाङ्क्ष्यात् । सूत्रार्थस्तु सुधायां ( पृ. ५२३ ) 'अर्थाद्वा कल्पनैकदेशत्वात्' इत्युत्तरसूत्रात् ( १।४।१४।२५ ) कल्पना, एकदेशत्वात् इति पदद्वयं इहानुषञ्जनीयम् । तथा चायमर्थः—' संदिग्धेन वाक्यशेषात् अर्थवादात् कल्पना घृतादेः व्यवस्थया अवधारणा । एकदेशत्वात् एकोऽर्थो दिश्यते प्रतिपाद्यते याभ्यां विध्यर्थवादाभ्यां तौ एकदेशौ, तत्त्वात् विध्यर्थवादयोरेकार्थप्रतिपादकत्वात् । संदिग्धशब्देन अव्यवस्थितार्थप्रतीतिरभिमता ' इति । **पराक्रम.** २४।२. * अक्ताधिकरणे व्रीहियवाभ्यां वैतुष्यार्थं अवघातोऽपेक्षितः नाज्यसांनाय्याभ्यां, इति ' अपेक्षितविधेः अनपेक्षितविधाने दौर्बल्यम्' इति न्यायेनापि अवघातस्य औषधद्रव्यमात्रशेषत्वं दर्शितम् । ४।१।१. * अक्ताधिकरणे ' संदिग्धेषु वाक्यशेषस्य प्रामाण्यमुक्तम् ' । **वा.** ३।३।१।१ पृ. ८०३. * अक्ताधिकरणन्यायस्य स्वरूपं, प्ररोचनानपेक्षस्य विधेः पर्यवसानसंभवे अर्थवादान्वयासंभवात् प्रागेव अर्थाक्षिप्तविशेषकल्पनया निर्णये कृते पश्चात् अर्थवादानर्थक्यपरिहाराय वैकृताङ्गवत् अन्यतराकाङ्क्षया अर्थवादान्वये सत्यपि निर्णीतार्थत्यागायोगात् तदर्थवादस्यैव असामञ्जस्यं अङ्गीकार्यं, अपर्यवसाने तु अर्थवादावगतस्यैव विशेषस्य ग्रहणं इति । **सु.** पृ. ५२३. * अक्ताधिकरणपूर्वपक्षे विध्युद्देशस्य उपक्रमस्थत्वात् बलीयस्त्वोपपत्तिः । पृ. १६८. * उपसंहारप्राबल्यानुपगमे अक्ताधिकरणसिद्धान्तनिर्वाहो न स्यात् । वाक्यशेषे घृतसंकीर्तनात् तेनैव शर्कराणामञ्जनं सिद्धान्तितम् । इदं उपसंहारप्राबल्यानुपगमे न निर्वहति इति केचित् । **पराक्रम.** ९।१. * कल्पनां तद्विरुद्धप्रत्यक्षश्रुतो वाक्यशेषो निरुणद्धि इत्यावेदितं अक्ताधिकरणा-

र्थनिर्णये । ५।२।१. * ‘ यदि हिरण्यं न विन्देत् शर्करा अक्ता उपदध्यात् तेजो वृतम् ’ । सावित्रचयने इदं वाक्यम्, चतुर्होतृचयने इति के चित् । **के.** * वाक्यशेषस्य क्रतुविशेषस्यापकत्वेऽपि विधौ सर्वविषयत्वप्रतीतेः संदेहाभावेन अक्ताधिकरणन्यायाभावात् न वाक्यशेषस्य विधिसंकोचकत्वकल्पनावसरः । **भाट्ट.** ५।३।१५, * वाक्यशेषे एकस्तोमकानामेव संकीर्तनात् तेषामेव अन्यशब्देन ग्रहणात् तत्रैव उत्तरकालत्वविधिः अक्ताधिकरणन्यायेन उचितः इति चेन्न, वाक्यशेषस्य अन्यथाप्युपपत्तेः । ५।३।१५. * ‘ संदिग्धेषु वाक्यशेषात् ’ इत्यत्र ‘ अक्ताः शर्करा उपदधाति ’ इत्युपक्रमगतं संदिग्धं अक्तपदं वाक्यशेषगतेन घृतपदेन निर्णीयते, न तु बाध्यते इति **चेन्न** । अत्र प्ररोचनानपेक्षविध्यपर्यवसानं दर्शितम् । विधौ संदिग्धं अर्थवादेन अवधार्यते इति हि तत्र व्युत्पाद्यं, न तु उपक्रमे संदिग्धं उपसंहारेण अवधार्यते इति वाक्यशेषशब्दस्य अर्थवादमात्रपरत्वात् । **पराक्रम.** १०–११. * सामान्यवचनेन विशेषापेक्षिणा उपक्रमो वाक्यस्य विशेषे निगमनवशेन इति । **भा.** १।४।१३।२४ पृ. ३६७. * ‘सारस्वतं मेषं’ इत्यत्र ‘वाग्वै सरस्वती ’ इति वाक्यशेषात् सरस्वतीशब्दः प्रकृतिः, न तु सरस्वच्छब्दः इत्यादिनिर्णयः अक्ताधिकरणन्यायलभ्यः । **सोम.** १।३।५.

**अक्षः—अक्षाः** पादा माषाः । नामधेयं तु द्वयोः कर्मणोरेकम् । अक्षाः पादा माषा इति यथा । ( तथा **केवले** दर्शः दर्शपूर्णमासैकदेशो दर्शः इति । दर्श इति नामधेयमेकं, कर्मणी तु भिन्ने समानधर्मके ) । **भा.** ५।४।४।१३. * **अक्षाणां** अदेवतात्वेऽपि राजसूये विनियुक्तत्वेन तत्स्तुतेः तच्छेषता । **सु.** पृ. ६४०. * **अक्षजं** ज्ञानं न वासनानिमित्तम् । **बृहती.** १।१।५ पृ. ५४. * **अक्षत्रयं** विदेवन—बिभीतक—रथावयवात्मकम् । **सोम.** १।३।१०. ***अक्षशब्दः** ‘बिभीतके- (त्रिफलाघटकः)ऽक्षशब्दो हि यद्यप्यल्पैः प्रयुज्यते । तथापि वाचकस्तस्य ज्ञायते शकटाक्षवत् ॥ ’ **वा.** १।३।४।८.

**अक्षरसाम्येन निर्ब्रूयात्** ( निरुक्त. २।१. ) इति न्यायः । ‘ अथ कस्मादुच्यते भगवान् महेश्वरः । यस्माद् भक्ता ज्ञानेन भजति अनुगृह्णाति च ( इति भगः ) वाचं संसृजति विसृजति च ( इति वान् ), यः सर्वान् भावान् परित्यज्य आत्मज्ञानेन योगैश्वर्येण महति महीयते तस्मादुच्यते भगवान् महेश्वरः ’ इति । **अथर्वशिरउपनिषत्** ( खण्डः ४ ) । अत्र उपनिषद्वाक्ये भगवान् महेश्वरः इति शब्दद्वयस्य यन्निर्वचनं कृतं, तत् अक्षरसाम्येन निर्ब्रूयात् इत्यनेन न्यायेन । **नारायणतीर्थकृतव्याख्या. अथर्वशिरः.** ४

**अक्षसूक्तं** ‘ अक्षैर्मा दीव्यः ’ इति यत्र, तत् सूक्तं ( ऋसं. १०।३४।१–१४ ) । इदं राजसूये, तत्र ‘ अक्षैर्दीव्यति ’ इति विधानात् । **के.** * अक्षसूक्तस्य राजसूये अर्थवत्त्वम् । **सु.** पृ. ६६७.

**अक्षाभ्यञ्जनम्** — असंस्कृतपांसूपादानस्यैव प्रयोजकं, न पांसूत्पत्तिपालनयोः । **बाल.** पृ. १०७. * अक्षाभ्यञ्जनं एकहायनीनयनसाध्यमपि न तस्य प्रयोजकम् । **बाल.** पृ. १०७. * दीक्षितदण्डनाशादौ ‘दण्डान्तराक्षेपकत्वं अक्षाभ्यञ्जनन्यायेन इष्टमेव’ । **भाट्ट.** ४।२।६. * हविर्धानशकटयोरक्षस्य सोमक्रयण्याः सप्तमपदपातस्थानीयैः पांसुभिः आज्याक्तैः क्रियते अञ्जनम् । **के.**

**अक्षाभ्यञ्जनन्यायः** । पदकर्मन्यायः । पदन्यायः । ज्योतिष्टोमे सोमक्रयणीनयनं क्रयप्रयुक्तमेव, न पदप्रयुक्तम् ।

**पदकर्माप्रयोजकं नयनस्य परार्थत्वात् । ४।१। १०।२५ ॥**

**भाष्यं**—ज्योतिष्टोमे श्रूयते ‘ अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति ’ इति । तत्रेदमपरं श्रूयते ‘षट् पदान्यनु निष्क्रामति ’ इति । तथा ‘ सप्तमं पदं गृह्णाति ’ इति । इदमपरं, ‘यर्हि हविर्धाने प्राची प्रवर्तयेयुः, तर्हि तेनाक्षमुपाञ्ज्यात् ’ इति । तत्र संदेहः, किं सोमक्रयण्यानयनं पदपांस्वर्थं उत क्रयप्रयुक्तमिति । किं प्राप्तम् ? नयनादुभयं निष्पद्यते क्रयः पदं च । तस्मादुभयं प्रयोजकम् । नहि गम्यते विशेष इति । तदुक्तं ‘ एकनिष्पत्तेः सर्वं समं स्यात् ’ ( ४।१।९।२२ ) इति । **एवं प्राप्ते ब्रूमः** पदकर्म अप्रयोजकं इति । कुतः ? यस्मान्नयनं क्रयार्थम् ।

नहि नयनमन्तरेण विशिष्टे देशे क्रय उपपद्यते। तस्मात् क्रयेण तावत् नयनं प्रयुक्तं इति गम्यते । क्रयप्रयुक्तं चेत्, न पदप्रयुक्तमपि भवितुमर्हति। अपि च एकहायन्याः पदपांसवो ग्रहीतव्या इति नास्ति शब्दः। ननु प्रकृता एकहायनी पदपांसुग्रहणवाक्येन संभन्स्यते। नेति ब्रूमः। 'एकहायन्या क्रीणाति' इति विशिष्टेन वाक्येन क्रये उपदिष्टा एकहायनी प्रकृतत्वात् पांसुवाक्येन संबध्यते। प्रकरणाच्च वाक्यं बलीयः। अथेदानीं एकहायनी क्रयणार्थं संकीर्तिता सती संनिहितत्वात् प्रसङ्गमुपजीवता पदपांसुवाक्येन संबध्यते, याऽसौ परार्था एतस्याः पदं ग्राह्यमिति। तस्मात् क्रयप्रयुक्तं नयनं, अप्रयोजकं पदमिति।

किं पुनश्चिन्तायाः प्रयोजनम्? यदि उभयं एकहायनीनयनस्य प्रयोजकं, यदा एकहायन्याः सप्तमं पदं ग्रावणि निधीयते, तदा पुनरेकहायनी नीयेत सप्तमाय पदाय। यदा पदं न प्रयोजकं, तदा नैकहायनी पुनः षट् पदानि अनुनिष्क्रामयितव्या इति।

**टुप्**—अनेन न्यायेन पदकर्म पांसून् प्रयुङ्क्ते। ते च अक्षाभ्यञ्जने विनियुक्ताः तेन प्रयुज्यन्ते। अतस्तेऽपि आत्मसिद्ध्यर्थं नयनं प्रयुञ्जते। क्रयोऽपि आत्मसिद्ध्यर्थं एकहायनीनयनं प्रयुङ्क्ते। 'पशावनालम्भात्' (४।१।१२।२७) इत्यत्रापि अयमेव पूर्वपक्षः। **एवं प्राप्ते आह,** क्रये स्ववाक्येनैव द्रव्यविशेषो निर्दिश्यते। इतरत्र स्ववाक्येन द्रव्यविशेषानिर्देशात् प्रकृतं गृहीत्वा वाक्यसंबन्धः। प्रयोजकत्वे विरोधात् प्रत्यक्षेण काल्पनिकत्वं बाध्यते। तत आह प्रकरणाच्च वाक्यं बलीयः (इति)। तस्मात् क्रयप्रयुक्ता सती प्रसङ्गात् पदपांस्वर्थाऽपीति। अक्षाभ्यञ्जनं यद्यपि पांसूनां प्रयोजकं, तथापि यत्किंचित् द्रव्यमुपादाय अक्षमभ्यञ्ज्यात्। पांसून् वाऽपि इत्ययमेव सिद्धान्तो न्याय्यः।

**शा**—'द्वयोर्नयनसाध्यत्वाद् वाक्ये चाश्रवणाद् यथा। संनिधानात् क्रयार्थत्वं तथैव पदशेषता॥' इति पूर्वपक्षः। नैवं, तृतीयया तावत् क्रयार्थैवैकहायनी। यदर्था सा, तदर्थश्च तत्संस्कारात्मको नयः। नयनस्य परार्थत्वात् पदकर्माप्रयोजकम्। परार्थानुष्ठितं तत्तु पदकर्मोपजीवति॥' इति सिद्धान्तः।

**सोम**— दृष्यानयनवैषम्येण अत्र पूर्वपक्षोत्थानात् प्रत्युदाहरणसंगतिः। प्रकृतैकहायन्याः क्रयार्थायाः तदर्थत्वानादरेण स्वरूपेण विनियोगात् पांसुग्रहणार्थत्वसंभवेऽपि अग्रिमाधिकरणन्यायेन पुरोडाशकपालस्य तुषोपवापवत् पांसुग्रहणमेकहायन्या एव न प्रायोजकं, इति कथं तद्द्वारा नयनस्य प्रयोजकम्। **न च** शाखान्तरे 'तस्याः सप्तमं पदं' इति श्रवणात् तत्र च 'तस्याः' इत्यनेन एकहायन्याः परामर्शात् एकहायन्याः सप्तमपदग्रहणार्थत्वे सति विनिगमनाविरहात् नयनस्योभयमपि प्रयोजकमेवेति **वाच्यम्**। तत्रापि हि एकहायनी न स्वरूपेण प्रकृता, किंतु 'एकहायन्या क्रीणाति' इति क्रयार्थत्वेनैव, इति परप्रयुक्तत्वेन निर्ज्ञाताया एव विनियोगात्, इति विनिगमनाविरहासिद्धेः। तस्मादयं पूर्वपक्षो मन्द इति। याऽसौ क्रयार्था एकहायनी क्रयसिद्ध्यर्थं नीयते, तस्याः सप्तमं पदं गृह्णाति इति क्रयार्थाया एवैकहायन्याः बुद्धौ विपरिवर्तमानायाः प्रसङ्गात् पांसुग्रहणोपकारकृतामात्रेण संबन्धेऽपि सप्तमपदवाक्यनिराकाङ्क्षतया तदर्थत्वावेदकप्रमाणाभावात् क्रयार्था एकहायनी, न तु पदपांसुग्रहणार्था। **प्रयोजनं** पूर्वपक्षे, सप्तमपदस्य ग्रावणि प्रक्षेपे तत्पांसोरपचारे च पुनर्नयनं कार्यम्। सिद्धान्ते तु पांस्वन्तरेण अक्षाञ्जनं कर्तव्यम्। **न च** वाजिनयागवत् अक्षाञ्जनस्य सिद्धान्ते लोप एव न्याय्य इति कथं पांस्वन्तरेणानुष्ठानमिति **वाच्यम्**। वाजिनयागस्य परप्रयुक्तद्रव्योपजीवित्वात् युक्तो लोपः। इह तु न द्रव्यं परप्रयुक्तं, किंतु पांसुरूपस्य द्रव्यस्य यः संस्कार एकहायनीसप्तमपदनिधानात्मकः, स एव परप्रयुक्तः। तथा च संस्कारस्य परप्रयुक्तस्यालाभेऽपि असंस्कृतैरपि पांसुभिः अक्षाञ्जनं कर्तव्यमिति वैषम्यात्।

**वि**—'सोमक्रयण्यानयने पदकर्म प्रयोजकम्। न वा, ऽऽद्योऽक्षाञ्जनस्यापि क्रयवत् संनिकर्षतः॥, तृतीयया क्रयार्था गौस्तद्द्वारा नयनस्य च। तादर्थ्यात् तत्प्रयुक्तं तन्न प्रयोजकता पदे॥'

**भाट्ट—** सोमक्रयार्थं एकहायनीं विधाय क्रयदेशे तन्नयने क्रियमाणे 'तस्याः षट् पदानि अनुनिष्क्रामति, सप्तमपदं स्फ्येन विलिखति, हिरण्यमन्तर्धाय पदे जुहोति, ततः सप्तमं पदं अध्वर्युः अञ्जलिना गृह्णाति, यर्हि हविर्धाने प्राची प्रवर्तयेयुः, तर्हि तेन अक्षमुपाञ्ज्यात्' इति श्रुतम्। तत्र अक्षाभ्यञ्जनमपि क्रयवत् एकहायनीनयनस्य प्रयोजकं, जन्यत्ववत् अङ्गत्वस्यापि उभयत्र समत्वात्। अक्षाभ्यञ्जने हि तच्छब्देनैव पदपांसवो निर्दिष्टाः इति ते तदङ्गम्। पदस्य च एकहायनीनिरूपितत्वं तस्याः सप्तमं पदं इत्यनुषङ्गात् शाखान्तरवचनाच्च अवगतं इति साऽपि तदङ्गम्। अतश्च नीयमानसंस्कारार्थस्य नयनस्यापि उभयार्थत्वात् उभयप्रयोज्यत्वम्। न च प्रकरणादेव एकहायनीलाभात् तच्छब्दस्य अनुवादकत्वं, प्रकरणप्राप्तेः पूर्वप्रवृत्त्यङ्गीकारेण प्रयोजकत्वफलकाङ्क्षत्वविध्युपपत्तेः। न च तथापि क्रयप्रयुक्तत्वविशिष्टैकहायन्या एव तच्छब्देन परामर्शात् पुरोडाशकपालन्यायापत्तिः। तथात्वे फलाभावेन तच्छब्दवैयर्थ्यापत्तेः तस्य एकहायनीस्वरूपमात्रपरत्वाङ्गीकारात्। **इति प्राप्ते,** विधिगौरवप्रयोजकशक्तिकल्पनागौरवाभ्यां तच्छब्दस्य पूर्वपरामर्शित्वस्वभावेन उपजीव्यप्रकरणप्राप्तानुवादकत्वावगतेश्च एकहायन्याः क्रयमात्राङ्गत्वावसायात् तदङ्गभूतनयनस्यापि तन्मात्रार्थत्वप्रतीतेः अक्षाभ्यञ्जनं पदहोमादिकं वा क्रयप्रयुक्तैकहायनीतन्नयनलाभेन चरितार्थं, न एकहायन्याः तन्नयनस्य वा प्रयोजकम्। अतश्च एकहायन्यां क्रयार्थं नीयमानायां दैवात् ग्रावणि सप्तमपदपाते अक्षाभ्यञ्जनार्थं पुनर्न तदानयनम्। यथाशक्तिप्रयोगादौ क्रयलोपेऽपि वा नैकहायनीप्रयुक्तिः। अक्षाभ्यञ्जनार्थं तु ये के चित् पांसवो ग्राह्या एव, गुणलोपे मुख्यलोपानुपपत्तेः। होमस्तु आरादुपकारकत्वात् ग्रावण्येव। यथाशक्तिप्रयोगे तु आहवनीये निरधिकरणकः एव वा इत्यन्यदेतत्।

**न्यायबिन्दुः—**'एकहायन्या क्रीणाति' इत्युपक्रम्य 'षट् पदान्यनु निष्क्रामति, सप्तमं पदमध्वर्युरञ्जलिना गृह्णाति, तेनाक्षमुपाञ्ज्यात्' इति च श्रुतं, तत्र क्रयाक्षाभ्यञ्जनयोर्द्वयोरपि एकहायनीनयनसाध्यत्वात् तत्प्रयोजकत्वे इति प्राप्ते, क्रयार्थत्वेन एकहायनीश्रवणात् तत्संस्कारार्थं नयनमपि क्रयार्थमेव, अक्षाभ्यञ्जनं तु क्रयार्थनीयमानैकहायनीपदपांसून् उपजीवति इति तदभावे यत्किंचित्पांसुभिः कार्यं इति सिद्धान्तः।

**मण्डन—** 'पदकर्माप्रयोजकम्।' १२.

**शंकर—** मण्डनवत्। १३.

**अक्ष्णया बन्धः पशुधर्मः। भा.** ३।६।७।१८. अक्ष्णाशब्दः आवन्तः वक्रत्ववाचकः। वक्रत्वं चात्र संमुखकोणयोः स्पर्शरेषा। यथा दर्शे बर्हिःसंनहनी रज्जुः वेद्यां अक्ष्णया प्रसार्यते नैर्ऋतकोणमारभ्य ऐशानकोणाभिमुखम्। तद्वत् पशुबन्धनमपि अंशतः। तथा च **सत्याषाढः** 'ऋतस्य त्वा देवहविः पाशेनारभे इति दक्षिणे पूर्वपादे अर्धशिरसि च प्रतिमुञ्चति' (४।३।१८) इति। अस्यार्थस्तु 'ऋतस्य' इत्यादिना मन्त्रेण पाशं प्रतिमुञ्चति। क्व? पशोः दक्षिणे पूर्वपादे। पूर्वकाये द्वौ पादौ अपरकाये च द्वौ पादौ। तौ च दक्षिणश्च वामश्च। तत्र दक्षिणे पूर्वपादे अर्धे च शिरसि पाशप्रतिमोकः। एवंरीत्या च पशुशरीरे पाशप्रतिमोके कृते अक्ष्णया बन्धो भवति। **के.**

**अक्ष्यामये** मुद्गौदनभोजनं निवातशय्या चेति नित्यं शय्यासनं भोजनं च विकरोति। **भा.** १०।३।५।३२, १०।५।२४।८१.

**अखण्डत्वादयः** अग्निसाधनभूतेष्टकाधर्माः, न तु प्रथमचितिधर्माः। तस्मात् अग्निसाधनभूतासु चित्रिण्यादीष्टकास्वपि ते सन्ति। **वि.** ३।६।१२.

**अख्यातिवादः—**संप्रति सर्वविज्ञानानां यथार्थत्वं प्रतिपाद्यते। सर्वेषां यथार्थत्वे भ्रान्ताभ्रान्तव्यवस्था न सिध्यतीति चेन्न। यथा भवतां ज्ञानत्वाविशेषेऽपि किंचिद्यथार्थं, किंचिदयथार्थं तथा यथार्थत्वेऽपि भ्रान्ताभ्रान्तव्यवस्थोपपत्तिः।

कारणदोषबाधकवशात् व्यवस्थासिद्धिरिति चेत्, तर्हि तेनैव भ्रान्ताभ्रान्तव्यवस्थाऽस्तु। भवतां यथार्थत्वे ज्ञानस्य बाधो नास्तीति चेत्, भवतां वा ज्ञानत्वाविशेषे कथं बाधोपपत्तिः? ज्ञानत्वाविशेषेऽपि 'नेदं रजतम्' इति ज्ञानोदयदर्शनात् कल्प्यते इति चेत्, यथार्थत्वेऽपि

तर्हि दर्शनबलादेव कल्प्यताम् । अयं तु विशेषः—भवतां ज्ञानस्वरूपबाधया अयथार्थत्वं, अस्माकं तु व्यवहारबाधया, अतो येनैव कारणेन यथार्थायथार्थविवेकः, तेनैव कारणेन भ्रान्ताभ्रान्तविवेकः इति समानम् । ननु यदि शुक्तिकायां रजतज्ञानं न जायते, तर्हि शुक्तिकायां रजतप्रवृत्तिः कथमुपपद्यते ? नावश्यं शुक्तिकायामेव रजतज्ञानमास्थेयं, रजते रजतज्ञानमात्रादेव शुक्तिकायां रजतप्रवृत्त्युपपत्तेः । अन्यविषयज्ञानादन्यत्र प्रवृत्तिर्न दृष्टेति चेत्, सत्यं, अन्यावभासिनो ज्ञानस्यान्यत्र जननमपि न दृष्टम् । किंच अयथार्थज्ञानादपि प्रवृत्तिरन्यत्र न दृष्टा । शुक्तौ रजतप्रवृत्त्यन्यथानुपपत्त्या कल्प्यते इति चेत्, तर्हि तथैवानुपपत्त्या अन्यविषयज्ञानस्यान्यत्र प्रवृत्तिहेतुत्वमात्रं कल्प्यतां, किमयथार्थत्वव्यसनेन ? यथार्थज्ञानस्यान्यत्रप्रवृत्तिहेतुत्वेऽव्यवस्थेति चेत्, भवतामप्यन्यावभासिनो ज्ञानस्यान्यत्रोत्पादेऽव्यवस्था समैव । कारणदोषबाधकप्रत्ययवशेन व्यवस्थासिद्धिरिति चेत्, अस्माकमपि तथैव व्यवस्थाऽस्तु । अतः सर्वं समानमन्यत्राभिनिवेशात् । वस्तुतः सामानाधिकरण्यादेव प्रवृत्त्युपपत्तिः । सामानाधिकरण्यं च धर्मधर्मिणोर्निरन्तरभानम् । सम्यग्ज्ञानेऽपि रजतजातिरूपितव्यक्तिग्रहणात् 'इदं रजतम्' इति प्रवृत्तिः, न संबन्धग्रहणात् । अतोऽन्यत्र संबन्धाभावेऽपि रजतजातिरूपितव्यक्तिपरिग्रहादसंबन्धाग्रहसहितात् प्रवृत्त्युपपत्तिः । अत एव 'विवेकाग्रहणात् प्रवृत्तौ युगपत् प्रवृत्तिनिवृत्ती स्याताम्' इति चोद्यस्यानवकाशः, निरन्तरभानात् प्रवृत्तेः । अतः प्रसज्यमानरजतव्यवहारनिवारणात् बाधकप्रत्ययस्याप्युपपत्तिः । शुक्तिकायामिन्द्रियसंप्रयोगानन्तरभावित्वेन शुक्तिकाविषयत्वमिति चेन्न, रजतस्मृतित्वेऽप्युद्बोधापेक्षया चक्षुरपेक्षोपपत्तेः । लोष्टादावप्युद्बोधप्रसङ्गः इति चेन्न, भवतां लोष्टादौ रजतज्ञानं किमिति न जायते ? सादृश्याभावादिति चेत्, उद्बोधकत्वमपि सादृश्याभावादेवाश्रीयताम् । स्मृतित्वे 'तद्रजतम्' इति स्यादिति चेत्, शुक्तिकाविषयत्वे वा शुक्तिकाविषयं इति किं नानुसंधीयते ? कारणदोषादेव तदनुसंधानं न जायते इति चेत्, अस्माकमपि कारणदोषादेव 'तत्' इति नानुसंधानमिति सममेव सर्वमनुपपत्तिजातम् । विषयव्यवस्था भासमानतया वाच्या, न व्यवहारयोग्यतापत्तिविषयत्वं, निर्विकल्पस्य निर्विषयत्वप्रसङ्गात् । न च प्राकट्ययोग्यत्वं, तस्यैवाभावात् । भासमानत्वं चेत्, इदमेव ज्ञानं तावदर्थाधीननिरूपणम् । यदर्थाधीननिरूपणं यत् ज्ञानं, सोऽर्थस्तस्य विषयः । निर्विकल्पकदशायामप्यर्थेनैव ज्ञानस्य विशेषः इति सिद्धम् । अत्र तु रजतज्ञानमिति रजतप्रतियोगित्वेन ज्ञानोदयः । इतरथा रजतज्ञानं शुक्तिकाविषयं न स्यात् । ततो यदयथार्थं भ्रान्तत्वात् प्रवृत्तिहेतुत्वादित्येतत्सर्वं धर्मिग्राहकप्रमाणविरोधादेवापास्तम्, रजतज्ञानमिति निर्देशादेव रजतविषयत्वाङ्गीकारात्, शुक्तिविषयत्वप्रतिज्ञायास्तेनैव बाधात् । यथार्थत्वे च ज्ञानत्वाद् व्यवहारहेतुत्वादर्थप्रकाशकत्वादित्यनुमानं निर्दूषणम् । एवमर्थापत्त्युपन्यासेऽपि यथार्थत्वेऽपि सर्वमुपपद्यते, इति पूर्वोक्तन्यायेनैवान्यथोपपत्तिर्वक्तव्या । किंच, न कारणाभावादेवान्यथाज्ञानम् । कारणदोषादेव जायते इति चेन्न, दोषाणां कार्यविघातहेतुत्वमेव, न तु कार्यान्तरजननम् । दग्धाद्वेत्रबीजात् कदल्यङ्कुरोत्पत्तिरिति चेन्न, दाहस्य तत्र सामग्रीत्वात् । दोषस्यापि सामग्रीत्वे दोष एव न स्यात् । कार्यं चायथार्थं न स्यात् । किंच अयथार्थत्वे सर्वत्रानाश्वास एव स्यात्, असत्ख्यातिप्रसङ्गश्च, रजतस्य शुक्तिरूपेणासत्त्वात् संशयज्ञानस्यापि यथार्थत्वं स्मृतिद्वयरूपत्वात् । अतः सर्वमेवेदं ज्ञानं यथार्थमिति स्थितम् । **प्रावि.** पृ. १६-२३.

* **अख्यातिवादखण्डनम्**—गुरवस्तु शुक्तिरजतज्ञानादौ न संसर्गाग्रहो मानाभावात् । किंतु स्मरणानुभवविषययोः रजतत्वशुक्त्योः असंसर्गाग्रहमात्रं, नान्यथाख्यातिः । किंतु असंसर्गाग्रहरूपा इयमख्यातिः । एवं च असंसर्गाविषयकतत्प्रकारकज्ञानस्य प्रवृत्तौ व्यवहारे च हेतुत्वात् अतिलाघवमित्याहुः ।

तन्न । असंसर्गाविषयकत्वरजतत्वप्रकारकत्वयोः ज्ञानविशेषणयोः विशेषणविशेष्यभावे विनिगमकाभावेन कार्यकारणभावद्वयकल्पनागौरवात् । एवं सामान्यतः प्रवृत्तौ कार्यताज्ञानस्य हेतुत्वे यत्र कार्यताभ्रमात् प्रवृत्तिः, तत्र असंसर्गाविषयकत्वकार्यत्वप्रकारकत्वयोः विशेषणविशेष्यभावे विनिगमनाविरहेण हेतुहेतुमद्भावद्वयकल्पनम् । एवं अप्रामाण्य-

ज्ञानाभावविशिष्टकार्यत्वप्रकारकज्ञानस्य हेतुत्वेन यत्र अप्रामाण्यग्रहो भ्रमरूपः, तत्र अप्रमात्वात् संसर्गाविषयकत्व-कार्यत्वप्रकारकत्वयोः विशेषणविशेष्यभावे विनिगमनाविरहेण हेतुहेतुमद्भावद्वयकल्पने अतिगौरवापत्तिः । अतः अत्र असंसर्गाग्रहस्य प्रवृत्तिव्यवहारादिहेतुत्वानुपपत्तेः नाख्यातिसंभवः । तेन अन्यथाख्यातिरूपरजतत्वविशिष्टज्ञानस्यैव ग्रहे प्रवृत्त्यादिहेतुता युक्तेति । **न चैवं** 'चैत्रो रजतज्ञानवान् कार्यताज्ञानवत्त्वात्' इति ज्ञानात् मैत्रस्य प्रवृत्त्यापत्त्या भ्रान्तभ्रान्तिज्ञसंकरापत्तिरिति **वाच्यम्** । भ्रान्तिज्ञस्य बाधादेव प्रवृत्त्यभावोपपत्तेः । परकीयरजतत्वप्रकारकज्ञानज्ञानवतः क्षणविलम्बेन रजतत्वप्रकारकज्ञानादेव प्रवृत्त्यङ्गीकारात्, ज्ञानाविषयकज्ञानत्वेन प्रवृत्त्यङ्गीकाराद्वा न दोषः । **यद्वा** रजतविषयकप्रवृत्तित्वावच्छिन्नं प्रति रजतत्वप्रकारतानिरूपितरजतनिष्ठमुख्यविशेष्यताशालिज्ञानत्वेन हेतुत्वात् न काऽप्यनुपपत्तिरिति । **किंच** सर्वत्र प्रवृत्तौ नासंसर्गाग्रहो हेतुः, सर्वदा प्रवृत्त्यापत्तेः । किंतु प्रमाजन्यप्रवृत्तौ तत्प्रकारकनिश्चयो हेतुः, भ्रमजन्यप्रवृत्तौ च असंसर्गाग्रहः, इति कार्यकारणभावद्वयकल्पनागौरवम् । मम तु (मीमांसकस्य) सर्वत्र प्रवृत्तौ तत्प्रकारकनिश्चयत्वेनैव हेतुत्वं इति लाघवं इति दिक् । **मणि.** पृ. २६–२७.

**अगतिकगतिन्यायः**—**साहस्री.** ६८३ । यत्र अन्या गतिः उपायः नास्ति तत्र असंमतमपि स्वीक्रियते । असंमतस्वीकरणं अगतिकस्य पुरुषस्य गतिः । महता मार्गेण गच्छन् यदि कथं चित् रुद्धः स्यात् तदा पदपथेनापि गन्तुमर्हते । पदपथ एव तस्य गतिः मार्गः । **के.** * तुल्यबलविकल्पो हि तावत् अष्टदोषत्वात् अगतिकगतिन्यायेन क चिदेवाश्रीयते । किमुत कक्षान्तरितप्रामाण्यविषमशिष्टविकल्पः । **वा.** १।३।२।३ पृ. १७४.

**अगम्यागमनमनाचारः**— ( अगम्या अनुपभोग्या परस्त्री, तस्यां गमनं तदुपभोगः । ) **वा.** १।३।३।७ पृ. २०३–०४.

**अगस्त्यस्य कयाशुभीयादौ एकादशैव सामिधेन्यः** । सन्ति वामदेवेन दृष्टाः पञ्चदशर्चः । अगस्त्यस्य कयाशुभीयसंज्ञा अपि तावत्यः । ताः प्रत्येकं प्रकृत्य 'सामिधेन्यः स्युर्याज्यानुवाक्याश्च' इत्याम्नातम् । तत्र चकारादुभयत्र सर्वासां विनियोगस्य स्पष्टत्वात् पञ्चदशानामृचां समुच्चयेन सामिधेनीत्वम् । याज्यानुवाक्यार्थत्वेन चतसृणामेवापेक्षितत्वेऽप्यवशिष्टानां विकल्पेन विनियोगः **इति प्राप्ते**, क चित्सर्वोपदेशः क चिदेकदेशोपदेशः, इति विधिवैरूप्यस्यायुक्तत्वात् प्रथमोत्तमाऽऽवृत्त्यैव सामिधेनीषु पञ्चदशत्वसिद्धेरेकादशर्चः चतस्रश्चेत्येवं विभज्य विनियोगः । **संकर्ष.** ४।४।३.

**अगुणः**—'नहि अगुणो गुणिनं निकर्तुमुत्सहते' । **ऋजु.** पृ. १६१. * अगुणविधिपरे हि वाक्ये भवति अनेकगुणविधानं इत्युक्तं 'तद्गुणास्तु विधीयेरन्०' इत्यत्र ( १।४।६।९ ) । **भा.** २।३।३।४ पृ. ५९३.

**अगुणे तु कर्मशब्दे गुणस्तत्र प्रतीयेत ।** २।२।९।२४॥

ननु यथा 'अग्निहोत्रं जुहोति' इत्युक्ते 'दध्ना जुहोति' 'पयसा जुहोति' इत्येवमादयो गुणविधयः, तथा 'वैश्वदेव्यामिक्षा' इत्युक्ते कर्मणि 'वाजिभ्यो वाजिनं' इति वाजिनगुणविधिः स्यात्, इति चेत् तत्राह । तुशब्दः शङ्कानिवारणं सूचयति । कर्मशब्दे 'अग्निहोत्रं जुहोति' इत्यत्र अगुणे गुणरहिते सति तत्र दध्यादिर्गुणः प्रतीयेत इति युक्तम् । उत्पत्तिवाक्ये गुणस्य अनुक्तत्वात् तत्र कर्मणि गुणो विधातुं शक्यते । प्रकृते तु विश्वदेवदेवतारूपः आमिक्षाद्रव्यरूपश्च गुणः उत्पत्तिवाक्ये एव विहितः । एवं सति तत्रैव देवता वा द्रव्यं वा विधातुं न शक्यते इति दृष्टान्तवैषम्यम् । तस्मात् वाजिनवाक्ये कर्मान्तरविधानमेवेति सिद्धान्तः ।

**अथवा अधिकरणान्तरम् ।** २।२।१०।२४ । 'दध्ना जुहोति' इत्येवमादीनि कर्मान्तराणि विकल्पपरिजिहीर्षया अवकल्पन्ते इति चेन्न, कर्मशब्दे अगुणे सति तत्र दध्यादिः गुणः प्रतीयेत । 'जुहोति' इति शब्दात् तदेव कर्म अवगम्यते । तस्मात् तत्रैव गुणविधिः । वचनात् विकल्पश्च इति । तस्मात् तत्र गुणविधानमेव न कर्मान्तरम् । **के.**

**अगृहीतग्राहित्वं** स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवर्तिज्ञानाविषयविषयकत्वरूपम् । तेन मन्त्राणां अनुवादवाक्यानां स्मृतीनां च प्रामाण्यम् । **मणि.**

पृ. १३. ( पूर्वापरीभावेनोद्धारोऽयम् । एवमन्यत्रापि क्व चित् )

**अगृहीतविशेषणा विशिष्टबुद्धिर्न दृष्टा, न तु अनभिहितविशेषणा ।** विशेषणविशिष्टस्य विशेष्यस्य बुद्धिर्ज्ञानम् । यया बुद्ध्या विशेषणं न गृहीतं न विषयीकृतं, सा बुद्धिः 'विशिष्टस्य' इति वक्तुमेव न शक्यते । **वा.** १।४।१।२ पृ. ३२६. * अगृहीतविशेषणे तदनुरक्ता विशेष्यबुद्धिर्नोपजायते । तेन विशेषणेन अनुरक्ता, विशेषणविषया इत्यर्थः । **वा.** ३।४।४।१३ पृ. ९१६. ( 'नागृहीतविशेषणा' इति बिन्दौ च द्रष्टव्यम् । )

**अग्नयः**—महाग्नयः पञ्च । पत्नीशालास्थविहारगताः प्राजहित–दक्षिणाग्नि–आहवनीयाः, आग्नीध्रीयश्च, औत्तरवेदिकः आहवनीयश्चेति । सोमे इदम् । **संकर्ष.** ३।२।१६. * अग्नयः सर्वकर्मार्थाः, अग्निप्रयुक्तं चाधानं इति तत् सर्वार्थमित्युच्यते । **भा.** ३।६।५।१५. * अग्नयः सर्वेऽपि सर्वदा धारणीयाः इति पूर्वः पक्षः ( अजस्रपक्षोऽयम् ) गतश्रीकत्रितयस्यैव ( ग्रामणीः शुश्रुवान् राजन्यः ) अजस्रं धारणीयाः सर्वे । इतरेषां तु गार्हपत्य एव धारणीयो नेतरौ ( अयमुद्धरणपक्षः ) । **संकर्ष.** ३।२।५. * **अग्निः, अन्वाहार्यपचनः ।** अयमेव दक्षिणाग्निः । अन्वाहार्यसंज्ञको दक्षिणाभूतश्चरुरत्र पच्यते । **मीन्या.** * **आग्नीध्रीयः** । ज्योतिष्टोमे वैसर्जनहोमादूर्ध्वं प्राचीनवंशागतो वह्निः आग्नीध्रीये प्रणीयते । **वि.** ५।१।१४. * **आवसथ्यः** आवसथे गृहे भवः । पञ्चाग्न्याधानपक्षे पृथगयम् । त्रेताधानपक्षे तु आहवनीये एवोपस्थातव्यः । अत्रैव सर्वो गृहगतः पाकः । **मीन्या.** * **आहवनीयः** 'यदाहवनीये जुहोति' इति प्रकृतौ विधीयते, विकृतौ तु प्रयाज– नारिष्ठहोमादिसहितः अतिदिश्यते इति अग्निः सर्वार्थः, न केवलं प्रकृत्यर्थः । स हि सांग्रहण्यां आमनहोमाद्यर्थोऽपि । **वि.** ३।७।२०. * **उख्यः** उखायां धृतश्चयने । स च संतापेन जनयितव्यः । वृक्षाग्रात् ज्वलतो वा आहर्तव्यः । भ्राष्ट्रात् वा वैद्युताद्वा । **भा.** १२।७।१७. * **औपासनः** पार्वणस्थालीपाकादीनां आयतनत्वेन निर्दिष्टः । 'लौकिकानां तु निर्दिष्टमायतनं औपासनोऽग्निः' । **भा.** १२।२।१।३. * **गार्हपत्यः** । 'गार्हपत्ये हवींषि श्रप्यन्ते' । दर्शादौ पश्चिमदेशगतः । ज्योतिष्टोमे च शालामुखीयोऽपि अग्निप्रणयनोत्तरं गार्हपत्यः एव संपद्यते । **वि.** १२।१।६. * **चिरनिर्मथितः** अचिरनिर्मथितश्च । आधानकाले निर्मथ्य संस्कृतो नित्यं धृतोऽग्निः चिरनिर्मथितः । चयनकाले निर्मथ्य उखायां धृतोऽग्निः अचिरनिर्मथितः । सद्य एव लौकिकमथनेन जातोऽग्निः अचिरमथितश्च निर्मन्थ्यः इत्युच्यते, तेनेष्टकाः पच्यन्ते चयनार्थाः । **वि.** १।४।१०. * **दक्षिणाग्निः** । अयमेव अन्वाहार्यपचन इत्युच्यते । अन्वाहार्यनामको दक्षिणाभूतश्चरुः अत्र पच्यते । पिष्टलेपफलीकरणहोमौ चात्रैव । **मीन्या.** * अग्निः **देवतासु** मुख्यः, प्रजापतेर्मुखतः सृष्टत्वात् । **वि.** १।४।१४. ***निर्मन्थ्यः** । स च अग्निचयने इष्टकापाके प्रयुक्तः 'निर्मन्थ्येनेष्टकाः पचन्ति' इति । सोऽयं निर्मथनसाध्यो लौकिकः अधर्मकः । अग्नीषोमीये पशौ तु **धर्मवान्** निर्मन्थ्योऽग्निराम्नातः । **वि.** ७।३।७. * अग्निः **प्रतिदिनं** अग्निहोत्रं होतुं गार्हपत्यात् उद्धृत्य आहवनीये प्रक्षिप्यते । (उद्धरणपक्षे इदम्) **वि.** ९।४।७. * अग्निः **प्रथमाज्यभाग**देवतारूपः, पुरोडाशदेवतारूपादग्नेर्भिन्नः । **वि.** १०।१।८. **प्राजहितः** । प्राचीनवंशे पश्चिमवह्नेः पूर्वप्रसिद्धमुख्यगार्हपत्यस्य 'प्राजहितः' इति पूर्वाचार्यसंज्ञा । **वि.** १२।१।६. * अग्निः **फलोपेतः** न तु चितिः ( अग्निचयनं चितिपञ्चकसमुदायः सफलः, न तु एकैका चितिः इत्यर्थः ) । **वि.** ५।३।६. * अग्निः **ब्राह्मणश्च** उभौ प्रजापतेर्मुखादुत्पन्नौ । **वि.** ५।४।४ * **मार्जालीयः** ज्योतिष्टोमे दक्षिणभागे । तत्समीपे यज्ञियपात्रप्रक्षालनादि क्रियते । **के.** * अग्निः ( चयनम् ) **मैत्रायणीयानां** अन्वारोहेषु परिसमाप्यते, न सर्वेषाम् । **भा.** २।४।२।२०. * अग्निः **वैदिकः** आहवनीयादिः सर्वकर्मार्थं उत्पन्नः । 'यान्यहं कर्माणि करिष्ये, यैश्चास्म्यधिकृतः' इति । **भा.** ७।३।१२।३०. * **शामित्रः** । अग्नीषोमीयादिपशुः अत्र शामित्रेऽग्नौ श्रप्यते । **वि.** १२।१।५. **शालामुखीयः** । प्राचीनवंशाख्यशालायाः मुखे पूर्वभागे भवः । शालामुखीयश्च पूर्वमाहवनीयोऽपि सोमे गार्हपत्यः संपन्नः 'शालामु-

खीय एषः, अत ऊर्ध्वं गार्हपत्यः' इति श्रुतेः । वि. १२।१।६. * **सभ्यः** सभायां भवः । सभा मुख्यो गृहैकदेशः, यत्र अक्षदेवनं न्यायनिर्णयश्च भवति । पञ्चाग्न्याधानपक्षे पृथक् । त्रेताऽऽधानपक्षे तु आहवनीये एव उपस्थातव्यः । **के.** * **अग्निं** (चयनं) अधीयानाः के चित् उपाध्यायस्य उदकुम्भमाहरन्ति, अपरे न । **भा.** २।४।२।८ पृ. ६३२. (इति कर्मभेदः शाखाभेदेन स्यादिति चेन्न) अथ यो धर्मविशेष उक्तो विद्याग्रहणार्थः सः, न कर्मण उपकारकः ... श्रुत्यादीनामभावात् । **भा.** २।४।२।१४. * अग्निं चित्वा सौत्रामण्या यजेत । (अग्निचयनं तत्सहितं क्रतुं कृत्वा पश्चात् सौत्रामणी कर्तव्य इत्यर्थः) **वि.** ४।३।१३. 'यूपस्यान्तिके अग्निं मथित्वा यूपाहुतिं जुहोति' ज्योतिष्टोमे यूपैकादशिन्यामिदम् । अत्र मन्थनं विवक्षितं, नान्तिकत्वम् । यूपाहुतिश्च तन्त्रम् । **भा.** ११।२।७।२६-२९. * 'वसन्ते ब्राह्मणोऽग्निमादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः, (वर्षासु रथकारस्यादध्यात्)' इति श्रूयते आधानम् । तत् कर्मार्थं इत्यभ्युपगमः । **भा.** ११।३।२।२. * **अग्नीनाधाय** सर्वः संकल्पयति 'पर्वणिपर्वणि मया दर्शपूर्णमासौ कर्तव्यौ' इति । **भा.** ९।१।१०।३५. * **अग्नेः** ऋग्वेदः अजायत । **भा.** ३।३।१।२. * अग्नेः अभिधानानि अग्निः, शुचिः, पावकः, धूमकेतुः, कृशानुः, वैश्वानरः, शाण्डिल्यः इत्येवमादीनि । **भा.** १०।४।१२।२३. * अग्नेः गुणः यथा संस्कारार्थः आधानं, तथा पवमानहवींष्यपि अग्नेरेव गुणभूतानि । **भा.** ३।१।१२।२२. * अग्नेः तनवः सोमे त्रिचत्वारिंशत् । षण्णां धिष्ण्यानां मार्जालीयस्य च चतुश्चतुर्वारं (७×४=२८), शामित्राः औपयजाश्च पशुभेदेन त्रयस्त्रयः (६), निर्मन्थ्याश्चत्वारः, आग्नीध्रीयेण सह महाग्नयः पञ्च (२८+६+४+५=४३) इति । **संकर्ष.** ३।२।१६. * अग्नेः दर्शपूर्णमासार्थस्य उद्वाने न ज्योतिष्मतीष्टिः । सा हि अग्निहोत्रार्थाग्नेरुद्वाने विहिता । **वि.** ९।४।७. अग्नेः दहनपचनप्रकाशनानि कर्माणि । **भा.** ८।४।१।९. * 'अग्नेः पूर्वाऽऽहुतिः प्रजापतेरुत्तरा' सायमग्निहोत्रे । **सु.** पृ. ७७९. * **अग्नीनामपि** नियतं कर्म न, सर्वं सर्वेषां, प्रकृतिविकृत्यर्थत्वोपपत्तेः. संक. ३।२।३९-४०. * अग्नीनां आयतनाद्बहिर्गमने दोषः, प्रायश्चित्तं च श्रूयते । देशविशेषसंबद्धा हि आहवनीयादयः न आहत्यवचनमन्तरेण अन्यत्र नेतव्याः । 'वि वा एष इन्द्रियेण वीर्येणर्ध्यते यस्याहिताग्नेरग्निरपक्षायति' इत्यादि । **शा.** ३।२।८ पृ. २२१. । **सोम** — 'वि' इत्युपसर्गस्य 'ऋध्यते' इत्यनेनान्वयः । विकलो भवतीत्यर्थः । अपक्षायति आयतनाद्बहिर्गच्छतीत्यर्थः । आदिशब्देन 'तं संभरेत् इदं त एकं' इत्यादिप्रायश्चित्तवाक्यसंग्रहः । (वस्तुतस्तु अपक्षायति निर्वाति नष्टो भवतीत्यर्थः । तथा च अपक्षायतिवाक्यं न प्रकृतोपयोगि, अग्निनाशजन्यदोषकथनार्थत्वात् तस्य । **के.**). * अग्नीनां यज्ञपात्राणां च परिधानीये कर्मणि (अन्त्येष्टौ) प्रतिपत्तिः यजमानशरीरे निक्षेपणम् । **भा.** ११।३।१३।३४–४२,४५. * **अग्नौ** कर्ममध्ये अनुगते लौकिकाग्निब्राह्मणपाण्यादौ होमविधिर्दर्श्यते । **सु.** पृ. ७८२. * अग्नौ लौकिके उपनयनहोमः, न तु श्रौताग्नौ । **वि.** ६।८।२. अग्नौ लौकिके निषादस्थपतीष्टिः । **वि.** ६।८।३. अग्नौ लौकिके ब्रह्मचारिणोऽवकीर्णिनः प्रायश्चित्तपशुः । **वि.** ६।८।४. अग्नौ वैहारिके मांसपाकस्य अभावं दर्शयति । अन्यत्र पशुग्रन्थात् मांसस्पर्शनमेव वैहारिकाणामग्नीनां परिहरति । **भा.** १२।२।१।५. * अग्नौ हविषः प्रक्षेपं विना देवतान्वयासिद्धिः । **सु.** पृ. १५२१. * **अग्निसंस्कारार्थाः** पवमानेष्टयः—पवमानेष्टयो हि अग्न्यर्थाः । **भा.** ३।६।४।१२, ताः पवमानेष्टयः अग्निसंस्कारार्थाः इत्युक्तम् । **भा.** ३।६।६।१७. * **अग्निसमिन्धनप्रकाशकाः** सामिधेनीमन्त्राः । * अग्निसमिन्धनार्थः इध्मः अष्टादशसंख्याकस्थूलदीर्घसमिद्रूपः दर्शादौ । **के.**

⌛ **अग्नयश्च स्वकालत्वात्** (३।७।१९।३९) अनेन अग्नयः सर्वार्था भविष्यन्ति इति तद्द्वारेण सर्वार्थत्वमित्युच्यते । स्वकालत्वात् इत्यपि स्वातन्त्र्याम्नानादित्यर्थः । **वा.** ३।६।५।१५ पृ. १०३९ * अग्नयश्च स्वकालत्वात् इत्यत्र अग्नीनां प्रकृतिविकृत्यर्थत्वमुक्तम् । **सु.** पृ. १५२८. * 'यस्य' हि विकृतौ आतिदेशिकं द्वारं, तस्यैवानारभ्याधीतस्य प्रकृतिगामित्वं यथा पर्णतादेः । तत्र हि जुहूरूपस्य द्वारस्य विकृतौ अतिदेशतः प्राप्ति-

दशायामेव पर्णताविशिष्टतया प्राप्तेः पुनः पर्णताविधाने द्विरुक्तिदोषप्रसङ्गात्, द्वारस्यातिदेशिकत्वाभावे तु द्विरुक्तदोषाभावात् उपदेशत एव आहवनीयप्राप्तिः' इति 'अग्नयः' इत्यधिकरणन्यायः । **सोम.** ३।४।१८ पृ. २७९. * ' अग्नयश्च स्वकालत्वात् ' ( ३।७।१९। ३९ ) इत्यधिकरणे ( अन्तरागार्भिणीरूपे ) सर्वहोमविधिसाधारण्यं आहवनीयवाक्यगतजुहोतेः नाङ्गीकृतं, किंतु ये विकृतिषु आमनहोमादय उपदिष्टाः न्त्वतिदिष्टाः, तत्साधारण्यमेवाङ्गीकृतम् । **रसायनं.** पृ. १८७.

**अग्निं चित्वेति सौत्रामणी क्रतोरङ्गं, न चित्यङ्गम् ॥**

'अग्निं चित्वा सौत्रामण्या यजेत ' इति संयोगस्य कालार्थत्वाभावात् स्थण्डिलरूपद्रव्यार्थत्वमारादुपकारकाणामपि पवमानहविषां द्रव्याङ्गत्वदर्शनात् । ' श्येनचितिं चिन्वीत स्वर्गकामः ' इति फलार्थायाश्चितिक्रियाया आकाङ्क्षया तदङ्गत्वमेव वा **इति प्राप्ते,** संनिपातिनोः स्थण्डिलचयनयोराराद‌ुपकारकानाकाङ्क्षतया ' तत्संयोगात् क्रतुस्तदाख्यः ' इति न्यायेन ( २।३।१०।२३ ) साग्निचित्यक्रतोरेव चिनोत्यर्थत्वात् क्रत्वङ्गं सौत्रामणी वैमृधवत् क्रतोरनन्तरमेवानुष्ठेया । **संकर्ष.** १।१।५.

**अग्निं चिन्वानाय दक्षिणादानं क्रत्वङ्गम् ॥**

'योऽग्निं चिनुयात्तं दक्षिणाभी राधयेत्' इत्याम्नातं दक्षिणाभिः राधनमपि वरदानवत् चयनाङ्गं **इति प्राप्ते,** दक्षिणाया भृतित्वेनानत्यर्थत्वात् तस्याश्च प्रयोगप्रयुक्तत्वात् दृष्टार्थत्वाच्च क्रतोरेवाङ्गम् । **संकर्ष.** १।१।७.

**' अग्निं होत्रायावह ' इत्युक्तोऽग्निः आहवनीयादन्यः ॥** ' यदग्निं होत्रायावाहयति स्विष्टकृतं तदावाहयति ' इति श्रुत्या होत्रार्थं ओह्यमानोऽग्निः स्विष्टकृद्यागदेवतारूपः स्विष्टकृद्गुणकोऽग्निः एवेत्यवगतम् । ' यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतः ' इति श्रुत्यन्तरे चाहवनीये आहुतिसंयोगादिष्टः प्रीतश्च भवतीत्यवगमात् स्विष्टकृत्त्वमाहवनीयाग्नेरेव प्रतीयते, इत्येकस्यैवावोढृत्वमोह्यत्वं चेति द्वयमपि संपन्नम् । तच्चौपाधिकभेदाङ्गीकारेणापि सूपपादमित्याहवनीयः एव स्विष्टकृदग्निः, इत्यवभृथे 'अग्निं होत्रायावह' इति निगदे ' अपः ' इत्यूहः । यत्तु भाष्ये देवतावोढुर्हव्यवोढुश्चैकत्वेनावहनहव्यवहनाभ्यां स्विष्टकृद्यागसंबन्धादसति स्विष्टकृति सर्वहुते देवतावाहनस्यैव लोप इति । तन्न । तत्तद्देवतावाहने तत्तद्यागानामेव प्रयोजकत्वात् । स्विष्टकृद्यागलोपेऽपि तत्तत्प्रयोजकलोपाभावेन देवतावाहनलोपायोगात् **इति प्राप्ते,** अभीत्युपसर्गयोगात् इषिधातोः इच्छार्थकान्निष्पन्नेष्टशब्दार्थकर्तृत्वस्याहवनीये उपपादनेऽपि सूपसृष्टयजिधातुनिष्पन्नस्विष्टशब्दाभेदात् एकस्यैव औपाधिकभेदाङ्गीकारेणोभयनिर्वाहकोपाधेरश्रवणादाहवनीयादन्य एवाग्निः स्विष्टकृत् । **संकर्ष.** ४।२।९.

**अग्निः आहवनीयादिः सर्वप्रकृतिविकृत्यर्थः ॥**

**अग्नयश्च स्वकालत्वात् ।** ( 'ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् ' ३।७।१९।३९ ॥ इति सूत्रैकदेशोऽयम् ) ।

**वा—** ये पुनराहवनीयादयः, तेषां सर्वार्थत्वमप्रस्तुतमेव, न च (सः) प्रसङ्गादुच्यते स्वकालत्वस्य हेतोरपि असमर्थत्वात् । न च तस्य उत्तरपक्षे कश्चित् पक्षस्य हेतोर्वा परामर्शोऽस्ति । यदि च लौकिककार्यापेक्षया सर्वार्थत्वमभिधीयते, ततो ' विहारो लौकिकानामर्थं साधयेत् प्रभुत्वात् ' ( १२।२।१।१ ) इत्युक्त्वा ' निर्देशाद्वा वैदिकानां स्यात् ' ( १२।२।१।३ ) इत्यत्र निर्णीतत्वादविचार्यम् । यदपि वेदविहिताग्निकार्यसर्वार्थत्वं प्रकृतिविकृत्योः, तदपि ' अग्निमुपनिधाय स्तुवते ' इत्युदाहृत्य ' विशये लौकिकं स्यात् सर्वार्थत्वात् ' ( ७।३।१२।३० ) ' न वैदिकमर्थनिर्देशात् ' ( ३१ ) ' तथोत्पत्तिरितरेषां समत्वात् ' ( ३२ ) इति निर्णीतत्वादविचार्यम् । सिद्धान्तवचनमेवैतत् ( भाष्यस्थम् ) निराकरणोक्त्यभावात् । तस्मादेवं वर्ण्यते । नैवेदमग्नीनां सर्वार्थत्वं पूर्वपक्षीकृतम् । किं तर्हि ? अधिकरणान्तर-( ३।६।१।२ )सूत्रोक्तन्यायप्रतिपादितानुमितपूर्वपक्षः सिद्धान्त एवायं सूत्रवाक्यभेदेनोच्यते । न च एतदग्निकार्यापेक्षया सर्वार्थत्वम् । किं तर्हि ? प्रकृतिविकृत्यपेक्षया । तत्र अनारभ्यवादन्यायेन ( ३।६।१।१–८ ) आधानवदेव पूर्वोत्तरपक्षौ रचयि-

तव्यौ, किमाहवनीयादयः प्रकृत्यर्थाः आहोस्वित् सर्वार्था इति । तत्र 'तत् प्रकृत्यर्थं यथाऽन्येऽनारभ्यवादाः' (३।६।५।१४) 'प्रकृतौ वा द्विरुक्तत्वात्' (३।६।१।२) **इत्येवं प्राप्ते, अभिधीयते** । अग्नयः सर्वार्थाः प्रकृतिविकृत्यर्था भवेयुः । कुतः ? स्वकालत्वात् स्वतन्त्रोत्पत्तित्वादित्यर्थः । तदेतत् वर्णितं 'सर्वार्थं वाऽऽधानस्य स्वकालत्वात्' (३।६।५।१५) इत्यत्र । न तु एतत् सर्वविषयं सर्वार्थत्वमवकल्पते । 'द्वारं येषु पराधीनं तेषु तत्प्राप्त्यपेक्षया । प्राप्नुवन्तीदृशा भावा न स्वतन्त्राः कथंचन ॥ शास्त्रेण चोदिता ये हि दर्विहोमाः स्वरूपतः । तेष्वेवाहवनीयः स्यान्न यागेष्वप्यचोदनात् ॥' 'यज्जुह्वति तदाहवनीये' इति श्रूयते । न यत् यजेरन् इति । तेन अवश्यं आहवनीयचोदनया तावत् प्रतीक्षितव्यं, यावत् 'चतुरवत्तं जुहोति' 'यद् ग्रहान् जुहोति' 'यच्चमसान् जुहोति' इति चातिदेशेन संबन्धात् द्वारं प्राप्तम् । 'ततश्चाहवनीयेन सहैवास्यातिदेशतः । प्रकृतौ वा द्विरुक्तत्वादित्ययं निश्चयो भवेत् ॥' तथा च 'तासामग्निः प्रकृतितः प्रयाजवत्' (३।६।६।१६) इति सिद्धवत् प्रकृत्यर्थत्वं दर्शितम् । तथा वैकृतचरुपुरोडाशानां प्रत्यक्षहविःश्रपणविधानात् गार्हपत्यप्राप्तिद्वारं नास्ति इत्यवश्यं सगार्हपत्यमेव श्रपणं प्रकृतितः प्राप्नुवत् अपेक्षितव्यम् । अग्निषु पर्यवसितम्, ऋत्विक्षु उत्तरसूत्रं आरभ्यते । पृ. ११०३-११०४.

**शा**—(अन्तरागर्भिणी) अग्निषु चिन्ता । ते हि अनारभ्यवादेन 'यदाहवनीये जुह्वति' इत्यादिना होमार्थतया विहिताः । ते किं प्रकृत्यर्था उत वैकृतानामपि आमनहोमादीनां साधारणाः इति, पर्णतादिवत् प्रकृत्यर्थत्वं मन्यमानस्योत्तरम् । अग्नयश्च 'सर्वार्थाः' इत्यनुवर्तते । तदनुवृत्त्यर्थं च अनन्तरसूत्रकरणम् (**सोम**— 'ते सर्वार्थाः' इत्यस्य 'अग्नयः' इत्यस्य सूत्रस्य च नैरन्तर्येण करणम्) । स्वकालत्वात् स्वतन्त्राम्नानात् अप्रकरणाधीतत्वादित्यर्थः । न चात्र द्विरुक्तिदोषः, प्रकृतिसमकालमेव विकृतावपि उपदिष्टत्वात् होमस्य । यत्र तु यागमात्रे चोदिते प्रकृतित एव 'चतुरवत्तं जुहोति' इत्येतदतिदेशात् प्राप्यमाणं प्रतीक्षितव्यं, तत्र पर्णमयीन्यायः (३।६।१।१-८) । उपदिष्टेषु तु वैकृतेष्वपि होमेषु समानमेव अग्निविधानम् ।

**वि**— 'प्रकृत्यर्थोऽथ सर्वार्थो वह्निः, साग्नोऽस्तु पर्णवत् ।, पर्णन्यायोऽतिदिष्टे स्यादुपदिष्टे तु सर्वगः ॥' यथा 'यस्य पर्णमयी जुहूर्भवति, न स पापं श्लोकं शृणोति' इत्यसौ पर्णविधिः (पलाशवृक्षविधिः) प्रकृत्यर्थः, एवं आधानस्यापि अनारभ्याधीतत्वात् आहितः आहवनीयाद्यग्निः प्रकृत्यर्थः, **इति चेत्**, नैवम् । वैषम्यात् । पर्णवाक्यात् पर्णताया यावत्क्रतुप्रवेशे जुहूर्द्वारम् । सा च जुहूः प्रकृतावेव विहिता विकृतिषु सर्वत्रातिदिश्यते । आहवनीयाद्यग्नेस्तु क्रतुप्रवेशे द्वारं होमः । स च कश्चित् प्रकृतावेव विहितः सन् विकृतौ अतिदिश्यते, तद्यथा प्रयाजनारिष्ठादिहोमाः । तादृशे विषये 'यदाहवनीये जुह्वति' इति वाक्येन अग्निः प्रकृतावेव विधीयते, विकृतौ तु होमेन सह अतिदिश्यते, तस्मात्तत्र पर्णन्यायः । यस्तु होमो विकृतौ उपदिश्यते तद्यथा सांग्रहण्यामिष्टौ आमनहोमाः, तत्र द्वारभूतस्य होमस्य विकृतौ उपदिश्यमानतया द्वारिणोऽपि प्रकृताविव वाक्येन विकृतावपि विधिर्वारयितुमशक्यः । तस्मात् सर्वार्थो वह्निः । ३।७।२०.

**भाट्ट**—आहवनीयादयः अग्नयः अनारभ्याधीतवचनैः होमाद्यनुवादेन विहिताः पर्णतान्यायेन प्रकृतिहोमाद्यर्था एव । विकृतौ तु ये तावत् होमादयः अतिदेशेन प्राप्यन्ते, तेषु प्राप्तिकालवैषम्यात् स्पष्टमेव द्विरुक्तत्वम् । येऽपि आमनहोमादयः अपूर्वाः, तेषामपि विकृतिसंबन्धबोधव्यतिरेकेण अङ्गग्राहकत्वानुपपत्तेः, विकृतेश्च क्लृप्तोपकाराङ्गग्रहणार्थं पूर्वमतिदेशकल्पनावश्यंभावात्, तस्य च प्रकृतौ आहवनीयप्राप्तिमन्तरेण अनुपपत्तेः तेष्वपि द्विरुक्तत्वम् । अतस्तेषु नोपदेशेन, नापि यूपावटस्तरणबर्हिर्वत् अतिदेशेन आहवनीयप्राप्तिः । अतः अधिकरणं विनैव ते **इति प्राप्ते**, सत्यं अतिदेशप्राप्तेषु नाहवनीयाद्युपदेशः । अपूर्वेषु तु अस्य अनारभ्याधीतत्वात् उपदेशेन प्राप्तिरविरुद्धा । नहि आमनहोमादीनां विकृतिसंबन्धं विना नाङ्गग्राहकत्वं, उत्पत्तिवाक्ये इष्टसामान्यस्य भाव्यत्वबोधेनापि शाब्दबोधस्य पर्यवसन्नतया

तदनुवादेन आहवनीयविधानोपपत्तेः । अतस्तेऽपि सर्वार्थाः । ( इतःपरं 'स्थितादुत्तरं' इत्यादि ) ।

**शंकर**—'समानविधिताऽग्नीनाम् ।' १९.

**अग्निः औत्तरवेदिकः शालामुखीयस्य एकदेश एव, न कृत्स्नः** ॥ सोमे समाम्नातं 'प्राञ्चमग्निं प्रणयन्ति' इति प्रणयनमविशेषात् सर्वस्याहवनीयस्य औत्तरवेदिकस्यैव इत आरभ्याहवनीयत्वेन तस्यैव सर्वहोमाधिकरणत्वात् **इति प्राप्ते**, 'एतमाहवनीयमाहवनीयात् प्रणयति' इति श्रुतौ आहवनीयस्यापादानत्वश्रवणात्, तस्य चान्यापाये ध्रुवत्वेन अस्त्येवाग्निशेषः । अत एव 'पूर्वो यत् सन्नपरो भवासि' इति मन्त्रलिङ्गं 'पूर्वमग्निमभ्युदेति' इत्यादौ पूर्वापरशब्देन शालामुखीयाहवनीययोर्व्यवहारश्च संगच्छते । **संकर्ष.** ३।२।११.

**अग्निः ज्योतिष्टोमे तदपवर्गे एव लौकिकः स्यात् न दीक्षणीयापवर्गे** ॥ सोमे दीक्षणीयापवर्गोत्तरं विद्यमानोऽप्याहवनीयादिरुक्तन्यायेन लौकिक एव **इति प्राप्ते**, 'देवता एवोभयतः परिगृह्य यजमानोऽवरुन्धे' इति वचनेन सोमयागीयसकलदेवतापरिग्रहरूपसंस्कारस्य अनिवृत्तत्वात्तदपगमे तदपगमापत्तेर्दीक्षणीयाग्निरेव आ अन्तं धार्येत । वस्तुतो दीक्षायाः सौमिकत्वेन तत्प्रणयनस्यापि तदर्थत्वात् सोमापवर्गे एव लौकिकता, न दीक्षणीयासमाप्तौ । अत एव 'न वेदे पत्नीं वाचयति नैनं स्तृणात्यसंस्थित इव वा अत्र यज्ञो यत्सौम्योऽध्वरः' इति श्रुतिः सोमापवर्गाभावध्वननद्वारा अग्नेरलौकिकत्वमेव ध्वनयति । अकर्मकालेऽपि 'अपरेणाहवनीयं व्रतमत्याहृत्य प्रयच्छति' इत्याहवनीयदर्शनं चोपपद्यते । प्रायणीयादौ प्रसङ्गसिद्धेर्न पुनःप्रणयनम् । **संकर्ष.** ३।२।१०.

**अग्निः स्विष्टकृत् गार्हपत्याधिष्ठाता देवताविशेष एव** ॥ स आहवनीयादन्यत्वेन निश्चितो देवतारूप एव कश्चिदग्निः स्यात् । स्विष्टकरणे देवताया एव सामर्थ्यात् **इति प्राप्ते**, 'गार्हपत्यः स्विष्टकृद्भवति' इति वचनात्तस्यापि कतिपयाहुतिसंयोगेन स्विष्टकृत्त्वसंभवाद्गार्हपत्याग्न्यधिष्ठातृदेवताविशेष एव स्विष्टकृत् । **संकर्ष.** ४।२।१०.

**अग्निचयनम्**—अग्निचयनस्य स्थूलं स्वरूपमुदाह्रियते । अग्निष्टोमादौ उत्तरवेदित्वेन इष्टकाभिश्चयनं कुर्वन्ति । तच्च पक्षौ वितत्य पतन् यः श्येनः, तदाकारं प्रायः कुर्वन्ति । अन्येऽपि च भूयांसः कूर्माद्याकाराः वेदे उक्ताः । तत्र प्रथमे चयनप्रयोगे अनेकाकाराः सहस्रमिष्टका भवन्ति, जानुदघ्ना च वेदिः । तत्र पञ्च प्रस्तराः प्रतिप्रस्तरोत्तरं पुरीषं इति पञ्च पुरीषाणि, इति पञ्चचितिकं चयनं क्रियते । प्रतिप्रस्तरं शतद्वयमिष्टकाः उपधीयन्ते । द्वितीयचयनप्रयोगे सहस्रद्वयमिष्टकाः । प्रस्तरद्वयं एकं च पुरीषं इति एका चितिः, एवंरीत्या पञ्चैव चितयः । एवं च दश प्रस्तराः पञ्च पुरीषाणि, नाभिदघ्ना वेदिः । तृतीये तु प्रयोगे सहस्रत्रयं इष्टकाः, पञ्चदश प्रस्तराः, पञ्च पुरीषाणि, आस्यदघ्ना वेदिः । तत्र प्रस्तरत्रयं एकं च पुरीषं इति एका चितिः, एवं पञ्च चितयः । पुरीषान्ता चितिः इति परिभाषा । चतुर्थादयोऽपि प्रयोगा भवन्ति, तत्र इष्टकापरिमाणं अधिकाधिकाधिकमेव स्यात् ।

अथ आदौ ऋत्विजो वृत्वा सावित्रहोमं इतरांश्च काश्चिदाहुतीर्हुत्वा अग्निमादाय अश्वं गर्दभं च गृहीत्वा मृत्खननस्थाने गच्छन्ति । अभ्र्या मृदं खनित्वा कृष्णाजिनेनावेष्ट्य गर्दभपृष्ठे स्थापयित्वा आनयन्ति, अश्वस्तु भूम्याद्याक्रमणार्थः । मृदि अर्मकपालवेण्वङ्गारादिचूर्णानि संमिश्र्य जलेनार्द्रां कृत्वा पिण्डं कृत्वा अग्निस्थापनार्थां चतुरस्रां उखां कृत्वा पचन्ति । ततः पुरुषस्य अश्वस्य ऋषभस्य मेषस्य वस्तस्य चेति पञ्च पशुशीर्षाणि सिद्धानि कुर्वन्ति । सामिधेनीरनूच्य स्रुच्यमाघारमाघार्य दीक्षणीयामिष्टिं कृत्वा षट् आध्वरिकीः, षट् आग्निकीश्चेति द्वादश दीक्षाहुतीर्जुहोति । ततः पूर्वोक्तायामुखायां संतापेन उख्यं नाम अग्निं उत्पादयति । तत्र समिध आधाय शिक्ये साग्निमुखां निदधाति । वक्षसि रुक्मं प्रतिमुच्य तत् विशिष्टं शिक्यं स्वकण्ठे प्रतिमुञ्चति । विष्णुक्रमादि कृत्वा शिक्यं कण्ठादुन्मुच्य आसन्द्यां सादयति । ततो दीक्षाः षट् । इष्टकाः कुर्वन्ति । निर्मन्थ्येन पचन्ति । ततो गार्हपत्यचितिं कृत्वा तदुपरि उख्यमग्निं निवपति । ततो दूरं नैर्ऋत्यां दिशि नैर्ऋतीः तिस्र इष्टका उपदधाति । तदुपरि रिक्तशिक्यादिकं

निदधाति । प्रत्येत्य ' निवेशनः संगमनः ' इति गार्हपत्यमुपतिष्ठते । पौर्वाह्णिक्यौ प्रवर्ग्योपसदौ कृत्वा मुख्यचयनस्य प्रथमा चितिः चेतव्या । तत्रादौ चयनदेशे षड्गवादिना हलेन भूमिं कृषति । सीतासु सप्त ग्राम्याः, अकृष्टभागे सप्त आरण्या इति चतुर्दश ओषधीर्वपति । प्रोक्ष्य ओषधीनामुपरि लोष्टानि समस्यति । तत आतिथ्यादिकर्माणि करोति । ततः चयनकाले दर्भस्तम्बे पुष्करपर्णे, तत्र रुक्मं, रुक्मस्य दक्षिणतः हिरण्मयं पुरुषं ,अभितः पुरुषं स्रुचौ घृतदधिपूर्णे उपदधाति । उपस्थाय स्वयमातृण्णां अविदुषा ब्राह्मणेन सह उपदधाति, स ब्राह्मणो वरं ददाति । ततो हिरण्येष्टकां मण्डलेष्टकां इतराश्च काश्चित् इष्टका उपदधाति । ततो जीवन्तं कूर्मं मधुमिश्रेण दध्ना अभ्यज्य ( मध्ये अवटोदके ) उपदधाति । तत उलूखलं सर्वौषधीभिः पूरयित्वा मुसलेन सकृदवहत्य उपदधाति । सिकतापूरितामुखां उपदधाति । अथ पशुशीर्षाणि पूर्वसिद्धानि उपदधाति । सर्पशिर उपदधाति । ततः पुरुषाकृतिं चितिं चिनोति । पुरुषशिर एवास्याः शिरो भवति । पुरुषसूक्तेनोपतिष्ठते । ततः अपस्यादिका इष्टका उपदधाति । तत्र पञ्चाशत् प्राणभृतः, तावत्य एवापानभृतश्च, द्वादश कुम्भेष्टकाश्च अद्भिः पूरिता भवन्ति । नैवारं चरुमुपदधाति । ऋषभं हिरण्यशकलमुपदधाति । अवशिष्टं प्रथमं प्रस्तरं लोकंपृणाभिः प्रच्छादयति । सूददोहसा अभिमृशति । तदुत्तरं आपराह्णिक्यौ प्रवर्ग्योपसदौ भवतः । श्वोभूते प्रवर्ग्योपसदौ कृत्वा द्वितीया चितिः । ऋषभप्रभृति प्रतिचिति भवति । श्वोभूते तृतीया चितिश्च । अत्र चितौ भूतेष्टकाः चित्रिण्यादयश्चेष्टका उपधीयन्ते । ततः प्रवर्ग्योपसदौ । श्वोभूते प्रवर्ग्योपसदौ, चतुर्थी चितिश्च । अत्रैव सृष्टीः उपदधाति । प्रवर्ग्योपसदौ । श्वोभूते प्रवर्ग्योपसदौ, पञ्चमी चितिः, प्रवर्ग्योपसदौ च । श्वोभूते पञ्चम्याश्चितेः शेषभूता याज्ञसेनी चितिः । अत्रैव अज्यानीः वज्रिणीश्च उपदधाति । ततः हिरण्यशकलसहस्रेण अग्निं ( वेदिं ) प्रोक्षति । शतरुद्रीयं जुहोति । तिसृधन्वं ( त्रीन् इषून् एकं धनुश्च ) ब्राह्मणाय दद्यात् । पृष्ठैरुपतिष्ठते । अवकाभिः मण्डूकेन वेतसशाखया च अग्निं विकर्षति । दध्ना मधुमिश्रेण अवोक्षति । वैश्वकर्मणानि जुहोति । पूर्णाहुतिं जुहोति । वैश्वानरीयस्य तन्त्रं प्रक्रामयन्ति । वसोर्धारां जुहोति । ( इदं सर्वं सत्याषाढानुसारेण ) के.

* **अग्निचयनं** अग्नेः संस्कारः । **भा.** २।३।१०। २१–२३. ' अग्न्यधिकरणं ' इत्यत्र भाष्यमीमांसाधिकरणम् । ( अग्निचयनविषयकश्रुतिसिद्धान्तक्रमोऽयं अनुष्ठानक्रममनुसृत्य द्रष्टव्यः । **के.** ) * ' य एवं विद्वानग्निं चिनुते ' इति अग्निशब्दः ज्वलनद्रव्यवचनः । अनेन च वाक्येन ज्योतिष्टोमादिषु चयनरूपगुणविधिः । **भा.** २।३।१०। २१–२३. * अग्निचयनस्य प्रकृतौ ज्योतिष्टोमे अनुष्ठानं भवति ' अग्न्यतिग्राह्यस्य ' इत्यधिकरणे दाशमिके समर्थितत्वात् । **पराक्रम.** * अग्न्यतिग्राह्ययोर्विकृतौ अतिदेशः । **भा.** १०।८।११।२३–२८. 'अग्न्यतिग्राह्याधिकरणं ' इत्यत्र अधिकरणम् । * अग्निचयनं यत्र कर्तुं शक्यते । ' अथातोऽग्निमग्निष्टोमेनानु यजति तमुक्थ्येन, तमतिरात्रेण, तं षोडशिना ' इति श्रुतिः । **भा.** २।३।१०।२१ , * ' अथातोऽग्निमग्निष्टोमेनानु यजति तमुक्थ्येन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण ' इति श्रुतिः । १०।८।११।२३, * ' अथातोऽग्निमग्निष्टोमेनैवानु यजति तमुक्थ्येन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेण' इति श्रुतिः । १०।५।२३।७८, * ' अथातोऽग्निमग्निष्टोमेनानु यजति तमुक्थ्येन, तं षोडशिना, तमतिरात्रेण ' इत्यादि । **वि.** २।३।१०, * ' अथातोऽग्निमग्निष्टोमेनानु यजन्ति तमुक्थ्येन, तमतिरात्रेण, तं द्विरात्रेण ' इत्यादि । १०।८।११, * शास्त्रदीपिकायां तु 'अथातोऽग्निमग्निष्टोमेनानु यजन्ति तमुक्थ्येन, तमतिरात्रेण, तं त्रिरात्रेण ' इति श्रुतिरुदाहृता । अन्ते च ' तत्र साद्यस्क्रेषु सारस्वतेषु च सत्रेषु अशक्यत्वात् काममग्निर्न चीयतां, षोडशिवाजपेययोस्तु चेतव्यः ' इत्युक्तम् । आचार्यः **सत्याषाढस्तु** ' स उत्तरक्रत्वर्थः । अन्यत्र साद्यस्क्रेभ्यो वाजपेयात् षोडशिनः सारस्वताच्च सत्रात् ' ( ११।१।२ ) इत्युवाच । **के.** * अग्निचयनं प्रथमयज्ञेऽपि संभवति । **सोम.** १०।३।५. * विकृतौ हि तदुपदिश्यते । **भा.** १०।८।११।२३.

* अग्निचयनस्य फलवदफलत्वविचारः पर्णमय्यधिकरणसिद्धः, प्राकृतवैकृतविचारः अग्न्यतिग्राह्याधिकरणसिद्धः, नित्यत्वानित्यत्वविचारः गोदोहनाधिकरणसिद्धः, उत्तरवेदिविकाराविकारत्वविचारस्तु संकर्षे द्वितीयेऽध्याये ( २।१।२६ ) सिद्धः। **सु.** पृ. ९४९. * अग्निचयने सावित्रहोमाः दीक्षणीयायाः प्राक् कर्तव्याः। **भा.** ५।२। ११।२२. 'सावित्रहोमन्यायः' इतिविन्दौ अधिकरणम्। * अग्निचयने सावित्रहोमाः 'सावित्राणि जुहोति' इत्यनेन विहिताः। **वि.** ५।२।११. * अग्निचयने सावित्रहोमाः, उखासंभरणादिकं, दीक्षणीया, वपनादयो यजमानसंस्काराः, ततो रुक्मधारणं इति क्रमः प्रत्यक्षपाठस्य प्राबल्यात्। **के.** * सुपर्णाकृतिर्नित्या न भवति। 'दिव्यं सुपर्णं वयसा बृहन्तं' 'वयसां प्रतिमया' इत्युभयमपि स्तुतिमात्रम्। **संकर्ष.** २।१।३९, * श्येनाकृतिः चितेः काम्यैव। **याज्ञिकास्तु** नित्यां मन्यन्ते। तत् परिभाषामात्रम्। २।१।४०, * 'सशिरस्क एवाग्निश्चेतव्यः' 'वयसां वा एष प्रतिमया चीयते' इति श्रवणात् पक्षिशिरसः उपधानं कार्यं इति पूर्वपक्षः, शिरःसंज्ञिका इष्टकेयं, न तु प्रत्यक्षं पक्षिशिरः इति सिद्धान्तः। २।१।३८. * 'कङ्कचितं चिन्वीत' 'शीर्षचितं चिन्वीत, यः कामयेत सुशीर्षा अस्मिन् लोके संभवेयं' इति। **भा.** १०।८।११।२६, * 'साहस्रं प्रथमं चिन्वानश्चिन्वीत, द्विषाहस्रं द्वितीयं, त्रिषाहस्रं तृतीयं' इति नैमित्तिकमेव, न नित्यम्। नित्यं तु अष्टादशमन्त्रगतोऽग्निः। नैमित्तिकत्वं च नित्यप्रयोगे नान्वेति। ४।३।२।४. * 'ज्यायांसं चित्वा कनीयांसं न चिन्वीत' द्विसाहस्रं चित्वा एकसाहस्रं न चिन्वीत इत्यर्थः। एवमुत्तरत्रापि। **संकर्ष.** २।१।३. * अग्नियोगः प्रधानादौ, अग्निविमोकश्च प्रधानान्ते ( इति भाष्यकारमतम् ) साङ्गप्रधानस्य आदौ अन्ते चेति वार्तिककारमतम्। 'अग्निं युनज्मि०' इतिमन्त्रेण होमः अग्नियोगः। 'इमं स्तनं मधुमन्तं धयापां०' इतिमन्त्रेण होमः अग्निविमोकः। **वि.**११।३।९, * उखासंभरणं पर्वणि कर्तव्यम्। ४।३।२०, * उखां निष्पाद्य तस्यामुखायां अग्निर्ध्रियते। स नित्योऽग्निः उख्यः नाम। १२।४।७.

* उख्यः अग्निः। 'संतापेनाग्निं जनयति' 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात्, आष्ट्रादन्नाद्यकामस्य, वैद्युताद् वृष्टिकामस्य।' **भा.** १२।४।७।१७. * काम्येऽग्नौ वृक्षजन्ये आष्ट्रजे वा आधानादिकं नास्ति पूर्वसिद्धत्वात् संस्कारानुपयोगात्। **वि.** १२।४।९, * उख्याग्निभरणं अग्निचयने संवत्सरं कर्तव्यम्। तदभावे तु नैमित्तिकी वैश्वानरेष्टिः। शिक्येऽग्निसहितामुखां निधाय तच्छिक्यं स्वकण्ठे बद्ध्वा संवत्सरपर्यन्तं धारयेत्। ४।४। ६, * उख्यो वह्निर्मुख्यः, 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्याहृत्यावदध्यात्' इति काम्यः। तत्र कामिनः काम्यः, अकामिनो नित्य उख्योऽग्निः इति व्यवस्थितविकल्पः, न तु नित्ये होमः, काम्यस्य तु धारणमात्रं इति समुच्चयः। १२।४।७, * शिक्यं षडुद्यामं द्वादशोद्यामं वा उखोपस्थापनार्थम्। ४।४।६, * दीक्षणीया उखासंभरणोत्तरम्। ५।२।११. * इष्टयन्ते एव दीक्षितधर्माणां प्रवर्तनम्। **सोम.** ५।३।११. * दीक्षितसंस्काराः रुक्मप्रतिमोचनादेः प्राक् कर्तव्याः। **भा.** ५।२।१२।२३. * रुक्मधारणं वपनादिसंस्कारोत्तरम्। **वि.** ५।२।१२. * अभ्र्यादाने चतुर्णां मन्त्राणां, खनने द्वयोः, मृदाहरणे षण्णां च समुच्चयः। **भा.** १२।३।१४। ३०. * 'निर्मन्थ्येनेष्टकाः पचन्ति' अत्र निर्मन्थ्यशब्दः न रूढो न यौगिकः, किंतु योगरूढः। **वि.** १।४।१०. 'निर्मन्थ्येनेष्टकाः पचन्ति' इति निर्मन्थ्यशब्दो यौगिक एव, न संस्कारनिमित्तकः, नापि जातिनिमित्तकः। **भा.** १।४।९।१२, * 'निवेशनः संगमनः' इत्यैन्द्र्या गार्हपत्योपस्थानं कर्तव्यम्। ३।२।२।३-४. * 'व्याममात्राणि पक्षपुच्छानि भवन्ति' इति श्रुतो व्यामः यजमानस्यैव नाध्वर्योः। **संकर्ष.** १।४।१०. * उपसदां षट्त्वं दण्डकलितवदावृत्त्या न संपादनीयं, किंतु स्वस्थानविवृद्ध्या संपादनीयम्। **वि.** ५।३।२. *उपसदां षट्संख्या सर्वसंपाद्या, न तु प्रत्येकम्। **भा.** ५।३।१।१-२. * 'नैवारं चरुमुपदधाति' इत्यस्य स्थण्डिलनिर्वृत्त्यौपयिकयथाश्रुतचरूपधानविधानेन निराकाङ्क्षस्य 'बृहस्पतेर्वा एतदन्नं यन्नीवाराः' इति उपधानरूपगुणकर्मानन्वयिदेवतासंबन्धप्रतिपादकवाक्यशेषानुसारेण यागविधायकत्वं नाङ्गीक्रियते 'संयुक्त-

स्त्वर्थशब्देन' ( २।३।७।१८ ) इति द्वैतीयिकाधिकरणे उपक्रमस्य नैराकाङ्क्ष्यात् वाक्यशेषस्य देवतासमर्पकत्वं निराकृत्य वृहस्पतिपदस्य ब्राह्मणपरत्वाङ्गीकारेण मुन्यन्नतया नीवारस्तुतिपरत्वनिर्णयात् । **पराक्रमः.** ※'नैवारश्चरुर्भवति' 'यदेनं चरुमुपदधाति' इति श्रूयते । किमयं चरुर्यागार्थः, यागं कृत्वा अवशिष्टः उपधातव्यः, उत उपधानार्थः एवेतिविचारे उपधानार्थः एवायं, न यागार्थः इति निर्णयः। **भा.** २।३।७।१८. ※ वपनार्था मन्त्रा बहवः पठिताः । प्रयोगे तु 'चतुर्दशभिर्वपति' इति चतुर्दशत्वसंख्या विहिता । सा च आदिममन्त्रतो न ग्राह्या, किंतु प्रकरणेन क्रमं बाधित्वा निजेच्छया प्रथमतो मध्यतः अन्ततो वा उपक्रम्य सा पूरणीया । कृष्टे ( अकृष्टे च ) अग्निक्षेत्रे नानाबीजानां आवपनं क्रियते । तत्रेमे मन्त्राः । **वि.** १०। ५।५.※अग्निचयने पठितानामाधूननार्थानां वपनार्थानां च मन्त्राणां श्रुतसंख्यासंपत्तये अनियमेनोपादानं, नादिमानामेव । अन्त्यलोपापवादाधिकरणमिदम् । **भा.** १०।५।५। १४. ※ 'पञ्च चितयो भवन्ति' इति चितिशब्देन एकैकः प्रस्तर उच्यते, न सर्वा वेदिः । **संकर्ष.** २।१।१७. ※'प्राणभृत उपदधाति' अत्र लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधानं विधीयते । प्राणभृत्त्वं च यद्यपि प्रथमे एव मन्त्रे, तथापि तत्सहचरिताः सर्वे मन्त्राः प्राणभृच्छब्देन लक्ष्यन्ते । **वि.** ११।४।१८. ※ इष्टकाः पठितैः सर्वैरेव मन्त्रैरुपधेयाः । न तु 'लोकं पृण छिद्रं पृण' इत्यनेनैव । ये तु अधिका मन्त्रास्ते प्रयोगान्तरे उपयोक्ष्यन्ते । **संकर्ष.** २। १।१५,※न्यूनपूरणं, यस्यां चितौ ये मन्त्राः प्रक्रान्ताः तेषु समाप्तेषु 'लोकं पृण छिद्रं पृण' इति मन्त्रावृत्त्या इष्टकोपधानं कर्तव्यं, न तु प्रक्रान्तानामेव आवृत्त्या । २।१।१६.※ लोकंपृणाया आवृत्तौ तन्मन्त्रस्यापि आवृत्तिर्भवति । 'यत्र मन्त्रार्थस्य नानात्वं तत्रास्यावृत्तिर्भवति । यथा अग्नौ लोकंपृणायाः।' **भा.** ११।४।१२।४२, ※ इष्टका अनारभ्याधीताः अग्निचयनशेषः, न तु चितिशेषः । तेन ताः सकृदुपधातव्याः, न तु प्रतिचिति । ५।३।६।१५–१६, ※ इष्टकाधर्माः चित्रिणीवज्रिणीभूतेष्टकानामपि कर्तव्याः । ३।३।१२।३५. ※ चित्रिण्याः चयनं प्रति अनङ्गत्वात् नास्ति आवृत्तिः । **वि.** ५।३।६. ※ भूतेष्टकाः सत्याषाढेन तृतीयस्यां चितौ उपधेयतयोक्ताः । 'पृथिव्यै स्वाहेति द्वादश भूतेष्टकाः' ( १२।१।१७ ) । **के.** ※ इष्टकानां ब्राह्मणविहितानां मध्यमचितौ उपधानम् । **वि.** ५।३।७, ※ 'सृष्टीरुपदधाति' । सृजधातुयुक्ता मन्त्राः 'ब्रह्माऽसृज्यत' 'भूतान्यसृज्यन्त' इत्यादयः सृष्टिशब्देनोच्यन्ते । तथा च मन्त्रानुवादी सृष्टिशब्दोऽयं, न गुणविधायकः, किं तु अर्थवादः । लिङ्गप्रकरणप्राप्तमन्त्रानुवादेन इष्टकोपधानं अत्र विधीयते । १।४।१७. ※ इष्टकाधर्माः रौद्रे गावीधुके चरौ सर्वौषधे च न कर्तव्याः, अनारब्धे एव स्थण्डिले सर्वौषधावपनस्य, समाप्ते च चरुनिधानस्य क्रियमाणतया तत्कार्यापत्त्यभावात् । **संकर्ष.** २।१।१०. ※ देवसुवां हवींषि अग्नौ श्रूयन्ते 'अग्नीषोमीयस्य पुरोडाशमनु देवसुवां हवींषि निर्वपति' इति । तत्र पशुपुरोडाशस्य तन्त्रं कर्तव्यं ( तस्मात् अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रस्यैव प्रसङ्गः) । **भा.** १२।३।२। ३–८. ※ साग्निचित्ये विकृतिक्रतौ 'स्वर्गाय वा एष लोकाय चीयते यदग्निर्वज्र एकादशिनी, यदग्नावेकादशिनीं मिनुयात् वज्रेणैवैनं स्वर्गाल्लोकादन्तर्दध्यात्, यत्र मिनुयात् स्वरुभिः पशून् व्यर्धयेदेकयूपं मिनोति, नैनं वज्रेण स्वर्गाल्लोकादन्तर्दधाति, न स्वरुभिः पशून् व्यर्धयति' इति एकयूपो विधीयते, न यूपसामान्यम् । **संकर्ष.** १।४।१८. ※ एकयूपे एकादश पशवो नियोज्याः इति । तत्र प्रतिपशु रशना कार्या यदि पूर्वः पक्षः । सिद्धान्ते द्वैरशन्यमेव । **भा.** ४। ४।२४. ※अग्निचिद्व्रतानि–'अग्निं चित्वा संवत्सरं न कं चन प्रत्यवरोहेत् ( अभ्युत्थानं न कर्तव्यम् ), न पक्षिणोऽश्नीयात्, यावज्जीवं वर्षति न धावेत्, न रामामुपेयात् (धर्मपत्नीं तु उपेयात्), न द्वितीयं चित्वा अन्यस्य स्त्रियमुपेयात्, न तृतीयं चित्वा कां चनोपेयात्, भार्यां वा उपेयात्' । **सत्याषाढः** १२।७।१५–१७. ※ गुणकामानां यदा अग्निः, तदा प्रवृत्तिः । **टुप्.** १०।८।११।२७.※चितिः षष्ठी नैमित्तिकी अग्निचयनोत्तरं अप्रतिष्ठायां निमित्ते एकैव अदृष्टार्था, चयनाङ्गतया प्रयोगभेदेन प्रतिष्ठाफलार्थं वा विधीयते । **भाट्ट.** ४।४।७. ※ चितिः षष्ठी 'संवत्सरो वा एनं प्रतिष्ठायै नुदते, योऽग्निं चित्वा न प्रतितिष्ठति, पञ्च पूर्वाश्चितयो भवन्ति, अथ षष्ठीं चितिं चिनुते'

इतिश्रुत्युक्ता न नित्या, किंतु प्रतिष्ठाऽभावनिमित्तेन नैमित्तिकी। तथा च पञ्च चितयो नित्याः, षष्ठी च चितिरनित्या, इति षट्चितिकोऽग्निः कर्तव्यः। **वि.** ४।४।७.

**अग्निचयनं उपसद्दिनेष्वेव, न तु ततः पूर्वम्॥**

मन्त्रब्राह्मणयोर्दीक्षोत्तरमेव चयनपाठादुपसद्भ्यः पूर्वमेवाग्निश्चेतव्यः, **इति प्राप्ते,** 'यदहरग्निं चेष्यमाणस्तदहरुभयं समस्येत्' इत्यग्न्युपसदोरेकाहक्रियमाणत्वरूपसमासविधानादुपसद्दिने एवाग्निश्चेतव्यः। **संकर्ष.** २।१।२७.

**अग्निचयनं त्रिवारमेव कर्तव्यमिति न नियमः, चतुर्थाद्याहारसंभवात्॥** त्रिवारमेवाग्निश्चेतव्यो नाधिकवारं, 'जानुदघ्नं चिन्वीत' इत्यादिवाक्यैस्त्रिवारमाह्रियमाणानामेव स्थण्डिलपरिमाणेष्टकासंख्यानां विधानात्, **इति प्राप्ते,** याथाकाम्येन बहुवारं प्राप्तस्य तदाहारस्य परिसंख्यार्थत्वे गौरवापत्तेः, प्रथमाद्याहारनिमित्तकगुणमात्रविधानपरत्वेनापि तेषां विधीनामुपपत्तेः, 'उत्तरमुत्तरं ज्यायांसं' इत्यस्य 'नास्यदघ्नं चित्वा कनीयांसं चिन्वीत' इत्यस्य 'बृहत्तममपरिमितं स्वर्गकामश्चिन्वीत' इत्यस्य चार्थवत्त्वाय सन्ति चतुर्थाद्याहाराः। **संकर्ष.** २।१।३०.

**अग्निचयनगतस्य उख्यस्याग्नेः नित्यं न धारणम्॥**

**नित्यधारणे विकल्पो नह्यकस्मात् प्रतिषेधः स्यात्। १२।४।१०।३०॥**

**भाष्यं**—तस्मिन्नेव उख्ये चिन्ता, किमयं नित्यं धार्यो न वा, अथवा नैव धार्येतेति। तत्रोच्यते। नित्यधारणे विकल्पः, धार्यो वा न वा। कुतः? नहि अकस्मात् प्रतिषेधः स्यात्। धारणप्रतिषेधस्तस्य भवति। 'न प्रतिसमिध्येत्, यत् प्रतिसमिध्यति भ्रातृव्यमस्मै जनयति' (समिध्येत्, समिध्यति इत्यत्र समिन्धीत इति पाठोऽन्यत्र) इति श्रुतिः। धारणप्रसङ्गे च सति प्रतिषेधोऽर्थवान् भवति। यथा, 'न गन्तव्यं, न भोक्तव्यं' इति सति गमनप्रसङ्गे भोजनप्रसङ्गे च भवति। न च श्रुतिमन्तरेण प्रसङ्ग उपपद्यते, इति नित्यधारणस्य विधायिका श्रुतिरनुमीयते, तया प्राप्तिः, प्रतिषेधेन निवृत्तिः। तस्माद्विकल्पः।

**नित्यधारणाद्वा प्रतिषेधो गतश्रियः। ३१॥**

**भाष्यं** — यदि कदा चित् प्रत्यक्षया श्रुत्या प्रसङ्गो न स्यात् तत्रान्याऽनुमीयेत। अस्ति तु नित्यधारणस्य प्रसञ्जिका गतश्रियः श्रुतिः 'धार्यो गतश्रिय आहवनीयः' इति। आहवनीयस्थानापन्नत्वात् उख्यस्यापि नित्यधारणं प्रसक्तम्। तत्प्रतिषेधार्थेयं श्रुतिः। तस्मान्न श्रुत्यन्तरस्यानुमानं भवति। अतो नित्यधारणस्य अविधानात् कार्याभावाच्च अधारणमेव स्यात्।

**शा**—काम्याग्निप्रसङ्गं (प्रसङ्गागतं विचारं) समाप्य पुनः नित्यमेवोखाग्निमुपक्रम्य चिन्तयति, किमुख्यस्य नित्यधारणं न वेति विकल्प उताधारणमेवेति। तत्र 'न प्रतिसंदध्यात्' इति धारणप्रतिषेधः असत्यां प्राप्तौ अनुपपद्यमानः प्रापकं विधिमनुमापयति, तेन चानुमितेन विधिना प्रापितं, तत्प्रतिषेधेन च प्रतिषिद्धं धारणं विकल्पमर्हति (सामान्यवचनकारिताया अपि प्राप्तेः निर्दोषशास्त्रकारिततया अत्यन्तबाधायोगात् तदानीमपि विकल्पो दुर्वारः इति भावः) **इति प्राप्ते, अभिधीयते।** सामान्येनाहवनीयधारणं गतश्रियो विहितं, उख्यश्चायं आहवनीयस्थानापन्नः (आहवनीयस्थानापन्नस्योख्यस्य आहवनीयधर्मो' धारणमपि सामान्यवचनप्रसादबलादेव प्राप्नोतीत्यर्थः। इदं च प्रौढिवादेनोक्तम्। वस्तुतस्तु आहवनीय एवायं उख्यः, न तत्स्थानापन्नः अन्योऽग्निः, ततश्च साक्षादेव सामान्यवचनेन तस्य धारणं प्राप्नोति इत्याशयेनाह—) आहवनीय एव हि संतापेन उख्यः संजातः, तस्य धारणं सामान्यवचनप्राप्तं गतश्रियो धारणं उख्यविषये अनेन प्रतिषिध्यते, इति नानेन अश्रुतविध्यनुमानं संभवति। तस्मात् अधार्य एवायमुख्यः। (**न च** सामान्यवचनप्राप्तप्रतिषेधपक्षेऽपि विकल्पो दुर्वार इत्युक्तमिति **वाच्यम्।** सामान्यवचनप्राप्तस्य पर्युदासः इत्यङ्गीकारेण दोषाभावात्। **न च** तस्य उख्याग्निप्रकरणे संनिहितत्वाभावात् उख्याग्निसंनिधौ श्रूयमाणस्य 'न प्रतिसमिध्येत्' इत्यस्य न पर्युदासत्वसंभव इति **वाच्यम्।** आहवनीयस्थानापन्नं अग्न्यन्तरं उख्योऽग्निः इति पक्षे उख्याग्नौ आहवनीयधर्मसामान्यप्रापकवचनस्य उख्यविधिशेषतया कल्पनीयत्वेन तस्य संनिहिततया पर्युदासत्वसंभवात्। आहवनीय एवोख्यः, न त्वन्यः इति पक्षेऽपि

'प्रतिसमिन्धेत्' इत्याहवनीयधारणश्रवणबलेन कथं चिदाहवनीयधारणगोचरसामान्यवचनं हृदयमागमय्य पर्युदासत्वं समर्थनीयम्। विकल्पापेक्षया यत्नेनापि पर्युदासत्ववर्णनस्य ज्यायस्त्वादिति ध्येयम्)।

**वि**—'धृतिर्विकल्पितोख्यस्य किंवा नैवास्ति धारणम्।, निषेधात् कल्प्यविधितश्चाद्यो, न प्राप्तवारणात्॥'

**भाट्ट**— नित्ये तूख्ये गतश्रीत्वे निमित्ते आहवनीयत्वादेव प्राप्तमपि अजस्रधारणं 'न प्रतिसंदध्यात्' इत्यनेन पर्युदस्तत्वात् न कर्तव्यमेव इत्यपि प्रासङ्गिकमेव।

**न्यायबिन्दुः**—उख्यस्य विकल्पेन नित्यधारणं 'न प्रतिसंदध्यात्' इति धारणनिषेधस्य प्राप्तिपूर्वकत्वेन धारणविध्यनुमानात्, **इति प्राप्ते**, आहवनीयस्यानायत्तत्वात् तद्वत् गतश्रियो धारणं उख्येऽपि प्राप्तमनेन प्रतिषिध्यते इति नाश्रुतविध्यनुमानं, तस्मादधार्य एव उख्यः इति सिद्धान्तः।

**मण्डन**—'नास्य स्यान्नित्यधारणम्।' (उख्यस्य)

**शंकर**—'गतश्रीधारणं न च।'

**अग्निचयनगतेन ज्वलद्वृक्षाग्राद्याहृतेन काम्येनाग्निना उख्यस्याग्नेर्बाधः॥**

**उखायां काम्यनित्यसमुच्चयो नियोगे कामदर्शनात्। १२।४।७।१७॥**

**भाष्यं**—अस्ति अग्नौ उख्योऽग्निः 'संतापेनाग्निं जनयति' इति। तं प्रकृत्य श्रूयते 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य आहृत्यावदध्यात्, भ्राष्ट्रादन्नाद्यकामस्य, वैद्युताद् वृष्टिकामस्य' इति। तत्र विचार्यते, किं काम्यस्य नित्यस्य वाऽग्नेः समुच्चयः, अथवा काम्येन नित्योऽग्निः विक्रियते इति। तत्रोच्यते। उखायां काम्यनित्ययोरग्न्योः समुच्चयः। कुतः? एवं सर्वाङ्गोपसंहारी प्रयोगवचनः अनुग्रहीष्यते। ननु 'नैमित्तिकं तु प्रकृतौ तद्विकारः संयोगविशेषात्' (३।६।३।१०) इत्यनेन न्यायेन काम्योऽग्निर्नित्यस्य विकारको भविष्यति। न भविष्यति। किं कारणं? नियोगे कामदर्शनात्। अग्नेर्नियोजने अयं कामः श्रूयते 'आहृत्यावदध्यात् ब्रह्मवर्चसकामस्य' इति। न ब्रह्मवर्चसकामस्य अयमग्निर्होमार्थो भवतीति। एवं चेत् आहृत्यावधानात् फलं भविष्यति। होमस्तु यथाप्राप्तः उख्ये एव। संनिपाताच्च अग्न्योः समुच्चयः।

**टुप्**—'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य आहृत्यावदध्यात्' इत्यत्र विचार्यते, किं उख्यस्य वार्क्षाग्नेश्च समुच्चयः, उत वार्क्षाग्निना उख्यो बाध्यते इति। समुच्चयः उभयोः। कुतः? नियोगे कामदर्शनात्। 'ब्रह्मवर्चसकामस्याहृत्यावदध्यात्' इति अवधानात् कामः श्रूयते नाग्न्यन्तरात्। एवं चेत् अवधानं कृत्वा कृतार्थः शब्दः नाग्न्यन्तरं निवर्तयितुं शक्नोति, तस्मादवधानमात्रात् फलम्।

**असति चासंस्कृतेषु कर्म स्यात्। १८॥**

**भाष्यं**—यदि न काम्येन नित्योऽग्निर्विक्रियेत, स नैव स्यात्। तस्मिंश्चासति असंस्कृतेषु अग्निषु कर्म स्यात्। तथा आधानस्य सर्वार्थता बाध्येत। तस्मादपि समुच्चयः।

**तस्य च देवतार्थत्वात्। १९॥**

**भाष्यं**— अपि च अग्न्यन्वाधानेन देवतापरिग्रहणं कृतम्। यदि सोऽग्निः उत्सृज्येत ततो देवता अपरिगृहीता भवेयुः। अग्न्यन्वाधानेन अग्निर्धार्यते। तत्कृतादग्निधारणात् देवतापरिग्रहः।

**विकारो वा तदुक्तहेतु। २०॥**

**भाष्यं**—विकारो वा नित्यस्याग्नेः काम्येन। तदेतदुक्तहेतु 'नैमित्तिकं तु प्रकृतौ तद्विकारः' (३।६।३।१०) इति। सामान्येन एतदुक्तं, 'यदाहवनीये जुह्वति' इति। 'वृष्टिकामो वैद्युतात्' इति विशेषेण, तेन सामान्यं बाध्येत। किं कारणं? स्वाश्रयेषु अव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसंभवात्। विशेषस्य चान्यपरिच्छिन्नस्य एकावसायिनः तदसंभवे विषयाभावप्रसङ्गात् उपदेशवैयर्थ्यं मा भूत् इति। अथ यदुक्तं नियोगे कामदर्शनादिति, तत्र ब्रूमः। 'भ्राष्ट्रादाहृत्यावदध्यात्' इति नित्यस्यैव होमार्थस्यावधानस्य अयं विशेषकामसंयोगः, भ्राष्ट्रादाहृत्य अन्नाद्यकामस्येति। अवदध्यात् इति पुनःश्रुतिः। यदि अवधाने कामश्रुतिः स्यात्, अवधानं विधीयेत, नाविधीयमानं कामस्य साधनत्वेन युज्यते। तस्मिंश्च विधीयमाने विशेषश्च स च, इत्यनेकार्थत्वात् वाक्यं

भिद्येत। तस्मान्न नियोगे कामश्रुतिः। किं तर्हि? होमायैवायं नित्यो नियोगः अग्निविशेषविधानार्थमनूद्यते। यावदुक्तं स्यात्, वैद्युतमग्निं होमार्थं कुर्यादिति, तावदेवेदम्। एवं चेत्, नैमित्तिकः तस्मिंस्तस्मिन् कार्ये नित्यमग्निं विकरोति इत्युपपन्नम्।

**टुप्**—'स्वाश्रयेषु अव्यावृत्तविषयस्य सामान्यस्य ततोऽन्यत्रापि वृत्तिसंभवात्' इति (भाष्यम्। 'ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्याय') स्वाश्रयेषु ब्राह्मणपिण्डेषु अव्यावृत्तविषयस्य सामान्यस्य अपरिच्छिन्नविषयस्य विशेषापेक्षया ततोऽन्यत्रापि वृत्तिसंभवात्। तस्मात् विशेषात् कौण्डिन्यात् अन्यत्रापि ब्राह्मणपिण्डेषु वृत्तिः संभवत्येव। तस्मात् सामान्यशास्त्रं कृतार्थं अन्यस्मिन् विषये। 'विशेषस्य चान्यतः परिच्छिन्नस्य तदवसायिनः तदसंभवे विषयाभावप्रसङ्गात् उपदेशवैयर्थ्यं मा भूत् इति' (इति भाष्यम्) विशेषस्य पुनः कौण्डिन्यादेः अन्येभ्यो ब्राह्मणपिण्डेभ्यः अवच्छिन्नस्य तदवसायिनः तदसंभवे तस्मिन्नसंभवे विषयाभावप्रसङ्गात् उपदेशवैयर्थ्यं स्यात्। तस्मात् तदपि विशेषशास्त्रं अनुग्रहीतव्यम्। एवं बाधो वर्णितः, सोऽयुक्तः। यत् कारणं, शास्त्रानुग्रहः कार्यः इति नास्ति चोदना। यदि शास्त्रानुग्रहमात्रं स्यात्, दधिदाने कृते अनुगृहीतं शास्त्रं, इत्युभयत्र दधिदानम्। एतत्तु नेष्यते। तस्मात् य एव बाधोऽस्माभिर्वर्णितः नित्यनैमित्तिकयोः, स एव। अथ यदुक्तं, अभ्याधानात् फलमिति, अत्रोच्यते। 'तानि द्वैधं' (२।१।३।६) इत्यभ्याधानेन द्रव्यं चिकीर्ष्यते। दृष्ट एव संस्कारोऽग्नेः। तस्मान्नादृष्टार्थ इति सिद्धम्।

**वचनादसंस्कृतेषु कर्म स्यात्। २१॥**

**भाष्यं**—यच्चेदमुक्तं, असति चासंस्कृतेषु कर्म स्यादिति, तत्र ब्रूमः। वचनात् असंस्कृतेषु कर्म स्यादिति। किमिव वचनं न कुर्यात्। नास्ति वचनस्यातिभारः। यथा 'पदे जुहोति' इति।

**संसर्गे चापि दोषः स्यात्। २२॥**

**भाष्यं**—अपि च यदि समुच्चयः स्यात्, प्रादाव्येन सह संसर्गः स्यात् वैहारिकस्य। तत्र तु दोषः श्रूयते 'अग्नये शुचयेऽष्टाकपालं निर्वपेत्, यस्याग्निः प्रादाव्येन सह संसृज्यते, अशुचितर एष योऽग्निः प्रादाव्यः' (इति)।

**वचनादिति चेत्। २३॥**

**भाष्यं**—आह, नैष दोषः। वचनात् संसर्गः। न वाचनिके क्रियमाणे दोषः।

**तथेतरस्मिन्। २४॥**

**भाष्यं**—उच्यते। इतरस्मिन्नपि पक्षे वाचनिकः असंस्कृतेषु होमः। एवमुभयत्र वाचनिकत्वात् दोषाभावे सति नैमित्तिकत्वात् विकार आश्रीयते, न समुच्चयः।

**उत्सर्गेऽपि कर्मणः कृतत्वात्। २५॥**

**भाष्यं**—अथ यदुक्तं तस्य देवतार्थत्वादिति, तत्र ब्रूमः। उत्सर्गेऽपि नित्यस्याग्नेर्देवतापरिग्रहो न विरुद्धः, कर्मणः कृतत्वात्। अग्न्यन्वाधानेन देवताः परिगृह्यन्ते, नाग्निना। एवं श्रूयते 'यः पूर्वेद्युरग्निं गृह्णाति, स वै श्वोभूते देवता अभियजते' इति। तच्च कृतमग्नेर्ग्रहणम्। तेन परिगृहीता देवताः। अग्न्यन्तरे वचनाद्यजते। तस्मादविरोधः।

**शा**—काम्येन नित्यस्य निवृत्तिः। विकल्पसमुच्चयविचारे समाप्ते समुच्चयः एवास्ति नास्ति इति चिन्त्यते इति संगतिः।

**सोम**—जाघनीनामेकार्थत्वात् विकल्पेऽपि उख्यस्य वार्क्षाग्रादेश्च भिन्नकार्यत्वात् समुच्चयः इत्युत्थितेः संगतिः। **सूत्रे** नियोगशब्दोऽवधानार्थकः।

**वि**—'नित्योख्याग्नौ काम्यवह्निः संयुज्येताथ बाधकः।, कार्यभेदादादिमो, ऽन्त्यः कामेनान्यप्रसञ्जनात्॥'

**भाट्ट**—अग्नौ उख्योऽग्निः 'संतापेनाग्निं जनयति' इत्यनेन उत्पन्नः। तत्र उखा आहवनीयाग्निधारणपात्रं यजमानगले शिक्येन अब्दमात्रं ध्रियते। तस्मिन् पात्रे ध्रियमाणाहवनीयोऽग्निः उख्यः। तत्र दीक्षोत्तरकालत्वात् अग्निहोत्रहोमाद्यकरणेऽपि क्रत्वर्था होमाः क्रियन्ते। तं प्रकृत्य 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य आहृत्यावदध्यात्, भ्राष्ट्रादन्नाद्यकामस्य' इति श्रुतम्। तदिह काम्यप्रयोगे नित्यस्योख्यस्य आहवनीयादेः बाधविधया प्रसङ्गसिद्धिरस्ति न वा इति चिन्तायां, नात्र उखाधिकरणकावधानाश्रितो भ्राष्ट्रादिरग्निः फलोद्देशेन

विधीयते, येन गोदोहनेनेव चमसस्य प्रसङ्गसिद्धिराशाङ्क्येत, अवधानस्य विध्यन्तरविहितत्वाभावेन आश्रयत्वानुपपत्तेः। अतोऽवधानमेव अग्निविशिष्टं उखाधिकरणकं फलोद्देशेन विधीयते। आहवनीयाग्निधारणप्रयुक्तोखोपजीवकत्वाच्च न बहिःप्रयोगः। उख्यस्य आहवनीयाग्नेः अग्न्यन्तरसंसर्गोऽपि च वाचनिकत्वान्न दुष्यति। अतश्च फलार्थं अग्न्यन्तरावधानमात्रकरणेऽपि आहवनीयरूपस्य नित्यस्योख्यस्य बाधाभावात् अत्रैव होमादीनि **इति प्राप्ते,** विध्यन्तरविहितत्वाभावेऽपि होमार्थमेव धारणाक्षिप्तावधानस्य अर्थप्राप्तत्वेन उपस्थितत्वात् आश्रयत्वोपपत्तेः, लाघवात् गुणफलसंबन्धः एवायं, इति नित्यस्योख्यस्य निवृत्त्या प्रसङ्गसिद्ध्युपपत्तिः।

**न्यायबिन्दुः**— अग्नौ ( चयने ) उखायां स्थाप्यमग्निं प्रकृत्य श्रुतं 'वृक्षाग्राज्ज्वलतो ब्रह्मवर्चसकामस्य आहृत्यावदध्यात्, भ्राष्ट्रादन्नाद्यकामस्य' इति। तत्र नित्यकाम्ययोः समुच्चयः, नित्यस्य होमार्थत्वात् काम्यस्य (च) अवधानमात्रश्रवणेन होमार्थत्वाभावात् **इति प्राप्ते,** होमार्थावधानमाश्रित्य अग्न्यन्तरमात्रस्य फले विधिः। अतः काम्येन नित्यस्य बाधः इति सिद्धान्तः।

**मण्डन**—' वार्क्षाग्निर्बाधते तूख्यम्। '

**शंकर**—' अग्नावुख्यः काम्यबाध्यः। '

**अग्निचयनप्रकरणे श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्याग्नेः आहवनीयत्वं नास्ति॥**

**स आहवनीयः स्यादाहुतिसंयोगात्। १२।४।८। २६॥**

**भाष्यं**— यश्चासौ वैहारिकोऽग्निः स आहवनीयः स्यात्। कुतः? आहुतिसंयोगात्। एत्य हूयते यस्मिन् स आहवनीयः। हूयते चास्मिन् नित्ये। तस्मादयमपि आहवनीयः।

**अन्यो वोद्धृत्याऽऽहरणात्। २७॥**

**भाष्यं**— अन्यो वा आहवनीयात् स्यात्, नायमाहवनीयः। कस्मात्? उद्धृत्य आहरणात्। लौकिकोऽयं उद्धृत्य आह्रियते 'भ्राष्ट्रादाहरेत्' 'प्रादाव्यादाहरेत्' इति। आहवनीयशब्दश्च संस्कारनिमित्तः संस्कारेषु तत्सद्भावात्, अभावाच्च प्राक् तेभ्यः। यच्च आहुतिसंयोगादिति, सिद्धे आहवनीयत्वे आहुतयो विधीयन्ते 'यदाहवनीये जुहोति' इति। सिद्धेन तेन आसां ( आहुतीनां ) विधानात् न तत्कृतं तत् भवति। तस्मान्नाहवनीयः। **प्रयोजनं,** आहवनीयधर्माभावः।

**शा**— सोऽयं काम्योऽग्निः आहवनीयशब्दवाच्यः स्यात्, आहूयते अस्मिन्निति। तस्मादाहवनीयधर्माः गतश्रीधारणादयः अत्र कर्तव्याः। नैवं, आधानजन्मनः संस्कारविशेषस्य वाचकः अयं आहवनीयशब्दः, नासति तस्मिन् संस्कारे वर्तितुमर्हति। तस्मान्नात्र आहवनीयधर्माः।

**सोम**— प्रासङ्गिकी संगतिः। होमाधारतया आहवनीयत्वे तु 'आहवनीये जुहोति' इत्याहवनीयस्य सतो होमे विधिः, होमाधारत्वाच्च आहवनीयत्वं, इति परस्पराश्रयप्रसङ्गात्, होमाधारत्वेऽपि पदादिषु तत्प्रयोगाभावाच्च रूढ एवायम्।

**वि**—' सोऽग्निराहवनीयो नो वा, ऽऽद्य आहुतियोगतः।, अन्योन्याश्रयतो मैवं संस्काराच्चेन्न सोऽत्र हि॥ '

**भाट्ट**— सोऽयं काम्याग्निः आहवनीयपदवाच्यः स्यात् होमसाधनत्वात्। अतस्तत्र आहवनीयधर्माः गतश्रीधारणाद्याः कार्या इति संभवमात्रेण आशङ्का। आधानजन्यसंस्कारविशेषवाचकाः आहवनीयादिशब्दाः नासति तस्मिन् संस्कारे वर्तितुमर्हन्ति। तस्मान्नात्र गतश्रीधारणादयः। वस्तुतस्तु गतश्रीत्वे निमित्ते आहवनीयधारणं पुरुषार्थं, इति नासौ तद्धर्मः क्रतुप्रकरणाभावात्, स्वरूपे आनर्थक्याच्च। इदं च सुहृद् भूत्वा प्रसङ्गादुपदिष्टम्। एवमग्रेऽपि।

**न्यायबिन्दुः**— सोऽयं काम्योऽपि आहवनीयः, आहूयते अस्मिन् इति व्युत्पत्तेः। तेन आहवनीयधर्मा गतश्रीधारणादयोऽत्र कर्तव्या **इति प्राप्ते,** आधानजन्यसंस्कारविशेषस्य आहवनीयपदार्थत्वात् नात्र तद्धर्मा इति सिद्धान्तः।

**मण्डन**—' नासावाहवनीयकः। '

**शंकर**—' काम्यो नाहवनीयकः। '

**अग्निचयनविशिष्टे क्रतौ एकादिदीक्षापक्षाणां न बाधः॥** मासादिदीक्षाकल्पस्यैव इष्टकानिर्माणपर्याप्त-

कालत्वात् साग्निचित्यक्रतावेकादिदीक्षापक्षा न प्रवर्तेरन् **इति प्राप्ते,** 'न प्राजापत्येनानिष्ट्वा इष्टकाः कारयेत्' इति प्रतिषेधान्यथाऽनुपपत्त्या दीक्षातः पूर्वं, प्राजापत्यपशोः परतोऽपि तन्निर्माणकाललाभादनेन कालेन सहाविरोधाद् एकादिदीक्षापक्षाणां प्रकृतितः प्राप्तानां न बाधः। **संकर्ष.** २।१।२९.

**अग्निचयनसाधनीभूता इष्टकाः मृन्मय्य एव**॥ अग्निचयनसाधनीभूता इष्टकाः धातुमय्यो मृन्मय्यो वा अनियमेन उपादेयाः। इष्टकाशब्दस्य घटादिपदवत् जातिवचनत्वे वा वेदिपदवदाकृतिवचनत्वे वा उभयत्रापि प्रयोगदर्शनात् प्रवृत्तिनिमित्तस्य धातुमयीष्वपि अविशिष्टत्वात्। **इति प्राप्ते,** 'यन्मृच्चापश्चाग्नेरनाद्यं, अथ कस्मान्मृदा चाद्भिश्चाग्निश्चीयते' इति वाक्यशेषात्, 'निर्मन्थ्येनेष्टकाः पचन्ति' इति विहितपाकस्य अदृष्टार्थताऽऽपत्तेश्च मृन्मय्य एव। यत्तु **मूले** इष्टकाशब्दस्य जातिवचनत्वं निरस्य आकृतिवचनत्वं तदर्थसंशयानन्तरं प्रदर्श्य साधितं, तत् नातीवोपयुक्तं अयुक्तं चेत्युपेक्षितम्। **संकर्ष.** २।१।१.

**अग्निचयनाङ्गत्वं दाशतयीभ्य आनीतानां सर्वासामेव आग्नेयीनाम्**॥ यावन्ति नानामन्त्राण्युपधानानि तावत्संख्यानामेव दाशतयीतः आनयनं नाधिकानां, 'गायत्रीषु स्तुवते' इत्यादौ स्तोमपरिमितानामेवर्चामागमनस्य दृष्टत्वात्, आगमनस्य कार्यार्थत्वेन कार्यसमाप्तौ अधिकानां प्रयोजनाभावात् **इति प्राप्ते,** सर्वासामप्याग्नेयीनां यद्दृष्टीणामित्युद्देश्यकोटौ निवेशेन विनियोगात् सर्वासामेवाङ्गत्वं, 'सर्वे तु वेदसंयोगात् कारणादेकदेशस्य' इति न्यायात् (३।५।८।२६)। **संकर्ष.** २।१।३४.

**अग्निचयनाद्यङ्गभूताः सौत्रामण्यादयः स्वकाले एव कर्तव्याः, न तु चयनाद्यनन्तरमेव प्रयोगमध्ये**॥

**प्रधानेनाभिसंयोगादङ्गानां मुख्यकालत्वम्। ४।३।१७।४०॥**

**भाष्यं**— 'अग्निं चित्वा सौत्रामण्या यजेत' 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। अङ्गप्रयोजनसंबन्धः इत्युक्तम् (४।३।१२।२९)। एतदिदानीं संदिह्यते, किं चितमात्रे तन्त्रमध्ये एव कर्तव्यं, उत स्वकाले कर्तव्यमिति। तथा वाजपेये किं बृहस्पतिसवः, उत स्वकाले इति। मुख्यकालत्वमनयोः स्यात्। कुतः? प्रधानकालत्वादङ्गानाम्। एको हि कालः प्रधानानामङ्गानां चेति वक्ष्यते 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' इति (११।२।१।८)। अग्निचयनं कृत्वा न तावत्येव स्थातव्यं, सौत्रामणीसंज्ञकः अपरो यागः कर्तव्यः इति। तथा वाजपेयमभिनिर्वर्त्य नैतावता कृती स्यात्, बृहस्पतिसवसंज्ञकं यागमभिनिर्वर्तयेदिति।

**अपवृत्ते तु चोदना तत्सामान्यात् स्वकाले स्यात्। ४१॥**

**भाष्यं**—अपवृत्ते यागे चोद्यते यागान्तरमिदम्। अपवृत्तिश्च सर्वेषु यागाङ्गेषु अकृतेषु न भवति। न यथा भवान् मन्यते यागमात्रे निर्वृत्ते इति। कुतः? करणविभक्त्या संयोगात्। वाजपेयेनेष्ट्वा वाजपेयेन फलस्य व्यापारं कृत्वा। साङ्गेन च व्यापारो गम्यते, न निरङ्गेन। भवेत्तन्त्रमध्ये प्रयोगः, यदि वाजपेयमभिनिर्वर्त्य ईप्सितभावो वाजपेयस्य स्यात्, ततः प्रधानमात्रं वाजपेयसंज्ञकमभिनिर्वर्त्य इति गम्येत, न तु एवमस्ति। तस्मात् यथोक्तानि सर्वाणि अङ्गानि कृत्वा इत्यर्थः। एवं चेत्, निर्वृत्ते प्रयोगे, अतिक्रान्ते वाजपेयकाले, यागः प्रयुज्यते। तस्य चोदनासामान्यात् ज्योतिष्टोमिके विध्यन्ते प्राप्ते स्वेन चोदकप्राप्तेन कालेन भवितव्यम्। सौत्रामण्याः चोदनासामान्यात् दर्शपूर्णमासकालेनेति। **आह** वाजपेये तावत् 'इष्ट्वा' इति वचनात् यागमभिनिर्वर्त्य इति गम्यते। अग्नौ तु नोपपद्यते। तत्र 'चित्वा' इति वचनात् चयनमभिनिर्वर्त्य इत्यर्थः स्यात्। **उच्यते**। नैतदेवम्। 'अग्निं चित्वा' इति हि श्रूयते। अग्निं चयनेन संस्कृत्य इत्यर्थः। अग्निरिति ज्वलनोऽभिधीयते। न तस्य स्थलस्थापनमात्रं उपकारः। यदि स्थलस्थिते यागो भवति, ततः चयनेन अग्नेरुपकारोऽस्ति। तं अभिनिर्वर्त्य इति स्थलस्थितेऽग्नौ यागमभिनिर्वर्त्य इति गम्यते। यावत् स्थलस्थिते अग्नौ यागो न भवति, न तावत् अग्निश्चयनेन उपक्रियते। येनाग्निः यजमानस्यो-

पकरोति सः अग्नेरुपकारः, न स्थलस्थापनमात्रम् । तस्मात् तत्रापि यागमभिनिर्वर्त्यं इति गम्यते ।

**शा**—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाजपेयाङ्गत्वेन चोद्यमानो बृहस्पतिसवः किं प्रधानकाले शरदि तेन सह एकप्रयोगः कर्तव्यः, उत अतिदेशप्राप्ते स्वकाले वसन्ते, इति संशयः । तत्र 'साङ्गस्य हि प्रधानस्य विधानं देशकालयोः । अङ्गान्तरवदस्यापि तदङ्गत्वात् सह क्रिया ॥' ('अङ्गानि तु विधानत्वात्०' ११।२।१।७ इत्येकादशे देशकालकर्तॄणां साङ्गप्रधानसंबन्धस्य वक्ष्यमाणत्वात् इति भावः)। नहि वाजपेयः शरदि कर्तव्यः चोद्यते, किंतु वाजपेयकरणको यः फलार्थो व्यापारः प्रयोगः फलभावनाख्यः, तस्यायं कालविधिः, 'शरदि वाजपेयेन' इति तृतीयानिर्देशात्, तस्यैव फलसामग्रीभूतस्य चिकीर्षितस्य कालापेक्षित्वात् । स च व्यापारः अङ्गप्रधानव्यासक्तः, इति तुल्यः प्रधानस्याङ्गानां च तत्कालयोगः, इति वाचनिककालविरोधात् अतिदिष्टः कालो बाध्येत (ननु यथा 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति वाक्ये सत्यपि तृतीयानिर्देशे बृहस्पतिसवव्यतिरिक्ताङ्गेषु क्त्वाप्रत्ययोक्तकालस्य संकोचः, एवं शरत्कालस्यापि बृहस्पतिसवव्यतिरिक्ताङ्गेषु संकोचोऽस्तु इत्याशयेन शङ्कते—) ननु अयं कालो बृहस्पतिसववर्जिताङ्गेषु कृतार्थः, इति नातिदेशं बाधितुमुत्सहते । (बृहस्पतिसवस्य वाजपेयाङ्गत्वात् सर्वाङ्गप्रयुक्तप्रयोगग्रहणे बृहस्पतिसवस्यापि बृहस्पतिसवपूर्वकालत्वं स्यात्, न च तत् संभवति, इति बाधात् 'वाजपेयेनेष्ट्वा' इति क्त्वाप्रत्ययोक्तपूर्वकालस्य बृहस्पतिसवातिरिक्ताङ्गेषु युक्तः संकोचः । 'शरदि वाजपेयेन' इत्यत्र तु संकोचे न किं चित् कारणम् । अतिदेशस्य उपदेशापेक्षया दुर्बलत्वेन तत्संकोचकत्वायोगात् । तस्मात् अतिदेशस्यैव संकोचः इति परिहरति—) तर्हि अतिदेशोऽपि कालातिरिक्ताङ्गेषु कृतार्थः, इति न वचनसंकोचायालम् । तस्मात् प्रधानकालत्वम् । **एवं प्राप्तेऽभिधीयते ।** 'सत्यं **वाचनिकः कालो बाधेतैवातिदेशिकम् ।** बृहस्पतिसवे **त्वेष शरत्कालो न चोद्यते । यस्य कालविधिस्तस्माद् बहिर्भूतो हि सोऽङ्गतः ॥'** वाजपेयकरणको यः स्वकार्यं प्रति व्यापारः शरदि विहितः, तमेव इहापि समभिव्याहृतेन क्त्वाशब्देन प्रतिनिर्दिश्य ततः पश्चात्तनत्वेन बृहस्पतिसवश्चोद्यमानः तत्प्रयोगबहिर्भावात् न तत्कालं लभते । यदि परं वाजपेये कृते कर्तव्यः सन् अतिक्रमकारणाभावात् अनन्तरमेव क्रियेत, अस्ति तु अतिक्रमकारणं कालोपसंहारः । क्त्वा च पूर्वकालतायां स्मर्यते नानन्तर्ये (वैमृधस्य तु 'संस्थाप्य पौर्णमासीं वैमृधमनु निर्वपति' इति आनन्तर्यार्थकानुशब्दबलात् तदानीमेव कर्तव्यत्वमिति भावः) तस्मात् स्वकाले प्रयोगः । निर्वृत्तमपि च वाजपेयापूर्वं अनेनाङ्गेन बलवत् क्रियते । ४।३।१८.

**सोम**—वैश्वानर्यां आतिदेशिककालाबाधेऽपि इह तद्बाधः इति प्रत्यवस्थानात् संगतिः । 'यथा पौर्णमास्यमावास्याख्ययोः समुदाययोः अन्योन्यसाहित्यं विना फलापूर्वासाधनत्वेऽपि 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति तृतीयया समुदायापूर्वसाधनत्वावगमः, तथा वाजपेयस्यापि बृहस्पतिसवाङ्गं विना परमापूर्वासाधनत्वात् इहापि तृतीयया समुदायापूर्वसाधनत्वमेव बोध्यते, तेन बृहस्पतिसवानुष्ठानात् पूर्वं समुदायापूर्वमेव निष्पद्यते, परमापूर्वं तु बृहस्पतिसवानुष्ठानानन्तरमेव इति **भट्टसोमेश्वर**मतिः । एवं 'अग्निं चित्वा सौत्रामण्या यजेत' इत्यत्र चयनेन अग्निसंस्कारनिष्पत्त्यनन्तरं विधानात् अग्निसंस्कारस्य चयननिष्पन्नस्थण्डिले अग्निनिधानरूपस्य स्वरूपेण फलवत्त्वाभावेन तत्फलतायाः क्रत्वपूर्वनिष्पत्तिपर्यन्तव्यापनादेः **संकर्षे** 'सौत्रामण्याः साग्निकक्रत्वङ्गत्वमेव न तु चयनाङ्गत्वं, न वा अग्न्यङ्गत्वम्' इति व्यवस्थापनात्, साग्निकक्रत्वनुष्ठानानन्तरं सौत्रामण्या अनुष्ठेयत्वे सति आतिदेशिककालाबाधाय स्वकाले पर्वणि अनुष्ठानं बोध्यम् । **सूत्रार्थस्तु,** अङ्गानां बृहस्पतिसवादीनां प्रधानेन एककालत्वाभिसंबन्धात् मुख्यकालत्वं प्रधानकालत्वमेव इति (पूर्वपक्षः)।

**वि**—'अग्निं चित्वा यजेत् सौत्रामण्येत्यङ्गेष्टिरीदृशी । अग्निकाले स्वकाले वा, स्यादाद्योऽन्या-

ङ्गवन्मतः ॥, निर्वृत्ते चयनादौ तु कर्मान्तरविधानतः । स्वकाले चोदकप्राप्ते तदनुष्ठानमास्थितम् ॥ ' ४।३।२०.

**भाट्ट**— बृहस्पतिसवो वाजपेयोत्तरं शरद्येव कार्यः । यद्यपि हि क्त्वाप्रत्ययेन नानन्तर्यमभिधीयते, पूर्वकालमात्रे स्मरणात्, तथापि औपदेशिकशरत्कालस्य साङ्गप्रधाने विहितत्वेन (अवभृथे) अद्भिः प्रयाजादिष्वग्नेरिव आतिदेशिकस्य वसन्तादिकालस्य बाधोपपत्तिः । एवं सौत्रामण्यपि चयनाङ्गत्वात् तदुत्तरकालमेव कार्या । न तु पर्वणि यागप्रयोगोत्तरकालीने, तदानीं चयननियमादृष्टस्य नष्टत्वेन सौत्रामण्या अनुपयोगात् । नहि सा ऋत्वङ्गं, धातुसंबन्धाधिकारविहितेन क्त्वाप्रत्ययेन चयनमात्राङ्गत्वप्रतीतेः, **इति प्राप्ते**, शरत्कालस्य वाजपेयप्रयोगविशेषणत्वेन विधेयत्वात् ' वाजपेयेनेष्ट्वा ' इति तृतीयया बृहस्पतिसवस्य तत्प्रयोगबहिर्भावावगतेस्तत्र शरद्विध्यभावात् कालापेक्षायां नामातिदेशप्राप्तवसन्तादिबाधे प्रमाणाभावः । एवं सौत्रामण्यामपि न पर्वबाधः । 'अग्निं चित्वा' इत्यनेन हि चयनेन ऋत्वपूर्वसाधनीभूताग्निं संस्कृत्य इत्यर्थावगतेः त्र्यंशाचयनभावनोत्तरकालत्वसिद्धिः । न चानुपयोगः, चयनप्रयोज्यक्रत्वपूर्वोपयोगेऽपि चयनाङ्गत्वोपपत्तेः । न तु एतावता ऋत्वङ्गत्वं इति **तन्त्रसारोक्तं** मन्तव्यं प्रमाणाभावात् । ' ऋत्वङ्गत्वं वा चित्यङ्गत्वे नोपपद्यते ' इति **संकर्षणसूत्रं** तु ऋत्वपूर्वोपयोगाभिप्रायं व्याख्येयम् । अत एतेऽपि कालप्रयोजकाः । ४।३।१५.

**न्यायबिन्दुः**—वाजपेयाङ्गं बृहस्पतिसवः प्रधानकाले शरदि तेन सह एकप्रयोगः कार्यः, कालस्य साङ्गप्रधानार्थत्वात् । अतः सोमातिदेशकालप्राप्तो वसन्तो बाध्यते **इति प्राप्ते,** ' वाजपेयेनेष्ट्वा ' इति क्त्वाशब्देन वाजपेयकरणकभावनानन्तर्यस्य उक्तत्वान्न तदेकप्रयोगता, अतो न स्वकालवसन्तबाधः इति सिद्धान्तः ।

**मण्डन**— ' काले सौत्रामणी स्वके । '

**शंकर**— 'बृहस्पतिसवोऽप्येवम् । ' ( स्वकालगः )

**अग्निचयने अग्निचिद्व्रतानां ऋत्वन्तेऽनुष्ठानम् ॥**

**संचिते त्वग्निचिद्युक्तं प्रापणान्निमित्तस्य । ५।३। १०।२६ ॥**

**भाष्यं**—' अग्निचित् वर्षति न धावेत्, न स्त्रियमुपेयात् ' 'तस्मादग्निचिता पक्षिणो नाशितव्याः' इत्येवमादयः पदार्थाः श्रूयन्ते । तेषु संदेहः किं संचितमात्रे प्रतिपत्तव्याः, उत ऋत्वन्ते इति । किं प्राप्तं ? संचितमात्रे एवेति । अग्निं यश्चितवान् सोऽग्निचिदिति । तस्य श्रूयमाणाः चितवतः अनन्तरमेव प्राप्नुवन्ति । प्राप्ते निमित्ते नैमित्तिकं कर्तव्यम् । तस्मादनन्तरमेव ।

**ऋत्वन्ते वा प्रयोगवचनाभावात् । २७ ॥**

**भाष्यं**—प्रयोगवचनो ह्यत्र तान् पदार्थान् प्रापयति, येषां ऋत्वर्थत्वम् । न चैषां ऋत्वर्थत्वमस्ति, पुरुषार्था ह्येते । कथं ? प्रतिषेधे पुरुषः श्रूयते ' वर्षति न धावेत् ' ' न स्त्रियमुपेयात् ' इत्येवमादि । न च ऋत्वर्था एते प्रसक्ताः, येन प्रतिषेधः ऋतोरुपकुर्यात् ।

**टुप्**—योऽग्निं चितवान् सोऽग्निचित् । स चाग्निः कर्मभूतः । चयनं तदर्थम् । तस्मात् चयनेनाग्नेरुपकर्तव्यम् । तच्च आधारतां प्रतिपद्यमानं उपकरोति । अग्निश्च अङ्गप्रधानार्थः । अतो यावदङ्गप्रधानानि निर्वर्तन्ते तावत् चयनं आधारतां प्रतिपद्यमानं अग्न्यर्थं भवति, न चयनमात्रम् । तस्मात् साङ्गपरिसमाप्त्युत्तरकालं निमित्ततां प्रतिपद्यते । तस्मात् साङ्गे कृते यागे अग्निचिदुच्यते ।

**अग्नेः कर्मत्वनिर्देशात् । २८ ॥**

**भाष्यं**—ननु पुरुषार्था अपि चितवतः श्रवणात् चयनानन्तरं प्राप्ताः । नेति ब्रूमः । अग्न्यर्थं चयनं तत् । यदग्नेः स्वं कार्यं कुर्वतः साहाय्ये वर्तते, तत्तदर्थम् । कश्च तस्य स्वार्थः ? यागसिद्धिः । सिद्धे च यागे चयनेनोपकृतं भवति । तस्मात् सिद्धे यागे अग्निचित् । तेन ऋत्वन्ते इति ।

**शा**—' धात्वर्थश्चयनं भूतं निमित्तं तदनन्तरम् । व्रतान्यतः प्रवर्तेरन्नाहिताग्निव्रतादिवत् ॥ ' नैवम् ; ' भावनाया निमित्तत्वं धातुस्तदुपसर्जनम् । तस्याश्च फलनिर्वृत्त्या निर्वृत्तिरुपलक्ष्यते ॥ ' नह्यत्र चयनस्वरूपनिर्वृत्तिर्निमित्तं, तत्करणिका तु अग्निकर्मिका भावना भूता निमित्तं, तस्याश्च अग्न्युपकारो भाव्यः । सोऽपि च क्रतुं साधयतोऽग्नेर्धारणं, तच्च आ क्रतुसमाप्तेर्वितर्तं, न ततः प्राक् निर्वृत्तं भवति, तन्निर्वृत्त्या च विना न भावना-

निर्वृत्तिः, फलापवर्गित्वात् भावनानाम् । आधानस्य तु अग्निगतमदृष्टं भाव्यम् । तच्चानन्तरमेव निर्वृत्तमिति विशेषः ।

**सोम**—'अनन्तरं व्रतं तद्भूतत्वात्' (५।३।९। २२) इति पूर्वाधिकरणोक्तगुणसूत्रे यदग्निहोत्रादिवैषम्येण आधानानन्तरकर्तव्यत्वं आहिताग्निव्रतस्योक्तं तद्दृष्टान्तेन प्रत्यवस्थानात् संगतिः । 'कर्मणि' (पा० ३। २।१) 'भूते' (पा०३।२।८४) इति चाधिकृत्य 'अग्नौ चेः' (पा० ३।२।९१) इति कर्मणि अग्नौ उपपदे चिनोतेर्धातोः क्विप्प्रत्ययविधानात् अग्निकर्मिका चयनकरणिका भावना भूता सती निमित्तं, न तु चयनकर्मिका । भावना च फलनिष्पत्त्या भूता भवति, क्रियायाः फलापवर्गित्वात् । फलं चात्र अङ्गप्रधानार्थस्याग्नेर्धारणरूपम् । तेन साङ्गक्रतुसमाप्तिपर्यन्तं चयनकरणकाग्निसंस्कारभाव्यकभावनानिर्वृत्त्यभावेन निमित्ताभावात् 'चयनानन्तरमेव व्रतप्रवृत्तिः' इति न युक्तिमत् । आधानस्य तु चयनवत् क्रत्वर्थत्वाभावेन क्रत्वपूर्वसाधनसंस्कारत्वाभावात् स्वतन्त्रमेव अग्निगतमदृष्टं फलं, इति नाहिताग्निव्रतेषु क्रत्वन्तप्रतीक्षा । अग्निचिद्व्रतानि तु चयनेनाग्निं संस्कृतवतो विधीयमानानि चयनावान्तरकार्यस्थण्डिलस्थापनादिमात्रेणाग्निचित्त्वाभावात् क्रत्वन्ते एव प्रवर्तन्ते इति वैषम्यम् । **सूत्रार्थस्तु** अग्निचित्संयुक्तं व्रतं चितमात्रे एव स्यात् निमित्तस्य प्राप्तेः इति ।

**वि**—'न धावेद् वर्षतीत्यादि चितौ सत्यां क्रतावुत ।, आद्यश्चितेर्निमित्तत्वा,–न्न क्रतावग्निचित्त्वतः ॥' तस्मात् क्रत्वन्ते तानि व्रतानि ।

**भाट्ट**—'वर्षति न धावेत्' इत्यादीनि अग्निचिद्व्रतानि आमरणं वर्षमात्रं वा चयने निमित्ते पुरुषार्थतया, आधाने निमित्ते आहिताग्निव्रतवदेव विहितानि । अत्र व्रतपदश्रवणादेव उभयत्रापि संकल्पलक्षणा । पुरुषार्थत्वं च वाचनिकफलश्रवणात् द्रष्टव्यम् । तदिदमग्निचिद्व्रतं भूतचयनमात्रस्यैव भूताधानवत् निमित्तत्वात् चयनमात्रे कृते कर्तव्यं आहिताग्निव्रतवत् **इति प्राप्ते**, 'कर्मणि' 'भूते' इति चानुवर्तमाने 'अग्नौ चेः' इति सूत्रेण कर्तरि चिनोतेः क्विप्प्रत्ययविधानात् कर्मत्वाद्यन्यथाऽनुपपत्त्या च भावनाऽऽक्षेपात् अग्निकर्मकचयनकरणकभावनाया एव भूतायाः निमित्तत्वावगतेः, अग्निशब्दवाच्यस्य च ज्वलनाख्यस्याग्नेः स्वरूपेण चयनकर्मत्वाभावात् चयननिष्पादितस्थण्डिलाधारत्वद्वारा कर्मत्वावगतेः, आधारतायाश्च साङ्गयागसमाप्तिं यावत् अनिष्पत्तेः क्रत्वन्ते एव अग्निकर्मकचयनकरणकभावनायाः भूतत्वावगतेः तदन्ते एव अग्निचिद्व्रतानि । आहिताग्निपदे तु **यद्यपि** क्तप्रत्ययेन तथैव लक्षणया भावनावगतेः तस्या एव भूतायाः निमित्तत्वावगमः **तथापि** ज्वलनाख्यस्याग्नेः आधानकर्मत्वस्य स्वजन्यावान्तरापूर्वाधारत्वेनैव वाच्यत्वात्, तादृशस्य च आधानान्ते एव निष्पत्तेः तदन्ते एव आहिताग्निव्रतानि । नहि अत्र आहवनीयत्वादिना कर्मत्वं श्रुतं, येन पवमानेष्ट्यन्ते तन्निष्पत्तिः शङ्क्येत ।

**न्यायबिन्दुः**—'वर्षति न धावेत्' इत्यादीनि अग्निचिद्व्रतानि चयनानन्तरमेव कार्याणि आहिताग्निव्रतवत् **इति प्राप्ते**, चयनक्रियायाः फलपर्यन्तत्वात् तन्निमित्तकं तदनन्तरमेव कार्यम् । फलं चयनक्रियायाः अग्न्युपकारः होमसाधनाग्नेर्धारणं इति तत्समाप्त्यनन्तरं नैमित्तिकम् । आधानफलं तु अग्निगतं अदृष्टं अनन्तरमेव भवति इति विशेषः इति सिद्धान्तः ।

**मण्डन**—'यागे पूर्णेऽग्निचिद्व्रतम् ।'

**शंकर**—'क्रत्वन्ते त्वग्निचिद्धर्माः ।'

**अग्निचयने अज्यानीहोमेषु मान्त्रवर्णिकी इन्द्रादिर्देवता** ॥ अग्नौ श्रुतं 'अज्यानीरेता उपदधाति' 'आग्रयणं निरुप्यैता आहुतीर्जुहोति' इति । 'शतायुधाय' इति पञ्च मन्त्राः प्राणभृन्न्यायेनाज्यानयः । उपधानकरणतायाः 'तद्वानासाम्' (पा०४।४।१२५) इति स्मृत्याऽवगमेऽपि एता इति पदेनाहुतिकरणताया अप्रतीतेर्न मान्त्रवर्णिकदेवतासिद्धिः । होमे मन्त्रसंबन्धस्तु क्रियमाणानुवादित्वादिनाऽप्युपपन्नः । देवता तु सामान्यपरिभाषानुसारेणान्यैव कल्प्यतां **इति प्राप्ते**, एता इति पदेनेष्टकानां परामर्शे अन्वादेशे एना इत्यापत्त्या आवश्यकेन ऋचां परामर्शेन तासामाहुतिपदसामानाधिकरण्येनान्वयानुपपत्तेरेव एता-

भिरिति विपरिणामावश्यंभावात् इन्द्रादय एव देवताः। **भाष्यकारैस्तु** नेदमधिकरणमित्युक्तम्। **संकर्ष.** २।४।४.

**अग्निचयने इष्टका अग्निमत्य एव कार्याः॥** इष्टकात्वाविशेषात् प्रयोगप्राचुर्याभावाय अनियतसंस्थानवत्त्वे तासां **प्राप्ते**, इष्टकानां चितिनिर्वृत्तिरूपकार्यप्रयुक्तत्वेन स्वरूपार्थत्वाभावादग्निमन्तरेण तदयोगात् साग्निका एव भवेयुः। 'चतुरश्रा भवन्ति' इति त्वाक्षिप्ताश्रयुद्देशेन गुणमात्रविधिः। **संकर्ष.** २।१।२.

**अग्निचयने इष्टकाः पक्वा एव ग्राह्याः॥** आमपक्वसाधारण्येनेष्टकापदप्रयोगात् 'पक्वेष्टकचितः प्रासादः' इत्यादिप्रयोगेषु पदान्तरसमभिव्याहारेणैव पक्वताप्रतीतेरनियमः, 'नैर्ऋतीः कृष्णास्तुषपक्वा भवन्ति' इति कतिपयासु पाकविधानादितरा आमा एव वा **इति प्राप्ते,** 'न कृष्णां न लक्ष्मणामुपदध्यात्' इति निषेधबलादेवोन्नीते सर्वासां पाके, कतिपयानां पाके तुषाणां साधनत्वमात्रनियमविधिपरत्वे लाघवात् 'अग्निनेष्टकाः पचन्ति' इति शाखान्तरे श्रवणाच्च पक्वा एव। **संकर्ष.** २।१।६.

**अग्निचयने इष्टकाः पशुशीर्षाद्युपधाने अन्तरालपूरणार्थं न विधेयाः॥** पशुशीर्षाद्युपधाने यदन्तरालमुत्पद्यते तत्पूरणार्थमपि कतिपया इष्टका निर्मातव्याः। 'इष्टकाभिः' इति तृतीयाश्रुत्या चयनं प्रति निरपेक्षकारणत्वावगमात्। तासां परस्परसंबन्धमन्तरेण नैरपेक्ष्यायोगात् **इति प्राप्ते,** निरन्तरालेष्टकासंबन्धस्यासंभवात् सिकतापूरणविधिबलाच्च अवर्जनीयकिंचिदन्तरालस्यैव वाचनिकामृन्मयवस्तुकृतान्तरालस्यापि सोढव्यतया मृत्पाषाणकाष्ठाद्यन्तरालसद्भावेऽपि 'चितः प्रासादः' इति प्रयोगदर्शनाच्च पशुशीर्षादिस्थले इष्टका निधेयाः। **संकर्ष.** २।१।४.

**अग्निचयने इष्टकाः समचतुरस्राः कार्याः॥** चतुष्ट्वसंख्याविधेरविरोधाद्दीर्घचतुरस्रसमचतुरस्रयोर्विकल्पे **प्राप्ते,** दीर्घादिपदान्तरसमभिव्याहाराभावे समचतुरस्रस्यैव बोधादश्रिपरिमाणचतुष्कस्य 'समं स्यात्' (१०।३।१३) इति न्यायेन साम्यमेव। **संकर्ष.** २।१।३.

**अग्निचयने इष्टकाधर्माः चरुसर्वौषधेषु न भवन्ति॥** 'रौद्रं गावीधुकं चरुमेतेन यजुषा चरमायामिष्टकायां निदध्यात्' 'सर्वौषधं वपति' इति विहितयोश्चरुसर्वौषधयोरपि स्थलनिर्वर्तकत्वाविशेषात् इष्टकाधर्माः कर्तव्या **इति प्राप्ते,** अनारब्धे एव स्थण्डिले सर्वौषधवपनस्य, समाप्ते च चरुनिधानस्य क्रियमाणतया तत्कार्यापत्त्यभावान्न तद्धर्माः। **संकर्ष.** २।१।१०.

**अग्निचयने इष्टकाधर्माः नैर्ऋतीषु न भवन्ति॥** 'नैर्ऋतीः रुक्मा उपदधाति' इति विहितोपधानार्थत्वेनेष्टकाधर्माणां नैर्ऋतीष्वपि प्रवृत्तिः **इति प्राप्ते,** नैर्ऋतीष्टकासन्धौ उख्याधारशिक्यप्रक्षेपविधानेन तत्प्रतिपत्तिमात्रार्थत्वेन स्थण्डिलनिर्वर्तकत्वाभावेनोपधातेर्गौणत्वेन न मुख्यधर्माणां तत्र प्रसक्तिः। **संकर्ष.** २।१।११.

**अग्निचयने इष्टकाधर्माः सिकतासु न भवन्ति॥** सिकतानामपि स्थलनिर्वर्तकत्वाविशेषादिष्टकाशब्दप्रयोगाच्च संख्यान्तर्गत्यवश्यंभावेन 'तया देवतया' इति मन्त्रेणैवोपधानं भवेत् **इति प्राप्ते,** 'तासामपरिमिताभिः सिकताभिः पूरयति' इत्यपरिमितविशेषणेन सहस्रसंख्याबहिर्भावात् चतुर्धाकरणे दक्षिणाशब्दस्येव तास्विष्टकाशब्दप्रयोगस्य स्तुत्यर्थत्वान्न मन्त्रः। **संकर्ष.** २।१।९.

**अग्निचयने इष्टकानिर्माणं दीक्षोत्तरमेव॥** इष्टकानां निर्माणे विशिष्य कालविधेरभावात् **याथाकाम्ये प्राप्ते,** दीक्षोत्तरकालः एव नियम्यते। 'इष्टकासूख्यभस्म स्पृश्यते तेन सर्वा अग्नयो भवन्ति' इति वचनेनोख्याग्निभस्मनो मृदश्च संसर्गविधानात्, तस्य च दीक्षातः पूर्वमसंभवात्। **संकर्ष.** २।१।२८.

**अग्निचयने इष्टकापाकः निर्मन्थ्येन लौकिकेन॥** तासां वैदिकेनाग्निनैव पाकः कर्तव्यः। प्रकरणान्तरविहितेषु हविःश्रपणादिषु तस्यैव कर्माङ्गत्वेन करणत्वात् **इति प्राप्ते,** 'आहवनीये गार्हपत्ये वा हवींषि श्रपयति' इत्याहत्य विधानेन वैहारिकस्य पाककरणत्वेऽपि प्रकृतेऽग्निनेति पदस्य लौकिकपरत्वमेव वाच्यं, अन्यथा तदुपादानवैयर्थ्यापत्तेः। विहाराद्बहिर्नयनस्य वचनमन्तरेण कृतौ लौकिकत्वावश्यंभावाच्च। तृणारणिमणिजन्यानामनियमेन प्राप्तौ शाखान्तरे 'निर्म-

न्थ्येनेष्टकाः पचन्ति ' इति नियमार्थो विधिः । **संकर्ष.** २।१।७.

**अग्निचयने इष्टकाविशेष एव सशिरस्क एवाग्निश्चेतव्य इति शिरःशब्देन ग्राह्यः, न तु पक्षिशिरः** ॥ ' सशिरस्क एवाग्निश्चेतव्यः ' ' वयसां वा एष प्रतिमया चीयते ' इति पक्षितुल्यताश्रुतेः, ' अग्नेः शीर्ष्णो अग्नेः शिर उपदधामि ' इति मन्त्रवर्णात्, ' पक्षयोः स्तुवते ' ' त्रिवृता शिरसि स्तुवते ' इत्यादिविधिदर्शनाच्च **इति प्राप्ते,** इष्टकाविशेष एवात्र शिरःशब्देनोच्यते । पक्षिप्रतिमतायाः किंचित्सादृश्येनाप्युपपत्तेः स्वयमातृण्णाहोमे ' एतद्वा अग्नेः शिरः ' इत्यादिवत् गुणवादेनापि मन्त्रगतशिरःशब्दोपपत्तेः ' शिरसि स्तुवते ' इति वैधेऽपि पदे वास्तविकशिरसोऽभावादेव लाक्षणिकता । **संकर्ष.** २।१।३८.

**अग्निचयने इष्टकाशब्दात् दूर्वादिषु नेष्टकाधर्मः** ॥ इष्टकासंस्काराणामिष्टकाकार्यार्थत्वेऽपि द्वारांशे नियमविधेरावश्यकतया चमसाधिकरणन्यायेनेष्टकात्वस्याविवक्षाऽभावाद् दूर्वाघृतादिष्वाकृतेरभावेन इष्टकात्वजातेरभावान्न तेष्विष्टकाधर्माः **इति प्राप्ते,** ' दूर्वेष्टका उपदधाति ' ' घृतेष्टका उपदधाति ' इत्यादौ इष्टकाशब्दप्रयोगस्य तद्धर्मप्राप्त्येकफलकत्वात् ' सहस्रेष्टकमग्निं चिनुते ' इति विहितसंख्याघटकत्वाच्च भवेयुरमृन्मयीष्वपि इष्टकाधर्माः । **संकर्ष.** २।१।८.

**अग्निचयने इष्टकासंख्यापूरणं लोकंपृणाभिः मन्त्रन्यूनत्वे** ॥ यस्यां चितौ ये मन्त्राः प्रक्रान्तास्तैरेव मन्त्रैरावृत्तैः सासा चितिः पूरणीया **इति प्राप्ते,** 'यदेवास्योनं यच्छिद्रं तदेतया पूरयति ' इति वचनेन लोकंपृणाया ऋच एव न्यूनपूरणे विनियोगात् प्रक्रान्तनियतसंख्याकमन्त्रसमाप्तौ अवशिष्टा इष्टकाः लोकंपृणमन्त्रेणैवोपधेयाः । पुनःपुनरावर्त्यमानत्वादेव ' अयातयाम्नी लोकंपृणा ' इति स्तुतिरुपपद्यते । **संकर्ष.** २।१।१६.

**अग्निचयने इष्टकासु सर्वान् वर्णान् इति रेखावादः** ॥ ' सर्वान् वर्णानिष्टकानां कुर्यात् ' इति श्रुतौ वर्णशब्दः श्वेतादिरूपपरः एव । अन्यसमवेतरूपाणामन्यत्र कर्तुमशक्यत्वादेव वाईसवर्णसमवायिमुखामैरिकादिद्रव्यलेप आक्षेपलभ्यः । न तु वर्णशब्द एव तत्परः, 'शब्दसंयोगात्' इति सूत्रस्वरसात् । रेखासामान्ये वर्णशब्दस्य शक्तिनिरूढ्योरभावात् । 'वर्णे तु चाक्षरे' इति कोशेन नपुंसकत्वापत्तेश्च **इति प्राप्ते,** ' ऋजुरेखाः पश्चाच्च पुरस्ताच्च, न्यालिखिता मध्ये ' इत्यन्तेन नानारेखावतीनामिष्टकानां देशविशेषविधानोत्तरं सर्वान् वर्णानित्यस्य पाठेन सर्ववर्णशब्दस्य पूर्वप्रक्रान्तविविधरेखापरत्वावसायात्, सति तात्पर्यग्रहे तदनुपपत्त्या लक्षणाया अपि न्याय्यतया, यावद्विशेषाणां विनियोगविधिभिरेव सर्वरेखाऽऽक्षेपे सति तदनुवादके वाक्ये तस्या अदोषत्वाच्च, उक्तकोशे चकारेण पुंलिङ्गपदस्याप्यनुकर्षात् रेखापर एव । **संकर्ष.** २।१।५.

**अग्निचयने इष्टकोपधाने प्राचीं प्रतीचीं इति कर्तुर्मुखवादः** ॥ ' पश्चात् प्राचीमुत्तमामुपदधाति, तस्मात् पश्चात् प्राची पत्न्यन्वास्ते ' इत्यत्राप्युक्तन्यायेन **रीतिवादे प्राप्ते,** गणेषु तथा संभवेऽप्येकस्यां तदयोगात् वाक्यशेषे कर्तृगतत्वेनैव विवरणाच्च कर्तुरेवायं मुखवादः । **संकर्ष.** २।१।१९.

**अग्निचयने इष्टकोपधाने प्राचीरुपदधाति इति रीत्यपवर्गवादः** ॥ ' प्राचीरुपदधाति ' ' प्रतीचीरुपदधाति ' इत्यादौ यत्रेष्टकागणानुवादेन प्राङ्मुखत्वादिकं विधीयते तत्र चतुरस्रेष्टकासु मुखाभावात् प्राङ्मुखकर्त्रुपधेयत्वेनैवेष्टकानां प्राङ्मुखत्वाद्युपचारः **इति प्राप्ते,** एकैकस्या इष्टकाया मुखाद्यसंभवेऽपि बहूनामिष्टकानामुपधाने प्राक्संस्थत्वादेरनियमेन प्राप्तौ, प्रागपवर्गा एवेत्यादिनियमार्थो विधयः । अत एव ' प्रतीचोऽनुयाजान् यजति ' इत्यस्य वाक्यशेषे ' प्राञ्चमुत्तमं संस्थापयत्युत्तमेनेत एव नु संभिनत्ति' इत्यत्र प्रत्यगपवर्गत्वे प्राप्ते प्राक्संस्था आहुतीर्विधाय चरमयेतरयोरनुसंभेदेनैव प्रत्यक्त्वमुपपद्यते । **संकर्ष.** २।१।१८.

**अग्निचयने इष्टकोपधाने मन्त्राधिक्ये चयनान्तरप्रयोगे अवशिष्टमन्त्राणां उपयोगः** ॥ ' लोकं पृण छिद्रं पृण ' इति मन्त्रमेव सहस्रवारमावर्त्य सर्वा इष्टका उपधेयाः, तदितरेषां नानाविधमन्त्राणां बाहुल्यात् **इति प्राप्ते,** सर्वैरेव मन्त्रैरुपधेयाः । ये त्वधिका मन्त्रास्ते

प्रयोगान्तरे उपयोक्ष्यन्ते ' चतुर्दशभिर्वपति ' इत्यादिवत् ।
**संकर्ष.** २।१।१५.

**अग्निचयने उपसदां षट्त्वं तिसृणां स्वस्थानविवृद्ध्या संपादनीयम् ॥**

**स्वस्थानात्तु विवर्धेरन् कृतानुपूर्व्यत्वात् । ५।३।२।३ ॥**

**भाष्यं**—उपसत्सु संदेहः । किमावृत्तिर्दण्डकलितवदुत स्वस्थानाद्विवर्धन्ते इति । किं तावत्प्राप्तम् ? आवर्तनीयानामर्थानामेष धर्मो यदुत दण्डकलितवत् । यो ह्युच्यते, त्रिरनुवाकः पठ्यतामिति, स आदित आरभ्य परिसमाप्य पुनरादित आरभते । तस्माद्दण्डकलितवदावृत्तिः । **एवं प्राप्ते, ब्रूमः** । स्वस्थानाद्विवर्धितुमर्हति । कुतः ? कृतानुपूर्व्यत्वात् । कृतमानुपूर्व्यमुपसत्सु । प्रथमां कृत्वा मध्यमा कर्तव्या, तत उत्तमेति । तत्र यदि दण्डकलितवदावृत्तिः स्यात्, उत्तमां कृत्वा पुनराद्याया अभ्यासे क्रियमाणे अस्थाने सा विवृद्धिः कृता भवति । स्वस्थानविवृद्धौ नैष दोषः । तस्मात् स्वस्थाने विवृद्धिरिति ।

**टुप्**— यथा प्रथमा परिसमाप्यमाना द्वितीयामुपस्थापयति, द्वितीया च तृतीयां, एवं तृतीयाऽपि कर्मान्तरमुपस्थापयति । तत्र दण्डकलितवदावृत्तौ तृतीययाऽनुपस्थापिता प्रथमा क्रियेत । स्वस्थानविवृद्धौ तु नैष दोषः । चोदको ह्यमुमेवार्थं प्रापयति ।

**शा**— ' अतः सर्वाः सकृत् कृत्वा पुनः स्यादादितः क्रिया । स्वस्थानात्तु विवृध्येरन् क्रमबाधोऽन्यथा भवेत् ॥' तृतीयां कृत्वा प्रथमायां क्रियमाणायां प्राकृतक्रमबाधः स्यात् ( तृतीयानन्तरमुपस्थितप्रवर्ग्योद्वासनपरित्यागेन प्रथमानुष्ठाने क्रमबाधः स्यात् ) । अतस्तद्बाधाय स्वेस्वे स्थाने द्विर्द्विरभ्यसितव्या ।

**सोम**— पूर्वोपजीवनेन विशेषविचारात् संगतिः । यथा क्षेत्रमाने क्व चित् कृत्स्नमेव मानदण्डं निवेश्य तदनन्तरदेशेऽपि तथैव कृत्स्नं निवेश्य क्षेत्रं मीयते, तथा आरभ्योपसत्त्रयं प्रथमतः कृत्वा पश्चादपि तथैवावर्तनीयं ( इति दण्डकलितवदावृत्तिः पूर्वपक्षः ) । **सूत्रार्थस्तु**— कृतानुपूर्व्यात् प्रकृतौ क्लृप्तक्रमत्वात् इति ।

**वि**— ' आवृत्तिरुपसत्स्वेषा संघस्यैकैकगाऽथवा ।, त्रिरध्यायं पठेत्यादाविव स्यात् समुदायगा ॥, प्रथमा मध्यमाऽन्त्येति प्राकृतक्रमसिद्धये । एकैकस्या द्विरभ्यासे षट्संख्याऽपि प्रसिध्यति ॥ '

**भाट्ट**— तत्र प्रयाजैकादशत्वादिसंख्या स्वसंपत्त्यर्थे व्यक्त्यन्तराण्याक्षिपन्ती चतुर्थोत्तमप्रयाजजातीयान्येवाक्षिपति, तदङ्गभूतयोः प्राकृततदङ्गदेवताप्रकाशकयोरपूर्वयोः प्रैषयोर्मध्ये षण्णामन्येषामप्राकृतदेवत्यमन्त्राणां पश्चावाम्नानात् । तद्यदि आद्यानां त्रयाणामभ्यासः स्यात्, ततो मन्त्राणामपकर्षापत्तिः, समिद्यागत्वस्यानुपस्थितिश्च । अतः संनिधानाविशेषाच्चतुर्थोत्तमप्रयाजयोरेव चतुश्चतुर्वारमावृत्तिः । उभयत्राभ्यासत्रये च प्राकृतदेवताबाधो लक्षणया वा तद्देवताप्रकाशनमित्यन्यदेतत् । एवमनुयाजेष्वपि मन्त्रलिङ्गवशादेव प्रथमानुयाजस्याद्याश्चत्वारो दशमश्च । द्वितीयस्याष्टमपर्यन्तं पञ्चमप्रभृत्यभ्यासः । **नवमैकादशौ** तृतीयस्येति । यत्र तु न किं चिद्गमकं, तत्र विषमसंपाद्यसंख्याकस्थले अवश्यकल्प्याया अधिकाया आवृत्तेरन्तिमविषयत्वात् सर्वस्याप्यन्तिमविषयकत्वमेवेत्यपि वक्ष्यते । यत्र तु समसंख्याकैवाऽऽवृत्तिः यथा तिसृषु उपसत्सु षट्त्वश्रवणे, तत्रैकैकस्या द्विरावृत्त्याऽपि षट्त्वसंपत्तौ नान्तिमाया एव चतुरावृत्तिः, समुदाये विहितकार्यान्यथाऽनुपपत्त्या कल्प्यमानाया आवृत्तेः सर्वविषयत्वौचित्यात् । तत्र च 'त्रिरनुवाकः पठ्यताम्' इत्यादौ संपूर्णानुवाकस्यावृत्तिदर्शनेन प्रकृतेऽप्युपसत्त्रयमेकवारं कृत्वा पुनः कार्यमिति दण्डकलितवदावृत्तिः **इति प्राप्ते,** प्रथमद्वितीययोर्हि तृतीयातः पूर्वं करणं क्लृप्तं, तत् दण्डकलितवदावृत्तौ बाध्येत। अतः प्रथमां द्विः कृत्वा, द्वितीयां च द्विरभ्यस्य, तृतीयाऽपि तथैव कार्येति स्वस्थानविवृद्धिरेवेति सिद्धम् ।

**न्यायबिन्दुः**— तिसृणामुपसदामनुष्ठानोत्तरं पुनरादितः करणमिति दण्डकलितवदावृत्त्या षट्संख्यासंपत्तिः **इति प्राप्ते,** तृतीयोत्तरं प्रथमायां प्राकृतक्रमबाधापत्तेरेकैकस्या द्विरावृत्तिरिति स्वस्थानविवृद्धिरेवेति सिद्धान्तः।

**मण्डन**—' स्वस्थानेषूपसत्ततिः । '

**शंकर**— ' तत्र स्वस्थानवृद्धिः स्यात् ।' ( तत्र प्रयाजादिषु । )

**अग्निचयने कूर्मचितौ प्राञ्चमिति कर्तुर्मुखवादः प्रत्यञ्चमिति तु कूर्मवादः** ॥ कूर्मोपधानं प्रकृत्य 'प्राञ्चमुपदधाति' 'पुरस्तात् प्रत्यञ्चमुपदधाति' इति श्रुतेः कर्तुरिव कर्मणोऽपि प्राङ्मुखत्वसंभवाद् अनियमेन कूर्मः कर्ता वा प्रत्यङ्मुखः प्राङ्मुखो वा **इति प्राप्ते,** विकल्पस्यान्याय्यत्वादेव प्राञ्चमिति कर्तुर्मुखवादः । 'पुरस्तात्प्रत्यञ्चं' इति तु कूर्ममुखवादः । **संकर्ष.** २।१।२०.

**अग्निचयने 'घृतेष्टका उपदधाति' इति घृतपूर्णघटोपधानम्** ॥ 'घृतेष्टका उपदधाति' इत्यादावपि 'घृतं मिमिक्षिरे' इत्यादिमन्त्रैरुपधानं मृन्मयीनामेव प्राणभृन्न्यायेन (१।४।१२।२३) विधीयते **इति प्राप्ते** घृतद्रव्यस्यैवोपधानं, घटे पूरणेन तत्संभवात् । पुष्करपर्णस्येव तल्लिङ्गमन्त्राणां क्रमप्रकरणयोरभावात् । वृषभादिवत् विरोधाभावाच्च । **संकर्ष.** २।१।२४.

**अग्निचयने चतुरस्राणामिष्टकानामेव 'मण्डलेष्टका उपदधाति' इति नामान्तरम्** ॥ 'मण्डलेष्टका उपदधाति' इत्यादिना श्रुता मण्डलादीष्टका नाम्नोऽन्वर्थकत्वाय परिमण्डलाद्याकारा भवेयुः **इति प्राप्ते,** चयनरूपकार्यार्थताविरोधाच्चतुरस्राणामेवैतानि नामानि । **संकर्ष.** २।१।२५.

**अग्निचयने चतुर्थाद्याहारेषु त्रिषाहस्राधिका संख्या स्यात्** ॥ चतुर्थादिष्वाहारेषु पुनः प्रथमत्वादिविवक्षया एकद्वित्रिसाहस्रा एवेष्टका भवेयुः । कनीयसो निषेधाद्वा त्रिसाहस्रस्यैवाभ्यासः संख्यान्तरस्यानाम्नानात् **इति प्राप्ते,** प्रकृतानां संख्यानां नैमित्तिकत्वान्निमित्तमन्तरेण तदप्रवृत्तेः संख्यान्तरमेवाश्रयणीयम् । **संकर्ष.** २।१।३१.

**अग्निचयने चितिमानेषु यजमानगतं अध्वर्युगतं वा मानं ग्राह्यम्** ॥ 'व्याममात्राणि पक्षपुच्छानि भवन्ति' इत्यग्नौ श्रुतम् । तत्र कर्मण्यध्वर्योः प्रवृत्तत्वात् अनियमान्नियमस्य युक्तत्वाच्च तस्यैव व्यामो ग्राह्यः । 'शूर्पेण जुहोति' इत्यत्र कर्माङ्गशूर्पस्यैव ग्रहणदर्शनात् **इति प्राप्ते,** यजमानसंमानवत् तस्य (अध्वर्योः) चोदितत्वाद् अनियमः । शूर्पस्य तु तदर्शमेवासादनविधानाद्वैषम्यम् । **संकर्ष.** २।४।१०.

**अग्निचयने चितिशब्दो न प्रस्तरपरः, किंतु तदवयवपरः** ॥ 'पञ्च चितयो भवन्ति, पञ्चभिः पुरीषैरभ्यूहति' इत्यत्र कर्मणि क्तिन्नन्तेन चितिशब्देनैकैकः प्रस्तर उच्यते । प्रासादादौ स्थपतीनामेका चितिरद्य निर्वृत्तेति व्यवहारदर्शनात् । अत एव न चयनक्रियोच्यते । तस्या एकत्वाच्च 'अग्निं चिनुते' इति विधेरभ्यासाद्यभावात् प्रस्तरपञ्चकविधानादेव पुष्करपर्णरुक्मपुरुषस्वयमातृण्णानां क्वचन निवेशे प्रसक्ते तेषां पूर्वपूर्वोपर्युत्तरोत्तरविधानं वाचनिकं संगच्छते, इति तैः सह नव प्रस्तराः **इति प्राप्ते,** चयनक्रियाया एकत्वेऽपि पुरीषव्यवधानकृतभेदेन तदवयवानां पञ्चधाविभागसंभवात् कर्मैकदेशपरश्चितिशब्दः । अत एव 'स्वयमातृण्णां च विकर्णीं चोत्तमे उपदधाति' इत्युक्त्वा 'नान्यामिष्टकामुत्तरामुपदध्यात्' इत्यादिना सर्वोपरि इष्टकान्तरनिधाननिषेधवैयर्थ्यापत्तेः पुष्करपर्णादिचतुष्टयस्य त्वनियमेन निवेशे प्रसक्ते नियमविशेषार्थो विधिर्न विरुध्यते । **संकर्ष.** २।१।१७.

**अग्निचयने चितिसमुदायस्यैव वेदिधर्माः, न तु तदाधारभूमेः** ॥ चयनाधारभूमेः उत्तरवेदिधर्माः कार्याः **इति प्राप्ते,** प्रकृतौ मध्यमोपसदि विहिताया उत्तरवेदेः स्थाने एव विकृतौ अग्नेर्विधानेन तत्कार्यापन्नतया शरेष्विव अग्नावेव उत्तरवेदिधर्माः, न तदधोभुवो भवन्ति । **संकर्ष.** २।१।२६.

**अग्निचयने चित्रिण्यादीनामनारभ्याधीतानामिष्टकानां लोकंपृणातः प्रागुपधानम्** ॥

**प्राग् लोकंपृणायास्तस्याः संपूरणार्थत्वात् । ५।३।८।२०** ॥

**भाष्यं**—औपानुवाक्ये काण्डे इष्टकाः समाम्नाताः । 'वज्रिणीरुपदधाति' 'चित्रिणीरुपदधाति' 'भूतेष्टका उपदधाति' इति । तत्र इदं समधिगतं, मध्यमायां चितौ उपधेया इति । तत्र संदेहः, किं प्राक् लोकंपृणायाः, उत पश्चादिति । किं प्राप्तं? 'अन्ते तु बादरायणः' इति (५।२।९।१९) । **एवं प्राप्ते, उच्यते** । प्राक् लोकंपृणायाः, तस्याः संपूरणार्थत्वात् । संपूरणार्थता तस्याः श्रूयते 'यदेवास्योनं, यच्छिद्रं, तदेतया पूरयति, लोकं पृण, छिद्रं पृण' इति ।

अपूर्वत्वाच्च अर्थस्य विधिरेवायं, संस्तवो न, इति गम्यते। तस्मात् प्राग्लोकंपृणायाः स्यात्।

**शा**—'मध्यमायामपि चितावन्ते लोकंपृणा भवेत्। पूरणार्थेति तस्याः प्राक् चित्रिण्यादेर्निवेशनम् ॥'

**सोम**—पूर्वोक्तोपजीवनेन विशेषविचारात् संगतिः।

**ननु** तत्सिद्धिपेटिकायां (१।४।२३–२८ सूत्राणि वि–शा) 'सृष्टीरुपदधाति' इत्यत्र 'के चित्तु मन्त्रविधिमेव समर्थयन्ते' इत्युपक्रम्य 'एकयाऽस्तुवत इत्यादिमन्त्राणां उपधानैकान्तिकलिङ्गाभावात् उपधानार्थतया अस्ति विधेरवकाशः' इत्युक्त्वा 'सत्यामुपधानप्राप्तौ मध्यमचितिसंबन्धार्थमपि प्रत्यक्षविधानमर्थवत्' इत्युक्तम्। ('भूमा' इति २७ सूत्रे शास्त्रदीपिकायामिदमुक्तम्)। ततश्च मन्त्रस्य प्रत्यक्षब्राह्मणविधानमात्रेण तन्मन्त्रोपधेयेष्टकानां मध्यमचितिसंबन्धाङ्गीकारात् कथमिह इष्टकाया मध्यमचितिविषयत्वाभावावधारणं इति चेत्। **सत्यम्**। तथापि न मन्त्रस्य प्रत्यक्षब्राह्मणविधानमात्रेण इष्टकायाः प्रत्यक्षब्राह्मणवत्त्वं, किंतु प्रत्यक्षब्राह्मणे तन्मन्त्रोपधेयतया इष्टकाया निर्देशेनापि भवितव्यं, 'चित्रिणीरुपदधाति' इत्यादिषु चित्रिण्यादिशब्दैः इष्टकानामभिधानस्यापि सद्भावात्। एवं च 'सृष्टीरुपदधाति' इत्यत्र सृष्टिशब्देन सृष्टिशब्दवन्मन्त्रोपधेयेष्टकावचनेन विशेषणभूतमन्त्रविधानेऽपि विशेष्यभूतानामिष्टकानामपि प्रत्यक्षब्राह्मणे निर्देशात् उपपन्नो मध्यमचितिसंबन्धः। इह तु 'लोकं पृण, छिद्रं पृण' इति मन्त्रमात्रस्यैव प्रत्यक्षब्राह्मणे श्रवणं, न तु तन्मन्त्रोपधेयतया इष्टकाश्रवणं, इति न काऽप्यनुपपत्तिः।

**वि**—'लोकंपृणात ऊर्ध्वं स्याच्चित्रिण्युत ततः पुरा।, बादरायणदृष्ट्योर्ध्वं, पूरणोक्तेस्ततः पुरा ॥'

**भाट्ट**—मध्यमायामपि प्राकरणिकेष्टकोपधानानन्तरमेव उपधानं चित्रिण्यादीनां, न तु प्राक् लोकंपृणायाः, आगन्तुकत्वात्। **न च** 'यदेवास्योनं, यच्छिद्रं, तदेतया पूरयति, लोकं पृण छिद्रं पृण' इति वचनेन लोकंपृणायाः पूरणार्थत्वावगमात् तस्या अन्ते निवेशावगतेः, ततः प्राक् निवेशः चित्रिण्यादीनां (**इति वाच्यम्**)। **लिङ्गादेवं** मन्त्रस्य छिद्रपूरणार्थत्वे अस्य वचनस्य तदर्थत्वविधायकत्वाभावात्, कथं चित् मन्त्रस्य तद्विधायकत्वेऽपि इष्टकायाः तदर्थत्वे प्रमाणाभावाच्च। अस्तु वा मन्त्रे छिद्रपूरकत्वस्य इष्टकायास्तत्पूरकत्वं विना अनुपपत्तेः तस्या अपि तत्, तथापि तस्य (मन्त्रस्य) चित्यन्तरेऽपि सावकाशत्वात् न चित्रिण्यादीनामन्तेनिवेशन्यायस्य (५।२।९) निरवकाशस्य बाधः। न च लोकंपृणाया अपि प्रत्यक्षब्राह्मणवत्त्वात् मध्यमचितिमात्रविषयत्वं, इतिकरणविनियुक्तत्वेन अस्य मन्त्रस्य इष्टकावाचिश्रुतपदविनियुक्तत्वाभावात्। **न च** तथापि तत्तच्चित्यवान्तरप्रकरणपठितत्वे तत्रैव निवेशापत्तेः, चयनमहाप्रकरणपठितत्वे च अन्तिमचितावेव निवेशापत्तेः, कथं सावकाशत्वमिति **वाच्यम्**। पूरणार्थत्वे लिङ्गादेव द्वारभेदेन भेदोपपत्तेः सर्वविषयत्वात् **इति प्राप्ते**, चित्रिण्यादीनां अन्ते निवेशे लोकंपृणायाः छिद्रपूरणरूपफलस्यैव बाधापत्तेः वरं पूर्वपठितेष्टकोपधानोत्तरत्वरूपक्रमबाधेन चित्रिण्यादीनां लोकंपृणायाः प्राक् निवेशः।

**न्यायबिन्दुः**—चित्रिण्यादीनामन्ते निवेशेऽपि लोकंपृणायाः प्रागेव निवेशः 'यदेवास्योनं, यच्छिद्रं, तदेतया पूरयति' इति वचनात् लोकंपृणायाः संपूरणार्थत्वात् इति सिद्धान्तः।

**मण्डन**—'ताः प्राग् लोकंपृणाऽन्वयात्।' ताः चित्रिण्याद्याः।

**शंकर**—'लोकंपृणा तदन्ते वा।'

## ❡ अग्निचयने चित्रिण्यादीनामिष्टकानां मध्यमचितौ उपधानम् ॥

**अन्ते स्युरव्यवायात्।** ५।३।७।१७ ॥

**भाष्यं**—औपानुवाक्ये श्रूयते 'चित्रिणीरुपदधाति' 'वज्रिणीरुपदधाति' इति। तत्र संदेहः, किमेताः पञ्चम्यां चितौ उपधेया उत मध्यमायामिति। किं प्राप्तं ? पञ्चम्यामेव। इष्टकाः कृतक्रमाः अन्या नैताभिर्व्यवेष्यन्ते।

**लिङ्गदर्शनाच्च।** १८ ॥

**भाष्यं**—'आवपनं वा उत्तमा चितिः अन्या इष्टका उपदधाति' इति।

**मध्यमायां तु वचनाद् ब्राह्मणवत्यः।** १९ ॥

**भाष्यं**— नैव एता अन्त्यायां चितौ। कस्यां तर्हि ? मध्यमायाम्। कुतः ? ब्राह्मणवत्यः एता इष्टकाः, तासां मध्यमा चितिराम्नायते। 'यां वै कां चिद् ब्राह्मणवतीमिष्टकामभिजानीयात्, तां मध्यमायां चितावुपदध्यात्' इति। ननु सर्वा एव इष्टका ब्राह्मणवत्यः। नेत्याह। अपरा लिङ्गक्रमात् समाख्यानाच्च। तस्मादेता नान्ते स्युरिति।

**शा**— स्थिते सकृदनुष्ठाने क्रमश्चिन्त्यते। किं चित्रिण्यादीनां उत्तमायामुपधानं उत मध्यमायामिति। 'क्लृप्तक्रमाव्यवायार्थमन्तेऽनारभ्यचोदिताः। यां कां चिदिति वाक्यं तु विधये न भवत्यलम्॥' **उच्यते**। 'वचनान्मध्यमायां स्युः प्रत्यक्षब्राह्मणोदिताः। जानातिरभिपूर्वोऽयं प्रत्यक्षे वर्तते यतः॥ वाक्यं चार्थवदेवं स्याद् वादमात्रं त्वनर्थकम्। चित्रिण्यादेर्निवेशोऽतो मध्यमायां चितौ भवेत्॥'

**सोम**— अभेः आभिमुख्यार्थकत्वात् विषयाभिमुख्यस्य अन्यत्रासंभवात् अभिपूर्वो जानातिः प्रत्यक्षज्ञानार्थकः। अभिपूर्वस्य जानातेः प्रत्यक्षे रूढिः इत्यप्याहुः। **वाक्यं च** इति (शा.) एवं च वाक्यार्थस्याबाधे प्रत्यक्षप्रातिस्विकब्राह्मणपरत्वमेव वाच्यमिति भावः।

**वि**— 'चित्रिण्यादेरुत्तमायामुपधानं पुराऽथवा।, अव्यवायादुत्तमायां, मध्यमायां तु वाक्यतः॥'

**भाट्ट**— चित्रिण्यादीनां तु 'यां कां चन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यात्' इति वचनेन मध्यमचितौ उपधानम्। अत्र हि अभिपूर्वस्य जानातेः प्रत्यक्षज्ञानवाचित्वात् वाक्यस्यार्थवत्त्वाच्च प्रत्यक्षब्राह्मणविहितेष्टकोद्देशेन मध्यमचितिरूपदेशविधानम्। उपधानं तु प्रकरणप्राप्तं आश्रयः। प्रत्यक्षब्राह्मणवत्त्वं इष्टकावाचिश्रुतशब्दविनियुक्तमन्त्रोपधेयत्वं इत्युक्तमेव भूमाधिकरणे (१।४।१७ भाट्ट.)। न च प्रत्यक्षब्राह्मणवत्त्वस्य उद्देश्यविशेषणता, तच्छब्देन विशिष्टपरामर्शकेन विशिष्टोद्देशोपपत्तेः। अतो मध्यमचितावेवोपधानम्। न चेदं प्राकरणिकविषयं, अविशेषात्।

**न्यायबिन्दुः**— चित्रिण्यादीनामन्ते निवेशः **इति प्राप्ते,** 'यां वै कां चन ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितौ' इति वचनात् मध्यमायां इति सिद्धान्तः [illegible]

**मण्डन**— 'चित्रिण्याद्या मध्यचितौ।'

**शंकर**— 'चित्रिण्याद्यास्तु नान्ततः।'

**अग्निचयने तिसृधन्वदानं ब्राह्मणाय**॥ 'रुद्रो वा एष यदग्निः, तस्य तिस्रः शरव्याः प्रतीची तिरश्चयनूची, ताभ्यो वा एष आवृश्चयते योऽग्निं चिनुते, अग्निं चित्वा तिसृधन्वमयाचितं ब्राह्मणाय दद्यात्ताभ्य एव नमस्करोति, अथो ताभ्य एवात्मानं निष्क्रीणीते' इति श्रुतं तिसृधन्वदानमपि पूर्वन्यायेन क्रत्वङ्गं **इति प्राप्ते,** स्थण्डिलस्यैव रुद्रत्वात्तदीयशरव्याभिरग्निचितः आव्रश्चनमेतद्दानेन, ताभ्य आत्मनो निष्क्रयवादश्चास्य क्रियाङ्गत्वे एवोपपद्यते। न च संनिपातिनोऽङ्गस्याङ्गान्तरं विप्रतिषिद्धं, रथंतराङ्गस्य वरदानस्य दर्शनात्। **संकर्ष.** १।१।६.

**अग्निचयने धार्याग्निनाशे ज्योतिष्मतीष्टेर्नानुष्ठानम्**॥

**धारणे च परार्थत्वात्**। ९।४।७।२९॥

**भाष्यं**—इदमाम्नायते 'धार्यो गतश्रिय आहवनीयः' इति। अस्ति (च) अग्निहोत्रस्यानुगमे प्रायश्चित्तं 'अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेत्, यस्याग्निरुद्धृतोऽहुतेऽग्निहोत्र उद्वायेत्' इति। तत्रैषोऽर्थः सांशयिकः, यदा धार्योऽग्निः अनुगच्छति तदा किमिदं प्रायश्चित्तं कर्तव्यं नेति। किं प्राप्तं ? कर्तव्यमिति। उपसंप्राप्तं हि निमित्तम्। एतावदिह निमित्तं, अग्निः अग्निहोत्रार्थे उद्धृतः अकृतप्रयोजनः उद्वाति इति। तच्चेह सर्वं प्राप्तम्। तस्मात् कर्तव्यं प्रायश्चित्तमिति। ननु सर्वकर्मार्थमेतत्, न केवलायाग्निहोत्राय। उच्यते। यद्धि सर्वकर्मसमुदायार्थं तत् केवलस्यार्थे न भवतीत्युच्यते। यत्तु एकैकस्मै इत्येवं सर्वार्थं, तत् सर्वेभ्योऽपि प्रयुक्तं अग्निहोत्राय प्रयुक्तं भवति। न चेदं सर्वकर्मसमुदायार्थं, समुदायस्य अचोदितत्वात्, साधनानि प्रति आकाङ्क्षाऽभावः। एकैकं तत्र कर्म उद्धरणमाकाङ्क्षति। तस्मात् सर्वार्थमपि सत् अग्निहोत्रार्थं भवति। एवं चेत् अनुगमनप्रायश्चित्तं प्राप्नोतीति। यथा पर्युक्षणं परिसमूहनं तृणापचयः इत्येवमादयः पदार्थाः धार्येऽग्नौ अहन्यहनि क्रियन्ते, एवं प्रायश्चित्तमपि क्रियेत **एवं प्राप्ते, ब्रूमः**। धारणे च गत-

श्रियः अनुगमने इदं प्रायश्चित्तं न कर्तव्यम् । कुतः ? परार्थत्वात् । नहि तदा अग्निहोत्रार्थमुद्धरणं, यस्मिन् काले भवत्यसौ गतश्रीः । तत्र अन्यार्थमुद्धृतोऽग्निः सर्वार्थे धार्यते । उद्धरणं तु तदेकस्मै एव प्रयोजनाय । धारणं तु सर्वकर्मार्थम् । न च धारणे अग्निहोत्रार्थे अनुगमने प्रायश्चित्तं विहितम् । किं तर्हि ? उद्धरणे । परकीयं चात्रोद्धरणं, परार्थमुद्धरणम् । यदर्थमुद्धरणं तदर्थमुद्धृतेऽपि तत् प्रायश्चित्तम् । तस्मान्न तत्रेदं प्रायश्चित्तमिति ।

**टुप्**— पूर्वं पाक्षिकस्योपकारलक्षणं तादर्थ्यं इति कृत्वा प्रत्येकसमुदायसंबन्धाभिप्रायः देवदत्तयज्ञदत्तभोजनवत् । यद्धि तैः संबद्धं, तदन्यतमेनापि । यत्तु समुदायार्थे पषद्भोजनमिव, तत् अन्यतरार्थे इति न शक्यते वदितुम् । न चासौ विधीयते । तस्मात् प्रत्येकं समुदायाग्निहोत्रार्थे तदुद्धरणमिति । **सिद्धान्तस्तु** श्रुत्यादिलक्षणं तादर्थ्यं, गतश्रीश्च नोद्धरणं प्रयोजयति । धारणं हि तस्य नैमित्तिकम् । तत्तावत् प्रतीक्षते, यावत् कर्मणः उद्देशेन उद्धरणं कृतम् । तदर्थमेव भवतु । प्रसङ्गादन्यस्योपकरोति । तस्मात् नान्यार्थे उद्धृते, अग्निहोत्रार्थे प्रायश्चित्तमिति । यदि पुनः सायमग्निहोत्रार्थे उद्धृते गतश्रियो धारणं भवति, प्रातरग्निहोत्रकाले चोद्वानं, ततः किं प्रायश्चित्तं भवति न वा ? भवतीति ब्रूमः । सकलनिमित्तभावात् । न वा भवति । न तु असौ अग्निहोत्रमात्राय उद्धृतः । किं तर्हि व्यक्त्यपेक्षया । यां व्यक्तिमाश्रित्य उद्धृतोऽसौ, सा समाप्तैव । प्रातःप्रयोगः प्रसङ्गात्तत्रेति । न चैतत् कर्मार्थे धारणम् । पुरुषधर्मोऽयं, गतश्रीयोगात् ।

**क्रियार्थत्वादितरेषु कर्म स्यात् । ३० ॥**

**भाष्यं**—अथ यदुक्तं परिसमूहनं पर्युक्षणं इत्येवमादयः पदार्थाः धार्येऽपि क्रियन्ते, एवं प्रायश्चित्तमपीति, अत्रोच्यते । युक्तं तत् परिसमूहनादीनि क्रियन्ते, चोदितानि हि तानि संस्कारार्थत्वेन, शक्यानि च, अकृतप्रयोजनानि च । उद्धरणं तु कृतप्रयोजनत्वात् निवृत्तम् । नियतदेशकालत्वाच्च अशक्यम् । तस्मादिदमतुल्यं प्रायश्चित्तेन ।

**शा**— 'अग्निहोत्रार्थं उद्वाते प्रायश्चित्तमिदं श्रुतम् । धार्यस्य चास्ति तादर्थ्यं सर्वार्थे धार्यते ह्यसौ ॥' **नैवम्** । 'अन्यार्थमुद्धृतो ह्येष गतश्रीत्वेन धार्यते । धारणस्य निमित्तं तन्नोद्धारस्याश्रुतत्वतः ॥' नहि गतश्रीत्वेन पुरुषस्य अग्न्युद्धरणं श्रुतं, येन उद्धरणं उद्धृतो वाऽग्निः सर्वार्थः स्यात्, किंतु धारणमात्रम् । तेन यदा यत्किंचित्कर्मविशेषमधिकृत्य अग्निमुद्धरति, तदा तस्य धारणमात्रं गतश्रीत्वेन करोति । यस्मिंश्च कर्मणि उपसंप्राप्ते अग्निरुद्धृतः, तदर्थमेवोद्धरणं, उद्धृतश्चाग्निः तदर्थ एव । निमित्तवशाद्धार्यमाणः प्रसङ्गात् अग्निहोत्रस्योपकरोति, इति न तदुद्वाने प्रायश्चित्तम् । ९।४।८.

**सोम**— पूर्वत्र तादर्थ्याभावात् दर्शार्थाग्न्युद्वाने प्रायश्चित्ताभावेऽपि इह तादर्थ्यस्य सत्त्वात् युक्तं प्रायश्चित्तं इत्युत्थानात् संगतिः । गता प्राप्ता श्रीर्येन स **गतश्रीः**, तस्याहवनीयो धार्यः । 'त्रयो वै गतश्रियः शुश्रुवान् ग्रामणी राजन्यः' इतिश्रुतौ गतश्रीः प्रसिद्धः । सत्यं अग्निहोत्रार्थत्वमग्नेः, तथापि न तन्मात्ररूपेण उद्वानस्य निमित्तत्वं, किंतु 'यस्याग्निरुद्धृतः' इति श्रुतेः तदर्थोद्धृतस्योद्वानस्य । न च गतश्रीस्थले उद्धरणमग्निहोत्रार्थं, येन उद्धृतोऽग्निरपि तदर्थः स्यात्, किंतु अन्यार्थमेव उद्धृतोऽग्निः गतश्रीकेण धार्यते इति गतश्रीत्वस्य धारणे एव निमित्तत्वं नोद्धरणे, इति उद्धृतस्याग्नेर्न तादर्थ्यम् । **ननु** उद्धरणं विना धारणस्यासंभवात् अर्थादुद्धरणस्यापि गतश्रीत्वं निमित्तमेव 'गतश्रीः उद्धृत्य आहवनीयं धारयेत्' इति । तच्च उद्धरणपूर्वकं धारणं फलकल्पनाभीत्या गतश्रिया पुरुषेण यानि कर्माणि क्रियन्ते तदर्थं, इति उद्धरणस्यापि अग्निहोत्रार्थत्वं इति **चेन्न**, अन्यार्थमुद्धृतेऽपि धारणं संभवति, इति न तद्बलात् उद्धरणस्यापि सर्वकर्मार्थत्वं, येन उद्धरणमग्निहोत्रार्थं स्यात् । वस्तुतस्तु गतश्रियः इति षष्ठीश्रुत्या पुरुषार्थत्वमेव, तद्बलाच्च फलकल्पना न दोष इति ध्येयम् । **सूत्रार्थस्तु**—धारणविषयेऽपि न प्रायश्चित्तं उद्धरणस्य परार्थत्वात् इति ।

**वि**—'धार्योद्वाने साऽस्ति नो वा, सर्वार्थत्वेन विद्यते ।, गतश्रीत्वनिमित्तं तत् परार्थत्वान्न विद्यते ॥' सा ज्योतिष्मतीष्टिः । ९।४।८.

**भाट्ट**— अनारभ्य 'धार्यो गतश्रिय आहवनीयः' इति श्रुतम् । तत्र गतश्रीत्वं, ग्रन्थान्तरे अन्यथा

व्याख्यातमपि ( 'त्रयो ह वै गतश्रियः ब्राह्मणः शुश्रुवान्, ग्रामणीः, राजन्यः' इति श्रूयते । 'और्वो गौतमो भारद्वाजः' इति कल्पसूत्रकारः इति वि. ९।४।८ ) **तन्त्ररत्ने** प्राप्तश्रीत्वं इति व्याख्यातम् । तदिह यदा तन्निमित्तके आहवनीयधारणे कृते अग्निहोत्रकाले स उद्वायेत्, तदा तदुत्पत्त्यर्थं ज्योतिष्मतीष्टिः कर्तव्या न वेति चिन्तायां, निमित्तसंस्कार्ययोः सत्त्वात् कर्तव्या। न च धारणे कृते तत्प्रयोगोपयोग्युद्धरणाभावात् अकरणं, अनुद्धृतस्य धारणायोगेन ततः पूर्वं करिष्यमाणसर्वाग्निहोत्रप्रयोगार्थं तन्त्रेण समन्त्रकोद्धरणस्याक्षेपात् ।

इदं धारणं न गतश्रीत्वे निमित्ते पुरुषसंस्कारार्थं फलकल्पनापत्तेः, धार्यः इति यत्प्रत्ययेन आहवनीयस्य कर्मत्वावगतेश्च । षष्ठीश्रुतिस्तु निमित्तफलकतया कर्तृत्वानुवादेनापि 'वैश्यस्य' ( 'सप्तदश वैश्यस्य' सामिधेन्यः ३।६।३ भाट्ट. ) इतिवत् नानुपपन्ना । किंतु आहवनीयसंस्कारार्थमेव ( धारणम् )। आहवनीयस्य च धारणव्यतिरेकेण आधानेन जातत्वात् स्वरूपे आनर्थक्यप्रसक्तौ अव्यभिचरितक्रतुसंबन्धोपस्थितकरिष्यमाणसर्वक्रत्वपूर्वसाधनीभूताहवनीयसंस्कारकत्वसिद्धिः । एवं च धारणस्य पुरुषार्थत्वोक्तिः **तन्त्ररत्नीया** निरस्ता । अत एव करिष्यमाणकर्मणां यावज्जीवं सत्त्वात् गतश्रीत्वोत्तरं पुनर्दारिद्र्येऽपि यावज्जीवं धारणसिद्धिः । पुरुषार्थत्वपक्षे तु यावज्जीवतायां प्रमाणान्तरं मृग्यं स्यात् । सर्वकर्मार्थेनापि च धारणेन आक्षिप्तं उद्धरणं कांस्यभोजिन्यायेन ( १२।२।१४।३४ ) अग्निहोत्रोपकारकतया समन्त्रकमेवाक्षिप्यते । **न च** यत्किंचित्कर्मार्थमुद्धृतस्याग्नेरेव गतश्रीत्वे निमित्ते धारणोपपत्तेः, न स्वतन्त्रोद्धरणाक्षेपकत्वं इति **वाच्यम्**। मध्याह्नादौ यदा कस्यापि कर्मणो न करणं, तदैव गतश्रीत्वरूपनिमित्तप्राप्तौ धारणस्यावश्यकत्वेन तदनुरोधेन उद्धरणाक्षेपस्यावश्यकत्वात् । अतो निमित्तसत्त्वात् कर्तव्यैव ज्योतिष्मतीष्टिः। **इति प्राप्ते**, यदा कर्ममध्ये गतश्रीत्वं तदा उद्धरणानाक्षेपकत्वात्, अन्यदा चाक्षेपकत्वे वैरूप्यापत्तेः, लाघवेन परप्रयुक्तोद्धरणोपजीविना धारणविधिना यत्किंचित्कर्मार्थमुद्धृतस्यैव गतश्रीत्वे निमित्ते धारणविधानम् । अत एव तदनुरोधेन निमित्तस्यापि आहिताग्नित्वादिनेव जीवनस्य संकोचो न विरुध्यते । अतो धारणविधिना अग्निहोत्रविधिना वा परप्रयुक्ताग्निलाभेन उद्धरणानाक्षेपात् करिष्यमाणाग्निहोत्राङ्गभूताग्निनाशे उद्धृतत्वावच्छिन्नप्रतियोगिताकनाशरूपनिमित्ताभावात् नैमित्तिकाकरणम् । न च अन्यकर्मार्थं प्रणीतस्य धारणे निमित्ताभावेऽपि अग्निहोत्रार्थमेव उद्धृतस्य धारणे निमित्तसद्भावात्, कथं प्रयोगान्तरे तन्नाशे प्रायश्चित्ताभावः? कपालनाशादिवत् यत्प्रयोगव्यक्त्युपयोगिनी या उद्धरणव्यक्तिः, तत्संस्कृतत्वावच्छिन्ननाशस्यैव तत्प्रयोगव्यक्त्युपयोग्यग्निसंपादकतया ज्योतिष्मतीष्टिनिमित्तत्वात्, इतरथा अतिप्रसङ्गापत्तेः । अतो नाजस्रेषु इदं प्रायश्चित्तम् । अपि तु सामान्यविहितं मनस्वतीहोमाद्येव इति सिद्धम् । ९।४।६.

**न्यायबिन्दुः**— 'धार्यो गतश्रिय आहवनीयः' इति श्रुतम् । गतश्रियः प्राप्तलक्ष्मीकस्य । तत्र अग्निहोत्रकाले एतदुद्वानेऽपि कर्तव्येष्टिः **इति प्राप्ते**, अन्यार्थमुद्धृतस्य गतश्रीत्वेन निमित्तेन धार्यमाणः प्रसङ्गात् अग्निहोत्रस्योपकरोति इत्यतोऽग्निहोत्रार्थोद्धृतस्य उद्वानाभावात् नेष्टिः इति सिद्धान्तः ।

**मण्डन**—'नेष्टिर्धार्याग्निशमने ।'

**शंकर**—'नेष्टिर्गतश्रीधार्येऽग्नौ ।'

**अग्निचयने पुरस्तादन्याः प्रतीचीः, पश्चादन्याः प्राचीः इति विधी अपवर्गनियमार्थौ ॥**

'पुरस्तादन्याः प्रतीचीरुपदधाति, पश्चादन्याः प्राचीः' इत्यत्रापि कर्तुर्मुखवादः । पश्चात्प्राचीरिति पदस्य प्रपूर्वाधिकरणे निर्णीतार्थकत्वात् संनिधानाच्च, **इति प्राप्ते,** बहुत्वादिष्टकानामपवर्गनियमार्थावेव विधी 'तस्मात्प्राचीनानि प्रतीचीनानि च नक्षत्राण्यावर्तन्ते' इति नक्षत्रमण्डलेनेष्टकाविन्यासस्तुतिदर्शनात् । **संकर्ष.** २।१।२१.

**अग्निचयने 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दः ऋग्द्रव्यवाचकः ॥**

**कर्मणः पृष्ठशब्दः स्यात् तथाभूतोपदेशात् । ७।३।१४।३५ ॥**

**भाष्यं**—अग्नौ श्रूयते 'पृष्ठैरुपतिष्ठते' इति । तत्र चिन्त्यते, किं पृष्ठधर्माः कर्तव्या उत नेति । के पुनस्ते ?

सामान्यधर्माः हिंकारादयः, विशेषधर्माः 'रथंतरे प्रस्तूयमाने पृथिवीं मनसा ध्यायेत्, बृहति समुद्रं' इत्येवमादयः। किं तावत् प्राप्तं? तत आह। एतत् तावन्नः परीक्ष्यं किमयं पृष्ठशब्दः कर्मणो वाचकः, उत द्रव्यस्य इति। ननु सिद्धमेतत् कर्मनामधेयं पृष्ठशब्द इति 'यस्मिन् गुणोपदेशः प्रधानतोऽभिसंबन्धः' (१।४।२।३) इत्यत्र। तास्वेव चोदनासु एतदुक्तं 'सप्तदशानि पृष्ठानि' 'वैरूपं पृष्ठं' 'वैराजं पृष्ठं' इति। इह इदानीं 'पृष्ठैरुपतिष्ठते' इत्यस्यां चिन्त्यते। किं पुनरत्र युक्तं? तत आह। कर्मणः पृष्ठशब्दः स्यात्तथाभूतोपदेशात्। कर्मणो वाचकः पृष्ठशब्दः स्यात्। कुतः? तथाभूतोपदेशात्। यथाभूतः स उपदेशः, यत्रायं पृष्ठशब्दः कर्मनाम अधिगतः, तथाभूतोऽयमपि। किमस्य तथात्वं? पृष्ठशब्दसामान्यम्। पृष्ठशब्दस्तत्र कर्मवचनोऽधिगतः, स एवायम्। तस्मात् इहापि तद्वचनः एवावगन्तव्यो विशेषाभावात्। यदि अत्र अन्यार्थः कल्प्येत, एकः शब्दः अनेकार्थः स्यात्। तत्र को दोषः? शब्दे उच्चरिते संशयः स्यात्, न अर्थप्रत्ययः। तत्र व्यवहारो न सिध्येत्। व्यवहारार्थश्च शब्दप्रयोगः। कारणान्तरं वा प्रकरणादि अपेक्ष्यम्। एकार्थत्वे तु निरपेक्षः अर्थप्रत्ययः। तस्मात् अनेकार्थत्वमन्याय्यम्। तस्मात् कर्मनाम पृष्ठशब्दः। यदा कर्मनाम, तदा यदि तावत् तानि कर्माणि इह उपदिश्यन्ते, तत्र उत्पत्तिरेषामनर्थिका। अथ मा भूत् एष दोषः इति एतदुपस्थानं तत्र विज्ञायते, तत इदं प्रकरणं बाध्येत। तस्मात् सादृश्यविधिरयम्। पृष्ठैरुपतिष्ठते, पृष्ठसदृशैः कर्मभिरुपतिष्ठते इति। तत्सादृश्यं च धर्मैर्भवति। तस्मात् कर्तव्या धर्माः इति।

**अभिधानोपदेशाद्वा विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात्। ३६॥**

**भाष्यं**— न चैतदेवं, कर्मणः पृष्ठशब्द इति। किं तर्हि? द्रव्येषु पृष्ठशब्दः स्यात्। ऋग्द्रव्येषु। 'अभि त्वा शूर नोनुमः' इत्येवमादीनां ऋचां वाचकः। कुतः? अभिधानोपदेशात्। अभिधानोपदेशोऽयं 'पृष्ठैरुपतिष्ठते' इति। पृष्ठैरभिदधाति इत्यर्थः। कथं पुनरयं उपस्थानवचनः अभिधानार्थः शक्यो विज्ञातुम्? उच्यते। उपग्रहविशेषात्। मन्त्रकरणे उपतिष्ठतेः आत्मनेपदं भवति। मन्त्रस्तु अभिधानस्य करणं, नोपस्थानस्य। उपस्थानं शरीरेण क्रियते मनसा वा। तस्मादभिधानार्थः। स एष विप्रतिषेधः। यदि पृष्ठशब्दः कर्मसु कल्प्यते, आत्मनेपदं बाध्यते। नहि तदा मन्त्रः करणं भवति। अथ आत्मनेपदं अनुरुध्यते, उपस्थानविप्रतिषेधः। तदा अभिधानार्थता आपतति। तत्र आत्मनेपदानुरोधो न्याय्यः। पृष्ठशब्दो हि लक्षणया पृष्ठसाधनं मन्त्रं ब्रुवन् अर्थवान्। आत्मनेपदं तु मन्त्रकरणेनैव उपपद्यते। अतः पृष्ठसाधनेषु मन्त्रेषु पृष्ठशब्दः। **आह,** नैतत् युक्तम्। उपस्थानार्थता हि श्रुत्या उपतिष्ठतेः, आत्मनेपदात् लिङ्गात् अभिधानार्थता। न च लिङ्गेन श्रुतिर्बाधितव्या। **उच्यते**। नैवात्र श्रुतिर्बाध्यते। स्वार्थमेव उपतिष्ठतिराह समीपस्थानम्। तत्तु अभिधानाय। अभिधानं निर्वर्तयितुं अग्निसमीपे तिष्ठेत् इति तिष्ठतिराह, आत्मनेपदात्। ततः अविरोधः। **आह,** एवमपि अभिधानस्य मन्त्रः करणं, नोपतिष्ठतेः, तत्र असंबन्ध एव उपस्थानस्य मन्त्रेण। तथा 'पृष्ठैरुपतिष्ठते' इति समुच्चारणं अनर्थकं स्यात्। **उच्यते**। अभिधानं अभिनिर्वर्तयन् मन्त्रः उपस्थानस्य करणं भवति, यतोऽस्य प्रयोजनं निर्वर्तयति। नहि निष्प्रयोजनमनुष्ठीयते। तस्मात् मन्त्रेष्वेव पृष्ठशब्दः। मन्त्रेषु चेत्, नास्ति धर्माणां प्राप्तिः। नहि मन्त्राणां धर्माः, अधर्मकास्ते इति।

**टुप्**— द्रव्यवचनः पृष्ठशब्दः। कुतः? आत्मनेपदं मन्त्रकरणे स्मर्यते। तत्र मन्त्रकरणं नाभिधानमन्तरेण संभवति इत्यभिधाता धातुः अनुमीयते परस्तस्मात्। अतोऽत्र श्रुतानुमितौ द्वौ धातू। तत्र तिष्ठतिः सामर्थ्यप्राप्तः अनूद्यते। उपसर्गार्थः अनुवादः, सामीप्यस्य प्राप्तत्वात्। यस्योपस्थानं क्रियते, तस्य समीपे एव स्थित्वा तत् क्रियते, नान्यथा। तस्मात् उपग्रहात् पृष्ठशब्दः आत्मीयान् मन्त्रान् लक्षयति। पृष्ठशब्दे श्रुतिवृत्ते गृह्यमाणे अत्यन्तबाधः आत्मनेपदस्य स्यात्। तस्मात् पृष्ठशब्दो मन्त्राभिधायी। आह, उपस्थानवचनः कथं अभिधाने वर्तते? धातूपसर्गयोरर्थः, सोऽभिधानसामर्थ्यलभ्यत्वात् न विरुध्यते। इतरस्तु आह, अभिधानस्य मन्त्रः, नोपतिष्ठतेः। एवं चेत् अभिधानार्थः स कथं

उपतिष्ठतेस्तादर्थ्यं प्रतिपद्यते ? उच्यते। यथा दीक्षणीयादयः पुरुषसंस्काराः फलप्रतिग्रहणयोग्यं पुरुषं कुर्वन्तः यागकार्ये वर्तमानाः तदर्थाः, एवमिहापि उपतिष्ठतेः अभिधानं कार्यम्। एवं च तद्व्यापारं कुर्वन्तः तदर्थतां प्रतिपद्यन्ते ।

**शा**—'उपतिष्ठतिना तावदपूर्वं कर्म चोद्यते । पृष्ठशब्दोऽपि तस्यैव विधत्ते पृष्ठतुल्यताम् ॥' उच्यते । 'जघन्यवृत्तिता पृष्ठशब्दस्येहोभयोः समा । उपतिष्ठतिधातुश्च समीपस्थितिवाचकः ॥' तदयमर्थः (पृष्ठैरुपतिष्ठते इत्यस्य) पृष्ठसाधने रथंतरादिभिः समीपे स्थित्वा अग्निं अभिदध्यादिति । तस्मात् अभिधानचोदनेति सिद्धम् ।

**सोम**— अर्थवादगतयूपशब्दस्य अनतिदेशकत्वेऽपि विध्युद्देशगतपृष्ठशब्दस्य अतिदेशकत्वमस्तु इत्युत्थानात् संगतिः ।

अत्र **भाष्यादौ** 'उपान्मन्त्रकरणे' इति मन्त्रकरणार्थे वर्तमानात् उपपूर्वात् तिष्ठतेः आत्मनेपदविधानात् उपतिष्ठते इत्यात्मनेपदं पृष्ठसदृशकर्मविधिः इति पूर्वपक्षे नोपपद्यते। तथा च तत्र 'व्यत्ययो बहुलं' (पा० ३।१।८५) इति व्यत्ययः अङ्गीकार्यः, स चान्याय्यः। न च 'अकर्मकाच्च' (पा० १।३।२६) इत्यात्मनेपदं संभवतीति वाच्यम् । 'बृहद्रथंतराभ्यां पक्षौ, यज्ञायज्ञियेन पुच्छं' इत्यादौ अस्यैव 'उपतिष्ठते' इतिपदस्य अनुषञ्जनीयत्वेन अकर्मकत्वाभावात् । इति आत्मनेपदस्य सर्वथा पूर्वपक्षे अनुपपत्त्या तद्बलादेव पृष्ठसाधनमन्त्रकरणकाभिधानविधिः इति सिद्धान्तितम्। **तदनुपपन्नम्**, पूर्वपक्षेऽपि पृष्ठसदृशकर्माणि स्तुतिरूपाण्येव अङ्गीकर्तव्यानि, अन्येषां पृष्ठसादृश्यासंभवात्। तथा च स्तुतीनां गुणिनिष्ठगुणाभिधानरूपतया तासां मन्त्रकरणत्वनियमेन तदर्थसमीपस्थितिप्रतिपादकस्य उपतिष्ठतेः सिद्धान्ते इव मन्त्रकरणार्थे वृत्तिसंभवेन आत्मनेपदानुपपत्त्यभावात् । तस्मात् आत्मनेपदानुपपत्तिः न पूर्वपक्षे दोषः। इति मत्वा ग्रन्थकारेण (शास्त्रदीपिकाकारेण) आत्मनेपदं अस्पृष्ट्वैव पूर्वपक्षे जघन्यगौणीप्रसङ्गः इत्यभिप्रायेण सिद्धान्तमुक्त्वा उपतिष्ठतेः अभिधानलक्षणां परिहर्तुं उपतिष्ठतिना अभिधानमनुमीयते इति प्रतिपादयितुं आत्मनेपदमुपयोजितं, न तु आत्मनेपदानुपपत्तिः सिद्धान्तयुक्तितया इति ध्येयम् । **आद्यसूत्रार्थस्तु** पृष्ठशब्दः कर्मणि स्यात् स्तोत्रकर्मवाचकः पृष्ठशब्दः स्यात्, तथाभूतस्य 'रथंतरं पृष्ठं भवति' इत्यादौ स्तोत्रवाचकस्यापि उपदेशात् इति।

**वि**—'पृष्ठैरुपस्तुतौ स्तोत्रधर्माः सन्ति न वा, ऽग्रिमः। अग्निहोत्रनया,–न्नैवं मन्त्रोक्तेरात्मनेपदात् ॥' तस्मात् पृष्ठशब्दो न स्तोत्रधर्मान् अतिदिशति ।

**भाट्ट**— अग्नौ 'पृष्ठैरुपतिष्ठते' इति श्रुतम्। तत्र पृष्ठशब्देन किं विधीयते इति चिन्तायां, पृष्ठशब्दस्य स्तोत्रविशेषवचनत्वात् तस्य च बहुत्वाभावेन चयनाङ्गतया विधानानुपपत्तेः प्रत्ययाभिहितभावनान्तराण्येव पृष्ठधर्मकाणि धातूपात्तसमीपावस्थानेतिकर्तव्यताकानि विधीयन्ते। पृष्ठधर्मकत्वाच्च तेषां स्तोत्ररूपतासिद्धिः। धातूपात्तमपि च समीपावस्थानं अक्लृप्तकार्यत्वात् कर्मान्तराङ्गमेव। अथवा पाशाधिकरणन्यायेन (९।३।५) बहुवचनानुरोधेन पृष्ठप्रतिपादके गौण्यङ्गीकारस्य अयुक्तत्वात् बहुवचनेन एकत्वादि लक्षयित्वा चयनाङ्गतया ज्योतिष्टोमपृष्ठविधिरेवायम् । समीपस्थितिस्तु पूर्ववत् पृष्ठस्तोत्रस्यैव अङ्गम्। वस्तुतस्तु पृष्ठबहुत्वस्यापि ज्योतिष्टोमे साधितत्वात् सर्वाण्येव पृष्ठस्तोत्राणि चयनाङ्गतया विधीयन्ते। न तु पृष्ठमन्त्राणां रथंतरादिसाम्नां वा विधानं, उपक्रमस्थपृष्ठपदे लक्षणाप्रसङ्गात्। एवं च जघन्यं आत्मनेपदमेव बाहुलकतया (पा० ३।१।८५) साधुत्वार्थं व्याख्येयम्। **इति प्राप्ते,** पृष्ठशब्दस्य शरीरावयवेऽपि शक्तत्वेन तत्करणकसमीपावस्थितेरपि विधिसंभवेन स्तोत्रविधावेव नियामकाभावेन संदिग्धत्वात् निःसंदिग्धात्मनेपदानुरोधेन पृष्ठपदमेव अन्यथा नेतुमुचितत्वात्। तथाहि, 'उपान्मन्त्रकरणे' (पा० १।३।२५) इति स्मृत्या आत्मनेपदबलात् समीपावस्थाने मन्त्रस्य करणत्वावगतेः साक्षात् संबन्धेन अभिधानातिरिक्ते व्यापारे मन्त्रस्य करणत्वासंभवेऽपि समीपावस्थानप्रयोजनीभूताभिधानद्वारा समीपावस्थानं प्रति करणत्वाङ्गीकारात्. तदनुरोधेन पृष्ठशब्दस्य मन्त्रपरत्वाव-

गतिः। अत एव समीपावस्थानजन्याभिधानजनकत्वसंसर्गेण मन्त्राणां समीपावस्थानं प्रति करणत्वं, इति नाभिधानलक्षणाऽपि। वस्तुतस्तु ऐन्द्र्यधिकरणस्थकौस्तुभोक्तन्यायेन (३।२।२) लक्षणया अभिधानमेव प्रकृताग्निकर्मकं धातुना विधीयते। तत्रैव पृष्ठपदार्थस्य करणत्वं, समीपावस्थानं परं अत्र 'अभि त्वा' इत्यादिमन्त्रलिङ्गादेव प्राप्तं अनूद्यते। पृष्ठपदेन तु आत्मनेपदानुरोधेन पृष्ठस्तोत्रसाधनीभूता मन्त्रा लक्ष्यन्ते। वस्तुतस्तु षाडहिकेषु रथंतरादिषु षट्सु सामसु पृष्ठशब्दान्वाख्यानार्थार्थवादवशेन निरूढलक्षणायाः चित्राधिकरण- (१।४।३) **कौस्तुभे** व्यवस्थापितत्वात् तान्येव अभिधानं प्रति करणत्वेन विधीयन्ते। संभवति च स्तोत्रे इहाभिधानं प्रति साम्नः करणत्वं ऋगक्षराभिव्यक्तिद्वारा। अत एव तदाधारभूतानां योनिऋचामपि अभिधानाङ्गत्वं, उत्तरयोस्तु 'एकं साम तृचे क्रियते स्तोत्रीयं' इति स्तोत्रे एव विनियोगात् नाभिधानाङ्गत्वप्रसक्तिः। अतश्च योन्याधारकरथंतरादिषाडहिकसामविशिष्टाभिधानमेवात्र स्थण्डिलसंस्कारकत्वेन विधीयते इति सिद्धम्। सामांशे उपदेशोऽपि अयं अन्याङ्गत्वस्य पूर्वावगममात्रेण इह चिन्तितः।

**न्यायबिन्दुः**— अग्नौ 'पृष्ठैरुपतिष्ठते' इत्यत्र अग्निसमीपे तिष्ठन् पृष्ठसदृशैः कर्मभिः कुर्यात् इति अपूर्वकर्मविधानं, **इति प्राप्ते,** पृष्ठसाधनैः रथंतरादिभिः अग्निसमीपे स्थित्वा तमभिदध्यात् इति अभिधानाभिधानं 'उपान्मन्त्रकरणे' इति स्मृतेः, इति सिद्धान्तः।

**मण्डन**—'धर्मातिदेशा न च पृष्ठशब्दः।'

**शंकर**— 'पृष्ठैः साधनलक्षणा।'

**अग्निचयने प्रधानादौ अग्नियोगः प्रधानान्ते च अग्निविमोकः ॥**

**अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकः स्यात्। ११।३।९।१९ ॥**

**भाष्यं**— अग्नौ श्रूयते 'अग्निं युनज्मि शवसा घृतेनेति जुहोति अग्निमेवैतद्युनक्ति' इति। पुनः 'इमं स्तनं मधुमन्तं धयापां इत्यग्निविमोकं जुहोति' इति। तत्र विचार्यते किमङ्गप्रधानार्थो योगः, सर्वापवर्गे विमोकः कर्तव्यः, उत प्रधानार्थो योगः प्रधानापवर्गे विमोक इति। किं प्राप्तं? 'अग्नियोगः... स्यात्' (सर्वं सूत्रं)। अङ्गप्रधानार्थो योगः, सर्वापवर्गे च विमोकः स्यात्। किं कारणं? अविशेषेण श्रूयते 'अग्निं युनज्मि शवसा घृतेनेति जुहोति अग्निमेवैतद्युनक्ति' इति। न च श्रूयते तस्मै अस्मै वा कर्मणे इति। अविशेषात् सर्वार्थः इति विज्ञायते। अपि च तस्मिन् युक्ते अग्नौ अङ्गानि प्रधानानि च क्रियन्ते। तस्मादपि सर्वार्थम्। तदुक्तं 'सर्वेषां वा शेषत्वस्यातत्प्रयुक्तत्वात्' (३।७।१।२) इति। सर्वार्थे चेत् सर्वापवर्गे विमोकः कर्तव्यः। तदा हि योगकार्यमवसितं भवति। योगापवर्गार्थश्च विमोकः।

**टुप्**— (लिखितटुप्पाठोऽयं तन्त्ररत्नेन तुलितः) सर्वापवर्गे विमोकः कर्तव्यः। कुतः? 'अग्निमेव तद्युनक्ति' इत्यनेन तावत् विशेषो न गम्यते 'प्रधानार्थो योगः, नाङ्गानां' इति। अग्नौ च (योगाख्यसंस्कारसंस्कृते) प्रधानं अङ्गानि च क्रियन्ते। यथा 'वेद्यां हवींष्यासादयति' इत्यङ्गहविषां प्रधानहविषां च वेद्यामासादनं, न प्रधानहविर्भिर्विशेष्यते। यथा आहवनीये क्रियमाणः संमार्गो न शक्यते वक्तुं प्रधानस्य योऽग्निः तस्यायं (संमार्गो) नाङ्गानां योऽग्निरिति। एवमिहापि अग्नेरविशेषात् योगः सर्वार्थः, प्रकरणस्य अविशेषकत्वात् इत्युक्तं (तथा च सर्वार्थे योगे तद्विमोकोऽपि सर्वार्थः)।

**प्रधानापवर्गे वा तदर्थत्वात्। २० ॥**

**भाष्यं**— न वा सर्वापवर्गे विमोकः स्यात्। किं तर्हि? प्रधानापवर्गे एव। प्रधानसंयोगेन हि श्रूयते 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः, यावानेव यज्ञस्तमालभते' इति। यज्ञप्राप्त्यर्थं युनक्ति इति विज्ञायते। तस्मात् प्रधानार्थो योगः। प्रधानार्थश्चेत्, तदपवर्गे योगकार्यमवसितं भवति, तस्मात् तत्र विमोकः। अविशेषविधानं यज्ञसंयोगेन विशेषेण युज्यमानं विशेषार्थं भवति।

**टुप्**—प्रधानापवर्गे विमोकः। कुतः? 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः' इति श्रुतत्वात् यज्ञसंयोगेन। यज्ञशब्दश्च प्रधानवचनः इति। नैतद्युक्तम्। 'पञ्चभिर्युनक्ति', इति गुणवाक्यम्। तेन (तदेकवाक्यत्वात्) संख्याया एवायमर्थवादः (न योगस्य)। स्वसामर्थ्यादपि

तस्या एवायमर्थवादः ( पाङ्क्तो यज्ञः इति ), न तु अग्नियोगस्य । ( केन तर्हि यागविधिरत आह— ) अग्निं युनज्मि शवसा घृतेनेति जुहोति इति कर्म उत्पद्यते । उत्पद्यमानं च कैमर्थ्याभिलाषि भवति । ( न गुणविध्यवस्थायां न चोत्पत्त्यवसरे ) तत्र यत् प्रकरणेन वाक्येन वा ( प्रयोजन- )संबन्धो दीयते, तेन निराकाङ्क्षी भवति । इह तु वाक्येनैवास्य प्रयोजनं दीयते अग्नियोगः ( अग्निमेव तत् युनक्ति इति ) । तस्मिंश्च वाक्ये यज्ञसंयोगो नास्ति (येन प्रधानार्थता स्यात्) । यद्यपि तु यज्ञसंयोगो भवेत् ( उत्पत्तिवाक्ये एव ), तथापि यज्ञशब्दो यागमात्रवचनश्चेत् अङ्गयागानपि वदति प्रधानयागानपि । तत्राविशेषात् यागमात्रेण योगः (संबन्धः)।

**अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽप्रवृत्तार्थत्वात् । २१ ॥**

**भाष्यं**— एवं च कृत्वा अवभृथे आर्षेयवरणस्य होतृवरणस्य च प्रतिषेधो युक्तो भविष्यति ' न होतारं वृणीते, नार्षेयं वृणीते ' इति । यथा न्यायोऽपदिष्टः, 'सोमार्थं हि होतृवरणं कृतं यद्धोतारं वृणीते जगतीं तद् वृणीते ' इति । एतस्मिन् न्याये असति, तदपि अङ्गप्रधानार्थं, इति अवभृथेऽपि प्रसज्येत । तत्र कृतार्थत्वात् प्राकृतं होतृवरणं नैव प्राप्नोति । तस्य प्रतिषेधोऽनर्थकः । सति तु एतस्मिन् न्याये तदपि प्रधानार्थमेव । तत्रापि हि यज्ञसंयोगः 'यदवृता वषट् कुर्युः, भ्रातृव्यं यज्ञस्याशीर्गच्छेत्, यद् वृता वषट् कुर्वन्ति एकधा तद्यजमाने यज्ञस्याशीः प्रतितिष्ठति ' इति । प्रधानार्थं चेत् तदपवर्गे तत्कार्यमवसितं, इति अवभृथे प्राकृतं होतृवरणं प्राप्नोति, तस्य प्रतिषेधो वक्तव्यः, उच्यते च । तस्मात् प्रधानार्थो योगः प्रधानापवर्गे विमोक इति ।

**टुप्**—अवभृथे च तद्वत् इत्येतदप्ययुक्तम् । तत्रापि यो यज्ञसंयोगः ( यदवृता वषट् कुर्युः, भ्रातृव्यं यज्ञस्याशीर्गच्छेत् इति ) अयमपि गुणवाक्यस्यार्थवादः ' ऋत्विजो वृणीते ' इति, उत्पत्तिवाक्यस्य नायं शेषः ( तेन सौमिकमपि अङ्गप्रधानार्थमेव वरणम् ) । यत्प्रकरणे दृष्टार्थं वरणं तत् साङ्गस्य ज्योतिष्टोमस्य, यत् द्वितीयं तदपूर्वोपकारकं, अवभृथे अदृष्टार्थं प्रतिषिध्यते । तत्रापि चोदकाभावात् नित्यानुवाद एव । तस्मात् प्रतिषेधो न ( लिङ्गत्वेन ) घटते ।

**अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात् । २२ ॥**

**भाष्यं**—अहर्गणे च द्वादशाहे प्रत्यहं योगविमोकौ दर्शयति । ' स वा अहरहर्युनक्ति अहरहर्विमुञ्चति ' इति । तदुपपद्यते, यदि प्रधानार्थो योगः । इतरथा आद्ये अहनि योगः स्यात् अन्ते विमोकः, तदा हि सर्वापवर्गो इति ।

**टुप्**—स च (प्रतिषेधः) ' अहरहर्युनक्ति, अहरहर्विमुञ्चति ' इति अङ्गप्रधानार्थे योगे विमोके च घटते एव, यत् युनक्ति तत् अहरहः इति गुणविधानम् ।

**शा**—अग्नियोगः किं प्रधानमात्रापवर्गे स्यात्, उत साङ्गप्रधानापवर्गे इति । यदि प्रधानमात्रार्थो योगः, तदपवर्गे विमोकः । साङ्गप्रधानार्थत्वे तु योगस्य, सर्वान्ते विमोकः । तत्र अग्नेः सर्वार्थत्वात् तत्संस्कारो योगः सर्वार्थः । तस्मात् सर्वापवर्गे विमोकः इति पूर्वपक्षं कृत्वा ' पाङ्क्तो यज्ञः ' इति वाक्यशेषेण यज्ञार्थता योगस्य । अतः प्रधानापवर्गे विमोकः इति **भाष्यकारेण** सिद्धान्तितम् । एवं च सौमिकमपि वरणं ' यदवृता वषट् कुर्युः, भ्रातृव्यमेव यज्ञस्याशीर्गच्छेत् ' इति यज्ञसंयोगात् अग्निसंयोग- ( अग्नियोग- )तुल्यन्यायं केवलप्रधानार्थं भवति । तत्रावभृथे सौमिकेन वरणेन प्रत्याम्नातं होतृवरणं प्राप्नोति । तत्र ' न होतारं वृणीते ' इति प्रतिषेधः अवक्लृप्तो भवति । इतरथा सौमिकस्य वरणस्य साङ्गप्रधानार्थत्वात् अवभृथे पृथग्वरणप्राप्त्यभावात् प्रतिषेधो न स्यात् इति च लिङ्गमुक्तम् । तथा द्वादशाहे 'अहरहर्युनक्ति अहरहर्विमुञ्चति' इति प्रत्यहं योगविमोकदर्शनं, इतरथा साङ्गप्रधानार्थत्वे आद्यन्तयोरेव योगविमोकदर्शनं स्यादिति । **ननु** प्रधानार्थत्वेऽपि वरणस्यापूर्वत्वात् अवभृथस्य ऐष्टिकवरणप्राप्तिः । **(प्राभाकरमतेनोत्तरमाह—)** तत्र कश्चिदाह, अपूर्वताया एवायमर्थवादो होतृवरणाभावे लाघवं स्यादिति । स चापूर्वत्वपक्षे वरणप्राप्तौ सत्यां अवकल्पते, नान्यथेति । **वयं तु ब्रूमः**, यद्यपि अपूर्वोऽवभृथः, तथापि आज्यभागयोस्तत्र सद्भावात् होतुश्चाङ्गप्रधानार्थत्वात् तद्वरणमपि अङ्गप्रधानार्थम् । नहि

दार्शिकं वरणं केवलप्रधानार्थं, यज्ञसंयोगाभावात् । अतः असत्यप्यतिदेशे होतृवरणस्य आज्यभागार्थतया अस्त्येवावभृथे प्राप्तिः, इति युक्तः प्रतिषेधः इति ।

तदिदं **भाष्यकारीयं** अधिकरणव्याख्यानं अनुपपन्नमिति मत्वा **वार्तिककारेण** विपर्ययेण पूर्वोत्तरपक्षौ वर्णितौ । वाक्यशेषात् अवभृथलिङ्गाच्च केवलप्रधानार्थो योगः इति पूर्वः पक्षः । सिद्धान्तस्तु अग्नेः सर्वार्थत्वात् तद्योगोऽपि सर्वार्थः । न च वाक्यशेषवशात् विशेषः, योगोत्पत्तिविधौ वाक्यशेषाभावात् । तत्र तावत् सर्वार्थत्वं गम्यते, पञ्चसंख्यागुणविधौ वाक्यशेषः श्रुतः, न चासौ उत्पत्तिवाक्यावगतं सर्वार्थत्वं अलं निवर्तयितुम् । किंच यज्ञशब्दो यागमात्रं ब्रवीति, न प्रधानयागमेव । अतो न तद्वशात् प्रधानार्थत्वम् । अवभृथे च होतृवरणप्रतिषेधः अङ्गप्रधानार्थत्वेऽपि सौमिकस्य वरणस्य घटते एव । सौमिकं हि वरणमानत्यर्थम् । प्राकृतं तु होतृवरणं प्रवृत्ते होतरि क्रियमाणमदृष्टार्थम् । अतस्तत् सर्वासु सोमेष्टिषु कार्यं इति द्वादशे वक्ष्यति ( १२।१।१८ ) । तस्मात् युक्तः प्रतिषेधः । द्वादशाहे च प्रत्यहं योगविमोकदर्शनं अस्मिन्नेव पक्षे घटते । विधानार्थं हि एतद्वचनं, नानुवादमात्रं, आनर्थक्यात् । तेन सर्वादौ सर्वान्ते च सकृदेव योगविमोकयोः न्यायतः प्राप्तयोर्वचनेन अहरहर्योगविमोकौ विधीयेते । तस्मात् सर्वार्थो योगः, सर्वापवर्गे च विमोकः । ( **सोम**—ननु सोमकाले योऽग्नियोगः, स साङ्गस्य साङ्गप्रधानार्थं इति यावत् । कुतः ? संस्कृतकर्मणः योगसंस्कार्यस्याग्नेः तदर्थत्वात् साङ्गप्रधानार्थत्वात् । तस्मात् परेष्वपि अनुष्ठितेषु सर्वान्ते विमोकः स्यात् इत्येवं आद्यसूत्रेण सर्वार्थत्वपूर्वपक्षो वर्ण्यते ॥ ‘ **प्रधानापवर्गे वा तदर्थत्वात्** ’ इति द्वितीयसूत्रेण वाशब्देन पूर्वसूत्रोक्तं पक्षं निवर्त्य प्रधानान्ते विमोकः स्यात् यज्ञसंयोगेन अग्नियोगस्य प्रधानार्थत्वात् इति केवलप्रधानार्थत्वसिद्धान्तो वर्ण्यते ॥ ‘ **अवभृथे च सोमार्थस्य वरणस्य प्रतिषेधोऽप्रवृत्तार्थत्वात्** ’ इति तृतीयसूत्रेण अवभृथे च सोमार्थस्य वरणस्य अग्नियोगवत् यज्ञसंयोगेन प्रधानार्थत्वे अप्रवृत्तार्थत्वात् अवभृथे निवृत्तप्रयोजनत्वात् तत्र प्राकृतवरणस्य प्राप्तौ प्रतिषेधो घटते इत्येवं तत्रैव सिद्धान्तलिङ्गं प्रदर्श्यते ॥ ‘ **अहर्गणे च प्रत्यहं स्यात् तदर्थत्वात्** ’ इति चतुर्थसूत्रेण केवलप्रधानार्थत्वात् द्वादशाहे प्रत्यहं योगविमोकदर्शनमुपपन्नं, इति तत्रैव लिङ्गान्तरं प्रदर्श्यते । तेषां च सूत्राणां वार्तिककारपक्षे असाङ्गत्यं स्यात् ( इति चेत्, अत्रोक्तं **तन्त्ररत्ने** ) । वार्तिककारपक्षे सिद्धान्तोपक्रममिदमधिकरणम् । ततश्च प्रथमसूत्रे सर्वार्थत्वसिद्धान्तेनोपक्रमः । द्वितीयसूत्रं केवलप्रधानार्थत्वपूर्वपक्षप्रतिपादनार्थम् । तृतीयसूत्रं पूर्वपक्षे लिङ्गप्रतिपादनार्थम् । चतुर्थसूत्रं तुशब्दार्थकेन चशब्देन पक्षं व्यावर्त्य ब्रूते, केवलप्रधानार्थत्वे न्यायादेव प्रत्यहं प्राप्तेः ‘ अहरहर्युनक्ति, अहरहर्विमुञ्चति ’ इति न वक्तव्यं स्यात्, उक्तं च तत्, तस्मात् साङ्गप्रधानार्थं तत् इति सिद्धान्तप्रतिपादनार्थम् । )

**सोम**—यथा पूर्वत्र पौरोडाशिकपदार्थवैगुण्याय तदीयहविष्कृदाह्वाने वाग्विसर्गः, एवमिहापि अङ्गप्रधानार्थत्वेनैव प्रधानमात्रापवर्गानन्तरं विमोके तदुत्तरपदार्थानां योगाभावात् वैगुण्यं स्यात् इति तत्परिहारार्थं सर्वान्ते विमोकः इत्युत्थितेः ( दृष्टान्त- )संगतिः ।

**वि**— ‘ किमग्निमोकः सर्वान्ते मुख्यान्ते वा, ऽग्निमो यतः । योगे सर्वार्थता, मैवं मुख्यार्थोऽसौ तदन्तिमः ॥ ’ इति भाष्यमतेन । ‘ व्यत्यस्तौ तावुभौ पक्षावुत्पत्तावविशेषतः । सर्वार्थत्वं गुणे भाति सर्वान्तेऽतो विमोचनम् ॥ ’ इति वार्तिकमतम् ।

**भाट्ट**—अग्नौ ‘ अग्निं युनज्मि शवसा घृतेनेति जुहोति अग्निमेवैतेन युनक्ति ’ इत्यग्नियोगः श्रुतः, स चायं होमः नारादुपकारकतया चयनमात्राङ्गं, अग्निं इति द्वितीयया तत्संस्कारकत्वावगमात् । अत एव चयनमात्राङ्गतानिषेधानुवादः एवकारः । अग्नेश्च उपयोगापेक्षायां ज्योतिष्टोमाङ्गत्वेन विनियोगात् तदर्थत्वमपि तस्य इत्यविवादम् । अग्नेः साङ्गप्रधानार्थत्वात् तदर्थत्वं प्रधानमात्रार्थत्वं वा इति परं चिन्तायां, **भाष्यकारेण** तावदग्नेः सर्वार्थत्वात् साङ्गप्रधानार्थः अग्नियोगः वेदिबर्हिर्धर्मन्यायेन ( ३।७।१।१-५ ), अतश्च ‘ इमं स्तनमूर्जस्वन्तं धयापां इत्याज्यस्य पूर्णां स्रुचं जुहोति, एष वा अग्नेर्विमोकः ’

इति विहितोऽग्निविमोकः सर्वान्ते एव कार्यः। अत्र अग्निनिष्ठस्य योगजन्यस्य अदृष्टस्य स्वान्तिमकार्यनाश्यत्वेन प्रसक्तस्यैव एतद्धोमनाश्यत्वं अर्थवादवशादवगम्यते। अतः स्वान्तिमकार्यान्ते एव अग्नेर्विमोकः इति पूर्वपक्षिते ' पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः ' इति वाक्यशेषेण यज्ञार्थत्वावगमात् ' दक्षिणा सोमस्य ' इतिवत् सर्वार्थत्वबाधेन प्रधानमात्रार्थत्वावगमात् प्रधानान्ते एव विमोक इति सिद्धान्तितम्।

एवं च सौमिकमपि वरणं ' यदवृतो वषट् कुर्यात् भ्रातृव्यमेव यज्ञस्याशीर्गच्छेत् ' इति यज्ञसंयोगात् अग्नियोगतुल्यन्यायतया केवलप्रधानार्थं भवति। ततश्च सोमाङ्गभूतेऽवभृथे अतिदेशप्राप्तं होतृवरणं ' न होतारं वृणीते ' इत्यनेन पर्युदस्यते। सौमिकस्य वरणस्य अङ्गप्रधानार्थत्वे तु औपदेशिकेन आतिदेशिकस्य बाधेनैव अप्राप्तत्वात् पर्युदासानुपपत्तिः। यद्यपि च अवभृथः अपूर्वः, तथापि आज्यभागाद्यर्थतया प्रसक्तस्य होतृवरणस्य पर्युदासो नैवानुपपन्नः।

तथा द्वादशाहे ' अहरहर्युनक्ति, अहरहर्विमुञ्चति ' इति प्रात्यहिकयोगदर्शनं प्रधानमात्रार्थत्वे तद्भेदेन भेदोपपत्तेः उपपन्नम्। इतरथा सर्वाद्यन्तयोः सकृदेव अग्नियोगविमोकयोः प्राप्त्यापत्तेः इति सिद्धान्तितम्।

**वार्तिककारेण** तु भाष्यकारोक्तयुक्त्यैव प्रधानमात्रार्थत्वं अग्नियोगस्य पूर्वपक्षीकृत्य साङ्गप्रधानार्थत्वसिद्धान्ते एव सूत्राणि व्याख्यातानि। तस्यायमभिप्रायः। योगस्य उत्पत्तिवाक्ये एव द्वितीयामन्त्रवर्णाभ्यां अग्निसंस्कारार्थत्वावगतेः न गुणवाक्यस्य अर्थवादगतयज्ञपदश्रवणमात्रेण यज्ञार्थत्वं कल्पयितुं युक्तम्। नहि ' दक्षिणा सोमस्य ' इतिवत् अस्य अनन्यशेषता, येन बलात् प्रधानमात्रार्थता कल्प्येत। अस्तु वा यज्ञमात्रार्थत्वं, तथापि यज्ञशब्दस्य ' सर्वस्मै वा एतद्यज्ञाय गृह्यते ' इत्यादौ आज्यभागयोरपि प्रयोगात् प्रधानमात्रार्थता दुर्घटैव। एतेन ' स एष यज्ञः पञ्चविधः, इत्यादौ यज्ञशब्दस्य प्रधानमात्रे प्रयोगात् प्रधानमात्रार्थत्वं' इति **न्यायसुधोक्तं** अपास्तम्। तथात्वे ' ये यजामहस्य ' अनूयाजार्थत्वात् प्रसक्तौ पर्युदासानुपपत्तेश्च। अतः साङ्गप्रधानार्थोऽग्नियोगः वरणं च। तत्रापि द्वितीयया ऋत्विक्संस्कारार्थत्वस्य अवगतेः आर्थवादिकयज्ञार्थत्वस्य अकल्पनात्। न चैवमवभृथे तत्प्रसक्त्यभावः, प्रधानार्थत्वपक्षेऽपि दक्षिणावत् प्रधानार्थेनैव वरणेन प्रसङ्गसिद्धेः, अवभृथे तत्प्रसक्त्यभावस्य तुल्यत्वात्। अतश्च उभाभ्यामपि एवं प्रसक्तिर्वाच्या, दृष्टार्थस्य सौमिकवरणस्य सर्वार्थत्वेऽपि दार्शपूर्णमासिकस्य प्रवृत्ते होतरि क्रियमाणस्य वरणस्य अदृष्टार्थतया सोमाङ्गभूतेष्टिपश्वादौ वरणस्य द्वादशाहे वक्ष्यमाणत्वेन प्रसक्तस्य तस्य अवभृथे पर्युदासोपपत्तिः। नहि इदं प्रकृतौ आरादुपकारकं, येन तस्य आज्यभागाद्यनङ्गत्वेन अवभृथे प्रसक्त्यभावः शङ्क्येत, द्वितीयया प्रोक्षणादिवत् होतृसंस्कारार्थत्वावगतेः। अतस्तस्य कर्तृत्वेन आज्यभागाङ्गत्वात् वरणस्यापि तद्द्वारा आज्यभागाद्यङ्गत्वोपपत्तेः प्रसक्त्युपपत्तिः।

न चैवमपि आतिथ्याबर्हिःप्रोक्षणन्यायेन ( १२।१। १९।४३-४४ ) होतृव्यक्तेरेकतया दीक्षणीयायामेव कृतस्य होतृवरणस्य अन्ते प्रसङ्गेन उपकारसिद्धेः नावभृथे प्रसक्त्युपपत्तिः। आतिथ्याबर्हिःप्रोक्षणयूपपरिव्याणादौ हि यत्कार्यकूटोद्देशेन यद्व्यक्तेः उत्पत्तिः, तत्कार्यकूटाङ्गतद्व्यक्तिगतसंस्कारजन्यादृष्टं प्रति तत्कार्यान्तिमकार्यत्वेन नाशकत्वस्य व्रीहिप्रोक्षणाद्यर्थे कल्पितस्य सत्त्वेन तज्जन्योपकारस्य अनष्टतया प्रसङ्गोपपत्तावपि प्रकृते अग्निपात्रसंमार्गादिवत् सत्यपि व्यक्तेरेकत्वे निरुक्तकार्यकारणभावविषयत्वानुपपत्तेः। नहि होतृव्यक्तेः यत्कार्यकूटोद्देशेन उत्पत्तिः तत्कार्यकूटाङ्गसंस्कारः, दार्शिकहोतृवरणस्य ज्योतिष्टोमाद्यनङ्गत्वात्। अतस्तत्र तद्व्यक्तिजन्यादृष्टत्वावच्छिन्नं प्रति तत्फलोपहितान्तिमकार्यत्वेन नाशकता, इति विशिष्यकार्यकारणभावेनैव तत्प्रयोगवृत्त्यन्तिमफलेन नाशः इति प्रतिप्रयोगं आवृत्तेः युक्तमेव अवभृथे तद्दर्शनम्।

द्वादशाहे प्रत्यहं योगविमोकदर्शनं च प्रधानमात्रार्थत्वपक्षेऽपि भिन्नकालत्वात् तन्त्रेणैव सर्वसुत्यार्थकरणापत्तेः सर्वान्ते एव विमोकः इति प्राप्तौ प्रात्यहिकत्वविधानार्थमेव, इति साङ्गप्रधानार्थत्वेऽपि तुल्यम्। अस्तु वा प्रधानमात्रार्थत्वपक्षे कथं चित् भेदप्रसक्तिः, तथापि अनुवादत्वस्य वैयर्थ्यापत्तेः प्रात्यहिकविधानार्थमेवेदम्।

तस्मात् साङ्गप्रधानापवर्गे विमोकः। एतत्तुल्यन्याये उदाहरणान्तरे चाहर्गणे पूर्वपक्षे प्रधानसमकालीनाङ्गस्य आवृत्तिः, सिद्धान्ते तन्त्रं इत्यध्यायोपयोगिता।

**न्यायबिन्दुः**—अग्नौ श्रुतम्। 'अग्निं युनज्मि शवसा घृतेनेति जुहोति, अग्निमेव तद्युनक्ति, पाङ्क्तो यज्ञः' इति, तथा 'इमं स्तनमूर्जस्वन्तं धयामि (धयापां) इत्याज्यस्य पूर्णां स्रुचं जुहोति, एष वा अग्नेर्विमोकः' इति। तत्राग्नेः सर्वार्थत्वात्तत्संस्कारो योगोऽपि तथा। अतः सर्वापवर्गे विमोकः **इति प्राप्ते,** 'पाङ्क्तो यज्ञः' इति वाक्यशेषाद्यज्ञार्थो योगः। अतः प्रधानापवर्गे विमोकः इति। अत एव सौमिकमपि वरणं 'भ्रातृव्यमेव यज्ञस्याशीर्गच्छेत्' इति वाक्यशेषात्तुल्यन्यायेन केवलप्रधानार्थं, तेनावभृथे तदभावाद्धोतृवरणमबाधितं प्राप्तमिति तत्प्रतिषेधस्य 'न होतारं वृणीते' इत्यस्य संगतिः। अन्यथा सौमिकवरणस्यावभृथार्थत्वे होतृवरणप्राप्त्यभावात्प्रतिषेधानुपपत्तिः। द्वादशाहे च प्रत्यहं योगविमोकदर्शनं लिङ्गम्। नन्वेवमपि अवभृथस्यापूर्वत्वाद्धोतृवरणस्याप्राप्तिरेवेति चेत्, अत्राहुः, अपूर्वताया एवेयं स्तुतिः, न तु निषेध इति। वस्तुतस्तु अवभृथस्यापूर्वत्वेऽप्याज्यभागार्थत्वेन होतृवरणं प्राप्नोति साङ्गप्रधानार्थत्वादतो युक्तः प्रतिषेध इति। तदेतद्भाष्यव्याख्यानम्। वार्तिके तु विपरीतं, वाक्यशेषाल्लिङ्गाच्च केवलप्रधानार्थो योग इति पूर्वः पक्षः। अग्नेः सर्वार्थत्वात्तद्योगोऽपि सर्वार्थः, वाक्यशेषस्तु पञ्चभिर्युनक्तीति गुणविधौ श्रुतः। न चासावुत्पत्तिवाक्यावगतसर्वार्थत्वनिवर्तनक्षमः। किंच यज्ञशब्दो न प्रधानमात्रवचनः, किंतु यागमात्रवचनः। अतो न केवलप्रधानार्थत्वम्। अवभृथे च सौमिकवरणसत्त्वेऽपि प्रवृत्ते होतरि क्रियमाणमदृष्टार्थं तद्वरणं प्राप्नोत्येवेति युक्तस्तन्निषेधः। द्वादशाहे तु प्रत्यहं योगविमोकयोर्विधिरेव, न त्वनुवादो वैयर्थ्यादिति।

**मण्डन**—'साङ्गस्यादावन्ततो योगमोकौ।'

**शंकर**—'साङ्गान्तेऽग्निविमोको ह।'

**⧗ अग्निचयने 'प्राणभृत उपदधाति' इति प्राणशब्दघटितमन्त्रोपधेया इष्टका एव ॥**

'प्राणभृत उपदधाति' इत्यत्रापि जानुदघ्नत्वाद्यविरोधेन क्षुद्रजीवानामुपधानसंभवः, **इति प्राप्ते,** 'तद्वानासामुपधानो मन्त्रः' (पा० ४।४।१२५) इति स्मृत्या प्राणभृत्पदघटितमन्त्रकरणत्वेनोपपत्तौ न प्राणिहिंसानिषेधसंकोचो युक्त इति। **संकर्ष.** २।१।२३.

**⧗ अग्निचयने भूतेष्टकोपधानं प्राकरणिकमन्त्रैरेव ॥**

राजसूये 'पृथिव्यै स्वाहा' इत्यादयो मन्त्राः पठिताः। अग्निप्रकरणे तु 'पृथिव्यसि जन्मना च साग्निना गर्भमाधत्ताम्' इत्यादयो मन्त्रा आम्नाताः। उभयेषामपि भूतेतिसमाख्या 'भूतानामवेष्टयः' इत्याकारिका, 'तत एवैनमवयजति' इत्यार्थवादिको व्यवहारश्च तुल्य एव। ततश्च 'भूतेष्टका उपदधाति' इत्यनारभ्यविधौ विनिगमनाविरहादुभयेऽपि समुच्चिता विकल्पेन वोपादेयाः, **इति प्राप्ते,** कौण्डपायिनामयनस्थे नैयमिके च कर्मण्यग्निहोत्रपदसाम्येऽपि 'उत्सन्नयज्ञो वा एष यदग्निः' 'उत्सन्नयज्ञो वा एष यदग्निहोत्रम्' इत्यर्थवादसाम्येऽपि परस्परवैजात्यदर्शनात् प्रकरणपठितानां 'चित्रिणीरुपदधाति' इत्यादिवत् विनियोगान्तरादर्शनेन साकाङ्क्षाणामेवोपधाने विनियोगः। **संकर्ष.** २।४।२३.

**⧗ अग्निचयने भूतेष्टकोपधानं राजसूयगतमन्त्रैरेवेति पक्षे यथाम्नातैरेव स्वाहाकारान्तैः कर्तव्यम् ॥**

यदि राजसूयस्थमन्त्राणामेव विनियोगः स्यात्तदा तत्रत्यस्वाहाकारानुन्मूल्यावशिष्टांशैरेवोपधानं, तेषां प्रदाने सावकाशत्वात्। अश्रुतस्य स्वाहाकारस्य कार्यानुसारेण योजनवद्वियोजनस्यापि न्यायसिद्धत्वात्। लिङ्गेन पदैकवाक्यताया बाधात्, **इति प्राप्ते,** 'स्वाहोरोरन्तरिक्षात्' इत्यादिमन्त्रेष्विव स्वाहाकारस्य प्रदानार्थत्वाभावेन 'स्वानाजिहीत' इत्याद्यर्थान्तरपरतया वा वाक्यार्थेऽन्वयसंभवेन मन्त्रत्वरक्षणाय यथाम्नानमेवोपधानम्। **संकर्ष.** २।४।२४.

**⧗ अग्निचयने 'यदृषीणां' इति विधेः दाशतयीभ्य आग्नेयमन्त्रा आहार्याः ॥**

'यदृषीणामाग्नेयं तेन संवत्सरमग्निं चिन्वीत' इति विहिता अग्निदृष्टा मन्त्राः (अग्नौ देवतायां दृष्टाः, न तु अग्निना ऋषिणा दृष्टाः) संनिहितत्वाद्याज्ञसेनीमन्त्रा एव भवन्ति,

न दाशतयीस्थाः । तेषां प्रकरणपाठाभावेनानङ्गत्वात् । ' एतद्वा ऋषीणामाग्नेयं छन्दो यद्याज्ञसेनीः ' इति वाक्यशेषेण विवरणाच्च, **इति प्राप्ते,** दाशतय्याः 'अग्निमीळे मधुच्छन्दा' इत्यादिना ऐदंपर्येण ऋषीणां स्मरणात्तेषामेव वाक्यशेषेण विवरणात्त एवानेयाः । किंच ' सूक्तेनोपदधात्यसूक्तस्यावच्छेदाय ' इति सूक्तस्यैव करणत्वेन विधानात् सूक्तप्रसिद्धेश्च दाशतयीतोऽन्यत्राभावान्न याज्ञसेन्यः करणानि । **संकर्ष.** २।१।३२.

**अग्निचयने रुक्मप्रतिमोचनादि, दीक्षितसंस्कारेभ्यः परस्तात् कर्तव्यम् ॥**

**संनिपातश्चेद् यथोक्तमन्ते स्यात्।** ५।२।१२।२३॥

**भाष्यं**—अग्नौ दीक्षणीयायाः परतः रुक्मप्रतिमोचनादि आम्नातम् । तस्मिन्नेव क्रमे चोदकेन दीक्षितसंस्काराः प्राप्ताः । तत्र संदेहः, किं अनियमः, उत पूर्वं रुक्मप्रतिमोचनादि, उत दीक्षितसंस्काराः इति । किं प्राप्तं ? अनियमः । अथवा यथा प्रत्यक्षपाठक्रमात् दीक्षणीयायाः पुरतः उखासंभरणादयः, एवं रुक्मप्रतिमोचनादीनि इति । **एवं प्राप्ते ब्रूमः** । दीक्षितसंस्काराः पूर्वं कर्तव्या इति । कुतः ? दीक्षणीयां प्रति यः पाठक्रमः, यथा च चोदकः, तथा उभयेऽपि परस्तात् दीक्षणीयायाः कार्याः । यस्तेषां परस्परापेक्षः क्रमः, तत्र न कश्चित् उखासंभरणस्येव प्रत्यक्षः पाठक्रमः पूर्वत्वं साधयति । अस्ति तु संस्काराणां प्रकृतौ पूर्वं पाठः, विकृतौ रुक्मप्रतिमोचनस्य उत्तरः । तेन यथोक्त एव क्रमः स्यात्, अन्ते वैकृतं इति । अथ किमर्थं संनिपातः आशङ्क्यते, ननु अयं संनिपात एव व्यक्तः। असंदिग्धे संदिग्धवचनमेतत् । यथा, 'ईजाना बहुभिर्यज्ञैर्ब्राह्मणा वेदपारगाः । शास्त्राणि चेत् प्रमाणं स्युः प्राप्तास्ते परमां गतिम् ॥ ' इति । तस्मान्न दोष इति ।

**टुप्**— दीक्षणीयानन्तरं प्रकृतौ दीक्षितसंस्काराः कृताः, चोदकेन तथैव प्राप्नुवन्ति । ननु रुक्मप्रतिमोचनादयो दीक्षणीयायाः परे श्रूयन्ते, तेषां चोदकप्राप्तानुष्ठानव्यवहितानामपि परत्वं नैव बाध्यते ।

**शा**— 'तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरम् । रुक्मादिकमनुष्ठेयं पश्चाद्दीक्षितसंस्कृतिः ॥ ' उच्यते । ' दीक्षा दीक्षितसंस्कारानुपस्थापयति क्रमात् । तेषामुपस्थितानां च नाक्रियाहेतुरस्ति नः ॥ '

**सोम**—पूर्ववत् प्रत्यवस्थानात् । ( प्रत्यक्षोऽपि पाठो न नियामकः इति) संगतिः । उख्याग्नेः शिक्ये आसज्य कण्ठे धारणे क्रियमाणे उरःप्रदेशदाहाभावाय व्यवधानार्थं ' रुक्ममनन्तरं प्रतिमुञ्चते ' इति विहितं एकविंशतिनिर्बाधसौवर्णाभरणविशेषधारणं रुक्मप्रतिमोचनशब्दार्थः। संस्काराः 'एकविंशत्या दर्भपिञ्जूलैः पावयति ' इत्यादयः । **सूत्रार्थस्तु** संस्काराणां रुक्मप्रतिमोचनादेश्च संनिपाते अन्ते वैकृतं इति यथोक्तमेव स्यात् इति ।

**वि**—'चयने रुक्मधृत्यादिः पुरोत स्वामिसंस्कृतिः।, पाठादाद्यो, ऽन्तिमः क्लृप्तक्रमात् पाठस्य न क्षतिः ॥ '

**भाट्ट**—दीक्षणीयागुणश्रवणोत्तरं रुमप्रतिमोचनादिं चयनाङ्गं श्रुतम् । ज्योतिष्टोमप्रकरणे च सामान्यतो दीक्षणीयोत्तरं दीक्षितसंस्कारा दण्डदानादयः । तदत्रापि विशेषपाठेन सामान्यपाठस्य बाधात् दीक्षणीयोत्तरं रुक्मप्रतिमोचनादि कृत्वा ततो दीक्षितसंस्काराः, **इति प्राप्ते,** विशेषपाठस्य पश्चाद्भावमात्रबोधनेन अन्यथासिद्धस्य अवर्जनीयतयाऽपि उपपत्तौ दीक्षणीयाऽऽनन्तर्यानियामकत्वात्, सामान्यपाठेन क्लृप्तक्रमान् दीक्षितसंस्कारानेव दीक्षणीयाऽनन्तरं कृत्वा तद्दिनकृत्यान्ते रुक्मप्रतिमोचनादिकं कार्यम् ।

**न्यायबिन्दुः**—अग्नौ दीक्षणीयाऽनन्तरं रुक्मप्रतिमोचनादि आम्नातम् । प्रकृतौ तु दीक्षणीयाऽनन्तरं दीक्षितसंस्काराः । तत्र प्रत्यक्षपाठेन दीक्षणीयाद्यनन्तरं रुक्मप्रतिमोचनादिकं, **इति प्राप्ते,** प्रकृतिक्लृप्तक्रमवशेन दीक्षणीयाऽनन्तरं दीक्षितसंस्काराः, ततो रुक्मप्रतिमोचनादि । दीक्षणीयाऽनन्तरपाठस्तु रुक्मादेः नान्तरीयकः पश्चादनुष्ठानेऽपि न विरुध्यते । सावित्रहोमादेस्तु पश्चादनुष्ठाने पूर्वपाठविरोधः इति विशेषः इति सिद्धान्तः ।

**मण्डन**—'रुक्मं परं दीक्षितसंस्कृतेः स्यात् । '

**शंकर**—' ततो दीक्षितसंस्काराः । ' ततः दीक्षायाः परस्तात् ।

**अग्निचयने लोकंपृणमन्त्रेण उपधानं सूददोहसा मन्त्रेण च अभिमन्त्रणं, न तु द्वाभ्यां**

**मिलित्वा उपधानम्** ॥ लोकंपृणसूददोहःयदघदिते द्वे ऋचौ पठ्येते । ताभ्यामावृत्ताभ्यां द्वेद्वे इष्टके उपधातव्ये प्रत्येकं करणत्वात् । 'अष्टौ नानायजुपस्त्रयोदश लोकंपृणा उपदधाति, ता एकविंशतिः संपद्यन्ते' इति संख्याविरोधाद्वा मन्त्रयोर्निरपेक्षकरणत्वेन विकल्पः । वस्तुतस्तु लोकंपृणेष्टकामात्रमेलनेन संख्योक्तेरविरोधात् सूददोहेष्टकानां पार्थक्येऽपि न दोषः । परं तु 'अनुष्टुभाऽनुचरति' इति विधौ अनुशब्दस्वारस्येन 'ता अस्य सूददोहसः' इति अनुष्टुभोऽप्राधान्यावगमाद् द्वाभ्यामपि मन्त्राभ्यामेकैकैवेष्टकोपधातव्या, **इति प्राप्ते**, अनुचरतीति पदेनैवोपधानोत्तरकालमन्त्रपाठावगतेरुभयोः समुच्चित्य करणत्वे समप्राधान्येनानुचरत्वभङ्गापत्तेश्च लोकंपृणयोपधाय सूददोहसाऽभिमर्शनं कर्तव्यम् । **याज्ञिका**स्तूभयोरेकमन्त्रत्वमिच्छन्ति ( नेच्छन्ति इति केवलः ) । **संकर्ष.** २।१।४१

**अग्निचयने वसोर्धारायां मन्त्रान्तेन कर्मादिसंनिपातः ॥**

**संततवचनाद् धारायामादिसंयोगः । १२।३।११।२६ ॥**

**भाष्यं**— अग्नौ श्रूयते 'संततां वसोर्धारां जुहोति' इति । अत्रापि पूर्वोक्तेन न्यायेन ( मन्त्रान्तेन कर्मादिसंनिपातः करणमन्त्रेषु इत्यनेन ) तथैव प्राप्ते उच्यते । धारायामादिसंयोगः, कर्मादिः मन्त्रादिश्च संनिपात्यः । कस्मात् ? संततवचनात् । सम् इत्येकीभावः, तनोतिर्विस्तारे । द्वयोर्यत्र सह तननं भवति, तत्र संपूर्वस्तनोतिर्वर्तते । इह कर्म च मन्त्रश्च संनिहितौ । तस्मात् तयोः सह तननमुच्यते । तच्च आद्योः संनिपाते भवति । तस्मादादिसंयोगः ।

**कर्मसंतानो वा नानाकर्मत्वादितरस्याशक्यत्वात् । २७ ॥**

**भाष्यं**— कर्मणां वा संतानोऽयम् । 'संततां जुहोति' इति हि होमस्य केवलस्य संतान उच्यते । नात्र मन्त्रसंकीर्तनमस्ति । ननु द्वयोः संयोगे संशब्दो भवति, एकश्च होमः । उच्यते । नैष दोषः । नानाकर्मत्वात् । बहून्येतानि कर्माणि । तेषामनुपरमेण क्रियासंतानो भवति । कर्मनानात्वं वचनात् 'द्वादश द्वादशानि जुहोति' इति । ननु द्रव्यसंख्यैषा । नेत्याह । नात्र द्रव्यसंकीर्तनमस्ति । होमोऽत्र संख्यया युज्यते । 'द्वादश द्वादशानि जुहोति' इति, एतत्संख्यान् होमान् करोतीति । किंच, इतरस्य च मन्त्रकर्मणोः संतानस्याशक्यत्वात् । क्षणिकं कर्म न मन्त्रेण सह तनितुं शक्यते । तस्मादत्रापि कर्मादिसंनिपात एव ।

**शा**—'संततां वसोर्धारां जुहोति' इत्यत्र संततवचनात्, तस्य च साहित्यवाचित्वात्, साहित्यस्य च अनेकापेक्षित्वात् कर्ममन्त्रयोः साहित्यमिदमुच्यते । अतोऽत्र मन्त्रादेः कर्मादेश्च संनिपातः । स्यादेवं यदि एकं कर्म स्यात्, भिन्नानि तु अत्र 'द्वादश द्वादशानि जुहोति' इति संख्यया कर्माणि, तेषामविच्छेदः संततशब्देनोच्यते । जुहोतीति तेषामुपात्तत्वात् न मन्त्रकर्मणोः साहित्यं, मन्त्रस्यानुपात्तत्वात् । अविच्छेदेऽपि संततशब्दो वर्तते, न केवलं साहित्ये । अतोऽत्र पूर्व एव न्यायः ( मन्त्रान्तस्य कर्मादेश्च संनिपातः इति ) ।

**सोम**— पूर्ववैपम्येणोत्थानात् संगतिः ।

**वि**—'मन्त्रादौ किं वसोर्धारा मन्त्रान्ते वा, ऽत्र संततेः । आद्यो, होमेषु सांतत्याद् द्वादशान्तेषु तद्धुतिः ॥' 'द्वादश द्वादशानि जुहोति' इति श्रुतम् । द्वादशभिर्मन्त्रवाक्यैः संपाद्यमेकमाहुतिस्वरूपं एकं द्वादशम् । तद्यथा 'वाजश्च मे, प्रसवश्च मे, प्रयतिश्च मे, प्रसितिश्च मे, धीतिश्च मे, क्रतुश्च मे, स्वरश्च मे, श्लोकश्च मे, श्रावश्च मे, श्रुतिश्च मे, ज्योतिश्च मे, सुवश्च मे' इत्येतैर्द्वादशभिर्मन्त्रवाक्यैः एकाऽऽहुतिर्होतव्या । एवं एकादश उत्तराहुतयः । एतेषु च होमद्वादशकेषु मध्येमध्ये विलम्बाभावः सांतत्यम् ।

**भाट्ट**— अग्नौ 'द्वादश द्वादशानि जुहोति' इति संख्याभिन्नानि द्वादश कर्माणि वसोर्धारासंज्ञकानि विहितानि । तत्र च 'संततां वसोर्धारां जुहोति' इति वचनेन भाष्यकाराद्युदाहृतेन सांतत्यं विहितम् । काम्यमपि तत् प्रकृतसर्वकर्माश्रितं 'यं कामयेत प्राणानस्यान्नाद्यं संतनुयामिति संततां तस्य जुहुयात्' इति वचनेन विहितम् । यदि तु तैत्तिरीयशाखायां

नित्यसांतत्यविधेः अनाम्नानात् अनाश्वासः, तदा अस्तु तत् काम्यमेव । तैत्तिरीयशाखास्थं 'वसोर्धारां जुहोति' इति सामान्यवचनं तु सामान्यतो द्वादशानां विधानार्थम् । तत्प्रयोजनं च अवान्तरप्रकरणसिद्धिद्वारा द्वादशानामपि होमानां सांतत्याश्रयत्वसिद्धिः । तदिह सांतत्यशब्दस्य साहित्यवाचित्वात् मन्त्रकर्मणोः साहित्यप्रतीतेः नात्र मन्त्रान्तेन कर्मादिसंनिपातः, **इति प्राप्ते,** अविच्छेदेऽपि संततशब्दस्य लोके प्रयोगात् कर्मणामेव अविच्छेदरूपसाहित्यविधानोपपत्तेः न न्यायाद्यवगतमन्त्रान्तोत्तरकालताबाधकत्वेन अनुपस्थितमन्त्रसाहित्यविधायकत्वम् । **न चैवं** नित्यप्रयोगे तत्साहित्यस्य प्रयोगविध्यवगतप्रयोगप्राशुभावबलेनैव प्राप्तेः तद्विधिवैयर्थ्यमिति **वाच्यम्** । कल्पितविधिविहिततद्दोषनिमित्तकाविज्ञातप्रायश्चित्तविनिवृत्त्या याजुर्वेदिकाङ्गभ्रेषनिमित्तकप्रायश्चित्तप्राप्त्यर्थं तद्विधानात् ।

**न्यायबिन्दुः**—'संततां वसोर्धारां जुहोति' इत्यत्र साहित्यरूपसंततत्वस्य मन्त्रकर्मसंबन्धित्वात् तयोर्यौगपद्येन प्रयोगः, **इति प्राप्ते,** संततत्वस्य अविच्छेदरूपत्वात् **न** साहित्यापेक्षा । तदपेक्षायामपि 'द्वादशैतानि जुहोति' इति संख्यया कर्मभेदात् तेषामेव अविच्छेदः संततशब्दार्थः । 'जुहोति' इति शब्दोपात्तत्वात् , मन्त्रस्य अनुपादानाच्च । अतः अत्रापि पूर्ववदेव इति सिद्धान्तः ।

**मण्डन**—'धारायागेऽप्येवमेव क्रमः स्यात् ।'

**शंकर**—'संततां च वसोर्धारां ।' ( मन्त्रान्ते आरभेत् ) ।

**अग्निचयने वृषभमुपदधाति इति 'त्वामग्ने वृषभं' इति मन्त्रोपधेयेष्टकापरो वृषभशब्दः ।**

'वृषभमुपदधाति' इति श्रुतो वृषभशब्दः पशुपरः कूर्मादिवत् तस्याप्युपधेयत्वसंभवात्, **इति प्राप्ते,** चित्यांचित्यां तदुपधानश्रवणेन पञ्चसु चितिषु तदुपधाने जानुदघ्नत्वविरोधात् 'त्वामग्ने वृषभं' इति मन्त्रोपधेयेष्टकापरोऽयं वृषभशब्दः । **संकर्ष.** २।१।२२.

**अग्निचयने श्येनाकृतिः काम्यैव ।।** 'दिव्यं सुपर्णं' इति मन्त्रस्य विधायकत्वाभावेऽपि 'वयसां वै' इति वाक्ये लेटः श्रवणात्तस्य 'श्येनचितिं चिन्वीत स्वर्गकामः' इति विधिनोपसंहारसंभवात् स्वर्गकामोपबन्धात् श्येनाकृतिर्नित्यकाम्या ऐन्द्रवायवाग्रतावत्, **इति प्राप्ते,** श्येनकङ्काद्याकृतिविशेषाणां सामान्यतोऽनुवादमात्रेणाप्युपपत्तौ लेट्त्वकल्पने मानाभावात् केवलकाम्यैव श्येनचितिः । नित्यैवेति तु **याज्ञिकानां** परिभाषामात्रम् । **संकर्ष.** २।१।४०.

**अग्निचयने श्रुतस्य ज्वलद्वृक्षाग्राद्याहृतस्य काम्याग्नेः आधानादिसंस्काराणां लोपः ।।**

**तस्मिन् संस्कारकर्म शिष्टत्वात् ।१२।४।१।२८ ।।**

**भाष्यं**—तस्मिन् वैहारिकेऽग्नौ आधानिकाः संस्काराः कर्तव्याः, शिष्टत्वात् । सर्वकर्मार्था हि ते, आधानस्य सर्वशेषत्वात् । यदि न क्रियेरन्, तत् कर्म तेनाङ्गेन हीनं अफलं स्यात् ।

**स्थानात्तु परिलुप्येरन् । २९ ।।**

**भाष्यं**—परिलुप्येरन् आधानिकाः संस्काराः । कस्मात् ? स्थानात् । तस्य संस्कृतस्याग्नेः स्थाने अयमसंस्कृतः श्रुतः । स वैशेषिकत्वात् तस्य निवर्तकः । स चेन्निवृत्तः, किमर्थं संस्काराः करिष्यन्ते ? संस्कृतः स्यात् इत्येवमर्थं ते क्रियेरन् । असंस्कृतेन चात्रार्थः । तस्मात् लुप्येरन् ।

**शा**—संस्कारास्तत्र ( भ्राष्ट्राद्यग्नौ ) आधानादिकाः कर्तव्याः होमार्थत्वात् संस्काराणां, अस्य चाग्नेर्होमसाधनत्वात् । सत्यं होमसाधनोऽयमग्निः, तथापि असंस्कृत एवायं संस्कृतस्थानापन्न इति नात्र संस्काराः कर्तव्याः । न हि वृक्षादाहृतस्य अरणिमन्थनादिजन्यः संस्कारः शक्यते आधातुम् । तस्मान्नात्र संस्काराः ।

**सोम**—काम्याग्नेः आहवनीयत्वमप्यस्ति, गतश्रीधारणादयः संस्कारास्तत्रापि कर्तव्याः इति पूर्वाक्षेपात् संगतिः । यद्यपि आधानमाहवनीयार्थं, तथापि 'आहवनीये जुहोति' इत्याहवनीयशब्दवाच्यानां आधानपवमानजन्यादृष्टसंस्काराणां होमे विनियोगात् , संस्काराणां च साक्षात् होमाधारत्वानुपपत्त्या होमाधारभूताग्न्यर्थत्वावगमात् काम्यस्यापि होमाधारत्वात् तत्रापि संस्काराः कर्तव्याः इति पूर्वपक्षः । यदि वाक्यान्तरेण प्राप्तं होमाधारमुद्दिश्य

संस्कारा विधीयेरन्, तदा काम्यसाधारणा भवेयुः, न त्वेतदस्ति, किंतु 'आहवनीये जुहोति' इति वाक्यमेव संस्कारं विदधत् संस्कृतस्याग्नेरपि होमार्थत्वमापादयति। ततश्च संस्कृताग्निबाधनेन काम्योऽग्निर्निविशमानः कथं संस्कारान् लभेत। तस्मान्न तत्र संस्काराः, इति सिद्धान्तः। **प्रथमसूत्रार्थस्तु,** तस्मिन् काम्येऽग्नौ संस्काराणां क्रिया स्यात्, तेषां सर्वहोमार्थतया शिष्टत्वात् विहितत्वात् इति।

**वि**—'अस्त्याधानादि नो वाऽत्र, सर्वशेषत्वतोऽस्ति तत्।, न संस्कृतस्थानपातान्मन्थनस्याप्यसंभवात् ॥'

**भाट्ट**— अत एव काम्येऽग्नौ नाधानादयः संस्काराः, असंस्कृतस्यैव तस्य भ्राष्ट्रादिपदवाच्यत्वात् तस्मिन् मथनाद्यसंभवाच्च, आधानस्य क्रत्वर्थत्वाभावेन तस्मिन् प्राप्त्यभावाच्च। क्रत्वपूर्वसाधनीभूतास्तु परिस्तरणसंमार्गादयो भवन्त्येव।

**न्यायबिन्दुः**— तत्र आधानादिसंस्काराः कार्याः, होमार्थत्वात्तेषां, **इति प्राप्ते,** होमसाधनत्वेऽपि भ्राष्ट्रादाहृतस्य मन्थनादिसंस्काराशक्तेः नात्र संस्काराः, इति सिद्धान्तः।

**मण्डन**— 'नास्मिन्नाधानसंस्काराः।'

**शंकर**— 'नास्याधानादि कर्म।'

**अग्निचयने श्रुतानां दीक्षाहुतिमन्त्राणां सौमिकदीक्षाहुतिमन्त्रैः समुच्चयः॥**

**षड्भिर्दीक्षयतीति तासां मन्त्रविकारः श्रुतिसंयोगात्॥ १०।३।४।२३॥**

**भाष्यं**—अस्त्यग्निः, 'य एवं विद्वानग्निं चिनुते' इति। तत्र दीक्षाहुतयः प्राकृत्यो वैकृत्यश्च। 'आकूतिमग्निं प्रयुजं स्वाहा, मनो मेधामग्निं प्रयुजं स्वाहा, चित्तं विज्ञातमग्निं प्रयुजं स्वाहा, वाचो विधृतिमग्निं प्रयुजं स्वाहा, प्रजापतये मनवे स्वाहा, अग्नये वैश्वानराय स्वाहा' इति प्राकृत्यः। तथा वैकृत्यः, 'आकूत्यै प्रयुजेऽग्नये स्वाहा, मेधायै मनसेऽग्नये स्वाहा, दीक्षायै तपसेऽग्नये स्वाहा, सरस्वत्यै पूष्णेऽग्नये स्वाहा, आपो देवीर्बृहतीर्विश्वशंभुवो द्यावापृथिवी उर्वन्तरिक्षम्। बृहस्पतिर्नो हविषा विधातु स्वाहा। विश्वे देवस्य नेतुर्मर्तो वृणीत सख्यम्। विश्वे राय इषुध्यसि द्युम्नं वृणीत पुष्यसे स्वाहा' इति। एताः प्रकृत्य समामनन्ति, 'षड्भिर्दीक्षयति' इति। तत्र संशयः। किं वैकृतीनां प्रयोगः, प्राकृतीनां निवृत्तिः, अथवा समुच्चयः प्राकृतीनां वैकृतीनां चेति। किं प्राप्तम्? षड्भिर्दीक्षयतीति तासां प्राकृतीनामाहुतीनां मन्त्रविकारः स्यात्। वैकृतैर्मन्त्रैः प्राकृता निवर्त्येरन्, श्रुतिसंयोगात्। प्रत्यक्षश्रुतिसंयोगो वैकृतीनाम्। षड् वैकृता मन्त्राः। षट्शब्देन वैकृता गृह्यन्ते। तस्मात् प्राकृतानां बाधः न समुच्चय इति।

**अभ्यासात्तु प्रधानस्य। २४॥**

**भाष्यं**—तुशब्दः पक्षं व्यावर्तयति प्राकृतानां बाध इति। न बाधः। समुच्चयः। कुतः? संभवात्। यत्र हि प्राकृतवैकृतयोर्युगपन्न संभवः, तत्र वैकृतेन प्राकृतं बाध्यते। समुच्चये ह्यावृत्तिः स्यात् प्रधानस्येति। यत्र पुनरावृत्तिः श्रुता कर्तव्यैव, तत्र नैष दोषो भवति, आवृत्तिः प्राप्नोतीति। इह चाऽऽवृत्तिः श्रूयते प्रधानस्य होमस्य, 'द्वादश जुहोति' इति। अतः संभवात् समुच्चय इति।

**आवृत्त्या मन्त्रकर्म स्यात्। २५॥**

**भाष्यं**—नैतदस्ति, समुच्चय इति। प्रत्यक्षश्रुतैर्वैकृतैश्चोदकप्राप्ताः प्राकृता बाध्येरन्। अथ यदुक्तं, संभवे सति न बाधितव्या इति। अत्रोच्यते। नास्ति संभवः। कथम्? वैकृताः षड् मन्त्रा अग्नौ प्राकृतेषु होमेषु प्रत्यक्षेण श्रवणेन विधीयन्ते। ते चेद्धोमाः, वैकृतैर्मन्त्रैर्भवितव्यम्। तस्मादावृत्त्या मन्त्रकर्म स्यात्। अतः प्राकृता बाध्येरन्नेवेति।

**अपिवा प्रतिमन्त्रत्वात् प्राकृतानामहानिः स्यादन्यायश्च कृतेऽभ्यासः। २६॥**

**भाष्यं**—अपिवेति पक्षव्यावृत्तिः। प्रतिमन्त्रमाहुतयो भवन्ति। अभ्यासाच्च द्वादशता। प्राकृता अपि मन्त्राश्चोदकेन प्राप्ताः, वैकृता अपि श्रवणेन। सर्वाङ्गग्राही च प्रयोगवचनः उभयान् संगृह्णाति। समुच्चयासंभवे च बाधविकल्पौ, न संभवति समुच्चये। बाधे हि च्चोदकप्राप्तिरपह्नूयेत। न च होमनिवृत्तौ निष्कृष्टा वैकृताः श्रूयन्ते। तेन होमश्चेदापतितस्ततो वैकृताश्च साधका इत्यध्यवसेयम्। दीक्षणे हि ते वैकृताः श्रूयन्ते

'षड्भिर्दीक्षयति' इति। होमप्रयोगवचनस्तु प्रदानार्थान् स्वाहाकारान्तान् सामर्थ्येन संनिहितान् गृह्णाति। उभये च प्राकृता वैकृताश्च संनिहिताः। तस्मान्न विनिगमनायां हेतुरस्ति, इमान् गृह्णाति इमान्नेति। न च प्रधानावृत्तिरिह दोषो भवतीत्युक्तमेव। तस्मात् प्राकृतानां मन्त्राणामहानम्। अपि चान्यायः कृतेऽभ्यासः। सकृद्वैकृता मन्त्राः पठ्यन्ते। तैर्दीक्षितः संपादयितव्य इति। सकृत्संपादिते तैर्दीक्षिते, कृतेऽर्थे, पुनरभ्यासो न न्याय्यः। तस्मादपि प्राकृतानामहानमिति।

**पौर्वापर्यं चाभ्यासे नोपपद्यते नैमित्तिकत्वात्। २७॥**

**भाष्यं**--अपि च पूर्वापरशब्दौ भवतः। 'षट् पूर्वान् जुहोति' 'षडुत्तरान् जुहोति' इति। न च वैकृतानां केवलानामभ्यस्यमानानां पूर्वापरतोपपद्यते, नैमित्तिकत्वात्। पूर्वनिमित्तो ह्युत्तरशब्दः, उत्तरनिमित्तश्च पूर्वशब्दः। तस्मादपि प्राकृतानामहानमिति।

**तत्पृथक्त्वं च दर्शयति। २८॥**

**भाष्यं**--इतश्च पश्यामो न निवृत्तिः, समुच्चय इति। कुतः? तासामाहुतीनां पृथक्त्वं दर्शयति। 'उभयीर्जुहोति, आग्निकीश्चाऽऽध्वरिकीश्च' इति। यद्युभयेषां मन्त्राणां समुच्चयस्ततस्तेषामाग्निकत्वादाध्वरिकत्वाच्च भवत्येष निर्देशः। इतरथा सर्वा एवाऽऽग्निक्यो भवेयुः। तत्र पृथक्त्वं नोपपद्येत। भवति च पृथक्त्वम्। तस्मादनिवृत्तिः, समुच्चय इति।

**न चाविशेषाद्व्यपदेशः स्यात्। २९॥**

**भाष्यं**--इतश्चानिवृत्तिः, समुच्चय इति। कुतः? व्यपदेशात्। व्यपदेशो भवति 'अध्वरस्य पूर्वमथाग्नेः, उपाग्नि ह्येतत्कर्म यदग्निकर्म' इति। पूर्वमध्वरस्य, अथाग्नेरिति व्यपदेशः समुच्चयेऽवकल्पते, नासति विशेषे। तस्मात् समुच्चय इति।

**शा**--'तत्र प्रत्यक्षपाठेन प्रत्यक्षवचनेन च। वैकृताः प्राकृतान्मन्त्रान् बाधेरन्नेककार्यतः॥' **इति प्राप्ते, ब्रूमः,** 'न प्रत्यक्षेण वाक्येन होमार्थं वैकृताः श्रुताः। दीक्षार्थवाक्यात् तेषां होमाङ्गत्वं प्रकल्प्यते॥ सकृत्प्रयोगमात्राच्च तादर्थ्यमुपपद्यते। वैकृतैः प्राकृतास्तस्मात् समुच्चेया न बाधनम्॥' तस्मात् प्राकृतवैकृतानां मन्त्राणां समुच्चयः।

**सोम**--यद्यपि अग्निज्योतिष्टोमयागयोः न प्रकृतिविकारभावः, तथापि आग्निकदीक्षणीयेष्टेः सौमिकदीक्षणीयेष्टिविकारत्वं, दीक्षाहुतयश्च उभयदीक्षणीयेष्टेरेव अङ्गं इत्यधिकरणप्रवृत्तिमुपपादयन्ति। पूर्ववत् इहापि प्राकृतबाधः इत्युत्थितेः संगतिः। (वैकृतानामेव प्रत्यक्षवचनविहितानां चोदकेन प्राप्तप्राकृतमन्त्रबाधेन होमाङ्गत्वात् तैरेव अभ्यस्तैः द्वादशापि होतव्याः इति यदुक्तं पूर्वपक्षिणा तत्राह--) भवेदेवं यदि प्रत्यक्षवचनेन आहत्य प्राकृतमन्त्रकार्ये मन्त्रान्तरविधानं स्यात्, न त्वेतदस्ति, वचनेन दीक्षार्थत्वस्यैव बोधनात्। **न च** स्वाहान्तमन्त्राणां साक्षात् दीक्षार्थत्वानुपपत्त्या 'दीक्षयति' इत्यस्य प्राकृतमन्त्रकार्यलक्षकत्वमुक्तं इति **वाच्यम्**। 'आहुतिद्वाराऽपि दीक्षार्थत्वस्य श्रुतस्योपपत्तौ 'दीक्षयति' इत्यस्य कार्यलक्षकत्वायोगात्। एवं च आहत्यवचनाभावे आर्थिकमेव आहुत्यर्थत्वं वाच्यं, तच्च आहुतिषु मन्त्रान्वयमात्रेणोपपन्नं इति मन्त्राभ्यासे प्रमाणाभावात् आहुत्यभ्यासबलेन समुच्चय एव न्याय्यः इति सिद्धान्तः। **प्रथमसूत्रार्थस्तु,** 'षड्भिर्दीक्षयति' इति तासां प्राकृतीनामाहुतीनां मन्त्रविकारः स्यात् श्रुत्या मन्त्रान्तरविधानात् इति।

**वि**-- 'षड्भिर्दीक्षयतीत्यग्निगतं प्राकृतबाधकम्। समुच्चितं वा, बाधः स्यात् कार्यैक्यात् तच्च वाक्यतः॥, अग्नौ होमाङ्गताक्लृप्तेरतिदिष्टेन तुल्यता। विनाऽऽवृत्तिं द्वादशत्वसिद्ध्यै स्यात् समुच्चयः॥'

**भाट्ट**-- सोमे 'आज्यस्थाल्याः स्रुवेणोपघातं दीक्षाहुतीर्जुहोति' इति श्रुतम्। अत्र च बहुवचनात् संख्यया कर्मभेदः। मन्त्रषट्काम्नानाच्च उत्तरान्यायेन (११।१।९।४७--५२) कर्मषट्कावगतेः न कपिञ्जलाधिकरणन्यायः (११।१।८।३८--४६)। दीक्षाहुतिसमाख्यया च एषां दीक्षाङ्गत्वम्। चयनप्रकरणे च मन्त्रषट्कान्तरं पठित्वा 'षड्भिर्दीक्षयति' इत्यनेन तेषां दीक्षार्थत्वं समाम्नातम्। स्वाहाकारान्तानां च

तेषां साक्षात् दीक्षार्थत्वायोगात् तदङ्गभूतहोमद्वारैव तत् इत्यविवादम्। तदनन्तरं च 'द्वादश जुहोति' इत्यनेन पूर्वोपस्थितदीक्षाहुत्यनुवादेन द्वादशत्वविधानात् साग्निके ज्योतिष्टोमप्रयोगे प्रयाजैकादशत्ववत् तदभ्यासः। तत्र किं द्वादशस्वपि अभ्यासेषु अग्निप्रकरणाम्नाता विशेषविहिता एव मन्त्रा द्विरावृत्त्या सामान्यविहितमन्त्रषट्कबाधेन स्युः, उत अनावृत्ता एव समुच्चयेन इति चिन्तायां, विशेषेण सामान्यबाधे अवगते प्रतिप्रधानं गुणावृत्तिन्यायेन मन्त्रावृत्तिस्वीकारेऽपि न कश्चिद्दोषः, **इति प्राप्ते,** दीक्षार्थत्वमात्रं तेषां श्रुतं, न तु होमार्थत्वम्। तत्तु स्वाहाकारलिङ्गात् कल्पनीयम्। तस्य च अनावृत्त्या अबाधेनाप्युपपत्तौ बाधावृत्त्योः स्वीकारे प्रमाणाभावात् सामान्यविहितमन्त्रषट्केन समुच्चय एव। यदि हि दीक्षाहुत्यनुवादे नैते मन्त्रा विहिताः स्युः, तदा 'अप्स्ववभृथेन चरन्ति' इत्यत्र प्राकृतसर्वहोमेषु अग्निबाधवत् स्यादपि सामान्यविहितमन्त्रबाधः, न त्वेतदस्ति, दीक्षार्थत्वस्यैव श्रुतत्वात्।

**न्यायबिन्दुः**— चयने प्रकृतितो दीक्षाहुतयः षट् तन्मन्त्राश्च 'आकूत्यै प्रयुजेऽग्नये स्वाहा' इत्यादयः प्राप्ताः। अत्र च 'आकूतिमग्निं' इत्यादयः षण्मन्त्रा दीक्षायां विनियुक्ताः 'षड्भिर्दीक्षयति' इति। दीक्षाहुतयश्च 'द्वादश जुहोति' इति वाक्यात् तत्संख्याः। तत्र प्रत्यक्षपाठवचनाभ्यां वैकृतमन्त्रैः प्राकृतबाधः। तेन तैरेवाभ्यस्तैः द्वादशापि होतव्याः, **इति प्राप्ते,** सकृत्प्रयोगादेव होमद्वारेण दीक्षार्थत्वोपपत्तौ नाभ्यासः प्राकृतबाधो वा इति सिद्धान्तः।

**मण्डन**— 'दीक्षाहुतीनां तु समुच्चयः स्यात्।'

**शंकर**— 'दीक्षामन्त्रेष्वबाधोऽग्नौ।'

## अग्निचयने संख्यया विहितानां मन्त्राणां समुच्चयः ॥

**संख्याविहितेषु समुच्चयोऽसंनिपातित्वात्। १२।३।१४।३० ॥**

**भाष्यं**— संख्यया ये विधीयन्ते मन्त्राः, यथा अग्नौ 'चतुर्भिरादत्ते, द्वाभ्यां खनति, षड्भिराहरति' इति, तेषु समुच्चयः स्यात्। किं कारणं ? संख्या शब्देनोच्यते, सा अङ्गीकर्तव्या। न च समुच्चयादृते सा शक्या अङ्गीकर्तुम्। **आह,** समुच्चयेऽपि यः कर्मणा संनिपतितः, तेन तत् कर्म कृतं भवति, ये व्यवहिताः न तैः, असंनिपातात्। तथा सति न संख्या कर्मणि अङ्गीकृता भवति। **नैष दोषः**। अर्थाभिधानेन मन्त्रः अङ्गीभवति। सर्वे चैते तमर्थमभिदधति। एवमपि अनन्तरेण रूपं क्रियते, इतरे जपवत् अदृष्टार्था भवन्ति। उच्यते। नादृष्टार्था भविष्यन्ति। सर्वे तदेव कर्म असकृदभिधास्यन्ति। भवति हि करणार्थस्य मन्त्रस्य असकृत् प्रयोगः, यथा 'कुरुकुरु करवाणि' इति। तत्र यथा अभिधानार्थस्य मन्त्रस्य आम्नानसामर्थ्यात् अभिहितमभ्युदयकरं भवति, एवं 'चतुर्भिरादत्ते' इति वचनात् चतुरभिहितं कृतमभ्युदयकारि भवतीति। तस्मात् समुच्चयेऽपि नादृष्टार्थता। समुच्चयश्च सिद्धः।

**शा**—ये तु संख्यायुक्ता मन्त्राः 'चतुर्भिरभ्रिमादत्ते' इत्येवमादयः, तेषामपि पूर्ववत् विकल्पः, संख्यावशात्तु समुच्चयः। चतुःसंख्या हि कर्माङ्गभूता नासति समुच्चये संपद्येत। तत्र पूर्वप्रयुक्तानां मन्त्राणां संस्कारद्वारेण करणत्वं, चरमस्य तु साक्षात्, इति संख्यावचनसामर्थ्यादध्यवसीयते, तस्मात् समुच्चयः।

**सोम**—समुच्चये सति येनैव मन्त्रेण संनिपतितं कर्म, तस्यैव करणत्वं निर्वहेत्, अन्येषां तु अदृष्टार्थतैव स्यात्, इति सर्वेषां करणत्वावगमबाधापत्त्या चतुःसंख्यायाः न विधिः, किंतु य एते चत्वारो मन्त्राः, तैरादत्ते, इति प्रचयशिष्टसंख्यानुवादः एवायं चतुर्भिरिति शब्दः, इति मन्त्राधिकरणोक्तगुणविधित्वाक्षेपेण पूर्वः पक्षः। 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यां गायत्रेण छन्दसा' इत्यादीनां लिङ्गादेव अभ्र्यादाने विनियोगसिद्धेः संख्याविधानार्थमेव चतुर्भिरिति वाक्यम्। लिङ्गाभावेऽपि निरर्थकानुवादस्यायोगात् संख्याविधिरेव वाच्यः इति सिद्धान्तः।

**सूत्रार्थस्तु**— ये मन्त्राः संख्यया विहिताः, तेषु समुच्चयः स्यात्, तेषां संख्याविधिबलेन सर्वेषां कर्मादिसंनिपाताभावेऽपि समुच्चयोपपत्तेः इति।

**वि**—'चतुर्भिरभ्रिमित्यत्र विकल्पो वा समुच्चयः।, विकल्पः पूर्ववन्, नैवं समूहे करणत्वतः॥' प्रतिमन्त्रं पृथक् करणत्वं नास्ति, चतुःसंख्यया समूहे करणत्वप्रतीतेः।

**भाट्ट**—ये तु संख्यायुक्तवचनविनियुक्ताः, यथा 'तां चतुर्भिरभ्रिमादत्ते' इत्यादौ, तेषां समुच्चय इत्युक्तं मन्त्राधिकरणकौस्तुभे (१।२।४।३१–४५)। न च एकेन स्मृते पुनःप्रकाशनानुपपत्तिः, स्मृतस्यापि संस्कार-दार्ढ्यार्थं पुनःस्मरणसंभवात्। अत एव वचनबलात् पूर्वेषां मन्त्राणां संस्कारद्वारा, अन्त्यस्य तु साक्षादेवा-नुष्ठानोपयोगः इति वैषम्यकल्पनेऽपि न दोषः।

**न्यायबिन्दुः**—'चतुर्भिरभ्रिमादत्ते' इत्यादौ संख्या-वशात् समुच्चयः, तेन विना कर्माङ्गचतुःसंख्याया असं-भवात्। तत्र मन्त्रत्रयस्य संस्कारद्वारेण करणत्वं चरमस्य तु साक्षात्, इति वचनसामर्थ्यात् निश्चीयते इति सिद्धान्तः।

**मण्डन**—'संख्योपेतास्ते समुच्चित्य वाच्याः।'

**शंकर**—'संख्यायुक्तसमुच्चयः।'

**अग्निचयने संवत्सरमुख्यधारणाभावे वैश्वानरेष्टिः॥**

**वैश्वानरश्च नित्यः स्यान्नित्यैः समानसंख्यत्वात्। ४।४।६।१२॥**

**भाष्यं**— अस्ति अग्निः 'य एवं विद्वानग्निं चिनुते' इति। तत्र श्रूयते 'यो वै संवत्सरमुख्यमभृ-त्वाऽग्निं चिनुते, यथा सामिगर्भो विपद्यते तादृगेव तदार्तिमार्च्छेत्, वैश्वानरं द्वादशकपालं पुरस्तान्निर्वपेत्, संवत्सरो वा अग्निर्वैश्वानरः, यथा संवत्सरमाप्त्वा काल आगते हि जायते एवमेव संवत्सरमाप्त्वा काल आगते-ऽग्निं चिनुते, नार्तिमार्च्छेत्' इति। 'एषा वा अग्नेः प्रिया तनूर्यद्वैश्वानरः, प्रियामेवास्य तनूमवरुन्धे' इति। तत्र संदेहः किं नित्यो वैश्वानरः, अथ नैमित्तिकः इति। किं प्राप्तं? अत्रापि नित्य एवार्थवादः 'उख्यस्य संवत्सराभरणेन कृतो दोषः, वैश्वानरेण विहन्यते' इति। नित्यैश्चास्य समानसंख्यत्वं भवति। 'त्रीण्येतानि हवींषि भवन्ति, त्रय इमे लोकाः, एषां लोकानामारोहाय' इति। लोकानां हविषां सामान्यं नास्ति। यदि यथा लोका नित्यास्त्रयः, एवमिमानि हवींषि नित्यानि त्रीणि, एवं लोकैः संस्तवो घटते। तस्मात् नित्यो वैश्वानर इति।

**पक्षे चोत्पन्नसंयोगात्। १३॥**

**भाष्यं**— उत्पन्नस्य निमित्ते उख्याभरणे निर्घातेन संयोगः। न असंयुक्तस्य उत्पन्नस्य दोषनिर्घातप्रयोजनता। तस्मादिह न दधिग्रहवत् विरोधोऽस्ति। तेन नार्थवादः, नैमित्तिक इति। अथ यदुक्तं, लोकैः समान-संख्यत्वं नित्यत्वे उपपद्यते नान्यथेति, तत्र ब्रूमः। त्रित्वात् लोकानां हविषां च सामान्यादर्थवादो भविष्य-तीति।

**सोम**— 'यो वै संवत्सरं' इति यच्छब्दः नोद्देश्य-समर्पकः, यः संवत्सरमभृत्वा अग्निं चिनुते, स आर्तिं प्राप्नोति इत्येवमन्वितस्य यच्छब्दस्य उद्देश्यसमर्पकत्वायो-गात् इति पूर्वपक्षाशयः। अप्राप्तस्याभरणस्य अनुवादा-योगात् आलस्यादिना प्राप्तस्य अभरणस्य अभृत्वा इत्य-नेनानुवादे सति, यो न बिभृयात् स निर्वपेत् इत्यर्थपर्यव-सानेन यच्छब्दस्य उद्देश्यसमर्पकत्वं संभवति इति सिद्धान्तः। **प्रथमसूत्रार्थस्तु,** 'त्रीण्येतानि हवींषि भवन्ति, त्रय इमे लोकाः, एषां लोकानां रोहाय' इति नित्यैर्लोकैः अग्नावैष्णवादित्यवैश्वानराणां हविषां समान-संख्यत्वोक्त्या लोकवदेव हविषां नित्यत्वावगमात् वैश्वा-नरो नित्यः स्यात् इति।

**वि**— 'नित्यो नैमित्तिको वा स्याद् यागो वैश्वा-नरश्रितौ।, नित्यः पुरेव यच्छब्दात्, अविरोधाच्च पश्चिमः॥'

**भाट्ट**— अग्नौ 'यो वै संवत्सर..... निर्वपेत्' इति श्रुतो यागस्तु आलस्यादिना संवत्सरपर्यन्तं उख्य-धारणासंभवे प्रायश्चित्तरूपो नैमित्तिक एव, कर्तृसमाना-धिकरणेन यच्छब्देन क्रियाकर्तृत्वस्य उद्देश्यत्वावगमात् निमित्तत्वप्रतीतेः। अतो भेदनहोमादिवत् अयं संवलित-क्रतुनिमित्तोभयप्रयुक्तः।

**न्यायबिन्दुः**— अग्नौ श्रुतं 'यो वै...... निर्व-पेत्' इति। तत्रापि पूर्ववत् अर्थवादमात्रं संवत्सराभरणं, इति नित्यतां मन्यते। यच्छब्दस्तु कर्तृसमभिव्याहृतो निमित्ततां संवत्सराभरणस्य प्रतिपादयति, इति नैमित्तिक-तैव स्थिता।

**मण्डन**— 'वत्सरमुख्यमबिभ्रत इष्टिः।'

**शंकर**— 'वैश्वानरो निमित्ते स्यात्।'

**अग्निचयने समारोप्यैव अन्यत्राग्निनयनम् ॥**

समारोपणविधेरुपायान्तरादूपकत्वेन समर्थस्यैव साग्निचित्यक्रतौ अधिकारेण उख्यवत् गार्हपत्यादेरपि प्रत्यक्षनयनं स्यात्, **इति प्राप्ते,** आयतनाद्वचनमन्तरेण बहिर्निर्गतस्य लौकिकत्वावश्यंभावात्, समारोपणस्य तु वाचनिकत्वात्, समाख्याविरोधाभावाच्च समारोप्यैव नयनम्। **संकर्ष.** ३।२।३४.

**अग्निचयने सर्वौषधावघातस्य नाभ्यासः ॥**

**धर्ममात्रे त्वदर्शनाच्छब्दार्थेनापवर्गः स्यात्। ११।१।६।२८ ॥**

**भाष्यं**—यत्र तु दृष्टं कार्यं न वर्तते, यथा अग्निचित्यां 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति, अत्र तदुपदधाति' इति। तत्र तण्डुलनिर्वृत्त्या नास्ति प्रयोजनं, तण्डुलकार्यस्य पुरोडाशादेः अचोदितत्वात्। तस्मात्तत्र सकृत्क्रियया कृतः शब्दार्थः इति न स्यादभ्यासः। येषां तु 'तण्डुलफले एव मुसलस्य उद्यमननिपातनकर्मणि अवहन्ति-शब्दः प्रवर्तते' इत्यभ्युपगमः, तेषां आ तण्डुलनिर्वृत्तेरेव अभ्यासः प्राप्नोति। स तु मन्द एवाभ्युपगमः। यत् कारणं, विनाऽपि तण्डुलैः प्रयोगो दृश्यते 'कषायमवहन्ति' 'किण्वमवहन्ति' इति। न चासौ गौणः प्रयोगः, विशेषाभावात्। अवयवप्रसिद्ध्या च अवघातमात्रवचनः एव प्रतीयते। न च समुदायः अर्थान्तरे प्रसिद्धः। तण्डुलव्यापारस्य तु प्रायोवृत्तेः तत्र प्रयोगप्राचुर्यम्। अतोऽयं व्यामोहः।

**शा**— सर्वौषधावघाते तु दृष्टासंभवात् अदृष्टार्थे शब्दार्थमात्रं कर्तव्यम्। ११।१।४.

**सोम**— अत्र 'धर्ममात्रे त्वदर्शनात् शब्दार्थेनापवर्गः स्यात्' इति सूत्रं सर्वौषधावहन्तेः अदृष्टार्थत्वसिद्ध्यर्थं अधिकरणान्तरत्वेन परैर्व्याख्यातं, न तत्तथा, पूर्वपक्षाभावात्। किंतु प्रत्युदाहरणमात्रम्।

**वि**—'सर्वौषधावघातः किमावर्त्यः सकृदेव वा।, आवर्त्यः पूर्ववत्, नैवं दृष्टार्थस्यात्र वर्जनात्॥'

**भाट्ट**— यत्र तु दृष्टासंभवात् अदृष्टार्थः अवघातः, तत्र अनावृत्तिरेव। यथा चयने 'औदुम्बरमुलूखलं सर्वौषधस्य पूरयित्वाऽवहन्ति, अत्र तदुपदधाति' इति। अत्र वितुषस्य सर्वौषधस्य अग्रे विनियोगाभावात्, प्रत्युत अवघातसंस्कृतसर्वौषधपूरणस्य उपधानोपयोग्युलूखलसंस्कारार्थत्वप्रतीतेः, अवघातस्य अदृष्टविधया सर्वौषधसंस्कारत्वेऽपि वैतुष्यप्रयोजनकत्वाभावेन आवृत्त्यनापत्तिः। अवघातस्याराදुपकारकत्वे तु सुतराम्। ११।१।४.

**न्यायबिन्दुः**— सर्वौषधावघातस्य अदृष्टार्थत्वात् नावृत्तिरिति सिद्धान्तः। ११।१।४.

**मण्डन**—'सर्वौषधे स्यात् सकृदेव घातः।'

**शंकर**—'सर्वौषधे तु स (अवघातः) सकृत्।'

**अग्निचयने सहस्रं चिन्वीत इति सहस्रशब्दः न क्रतुपरः ॥**

'सहस्रं चिन्वीत प्रथमं चिन्वानः' इत्यादिवाक्येषु सहस्रादिशब्दाः सहस्रदक्षिणक्रतुपराः 'सहस्रेण ईजानः' इत्यादौ क्रतुषु सहस्रपदप्रयोगदर्शनात्, **इति प्राप्ते,** सहस्रपदस्य चिनोतिधातुविशेषणत्वावगमात् सहस्रदक्षिणक्रतौ प्राथमिकं चयनं कुर्यादिति व्याख्याने लक्षणाऽऽपत्तेः 'जानुदघ्नं चिन्वीत' इत्यादाविव स्थण्डिलस्यैव सहस्रत्वम्। **संकर्ष.** २।१।१२.

**अग्निचयने 'सहस्रस्य प्रमा असि' इति मन्त्रः सर्वचित्यङ्गम् ॥**

'सहस्रस्य प्रमा असि' इति मन्त्रस्य प्रकरणाद् द्वित्रिसहस्रेष्टकचितिष्वपि प्राप्तमङ्गत्वं मन्त्रलिङ्गेन सहस्रेष्टके एव संकोच्यते, इति नान्यत्र तत्प्रयोगः, **इति प्राप्ते,** सहस्रपदस्य स्तुत्यर्थत्वेन गुणवादेनाप्यनेकपरतया उपपत्तेर्लिङ्गप्रकरणयोरविरोधात् सर्वचित्यङ्गं मन्त्रः। **संकर्ष.** २।१।१४.

**अग्निचयने सांवत्सरिके 'गायत्रचितं चिन्वीत ब्रह्मवर्चसकामः' इत्यादि तत्तत्फलकामुकानामेव, अकामानां तु तदितरच्छन्दस्का एव ऋचः ॥**

आगम्यमानानामृचामविशेषेण विनियोगे **प्राप्ते,** 'गायत्रचितं चिन्वीत ब्रह्मवर्चसकामस्य' 'त्रिष्टुप्चितं वीर्यकामस्य' इत्यादीनां कामसंयोगात् तत्तत्कामुकानामेव तत्तच्छन्दस्का ऋचः, अकामानां तदितरच्छन्दस्का एवेति व्यवस्था। **संकर्ष.** २।१।३७.

**अग्निचयने सांवत्सरिके दाशतयीभ्य आनीतानामाग्नेयसूक्तानां चयनातिरिक्ते उपस्थानादौ नोपयोगः ॥**

त्रिसार्हस्रापेक्षया किंचित्संख्याधिक्ये वा इष्टकानामेकविधाद्येकशतविधत्वान्तान्यतमपरिमाणाधिक्ये वा ज्यायस्त्वसंभवात् सूक्तानां कतिपयानामग्न्युपस्थाने विनियोगः कार्यः, **इति प्राप्ते,** ' यद्दषीणाम् ' इति वाक्ये ' तेन चिन्वीत ' इति चयनसंयोगात् चयनातिरिक्ते न तेषामुपयोगः । **संकर्ष.** २।१।३६.

**अग्निचयने सांवत्सरिके दाशतयीभ्य आनीतैः सूक्तैरेव प्रतिसूक्तमुपधानं न प्रत्यृचम् ॥**

सर्वेषां मन्त्राणामागमे सति तावत्य इष्टका अप्यभिवर्धनीयाः सामिधेनीविवृद्धौ काष्ठाभिवृद्धिदर्शनात् । इष्टकाल्पत्वेऽपि मन्त्रभूयस्त्वन्यायेन ( संकर्ष. १।२।४ ) एकार्थत्वात् विकल्पसंभवः, **इति प्राप्ते,** 'सूक्तेनसूक्तेनोपदधाति ' इति वचनेन प्रतिमन्त्रमुपधानस्यैव अभावात् यावत्सूक्तमेवेष्टकाः । सूक्तेभ्योऽपीष्टकानामाधिक्ये तु लोकंपृणाभिरेवोपधानम् । **संकर्ष.** २।१।३५.

**अग्निचयने सांवत्सरिके दाशतयीभ्य आहृतानां आग्नेयीनां याज्ञसेनीभिर्न समुच्चयः ॥**

याज्ञसेनीनामपि ' एतद्वा ऋषीणां ' इति वाक्येनाग्न्यृषिकत्वविधानेन स्मृतितः प्राबल्यात् संनिहितत्वाच्च करणत्वम् । न च मन्त्राल्पत्वं दण्डकलितवदावृत्तिसंभवात् । कर्मभूयस्त्वाधिकरणन्यायेन ( १०।५।२५।८३ ) स्वस्थानविवृद्धेर्वा आवृत्त्याऽपि यदा कर्मणामपूर्तिस्तदा तावन्मात्रार्थे दाशतयीत आगमः, **इति प्राप्ते,** 'त्रिवृदग्निष्टुत् ' इत्यादाविव प्राकृतस्य सर्वस्यापि निवृत्तेरवश्यंभावात् सर्वसंख्यापर्याप्ताग्नेयलाभे तदपर्याप्तग्रहणायोगात्, उक्तवाक्यशेषस्य स्तावकत्वेन प्राबल्याभावाच्च, न दाशतयीस्थानां याज्ञसेनीभिः समुच्चयः । **मूले** तु पूर्वाधिकरणपूर्वपक्षावस्थायामयं कृत्वाचिन्तया विचार इत्युक्तम् । तत् ' कृत्स्नस्य वा विकारः ' इत्येतत्सिद्धान्तसूत्रस्वारस्यविरोधादुपेक्षितम् । **संकर्ष.** २।१।३३.

**अग्निचयने ' साहस्रं चिन्वीत ' इति साहस्रशब्दः इष्टकापर एव ॥**

स्थण्डिलेऽपि यत् सहस्रत्वं तदपि, चयनदक्षिणाद्वारेणैव । साक्षात्संख्यान्वये जानुदघ्नत्वविरोधात्, उत्तरवेदिपरिमितस्थले स्थण्डिलबहुत्वस्यासंभवाच्च, **इति प्राप्ते,** सहस्रस्तम्भघटितेऽपि सहस्रमण्डपपदप्रयोगाद् अवयवावयविनोरभेदात्, अर्धपिप्पलीपदयोः सामानाधिकरण्यदर्शनात्, सहस्रेष्टकैरेव सहस्रत्वम् । **संकर्ष.** २।१।१३.

**अग्निचयने सुपर्णाकृतिबोधकमन्त्रः अर्थवादः ॥**

पक्षिसामान्यतुल्यताया विशेषे पर्यवसानमन्तरेणानुष्ठातुमशक्यत्वात् ' दिव्यं सुपर्णं वयसा बृहन्तम् ' इति मन्त्रवर्णेन बृहत्सुपर्णपरतया ' वयसां प्रतिमया ' इत्यस्योपसंहारात्, मन्त्रस्य च नित्यवदङ्गत्वात् सुपर्णाकृतिर्नित्या, **इति प्राप्ते,** सामान्यवाक्यस्य विशेषमन्त्रस्य च विधित्वाभावेनोपसंहार्योपसंहारकभावाभावात् ' हिरण्यपक्षः शकुनो भुरण्युः ' इतिवदुभयमपि स्तुतिमात्रम् । **संकर्ष.** २।१।३९.

**अग्निचयने स्वयमातृण्णोपधाने वरदानं अध्वर्योः कर्म ॥**

**वचनादितरेषां स्यात् ।** ३।८।१।२ ॥

**भाष्यं**—किमेष एवोत्सर्गः ( स्वामी परिक्रीणीते इति ), नेत्युच्यते । वचनादितरेषां स्यात् । यत्र वचनं भवति, तत्र वचनप्रामाण्यात् भवति परिक्रयः । ' य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात् ' इति ।

**वा**— उपदध्यात् इति परस्मैपदात् अयाजमानत्वे अवधारिते वरदानं ऋत्विक्कर्म । तत्सिद्धिश्च यदि तावत् शास्त्रीयेण परिक्रयेण लभ्यते, ततः अस्त्येव यजमानस्य कर्तृत्वम् । अथ न लभ्यते, ततो लौकिक उपायः इति ।

**शा**— यत्र तु वचनमस्ति तत्र ऋत्विजामपि स्यात्, वचनस्य अतिभाराभावात् ।

**सोम**—'गौर्वरोऽतिवरोऽन्यः, धेनुर्वरोऽतिवरोऽन्यः, अनड्वान् वरोऽतिवरोऽन्यः' इति **आपस्तम्बाचार्योक्तो** वरशब्दार्थो द्रष्टव्यः । स्वयमातृण्णोपधातुः अविद्वद्ब्राह्मणस्य ऋत्विक्त्वाभावात् ' अनड्वान् होत्रा देयः ' इत्यादिकमुदाहरणं बोध्यम् ।

**वि**—'इष्टकावरदानं किं स्वामिनः स्यादुतर्त्विजः।, स्वामिनः पूर्ववत्, न्नैवमध्वर्योर्वचनादयम् ॥' ३।८।२.

**भाट्ट**— यत्र तु वचनं, यथा 'य एतामिष्टकामुपदध्यात् स त्रीन् वरान् दद्यात्' इत्यादौ, तत्र अध्वर्य्वादीनामपि दानकर्तृत्वम्। तत्र हि स्वामिकर्तृकत्वे उपधानस्य सामानाधिकरण्येन तत्समानकर्तृकत्वावगतेः तस्यापि तत्कर्तृकत्वे 'उपदध्यात्' इति परस्मैपदानुपपत्तिः। तस्य ऋत्विक्परत्वेन उपधातृभिन्नगामिक्रियाफलकत्वावगतेः। यदि तु क्रियाफलस्य अग्न्यादिगतत्वात् परस्मैपदोपपत्तिः इत्याशङ्क्येत, ततः प्रातोपधानानुवादेन दानस्य तत्कर्तृकत्वस्य च विधौ वाक्यभेदापत्तेः, य इत्यनेन कर्तृप्राप्तिप्रतीतेश्च उपधानस्य अध्वर्युकर्तृकत्वावसायात् तत्समानकर्तृकस्य दानस्यापि तत्कर्तृकत्वसिद्धिः।

(अत्र तैत्तिरीयसंहितायां स्वयमातृण्णाप्रकरणे 'अग्नाविग्निश्चेतव्य इत्याहुः, एष वा अग्निर्वैश्वानरो यद् ब्राह्मणः, तस्मै प्रथमामिष्टकां यजुष्कृतां प्रयच्छेत्, तां ब्राह्मणश्च उपदध्यातां अग्नावेव तदग्निं चिनुते। ईश्वरो वा एष आर्तिमार्तोर्योऽविद्वान् इष्टकामुपदधाति, त्रीन् वरान् दद्यात्... द्वावेव देयौ... एक एव देयः...' इत्युक्तम्। **सत्याषाढ**श्रौतसूत्रे तु 'इन्द्राग्नी अव्यथमाना इति स्वयमातृण्णामभिमृश्य, अश्वेनावघ्राप्य, विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीमिति मध्येऽग्नेः अविदुषा ब्राह्मणेन सह उपदधाति भुव इति चैतया व्याहृत्या। १२।१।९। चित्तिं जुहोमि इति स्वयमातृण्णायां हुत्वा अनु व्यनिति, अविद्वान् ब्राह्मणो वरं ददाति। १०।' इति। एवं सति वरदानस्य कर्ता अध्वर्युर्वा होता वा इति यत् प्राचीनैरुक्तं तत्र मूलं मृग्यम्। **के.**)

**मण्डन**—'वाक्येन स (परिक्रयः) स्यात् क चिदन्यकर्म।'

**शंकर**—'वचनात्तु स (परिक्रयः) ऋत्विजाम्।'

(यद्यपि इदमधिकरणं भाष्यादौ न पृथक्, तथापि विस्तरे पृथगेव स्वीकृतम्। इति अस्माभिरपि भाष्याद्यंशान् एतदधिकरणोपयुक्तान् पृथक् कृत्वा अत्र निविष्टाः। मण्डनशंकराभ्यामपि पृथगेव स्वीकृतम्। **के.**)

### ⌛ अग्निचितः केवलसोमयागे एव एकविंशति लोकंपृणाभिश्चितिः इति गुणविधिः ॥

एकविंशतिलोकंपृणाभिरेषा पुनश्चितिः साग्निचित्यक्रतुष्वेव स्यात्तत्प्रकरणे पाठात्, **इति प्राप्ते**, अनग्निचित्येष्वेव व्यपदेशविशेषात् 'अग्निं चित्वा यजते' इत्यनुक्त्वा 'अग्निचित् सन् यः सोमेन यजते' इत्युक्त्या सोमे अनग्निचित्यत्वस्यैव भानात्। 'विश्वजिति सर्वपृष्ठे ग्रहीतव्याः' 'अप्यग्निष्टोमे ग्रहीतव्याः' इत्यत्र व्यपदेशभेदेनैव विश्वजितोऽग्निष्टोमेतरसंस्थस्य ग्रहणात्। किंच 'प्र वा एषोऽस्माल्लोकात् च्यवते योऽग्निं चिनुते, न वा एतस्यानिष्टकाहुतिरवकल्पते, यां वा एषोऽनिष्टकामाहुतिं जुहोति स्रवति वै सा, तां स्रवन्तीं यज्ञोऽनु पराभवति, यज्ञं यजमानः, यत्पुनश्चितिं चिनुते आहुतीनां प्रतिष्ठित्यै' इति वाक्यशेषेऽनिष्टकाहुतेरेव स्रवणकीर्तनात् अनग्निचित्यानामेवानिष्टकत्वेनोपस्थितेः अग्निचितः केवलसोमयागे एवायं गुणविधिः। इयं पुनश्चितिरप्रस्रवणेत्युच्यते, या तु समृद्धयर्था पुनश्चितिः, सा पुराणाग्नावन्यत्र वेति विकल्पः इत्याकरे स्थितम्। **संकर्ष.** १।३।१३.

### ⌛ अग्निचित्कर्तृकसोमे लोकंपृणारूपगुणान्तरविधिः ॥

'यदीष्ट्या यदि पशुना यदि सोमेन यजेत तत्रैवास्य पूर्वोऽग्निश्चितः स्यात्तमपरमन्ववधाय यजेत' इति श्रुते तमपरमित्यनेन पुराणाग्निद्रव्यसमीपदेशो लक्ष्यते। पूर्वोऽग्निर्यथा यजनीयदेशस्यापरभागे भवेत्, तादृशे देशे यजेतेत्यर्थात्, नदीमन्ववसिता सेनेत्यादौ नदीसमीपदेशभानात्। अथवा तं पुराणाग्निदेशमेवान्ववधायाश्रित्य अपरं यजेत पुनर्यजेतेत्यर्थः। पुराणस्थण्डिलस्य तत्रैव सत्त्वेन तदुपर्येव यजेतेति यावत्। वचनात् पुनर्विनियोगे आहवनीयादेरिव निरिष्टिकत्वाभावात्, नद्याः सजलत्वेन सेनाश्रयत्वायोग्यत्वेन तत्र तीरलक्षणायामपि प्रकृते तदभावात्। कांस्यासनकटासनयोरासनत्वाविशेषेऽपि योग्यतयैव भोज्यभोक्तृधारणे व्यवस्थयैव विनियोगदर्शनात्, **इति प्राप्ते**, अग्निचित्कर्तृकसोमे लोकंपृणारूपगुणान्तरविधिः अयमेव, अन्यः सर्वोऽपि अस्यैवार्थवादः। इष्टिपशुशब्दौ च सोमप्रयोगान्तर्गतेष्टिपशुमात्रपरौ, इति **न**

क्वापि पुराणाग्निद्रव्यस्य पुनर्विनियोगः । **संकर्ष.** १।३।११.

**अग्निचेत्‌दक्षिणया न क्रतुदक्षिणाबाधः ॥**

प्रकृतितः प्राप्तदक्षिणातः एता दक्षिणा भिन्ना एव विधीयन्ते इति धेन्वेव प्राकृतीनां बाधः, **इति प्राप्ते,** राधनस्य प्रीत्युत्पादनरूपत्वात् गुणविधिरेवायं, कल्पसूत्रमूलभूतश्रुतौ अधिकदक्षिणाविधानादुभयसमुच्चये सिद्धे, याऽधिका दक्षिणा, सा यथा प्रीतिजनिका स्यात्तादृशी देया इत्यर्थः । **संकर्ष.** १।१।८.

**अग्निधर्मः प्रतीष्टकं संघातात् पौर्णमासीवत्। ९।१।८।२६ ॥**

अग्निचयने 'हिरण्यशकलसहस्रेण अग्निं प्रोक्षति' 'दध्ना मधुमिश्रेणाग्निं प्रोक्षति' इति । तथा 'वेतसशाखयाऽवकाभिश्च अग्निं विकर्षति' 'मण्डूकेनाग्निं विकर्षति' इति च श्रूयते । इमे प्रोक्षणविकर्षणे किं प्रतीष्टकं इष्टकायामिष्टकायां कर्तव्ये, उत इष्टकासमुदाये सकृदेव कर्तव्ये । तथा अग्निशब्दः किं इष्टकासमुदाये प्रवर्तते, उत समुदायव्यतिरिक्ते द्रव्यान्तरे इति विचारे पूर्वपक्षमाह । अग्निधर्मः चयनधर्मः प्रोक्षणविकर्षणरूपः प्रतीष्टकं इष्टकायामिष्टकायां स्यात् । संघातात् समुदायात् अग्निशब्दस्य इष्टकासंघातवाचकत्वात् । तस्मात् अग्निनिधानार्थानां चयनसमुदायोपलक्षितानां अगम्यमाने विशेषे सर्वासामेव प्रोक्षणं विकर्षणं च कर्तव्यम् । पौर्णमासीवत् । यथा 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति पौर्णमासीशब्देन अमावास्याशब्देन च आग्नेयादय एव क्रियन्ते तद्वत् । यथा वा 'चतुर्होत्रा पौर्णमासीमभिमृशेत्' इति अभिमर्शनं समुदायस्य असंभवात् तदुपलक्षितानां आग्नेयादीनां हविषां भवति तद्वत् । एवं च अग्निशब्दः समुदाये, प्रतीष्टकं च प्रोक्षणविकर्षणे इति पूर्वः पक्षः ।

**अग्नेर्वा स्याद् द्रव्यैकत्वादितरासां तदर्थत्वात् । २७ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । हिरण्यशकलसहस्रादिना प्रोक्षणं वेतसशाखादिना च विकर्षणं अग्नेः इष्टकानिमित्तद्रव्यान्तरस्य स्यात्, न तु प्रतीष्टकम् । द्रव्यैकत्वात् इष्टकाभिः अवयवैः आरब्धस्य अवयविनः अग्नेः द्रव्यस्य चितिपञ्चकरूपस्य एकत्वात् । इतरासां इष्टकानां च तदर्थत्वात् अवयविद्रव्यार्थत्वात् 'इष्टकाभिरग्निं चिनुते' इति इष्टकानां अग्नेश्च साधनसाध्यभावावगमात् । तस्मात् सकृदेव प्रोक्षणं विकर्षणं चेति सिद्धान्तः ।

**चोदनासमुदायात्तु पौर्णमास्यां तथात्वं स्यात् । २८ ॥**

पूर्वपक्षे पौर्णमासीवत् इति दृष्टान्त उदाहृतः । तस्य वैषम्यमाह सिद्धान्ती । वैषम्यसूचकस्तुशब्दः । चोदनासमुदायात् । ल्यब्लोपे पञ्चमी । चोदनानां आग्नेयाग्नीषोमीयोपांशुयाजानां याश्चोदनाः, तासां समुदायं पौर्णमासीशब्देन उपलक्षणीकृत्य तदुपलक्षितानां हविषां अनुष्ठानं अभिमर्शनं वा युक्तं, इत्यतः पौर्णमास्यां पौर्णमासीशब्दे तु तथात्वं समुदायवाचकत्वेन समुदायिपरत्वं स्यात् । अग्नौ तु द्रव्यान्तरमस्ति, इति न तथात्वं, इति वैषम्यम् । तस्मात् अग्निशब्दः अवयविद्रव्यान्तरवाची, तस्यैकत्वात् सकृदेव प्रोक्षणविकर्षणे इति सिद्धान्तः । **के.**

* **अग्निधारणार्थं** देवतापरिग्रहार्थं अग्न्यन्वाधानम् । **भा.** १२।२।५।१८. * **अग्निधूमयोः** संबन्धेऽवगते धूमो दृश्यमानोऽग्निमवगमयति । **टुप्.** ८।१।२।२ पृ. १५८४. * **अग्निना कृत्रिमेण याचितेन वा** कर्माणि अग्निहोत्रादीनि नानुष्ठातव्यानीति गम्यते । तेन अकृत्रिम एव केवलोऽग्निस्तेषां साधक इति निश्चीयते । **भा.** २।३।३।४. * **अग्निपरिधानार्थत्वेन** मार्जनादीनां परिधिधर्माणामनुष्ठानम् । **वि.** १२।२।१०. * **अग्निपादः** नाम संकर्षे तृतीयाध्यायस्य द्वितीयः पादः । अधिकरणविषयाः—१ मन्थनम् । २ आहवनीयः । ३ सभ्यावसथ्यौ । ४ दक्षिणाग्निः । ५ अग्नयः । ६ आधानम् । ७ उद्धरणम् । ८ आहवनीयोपस्थानम् । ९ कर्मान्ते अग्नेर्लौकिकत्वम् । १० दीक्षणीयाद्यग्नेस्तु वैदिकत्वमेव । ११ आहवनीयैकदेशस्यैव सोमे प्रणयनम् । १२ आहवनीयस्य शालामुखीयस्य प्रणयनोत्तरं गार्हपत्यत्वं सौमिके कर्मणि । १३ गार्हपत्यकार्याणि प्रणयनोत्तरं शालामुखीये एव । १४ आग्नीध्रीयाग्नेः शालामुखीयादेव प्रणयनम् । १५ धिष्ण्याग्नीनां आग्नीध्रीयादेव प्रणयनम् । १६ धिष्ण्याग्नीनां चतुर्वारं विहरणम् । १७ धिष्ण्याग्नीनां व्याघारणं सवनत्रयेऽपि ।

१८ धिष्ण्याग्निषु सवनद्वये सोमेन, तृतीयसवने तु आज्येन व्याघारणम् । १९ धिष्ण्याग्निषु परिप्लवया सोमस्य व्याघारणम् । २० वैसर्जनादिदर्विहोमेषु आज्यमेव हविः । २१ 'यस्यैव धिष्णियः' इत्यादिश्रुतौ प्राजहितवादः । २२ निरूढपशावौ शालामुखीयोऽपि स्यादेव । २३ पशौ प्रथमेष्टिपक्षे ऐष्टिकोऽग्निः आ अन्तं धार्यः । २४ पशौ सायमग्निहोत्रं न औत्तरवेदिके । दैवात् कर्मण उत्कर्षे तु सत्यां प्रसक्तौ तत्रैव करणं इति कल्पः । २५ पशौ अग्निहोत्रहविःपाकः प्राजहिते एव । २६ पशुपुरोडाशस्य श्रपणं शालामुखीये एव । २७ पशुः सद्यस्कालः । २८ पशौ शालामुखीयः अस्ति । वरुणप्रघासेषु **आपस्तम्बमते** शालामुखीयः नास्ति, **बौधायनमते** तु अस्ति । २९ सोमापवर्गे प्राजहितस्यैव समारोपः । ३० सोमापवर्गे अजस्रपक्षे शालामुखीयस्यापि समारोपः । ३१ दीक्षानिर्मोकात् पूर्वं प्रवासे समारोप्यैवाग्निर्नेयः । ३२ अग्निभेदेऽपि नारणिभेदः । अजस्रपक्षे वा अरणिभेदः । ३३ उख्याग्नेः न समारोपः । ३४ गार्हपत्यादेस्तु समारोप्यैव नयनम् । ३५ आत्मनि अरण्योश्च समारोपे विकल्पः । ३६ आत्मसमारोपपक्षेऽपि अरण्योरेव प्रत्यवरोह्य मन्थनम् । इति । * **अग्निप्रणयनं** ( गार्हपत्यादाहवनीयं प्रति ) दर्शपूर्णमासयोः अधर्मकम् । **भा.** ७।३।८।१९, * अग्निप्रणयनं चातुर्मास्येषु मध्यमयोर्द्वयोः पर्वणोः, न प्रथमचतुर्थयोः । ७।३।९।२३-३५. * अग्निप्रणयनं चातुर्मास्येषु मध्यमपर्वणोः लौकिकमेव, तच्च दर्शपूर्णमासतः चोदकप्राप्तम् । न च तत्र सौमिकाग्निप्रणयनधर्मातिदेशः । **वि.** ७।३।८. * अग्निप्रणयनं कालेन बाध्यते सांतपनीयोत्कर्षे । **बाल.** पृ. १३२. * अग्निप्रणयनं सोमे धर्मवत्, दर्शपूर्णमासयोश्च अधर्मकम् । **भा.** ७।३।८।१९. * अग्निप्रणयनं सोमे न सर्वस्यैवाहवनीयस्य, किंतु एकदेशस्यैव । **संकर्ष.**३।२।११. * **अग्निप्रणयनादिकैव** अग्निहोत्रेतिकर्तव्यता इत्युच्यते । **वा.** २।२।११।२६ पृ. ५५०. * **अग्निप्रयुक्तं** आधानं, न कर्मप्रयुक्तम् । सर्वकर्मार्थास्तु अग्नयः इति सर्वार्थे इत्युच्यते । **भा.** ३।६।५।१५, * **अग्निप्रयुक्तः** पवमानेष्टिसंस्कारः, न दर्शपूर्णमासप्रयुक्तः ।३।६।६।१७.



**अग्निभेदेऽपि अरणिभेदो नावश्यकः ॥**

अग्निभेदेन अरणिभेद आवश्यकः, एकत्रारोपे संसर्गापत्तेः, 'सहारणिभिस्तरन्ति' इति नदीतरणविधौ अरणिबहुत्वश्रवणाच्च । 'अरणिभ्यां सह तरन्ति' इति शाखान्तरात्तु द्वित्वबहुत्वयोर्विकल्पः, **इति प्राप्ते,** 'रथाङ्गेन तरन्ति' इत्यादाविव नदीतरणेऽरणिसाहित्यमात्रविधानेन द्वित्वबहुत्वयोरुत्तराधरारणिभेदाभिप्रायेणानुवादमात्रम् । अजस्रपक्षाभिप्रायेण वा तदुपपत्तिः । **संकर्ष.** ३।२।३२.

**'अग्निमग्न आवह' इति संबोध्योऽग्निः आहवनीयः ॥**

'अग्निमग्न आवह' इत्यत्र वाह्यत्वं वाहकत्वं चैकस्यैव प्रतीयते, उभयोरग्निपदेन व्यपदेशात् । युक्तं चैतत्, 'स्वं महिमानमावह' इति स्वाभिन्नस्य स्वमहिम्नः स्वेनैव वहनप्रतीतेः । स चोभयात्मकोऽग्निः आग्नेयाज्यभागदेवतारूपः एव । 'यदग्निमग्न आवहेत्याह तदाग्नेयाज्यभागायाग्निमावाहयति' इति श्रुतेः, **इति प्राप्ते,** वहनकर्तृकर्मत्वयोरेकस्मिन् विरोधात् स्वमहिमपदस्यापि **कौषीतके** वायुपरत्वेन व्याख्यानात् 'सामिधेनीभिरिष्ट्वाऽग्निमुपस्तुत्य अग्निमग्न आवह' इति श्रवणादाहवनीयरूपः प्रत्यक्षोऽग्निरेव आवोढा । तेनाहवनीयभेदेऽप्याहितस्यैकत्वाद् औपाधिकद्वित्वस्याप्रयोजकतया आमन्त्रिते वचनोहाभावेऽपि अवभृथे 'अग्निमाप आवहत' इत्यादिरूहः । **संकर्ष.** ४।२।८.

**अग्निमद्य होतारमवृणीत ॥** पशोर्वैशेषिको धर्मस्तत्र आम्नातः सूक्तवाकप्रैषः 'अग्निमद्य०' इति । **भा** १२।२।१२।३१. **वा**—दार्शिकः सूक्तवाकप्रैषः अग्नीषोमीये पशौ 'अग्निमद्य होतारमवृणीत' इत्येवं विकृतः । पुनः सवनीये पशौ विक्रियते 'अग्निमद्य होतारमवृणीतायं यजमानः सुतासुती' इति । यदि पौरोडाशिकं तन्त्रं स्यात्, तत इदं नित्यवदाम्नानं पाक्षिकं कृतं स्यात् । तस्मात् आम्नानसामर्थ्यात् नित्यमसौ प्रयोक्तव्यः । तस्य च मैत्रावरुणेन कर्त्रा क्रियमाणस्य पशोः साद्गुण्यं भवति । ( ततश्च पाशुकं तन्त्रं पुरोडाशेषु प्रसज्यते, न विकल्पः ) ।

**अग्नियोगः सोमकाले तदर्थत्वात् संस्कृतकर्मणः परेषु साङ्गस्य तस्मात् सर्वापवर्गे विमोकः स्यात्। ११।३।९।१९ ॥**

'अग्निं युनज्मि शवसा घृतेन' इति मन्त्रेण होमः अग्नियोगः। 'इमं स्तनं मधुमन्तं धयापां' इति मन्त्रेण होमः अग्निविमोकः। अग्निचयने तौ श्रुतौ। तत्र पूर्वपक्षमाह। सोमकाले सोमयागे साग्निचित्ये यः अग्नियोगः क्रियते, स साङ्गस्य प्रधानस्य कृते स्यात्। तदर्थत्वात् साङ्गप्रधानार्थत्वात्। संस्कृतकर्मणः अग्नियोगेन संस्कारेण संस्कृतस्य अग्निकर्मणः सकाशात् परेषु कर्मसु विशेषाश्रवणाच्च। नहि प्रधानादुत्तरेषां कर्मणां कृते नायं अग्नियोगः, इति विशेषः श्रूयते। तस्मात् सर्वापवर्गे पूर्वाङ्गोत्तराङ्गसहितस्य प्रधानस्य समाप्तौ अग्नेर्विमोकः स्यात्। सर्वादौ अग्नियोगः, सर्वान्ते च अग्निविमोकः कर्तव्यः इत्यर्थः। इदं भाष्यमते पूर्वपक्षसूत्रं, वार्तिकमते तु सिद्धान्तसूत्रं, अक्षरार्थस्तु स एवेति ध्येयम्।

**प्रधानापवर्गे वा तदर्थत्वात्। २० ॥**

सिद्धान्तमाह। न सर्वापवर्गे विमोकः, किंतु प्रधानापवर्गे स्यात्, प्रधानादौ च योगः, योगविमोकयोः तदर्थत्वात् प्रधानार्थत्वात्। 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञो यावानेव यज्ञस्तमालभते' इति प्रधानसंयोगेन योगस्य श्रवणात्। वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः।

**अवभृथे च तद्वत् प्रधानार्थस्य प्रतिषेधोऽपवृक्तार्थत्वात्। २१ ॥**

सिद्धान्ते विशेषकथनार्थं सूत्रम्। अवभृथे च तद्वत् पूर्वाधिकरणपूर्वपक्षवत्। आर्षेयवरणस्य होतृवरणस्य च प्रधानार्थत्वेन प्रतिषेधो युक्तो भविष्यति। प्रधानार्थस्य होतृवरणस्य प्रधानापवर्गे अपवृक्तार्थत्वात् कृतार्थत्वेन समाप्तत्वात्, अपवृक्तः समाप्तः अर्थः प्रयोजनं यस्य होतृवरणस्य तादृशत्वात्। अवभृथे चोदकप्राप्तस्य होतृवरणस्य प्रतिषेधः कर्तव्यो भवति, कृतश्चासौ 'न होतारं वृणीते नार्षेयं' इति। तस्मात् प्रधानार्थौ योगविमोकौ। प्रधानादौ योगः, प्रधानान्ते च विमोकः कर्तव्यौ।

**अहर्गणे च प्रत्यहं स्यात्तदर्थत्वात्। २२ ॥**

अहर्गणे द्वादशाहे प्रत्यहं योगो विमोकश्च स्यात्। तदर्थत्वात् प्रधानार्थत्वात्तयोः। 'स वा अहरहर्युनक्ति अहरहर्विमुञ्चति' इति श्रुतत्वात्। तस्मात् अग्निचयनेऽपि योगविमोकौ प्रधानार्थावेव। तस्मात् प्रधानादौ योगः प्रधानान्ते च विमोकः इति सिद्धान्तः। **के.**

* **अग्नियोगः सोमकाले०** इत्यत्र अग्नेः साङ्गप्रधानार्थत्वेन अग्नियोगस्यापि तद्द्वारा साङ्गप्रधानार्थत्वावसायात् साङ्गप्रधानापवर्गे अग्निविमोकं पूर्वपक्षयित्वा 'प्रधानापवर्गे वा तदर्थत्वात्' इत्यनेन 'पञ्चभिर्युनक्ति पाङ्क्तो यज्ञः' इति श्रुतेः यज्ञशब्दस्य च प्रधानयागवाचित्वावसायात् अग्नियोगस्य प्रधानयागमात्रार्थत्वावगतेः प्रधानमात्रापवर्गे अग्निविमोक इति सिद्धान्तो भाष्ये वक्ष्यते। **सु.** पृ. १०६२.

**अग्निरुद्धृतः अपवृत्ते कर्मणि लौकिकः संपद्यते ॥**

कर्मापवर्गोत्तरमपि अग्नेर्दर्शनात् तस्य च गार्हपत्यादुद्धृतत्वेन 'सैव साऽग्नेः संततिः' इति न्यायेन वैदिकत्वानपायात् संस्कारलक्षणानां गुणानां गुणिनाशमन्तरेणानपायात् तज्जागरणस्याभावे कतिपयघटिकोत्तरं तन्नाशे सति 'स तर्हि गतः' इति श्रुतेः उद्धरणश्रुतेश्चोपपत्तेः यावन्नाशमपवृत्तेऽपि कर्मणि दीक्षणीयाऽपवर्गे इव विद्यमानं ज्योतिः वैदिकमेव, **इति प्राप्ते**, अरणिसमारोपणोत्तरं परिदृश्यमानस्यापि ज्वलनस्येव कर्मापवर्गेऽपि तथात्वोपपत्तेः, संस्काराणां कार्यार्थत्वेन यावत्कार्यमेव तदवस्थानस्य शास्त्रादवगमात्, 'स तर्हि गतः' इत्यनेन होमाव्यवहितोत्तरमेव गमनश्रुतेः परिदृश्यमानोऽपि आयतनस्थोऽपि ज्वलनः, संस्कारापायात् अपवृत्ते कर्मणि **लौकिकः** संपद्यते। अत एव 'यस्योद्धृतोऽग्निरहुतेऽग्निहोत्रे उद्वायेत्' इत्यादिना 'तान्येवावक्षाणानि संनिधाय मन्थेत्' इत्यन्तेन अग्निहोत्रहोमापवर्गात् प्राक् अग्न्युद्वाने एव पुनर्मथनमुक्तम्। तेन तदपवर्गे तदभावात् **लौकिकत्वं** ध्वनितम्। **संकर्ष.** ३।२।९.

‘ **अग्निर्ज्योतिर्ज्योतिः सूर्यः स्वाहेति** सायं जुहोति, सूर्यो ज्योतिर्ज्योतिरग्निः स्वाहेति प्रातर्जुहोति ’ इति मिश्रलिङ्गमन्त्रविधिरपि क्व चित् । **सु.** पृ. ४३६.

‘ **अग्निर्ज्वलति** ’ इत्युक्ते ज्वलनसंप्रत्ययः । **भा.** ३।२।१।१ पृ. ७४६.

‘ **अग्निर्देवो होता देवान् यक्षत्** ’ **इति आहवनीयवादः ॥**

अध्वर्युप्रवरनिगदे ‘ अग्निर्देवो होता देवान् यक्षत् ’ इत्यत्र होतृत्वयष्टृत्वयोरुभयसाधारण्यादनियमे **प्राप्ते,** उत्तरत्र ‘ ब्रह्मण्वदा च वक्षत् ’ इत्यावोढृत्वलिङ्गादाहवनीयवाद एव । **संकर्ष.** ४।२।१८.

**अग्निर्माणवकः** इति तु न अग्नित्वाविनाभावेन माणवकः प्रतीयते । किं तर्हि ? ‘ वह्नित्वलक्षितादर्थाद् यत् पैङ्गल्यादि गम्यते । तेन माणवके बुद्धिः सादृश्यादुपजायते । ’ **वा.** १।४।१२।२३ (१) पृ. ३५४. * गुणादेप वादः स्वार्थाभिधानेन । **भा.** १।४।१२।२३ (१), * अग्निर्माणवकः इति शब्दे एवोच्चारिते माणवके संप्रत्ययः, अग्निशब्द एव माणवकस्याभिधाता इति । अत्रोच्यते । माणवको नाग्निशब्दात् प्रतीयते । अनादृत्यैव माणवकप्रत्ययं ज्वलनं अग्निशब्दात् प्रतियन्तो दृश्यन्ते । न तु अनादृत्य ज्वलनप्रत्ययं माणवकं अग्निशब्दात् प्रतियन्ति । कुत एतत् ? योयोऽग्निसदृशो विवक्ष्यते तत्रतत्र अग्निशब्दो नियत इति । अत एव विगतसादृश्यवति तु अयं न दृश्यते । अतः अग्निसादृश्यमस्य प्रवृत्तौ निमित्तम् । न च ज्वलने अप्रतीते तत्सादृश्यं प्रतीयते । तस्मात् ज्वलनस्य अग्निशब्दो निमित्तं, न माणवकस्य । तस्मात् ज्वलने मुख्यः, न माणवके । ३।२।१।१. * अग्निर्माणवक इत्यत्र अग्निमाणवकयोः अत्यन्तभेदात् सादृश्येन शब्दः प्रवर्तमानः प्रत्ययवैलक्षण्यात् नाभिधाता इति सर्वेण ज्ञायते । **वा.** ३।१।६।१२ पृ. ६८३. * अग्निर्माणवकः । भवति हि गुणादप्यभिधानम् । **भा.** ३।२।२।४. * अग्निर्माणवकः । सत्यपि तावत् माणवकसामानाधिकरण्ये सति सादृश्ये अभिधानात्, असति चानभिधानात्, अन्यत्र असादृश्यवति वृत्तिदर्शनात् असति चादर्शनात्, विशेषणत्वात् अवश्यंभाविप्रथमप्रत्यायने सादृश्यमेव प्रथमं प्रत्याययितव्यम् । न चानवगतेऽग्नौ तत् प्रतीयते इति प्रथमतरमग्नेरभिधानम् । ततश्च तत्संबन्धादेव शेषप्रतीतिः । **वा.** ३।२।१।१ पृ. ७४८.

**अग्निर्होता वेत्तु इति स्रुगादापननिगदे आहवनीयवादः ॥**

स्रुगादापननिगदे ‘ अग्निर्होता वेत्तु ’ इत्यत्राप्यनियमे **प्राप्ते,** ‘ अग्निर्होतेत्याहाग्निर्वै देवानां होता तं वृणीते ’ इत्युक्त्वा ‘ योऽग्निं होतारमवृथा इत्याहवनीयं पुनर्वृणीते ’ इति श्रवणात् पुनरित्यनेन पूर्ववृत्तस्य होतुरग्नेराहवनीयत्वं गम्यते । ज्वलनस्य देवतायाश्च परस्पराभेदेन बहुशो व्यवहारदर्शनात् । **संकर्ष.** ४।२।१९.

**अग्निर्होत्रेणेदं हविरजुषत इति गार्हपत्यवादः ॥**

सूक्तवाके ‘ अग्ने त्वं सूक्तवागसि ’ इति संबोधनस्य स्वाभिमुखाहवनीयपरत्वेन सूक्तवागसीति सूक्तवचनसंबन्धेन होतृत्वाध्यवसायात्, ‘ अग्निर्होत्रेणेदं हविरजुषत ’ इत्यत्र सहार्थतृतीयया होतृकर्मसाहित्यमात्रप्रतीतेः, तावन्मात्रस्य च ‘ तूर्णिर्हव्यवाट् ’ इत्यादाविवौपचारिकोक्तेः आहवनीयेऽपि संभवादग्निर्होत्रेणेत्यपि तस्यैव वादः, **इति प्राप्ते,** इत्थंभूतलक्षणतृतीयया स्थानाद्गार्हपत्यस्यैव वादः । सूक्तवचनसंबन्धस्याहवनीयपरत्वेऽपि हविर्जोषणप्रायपठितस्य गार्हपत्यपरत्वावश्यंभावात् । **संकर्ष.** ४।२।१६.

**अग्निवत्** । अग्नीनां यथा प्रयोगात् बहिः आधानेन संस्कृतानां पुनः प्रयोगमध्ये संस्कारो न क्रियते तद्वत् । **के.** ९।२।२।९. * अग्निवत् । यथा ‘ अथातोऽग्निं अग्निष्टोमेनैवानु यजति, तमुक्थ्येन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेण ’ एतेषु चयनं कर्तुं शक्यते तद्वत् । अत्र अग्निशब्दस्य चयनमित्यर्थः । **भा.** १०।५।२३।७८, * अग्निवत् । यथा अग्नेः सकृत् आधानेन संस्कृतस्य न पुनः कर्मणि संस्कार एकस्य क्रियते, तद्वत् । ११।३।११।२५.

**अग्निविमोकः** नाम होमविशेषः ' इमं स्तनं मधुमन्तं धयापां० ' इति मन्त्रेण साग्निचित्ये क्रतौ प्रधानान्ते ( साङ्गप्रधानान्ते वा ) उक्तः। **भा.** ११।३।९।१७.

* **अग्निविहरणं** ज्योतिष्टोमे। विविधं हरणं अल्पानामल्पानामङ्गाराणां आग्नीध्रीयाग्नेः सकाशात् गृहीतानां अष्टसु धिष्ण्येषु स्थापनम्। होतुः, मैत्रावरुणस्य, ब्राह्मणाच्छंसिनः, पोतुः, नेष्टुः, अच्छावाकस्य इति षण्णामृत्विजां षट्, आग्नीध्रस्य सप्तमं, मार्जालीयं चाष्टमं इत्यष्टौ धिष्ण्यानि अग्नेः स्थानानि लघुवेदिकारूपाणि, तत्रेदं विहरणम्। **के.** * **अग्निविहरणप्रैषे** ' अग्नीदग्नीन् विहर ' इति मन्त्रः अन्वितः, न तु उत्थाने। तथा च ' उत्तिष्ठन्नन्वाह ' अत्र विधौ काललक्षणया उत्थानकाले अग्निविहरणप्रैषः कर्तव्यः, इति कालो विधीयते। **वि.** ३।२।४

* **अग्निविहरणादिमन्त्रविनियोगाधिकरणम्।** ' उत्थानवाग्विसर्गाधिकरणं ' इति बिन्दौ द्रष्टव्यम्। ३।२।४।१०

* **अग्निशब्दः** 'अग्निं चिनुते ' इति श्रुतः चितिपञ्चकरूपे द्रव्यान्तरे वर्तते, न तु इष्टकासमुदाये। **भा.** ९।१।७।२६–२७. * अग्निशब्दः जातिमात्रमुपस्थापयन् लौकिकवह्निमात्रेण चरितार्थः, आहवनीयादिसंस्कारवाचके विशेषणं विना न वैदिकोपस्थापको भवति। **वि.** ७।३।१२, * अग्निशब्दः रूढ्या वह्निमाचष्टे। ३।३।१०. * अग्निशब्दः सामान्यवचनोऽपि सन् ' अग्निं चिनुते ' इत्यत्र प्रकरणवशात् चयनसंस्कृते वह्नौ प्रवर्तते। **वा.** २।३।१०।२२. * **अग्निशब्दस्य** 'अग्निर्वृत्राणि जङ्घनत् ' इति वैदिकस्य वृत्रहननसमर्थवस्तुवाचित्वावगमः। लौकिकव्युत्पन्नाग्निशब्दवाच्यस्य च ज्वलनस्य तदसामर्थ्यात् अर्थान्तरे च अव्युत्पन्नस्यैव शक्त्यन्तरकल्पने गौरवापत्तेः, गत्यर्थस्य अगिधातोः ' अङ्गेर्नलोपश्च ' ( उणादि ४९९ ) इति सूत्रेण औणादिके निप्रत्यये कृते अग्निशब्दव्युत्पत्त्यवधारणात् न प्रकृतिप्रत्ययान्वाख्यानभेदेन अव्युत्पन्नात् लौकिकात् अग्निशब्दाद् व्युत्पन्नस्य वैदिकस्याग्निशब्दस्य रूपान्यता अभिप्रेता। [illegible]

**अग्निशिखान्यायः**—यथा स्वभावतः अग्निशिखा ऊर्ध्वं गच्छति। माघकविनाऽप्युक्तम्–'प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः' इति (१।२)। तद्वदात्माऽपि चोर्ध्वं गच्छतीति आर्हताः। एवं हि सर्वदर्शनसंग्रहार्हतदर्शने अभिहितम्, तथा हि– ' कुलालचक्रवत् व्यपगतलेपालाबूवत् एरण्डबीजवत् अग्निशिखावच्च इति '। अत एव पठन्ति ' गत्वागत्वा निवर्तन्ते चन्द्रसूर्यादयो ग्रहाः। अद्यापि न निवर्तन्ते त्वलोकाकाशमागताः॥ ' इति। **साहस्री.** ७०६.

**अग्निश्च सोमश्च देवता।** इतरेतरयोगे तु व्यासज्यवृत्तिविभक्त्यर्थे परस्परसाहित्येनान्वयः, यथा अग्निश्च सोमश्च देवता इत्यादौ ( अग्नीषोमौ )। **भाट्ट.** ६।१।५.

**अग्निष्टुत्।** अग्निष्टोमस्य विकृतिरूपः कश्चिदेकाहः। स च पृष्ठस्तोत्रे त्रिवृत्स्तोमयुक्ततया त्रिवृदित्युच्यते। अग्निष्टोमसंस्थारूपत्वात् अग्निष्टोम इत्यप्युच्यते। **वि.** २।२।१२. * अग्निष्टुत्। ' त्रिवृदग्निष्टुदग्निष्टोमः, तस्य वायव्यासु ( ऋक्षु ) एकविंशं अग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत, एतस्यैव रेवतीषु ( ऋक्षु ) वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति कर्मान्तरविधिः, न तु वारवन्तीयादेर्गुणात् फलम्। **भा.** २।२।१२।२७. * अग्निष्टुत् नाम आग्नेयीसुब्रह्मण्याप्रवर्तकं, ज्योतिरादिनाम्ना ऐन्द्रीसुब्रह्मण्याप्रवर्तकेन बाध्यते पञ्चदशरात्रे। **बाल.** पृ. १३२. * अग्निष्टुत् पञ्चदशरात्रे प्रथममहः एकाहाग्निष्टुतो विकृतिः। **वि.** १२।२।७. * अग्निष्टुतः पूर्वस्य विध्यन्तः रेवत्यादियागेषु उत्तरेषु प्रवर्तते, साद्यस्काः साहस्राः इत्येकेन शब्देन युगपदुपादानलक्षणसंघाख्यनिकायवतां अग्निष्टुदादीनां एकाहानां निकायित्वावान्तरसामान्येन सुसदृशत्वात् इति वक्ष्यते ( ८।१।१२।१९ इत्यत्र ). * **अग्निष्टुति** ' आग्नेया ग्रहा भवन्ति '। तत्र प्राकृतयोः स्तोत्रशस्त्रयोः यथादेवतं ऊहो न कर्तव्यः, किंतु अविकारः एव। **भा.** १०।४।२४।४९, * अग्निष्टुति ग्रहेषु ' आग्नेया ग्रहा भवन्ति ' इति देवताविधानं भवति। १०।४।२।३. * अग्निष्टुति ' त्रिवृदग्निष्टोमः ' इति त्रिवृत्त्वं श्रूयते। यद्यपि त्रिवृच्छब्दः अवयवप्रसिद्ध्या लोके त्रैगुण्यं ब्रूते, तथापि वेदे रूढ्या स्तोमवाची। तस्मात्

स्तोत्रीयाणां नवानामृचां अनुक्रमेण स्तोमविषयमेव त्रिवृत्त्वम्। **वि.** १०।६।७, * अग्निष्टुति पञ्चदशरात्रस्य प्रथमाहे उपसत्कालीना सुब्रह्मण्या चोदकप्राताऽपि आग्नेयी न कार्या, किंतु बहूनामनुग्रहाय ऐन्द्री एव कर्तव्या। द्वितीयादिचतुर्दशसु अहःसु ऐन्द्री एवेति ( वस्तुतस्तु प्रथमाहे उभे अपि सुब्रह्मण्ये पठितव्ये, उभयोः प्रकाशनं कर्तव्यं इति भाट्ट – भाष्यटीकयोराशयः )। १२।२।७. * अग्निष्टुति पशुकामेन रेवतीषु ऋक्षु अग्निष्टोमसाम एकविंशस्तोमयुक्तं गातव्यम्। **भा.** २।२।१२।२७. * अग्निष्टुति पृष्ठस्तोत्रं त्रिवृत्स्तोमकम्। **वि.** २।२।१२. * अग्निष्टुति ब्रह्मवर्चसकामेन वायव्यासु ऋक्षु अग्निष्टोमसाम एकविंशस्तोमयुक्तं गातव्यम्। अग्निष्टोमे तु तत् आग्नेयीषु ऋक्षु गीयते। **भा.** २।२।१२।२७, * अग्निष्टुति सुब्रह्मण्या आग्नेयी भवति, तेन इन्द्रशब्दस्य स्थाने अग्निशब्दस्य ऊहः 'अग्न आगच्छ' इति कर्तव्यः। 'हरिव आगच्छ' इत्यादौ तु नोहः, किंतु यथाश्रुत एव सुब्रह्मण्याऽऽह्वानमन्त्रो ग्राह्यः। अविद्यमानगुणैरपि स्तुतिर्भवति। **याज्ञिकास्तु** 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे' इति ऊहं कुर्वन्ति। ९।१।१६।४२–४४. * अग्निष्टुति स्तोत्राणि आतिदेशिकानि। **वा.** २।२।१२।२७ पृ. ५५३.

**अग्निष्टुति श्रुतस्य त्रिवृत्त्वस्य स्तोत्रीयानवकरूपस्य स्तोत्रान्तरगतस्तोममात्रबाधकत्वम्॥**

**त्रिवृति संख्यात्वेन सर्वसंख्याविकारः स्यात्। १०।६।७।२२॥**

**भाष्यं**— एवं श्रूयते, 'त्रिवृदग्निष्टोमः' इति। तत्र संशयः, किं त्रिवृत्संख्याऽग्निष्टोमस्य साधनमात्रे, उत स्तोमविषया नियम्यते इति। किं प्राप्तम्? त्रिवृद्भवतीति श्रूयमाणे संख्यामात्रविकारः स्यात्। कुतः? त्रिवृच्छब्दो लोके त्रित्वसंबद्धे प्रयुक्तः, यथा 'त्रिवृद्रज्जुः' 'त्रिवृन्मणिः' इति। इहापि 'त्रिवृदग्निष्टोमः' इति त्रित्वसंबद्धोऽग्निष्टोमः कार्यः इत्युच्यते। तच्च त्रित्वमग्निष्टोमसाधनपरिच्छेदद्वारेण तत्संबद्धमित्युक्तं भवति, न साक्षात्, गुणत्वात् संख्यायाः। न चेह संख्येयविशेषः कश्चित्तदीय उपादीयते। तदविशेषाद् यावान् कश्चिदग्निष्टोमसंबद्धः संख्यया परिच्छेत्तव्यः, सर्वं परिसंचक्षीत। संख्यात्वेन सामान्येन तत्संख्यां विकुर्यात्। यथा 'दधिघृतशालिभिर्देवदत्तो भोजयितव्यः, देवदत्तवत् यज्ञदत्तस्तैलेन' इत्युक्ते स्नेहनसामान्यात्तैलं स्नेहनकार्ये एव विनियुज्यते, नौदनकार्ये इति। एवं संख्याऽपि संख्याकार्ये एव विनियुज्यते।

**स्तोमस्य वा तल्लिङ्गत्वात्। २३॥**

**भाष्यं**— न चैतदस्ति, सर्वसंख्याविकार इति। किं तर्हि? स्तोमगतामेव संख्यां विकुर्यात्। कथम्? स्तोमविषये त्रिवृच्छब्दस्यान्यत्र दर्शनात्। यथा, 'त्रिवृद्बहिष्पवमानः' इत्यत्र स्तोमविषयता परिच्छिन्ना, एवं 'त्रिवृदग्निष्टोमः' इत्यत्रापि स एव शब्द उच्चरितः तमेव संबन्धिनमनुमानात् बुद्धौ संनिधापयेत्। अतः स्तोमलिङ्गत्वात् तद्गतामेव संख्यां विकुर्यात्। अत्राभिधीयते। नैतद्युक्तम्। संख्याशब्दा ह्यनियतवृत्तयो भवन्ति। ते हि येनयेन संबध्यन्ते संख्येयेन, तंतं परिसंचक्षते। तथा चोपदर्शितमेव त्रिवृद्रज्जुस्त्रिवृन्मणिरिति। तस्माद्बहिष्पवमानेन सामानाधिकरण्यात् स्तोत्रं परिसंचष्टे, अन्यत्रापि योयः परिसंख्यातव्यो भविष्यति, तंतं परिसंख्यास्यतीति। अतः स्तोमलिङ्गत्वमप्यहेतुर्नियमस्येति। अत्राभिधीयते। अयमिह त्रिवृच्छब्दोऽतीत्य लौकिकमर्थं विशिष्टसंख्येये आचरितः, यथा, 'त्रिवृद्बहिष्पवमानः' इति स्तोमविषयिण्यां नवसंख्यायाम्। 'त्रिवृद्बहिष्पवमानः' इत्यभिधाय नव स्तोत्रीयाः उच्यन्ते, तेन तासु वर्तते इति गम्यते। तथा परस्मिन्नपि दृश्यते 'त्रयस्त्रिकपालास्त्रिवृता स्तोमेन संमिताः' इति नवानां कपालानां त्रिवृता स्तोमेन समानं वदन् त्रिवृच्छब्दस्य तत्र प्रसिद्धिं दर्शयतीति। अतः प्रसिद्धवदाचारात्, सामानाधिकरण्यदर्शनाच्चायमस्यार्थ इति निश्चीयते। लोकेऽपि सामानाधिकरण्यप्रयोगादाचाराच्चार्थाध्यवसानं भवति, यथा 'अयं देवदत्तः' इति। तस्मादयं त्रिवृच्छब्दो विशिष्टसंख्यासंख्येयविषयोऽन्यत्र दृष्टः, इतीहापि प्रयुज्यमानो यत्र दृष्टस्तमेव लिङ्गात् बुद्धौ संनिधापयति, इत्यतः स्तोमविषयो नियम्येत। यदुक्तं, संख्या ह्यनियतविषया सर्वत्र संबन्धमुपयाति, एतत् अवयवार्थनिराकरणात् समुदायाङ्गीकरणाच्च

परिहृतमेवेति । एवं चान्यगतानां संख्यानामनिवृत्तौ चोदकानुग्रहो भविष्यतीति ।

**शा**—यत्र 'त्रिवृदग्निष्टुत्' इत्यादौ वाक्यशेषात् अर्थविशेषो नावगम्यते, तत्र विचार्यते ( यद्यपीह अक्तादिवत् वाक्यशेषात् न विशेषतात्पर्यमात्रनिश्चयः, किंतु स्तोत्रीयानवकलक्षणार्थान्तरे शक्तिरेव वाक्यशेषानुगुण्येन कल्प्यते, कल्पितायां च तस्यां वाक्यशेषाभावस्थलेऽपि तस्या अनपायात् वाक्यशेषाभावः अकिंचित्करः, तथापि त्रैगुण्ये स्तोत्रीयानवके च शक्तेरविशेषात् वाक्यशेषाभावस्थले स्तोत्रीयानवकरूपार्थपरत्वसिद्ध्यर्थं न्यायान्तरव्युत्पादनस्यावश्यकत्वात् न अक्ताधिकरणेन [१।४।१३] गतार्थत्वम् )। किं त्रैगुण्यवचनः सन् सर्वेषां क्रतुसाधनानां संख्याविकारः, उत स्तोत्रीयानवकवचनः सन् स्तोमस्यैव विकारः इति। तत्र शास्त्रस्य महाविषयत्वलिप्सया सर्वद्रव्याणां ( प्रकृतौ यानि द्रव्याणि संख्यायुक्तानि, तेषां सर्वेषामित्यर्थः ) त्रैगुण्यविधिः ( रूढिरपि महाविषयलिप्सया त्याज्या), **इति प्राप्ते, ब्रूमः** । त्रैगुण्यं ह्यसौ ब्रुवन् अवयवप्रसिद्ध्या ब्रूयात्, रूढ्या च स्तोत्रीयानवकं, सा च बलीयसी ( तथा च शब्दशक्त्यनुसारेण प्रयोजनकल्पना, इति रूढेः प्राबल्यानुसारेण अल्पविषयत्वमपि न दोषः ) तस्मात् स्तोत्रीयासंख्याविकारः त्रिवृत्त्वम् ।

**सोम**— पूर्ववैषम्येणोत्थानात् संगतिः ।

**वि**— 'त्रिवृदग्निष्टुदित्येतत् सर्वत्र स्तोम एव वा ।, आद्यस्त्रैगुण्यवाचित्वा,—दन्त्यः स्तोमेऽस्य रूढितः ॥'

**भाट्ट**—त्रिवृच्छब्दस्य बहिष्पवमाने तृचत्रयानुक्रमणात् 'त्रयस्त्रिकपालास्त्रिवृता स्तोमेन संमिताः' इत्याद्यर्थवादाच्च स्तोत्रीयानवकवाचित्वस्थापनेऽपि लोके वेदे च 'त्रिवृद्रज्जुः' इत्यादौ त्रित्ववाचित्वस्य सत्त्वात् 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यादौ अग्निष्टुद्यागसंबन्धित्वेन श्रुतस्य त्रिवृत्त्वस्य, शास्त्रस्य महाविषयत्वसिद्ध्यर्थं तदीयाङ्गवृत्तिप्राकृतसंख्याकार्ये निवेशप्रतीतेः प्राकृतसंख्याबाधेन सर्वाणि त्रिगुणितानि कर्तव्यानि, **इति प्राप्ते,** त्रिवृच्छब्दस्य त्रैगुण्ये यौगिकत्वात् स्तोत्रीयानवके च रूढत्वेन प्रकृते योगबाधेन रूढार्थग्रहणावगतेः, अग्निष्टुद्यागाङ्गभूतस्तोत्रमात्रे स्तोत्रान्तरबाधेन त्रिवृत्स्तोमविधिः।

**न्यायबिन्दुः**— 'त्रिवृदग्निष्टुदग्निष्टोमः' इत्यत्र त्रिवृच्छब्दस्य त्रैगुण्यस्तोत्रीयानवकोभयार्थस्य वाक्यशेषाभावे विशेषाग्रहणात् त्रैगुण्यार्थत्वे शास्त्रस्य महाविषयत्वसंभवेन सर्वद्रव्याणां त्रैगुण्यविधिः, **इति प्राप्ते,** योगाद्रूढेर्बलीयस्त्वात् स्तोमस्यैव विधिरिति सिद्धान्तः ।

**मण्डन**— 'स्तोमस्यैव त्रिवृत्त्वं स्यात् ।'

**शंकर**— 'त्रिवृच्छब्दो नवर्चार्थः ।'

**अग्निष्टुति सुब्रह्मण्यानिगदे हरिवदादिपदानां नोहः ॥**

**असंयोगात्तदर्थेषु तद्विशिष्टं प्रतीयेत । ९।१। १६।४२ ॥ वर्णकं १.**

**भाष्यं**— अस्ति ज्योतिष्टोमः । तत्र सुब्रह्मण्यानिगदः समाम्नातः, 'इन्द्र आगच्छ हरिव आगच्छ मेधातिथेर्मेष' इत्येवमादिः । अग्निष्टुति च श्रूयते 'आग्नेयी सुब्रह्मण्या भवति' इति । तत्रेन्द्रशब्दस्य स्थाने ऊहः क्रियते । अथेदानीं 'हरिव आगच्छ' इत्येवमादिषु संशयः ऊहितव्यं, नेति । किं प्राप्तम् ? तद्विशिष्टं प्रतीयेत तेन विशिष्टम् । इन्द्रपदस्थाने ऊहः । एतेन विशेषेण विशिष्टमविकृतमेव वचनं प्रतीयेत । कुतः ? असंयोगात्तदर्थेषु । नैषां शब्दानां तेष्वर्थेषु संयोगः, हरिवत्तादिषु । न हरिवदादयः समवेता इन्द्रे विद्यन्ते गुणाः, प्रमाणाभावात् । अविद्यमानास्तस्योच्यन्ते । एवं श्रुत्याऽर्थः प्रतिज्ञातो भवति । इतरथा लक्षणा स्यात् । न हरिवत्तादय उच्येरन् । हरिवत्तादिभिः सोऽस्य गुणो लक्ष्यते । अथासमवेतवचना मुख्यार्था एव भविष्यन्ति । आत्मीयं गुणं न लक्षयिष्यन्तीत्युच्येत, तथाऽस्मत्पक्षः एव । तस्माददृष्टार्थं गुणः उच्यते, इत्यविकारेण प्रयोगः स्यात् । तत्रैवं वचनव्यक्तिर्भवति, 'इन्द्र आगच्छ हरिव आगच्छ' इति हरिवदादीन् अस्य गुणानारोपयति । हरिवदादिभिः संबध्यमान इन्द्रोऽभ्युदयकारी भवतीति । शक्यते चाग्निरपि तैः संबन्धयितुम् । तस्मादविकारेण गुणानां प्रयोगः । अथोच्यते । अस्मादेव सामानाधिकरण्यवचनात् इन्द्रे एते गुणा विद्यन्ते इति । तन्न । अविद्यमानेष्वपि स्तुत्याऽस्य सामानाधिकरण्यवचनमुपपद्येतैव । यथा, 'इन्द्रो बृहस्पतिर्देवदत्तः' इति ।

**टुप्**— ( लिखितस्थम् ) नैव सन्तीन्द्रे गुणाः, प्रमाणाभावात् । ऊहं चेच्छता सन्तीन्द्रे गुणा इत्यभ्युपगमनीयं, नेन्द्रसंबन्धमात्रम् । इन्द्रस्य आत्मीयाः ( गुणाः ) इति चाभ्युपगमे लक्षणा स्यात् अनेनांशेन प्रकाश्यमानेषु । अथोच्येत, असमवेता एते ( गुणाः ) इन्द्रे, न चात्मीयत्वं लक्षयिष्यन्ति । द्वौ अपि दोषौ परिहरिष्यामः । इन्द्रो हरिवद्गुणविशिष्टः, उच्चार्यमाणः अभ्युदयकारी भवतीति । अग्नेरपि इष्यतां एतैरेव विशिष्टस्याभ्युदयकारित्वम् ।

**कर्माभावादेवमिति चेत् । ४३ ॥**

**भाष्यं**—इति चेद्भवान् पश्यति, अविकारेण हरिवदादीनां वचनमिति । कर्माभावादेवं स्यात्, यद्येते गुणा इन्द्रे न भवेयुः, कर्मजास्तु एते गुणा इन्द्रस्य विद्यन्ते । 'हरिव आगच्छेति, पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरतीति । मेधातिथेर्मेष इति, मेधातिथिं हि काण्वायनं मेषो भूत्वा जहार । वृषणश्वस्य मेनका नाम दुहिता बभूव, तामिन्द्रश्चकमे । गौरावस्कन्दिन् इति, गौरमृगो भूत्वाऽरण्याद्राजानं सोमं पिबति' इतिवचनैरिमे गुणा इन्द्रस्याख्यायन्ते । तस्मात् समवेतवचना हरिवदादयः शब्दाः । तथा सतीन्द्रप्रत्ययायोच्चार्यन्ते इति नादृष्टकल्पना भविष्यति । तत्रैवं वचनव्यक्तिः । 'इन्द्र आगच्छ हरिव आगच्छ' इति, हरिवत्तादिगुणवान् यस्त्वं, स आगच्छेति । लक्षणा चादृष्टकल्पनाया ज्यायसी । तस्मादूहितव्या हरिवदादयः शब्दा इति ।

**न परार्थत्वात् । ४४ ॥**

**भाष्यं**—नैतदेवम् । परार्था हि हरिवदादयः शब्दा इन्द्रस्तुत्यर्थाः । स्तुतये हरिवदादिसंबन्धोऽस्य क्रियते । तत्पुरस्तादेवोपवर्णितम् । स्तुत्यर्थं चाग्नेरपि एतैरभिसंबन्धः शक्यते कर्तुम् । यत्तूक्तं, समवेता गुणा इन्द्रस्य विद्यन्ते, 'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी' इत्येवमादिभिर्वचनैरवगता इति । तन्न । न हीमानि वचनानीन्द्रस्य संबन्धिनौ हरी विदधति । नह्येवमभिसंबन्धः क्रियते, यावेतौ पूर्वपक्षापरपक्षौ ताविन्द्रस्य हरी इति । तत्र हि हेतुरुपदिश्यते । 'ताभ्यां ह्येष सर्वं हरति' इति । नहीदं प्रसिद्धं, ताभ्यामिन्द्रः सर्वं हरतीति । सिद्धो हि हेतुर्भवति, न प्रसाध्यः । यथा तु इमौ हर्तारौ प्रसिद्धौ, कालेन सर्वमपक्षीयते इति, तथा नेन्द्रस्याग्नेश्च कश्चिद्विशेषः । तत्र एभिरभिधानमग्नेः प्राप्नोत्येव । अथ इन्द्रस्य हर्तृत्वं विधीयते इत्युच्यते, तथा च वाक्यं भिद्येत । इन्द्रस्यैतौ हरी इत्येतदपि विधातव्यम् । अथैतन्न विधीयते, तथा स एव दोषः, नास्त्यग्नेरिन्द्रस्य वा विशेषः इति । अथ पूर्वपक्षापरपक्षाविन्द्रस्येति विधीयते, तौ च हरी, तस्मादिन्द्रो हरिवानिति, तथा हेत्वप्रसिद्ध्यादिः स एव दोषः । न च विधीयमाने वैशब्दो भवति । प्रसिद्धवचनो ह्येष दृष्टः । 'न वै स्त्रैणानि सख्यानि सन्ति' इति यथा । तथा, मेधातिथेर्मेष इत्येवमादि इतिहासवचनमिव प्रतिभाति । इतिहासे च विधौ सति, आदिमत्तादोषो वेदस्य प्रसज्येत । अस्त्विति चेत् , तथा सति तस्याप्रामाण्यात् मेधातिथेर्हि काण्वायनस्य मेषः इत्यप्रसिद्धिः । सर्वत्र च निगदविधानम् । तत्रापरस्मिन् विधीयमाने वाक्यभेदप्रसङ्गः । तस्मान्नैते गुणा इन्द्रे विद्यन्ते, इत्यसमवेतवचनत्वादविकारेण प्रयोगः इति । तदेतन्न रोचयन्ते **याज्ञिकाः** । ऊहं कुर्वन्ति । 'अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे' इति ।

**टुप्**—'पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी, ताभ्यां ह्येष सर्वं हरति' इति यदुक्तं, तत्र अस्य यावेतौ करणभूतौ ( पक्षौ ) ताभ्यामिन्द्रो हरति, नान्यः इत्यर्थो न । ताभ्यां ह्येष सर्वं हरतीति हेतुरयम् । हेतुश्च प्रसिद्धे संबन्धे भवति । न चेन्द्रस्य हर्तृत्वं प्रमाणान्तरेणाधिगतं, येन हेतुः स्यात् । न चैतौ इन्द्रस्य करणत्वेन प्रसिद्धौ । अथैतयोः करणत्वं इन्द्रस्य च हर्तृत्वं विधीयते, तथा वाक्यभेदः । अथ पूर्वपक्षापरपक्षौ इन्द्रस्य विधीयेते, तयोश्च हर्तृत्वं, तस्मादिन्द्रो हरिवान् भविष्यतीति, एवमपि हर्तृत्वमिन्द्रस्य प्रमाणान्तरेणानवगतं, येन हेतुः समर्थितो भविष्यति । पूर्वपक्षापरपक्षयोर्हर्तृत्वं विधीयमानं कथमिन्द्रस्य स्यात्, वाक्यभेदादिदोषश्च स्थित एव । तस्मात् सर्वेषां स्तुतिद्वारेण एकवाक्यता ।

**शा**—' पूर्वपक्षापरपक्षौ वा इन्द्रस्य हरी ' इत्यादिभिः एते गुणा इन्द्रे सन्तीति गम्यते । सन्ति चेत्, स्वगुणद्वारेण इन्द्रमेव प्रकाशयितुं अमीषामुच्चारणं दृष्टार्थं भवति । तेन अग्निरपि स्वगुणद्वारेण प्रकाश्यते इति हरिवदादिशब्दान् अपोद्धृत्य रोहितवदादिशब्दाः ऊहितव्याः, **इति प्राप्ते, ब्रूमः** । ' सत्स्वेतेषु गुणेष्वेवं, तत्सद्भावे तु न प्रमा । वाक्यशेषास्त्वदुक्ता ये स्तुतिमात्रपरा हि ते ॥' इति । तस्माददृष्टार्थमेव अविद्यमानैरेव गुणैः संबन्धी इन्द्रः प्रकाश्यते, इति अग्निरपि तैरेव गुणैः संबद्धव्यः इति अनूहः ।

**सोम**—यजमानपदवत् इहापि ऊहः इत्युत्थितेः संगतिः । अत्र **तन्त्ररत्ने** न्यायेन अनूहेऽपि अग्निष्टुति हरिवदादिपदयुक्तनिगदान्तरपाठबलात् तस्यैवानुष्ठानं, न प्राकृतस्याविकृतस्य इति इदमधिकरणं न्यायव्युत्पादनपरं इत्युक्तम् । **सूत्रार्थस्तु**—हरिवदादिशब्दानां तदर्थेषु हरिवदादिषु असंयोगात् तेषामसमवेतार्थत्वात् इति यावत् । तद्विशिष्टं हरिवदादिविशिष्टमेव प्रतीयेत, न तु ऊहितव्यमिति ।

**वि**— 'हरिवच्छब्द ऊह्यः स्यान्नो वेन्द्रे समवायतः । ऊह्यो, मैवं स्तावकत्वादसता स्तुतिसंभवात् ॥'

**भाट्ट**—ज्योतिष्टोमेऽस्ति सुब्रह्मण्यानिगदः ' इन्द्र आगच्छ हरिव आगच्छ ' इत्यादिरिन्द्रप्रकाशकः । इन्द्रदेवत्यश्च यागाभ्यासो दशभिश्चमसैः सह शुक्रामन्थिग्रहाभ्यां क्रियमाणः सवनमुखीयसंज्ञकः । तन्मात्राङ्गमेव तु सुब्रह्मण्यानिगदः लिङ्गात्, न त्वन्यदेवत्याभ्यासाङ्गं, ' व्रीहीणां मेध ' इतिवत् । अग्निष्टुद्यागे च ' आग्नेया ग्रहा भवन्ति ' इति वचनात् प्राकृतग्रहीयदेवताबाधेनाग्निदेवताविधानात् सवनमुखीयेऽप्यग्निर्देवता । ततश्च तदङ्गभूता सुब्रह्मण्या इन्द्रपदस्थानेऽग्निपदनिक्षेपेणोह्यते एव । न चैवं न्यायादेवोहसिद्धौ ' आग्नेयी सुब्रह्मण्या ' इति वचनवैयर्थ्यापत्तिः । प्रकृतौ सवनमुखीयवत् सवनीयहविषामपीन्द्रदेवत्यत्वात् वेदिबर्हिर्न्यायेन ( ३।७।१ ) सुब्रह्मण्यानिगदस्योभयार्थत्वप्रकृतौ विकृतावपि तदर्थं भेदेनाभेदेन वाऽनूहितसुब्रह्मण्यानिगदपाठप्रसक्तेः, ' आग्नेय्येव सुब्रह्मण्या कार्या ' इति तत्फलकत्वाङ्गीकारेण वचनसार्थक्यात् । अत एवैतद्वचनरूपतात्पर्यग्राहकानुरोधेन प्रकृतावपि न सवनीयहविरर्थत्वं, अपि तु सवनमुखीयशुक्रामन्थिप्रचारार्थत्वमेव सुब्रह्मण्यानिगदस्येत्यपि परं ध्येयम् ।

**के चित्तु** सवनमुखीये चमसैरेव होमः इन्द्रदेवताकः, न तत्राग्निष्टुति अग्निदेवताकत्वं, ग्रहेष्वेव तद्विधानात् । अतश्च न्यायेनाप्राप्तः एव सुब्रह्मण्योहः । वचनेन तु अग्निदेवत्यग्रहयागाभ्यासाङ्गतया आग्नेयी सुब्रह्मण्या सवनमुखीयादाच्छिद्य विधीयते इत्याहुः । **तन्न**, सवनमुखीयहोमस्यापि शुक्रामन्थिग्रहकरणकत्वेन सकलयाज्ञिकप्रसिद्धत्वात्, वचनेन अग्निदेवत्यग्रहयागाभ्यासे औपदेशिकसुब्रह्मण्याविधानेऽपि सवनमुखीये आतिदेशिकैन्द्रसुब्रह्मण्याबाधे प्रमाणाभावाच्च, सुब्रह्मण्यायास्तत्रौपदेशिकत्वे ऊहानूहविचारस्यासंगतत्वापत्तेश्च । अतोऽस्मदुक्तप्रकार एव श्रेयान् ।

इदं तु चिन्त्यते — किमिन्द्रपदे इव हरिवदादिपदेऽप्यूहो भवत्युत नेति । तत्र देवताविग्रहादिमत्त्वे एव मन्त्रार्थवादेतिहासपुराणप्रामाण्यात् हरिवदादिगुणानामपीन्द्रसमवेतत्वात् अग्निष्टुति अग्निगुणप्रकाशनार्थं रोहिताश्वादिपदानामूहः, **इति प्राप्ते**, देवताधिकरणन्यायेनैव (९।१।४) मन्त्रादीनां तत्परत्वे प्रमाणाभावात् हरिवदादिपदानामसमवेतार्थकत्वेन आहार्यारोपेणेन्द्रस्तुतिवत् अग्निस्तुतेरप्युपपत्तेर्नोहः । तदेतद्देवताधिकरणस्य प्रयोजनमात्रकथनार्थम् । प्रयोजनमपि चेदमूहस्मृत्यभावं कृत्वाचिन्तया । यदा तु **छन्दोगसूत्रे**ऽग्निष्टुति ' अग्न आगच्छ रोहिताश्व बृहद्भानो धूमकेतो जातवेदो विचर्षणे ' इत्यूहितस्यैव पाठः समाम्नातः, तदाऽस्याः स्मृतेर्न्यायोपन्यासपूर्वकत्वाभावेनाष्टकादिस्मृतिवत् श्रुतिमूलकत्वावश्यंभावात्, तया चैतदधिकरणन्यायस्याभासीकरणादूहितपाठ एव युक्तः । तदा च मन्त्रान्तरस्थदेवताविशेषणविषयमिदमधिकरणं द्रष्टव्यम् । अत एव यत्रैव न्यायोपन्यासपूर्विका स्मृतिस्तत्रैव श्रुतिमूलत्वे न्यायोपन्यासवैयर्थ्यापत्तेः मीमांसास्थसन्न्यायविरोधे आभासत्वं स्मृतेरित्युक्तं कल्पसूत्राधिकरणे ( १।३।६ ) ।

**न्यायबिन्दुः**— ज्योतिष्टोमे देवताप्रकाशनार्थः सुब्रह्मण्यानिगदः 'इन्द्र आगच्छ हरिव आगच्छ' इत्यादिः। सोऽग्निष्टुति यज्ञे आग्नेयी सुब्रह्मण्येतिवचनादग्न आगच्छेत्यूह्यते। हरिवदादिशब्दा अपि देवतागुणार्था रोहितवदादिरूपेणोहितव्याः, **इति प्राप्ते**, देवताधर्मत्वे प्रमाणाभावात् स्तुतिमात्रेणादृष्टार्थानां नोहः इति सिद्धान्तः।

**मण्डन**— 'नोहस्तु कार्यो हरिवत्पदादौ।'

**शंकर**— 'न स्याद्धरिवदाद्यूहः।'

**अग्निष्टुति स्तोत्रशस्त्रमन्त्राणां प्राकृतानामेवाविकारेण प्रयोगः॥**

**ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात्। १०।४।२४।५० ॥**

**भाष्यं**— अस्ति, अग्निष्टुदेकाहः। तत्र श्रूयते 'आग्नेया ग्रहा भवन्ति' इति। तत्र संदेहः, किं प्राकृतयोः स्तोत्रशस्त्रयोर्यथादेवतमूहः, उताविकार इति। ऊहबुद्धिं व्यावर्तयितुमिदमभिधीयते। ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यात् प्रधानकर्मत्वादिति। कस्य पुनरेषा बुद्धिः स्यात् यं निवर्तयेत्? यो मन्दधीर्मन्यतेऽभिधानं सेत्स्यतीति। मन्दधियामपि चोपदेशः क्रियमाणः फलवान् भवति। अपि च कं चिदपेक्ष्य सर्वे मन्दधियः। अथ तु न परितोष एवं, ततोऽन्यथा वर्ण्यते। यत्तद्वृत्तमधिकरणं द्वितीयेऽध्याये (२।१।५।१३–२९) तस्येदं प्रयोजनसूत्रं, ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यादिति। यदि संस्कारकर्मणी स्तोत्रशस्त्रे, किं भवति **प्रयोजनम्**? अग्निष्टुदेकाहे यथादेवतमूहः, अथ प्रधानकर्मणी, ततो ग्रहाणां देवतान्यत्वे स्तुतशस्त्रयोः कर्मत्वादविकारः स्यादिति।

**शा**— अग्निष्टुति श्रूयते 'आग्नेया ग्रहा भवन्ति' इति। प्रकृतौ नानादेवतानि स्तोत्रशस्त्राणि, तानि यदि देवतासंस्कारार्थानि, ततोऽग्निष्टुति यथादेवतं ऊहितव्यानि। तेषां तु अर्थकर्मत्वं द्वितीये व्यवस्थितम्। तस्मादविकारः इति द्वितीयसिद्धस्यैव प्रयोजनकथनमेतत्। १०।४।२५.

**सोम**— अत्र स्तोत्रशस्त्राणामदृष्टार्थतया यत्किंचिद्देवतास्तुत्याऽपि तत्सिद्धावपि न प्राकृतीनामृचां अविकारेणाग्निष्टुति प्रयोगः, किंतु 'आग्नेयीषु स्तुवते' 'आग्नेयीः शंसति' इति वचनेन आग्नेयीनामेव प्रयोगः। तथा च 'अग्निष्टुति' इति प्रदर्शनमात्रम्। यत्र विकृतौ देवतान्तरं, वचनाच्च तद्देवताकऋचां न प्राप्तिः, स विषयः। अत एव सूत्रे 'ग्रहाणां देवतान्यत्वे' इति सामान्येनैवोक्तं इति ध्येयम्। अत्र स्तुतशस्त्रयोः संस्कारकर्मत्वेऽपि विकृतौ देवताऽन्यत्वे ऊहः, इति पूर्वपक्षोपवर्णनं अनुपपन्नं, 'पूयति वा एतदृचोऽक्षरं यदेनमूहति, तस्मादृचं नोहेत्' इति ऋचामूहनिषेधेन देवताविधानार्थत्वेऽपि ऊहाप्रसङ्गात्, किंतु देवताविधानार्थत्वे विकृतौ देवतान्यत्वे प्राकृतीनामृचां तद्देवताऽभिधानासमर्थत्वात् उक्तनिषेधवचनेन ऊहासंभवाच्च तासां विकृतौ वैकृतदेवताप्रकाशनसमर्था ऋचो दाशतयीभ्य आनीय स्तुतिः कर्तव्या इति पूर्वपक्षो वर्णनीयः। अत एव च स्तुतशस्त्राधिकरणे (२।१।५।१३–२९) देवतासंस्कारार्थत्वपक्षे अग्निष्टुति आग्नेयीनां स्वत एव प्राप्तेः 'आग्नेयीः शंसति' इति वचनमनर्थकं स्यात्। 'अनर्थकं च तद्वचनम्' इति गुणसूत्रे (२।१।५।२६) बाधकोपन्यासः, तत्सूत्रभाष्यं च **आचार्यैः** (वार्तिककारैः) ऋचामनूह्यत्वहेतुनैव उपपादितम्। अनूह्यत्वे च उक्तनिषेधवचनमेव **न्यायसुधायां** (पृ. ६६४) प्रमाणीकृतम्। तस्मात् यथाश्रुतं कृत्वाचिन्तया ऊहपदं प्राकृतनिवृत्त्यभिप्रायपरं, इति व्याख्येयम्। **सूत्रे** कर्मत्वात् अर्थकर्मत्वात् इत्यर्थः।

**वि**— 'आग्नेयेषु ग्रहेषूहो नास्ति वा, स्तुतशस्त्रयोः। संस्कारत्वादस्ति, मैवमर्थकर्मत्वनिश्चयात्॥'

**भाट्ट**— अग्निष्टुति 'आग्नेया ग्रहा भवन्ति' इत्यनेन प्राकृतग्रहानुवादेन देवतान्तरविधौ स्तोत्रशस्त्रयोः अर्थकर्मत्वस्य द्वितीये साधितत्वात् प्राकृत्यो नानादेवत्या एव ऋचः स्तोत्रशस्त्रयोः पठनीयाः। न तु अग्निदेवत्यऋगन्तरागमः। तदेतत् द्वितीयसिद्धस्य प्रयोजनकथनमात्रम्। इदं च 'आग्नेयीषु स्तुवते' इत्येतद्वचनाभावं कृत्वा चिन्तया, स्थलान्तरविषयं वा।

**न्यायबिन्दुः**— अग्निष्टुति श्रुतं 'आग्नेया ग्रहा भवन्ति' इति। तत्र प्रकृतस्तोत्रशस्त्राणां अदृष्टार्थत्वात् अनूहः इति स्पष्टम्।

**मण्डन**— 'स्तोत्रे शस्त्रे विकारो न'।

**शंकर**— 'नोहः स्तोत्रे च शस्त्रे वा ।'

**अग्निष्टोमः**— अग्निष्टोम आग्नेयः। **भा.** ३।६।७।१८. * अग्निष्टोमः उक्थ्याद्युत्तरसंस्थासु अन्तर्भवत्येव। **वि.** ३।६।१६, * अग्निष्टोमः एव सोमयागेषु प्रथमयज्ञः। अत्यग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः, अप्तोर्यामः, वाजपेयश्चेति षट् संस्थाः आगन्तुकाकारविशेषाः। ५।३।१३, * अग्निष्टोमः ज्योतिष्टोमावान्तरसंस्थारूपः। १०।५।१. * अग्निष्टोमः दर्शपूर्णमासेष्ट्यनुष्ठानात् प्रागपि कर्तुं शक्यते। इष्टिसोमयोः पौर्वापर्यं न नियतम्। अत एव सोमपूर्वकमाधानम्। **के.** ५।४।३. * अग्निष्टोमः नित्यः। अत्यग्निष्टोमादयस्तु संस्थाः काम्याः। (चिन्त्यमिदम्। गोतमधर्मसूत्रे अत्यग्निष्टोमादीनामपि संस्कारेषु नित्यत्वेन परिगणनात्। इति केवलः) **वि.** ५।३।१३. * अग्निष्टोमः नित्यः काम्यश्च संयोगपृथक्त्वात् दध्यादिवत्। **के.** * अग्निष्टोमः स उच्यते, यस्मिन् क्रतौ अग्निदेवतायाः स्तुतिप्रधानाः के चित् स्तोमाः सन्ति। * अग्निष्टोमः सः, यो हि अग्निष्टोमस्तोत्रे (यज्ञायज्ञीये) समाप्यते। **वा.** १।६।१६।४२ पृ. १०६२. *अग्निष्टोमः सर्वराजसूयारम्भार्थः क्रियते। 'अग्निष्टोममग्रे ज्योतिष्टोममाहरति' इति वचनात्। **वि.**१०।१।३. * अस्ति सर्वस्वारः क्रतुः शुनःकर्णोऽग्निष्टोमः। 'मरणकामो ह्येतेन यजेत, यः कामयेत अनामयः स्वर्गं लोकमियामिति'। **भा.** १०।२।२३।५७, * **अग्निष्टोमं** अपेक्ष्य उक्थ्यादिषु संस्थासु दीर्घसोमः, अग्निष्टोमस्तु न दीर्घसोमः। ३।३।११।२८. * अग्निष्टोमं सपत्नीको यजमानः षोडशानामृत्विजां साहाय्येनानुतिष्ठति। अत्र सोमस्य होमः प्रधानं, इतराणि सर्वाण्यङ्गानि इष्टिपश्वादीनि। **के.** * **अग्निष्टोमात्** प्राक् अत्यग्निष्टोमादयः संस्थाभेदाः, एकाहाहीनसत्ररूपाश्च सोमविकृतिरूपाः सर्वे यागाः नानुष्ठेयाः। सोमविकृतीनामेवायं नियमः, न तु इष्टिपशूनाम्। **वि.** ५।३।१४, * **अग्निष्टोमस्य** गुणविकारा उक्थ्यादयः इति न सर्वसंस्थासाधारणं प्रकरणम्। अतस्तत्रैव दीक्षणीयाद्यङ्गविधिं निवेशयति। उक्थ्यादिषु तु चोदकादङ्गान्यतिदिश्यन्ते। ३।६।१६, * अग्निष्टोमस्य पञ्चकृत्वोऽभ्यासेन जायमानो गणः पञ्चाग्निष्टोमो नाम। तत्र द्वादशाहस्य विध्यन्तः। स्तोत्राणि तु ज्योतिष्टोमादेव ग्राह्याणि, न द्वादशाहात्। ८।३।४-५, * अग्निष्टोमस्य समाप्तिः सूर्यास्तमयात् प्रागेव। ६।५।१४. * अग्निष्टोमस्य 'सौम्यस्याध्वरस्य यज्ञक्रतोः सप्तदश ऋत्विजः' इति कर्तॄणां नियमविधिः, न तु अनुवादः। **भा.**४।२।९।२३-२४, * 'तस्य (अग्निष्टोमस्य) एकशतं प्रयाजानुयाजाः, न च समिष्टयजूंषि जुहोति, प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति। ११।१।७।३५ पृ. २११०, * 'तस्य (अग्निष्टोमस्य) नवतिशतं (१९०) स्तोत्रीयाः' इति श्रूयते। अग्निष्टोमस्य हि भवन्ति नवतिशतं स्तोत्रीयाः। कथं ? त्रिवृत् बहिष्पवमानं, पञ्चदशान्याज्यानि, तानि चत्वारि, सा एकोनसप्ततिः। पञ्चदशो माध्यंदिनः पवमानः, तेन चतुरशीतिः। सप्तदशानि पृष्ठानि, तानि चत्वारि, सा अष्टपष्टिः। चतुरशीत्या सह द्विपञ्चाशाच्छतं (१५२) सप्तदश आर्भवः पवमानः, तेन षष्ठ्यधिकं शतं नव च। एकविंशं यज्ञायज्ञीयं इति तदेतन्नवतिशतं अग्निष्टोमस्य। ५।३।१३।३८. * **अग्निष्टोमे** अग्निष्टोमस्तोत्रं नाम यज्ञायज्ञीयसामसाध्यं द्वादशं स्तोत्रम्। तेन स्तोत्रेणायं प्रकृतिरूपो यज्ञः संतिष्ठते। **वि.** १०।३।५, * अग्निष्टोमे अधिषवणफलकसंतर्दनस्य बाधः श्रूयते 'हनू वा एते यज्ञस्य, यदधिषवणे, न संतृणत्ति, असंतृण्णे हि हनू' इति। ३।३।१६. * अग्निष्टोमे एव 'विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोमे' इति वचनेन अतिग्राह्या विधीयन्ते। **संकर्ष.** ३।३।२. * अग्निष्टोमे चयनं कर्तुं शक्यते 'अथातोऽग्निमग्निष्टोमेनैवानु यजति' इति वचनात्। **भा.** १०।५।२३।७८. * अग्निष्टोमे तृतीयसवने आर्भवपवमानस्योपरि यज्ञायज्ञीयं साम गीयते। तेन साम्ना अग्निष्टोमस्य समाप्तिः। अत एव यज्ञायज्ञीयं साम 'अग्निष्टोमसाम' इत्युच्यते। **वि.** २।२।१२, * अग्निष्टोमे त्रिवृदादयश्चत्वारः स्तोमा विद्यन्ते, त्रिवृत् पञ्चदशः सप्तदशः एकविंशश्चेति। ५।३।१५, * अग्निष्टोमे द्वादश स्तोत्राणि प्रातःसवने, बहिष्पव-

मानमेकं, आज्यस्तोत्राणि च चत्वारि । माध्यंदिने माध्यंदिनपवमानः नाम एकं, पृष्ठस्तोत्राणि च चत्वारि । तृतीयसवने आर्भवपवमानः नाम एकं, यज्ञायज्ञीयसामसाध्यं अग्निष्टोमस्तोत्रं द्वितीयम् । संकलनेन द्वादश । ८।३।५. * अग्निष्टोमे 'पञ्चदशाज्यानि भवन्ति, पञ्चदशो माध्यंदिनः पवमानः, सप्तदशानि पृष्ठानि, सप्तदश आर्भवः, एकविंशमग्निष्टोमसाम' । **जैब्रा.** १।२५१. * अग्निष्टोमे पशुत्रयस्य तन्त्रभूतो यूपः अग्नीषोमीयपश्वर्थत्वेन पूर्वेद्युः संमितो भवति । **संकर्ष.** १।४।१९ (१७). * अग्निष्टोमे पशुधर्माः उपाकरणं, उपानयनं, अक्ष्णया बन्धः, यूपे नियोजनं, नयनं, संज्ञपनं, विशसनं इत्येवमादयः औपवसथ्येऽहनि पठिताः अग्नीषोमीयस्यैव । सवनीये अनुबन्ध्यायां च अतिदेशेन स्युः । **भा.** ३।६।७।१८–२७. * अग्निष्टोमे प्रकृतौ प्रातःसवने बहिष्पवमानस्य अविवृद्धस्तोमो भवति । **वि.** १०।५।७, * अग्निष्टोमे प्रथमोदितस्य ऐन्द्रवायवस्य, पश्चात् उक्तानां मैत्रावरुणादीनां च समुच्चयः । १०।४।३. * अग्निष्टोमे 'प्रहृत्य परिधीन् जुहोति हारियोजनं' एतस्मिन् काले इति लक्षणं परिधिप्रहरणम् । **भा.** ११।३।१५।४८. * अग्निष्टोमे बहिष्पवमाने स्तोमविवृद्धौ न सामान्तरागमः, किंतु ऋगागम एव । **वि.** १०।५।१०, * अग्निष्टोमे माध्यंदिने सवने पञ्च स्तोत्राणि । एकं माध्यंदिनं पवमानं, चत्वारि पृष्ठस्तोत्राणि चेति । ८।३।५, * अग्निष्टोमे माध्यंदिनपवमानस्य त्रयस्तृचाः । गायत्रीछन्दस्कः 'उच्चा ते जात०' इति । बृहतीछन्दस्कः 'पुनानः सोम०' इति । त्रिष्टुप्—छन्दस्कः 'प्र तु द्रव०' इति । 'त्रिच्छन्दा आवापो माध्यंदिनः पवमानः' । १०।५।२. * अग्निष्टोमे 'याज्यार्धर्चान्ते वसां जुहोति' इति श्रुतम् । तेन स्वयाज्यायाः पूर्वार्धर्चान्ते वसा हुता भवति । **भा.** ११।४।९।३३. * अग्निष्टोमे राजन्यस्य, द्विरात्रादौ च (सर्वेषां) षोडशी ग्राह्यः । **वि.** ११।५।९, * अग्निष्टोमे षोडशी उक्थ्यग्रहणोत्तरं आग्रयणपात्रात् ग्राह्यः । १०।५।१०, * अग्निष्टोमे षोडशी ग्रहो गृहीतश्चेत् सस्तुतशस्त्रयुत एव । तेन पूर्वसंस्थात्वहानिः

अन्यसंस्थात्वं च अभ्युपेतव्यम् । १०।५।१२, * अग्निष्टोमे षोडशी राजन्यस्य तृतीयसवने एव ग्राह्यो न तु प्रातर्माध्यंदिनसवनयोः । १०।५।११. * अग्निष्टोमे सवनीयः क्रतुपशुः एक एव 'आग्नेयः पशुरग्निष्टोमे आलभ्यः' इत्युक्तत्वात् । **भा.** ३।६।७।१८, * अग्निष्टोमे सवनीयपश्वङ्गप्रचारः आर्भवपवमानकाले । 'प्रकृतौ आर्भवकाले प्रचारो वृत्तः' । ११।३।१५।४६. * अग्निष्टोमे स्तोत्रोपाकरणम् । 'उपावर्तध्वं इति बर्हिर्भ्यां स्तोत्रमुपाकरोति' । स्तोत्रं माहेन्द्रम् । 'उपावर्तध्वं' इति मन्त्रः । उपाकरणं प्रारम्भसूचना । **वि.** १०।४।२ वर्णकं २. * अग्निष्टोमे होतुर्वरणं 'अग्निर्होता स मे होता होतस्त्वं मे होताऽसि इति होतारं वृणीते' इत्युक्तम् । **भा.** १२।१।१८।३५, * तावानेव हि तत्र (संस्थासु) सोमः 'दश मुष्टीर्मिमीते' इति वचनात्, यावानेवाग्निष्टोमे सोमः, तावानेव उक्थ्यादिष्वपि संस्थासु । उक्थ्यादिष्वपि दशमुष्टिरेव सोमो ग्रहीतव्यः । त्रिपर्वा इति च पर्वसंख्यानियमात् न शक्यो बहुपर्वा ग्रहीतुम् । विप्रकृष्टपर्वा (दीर्घपर्वा) ग्रहीष्यते । अपि च तृतीये सवने अंशुरेकोऽभिषूयते, तमनेकपर्वाणं स्थूलपर्वाणं च ग्रहीष्यति । ३।३।११।२८,३०–३१, * त्रिवृदग्निष्टोमे त्रिवृत् स्तोमः कृत्स्ने क्रतौ भवति । १०।६।६।१५. * 'यत् अग्निमस्तुवन् (यज्ञायज्ञीये) साऽस्य **अग्निष्टोमता**' । जैब्रा. १।२४०. * **ज्योतिष्टोमप्रकरणं** अग्निष्टोमासाधारणं, नोक्थ्यादिसाधारणम् । **वि.** ३।६।१६, * **अग्निष्टोमप्रथमप्रयोगे** अनूचानव्यतिरिक्तकर्तृके प्रवर्ग्यस्य निषेधः । ३।३।१७, * '**अग्निष्टोममुख्यानि**' इति चतुर्षु अहःसु आद्यस्यैकस्यैव अग्निष्टोमत्वं विधीयते जनकसप्तरात्रे । ८।३।२. * **अग्निष्टोमशब्दः** आग्निमारुतशस्त्रात् पूर्वभाविस्तोत्रविशेषे (पूर्वभागात्मके स्तोत्रांशविशेषे) वर्तते । **कु.** ३।६।१६।४१. * अग्निष्टोमशब्दस्य संस्थायामेव मुख्यत्वात् प्रयोगपरत्वानभ्युपगमात् । **सोम.** ३।३।१२. * **अग्निष्टोमसंस्थं** ज्योतिष्टोमं प्रकृत्यैव दीक्षणीयादयो धर्माः उक्ताः, न सर्वसंस्थम् । **भा.** ३।६।१६।४१. * **अग्निष्टोमसंस्थैव** नित्या क्रतोरङ्गं अन्याः काम्याः ।

न चात्र समुच्चयः संभवति । संस्थितस्य संस्थान्तरायोगात् । तत्र क्रत्वर्थया अग्निष्टोमसंस्थया पुरुषार्थानामुक्थ्यादिसंस्थानां ऐच्छिको विकल्पः । **बाल.** पृ. १६३. * अग्निष्टोमसंस्था चास्य ( ज्योतिष्टोमस्य ) निजमङ्गम् । **वा.** ३।६।१६।४१ पृ. १०६१, * अग्निष्टोमसंस्था ज्योतिष्टोमस्याविनाभूता । यदा ज्योतिष्टोमाभ्यासस्तदा अवश्यंभाविनी । ५।३।१३।३७. * **अग्निष्टोमसंस्थां** अभिप्रेत्यैव सकलधर्मविधानम् । **भाट्ट.** ५।३।१३, * अतिरात्रप्रथमाहारोत्तरमपि अग्निष्टोमसंस्थां कृत्वैव उद्भिदादयः कार्याः । ५।३।१३, * **अग्निष्टोमसंस्थाके** एव ज्योतिष्टोमे नवतिशतं स्तोत्रीयाः न संस्थान्तरयुक्ते । ५।३।१३. * **अग्निष्टोमसंस्थे** उक्थ्यसंस्थे च षोडशी ग्रहीतव्य इति 'अग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युक्थ्ये' इति वचनेनोच्यते । **भा.** १०।५।१२।४९. * अग्निष्टोमसंस्थे ज्योतिष्टोमे त्रयः पशव आम्नाताः अग्नीषोमीयः, सवनीयः, अनुबन्ध्यश्चेति । **वा.** ३।६।७।१८. * **अग्निष्टोमसाम** प्रकृत्य ' धिष्ण्यान् ज्योतिष्मतः कुर्यात् ' इति विधेः चतुर्थविहरणसिद्धिः । **संकर्ष.** ३।२।१६. * **अग्निष्टोमानुष्ठानात्** प्राक् एकस्तोमका अनेकस्तोमका वा सोमविकृतिरूपाः क्रतवो नानुष्ठातुं शक्यन्ते । **वि.** ५।३।१५.

**अग्निष्टोमविकाराणामग्निष्टोमोत्तरकालमनुष्ठानम् ॥**

**अथान्येनेति संस्थानां वादः संनिधानात् । ५।३।१४।३९ ॥**

**भाष्यं**— ' अथान्येन ' इति किं संस्थानां वादः, अथ ज्योतिष्टोमविकाराणामेव एकाहादीनां इति (संदेहः) । किं तावत् प्राप्तं ? संस्थानामिति । कुतः ? संनिधानात् । संनिहिताः तस्मिन् प्रकरणे संस्थाः । तासां वादः प्रकरणानुग्रहाय ।

**टुप्**— अथान्येनेति संस्थाः । पूर्वप्रकृतादन्यत् यत् संनिहितं, तदभिधीयते सर्वनाम्ना । अग्निष्टोमस्य च उक्थ्यादयः संनिहिताः । तस्मात् अग्निष्टोमसंस्थं ज्योतिष्टोमं कृत्वा उक्थ्यादयः कर्तव्याः । गवादीनाम-नियमः [illegible]

**तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते । ४० ॥**

**भाष्यं**— तत्प्रकृतेर्वा गवादेर्वादः स्यात् । आपत्तिविहारौ हि प्रकृतिविकारमात्रेषु उपपद्येते, न तुल्यशब्देष्वेव ज्योतिष्टोमशब्दकेषु । नैवमभिसंबन्धः क्रियते, ' अथान्येन ज्योतिष्टोमशब्दकेन ' इति । कथं तर्हि ? अन्येन इति प्रकृतात् इतरत् ब्रवीति । न स ज्योतिष्टोमेन विशिष्यते । नहि शब्दस्यार्थः समीपगतेन कृतप्रयोजनेन एकदेशे अवस्थापयितव्यो भवति । नहि वाक्येन श्रुतिर्बाध्यते । अथ ज्योतिष्टोमादन्येन इत्यभिसंबध्यते, ततो नतरां संस्थावादः । कथं पुनरापत्तिविहारौ ? ' प्रजापतिर्वा अग्निष्टोमः, स उत्तरानेकाहानसृजत । ते सृष्टास्तमब्रुवन् । न वै स्वेनात्मना प्रभवामः इति । तेभ्यः स्वातन्त्र्यं प्रायच्छत् । तथा च ते प्राभवन् । तद्यथा वा इदमग्नेर्जातादन्येऽग्नयो विह्रियन्ते, एवं वा एतस्माद्यज्ञादन्ये यज्ञक्रतवो विह्रियन्ते । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते, स तं दीपयति । यः पञ्चदशं स तं, यः सप्तदशं स तं, य एकविंशं स तम् । इत्येवमाहुरेको यज्ञ इति । एते वै सर्वे ज्योतिष्टोमा भवन्ति ' इति । एवं वैकृतानां संकीर्तनात् तेषामेव वाद इति गम्यते । कथं ? ' अथान्येन ' इति योऽसावन्यः, तत्र प्राकृतान् धर्मान् विहृतान् दर्शयति । अतो मन्यामहे यस्य यतो विहृतिः, तेनान्येन इति ।

**टुप्**— अन्यशब्दः प्रकृतादन्यवाचकः । तस्य न विशेषो गम्यते, किमुक्थ्यादय उक्ताः, उत गवादय इति । अतो विशेषानवगमात् सर्वानभिधत्ते । विशेष्यमाणो वा ज्योतिष्टोमो नान्येनोक्थ्यादिना इति विशेष्येत । तत्रायं ' य एतेन ' इत्यस्मिन् निराकाङ्क्षीभूतः कृतप्रयोजनः किमर्थं अन्यसंबन्धार्थमुच्चार्येत ? यद्यपि विशेषणत्वेन उच्चार्येत, तथापि ज्योतिष्टोमादन्येन इत्यन्ययोगे पञ्चमी स्यात् । ज्योतिष्टोमाच्चान्ये गवादयः । यदि ज्योतिष्टोमादग्निष्टोमसंस्थादित्युच्येत, वाक्यं भिद्येत, ज्योतिष्टोमादन्येन तत्र अग्निष्टोमसंस्थादिति । अत उक्थ्यादयो गवादयश्च अन्यशब्दाभिधेयाः ।

( अथ उत्सूत्रभाष्यं अधिकरणान्तरम् ) 'य एतेनानिष्ट्वाऽथान्येन' इति द्वावपीमौ पदार्थौ विचारितौ । इदानीं वाक्यार्थो विचार्यते । किमग्निष्टोमस्य प्राथम्यं नाम धर्मो विधीयते, उत उत्तरेषां प्राथम्यप्रतिषेधः, अथवा अन्यः प्रकारः। किं तावत् प्राप्तं ? ज्योतिष्टोमस्य प्राथम्यं विधीयते प्रकरणात्, इतरेषां न प्राथम्यप्रतिषेधः । तन्न । एवं हि ज्योतिष्टोमस्य द्वितीयादौ प्रयोगे प्राथम्याभावात् अफलता प्रसज्येत । नापि अन्येषां प्राथम्यप्रतिषेधः । तद्वाचकस्य शब्दस्याभावात् । तस्मादन्यः प्रकारः । कः पुनरसौ ? 'य एतेनानिष्ट्वा' इति क्त्वाशब्दस्य पूर्वकालवाचित्वात् पूर्वमग्निष्टोमस्य कर्तव्यतामाह, पश्चात् गवादीनाम्। तेन तत्प्राथम्यं गवादीनामङ्गं अनेन वाक्येन चोद्यते, वाक्यान्तरेण स्वर्गः, अतो द्वितीयादिप्रयोगे फलं भविष्यतीत्यदोषः इति ।

**प्रशंसा वा विहरणाभावात् । ४१ ॥**

**भाष्यं**— यद्येवं न तर्हि तद्विकारणां वादः । तत्र न विहारो नापत्तिः । प्रकरणादिभिः ते धर्मा ज्योतिष्टोमस्य । यदि ते गवादिषु विह्रियेरन्, प्रकरणादीनि बाध्येरन् । तदा आपत्तिः प्रत्यक्षविरुद्धा । प्रशंसा त्वेषा आपत्तिविहाराभावात् ।

**विधिप्रत्ययाद्वा नह्यकस्मात् प्रशंसा स्यात् । ४२॥**

**भाष्यं**—अत्रोच्यते । यद्यपि आपत्तिविहारौ न विधीयेते तथापि चोदकेन विधीयेते । ये प्रकृतौ कर्तव्यास्ते चोदकवचनात् विकृतावपि कर्तव्या गम्यन्ते । तदा आपत्तिविहाराविव यत्र भवतः, तेनान्येन इति गम्यते । नहि अकस्मात् प्रशंसा स्यात् । योऽसावन्यः स कथमनया प्रशंसया लक्ष्येत, इत्येवमर्था प्रशंसा ।

शा—'संस्था एवान्यशब्देन कथ्यन्ते प्रकृता हि ताः।' ( यद्यपि संस्थानां स्वाश्रयज्योतिष्टोमसमानविध्यभावात् क्रतोरेव प्रकरणं, न संस्थानां, तथापि संनिधिलक्षणमेवात्र प्रकरणं पूर्वपक्षिणोऽभिमतं, तस्यैव 'अनेन' इति सर्वनाम्ना परामर्शे प्रयोजकत्वात् । ततश्च 'य एतेन' इति पूर्वप्रकृताग्निष्टोमस्य उक्थ्यादय एव संनिहिताः, न क्रत्वन्तराणि, इति पूर्वप्रकृतादितरत् यत् संनिहितं, तद्वाचिना अन्यशब्देन संस्थानामेव निर्देशः इति **पूर्वपक्षः । सिद्धान्तमाह**– ) 'न त्वेवं स्यान्न संस्थानामस्ति प्रकरणं यतः ॥ ज्योतिष्टोमाधिकारोऽयं वाक्यशेषे च कीर्तनात् । यज्ञानामिति शब्देन सर्वे संनिहिता हि ते ॥' ( ननु ज्योतिष्टोमशब्देन अन्यशब्दान्वये अग्निष्टोमान्येन ज्योतिष्टोमेन इत्येवं उक्थ्यादिसंस्थज्योतिष्टोमस्यैव निर्देशः स्यात्, न तु क्रत्वन्तराणां इत्यत आह– **ज्योतिष्टोमेति** । अयं भावः, ज्योतिष्टोमशब्दोऽयं एतेनेत्यत्रान्वयेन निराकाङ्क्षत्वात् नान्यशब्देन संबध्यते, येन उक्तरीत्या विशेषणविशेष्यभावः स्यात्, किंतु कस्माद्न्येन ? इत्यपेक्षायां प्रकृताग्निष्टोमादन्येन इत्येवं संनिहितो ज्योतिष्टोमः प्रतियोगितया संबध्यते । ततश्च अग्निष्टोमसंस्थात् ज्योतिष्टोमात् अन्यत्वं सर्वेषामस्ति इति सर्वनिर्देश एवायं इति । **न चैवं** सति संस्थानां यागत्वाभावात् यजिसमानाधिकृतेनान्यशब्देन कथं निर्देशः इति **वाच्यम्।** संस्थातद्वतोरनतिभेदात् यजिसामानाधिकरण्योपपत्तेः । अत एवोक्तं **तन्त्ररत्ने** 'यज्ञानामग्निष्टोमोक्थ्यषोडश्यतिरात्राप्तोर्यामाहीनसत्राणां मध्ये एष प्रथमः प्रयोज्यः' इति । दृष्टश्च 'प्रजापतिर्यज्ञानसृजत' 'यज्ञं व्याख्यास्यामः' इत्यादि **श्रुतिकल्पसूत्रयोः** संस्थासाधारणो यज्ञशब्दप्रयोगः इति । अत्र **आचार्यैः** ( वार्तिककारैः ) किमनेन अग्निष्टोमस्य प्राथम्यं विधीयते, उत यज्ञान्तराणां अग्निष्टोमोत्तरत्वं इति संदिह्य प्रकरणानुग्रहाय अग्निष्टोमप्राथम्यविधिं प्रापय्य 'तस्मादेतेनेष्ट्वा अन्येन यजेत' इति यजिपरप्रत्ययेन एतच्छब्दार्थाग्निष्टोमे प्राथम्यविधौ अत्यन्तं वाक्यं स्यात्, यज्ञान्तराणां अग्निष्टोमोत्तरकालत्वविधौ तु धात्वर्थविधेः श्रुत्यनुग्रहः । **तस्मात्** प्रकरणानादरेण अग्निष्टोमानन्तर्यं इतरेषां विधीयते । **न च** प्रकरणान्तरन्यायात्, ( २।३।११ ) यज्ञान्तराणामिह कालविधिर्न संभवति **इति शङ्क्यं,** यज्ञानां इति शब्देन यज्ञान्तराणामपि विपरिवर्तमानत्वेन अविपरिवर्तमानत्वलक्षणप्रकरणान्तरस्याभावात्, इति उत्सूत्रभाष्यं अधिकरणान्तरं वर्णितं, तत्सिद्ध्यर्थमाह– ) तस्मात् ज्योतिष्टोमान्यत्वाविशेषात् संस्थानां, एकाहाहीनसत्राणां चायमन्य-

वादः इति सर्वेषां तेषां ज्योतिष्टोमात् पश्चाद्भावोऽङ्गं अनेन वाक्येन विधीयते ।

**सोम**—पूर्वोपजीवनेन संगतिः ।

**वि**—'अन्येनेत्यत्र संस्थानामुक्तिः सर्वस्य वा, ऽग्रिमः । संनिधे,—स्तद्विकारस्य सर्वस्योक्तिर्हि वाक्यतः ॥ ' इति ।

**भाट्ट**— एतच्छब्दार्थे निरूपिते अन्यशब्दार्थो निरूप्यते । अन्यशब्दस्य पूर्वप्रकृतादितरत् यत् संनिहितं, तद्वाचित्वात् संस्थानां च संनिहितत्वेन तास्वेव अग्निष्टोमोत्तरत्वस्य विधिः, **इति प्राप्ते,** न तावत् संस्थानां प्रकरणेन संनिधानं, विकृतित्वात् । अधिकारोऽपि ज्योतिष्टोमस्यैव 'एष वाव' इत्यादिवाक्यशेषे तस्यैव संकीर्तनाच्च, यज्ञानां ज्योतिष्टोमोद्भिदादीनां मध्ये अग्निष्टोमसंस्थाक एव प्रथमं इत्युक्ते अन्येषामपि उद्भिदादीनां यज्ञपदेनोपादानाच्च । न चैवं संस्थानां अयज्ञत्वात् अग्रहणम् । तास्वपि आश्रयस्य यज्ञत्वात् । अतश्च अग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तरकालत्वविधिः । **न च** ज्योतिष्टोमे यज्ञान्तरापेक्षया प्राथम्यमेव प्रकरणानुग्रहाय विधीयतामिति **वाच्यम्** । 'एष वाव' इत्यस्यार्थवादत्वेनाविधायकत्वात् , 'अथान्येन' इत्यनेन तृतीयविधिप्रकारलिप्सया यागान्तरेष्वेव अग्निष्टोमपूर्वकालकत्वस्य तदुत्तरकालत्वसमनियतस्य विधानसंभवे प्रकरणबाधस्यादोषत्वाच्च । न च प्रकरणान्तरन्यायेन ( २।३।११ ) अत्र कर्मान्तरत्वशङ्का, 'एष वाव' इत्यनेनार्थवादेन उद्भिदादीनां यज्ञान्तराणां संनिहितत्वात् । न च तत्रैव कर्मान्तरत्वशङ्का, तस्य उत्तरकालत्वाक्षिप्तप्राथम्यस्तावकत्वेन उपादेयत्वसामानाधिकरण्येन विधेयत्वानाक्षेपकतया कर्मान्तरानाक्षेपकत्वात् । अतः सिद्धं अग्निष्टोमसंस्थाकज्योतिष्टोमान्यतद्विकारमात्रे तदुत्तरकालत्वविधिरिति ।

**न्यायबिन्दुः**— अन्यशब्देन संस्था एव प्रकृतत्वादुच्यन्ते सर्वनामत्वात् , **इति प्राप्ते,** संस्थानां अप्रकृतत्वात् वाक्यशेषस्थसर्वयज्ञानां ज्योतिष्टोमभिन्नानां यज्ञशब्देन ग्रहणं इति सिद्धान्तः ।

**मण्डन**— 'अथान्येनेत्यखिलः क्रतुः ।'

**शंकर**— 'सा च सर्वा, न संस्थैव । ' सा विकृतिः ।

## अग्निष्टोमविकाराणामेकानेकस्तोमकानामपि अग्निष्टोमोत्तरमनुष्ठानम् ॥

**एकस्तोमस्य वा क्रतुसंयोगात् । ५।३।१५।४३॥**

**भाष्यं**— 'य एतेनानिष्ट्वाऽथान्येन यजेत' इति श्रूयते । तत्र एषोऽर्थः समधिगतः, तद्विकाराणां वाद इति । अथेदानीं संदिह्यते, किं एकस्तोमकस्य क्रतोरेष वादः, उत एकस्तोमकस्यानेकस्तोमकस्य चेति । किं प्राप्तं ? एकस्तोमकस्य वादः । कुतः ? क्रतुसंयोगात् । एकस्तोमे क्रतुसंयोगो भवति 'यो वै त्रिवृत् अन्यं यज्ञक्रतुमापद्यते, स तं दीपयति । यः पञ्चदशः, स तम् । यः सप्तदशः स तम् । य एकविंशः स तम्' ( इति ) त्रिवृदादयः एकस्तोमकाः । तस्मात् तेषां वाद इति ।

**सर्वेषां वा चोदनाऽविशेषात् प्रशंसा स्तोमानाम् । ४४ ॥**

**भाष्यं**— सर्वेषां वैष वादः , एकस्तोमकानामनेकस्तोमकानां च । कुतः ? अविशेषवचनात् अन्यशब्दस्य । ननु एकस्तोमकाः क्रतवः संकीर्त्यन्ते, सत्यं संकीर्त्यन्ते, प्रशंसार्थं, न विशेषार्थम् । कः पुनः प्रशंसार्थः ? 'यो वै त्रिवृत् अन्यं यज्ञक्रतुमापद्यते, स तं दीपयति' चोदकप्राप्ता धर्माः अभ्यस्ताः विकृतौ सुष्ठु प्रतिपद्यन्ते ।

**शा**— पूर्वाक्षेपेणेदमारभ्यते । न सर्वनिर्देशः, किंतु एकस्तोमानां त्रिवृदग्निष्टोमः, पञ्चदश उक्थ्यः, एकविंशः षोडशी इत्यादीनामेव । कुतः ? वाक्यशेषात् 'यो वै त्रिवृत् अन्यं यज्ञक्रतुमापद्यते' इत्यादेः अविशेषश्रवणं वाक्यशेषेण विशेषे अवस्थाप्यते ( 'यो वै त्रिवृदाख्यः स्तोमः प्रकृतज्योतिष्टोमादन्यं यज्ञक्रतुं प्राप्नोति स तं दीपयति' इति वाक्यशेषे त्रिवृदादेः दीपकत्वश्रवणात् कृत्स्नप्राप्तिं विना कृत्स्नदीपकत्वासंभवात् त्रिवृदादेः कृत्स्नक्रतुव्याप्त्यवगमात् वाक्यशेषे एकस्तोमकानामेव क्रतूनां निर्देशः इति पूर्वः पक्षः । सिद्धान्तमाह—)' न त्वेवमन्यशब्देन ह्यविशेषः प्रतीयते । ' ( 'अक्ताः शर्कराः' इत्यत्र एकेनैवाञ्जनसिद्धेः केनाञ्जनं इति संदेहात् युक्तं वाक्यशेषात् विशेषपरत्वम् । इह तु न तथा संदेहः, अन्यशब्दस्य सर्वपरत्वेऽपि विरोधाभावात् । ज्योतिष्टोमस्य प्रथममनुष्ठाने तत्र अभ्यस्ताः

त्रिवृदादयः पश्चात् क्रत्वन्तरे अनुष्ठीयमाना अभ्यस्तत्वात् क्रत्वन्तरं दीपयन्ति प्रकाशयन्ति, इतरथा क्रत्वन्तरे एव त्रिवृदादीनां प्रथमानुष्ठानापत्त्या अनभ्यस्तत्वात् क्लेशेन अनुष्ठेयैस्तैः क्रत्वन्तरदीप्तिर्न स्यात्। एवं ज्योतिष्टोमप्राथम्यस्तुत्यर्थे प्रवृत्ते वाक्यशेषे त्रिवृदादीनां क्रत्वन्तरदीपकत्वं ज्योतिष्टोमे अभ्यस्तत्वनिबन्धनं कीर्त्यते, न तु आलोकवत् प्रकाशकत्वम्। ततश्च एकदेशसंबन्धिनामपि इतरेषां ज्योतिष्टोमाभ्यस्तत्वविशेषात् स्वसंबन्धिक्रत्वन्तरदीपकत्वमुपपद्यते इति वाक्यशेषस्य सर्वसाधारण्येनोपपत्तेः, न ततो विशेषणपरत्वं इत्याह—) 'वाक्यशेषस्तु संयोगमात्रेणैवोपपद्यते ॥' 'यो वै त्रिवृत् अन्यं यज्ञक्रतुमापद्यते स तं दीपयति' इति विनाऽपि व्याप्त्या संयोगमात्रेण त्रिवृदादीनां अनेकस्तोमकेष्वपि दीपकत्वं संभवति इत्यविशेषात् सर्ववाद इति स्थितम्।

**सोम**— सूत्रे क्रतुसंयोगात् एकस्यैव त्रिवृदादेः वाक्यशेषे क्रतुसंयोगादित्यर्थः।

**वि**— 'एकस्तोमेऽन्यशब्दः स्याद् बहुस्तोमेऽपि वा, ऽग्रिमः। त्रिवृदन्येत्यर्थवादात्, नान्यमात्रस्य संभवात्॥'

**भाट्ट— ननु** 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति......' इति वाक्यशेषे एकस्तोमकानामेव संकीर्तनात् तेषामेवान्यशब्देन ग्रहणात् तत्रैवोत्तरकालत्वविधिः अक्ताधिकरणन्यायेनोचितः, **इति चेन्न**, वाक्यशेषस्यान्यथाप्युपपत्तेः। यो हि त्रिवृत् स्तोमः प्रकृतौ अनुष्ठितः चोदकेनान्यं यज्ञक्रतुमापद्यते प्राप्नोति, स स्तोमः, तं यज्ञक्रतुं अभ्यस्तत्वात् दीपयति इति तस्यार्थः। संभवति च स्तोमान्तरसत्त्वेऽपि त्रिवृदादेरपि सत्त्वात् अनेकस्तोमकक्रतुदीपकत्वं, पुत्रान्तरसत्त्वेऽपि एकस्य गुणवत्त्वविवक्षया पितृदीपकत्ववत्। वस्तुतस्तु गुणविशेषस्य प्रकृते अविद्यमानत्वात् त्रिणवादिमात्रस्तोमकक्रतौ च त्रिवृदादेरभावेन दीपकत्वानुपपत्तेः, वाक्यशेषस्य क्रतुविशेषोपस्थापकत्वेऽपि, विधौ प्रतिप्रधानावृत्तिन्यायेन सर्वविषयत्वप्रतीतेः संदेहाभावेन अक्ताधिकरणन्यायाभावात् (१।४।१९ भाट्ट) न वाक्यशेषस्य विधिसंकोचकत्वकल्पनाऽवसरः। अतः त्रिवृदादिग्रहणं ज्योतिष्टोमीयाङ्गमात्रोपलक्षणं, तदङ्गमात्रस्य तद्विकृतौ अभ्यस्तत्वेन तद्विकृतिदीपकत्वात् तदुत्तरकालत्वस्तुत्युपपत्तेः। अत एव अन्यपदेन न सौर्यादिग्रहणं, तत्र सौमिकाङ्गाभ्यासाभावात्। अतः तद्विकृतिमात्रस्य तदुत्तरकालता इति सिद्धम्।

**न्यायबिन्दुः**— न सर्वयज्ञग्रहणं, किंतु त्रिवृदाद्येकैकस्तोमकानामेव 'यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते' इत्यादिवाक्यशेषात्, **इति प्राप्ते**, 'यो वै त्रिवृत्' इत्यादेः अनेकस्तोमेष्वपि संभवात् सर्ववाद एवेति सिद्धान्तः।

**मण्डन**— 'स चैकानेकशःस्तोमः।'

**शंकर**— 'नैकस्तोमग्रहोऽत्र च।'

**अग्निष्टोमस्य यज्ञेषु प्राथम्यम्॥**

**य एतेनेत्यग्निष्टोमः प्रकरणात्।५।३।१३।३७॥**

**भाष्यं**— ज्योतिष्टोमे श्रूयते 'एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वाऽथान्येन यजेत, गर्तपत्यमेव तज्जायते, प्र वा मीयते' इति। तत्र संदेहः, 'य एतेन' इति कस्यायं वादः इति। प्रश्नेनैवोपक्रमः। उच्यते। 'य एतेन' इत्यग्निष्टोमस्य वादः। कुतः? प्रकरणात्। तस्य हि प्रकरणे भवत्येतत् वचनम्। प्रकृतवाचीनि च सर्वनामानि भवन्ति।

**टुप्**— (लिखितात्) 'य एतेनानिष्ट्वा' इति सर्वनाम्ना प्रकृतः परामृश्यते। प्रकृतश्च ज्योतिष्टोमः। तस्य चाविनाभूता अग्निष्टोमसंस्था, यदा ज्योतिष्टोमाभ्यासः तदा सा अवश्यंभाविनी। उक्थ्यादयः काम्याः। ततो नित्यत्वादग्निष्टोमः परामृश्यते।

**लिङ्गाच्च। ३८॥**

**भाष्यं**—लिङ्गमपि भवति। तत्र श्रूयते 'तस्य नवतिशतं स्तोत्रीयाः' इति। अग्निष्टोमस्य हि भवन्ति नवतिशतं स्तोत्रीयाः। कथं? त्रिवृद् बहिष्पवमानं, पञ्चदशानि आज्यानि, तानि चत्वारि, सा एकोनसप्ततिः। पञ्चदशो माध्यंदिनः पवमानः, तेन चतुरशीतिः। सप्तदशानि पृष्ठानि, तानि चत्वारि, सा अष्टषष्टिः, चतुरशीत्या सह द्विपञ्चाशच्छतम् (१५२)। सप्तदश आर्भवः पवमानः, तेन षष्ट्यधिकं शतं नव च (१६९), एकविंशं यज्ञायज्ञीयमिति। तदेतत् नवतिशतं (१९०) अग्निष्टोमस्य। तस्मादपि अग्निष्टोमः।

**शा**— क्रत्वन्तराणां नास्ति क्रमनियमः इति स्थितम्। क्व चिद्वचनबलात् पौर्वापर्यं भवति (इत्युच्यते) 'तत्राविशेषतः सर्वसंस्थोऽनेन (य एतेन इति सर्वनाम्ना) विमृश्यते।' (इति पूर्वपक्षः)। 'अग्निष्टोमस्तु नित्यत्वात् संस्था ह्यागन्तवो यतः॥' ज्योतिष्टोमस्य हि अग्निष्टोमसंस्था नैजं रूपं इति तादृश एव प्रतीयते, न संस्थान्तरयुक्तः, तेषामागन्तुत्वात्। अपि च 'एतेन' इति करणनिर्देशात् ज्योतिष्टोमकरणिका भावना इष्ट्वा इति शब्देन कथ्यते। (ननु संस्थासु आश्रयमात्रस्यापि ज्योतिष्टोमस्य स्वफलभावनाकरणत्वं न हीयते, सर्वत्र परप्रयुक्तस्य कर्मणः काम्यगुणेषु आश्रयत्वात्। तथा च संस्थान्तरयोगेऽपि न करणनिर्देशानुपपत्तिः इत्यत आह–) न च संस्थानां क्रतुभावनान्तर्भावः फलार्थत्वात्। अग्निष्टोमसंस्था तु क्रतुभावनान्तर्गता इति तत्संस्थस्यैव परामर्शः (इतिकर्तव्यतायुक्तस्य करणत्वात् यत्संस्था इतिकर्तव्यतान्तर्गता, तत्संस्थस्यैव करणनिर्देशाग्रहणं न्याय्यमिति भावः)।

**सोम**— एतच्छब्दार्थविचारस्य पूर्वापवादव्यवस्थापनपर्यवसानात् संगतिः। **सूत्रार्थस्तु**— एतेनेति अग्निष्टोमसंस्था निर्दिश्यते तत्संस्थायुक्तस्यैव प्रकरणित्वात् इति।

**वि**—'एतेनानिष्ट्वेति सर्वसंस्थोऽग्निष्टोम एव वा।, अविशेषात् सर्वसंस्थो ज्योतिष्टोमोऽत्र वर्ण्यताम्॥, अग्निष्टोमप्रक्रियाऽत्र तस्य प्रथमयज्ञतः। तेनेष्ट्वाऽन्येन यष्टव्यं संस्था आगन्तवोऽपराः॥'

**भाट्ट**— स्थिते भिन्नप्रयोगपरिगृहीतानां क्रमानियमे, क्व चित् वचनात् पौर्वापर्यं, यथा 'एष वाव...गर्तपत्यमेव तद्भवति' इति। तत्र एतच्छब्दो यद्यपि ज्योतिष्टोममात्रपरामर्शी, तथापि न सर्वसंस्थस्य ग्रहणं, अपि तु अग्निष्टोमसंस्थस्यैव, संस्थान्तराणां अन्यशब्देनाभिधानस्य अग्निमाधिकरणे वक्ष्यमाणत्वेन तास्वपि ज्योतिष्टोमोत्तरत्वस्य आवश्यकत्वात्, परिशेषादेव अग्निष्टोमसंस्थस्य पूर्वं करणसिद्धेः। अत एव अतिरात्रसंस्थाकस्य 'अतिरात्रमेके प्रथममाहरन्ति' इति वचनादेव प्रथमं करणम्। अस्तु वा अग्निष्टोमसंस्थाकज्योतिष्टोमपरामर्शकत्वमेव एतच्छब्दस्य अग्निष्टोमसंस्थामभिप्रेत्यैव ज्योतिष्टोमे सकलधर्मविधानात्। अत एव 'तस्य नवतिशतं स्तोत्रीयाः' इत्युपपद्यते। अग्निष्टोमसंस्थाकज्योतिष्टोमे एव हि तावत्यः स्तोत्रीयाः, न संस्थान्तरयुक्ते। एवं च अतिरात्रप्रथमाहारोत्तरमपि अग्निष्टोमसंस्थां कृत्वैव उद्भिदादयः कार्याः इति द्रष्टव्यम्।

**न्यायबिन्दुः**— 'एष वाव...अन्येन यजेत' इत्यत्र एतच्छब्देन सर्वसंस्थज्योतिष्टोमानन्तर्यमविशेषात्, **इति प्राप्ते**, अग्निष्टोमसंस्थायाः नित्यत्वात् तत्संस्थस्यैव परामर्श इति सिद्धान्तः।

**मण्डन**— 'अग्निष्टोमस्त्वेतदर्थः।' एतदर्थः 'एतेन' इति एतत्पदार्थः।

**शंकर**—'अग्निष्टोमविकृतिः परा।' अग्निष्टोमात् परा परस्तात् कर्तव्या।

**अग्निष्टोमे पशुत्रयार्थः स्वरुस्तन्त्रम्॥**

**स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वात्।** ११।३।५।८॥

**भाष्यं**—अस्ति स्वरुः 'यूपस्य स्वरुं करोति' इति श्रुतः। स किं सर्वपशूनां तन्त्रं भेदेन वेति। किं प्राप्तम्? स्वरुः खलु तन्त्रेतन्त्रेऽपवृज्येत, अस्वकालत्वात्। नास्य स्वः कालः उत्पत्तौ। कर्मकालेऽयमुपादीयते, 'स्वरुणा स्वधितिना वा पशुं समनक्ति' इति। यस्य पशोः समञ्जनकाले उपात्तस्तदर्थोऽसाविति गृह्यते विशेषः। तस्माद्भेदः। ननु 'यूपस्य स्वरुं करोति' इति स्वकालैवास्योत्पत्तिः। न खल्वेषाऽपि अन्तःप्रयोगैव। अपि च कार्यवचनोऽत्र स्वरुशब्दः। स्वरुं करोति, स्वरुकार्यं करोतीति। यत्कारणं, स्वरुर्न ज्ञायते, स्वरुकार्यं तु ज्ञायते पशोरञ्जनम्। ननु क्रत्वन्ते स्वरोः प्रतिपत्तिर्दृश्यते, 'संस्थिते सोमे प्रस्तरं प्रहरति, स्वरुं चायज्ञवैशसाय' इति। सत्यमस्ति दर्शनं, तत्तु स्वरुमात्रस्य, न स्वरुविशेषस्य। तत्राग्नीषोमीये उपात्तस्य तन्त्रतया प्रवृत्तस्य दर्शनं सोमान्ते स्यात्। अथवा चोदकप्राप्तस्यानुबन्ध्याकालस्येति संशये, किं न्याय्यं, यदनुबन्ध्याकालस्य दर्शनं भवेत्, न तन्त्रतया प्रवृत्तस्येति। कुतः? यत उक्तो न्यायः स्वरुस्तन्त्रापवर्गः स्यादस्वकालत्वादिति। न च दर्शनं केवलं साधकं भवति। यथासंभवं तु दर्शनं कल्पितम्। तदेवं यथा प्रस्तरस्यानुबन्ध्याकालस्य दर्शनं, तद्वत् स्वरोरपि भविष्यति।

**साधारणो वाऽनुनिष्पत्तिस्तस्य साधारणत्वात् । ९ ॥**

**भाष्यं**--नैतदस्ति, प्रतितन्त्रं स्वरुभेद इति । किं तर्हि ? साधारणः स्यात् । कुतः ? यतोऽयमनुनिष्पद्यते । यूपः साधारणः सर्वपशूनाम् । तस्य साधारणत्वादयमपि साधारण एव न्याय्यः । यथैक एव यूपः सर्वपशूनां साधारणः, एवमयमपि अगृह्यमाणविशेषत्वात् साधारणो भविष्यति । नैतद्युक्तम् । अङ्गप्रतिकर्षवचनात् गृह्यमाणविशेषत्वात् यूपस्य साधारण्यमुपपद्यते, न तु स्वरोः प्रतिकर्षे किं चन वचनमस्ति, यतोऽगृह्यमाणविशेषत्वादस्यापि साधारण्यमुपपद्येत । यदेतत्, 'यूपस्य स्वरुं करोति ' इति, तदन्तःप्रयोगसंबद्धं स्वरुकार्यमङ्गनं कर्तुं, यमुपादत्ते तं यूपादिति । न चान्यस्य साधारण्येनास्य साधारण्यं युक्तम् । संभवन्ति ह्येकस्यापि बहवः शकला इति । चोदकप्रयोगवचनाश्च भिद्यमाना अन्तःप्रयोगसंबद्धमङ्गमात्मीयं प्रतितन्त्रं प्रापयन्ति, गृह्यमाणविशेषत्वादित्यतो भेद एव युक्त इति । तत्रोच्यते । यद्यप्यस्य नास्ति प्रतिकर्षवचनं प्रत्यक्षं, न चान्यस्मिन् प्रतिकृष्यमाणेऽन्यस्य प्रतिकर्ष इति, नैतद्युक्तम् । असंबद्धयोर्हि तदेवं भवति, न संबद्धयोः । अयं च शकलो यूपमनुनिष्पद्यते । तदस्य यूपप्रतिकर्षादेव सिद्धः प्रतिकर्षः । अतो यत्र यूपस्तत्रायमपि । यच्च, यूपस्य स्वरुं करोतीत्यन्तःप्रयोगसंबद्धा श्रुतिरिति, तदपि नैवम् । द्वौ हि कालौ द्रव्यस्य । एक उपादानकालः, एक उपात्तस्य प्रयोगकालः । यद्धि उपादातव्यं नहि तदनुपादाय कश्चित् प्रयोगमारभते । नह्यनुपादाय व्रीहीन्, प्रस्तुत्य प्रयोगं, व्रीहीन् मृगयति । एवंकुर्वाणस्य प्रयोग एव न संवर्तेत । अयं च यूपं छिद्यमानमनुनिष्पद्यते । अतो यत्र छेदनं तत्रायमपि । यदपि एकस्यापि यूपस्य बहवः स्वरवः संभवन्तीति, स्यादेवं, यदि प्राथम्यविशिष्टस्य नोपादानं भवेत् । विशिष्टस्य तूपादानमुक्तं, 'ततो यः प्रथमः शकलः परापतेत् स स्वरुः कार्यः ' इति वचनात् । बहूनां च प्राथम्याभावात् बहवो न संभवन्ति । तस्मादेक एव साधारणः स्वरुरिति ।

**सोमान्ते च प्रतिपत्तिदर्शनात् । १० ॥**

**भाष्यं**--सोमान्ते चास्य प्रतिपत्तिर्दृश्यते । 'संस्थिते सोमे प्रस्तरं प्रहरति, स्वरुं चायज्ञवैशसाय ' इति । तत् साधारण्ये एवोपपद्यते । तन्त्रापवर्गे ह्यग्नीषोमीयान्ते एव स्यात् । तस्मादपि साधारणः ।

**तत्कालो वा प्रस्तरवत् । ११ ॥**

**भाष्यं**--इति यदुक्तं तत्परिहर्तव्यम् ।

**न वोत्पत्तिवाक्यत्वात् प्रदेशात् प्रस्तरे तथा । १२ ॥**

**भाष्यं**--नास्यानुबन्ध्याकालस्य स्वरोः प्रहरणम् । किं कारणम् ? इदमेव प्रहरणस्योत्पत्तिवाक्यं, ' सोमान्ते प्रस्तरं प्रहरन्ति, स्वरुं चायज्ञवैशसाय ' इति । अनेन क्रमादग्नीषोमीयकालस्य प्रहरणं गम्यते । स यदि साधारणः, ततः सर्वपशूनां कृतार्थे कर्मणि अस्योत्सर्गविशेषस्याग्नौ प्रहरणस्य दर्शनमुपपद्यते । अथ तु पृथक् स्यात्, ततोऽग्नीषोमीयस्यान्ते एव दृश्येत । अथ वचनमिदं कस्मान्न भवति, अग्नीषोमीयान्ते प्राप्तस्य सोमान्ते वचनात् । नैतदेवम् । वचनेन द्वावुत्सर्गस्य विशेषौ उच्येयातां, अग्नौ च प्रहरणं, सोमान्ते च । तथा च वाक्यभेदः स्यात् । तस्मान्नैतद्वचनम् । यत्तु प्रस्तरवदिति, प्रदेशात् प्रस्तरे तथा । प्रस्तरस्य दर्शपूर्णमासयोः प्रहरणमुक्तं, ' आशीर्भिः प्रस्तरं प्रहरति ' इति । चोदकेन प्रतिपद्यु प्राप्यते । तत्रानुबन्ध्याकालस्य दर्शनं युज्यते, न स्वरुप्रहरणस्यैतदस्ति । तस्माद्विषमोऽयमुपन्यासः ।

**शा**-- प्रहरणस्यानुपात्तत्वात् शकलमात्रापेक्षं प्राथम्यं, इत्येकस्मिन् यूपे एक एव प्रथमः शकलः, इति तन्त्रत्वम् । यूपच्छेदनकाले एव चास्य व्यामोहनिवृत्त्यर्थं नाशापहारपरिहारार्थं चोपादानं कर्तव्यं इत्यगृह्यमाणविशेषत्वादपि तन्त्रत्वम् ।

**सोम**-- यूपार्थत्वाभावात् न संस्कारवत् तन्त्रता इत्युत्थितेः संगतिः । **सूत्रार्थस्तु**--स्वरुः अग्नीषोमीयतन्त्रापवर्गेऽपवर्गी स्यात् स्वकालत्वाभावादिति ।

**वि**--' स्वरुर्भिन्नोऽथवैकः स्या, दस्वकालत्वतो भिदा ।
प्राथम्यमेकशकले तन्त्रं स्यादविशेषतः ॥ '

**भाट्ट**-- यूपवत् स्वरुरपि सर्वपशूनामर्थे तन्त्रेणैव । **न च** तदुपादाने दीक्षाकालस्यानुक्तत्वाद्दैक्षानुष्ठानकाले

उपात्तस्य च गृह्यमाणविशेषत्वेन तदपवर्गे अपवर्गाद्भेद इति **वाच्यम्**। उपादानकालानुक्तावपि 'यः प्रथमः शकलः परापतेत् स स्वरुः' इति वचनेन प्रथमशकलस्यैव स्वरुत्वात्, तस्य चैकत्वेन भेदानुपपत्तेः। **न च** एकस्मिन् प्रहरणे 'यः प्रथमः' इति व्याख्यानेन प्रथमशकलानामपि नानात्वोपपत्तिरिति **वाच्यम्**। प्रहरणस्यानुपात्तत्वेन शकलान्तरापेक्षयैव प्राथम्यप्रतीतेः तदेकत्वेनैकत्वोपपत्तेः। किंच, यूपच्छेदनकाले एव व्यामोहनिवृत्त्यर्थं नाशापहारनिवृत्त्यर्थं च, स्वरोरुपादानं कर्तव्यमित्यगृह्यमाणविशेषत्वादपि तन्त्रं स्वरुः। अत एव 'संस्थिते सोमे प्रस्तरं प्रहरति स्वरुं च' इति अन्ते प्रतिपत्तिविधानमपि संगच्छते। न चायमनुबन्ध्याङ्गभूतस्य कालविधिः, न्यायेन स्वरुतन्त्रत्वावगतौ संकोचे प्रमाणाभावात्। अत एव यत्र न्यायेनैव भेदावगतिः यथा प्रस्तरे, तत्र संकोच इष्ट एव।

**न्यायबिन्दुः**— पश्वञ्जनापवर्गे स्वरोरपवर्गात् अञ्जनान्तरेऽन्यस्योपादानं, **इति प्राप्ते**, 'यः प्रथमः शकलः स स्वरुः' इति वचनान्नान्यशकलोपादानं, यूपच्छेदनकाले एव व्यामोहनिवृत्त्यर्थं तदुपादानमिति न विशेषग्रहणं, अतस्तन्त्रतैवेति सिद्धान्तः।

**मण्डन**—'स्वर्वेकत्वं स्यात् त्रयाणां पशूनाम्।'

**शंकर**—'यूपैक्ये स्वरोस्तन्त्रत्वम्।'

### ⌛ अग्निष्टोमे पशुत्रयार्थयूपसंस्काराणां तन्त्रम्॥

**संस्कारास्त्वावर्तेरन्नर्थकालत्वात्॥११।३।४।५॥**

**भाष्यं**— यूपसंस्कारा ये पशुतन्त्रमध्ये क्रियन्ते, यथा प्रोक्षणमञ्जनमुच्छ्रयणं परिव्याणं च, तेषु चिन्त्यते। किं तस्यतस्य पशोर्भेदेन कर्तव्याः, अथवा तन्त्रमिति। किं प्राप्तम्? संस्कारास्त्वावर्तेरन् यूपस्य, न यथा यूपस्तन्त्रं तथा स्युः। किं कारणम्? अर्थकालत्वात्। अर्थः पशोर्नियोजनम्। तत्काल एते संस्काराः। तत्र गृह्यते विशेषः। यस्य पशोर्नियोजनकाले कृतास्तदर्था इति। इतरयोश्च पश्वोरप्राप्तकालत्वात् तादर्थ्येन नास्ति प्रयोगः। तस्मादावर्तेरन्। यथाऽग्नेः संमार्जनम्।

**तत्कालास्तु यूपकर्मत्वात् तस्य धर्मविधानात् सर्वार्थानां च वचनादन्यकालत्वम्॥६॥**

**भाष्यं**— सत्यमावर्तेरन्, यद्येते नियोजनकाला भवेयुः। तत्कालास्त्वेते दीक्षाकालाः। कथं ज्ञायते? यूपकर्मत्वात्। नैते नियोजनार्थाः। यूपः एतैः क्रियते, यूपो नियोजनार्थः, स च दीक्षासु कर्तव्यः 'दीक्षासु यूपं छिनत्ति' इति वचनात्। संस्कारैश्च स क्रियते। तस्माद्दीक्षाकाला एवैते संस्काराः। ननु छेदनमात्रं तत्र यूपस्य श्रूयते, न यूपक्रिया। उच्यते। न किंचित् द्रव्यं यूपाख्यमस्ति, यस्य छेदनमुच्येत। तदेतदेवं ज्ञायते, दीक्षासु छेदनादिभिर्यूपं करोतीति। छेदनग्रहणं च मुख्यत्वात् प्रदर्शनार्थम्। यत्कारणं, नासौ छेदनेन केवलेन यूपो भवतीति। एवं चेद्दीक्षाकाला एवैते संस्काराः। सर्वार्थानां च सतां वचनात् केषां चिदन्यकालत्वं कृतम्। यथा 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति। तस्माद्यूपवत् संस्कारा अपि तन्त्रम्।

यूपकर्मत्वादित्यस्यापरा व्याख्या। यूपकर्म तत्, ये एते संस्काराश्छेदनाद्याः। यूपोऽयमेवं क्रियते तक्षणादिव्यापारेण। यथा वाजपेयेन सम्राट् सकृत् कृतश्चेत्, तस्य पुनः क्रिया निरर्थिका। तस्मादनावृत्तिः। नन्वेवं सति निरूढपशावपि कामं स एव यूपः कर्तव्यो भवेत्। बाढं भवेत्, यदि निरिष्टकेन यागप्रतिषेधो न स्यात्। अस्ति तु स प्रतिषेधः। तस्मान्न भवति। यथा न तैरेव दर्भैः प्रयोगान्तरमपि क्रियते। अथवा यदर्थं स यूपः कृतस्तत्कर्मापवृक्तम्। तस्यापवर्गे यूपोऽप्यपवृक्तः।

**सकृन्मानं च दर्शयति॥७॥**

**भाष्यं**— 'त्रिवृता यूपं परिवीय सवनीयं पशुमुपाकरोति' इति परिव्याणेन यूपधर्माननुक्रममाणः सकृन्मितं खातं यूपं दर्शयति। इतरथा मुख्यत्वात् प्रोक्षणेनोपक्रमेत। आनन्तर्यार्थमिति चेत्। न। प्रकृतितः सिद्धत्वात्। तस्मादपि तन्त्रं संस्काराः।

**सोम**— यूपतन्त्रत्वं विना तत्संस्कारतन्त्रत्वाप्रसक्तेः पूर्वाधिकरणोक्तयूपतन्त्रत्वोपजीवनेन तत्संस्कारतन्त्रत्वे विचारप्रवर्तनात् संगतिः। छेदनादिविधयो हि परस्परानपेक्षाः प्रत्येकं खदिरादिकाष्ठगतं दृष्टमदृष्टं वा संस्कारं बोधयन्ति। ते च संस्काराः मिलिता एव यूपशब्दवाच्याः, न प्रत्येकं, तावत्संस्कारसिद्ध्यनन्तरं 'यूपे

पशुं नियुञ्जीत ' इति नियोजने संस्कारविनियोजकवाक्ये यूपशब्देनाविशेषेण सर्वेषामुपादानेन यूपशब्दस्य नानार्थत्वापत्तेः मिलितानामेव तेषां तच्छब्दार्थत्वकल्पनात्। एवं च तावत्संस्कारसमुदायरूपयूपोत्पत्तौ तत्संस्कारजनकानां तक्षणादीनामपेक्षितत्वात् , केवलेन च च्छेदनेन यूपोत्पत्त्यसंभवे , ' दीक्षासु च्छेदनेन यूपं कुर्यात् ' इत्युक्ते यावन्तः पदार्था यूपोत्पत्त्यर्थत्वेनावगताः तेषां सर्वेषामपि च्छेदनमुपलक्षणमाश्रित्य च्छेदनादिभिः सर्वैः पदार्थैः दीक्षासु यूपमुत्पादयेत् इति वाक्यार्थपर्यवसानेन सर्वेषामेव पदार्थानामनेनापकर्षो बोध्यते ।

**वि**— ' संस्कारास्तक्षणाद्याः किं भिन्नास्तन्त्रेण वा, ऽग्रिमः । पशुकालत्वतो, मैवं यूपत्वापादका यतः ॥ ' तस्मात् त्रिष्वपि पशुषु यूपच्छेदनवत् तक्षणपर्यूहणादयः तन्त्रेणानुष्ठेयाः ।

**भाट्ट**— यूपतन्त्रत्वे तत्संस्काराणां तक्षणजोषणप्रोक्षणादीनामपि तन्त्रत्वम् । **न च** ' दीक्षासु यूपं छिनत्ति ' इत्यनेन छेदनमात्रस्यैवापकर्षविधानात् तक्षणादीनामग्नीषोमीयकाले एव करणेनानुष्ठानसादेश्यात् तन्मात्रार्थत्वप्रतीतेः गृह्यमाणविशेषत्वेन तदपवर्गे अपवर्गादावृत्तिरिति **वाच्यं**, यूपच्छेदनोद्देशे विशिष्टोद्देशापत्तेः, छेदनमात्रोद्देशे अतिप्रसङ्गात्, यूपोद्देशेनैव कालविधिः । छिनत्तिस्तु तदुत्पादकसंस्कारमात्रोपलक्षणं, तदुत्पादकाश्च संस्काराः **बोधायनादि**कल्पपर्यालोचनया **याज्ञिक**प्रसिद्ध्या च यूपाहुत्याद्यङ्गकच्छेदनाद्यष्टाश्रीकरणान्ता एव, अग्नेरिवाधानादयः, न तु प्रोक्षणाञ्जनादयोऽपि । ते तु संमार्गादिवदुत्पन्ने यूपे संस्काराधायकाः । तदेवंव्यवस्थायामपि, ये तावदुत्पादकास्तेषां भिन्नकालत्वेनागृह्यमाणविशेषत्वादेव तन्त्रत्वं यूपवत् । ये तु प्रोक्षणादयः उत्पन्नयूपसंस्कारकाः, तेषामपकर्षकवचनाभावेन दैक्षकाले एवानुष्ठेयत्वेन गृह्यमाणविशेषत्वेऽपि आतिथ्याबर्हिःप्रोक्षणन्यायेन ( १२।१।१९ ) यूपव्यक्तेरेकत्वात् तत्र कृतानां प्रोक्षणादीनां प्रसङ्गेनोपकारकत्वोपपत्तेः तेषामपि नावृत्तिः । **पार्थसारथ्यादे**स्तु सर्वेषामेव संस्काराणां यूपपदवाच्यत्वं वदतो दीक्षाकालत्वस्याप्यापत्तेर्याज्ञिकाचारविरोधः स्वलेखनविरोधश्च । अथैतदस्वरसेनैव लक्षणानभ्युपगमेन छेदनमात्रापकर्ष इति पक्षान्तराभ्युपगमः, ततो विशिष्टोद्देशाद्यापत्तिर्दुरुद्धरैव । न च तत्परिहारार्थं 'यूपं कर्तुं खदिरं छिनत्ति ' इति पदद्वयाध्याहारः, तदपेक्षया लक्षणाया लघुत्वात् ।

**न्यायविन्दुः**— यूपच्छेदनस्यैवापकर्षात् इतरसंस्काराणां प्रधानकालत्वात् विशेषग्रहणेन पश्वन्तरे पुनः प्रयोगः, **इति प्राप्ते**, यूपं छिनत्तीत्यस्य छेदनेन यूपं कुर्यादित्यर्थः, यूपस्यासिद्धत्वात् । न च छेदनमात्रेण तत्करणं संभवतीति तक्षणादीनामपि छिनत्तीत्युपलक्षणं, छेदनमात्रापकर्षेऽपि वा द्वारस्य यूपस्य साधारणत्वात् , तेषामपि तन्त्रमिति सिद्धान्तः ।

**मण्डन**— ' तत्संस्काराश्चापि तन्त्रं, न भिन्नाः । ' तत्संस्काराः यूपसंस्काराः ।

**शंकर**—' तत्र संस्कारतन्त्रता । ' तत्र पशुत्रयार्थयूपे ।

**अग्निष्टोमोक्थ्ययोः षोडशी गृहीतश्चेत् सस्तुतशस्त्र एव ॥**

**उक्थ्याग्निष्टोमसंयोगादस्तुतशस्त्रः स्यात् , सति हि संस्थान्यत्वम्** । १०।५।१२।४९ ॥

**भाष्यं**—षोडशिनि प्रकृते इदमाम्नायते, ' अग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः ' इति । तत्रायमर्थः सांशयिकः , किमस्तोत्रशस्त्रः षोडशी, उत सस्तोत्रशस्त्र इति । किं प्राप्तम् ? अस्तोत्रशस्त्रः स्यात् । कुतः ? उक्थ्याग्निष्टोमसंयोगात् । उक्थ्याग्निष्टोमसंयोगो भवति, ' अग्निष्टोमे राज्यन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः ' इति । अग्निष्टोमसंस्थे उक्थ्यसंस्थे च षोडशी ग्रहीतव्यः इत्युच्यते । एवमग्निष्टोमसंस्थोऽसौ क्रतुर्भवति, यद्यत्र स ग्रहो गृह्यते, यदि च न तत्र स्तोत्रं शस्त्रं वा क्रियते । सति हि स्तोत्रे शस्त्रे वा षोडशिना स्तोत्रेण संतिष्ठेत, तत्राग्निष्टोमसंस्थो न स्यात् उक्थ्यसंस्थश्च, तत्रेदं वचनमुपरुध्येत, ' अग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ्ये ग्राह्यः ' इति । अग्निष्टोमविशिष्टे ज्योतिष्टोमे स उच्यते, नाग्निष्टोमस्यैवाङ्गम् । नहि यागः स्तुतशस्त्रयोरङ्गं भवति, फलवत्त्वाद्यागस्य, अफलत्वाच्चेतरयोः । अग्निष्टोमश्चासौ ज्योतिष्टोमसंस्थोऽनेन भवति, नान्यथा। तस्मादस्तोत्रशस्त्रः स्यादिति ।

**टुप्**—' अग्निष्टोमे राजन्यस्य गृह्णीयात् ' इति सति अग्निष्टोमे षोडशिग्रहणम् । यदि सस्तोत्रशस्त्रः क्रियेत, अग्निष्टोमसंस्था न स्यात् । असत्यां च ( अग्निष्टोमसंस्थायां निमित्ताभावात् ) षोडशिग्रहणमेव न प्राप्नोति । तस्मात् स्तोत्रशस्त्रं यत्र निमित्तविघातो न, तद्विषयम् । इह तु निमित्तविघाताय स्यादिति । कथं च सस्तोत्रशस्त्रो भवेत्, यद्यग्निष्टोमस्तोत्रस्य षोडशी अङ्गत्वेन विधीयते । तथा सति प्रधानस्याङ्गेनाव्यवधानात् क्रियेत स्तोत्रशस्त्रम् । न चायमग्निष्टोमस्तोत्रस्याङ्गत्वेन विधीयते, षोडशियागाभ्यासस्य फलवत्त्वात् । न च निष्फलस्याङ्गिता स्तोत्रशस्त्रे प्रति ।

**सस्तुतशस्त्रो वा तदङ्गत्वात् । ५० ॥**

**भाष्यं**— सस्तुतशस्त्रो वा षोडशी । कुतः ? तदङ्गत्वात् । यागस्य हि स्तोत्रशस्त्रे अङ्गभूते ग्रहग्रहणनिमित्ते । कथम् ? 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकरोति' इत्युपसंप्राप्ते निमित्ते भवितव्यं नैमित्तिकेन । तस्मात् सस्तुतशस्त्रः षोडशी स्यात् ।

**टुप्**— कर्तव्ये स्तोत्रशस्त्रे तदङ्गत्वात् । षोडशियागः फलवान् । फलवत्त्वात् अङ्गान्यपेक्षते । यदि ( अङ्गानि ) न क्रियेरन् ( तथा सति षोडशी ) स्वकार्यं नैव साधयेत् । तस्मात् क्रियेत स्तोत्रशस्त्रम् । क्रियमाणे तु अग्निष्टोमसंस्था न स्यात् । असत्यां चाग्निष्टोमसंस्थायां ( क्रियेतैव ) । तस्मात् सस्तोत्रशस्त्रः । [ लिखितपाठोऽयं, कंसस्थं तु तन्त्ररत्नस्थम् । ]

**लिङ्गदर्शनाच्च ॥ ५१ ॥**

**भाष्यं**— लिङ्गमप्येतमर्थं दर्शयति, सस्तुतशस्त्रः षोडशीति । कथम् ? 'ऊर्ध्वा वा अन्ये यज्ञक्रतवः संतिष्ठन्ते तिर्यञ्चोऽन्ये , ये होतारमभिसंतिष्ठन्ते त ऊर्ध्वाः , ये वाऽच्छावाकं ते तिर्यञ्चः' । कथं कृत्वैतल्लिङ्गम् ? एतदुक्तं भवति । द्वये एव यज्ञक्रतवो भवन्ति, ये होतारमभिसंतिष्ठन्ते, ये चाच्छावाकम् । यदि सस्तोत्रशस्त्रः षोडशीति, तत एवम् । अन्यथाऽयं षोडशी अध्वर्युमभि संतिष्ठेत । तस्मादपि सस्तोत्रशस्त्रः षोडशी ।

**वचनात् संस्थान्यत्वम् । ५२ ॥**

**भाष्यं**— अथ यदुक्तं, सति हि संस्थान्यत्वमिति । वचनादेवं भविष्यति । अग्निष्टोमान्तं यदुक्तं, तस्य वचनादयं अन्योऽन्तो विधीयते । किमिव वचनं न कुर्यात् । तस्मादपि सस्तोत्रशस्त्र इति ।

**शा**—षोडश्येव यदा 'अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युक्थ्ये ग्राह्यः' इत्यादिवचनात् अग्निष्टोमोक्थ्ययोर्गृह्यते । तदा किं अस्तुतशस्त्रः स्यात् , उत तदाऽपि सस्तुतशस्त्रः, इति संशये, ' उक्थ्याग्निष्टोमसंयोगे नास्य स्तोत्रादिकं भवेत् । षोडशिस्तोत्रसंस्थायां नोक्थ्याग्निष्टोमता भवेत् । अग्निष्टोमादिशब्दा हि स्तोत्रसंस्थानिमित्तकाः । षोडशिस्तोत्रसंस्थायां नाग्निष्टोमः क्रतुर्भवेत् ॥ ' तत्राग्निष्टोमे ग्राह्यः इत्येतदेव विरुध्यते । तस्मादस्तुतशस्त्रः स्यात् । ( अथ सिद्धान्तः ) ' सत्यं संस्थान्यताऽऽपत्तिर्वचनात्तु न दुष्यति । पूर्वसंस्थोपमर्देन संस्थैवान्या विधीयते । उक्थ्यसंस्थो हि यः प्रातस्तथाऽग्निष्टोमसंस्थितिः । राजन्यस्य तथा नासौ किंतु षोडशिसंस्थितिः । इत्येष वचनस्यार्थस्तस्मात् सस्तुतशस्त्रकः । तदङ्गत्वेन हि स्तोत्रं शस्त्रं चाहत्य चोदितम् ॥ ' 'एकविंशं स्तोत्रं भवति प्रतिष्ठित्यै हरिवच्छस्यते ' इति विहितं स्तुतशस्त्रं, असति विरोधे किं उक्थ्याग्निष्टोमसंस्थस्य न क्रियते ? तस्मात् सस्तुतशस्त्रः ।

**सोम**—षोडशिप्रसङ्गात् बाधप्रसङ्गाच्च तद्गतस्तोत्रशस्त्रबाधाबाधौ चिन्त्येते इति **तन्त्ररत्नम्** । इह अग्निष्टोमादिसंस्थां निमित्ततया उपादाय षोडशिसंस्था न विधीयते, किंतु यः क्रतुः अग्निष्टोमसंस्थाकः उक्थ्यसंस्थाकश्च विहितः, स क्रतुः राजन्यस्य न तत्संस्थाकः, किंतु षोडशिसंस्थः कर्तव्यः इति राजन्यमेव निमित्तीकृत्य पूर्वसंस्थोपमर्देन संस्थान्तरं विधीयते । **सूत्रे** सति स्तोत्रशस्त्रे संस्थान्यत्वं स्यादित्यर्थः ।

**वि**—' अग्निष्टोमोक्थ्यसंबन्धी षोडश्यस्तुतशस्त्रकः । तद्युक्तो वा,ऽग्रिमः प्राप्तस्तत्संस्थामबाधितुम् । , स्तोत्रं भवत्येकविंशं हरिवच्छस्यते ततः ( हरिवत् हरिशब्दयुक्तम् ) । इष्यते ह्यन्यसंस्थात्वं स्तुतशस्त्रयुतस्ततः ॥ '

**भाट्ट**—'षोडशिनो वैकृतत्वं' (१०।५।९।३४) इत्यत्र षोडशिसंस्थायाः प्रकृत्यङ्गत्वं ' अप्यग्निष्टोमे राजन्यस्य

गृह्णीयात्' 'अप्युक्थ्ये' इति वाक्याभ्यां इत्युक्तम्। तदिहाक्षिप्यते। नहि अत्र राजन्ये निमित्ते षोडशिसंस्थायाः अग्निष्टोमाङ्गत्वेन विधिः। अग्निष्टोमादिपदवाच्या संस्थैव उद्देश्या भवेत् तद्विशिष्टो ज्योतिष्टोमो वा? नोभयथाऽपि संभवः, एकसंस्थायां अपरसंस्थाऽसंभवात्। संस्था हि तत्तत्स्तोत्रोत्तरं तस्मिन् क्रतुप्रयोगे स्तोत्रान्तराभावः। न च अग्निष्टोमस्तोत्रादेरन्तिमत्वे षोडशिस्तोत्रस्य अन्तिमता संभवति। अत एव पूर्वपूर्वसंस्थोपमर्देन संस्थान्तरविधिः इति सिद्धान्तोऽपि असंगतः। उपमर्दस्य अशब्दार्थत्वेन उद्देश्यविधेयभावेन वाक्यार्थस्य निरूपयितुमशक्यत्वात्। पूर्वसंस्थोपमर्देऽपि षोडशिनि उक्थ्यपरभावविधानात्, अग्निष्टोमाभ्यासोत्तरत्वसिद्धान्तसिद्ध्यनापत्तेश्च। नापि अग्निष्टोमादिपदैः शुद्धं ज्योतिष्टोमं लक्षयित्वा तदुद्देशेन षोडशिसंस्थाविधिः, वाक्यद्वयवैयर्थ्यापत्तेः। अतो जघन्ये अनुषक्ते षोडशिपदे एव ग्रहणमात्रं षोडशिसंस्थाङ्गभूतं लक्षयित्वा तदेव अग्निष्टोमादिसंस्थोद्देशेन तद्विशिष्टक्रतूद्देशेन वा विधीयते। तत्र च देवतासंयोगात् यागाभ्यासोऽपि आर्थिकः। न च एतावता तदङ्गभूतस्तोत्रस्यापि करणम्। तस्य प्रधानभूताग्निष्टोमादिसंस्थोपमर्दापत्त्या बाधात्, **इति प्राप्ते,** न तावत् संस्थाविशिष्टज्योतिष्टोमोद्देशेन ग्रहणविधिः। अग्निष्टोमादिपदेऽपि लक्षणाऽऽपत्तेः। नापि संस्थामात्रोद्देशेन संस्थाङ्गत्वस्य, प्रकरणादप्राप्ततया प्रतिप्रसवार्थकापिशब्दानुपपत्तेः। नापि संस्थायां निमित्तभूतायां 'ज्योतिष्टोमाङ्गत्वेन विधिः, राजन्यस्यापि निमित्तत्वेन उद्देश्यानेकत्वापत्तेः। अतः प्रथमोपस्थितेऽपि अग्निष्टोमादिपदे एव स्तोत्रलक्षणा तदभ्यासलक्षणा वा। सप्तमी च सतिसप्तमी। तथा च अग्निष्टोमाभ्यासे कृते सति इत्यर्थाङ्गीकारात् तदभ्यासोत्तरकालताविशिष्टषोडशिसंस्थैव राजन्ये निमित्ते ज्योतिष्टोमाङ्गत्वेन विधीयते। अर्थाच्च तस्य नित्या अग्निष्टोमसंस्था, काम्या च उक्थ्यसंस्था निवर्तते। काम्या तु षोडशिसंस्था सर्वेषामेव इति विशेषः। अत एव 'तं पराञ्चमुक्थ्येभ्यः' इति उक्थ्यपरभावोऽपि षोडशिनः, काम्यप्रयोगे अतिरात्रसंस्थायां च इत्यपि बोध्यम्।

इयं ह्यत्र स्थितिः प्रामाणिकी, अग्निष्टोमसंस्थायां न अग्निष्टोमस्तोत्रोत्तरं उक्थ्यादि किंचित्। उक्थ्यसंस्थायां तु तदुत्तरं उक्थ्यस्तोत्राणि, न तु तस्याप्युत्तरं षोडश्यादि। षोडशिसंस्थायां तु तदुत्तरं षोडशिस्तोत्रं, न तु तस्यापि उत्तरमतिरात्रादि। अतिरात्रसंस्थायां तु तेनैव समाप्तिः इति। तदिह काम्यायां षोडशिसंस्थायां अतिरात्रान्तर्गतषोडश्यभ्यासे च यथास्थित एव उक्थ्यपरभावः। अग्निष्टोमसंस्थोपमर्दे तु अग्निष्टोमाभ्यासोत्तरत्वस्य वाचनिकत्वात् उक्थ्यस्तोत्राणां लोप एव। एतस्यैव च '**अत्यग्निष्टोमः**' इति संज्ञा, 'अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति शाखान्तरवचनात्। उक्थ्यसंस्थोपमर्दे तु तत्र उक्थ्योत्तरभावस्य प्रतिप्रसवात्, न तत्र उक्थ्यानां लोपः। उक्थ्यसंस्थायाश्च काम्यायाः एव प्राप्तेः तदुपमर्दे राजन्यस्य तन्निवृत्तिः। अन्यथा 'अप्युक्थ्ये' इत्येतद्वाक्यवैयर्थ्यापत्तेः। माऽस्तु वा काम्योक्थ्यसंस्थायाः निवृत्तिः। निरूपितं चैतत् विस्तरेण रथंतरचरणे (७।२) **कौस्तुभे**। अतः सस्तुतशस्त्रः एव षोडशी संस्थारूपः ऊक्थ्याग्निष्टोमसंस्थोपमर्देन राजन्यस्य स्यात् इति सिद्धम्।

यानि तु 'अतिरात्रे ब्राह्मणस्य गृह्णीयात्' इत्यादीनि वचनानि, तेषु न पूर्वसंस्थोपमर्देन संस्थान्तरविधिः, प्रतिप्रसवार्थकापिशब्दाभावेन अग्निष्टोमादिवाक्यवैलक्षण्यप्रतीतेः। अनुषङ्गाङ्गीकारे उक्थ्यवाक्ये तत्पाठवैयर्थ्यापत्तेः। प्रथमोपस्थितातिरात्रपदस्य स्तोत्रलक्षकत्वे प्रमाणाभावाच्च। अतश्च जघन्यमनुषक्तं षोडशिपदमेव तद्यागाभ्यासलक्षकम्। तस्य च अतिरात्रसंस्थोद्देशेन तत्संस्थाकज्योतिष्टोमोद्देशेन वा विधानं, संस्थायाः प्राकृताङ्गैरेव निराकाङ्क्षत्वात्। तस्य च पाठात् अतिरात्रस्तोत्रपूर्वस्थानकत्वसिद्धिः। अत एव ब्राह्मणस्य नित्यवत् तत्र तस्य प्राप्तौ 'नातिरात्रे षोडशिनं गृह्णाति' इत्यनेन पाक्षिकत्वसिद्ध्यर्थं प्रतिषेधः। अतश्च ब्राह्मणस्य विकल्पः, अन्येषां प्रापकप्रमाणाभावादेव स नैव इति ध्येयम्।

यत्तु 'अतिरात्रे षोडशिनं गृह्णाति' इति क्वचित् लिख्यते वचनं, तत् 'अतिरात्रे ब्राह्मणस्य' इत्येत-

देव ब्राह्मणपदपरित्यागेन इति वेदितव्यम् । भिन्नत्वेऽपि वा ब्राह्मणवाक्येन उपसंहारः इति ध्येयम् । अस्तु वा तेनैव सर्वेषां प्रसक्तस्य षोडशियागाभ्यासस्य 'नातिरात्रे षोडशिनं' इत्यनेन विकल्पः । ब्राह्मणवाक्ये तु तन्नियमार्थं पुनःश्रवणं 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादाविव, इत्यन्यत्र विस्तरः ।

**न्यायबिन्दुः**— 'अग्निष्टोमे राजन्यस्य गृह्णीयात्' इति विहितः षोडशी स्तोत्रशस्त्ररहितः कार्यः, अन्यथा षोडशिसंस्थत्वापत्तौ अग्निष्टोमः इत्येतद्विरोधात् अग्निष्टोमादिपदानां तत्तत्स्तोत्रशस्त्रसंस्थानिमित्तत्वात्, **इति प्राप्ते,** अग्निष्टोमे प्राप्ते राजन्यस्य न तत्संस्था, किंतु षोडशिसंस्था इति वचनार्थः । तस्मात् स्तोत्रशस्त्रसहित एव कार्य इति सिद्धान्तः ।

**मण्डन**— 'सस्तोत्रशस्त्रः खलु षोडशी स्यात् ।'

**शंकर**— 'स च सस्तुतशस्त्रकः ।'

**अग्निष्ठे द्वाभ्यांद्वाभ्यामेव रशनाभ्यां क्रमेण परिव्याणम् ॥**

नाभिदघ्नस्थले सर्वासां परिव्याणासंभवेन एकामेव तत्र परिवीय अन्याभिर्यथाऽवकाशं परिव्याणम् । अथवा प्रकृतावपि रशनाद्वयस्य परिव्याणायापि अपर्याप्तः एव नाभिदघ्नभागः, इति तं देशमन्तर्भाव्यैव परिवीयते । अतो विकृतावपि सर्वाभिर्युगपदेव नाभिदघ्नं परितः परिव्याणं, **इति प्राप्ते,** एकादशभिः रशनायुगैर्युगपत्परिव्याणे तासां पुनरुपादानवेलायां युगपदेव मोक्षप्रसङ्गः । तथा च पक्षयूपपरिव्याणार्थरशनादानक्रमलोपापत्तिः । 'अग्निष्ठात् द्वेद्वे रशने आदायैकैकं पक्षयूपं द्वाभ्यांद्वाभ्यां परिव्ययति' इति पृथगग्निष्ठापादानकोपादानश्रुतेः । तस्मात् द्वाभ्यांद्वाभ्यामेकादशकृत्वोऽग्निष्ठः परिवीयेत । **संकर्ष.** १।४।१३.

**'अग्निष्ठे रशना वासयति' इति रशनासंस्कारः ॥**

यूपैकादशिन्यां श्रुतं 'अग्निष्ठे ऐकादशिना रशनाः परिवीय वासयति' इति । अत्र रशनाभिः परिव्याणेनाग्निसमीपस्थं यूपं संस्कुर्यादित्यर्थः, प्रकृतौ 'त्रिवृता यूपं परिवीय' इति श्रवणात् । अत एव वैकृतवाक्ये द्वितीयासप्तम्यौ 'सक्तून्' इतिवत् 'तत्र जयान्' इतिवच्च गुणप्रधानतापरे । परिवीयेति च प्रकृतिलिङ्गसंयोगात् प्राकृतपरिव्याणनिवृत्तिः, 'परिधौ पशुं नियुञ्जीत' इति वचनेन यूपनिवृत्तेर्दर्शनात्, **इति प्राप्ते,** 'परिवीय वासयति' इति श्रवणादग्निष्ठाधिकरणकेन परिव्याणकरणेन वासनेन रशनाः संस्कुर्यादित्येवार्थः । विभक्तिव्यत्यासस्य वासयतिपदवैयर्थ्यस्य चायुक्तत्वात्, 'अथ यदग्निष्ठादधिरशना विह्वियन्ते, तेन सर्वेऽग्निष्ठाः' इति वचने अग्निष्ठवाससंस्कृतरशनासंबन्धेन पक्षयूपानामप्यग्निष्ठतासंपत्तिकथनेन रशनासंस्कारत्वावगमाच्च । रशनासंस्कारके वासे गुणविधायकस्य परिवीयेत्यस्य धर्मग्रहणासमर्थत्वेन कालभेदेन च प्राकृतपरिव्याणानिवृत्तेः । **संकर्ष.** १।४।१२.

**अग्निसंमार्गन्यायः ।** २।१।४।९–१२.

उच्छ्रयणादीनां अग्निसंमार्गन्यायेन उत्पन्नयूपसंस्कारकत्वम् । **भाट्ट.** ९।२।१२. 'संमार्गाधिकरणं' इति बिन्दौ अयं न्यायो द्रष्टव्यः ।

**अग्निसंस्कारार्थाः** पवमानेष्टयः इत्युक्तम् । ( ३।६।४।११–१३ ) **भा.** ३।६।६।१७.

**अग्निसमिन्धनं** प्रकाशयन्त्यः ( ऋचः ) 'सामिधेन्यः' इत्युच्यन्ते । **वा.** ३।१।११।२१ पृ. ७३५. *अग्निसमिन्धनप्रकाशकत्वं विना सामिधेनीत्वं न संभवति, अग्नेः क्रतुप्रयुक्तत्वं विना च ( सामिधेनीभिः ) समिन्धनीयत्वं न संभवति । **सु.** पृ. १०५८. * अग्निसमिन्धनार्थः इध्मः । **भा.** १२।२।५।१८.

**अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत । २।३।१०।२१ ॥**

अस्त्यग्निः 'य एवं विद्वानग्निं चिनुते' इति । एवं विधाय श्रूयते 'अथातोऽग्निमग्निष्टोमेनानुयजन्ति तमुक्थ्येन, तमतिरात्रेण, तं षोडशिना' इत्येवमादि । अत्र संदेहः, किमग्निशब्दो यागवचनो ज्योतिष्टोमादिभ्यः कर्मान्तरं 'चिनुते' इत्याख्यातेन विधीयते, उत द्रव्यवचनो ज्योतिष्टोमादिषु गुणविधानमेतत् इति । पूर्वमंश्वदाभ्ययोर्यागविधिनिरासेन गुणविधानं प्रतिपाद्य इदानीं 'अग्निं चिनुते' इत्यत्रापि प्रसङ्गेन प्रतिपाद्यते ।

अत्रायं पूर्वपक्षिणोऽभिसंधिः । यद्यपि 'अग्निं चिनुते' इत्यत्र यागो न श्रूयते, तथापि उत्तरवाक्ये अग्निष्टोमो-

क्थ्यषोडश्यतिरात्रसंस्थाविधिपरे ‘ अथातोऽग्निमग्निष्टोमेनैवानुयजति ’ इत्यत्राग्निशब्दस्य यजिसामानाधिकरण्येनानुवाददर्शनात् ‘ अग्निं चिनुते ’ इत्यत्रापि अग्निशब्दस्य यागनामत्वमिति निश्चीयते । नामधेयकरणं च तत्प्रख्यन्यायेनैव ( १।४।३।४ ), ‘ आहवनीये जुहोति ’ इति शास्त्रेणाहवनीयप्राप्तेः । तेनायं वाक्यार्थः अग्निसंज्ञकं यागं कुर्यादिति । वचनात् ‘ इष्टकाभिरग्निं चिनुते ’ इत्यत्र प्राप्तं प्रत्ययप्रयोगार्थमनूद्यते । अव्यक्तचोदनात्वेनास्य ज्योतिष्टोमविकारत्वात् द्रव्यदेवतालाभः । फलं च ‘ ऋध्नोत्येव ’ इत्यर्थवादावगतं ऋद्धिरूपमेव । ‘ एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः ’ इत्यनेन प्राप्तस्य ज्योतिष्टोमपश्चाद्भावस्य अग्निष्टोमादिवाक्यस्थेनानुशब्देनानुवादः । भवतु वा व्यधिकरणोऽयमग्निष्टोमशब्दः, तथाप्यग्निशब्दोऽयं यागसाधनम् । एवं हि तदा वाक्यार्थः, अग्निष्टोमेनाग्निमनुयजतीति । न चाग्नेरयागत्वे अग्निष्टोमादिभिरनुयजनमुपपद्यते, तुल्यरूपाणामेव पौर्वापर्ययोगोपपत्तेः । यथा गच्छति देवदत्ते देवदत्तमनुगच्छतीति । तदत्र सामानाधिकरण्यपक्षे अग्निनामधेययागे अग्निष्टोमादिवाक्यैरग्निष्टोमसंस्थादिरूपगुणविधानं, एको यागः । वैयधिकरण्यपक्षे तु ‘ अग्निष्टोमेनाग्निमनुयजति ’ इति यजतिसमानाधिकरणेन अग्निष्टोमादिपदेन अग्निष्टोमादिनानासंस्थादिगुणफलवदुपात्तज्योतिष्टोमादेरग्निना सह अनुशब्देन पौर्वापर्यविधानात् फलवत्संनिधिन्यायेन अग्न्याख्ययागस्य तदङ्गत्वमेव । ऋध्नोतीति फलश्रुतिरर्थवाद एवेति विवेक्तव्यम् । अथवा ‘ अथैष ज्योतिः ’ इति वाक्यप्रवृत्तिवेलायामनिरूपितार्थत्वात् ‘ य एवं विद्वानग्निं चिनुते ’ इत्यत्रैतदनुवादेन गुणविधानं वा अग्निष्टोमादीज्यानुरोधात् । विनियोगभङ्गस्य च गत्यन्तरे सति असंभवात् संभवमात्रेणोपन्यस्तम् ।

ननु द्रव्यवचनेऽप्यग्निशब्दे द्वितीयाश्रुतेस्तत्संस्कारचयनविधानमेव युक्तम् । न, अलौकिकाग्नेरनवगतोपयोगस्य संस्कारविधिवैयर्थ्यात् , अनारभ्याधीतत्वेन च प्रकरणाभावात् । पर्णतादेर्जुह्वादिवत् क्रत्वव्यभिचाराभावात् । अदाभ्यवत् शाखान्तरेऽपि प्रकरणे पुनः संकीर्तनानुपलब्धेश्च न क्रत्वन्वय्यग्निसंस्कारत्वम् । न च ऋद्धिरूपफले एव गुणविधानं, अनारभ्यश्रुतत्वेन प्रकृताग्निरूपाश्रयाभावात् । अनेनैवोभयसंबन्धकरणे वाक्यभेदप्रसङ्गात् । तेनोक्तन्यायेनाग्निसंज्ञावच्छिन्नयागविधिरेवायम् । एवं च सति ‘ अग्नेः स्तोत्रं , अग्नेः शस्त्रं , षडुपसदोऽग्नेश्चित्यस्य भवन्ति ’ इति यागाव्यभिचारिलिङ्गदर्शनानि उपपत्स्यन्ते इति । **एवं प्राप्तेऽभिधीयते,**

**द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् । २२ ॥**

अयमभिप्रायः । भवेदेवं, यदि ‘ अग्निं चिनुते ’ इत्यत्र ज्वलनं परित्यज्यायमग्निशब्दः कथं चिदपि, यागनामधेयं भवेत् । तथाहि, रूढो ह्ययमग्निशब्दो ज्वलने । न चास्य मत्वर्थलक्षणादोषभयेन नामधेयत्वं , निरूढार्थस्योत्तरपरत्वे ‘ सोमेन यजेत ’ इतिवत् मत्वर्थलक्षणाया अदोषत्वात् । नापि रूढत्वेऽपि वाक्यभेदादीनामन्यतमं नामधेयकारणमस्ति । यत्तु तत्प्रख्यमस्तीत्युक्तं , तन्न, विधित्सितगुणप्रापिशास्त्रान्तरसद्भावे हि तत्प्रख्यन्यायो भवति । न चात्राग्निर्विधेयत्वेन प्रतीयते । किं तर्हि ? द्वितीयासंयोगाच्चयनसंस्कार्यत्वेन । न चोत्तरवाक्ये यजिसामानाधिकरण्येनाग्निपदस्य नामधेयत्वनिर्णयः, अर्थान्तरप्रसिद्धस्य यजिसामानाधिकरण्यासंभवात् । न च वैयधिकरण्येऽपि अग्निमनु यजतीत्यनुशब्दस्य सजातीयक्रियासापेक्षत्वादग्निशब्दस्य यागनामधेयत्वम् । ‘ श्राद्धमनुभुङ्क्ते ’ इति विजातीयक्रियापेक्षायामप्यनुशब्ददर्शनात् । यत्र त्वनुपात्तः क्रियाविशेषः ‘ देवदत्तमनुगच्छति ’ इत्यादौ, तत्र सजातीयक्रियाया एव बुद्धिसंनिधानात् तत्कल्पनमेवोचितम् । इह तु अग्निसंबद्धचयनक्रियाया एव बुद्धिस्थीभूतत्वान्न सजातीयक्रियाकल्पनेति वैषम्यम् । अत एवार्थान्तरप्रसिद्धस्य यजिसामानाधिकरण्यासंभवात् ‘ अथैष ज्योतिः ’ इतिवत् पूर्ववाक्योपक्रान्तस्योत्पत्तिसमाप्तिरित्येतदपि निरस्तं वेदितव्यम् । तदुक्तम् ‘ अत्यन्तरूढशब्दत्वाद्वाक्यभेदादिभिर्विना । ज्वलनं न परित्यज्य क्रतुरग्निः प्रतीयते ॥ ’ इति । ( वा. २।३।१०।२२ पृ. ६११. ) तस्मादग्निशब्दस्य प्रसिद्धार्थग्राहित्वात् चिनोतेश्च यागाभिधानाशक्तेर्द्रव्यदेवताभावात् द्वितीयाऽनुरोधाच्च अग्निं चयनेन संस्करोतीत्येतावतैव चोदनार्थोऽ-

वधार्यते इति। ननु चायं नाग्निसंस्कारः, क्रत्वर्थाग्निर्निर्णीयते, तथाप्युत्तरवाक्ये 'अग्निमनुयजति' इत्यत्र कर्मप्रवचनीयद्वितीयायाः क्रियान्तरापेक्षत्वात् संनिवेश्य यजनक्रियैव संबध्यते। तेनायमर्थः, चयनसंस्कृतमग्निमनु अग्निष्टोमादिभिर्यजनम्। एवं च सति चयनस्य क्रत्वर्थत्वात् 'अग्निं चिनुते' इत्यत्रापि क्रत्वर्थत्वादाहवनीयविषयत्वमेव चयनस्य निश्चीयते। 'अग्नेः स्तोत्रं' 'अग्नेः शस्त्रम्' इत्यादिवाक्येष्वग्निशब्दस्य द्रव्यपरत्वानुपपत्तेर्लक्षणया यागपरत्वमेव। न चात्र वाक्यद्वयेऽप्यग्निशब्दस्य मुख्यार्थत्वेऽपि का चिदनुपपत्तिरस्तीति न यागविधानं, किंतु प्रकृतिविकृत्योरेवाग्नेश्चयनसंस्कारगुणविधानमिति। न च वाच्यं 'प्रकृतावेव संस्कारो विधीयताम्, अतिदेशतस्तु विकृतौ प्राप्तिर्भविष्यतीति व्यर्थं विकृतौ विधानमिति'। यतो निर्दिष्टाश्रयस्य फलसाधनत्वाभावार्थं चयनसंबन्धिनो गुणात् फलकामस्याप्रवृत्तिः, उपदेशे तु प्रवृत्तिरिति युक्तमुभयत्र विधानादर्थवत्त्वम्। **प्रयोजनं** पूर्वपक्षेऽग्निनामावच्छिन्नयागान्तरानुष्ठानम्। सिद्धान्ते तु प्रकृतिविकृत्योश्चयनसंस्कारमात्रानुष्ठानमिति। **सूत्रं तु**— वाक्यद्वयेऽपि द्रव्यमेवाग्निशब्दार्थो भवेत्। चयनचोदनायास्तदर्थत्वात् अग्न्यर्थत्वादित्यर्थः। इति दशमं चयनाधिकरणम्। **तौता.**

**अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत। २।३।१०।२१॥**

'य एवं विद्वानग्निं चिनुते' इति विधाय श्रूयते 'अथातोऽग्निमग्निष्टोमेनानुयजति तमुक्थ्येन, तमतिरात्रेण, तं षोडशिना' इत्येवमादि। किमयमग्निशब्दः यागवचनः ज्योतिष्टोमादिभ्यः कर्मान्तरं 'चिनुते' इत्यनेन विधीयते, उत द्रव्यवचनः ज्योतिष्टोमादिषु गुणं विधत्ते, इति विचारे पूर्वपक्षमाह। तुशब्दः पक्षान्तरव्यावृत्त्यर्थः। 'अग्निं चिनुते' इत्यग्निः अग्निशब्दः क्रतुशब्दः क्रतोः यागस्य वाचकः शब्दः प्रतीयेत। लिङ्गस्य दर्शनात्। लिङ्गं हि दृश्यते। 'अग्नेः शस्त्रं' 'अग्नेः स्तोत्रं' 'षडुपसदोऽग्नेश्चित्यस्य' इति। यस्य शस्त्रं स्तोत्रं उपसदश्च भवन्ति, तस्य वाचकोऽग्निशब्दः इति गम्यते। यागस्य च एतत् सर्वम्। तस्मात् अग्निरितिशब्दः क्रतोर्वाचकः स्यात्।

**द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात्। २२॥**

वाशब्देन पूर्वपक्षं व्यावर्तयन् सिद्धान्तमाह। अग्निः इति द्रव्यं स्यात् न यागः। चोदनायाः 'अग्निं चिनुते' इति विधेः तदर्थत्वात् सोऽर्थः प्रयोजनं यस्य तादृशत्वात्। ज्वलनात्मकं अग्निद्रव्यमुद्दिश्य स्थण्डिलाधारत्वसंबन्धेन चयनरूपसंस्कारविधिपरत्वात्। 'अग्निं चिनुते' इत्यस्य चयनेन अग्निं संस्कुरुते, चितौ स्थापयति इत्यर्थः। 'अग्निं अग्निष्टोमेन अनु यजति' इत्यस्य च अग्निं अनु चयनात्मकाग्निसंस्कारोत्तरं अग्निष्टोमेन यागेन यजति इत्यर्थः। तस्मात् 'चिनुते' इति न कर्मान्तरविधिः। किंतु अग्निशब्दो द्रव्यवाचकः, अग्निष्टोमादिषु गुणविधायकं वाक्यं इति।

**तत्संयोगात् क्रतुस्तदाख्यः स्यात् तेन धर्मविधानानि। २३॥**

'अग्निं चिनुते' इत्यत्र अग्निशब्दः क्रतुवाचकः इतिपूर्वपक्षे यत् लिङ्गमुक्तं, तत्रोत्तरमाह सिद्धान्ती। 'अग्नेः स्तोत्रं, अग्नेः शस्त्रं, षडुपसदोऽग्नेश्चित्यस्य भवन्ति' इत्यत्र तत्संयोगात्, तेन मुख्यविधया अग्निशब्दार्थेन ज्वलनेन चयनसंस्कृतेन संयोगात् क्रतोः संबन्धात् क्रतुः यागः तदाख्यः सा आख्या यस्य स तदाख्यः अग्निशब्दाख्यः स्यात्। तेन कारणेन च अग्निसंयुक्तक्रतोरेव तानि 'अग्नेः शस्त्रं' इत्यादीनि वाक्यानि धर्मविधानानि शस्त्रादिधर्माणां विधानानि विधायकानि भवन्ति। विधीयन्ते धर्माः एभिः इति विधानानि। प्रकृते तु अग्निशब्दः ज्वलनवाचक एव। तस्मात् 'अग्निं चिनुते' इत्यत्र अग्नेः चयनाख्यस्य संस्कारो विधीयते इति। तस्मात् अग्निष्टोमादौ गुणविधिः इति सिद्धान्तः। **के.**

**अग्निहोत्रम्**। पवमानेष्टिसहितं आधानं कृत्वा आहिताग्निः सायं च प्रातश्च होमं कुरुते। तत्र सायं अग्निश्च प्रजापतिश्च देवते। प्रातस्तु सूर्यश्च प्रजापतिश्च देवते। 'अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहा' 'प्रजापतये स्वाहा' इति सायंहोमे मन्त्रौ, 'सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहा' 'प्रजापतये स्वाहा' इतिं प्रातर्होममन्त्रौ। पयः इत्यादीनि दश द्रव्याणि विकल्पेनात्र भवन्ति। **के.**

* 'अग्निहोत्रं दर्शपूर्णमासौ च मे जायेताम्।' प्रकृतौ उक्ताकारकेच्छाऽपि नोद्देश्यताघटिका, अन्यथा अग्निहोत्रीयप्रथमप्रयोगीयाद्यपदार्थस्यापि तादृशोद्देश्यताकप्रवृत्तिविषयत्वात् तत्रापि आरम्भणीयाऽऽपत्तेः। अतस्तादृगिच्छोत्तरं दर्शपूर्णमासौ जायेतां इत्याकारिकेच्छा जायते, सैव उद्देश्यताघटिका इति ध्येयम्। **भाट्ट.** १०।१।३. * अग्निहोत्रं नित्यं कर्म। **वि.** ६।३।१. * अग्निहोत्रं प्राक् पवमानहविर्भ्यः न संभवति। यच्च पूर्णाहुत्यन्ते अग्निहोत्रं सोऽपूर्व एव होमः। **टुप्.** १०।२।२७।६३. * अग्निहोत्रं होमानां मूलप्रकृतिः। **वि.** ८।१।३ वर्णकं २. * 'जरामर्यं वा एतत् सत्रं यदग्निहोत्रं दर्शपूर्णमासौ च, जरया ह वा एताभ्यां निर्मुच्यते मृत्युना च' इति जरामरणनिर्मोचनावधारणवचनं च नियमपक्षे उपपद्यते। काम्यपक्षे हि अप्रयोगादपि मुच्येत। **भा.** २।४।१।४, * 'प्रदोषमग्निहोत्रं होतव्यं, व्युष्टायां प्रातः' इति श्रूयते। ६।२।७।२३. * **अग्निहोत्रं** (इयं द्वितीया, प्राक् तु प्रथमा) अग्निहोत्रहवण्या नाम स्रुचा जुहोति। **भाट्ट.** १०।२।२६. * 'अग्निहोत्रं जुहोति' इति वाक्यं कर्मविधायकं, तत्र द्रव्यं 'दध्ना जुहोति' 'पयसा जुहोति' इत्यादिवाक्यैर्लभ्यते। देवता तु मान्त्रवर्णिकी। **वि.** २।२।५, * 'अग्निहोत्रं जुहोति' इत्यग्निहोत्रशब्दः अग्निसूर्यदेवताकस्य सायंप्रातःकालयोः नियमेनानुष्ठेयस्य कर्मणो यौगिकं नामधेयम्। अग्नये होत्रं होमो यत्र कर्मणि, तत् कर्म अग्निहोत्रम्। १।४।४, * 'अग्निहोत्रं जुहोति' 'यवागूं पचति' इत्यत्र पाठक्रमं बाधित्वा अर्थतः क्रमोऽभ्युपगन्तव्यः। द्रव्यमन्तरेण होमासंभवात्, द्रव्यनिष्पत्त्यै पाकस्यैव प्राथमिकत्वावश्यंभावात्, यवाग्वाः होमद्रव्यत्वस्य 'यवाग्वा जुहोति' इत्यनेनावगमात्। ५।१।२. * अग्निहोत्रं प्रकृत्य 'दध्नेन्द्रियकामस्य जुहुयात्' इति श्रूयते। तत्र होमसंबन्धात् दध्नः फलम्। **भा.** २।२।११।२५-२६. * अग्निहोत्रं प्रतिहोमं वा उदवसानीयोत्कर्षे न कुर्यात्, उदवसानीयायां कृतायां पश्चादग्निहोत्राधिकारप्रतिपादनात्। **वि.** ६।५।१३, * अग्निहोत्रं होतुं प्रतिदिनं गार्हपत्यादुद्धृत्य आहवनीयायतने अग्निः प्रक्षिप्यते। (उद्धरणपक्षे इदं, न तु अजस्रपक्षे) ९।४।७. * 'यावज्जीवमग्निहोत्रं जुहोति' अत्र कर्तृधर्मो नियमश्चोद्यते यावज्जीविकता, न कर्मधर्मः अभ्यासः। **भा.** २।४।१।१-७. * **अग्निहोत्रस्य** कालद्वये अभ्यस्तस्य एकप्रयोगत्वम्। **सु.** पृ. ७८७. * 'अग्निहोत्रस्य क्रतोः एकः ऋत्विक्' अध्वर्युः। अत्र अर्थापत्त्या पाक्षिकप्राप्तस्य कर्तुः नियमविधिः। **वि.** ४।२।९, * अग्निहोत्रस्य नित्यकाम्यरूपौ प्रयोगौ भिन्नौ जीवनस्य पुरुषधर्मत्वात्। २।४।१. * अग्निहोत्रस्य यदा सायंप्रातरभ्यस्तोऽयं एक एव प्रयोगो भवति, तदा सायंहोमे कृते यदा नाम यजमानस्य कदाचिदापद् भवति, तदा यथाकथंचित् प्रातर्होमः कर्तव्यः प्रक्रान्तासमाप्तिनिमित्तदोषपरिहारार्थम्। अथ तु वसन्ते ज्योतिष्टोमवत् सायंकाले समाप्तं कर्म, ततो नावश्यं प्रातर्होमः कर्तव्यः। किंच 'काम्यः सर्वाङ्गसंयुक्तः प्रयोगश्च फलार्थिना। सायंप्रातर्विकल्पेन प्रयोक्तव्यस्तदा भवेत्॥' अभ्यस्तैककर्मपक्षे तु कालद्वयेऽपि प्रयत्नेन अवैगुण्यं संपादनीयम्। **वा.** २।२।५।१६ पृ. ५०८. * 'सायं जुहोति' 'प्रातर्जुहोति' 'उदिते जुहोति' 'अनुदिते जुहोति' 'प्रथमास्तमिते जुहोति' 'संधौ जुहोति' 'नक्षत्राणि दृष्ट्वा जुहोति' इति **अग्निहोत्रस्य** निमित्तम्। तन्नातिक्रमितव्यम्। **भा.** ५।१।१७।३३. * **अग्निहोत्रे** अग्निसूर्ययोः अन्यतः अप्राप्तयोः कालद्वयलक्षितहोमे विधानात् फलतो व्यवस्था युक्ता। **सु.** पृ. ८७८. * अग्निहोत्रे 'अग्नेस्तृणान्यपचिनोति' इति श्रूयते। तत्र उद्देश्यगतमेकत्वमविवक्षितं इति सर्वेषामग्नीनां तृणापचयः कर्तव्यः, नैकस्यैवाग्नेः। **भा.** ३।१।७।१२-१५. । ननु 'अग्नेस्तृणानि' इत्यत्र द्वितीयासंयोगाभावात् यथोक्तवाक्यभेदाभावात् एकत्वविवक्षा स्यात्। नैष दोषः। यद्यप्येषा षष्ठी विशेषणत्वात् गुणभूतमिव अग्निं प्रतिपादयति, तथापि संबन्धान्तराभावात् अङ्गाङ्गिसंबन्ध एव ज्ञायते। तत्रापि अग्नेः प्रयोजनवत्त्वात् तृणापचयस्य तदभावात् राज्ञः पुरुषः इत्यत्र यथा राजा पुरुषस्य स्वामी, एवं अग्निः तृणापचयस्य स्वामी इत्येतदेव गम्यते। यद्यपि चैषा पञ्चमी स्यात्, तथापि अग्न्यपादानकस्य तृणापचयस्य फलाभावात् अवश्यं

‘ मध्यात् पूर्वार्धाच्च द्विः अवद्यति ’ इतिवत् अविवक्षित-गुणार्था कार्यवशेन अग्निप्राधान्यं लक्षयन्ती प्रवर्तते । ततश्च अग्नेः प्राधान्यं एकत्वस्य च गुणभावः इत्यादि पूर्ववदेव योजनीयम् । तृणानि इत्येतदपि बहुवचनं अविवक्षितमिति ध्येयम् । **वा.** ३।१।७।१४ पृ. ७२२–२३. ※ अग्निहोत्रे अग्न्युद्धरणमन्त्रः ‘ वाचा त्वा होत्रा, प्राणेनोद्गात्रा, चक्षुषाऽध्वर्युणा, मनसा ब्रह्मणा, श्रोत्रेणाग्नीधा, एतैस्त्वा पञ्चभिर्दैव्यैर्ऋत्विग्भिरुद्धरामि ’ इति । अयं मन्त्रः दर्शपूर्णमासार्थे वह्नेरुद्धरणे न पठितव्यः । **वि.** ९।४।९, ※ अग्निहोत्रे उदयकाले अस्तमयकाले वा आहवनीयगार्हपत्यरूपाग्निद्वयनाशे एव पुनराधानं कर्तव्यं, न तु एकनाशेऽपि । ६।४।८, ※ अग्निहोत्रे गार्हपत्ये श्रपणं विहितं, मासाग्निहोत्रे च प्राजहिते श्रपणम् । १२।१।६, ※ अग्निहोत्रे जर्तिलादिवाक्यं पयोविधेरर्थवादः । जर्तिलयवागून्यायः । १०।८।४, ※ अग्निहोत्रे ‘ दध्नेन्द्रियकामस्य जुहुयात् ’ इत्यत्र विहितं काम्यं दधि नित्यप्रयोगे न ग्राह्यमिति चेन्न । ‘ दध्ना जुहोति ’ इत्यस्मिन् वाक्यान्तरे कामसंयोगमनुपन्यस्य नित्यहोमसंयोगेन दधिविधानात् । तस्मात् एकस्यैव दध्नः नित्यत्वं काम्यत्वं चाविरुद्धम् । ४।३।३. ※ अग्निहोत्रे दशद्रव्यविकल्पः । अयं अव्यवस्थितो विकल्पः । **बाल.** पृ. १५८. ※ अग्निहोत्रे दश द्रव्याणि । ‘ दध्यत्र दशमे पक्षे तद्धोमस्य विशेषणम् ’। **वा.** २।२।११।२५ पृ. ५४१. ‘ पयो दधि यवागूश्च सर्पिरोदनतण्डुलाः । सोमो मांसं तथा तैलमापस्तानि दशैव तु ।। ’ **सु.** पृ. ८३७. ※ अग्निहोत्रे नैयमिके उपसदः स्वार्थाः परार्था वा न विद्यन्ते । **वा.** २।३।११।२४ पृ. ६१४. ※ अग्निहोत्रे ‘ यावज्जीवमग्निहोत्रं जुहोति ’ इति बह्वृचब्राह्मणे ( कौषीतके ) । जीवननिमित्तकः प्रयोगभेदोऽयं, इति नित्याग्निहोत्रविधिरयम् । ‘ यावज्जीविकाधिकरणं ’ इति बिन्दौ द्रष्टव्यम् । **वि.** २।४।१. ※ ( अग्निहोत्रे ) सायंतनस्य प्रधानस्य तत्कालाङ्गान्येवोपकुर्वन्ति नान्यकालानि वैगुण्यात् । एवं प्रातस्तनस्यापीति आवर्तन्ते । **वा.** २।२।२।१६ पृ. ५०८, ※ प्रवसद्यजमानाग्निहोत्रेषु अग्न्युपस्थानार्थे प्रोषितस्य आशीर्मन्त्रं ( ‘ अभयं वोऽभयं मेऽस्तु ’ इति ) दर्शयति । ३।८।६।१६. ※ सांतपनीयामध्ये **अग्निहोत्रकरणे** सांतपनीयापदार्थानां यद्यपि क्रमहानिरस्ति, तथापि अग्निहोत्रस्य यथा प्रणयनपदार्थलोपप्रसङ्गः, तथा पदार्थवैगुण्यं नास्ति । **सोम.** ५।१।१७. ※ **अग्निहोत्रदर्शपूर्णमासमात्रं** कथंचिदधिगच्छति, अशक्तो नाधीते सकलं, तथापि न तस्य तत्र अनधिकारः । **वा.** ३।८।८।१८. ※ **अग्निहोत्रदर्शपूर्णमासादीनि** कर्माणि गार्हपत्याहवनीयान्वाहार्यपचनादिभ्यो विना न सिध्यन्ति । **भा.** २।३।३।४ पृ.५१०,※ **अग्निहोत्रदोहाधिकारे** ‘वत्समालभेत’ इदं न कर्मान्तरं किंतु स्पर्शमात्ररूपः संस्कारः । ‘ वत्सालम्भाधिकरणं ’ इत्यत्र द्रष्टव्यम् । २।३।६।१६–१७. ※ **अग्निहोत्रद्रव्यस्य** चतुरुन्नयनसंस्कृतस्यैव प्रधानहोमार्थत्वम् । **के.** ※ अग्निहोत्रद्रव्यस्य पाकः ( दैवादिना पशोरनुष्ठाने द्वितीयदिने विलम्बिते) प्राजहिते एव । **संकर्ष.** ३।२।२५. ※ **अग्निहोत्रनाम्ना** कौण्डपायिनामयनगतमासाग्निहोत्रे धर्मातिदेशः । मासाग्निहोत्रन्यायः । **भा.** ७।३।१।१–४, ※ **अग्निहोत्रप्रकरणे** ‘ दध्ना जुहोति ’ इत्यादिना न कर्मान्तरं विधीयते किंतु अग्निहोत्रे एव गुणविधिः वैकल्पिकः । २।२।१०।२४. ※ अग्निहोत्रप्रकरणे श्रुते ‘ दध्ना जुहोति ’ इत्यादौ अक्रियारूपं दधि द्रव्यं क्रियाविशेषणं सत् विधीयते ‘ दधिसाधनकं होमं कुर्यात् ’ इति । **वि.** ५।१।१ वर्णकं २, ※ **अग्निहोत्रप्रयोगौ** नित्यकाम्यरूपौ भिन्नौ । ‘ यावज्जीविकाधिकरणं ’ इति बिन्दौ द्रष्टव्यम् । २।४।१, ※ **अग्निहोत्रवह्नेः** उद्धरणं सायं अधिवृक्षसूर्ये काले, प्रातश्च आविःसूर्ये काले विहितम् । ९।४।९, ※ **अग्निहोत्रशब्दः** क्रियावाची, न द्रव्यवाची । १।४।४. ※ शाखान्तरे ‘ द्वे आहवनीये, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने, दश संपद्यन्ते, दशाक्षरा विराट्, य एवं विद्वान् विराट्-संपन्नमग्निहोत्रं जुहोति ’ इति सर्वहोमविषयत्वेन अग्निहोत्रशब्दप्रयोगात् सर्वविषयतैव **अग्निहोत्रशब्दस्य** निश्चीयते । **सु.पृ.** ७८१,※‘आहवनीये होमो नापरयोः ’ इति गार्हपत्यान्वाहार्यपचनयोर्होमनिषेधात्, बह्वृचब्राह्मणे ‘ सप्त च शतानि विंशतिश्च

संवत्सरे सायमाहुतयः, सप्त च शतानि विंशतिश्च संवत्सरे प्रातराहुतयः, तावत्योऽग्नेर्यजुष्मत्य इष्टकाः, संवत्सरेण हास्याग्निना चित्येनेष्टं भवति य एवं विद्वानग्निहोत्रं जुहोति' इत्याहवनीयाहुतिसंख्ययैव अग्निहोत्रस्य स्तुतत्वात् प्रातर्होमे च आहवनीये अग्निदेवत्यहोमाभावात् तत्पक्षाश्रयणेन उक्तम्। 'द्वे आहवनीये जुहोति, चतस्रो गार्हपत्ये, चतस्रोऽन्वाहार्यपचने' इति तु दशाहुतिपक्षे, 'द्वे आहवनीये, द्वे गार्हपत्ये, द्वे अन्वाहार्यपचने' इति षडाहुतिपक्षे वा प्रातर्होमेऽपि गार्हपत्यान्वाहार्यपचनयोः 'अग्नये गृहपतये स्वाहा, अग्नये संवेशपतये स्वाहा' इत्यादिमान्त्रवर्णिकाग्निदेवत्यहोमसद्भावात् **अग्निहोत्रशब्दप्रवृत्तिः** सुतरां युज्यते। पृ. ४३९, * विराड्वाक्यालोचनेन दशकृत्वः, षट्कृत्वः, द्विर्द्विर्वा एकैकस्मिन् काले अभ्यस्तस्य (होमस्य) **अग्निहोत्रशब्दवाच्यत्वम्**। पृ. ७८७. * **अग्निहोत्रहोमः** दर्शस्य उपवसथे सायंदोहस्य सर्वस्यैव सांनाय्यार्थमुपयोगस्य विहितत्वात् यवाग्वैव कर्तव्यः इत्युक्तम्। **भा.** ११।१।९।५१. * अग्निहोत्रहोमः दैवात् सांतपनीयेष्टेः सायमारम्भे सति इष्टिमध्ये एव कर्तव्यः, न तु इष्टिसमाप्त्यनन्तरम्। तदा हि होमस्यापि कालभ्रंशः स्यात्। **वि.** ५।१।१७, * **अग्निहोत्रहोमे** सायंकालीने प्रातःकालीने वा अपराधादतिपतिते लोपसंख्यया कालान्तरे प्रतिहोमाः क्रियन्ते। प्रतिहोमा नाम अतिक्रान्तहोमाः। ६।५।१२. * **अग्निहोत्रहोममीमांसा** 'होतव्यमग्निहोत्रं, न होतव्यमिति मीमांसन्ते ब्रह्मवादिनः' इति, तूष्णींहोमप्रशंसार्था। **भा.** १०।८।५।८, * **अग्निहोत्रहोमलोपे** प्रतिहोमाः अग्निहोत्रहोमक्रमेणैव कर्तव्याः। प्रातर्होमलोपे प्रातर्होममारभ्य, सायंहोमलोपे तु सायंहोममारभ्येति। ६।५।१३-१४।४३-४४. * अग्निहोत्रहोमलोपे ये प्रतिहोमाः क्रियन्ते, ते ज्योतिष्टोमे अवभृथोत्कर्षेण दीक्षोत्कर्षे सति निषेधादेव न कर्तव्याः। **वि.** ६।५।१२. * **अग्निहोत्रहोमानुष्ठानं** आधानेन पवमानेष्टिभिश्च संस्कृतेष्वग्निषु कर्तव्यं, न केवलेनाधानेन संस्कृतेषु। **भा.** ५।३।९।२१-२५. * **अग्निहोत्रहोमारम्भः मानवसूत्रे** पौर्णमासोत्तरं विहितः। **भाट्ट.** १०।२।२६. * **अग्निहोत्रादीनि** कर्माणि कृत्रिमेण याचितेन वा अग्निना नानुष्ठातव्यानि इति गम्यते। तेन अकृत्रिम एव केवलोऽग्निस्तेषां साधक इति निश्चीयते। **भा.** २।३।३।४ पृ. ५९१, *अग्निहोत्रादीनि नियतानि ऐन्द्राग्नादीनि च अनियतानि कर्माणि पवमानेष्टीः कृत्वा संस्कृतेषु अग्निषु कर्तव्यानि। ५।३।९।२१–२५. * **अग्निहोत्रादेः** निषिद्धाचरणजन्यदोषनाशार्थत्वाभ्युपगमे अनाचरितनिषिद्धस्य अकर्तव्यतापत्तेः नावश्यकत्वसिद्धिः। प्रायश्चित्तत्वेन चाविधानात् नोपात्तदुरितक्षयार्थत्वे किं चित् प्रमाणमस्ति। विस्तरेण च उपात्तदुरितक्षयार्थता **तन्त्रसारे** अस्माभिर्निरस्ता। उपात्तदुरितक्षयार्थत्वोद्घोषस्तु विहिताकरणजन्यमेव दुरितं विहितकालसमीपे प्राप्तत्वात् आङ्पूर्वस्य ददातेः गृह्णात्यर्थवाचित्वेन ग्रहणफलप्रातिलक्षणत्वोपपत्तेः उपात्तदुरितमभिप्रेत्य व्याख्येयः। 'अकरणे दोषप्रसक्तेः' इति हेत्वभिधानात् (वा. २।४।११ पृ. ६२३) अयमेव वार्तिककृतोऽभिप्रायो लक्ष्यते। 'पूर्वां संध्यां जपन् विप्रो नैशमेनो व्यपोहति' इत्यादिस्मृतिस्तु निशान्तविहितकर्माननुष्ठानजन्यमेनो नैशं इत्येवं व्याख्येया। 'यद्रात्र्या पापमकार्षं मनसा वाचा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना' इत्यादिमन्त्रवर्णोऽपि मनःप्रभृतीनां अन्यासक्तत्वात् रात्र्यन्तविहितकर्माननुष्ठानेन यत् पापमकार्षं इत्येवं व्याख्येयः। 'संध्योपासनमात्राद्धि सर्वपापक्षये सति। अग्निहोत्राद्यनुष्ठाने कः प्रवर्तेत बुद्धिमान्॥ कस्य तु क्षमता कस्ये-('अस्य तु क्षमता नास्ये' इति पाठस्तु युक्तः) त्यवगन्तुं न शक्यते। अतो मदुक्तरीत्यैव पापनाशार्थतोचिता॥' शास्त्रेण तु अकरणजन्यदोषाभावायैव अग्निहोत्रादेः कर्तव्यतोच्यते। **सु.** पृ. ९६६. * **अग्निहोत्रादीनाम**प्युत्कर्षः दीक्षोत्कर्षे। **भा.** ६।५।१०।३८, * अग्निहोत्रादीनां कर्मणां सर्वाङ्गोपसंहारेण प्रयोगः। ११।१।३।११–१९, * **अग्निहोत्रादिषु** शब्देनैव कार्यकारणसंबन्ध उच्यते। तस्मात्तत्र तत्काले अदृश्यमानेऽपि फले कालान्तरे फलं भविष्यति इति गम्यते। ४।३।१।२, * **अग्निहोत्रादिकर्मणां** निमित्तानुरोधेनावृत्तिः। तेषामौत्पत्तिकत्वाधिकरणम्। ६।२।८।२८-२९, * **अग्निहोत्रादिकर्मणि** देवानां ऋषीणां तिरश्चां च नाधिकारः। किंतु मनुष्याणामेवाधिकारः। ६।१।२।४–५, * **अग्निहोत्रादिकर्मसु** उत्सर्गे स्वयं कुर्यात् शेषमन्येन

कारयेत् । 'शास्त्रफलाधिकरणं' इति बिन्दौ द्रष्टव्यम् । ३।७।८।१८–२०. * **अग्निहोत्रादिकर्मानुष्ठानकालावधिः** । जीर्णस्यापि सहायोपादानेन अनुष्ठातुं शक्तस्य जीवनावधिः कालः, असहायस्य जरा अवधिः, प्रवित्रजिषोः त्रिंशद्वर्षपरिमितः इति जीवनादिकालानां व्यवस्थितविकल्पवत् अत्यन्तविरक्तस्य शीघ्रं प्रवित्रजिषोः मासोऽपि वा व्यवस्थितविषयतया विधातुं शक्यः । **सु.** पृ. ९५०. * **अग्निहोत्रादिनित्यकर्माणि** श्रुतद्रव्यापचारे प्रतिनिधिना समापनीयानि । **भा.** ६।३।४।१३–१७, * **अग्निहोत्रादिनित्यकर्मणां** यथाशक्त्यनुष्ठानम् । 'यथाशक्त्यधिकरणं' इतिबिन्दौ द्रष्टव्यम् । ६।३।१।१–७. * **अग्निहोत्रादिपदानि** द्रव्यभूतलिङ्गसंख्यायोग्यार्थाभिधायीनि । **वा.** २।६।१२।२४ पृ. ६१६. **अग्निहोत्रादियावज्जीवकर्मणां** स्वस्वकाले एवानुष्ठानं न सातत्येन । अग्निहोत्रन्यायः । **भा.** ६।२।७।२४–२७. * **अग्निहोत्रादिविधयः** त्रैवर्णिकेषु विद्वत्सु लब्धेषु चतुर्थवर्णस्य विद्यां नाक्षिपन्ति । **शा.** तर्कपादे पृ. ६. * दीक्षितस्य अन्यत्र गमने प्रसक्ते **अग्निहोत्राभावेऽपि** समारोप्यैव अग्निर्नेतव्यः । **संकर्ष.** ३।२।३१. * **अग्निहोत्रार्थं** उद्धृतस्यैवाग्नेः उद्वाने ज्योतिष्मतीष्टिः प्रायश्चित्तं, न तु दर्शार्थोद्धृतस्य । **वि.** ९।४।७. * **अग्निहोत्रेतिकर्तव्यता** अग्निप्रणयनादिकैव । **वा.** २।२।११।२६ पृ. ५५०. * **अग्निहोत्रेष्टिसोमधर्माणां** अपूर्वार्थत्वात् ऊहविचारः कर्तव्यः । **वि.** ९।१।१ वर्णकं १.

**अग्निहोत्रनामन्यायः** । ( ७।३।१।१-४ )

द्वादशाहे प्रथमस्याह्नः प्रायणीयं इति नाम तथा गवामयनेऽपि । तत्र अग्निहोत्रनामन्यायेन अतिदेशः इति चेत् मैवम् । मासाग्निहोत्रन्याय एवायम् । ७।३।१।१–४.

**अग्निहोत्रन्यायः । अग्निहोत्रादिकर्मणां निहितकालकर्तव्यत्वम् ॥**

**अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते । ६।२।७।२३ ॥**

**भाष्यं**—इदमामनन्ति, 'यावज्जीवमग्निहोत्रं जुहोति' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति । पुरुषार्थोऽयं यागो विधीयते । नायमभ्यासः कर्मशेष इत्युक्तम् ( २।४।१।१–७ ) । इहेदानीं संदिह्यते, किं सातत्येन होतव्यं उत असातत्येनेति । किं प्राप्तम् ? पुरुषं प्रति उपदिष्टत्वात् सातत्येन । अयं पुरुषः, इति सातत्येनानुष्ठातव्यम् । ननु 'प्रदोषमग्निहोत्रं होतव्यं' 'व्युष्टायां प्रातः' इति श्रूयते 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति । नैष सर्वाङ्गोपसंहारेण प्रयोगः । अतः कालमात्रे हीने न दोषः ।

**तस्मिन्नसंभवन्नर्थात् । २४ ॥**

**भाष्यं**—नैतदस्ति, यत् जुहुधिजुहुधीत्येव होतव्यमिति । यथा शक्नोति, तथा जुहुयादित्युच्यते । न च सातत्येन शक्यते । अवश्यमनेन आहारविहाराः कर्तव्याः । तस्मादर्थाविरुद्धेषु कालेषु सततं होतव्यमिति ।

**न कालेभ्य उपदिश्यन्ते । २५ ॥**

**भाष्यं**— न चैतदस्ति, यदुक्तमर्थाविरुद्धेषु कालेषु सततं होतव्यमिति । काल एव श्रूयते 'प्रदोषमग्निहोत्रं होतव्यं' 'व्युष्टायां प्रातः' इति । तथा 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति । तस्मान्न सातत्यमिति । आह, ननु विगुणस्यापि प्रयोगान्न काल आदरणीय इति । अत्रोच्यते । न कालो गुणः । निमित्तं ह्येतदित्युक्तम् । तस्मादन्येषु कालेष्वविहितत्वात् कृतमप्यकृतं स्यात् । तस्मादाश्रितकालस्य यावज्जीवं प्रयोग इति ।

**दर्शनात् काललिङ्गानां कालविधानम् । २६ ॥**

**भाष्यं**—लिङ्गं च भवति, 'अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत्' इति । यदि सर्वस्मिन् काले होमस्तदा कस्यातिपत्तिः स्यात् ? तस्मादपि न सततमभ्यासः ।

**शा**—'यावज्जीवं०' इति श्रूयते । तत्र संशयः किं सातत्येनानुष्ठानं उत सायंप्रातरग्निहोत्रं, पौर्णमास्यमावास्ययोश्च दर्शपूर्णमासौ इति । तत्र जीवने निमित्ते कर्मविधानात्, नैमित्तिके च असंभाविताङ्गत्यागेऽपि अवैगुण्यात्, कालस्य चाङ्गत्वात्, तल्लोपेन संततानुष्ठानं न्याय्यम् । **इति प्राप्ते ब्रूमः ।** 'अङ्गत्वेऽपि च कालस्य न त्यागोऽन्याङ्गवत्, कुतः ? । अनुपादेयरूपत्वात् तस्मिन्

कर्मविधिर्यतः ॥' यद्धि प्रयोगविधिवशादुपादेयं तद्धि 'यथाशक्ति' इति उपबध्यते । कालस्य पुनः अनुपादेयत्वात् । एषा हि तत्र वचनव्यक्तिः, अस्मिन् काले प्राप्ते कर्म कर्तव्यमिति । ततश्च अर्थात् तत्कालमेव जीवनं निमित्तं भवति इति न कालान्तरे अनुष्ठानमिति । एतेन अग्निविद्ये व्याख्याते । तयोरपि अध्ययनाधानविधिसिद्धयोः स्वीकरणात्, प्रयोगविधिना अननुष्ठाप्यत्वात् । एषा वचनव्यक्तिः, अग्निमान् विद्वांश्च अधिक्रियेत इति । प्रत्यक्षमेव च विद्यावतः अधिकारश्रवणं 'य एवं विद्वानग्निहोत्रं' इत्येवं सर्वत्र श्रवणात् । तस्मात् तत्काले प्राप्ते विदुषः अग्निमतश्च अङ्गान्तराणि यथासंभवं उपसंहृत्य अनुष्ठानम् ।

**सोम**— स्मृतिवलात् उपनीताधिकारित्ववत् यावज्जीवश्रुतेः संततानुष्ठानं इति प्रत्यवस्थानात् संगतिः । इदमधिकरणं न कालमात्रविषयं, किंतु प्रयोगविध्यनुपादेयाङ्गमात्रविषयम् । न प्रयोगविधिविधेयतामात्रेण यथाशक्त्युपबन्धः, किंतु प्रयोगविधिना यत् कर्तव्यतया बोध्यते तत्रैव । कर्तव्यं हि यथाशक्ति कुर्यात् इति वक्तुं शक्यते, नाकर्तव्यम् । ततश्च प्रयोगविधिना यत् पुरुषकर्तव्यतया बोध्यते, तत्रैव यथाशक्त्युपबन्धात् कालस्य चातथात्वात् न तत्र यथाशक्त्युपबन्धः । **सूत्रार्थस्तु**— वाशब्दो निषेधे । नायमभ्यासः अकर्मशेषत्वात्, किंतु नियमः पुरुषार्थः । ततश्च सातत्येन अनुष्ठानं इति ( पूर्वपक्षः ) ।

**वि**—'यावज्जीवेति सातत्यं स्वकाले वा, निमित्ततः ।, कालाङ्गलोपादाद्यः स्या, द्वैधात्यागतोऽन्तिमः ॥'

**भाट्ट**— जीवनादिनिमित्तकाग्निहोत्रादौ निमित्तस्य प्रतिक्षणं भेदात् प्रतिनिमित्तं नैमित्तिकावृत्त्या संततानुष्ठानप्रतीतेः, तदनुरोधेन च अशक्याङ्गत्यागस्य वक्ष्यमाणत्वात्, कालस्यापि चाङ्गत्वेन त्यागोपपत्तेः, काम्यविषयत्वेन तस्य सार्थक्याच्च, सांतत्यानुष्ठानम् । अत एव सोमे वसन्तस्य निमित्तत्वात् तत्र एकैकस्मिन् सकृत्करणप्रतीतेः अमावास्यादिकालानुग्रहेऽपि न क्षतिः । **इति प्राप्ते,** आहारविहाराद्यनुरोधेन निमित्तश्रुतेः अवश्यं संकोचनीयत्वात् अग्निविद्याभ्यामिव कालेनापि सा संकोच्यते । नहि कालस्याङ्गत्वेऽपि यथाशक्त्युपबन्धविषयत्वं, यस्यैव हि प्रयोगविधिप्रयोज्यत्वेन शक्तौ अनुष्ठानप्रसक्तिः, तस्यैव अशक्तौ निमित्तश्रुत्यनुरोधेन त्यागः । ततश्च यथैव अग्निविद्ययोः विध्यन्तरप्रयुक्त्युपजीवकत्वेन प्रयोगविध्यप्रयोज्यत्वात् न तत्, तथा कालस्यापि स्वरूपेण अननुष्ठेयस्य प्रयोगविध्यप्रयोज्यत्वात् यथाशक्त्युपबन्धविषयत्वानुपपत्तेः । कालविधिनाऽपि निमित्तश्रुतिसंकोचात् न सांतत्येनानुष्ठानम् । अत एव 'यो दर्शपूर्णमासयाजी सन् अमावास्यां वा पौर्णमासीं वाऽतिपादयेत्' इति काले नैमित्तिकातिक्रमे एव प्रायश्चित्तम् ।

**न्यायबिन्दुः**—'यावज्जीवमग्निहोत्रं जुहोति' इत्यादिजीवननिमित्तकं सायंप्रातर्दर्शपूर्णमासादिकालं विनाऽपि कार्यं, नैमित्तिके अशक्याङ्गत्यागे अवैगुण्यात्, अतः संततानुष्ठानं, **इति प्राप्ते,** अङ्गकालस्य कृत्यसाध्यत्वेन यथाशक्तिन्यायाविषयत्वात् तत्कालमेव जीवनं निमित्तं भवति, इति न संततानुष्ठानं इति सिद्धान्तः ।

**मण्डन**—'दर्शादियागः सततं न कार्यः ।'

**शंकर**—'नाशक्त्या कालहापनम् ।'

* **अग्निहोत्रन्यायः** । न च कालविधौ सति नामधेयत्वं नामधेयत्वे च सति तदनुवादेन कालविधिः इति इतरेतराश्रयापत्तिः ( पौर्णमास्यां पौर्णमास्या इत्यादौ ) अग्निहोत्रन्यायेन पूर्वं सामानाधिकरण्येन नामधेयत्वे अवधारिते पश्चात् तदनुसारविहितकालयोगेन प्रवृत्तिनिमित्तावधारणोपपत्तेः । **भाट्ट.** २।२।२.

⌛ **अग्निहोत्रशब्दन्यायः** । आतिथ्येष्टौ नवकपाले श्रुतो वैष्णवशब्दः राजसूयगते वैष्णवे त्रिकपाले अग्निहोत्रशब्दवत् नवकपालधर्मान् अतिदिशति इति पूर्वपक्षः । **वि.** ७।३।६, * अग्निहोत्रशब्दन्यायः । (**अयमेव** अग्निहोत्रन्यायः अग्निहोत्रनामन्यायश्च । ) 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दः अग्निचयनोपस्थानकर्मणि प्रयुज्यमानः अग्निहोत्रशब्दन्यायेन पृष्ठस्तोत्रधर्मान् उपस्थाने अतिदिशति । इति पूर्वपक्षः । ७।३।१४.

⌛ **अग्निहोत्रहवणीन्यायः** । ( १०।२।२७।६४ ).

संबन्धरूपाङ्गाभावेऽपि अग्निहोत्रहवणीन्यायेन प्रधानभूतकपालबाधानुपपत्तेः । अयमेव गुणलोपन्यायः ।

*'अग्निहोत्रहवणी च शूर्पं च' इति यज्ञायुधविशेषः निर्वापसाधनं काष्ठपात्रम्। द्वादशद्वंद्वान्तर्गता चेयम्। 'अग्निहोत्रहवण्या हवींषि निर्वपति' 'यज्ञायुधानि संभरति'। **के.** * अग्निहोत्रहवणी प्रकृतौ वचनात् भवति। **टुप्.** १०।२।२७।६३. * अङ्गं प्रधानेन बाध्यते। यथा पवमानेष्टिषु अग्निहोत्रहवणी निर्वापेण बाध्यते। **बाल.** पृ. १३२. * यया अग्निहोत्रं हुतं सा अग्निहोत्रहवणी। **शा.** १०।२।२७. * अग्निहोत्रहवण्यभावेऽपि आधाने पवमानेष्टिषु साधनान्तरेण निर्वापः कर्तव्य एव। **भा.** १०।२।२७।६३. * ' अग्निहोत्रहवण्या हवींषि निर्वपति ' दर्शादीष्टौ। **भाट्ट.** १०।२।२६.

**अग्निहोत्रहोमः सायंतनः पशुयागदिनेऽपि नौत्तरवेदिके, दैवात् पशुकर्मणः उत्कर्षे तु औत्तरवेदिके, एव ॥**

पशौ पूर्वेद्युरेव प्रणयनं ( कृत्वाचिन्तया ) तद्दिनीयं सायमग्निहोत्रमौत्तरवेदिके एव स्यात्। तस्यैव मुख्याहवनीयत्वात्, **इति प्राप्ते,** ( पशोः सद्यस्कालत्वेन ) उत्तरवेद्यां नाग्निहोत्रस्य करणप्रसक्तिः। दैवात् कर्मण उत्कर्षे तु सत्यां प्रसक्तौ तत्रैव करणमिति कल्पः। **संकर्ष.** ३।२।२४.

**अग्निहोत्रादिकर्मणां निमित्तानुरोधेन आवृत्तिः ॥**

**तेषामौत्पत्तिकत्वादागमेन प्रवर्तेत। ६।२।८।२८॥**

**भाष्यं**— ' प्रदोषमग्निहोत्रं होतव्यं, व्युष्टायां प्रातः ' इति। तथा ' पौर्णमास्यां पौर्णमास्या यजेत ' ' अमावास्यायाममावास्यया यजेत ' इति। तत्र संदेहः, किं सकृत् प्रदोषे होतव्यं उत प्रदोषेप्रदोषे इति। तथा सकृत् व्युष्टायां प्रातः, उत व्युष्टायांव्युष्टायामिति। तथा किं सकृत् पौर्णमास्याममावास्यायां वा, उत आगतेआगते काले इति। किं प्राप्तं? सकृत् कृत्वा कृतार्थः शब्दः, न नियमः पौनःपुन्ये इति। **एवं प्राप्ते ब्रूमः।** आगमेन प्रवर्तेत। आगतेआगते काले प्रयोगः कर्तव्य इति। कुतः? तेषामौत्पत्तिकत्वात्। उत्पद्यमानं कर्म कालसंयुक्तमेव उत्पद्यते। तदुक्तं 'निमित्तार्थाः कालश्रुत्यः' इति। निमित्ते च संप्राप्ते नैमित्तिकोऽर्थः कर्तव्यो भवति। तस्मात् आगतेआगते काले प्रयोगः कर्तव्यः।

**तथाहि लिङ्गदर्शनम्। २८॥**

**भाष्यं**— ' एष वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत् ' इति आगतेआगते काले प्रयोगं दर्शयति।

**शा**— यदि कालशास्त्रानुरोधेन निमित्तसंकोचः, ततः कालशास्त्रस्य सकृदनुष्ठानेन संपादितत्वात् तद्वशेन सकृदेव सायंप्रातःकालयोः पौर्णमास्यमावास्ययोश्च कृतः शास्त्रार्थः, इति न पुनःपुनरनुष्ठातव्यं स्यात्। मैवम्। नहि कालवशात् जीवनस्य निमित्तत्वं हीयते, किंतु तत्कालीनमेव जीवनं निमित्तं, न कालान्तरीयं इत्येतावत्। ततश्च तादृशस्यैव जीवनस्य पुनःपुनरावृत्तौ, शास्त्रमपि पुनःपुनः नैमित्तिकेषु पुरुषं नियुङ्क्ते। अतो निमित्तावृत्तौ आवृत्तिर्नैमित्तिकानाम्।

**सोम**— षष्टिघटिकादिव्यातकालस्य दर्शादिशब्दार्थत्वात् तत्कालव्याप्तं जीवनमेकमेव, न तु नाना, तथाविधं च निमित्तं, न तु दर्शाद्यवयवव्याप्तं, एकस्मिन् दर्शादिकाले तथाविधनिमित्तावृत्त्यभावात् न पुनःपुनरनुष्ठानमिति सिद्धान्तः। **सूत्रार्थस्तु**—तेषां कालानां औत्पत्तिकत्वात् कर्मोत्पत्तिनिमित्तत्वात् कालस्य पुनःपुनरागमेन कर्माणि प्रवर्तेरन् इति।

**वि**—'सकृत्कृतिरुताऽऽवृत्तिर्दर्शादेः, शास्त्रसार्थ्यतः। सकृत् स्यात्, कालसंयुक्तजीवनावृत्तितोऽन्तिमः ॥ '

**भाट्ट**— कालशास्त्रेण निमित्तशास्त्रस्य संकोचेऽपि यदा कालावच्छिन्नस्य निमित्तस्य पुनः संनिपातः, तत्र नैमित्तिकावृत्तिः। इतरथा स्वोत्पत्तौ अवश्यानुष्ठापकत्वरूपनिमित्तत्वानुपपत्तेः। अत एव यत्र तस्मिन्नेव निमित्ते कालमात्रस्यावृत्तिः, तत्र न नैमित्तिकावृत्तिः, यथा एकस्मिन्नेव वसन्ते पर्वावृत्तौ ( न सोमावृत्तिः )। अत्र च पूर्वपक्षस्यातितुच्छत्वात् सुहृद् भूत्वा उपदेश इति मन्तव्यम्।

**न्यायबिन्दुः**— सकृदनुष्ठानेन कृतार्थत्वात् नावृत्तिः, **इति प्राप्ते,** कालान्तरव्यावृत्तावपि तात्कालिकजीवनरूपनिमित्तावृत्तिवशात् नैयमिकावृत्तिः इति सिद्धान्तः।

**मण्डन**— ' दर्शादिकाले च पुनःपुनः स्यात्। '

शंकर— ' जीवनेर्जीवने कर्म । '

अग्निहोत्रादीनां धर्मा अपूर्वप्रयुक्ताः ॥

यज्ञकर्म प्रधानं तद्धि चोदनाभूतं तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् । ९।१।१।१ ॥

भाष्यं—अष्टमेऽध्याये विशेषातिदेशलक्षणं वृत्तम् । इदानीमूहलक्षणं वर्तयिष्यामः । त्रिविधश्चोहः । मन्त्रसामसंस्कारविषयः । स इह प्राधान्येन वक्ष्यते । अन्यदपि किंचिदुपोद्वातेन प्रसङ्गेन च । आदितस्तु अयमर्थश्चिन्त्यते लक्षणसिद्ध्यर्थम् । अग्निहोत्रं दर्शपूर्णमासौ ज्योतिष्टोमश्चोदाहरणम् ; तत्र पृथग्धर्माः समाम्नाताः । तेषु संशयः, किं तेऽपूर्वप्रयुक्ताः, उत यजिप्रयुक्ता इति । अपूर्वप्रयुक्तेषु सत्सूहः सिध्यति । यजिप्रयुक्तेषु तु संकरो धर्माणाम् । कथमिव ? सर्वे हि ते यजतयः । यजतिसामान्ये यजतिशब्दवाच्ये धर्मा विधीयमानाः सर्वत्र भवितुमर्हन्ति । अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति । तस्मात्तत्रोहः सिद्धो भवति । नन्वेतत्सर्वं सप्तमे विचारितं, निर्णीतं च । उच्यते । पुनस्तदेव स्मार्यते, उत्तरचिन्ताविवक्षया । अथवा, तत्र योऽर्थो नोक्तः, तद्विवक्षयेदमुच्यते । कश्चासौ ? ' तस्य द्रव्येषु संस्कारस्तत्प्रयुक्तस्तदर्थत्वात् ( ९।१।१।१ ) ' इति । एतेन चेह प्रयोजनमूहो विवक्षितः । एवं हि स सिध्यति । तत्रैतन्नोक्तं, नैतेन तत्र प्रयोजनमिति । तत्र ह्येतावती चिन्ता, किं प्रतिप्रकरणं नियता धर्माः, उत सर्वे सर्वत्रेति । तदपूर्वप्रयुक्तत्वे यजिप्रयुक्तत्वे च सिध्यति, न द्रव्यसंस्कारस्यापूर्वार्थत्वे । तत्त्विह सिद्धम् । तत्रापूर्वप्रयुक्तत्वसिद्धौ व्यवहारार्थमसूत्रितमुपादीयते । तस्मादपुनरुक्तम् ।

टुप्—ननु दशमानन्तरमूहश्चिन्तयितुं युक्तः । कुतः ? उपकारातिदेशे ( सति ) ऊहः ( अवकल्पते ) । शास्त्रातिदेशे ( सति ) ऊहाभावः । यथा, प्रकृतौ अग्न्यन्वाधानादीनि ब्राह्मणतर्पणान्तानि गृहीत्वा कथमेतान्युपकरिष्यन्तीति ( अपेक्षायां सत्यां ) तत्र कानि चिदारादुपकारकाणि, कानि चित् संनिपत्योपकारकाणि । एवं शास्त्रातिदेशे, सौर्ये पेषणं प्राप्तम् । तत् यद्यपि प्रकृतौ दृष्टार्थं, तथापि शास्त्रस्यातिदिष्टत्वात् अदृष्ट उपकारः कल्पनीयः पेषणस्य, प्रयाजादीनामिव । एवमेव ' अनये जुष्टं निर्वपामि ' इति । ( यथा शास्त्रातिदेशपक्षे सौर्यचरौ अतिदिष्टशास्त्रप्राप्तस्य पेषणस्य उपकारान्तरकल्पनया बाधो न स्यात्, एवमेव ' अग्नये जुष्टं ' इति मन्त्रस्य शास्त्रप्राप्तस्य सौर्ये अदृष्टरूपोपकारान्तरकल्पनात् ऊहोऽपि न स्यात् ) तस्मादष्टमानन्तरं दशमश्चिन्तनीयः । बाधे कार्यापत्त्यर्थलोपादिभिः स्थिते, ततो नवमव्यापारो युक्तः । सत्यम् । ( किंतु ) सप्तमेऽतिदेशसद्भाव उक्तः । आग्नेयात् सौर्ये इतिकर्तव्यता (भवति) इति अष्टमे ( विशेषातिदेशः ) । नवमे नैर्ये इतिकर्तव्यतायां ( प्राप्तायां ) किमविकृतः प्रयोक्तव्य उत विकारोऽपि कश्चित्, इत्यनेन ( प्रसङ्गेन ) नवमो दशमव्यापारमनुमन्यमान एवोक्तिष्ठति । 'विधेः प्रकरणान्तरम्' इति सूत्रं ( १०।१।१।१ ) नवमाक्षेपेणैवाऽऽरभ्यते । तस्मान्नवमदशमयोः, ' अपि वाऽभिधानसंस्कारद्रव्यम् ' ( १०।१।१।२ ) इत्यनेन सद्भावः । तेनाष्टमानन्तरं नवमः ( आरभ्यते ) ।

त्रिविधश्चोह इत्येतदयुक्तम् । कथम् ? ऊहो नाम वितर्कणा । सा चैकरूपा मन्त्रसामसंस्कारेषु क्रियमाणा, न तस्याः कश्चिद्विशेषः । सामग्रहणानर्थक्यं च । मन्त्रग्रहणेन संस्कारग्रहणेन चोपात्तत्वात् ।

अत्र वर्णयन्ति । नैव वयमूहभेदं प्रतिजानीमः । किंतु विषयमस्य निरूपयामः । एषु त्रिषु वक्ष्यमाणेषु ( सः ) भविष्यतीति । तस्माद्विषयभेदः ( प्रदर्श्यते , न तूहभेदः) । 'यजतिसामान्ये यजतिशब्दवाच्ये विधीयमानाः सर्वत्र भवितुमर्हन्ति ' इति । कोऽभिप्रायः ? करणानुग्राहिणीतिकर्तव्यता तेन चापेक्षिता । तस्मात् करणमुद्दिश्य तत्रेतिकर्तव्यता विधीयते । उद्दिश्यमानस्य च विशेषणमविवक्षितम् । तस्माद्यागमात्रे विधानं वाक्येन ।

अत्र परिचोद्यते । यागः फले विधीयमानत्वादुपादेयः, इतिकर्तव्यतां प्रति चोद्दिश्यमानः । सकृदुच्चारिते चोपादीयमानत्वोद्देश्यत्वे न संभवतः, विवक्षाभेदात् । तस्माद्वाक्येनेतिकर्तव्यतासंबन्धो न घटते । उच्यते । ' दर्शपूर्णमासाभ्यां यजेत ' इतीदं यागोत्पत्तिं न विदधाति, ' यदाग्नेयोऽष्टाकपालो भवति ' इत्येवमादिभिः यागोत्पत्तेर्विहितत्वात् । फलसंबन्धमपि न करोति, उत्पत्ति-

वाक्येनैव कृतत्वाद्विश्वजिन्न्यायेन ( ४।३।७।१५–१६ )। परिशेषादितिकर्तव्यतासंबन्धार्थम्। यथा 'अध्वर्युर्गृहपतिं' इति न दीक्षा विधीयते । नासौ यजमानस्य, न वाऽध्वर्युः कर्ता ( विधीयते ), सर्वस्य चोदकेन प्राप्तत्वात्। किं तर्हि ? दीक्षाक्रमोऽनियमेन प्राप्तः सन् नियम्यते । एवमत्रापि यागमनूद्य धर्मा विधीयन्ते । उद्दिश्यमानस्य च विशेषणमविवक्षितम्। तस्माद्यागमात्रे ( धर्म- ) प्राप्तिरित्यभिप्रायः ।

'अपूर्वप्रयुक्तत्वे तु तदीयविशेषे विधीयमाना अन्यस्मिन्नपि तदीयविशेषापन्ने भविष्यन्ति। तस्मात्तत्रोहः सिद्धो भवति' इति। कोऽभिप्रायः ? भाव्यमानेन करणेतिकर्तव्यते आकाङ्क्षिते। तस्मात् द्वयोरपि भाव्यमानेन संबन्धः आकाङ्क्षितत्वात्, भाव्यं चापूर्वम्। न च याग इतिकर्तव्यतया विना न सिध्यति, निर्ज्ञातोपायत्वात् ( यागस्य लोके। तेन विशिष्टो भाव्यो विशिष्टेन करणेन भाव्यते इति न धर्माणां करणेन संबन्धः ) अरुणाधिकरणन्यायेन तु (३।१।६।१२) ( करणेतिकर्तव्यतयोः ) संबन्धः । तस्मात् ये दर्शपूर्णमासप्रकरणे तदपूर्वपरिगृहीता धर्माः, न ते अन्यत्र ( सन्ति, प्रमाणाभावात् )। तत्र विकृतौ प्रत्यक्षं भाव्यं ( ब्रह्मवर्चसं )। तस्य प्रत्यक्षवाक्यविहितमेव करणम्। भाव्यमानं च धर्मानाकाङ्क्षति करणानुग्रहद्वारेण। तत् तावदपेक्षते, तत्सिद्धये धर्माः। न च संनिधाने ( धर्माः सन्ति )। तस्मात् ( चोदनासामान्यात् ) आग्नेयधर्माः सौर्ये अतिदिश्यन्ते ( साकाङ्क्षत्वाद्वाक्यस्य )। इह पुनः ईदृशोऽतिदेशः, यथा आग्नेयेन ( उपकृतं ) एवं सौर्येणापि इति। आग्नेये च 'अग्नये जुष्टं' इति ( मन्त्रेण ) भाव्यमानसंबन्धिनी देवता प्रकाशिता, इहापि तथैव प्रकाशयितव्या। न चोहादृते शक्यते प्रकाशयितुं ( तस्मादूहः कर्तव्यः ) इत्यभिप्रायः। ननु एतत् सप्तमेन गतम्। उच्यते। 'यज्ञकर्म प्रधानं तद्धि चोदनाभूतं' इत्यनेनावयवेन अपूर्वार्थाः ( धर्माः ) इति अनूद्य द्रव्यसंस्कारं ( व्रीह्यादि द्रव्यं, अवघातादिश्च संस्कारः ) तदीयकार्यापन्नं धर्मान् लभते, न स्वरूपेण ( स्वरूपं तु अविवक्षितं ) इत्यर्थ उपदिश्यते । 'तस्य द्रव्येषु संस्कारः' इत्यनेन ( सूत्रावयवेन। )

अथवा सप्तमे अपूर्वं प्रयोजकमित्युक्तम्। इह तु एतच्चिन्त्यते, तत् ( अपूर्वं ) किं स्वार्थमेव ( प्रयुङ्क्ते धर्मान् ), उत परार्थं 'भिन्ने जुहोति' इतिवत्। यथा निमित्तस्य ( भेदनस्य ) प्रयोजकत्वे ( सत्यपि ) न भेदनार्थो होमः ( किंतु ) क्रत्वर्थः। एवमिहापि, अपूर्वं ( तु ) प्रयोजकं, यागार्थाश्च धर्माः, अनेनापि प्रकारेण सप्तमे प्रतिप्रकरणं नियता धर्मा इति सिद्धम्। ऊहस्तु अपूर्वार्थतामन्तरेण न सिध्यति।

अत्र चोद्यते। ये दर्शपूर्णमासार्था ( धर्माः ) ते सौर्ये न सन्ति, तस्मात् तत्र अप्रवृत्तिरेव ( धर्माणां प्राप्नोति )। उच्यते, वैकृतस्य ( वाक्यस्य साकाङ्क्षत्वात् ) अतिदेशेन वा अनुषङ्गेण वा यागार्थत्वपक्षेऽपि प्राकृतैरङ्गैः सिध्यति संबन्धः ( तस्मादिहैव अपूर्वार्थता प्रतिपाद्या ऊहसिद्धये, न तु सप्तमे )।

( व्याख्यानान्तरमाह–) अथवा सप्तमे अपूर्वार्थाः ( धर्माः ) इति ( सामान्येन ) स्थितम्। इह तु संनिपातिनामतादर्थ्यमाशङ्क्य तादर्थ्यं ( प्रतिपाद्यते )। तेषां धर्माणामपूर्वार्थता प्रकरणात् ( स्यात् ), तच्च ( प्रकरणं ) असंयुक्तानां ग्राहकम्। ये तु ( श्रुतिलिङ्गवाक्यैः ) संयुक्ताः ( संनिपातिनः ) तान् न गृह्णाति। दर्शपूर्णमासाधिकारे च पाठात् संयुक्तानामपि प्रकरणे एव निवेशः। ( असंयुक्तानामपि इति क्व चित् पाठः। तत्र अपूर्वासंयुक्तानामपि इति व्याख्या)। ऊहे तु यदि अपूर्वार्थं ( प्रोक्षणं ) न भवति ( किंतु व्रीहिस्वरूपार्थं ) तथा सति नीवारेषु ( तत् ) न प्राप्नोति। तस्मात् संनिपत्योपकारकाः ( ये धर्मास्तेऽपि ) अपूर्वार्थाः इति नवमे ( प्रतिपाद्यते ऊहसिद्ध्यर्थम् )।

**भाष्यं**—अथवा, अन्यामेव चिन्तामिह वर्तयिष्यामः। किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः, उतापूर्वनिमित्ता अपूर्वप्रयुक्ताश्चेति ( सप्तमे स्थितम् )। इदानीं तु, यजिप्रयुक्ता अपूर्वप्रयुक्ता वा इति चिन्त्यते। किं तावत्प्राप्तम् ? यजिप्रयुक्ता इति। कुतः ? यजिशब्देनेतिकर्तव्यताया अभिसंबन्धात्। एवं यागं

कुर्यादिति । **एवं प्राप्ते ब्रूमः** । यजत्यर्थस्य यत् कार्यं तत् प्रधानम् । तद्धि कर्तव्यतया चोद्यते । यत्र कर्तव्यता, तत्रैवेतिकर्तव्यता । अथ यदुक्तं, यजतिशब्देनाभिसंयोगो धर्माणामिति, तदुच्यते । तस्य द्रव्येषु यजतौ च यः संस्कारः, स तत्प्रयुक्तः अपूर्वप्रयुक्तः, तदर्थत्वात् । यजतेर्द्रव्याणां च तदीयत्वेन धर्मैरभिसंबन्धः, न स्वेनाऽऽत्मना । नहि धात्वर्थस्य च धर्माणां च परस्परेणाऽऽकाङ्क्षा विद्यते । प्रत्ययार्थेन हीतिकर्तव्यता आकाङ्क्ष्यते, कर्तव्यं कथमिति, न यजिः कीदृश इति । तस्माद्यत्कर्तव्यं, तस्यैवेतिकर्तव्यतया संबन्धः । अपूर्वं च तत् । तस्मात् अपूर्वप्रयुक्ता इति ।

**टुप्—** अथवा अन्यामेव चिन्तां वर्तयिष्यामः । अपूर्वार्था धर्मा इति स्थिते सप्तमे, नवमे निमित्तं परीक्ष्यते किमपूर्वं निमित्तं, उत याग इति । न चानिमित्ता ( अस्ति ) प्रवृत्तिः । येन विचारः ( एव ) न स्यात् । ( पूर्वपक्षमाह– ) तत्र भाव्यमानत्वात् दर्शपूर्णमासापूर्वं निमित्तं न, अनेनैव प्रकारेण ( भाव्यत्वेनैव ) फलमपि ( न ) निमित्तम् । पारिशेष्यात् यागो निमित्तं निष्पन्नत्वात् ( निष्पन्नरूपत्वात्, यागोऽपि वस्तुवृत्त्या न निष्पन्नः, तथापि शब्देन तावत् भाव्यतया नोच्यते इति भवति निमित्तम् ) । ननु यागस्य फले करणतया उपादीयमानत्वात् निमित्तवेलायां च उद्दिश्यमानत्वात् विवक्षाभेदः ( स्यात् ) । उच्यते । दर्शपूर्णमासादिनामपदं निमित्तं प्रतिपादयति अकिंचित्करत्वात् ( प्रयोजनान्तराभावात् ) प्रकृता हि यागाः फले विधीयन्ते एव यजिना, (तेन यदि एतन्नामपदं कारणतां वा निमित्ततां वा न प्रतिपद्येत, अनर्थकमेव स्यात् । तस्मात् नामधेयं निमित्तं, यजिस्तु करणं इति नास्त्येव शब्दवैरूप्यम् ) । ननु सप्तम्यन्तं निमित्तम् (भवति, तृतीयान्तं चेदम्) । उच्यते । ' निमित्तफलहेतुषु सर्वासां प्रायदर्शनं, इति द्रष्टव्यं ( तृतीयान्तत्वम् ) । अपि च उद्दिश्यमानत्वान्निमित्तस्य करणविभक्तिरविवक्षितैव ( नहि उद्दिश्यमानेषु विभक्त्यर्थादरः । यस्मादेवं यजतिर्न निमित्तं प्रतिपादयति, किंतु दर्शपूर्णमासपदं– ) तस्मात् ( यद्यपि ) विकृतौ अपूर्वं ( अस्ति ) तथापि दर्शपूर्णमासयागो निमित्तभूतो नास्ति, तदभावाद्धर्माभावः ( यथा भेदनाभावे होमाभावः ) सौर्ये च साकाङ्क्षत्वात् ( अपूर्वस्य ) अतिदेशेन वा अनुषङ्गेण वा प्राकृतैः ( अङ्गैः ) अङ्गवान् ( सौर्ययागः सिध्यति ) । ऊहाभावस्तु ( भवति । पूर्वपक्षव्याख्यानं दूषयति– ) अत्रोच्यते । अयं दोषोऽस्मिन् व्याख्याने, आज्यभागादीनामपि फलसंबन्धः ( स्यात् प्रकृतत्वात्, यजेः दर्शपूर्णमासपदेन वा अविशेषणात् ) अपि च दर्शपूर्णमासशब्दो लोके कालवचनः ( प्रसिद्धः, न यागस्य वाचकः ) सामानाधिकरण्यात् यागवाचकः ( भवेत् ) । न च निमित्तत्वमिच्छतः सामानाधिकरण्यमुपपद्यते । ( यदि हि प्रकृतान् यागान् यजिप्रतिपाद्यान् विशेषयेत्, तदा सामानाधिकरण्यात् यागवचनो भवेत् । अस्तु तर्हि विशेषणत्वेनैव सामानाधिकरण्यं, अत आह– ) न चैकस्मिन्नुच्चारणे सामानाधिकरण्यं निमित्तत्वं चोपपद्यते वैरूप्यापातात् । ( पक्षान्तरमाशङ्कते– ) अथोच्येत यागपदं निमित्तं ( ब्रूयात् ) दर्शपूर्णमासवत् इति । ( दूषयति– ) तत्र ( उद्दिश्यमानत्वात् ) यागस्य अविवक्षितविशेषणत्वात् यागमात्रोद्देशः ( प्राप्नोति ) । तत्र प्रकृतौ ( विकृतौ ) च निमित्तमेकं यागसामान्यं ( अतश्च साधारणा धर्माः स्युः ) न च ( निमित्ते सत्यपि ) प्रयोजनाभावात् ( विकृतौ ) अप्रवृत्तिः । ( यतः ) अपूर्वं च सौर्ये विद्यते, तस्मादनेन ( यजिनिमित्तत्वव्याख्यानेन ) प्रकृतिविकृत्योः साधारणा धर्माः ( प्राप्नुवन्ति तत्रातिदेशाभावः, न केवलमूहाभावः ) तस्मादयमपि पक्षो दुःश्लिष्टः ।

**भाष्यं—** एवं वा । एतेष्वेवोदाहरणेष्विति चिन्त्यते, किं यजिनिमित्ता धर्मा अपूर्वप्रयुक्ताः, उतापूर्वं प्रयोजकं निमित्तं चेति । किं प्राप्तम् ? यजिर्निमित्तं, अपूर्वं प्रयोजकमिति । कुतः ? नैकस्य प्रयोजकत्वं निमित्तभावश्चोपपद्यते । यदर्थं हि क्रियन्ते धर्मास्तत्प्रयोजकम् । यस्मिन् सति क्रियन्ते, तन्निमित्तम् । न चैकस्मिन् शब्दे अपूर्वार्था एते, अपूर्वे च सति भवन्तीति शक्यं वदितुम् । अन्या हि वचनव्यक्तिरपूर्वार्थेषु, अन्या चापूर्वे सतीति । यजिनिमित्तत्वे तु शब्दोऽवकल्पते, एवं यागेन

कुर्यादिति । यागे सति अपूर्वस्योपकारकाणि, असति अनुपकारकाण्यङ्गानीति । तस्माद्यजिर्निमित्तं, अपूर्वं तु प्रयोजकमिति । **एवं प्राप्ते ब्रूमः** । यज्ञकर्म प्रधानं, यजतेः कार्यम् । तद्धि फलवच्चोद्यते । तदीयेषु द्रव्येषु यजतौ च यः संस्कारः, सोऽपूर्वप्रयुक्तः । तदर्थास्ते इति कृत्वा क्रियन्ते, न यज्यर्थेन तेषामभिसंबन्धः । प्रयोगवचनेनैते प्रत्ययार्थेन संबध्यन्ते । स हि साकाङ्क्षः, न धात्वर्थः । तस्मादपूर्वप्रयुक्ता अपूर्वनिमित्ताश्च । यदुक्तं, अपूर्वस्य प्रयोजकत्वं निमित्तभावश्च नोपपद्यते, वचनव्यक्तिभेदादिति । तत्रोच्यते । प्रयोजकत्वं वाचनिकं, निमित्तभावश्च नैव वचनाद्भविष्यतीति । यद्धि येन प्रयुज्यते, भवति तत्तस्य निमित्तम् । यथा, आरामपोषकस्य आरामो वेतनदाने प्रयोजको निमित्तं च । आरामे सति तस्मै वेतनं दीयते । वेतनेन समर्थो भवत्यारामं रक्षितुम् । तस्माद्धर्माणामपूर्वमेव प्रयोजकं निमित्तं चेति ।

**टुप्**— अथवा अपूर्वार्थाः ( धर्माः ) इति स्थितं संनिपत्योपकारका आरादुपकारकाश्च । तत्र ( प्रकरणे ) 'अग्नये जुष्टं निर्वपामि' इति मन्त्र आम्नायते । आम्नानसामर्थ्याच्च ( तेन ) अवश्यमुपकर्तव्यं ( प्रकरणिनः )। तत्र कथं खलु उपकरिष्यतीति ( विशेषाकाङ्क्षा जायते ), किमुच्चारणमात्रेण, उत प्रकाशनद्वारेणेति । ( तत्र मन्त्राधिकरणन्यायेन १।२।४ ) अपूर्वदेवताप्रकाशनमपेक्षितम् । शक्नोति चायं (मन्त्रः) तत् कर्तुम् ( न च दृष्टे सति अदृष्टं कल्पयितुं शक्यम् ) । तस्मात् प्रकाशनद्वारेणैव उपकरोति । तेन अग्निं प्रकाशयन् उपकरोति, इति निश्चीयते । निमित्तेन चास्य भवितव्यम् । तत्र अग्निर्निमित्तमस्य ( अग्निस्वरूपं निमित्तं अपूर्वं वेति संदेहः । तत्र सामर्थ्यात् अग्निर्निमित्तमस्येति गम्यते । नहि असति अग्नौ अग्निप्रकाशनसमर्थस्य मन्त्रस्य प्रकाशनद्वारेण अपूर्वार्थता घटते । न चास्मिन् पक्षे कस्य चित् शब्दस्य वैरूप्यं सामर्थ्यलभ्यत्वान्निमित्तस्य ) । सौर्ये चाग्निर्नास्ति । तत्र निमित्ताभावात् मन्त्रस्य निवृत्तिः, यथा भेदनाभावात् होमस्य निवृत्तिः ( दर्शपूर्णमासयोः ), इति ( पूर्वः पक्षः । सिद्धान्तस्तु अपूर्वमेव निमित्तं, नाग्न्यादिस्वरूपं इति ) ।

**शा**— अपूर्वस्य साध्यत्वात् तन्निमित्तता न युक्ता । तस्माद्यजिरेव निमित्तम् । तत्तुल्यन्यायत्वाच्च अवघातादीनामपि व्रीह्यादिस्वरूपमेव निमित्तं, इति तदभावात् नीवारादिषु न स्यात्, **इति प्राप्ते ब्रूमः** । 'यजेस्तावन्निमित्तत्वं न केन चिदिहोच्यते । अपूर्वस्यापि तन्नोक्तमर्थात्तस्य निमित्तता ॥' तस्मात् अपूर्वार्था धर्मास्तन्निमित्ताश्च । विकृत्यपूर्वमपि तेषां धर्माणामतिदेशेन साध्यमवगतं, तत्साधनीभूतनीवाराद्यङ्गत्वेन अवघातादीननुष्ठापयति इति सिध्यति ऊहः ।

**सोम**— अतिदेशसिद्ध्यनन्तरं अतिदिष्टपदार्थविषयतया तत्सापेक्ष ऊहो हेतुहेतुमद्भाव**संगत्या** चिन्त्यते । **सूत्रार्थस्तु**— यज्ञकर्म यजतिकार्यं अपूर्वं इत्यर्थः । तत् प्रधानं, सर्वे धर्मास्तदर्था इत्यर्थः । हि यस्मात् तदेव चोद्यते, तस्यापूर्वस्य द्रव्येषु संस्कारः अवघातादिः तत्प्रयुक्तः अपूर्वप्रयुक्तः अपूर्वार्थत्वात् इति । अपूर्वप्रयुक्तत्वं स्मार्यते इति पक्षे द्रव्यसंस्कारग्रहणं सर्वधर्मोपलक्षणार्थम् । एवं द्वितीयवर्णक**द्वितीय**व्याख्यानेऽपि । **प्रथम**व्याख्याने तत्प्रयुक्तः अपूर्वसाधनत्वप्रयुक्तः तदर्थत्वात् इत्यर्थः । **तृतीय**व्याख्याने तु यथाश्रुतमेव । 'अथान्यां' इत्या**द्यन्तिम**पक्षे तत्प्रयुक्तः तन्निमित्तः इति ध्येयम् ।

**विस्तर**वर्णकानि तु अन्यत्र गृहीतत्वात् अत्र न संगृहीतानि । **के.**

**भाट्ट**— तदेवं सिद्धेऽतिदेशे तत्प्रापितपदार्थविषय ऊहश्चिन्त्यते । त्रिविधश्चोहो निरूप्यते । मन्त्रोहः, सामोहः, संस्कारोहश्च । तत्र ऊहो नाम प्रकृतौ अन्यथादृष्टस्य विकृतौ अन्यथाभावः । तत्त्वं च येन संबन्धेन यद्धर्मावच्छिन्नवृत्तित्वं यस्य प्रकृतौ श्रुतं, तस्य तेन संबन्धेन विकृतौ तद्धर्मावच्छिन्नभिन्नवृत्तित्वम् । अस्ति चेदं देवस्यत्वादिमन्त्रेषु प्रोक्षणादिसंस्कारेषु च । मन्त्राणां हि स्मारकत्वसंबन्धेनाग्नित्वाद्यवच्छिन्नवृत्तित्वं श्रुतं प्रकृतौ । विकृतौ च तेनैव संबन्धेन तद्धर्मावच्छिन्नभिन्नसूर्यादिवृत्तित्वात् । एवं प्रोक्षणावघातादीनामपि संस्कार्य-

तासंबन्धेन व्रीहित्वाद्यवच्छिन्नवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ च तेनैव संबन्धेन तद्धर्मावच्छिन्नभिन्नश्यामाकादिवृत्तित्वात्। एवं साम्नामपि आयीभावादिरूपाणां येन संबन्धेन यत्स्थानगतैकारवृत्तित्वं प्रकृतौ श्रुतं, विकृतौ तेषां तेनैव संबन्धेन तत्स्थानभिन्नस्थानगतैकारवृत्तित्वादूहः। अत्र श्रुतत्वं तात्पर्यमनपेक्ष्य प्रतीयमानत्वं, तेनोक्तैकारवृत्तित्वस्य शब्दादप्रतीतावपि न क्षतिः। अत्र च संबन्धैक्याविवक्षायां श्रुतपशुपुरोडाशयागोद्देशांशस्य प्रकृतौ स्वारकत्वसंबन्धेनाग्नीषोमदेवतावृत्तेः विकृतौ अनुपयुक्तान्यदेवताविधानेन आरादुपकारकस्य संबन्धान्तरेण क्रतूपकारवृत्तित्वात् अतिप्रसङ्गवारणाय संबन्धैक्यविवक्षणम्। प्रकृतावेव श्रुतव्रीहित्वावच्छिन्नवृत्तित्वेन श्रुतानामवघातादीनां तद्भिन्नयवादिवृत्तित्वात् तद्वारणाय प्रकृतिविकृतिपदोपादानम्। प्रकृतिस्थव्रीहिव्यक्त्यपेक्षया सौर्यादिविकृतिस्थव्रीहिव्यक्तीनां भेदात् आतिदेशिकव्रीहिमत्सौर्यादावेव अवघातादीनामूहवारणार्थं यद्धर्मावच्छिन्नेति विशेषणं, सौर्यस्थव्रीहिषु तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकव्रीहिभेदसत्त्वेऽपि व्रीहित्वावच्छिन्नप्रतियोगिताकतद्भेदाभावात्। यवसाध्यविकृतौ तु ऊहाङ्गीकारेऽप्यदोषः। प्रकृतौ प्रोक्षणादीनां तात्पर्यगत्या अपूर्वसाधनत्वावच्छिन्नवृत्तित्वस्यैव विवक्षितत्वेन विकृतावपि तेनैव रूपेण श्यामाकवृत्तित्वादसंभवः। अपूर्वयोर्दर्शपूर्णमासीयत्वादिना भेदविवक्षायां तु सौर्यस्थव्रीहिष्वतिव्याप्तिमाशङ्क्य श्रुतपदं निरुक्तप्रतीयमानत्वार्थकं, अपूर्वसाधनत्वस्य तात्पर्यज्ञानाधीनत्वेन निरुक्तश्रुतत्वाभावात्। अत्र चाग्निपदस्थाने सूर्यादिपदप्रक्षेपेऽप्यवशिष्टमन्त्रस्य प्राकृतत्वानपायान्न लक्षणे तस्येति शब्दानुपपत्तिः। एवं च यत्र प्राकृतऋक्स्थाने ऋगन्तरस्योहः, तत्रोहशब्दो भाक्त इति ध्येयम्। अथवाऽस्तु तदनुरोधेन तस्येति पदं प्राकृततत्कार्यापन्नान्यतरपरमिति संक्षेपः।

स चोहः प्राकृतपदार्थानां प्रकृतौ यद्रूपावच्छिन्नोद्देश्यसंबन्धित्वेन विधानं, तद्रूपावच्छिन्नसंबन्धित्वेनैवातिदेशे सिध्येत्, न तु स्वरूपेणैवातिदेशे, तथात्वे अग्निपदस्यैवातिदेशेन सौर्ये तस्यैवादृष्टादिप्रयोजनान्तरकल्पनया प्रयोगोपपत्तौ ऊहानापत्तेः। अत एवोपकारपृष्ठभावेन पदार्थानां विकृतावतिदेशः, प्रकृतौ निरूपितरूपाणामेव वा विकृतावतिदेश इति दशमे वक्ष्यते।

तदिह ऊहोपोद्घाततया किं प्रोक्षणावघातादीनां 'अग्नये जुष्टं निर्वपामि' इत्यादौ अग्न्यादिपदानां च प्रकृतौ व्रीहित्वाग्नित्वाद्यवच्छिन्नोद्देशेन विधानं, ततश्च व्रीह्यग्न्यादिप्रयुक्तास्ते, अथवाऽपूर्वसाधनत्वावच्छिन्नोद्देशेन, ततश्चापूर्वप्रयुक्ता इति चिन्त्यते। व्रीह्यादिप्रयुक्तत्वे, श्यामाके चरौ सौर्ये वा व्रीह्यादीनामभावात् प्रोक्षणादीनां लोप एव, न तूहः। अपूर्वप्रयुक्तत्वे तु श्यामाकादीनामपि तद्रूपावच्छिन्नत्वात् सिध्यत्यूहः। तत्र, यत्रापि आरादुपकारकस्थले न श्रुतमुद्देश्यताऽवच्छेदकं, तत्रापि करणानुग्राहकाकाऽऽङ्क्षारूपेतिकर्तव्यताऽऽकाङ्क्षात्मकप्रकरणेन यागाङ्गतयैव प्रयाजादिविधानात् यागत्वमेवोद्देश्यताऽवच्छेदकं, न त्वपूर्वसाधनत्वं समप्राधान्याऽऽपत्तेः। न चैतावता पारिप्लवत्वाऽऽपत्तिः, अनुवादस्य सति संभवे संनिहितगामित्वेन आग्नेयादित्वस्यैवोद्देश्यताऽवच्छेदकत्वात्। न वा अतिदेशोच्छेदः, अपूर्वविशेषार्थत्वे इव आग्नेयाद्यर्थत्वेऽपि तद्वत् कुर्यात् इत्यतिदेशेन आग्नेयस्थानापन्ने सौर्ये धर्मातिदेशोपपत्तेः। अतस्ते यागप्रयुक्ता एव। तदा किमु वक्तव्यं यत् व्रीह्यादिसंयोगेनैव प्रोक्षणादिश्रवणात् व्रीहित्वादिकमेवोद्देश्यताऽवच्छेदकमिति। न च व्रीहियागादिस्वरूपार्थत्वे धर्माणामानर्थक्यं, तेषामप्यग्निवत् फलवत्त्वेन तदभावात्। **न चाग्नीनामाधानव्यतिरेकेणोत्पत्तौ** प्रमाणाभावेन तदभावेऽपि व्रीह्यादीनां प्रोक्षणादिव्यतिरेकेणापि जायमानतया आनर्थक्याऽऽपत्तिस्तदवस्थैवेति **वाच्यम्**। तादृशानर्थक्यपरिहारार्थं प्रोक्षणादिविशिष्टव्रीहीणामेव कल्पितवाक्यान्तरेण यागार्थत्वस्यापूर्वार्थत्वस्यैव वा बोधोपपत्तौ निषादस्थपतिन्यायेन (६।१।१३) व्रीहिपदे यवादिसाधारण्येनापूर्वसाधनत्वलक्षणायां प्रमाणाभावात्। अस्तु वा व्रीहिपदे लक्षणा, तथापि लाघवादुपस्थितत्वाच्च विजातीययागसाधनव्रीहित्वादिकमेव लक्ष्यते, न त्वपूर्वसाधनत्वम्। न च यागस्यापि निर्ज्ञातोपायत्वेन प्रोक्षणादिव्यतिरेकेणापि जायमानत्वादानर्थक्यापत्तिः, यागत्वावच्छिन्नस्यापूर्वत्वावच्छिन्नस्य वा जायमानत्वेऽपि विजातीययागत्वा-

वच्छिन्नस्य प्रोक्षणादिव्यतिरेकेण जायमानत्वे प्रमाणाभावात्। नहि आग्नेयत्वावच्छिन्नं प्रति प्रोक्षणाघटिता का चित्सामग्री क्लृप्ताऽस्ति, येन तज्जन्यव्यक्तौ आग्नेयत्वाभिव्यक्तिर्भवेत्। प्रोक्षणादेरेव तु विधानबलेन तत्सामग्रीत्वात्, तद्व्यतिरेकेण तदुपपत्तौ प्रमाणाभावेन, न यागस्वरूपार्थत्वे आनर्थक्यं प्रोक्षणादीनाम्। अत एवारादुपकारकाणामपि यागस्वरूपार्थत्वेनानर्थक्यं, **इति प्राप्ते**, यद्यपि तावत् विजातीययागसाधनत्वमेव प्रोक्षणादीनामुद्देश्यताऽवच्छेदकं, तथापि अपूर्वसाधनत्वे इव वक्ष्यमाणरीत्या न तत्र व्रीहित्वादिकं प्रविष्टमिति श्यामाकेष्वपि तत्सत्त्वादूहसिद्धिरनिवार्यैव। वस्तुतस्तु, न विजातीययागसाधनत्वं उद्देश्यताऽवच्छेदकं, विजातीययागव्यक्तीनामपि व्यापकीभूतयागत्वावच्छिन्नव्यक्त्यन्तर्गतत्वात् तदवच्छिन्नं प्रति द्रव्यत्वाद्यवच्छिन्नस्य लोकत एव कारणत्वावगतेः, सामग्रीवशेन व्रीह्यादिद्रव्यं विनाऽपि द्रव्यान्तरेण कदा चित् विजातीययागव्यक्तीनामुत्पत्तौ बाधकाभावेन आनर्थक्यस्य तदवस्थत्वात्। न च सामान्यसामग्र्या विशेषकारणसमवहिताया एव कार्यजनकत्वनियमः, अन्यत्र तथात्वेऽपि प्रकृते तथाकल्पनायां प्रमाणाभावात्, 'तदेव यादृक् तादृक् च होतव्यम्' इति लिङ्गानुपपत्तेश्च। अत एव अनयैव रीत्या पक्षप्राप्तिमुपपाद्य फलतो नियमविधित्वं व्रीह्यादिविधीनामुपपाद्यते, प्रतिनिधिश्च। अतो द्रव्यतत्संस्कारविधयः सर्वे अपूर्वसाधनीभूतविषया एव। व्यापकीभूतापूर्वत्वावच्छिन्नं प्रति द्रव्यत्वादिना कारणत्वस्य लोकतः अक्लृप्तत्वेन निरुक्तप्रतिबन्धनापत्तेः। आरादुपकारकाणामप्यनयैव रीत्या अपूर्वजननानुकूलयोग्यतासंपादकत्वं द्रष्टव्यं, न तु यागार्थत्वं, आनर्थक्यापत्तेः। यागादिनिष्ठयोग्यतासंपादकत्वाच्च, न प्राधान्यापत्तिः अङ्गत्वविघातो वेत्यादि क्षुण्णं **कौस्तुभे**।

**यत्तु** व्रीहित्वाद्यवच्छिन्नोद्देशेनैव प्रोक्षणादिविधिः शाब्दबोधे लक्षणाया अनङ्गीकारात्, पश्चात्तु निषादस्थपतिन्यायेन (६।१।१३) प्रोक्षणादिविशिष्टव्रीहीणां वाक्यान्तरकल्पनया अपूर्वार्थत्वकल्पनमित्युक्तं, **तत्** प्रोक्षणादेस्तज्जन्यादृष्टस्य वा व्रीहित्वावच्छिन्नाभिव्यञ्जकत्वे अयोग्यतानिश्चयस्य प्रतिबन्धकत्वात् शाब्दबोधस्यैवानुपपत्तेर्लक्षणाङ्गीकरणात् प्रत्युक्तम्। अतो व्रीह्यादिपदेनापूर्वसाधनत्वावच्छिन्नलक्षणात् तदुद्देशेनैव प्रोक्षणादिविधिरिति ते अपूर्वप्रयुक्ता एवेति सिद्धः श्यामाकादौ ऊहः। न चैवमपि धर्मानुष्ठाने व्रीहित्वादीनामपि अनुष्ठापकतया निमित्तत्वात् विकृतौ तदभावे भेदनाभावे इव धर्मलोपापत्तिः, यच्छब्दाद्यभावेन व्रीहित्वादीनां निमित्तत्वे प्रमाणाभावात्। वक्ष्यमाणरीत्या उद्देश्यताऽवच्छेदककोटौ अप्रवेशेनानुष्ठापकत्वस्याप्यभावाच्च। अत एवापूर्वस्यैव तत्त्वान्निमित्तत्वम्। वस्तुतस्तु, फलेच्छाया अनुष्ठापकत्वेऽपि फलस्यासिद्धस्यानुष्ठापकत्वे प्रमाणाभावात् फलीभूतापूर्वमपि न निमित्तम्। अनयैव च दिशा यागत्वस्याप्यारादुपकारकस्थले निमित्तत्वं प्रत्युक्तम्। अतो बाधकाभावात् सिद्धयत्येवोहः।

यानि चात्र **मूले** अनेकानि वर्णकानि कृतानि, तानि पुनरुक्तत्वादनुपयुक्तत्वाच्चोपेक्षितानि। मूलकारैस्तु ग्रन्थव्याख्यानरसिकतया कृतानि इति ध्येयम्।

**न्यायबिन्दुः**—अवघातादीनां व्रीह्यादिद्वारा अपूर्वार्थत्वात् द्वाराभावेन नीवारादिषु नोहः, **इति प्राप्ते**, अपूर्वसाधनत्वेनैव व्रीह्यादीनां द्वारत्वादपूर्वसाधनत्वस्य च विकृतौ नीवारादिष्वपि सत्त्वात् तद्द्वारा प्रकृतिवदपूर्वोपकारकत्वस्यातिदेशावगतत्वादूहसिद्धिः। एवं 'प्रोक्षिताभ्यामुलूखलमुसलाभ्यामवहन्ति' इति प्रोक्षणस्य नखनिर्भिन्नचरौ नखेषूहः। एवं 'अगन्म सुवः' इत्यादिस्वर्गप्रकाशकमन्त्रस्यान्यफलायां विकृतौ ऊह इति सिद्धान्तः।

**मण्डन**—'अतिदेशोऽष्टमेऽध्याये समाप्तो, नवमे पुनः। अतिदिष्टपदार्थानामूहानूहविचारणा॥' ऊहस्तु 'प्राकृतस्थानपतितपदार्थान्तरकार्यतः। ऊहः प्रयोगो विकृत ऊह्यमानतयोदितः॥'

**शंकर**—'सतमाद्यार्थस्मरणं। १। व्रीहित्वाद्यविवक्षितम्। २। यज्यर्थत्वनिरासो वा। ३। संनिपातिषु चात्र सः। ४। निमित्ततोक्ताऽपूर्वस्य। ५। संनिपातिषु वा तथा। ६॥'

* **अग्निहोत्राधिकरणम्** (१।४।३।४)। एकत्रैव ईदृशे गुणे श्रूयमाणे विधिशक्तिः संक्रा-

मति इति अग्निहोत्रेऽभिहितम् । **वा.** २।२।६।१७ पृ. ५१०. सत्यां गतौ एकत्रैव विधिशक्त्युपगमस्य न्याय्यत्वात् गुणे विधिशक्तिः संक्रामति इति अग्निहोत्राधिकरणे अभिहितमित्यर्थः । **सु.** पृ. ७१०. इदमेव आधाराग्निहोत्राधिकरणम् ।

**अग्निहोत्राभावेऽपि दीक्षितस्य अन्यत्र गमने प्रसक्ते समारोप्य अग्निर्नेतव्यः ॥**

दीक्षानिर्मोकात् पूर्वं प्रयाणप्रसक्तौ अग्नीनां पात्रान्तरे स्थापनेन सह नयनं स्यान्न समारोपः, 'प्रातरग्निहोत्रं हुत्वा समारोपयेत्' इति विधिना समारोपस्य सौत्रामण्यग्निन्यायेन (४।३।१२) अग्निहोत्राङ्गत्वात् । दीक्षितस्य चाग्निहोत्राभावेन तदयोगात्, **इति प्राप्ते**, समारोपणस्याग्निनयनोपायत्वेन आनन्तर्यमात्रेण वास्तोष्पतीयहोमस्येव अग्निहोत्राङ्गत्वे प्रमाणाभावाच्च अग्निहोत्राभावेऽपि समारोप्यैवाग्निर्नेयः । **संकर्ष.** ३।२।३१.

**अग्निहोत्रार्थोद्धरणमन्त्रस्य दर्शपूर्णमासार्थोद्धरणकाले नानुष्ठानम् ॥**

**न तूत्पन्ने यस्य चोदनाऽप्राप्तकालत्वात् ।** ९।४।८।३ ॥

**भाष्यं**— अस्त्यग्निहोत्रे उद्धरणमन्त्रः 'वाचा त्वा होत्रा, प्राणेनोद्गात्रा' इत्येवमादिः । तत्रायमर्थः सांशयिकः, यत् दर्शपूर्णमासार्थेनोद्धरणं क्रियते, किं तत्रैष मन्त्रः कर्तव्यो नेति । किं प्राप्तं ? दर्शपूर्णमासार्थमपि उद्धृतेऽग्नौ अग्निहोत्रं हूयते एव । तत्र चेन्मन्त्रो न क्रियते, अमन्त्रोद्धृते अग्निहोत्रं प्रवर्तते । तस्मान्मन्त्रेण तदुद्धरणं कर्तव्यम् । अथोच्येत, कालाभावे विगुणत्वात् उद्धरणं, नाग्निहोत्रस्येति । तन्न । कालमात्रं ह्यपगतम् । उद्धरणं तु विगुणमपि अग्निहोत्रस्य भविष्यतीति । एवं चेत् समन्त्रकं कर्तव्यमिति । **एवं प्राप्ते ब्रूमः** । परार्थमुत्पन्नेऽग्नौ यस्याग्निहोत्रं प्रवर्तते— चोदनेति कर्म ब्रूमः— न तत्र मन्त्रः कर्तव्यः इति । न तदग्निहोत्रस्योद्धरणम् । अतः परकीये उद्धरणे न कर्तव्यमिति । उच्यते, ननूक्तं विगुणमुद्धरणं अग्निहोत्रस्यैव भविष्यति, न गुणाभावे प्रधानाभावोऽपीति । अत्रोच्यते । न गुणः कालः, निमित्तमसौ भवतीत्येनदुक्तम् । अतो निमित्ताभावे क्रियमाणं अश्रुतं कृतं भवति । तस्मान्न तदुद्धरणं अग्निहोत्रस्येति । न चेदुद्धरणमग्निहोत्रस्य, तस्मादत्र मन्त्रो न कर्तव्यः । कृतोऽपि ह्यसौ अनर्थकः इति ।

**शा**— दर्शोपक्रमे अग्न्युद्धरणे क्रियमाणे किं अग्निहोत्राङ्गभूतः उद्धरणमन्त्रः 'वाचा त्वा होत्रा' इत्यादिः प्रयोक्तव्यो नेति संशयः । तत्र 'दर्शार्थेऽप्युद्धृते वह्नावग्निहोत्रं प्रवर्तते । साधनत्वप्रयुक्तश्च धर्मो नाङ्गमपेक्षते ॥' तेन अग्निहोत्रानङ्गभूतेऽप्युद्धरणे तदुपकारकत्वमात्रेण यागार्थयोर्दर्विपयसोः प्रणीताधर्मा इव कर्तव्य एव मन्त्रः कालमनादृत्य । कालस्य गुणत्वेनासंभवेऽपि मन्त्रस्य लोपोऽन्याय्यः । ( एवमुद्धरणस्यानङ्गत्वेऽपि उपकारकतामात्रेण मन्त्रप्राप्तिरित्युक्तम् । इदानीं अङ्गमेवोद्धरणं इति स्वीकार्यम् । तथा च सुतरां मन्त्रः प्रयोज्यः इति पक्षान्तरमाह— ) अथवा उद्धरणमप्येतत् अग्निहोत्रस्याप्यङ्गं अकालेऽपि क्रियमाणं, अन्यथा अग्निहोत्रस्य प्रणयनलोपात् वैगुण्यं स्यात्, **इति प्राप्तेऽभिधीयते**, 'काले खल्वनुपादेये प्राप्ते कर्म विधीयते । साङ्गं, तस्मात्तु कालात् प्राक् नाधिकारोऽस्ति कर्मणि ॥' अनधिकारिणा च क्रियमाणं निष्फलं स्यात् । तस्मात् नाप्राप्ते काले अग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा कर्तव्यः । ९।४।९.

**सोम**— अन्यार्थोद्धृताग्निनाशे प्रायश्चित्ताभावेऽपि अन्यार्थोद्धरणे मन्त्रः स्यात् इत्युत्थितेः ( प्रत्युदाहरण— ) **संगतिः** । कालस्य यद्यप्यङ्गत्वं, तथापि नाङ्गान्तरवत् विधिबलादुपादेयत्वम् । ततश्च काले प्राप्ते तत्संयोगिनं पुरुषमधिकृत्य कर्म चोद्यते । कर्मचोदनया चाङ्गानि प्रयुज्यन्ते, इति कालात् प्रागधिकाराभावात् अनधिकारिणा क्रियमाणमनर्थकं, इति अप्राप्ते काले क्रियमाणस्याङ्गत्वाभावात् उद्धरणस्य अङ्गत्वमादाय मन्त्रप्राप्त्युपपादको द्वितीयपूर्वपक्षप्रकारोऽनुपपन्नः । तथा च अङ्गत्वाभावेन उपकारकतामात्रेण साधननिवेशी मन्त्रः प्राप्यते, इति प्रथमपक्षोऽपि अनुपपन्नः । उद्धरणस्याङ्गत्वाभावेऽपि मन्त्रः, उद्धरणाङ्गत्वादेव प्रयोज्यः । कालाभावे च उद्धरणे इव तदङ्गभूतमन्त्रेऽपि अधिकाराभावात् अधिकारिणं प्रति अङ्गभूतमन्त्रानुष्ठा-

पकस्य उद्धरणविधेः अधिकाराभावदशायां मन्त्रानुष्ठापकत्वासंभवेन अकाले मन्त्रप्रयोगाप्रसक्तेः। एवं च दर्शार्थोद्धरणादेव प्रसङ्गात् अग्निहोत्रसिद्धेः प्रणयनलोपोऽपि न दोषः इति ध्येयम्। **सूत्रार्थस्तु**– परार्थमुत्पन्ने यस्याग्निहोत्रस्य चोदना, तत्र मन्त्रो न स्यात्, अप्राप्तकालत्वादिति।

**वि**—'दर्शार्थोद्धरणे वाचेत्यादिर्नो वा, समन्त्रकम्। कर्तुं स्या, न्न निमित्तस्य कालस्यात्र विवर्जनात्॥' ९।४।८

**भाट्ट**—यदा दर्शार्थमग्निप्रणयनं क्रियते, तदा तस्मिन्नेवाग्नौ सायंप्रातःक्रियमाणाग्निहोत्राङ्गमुद्धरणं तन्मन्त्रश्च 'वाचा त्वा होत्रा' इत्यादिः पठनीयो न वेति चिन्तायां, दर्शार्थे प्रणीतस्यापि अग्नेः अग्निहोत्राङ्गत्वात् तत्संस्कारकमुद्धरणं तदङ्गभूतश्च मन्त्रः प्रयोजकसत्त्वात् भवत्येव। न च प्रणयनस्य प्रातःकालीनत्वात् उद्धरणे अपराह्णकालीनत्वाभावः, प्रधानाङ्गभूतोद्धरणाद्यनुरोधेन तदङ्गभूतकालस्य समयाध्युषितकालवत् अनारम्भणीयत्वात्। वस्तुतस्तु उद्धरणस्याग्नेर्वा अग्निहोत्राङ्गत्वाभावेऽपि प्रणयनाक्षिप्तार्थिकोद्धरणस्य तत्संस्कृताग्नेर्वा अग्निहोत्रोपकारकत्वस्य तावत् सत्त्वात् तावतैव इज्यार्थयोर्दधिपयसोः प्रणीताधर्मवत् मन्त्रप्राप्त्युपपत्तिः, **इति प्राप्ते**, प्रातःकालक्रियमाणदर्शार्थाग्निप्रणयनवेलायां अग्निहोत्रस्य निमित्ताद्यभावेन अनुपस्थितत्वात् तदङ्गभूतोद्धरणस्य कालाभावेन सुतरामनुपस्थितेः, न मन्त्रस्य तदानीं संभावना। न च अग्निहोत्रेणैव स्ववैगुण्यपरिहारार्थं अकालेऽपि तदाक्षेपः, तस्य प्रसङ्गसिद्धाग्निलाभेन, तदुद्धरणादिसंस्कारकार्यस्य लाभेन चोद्धरणस्यैव अनाक्षेपे तन्मन्त्रादेः सुतरामनाक्षेपात्। अतः प्रयाजानां पशुपुरोडाशे अनङ्गत्ववत् उद्धरणतन्मन्त्रादेरपि तस्मिन् अग्निहोत्रप्रयोगे सुतरामङ्गत्वाभावादेव न तदभावे वैगुण्यप्रसङ्गः। अतो न मन्त्रस्य कालान्तरप्रयुक्तान्यथाभावात्मको भाक्त ऊहः, अपि तु बाध एवेति **सिद्धम्**। ९।४।७.

**न्यायबिन्दुः**— दर्शार्थोद्धरणस्यापि अग्निहोत्रोपकारकत्वात् तदङ्गभूतोद्धरणमन्त्रो 'वाचा त्वा होत्रा' इत्यादिः प्रयोक्तव्यः साधननिवेशित्वाद्धर्माणां, कालाभावेऽपि च न मन्त्रस्य लोपः। अथवा उद्धरणमप्येतत् अग्निहोत्रस्यापि अङ्गमकालेऽपि क्रियमाणं, अन्यथा अग्निहोत्रस्य प्रणयनलोपात् वैगुण्यापत्तेः, **इति प्राप्ते**, अनुपादेयत्वेन कालत्यागायोगात् अकालकृतस्य निष्फलत्वात् नाग्निहोत्राङ्गमुद्धरणं तन्मन्त्रो वा इति सिद्धान्तः। ९।४।९.

**मण्डन**—'मन्त्रो दर्शोद्धृते न च।'

**शंकर**—'नेष्टिर्वाचादिमन्त्रिका।'

## अग्निहोत्रे उभयाग्निनाशे पुनराधानं प्रायश्चित्तम्॥

**पुनराधेयमोदनवत्। ६।४।८।२६॥**

**भाष्यं**— अग्निहोत्रे श्रूयते 'यस्योभावग्नी अनुगतौ अभिनिम्लोचेत्, यस्य वाऽभ्युदियात् पुनराधेयमेव तस्य प्रायश्चित्तिः' इति। तत्र संदेहः, किं अन्यतरानुगमने पुनराधेयं, उत उभयानुगमने इति। किं प्राप्तं? पुनराधेयं ओदनवत् स्यात्। यथा पञ्चशरावः (६।४।६।२२-२३) अन्यतरस्य आर्तौ भवति, एवं पुनराधेयं अन्यतरानुगमने भवितुमर्हति वाक्यभेदप्रसङ्गादिति। यथा 'इह यक्ष्ये' 'इह सुकृतं करिष्यामि' इत्येवमेवाभिसंबन्ध इति।

**टुप्**—यस्योभावनुगतौ इत्यनुगमनं अग्निं प्राप्नुवत् निमित्तम्। तस्य यत् स्वपदगतं पदान्तरगतं वा विशेषणं, तत् अविवक्षितमित्युक्तम् (ग्रहैकत्वाधिकरणे ३।१।७ हविरार्त्यधिकरणे च ६।४।६)। इहापि स एव न्यायः। 'इह यक्ष्ये' 'इह सुकृतं करिष्यामि' इत्यग्निद्वयदर्शनात् सिद्धान्तग्रन्थोऽयम्। ('इह यक्ष्ये' इति वाक्यं आहवनीयविषयकं, 'इह सुकृतं करिष्यामि' इति वाक्यं च गार्हपत्यविषयकम्। तथा च अस्मिन् वाक्यद्वये अग्निद्वयं दृश्यते। तस्मात् अग्निद्वयनाशे एव पुनराधेयं इति उक्तवाक्यद्वयोदाहरणपरभाष्यार्थः। तथा च 'यथा इह यक्ष्ये' इत्यादि अन्तिमं भाष्यं सिद्धान्तग्रन्थः, न पूर्वपक्षग्रन्थः इति वार्तिककार आह। 'प्रमाद्भिर्लेखकैः अत्र लिखितः' इति चोपसंहृतं **तन्त्ररत्ने। के.**)

**द्रव्योत्पत्तिर्वोभयोः स्यात्। २७॥**

**भाष्यं**— द्रव्ये विनष्टे तस्यैव द्रव्यस्योत्पत्तिः अत्र प्रायश्चित्तम्। तस्य दृष्टं प्रयोजनं कथं द्रव्यं भवेत् इति पुनराधानं क्रियते। तत्र एष धर्मः, द्वावग्नी सहोत्पद्येते न पृथक्त्वेन। तत्र अन्यतरानुगमने न शक्यते एक

एवाधातुम्। विगुणं हि स्यात्। अथ द्वितीयमपि आदधीत, स यदि तावत् आहवनीयः, तत्र आहवनीयः अन्यः होमार्थो विद्यते एव, इति न स होमाय स्यात्। यश्च होमार्थमुत्पाद्यते स आहवनीयः। यत एष संस्कारः। संस्कारशब्दश्च एकेनापि संस्कारेण विना न भवति। एषोऽपि च संस्कारो यत् होमार्थता। 'यदाहवनीये जुहोति' इति हि श्रूयते। तदेकस्मिन् अनुगते एकस्मिन् आधीयमाने वैगुण्यं, द्वयोरपि वैगुण्यमेव। तस्मान्नैकस्मिन् अनुगते पुनराधेयं अशक्यत्वात् इति।

**टुप्**— आहवनीयस्य अलौकिकत्वात् यथा ब्राह्मणवसन्तादिसद्भावेन आत्मलाभः, एवं गार्हपत्येन सह उत्पत्त्या आत्मलाभः, न केवलस्य। एवं गार्हपत्यस्यापि। कार्यार्था चोत्पत्तिः, सा अन्यस्मिन् विद्यमाने न घटते। अथ सह उत्पाद्यते, इतरस्य च त्यागः, अविद्यमाने उत्पाद्यते, स च विद्यते एव। उत्पन्नस्य यावज्जीवं धारणम्। परित्यागे दोषः श्रूयते। किंच अविद्यमानसहोत्पत्त्या आहवनीयोत्पत्तिः शास्त्रादवगता, नेतरथा। तस्मात् नैमित्तिकं सत् उभयानुगमे पुनराधेयम्।

**शा**—'सत्यं निमित्तवेलायामुभावित्यविवक्षितम्। नैमित्तिकं तु नैवैतदेकस्योत्पादनक्षमम्॥' पुनराधेयं हि वाक्यान्तरेण यादृशमवगतं, तादृशमेव गार्हपत्याहवनीययोः उदयाभिनिम्लोचनवेलायां अनुगतयोरुत्पादकत्वेन चोद्यते। तच्च सहितयोरेव तयोरुत्पादकमवगतं नान्यतरस्य। अतस्तादृशमेवात्र विधीयमानं अन्यतरानुगमेन कार्यं कर्तुं न क्षमं, इत्युभयानुगमे स्यात् (इति सिद्धान्तः)।

**सोम**— पूर्वत्र आर्थिकत्वात् निमित्तभावस्य पञ्चशरावन्यायावतारेऽपि (६।४।६।२२-२३) इह तत्संभवात् न विशेषणविवक्षा इति प्रत्यवस्थानात् **संगतिः**। आहवनीयाद्युद्देश्यस्वरूपस्य प्रागविज्ञातत्वेन अविज्ञातोद्देश्यगतसंख्यासाहित्ययोः चमसाध्वर्युबहुत्वन्यायेन (३।७।११।२६) विवक्षितत्वात् नैकाग्न्युत्पादनसामर्थ्यम्। एकस्याग्नेः विना शास्त्रं परित्यागे 'वीरहा वै' इत्यादिदोषश्रवणात् अविद्यमानयोरेव द्वयोः उत्पादनशक्तस्य एकस्मिन् विद्यमाने स्वकार्यासामर्थ्याच्च।

**वि**— 'एकोऽपि वह्न्यनुगमः पुनराधेयकारणम्। द्वावेव वाऽऽद्यो द्वित्वोपेक्षणात् पञ्चशरावत्॥', द्वयोरुत्पादकत्वेन पुनराधेयचोदना। नैकस्यातो ह्यनुगमो हेतुः सूर्योदयादि वा॥'

**भाट्ट**—'यस्योभावग्नी अनुगतौ आदित्योऽभ्युदियात् अस्तमियाद्वा पुनराधेयमेव तस्य प्रायश्चित्तिः' इति श्रुतं प्रायश्चित्तं किं एकैकाग्न्यनुगमेऽपि भवेत्, उत सर्वाग्न्यनुगतौ एव इति चिन्तायां, उभयत्वस्य निमित्तविशेषणत्वेन त्वन्मतेऽपि अविवक्षितत्वात् एकैकाग्न्यनुगमेऽपि इदं प्रायश्चित्तम्। न च हविरुभयत्ववत् एकैकाग्न्यनुगमे व्रातपत्यादिप्रायश्चित्तान्तराम्नानात् अस्य उभयविषयत्वं, तस्य आदित्योदयाद्यभावविषयत्वात्। **न च** एवमपि प्रकरणात् एवकारश्रवणात् पुनःपदप्रयोगाच्च कर्मान्तरत्वानुपपत्तेः, आधानस्य च उत्पत्तिवाक्ये सर्वाग्निजनकत्वस्यैव क्लृप्तत्वेन विधेयसामर्थ्यानुरोधेन उद्देश्यनिर्णयः इति **वाच्यम्**। उत्पत्तिवाक्येऽपि अग्नीनामुद्देश्यत्वेन अविवक्षितविशेषणत्वात्। अत एव योगसिद्ध्यधिकरणन्यायेन (४।३।११।२८) आधानस्य प्रत्यग्नि भिन्न एव योगः। **इति प्राप्ते**, 'आयतनेषु संभारान् निवपति' इत्यत्र आयतनबहुत्वस्य विवक्षितत्वात् आधानस्य एकेनैव प्रयोगेण सर्वाग्न्युत्पादकत्वावगतेः विधेयसामर्थ्यानुरोधेन सर्वानुगमे एव इदं प्रायश्चित्तम्। अत एव दक्षिणाग्नेः भिन्नयोनित्वपक्षाभिप्रायेण अत्र उभौ इति श्रवणम्। समानयोनित्वे तु त्रितयाग्निनाशे बोध्यम्।

**न्यायबिन्दुः**— पञ्चशरावत् अन्यतरानुगमे प्रायश्चित्तं, **इति प्राप्ते**, पुनराधेयस्य उभयाग्न्युत्पादकत्वेन अवगमात् नैमित्तिकानुरोधेन उभयाग्न्यनुगमः एव निमित्तं इति सिद्धान्तः।

**मण्डन**—'द्वयोर्विनाशे पुनरादधातिः।' धात्वर्थनिर्देशोऽयं, पुनराधानमित्यर्थः। पुनरादधाति इत्येव वा पाठः।

**शंकर**—'अग्निद्वित्वविवक्षा स्यात्।'

**अग्निहोत्रपाकः पशोर्व्रीहादिकालत्वे प्राजहिते एव॥**

अग्निहोत्रद्रव्यस्य पाकः शालामुखीये एव स्यात्, **इति**

**प्राप्ते**, मुख्याहवनीयवत् मुख्यगार्हपत्यलाभे अनुष्णाशीतवत् मध्यविधगार्हपत्यग्रहणे मानाभावात् स्वीयगार्हपत्यलाभे परकीयगार्हपत्यग्रहणस्यानुचितत्वाच्च प्राजहिते एव श्रपणम्। **संकर्ष.** ३।२।२५.

**अग्नीत्** ब्रह्मणः पुरुषः। तृतीयवर्गस्थोऽयम्। अयं तृतीयी तृतीयांशभाक्, चतस्रो गाः लभते सोमे। **वि.**३।७।१७, * 'अग्नीदग्नीन् विहर' इति मन्त्रः अग्निविहरणप्रैषे अन्वितः, न तु उत्थाने ज्योतिष्टोमे। ३।२।४, * '**अग्नीधं** नेष्टा दीक्षयति' सत्रे। ३।७।१७. * **अग्नीधः** प्राकृतकृत्स्नेडाभक्षस्य वनिष्ठुना निवृत्तिः अग्नीषोमीये पशौ। वनिष्ठु–अधिकरणम्। **भा.** १०।७।५।१७. * **अग्नीच्छब्दस्य** 'अग्निं इन्धे' इति व्युत्पत्तिः। **के.** * दर्शादौ सर्वत्र श्रौतयागेषु अन्यतमः ऋत्विक् अग्नीध् नाम। अयमेव आग्नीध्रः इत्यप्युच्यते। * 'संस्थिते-संस्थिते अहनि अग्नीदाग्नीध्रागारं प्रविश्य सुब्रह्मण्य सुब्रह्मण्यामाह्वय इति प्रेष्यति'। 'संस्थितेसंस्थिते' इतिवीप्सावचनात् सुब्रह्मण्याऽभेदं दर्शयति। **भा.** ११।४।६।२५.

**अग्नीधश्च वनिष्ठुरध्यूध्नीवत्।** १०।७।५।१७॥ अतिदेशसूत्रम्। अग्नीषोमीये पशौ 'वनिष्ठुरग्नीधे हरन्ति' इति श्रूयते। सोऽयं वनिष्ठुः अग्नीधः इडाभक्षविकारः। अग्नीधे वनिष्ठुरेव नान्यत्। अध्यूध्नीवत् यथा अध्यूध्नी होतुरिडाभक्षविकारः तद्वत्, इति सिद्धान्तः। **के.**

**अग्नीनां लौकिकवैदिकसर्वार्थत्वनिरासन्यायः** द्वादशे वक्ष्यमाणः 'निर्देशाद्वा वैदिकानां स्यात्' (१२।२।१।३) इति। **सु.** ३।७ पृ. ४०.

**अग्नीवरुणयोः** अवभृथे 'अग्नीवरुणौ स्विष्टकृतौ आवह' इत्यादि सस्विष्टकृच्छब्दकं अभिधानं कर्तव्यम्। **भा.** १०।४।१७।३४–३५.

**अग्नीषोमौ** देवता इतिवत्। यथा अग्नीषोमयोर्व्यासज्यवृत्ति देवतात्वं एकमेव, अत एव देवता इत्येकवचनं, तद्वत् दंपत्योः यागकर्तृत्वं व्यासज्यवृत्ति, अतश्च यजेत इत्येकवचनम्। **बिन्दुः** ६।१।४. * **अग्नीषोमौ** विष्णुः अजपतिः इति उपांशुयाजदेवता विकल्पेन। **वि.** १०।८। १७. * **अग्नीषोमयोः** उपांशुयाजे प्राधान्यप्रसिद्धिः 'तावब्रूतामग्नीषोमौ' इत्यत्र कीर्तनात्। **सु.** पृ. ७५५. * अग्नीषोमयोः देवतात्वस्य व्यासङ्गित्वात् अग्नीषोमीयं हविः आग्नेयशब्देन न व्यपदिश्यते। **रत्नाकरः** १।१।८ श्लो.वा. ८.* अग्नीषोमयोः परस्परसापेक्षयोरेव देवतात्वम्। 'अग्नीषोमौ देवता' इत्युक्तत्वात्। **शा.** ६।१।४. * अग्नीषोमयोर्न स्वव्यापारकृतं देवतात्वं, किंतु यष्टुः चतुर्थ्यन्तनिर्देशकृतम्। स च निर्देशः तयोरेकः इति युक्तं तत्र देवतात्वस्यैक्यम्। **सोम.*** **अग्नीषोमप्रणयनं** ज्योतिष्टोमे औपवसथ्येऽहनि। **वि.** ५।१।१४. * **अग्नीषोमप्रणयनवत्।** यथा अग्नीषोमप्रणयनयूपच्छेदनयोः प्रयोगभेदः, तथा वेदिहविरभिवासनयोः प्रयोगभेदो नास्ति। **सोम.** ५।१।१६. * **अग्नीषोमप्रणयनादनन्तरं** पशोः कालः। तत्र हि तस्य चोदना। **भा.** १२।१।१।१. * **अग्नीषोमप्रणयनोत्तरं** पठितस्यापि यूपच्छेदस्य दीक्षाकाले अपकर्षः। प्रणयनस्य तु नापकर्षः। प्रणयनच्छेदनयोः क्रमानपेक्षत्वात्। अग्नीषोमप्रणयनस्य सोमाङ्गत्वात् यूपच्छेदस्य च पश्वङ्गत्वात्। **वि.** ५।१।१४, * अग्नीषोमप्रणयनोत्तरकालं यूपस्य च्छेदनादयः पठ्यमानाः वचनेनापकृष्यमाणाः सौमिकान्नापकर्षन्ति। कुतः? भिन्नप्रयोगवचनपरिगृहीतत्वात्। अभिन्नप्रयोगवचनपरिगृहीतेषु हि क्रम आकाङ्क्ष्यते। क्रमाच्च पूर्वः पदार्थ उत्तरमुपस्थापयति। तस्मात् पूर्वः पदार्थो योऽपकृष्यते, सोऽन्यानपकर्षति। पाठस्यात्र अनङ्गत्वात्। **वा.** ५।१।१४।२७.

**अग्नीषोमीयः।** अग्निश्च सोमश्च मिलित्वा एको देवः। पौर्णमासेष्टौ अग्नीषोमीयः पुरोडाशो भवति, ज्योतिष्टोमे अग्नीषोमीयः पशुर्भवति। **के.** * अग्नीषोमीयः पुरोडाशः पौर्णमास्याम्। **वि.** ५।१।८. * न चानिष्ट्वा **अग्नीषोमीयेण**, सोमेन यजन्ते। **भा.** १२।१।४. * **अग्नीषोमीयस्य** पुरोडाशस्य सोमादूर्ध्वं उत्कर्षः इत्युक्तम्। **वि.** ५।४।६, * **अग्नीषोमीये** पुरोडाशे एकस्मिन्नेव ब्राह्मणस्य सोमपूर्वकत्वनियमः इतरत्र क्षत्रियवैश्ययोरिव अस्यापि इष्टिपूर्वत्वसोमपूर्वत्वे विकल्प्येते। ५।४।४.

* अग्नीषोमीय**पुरोडाशधर्माणां** आग्नावैष्णवादौ द्विदैवत्ये अतिदेशः द्विदेवतात्वसामान्यात् । **भा.** ८।३।१।१-२, * अग्नीषोमीय**पुरोडाशविकारा** अपि सोमादूर्ध्वं भवितुमर्हन्ति । ५।४।८।२५. * अग्नीषोमीय**पुरोडाशविकृतित्वं** आग्नावैष्णवस्य द्यावापृथिव्यस्य च पञ्चाक्षरत्वसाम्यात् । सौमेन्द्रचरोः सौम्यचरोश्च सोमसंबन्धात् । **बाल.** पृ. १२०. * **अग्नीषोमीयवत्** । यथा अग्नीषोमीयपुरोडाशः सोमादूर्ध्वं तथा सांनाय्यमपि सोमादूर्ध्वम् । **भाट्ट.** ५।४।८.

**अग्नीषोमीयः पशुः** अग्निष्टोमे । **के.** * अग्नीषोमीयः पशुः उत्तरवेद्यां क्रियते । **वि.** १२।१।२०. * अग्नीषोमीयः पशुः कृष्णसारङ्गः ' कृष्णसारङ्गोऽग्नीषोमीयः ' इति विधानात् । **मीन्या.** * अग्नीषोमीयः पशुः छाग एव । छागपशुन्यायः । **भा.** ६।८।१०।३०-४३, * अग्नीषोमीयः पशुः दैक्षः इत्युच्यते दीक्षासंबन्धात् । ८।१।६।१३. * अग्नीषोमीयः पशुः दीक्षासु सोमक्रयसमीपे समाम्नायते । **वा.** ३।६।७।१८. * अग्नीषोमीयः पशुः व्यक्तचोदनः, सोमस्तु अव्यक्तचोदनः । व्यक्तत्वं च द्रव्यदेवतावत्ता । 'अग्नीषोमीयं पशुं' 'सोमेन यजेत' इति । **भा.** ८।१।५।१२, * अग्नीषोमीयः पशुः सद्यस्कालः, न तु द्व्यहकालः । ८।२।३।१६. * अग्नीषोमीयः पशुः सवनीयादिपशूनां प्रकृतिः इति अष्टमेऽप्युक्तम् (८।१।६)। **वि.** ९।१।१७. * अग्नीषोमीयः पशुः सौत्यादह्नः प्राचीने औपवसथ्येऽहनि अग्नेः सोमस्य च मधुपर्कार्थे क्रियते । **के.** * **' अग्नीषोमीयं पशुं '** इति एकत्वं विवक्षितम् । पश्वेकत्वाधिकरणम् । **भा.** ४।१।५।११-१६, * अग्नीषोमीयं पशुं इति लिङ्गं विवक्षितम् । लिङ्गाधिकरणम् । ४।१।६।१७, * ' अग्नीषोमीयं पशुमालभते ' ' सोमेन यजेत ' इति आलभनयागौ अपूर्वं कर्म विधीयते । पशुसोमाधिकरणम् । २।२।६।१७-२०.* अग्नीषोमीयस्य **पशोः** अञ्जनं यूपानुनिष्पन्नप्रथमशकलरूपस्वरुनाशे येन केन चित् काष्ठेन कर्तव्यम् । तेन प्रोक्षणादेः स्वर्वर्थत्वे प्रमाणाभावात् न स्वरुः तेषां प्रयोजकः । **भाट्ट.** ४।२।१. * पशोः अञ्जनं, ' स्रुच्यमाघार्य जुह्वा पशुमनक्ति ' इत्युक्तम् । **वि.** ८।१।५. * पशोः अञ्जनं स्वरुणा स्वधितिना वा क्रियते । **के.** * पशोः धर्माः सवनीयादिषु अतिदेष्टव्याः । दैक्षन्यायः । **भा.** ८।१।६।१३, * पशोः विशसने ' सं ते वायुर्वातेन गच्छतां ' इत्यादौ नानुषङ्गेण मन्त्रक्लृप्तिः । २।१।१७।४९, * ' पशोः स्थाने अग्नीषोमीयः पुरोडाशः , अनुबन्ध्यायाः स्थाने मैत्रावरुणी पयस्या ' इति श्येने पुनर्वचनम् । तत् द्वे स्थाने शून्ये दर्शयति । ३।८।२१।३९. * पशोः हिंसायाः क्रत्वङ्गत्वेन क्रतुफलस्वर्गव्यतिरेकेण फलान्तराभावात् नानर्थत्वम् । **वि.** १।१।२. * **पशौ अध्यूध्नी** होतुः कृत्स्नेडाविकारः । **भा.** १०।७।८।१२-१६. * पशौ **अध्रिगुप्रैषः** । एतद्विषयकं सर्वं अध्रिगुप्रैषबिन्दौ द्रष्टव्यम् । **के.**, * पशौ **अनुयाजाः** एकादश । ते च पशिवडाप्राशनोत्तरं परिध्यग्निसंमार्गानन्तरम् । **के.** * पशौ अनुयाजार्थस्य पृषदाज्यस्य धारणार्थं पात्रं भिन्नम्। पात्रभेदन्यायः । **भा.** ५।२।८।१६. * पशौ ' दैवतान्यवदाय न तावत्येव होतव्यं, सौविष्टकृतान्यवद्यति । सौविष्टकृतान्यवदाय न तावत्येव होतव्यं ऐडान्यवद्यति ' इति वचनात् प्रधानदेवतार्थानि, स्विष्टकृदर्थानि इडाभक्षणार्थानि चेति त्रिविधानि **अवदानानि** तेनैव क्रमेणानुष्ठीयन्ते । **वि.** ५।२।६, * पशौ **आघारः** 'स्रुच्यमाघार्य जुह्वा पशुमनक्ति' इत्युक्तः । ८।१।५. * पशौ **आलम्भमन्त्राः** ' सं ते प्राणो वातेन गच्छतां, समङ्गानि यजत्रैः, सं यज्ञपतिराशिषा ' इति । अत्र द्वितीयमन्त्रे अध्याहृतेन ' गच्छन्तां ' इति पदेन व्यवधानात् तृतीयमन्त्रे प्रथममन्त्रस्थं ' गच्छतां ' इति पदं नानुषज्यते । व्यवायाधिकरणम् । **भा.** २।१।१७।४९. * पशौ **उपयाजाः** (उपयड्होमाः ) । आग्नीध्रेण शामित्राग्नेरङ्गारेषु उत्तरस्यां वेदिश्रोण्यां बहिःस्थापितेषु पशोः गुदकाण्डस्य एकादशखण्डान् प्रतिप्रस्थाता एकैकेन अनुयाजेन सह एकैकं इति रीत्या मन्त्रैर्जुहोति वसाहोमहवन्या हस्तेन वा । **के.** * पशौ उपयाजाः । गुदेन उपयजनमाम्नातं ' गुदेनोपयजति , प्राणो वै गुदः ' इति । प्रतिपत्तिरियं उपयुक्तशेषत्वात् । उपयाजसमुच्चयन्यायः । **भा.** १२।४।४।८, * पशौ **एकादशभिरेव** अङ्गैर्यागः । १०।७।२।३,* पशौ दर्शपूर्णमासाभ्यां चोदकेन **जाघन्याः** आज्येन सह पत्नीसंयाजेषु विकल्पः प्राप्तः ।

तत्रापि श्रूयते 'जाघन्या पत्नीः संयाजयन्ति' इति। सा श्रुतिः विकल्पे प्राप्ते नियमार्था भवति। यथाप्राप्तयोश्च नियमः। गुणभूता च प्राप्ता। तस्मात् अग्नीषोमीये गुणभूता जाघनी, कर्म प्रधानम्। ततश्च तत्र जाघनी अर्थकर्म, न प्रतिपत्तिः। १२।४।६।१०, * पशौ **पाशैकत्व**पाशबहुत्वाभिधायिनोर्मन्त्रयोः प्रकृतौ समुच्चयः। पाशाधिकरणम्। ९।३।५।१५–२०. * पशौ **प्रतिप्रस्थातुः** नास्ति भक्षः इति भाष्यादिमतम्। प्रतिप्रस्थात्रवदानपक्षे तस्यास्ति भक्षः। अध्वर्य्यवदानपक्षे तु नास्ति भक्षः इति पार्थसारथिमतम्। **भाट्ट.** १०।७।८. * पशौ 'तिष्ठन्तं पशुं **प्रयजन्ति**' इति श्रुतं, तत्र प्रयाजान्ताङ्गसमूहस्य अपकर्षः न तु प्रयाजमात्रस्य। स च जीवत्येव पशौ। **भा.** ५।१।१२।२३. * पशौ **प्रयाजादीतिकर्तव्यता** आतिदेशिकी एव। **वि.** १०।३।१. * पशौ **प्रयाजानुयाजा** एकादशैकादश। तत्र प्राकृतेतिकर्तव्यता प्राप्यते। प्राप्तायां एकादशत्वगुणविधिः। **भा.** १०।३।१।१–१२, *पशौ **प्रयाजानुयाजानां** एकादशत्वसंख्या सर्वसंपाद्या। प्रयाजैकादशत्वन्यायः। ५।३।१।१-२, * पशौ **प्रैषानुवचनयोः** समुचितयोः मैत्रावरुणः कर्ता। प्रैषानुवचनाधिकरणम्। ३।७।२१।४३-४५, * पशौ **प्रोक्षणं** पुरोडाशधर्मः चोदकप्राप्तः। तत्र 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि' इति मन्त्रः। ८।२।२।११, * पशौ **बर्हिः** साधारणमुच्यते। यदातिथ्यायां विधीयते तदेवोपसदां अग्नीषोमीयस्य च विधीयते। अविशिष्टानां बर्हिषा संयोगः एकेन सर्वेषाम्। ४।२।१४।३०, * पशौ **बर्हिषः** आतिथ्यादेशात् अग्नीषोमीयदेशे नयनकाले संनहनमन्त्रस्य हरणमन्त्रस्य च नावृत्तिः। संनहनहरणमन्त्राधिकरणम्। १२।१।२१।४६–४७, * पशौ बर्हिषः प्रोक्षणादि आतिथ्याबर्हिषि कृतेन प्रसङ्गसिद्धं, पृथक् न कर्तव्यम्। १२।१।१९।४२–४३, * पशौ **मनोतामन्त्रः** 'त्वं ह्यग्ने प्रथमो मनोता०' इति सूक्तम्। १०।४।२१।४२. * पशौ **मनोतायां** अग्निशब्दः प्रकरणात् समासस्थः प्रतीयमानः साहचर्यात् सोममपि प्रतिपादयन् समुदायार्थो विज्ञायते। **वा.** २।१।५।२१; मनोताख्यसूक्तस्थोऽग्निशब्दः :अग्नीषोमसमासस्थाग्निप्रकाशकतया अवगम्यमानः सहचरितसोमलक्षकत्वात् समुदायस्य प्रकाशनं करोति। **सु.** पृ. ६५६. * पशौ **यूपः** खादिरः वीर्यकामस्य। **भा.** ४।३।३।५–७, * पशौ **यूपे** खादिरत्वं नित्यं नैमित्तिकं च संयोगपृथक्त्वेन। ४।३।३।५–७, * पशौ, यूपे खादिरे पशोः नियोजनं श्रूयते। १०।७।१८।६३, * पशौ यूपः बैल्वः ब्रह्मवर्चसकामेन कर्तव्यः। ३।६।३।१०. * पशौ **यूपच्छेदः** दिनत्रयात् पूर्वस्मिन् दीक्षाकाले अपकृष्टः 'दीक्षासु यूपं छिनत्ति' इति तद्विधानात्। **वि.** ५।१।१४. * पशौ यूपच्छेदनं दीक्षासु आकृष्यमाणं अग्नीषोमप्रणयनादीनि नापकर्षति। यूपकर्मन्यायः। **भा.** ५।१।१४।२७, * पशौ **यूपपरिव्याणे** अध्वर्योः 'परिवीरसि०' इति करणमन्त्रः। होतुश्च क्रियमाणानुवादी 'युवा सुवासाः' इति मन्त्रः ज्योतिष्टोमे। ३।८।१०।२१, * पशौ **यूपमानं** 'वज्रो वै यूपो यदन्तर्वेदि मिनुयात् तन्निर्दहेत्, यद् बहिर्वेदि अनवरुद्धः स्यात्, अर्धमन्तर्वेदि मिनोति अर्धं बहिर्वेदि, अनवरुद्धो (नानवरुद्धो) भवति न निर्दहति' इति। अत्र देशमात्रं वेदिशब्देन लक्ष्यते। तस्माद्देशलक्षणा। ३।७।६।१३–१४, * पशौ **यूपावट**स्तरणबर्हिः, यूपाञ्जनाज्यं च लौकिकम्। यूपावटस्तरणबर्हिर्न्यायः। ३।८।१६।३१, * पशौ **यूपाहुतिः**। 'यूपमच्छैष्यता होतव्यं, न हि दीक्षितस्याग्नौ जुहोति। आज्यं चारणिं चादाय यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति। १०।१।५।९, * पशौ **रशनाधर्मा** अग्नीषोमीयसवनीयोभयसाधारणाः। रशनाधिकरणम्। ३।६।१०।३१, * पशौ **वनिष्ठुः** अग्नीधः इडाभक्षविकारः। वनिष्ठु–अधिकरणम्। १०।७।५।१७, * पशौ **वसाहोमः** 'याज्यार्धर्चान्ते वसां जुहोति' इति विहितः। ११।२।५।२४, * पशौ **शकृल्लोहित**निरसने प्रतिपत्तिः। शकृल्लोहिताधिकरणम्। ४।१।१२।२७. * पशौ **संज्ञप्तहोमः** 'यत् पशुर्मायुमकृत०' इति मन्त्रेण विहितः। स च मरणवेलायां पशुना अकृतेऽपि शब्दे कर्तव्यः। **वि.** ६।८।७. * पशौ '**संस्थिते** यजमानस्य गृहे अशितव्यम्'।

अयं सामान्यरूपः पर्युदासविषयकः व्यावृत्तविषयः अभ्यनुज्ञाविधिः । **बाल.** पृ. १७. * पशौ 'संस्थिते यजमानस्य गृहे अशितव्यं' इत्यनेन 'क्रीतराजको भोज्यान्नः ' इति विरुद्धम् । तत् प्रमाणं कर्तृसामान्यात् इत्येवं प्राप्ते ब्रूमः । बुभुक्षमाणाः के चित् क्रीतराजकस्य भोजनमापदि कृतवन्तः । तत एषां स्मृतिरित्यवगम्यते । अतो न सा प्रमाणम् । **भा.** १।३।२।३–४. * पशौ **सूक्तवाकप्रैषः** दार्शिकः 'अग्निमद्य होतारमवृणीत ' इत्येवं विकृतः, पुनः सवनीये पशौ विक्रियते ' अग्निमद्य होतारमवृणीतायं यजमानः सुतासुती ' इति । **टुप्.** १२।२।१२।३१. * पशौ **स्थाण्वाहुतिः** ' स्थाणौ स्थाण्वाहुतिं जुहोति ' इति श्रूयते ( स्थाणुः छिन्नवृक्षस्य भूमौ अवशिष्टं मूलम् ) । **भा.** १०।१।६।१०. * पशौ **स्वरः** उच्चैष्ट्वं अवान्तरापूर्वप्रयुक्तः ' उच्चैरग्नीषोमीये ' इति वचनात् । **वि.** ९।१।२ वर्णकं २. * पशौ सवनविभागस्वरेणैव ' मन्द्रया आज्यभागान्तं ' इत्यादिप्राकृतस्वरप्रतिप्रसवः । सवनविभागतुल्यं वा साङ्गं प्रयोगं त्रेधा विभज्य मन्द्र-मध्यम-उत्तमोच्चारणसंपादनं कर्तव्यम् । **वा.** ३।३।२।९ पृ. ८१२. * पशौ **स्वरुः** छेदनादेर्न प्रयोजकः । **भा.** ४।२।१।१, * पशौ स्वरुः पश्वङ्गं, न यूपाङ्गम् । ४।४।१०।२५, * पशौ स्वरुः यूपमनुनिष्पन्नो ग्रहीतव्यः । ४।२।१।३, * पशौ **स्वरोः** पशुत्रयार्थं तन्त्रेण प्रवृत्तस्य सोमान्ते प्रहरणम् । ११।३।५।८–१२. * पशौ **'हृदयस्याग्रेऽवद्यति,** अथ जिह्वायाः, अथ वक्षसः' इति हृदयाद्यवदानमेव पश्वालम्भनस्य प्रयोजकम् । **वि.** ४।१।१२. * पशौ 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः ' इत्यत्र आलभतिः अपूर्वस्य कर्मणो विधायकः, न तु अवद्यतिचोदितानां कर्मणां समुदायस्यानुवादकः । **भा.** २।२।६।१७–२०, * पशौ ' हृदयस्याग्रेऽवद्यति ' इत्याद्यवद्यतिना पशुसंस्कारो विधीयते । २।२।६।१७–२०, * पशौ **हृदयादीनामेव** अवदानसंबन्धितया श्रूयमाणानां हविष्ट्वेन तदितरावयवानां हविष्ट्वपरिसंख्या । हृदयादिन्यायः । १०।७।२।३–९, * **पशुगतनिर्मन्थ्यः** एकः, अग्निचयनगतेष्टकापाकार्थश्च निर्मन्थ्यः अपरः , अनयोः प्रकृतिविकारभावो नास्ति , न च धर्माणामतिदेशः । अग्नीषोमीयपशुगतः सधर्मकः, अग्निचयनगतस्तु शाम्नीयधर्मरहितः । ( अयं पशुप्रोक्षणोत्तरम् ) ७।३।७।१८. * **पशुधर्मा** अवान्तरापूर्वप्रयुक्ता एव , न तु ज्योतिष्टोमपरमापूर्वप्रयुक्ताः । **के.** * **पशुपाशमोचने** एकवचनान्तबहुवचनान्तपाशशब्दघटितौ मन्त्रौ द्विपशुकायां विकृतौ द्विवचनान्तेन ऊहितव्यौ । **भा.** ९।३।४।१०–१४. * पशुपाशमोचने मन्त्रौ शाखाभेदेन भिन्नौ एकवचनान्तबहुवचनान्तौ प्राप्तौ, तयोर्विकल्पेन ग्रहणम् । बहुवचनेन तु पाशावयवगतबहुत्वं लक्षणया ग्राह्यम् । बहुवचनान्तस्य प्रकरणादुत्कर्षो न कार्यः । **वि.** ९।३।५. * **पशुपुरोडाशेन** सवनीयादिपशुपुरोडाशस्य प्रसङ्गसिद्धिर्न भवति । पृथगेव स कर्तव्यः । **भा.** १२।२।२।८–१०. * **पशुपुरोडाशस्य** पौर्णमासगताग्नीषोमीयपुरोडाशविकृतित्वं इति **धूर्तस्वाम्यादे**रुक्तिः उपेक्ष्या । **बाल.** पृ. १२१. * **पशुपुरोडाशे** आज्यभागौ कर्तव्यौ । पौरोडाशिकाज्यभागन्यायः । **भा.** १२।१।२।७, * पशुपुरोडाशे पाशुकमेव तन्त्रं प्रसज्यते । पशुपुरोडाशाधिकरणम् । १२।१।१।१–६ , * **पशुपुरोडाशतन्त्रं** अग्निचयने अनुनिर्वाप्येषु देवसुवांहविःषु भवति । १२।३।२।३–८, * **पशुपुरोडाशयागः** पशुदेवतासंस्कारकः । पशुपुरोडाशन्यायः । १०।१।९।१९–२३. * **पशुप्रयाजादिभिः** पशुपुरोडाशस्योपकारः । **वि.** १२।१।१. * **पशुविकाराः** इतरे पशवः । अग्नीषोमीयपशुश्च दर्शपूर्णमासविकारः । ' यो हि प्रकृतिभूतः पशूनां स दर्शपूर्णमासविकारो भवति । इतरे तु प्राणिद्रव्यकत्वसामान्यात् तद्विकाराः ' । **वा.** ३।[illegible]।१९, * पशुविकाराः निरूढपश्वादयः । ३।७।४।९, * **प[illegible]विकारेषु** वपन-पयोव्रत-तपसां अगमनं, सिद्धान्ते प्र[illegible]नम् । ३।७।२।६. * **पश्वर्थाः** पशुधर्माः । पशुधर्मा[illegible]रणम् । **भा.** ३।६।७।१८–२७,* पश्वर्थान्यङ्गानि पशु[illegible]डाशेऽपि उपकुर्वन्ति इति न पृथक् कर्तव्यानि । १२[illegible]

*अग्नीषोमीययागार्थः पशुरुत्पन्नः। तस्मिन्निर्वृत्ते तच्छेषाः प्रतिपादनार्हाः। तस्मात् गुदस्य प्रतिपत्तिनियमोऽयं दृष्टार्थः। १२।४।४।८, *अग्नीषोमीयसवनीयानुबन्ध्याः पशवो ज्योतिष्टोमे। तेषां यूपः तन्त्रम्। ११।३।३।३-४. *अग्नीषोमीयादिपशवो ज्योतिष्टोमाङ्गम्। प्रधानं तु सोमयाग एव। वि. ३।७।२. *अग्नीषोमीयाद्या इतिकर्तव्यता द्वादशाहे द्वादशानां यागानां अगृह्यमाणविशेषत्वात् तन्त्रेण कर्तव्या। अवभृथादीन्यपि तन्त्रेणैव। वा. ९।१।८।३२, *अग्नीषोमीयार्थत्वेन अनुष्ठानदेशक्रमोऽपि पशुधर्माणां भविष्यति। ३।३।५।१२.

**⌛ अग्नीषोमीयः पशुः पयोविकारः ॥**

**दध्नः स्यान्मूर्तिसामान्यात्। ८।२।३।१५ ॥**

**भाष्यं**— सांनाय्यविकारोऽपि दध्नो विकारः स्यात् पशुः, न पयसः। कुतः? मूर्तिसामान्यात्। घनत्वं मूर्तिः।

**पयो वा कालसामान्यात्। १६ ॥**

**भाष्यं**— पयो वा पशुः विकुर्यात् न दधि। सद्यस्कालः पशुः, पयोऽपि सद्यस्कालम्। दधि तु द्व्यहकालं पयोऽन्तरितं तद् बहिरङ्गम्।

**पश्वानन्तर्यात्। १७ ॥**

**भाष्यं**— पशोश्च पयोऽनन्तरं, तत्प्रत्यासन्नं, न दधि।

**द्रवत्वं चाविशिष्टम्। १८ ॥**

**भाष्यं**— द्रवत्वं पशुपयसोः समानं, पशुरपि द्रवति पयोऽपि। तस्मात् पयोविकारः पशुः।

**शा**— तत्रापि ( सांनाय्येऽपि ) दध्नो विकारः स्यात् घनत्वसामान्यात्। पयसो वा। तद्धि साक्षात् पशुप्रभवं, दधि तु तद्व्यपेतम्। पशुर्हि साक्षात् पशुप्रभवः। गतिमत्त्वं च पशुपयसोस्तुल्यं तदधिकं दधितः पयसः।

**सोम**— पूर्वोक्तसांनाय्यविकारत्वे एव विशेषचिन्तनात् **संगतिः**। पशुप्रभवत्वस्य तुल्यत्वात् घनत्वस्य चाधिक्यात् दधिविध्यन्त इति पूर्वपक्षः। दध्नो घनत्वमात्रं, पयसस्तु साक्षात् पशुप्रभवत्वं गतिमत्त्वं चोभयं, इति पयोविध्यन्तः स्यात् इति सिद्धान्तः।

**वि**— 'दध्नोऽत्र पयसो वा, ऽऽद्यो घनत्वस्य समत्वतः।, द्रवत्वासत्तिकालेभ्यो धर्मः स्यात् पयसः पशौ॥'

**भाट्ट**— तत्रापि दधिविकारः पयोविकारो वेति चिन्तायां घनत्वसादृश्यात् दधिविकारत्वमेव। न च साक्षात् पशुप्रभवत्वसादृश्येन पयोविकारत्वशङ्का। कारणत्वस्य व्याप्तिरूपतया अतीन्द्रियस्य आनुमानिकत्वेन प्रत्यक्षगम्यघनत्वापेक्षया दौर्बल्यात्। **इति प्राप्ते**, हृदयादीनां पयसश्च एकदिनान्तरितानां विकारदर्शनात् एकदिनस्थायित्वसादृश्यं स्वतोगतिमत्त्वसादृश्यं च प्रत्यक्षगम्यमेव, इति तत्सहकृतत्वेन साक्षात्पशुप्रभवत्वेन एकस्य घनत्वस्यैव बाधात् पयोविकारत्वमेव।

**न्यायबिन्दुः**— घनत्वाद्दध्नः, **इति प्राप्ते**, साक्षात्पशुप्रभवत्वात् पयस एवेति सिद्धान्तः।

**मण्डन**— 'पयोधर्मा स तु भवेत्।' स पशुः।

**शंकर**— 'तत्रापि पयसो मतः।' सांनाय्येऽपि पशुः पयसो विकारो मतः।

**⌛ अग्नीषोमीयः पशुः सांनाय्यविकारः ॥**

**पशुः पुरोडाशविकारः स्याद्देवतासामान्यात्। ८।२।२।१० ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र संदेहः, किं पशुः पुरोडाशविकारः उत सांनाय्यविकारः इति। किं प्राप्तं? पशुः पुरोडाशविकारः स्यात्। कुतः? देवतासामान्यात्। अग्नीषोमीयः पशुः, पुरोडाशोऽपि तद्देवत्य एव।

**प्रोक्षणाच्च। ११ ॥**

**भाष्यं**—प्रोक्षणं पुरोडाशधर्मः, पशौ दर्शयति 'अद्भ्यस्त्वौषधीभ्यो जुष्टं प्रोक्षामि इति पशुं प्रोक्षति' इति।

**पर्यग्निकरणाच्च। १२ ॥**

**भाष्यं**— पर्यग्निकरणमपि पुरोडाशधर्मः, तदपि पशौ दृश्यते। 'आहवनीयादुल्मुकेन पशुं पर्यग्नि करोति' इति। तस्मात् पुरोडाशविकारः।

**सांनाय्यं वा तत्प्रभवत्वात्। १३ ॥**

**भाष्यं**— सांनाय्यं वा पशुर्विकुर्यात् न पुरोडाशम्।

कुतः ? तत्प्रभवत्वात्। पशुतः सांनाय्यं प्रभवति पशुश्च। तन्मिथः प्रत्यासन्नम्। प्रत्यासत्तिश्च लिङ्गम्। (न्यायस्तु–) हविःसामान्यं च देवतासामान्यात् बलीयः इत्युक्तम् (८।१।१७)।

**तस्य च पात्रदर्शनात्।** १४ ॥

**भाष्यं**— तस्य च सांनाय्यस्य यत् पात्रं उखा, सा पशौ दृश्यते 'यदि पशुरुखायां पचेत्' इति।

**शा**— देवतासामान्यात् अग्नीषोमीये पुरोडाशः प्रवर्तते। हविःसामान्यमपि पुरोडाशेनैव विद्यते, द्वयोरपि घनत्वात्। सांनाय्यं वा प्रवर्तते हविःसामान्यात्। सांनाय्यं हि पशुतः प्रभवति, पशुरपि पशुप्रभवः। संबन्धित्वाच्च पशुसांनाय्ययोः पशुः प्रतीतः सांनाय्यमुपस्थापयति। सांनाय्यपात्रं चोखा पशौ दृश्यमाना तत्प्रकृतित्वं सूचयति।

**सोम**— वाजिनस्य सांनाय्यविकारत्वेऽपि पशोर्न तद्विकारत्वं ? किंतु सुराग्रहवत् औषधविकारत्वं, इत्युत्थानात् **संगतिः**। हविःसामान्यं तुल्यं, देवतासामान्यं च दुर्बलं हविर्गतसंबन्धित्वं चाधिकम्। यद्यपि जन्यजनकभावेन संबन्धित्वं सादृश्यरूपत्वाभावात् न लिङ्गं, तथापि प्रकृतिविशेषस्मारकतया विध्यन्तनियामकम्।

**चि**— 'पुरोडाशस्य सांनाय्यस्य वा धर्मः, पशौ यतः। देवैक्यमाद्यस्तस्मा, न्यो हविर्जन्मादिसाम्यतः॥'

**भाट्ट**— दैक्षः पशुः दर्शपूर्णमासविकार इत्युक्तम्। तत्रापि किं अग्नीषोमीयपुरोडाशविकारः, उत सांनाय्यविकार इति चिन्तायां, घनत्वसादृश्यात् पुरोडाशविकारः। न च पशुप्रभवत्वसादृश्यस्य द्रव्यगतस्य सांनाय्ये सत्त्वात् नियामकाभावः, घनत्वस्य लिङ्गोपष्टब्धत्वात्। 'अद्भ्यस्त्वौषधीभ्योऽग्नीषोमाभ्यां त्वा जुष्टं प्रोक्षामीति पशुं प्रोक्षति' इति हि प्रोक्षणं पुरोडाशधर्मः। तथा 'पशुं पर्यग्नि करोति' इति पर्यग्निकरणं पुरोडाशविकारत्वे लिङ्गम्। न च पशुप्रभवत्वसादृश्यस्यापि उखादर्शनरूपलिङ्गोपष्टब्धत्वान्नियामकाभावः। तथात्वेऽपि देवतासादृश्यस्यैव अग्नीषोमीयविकारत्वे नियामकत्वात्। **इति प्राप्ते,** देवतासामान्योपष्टब्धस्यापि द्रव्यसादृश्यस्य अन्यथासिद्धलिङ्गोपष्टब्धत्वेन अनन्यथासिद्धलिङ्गोपष्टब्धद्रव्यसादृश्यापेक्षया दौर्बल्यात् सांनाय्यविकार एव पशुः। तथाहि, नात्र प्रोक्षणानुवादेन मन्त्रो विधीयते, येनेदं लिङ्गं भवेत्। तस्य तु लिङ्गादेव प्राप्तत्वात् प्रोक्षणभावनैव अत्र अपूर्वा विधीयते, इति विपरीतसाधकत्वम्। पर्यग्निकरणं तु प्रदेयपुरोडाशधर्मत्वेन प्रकृतौ क्लृप्तं, नेह प्रदेयप्रकृतिभूतपशुसंस्कारकतया दृश्यमानं प्राकृतं, अपि तु अपूर्वमेव, इति न तदपि लिङ्गम्। अतो घनत्वसादृश्यं न लिङ्गोपष्टब्धम्। 'यदि पशुरुखायां पच्यमानः स्कन्देत्' इत्युखादर्शनं तु अनूद्यमानत्वात् अनन्यथासिद्धं लिङ्गम्। अतस्तदुपष्टब्धं पशुप्रभवत्वमेव बलीयः।

**न्यायबिन्दुः**—देवतासाम्यात् अग्नीषोमीयपुरोडाशविध्यन्तप्राप्तौ पशुप्रभवत्वसाम्याधिक्यात् सांनाय्यविध्यन्तः इति सिद्धान्तः।

**मण्डन**—' पशुः सांनाय्यधर्मकः।'

**शंकर**—'पशौ सांनाय्यतश्चासौ।' असौ चोदकः।

**॥ अग्नीषोमीयपशुपुरोडाशश्रपणं शालामुखीये न तु शामित्रे ॥**

**शामित्रे च पशुपुरोडाशो न स्यादितरस्य प्रयुक्तत्वात्।** १२।१।५।१२ ॥

**भाष्यं**—पुरोडाशे एव चिन्ता, किमेतस्य शामित्रेऽग्नौ श्रपणं कर्तव्यं, उत शालामुखीये इति। तत्र स एव न्यायः 'इतरस्य प्रयुक्तत्वात्' इति। गार्हपत्ये च हविषां श्रपणं श्रुतम्। स च प्रयुक्तो विद्यते 'शालामुखीय एषोऽत ऊर्ध्वं गार्हपत्यो भवति' इति। तस्मात् तत्र श्रपणं कर्तव्यम्।

**शा**—अग्नीषोमीये पशौ शामित्रोऽग्निः हविःश्रपणार्थः श्रुतः। पशुतन्त्रोपजीवी च पुरोडाशः इति स्थितम्। अतः सोऽपि तत्रैव श्रपयितव्यः इति मन्यते। न पशुश्रपणेन पुरोडाशः श्रपितो भवति। तेन पृथक् श्रपयितव्यः। पुरोडाशश्चोदकप्राप्ते गार्हपत्ये श्रपयितव्यः अवैगुण्यात्।

**सोम**—सोमाहुतेः ऐष्टिकाहुतेश्च भिन्नकार्यत्वात् सोमाहुत्यर्थानां चमसादीनां ऐष्टिककार्यार्थाहुतिशक्त्य-

नवगमात् प्रसङ्गाभावेऽपि प्राकृतस्य पशुश्रपणस्य पुरोडाशश्रपणस्य च कार्यभेदाभावेन शामित्रस्य च प्राकृतकार्यश्रपणे दृष्टसामर्थ्यात् अस्ति प्रसङ्गः इति विशेषाशङ्कानिराकरणार्थमिदं अधिकरणं इति **संगतिः** । **सूत्रे** इतरस्य गार्हपत्यस्य पौरोडाशिकविधिना प्रयुक्तत्वात् इत्यर्थः ।

**वि**—' श्रप्यः पशुपुरोडाशः शामित्रेऽग्नावथोदिते । शालामुखीयनाम्ना, ऽऽद्यः पशुतन्त्रगतत्वतः ॥, श्रपणं विहितं गार्हपत्ये सोऽत्र प्रयुज्यते । प्राग्वंशपूर्वभागे च होमवैगुण्यहानये ॥ '

**भाट्ट**— दैक्षे ' शामित्रे श्रपयति ' इति विहितः पशुपाके शामित्रोऽग्निः पूर्ववदेव ( पशु-) पुरोडाशपाके न प्रसज्यते, किंतु आतिदेशिकगार्हपत्यकार्ये ' शालामुखीय एवात ऊर्ध्वं गार्हपत्यो भवति ' इति वचनेन विहितः शालामुखीय एव । न चास्य सामान्यवचनत्वात् अङ्गप्रधानसाधारणश्रपणानुवादेन विहितशामित्रेण शालामुखीयबाधोपपत्तिः, शामित्रशब्दस्य शमनसंबन्ध्यग्निवाचित्वात् श्रपणस्य शमनसंबन्धावगतेः, तस्य च पशावेव सामानाधिकरण्येन सत्त्वात् पशुश्रपणोद्देशेनैव शामित्रविधिप्रतीतेः ।

**न्यायबिन्दुः**—पशौ शामित्रोऽग्निः पशुश्रपणार्थः । अतः पुरोडाशोऽपि तत्रैव श्रपयितव्यः पशुतन्त्रोपजीवित्वात् , **इति शङ्कायां**, पशुश्रपणेन पुरोडाशस्योपकारालाभात् पृथक् श्रपणे कार्ये, गार्हपत्ये,एव तत् कार्यं, अन्यथा वैगुण्यात् इति सिद्धान्तः ।

**मण्डन**— ' शामित्रवह्नौ पचिरौषधस्य नो । '

**शंकर**— ' शामित्रो न पुरोडाशे । '

**अग्नीषोमीयपशुपुरोडाशस्विष्टकृति त्यागे निगमेषु च स्विष्टकृच्छब्दलोपः ॥**

**सगुणस्य गुणलोपे निगमेषु यावदुक्तं स्यात् । १०।४।१८।३६ ॥**

**भाष्यं**— अस्ति सोमे पशुरग्नीषोमीयः । तत्र श्रूयते ' अग्नीषोमीयस्य वपया प्रचर्य अग्नीषोमीयं पशुपुरोडाशमनु निर्वपति ' इति । तत्र स्विष्टकृति गुणलोपः श्रूयते ' अग्निं यजति ' इति । तदत्र संशयः, किं यागे एव स्विष्टकृतः गुणलोपः अवशिष्टेषु निगमेषु यथाप्रकृतिभावः, उत सर्वत्रैव गुणलोप इति । किं प्राप्तं ? स्विष्टकृतोऽग्नेः सगुणस्य गुणलोपे श्रूयमाणे ब्रूमः । यत्रैवोच्यते गुणलोपः, तत्रैव स्यात् । यागे चोच्यते अग्निं यजतीति । यागे गुणलोपे उच्यमाने यदि सर्वनिगमेषु गुणलोपोऽध्यवसीयेत, अश्रुतं कल्प्येत । यावांश्च श्रुतस्योत्सर्गे दोषः, तावान् अश्रुतकल्पनायाम् । तस्मात् यागे एव लोपः स्यात् , न सर्वेषु निगमेष्विति ।

**सर्वस्य वैककर्म्यात्** । ३७ ॥

**भाष्यं**— सर्वस्य वा निगमस्थस्यापि स्विष्टकृतोऽग्निशब्दस्य गुणो लुप्येत । कुतः ? ऐककर्म्यात् । नैष स्विष्टकृद्यागे एव गुणो लुप्येत । किं तर्हि ? यागप्रयोगे । कथं ? ' अग्निं यजति ' इति प्रयोगवचनः एष शब्दः । सर्वस्मिन् स्विष्टकृद्यागप्रयोगे लुप्येत । अन्येऽपि हि स्विष्टकृन्निगदाः स्विष्टकृद्यागे एव । तस्मात् सर्वत्र लोपः इति ।

**शा**— अग्नीषोमीये पशौ पशुपुरोडाशः । तत्र चोदकप्राप्तस्य स्विष्टकृतो गुणलोपः श्रुतः ' अग्निं यजति ' इति । किमयं प्रधानमात्रे गुणलोपः उत सर्वेषु निगमेष्विति । प्रधानमात्रे यजतीति लोपश्रवणात् अवशिष्टेषु निगमेषु प्रकृतिवत् स्विष्टकृद्गुणयुक्तमभिधानं, ( **इति प्राप्ते**, उच्यते ) प्रयोगे एव निर्गुणविधिः इति सर्वत्र गुणलोपः। १०।४।१९.

**सोम**— पूर्वत्र स्विष्टकृच्छब्दकत्वेऽपि इह अस्विष्टकृच्छब्दकं निगमेष्वभिधानं इत्युत्थितेः **संगतिः** । **न च** ' तथोत्तरस्यां ततौ० ' ( १०।४।१३।२५ ) इत्यत्र वैकृतसूर्यादिशब्दस्य प्रयोगान्वयमुखेन सर्वनिगमेषु वक्तव्यस्योक्तत्वात् इहापि प्रयोगार्थत्वस्य तत एव सिद्धत्वात् कथं प्रधानमात्रार्थत्वाशङ्का इति **वाच्यम्** । भावनान्वयतो हि प्रयोगान्वयस्तत्रोक्तः, इह च भावनान्वयस्वीकारे भावनोद्देशेनाग्निविधेः धातोः अत्यन्तपारार्थ्यप्रसङ्गात् धात्वर्थानुवादेनैव अग्निविधिर्वक्तव्यः इति पूर्वपक्षोत्थानम् । धात्वर्थरूपान्वये सति आनर्थक्यात् पारार्थ्यमपि अङ्गीकृत्य भावनामुद्दिश्यैव विधानं स्वीकर्तव्यं इत्याशयेन सिद्धान्तः । **सूत्रार्थस्तु**-प्रकृतौ सगुणस्य विकृतौ गुणलोपे निगमेषु मध्ये यावदुक्तं यत्रैव प्रधाने

गुणलोपः तत्रैव स्यात्, न तु सर्वेषु इति ( पूर्वपक्षः ) ।

**वि**—' स्विष्टकृत्त्वगुणो लोप्यो याग एवाखिलेषु वा ।, यज्यन्वयाद्याग एव, प्रयोगान्वयतोऽन्तिमः ॥ ' यजतिशब्दस्य प्रयोगवचनत्वात् अखिलेषु निगमप्रयोगेषु असौ लोप्यः ।

**भाट्ट**—दैक्षे पशुपुरोडाशावान्तरप्रकरणे ' अग्निं यजति ' इति श्रुतम् । तत्र भेदकप्रमाणाभावे यागानुवादेन देवतामात्रविधौ आवश्यके, न तावत् प्राकृततदङ्गयागमात्रोद्देशेन विधानं, आग्नेयाज्यभागे तस्याः प्राप्तत्वात् सौम्ये तस्याः विधौ अपूर्वविधित्वापत्तेः । तद् वरं गुणमात्रपरिसंख्याफलकप्राप्स्यमानाग्निविधिरेव स्विष्टकृद्यागे लाघवादवसीयते । सोऽपि च देवतायाः द्रव्यवत् उत्पत्त्यन्वयित्वात् **यद्यपि** यागे एव, न तु निगमेष्वपि, तेषु तस्य संस्कार्यतया गुणत्वेन विध्ययोगात्, **तथापि** यागे एव विहितायास्तस्याः प्राकृतकार्यापन्नतया विकृतावपि स्मर्तव्यत्वात् निर्गुणस्यैवाग्नेरभिधानम् । **यद्यपि** च प्रकृतौ आवाहनादिनिगमेषु निर्गुणस्यैवाग्नेरभिधानं **तथापि** आध्वर्यवेषु हौत्रेष्वपि च याज्याया आदौ सगुणस्यैवाभिधानात्, इह तु तत्रापि निर्गुणस्यैवाभिधानम् । सिद्ध एव चायमर्थः शिष्यहितार्थं उक्त इति वेदितव्यम् । १०।४।१९.

**न्यायबिन्दुः**—पशुपुरोडाशे स्विष्टकृद्गुणलोपः श्रुतः ' अग्निं यजति ' इति । तत्र यागमात्रे तल्लोपः, न तु निगमेषु, **इति प्राप्ते,** प्रयोगे एव निर्गुणविधेः सर्वत्र गुणलोपः इति सिद्धान्तः ।

**मण्डन**—' गुणलोपस्तु सार्वत्रः । '

**शंकर**—' तल्लोपस्तु प्रयोगे च । '

**अग्नीषोमीयपशुप्राग्भागवर्तिपदार्थधर्मः उपांशुत्वं तत्तत्पदार्थजन्यावान्तरापूर्वप्रयुक्तम् ॥**

**देशसंबद्धमुपांशुत्वं तेषां स्याच्छ्रुतिनिर्देशात् तस्य च तत्र भावात् । ९।१।६।२० ॥**

**भाष्यं**— ज्योतिष्टोमे समाम्नायते ' त्सरा वा एषा यज्ञस्य, तस्मात् यत्किंचित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इति । तदत्र एषोऽर्थः सांशयिकः, किं प्रागग्नीषोमीयात् यानि कर्माणि तत्प्रयुक्तमुपांशुत्वं, उत परमापूर्वप्रयुक्तमिति । किं प्राप्तं ? प्रागग्नीषोमीयात् यानि अङ्गापूर्वाणि आरादुपकारकाणि, यच्च प्रधानद्रव्यसंस्कारकं, तत्प्रयुक्तोऽयं धर्मः, योऽयं देशसंबद्धः । कुत एतत् ? श्रुतिनिर्देशात् । मर्यादया देशलक्षिता ये पदार्थाः, ते श्रुत्या एतेन धर्मेण संबद्धाः । ये एतस्मिन् देशे पदार्थाः, तैरुपांशु चरन्तीति । **ननु** वाक्येनैष धर्मो विनियुक्तः, न श्रुत्या । न ब्रूमो न वाक्येनेति । किं तर्हि ? श्रुतेन अस्यैकवाक्यता, न प्रकृतेन लक्षितेन कल्पितेन वेति । **उच्यते** । गृह्णीम एतदङ्गापूर्वाणामयं धर्मः इति, न तु प्रधानद्रव्यस्य संस्कारकं यदपूर्वं, तस्यापीति । कतमं तत् ? यत् प्रधानद्रव्यसंस्कारकं पूर्वस्मिन् देशेऽस्तीति । उच्यते । तस्य च तत्र भावात् । तस्य एवंजातीयकस्य पूर्वस्मिन् देशे भावात् । अस्ति हि सोमप्रवहणीयं नाम सूक्तं (भद्रादभि० इति ऐब्रा. ३।२।१-२५) । तस्मात् देशधर्मो भविष्यतीति । यथा ' प्रणीताः प्रणेष्यन् वाचं यच्छति, तां सहविष्कृता विसृजति ' इति । अस्मिन् देशे ये पदार्थाः तेषां धर्मो वाग्यमः, न प्रधानापूर्वस्य । एवमिदमपि उपांशुत्वमिति ।

**टुप्**—आधस्त्ये अधिकरणे समुदायप्रयुक्तमभिमर्शनं इत्युक्तम् । समुदायप्रसङ्गेन अन्यो यः समुदाय इव लक्ष्यते ग्रहयज्यभ्याससमुदायः इति, तत्र विचार्यते, किं तत्प्रयुक्तं ( ज्योतिष्टोमापूर्वप्रयुक्तं ) उपांशुत्वं, उत तत्पदार्थप्रयुक्तं ( अग्नीषोमीयप्राग्भाविपदार्थजन्योत्पत्त्यपूर्वप्रयुक्तं ) इति । अथवा संस्कारोहो विचार्यते प्रकृतौ विकृतौ निर्णयाय ( इति संगतिः ) । अग्नीषोमीयात् प्राग्भाविनां पदार्थानामुपांशुत्वं श्रुत्या भवति । **ननु वाक्येनैष धर्मो विनियुक्तः** । न च तृतीयाद्या विभक्तिरस्ति । **उच्यते** । सत्यं, किंतु प्राक्शब्दोऽवश्यं निराकाङ्क्षीकर्तव्यः । तत्र यदि **सोमयागेन** संबन्धः क्रियते, प्रकरणाम्नानानुमितेन संबन्धः स्यात् । यदि अग्नीषोमीयेण संबध्यते, श्रुतेन संबध्यमानः अग्नीषोमीयात् ये प्राग्भाविनः पदार्थाः, तैः सर्वैरगृह्यमाणविशेषत्वात् संबध्यते । ' तस्य च तत्र भावात् ' इति सूत्रावयवेन अपूर्ववन्तो ये पदार्थाः इति ब्रवीति । तेषु यो धर्मो विधीयते नासौ अनर्थकः । यथा दीक्षणीयावाङ्-

नियमः पदार्थप्रयुक्तः इत्युक्तं ( ९।१।२ वर्णकं २ ) एवमिहापि। **श्रुतिनिर्देशात्** इति । श्रुतेन वाक्येन संबन्धमभिप्रेत्य श्रुतिमाह । अथवा पदार्थापूर्वेण संबध्यमानो लक्षणया, परमापूर्वेण तु लक्षितलक्षणया संबध्यते । प्रथमं पदार्थैः ( स्वापूर्वाणि लक्षणीयानि ) तैः ( लक्षितैः स्वापूर्वैः ) अपूर्वाणि, तैः परमापूर्वमिति । एवं च लक्षितलक्षणां अभिप्रेत्य लक्षणां श्रुतिमाह । अथवा अग्नीषोमीयः पदार्थः, स च उच्चरितः प्राग्भाविनः पदार्थान् बुद्धौ उपस्थापयति,' न यज्ञभागम् । तमभिप्रेत्य श्रुतिमाह ।

**यज्ञस्य वा तत्संयोगात् । २१ ॥**

**भाष्यं**—वाशब्दात् पक्षो विपरिवर्तते । नैतदस्ति । तद्देशानां धर्म इति । कस्य तर्हि ? परमापूर्वस्येति । कुतः ? तत्संयोगात् । तत्संयोगो भवति यज्ञस्य संयोगः । ' त्सरा वा एषा यज्ञस्य यत् प्राचीनमग्नीषोमीयात् ' इति । यज्ञस्य यत् प्राचीनं इति संबन्धः, न ' त्सरा वा यज्ञस्य ' इति । कुतः ? प्राचीनं विशिंषन् ' यज्ञस्य ' इति शब्दो विधिपदशेषो भवति । ततः प्रवृत्तिविशेषकरो भविष्यति, इतरथा अर्थवादशेषः सन् अनर्थकः स्यात्, ' वादमात्रं ह्यनर्थकं ( १।२।२।१९ ) ' इति । 'प्राचीनं ' इति च यज्ञभागं श्रुत्या वदति, लक्षयति च तद्गतान् पदार्थान् । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या स्यात् । तस्मात् प्राग्देशस्यैष धर्मः । तेनास्य श्रुत्या संयोगः, न प्राग्देशगतानां पदार्थानां, तैरस्य लक्षणया संबन्धः स्यात् । अथापि अर्थवादपदशेषः यज्ञस्य इति स्यात्, तथापि प्राग्देशः श्रुत्या धर्मेण संबध्यते । प्राग्देशगताः पदार्थाः लक्षणया, इति यज्ञप्रयुक्ततैव न्याय्या । अपि च प्रत्यक्ष उपकारः परमापूर्वस्य लक्ष्यते। यत् प्राचीनमग्नीषोमीयात् तदुपांशुत्वेन शिथिलप्रयत्नः प्रचरन् अखिन्नः सुखं बहुवृत्तान्तं सौत्यमहः निर्वर्त्स्यति। तस्मात् परमापूर्वप्रयुक्तं उपांशुत्वमिति ।

**टुप्**--न यज्ञशब्दः त्सराशब्देन संबध्यते अप्रवृत्तिविशेषकरत्वात् । यस्मात् प्राचीनशब्देन संबध्यमानः प्रवृत्तिविशेषकरो भवति । तेन यज्ञस्य यः प्राग्भागः, तस्यायं धर्मः उपांशुत्वं विधीयते । न च प्राचीनशब्दः पदार्थान् शक्नोति वदितुम्। श्रुत्या भागवचन एष प्रतीयते । अक्षरोच्चारणमात्रेणैव प्राग्भागमाह । इतरत्र लक्षणया, पदार्थान् यदि लक्षयेत् ।

अत्र ग्रन्थः ' अथापि अर्थवादपदशेषोऽयं यज्ञस्य इति स्यात् तथापि प्राग्देशमात्रं श्रुत्या धर्मेण संबध्यते ' इति ( भाष्यम् ) । कोऽर्थः ? प्राचीनशब्दमुद्दिश्य उपांशुत्वं विधीयते । तत्र यदि अग्नीषोमीयशब्देन विशेष्येत प्राचीनशब्दः, ततो वाक्यं भिद्येत, तस्मान्न विशेष्यते । कस्य तर्हि प्राग्भागः ? विपरिवृत्तेज्योतिष्टोमस्येति ।

**अनुवादश्च तदर्थवत् । २२ ॥**

**भाष्यं**— अनुवादश्च तद्देशपदार्थस्यैव भवति । ' त्सरा वा एषा यज्ञस्य यत् प्राचीनमग्नीषोमीयात् ' इति । त्सरा नाम छद्मगतिः । यथा शकुनिग्राहकस्य शकुनिं जिघृक्षतः छद्मना गतिर्भवति । शनैः पदन्यासः, दृष्टिप्रणिधानं, अशब्दकरणं च । कथमनवबुद्धः शकुनिर्गृह्येतेति । एवमिहापि अनवबुद्धमिव ग्रहीतुं यज्ञं प्रच्छन्नगतिः उपांशुत्वं नाम । यथा शकुनिग्राहकस्य यस्मिन् देशे शनैः पदन्यासः, न स तद्देशार्थः, अपि तु तद्देशाभिगतस्य शकुनेरर्थेन क्रियते । एवमिहापि उपांशुत्वं न तद्देशानां पदार्थानां अर्थेन क्रियते, तद्देशाभिगतस्य यज्ञस्यार्थेन गम्यते । यस्तु त्सराशब्दं यज्ञविशेष्यं मन्यते तस्य सुतरामर्थवादः परमापूर्वप्रयुक्ततां दर्शयति । यज्ञस्यैषा त्सरेति । यथा शकुनेः त्सरा एवं यज्ञस्येति ।

**प्रणीतादि तथेति चेत् । २३ ॥**

**भाष्यं**— इति यदुक्तं ( २० सूत्रे ) तत् परिहर्तव्यम् ।

**टुप्**—प्रणीतादि तथेति चेत् इति प्रत्यनुभाषणसूत्रम् ।

**न यज्ञस्याश्रुतित्वात् । २४ ।**

**भाष्यं**— नैतदेवम्। तद्देशपदार्थप्रयुक्ततैव स्यात्, न परमापूर्वप्रयुक्ततेति । नात्र पदार्थानां यज्ञभागविशेष्यता वाग्यमसंबन्धे तावत् गम्यते, यज्ञस्याश्रुतित्वात् । नात्र संबन्धी यज्ञशब्दः श्रूयते ।

**टुप्**— ' न यज्ञस्याश्रुतित्वात् ' इति परिहारसूत्रम् ।

(इत उत्तरं भाष्यं अन्तरागर्भिणीरूपाधिकरणगतं भवतीति अधिकरणान्तरे एव तत् संगृहीतमिति ध्येयम् । )

**तद्देशानां वा संघातस्याचोदितत्वात् । २५ ॥**

**भाष्यं**—स्थितादुत्तरम् । वाशब्दात् पक्षो विपरिवर्तते । नैतदस्ति, परमापूर्वप्रयुक्तमुपांशुत्वमिति । कथं तर्हि, प्राचीनमग्नीषोमीयात् ये पदार्थास्तत्प्रयुक्तम् । कुतः ? संघातस्याचोदितत्वात् । संघात इति ग्रहयज्याभ्याससंघातं ब्रूमः । न तस्यायं भागः उपांशुत्वेन संबद्ध इति चोदना । नैवं संबन्धः क्रियते यज्ञस्य यत् प्राचीनमिति । कथं तर्हि ? त्सरा वा एषा यज्ञस्येति । कुतः ? तस्मादितिपदेन व्यवधानात् । अथापि प्राचीनेन संबन्धः, एवमपि न परमापूर्वप्रयुक्तम् । नहि यदित्यनेन देशोऽभिसंबध्यते । किं तर्हि ? देशगताः पदार्थाः । यदि देशोऽभिसंबध्येत, यत्प्राचीनमग्नीषोमीयात् इति भवेत्, न यत्किंचिदिति । वीप्सायां हि एतद्भवति । वीप्सा च बहुषु भवति, नैकस्मिन् । एकश्च देशः, बहवस्तत्र पदार्थाः । तस्मात् पदार्थानामुपांशुत्वेन संबन्धः, न तद्देशस्येति । कथं पुनर्वीप्सा अवगम्यते इति ? यदित्यनेन लक्ष्यते । किमिति अज्ञानवचनं ? विशेषाश्चाज्ञाताः ज्ञातुमिष्टाः प्रतीयन्ते । बहुषु च सामान्यं विशेषाश्च भवन्ति । तस्मात् तद्देशाः पदार्थाः वीप्सया लक्ष्यन्ते । ते च उपांशुत्वेन संबध्यन्ते इति । **ननु** दीक्षणीयादिषु अन्यो धर्म उक्तः 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायामनुब्रूयात्, मन्द्रं प्रायणीयायां, मन्द्रतरमातिथ्यायां, उपांशूपसत्सु' इति । कथं तत्र उपांशुत्वं कर्तुं शक्यमिति ? **उच्यते** । स धर्मः प्रधानेषु भविष्यति, दीक्षणीयादिषु प्रधानशब्दोपबन्धत्वात् । उपांशुत्वं प्रधानवर्जितेषु अङ्गेषु निवेक्ष्यते सामान्योपदेशात् । **प्रयोजनं** कुण्डपायिनामयने 'मासमग्निहोत्रं जुह्वति' इत्येवमादीनि प्रागग्नीषोमीयात्, एषु उपांशुत्वसंबन्धो भवति, यथा पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, न संबन्धः ।

**टुप्**—अत्र ( भाष्य- ) ग्रन्थः '**नैवमभिसंबन्धः क्रियते यज्ञस्य यत् प्राचीनमिति । कथं तर्हि ? त्सरा वा एषा यज्ञस्य' इति । कोऽर्थः ?** पदार्थप्रयुक्तोऽपि वाङ्नियमवत् अर्थवान् भवति ( उपांशुत्वाख्यो धर्मः ), परमापूर्वप्रयुक्तोऽपि । तत्र यदि पदार्थापूर्वप्रयुक्तः, अनर्थको भवति, तत्र व्यवहितकल्पना अध्याहारो वा अश्रुतोऽपि कल्प्येत । इह तु यथाश्रुते एव वाक्ये घटमाने किमर्थं व्यवहितकल्पना अध्याहारो वा कल्प्यते । अपि च प्राचीनशब्दे यज्ञशब्देन विशेष्यमाणेऽपि यदि अग्नीषोमीयपदं अविवक्षितं, तथा सति साकाङ्क्षत्वात् वाक्यमेव न घटते । कतरस्मात् पदार्थात् प्रागिति । तस्मादग्नीषोमीयशब्दः अवश्यं विवक्षणीयः । तस्मात् द्वयोरपि शब्दयोः अग्नीषोमीयशब्दस्तन्त्रम् । तेन सुदूरमपि गत्वा प्राचीनशब्दस्य अग्नीषोमीयसंबन्धः । तेन संबन्धे कृते पदार्थधर्मो भवति इत्युक्तम् । 'यदि हि देशोऽभिसंबध्येत यत्प्राचीनमग्नीषोमीयादिति भवेत्, न यत्किंचिदिति' ( भाष्यं ) । कोऽर्थः ? यस्यायं धर्मः परमापूर्वप्रयुक्तः तस्य प्राग्देशो नाम एकं वस्तु । भवता किंचिच्छब्दः अनुवादो वर्णनीयः, उपलक्षणं वा । तत्र अनुवादस्तावन्न घटते । वीप्सार्थे किंचिदिति वर्तते । न चैकस्मिन् वस्तुनि वीप्सा संभवति । उत्सर्गोऽपि नैव, गम्यमानत्वादस्मिन् अर्थस्य । वाक्ये च शक्यते अयमर्थो विवक्षितुम् । तस्मात् वीप्सावाची सन् विवक्षितव्यः । पदार्थधर्मे अभ्युपगम्यमाने बहुत्वात् पदार्थानां किंचिच्छब्दस्यार्थोऽनुगृहीतो भवति । ननु अयं न वीप्सावाची । उच्यते । किंशब्दोऽयं अज्ञाते ज्ञातुमिष्टे वर्तते । देशश्च ज्ञातः, प्राचीनशब्दश्रवणात् । तत्र किंशब्दोऽनुपपन्नः । विशेषास्तु अज्ञाताः, तेषूपपद्यते । तस्मात् वीप्साफलः अस्मिन् वाक्ये वर्तते । दीक्षणीयायाः याजुर्वेदिकत्वात् साङ्गायामुपांशुत्वं प्राप्नोति । तच्चोदकेन बाध्यते । प्राक् स्विष्टकृतः प्रथमस्थानेन, मध्यमेन इडायाः, शेषं तृतीयस्थानेन, इत्येतत् स्वरवैचित्र्यं चोदकप्राप्तम् । तत् अग्नीषोमीयात् इत्युपांशुत्वेन बाध्यते । 'यावत्या वाचा कामयेत' इत्यनेन दीक्षणीयाशब्दवाच्ये वाङ्नियमो विधीयते । स दीक्षणीयाशब्दः प्रधानमात्रे वर्तते, नाङ्गेषु । तस्मादुपांशुत्वमङ्गेषु, प्रधानेषु 'यावत्या वाचा' इति । **ननु** यत्किंचिच्छब्देन विशेषा उच्यन्ते, दीक्षणीयादिभिरपि विशेषा एव, तत्र द्वयो-

विशेषवाचिनोः नास्ति बाध्यबाधकभावः। तस्मात् दीक्षणीयादिषु प्रधानेषु विकल्पः प्राप्नोति । **उच्यते** । दीक्षणीयादिभिः वर्णोपात्तमेव प्रधानम् । यत्किंचिच्छब्दे न कश्चिद्वर्णोपात्तः । बाधे च , वर्णोपात्तेन अवर्णोपात्तो बाध्यते । ' उच्चैः प्रवर्ग्येण ' इति करणविभक्तिनिर्देशात् साङ्गस्य उच्चैष्ट्वम् । ' उपांशूपसत्सु ' इति औचित्येन नित्यानुवादोऽयम् ।

यदेतत् प्रयोजनं वर्णितं, देशप्रयुक्तत्वे अस्योपांशुत्वस्य मासाग्निहोत्रादिषु प्राप्तिरिति । तन्न । तेषां नाम्ना अन्यः स्वरः प्राप्नोति, चोदकेनोपांशुत्वम् । चोदकाच्च नामधेयं बलवत् । तस्मादन्यत् प्रयोजनं अनामयुक्तम् । ' पुरस्तादुपसदां सौम्येन प्रचरन्ति, अन्तरा त्वाष्ट्रेण, उपरिष्टाद् वैष्णवेन ' इति ।

**शा**— किमिदमुपांशुत्वं सोमयागस्य यः प्राग्भागः तद्धर्मः सन् परमापूर्वप्रयुक्तं, ततश्च विकृतिषु तद्भागारम्भके अप्राकृतेऽपि पदार्थे ऊहितव्यं, उत अग्नीषोमीयात् पशोः ये प्राचीनाः पदार्थाः दीक्षणीयादयः, तेषां धर्मः तदवान्तरापूर्वप्रयुक्तं, ततश्च अप्राकृते पदार्थे यूपावटस्तरणबर्हिर्धर्मवत् नोहितव्यं इति संशयः । अग्नीषोमीयात् प्राचीनानामङ्गानां उपांशुत्वं इति सिद्धान्तः ।

**सोम**— संनिपातिनां अपूर्वप्रयुक्तत्वे व्यवस्थापिते तत्प्रसङ्गात् संनिपातिविशेषे अवान्तरापूर्वलक्षणापूर्वविशेषप्रयुक्तत्वं व्यवस्थाप्यते इति **संगतिः** । **सूत्रार्थस्तु**–प्राग्भागरूपदेशसंबद्धमुपांशुत्वं तद्भागवर्तिपदार्थानां धर्मः स्यात् श्रुतिनिर्देशात् । अयमर्थः, प्राचीनशब्दः साकाङ्क्षत्वात् अवश्यं निराकाङ्क्षीकर्तव्यः । तत्र यज्ञशब्देन श्रुतेन निराकाङ्क्षीकरणं न संभवति, त्वराशब्दसंबन्धित्वात्तस्य । ततश्च अश्रुतः अन्यो यज्ञशब्दः कल्पनीयः । तस्मात् श्रुतेन अग्नीषोमीयशब्देन निराकाङ्क्षीक्रियते । ततश्च अग्नीषोमीयस्य अनवयवित्वेन प्राचीनशब्दस्य अवयवलक्षणभागपरत्वासंभवात् भागवर्तिपदार्थपरत्वावश्यंभावात् तद्धर्म उपांशुत्वं तदपूर्वप्रयुक्तं तस्यापूर्वस्य तेषु भागसंबन्धिपदार्थेषु भावात् इति ।

**वि**— ' प्राचीनोपांशुताऽपूर्वे परमेऽवान्तरेऽपि वा । , यज्ञयोगादादिमो,ऽन्त्यो देशबन्धश्रुतत्वतः ॥ '

**भाट्ट**— सोमे ' त्वरा वा एषा यज्ञस्य तस्मात् यत्किंचित् प्राचीनमग्नीषोमीयात् तेनोपांशु चरन्ति ' इति श्रुतम् । तत्र उपांशुत्वं किं ज्योतिष्टोमसंबन्ध्यग्नीषोमीयप्राग्भागधर्मः सन् तदीयपरमापूर्वप्रयुक्तं, उत अग्नीषोमीयप्राग्भागवर्तितत्तत्पदार्थधर्मः सन् तत्तज्जन्यावान्तरापूर्वप्रयुक्तं इति चिन्तायां, विधेये उपांशुत्वे उद्देश्यसमर्पकस्तावत् तच्छब्दः इत्यविवादम् । स च पूर्वप्रक्रान्ताग्नीषोमीयप्राग्भागमेव परामृशति, न तु पदार्थान्, प्राचीनशब्दस्य आकृत्यधिकरणन्यायेन ( १।३।९ ) प्राग्भागमात्रवाचित्वात् , एकवचनप्रयोगेण भागस्यैव तदुक्तस्य तच्छब्देन परामर्शाच्च । अत एव एकेनैव तच्छब्देन उद्देश्यसमर्पणात् पूर्वपक्षे सिद्धान्ते वा अग्नीषोमीयादेर्विशेषणत्वेऽपि न विशिष्टोद्देशः । तत्र च भागं प्रति अग्नीषोमीयः अवधित्वेन विशेषणं, यज्ञश्च प्रयोगद्वारा संबन्धित्वेन । अत एव यज्ञपदं न त्वराशब्दविशेषणं, अप्रवृत्तिविशेषकरत्वापत्तेः । अस्तु वा तस्मात्पदेन व्यवधानात् यज्ञस्य छन्नगतिः इत्येवमर्थाङ्गीकारेण त्वराशब्दस्यैव विशेषणं यज्ञशब्दः । तथापि प्रकृतत्वात् भागो यज्ञसंबन्धी एव । आवश्यकं चेदं सिद्धान्तिनोऽपि, अग्नीषोमीयावधिकयज्ञप्राग्भागवर्तिपदार्थत्वस्यैव तन्मते उद्देश्यताऽवच्छेदकत्वात् । तत्र च पदार्थानामनुक्तेः लाघवाच्च अग्नीषोमीयावधिकयज्ञप्राग्भागत्वमेव उद्देश्यताऽवच्छेदकं, तदवच्छिन्नोद्देशेन उपांशुत्वविधिः । भागे च उपांशुत्वस्य साक्षात् असंबन्धात्, तदारम्भकपदार्थाङ्गमन्त्राणां द्वारत्वं योग्यताबललभ्यम् । उद्देश्यस्य च भागस्य स्वरूपे आनर्थक्ये प्रसक्ते, भागजन्यापूर्वसद्भावे प्रमाणाभावात् दीक्षणीयावाङ्नियमन्यायासंभवेन (९।१।२ वर्णकं २) भागसंबन्धियज्ञजन्यपरमापूर्वसाधनत्वमेव भागनिष्ठं लक्ष्यते इति परमापूर्वप्रयुक्तमुपांशुत्वम् । एवं च उपांशुत्वस्य दृष्टार्थत्वं संपद्यते । अग्नीषोमीयावधि उपांशुकरणे श्रमाभावेन सौत्येऽहनि बहुकर्तव्यपदार्थानां अविक्षेपेण करणात् । एवं च तत्तत्पदार्थधर्मत्वाभावात् तद्भागारम्भके विकृतौ अपूर्वेऽपि पदार्थे दर्वीहोमादौ उपांशुत्वस्योहः । इतरथा तत्तत्पदार्थावान्तरापूर्वप्रयुक्तत्वे अप्रा-

कृतकार्यापन्ने वेदान्तरीये स्वरातिदेशरहिते च तस्मिन् उपांशुत्वस्य कथमपि अप्राप्तेः ।

यत्तु **भाष्यकारेण** 'मासाग्निहोत्रे तद्भागारम्भके उपांशुत्वस्य ऊहः इति प्रयोजनमुक्तं, तत् नामातिदेशप्रापितस्य विरुद्धस्याविरुद्धस्य वा स्वरस्य सत्त्वे चोदनालिङ्गातिदेशप्रापितोपांशुत्वप्राप्त्यनुपपत्तेः उपेक्षितम्। यदपि **वार्तिकादौ** 'पुरस्तादुपसदां सौम्येन प्रचरन्ति' इत्यादौ उपांशुत्वोहः इत्युक्तं, तदपि सौम्यमात्रपुरस्कारेण कल्पितस्यातिदेशस्य सामान्यविहितोपांशुत्वातिदेशापेक्षया प्राबल्यादुपेक्षितम् । न च उपांशुत्वातिदेशस्य प्रधानसंबन्धितया प्राबल्यं, आधानसामादाविव प्रधानसंबन्धित्वस्य अङ्गेषु स्वरप्राप्तौ दौर्बल्याप्रयोजकत्वात् । इतरथा मासाग्निहोत्रेऽपि तदापत्त्या भाष्यकारमतदूषणानुपपत्तेः। न चैवं प्रकृतावेव दीक्षणीयाद्यङ्गेषु तदनापत्तिः, औपदेशिकत्वेन तत्र उपांशुत्वस्य प्राबल्यात् । इतरथा प्रकृतावेव नामातिदेशविषये उपांशुत्वस्य प्राप्त्यनापत्तेः । अतः पूर्वोक्तविषये एव उपांशुत्वप्राप्तिः प्रयोजनम् । **इति प्राप्ते,** यत्किंचिच्छब्दस्य सामान्यधर्मपुरस्कारेण उक्तेषु तत्तद्विशेषधर्मपुरस्कारेण अनुक्तेषु बुद्धपदार्थेष्वेव प्रयोगात् नपुंसकनिर्देशाच्च अग्नीषोमीयावधिकयज्ञप्राग्भागवर्तिकर्मत्वेनैव तत्तत्पदार्थानां उद्देश्यता । अन्यथा भागस्य पुंलिङ्गत्वात् नपुंसकनिर्देशः, 'यत्प्राचीनं' इत्येतावतैव सिद्धेः यत्किंचिच्छब्दश्च व्यर्थः स्यात् । एकवचनं च सामान्याभिप्रायेण बहुत्वलक्षणार्थम् । अतश्च तत्तत्पदार्थानामेव उद्देश्यत्वात् तत्स्वरूपे आनर्थक्यप्रसक्तौ तत्तदवान्तरापूर्वसाधनत्वमेव लाघवाल्लक्ष्यते । इतरथा पदार्थसमुदायरूपभागस्य साक्षात् यज्ञापूर्वसाधनत्वे प्रमाणाभावात् पदार्थद्वारा तदाश्रयणे लक्ष्यताऽवच्छेदके गौरवम्। पुनश्च उपांशुत्वस्य साक्षात् भागे अनन्वयात् पदार्थमन्त्राणां द्वारत्वकल्पनं इत्यतिगौरवम् । अतस्तावत्पदार्थधर्म एव उपांशुत्वम् । अतश्च विकृतौ तद्भागारम्भके अपूर्वे न तस्योहः । इदं चोपांशुत्वं विशेषविहितनिरवकाशस्वरान्तरावरुद्धप्रायणीयादिपदार्थातिरिक्तपदार्थविषयं इति स्वरचर्चायां **कौस्तुभे** व्यक्तम् ।

**न्यायबिन्दुः**— यज्ञशब्दस्य त्सराशब्दविशेषणत्वं, न तु प्राचीनमित्यस्य, व्यवधानात् । 'यत् किं चित्' इत्यस्य अनेकार्थत्वाच्च अग्नीषोमीयप्राग्वर्तिनामङ्गानामेव उपांशुत्वं धर्मः । तेन विकृतौ अप्राकृते पदार्थे नोहितव्यं इति सिद्धान्तः ।

**मण्डन**— 'उपांशुता प्राच्ययजिप्रयुक्ता ।'

**शंकर**— 'उपांशुत्वं पदार्थगम् ।'

## अग्नीषोमीयपश्वादौ प्रयाजादिषु एकादशत्वादिगुणविधिः ॥

**विकृतौ शब्दवत्त्वात् प्रधानस्य गुणानामधिकोत्पत्तिः संनिधानात् । १०।३।१।१ ॥**

**भाष्यं**-- अस्ति सोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदं समाम्नायते 'एकादश प्रयाजान् यजति, एकादशानुयाजान् यजति' इति । तथा चातुर्मास्यानि 'चातुर्मास्यैः स्वर्गकामो यजेत' इति । तत्राप्याम्नायते 'नव प्रयाजान् यजति, नवानुयाजान्' इति । तथा 'वायव्यं श्वेतमालभेत भूतिकामः' इति । तत्राप्याम्नायते 'हिरण्यगर्भः समवर्तताग्रे इत्याघारमाघारयति' (इति) । तथा अवभृथे श्रूयते 'अप्सु तृणं प्रास्य आघारमाघारयति' इति । तदेतेषु संशयः, किं प्राकृतेतिकर्तव्यता न प्राप्यते अप्राप्तायां कर्मान्तराण्येतानि चोद्यन्ते, अथवा प्राप्यते प्राप्तायां गुणविधयः इति । किं प्राप्तं? न प्राप्यते इति । विकृतौ तस्यांतस्यां शब्दवत् प्रधानं, नाङ्गानि । तस्मात् अग्नीषोमीयादिषु गुणकर्मणामधिकानां उत्पत्तिः । यजति, आघारमाघारयति इति च कर्मान्तराणि एतानि विधीयन्ते । तथा हि श्रुतिरनुगृहीता भवति । तैरेव च तानि साङ्गानि जायन्ते । तस्मात् प्राकृती इतिकर्तव्यता न प्राप्यते। संनिहिता हि सा प्रकृतौ, न प्रकृतिं संनिहितां अतिक्रमिष्यतीति ।

**टुप्**— अवभृथस्तावदनुदाहरणं, अपूर्वत्वात् । (ज्योतिष्टोमे 'वारुणेनैककपालेनावभृथं यन्ति' इत्यनेन अवभृथसंज्ञकेष्टिं विधाय श्रूयते 'अप्सुमन्तावाज्यभागौ यजति' इति । तथा चानेन क्लृप्तोपकारकयोः प्राकृतयोरेव आज्यभागयोर्विधानेन ताभ्यामेव नैराकाङ्क्ष्यात्,

अतिदेशाकल्पनेन प्रकृतिराहित्यरूपापूर्वत्वस्य अवभृथे सिद्धान्तेऽपि इष्यमाणत्वात्, नोदाहरणं प्रकृताधिकरणस्य।) शिष्टानां च (अग्नीषोमीयादीनां प्राकृतेन) विध्यन्तेन (वाक्यशेषतया कल्पितेन) धर्माः प्राप्नुवन्ति। कथं संशयः? उच्यते। यत् प्राकृतमङ्गं विकृतौ श्रूयते, तदेव विकृतिः निराकाङ्क्षत्वात् स्वीकरोति। यथा गृहमेधीये आज्यभागश्रवणम्। श्रूयते चात्र प्राकृतमङ्गं 'नव प्रयाजाः' इति। तस्मात् तेनैव अस्य निराकाङ्क्षत्वं गृहमेधीयवत्। अधिकानामुत्पत्तिः (सूत्रे) इति, प्राकृतानां निवृत्तिः इत्यभिप्रायः पक्षयोस्तुल्यः।

**प्रकृतिवत्त्वस्य चानुपरोधः। २॥**

**भाष्यं**— एवं च नोपरोधो भविष्यति। क उपरोधः? प्रकृतिवत् इति कल्पना। स चोदकशब्दो न दूरे सतीमिमां अनेकवाक्यव्यवहितां प्रकृतिं अपेक्षिष्यते। तस्मात् कर्मान्तराणि चोद्यन्ते। प्रयाजयागान् करोति, नव करोति। आघारं करोति, हिरण्यगर्भः समवर्तताग्रे इति करोति, इति।

**चोदनाप्रभुत्वाच्च। ३॥**

**भाष्यं**— इदं परिचोदनोत्तरं सूत्रम्। **ननु** एषां कर्म चोदयितुं सामर्थ्यं नास्ति। कथमिति? नैतस्मात् वाक्यात् इदमवगम्यते यागं करोतीति। कथं तर्हि? यागे एकादशसंख्यां करोतीति। यागे गुणसत्तां भावयति इति, गुणशब्दश्रवणात्। यागसत्तायां भाव्यमानायां गुणशब्दश्रवणमनर्थकं स्यात्। तस्मात् गुणविधिसरूपा एते शब्दा इति। **अत्रोच्यते**, अस्ति एतेषां चोदनाप्रभुत्वे सामर्थ्यम्। प्रभवन्ति एते कर्म चोदयितुम्। कुतः? आख्यातशब्दा ह्येते। आख्यातशब्दाश्च कर्मणश्चोदकाः समधिगताः 'भावार्थाः कर्मशब्दाः' (२।१।१।१) इति। ते एते सगुणं कर्म चोदयिष्यन्ति, यागः कर्तव्यः एकादशसंख्या चेति। एवं सर्वत्र। तस्मात् कर्मणश्चोदका एते शब्दाः। इतिकर्तव्यता न प्राप्नोतीति।

**प्रधानं त्वङ्गसंयुक्तं तथाभूतमपूर्वं स्यात्, तस्य विध्युपलक्षणात्, सर्वो हि पूर्ववान् विधिरविशेषात् प्रवर्तितः। ४॥**

**भाष्यं**— न त्वेतदस्ति इतिकर्तव्यता न प्राप्यते, कर्मान्तराणीति। प्रधानं प्राकृतमङ्गसंयुक्तं, तथाभूतमपूर्वमपि वैकृतं स्यात्। उक्तमेतत् 'विध्यन्तो वा प्रकृतिवच्चोदनायां प्रवर्तते तथाहि लिङ्गदर्शनं' (७।४।१।१०) इति। तस्य प्राकृतस्य कर्मणो विधिः वैकृतेषु कर्मसु केषुचिदुपलक्ष्यते। तस्मात् सर्वो वैकृतो विधिः पूर्ववान् प्रकृतिपूर्वकः अविशेषात् प्रवर्तितः चोदकादवगम्यते। तस्मादिहापि प्राकृती इतिकर्तव्यता प्राप्यते। यदुच्यते प्रयाजादिभिः निराकाङ्क्षत्वात् प्राकृती इतिकर्तव्यता न प्राप्यते इति, स्यादेतदेवं यदि यागो विधीयते। यागे हि विधीयमाने 'एकादश' 'नव' 'हिरण्यगर्भः समवर्तताग्रे' इत्येतानि पदानि अनर्थकानि भवेयुः। न च शक्यते वदितुं एकादशादीनि अनूद्यन्ते इति। अपूर्वाणि हि तानि अवश्यं विधातव्यानि। तानि च वाक्येन यागे। अथ यागो विधीयते, यागे च संख्या, तथा वाक्यं भिद्येत। तस्मात् इतिकर्तव्यतायां प्राप्तायां गुणविधय एते इति।

**न चाङ्गविधिरनङ्गे स्यात्। ५॥**

**भाष्यं**— इतश्च गुणविधय इति। नहि अनङ्गे कर्मणि अङ्गस्य विशेषविधिः स्यात्। भवति च विशेषविधिः 'आश्ववालः प्रस्तरः' इति। नहि असति प्रस्तरे प्रस्तरविशेषः शिष्येत। यथा यस्य नास्ति पुत्रः, न तस्य पुत्रस्य क्रीडनकानि क्रियन्ते। एवमिहापि प्रस्तरस्य आश्ववालता न विधीयेत। तस्मात् गुणविधय इति।

**कर्मणश्चैकशब्द्यात् संनिधाने विधेराख्यासंयोगो गुणेन तद्विकारः स्याच्छब्दस्य विधिगामित्वाद् गुणस्य चोपदेश्यत्वात्। ६॥**

**भाष्यं**—अयं त्वपरो विशेषः, प्रधाककर्मणो गुणकर्मणश्च ऐकशब्द्यात्। प्रयोगवचनेन हि एकेन शब्देन अङ्गप्रधानानि उच्यन्ते। तस्मात् प्रधानवचनेन संनिहितानि अङ्गानि। तेषु संनिहितेषु गुणविधेर्नाम गृहीत्वा अभिसंबन्धो भवति। यः प्रयाजसंज्ञको यागः, तत्र गुण इति। एवं सर्वत्र यागे गुणेन तद्विकारः स्यात्। संख्यया मन्त्रेण च संख्यान्तरं मन्त्रान्तरं च विक्रियेत। प्रयाजादिविधिगामी हि शब्दः। गुणश्चोपदेष्टव्यः।

नानर्थकं पुनर्वचनम्। तस्मात् इतिकर्तव्यता प्राप्यते। प्राप्तायां गुणविधय इति।

**अकार्यत्वाच्च नाम्नः। ७॥**

**भाष्यं**— न च शक्यते वदितुं नामनामिसंबन्धोऽयं विधीयते इति। अन्या हि वचनव्यक्तिः शब्दार्थसंबन्धे विधीयमाने भवति, 'एकादश यागान् करोति, ते च प्रयाजानुयाजसंज्ञका भवन्ति' इति। वाक्यं हि अस्यां वचनव्यक्तौ भिद्येत। अथ पुनरेषां प्रसिद्धनामकानां उच्चारणं गुणविधानार्थम्। तस्मादपि इतिकर्तव्यता प्राप्यते, गुणविधयश्चैते इति।

**तुल्या च प्रभुता गुणे। ८॥**

**भाष्यं**—इदं पदेभ्यः केभ्यश्चिदुत्तरं सूत्रम्। कानि तानि पदानि? यदुक्तं प्रयाजानुयाजा असंनिहिताः, न शक्यते तेषां गुणो विधातुमिति। तत् परिहर्तव्यम्। अत्रोच्यते। तुल्या हि एषा प्रभुता गुणान् प्रति चोदकस्य, प्राकृतान् गुणान् इह प्रापयिष्यति। ते च प्राप्ता गुणविधानपरे वाक्ये इह संकीर्त्यन्ते। यद्वा उत्पाद्य प्रापयिष्यति, ते गुणवचनेन संभन्त्स्यन्ते इति। तत्र उत्पन्नानां प्राप्तिर्लघीयसी। प्राकृतान् प्राप्य कृतार्थः शब्दो नापूर्वान् उत्पादयितुं शक्नोति। इदमधुनातनं वचनमुत्पादकं इति चेत्, नैतदेवम्। गुणसंबन्धार्थमेव तत्, गुणवचनस्य श्रवणात्। तस्मादपि प्राप्तेषु गुणविधय इति। अथ यदुक्तं आख्यातशब्दा एते कर्मणो विधायकाः 'भावार्थाः कर्मशब्दास्तेभ्यः क्रिया प्रतीयेत' इति। तुल्या एषां प्रभुता आख्यातशब्दानाम्। ये हि शक्नुवन्ति गुणवचनसहिताः गुणं कर्म च विधातुं, शक्नुवन्तितरां ते केवलं गुणं विधातुम्। यो हि पाषाणान् भक्षयति, ईषत्करास्तस्य मुद्गशष्कुल्यः इति। तस्मादपि गुणविधय इति।

**सर्वमेवं प्रधानमिति चेत्। ९॥**

**भाष्यं**—इति चेत् पश्यसि, आख्यातशब्दोऽयं गुणं विधास्यतीति। एवं सति सर्वं प्रधानं, आख्यातशब्दवाच्यत्वादिति।

**तथाभूतेन संयोगाद्यथार्थविधयः स्युः। १०॥**

**भाष्यं**— नहि आख्यातशब्दाभिधानेन प्रधानभूतो गुणभूतो वाऽर्थो भवति। यः स्वभावतो गुणभूतोऽर्थः, नासौ आख्यातशब्दाभिधानेन प्रधानभूतो भवति। तथाभूतेन संयोगे सति आख्यातशब्दभूतेन यथार्थविधयो भवेयुः। यत् प्रधानं तत् प्रधानमेव, यत् गुणभूतं तत् गुणभूतमेवेति।

**विधित्वं चाविशिष्टमेवं प्राकृतानां वैकृतैः कर्मणा योगात्, तस्मात् सर्वं प्रधानार्थम्। ११॥**

**भाष्यं**— इतश्च पश्यामो गुणविधय इति। कुतः? विधित्वं चाविशिष्टम्। प्राकृतानां वैकृतैः अर्थवादकर्मणा योगो न विशिष्यते। 'अग्निं स्विष्टकृतं यजति यज्ञस्य प्रतिष्ठित्यै' इति प्रकृतौ य एव, स एव विकृतौ अर्थवादो भवति 'अग्निं स्विष्टकृतं यजति, यज्ञमेव प्रतिष्ठापयति' इति। तथा 'चक्षुषी वा एते यज्ञस्य यदाज्यभागौ' इति प्रकृतौ, 'आज्यभागौ यजति, चक्षुषी एव नान्तरेति' इति विकृतौ। तस्मात् सर्वमेवंजातीयकं प्रधानार्थं विकृतौ गुणभूतमिति।

**समत्वाच्च तदुत्पत्तेः संस्कारैरधिकारः स्यात्। १२॥**

**भाष्यं**— इतश्च पश्यामो न सर्वं प्रधानं, प्रधानार्थमपि किं चिदस्तीति। समा ह्युत्पत्तिक्रमता प्रयाजानुयाजानाम्। येनैव क्रमेण प्रकृतौ प्रयाजानुयाजानां संस्काराणामधिकारः, तेनैव क्रमेण विकृतौ दृश्यते। कथं? 'प्रजापतिर्यज्ञमसृजत, स आज्यं पुरस्तादसृजत, पशुं मध्यतः, पृषदाज्यं पश्चादिति, तस्मादाज्येन पुरस्तात् प्रयाजा वर्तन्ते, पशुना मध्यतः, पृषदाज्येन पश्चादनुयाजा वर्तन्ते' इति प्रयाजानुयाजानां स्वक्रमाणां दर्शनं प्रधानार्थत्वे सति उपपद्यते, न प्रधानत्वे। तस्मात् न सर्वं प्रधानं, प्रधानार्थमपि किं चिदस्तीति।

**शा**— किं तत्र चोदकेन प्राकृती इतिकर्तव्यता प्राप्यते न वेति। तदर्थमिदं विचार्यते किमेतैः गुणविशिष्टप्रयाजादिविधिः, उत प्रयाजाद्यनुवादेन गुणमात्रविधिरिति। तस्मात् संख्यादिविशिष्टाः प्रयाजादयः एवात्र विधीयन्ते, न प्राकृती इतिकर्तव्यता अतिदिश्यते, **इति प्राप्ते ब्रूमः**, 'प्रकारद्वारतः प्राप्तेरतिदेशेन कर्मणाम्। तान्यनूद्य गुणः शक्यो विधातुमिति तद्विधिः॥ न च सत्यां गतौ

न्याय्यं विशिष्टविधिगौरवम् । वाक्यार्थविधिदोषश्च समानः पक्षयोर्द्वयोः ॥ '

**सोम**— पूर्वत्र पादद्वये बाधः प्राधान्येन व्युत्पादितः । इह तु विकृतौ श्रुतेन प्राकृतस्याबाधः प्राधान्येन व्युत्पाद्यते इति **पादान्तरत्वं आनन्तर्यं** चेत्याहुः । यत् अप्राकृतगुणयुक्तं प्राकृतं श्रूयते तदेवोदाहरणं, न तु **प्राभाकर**रीत्या औपदेशिकाङ्गवत् वैकृतमात्रम् । प्रथम-**सूत्रार्थस्तु**–विकृतौ प्रधानमात्रस्य शब्दवत्त्वात् श्रवणात् गुणानां प्रयाजादीनां अधिकोत्पत्तिः संख्यान्तरादिविशिष्टतया उत्पत्तिः, न केवलगुणविधिः, संनिधानात् संनिहितैस्तैरेव विकृत्याकाङ्क्षाशान्तेः नातिदेशः इति ।

**वि**— ' प्रयाजैकादशत्वादिविशेषविधिभिर्युते । पश्वादौ सामिधेन्यादिविध्यन्तो नास्त्युतास्त्यसौ ॥ , विशिष्टाङ्गविधौ नासौ चोदकस्याप्रवृत्तितः ।, लाघवाद् गुणमात्रस्य विधेः सोऽस्त्यतिदेशतः ॥ '

**भाट्ट**— यस्यां विकृतौ प्राकृताङ्गसंबन्धेन अपूर्वाङ्गश्रवणं यथा ' एकादश प्रयाजान् यजति ' इत्यादौ, तत्र अतिदेशेन अङ्गानां सामान्यमुखेनैव प्राप्तेः, विशिष्य प्रयाजादित्वादिनैव उपस्थित्यभावात् तदवच्छिन्नोद्देशेन एकादशत्वविधानाशक्तेः, एकादशत्वविशिष्टप्रयाजविध्यवश्यंभावात्, तदा च गृहमेधीयाज्यभागन्यायेन ( १०।७।९ ) क्लृप्तोपकारप्रयाजपुनर्विधानात् तेनैव पश्वादिभावनायाः निराकाङ्क्षत्वात् अतिदेशाकल्पनेन अपूर्वत्वावगतेः न प्रयाजाद्यतिरिक्ताङ्गकरणं, **इति प्राप्ते**, ' मद्गृहे धान्यसमृद्धिरस्ति, शष्कुलीं भुङ्क्ष्व ' इत्यादौ सामान्यधर्मपुरस्कारेण प्राप्तस्य पदार्थस्य संबन्धविधया उपस्थितविशेषधर्मपुरस्कारेणापि प्राप्त्युपपत्तेः । प्रयाजपदेन प्रयाजत्वरूपेणानुवादे बाधकाभावात्, तृतीयविधिप्रकारलिप्सया प्रयाजोद्देशेन एकादशत्वसंख्यामात्रविधानेन अतिदेशोपजीवितया तद्बाधकत्वानुपपत्तेः नेतराङ्गनिवृत्तिः ।

**न्यायबिन्दुः**— पशौ ' एकादश प्रयाजान् यजति ' इति न प्रयाजानुवादेन संख्याविधिः, तेषां प्रकृतौ पञ्चसंख्यत्वात् । किंतु संख्याविशिष्टप्रयाजविधिः । एवं च ' क्लृप्तोपकाराङ्गश्रवणात् अतिदेशबाधः, **इति प्राप्ते**, विशिष्टविधिगौरवात् पञ्चानामपि आवृत्त्या एकादशत्वसंभवात् नातिदेशबाधः इति सिद्धान्तः ।

**मण्डन** – ' पशौ प्रयाजेषु विधिर्गुणस्य । '

**शंकर** —' पश्वादौ चोदकोऽस्ति च । '

**अग्नीषोमीयपुरोडाशविकाराणां सांनाय्यविकाराणां च सोमोत्तरकालता ॥**

**सांनाय्याग्नीषोमीयविकारा ऊर्ध्वं सोमात् प्रकृतिवत्** । ५।४।८।२५ ॥

**भाष्यं**—इह सांनाय्यविकाराश्च अग्नीषोमीयविकाराश्चोदाहरणम् । सांनाय्यविकारास्तावत् यथा आमिक्षा पशुरिति । अग्नीषोमीयविकाराः 'अग्नीषोमीयमेकादशकपालं निर्वपेत् श्यामाकं ब्राह्मणो वसन्ते ब्रह्मवर्चसकामः ' इत्येवमादयः । तत्र संदेहः, किमेते प्रागूर्ध्वं च सोमात्, उत ऊर्ध्वं इति । किं प्राप्तं ? प्रागूर्ध्वं च, विशेषानवगमात् । **एवं प्राप्ते ब्रूमः**, ऊर्ध्वं सोमात् स्युरिति । प्रकृतिर्ह्येषां ऊर्ध्वं सोमात् । चोदकेन एभिरपि ऊर्ध्वं सोमाद्भवितव्यम् । सांनाय्यस्य ऊर्ध्वं सोमाद्वचनं 'नासोमयाजी संनयेत् ' इति । अग्नीषोमीयस्यापि ' आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः, तत्तर्हि अनुनिर्वपेत् इति, तर्हि स उभयदेवत्यो भवति ' इति । तद्विकृतिरपि सोमादूर्ध्वं भवितुमर्हति ।

**टुप्**— अनुदाहरणमग्नीषोमीयः । तस्य हि वचनेन चोदकप्राप्तः कालो बाध्यते । तद्विकाराश्चानुदाहरणम् । न तेषां प्रकृत्या सोमादूर्ध्वकालोऽनुभूतः । केवला आमिक्षा अत्रोदाहरणम् ।

**शा**—' नासोमयाजी संनयेत्' 'आग्नेयो वै ब्राह्मणः' इति वचनाभ्यां सांनाय्याग्नीषोमयोः सोमोत्तरकालत्वं तद्विकाराणामपि अतिदेशात् तत्कालत्वं इति सुहृद् भूत्वा उपदिष्टवान् ।

**सोम**—सांनाय्यविकाराणां ' यः पाप्मना गृहीतः स्यात्, तस्मा एतां मैत्रावरुणीं पयस्यां निर्वपेत्' इत्यादीनां, अग्नीषोमीयविकाराणां ' अग्नीषोमीयमेकादशकपालं निर्वपेद्वसन्ते ब्रह्मवर्चसकामः ' इत्यादीनां च सोमोत्तरकालत्वं विचार्यते । अत्र भाष्ये सांनाय्यविकारत्वेन पशुरुदाहृतः,

तत्तु **दुप्टीकायां** दूषितम् । तथाहि, प्रकृतिभूतोऽग्नीषोमीयः पशुस्तावन्नोदाहरणं, तस्य सोमाङ्गतया सोमप्रयोगमध्ये 'स एष उपवसथीयेऽह्नि द्विदेवत्यः पशुरालभ्यते' इति विहितकालविरोधेन सोमोत्तरकालत्वस्य चोदकतः सिद्धान्तयितुमशक्यत्वात् । नापि तद्विकारा निरूढपश्वादयः, तेष्वपि प्रकृतिभूताग्नीषोमीयपशौ अविद्यमानस्य सोमोत्तरकालत्वस्य चोदकप्राप्त्यसंभवात् । तस्मादिह पशुर्नोदाहरणमिति । विकृतिकालनिरूपणप्रस्तावात् सांनाय्यादिविकृतिकालं सुहृद्भावेन उक्तवान् इति नात्र पूर्वपक्षे यत्नः कार्यः ।

**वि**—'आमिक्षादेरनियतिः स्यात् सोमादूर्ध्वमेव वा ।, अविशेषादग्रिमो, ऽन्त्यो नासोमेति विशेषतः ॥'

**भाट्ट**—'नासोमयाजी संनयेत्' इति असोमयाजिनः सांनाय्यपर्युदासः । तेन तस्यापि अग्नीषोमीयवत् सोमोत्तरत्वमेव । अतस्तदुभयविकारेष्वपि तद्देवत्येषु अन्यदेवत्येषु वा सोमोत्तरत्वमेव । नहि अत्र असोमयाजिनः अधिकारपर्युदासः, येन विकृतौ नातिदिश्येत । कर्तृसामानाधिकरण्यात्तु यागकर्तृत्वपर्युदास एव । अतश्च युक्तोऽतिदेशः । अत्र च दैक्षस्य नोदाहरणत्वं, औपदेशिकसोमप्राक्कालत्वविधानात् । तद्विकाराणां च प्रकृतौ अनङ्गत्वात् न सोमोत्तरत्वनियमः । **न च** अन्वाहार्यस्येव प्रकृतौ अभावेऽपि प्रकृतिप्रकृतितो ग्रहणमिति **वाच्यम्** । अपेक्षितविषये एव तथाग्रहणेन सोमोत्तरत्वस्यानपेक्षितत्वात् । वस्तुतस्तु अपेक्षायाः उपायान्तरेणापि निवृत्त्युपपत्तेः न अन्वाहार्यांशेऽपि ग्रहणम् । अन्यथा पितृमेधविकारे होतृवरणस्यापि अतिदेशापत्तेः । न चैवं दैक्षविकाराणां अनिर्दिष्टकालविशेषाणां औपवसथ्यकालकत्वापत्तिः, तस्य अङ्गत्वनिबन्धनतया तदभावे अप्राप्तेः । अतस्तद्भिन्नविकाराणां सोमोत्तरत्वमेव । यत्तु **याज्ञिकानां** प्रागप्यनुष्ठानं, तच्छाखान्तरे सांनाय्याग्नीषोमीययोः प्रागपि विधानादवगन्तव्यम् । एवं ऐन्द्राग्नविकाराणामपि सोमप्राक्कालत्वमेवेति सूत्रं तस्याप्युपलक्षणमिति **केचित्** । वस्तुतस्तु असंनयतः इत्यस्य षष्ठ्यन्तस्य कर्तृसामानाधिकरण्याभावात् अधिकारिविशेषणत्वस्यैव प्राधान्यावगतेः तस्य चानतिदेशात् युक्तं तद्विकाराणां अनियतकालकत्वम् ।

**न्यायबिन्दुः**—सांनाय्याग्नीषोमीययोः विकृतीनामपि अतिदेशात् सोमोत्तरत्वं, 'नासोमयाजी संनयेत्' इत्यादिवचनात् ।

**मण्डन**—'सोमोर्ध्वं सांनाय्यधर्मा विकारः ।'

**शंकर**—'सोमोर्ध्वं दोहवैकृतम् ।'

**अग्नीषोमीयवाक्यन्यायेन** इहापि 'सौमारौद्रं चरुं निर्वपेत्' इति प्रकृत्य 'परिश्रिते याजयेत्' इत्यत्र यजिवाच्यकर्मविधायित्वसिद्धिः । **सु. पृ.** ९३१.

**अग्नीषोमीयादिपशुत्रयार्थः शूलस्तन्त्रम् ॥**

'तं नाग्नीषोमीये करोति न सवनीये, अनुबन्ध्यायां तु करोति' इति हृदयशूलं प्रकृत्य श्रूयते । तत्र अग्नीषोमीये पूर्वं विधाय पुनः प्रतिषेधात् हृदयश्रपणे शूलस्य विकल्पः । सवनीये च पक्षतः प्राप्ते एव तदभावो नियम्यते । अनुबन्ध्यायां तु सद्भावनियमः, **इति प्राप्ते**, त्रयाणामपि पशूनां शूलं तन्त्रं इत्युक्तन्यायसिद्धार्थानुवादकत्वे संभवति अष्टदोषदुष्टो विकल्पो न युक्तः । सर्वधात्वर्थानुस्यूतक्रियासामान्यवाची करोतिः इह उद्वासनक्रियापरः । तन्त्रत्वादेव सर्वान्ते एव उद्वासनं, न पूर्वयोरिति । 'यत्ते गात्रादग्निना पच्यमानादभिशूलं निहितस्याभिधावति । मा तद् भूम्यामाश्लिषन्मा तृणेषु देवेभ्यस्तदुशद्भ्यो रातमस्तु ॥' इति मन्त्रे हृदयशूलस्य भूसंश्लेषाभावकथनमपि अत्रैव लिङ्गम् । अन्यान्यपि लिङ्गदर्शनानि इह भाष्यतोऽवगन्तव्यानि । **संकर्ष.** २।२।१.

**'अग्नीषोमीयेण यजेत पौर्णमासीं' इति न प्रकृतानुवादः ॥**

'अग्नीषोमीयेण यजेत पौर्णमासीममावास्यामभिचरन्' इति प्रथमवाक्ये प्रकृतः एवाग्नीषोमीयो यागः अवेष्टिवत् पृथक्कृत्य फलाय विधीयते द्वितीयविधिप्रकारे अतीव लाघवात् । तथा च ऐन्द्रवायवाग्रतावत् नित्यकाम्योऽयं, **इति प्राप्ते**, समुदायवाचिपौर्णमासीपदवैयर्थ्यापत्तेः उक्तरीत्या चतुर्थ एव विधिप्रकारो युक्तः । **संकर्ष.** १।२।१७.

**अग्नीषोमीये पशौ आतिथ्याबर्हिषः स्तरणकाले स्तरणमन्त्रस्यावृत्तिः ॥**

**देशपृथक्त्वान्मन्त्रोऽभ्यावर्तते । १२।१।२०।४५॥**

**भाष्यं**— तत्रैव स्तरणमन्त्रश्चिन्त्यते । किमग्नीषोमीये भेदेन कर्तव्यः, अथवा आतिथ्यायां प्रयुक्तः स एव प्रसज्यते इति । साधारणे बर्हिषि प्रयोगात् पूर्वोक्तेन न्यायेन **प्रसङ्गे प्राप्ते, उच्यते**, मन्त्रोऽभ्यावर्तते, भेदेन कर्तव्यः इति । कुतः ? देशपृथक्त्वात् । पृथग्गेतौ देशौ उत्तरवेदिसमीपं प्राग्वंशश्च । देशभेदात् स्तरणमावर्तेत । स्तरणाङ्गं च मन्त्रः ' ऊर्णाम्रदसं त्वा स्तृणामि ' इति । स्तरणावृत्तौ मन्त्रस्यावृत्तिर्न्याय्या, प्रधानतन्त्रत्वाद् गुणानाम् । अपि च स्तरणं देशसंस्कारकम् । तेन आतिथ्यायां प्राग्वंशदेशः संस्कृतो नोत्तरवेदिदेशः । तत्र यदि मन्त्रो न प्रयुज्येत, विगुणस्तस्य संस्कारः स्यात् । तस्मादावृत्तिः स्तरणमन्त्रस्य ।

**सोम**—अत्र प्राकृतस्तरणावृत्तावपि मन्त्रस्य नावृत्तिः, किंतु आतिथ्याकाले प्रयुक्त एव मन्त्रः प्रसङ्गादुपकरिष्यति इत्येवं पूर्वः पक्षः इति न भ्रमः कर्तव्यः, करणमन्त्रस्य स्तरणावृत्तौ आवृत्तेरवर्जनीयत्वात् । तस्मात् स्तरणस्य बर्हिःसंस्कारत्वात् समन्त्रकं स्तरणमेव प्रसज्यते । अपरेणोत्तरवेदिं अग्नीषोमीयार्थेन क्रियमाणं तु स्तरणं सौकर्यार्थं लौकिकमन्यदेव, इति न तद्बलात् मन्त्रावृत्तिप्रसक्तिः इत्येवं पूर्वः पक्षः । एवं च मन्त्रमुखेन स्तरणस्यैव प्रसङ्गावृत्ती विचार्येते इति ध्येयम् । **यद्यपि** वस्तुतो देशैक्येऽपि ' यदातिथ्यायां ' इत्यादिवत् देशसाधारण्यविध्यभावात् संस्काराणामावृत्त्या भवितव्यं, अन्यथा प्रायणीयाऽऽतिथ्ययोरपि वस्तुतः एकदेशत्वात् वेदिसंस्काराणामावृत्तिर्न स्यात्, **तथापि** एकदेशत्वे प्रसङ्गः संभाव्येत, **न** चात्रैकदेशत्वमपि । एवं च **बर्हिरर्थे स्तरणे** क्रियमाणे वेदिबर्हिषोः आर्थिककर्मत्वकरणत्वभावेन द्वितीयातृतीये । **प्रकृतौ** मन्त्रेण स्तरणं हविरासादनार्थं, नादृष्टार्थं, इह चामन्त्रकास्तीर्णे बर्हिषि हविरासादने तस्य वैगुण्यं स्यात् ।

**वि**—' तत्रास्तरणमन्त्रस्य प्रसङ्गो यदि वा भिदा ।, आद्यः प्रोक्षणवत् , न्मैवं देशस्तरणभेदतः ॥ '

**भाट्ट**—तदेव बर्हिः आतिथ्योपसदर्थं प्राग्वंशे 'ऊर्णाम्रदसं त्वा ' इति मन्त्रेण वेद्यामास्तृतं पुनरग्नीषोमीयार्थं अपरेणोत्तरवेदिं स्तीर्यते, देशभेदेन तत्तत्संस्कारकस्य तत्रासाद्यमानहविराधारभूतबर्हिःसंस्कारकस्य वा आस्तरणस्य आवृत्तेः प्रयोजनानुरोधेन आवश्यकत्वात् । अतः प्राकृतस्य स्तरणस्यावृत्तौ तदङ्गभूतो मन्त्रोऽपि आवर्तते इति न तत्र प्रसङ्गस्तन्त्रं वा, आतिथ्याकालपठितमन्त्रजन्यस्मृतेः अग्नीषोमीयकालीनस्तरणवेलायां अविद्यमानत्वात् । सिद्धमेव चेदं शिष्यहितार्थमुक्तम् ।

**न्यायबिन्दुः**—आतिथ्यार्थं प्राग्वंशे स्तीर्णं तत आनीय अपरेणोत्तरवेदिं पुनरग्नीषोमीयार्थं बर्हिः स्तीर्यते । तत्र 'ऊर्णाम्रदसं त्वा स्तृणामि' इति स्तरणमन्त्रः पूर्वकृत एव प्रसज्यते बर्हिःसाधारण्यात् , **इति प्राप्ते** , स्तरणस्य ' बर्हिषा वेदिं स्तृणाति ' इति वेद्यर्थत्वात् तस्याश्च भेदात् मन्त्रावृत्तिः । बर्हिरर्थत्वेऽपि स्तरणावृत्तेः तदङ्गमन्त्रावृत्तिः, अन्यथा तद्वैगुण्यापत्तेः इति सिद्धान्तः ।

**मण्डन**—' तेषां तु मन्त्रान् ( मन्त्रं ) स्तरणे पुनः पठेत् । '

**शंकर**—' देशभेदे भिदा मनोः । ' मनोः स्तरणमन्त्रस्य ।

**अग्नीषोमीये पशौ दार्शिको विध्यन्तः ॥**

**पशौ च लिङ्गदर्शनात् । ८।१।५।१२ ॥**

**भाष्यं**— पशौ अग्नीषोमीये चिन्त्यते किं दार्शपौर्णमासिको विध्यन्तः, उत सौमिकः इति । किं प्राप्तम् ? तथैव पूर्वः पक्षः । तत्रोत्तरमभिधीयते । पशौ च लिङ्गदर्शनात् । पशौ च दार्शपौर्णमासिक एव विध्यन्तः । कुतः ? लिङ्गदर्शनात् ' एकादश प्रयाजान् यजति ' ' एकादशानुयाजान्' इति । तथा ' स्रौचमाघारमाघार्य जुह्वा पशुमनक्ति ' इति । ननु लिङ्गमपदिष्टं , कुतः प्राप्तिः ? चोदनासामान्यात् । किं सामान्यं ? व्यक्तचोदनात्वम् । का व्यक्तिः ? द्रव्यदेवतावत्ता 'अग्नीषोमीयं पशुं' इति । इतरत् ' ऐन्द्रं पयः ' इति । अव्यक्तचोदनस्तु सोमः ।

**शा**— पशौ अग्नीषोमीये तद्धितेन देवतानिर्देशः आलभतिश्च दर्शपूर्णमाससादृश्यम् । **इष्टौ अपि आलभति-**

र्विद्यते 'ईषामालभेत' इति। इष्यते च पशोरालम्भनादिदृष्टार्थाङ्गसिद्धये अतिदेशापेक्षा। तस्मात्तत्र ऐष्टिको विध्यन्तः।

सोम— ननु युक्तमिष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरिति लिङ्गसद्भावात्, पशौ तु लिङ्गासद्भावात् नैष्टिकविध्यन्तप्राप्तिः। न च तद्धितेन देवतानिर्देश इष्टिलिङ्गं, उपांशुयाजे असतस्तस्य इष्टिलिङ्गत्वायोगात्। नापि आलभतिः, दर्शपूर्णमासयोस्तददर्शनात्। इति शङ्कया उत्थानात् **संगतिः**। यत्रायं पशुरुत्पन्नः क्रयसंनिधौ, न तत्र धर्मा आम्नाताः, किंतु औपवसथ्येऽहनि। तत्रोत्पत्तौ इतिकर्तव्यताकाङ्क्षायाः प्रदेशान्तराम्नातैर्धर्मैरशान्तेः, तदर्थे ऐष्टिकविध्यन्तप्रवृत्तिः अप्रत्यूहा। **सूत्रार्थस्तु**- 'स्रुच्यमाघार्य जुह्वा पशुं समनक्ति' इत्यादिलिङ्गदर्शनोपोद्बलितात् चोदनालिङ्गात् ऐष्टिकविध्यन्तः इति।

वि—'न पशावैष्टिकः स्याद्वा, न कपालाद्यभावतः।, स्याद् व्यक्तद्रव्यदेवत्वप्रयाजस्रुच्यसाम्यतः॥' 'अग्नीषोमीयं पशुं' इति द्रव्यदेवते, 'एकादश प्रयाजान् यजति' इति प्रयाजवत्त्वं, 'स्रुच्यमाघार्य जुह्वा पशुमनक्ति' इत्याघाराञ्जने आलम्भश्च इति लिङ्गानि।

भाट्ट— (एकादशमारभ्य एकोनविंशतिसूत्रपर्यन्तं नवभिः सूत्रैस्तृतीयमधिकरणमेवात्र। तत्रत्यं तु प्रकृताधिकरणविषयकमुद्धृत्य गृह्यतेऽत्र) एवं पशावपि अग्नीषोमीये दैक्षसंज्ञके तद्धितपदविहितदेवताकत्वादेव (दर्शपूर्णमासविकारत्वम्)। न च तत्र यूपादिबहुतरधर्मविधानादेव निराकाङ्क्षत्वादनतिदेशः। तथापि आवाहनासादनकुम्भ्यादिबहुतरदृष्टार्थधर्माम्नानेन साकाङ्क्षत्वात्। किंच क्रयसंनिधौ आम्नातो निर्धर्मको दैक्षः प्रथमं तावदतिदेशं कल्पयत्येव। ततश्च प्राकृतैर्धर्मैर्निराकाङ्क्षस्य 'स एष औपवसथ्येऽहनि' इत्यनेन औपवसथ्येऽहनि अनुष्ठानेऽवगते अनुष्ठानसादेश्यात् उपहोमन्यायेन (५।२।९) यूपादिग्रहणेऽपि नातिदेशकल्पनाप्रतिबन्धः। 'एकादश प्रयाजान् यजति' 'जौहवमाघारमाघार्य पशुमनक्ति' इत्यादिलिङ्गमपि एवमुपपद्यते।

मण्डन—'इष्टेर्भवेद्दैक्षपशुर्विकारः।'

शंकर—'सोऽग्नीषोमीय इष्टेः स्यात्।' सः विध्यन्तः।

**ई अग्नीषोमीये पशौ प्रतिप्रस्थातुर्भक्षो नास्ति॥**

**प्रतिप्रस्थातुश्च वपाश्रपणात्। १०।७।८।२२॥**

**भाष्यं**— अग्नीषोमीये पशौ प्रतिप्रस्थाता नाम ऋत्विक् श्रूयते। तं प्रति संदेहः, किं तस्य शेषभक्षो भवेन्नेति। किं प्राप्तं? भवेदिति। कुतः? वपां हि श्रपयन् अध्वर्युकर्म करोति 'प्रतिप्रस्थाता वपां श्रपयति' इति। तस्मात् स्यादस्य भक्ष इति।

**अभक्षो वा कर्मभेदात्, तस्याः सर्वप्रदानत्वात्। २३॥**

**भाष्यं**— अभक्षः स्यात् प्रतिप्रस्थाता। कुतः? यस्मिन् यागे असौ अध्वर्योर्विकारः, तस्य द्रव्यशेषो नास्ति। वपामसौ श्रपयति, तस्याः सर्वप्रदानत्वम्। तत्र शेषाभावात् किं भक्षयेत्। यत्र शेषोऽस्ति हृदयादिष्वङ्गेषु, न तत्रासौ अध्वर्योर्विकारः। अन्यद्धि वपाऽपूर्वं अङ्गापूर्वात्। चोदकेन च यस्यापूर्वस्य शेषः प्रतिपाद्यते, तस्य तत्कर्मकरे भक्षः। एवं हि तस्योपकारको भवतीति। अन्यकर्मकरे भक्षयति तदुपकाराभावात् अनङ्गं स्यात्। तस्मात् नान्यकर्मणि भक्षणं चोदकः प्रापयतीति। ननु अङ्गेष्वपि प्रतिप्रस्थाता अध्वर्युविकारः, स हि अवदानं करोति 'दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यति' इति। यस्यां शाखायामेतन्नास्ति, तत्रैषा विचारणा। अथवा अन्यकार्यमेतदवदानं अन्यकार्यकं प्राकृतम्। तत्र प्रकृतौ यजतिशब्देन प्रदानारम्भे अवदाने गृहीते द्विसंख्या केवला श्रूयते, नावद्यत्यर्थः। इह पुनः प्रतिप्रस्थातुः अवदानं चोद्यते, नारम्भः। यदत्रावदानं भविष्यति, स प्रदानारम्भः। तत्र प्रकृतौ प्रदाने चिकीर्षिते अर्थादध्वर्युरचोदितः अवदानं निर्वर्तयति। तेन वा अन्येन वा तत् कर्तव्यम्। संनिधानात् अध्वर्युरेव करोति, न नियोगतः तत् तत्र अध्वर्युकर्म। यच्चार्थात् कृतं, न तत् चोदकः प्रापयति। अर्थादेव तदिह अध्वर्युणा अन्येन वा कर्तव्यं, प्रतिप्रस्थातुर्वचनं नियमार्थम्। तस्मात् न अवद्यन्नपि प्रतिप्रस्थाता अध्वर्युकर्मणि वर्तते, इति नास्य अङ्गेषु भक्षः स्यात्।

शा—ननु अङ्गेभ्योऽपि हृदयादिभ्यः अयं ( प्रतिप्रस्थाता ) अवदानं कुर्वन् भक्षं लभेत 'दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति' इति वचनात्। ( अस्यां शङ्कायां भाष्ये समाधानत्रयमुक्तम्। तत्राद्यमाह— ) यस्यां शाखायां अध्वर्योरेवावदानं तद्विषयमिदमधिकरणम् ( यस्यां शाखायां हृदयादिषु प्रतिप्रस्थातृकर्तृकावदानवचनं नास्ति, तद्विषयमिदमधिकरणमिति। तत् यथाश्रुतमनुपपन्नं, सर्वशाखाप्रत्ययन्यायविरोधात्। ततश्च यस्यां शाखायां अध्वर्योः अवदानवचनमस्ति तद्विषयमधिकरणं इत्येवंपरं भाष्यम्। अयमेव च परिहारो युक्तः )। प्रतिप्रस्थात्रवदानपक्षे तु अस्त्येव भक्षः। ( द्वितीयं परिहारमनूद्य दूषयति— ) यत्तु अप्राकृतमिदमवदानं, अप्राकृतकार्ये च प्रदानारम्भत्वाभावात् इत्युक्तं ( भाष्ये ) तदयुक्तम्। **यद्यपि** 'दैवतान्यवदाय न तावत्येव होतव्यं, सौविष्टकृतान्यवद्यति' इति मध्ये पदार्थान्तरविधानात् नायं प्रदानारम्भः, **तथापि** प्रदानार्थमेवेदमवदानं, नादृष्टार्थम्। ( प्रतिप्रस्थातुः अवदानकर्तृत्वमस्तु, तथापि नासौ प्राकृतमध्वर्युकार्यं करोति, मध्ये सौविष्टकृतावदानव्यवहितस्यावदानस्य प्रदानोपक्रमत्वाभावेन प्रदानोपक्रमप्राकृतावदानकार्यकरत्वाभावात्। ततश्च प्राकृतं हविःसंस्कारकार्यार्थं यदवदानं तदध्वर्युणैव कर्तव्यं, न प्रतिप्रस्थात्रा, इति न तस्य भक्षप्रसक्तिरित्यर्थः। तृतीयपरिहारस्तु समाख्यादिना तस्यापि शास्त्रीयत्वसमर्थनेन **तन्त्ररत्ने** एव निराकृतः। **तन्त्ररत्नं** चेत्थं— 'नहि आर्थिकं प्रकृतौ अध्वर्योरवदातृत्वं अवत्तहोमविधिना अर्थाद्विधीयमानस्यावदानस्य प्रधानेनैककर्तृकत्वात् समाख्यानाच्च अध्वर्युकर्तृत्वं शास्त्रीयमेव। तच्च कुर्वन् प्रतिप्रस्थाता लभेतैव भक्षम्। तस्मात् कृत्वाचिन्तैव इत्येव तथ्यम्। अवदानान्तरमिति वा' इति )। अध्वर्य्ववदानपक्षे तु नास्य ( प्रतिप्रस्थातुः ) भक्षः, वपाया निःशेषत्वात् इत्येतावान् अधिकरणार्थः।

**सोम**— मैत्रावरुणवत् प्रतिप्रस्थातुरपि कार्यप्रयुक्तो भक्षः इत्युत्थानात् **संगतिः**।

**वि**— 'प्रतिप्रस्थातुरत्रास्ति भक्षो नो वा, वपामसौ। पचत्यतोऽस्ति, नो पक्वा वपा सर्वा हुता यतः॥'

**भाट्ट**— तत्रैव ( अग्नीषोमीये पशौ ) प्रतिप्रस्थातुरपि भक्षो भवेन्न वेति संशये तस्यापि कर्तृत्वात् कर्तृसंस्कारार्थो भक्षो भवेत्। नहि यद्धविःसंस्कारकं यत् भक्षणं तत् तद्धविर्यागसंबन्धिपदार्थकर्तृसंस्कारकं इत्यत्र प्रमाणमस्ति, प्रयाजशेषाभिघारणन्यायेन ( ४।१।१४ ) हविःसंस्कारकस्य सतः कर्तृसंस्कारकत्वमात्रकल्पनात्। अतश्च वपाश्रपणकर्तुरपि प्रतिप्रस्थातुः हृदयादियागहविःशेषभक्षकत्वे न किं चित् बाधकं, **इति प्राप्ते**, यत्किंचित्कर्तृसंस्कारकत्वे अतिप्रसङ्गात् आवश्यके विशेषणे स्ववाक्ये उपस्थितत्वात् यद्धविःसंस्कारकं यत् भक्षणं तत् तद्धविर्यागसंबन्धिपदार्थकर्त्रानतिरूपं, तद्धविर्यागसंबन्धिकरिष्यमाणपदार्थविषये बलाधानरूपं वा संस्कारं जनयति इत्येव कल्पनात्, प्रतिप्रस्थातुश्च वपाश्रपणकर्तुः वपायां सर्वहोमेन शेषभक्षणाप्रसक्तेः, हृदयादियागसंबन्धिप्राकृतपदार्थकर्तृत्वाभावेन च तद्धविःशेषभक्षाप्रसक्तेः न तस्य भक्षणम्। अत एव हृदयादियागसंबन्ध्युपयाजानां तेन करणेऽपि तेषां प्राकृतत्वाभावात् न तस्य तद्भक्षः। **ननु** 'दक्षिणतो निधाय प्रतिप्रस्थाता अवद्यति' इति वचनात् हृदयाद्यवदानस्यापि प्रतिप्रस्थातृकर्तृकत्वावगतेः तच्छेषभक्षप्रसक्तिः। नहि इदं अप्राकृतं अवदानान्तरं प्राकृतावदानानुवादेन प्राकृतकार्यापन्नावदानान्तरानुवादेन वा प्रतिप्रस्थातृमात्रस्य प्राकृताध्वर्युबाधेन विधानात् दक्षिणतो निधानस्य च प्रकृतितो दक्षिणश्रोणिप्राप्त्यैवानुवादात्। **यद्यपि पार्थसारथि**लेखनात् शाखान्तरे वैकल्पिकं अध्वर्युकर्तृकमपि हृदयाद्यवदानं भवेत् **तथापि** अध्वर्युकर्तृकत्वपक्षेऽपि वपाश्रपणमात्रकर्तुः प्रतिप्रस्थातुः **आपस्तम्बा**द्युक्तक्लोमादिभक्षो न विरुद्ध्यते। तस्य हृदयादिनिरूपिताकीर्णकरत्वस्यापि लोहितादिवत् शेषात् ( अविरोधात् )। अतो हृदयाद्यवदानस्य उभयकर्तृकत्वेऽपि प्रतिप्रस्थातुः भक्षोपपत्तिः, **इति चेत्** सत्यं, तथापि प्रकृतौ न आनतिरूपः कर्तृसंस्कारः, तस्य दक्षिणानियमेन तयैव सिद्धेः। करिष्यमाणप्राकृतपदार्थेषु बलाधानरूपः एव। न चासौ प्रतिप्रस्थातृकर्तृकत्वेऽपि हृदयाद्यवदानस्य भक्षणोत्तरं प्रतिप्रस्थातुः कश्चिदस्ति। अतो न तस्य भक्षः। **पार्थसारथेस्तु** प्रतिप्रस्थातृकर्तृकहृदयाद्यवदान-

पक्षे तस्य भक्षाभिधानं निर्मूलमेव । यदि तु **याज्ञिकानां** तथा आचरणं, तदा भक्षोत्तरकालीनः प्राकृतः कश्चित् पदार्थोऽनुसंधेयः । अस्य चाधिकरणत्रयस्य यजमानपञ्चमत्वबाधकतया बाधोपयोगः ।

**न्यायबिन्दुः** — वपाश्रपणस्य अध्वर्युकार्यस्य करणात् प्रतिप्रस्थातुः इडाभक्षः स्यात्, **इति प्राप्ते**, यस्य यदपूर्वकर्तृत्वं तस्य तच्छेषभक्षणम् । तत्र प्रतिप्रस्थातुः वपाया निःशेषहोमात् न भक्षप्रसक्तिः । **न च** 'दक्षिणतो निधाय प्रतिप्रस्थाताऽवद्यति' इति वचनात् हृदयाद्यवदानकारित्वेन तद्भक्षः स्यादिति **वाच्यम्** । इष्टापत्तेः । एतदधिकरणं तु यच्छाखायां अध्वर्योरेव अवदानं तद्विषयमिति ज्ञेयम् । तेन अध्वर्योरेव अवदानकर्तृत्वपक्षे न प्रतिप्रस्थातुरिडाभक्षः, इति सिद्धान्तः ।

**मण्डन**— 'प्रस्थातृभक्षं न पशौ वदन्ति ।'

**शंकर** — 'प्रतिप्रस्थानुर्नो भक्षः ( पशौ ) ।'

**अग्नीषोमीये पशौ प्रत्यङ्गं हविर्भेदः ॥**

**पशोरेकहविष्ट्वं समस्तचोदितत्वात्** । १०।७। १।१ ॥

**भाष्यं**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र संशयः, किं कृत्स्नः पशुरेकं हविः, उत प्रत्यङ्गं हविर्भेद इति । किं प्राप्तं ? कृत्स्नः पशुरेकं हविरिति । कुतः ? समस्तस्य चोदितत्वात् । समस्तो हि पशुः अग्नीषोमौ प्रति चोद्यते, न पृथगङ्गानां अग्नीषोमीयता । तस्मात् पश्वाकृतिकात् द्रव्यादवदाय अग्नीषोमाभ्यां दातव्यम् । अङ्गहविष्ट्वे पशुशब्दे लक्षणा स्यात् । तस्मात् कृत्स्नः पशुरेकं हविः । तच्च दर्शयति 'अथो खल्वाहुः कापेया दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति' इति, 'अथो खल्वाहुर्गोपायना दक्षिणस्य पूर्वं पदस्यावदेयं, तत्सर्वस्य पशोरवत्तं भवति' इति कृत्स्नस्य पशोरवदानं दर्शयति । तस्मादपि कृत्स्नः पशुरेकं हविरिति ।

**टुप्**— द्वितीयेऽध्याये ( २।२।६।१७ ) '**हृदयस्याग्रेऽवद्यति**' इत्येवमादीनि न यागं चोदयन्ति इति स्थितम् । इयं यागचोदना 'अग्नीषोमीयं पशुं' इति । किं हृदयादीनि हवींषि, उत पश्वाकृतिलक्षिता व्यक्तिः हविरिति । तत्र पूर्वपक्षः, पशोः अग्नीषोमसंबन्धः श्रूयते, न हृदयादीनाम् । तेषामग्नीषोमसंबन्धे लक्षितलक्षणा स्यात् । तस्य सांनाय्यात् विध्यन्तः । तेन मध्यात् पूर्वार्धाच्च अवदाने प्राप्ते हृदयादिदेशा विधीयन्ते । तेषां च विकल्प इति ।

**प्रत्यङ्गं वा ग्रहवदङ्गानां पृथक्प्रकल्पनत्वात् । २॥**

**भाष्यं**—वाशब्दः पक्षं व्यावर्तयति । नैतदस्ति कृत्स्नः पशुः एकं हविः इति । किं तर्हि ? प्रत्यङ्गं हविर्भेदः । कुतः ? पृथक्प्रकल्पनत्वात् । पृथगङ्गानि प्रकल्पन्ते 'हृदयस्याग्रेऽवद्यति ( अथ ) जिह्वाया अवद्यति, ( अथ ) वक्षसोऽवद्यति, दोष्णोरवद्यति, पार्श्वयोरवद्यति, गुदस्यावद्यति' । हृदयाकृतिकादिभ्योऽवदानं श्रूयते । नैतदविशसिते पशौ संभवति । तस्मात् हृदयाद्यर्थेन विशसितव्यः पशुः । तस्मिंश्च विशस्यमाने पश्वाकृतिर्न भवति । तदेवमापतति । पश्वाकृत्या यागस्य क्रियमाणस्योपकुर्यात् । तां पश्वाकृतिमन्तर्धाय च न शक्यते साक्षात् यागद्रव्यं परिच्छेत्तुम् । तस्मात् प्रणाड्या सा आकृतिरुपकर्तुमर्हति इति पश्वाकृतिकस्य द्रव्यस्य हृदयादीनि यानि, तानि हवींषि । तेभ्योऽवदाय प्रदातव्यमिति । ग्रहवत्, यथा सोमे 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' 'आश्विनं गृह्णाति' इति पृथक्कल्पनत्वात् सोमरसो हविः न सोमलता, एवमत्रापि द्रष्टव्यम् । समस्तचोदना तु अङ्गहविष्ट्वेऽपि प्रणाड्या अवकल्पते एव । अथ यत् दर्शनमुक्तं, तत् सुतरां अनेकहविष्ट्वे उपपद्यते । कथं ? कृत्स्नपशोरवदानं अन्येनानुजिघृक्षन् न कृत्स्नस्य पशोरवदीयते इति दर्शयति ।

**टुप्**—एकस्तावदयमेव दोषो लक्षणया हृदयादिदेशात् इति । विकल्पदोषश्च । यस्य पशुव्यक्तिर्हविरिति, तस्य तस्या एव व्यक्तेः सकाशात् अवदानं प्राप्नोति, न हृदयादिभ्यः । अथ अवद्यतिरनुवाद इति तन्न, यदि अवद्यतिमनूद्य हृदयादीनि विधीयेरन्, ततः अथशब्दाग्रशब्दौ अनर्थकौ स्याताम् । विधातुं तावन्न शक्यते वाक्यभेदभयात् । न चानूद्येत, अप्राप्तत्वात् । यदि च हृदयावद्यतिविशिष्टः

पदार्थो विधीयते, 'जिह्वाया अवद्यति' इत्येवमादयश्च, तथा सति अथशब्दोऽनुवादः स्यात्। कथं ? अयमानन्तर्ये (अयमथशब्दः आनन्तर्ये) वर्तते। यदा च पूर्वोत्तरौ पदार्थौ अवगतौ, तदा आनन्तर्यम्। यदा तु तौ न स्तः, कस्यानन्तर्यं ब्रूयात्। अवगतौ चेत्, पाठादेवावगतः क्रमः, तत्राथशब्दोऽनुवादः। न च भवता पदार्थविधानमिष्यते, येन अथशब्दः अग्रशब्दश्च अनुवादौ स्याताम्। तस्मात् हृदयादिविशिष्टः अवद्यतिर्विधीयते। एवं जिह्वादिष्वपि। एवं च यस्मात् द्रव्यादवदीयते तद्धविरिति। यथा 'ऐन्द्रवायवं गृह्णाति' इति वाक्यैः द्रव्यं पृथक् कल्प्यते, तदेव मुख्यं हविः, एवमिहापि। न चैते एकादश अवद्यतयः अदृष्टार्थाः। पशोरेव सकाशात् ह्यवदानात् याग इति। अस्मिंस्तु पक्षे अदृष्टार्थत्वमेव दोषः। एतेषु यागार्थेषु न किं चिददृष्टम्। पशुचोदनाऽपि लक्षितलक्षणया हृदयादीनि लक्षयन्ती अग्नीषोमाभ्यां सह संबध्यते। एवं च येषामङ्गानामवद्यतिः श्रूयते, तान्येव यागसाधनानि, नाङ्गान्तराणि। कुतः ? पशुशब्दोऽयं हृदयादीनि वाक्यानि दृष्ट्वा ततो लक्षणावृत्त्या कल्पितः। यानि दृष्ट्वा कल्पितः, तान्येव लक्षयति। अन्येषामश्रूयमाणानां कः प्रसङ्गः, येन तानि हविष्ट्वेन लक्षयेत्।

**शा**— 'तद्धितेन पशोरेव देवताऽन्वयचोदनात्। समस्तस्य पशोर्दानमैन्द्रस्य पयसो यथा॥' ( **सोम**— हविष्ट्वं देवतोद्देशेन त्यज्यमानत्वलक्षणं यस्य देवतासंयोगः तस्यैव वक्तुं युक्तं, 'साऽस्य देवता' इति सूक्तहविषोरेव देवतातद्धितविधानात्। अत एव 'सोमेन यजेत' इति उत्पत्तौ श्रुताया अपि लताया न हविष्ट्वं, किंतु 'ऐन्द्रवायवं गृह्णाति' इत्यादिवाक्येषु देवतासंयोगस्य सोमरसे श्रवणात् तस्यैव हविष्ट्वम्। तथा च देवतासंयोगात् पशोरेव कृत्स्नस्य देवतोद्देशेन त्यागः। यथा 'ऐन्द्रं पयोऽमावास्यायां' इति देवतासंयोगात् कृत्स्नस्य पयसस्त्यागः, न ह्यवदानमात्रस्य तद्वत् इति पूर्वः पक्षः।) **इति प्राप्ते ब्रूमः**। 'खण्डनं प्राकृतार्थं हि हृदयादिषु दृश्यते। तस्मात् तत्प्रकृतित्वेन देवतासंगतिः पशोः॥' हृदयादिशब्दा हि मांसविशेषवचनाः, न युक्तं यत् पशुप्रदेशलक्षणार्थतां नीयन्ते, हृदयादीनामेव अवदानोपपत्तेः। अवदानं च प्रकृतौ हविःसंस्कारार्थं, इति इहापि अवदानं हविष एव युक्तं, तच्च हृदयादिषु दृश्यते, इति हृदयादीनामेव हविष्ट्वं निश्चीयते। न च उत्पत्तिवाक्यशिष्टपशुविरोधः, तस्य हृदयादिप्रकृतित्वेन यागसाधनत्वेनापि देवतासंबन्धोपपत्तेः। ( **सोम**— तथा च सूक्तहविषोरिति व्याकरणस्मृतौ हविःपदं हविस्तत्प्रकृतिसाधारणं न्यायानुसारात् व्याख्येयम्।) यदि हि प्रणाड्यां प्रमाणं न स्यात्, ततः पशुरेव साक्षाद्दीयेत। अस्ति तु प्रमाणं हृदयादिषु अवदानवचनं विशसनवचनं च। तस्मात् हृदयादीनि हवींषि देवतायै देयानि, तेभ्य एव च ह्यवदानं गृहीत्वा हूयते, तत्प्रकृतिश्च पशुः।

**सोम**— सोमयागविषयबाधव्युत्पादनानन्तरं तदङ्गभूतेषु पश्वादिषु मध्यपूर्वार्धादिबाधो विचार्यते इति **पादान्तरत्वं आनन्तर्यं** चेत्याहुः। पशोर्हविष्ट्वाभावात् 'पशुर्हव्यं करोतु मे' इति **याज्ञिकानां** ऊहप्रकारश्चिन्त्यः। **सूत्रार्थस्तु**– पशोः कृत्स्नस्यैव देवतासंबन्धित्वेन चोदितत्वात् स एव एकं हविः, इति पूर्वः पक्षः।

**वि**— 'पशुः कृत्स्नो हविः किंवा प्रत्यङ्गं हविरन्यता।, आद्यश्चोदनया, मैवमवदानपृथक्त्वतः॥' तस्मात् प्रत्यङ्गं हविर्भेदः।

**भाट्ट**— 'अग्नीषोमीयं पशुमालभेत' इत्यत्र **यद्यपि** उत्पत्तिवाक्ये पशोरेव पुरोडाशवत् देवतासंबन्धित्वेन हविष्ट्वप्रतीतिः। अतश्च तेनैव अतिदेशप्राप्तपयोबाध इत्याभाति, **तथापि** 'पशुं विशास्ति, लोहितं निरस्यति, शकृत् संप्रविध्यति, वपामुद्धरति, कुम्भ्यामङ्गानि पचति, हृदयशूलेन हृदयं ( पचति )' इत्यादिसंस्कारवाक्यपर्यालोचनया सोमस्येव स्वावयवद्वारा साधनत्वं इत्यवसीयते। युक्तं च काष्ठादीनां ज्वालाद्वारेव सति तात्पर्यग्राहकप्रमाणे परंपरया साधनत्वम्। व्यापारेण व्यापारिणोऽन्यथासिद्ध्यभावात्। नहि विशसनादौ पशुत्वं प्रत्यभिज्ञायते, येन तत्सत्त्वेऽपि तस्यैव साधनत्वं कल्प्येत। त्वगादिप्रत्यक्षेणापि पशुसंबन्धित्वानुमानमात्रम्। अन्यथा विनष्टः पशुः इति

प्रत्ययानुपपत्तेः । अतोऽत्र विशसनादिवाक्यानुरोधात् पशोः प्रदेयप्रकृतित्वमेव, न तु साक्षात्प्रदेयत्वं, तत् स्वावयवादीनामेव, इति त एव पयोबाधकाः । तेष्वेव पयोधर्माः ।

**न्यायविन्दुः**— 'अग्नीषोमीयं पशुं' इत्यत्र तद्धितेन पशोरेव देवतान्वयबोधनात् समस्तस्य पशोः पुरोडाशवत् त्यागः, 'हृदयस्याग्रेऽवद्यति' इत्यादीनि एकादश अवदानस्थानानि मध्यपूर्वार्धवत् । तस्मात् पशुरेकं हविः, **इति प्राप्ते**, अवदीयमानत्वात् हृदयादीनामेव हविष्ट्वम् । अवदानं हि हविष एव संस्कारः । पशुस्तु हृदयादिप्रकृतित्वेन देवतान्वयी । तस्मात् हृदयादीन्येव देवतायै देयानि, तेभ्य एव द्व्यवदानग्रहणं इति सिद्धान्तः ।

**मण्डन**— 'पशौ हविः स्यात् पृथगङ्गमङ्गम् ।'

**शंकर**— 'हृदयादि पशौ हविः ।'

**अग्नीषोमीये पशौ प्लक्षशाखाया निवेशः ॥**

अग्नीषोमीये पशौ 'प्लाक्षमुत्तरं बर्हिर्भवति समेधस्यैव पशोरवद्यति' इति श्रुतं प्लाक्षशाखामयं बर्हिः संनिहिते सवनीयपशौ उत्कृष्येत उत्तरपदविशेषणेन सवनीयपशोरेवोपस्थितेः, 'यदातिथ्याबर्हिस्तदग्नीषोमीयस्य' इति वाक्यस्यावान्तरप्रकरणाद्बलीयस्त्वाच्च । पञ्चावत्तावरुद्धे जामदग्न्यप्रयोगे असंभवन्निवेशस्य प्राकरणिकस्यापि चतुरवत्तस्योत्कर्षदर्शनात्, **इति प्राप्ते**, उत्तरशब्दस्योत्तरपरत्वङ्गे लक्षणापत्तेः उत्तरवाक्ये एव तस्यावदानाधारत्वेन विनियोगविधानात् भिन्नकार्ययोर्बाध्यबाधकभावाभावादनुत्कर्षः । **संकर्ष.** १।३।१४.

**अग्नीषोमीये पशौ मैत्रावरुणस्यास्ति भक्षः ॥**

**अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् । १०।७। ६।१८ ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । अस्ति तत्र मैत्रावरुणः ऋत्विक् । तं प्रति संदेहः, किं तस्य चोदकप्राप्तः शेषभक्षोऽस्ति नेति । किं प्राप्तं ? अप्राकृतोऽसौ, न तस्य भक्षे क्रियमाणे प्रकृतिवत् कृतं भवति । तस्मात् अप्राकृतत्वात् मैत्रावरुणस्य अभक्षत्वम् ।

**स्याद्वा होत्रध्वर्युविकारत्वात् तयोः कर्माभिसंबन्धात् । १९ ॥**

**भाष्यं**— स्याद्वा मैत्रावरुणस्य भक्षः । प्रैषेषु हि असौ अध्वर्युविकारः, अनुवचनेषु होतुः, 'तस्मान्मैत्रावरुणः प्रेष्यति चानु चाह' इति । अतस्तस्य तयोः कर्माभिसंबन्धात् अर्थापत्त्या (सः) भक्षं लभते । तस्मात् सभक्षः स्यात् इति ।

**शा**— अध्वर्युहोतृसंस्कारार्थत्वाद्भक्षस्य मैत्रावरुणे प्रैषकरणात् अध्वर्युकार्यं, अनुवचनकरणाच्च होतृकार्यं कुर्वाणे अस्ति भक्षप्राप्तिः ।

**सोम**— यथा वनिष्टुना अग्नीध: इडाभक्षबाधः एवं मैत्रावरुणस्यापि इडाभक्षबाधः इत्युत्थिते: **संगतिः** । यद्यपि 'वनिष्टुमग्नीधे' इति द्वितीयासंयोगात् हविःप्रतिपत्त्यर्थं भक्षणं, तथापि तत्र अध्वर्य्वादिकर्तृनियमाम्नानबलात् नियमांशे तत्संस्कारार्थमपि भवति, यथा 'प्रयाजशेषेण हवींष्यभिघारयति' इत्यभिघारणस्य प्रयाजशेषप्रतिपत्त्यर्थस्यापि हविराधारतानियमात् हविःसंस्कारार्थत्वं तद्वत् । एवं च यथा हविःसंस्कारो मा विलोपि इति संनिहितसर्वहविःषु अभिघारणं, न तु एकस्मिन्, एवमिहापि कर्तृसंस्कारो मा विलोपि इति मैत्रावरुणस्यापि भक्षणम् ।

**वि**— 'मैत्रावरुणनाम्नोऽत्र भक्षो नाम्न्यस्ति वा, नहि । अप्राकृतत्वा, दध्वर्युहोत्रन्तर्भावतोऽस्ति सः ॥' सः भक्षः ।

**भाट्ट**— प्रकृतौ इडाभक्षणादयः शेषभक्षाः द्वितीयया शेषप्रतिपत्त्यर्था अपि प्रयाजशेषाभिघारणन्यायेन (४।१।१४।३३-३९) कर्तृसंस्कारार्था अपि इत्युक्तं षष्ठे (६।४।३) । कर्तुश्च तत्तत्कार्यापूर्वसाधनत्वेन उद्देश्यता, न तु अध्वर्य्वादित्वरूपेण । अतश्च पशौ मैत्रावरुणोऽपि प्राकृतकार्यापन्नत्वात् भक्षयेदेव । स हि तत्कर्तृकप्रैषानुवचनसंज्ञानां 'होता यक्षत्' इत्यादिप्रैषाणां प्राकृताध्वर्युकर्तृकयजेत्यादिप्रैषकार्यापन्नतया अध्वर्युकार्यापन्नः । आज्यभागाद्यनुवाक्यानां च होतृकर्तृकाणां मैत्रावरुणेन पाठात् होतृकार्यापन्नोऽपि । अतः कार्यापन्नत्वात् सोऽपि भक्षयेत् ।

**न्यायबिन्दुः**— पशौ मैत्रावरुणस्यापूर्वत्वात् नेडाभक्षः, **इति प्राप्ते**, प्रैषानुवचनरूपाध्वर्युहोतृकार्यकारित्वात् कर्तृसंस्कारार्थो भक्षो भवतीति सिद्धान्तः ।

**मण्डन**— 'अस्त्येव मैत्रावरुणस्य भक्षः।'

**शंकर** — 'इडाभक्षः प्रशास्तुः स्यात्।' प्रशास्तुः मैत्रावरुणस्य।

**अग्नीषोमीये पशौ मैत्रावरुणस्यैकः एव भागः ॥**

**द्विभागः स्याद् द्विकर्मत्वात्। १०।७।७।२०॥**

**भाष्यं**— अथेदानीं मैत्रावरुणमेव प्रति भवति संदेहः, किं द्विभागो मैत्रावरुणः, उत एकभाग इति। किं प्राप्तं? द्विभागः स्यात्। अध्वर्युविकारत्वात् अध्वर्युभागं प्राप्नोति, होतृविकारत्वात् होतृभागं प्राप्नोति। तस्मात् द्विभागः स्यादिति।

**एकत्वाद्वैकभागः स्याद्, भागस्याश्रुतिभूतत्वात्। २१॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति। न द्विभागः स्यात्, एकभागो भवेदिति। कुतः? भागस्याश्रुतिभूतत्वादिति। नेहाध्वर्युभागो मैत्रावरुणस्य श्रूयते, नापि होतृभागः। यदि हि उभौ श्रूयेयातां, एकेन भागेन कृतेऽपि संस्कारे द्वितीयोऽपि वचनप्रामाण्यात् स्यात्। चोदकेन तयोः प्राप्तिर्गम्यते। तत्र एकत्वान्मैत्रावरुणस्य एकेनैव भागेन यावती प्राकृती शक्तिः, सा कृता, इति द्वितीयभागं चोदको न प्रापयति। तस्मादेकभागः स्यादिति।

**शा**— किमयं मैत्रावरुणः द्वौ भागौ भक्षयेत्, उत एकमिति। द्वयोः कर्म कुर्वन् द्वौ लभेत, **इति प्राप्ते ब्रूमः**, 'अध्वर्योर्यावती तृप्तिर्होतुस्तृप्तिश्च यावती। तन्त्रेण तावती तृप्तिर्भागेनैकेन लभ्यते॥' तस्मादेकभागः स्यात्।

**सोम**— पूर्वोक्तोपजीवनेन अत्र विशेषचिन्तनात् **संगतिः**। संस्कारो हि तृप्तिलक्षण एव, नान्यः। तृप्तिश्च एकेनापि भागेन प्राकृती जायते, इत्येकेनापि भागेन संस्कारसिद्धेः, न भागद्वये प्रमाणमस्ति।

**वि**— 'द्विभाग एकभागो वा, द्विभागः स्यात् द्विकर्मतः।, एकः पुमैक्यतो नो चेद् वैषम्यं प्रकृतावपि॥'

**भाट्ट**—तत्रापि उभयकार्यापन्नत्वात् भागद्वयं प्राप्नुयात्, **इति प्राप्ते**, तत्तत्कार्याङ्गभूतायास्तृप्तेः तन्त्रेणोपपत्तेः, प्रकृतौ च यावत्कर्तॄणां समविभागस्यैव सत्त्वेन इहापि तथैव प्राप्तेः एक एव भागः।

**न्यायबिन्दुः**—मैत्रावरुणस्य द्वौ भागौ, **इति प्राप्ते**, तन्त्रेण अध्वर्युहोतृतृप्तिहेतोरेकस्यैव भागस्य भक्षार्थं दानं इति सिद्धान्तः।

**मण्डन**— 'एकस्तु मैत्रावरुणस्य भागः।'

**शंकर**— 'भागस्तस्यैक एव च।' तस्य प्रशास्तुः।

**अग्नीषोमीये पशौ यागसमाप्त्युत्तरं लौकिके यूपस्पर्शे प्रायश्चित्तम् ॥**

**लौकिके दोषसंयोगादपवृक्ते हि चोद्यते निमित्तेन, प्रकृतौ स्यादभागित्वात्। ९।३।३।९॥**

**भाष्यं**—अस्ति ज्योतिष्टोमः। तत्र अग्नीषोमीये पशौ आम्नायते 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्, यदि द्वौ एतौ ते वायू इति, यदि बहून् एते ते वायवः इति' (इति)। तत्रैषोऽर्थः सांशयिकः लौकिके वैदिके च यूपोपस्पर्शने प्रायश्चित्तं, उत वैदिके, अथवा लौकिके इति। किं प्राप्तं? लौकिके वैदिके वा अनियमः इति। कथं? विशेषानाश्रयणात्। नहि विशेष आश्रीयते लौकिके वैदिके वेति। तस्मादनियम इति। वैदिके वा। तथा हि अस्य मन्त्रस्य समीपगतेन प्रयोजनाभिसंबन्धो भविष्यति। इतरथा दूरगतेन अप्रकृतेन परोक्षः संबन्धः स्यात्। तस्मात् वैदिके यूपोपस्पर्शने इदं प्रायश्चित्तमिति। **एवं प्राप्ते ब्रूमः**। लौकिके उपस्पर्शने भवितुमर्हति, न वैदिके। कुतः? दोषसंयुक्तं हि श्रूयते इदं प्रायश्चित्तं 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते, यद्यूपमुपस्पृशेत् यज्ञस्य दुरिष्टमामुञ्चते, तस्माद्यूपो नोपस्पृश्यः' इत्यभिधाय 'यद्येकं यूपमुपस्पृशेत्' इति समाम्नायते। तस्मात् यत्र दोषः, तत्र प्रायश्चित्तमिति। लौकिके च दोषः, न वैदिके। वैदिके हि अञ्जनमुच्छ्रयणं च कर्तव्यमुक्तम्। न तत् कर्तव्यं सत् अकर्तव्यं भविष्यति। सावकाशं चोपस्पर्शनप्रतिषेधवचनं लौकिके अविरुद्धं भविष्यति। अपि च अपवृक्ते कर्मणि चोद्यते निमित्तेन। कथं? 'यूपो वै यज्ञस्य दुरिष्टमामुञ्चते' इति। यत् किल यज्ञे दुरिष्टं तत् यूपे आमुञ्चते, यत् सुकृतं तद्यजमाने इति। सर्वमिदं प्रशंसार्थं, न विधिपदान्तरेण संबध्यते। इष्टशब्द एव एको विधिपदैः संबन्धमुपैति, प्रसंशापदैरपि संबध्यमानः इह संनिहितो भवति।

 अग्नीषोमीये पशौ यागसमाप्त्युत्तरं

संनिहितत्वाच्च पदान्तरैः संबध्यते । यथा 'दण्डो मनोहरो रमणीयश्च, प्रहर शीघ्रं ' इति रमणीयमनोहरसंबन्धेऽपि सति संनिहितत्वात् 'प्रहर शीघ्रं' इत्येतैः पदैः संबध्यते । एवमिष्टशब्दोऽपि संनिहितत्वात् संबध्यते । इष्टे यदि यूपमुपस्पृशेत् एष ते वायो इत्येवमादि ब्रूयादिति । सोऽयं इष्टः इति अपवर्गस्य वक्ता शब्दः । अपवृक्ते चेत् उपस्पर्शनं मन्त्रस्य निमित्तं, व्यक्तं न वैदिकम् । तस्मात् लौकिके यूपोपस्पर्शने प्रायश्चित्तं, न प्रकृतौ वैदिके । अभागित्वात् प्रतिषेधस्य अपवर्गस्य च, वैदिके न संभवतीति । ९॥

**टुप्**— येयं सूत्रावयवव्याख्या 'अपवृक्ते हि चोद्यते ' इति ' यूपो वै यज्ञस्य दुरिष्टं ' ' यद्येकमुपस्पृशेत् ' इति वाक्ययोः एकवाक्यतया, सा न युक्ता । अर्थैकत्वादेकवाक्यत्वं इति हि उक्तम् (२।१।१४।४६)। अर्थभेदात् भिन्ने एते वाक्ये । स्तुतिस्तुत्यभेदाच्चार्थभेदः । यूपो वै यज्ञस्य इत्येतया निन्दया प्रतिषेधः संबध्यते 'तस्मान्नोपस्पृश्यः' इति । यद्येकं इति अस्य अपरा स्तुतिः । न च दुरिष्टिशब्दः समाप्तिवाचकः । इष्टशब्देन सा उच्येत वा न वा । सोपपदस्तु समुदायप्रसिद्ध्या पापवचनः । दुरिष्टं पापं इत्यर्थः । यथा दुष्कृतम् । न च उपस्पर्शनं निमित्तत्वेनानूद्यमानं दुरिष्टेन उपपदेन विशेषयितुं न्याय्यं आर्तिवत् । तस्मादन्यथा वर्ण्यते । अपवृक्ते हि प्रतिषेधे सति चोद्यते मन्त्र उपस्पर्शनेन निमित्तेन । प्रतिषेधो हि उपरमः अनितिकर्तव्यतारूपः, न प्रयोगाङ्गम् । यच्च इतिकर्तव्यतारूपं, तत् प्रकरणेन गृह्यते । प्रतिषेधस्तु पुरुषार्थः । स हि स्वभावात् विचरन् कदा चिदुपस्पृशेदपि कर्ममध्यगतो वा । तत्र प्रतिषिध्यते नोपस्पृशेदिति । तत्र हि पापमाबद्धमिति । यस्य च प्रतिषेधः, तस्य निमित्ते प्रायश्चित्तं ब्रह्महणः इव । तत्र एवं वचनव्यक्तिर्भवति , यद्येकमुपस्पृशेत् एवं ब्रूयादिति । प्रकरणात् यूपं इत्यनुवादः । न च शक्या संख्या उपस्प्रष्टुं इत्यर्थाच्च यूपानुवादः । यूपस्तु निमित्तभूतो ह्यशक्यः संख्यया विशेषयितुं ग्रहवत् । इदमेवास्याः स्मृतेर्मूलं 'यूपचित्याद्युपस्पर्शने स्नायात्' इति । **ननु** प्रतिषेधोऽपि प्रकरणात् कर्माङ्गं, 'नानृतं वदेत्' इतिवत् इति चेत्, **उच्यते**, द्विसाधनके कर्मणि व्रीहिमयं संकल्प्य यवमयो न देयः इत्युक्तम् । इह तु न द्वौ प्रयोगौ, सोपस्पर्शनकः अनुपस्पर्शनकश्च , यत्र अनुपस्पर्शनके स्पर्शप्रतिषेधः अङ्गं स्यात् । यत्तु तक्षणाद्युपस्पर्शनं , तद्वाचनिकं तक्षणादिकर्तरि च ।

इदमधिकरणं उदाहरणप्रसङ्गेन । पूर्वश्चोहः प्रातिपदिकविषयः । इतःप्रभृति वचनविषय एव । पाशं पाशौ पाशान् इतिवत् ।

**शा**— प्रायश्चित्तं वैदिके एव **इति प्राप्ते उच्यते,** ' दोषनिर्हरणायेदं प्रायश्चित्तं विधीयते । दोषश्च प्रतिषिद्धे स्यात् प्रतिषेधश्च लौकिके ॥ ' तस्मात् लौकिके प्रायश्चित्तम् । प्रासङ्गिकमिदमधिकरणम् ।

**सोम**— पूर्वाधिकरणे पूर्वपक्षलिङ्गदर्शनेन 'यद्येकं' इत्यादिवाक्यं प्रस्तुतं तत्प्रसङ्गात् इदमधिकरणम् । **सूत्रार्थस्तु**—लौकिके उपस्पर्शने अयं विधिः स्यात् दोषसंयोगात् । कथं दोषसंयोगः ? हि यस्मात् अपवृत्ते प्रतिषिद्धे स्पर्शने तेन निमित्तेन विधीयते मन्त्रः प्रकृते क्रतौ प्रतिषेधस्याभागित्वात् । तस्मात् दोषनिर्घातार्थत्वात् लौकिके एव स्यात् इति ।

**वि**—' यूपस्पर्शे वैदिके वा लौकिके मन्त्रकीर्तनम् । , आद्यः प्रकरणा, न्नैवं लौकिके प्रतिषेधतः ॥ '

**भाट्ट**— दैक्षे पशौ ' यूपो वै यज्ञस्य० नोपस्पृश्यः यद्येकं यूप० वायव: ' इति श्रुतम् । तत्र यूपस्य प्रकरणादिना प्राप्तत्वात् तत्संख्याकस्पर्शे एवेदं मन्त्रविधानं इत्यविवादम् । स्पर्शः परं विहितः अविहितो वा इति चिन्तायां, प्रकरणादिना अश्वप्रतिग्रहेष्टिन्यायेन ( ३।४।१४ भाट्ट. ) च विहितस्पर्शाङ्गतया तन्निमित्तकतया वा नैमित्तिकमिदं कर्माङ्गतया विधीयते । नहीदं दोषनिर्घातार्थं , येन विहिते तदभावादप्रवृत्तिः, यज्ञस्य विहितत्वेन दुरिष्टजनकत्वासंभवेन अर्थवादमात्रत्वात् । यदि तु अत्र स्पर्शनिषेधाधिक्यात् यदिशब्दोपादानाच्च अश्वप्रतिग्रहेष्टिवैलक्षण्यमाशङ्क्येत, ततोऽस्तु अयं विहितस्यैव यूपान्वारम्भादेः स्पर्शस्य ग्रहणाग्रहणवत् पाक्षिकत्वसिद्ध्यर्थो निषेधः । ततश्च तत्करणपक्षे अयं मन्त्रपाठः अङ्गं इति यदिशब्दाविरोधः । यदि तु अष्टदोषदुष्टविकल्पभिया निषेधस्य रागप्राप्तयूपस्पर्शविषयत्व-

माशङ्क्येत, ततो निषेधस्यापि क्रतुमध्यप्रसक्तगमनागमनादिप्रयुक्तयूपस्पर्शविषयत्वेन 'नानृतं वदेत्' 'न स्त्रियमुपेयात्' इत्यादिवत् क्रत्वङ्गत्वोपपत्तेः स्पर्शस्य क्रतुवैगुण्यापादकत्वावसायात् तत्प्रायश्चित्तत्वेन अयं मन्त्रविधिः क्रत्वर्थ एव । एवं च यूपानेकत्वे न्यायादेव 'एतौ ते' इत्याद्यूहो मन्त्रत्वसिद्ध्यर्थं पुनः पठ्यते । न चैवमपि ऊहितमन्त्रपाठमात्रस्य प्रयोजनालाभेऽपि 'यदि द्वौ' इत्यादिविनियोगप्रयोजनाभावः, दैक्षसंनिधिपठितानां त्रयाणामेषां पाशाधिकरणन्यायेन ( ९।३।५।१५-२० ) तत्रैव विकल्पप्रसक्तौ उत्कर्षसिद्ध्यर्थत्वात् । **इति प्राप्ते,** वस्तुतो यज्ञस्य पापापरपर्यायदुरिष्टजनकत्वाभावेऽपि निन्दार्थवादे यज्ञप्रयोगजन्ययूपनिष्ठदुरिष्टस्य यूपस्पर्शकर्तरि संचारसंकीर्तनेन अस्य निषेधस्य यज्ञप्रयोगसमाप्त्युत्तरकालीनत्वावगमात् पुरुषार्थत्वावगतेः। अस्यापि तद्दोषनिवारणार्थस्य प्रायश्चित्तस्य लिङ्गेन प्रकरणं बाधित्वा पुरुषार्थत्वमेव । अत एव सूत्रभाष्यस्वारस्यात् यूपकार्यापवर्गोत्तरमेवेदं प्रायश्चित्तं, न तु **वार्तिकादि**स्वारस्यात् क्रतुमध्यगतलौकिकस्पर्शेऽपि इति ध्येयम्। अत एव यज्ञस्यैव यूपनिष्ठदोषजनकत्वात् यज्ञात् पूर्वं कारणाभावेन अशुचित्वापरपर्यायदोषाभावात् क्रतुमध्यगतलौकिकस्पर्शेऽपि न दोषः । अत एव 'यूपचित्याद्युपस्पर्शने स्नायात्' इति स्मार्तमपि प्रायश्चित्तं बहिःक्रतुविषयमेव, निषेधस्य मूलान्तराकल्पनात् । अस्तु वा तस्य सामान्यविषयत्वात् अन्तःक्रतुगतलौकिकविषयत्वमपि । तदा तु ऋत्विक्कर्तृको विहितोऽपि स्पर्शः शामित्रवत् निषेधविषय एव । तमतिक्रम्य प्रवृत्तस्य आर्त्विज्यविधानोपपत्तेः । सर्वथा यूपकार्यापवर्गे एवायं पुरुषार्थो मन्त्रपाठः । अत एव निषेधवाक्यप्राप्तयूपमनूद्य मन्त्रत्रयमिदं स्वतन्त्रमेव तत्तत्संख्याकस्पर्शे निमित्ते तज्जन्यदोषनिर्घातार्थं विधीयते, न तु कश्चित् कस्य चिदूह इति सिद्धम् ।

**न्यायबिन्दुः**— 'यद्येकं यूपमुपस्पृशेत् एष ते वायो इति ब्रूयात्' इति यूपस्पर्शप्रायश्चित्तं लौकिके वैदिके चाविशेषात्, प्रकरणाद्वा वैदिके एव फलाकल्पनलाघवात्, **इति प्राप्ते,** स्पर्शनिषेधस्य लौकिकविषयत्वात् तद्दोषपरिहारस्य प्रायश्चित्तमपि तत्रैवेति सिद्धान्तः ।

**मण्डन**— 'स्युर्लौकिके स्पर्शन एव मन्त्राः ।'

**शंकर**— 'लोके यूपस्पृशौ दोषः ।'

**अग्नीषोमीये पशौ वपायामिव सर्वेष्वङ्गेषु पञ्चावत्तत्वम् ॥**

**यथाश्रुतीति चेत् ।** १०।७।२०।७२ ॥

**भाष्यं** — अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमाम्नायते 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति । तत्र एषोऽर्थः सांशयिकः किं वपायां श्रूयमाणं पञ्चावत्तं अङ्गापूर्वे चतुरवत्तं निवर्तयति, उत नेति। किं प्राप्तं ? इति चेत् संशयः, नेति। कुतः ? यस्मिन् श्रूयते पञ्चावत्तं तत्रैव चतुरवत्तं निवर्तयति, नान्यत्र । यथा क्रत्वन्तरे न निवर्तयति, एवमङ्गापूर्वेष्वपि पञ्चावत्तश्रुतिर्न निवर्तयितुमर्हति ।

**टुप्**— 'पञ्चावत्तैव वपा कार्या' इति । किमत्र विधीयते त्वत्पक्षे, येन अङ्गेष्वपि मन्यसे ? नहि अत्र अवदानोद्देशेन संख्या विधीयते, किंतु वपोद्देशेन पञ्चावदानम् । उद्देश्यविशेषणस्य चाविवक्षा उक्ता, नोद्देश्यस्यापि । इतरथा ग्रहस्यापि अविवक्षितत्वात् चमसेष्वपि संमार्गः स्यात् । तस्मात् वपायागापूर्वप्रयुक्तमिदम् ।

**न चोदनैकत्वात् ।** ७३ ॥

**भाष्यं**— नैतदेवम् । एका ह्येषा चोदना 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्र प्रकरणे पञ्चावत्तं श्रुतम् । अतः प्रकरणात् अङ्गापूर्वे भविष्यति । आह, ननु वाक्यात् वपायां भवितुमर्हतीति । नेत्युच्यते । वपा हि द्रव्यम् । न तत्संबन्धे प्रयोजनमस्तीति । उच्यते । पञ्चावत्ततां वपाप्रयोगवचनः उपसंहरिष्यति । तथा न दोषो भविष्यतीति । अत्रोच्यते । एवं सत्यपि अङ्गापूर्वे पञ्चावत्तं सिध्येत् । कथं? एका हि सा चोदना, अङ्गयागो वपायागश्च । तेन चेत् पञ्चावत्तं संबध्यते, तदा अङ्गेष्वपि भवितुमर्हति । ननु च वपासंबन्धात् वपैव पञ्चावत्ता, नाङ्गानीति । उच्यते । नैतदेवं वचनं वपैव पञ्चावत्तेति । कथं तर्हि ? पञ्चावत्तैव वपेति । यत एवकारकरणं ततोऽन्यत्रावधारणम् । न चाविशेषेण या पञ्चावत्तताऽऽप्तिः सा शक्या वपा-

संबन्धेन निवर्तयितुम् । निवर्तकस्य शब्दस्याभावात् । तस्मादङ्गेषु न चतुरवत्तम् । अपि च एवंजातीयकेषु अङ्गेषु पञ्चावत्ते ज्ञाते ततोऽपरा चोदना 'तानि द्विर्द्विरवद्यति' इति । वपाग्रहणं तत्र हविर्लक्षणार्थं प्राथम्यादवसरप्राप्तं श्रूयते । विधित्सिते हि तस्मिन् वाक्यभेदप्रसङ्गः । तस्मात् अङ्गेष्वपि पञ्चावत्तमेवेति ।

**टुप्**—उच्यते । अवत्तेत्यनेन निष्ठान्तेन द्रव्यमवदानसंयुक्तं स्त्रीलिङ्गं एकसंख्यायुक्तं चोच्यते । तच्चानूद्य पञ्चसंख्या विधीयते । तस्य चानूद्यमानस्य यदि लिङ्गसंख्ये विवक्ष्येत, वपया च विशिष्येत, वाक्यभेदः स्यात् ग्रहाधिकरणन्यायेन ( ३।१।७ ) । तस्मादवदानप्रातिपदिकस्य पञ्चसंख्या विधीयते । सा च विधीयमाना प्रकरणात् यागेन गृह्यते । तच्च प्रकरणाविशेषात् सर्वावदानेषु निविशते । **ननु** एवकारश्रवणात् अन्यनिवृत्तिर्गम्यते, न पञ्चसंख्याविधानम् । यथा 'षड्विंशतिरित्येव ब्रूयात्' इति चतुस्त्रिंशद्व्यावृत्त्यर्थं, न षड्विंशतिविधानार्थं, एवमिहापि चतुरवदाननिवर्तकमिदं, न पञ्चावत्ताविधायकम् । तस्मात् पञ्चावदानमपि न प्राप्नोति, अन्यपरत्वात् वाक्यस्य । **उच्यते** । पञ्चसंख्यैवात्र विधीयते ( पञ्चत्वस्य प्राप्त्यभावेन अनुवादासंभवात् तद्-ग्रहणं प्रमादपठितं स्यादितरथा ) तस्यां च विधीयमानायां चोदकप्राप्तो नैव भवति इत्यर्थादेवकारार्थो लभ्यते, सोऽनुवादः । यत्र तु द्वे संख्ये प्राप्नुतः, तत्र एवकारः अन्यतरत् निवर्तयेत् । तत्र एवकारार्थः परिगृह्यते । इह तन्नास्ति ।

**शा**—( सिद्धान्तश्लोकः ) 'वपामुद्दिश्य चोद्येत यदि पञ्चावदानता । स्यादेवमवदाने तु पञ्चसंख्याऽत्र चोद्यते ॥' तस्मात् सर्वविषयं पञ्चत्वं, तच्च अङ्गेषु द्व्यवदानवचनात् उपस्तरणविवृद्ध्या अभिघारणविवृद्ध्या वा संपद्यते । तस्मादङ्गेष्वपि पञ्चावदानम् ।

**सोम**—यवानां बाधेऽपि हृदयादिषु न चतुरवदानबाधः इत्युत्थितेः **संगतिः** । वपायामिव हिरण्यशकलेन अङ्गावदाने पञ्चत्वं इति पक्षान्तरमुक्तं **तन्त्ररत्ने** । ( न च वपोद्देशेन अवदानस्य संख्यायाश्च विधाने वाक्यभेदप्रसक्तिः, विधिव्यापारं विनैव समासादेव संख्यावदानवैशिष्ट्यसिद्धौ विध्यावृत्तिलक्षणवाक्यभेदानवकाशात् । ) वस्तुतस्तु नात्र पञ्चसंख्याविशिष्टावदानान्तरविधिः, किंतु वपोद्देशेन शब्दतः पञ्चसंख्याविशिष्टावदानविधिप्रतीतावपि प्राप्ताप्राप्तविवेकेन पञ्चसंख्यामात्रे विधेः पर्यवसानं, यथा 'लोहितोष्णीषाः' इत्यादौ । अन्यथा तत्रापि समानत्वात् लौहित्यमात्रविधिर्न स्यात् । एवं च तात्पर्यगत्या अवदाने संख्याविधिपर्यवसानेऽपि शब्दतः तथात्वाभावात् न प्रसरभेदापत्तिः । उक्तरीत्या च 'तानि द्विरवद्यति' इति वाक्यानर्थक्यप्रसङ्गात्, वपाग्रहणस्य पाशुकहविर्मात्रोपलक्षणार्थत्वात् हृदयादिषु पञ्चावदानसिद्धेश्च । **सूत्रार्थस्तु**—यथाश्रुति यत्र पञ्चावत्तत्वं श्रूयते वपायां, तत्रैव प्राकृतं चतुरवत्तं निवर्तयति, नान्यत्र इति पूर्वः पक्षः ।

**वि**—'वपायामेव किंवाऽन्येष्वपि पञ्चावदानता ।, वपोद्देशादाद्यपक्षोऽवदानोद्देशतोऽन्तिमः ॥' सर्वेषां यजमानानां चतुरवत्तित्वं पञ्चावत्तित्वं च गोत्रभेदेन स्मृतिकारैः पठ्यते 'जामदग्न्या वत्सविदा वार्ष्टिषेणाश्च ते त्रयः । पञ्चावत्तिन एवान्ये सर्वे चतुरवत्तिनः ॥' इति । ( 'जामदग्न्या वत्सविदा वार्ष्टिषेणास्तथैव च । भार्गवाश्च्यवना और्वाः पञ्चावत्तिन ईरिताः ॥' इति गोभिलगृह्यसूत्रभाष्ये समुपलभ्यते । )

**भाट्ट**—दैक्षे पशौ 'यद्यपि चतुरवत्ती यजमानः पञ्चावत्तैव वपा कार्या' इति श्रुतं पञ्चावदानं वपायामेव, उत अङ्गेष्वपि इति चिन्तायां, नात्र अवदानानुवादेन पञ्चत्वविधिः । तथात्वे हृदयादिवाक्यैः तेषामेवावदानसंबन्धेन हविष्ट्वात्, वपायाः इतराङ्गवत् तदभावेन अवदानाप्राप्तेः, वपाश्रपणस्य अनुवादत्वानुपपत्तेः । एकस्मिन् पदे उद्देश्यविधेयभावाङ्गीकारे एकप्रसरताभङ्गापत्तेश्च । अतोऽत्र अवदानमेव हृदयादिवाक्ये इव वपोद्देशेन हविष्ट्वसिद्ध्यर्थं विधीयते, पञ्चत्वं तु जामदग्न्यादीनां अतिदेशेनैव प्राप्तत्वात् पाक्षिकानुवादः । वस्तुतस्तु एवकारश्रवणात् **यद्यपि** 'चतुरवत्ती' इत्यनुवादाच्च जामदग्न्याजामदग्न्यसाधारण्येन नित्यत्वसिद्ध्यर्थं पञ्चत्वस्यापि विधिप्रतीतेर्विशिष्टविधिरेवायं, **तथापि** चमसाधिकरणन्यायेन (३।१।८।१६–१७) वपाभ्यासापूर्वसाधनत्वस्यैव लक्षणात् नाङ्गेषु पञ्चावदानप्रसक्तिः । **न च**

अङ्गेषु तत्प्रसक्त्यभावे 'तानि द्विर्द्विरवद्यति' इति वाक्यस्यैव वैयर्थ्यापत्तेः, तत्परिहारार्थं वपाग्रहणस्यैव एकस्य प्रकृतहविर्मात्रोपलक्षणत्वं इति **वाच्यम्**। वपाग्रहणस्योपलक्षणत्वाभावेऽपि अङ्गेषु जामदग्न्यपक्षे पञ्चावदानप्रसक्तेः तत्संपादकतया प्राप्तत्रित्वबाधेन द्वित्वविध्युपपत्तेः वैयर्थ्याभावात्। **इति प्राप्ते**, पञ्चावदानवाक्ये एकप्रसरताभङ्गपरिहारार्थं पञ्चत्वविशिष्टावदानान्तरस्य प्राकृतकार्यापन्नस्य वपोद्देशेन विधानं, अतिदेशप्रवृत्तेः पूर्वप्रवृत्त्यङ्गीकारेण वा प्राकृतावदानस्यैव पञ्चत्वविशिष्टस्य वपोद्देशेन विधानम्। अत एव द्वितीयपक्षे पञ्चत्वांशे नित्यत्वसिद्ध्यर्थं विधिः, अवदानांशे च हविष्ट्वसिद्ध्यर्थं एकप्रसरताभङ्गपरिहारार्थं चेति द्रष्टव्यम्। उभयथाऽपि अवदानांशे अतिदेशप्रतिबन्धात् उपस्थितत्वाच्च हृदयादिवाक्येषु वपासंस्कारकस्यैवावदानस्य हृदयाद्युद्देशेन विधिः। **न च** वैपरीत्यमेव किं न स्यादिति **वाच्यम्**। अवदानानुवादेन पञ्चत्वविधौ एकप्रसरताभङ्गादेरेव नियामकत्वात्। न च उत्पत्तिशिष्टसंस्कार्यावरोधे संस्कार्यान्तरस्य निवेशायोगः, सोमसंस्कारार्थस्यैव अभिषवभक्षादेः पूतीकफलचमसाद्यर्थत्ववत् प्रधानभूतसंस्कार्यान्तरानुरोधेन विनियोगान्तरकरणे बाधकाभावात्। संस्कार्यस्य उत्पत्त्यनन्वयित्वेन कर्मभेदासाधकत्वात्। अतश्च वपासंस्कारकावदानस्यैव हृदयाद्युद्देशेन विधानात्, तस्य च पञ्चत्वविशिष्टतया, हृदयादिष्वपि नित्यं पञ्चावदानप्राप्तिः। तत्प्रकाराः परं तत्रतत्र व्यवस्थिताः। प्रकारबोधकवाक्येषु वपादितत्तद्द्रव्योद्देशेनैव तत्प्रकारविधानात् अवदानस्य च प्रकरणप्राप्तस्यानुवादात् इति **कौस्तुभे** विस्तरः। १०।७।१८.

**न्यायबिन्दुः**— अग्नीषोमीये पशौ श्रुतं 'यद्यपि चतुरवत्ती यजमानः, पञ्चावत्तैव वपा कार्या' इति। तत्र वपायामेव पञ्चावदानं न हृदयाद्यङ्गेषु चमसाधिकरणन्यायेन (३।१।१८) प्रातिपदिकार्थस्य विवक्षितत्वात् वपाऽपूर्वभेदाच्च, **इति प्राप्ते**, अवदानस्य प्राप्तत्वात् तदुद्देशेन पञ्चसंख्याविधिः, उद्देश्यविशेषणत्वात् वपा न विवक्षिता, तेन वपाग्रहणमुपलक्षणम्। **यद्यपि** 'पञ्चावत्ता' इति समस्तैकपदेन उद्देश्यविधेयभावः अयुक्तः, इति संख्याविशिष्टावदानमेव विधेयं, वपाग्रहणं च एवमर्थवत् भवति हृदयादिव्यावर्तनात्, **तथापि** एवं सति 'एकादश वै पशोरवदानानि, तानि द्विर्द्विरवद्यति' इति वचनं व्यर्थं स्यात्, प्रकृतित एव प्राप्तेः, पञ्चावत्तस्य वपामात्रविषयत्वात्। सर्वविषयत्वे तु पञ्चत्वसंख्यासिद्धये हविष्येऽपि त्र्यवदाने प्राप्ते द्व्यवदानवचनमर्थवत्। तस्मात् सकलवचनानर्थक्यात् वपाग्रहणमुपलक्षणं इत्येव युक्तम्। अतः अङ्गेषु द्व्यवदानवचनात् उपस्तरणविवृद्ध्या अभिघारणविवृद्ध्या वा पञ्चावदानसंपत्तिः इति सिद्धान्तः।

**मण्डन**—' पञ्चावदानं हृदयादिकेऽपि। '

**शंकर**—' पञ्चावत्तः पशुः सर्वः। '

**अग्नीषोमीये पशौ वाग्विसर्गः पौरोडाशिककर्मार्थे हविष्कृदाह्वाने कर्तव्यः ॥**

**पशौ च सपुरोडाशे समानतन्त्रं भवेत्। ११।३।८।१८ ॥**

**भाष्यं**—अग्नीषोमीये पशौ पशुः पुरोडाशश्च। तयोः पाशुकं पौरोडाशिकं च तन्त्रम्। अत्रापि सैव (पूर्वाधिकरणवत्) चिन्ता, किं पाशुककर्मार्थं हविष्कृदाह्वानकाले वाग्विसर्गः कर्तव्यः, उत पौरोडाशिककर्मार्थं इति। तथैव पूर्वोत्तरपक्षौ बोध्यौ। अयमपि अधिकरणप्रदेश एव। ननु नैव पशौ हविष्कृदस्ति, ओषध्यर्थत्वात्। सर्वार्था इत्येवं कृत्वा चिन्त्यते। कृत्वाचिन्तेयम्।

**शा**— अग्नीषोमीये पशौ पशुपुरोडाशः। तत्र तावदस्ति हविष्कृदाह्वानं, पशौ अपि अस्तीति कृत्वा चिन्त्यते, किं प्रथमे पशुकाले वाग्विसर्गः पुरोडाशकाले वेति। प्रासङ्गिकत्वात् पशुपुरोडाशस्य पाशुकेनैव वाग्यमेन कार्यसिद्धेः न वाग्यमेन कार्यम्। तस्मात् पशुकाले वाग्विसर्गः, इति मन्वानस्य उत्तरम्। वाग्यमोऽयं आरादुपकारकः। कर्तृसंस्कारस्त्वसौ। अतो विसृष्टवाचा क्रियमाणाः पौरोडाशिका: विगुणा भवेयुः। तस्मात् पुरोडाशकाले विसर्गः।

**सोम**— पाशुकेनैव कार्यसिद्धौ पौरोडाशिकपदार्थानां धर्मलोपाभावात् पूर्ववत् इह नान्ते वाग्विसर्गः इत्युत्थानात् **संगतिः**। हविष्कृदाह्वानस्य वाग्यमनावधिभूतकालोपलक्षणार्थत्वात्, उपलक्षणापायेऽपि उपलक्ष्यानपायन्यायेन

असत्यपि हविष्कृदाह्वाने वाग्विसर्गसंभवात् न चिन्ताऽनुपपत्तिः । **सूत्रार्थस्तु-** पशौ पुरोडाशे च समानतन्त्रता स्यात्, पाशुको वाग्यमः पौरोडाशिकाह्वानपर्यन्तमनुवर्तनीयः इति यावत् ।

**वि**—' पशुकाले पुरोडाशकाले वा वाग्विसर्जनम् ।, तन्त्रित्वादादिमो, ऽन्यः स्याद् वाग्यमात् कर्तृसंस्कृतिः ॥'

**भाट्ट**— पशौ अग्नीषोमीये पशुपुरोडाशः श्रुतः । पशौ च प्रणीताप्रणयनहविष्कृदाह्वानयोरभावेऽपि तदुपलक्षितकालावधिकत्वस्य च संभवेन, कथं चिदसंभवेऽपि वा वाग्यमस्य प्रकृतौ विशिष्य तत्तत्पदार्थधर्मत्वात्, कतिपयतद्धर्माणां च पशौ सत्त्वेन तद्धर्मवाग्यमोपपत्तिः । अस्ति च पृष्ठ्यास्तरणादिवत् यज्ञयोगादिपदार्थजातं प्रणीताप्रणयनहविष्कृदाह्वानमध्यवृत्तिसांनाय्याङ्गमपि प्रकृतौ । अतश्च तस्य पशावपि अतिदेशात् युक्त एव तदङ्गवाग्यमातिदेशः । नहि प्रकृतौ तस्य हविष्कृदाह्वानमध्यवर्तित्वेन उद्देश्यता, येन पशौ हविष्कृदाह्वानाभावात् वाग्यमातिदेशो न भवेत् । तत्त्वेनैव तु उद्देश्यत्वात् तदतिदेशो निर्बाधः । तेन पशौ हविष्कृदाह्वानकत्वाचिन्तोक्तिः मूले मुधैव । अतश्च पाशुकवाग्यमेनैव प्रयाजादिवत् कार्यसिद्धेः पशुपुरोडाशे न पृथक् वाग्यमानुष्ठानम् । यदि तु प्रसङ्गविधया पूर्वपक्षकरणे अध्यायासंगतिः इत्याशङ्क्येत ततोऽस्तु पशुपुरोडाशे तन्त्रत्वकृत्वाचिन्तया अयं विचारः । सर्वथा न वाग्यमस्य पृथगनुष्ठानं, **इति प्राप्ते,** मनःप्रणिधानद्वारा वाग्यमस्य दृष्टोपकारकत्वे संभवति प्रयाजादिवत् आरादुपकारकत्वस्य अन्याय्यत्वात् , पूर्वसंजातमनःप्रणिधानस्य च वाग्विसर्गोत्तरक्रियमाणपौरोडाशिकतत्पदार्थेषु अनुपयोगात् न तन्त्रं प्रसङ्गो वा ।

**न्यायबिन्दुः**— हविष्कृदाह्वानं पशावपि अस्तीति कृत्वा चिन्त्यते । पुरोडाशस्य प्रासङ्गिकत्वात् पाशुकेनैव वाग्यमेन कार्यसिद्धेः पशुकाले एव वाग्विसर्गः, **इति शङ्कायां**, वाग्यमस्य कर्तृसंस्कारत्वात् विसृष्टवाचा क्रियमाणाः पौरोडाशिका विगुणाः स्युः, अतः पुरोडाशकाले वाग्विसर्ग इति सिद्धान्तः ।

**मण्डन**—' पौरोडाशो वाग्विसर्गः पशौ चेत् ।'

**शंकर**—' पशुकाले स नात्र चित् ।' स वाग्विसर्गः ।

## ❀ अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्तॄणामेव वरणम् ॥

दैक्षे श्रुतं ' दैवं च मानुषं च होतारौ वृत्वा श्रावमाश्रावं सौमिकानृत्विजो वृणीते ' इति । यदिदमृत्विग्वरणं कर्ममध्ये विहितं तत् ऋत्विक्संस्कारकत्वादविशेषात् सर्वार्थम् । ' सप्त वृणीते ' इति तु ' दश गृह्यन्ते ' इतिवदवयुत्यवादः, **इति प्राप्ते,** ' यदवृता वषट्कुर्युर्भ्रातृव्यं यज्ञस्याशीर्गच्छेदथ यद्येते वृता वषट्कुर्वन्त्येकधैव यजमानं यज्ञस्याशीर्गच्छति ' इति वचनेनावृतानां वषट्कारनिन्दया वषट्कर्तॄणामेव वरणं नियम्यते । अत एव ' ऋत्विजो वृणीते ' इत्युक्त्वा ' कृतिच्छन्दांस्येव वृणीते यद्धोतारं वृणीते, यदाग्नीध्रमतिच्छन्दसं तत् ' इत्यादिना ' वाचं तद् वृणीते ' इत्यन्तेन कतिपयानामेव गणनं संगच्छते , वषट्कर्तृत्वेन प्रसक्तौ ' नाच्छावाकं वृणीते ' इति निषेधोऽपि । **संकर्ष.** ३।४।९.

## ❀ अग्नीषोमीये पशौ 'सप्त वृणीते' इति वषट्कर्त्रनुवादो न वरणान्तरम् ॥

' तिस्रो जुहोति ' इत्यादाविव ' सप्त वृणीते ' इत्यत्र धात्वर्थे एव संख्यान्वयः, ऋत्विजां बहुत्वेन सप्तपदस्य संख्येयपरत्वायोगात् , ' अग्निर्दैवीनाम् ' इत्यनेन यजमानस्यापि वरणोक्तेश्च । ततश्च वषट्कर्तृष्वेव वरणमिति नियमेन पूर्वोक्तवरणस्य कर्तृसंस्कारार्थत्वेऽपि एतद्वचनविहितवरणान्तराणामारादुपकारकाणां तदतिरिक्ता ऋत्विजः परिशेषात् कर्मकारकतयाऽन्वीयेरन्, **इति प्राप्ते,** पूर्वोक्तवरणे यजमानेतरेषामष्टानां मध्ये अध्वर्युप्रतिप्रस्थात्रोरेकेन मन्त्रेण द्विवचनान्तेन वरणाभिप्रायेण ' सप्तर्त्विजो वृणीते ' इत्यनुवादमात्रम् । **संकर्ष.** ३।४।१२.

## ❀ अग्नीषोमीये पशौ सप्तानामपि वरणं लौकिक्या वाचा ॥

दर्शपूर्णमासयोः ' अग्निर्देवो होता ' इति मन्त्रस्य होतृवरणे समाम्नातस्य चोदकतः प्राप्तत्वात् होतृमैत्रावरुणयोर्वैदिक्या वाचा, अन्येषां लौकिक्या वरणमिति द्वयोर्वरणं पशुधर्मः, इतरत् सोमधर्मः, **इति प्राप्ते,** सर्वेऽपि लौकिक्यैव व्रियेरन् । 'सप्त वृणीते' इत्येकविधिविहिते एकस्मिन् कर्मणि वैरूप्यायोगात् । ' कृष्णविषाणया कण्डू-

यते ' इत्येकविधिविधेयस्यापि सवनभेदेन वैरूप्यं तु दक्षिणादानोत्तरं तत्प्रासनविधिविरोधादङ्गीकृतम् । **संकर्ष.** ३।४।१०.

**अग्नीषोमीये पशौ स्विष्टकृत् अनिज्याशेषै-स्त्रिभिरङ्गैः कर्तव्यः ॥**

**इज्याशेषात् स्विष्टकृदिज्येत प्रकृतिवत् । १०। ७।३।१० ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः ' यो दीक्षितो यदग्नीषोमीयं पशुमालभेत ' इति । अस्ति तत्र चोदकप्राप्तः स्विष्टकृत् । इहैवं श्रूयते ' त्र्यङ्गैः स्विष्टकृतं यजति ' इति । तत्र संशयः, किं इज्याशेषेभ्यः त्रिभ्योऽङ्गेभ्यः स्विष्टकृता यष्टव्यं, उत अनिज्याशेषेभ्यः इति । किं प्राप्तं ? इज्याशेषेभ्यः इति । कुतः ? एवं प्रकृतिवच्छब्दानुग्रहो भविष्यति । त्रीण्यङ्गानि यानि इज्याशेषभूतानि, तेभ्य इज्यायां क्रियमाणायां त्रिशब्दोऽपि अनुगृहीतो भवति ।

**त्र्यङ्गैर्वा शरवद् विकारः स्यात् । ११ ॥**

**भाष्यं**—अनिज्याशेषैः त्र्यङ्गैः इज्येत, एष विकारः स्यात्, न त्रीणि यानि कानि चिदङ्गानि । यदि यैः कैश्चित् त्रिभिरङ्गैः इज्या कर्तव्या इत्यभ्युपगम्येत, तत्र अङ्गैः इति न विधीयेत प्राप्तत्वादेव । त्रित्वार्थं विधानं स्यात् त्रिभिरिज्येत इति । तत्र त्रिशब्दः अङ्गशब्देन असमर्थ एव स्यात् । असामर्थ्ये समासो नोपपद्येत । अपि च असत्यां त्रयाणामङ्गानां एकस्यां साधारण्यां क्रियायां एकस्मिन् वा गुणे, त्रिशब्दस्य अङ्गशब्देन विशेषणविशेष्यसंबन्धाभावात् सामर्थ्यं न विद्यते, यानि त्रीण्यङ्गानि त्रित्वसंबद्धानि तानि त्र्यङ्गानि इति । असति विशेषे व्यवहाराभावात् साकाङ्क्षं भवति, कतमानि त्र्यङ्गानीति । त्वत्पक्षेऽपि कथं ? तदुच्यते । समाहारे एष समासः । येषां समाहारः उक्तः, एकक्रियागुणसंबन्धो वा, तानि त्र्यङ्गानि । एषां च समाहार उच्यते ' यद्दोष्णः पूर्वार्धादग्नये समवद्यति, गुदस्य मध्यतः, श्रोण्या जघनतः ' इति । समवदानं समाहारः एकेनाग्निना गुणेन संबन्धः, एकया च समवद्यतिक्रियया, तस्मादेतानि त्र्यङ्गानि । एतानि च अनिज्याशेषाणि । अतो वचनप्रामाण्यात् अनिज्याशेषैः त्र्यङ्गैः स्विष्टकृत् इज्येतेति । शरवत्, यथा ' शरमयं बर्हिः ' इति वचनप्रामाण्यात् शरैः कुशा बाध्यन्ते, एवमिहापि इज्याशेषता बाधिष्यते इति ।

**आह** इज्याशेषाणां प्रतिपत्तिरेषा । न च अनेन इज्यायां क्रियमाणायां एतत् प्रतिपादितं भवति । तस्मात् इज्याशेषाणां कार्ये अवर्तमानानि, नेज्याशेषविकारभूतानि भवितुमर्हन्तीति । **अत्रोच्यते** । यद्यपि प्रतिपाद्यन्ते, तथापि नान्यथा । तस्यां निर्वृत्तौ इज्याशेषैः कर्तव्यायां अनिज्याशेषाणि विधीयन्ते, एतानि तत्र प्रतिपादयितव्यानि । एतान्यपि हि कृतकार्याणि प्रतिपादयितव्यान्येव । यानि तु शेषभूतानि, तानीह प्रतिषिद्धानि यथाकामं अन्यत्र प्रतिपादयिष्यन्ते इति ।

**टुप्**— एकादशानां तावत् मध्ये त्रित्वं नास्ति, यत् विधीयते । संख्या हि केन चित् एकेनावान्तरधर्मसंयोगेन प्रवर्तते । न च केषां चिदेकधर्मसंयोगोऽस्ति, येन एकादशभ्योऽवच्छिद्येत त्रित्वम् । समासानुपपत्तिश्च स्यात् । अङ्गशब्दो यदि त्रित्वेन संबध्येत ततो न स्विष्टकृता, यदि स्विष्टकृता न त्रित्वेन । दोरादीनि ( भुजबाहू प्रवेष्टो दोः ) एकया समवद्यतिक्रियया युक्तानि भवन्ति अग्निसंयोगेन । तत्र समासार्थः, विशेषणविशेष्यभावश्च घटते तेषु गृह्यमाणेषु । **अत्र चोद्यते,** प्रकृतौ यागद्रव्यशेषसंस्कारको दृष्टः स्विष्टकृत् नैतैर्दोरादिभिर्यागः कृतः, येन प्रतिपाद्येरन् । तस्मात् स्विष्टकृत्प्रतिरूपकं यागान्तरमेतत् अप्राकृतकार्यं विधीयते । हृदयादिभिः चोदकप्राप्तः स्विष्टकृत् केन वार्यते ? **अत्रोच्यते** । यदि स्विष्टकृदनुवादेन त्र्यङ्गानि विधीयेरन्, त्र्यङ्गविशिष्टो वा स्विष्टकृत्, ततोऽप्राकृतकार्यः स्यात् । इह तु त्र्यङ्गानि प्रति स्विष्टकृत् विधीयते, तान्यपि प्रतिपादनयोग्यानि तुषकणवत् । या तु तृतीयाविभक्तिः, सा अर्थप्राप्तैवानूद्यते । हृदयादीनि तु येन केन चिदुपायेन प्रतिपाद्यन्ते, न स्विष्टकृद्यागेन । यदि, 'यत् अङ्गैः स्विष्टकृतं यजति, तत् त्रिभिः ' इति तस्य अङ्गशब्दः स्विष्टकृद्विशेषणार्थमुच्चार्यते, विशेषणं च न कर्मयोगि, विशेष्यश्च स्विष्टकृत्, तस्य त्रिरभ्यासः प्राप्नोति । न च

एकादशानां मध्ये त्रिसंख्या विद्यते क्रियायोगगुणयोगाभावात् । यश्च एकादशानां मध्ये त्रीणि गृह्णीयात्, तेन अपोद्धारप्रयत्नः कर्तव्यः । योऽपि अधिकृतानां त्रयाणां ग्रहणं करोति, तेनापि समाहारप्रयत्नः कर्तव्यः । यस्तु दोरादीनि गृह्णाति, तस्य उभयदोषाभावः, प्रमाणान्तरेण समाहारापोद्धारयोः कृतत्वात् । ननु यागद्रव्यशेषस्य अप्रतिपादनात् अप्राकृतकार्यमापद्येत, तस्मात् द्विरभ्यासः स्विष्टकृतः प्राप्नोति । एवं वर्ण्यमाने उच्यते । स्विष्टकृदयं अन्यत्र विधीयते प्राकृतात् कार्यात् आच्छिद्य इति ।

**शा** — पशावेव चोदकप्राप्तः स्विष्टकृद्यागः किं प्रधानहविर्भ्यो हृदयादिभ्य उत्तरार्धं गृहीत्वा कर्तव्यः, उत अङ्गान्तरेभ्य इति संशये, प्रधानशेषप्रतिपत्त्यर्थत्वात् प्रकृतौ पशावपि प्रधानशेषेभ्यः कर्तव्यः । 'त्र्यङ्गैः स्विष्टकृतं यजति' इति वचनं चोदकप्राप्तेषु सर्वेषु प्रधानहविःषु त्रित्वविधानार्थम् (पर्यवसितार्थकथनमेतत् । शब्दतस्तु त्रित्वविशिष्टाङ्गानामेव स्विष्टकृति विधानम् । तत्र इज्याशेषाणामङ्गानां प्राप्तत्वात् प्राप्ताप्राप्तविवेकेन त्रित्वविधौ पर्यवसानम् । एवं च शब्देन विशिष्टवेषेणैव विध्यन्वयात् समासे एकेनांशेन उद्दिश्य अपरेणांशेन विधानानङ्गीकारात् न सामर्थ्यविघातनिबन्धनसमासानुपपत्तिदोषप्रसङ्गः) । तेन तेषामेव मध्ये त्रिभिः स्विष्टकृदिज्या । **इति प्राप्ते ब्रूमः** । (त्रित्वविशिष्टाङ्गविधौ अनिज्याशेषैः स्विष्टकृत्, अङ्गेषु त्रित्वविधौ तु इज्याशेषैः इत्यनुष्ठानभेदेन शब्दतो विशिष्टविषयतया प्रतीयमानस्य अङ्गान्तरविधायकत्वोपपत्त्या हृदयादिषु त्रित्वविधेः पर्यवसानमशक्यम् । तथा चेह त्रित्वविधिमिच्छता प्रकारान्तरासंभवात् अङ्गानुवादेन त्रित्वं शब्दगत्यैव विधीयते इति वक्तव्यम् । तथा सति असामर्थ्यात् समासानुपपत्तिः स्यादेव इत्याशयेनाह– ) 'त्रित्वं नाङ्गानुवादेन विधातुं शक्यते तथा । तस्य प्रसरभेदेन सामर्थ्यं हि विहन्यते ॥' एकं हीदं समासपदं त्र्यङ्गैः इति । तदेकप्रसरं युक्तं सकलमुद्देशकं उपादायकं वा, (हृदयादीनां– ) उत्तरार्धं तु उद्दिश्य पूर्वार्धे विधीयमाने प्रसरभेदात् सामर्थ्यविघातात् समासो न स्यात् । (ननु चोदकप्राप्तेज्याशेषाबाधाय असमर्थसमासमपि स्वीकृत्य त्रित्वविधिरेव युक्तः इत्यस्वरसादाह– ) अपि च 'दोः पूर्वार्धस्य, गुदं मध्यतः, श्रोणिं जघनार्धस्य' इति वाक्यशेषे अनिज्याशेषाणां कीर्तनात् विस्पष्टं अनिज्याशेषाणां विधानं, तैश्च प्रत्याम्नानात् इज्याशेषाणां बाधः । **ननु** अनिज्याशेषाणां अङ्गत्वेन विधानात्, इज्याशेषाणां च चोदकेन प्रतिपाद्यत्वेन प्रधानतया प्राप्तानां विषयभेदादयुक्तो बाधः । (**उच्यते**– ) प्रधानभूतानामपि निर्वर्तकत्वात् तस्मिंश्चांशे अनिज्याशेषाणां विधानात् आर्थिकमस्त्येव तुल्यविषयत्वम् । नहि अनिज्याशेषैः क्रियमाणो यागः तेषां प्रतिपत्तये अलं भवति । तेन गुणभूतैरपि युक्तः प्रधानबाधः । किंच अनिज्याशेषाणामपि हृदयाद्यर्थालब्धपश्वनुनिष्पन्नानां आकीर्णकराणां प्रतिपत्त्यपेक्षत्वात् चोदकेन इज्याशेषप्रतिपत्त्यर्थतया प्राप्तः स्विष्टकृद्यागः तत्प्रतिपत्तौ वचनेन विनियुज्यते, यत् स्विष्टकृता प्रतिपाद्यं, तत् त्र्यङ्गानि, न हृदयादीनि, (इति) तस्माद्युक्तो बाधः ।

**सोम**— यदि हृदयादीनां हविष्ट्वं, तर्हि तेभ्य एव स्विष्टकृत्, इत्युत्थितेः **संगतिः** ।

**वि**— 'इज्याशेषैरशेषैर्वा त्र्यङ्गैः स्विष्टकृतो हुतिः ।, आद्यैः प्रकृतिव, न्मैवं पूर्वार्धेत्युक्तिशेषतः ॥' तस्मात् अनिज्याशेषैरङ्गैः स्विष्टकृद्धोमः ।

**भाट्ट**— पशौ एकादश 'हृदयं, जिह्वा, वक्षः, स्तनिम, वृक्यद्वयं, सव्यं दोः, दक्षिणं पार्श्वं, सव्यं पार्श्वं, दक्षिणा श्रोणिः, गुदं तृतीयं' इत्येवंविधानि हवींषि । तेषामेव चोत्तरार्धात् स्विष्टकृत् अतिदेशेन प्राप्तः । तत्रेदमपरं वचनं 'त्र्यङ्गैः स्विष्टकृतं यजति' इति । तत्र यद्यपि स्विष्टकृद्यागसाधनीभूताङ्गानुवादेन त्रित्वविधाने विशिष्टोद्देशः एकप्रसरताभङ्गश्चापतति, तथापि स्विष्टकृदनुवादेन अतिदेशतः पूर्वप्रवृत्त्यङ्गीकारेण त्रित्वविशिष्टाङ्गानामेव प्राकृतानामाद्यानां हृदयादीनां विधानम् । यद्यपि तेषां प्रक्षेपांशं प्रति न गुणत्वं, तथापि त्यागांशं प्रति गुणत्वात् विधानोपपत्तिः । अतश्च स इज्याशेषाणामेव, **इति प्राप्ते,** 'दोष्णो दक्षिणस्य पूर्वार्धादग्नये समवद्यति, सव्या श्रोणिर्जघनतः, गुदं मध्यस्य' इति वचनान्तरेण अन्येषामनिज्याशेषाणामेव अवदेयत्वेन संकीर्तनात् तेषामेव त्र्यङ्गानां

स्विष्टकृदुद्देशेन 'त्र्यङ्गैः' इति वाक्ये विधानम्। तेषां च स्विष्टकृद्यागं प्रति गुणत्वेन विधानेऽपि प्रकृतौ प्रधानहविरुत्तरार्धस्यापि त्यागं प्रति गुणत्वात् तत्र तावत् समानविषयत्वात् बाधकत्वं सुलभमेव। प्रक्षेपांशं प्रति प्रकृतौ तस्य संस्कार्यत्वमपि च, अर्थात् तन्निर्वर्तकत्वेन प्रक्षेपसाधनत्वस्यापि सत्त्वात् समानविषयत्वोपपत्तेः उपदेशेन अतिदिष्टस्य बाधः। वस्तुतस्तु इहापि प्रक्षेपस्य उपयुक्तसंस्कारत्वासंभवेऽपि निरुक्तत्र्यङ्गानां पश्वनुनिष्पन्नत्वेन आकीर्णकरत्वात् लोहितनिरसनादिवत् तत्संस्कारकत्वोपपत्तेः तदंशेऽपि समानविषयत्वेनैव बाधः। प्रकृताविव इहापि श्रूयमाणविधिना त्यागांशं प्रति गुणत्वेन द्रव्यविधानेऽपि आर्थिकेन विधिना प्रक्षेपांशं प्रति द्रव्यस्य प्राधान्योपपत्तेः न तृतीयाया लक्षणाऽपि। **ननु** (**इति चेत्** इत्यन्तं शङ्का) एवमपि स्विष्टकृत्प्रक्षेपांशस्य प्रकृतौ द्रव्यान्तरसंस्कारार्थत्वेन विनियुक्तस्य इह द्रव्यान्तरसंस्कारार्थत्वेन विनियोगेऽपि प्रत्युद्देश्यमावृत्त्या तन्त्रेण वा संस्कारोपपत्तेः नोपदिष्टेन अतिदिष्टस्य बाधापत्तिः। **नहि** अत्र ऐन्द्रीमन्त्रस्य श्रुत्या गार्हपत्याङ्गत्वेन विनियुक्तस्य प्रयोजनाकाङ्क्षाशान्तेः इन्द्राङ्गत्वबोधकश्रुत्यकल्पनवत् इह स्विष्टकृतः अनिज्याशेषसंस्कारार्थत्वेन निराकाङ्क्षस्य इज्याशेषार्थत्वाकल्पनं इति **वक्तुं शक्यम्**। इज्याशेषार्थत्वस्य प्रकृतावेव क्लृप्तत्वेन इह अकल्प्यत्वात्, प्रदेयोत्तरार्धप्रतिपत्तिरूपोपकारस्य इहानतिदेशे कारणाभावेन तत्पृष्ठभावेन तज्जनकीभूतस्विष्टकृत्प्रक्षेपांशस्यातिदेशे बाधकाभावाच्च। **न च** तज्जनकत्वेन प्राप्तस्य इह द्रव्यान्तरसंस्कारकत्वेन विनियोगे प्राकृतसंस्कार्यस्य बाधः इत्यत्र प्रमाणमस्ति, तन्त्रेणोभयसंस्कारकत्वोपपत्तेः अविरोधात्। नहि अत्र प्राकृतसंस्कार्यस्य प्रतिपत्त्यपेक्षाशान्तिः, येन तज्जनकत्वेन प्रक्षेपो नानुष्ठीयेत। न चैवं सौत्रामण्यां पशुपुरोडाशे देवतान्तरविधानेन अप्राकृतकार्यकल्पनेऽपि प्राकृतकार्यस्यापि अतिदेशात् पुनः पशुपुरोडाशयागकरणापत्तिः, प्राकृतकार्यस्य सुरादिद्रव्यककर्मान्तरजन्यत्वविधानेनैव जनकानाकाङ्क्षत्वात्। प्रकृते तु तत्कार्यस्यानन्यथासिद्धत्वात् युक्तं तन्त्रेण स्विष्टकृत्प्रक्षेपकरणं **इति चेत्**, **सत्यम्। इहापि** तत्प्रतिपत्तेः हविःशेषभक्षणेनैव सिद्धेः। प्रकृतौ हि 'हविःशेषान् भक्षयन्ति' इति हविःशेषभक्षणं अविशेषेण श्रुतमपि उत्तरार्धदक्षिणार्धादौ स्विष्टकृदिडादिप्रतिपत्त्यन्तराम्नानात् संकुचितम्। प्रकृते च स्विष्टकृतः कार्यान्तरसंबन्धेन प्रयोजनानाकाङ्क्षत्वात् तत्संकोचकाभावेन शेषभक्षणरूपप्रतिपत्त्यैव प्रदेयोत्तरार्धसंस्कारोपपत्तेः न स्विष्टकृत्प्रक्षेपाक्षेपकत्वम्। अतः सिद्धं अनिज्याशेषाणामेव स्विष्टकृत् इति। यद्यपि च गुदस्य इज्याशेषत्वमस्ति, तथापि न तन्मध्यभागस्य स्विष्टकृत् अतिदेशतः प्राप्यते, अपि तु गुदतृतीयोत्तरार्धस्यैव, इति तत्रापि संस्कार्यान्तरता।

**न्यायबिन्दुः**— स्विष्टकृत्प्रभृतयो हृदयादिभ्य एव कार्याः, 'त्र्यङ्गैः स्विष्टकृतं यजति' इति वचनं तु तेषामेव त्रित्वविध्यर्थं, **इति प्राप्ते**, एकप्रसरताभङ्गेन अङ्गानुवादेन त्रित्वविध्ययोगात् 'दोःपूर्वार्धस्य, गुदमध्यतः, श्रोणिजघनार्धस्य' इति वाक्यशेषे अन्येषां कीर्तनात् तैरेव त्रिभिः स्विष्टकृदादयः। आकीर्णकरत्वेन तत्प्रतिपत्त्यर्थं वचनेन स्विष्टकृद्विनियोगात् हृदयादिबाधः इति सिद्धान्तः।

**मण्डन**—'त्र्यङ्गैर्यजेतेति न यागशेषः।' यागयुक्तेः इति वा पाठः।

**शंकर**—'तदन्यैः स्विष्टकृत् त्रिभिः।'

**अग्नेः स्विष्टकृत आवाहनं हव्यवहनार्थमेवेति तत्रैव अग्निं होत्रायेति निगदः॥**

स चोह्यमानो होमार्थमेव अग्निः। होत्रशब्दस्य होमपरत्वात्, कतिपयहोमाधिकरणत्वस्य तत्रापि सत्त्वात्, 'यस्मिन्नेवैतदग्नावाहुतयो हूयन्ते' इत्यादिना होमार्थत्वश्रवणाच्च, **इति प्राप्ते**, होतुः कर्म होत्रं, तच्च हव्यप्रापणम्। 'हव्या वह यविष्ठ या ते अद्य' 'यथा वो येन पथा हव्यमा वो वहानि' इत्यादिमन्त्रलिङ्गेन तथानिर्णयात्, होत्रायेति तादर्थ्यचतुर्थ्या च हव्यवहनप्रयोजनकत्वप्रतीतेः। अतः शंय्वन्तासु पत्नीसंयाजाभावेऽपि भवेदेवाग्निं होत्रायेति निगदः। **संकर्ष.** ४।२।११.

**अग्नेरात्मसमारोपेऽपि अरण्योरेव प्रत्यवरोह्य मथनं कार्यम्॥**

आत्मसमारोपेण विधेरात्मनोऽग्नेर्वा संस्कारमात्ररूपत्वेन आत्मन्यरण्योश्च समारोपौ समुच्चीयेयातां, **इति प्राप्ते**,

अग्नेर्नयनोपाययोरेकार्थत्वेन समुच्चयायोगाद्विकल्पः, आत्मसमारोपस्य संस्कारकर्मत्वे च मानाभावात् । **संकर्ष.** ३।२।३५.

**अग्न्यङ्गमप्रकरणे तद्वत् ।३।६।१२।३५ ॥**

एकसूत्रात्मकमधिकरणम् । सिद्धान्तसूत्रं चेदम् । अप्रकरणे चयनप्रकरणभिन्ने स्थले समाम्नाताश्चित्रिण्यादयः इष्टकाः अग्न्यङ्गं अग्नेः पञ्चचितिसमुदायरूपवेदेः अङ्गमेव स्यात् । तद्वत् पूर्वाधिकरणोक्तग्रहवत् । अनारभ्य पठिताः उपांश्वदाभ्यादयो ग्रहा यथा ज्योतिष्टोमाङ्गं, तथा इष्टका अपि अग्न्यङ्गमिति । **के.**

**अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् । १०।८।११।२३ ॥**

अग्निः अग्निचयनं च अतिग्राह्याश्च तेषां समाहारः अग्न्यतिग्राह्यम् । तस्य कस्यां चिदेव विकृतौ द्विरात्रादौ उपदेशात् सर्वस्यां विकृतौ अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् । यत्रोपदेशस्तत्रैव स्यात्, नान्यत्रेति पूर्वः पक्षः ।

**मासिग्रहणं च तद्वत् । २४ ॥**

तद्वत् अग्न्यतिग्राह्यस्य विकृतौ उपदेशवत् 'मासिमास्यतिग्राह्या गृह्यन्ते' इत्यत्र मासि इतिपदग्रहणमपि चोदकाभावे साधकम् । इति पूर्वपक्षी आह । चशब्दो हेत्वन्तरसमुच्चयार्थः । मासि इति ग्रहणं मासिग्रहणं इति संभावनापूर्वपदः कर्मधारयः ।

**ग्रहणं वा तुल्यत्वात् । २५ ॥**

सिद्धान्तमाह । विकृतिषु अग्निचयनस्य अतिग्राह्याणां च चोदकेन ग्रहणं स्यात्, अग्न्यतिग्राह्ये इतरेषु चाङ्गेषु चोदकस्य तुल्यत्वात् । वाशब्दः पूर्वपक्षनिवृत्त्यर्थः ।

**लिङ्गदर्शनाच्च । २६ ॥**

'कङ्कचितं चिन्वीत' 'शीर्षचितं चिन्वीत' वाजपेये 'पञ्चैन्द्रानतिग्राह्यान् गृह्णाति' इति लिङ्गदर्शनात् अग्न्यतिग्राह्यस्य विकृतिषु चोदकेन प्राप्तिर्ज्ञायते । इति सिद्धान्ते हेत्वन्तरम् । हेत्वन्तरार्थ एव चशब्दः ।

**ग्रहणं समानविधानं स्यात् । २७ ॥**

अग्निचयनं अतिग्राह्याश्च यस्यां विकृतौ उपदिश्यन्ते तस्यां विकृतौ प्रकृतौ च तेषां ग्रहणं समानविधानं स्यात् । एकेनैव विधिना उभयत्रापि विधानम् । अवशिष्टासु च विकृतिषु चोदकेन प्राप्तिः अग्न्यतिग्राह्याणाम् । अनेन पूर्वपक्षे 'विकृतौ उपदेशात्' (सू. २३) इति यदुक्तं तत् परिहृतम् ।

**मासिग्रहणमभ्यासप्रतिषेधार्थम् । २८ ॥**

यदुक्तं पूर्वपक्षिणा 'मासिग्रहणं०' (सू. २४) इति, तत्राह । 'मासिमास्यतिग्राह्या गृह्यन्ते' इति गवामयने मासिपदोच्चारणं अहन्यहनि अभ्यासस्य प्रतिषेधार्थं, न चोदकाभावसाधकम् । तस्मात् अग्निचयनस्य अतिग्राह्याणां च विकृतिषु चोदकेन प्रवृत्तिः इति सिद्धान्तः । **के.**

* **अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ।**

'य एवं विद्वानग्निं चिनुते' इतिवाक्यविहितं अग्निं, 'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः' इति वाक्यविहितान् अतिग्राह्यांश्च उदाहृत्य अग्न्यतिग्राह्यं विकृतौ अतिदिश्यते न वा इति संदिग्धे, अग्नेः 'तमुक्थ्येन' इत्यादिना, अतिग्राह्याणां च 'यदुक्थ्येऽतिगृह्णीयात्' इत्यादिना कासु चित् विकृतिषु उपदेशात् अतिदेशाप्रवृत्तिं पूर्वपक्षयित्वा, निर्देशस्य अपर्यायप्रवृत्तेः सर्वाङ्गे तुल्यत्वात् अग्न्यतिग्राह्यस्यापि ग्रहणं 'ग्रहणं वा तुल्यत्वात्' (सू. २५) इत्यनेन सिद्धान्तिते, 'विकृतौ तर्हि उपदेशः किमर्थः' इत्याशङ्क्य अतिदेशागृहीतस्यापि कासु चिद्विकृतिषु उपदेशेन ग्रहणे गुणकामप्रवृत्त्यर्थं समानविधानत्वं प्रयोजनं इति 'ग्रहणे समानविधानं स्यात्' इत्यनेन वक्ष्यते । **सु. पृ.** ९४८. * 'अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् ।' ज्योतिष्टोमातिदेशेनैव सर्वविकृतिषु चयनप्राप्तिवत् द्विरात्रादिष्वपि प्राप्तिसिद्धावपि तेषु पुनर्वचनं चयनाश्रितगुणकामानां 'श्येनचितं चिन्वीत स्वर्गकामः' इत्यादीनां प्राप्त्यर्थं इति दशमे वक्ष्यते । **कौ.** २।३।१०।२२. * 'अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः' इत्यधिकरणे चयनस्य ज्योतिष्टोमेऽपि सद्भावः समर्थितः । **पराक्रमः.**

**अग्न्यतिग्राह्याधिकरणम् । अग्न्यतिग्राह्याणां विकृतौ अतिदेशः ॥**

**अग्न्यतिग्राह्यस्य विकृतावुपदेशादप्रवृत्तिः स्यात् । १०।८।११।२३ ॥**

**भाष्यं**— इदमाम्नायते 'य एवं विद्वानग्निं चिनुते'

इति । तथा 'उपष्टम्भनं वा एतद्यज्ञस्य यदतिग्राह्याः' इति । तत्र संदेहः, किं अग्न्यतिग्राह्यं विकृतौ चोदकः प्रापयति, उत नेति । किं प्राप्तं ? अग्न्यतिग्राह्यस्य विकृतौ अप्रवृत्तिः इति । अग्निश्च अतिग्राह्यश्च अग्न्यतिग्राह्यम् । तत् विकृतौ न प्रवर्तते । कुतः ? विकृतौ उपदेशात् । विकृतौ हि तदुपदिश्यते 'अथातोऽग्निमग्निष्टोमेनानु यजति, तमुक्थ्येन, तमतिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण' इति । तथा 'यत् पृष्ठ्येऽतिगृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संगृह्णीयुः, यदुक्थ्येऽतिगृह्णीयात्' इति । न नूनं अग्न्यतिग्राह्यं चोदकः प्रापयति, यत् साक्षात् कस्यां चित् विकृतौ चोद्यते इति ।

**मासिग्रहणं च तद्वत् । २४ ॥**

**भाष्यं**— इदं चाम्नायते 'मासिमासि अतिग्राह्या गृह्यन्ते' इति । यदि चोदकः प्रापयेत्, न 'मासिमास्यतिगृह्यन्ते' इत्युपदेशः स्यात् ।

**ग्रहणं च तुल्यत्वात् । २५ ॥**

**भाष्यं**—गृह्यते वा चोदकेन अग्न्यतिग्राह्यम् । नहि अस्य अन्यैरङ्गैरस्ति विशेषः । अन्यान्यङ्गानि गृह्णाति, एतन्न गृह्णाति, इति नैतदवकल्पते ।

**लिङ्गदर्शनाच्च । २६ ॥**

**भाष्यं**—लिङ्गं खल्वपि दृश्यते 'कङ्कचितं चिन्वीत' 'शीर्षचितं चिन्वीत, यः कामयेत सुशीर्षा अस्मिन् लोके संभवेयं' इति । तथा 'पञ्चैन्द्रानतिग्राह्यान् गृह्णाति' इति । कङ्काकारतां ऐन्द्रतां च विशेषं ब्रुवन् अग्न्यतिग्राह्यस्य विकृतौ प्राप्तिं दर्शयति ।

**ग्रहणं समानविधानं स्यात् । २७ ॥**

**भाष्यं**—अथ यदुक्तं विकृतौ उपदिश्यते इति, तत् परिहर्तव्यम् । अत्रोच्यते । यस्यां विकृतौ उपदिश्यते तस्यां, प्रकृतौ च समानः स विधिः । अवशिष्टासु विकृतिषु चोदकः प्रापयतीति ।

**टुप्**—यत् 'समानविधाने गुणकामानां प्रवृत्तिः' तन्नोपपद्यते । कथं ? प्रकृतौ वैकल्पिकोऽग्निः उत्तरवेद्यां निधातव्यः स्थले वा । स चोदकेन वैकल्पिक एव प्राप्नोति । तत्र पुनर्वचनं नियमार्थं भविष्यति । यथा खदिरादिपुनर्वचनं नियमार्थम् । यदि अग्निः द्विरात्रादीनां प्रकरणे आम्नायेत अग्निरत्र कर्तव्य इति, एवं नियामकं स्यात्, यथा 'खादिरो यूपो भवति' इति । अयं तु अग्निः अनारभ्य सेतिकर्तव्यताको विहितः । तं विधाय एभिर्वाक्यैः तस्य क्रतुसंबन्धः क्रियते । एतानि च वाक्यानि अस्मिन्नेव प्रकरणे । तत्र च द्विरात्रादीनां प्रकरणं न विपरिवर्तते, येन द्विरात्रादिषु चोदकेन प्राप्तस्य नियामकानि स्युः । तेन द्विरात्रादीनां चोदकेन वैकल्पिक एवाग्निः । पुनर्वचनं तु यदा अग्निः, तदा गुणकामानां प्रवृत्तिरिति ।

**मासिग्रहणमभ्यासप्रतिषेधार्थम् । २८ ॥**

**भाष्यं**— अथ मासिग्रहणं कथमिति ? तदभ्यासप्रतिषेधार्थम् । न अहन्यहनि गृह्यन्ते, मासिमासि गृह्यन्ते इति ।

**शा**— सोऽयमग्निः यासु विकृतिषु वाक्येन नोपदिष्टः यथा षोडशिषु वाजपेये च, तत्र किं चोदकप्राप्त्या कर्तव्यो नेति संशयः । तथा अतिग्राह्याः नाम ग्रहाः प्रकृतौ श्रुताः, विकृतिष्वपि कासु चित् उपदिष्टाः 'उक्थ्ये गृह्णीयात्, पृष्ठ्ये गृह्णीयात्, विश्वजिति प्रगृहीतव्याः' इति । तेऽपि विकृत्यन्तरेषु ग्राह्या नेति संशयः । तत्र 'चोदकेनाग्न्यतिग्राह्यं विकृतौ न प्रदिश्यते । कासु चिच्छ्रवणं तस्य तथाहि स्यादनर्थकम् ॥ तस्मात् तदर्थवत्त्वाय प्रदेशो नेति कल्प्यते । तेन यत्रोपदेशोऽस्य तत्रैवाऽन्यत्र न क्रिया ॥' उच्यते, 'अङ्गान्तरवदस्यापि प्राप्तिश्चोदकतो ध्रुवा । चोदकार्थस्य कृत्स्नत्वात् कासु चिच्छ्रवणं पुनः ॥ सामानविध्यसिद्ध्यर्थं नातिदेशं निवारयेत् । कोऽर्थः सामानविध्ये चेद् गुणकामप्रवर्तनम् ॥' यासु विकृतिषु विधीयते तासु, प्रकृतौ च समानं विधानं भवति । विकृत्यन्तरेषु तु चोदकतः प्राप्तिः इति न प्रकृतितुल्यं विधानम् । समानविधानत्वे च प्रयोजनं अग्न्याश्रितानां गुणकामानां विकृतिषु प्रवृत्तिः । यासु विधिर्नास्ति, तासु न गुणकामाः प्रवर्तन्ते 'निवृत्तिर्वा कर्मभेदात्' इति न्यायात् (८।१।१४।२४) । तदेवं गुणकामप्रवृत्त्यर्थं विकृतिषु कासु चिच्छ्रवणं इति न तद्बलेन अतिदेशाभावः शक्यते कल्पयितुं, तस्मादस्ति अतिदेशः ।

अत्र **के** चिदाहुः— अनारभ्याधीतोऽग्निः प्राकरणिकोत्तरवेदिविरोधात् प्रकृतौ न लभते निवेशम्। अप्राकृतश्च न विकृतिषु अतिदिश्यते, तेन उपदेशेनैव अस्य विकृतिषु प्राप्तिः, इति अनुपदेशतः षोडशिवाजपेययोः नाग्निश्चेतव्य इति। ( अग्निवाक्येनैव क्रतुसंबन्धावगमात् युक्तः प्रकृतौ निवेशः इत्याह– ) **तदयुक्तम्**। अग्निष्टोमवाक्येन प्रकृतावपि विधानात्। न तु विकृत्यग्निष्टोमाभिप्रायं तत् भविष्यति, प्रकृतौ प्राकरणिकोत्तरवेदिविरोधात्। नहि प्रकरणेन वाक्यसंकोचो युक्तः। किंच प्रकृतेरेवाग्निष्टोमत्वं अनन्यापेक्षं, विकृतीनां तु अतिदेशापेक्षं इति प्रकृतिरेवानेनाभिधीयते। अग्निष्टोमशब्दस्तु क्रतुमेवाभिधत्ते इति तत्संबन्धो वाक्यकृत इति न प्रकरणेन बाधमर्हति। तस्मादस्ति प्रकृतौ अग्निः, इति विकृतिष्वपि अतिदिश्यते। तत्र साद्यस्क्रेषु ( एकदिनसाध्यत्वात् ) सारस्वतेषु च सत्रेषु (प्रधानयागानां अनुदिनं अन्यान्यदेशगम्याप्रासप्रदेशेषु कर्तव्यत्वात् ) अशक्यत्वात् काममग्निर्न चीयतां, षोडशिवाजपेययोस्तु चेतव्यः।

**सोम**—स्वाहाकारस्योपसंहाराभावेन पुनःश्रवणरहितदर्वीहोमेषु बाधाभावेऽपि अग्नेः पुनःश्रवणरहितविकृतिषु बाधः इत्युत्थितेः **संगतिः**। **यदुक्तं विधिरसायने** ' यदि अग्न्याश्रितगुणफलविधिप्रवृत्तेः पूर्वं अग्निप्रकरणे तत्तत्क्रतुप्रकरणेषु वा उपदेशेनातिदेशेन वा क्रत्वन्वयित्वेन सिद्ध एवाग्निः श्येनाकृत्यादिगुणफलविधिषु आश्रयत्वेन अनुवाद्यः स्यात्, तदा प्रथमं बुद्ध्युपारूढे औपदेशिके एवाग्नौ आश्रयत्वेनान्विते चरमप्रतीतातिदेशिकाग्नेः आश्रयत्वान्वयो न भवेत्, इति तस्यापि तदाश्रयत्वेनान्वयार्थं पुनःपुनरुपदेशः सफलः स्यात्, न त्वेवं अग्निष्टोमादिवाक्यैः क्रत्वन्वयकरणात् प्रागेव ' य एवं विद्वान् ' इत्युत्पन्नस्य शुद्धस्याग्नेः आश्रयत्वेनानुवादासंभवेन क्रत्वन्वयिन एव आश्रयत्वे प्रमाणाभावात्, शुद्धस्य चाग्नेः आश्रयत्वेनान्वयानन्तरं अग्नेः क्रतुसंबन्धे सति अर्थात् क्रत्वन्वितोऽग्निः आश्रय इति पर्यवस्यति। आर्थिकं चापूर्वीयस्याग्नेराश्रयत्वम्। येषु अग्नेः औपदेशिकमपूर्वीयत्वं, येषु चातिदेशाधीनं, तेषु सर्वेष्वपि अविशेषेण सिध्यति। तस्मान्न गुणकामप्राप्त्यर्थं सामानविध्यम् ' इति। **तच्चिन्त्यम्**। भवेदेवं यदि शुद्धस्याग्नेः आश्रयत्वयोग्यता स्यात्, न त्वेवं, शुद्धस्य सिद्धरूपत्वेन क्रियानुप्रवेशं विना आश्रयत्वायोग्यत्वात्। उक्तं च चतुर्थे **तन्त्ररत्ने** ( ४।३।१।१ ) ' औदासीन्यप्रच्यावको ह्याश्रयः, क्रिया च तथा, न द्रव्यं ' इति। अग्नेः सिद्धरूपत्वं च **विधिरसायने** एव ' पशुकामश्चिन्वीत' इत्यादिना फलार्थत्वेनावगतस्याग्नेः आश्रयार्थानि ' अथातोऽग्निमग्निष्टोमेन ' इत्यादिवाक्यानि इति प्रतिपादनावसरे आश्रितम्। एवं च यथा सिद्धरूपस्य स्वतःफलसाधनत्वासंभवेन तदर्थमाश्रयापेक्षा, तथा सिद्धरूपस्य आश्रयत्वासंभवेन तदर्थं क्रत्वनुप्रवेशापेक्षायां अग्निष्टोमादिवाक्यैः क्रत्वन्वितो योऽग्निः, स एवाश्रयः स्वीकार्यः, न तु शुद्धः इति गुणकामप्राप्तिः पुनःश्रवणप्रयोजनमुपपद्यते इति। **नहि** उत्तरवेद्या सह विकल्पितस्याग्नेः नियमार्थतया कासु चिद्विकृतिषु पुनःश्रवणोपपत्तेः न गुणकामप्राप्तिः तत्प्रयोजनमिति **वाच्यम्**। द्विरात्रादितत्तद्विकृतिचोदकपर्यालोचनालभ्योत्तरवेदिप्राप्त्यपेक्षाग्निनियमापेक्षया अग्निप्रकरणगततदाश्रितगुणकामप्राप्तेः संनिहिततया तस्या एव प्रयोजनत्वौचित्यात्। यत्र तु संनिहितप्रयोजनालाभः, यथा षोडशिग्रहविधिविषये ' उत्तरेऽहन् द्विरात्रस्य गृह्यते ' इत्यादौ, तत्र तत्तच्चोदकाधीनप्राप्तिसापेक्षोऽपि नियमः फलं अगत्या स्वीक्रियते। इह तु संनिहितप्रयोजनलाभात् न नियमः प्रयोजनमिति।

**वि**—'नातिदेशोऽतिदेशो वा वह्न्यतिग्राह्ययो, र्न सः। विकृतौ पुनरुक्तत्वादेषोऽङ्गान्तरवद् भवेत् ॥, प्रकृतेर्विकृतीनां च साम्याय स्यात् पुनर्वचः। साम्ये च गुणकामानां प्रवृत्तिः प्रकृताविव ॥' ततश्च पुनर्विधानवैयर्थ्याभावात् अस्ति अतिदेशः।

**भाट्ट**—' य एवं विद्वानग्निं चिनुते ' इत्यनेन उत्पन्नस्य चयनरूपस्याग्नेः 'अथातोऽग्निमग्निष्टोमेनानु यजन्ति' इति अनारभ्याधीतेन ज्योतिष्टोमाङ्गत्वेन विधिः इति स्थितं द्वितीये ( २।३।१०।२१–२३ )। अत्रत्याग्निष्टोमशब्दस्य ज्योतिष्टोमपरतया **कौस्तुभे** व्यवस्थापितत्वात्। तथा अनारभ्याधीतानामेव अतिग्राह्यसंज्ञकानां ग्रहाणां

प्राकरणिकेन ' उपस्तम्भनं वा एतद्यज्ञस्य, यदतिग्राह्याः ' इति वचनेन ज्योतिष्टोमाङ्गत्वेन विधिः । एवं स्थिते कासु चित् विकृतिषु अग्न्यतिग्राह्ययोः ' तमुक्थ्येन, तमतिरात्रेण ' ' उक्थ्ये ग्रहीतव्याः ' इत्यादिना पुनःश्रवणं न तावत् आज्यभागश्रवणवत् अपूर्वत्वार्थं प्रकृतिसमकालीनस्यास्य विधानस्य क्लृप्तोपकारकत्वाभावेन चोदकपरिलोपकत्वानुपपत्तेः, अग्निष्टोमाद्यर्थं अतिदेशस्यावश्यकत्वाच्च । अतो विकृत्यन्तरे अग्न्यतिग्राह्यपरिसंख्यार्थमेव इदम् । **इति प्राप्ते**, अस्यां विकृतौ तद्विधानेन विकृत्यन्तरे एतद्विषये अतिदेशपरिलोपकत्वानुपपत्तेः प्राप्तपरिसंख्या वाच्या । सा च त्रिदोषैव । **न च** वैयर्थ्यभिया एतस्य तात्पर्यग्राहकत्वमङ्गीकृत्य विकृत्यन्तरातिदेशस्य तद्विषयकत्वाकल्पनं इति **वाच्यम्** । लघुतरप्रयोजनान्तरसंभवे दूरस्थातिदेशस्य एतद्विषयत्वाभावकल्पनपूर्वकं परिसंख्याफलकत्वानुपपत्तेः । तथाहि, प्रकृताविव विकृतिष्वपि कासु चित् तुल्यतयोपदेशः अग्न्याद्याश्रितानां 'श्येनचितं चिन्वीत स्वर्गकामः' इत्येवमादीनां श्येनाद्याकारलक्षणगुणकामानां तासु विकृतिषु प्रवृत्त्यर्थः । अन्यथा हि प्रकृत्यपूर्वसाधनीभूतचयनस्यैव तत्राश्रयत्वापत्तेः आष्टमिकन्यायेन(८।१।५)तत्र तेषामप्राप्तेः । सति तु अस्मिन् विधौ प्रकृत्यपूर्वसाधनीभूतचयनस्येव तत्तद्विकृत्यपूर्वसाधनीभूतचयनस्यापि आश्रयत्वाविशेषात् गुणकामप्राप्त्युपपत्तिः । एवं च चयनस्य प्रकृतौ वैकल्पिकत्वात् तन्नियमोऽपि प्रयोजनम् । यद्यपि हि ' उत्तरवेद्यां ह्यग्निश्चीयते ' इति वचनात् अग्न्युत्तरवेद्योः समुच्चयः **संकर्षे** वक्ष्यते (२।१।२६) । तथापि 'यद्यग्निं चेष्यमाणा भवन्ति' 'अग्निः सोमाङ्गं चेच्छताम्' इति श्रुतिकल्पसूत्रपर्यालोचनया अग्नेः स्वाभावप्रतियोगिको विकल्प इष्ट एव । अत एव उत्तरवेदिमात्रेण निरग्निकोऽपि ज्योतिष्टोमप्रयोगः ' उत्तरवेद्यामग्निं निदधाति ' इति वचनात् इष्टः । अतश्च विकृतिष्वपि तथैव प्राप्तौ कासु चित् पुनःश्रवणं नियमार्थमपि संपद्यते । नहि अयं अतिदेशप्राप्त्युत्तरकालं शाब्दो नियमः , येन प्रकृतिसमकालीनस्यास्य अतिदेशतः पूर्वप्रवृत्तत्वात् असंभवः आशङ्क्येत । पूर्वमेव तु प्रवृत्तेनानेन विकृत्यर्थतया विहिते चयने पश्चादपि प्रवृत्तस्यातिदेशस्य तद्विषयत्वाकल्पनवत् तदभावविषयकत्वस्यापि अकल्पनात् । **अत एव** संनिहितगुणकामप्रवृत्तिरूपप्रयोजनसंभवे दूरस्थतत्तदतिदेशप्राप्त्यपेक्षपाक्षिकत्वाधीननियमप्रयोजनकल्पनानुपपत्तिः **इत्यपास्तम्** । उक्तप्रयोजनकल्पनस्यापि अतिदेशप्राप्त्यधीनवैयर्थ्यप्रतिसंधानसापेक्षतया अतिदेशोपस्थित्यधीनत्वात् । अतो लघुभूतप्रयोजनद्वयसंभवे , न गुरुभूतपरिसंख्याफलकत्वाङ्गीकारः । अत एव विकृत्यन्तरे इव गवामयनादिरूपसत्रेऽपि प्रत्यहं अतिग्राह्यप्राप्तौ ' मासिमासि अतिग्राह्या गृह्यन्ते ' इति विशेषविधिरुपपद्यते । विकृतिविशेषे च कङ्कचित्यादिविशेषविधानं ' पञ्चैन्द्रानतिग्राह्यान् गृह्णीयात् ' इत्यादि च विशेषविधानमपि उपपद्यते । तस्मात् विकृतिमात्रे अतिग्राह्याः कार्याः । साद्यस्के सारस्वतसत्रे च परं अशक्यत्वादग्निर्नेष्टः ।

**न्यायबिन्दुः**—अनारभ्य विहितः स्थण्डिलरूपोऽग्निः ' अथातोऽग्निमग्निष्टोमेनानु यजन्ति, तमुक्थ्येन, तं द्विरात्रेण ' इत्यादिना प्रकृतौ विकृतौ च क्व चित् विनियुक्तः । तथा अतिग्राह्या नाम ग्रहविशेषाः विकृतावपि क्व चिदुपदिष्टाः 'उक्थ्ये गृह्णीयात्' ' विश्वजिति ग्राह्याः' इति । तदिदं अग्न्यतिग्राह्यं यत्र नोपदेशस्तत्र नातिदिश्यते । अन्यथा क्व चित् विकृतौ उपदेशस्यानर्थक्यापत्तेः । **इति प्राप्ते** , क्व चित् पुनःश्रवणस्य समानविधानार्थत्वात् नातिदेशनिवृत्तिः, गुणकामप्रवृत्त्यर्थं च समानविधानम् । ' श्येनचितं चिन्वीत स्वर्गकामः ' इत्यादीनां अग्न्याश्रितत्वात् तस्य विकृतिसाधारणत्वे तत्र कामप्रवृत्तिः । अन्यथा विकृतौ आश्रयोपस्थितिविलम्बात् तत्प्रवृत्तिर्न स्यात् । तस्मात् अस्त्यतिदेशः इति सिद्धान्तः । तत्र साद्यस्केषु सारस्वतेषु च सत्रेषु अशक्यत्वात् न चयनं, वाजपेयादौ तु भवतीति ज्ञेयम् ।

**मण्डन**—' विकृतावप्यतिग्राह्याः । ' ( अग्निश्च )

**शंकर**— ' अग्न्यतिग्राह्यातिदेशनम् । '

**अग्न्यधिकरणम् । अग्निचयनं अग्नेः संस्कारः ॥**

**अग्निस्तु लिङ्गदर्शनात् क्रतुशब्दः प्रतीयेत । २।३।१०।२१ ॥**

**भाष्यं**—अस्त्यग्निः ' य एवं विद्वानग्निं चिनुते ' इति । एवं विधाय श्रूयते ' अथातोऽग्निमग्निष्टोमेनैवानु यजति, तमुक्थ्येन , तमतिरात्रेण , तं षोडशिना ' इत्येवमादि । तत्र संदेहः, किमयमग्निशब्दो यागवचनः ज्योतिष्टोमादिभ्यः कर्मान्तरं चिनुते इत्याख्यातेन विधीयते, उत द्रव्यवचनः ज्योतिष्टोमादिषु गुणविधानमिति । किं प्राप्तं ? यागवचनः इति । कुतः ? लिङ्गदर्शनात् । लिङ्गं हि दृश्यते, 'अग्नेः स्तोत्रं' ' अग्नेः शस्त्रं' इति । तथा ' षडुपसदोऽग्नेश्चित्यस्य भवन्ति ' इति । यस्य स्तोत्रशस्त्रं उपसदश्च , तस्य अग्निशब्दो वाचक इति गम्यते । यागस्य एतत् सर्वम् । तस्मात् यागवचन इति । ननु लिङ्गमसाधकं, प्राप्तिरुच्यतां इति । अत्रोच्यते । ' अथातोऽग्निमग्निष्टोमेनैवानु यजति ' इति यागमभिनिर्वर्तयति इत्युच्यते । तं अग्निमिति विशिनष्टि । तस्मादग्निसंज्ञक इति गम्यते । अनुशब्दोऽपि उपसर्गो यजतेर्विशेषकः एवमुपपद्यते, यदि अग्निर्यागः । तस्मात् क्रतुशब्दः प्रतीयेत ।

**वा**—' अग्निं चिनुते ' इत्यत्रापि त्रेधैव संदेहः। किं अपूर्वयागविधिः, उत चयनमात्रविधानं, उत प्रकृतिविकृतिषु गुणविधानं इति । तत्र अंश्वदाभ्यवत् प्रकरणे पुनरसंकीर्तनात् संस्कारमात्रस्य च केवलस्य प्रयोजनासंभवात् संज्ञयैव क्रत्वन्तरं कल्प्यते । तथा च फलश्रवणं ' ऋध्नोत्येव ' इति । न च गुणात् फलमिति शक्यं वक्तुं, प्रकृताश्रयानुपपत्तेः । तथा च ऐकान्तिकसोमयागचिह्नानि उपसदादीनि उभयत्र संबद्धानि श्रूयन्ते । तथा इमानि वचनानि ' अथातोऽग्निमग्निष्टोमेनैवानु यजति ' इति । तत्र ' अग्निं यजति ' इति ' समिधो यजति ' इतिवत् ' तत्प्रख्यं चान्यशास्त्रं ' इत्येवं सिद्धनामधेयविशिष्टयागविधानं विज्ञायते । तस्यैव च अग्निष्टोमादिसंस्थत्वं विशेषणम् । द्विरात्रादयश्च कालविशेषा विकल्प्यन्ते । **अथवा** संस्थाविधिपरे वाक्ये यजत्यनुवादः एवमवकल्पते, यदि उत्पत्तिवाक्ये चिनोतिः यजिमद्वचनः । तस्मादुत्तरकालदृष्टेन यजतिसामानाधिकरण्येन आदावेव अग्निशब्दः क्रतुनामधेयमिति निश्चीयते । अनुशब्दश्च ' य एतेनानिष्ट्वा ' इत्यनेन प्राप्तं ज्योतिष्टोमात् पश्चाद्भावमनुवदति । यद्वा अग्निं अग्निष्टोमादिसंस्थैः यागैः अनु यजति इत्युक्ते यदि अग्निर्यागः, एवमसौ अनुयष्टुं शक्यते । सर्वत्र हि तुल्यरूपाणां तुल्यधर्माणां विभागे पौर्वापर्यं भवति । तद्यथा देवदत्तमनु गच्छति इति । यदि देवदत्तोऽपि गच्छति, एवमनुगमनमवकल्पते । तथा अनुयजनमपि । तस्मात् श्रुतानुमितेतिकर्तव्यतावत्क्रतुविधानं एतत् इति । पश्चिमे तु व्याख्याने अग्निष्टोमादिभ्यः पश्चात् क्रियमाणोऽयं तदङ्गमेव भवति इति फलश्रुतिरर्थवादः स्यात् । पूर्वत्र तु स्वतन्त्रत्वात् ' फलमात्रेयो निर्देशात्०' ( ४।३।८।१८ ) इति फलविधित्वात् पुरुषार्थमिति विशेषः ।

**द्रव्यं वा स्याच्चोदनायास्तदर्थत्वात् । २२ ॥**

**भाष्यं**—द्रव्यं वा अग्निशब्देनोच्येत । कतमत् द्रव्यं ? यदेतत् ज्वलनः । अत्र ह्येष प्रसिद्धः । चिनुते इत्येषा हि चोदना चयनार्था, न यजत्यर्थे शक्नोति वदितुम् । चयनेन एनं संस्कुरुते, चितौ स्थापयति इति। अनुशब्दश्च पश्चादर्थो भविष्यति , चयने निर्वृत्ते पश्चात् अग्निष्टोमेन यागेन यजति इति ।

**वा**—' अत्यन्तरूढिशब्दत्वाद् वाक्यभेदादिभिर्विना । ज्वलनं न परित्यज्य क्रतुरग्निः प्रतीयते ॥ ' नहि अग्निशब्दः उद्भिदादिवत् यौगिकः । नापि वाक्यभेदतत्प्रख्यतद्व्यपदेशैर्युक्तः , येन कर्मनामधेयत्वं विज्ञायेत । यत्तु तत्प्रख्यमस्तीत्युक्तं, भवेत्तत्, यदि क्रत्वङ्गत्वेन अग्निर्विधीयेत । स तु प्राप्तक्रत्वङ्गभावः एव चयनसंस्कारतया श्रूयते । न च ताद्रूप्येण कुतश्चित् प्राप्तः, इति तत्प्रख्यान्यशास्त्रान्तराभावः । तस्मात् द्रव्यमेवाग्निरिति। ' कतमद् द्रव्यं ' इति ( भाष्ये )— चयनसामानाधिकरण्यविरोधाभिप्रायेण प्रश्नः । सिद्धान्तवादी तु 'व्रीहीनवहन्ति' इतिवत् वैयधिकरण्येनैव संस्कार्यसंस्कारसंबन्धोपपत्तेरविरोधं मत्वाऽऽह— ' यदेतत् ज्वलनः ' इति । तस्मात् अग्निशब्दस्य प्रसिद्धार्थग्राहित्वात् चिनोतेश्च यागाभिधानाशक्तेः द्रव्यदेवताऽभावाच्च , अग्निं चयनेन संस्करोति इत्येतावानेव चोदनार्थोऽवधार्यते । तथा च द्वितीया समर्थिता भवति । कर्मनामधेयत्वे तु अग्निहोत्रवत् क्लेशः स्यात् । अनुयजति इति शब्दः कथमिति चेत्,

उच्यते । ‘ एकाहाहीनसत्राणि यजिस्तावद् ग्रहीष्यति । अनुशब्दश्रिते तेषामनुष्ठानं वदिष्यति ॥ ’ यदि हि अयमग्निशब्दः समानाधिकरणः स्यात् ततो दुःखं नीयेत , यदि वैषा कर्मणि द्वितीया स्यात् । अयं तु व्यधिकरणः , कर्मप्रवचनीययुक्ते द्वितीया । अत्रायमर्थः, अग्निचयनमनु अग्निष्टोमादिभिर्यष्टव्यं इति । अग्निशब्दश्च सामान्यवचनोऽपि सन् अत्र प्रकरणवशात् चयनसंस्कृते वह्नौ प्रवर्तते । चयनसंस्कारोत्तरकालं यष्टव्यं इत्यर्थः । तेन क्रत्वङ्गभावोपनयनार्थत्वेनैव एतानि वचनानि । चोदकेनैव प्राप्तानां विकृतिषु पुनःश्रुतिः किमर्थेति चेत् ? दशमे वक्ष्यते ‘ग्रहणं समानविधानं स्यात्’ ( १०।८।११।२७ ) इति । न चावश्यं तुल्यजातीययोरेव पौर्वापर्यं भवति, अतुल्यजातीययोरपि पौर्वापर्यं भवति यथा ‘पाकमनु भुङ्क्ते ’ इत्यविरोधोपपत्तेः । यत्तु ‘ देवदत्तो यज्ञदत्तमनु गच्छति ’ इत्येतत् तुल्यकर्मत्वं गम्यते इति, युक्तं तत्र कर्तृमात्रोपादाने सति क्रियान्तरानुपादानात् । इह पुनः अग्निसंस्कारोपात्तं चयनकर्मैव विद्यते इत्यसमानम् ।

**तत्संयोगात् क्रतुस्तदाख्यः स्यात्, तेन धर्मविधानानि । २३ ॥**

**भाष्यं**— यत्तु लिङ्गदर्शनमुक्तं यागवचनः अग्निशब्दः इति । तत् तेष्वेव लिङ्गसंयुक्तेषु वचनेषु, न सर्वत्र, तेषु चित्याग्निसंयोगात् यागे लक्षणशब्दः । तेन क्रतुवचनानि तद्धर्मविधानानि इत्यदोषः ।

**वा**—‘ अग्नेः स्तोत्रं ’ इत्यादिषु अगत्या आश्रयणम् । ज्वलनेन संबद्धं स्थलं लक्ष्यते, नापि तद्वान् क्रतुः । न चैकत्र लक्षणाऽऽश्रयणमिति सर्वत्रैव सा आश्रयितव्येति । तस्मात् सत्यां गतौ द्रव्यवचनत्वमेव युक्तम् । यस्तु अत्रैवाधिकरणे **भाष्यकारान्तरेण** अग्नेः फलवदफलत्वप्राकृतवैकृतत्वनित्यानित्यत्वोत्तरवेदिविकाराविकारत्वविचारः कृतः, स उदाहरणान्तरेषु अधिकरणान्तरसिद्धः इहासंबद्धोऽपि स्मरणमात्रदर्पणोपन्यस्तः इत्युपेक्षितव्यः । तस्मात् नैवंजातीयको गुणो भेदकः इति सिद्धम् ।

**सुधा**— फलवदफलत्वविचारः पर्णमय्यधिकरणसिद्धः ( ४।३।१ ) । प्राकृतवैकृतत्वविचारस्तु अस्मिन्नेवोदाहरणे अन्यतिथ्याद्यधिकरणसिद्धः ( १०।८।११ ) । नित्यत्वानित्यत्वविचारः गोदोहनोदाहरणे तृतीयाधिकरणसिद्धः ( ३।६।३ ) । उत्तरवेदिविकाराविकारत्वविचारस्तु संकर्षे द्वितीयेऽध्याये ( २।१।२६ ) सिद्धः । पृ. ९४९.

**शा**— किं ‘ अग्निं चिनुते ’ इति यागविधिः , उत अग्निसंस्कारमात्रं स्वतन्त्रं विधीयते , किंवा ज्योतिष्टोमादिषु गुणो विधीयते । तदर्थं च किं अग्निशब्दः यागनामधेयं , उत द्रव्यवचनः इति संदेहः । तत्र यागविधानं स्यात् , **इति प्राप्तेऽभिधीयते** । ‘ अग्नेश्चयनसंस्कारमात्रमत्र विधीयते । तस्याथातोऽग्निमित्यादिवाक्यैः स्यात् क्रतुसंगतिः । वह्नौ रूढोऽग्निशब्दोऽयं नहि यागस्य वाचकः ॥ ’ तस्मादपि ज्योतिष्टोमादिषु गुणविधिः ।

**सोम** — पूर्ववैपम्येण प्रत्यवस्थानात् **संगतिः** । सिद्धान्ते ‘ अथातोऽग्निमग्निष्टोमेनानु यजन्ति ’ इत्यादीनि वाक्यानि अग्निविनियोजकानि । तत्राग्निष्टोमसंस्थायाः क्रत्वर्थत्वात् अग्नेस्तादर्थ्यासंभवात् अग्निष्टोमसंस्थेन यागेन इति तत्रैव यागलक्षणा । उक्थ्यादिवाक्येषु तु उक्थ्यादिशब्दानामुक्थ्यादिसंस्थामात्रपरत्वमेव न तु तद्युक्तयागपरत्वं , तासामेव संस्थानां फलवत्त्वेन अग्निं प्रति शेषित्वसंभवादिति ध्येयम् । **सूत्रार्थस्तु**— अग्निः अग्निशब्दः यागनाम प्रतीयेत ‘ अग्नेः स्तोत्रं अग्नेः शस्त्रं ’ इति स्तोत्रशस्त्रयुक्ततया निर्देशरूपलिङ्गदर्शनात् स्तोत्रशस्त्रयोः क्रत्वेकसंबन्धित्वात् इति स्तोत्रशस्त्रवाक्ये अनुपपत्तिबलात् लक्षणया अग्निशब्दस्य तद्युक्तक्रतुपरत्वमात्रेण विद्वद्वाक्ये ( य एवं विद्वानग्निं चिनुते इत्यत्र ) यागनामत्वमग्निशब्दस्य नाभ्युपेयं इति सिद्धान्ताशयः ।

**वि**—‘अग्निं चिनुत इत्यत्र यागो वा संस्कृतिः, र्यजिः । लिङ्गेन यागनामत्वाद् यजिना चानुवादतः ॥, रूढ्या द्रव्यस्य नामैतद् वह्नेराधानवच्चितिः । संस्कारः संस्कृते वह्नावग्निष्टोमो विधीयते ॥’ तस्मात् संस्कारविधिः ।

**भाट्ट**— अनारभ्यैव श्रुतं ‘ य एवं विद्वानग्निं चिनुते ’ इति । तत्र चिनोतिना नाग्निसंस्कारार्थत्वेन चयनविधिः, अपि तु अग्निसंज्ञकस्य यागस्यैव विधिः । ‘ अथातोऽग्निमग्निष्टोमेनानु यजन्ति , तमुक्थ्येन ,

तमतिरात्रेण, तं द्विरात्रेण' इत्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञानां अग्न्यनुयजनत्वरूपगुणाम्नानात्। नहि अग्न्यनुयजनत्वं अग्नेरयागत्वे अवकल्पते, 'देवदत्तमनुगच्छति यज्ञदत्तः' इत्यादौ तुल्यक्रियायोगे एव अनुशब्ददर्शनात्। अतश्च अग्निसंज्ञकस्य यागस्य तस्मिन्नेव विधौ गौरवात्, विद्वद्वाक्ये एव चिनोतिना लक्षणया तद्विधानम्। स च अव्यक्तत्वात् ज्योतिष्टोमविकारः। उत्तरवाक्यैश्च तस्य क्रत्वङ्गत्वसिद्धिः। 'इष्टकाभिरग्निं चिनोति' इत्यनेन च चयनस्य प्राप्तत्वात् चिनोतिः निर्वपतिवत् अनुवादश्चयनस्य। **इति प्राप्ते**, 'पाकमनु भुङ्क्ते' इत्यादौ तुल्यक्रियायोगाभावेऽपि अनुशब्ददर्शनात् न तदनुरोधेन अग्निशब्दस्य चयनशब्दस्य च यागपरत्वकल्पना युक्ता। अतो विद्वद्वाक्ये चयनमेव अग्निसंस्कारार्थं विधीयते। अग्निशब्देन च यद्यपि शक्त्या ज्वलनः एवाभिधीयते, तथापि तदर्थत्वे वैयर्थ्यापत्तेः निरूढलक्षणया आहवनीयादिपरत्वावसायात् तदुद्देशेनैव चयनं संस्कारकतया विधीयते। संस्कारश्च सामर्थ्यात् चयननिष्पादितस्थण्डिलस्थापनरूपः। स्थापितस्याग्नेः उपयोगापेक्षायां 'अथातः' इति वाक्येन तस्य ज्योतिष्टोमाङ्गत्वेन विधानम्। तत्र हि अग्निशब्देन चयननिष्पादितस्थण्डिलस्थापितः अग्निः चयनमेव वा लक्षणया अभिधीयते। अग्निष्टोमशब्दश्च जातिन्यायेन संस्थावचनोऽपि व्यक्तिन्यायेन ज्योतिष्टोममेव प्रचुरप्रयोगादभिधत्ते, पार्थशब्द इवार्जुनम्। अतश्च ज्योतिष्टोमत्वमेव लाघवात् उद्देश्यताऽवच्छेदकं, न तु अग्निष्टोमसंस्थाकत्वमपि। यद्यपि चयनस्य ज्योतिष्टोमप्रयोगसंवलितत्वात् अनुष्ठानसादेश्यादेव तदङ्गत्वसिद्धिः, तथापि 'पशुकामश्चिन्वीत' इत्यादिवाक्यैः अग्नेः काम्यत्वावगमात् क्रत्वङ्गत्वप्रतिप्रसवार्थं तन्न विरुध्यते। अयं चाग्निः प्रकृतौ 'अग्निः सोमाङ्गं वेच्छतां' इत्यादिवचनाद् वैकल्पिकः। अग्निपक्षे च 'उत्तरवेद्यां ह्यग्निश्चीयते' इति वचनात् उत्तरवेद्या समुच्चयः। तदभावे चोत्तरवेदिमात्रं 'उत्तरवेद्यामग्निं निदधाति' इति वचनात्। अतश्च 'तमुक्थ्येन' इत्यादिवाक्यानि वैकल्पिकत्वात् विकृतिविशेषे तन्नियमार्थानि चयनाश्रितश्येनाकारतादिफलार्थगुणानां प्राप्त्यर्थकानि च इति दशमे (१०।८।११।२३–२८) वक्ष्यते।

**न्यायबिन्दुः**—'य एवं विद्वानग्निं चिनुते' इत्यत्र अग्निसंज्ञकयागविधिः, चिनोतिस्तु 'इष्टकाभिरग्निं चिनुते' इति वाक्यप्राप्तानुवादो निर्वपतिवत्। अग्निशब्दस्य यागनामत्वं च 'अथातोऽग्निमग्निष्टोमेनानु यजन्ति' इति वाक्ये यदग्निं यजति तदग्निष्टोमेन इत्यग्निसंज्ञकयागानुवादेन अग्निष्टोमसंस्थाविधानादवगम्यते। एवमनुयजन्ति इत्यपि गमकं, अग्नेर्यागरूपत्वाभावे तमनु यागान्तरबोधासंभवात्, 'देवदत्तमनुगच्छति यज्ञदत्तः' इत्यादिवत् एकजातीययोरेव तथा व्यपदेशात्। **इति प्राप्ते,** अग्नेः चयनसंस्कारमात्रमेवात्र विधीयते। तस्य 'अथातोऽग्निं' इत्यादिवाक्यैः क्रतुसंबन्धः क्रियते, न तु अग्निशब्दः अश्रुतयागनामधेयम्। अनुयजति इति तु चयनानन्तर्येणापि उपपद्यते, 'पाकमनु भुङ्क्ते' इति विजातीयेऽपि प्रयोगात्। इति सिद्धान्तः।

**मण्डन**—'नाग्निवाचा यजिं वदेत्।'

**शंकर**—'अग्निर्गुणो न यजिर्मतः।'

**अग्न्यन्वाधानं ज्योतिष्टोमे दीक्षणीयादिषु देवतापरिग्रहार्थमपि न कर्तव्यम्॥**

**ग्रहार्थं च पूर्वमिष्टेस्तदर्थत्वात्। १२।१।१२।२४॥**

**भाष्यं**—पूर्वोक्तं अग्न्यन्वाधानं सौमिकं प्रसङ्गात् ऐष्टिकेषु कार्यं साधयतीत्युक्तम् (१२।१।१०।१९)। तदिदानीमाक्षिप्यते। धारणार्थत्वात् तस्य प्रसङ्ग उक्तः। न च तत् केवलं धारणार्थम्। किं तर्हि? धारणार्थं च देवतापरिग्रहार्थं च। एवं हि दर्शपूर्णमासयोः श्रूयते 'ममाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं गृह्णाति, देवता एव तत् पूर्वेद्युर्गृहीताः श्वोभूते यजते' इति। तत्र **यद्यपि** धारणार्थं सौमिकेन प्रसङ्गात् सिध्यति, (**तथापि**) देवतापरिग्रहार्थं तत् दार्शपौर्णमासिकं ऐष्टिकेषु कर्मसु कर्तव्यम्। आह, नैतत् युक्तम्। देवतापरिग्रहार्थमपि प्रसङ्गादेव सिध्यति। कुतः? इष्टेस्तदर्थत्वात्। सोमेऽपि दीक्षणीयेष्टिः देवतापरिग्रहार्था श्रूयते 'आग्नावैष्णवमेकादशकपालं निर्वपेद् दीक्षिष्यमाणः, अग्निः प्रथमो देवतानां, विष्णुः परमः, यदाग्नावैष्णवमेकादशकपालं निर्वपति,

देवता यज्ञं च तदुभयतः परिगृह्य दीक्षते ' इति । सैव देवतापरिग्रहणार्था, प्रसङ्गात् ऐष्टिकानां कार्यं साधयिष्यतीति ।

टुप् — ( अन्वाधानस्य देवतापरिग्रहार्थत्वमभ्युपेत्यापि दीक्षणीयया प्रसङ्गः साधितः । वस्तुतः अन्वाधानस्य देवतापरिग्रहार्थत्वे न किं चित् प्रमाणं इति परमार्थमाह—) न देवतापरिग्रहार्थमग्न्यन्वाधानं वस्तुतोऽवगम्यते । ' ममाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं परिगृह्णाति, देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते ' इत्ययं शब्दो देवतापरिग्रहार्थत्वमवबोधयेत् । न च ईदृशेन शब्देन देवतापरिग्रहार्थत्वं प्रतिपादयितुं शक्यते, अर्थवादत्वादस्य वाक्यस्य । अन्वाधानमेव अनेन स्तूयते । एवं च अदृष्टकल्पना न भविष्यति । मन्त्रोऽपि स्वसामर्थ्येन अग्निमभिदधाति, नान्यत् किं चित् । यदप्युक्तं, दीक्षणीयया देवतापरिग्रहः कृतः इति, एतदप्ययुक्तम् । कथं ? ' दीक्षिष्यमाणः ' इति शानचा कर्ता अभिधीयते, लृटा भविष्यत्कालः । दीक्षाशब्देन मुण्डनपवनादिसंस्कारो लक्ष्यते । तेन तद्विषयः संकल्पः । तस्मादीदृशः संस्कारो विधीयते आग्नावैष्णवश्रुत्या । असौ दीक्षां संपादयितुम् । तस्य विधीयमानस्य ' सर्वाश्चैव देवताः परिगृह्णाति ' इत्यर्थवादोऽयं आग्नावैष्णवस्य स्तुत्यर्थः । न चेदृशेन देवतापरिग्रहः शक्यो विधातुम् । देवतापरिग्रहार्थतायां च सत्यां पुरुषसंस्कारिका, देवतापरिग्रहार्था, इति वाक्यभेदः स्यात् । द्विरदृष्टकल्पना च ।

**शेषवदिति चेत् । २५ ॥**

**भाष्यं**— उच्यते, न सिध्यति । दीक्षणीया प्रधानार्था । सा प्रधानदेवतापरिग्रहणे वर्तते । शेषास्तु अङ्गाङ्गानां देवता अपरिगृहीताः । तत्परिग्रहार्थं दार्शपौर्णमासिकं ऐष्टिकेषु कर्तव्यम् ।

**न वैश्वदेवो हि । २६ ॥**

**भाष्यं**— न कर्तव्यम् । दीक्षणीययैव प्रसङ्गात् देवतापरिग्रहार्थः सेत्स्यति । ननु प्रधानदेवतापरिग्रहार्था दीक्षणीया इत्युक्तम् । प्रधानदेवतार्था सती अङ्गदेवतां गृह्णाति । कथं ? वैश्वदेवो हि । अस्ति सोमे वैश्वदेवो ग्रहः । तत्र सर्वदेवता इज्यन्ते । तन्मध्ये च अङ्गदेवता अपि । तस्मात् ताः परिगृहीताः । अनेन तत्परिग्रहार्थेन ऐष्टिकेन अग्न्यन्वाधानेन नार्थः ।

**स्याद्वा व्यपदेशात् । २७ ॥**

**भाष्यं**—स्याद्वा अर्थः ऐष्टिकेन अग्न्यन्वाधानेन । नाङ्गदेवतापरिग्रहणम् । ननु विश्वे देवा इज्यन्ते इति परिगृहीताः । न तत्र सर्वा देवता इज्यन्ते । किं तर्हि ? विशेषदेवतागणः । यथा साध्या वसवो रुद्रा इति । कथं ज्ञायते ? व्यपदेशात् । व्यपदेशो भवति ' अग्निर्वसुभिः, सोमो रुद्रैः, इन्द्रो मरुद्भिः, वरुण आदित्यैः, बृहस्पतिर्विश्वैर्देवैः' इति वस्वादिभ्यः अर्थान्तरभूतान् विश्वान् देवान् दर्शयति । यदि च सर्वे देवा उच्येरन्, विश्वदेवशब्देन तेभ्योऽर्थान्तरभूता न स्युः । तस्मात् विश्वदेवशब्दो गणवचन एव । एवं चेत् अपरिगृहीता अङ्गदेवताः । तदर्थं ऐष्टिकमग्न्यन्वाधानं कर्तव्यम् ।

**न गुणार्थत्वात् । २८ ॥**

**भाष्यं**— नैतदेवम् । कस्मात् ? गुणार्थत्वात् । नानेन व्यपदेशेन गणो वैश्वदेवः शक्यः कल्पयितुम् । गुणार्थोऽयं व्यपदेशो बृहस्पतिप्रशंसार्थः । अग्न्यादयो वस्वादिभिः केवलैः समेताः, बृहस्पतिस्तु सर्वैर्देवैः तैश्चान्यैश्चेति । यथा सेनापतिर्भृत्यबलेन सहागतः समाहर्ता निजेन बलेन, राजा तु सर्वैर्बलैः तैश्चान्यैश्चेति । अपि च वैश्वदेवो गणः कल्प्यः, सर्वे तु देवाः शब्दादेवावगम्यन्ते । तथा च दीक्षणीयया अङ्गदेवतापरिग्रहोऽपि प्रसङ्गात् सिध्यतीति न कर्तव्यं दार्शपौर्णमासिकं ऐष्टिकेषु अग्न्यन्वाधानम् ।

शा— यद्यपि ( अग्न्यन्वाधानं ) देवतापरिग्रहार्थं, तथापि प्रायणीयादिषु न कर्तव्यम् । दीक्षणीयाया अपि हि वाक्यशेषे देवतापरिग्रहार्थता श्रूयते । यद्यपि ' दीक्षा सोमस्य ' इति वचनात् प्रधानार्था दीक्षणीया प्रधानदेवता एव परिगृह्णाति, तथापि वैश्वदेवग्रहे सर्वदेवतासमवायात् तत्परिग्रहं कुर्वती दीक्षणीया प्रसङ्गात् अङ्गकर्मदेवता अपि गृह्णाति । नहि विश्वदेवशब्दः कस्य चिद्देवतागणस्य वाचकः प्रसिद्धावयवार्थस्य समुदायस्य शक्त्यन्तरकल्पनायां प्रमाणाभावात् । तस्मात् सर्वदेवतावचनत्वात् तत्परिग्रहे च सर्वान्तर्गतानामङ्गदेवतानामपि प्रसङ्गतः परिग्रहात् अकर्तव्य-

मन्वाधानम् । यद्वा तत्राभ्युपगमपक्षे दीक्षणीयायां कर्तव्यमेवान्वाधानं ततः परं तु न कर्तव्यम् ।

**सोम**— त्रवोरायनवैलक्षण्यात् **संगतिः** । देवतापरिग्रहस्यादृष्टरूपत्वेऽपि देवतासंस्कारकत्वात् संस्कृताया एव तस्याः कर्मोपयोगेन पशुपुरोडाशे भाव्यनूयाजाद्यदृष्टोपकारोपजीवनवत् भाव्युपजीवनासंभवात् दीक्षणीयायां देवतापरिग्रहार्थमग्न्यन्वाधानं कर्तव्यम् । **सूत्रार्थस्तु**— पूर्वमन्वाधानं ग्रहणार्थमपि निवर्तेत दीक्षणीयाया अपि तदर्थत्वादिति ।

**वि**—'परिग्रहाय देवानामन्वाधानं भवेन्न वा ।, असिद्धत्वाद्भवे, न्नैवं वैश्वदेवेन सिद्धितः ॥'

**भाट्ट**—यदुक्तं अग्न्यन्वाधानस्य धारणार्थत्वात् सोमाङ्गेष्ट्यादिषु अग्न्यन्वाधानं न विद्यते इति, तदाक्षिप्य समाधीयते । नान्वाधानं अग्निधारणार्थं, अपि तु 'देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते' इत्यर्थवादवशात् देवतापरिग्रहार्थम् । अत एव 'ममाग्ने वर्च इति पूर्वमग्निं परिगृह्णाति' इत्यत्रापि 'इन्धानाः' इति मन्त्रवर्णवशात् परिग्रहलक्षिताग्न्यन्वाधानेन प्रथमं अग्निदेवतोपलक्षिताः सर्वाः प्राकृता देवताः संस्कुर्यात् इत्यर्थः । अतश्च आनुषङ्गिके अग्निधारणे जायमानेऽपि तदर्थत्वाभावात् सोमाङ्गेष्ट्यादिषु देवतापरिग्रहार्थं कर्तव्यमेव अग्न्यन्वाधानम् । **इति प्राप्ते**, यद्यपि देवतापरिग्रहार्थं तत्, तथापि तत्तुल्यन्यायतया 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः, अग्निरवमो देवतानां विष्णुः परमः, देवता एव तदुभयतः परिगृह्य दीक्षितः' इति दीक्षणीयावाक्यशेषे तस्या अपि देवतापरिग्रहार्थत्वावगतेः युक्तस्तयैव प्रसङ्गः । 'दीक्षिष्यमाणः' इत्यत्र च उत्तरकालत्वमात्रं विवक्षितं, न जन्यत्वं इति तत्रापि कथं चित् व्याख्यानोपपत्तेः । **न च** 'दीक्षाः सोमस्य' इति वचनात् तस्याः प्रधानमात्रार्थत्वावगतेः तद्देवतापरिग्रहमात्रेण नाङ्गदेवतापरिग्रहः प्रसज्यते, इति **वाच्यम्** । दीक्षायाः प्रधानमात्रार्थत्वेऽपि तदजनकीभूतदीक्षणीयायाः आर्थवादिकदेवतापदसंकोचे प्रमाणाभावेन अङ्गप्रधानसाधारणदेवतापरिग्रहार्थत्वावसायात् । **यत्तु** अत्र सूत्रकारादिभिः अङ्गीकृत्यैव दीक्षणीयायाः प्रधानमात्रार्थत्वं प्रधानदेवतायां वैश्वदेवग्रहीयायां विश्वशब्दस्य सर्ववाचित्वात् सर्वेषामेव देवानां देवतात्वप्रतीतेः अङ्गदेवतानामपि तत्परिग्रहेण परिग्रहात् प्रसङ्गोपपत्तिः इति समाहितं, **तत्** विश्वदेवशब्दस्य 'आदित्यविश्ववसवः' इति **त्रिकाण्डीस्मरणेन** गणविशेषे रूढत्वावगतेः दीक्षणीयायाः देवतापरिग्रहार्थत्वपक्षे प्रधानमात्रार्थत्वे प्रमाणाभावाच्च उपेक्षितम् । अतो देवतापरिग्रहार्थत्वपक्षेऽपि युक्त एव प्रायणीयादिषु प्रसङ्गः । दिक्षणीयायां तु तस्यामवस्थायां देवतापरिग्रहस्य अजातत्वात् कर्तव्यमेव तद्देवतापरिग्रहार्थं प्राकृतमन्वाधानम् । वस्तुतस्तु दार्शिकान्वाधानवाक्ये अग्निपदस्योपलक्षणार्थत्वे प्रमाणाभावात् लिङ्गोपष्टब्धश्रुत्या अन्वाधानस्याग्निधारणमात्रार्थत्वप्रतीतेः, दीक्षणीयायाश्च लृट्श्रुत्या दीक्षोत्पादकत्वावगतेः नोभयोरपि देवतापरिग्रहार्थत्वम् । अर्थवादस्तु उभयत्रापि एवकारोपबद्धत्वात् अङ्गकरणेन च प्रधानदेवतायाः संबन्धावश्यकत्वात् तत्रैव परिग्रहत्वोत्प्रेक्षया स्तुतिमात्रम् । अतश्च सोमार्थाग्निधारणेनैव दीक्षणीयायामपि प्रसङ्गसिद्धेः तस्यामपि नाग्न्यन्वाधानम् ।

**न्यायबिन्दुः**— अग्न्यन्वाधानं देवतापरिग्रहार्थमपि 'ममाग्ने वर्च इति पूर्वमग्निं गृह्णाति देवता एव तत् पूर्वेद्युर्गृहीत्वा श्वोभूते यजते' इति श्रुतेः । अतः प्रायणीयादिष्वपि तदर्थमग्न्यन्वाधानं कार्यं **इत्युक्ताक्षेपे प्राप्ते**, अग्निधारणरूपदृष्टफलसंभवे सति अदृष्टदेवतापरिग्रहार्थत्वस्य अर्थवादात् कल्पनाया असंभवात्, संभवेऽपि वा दीक्षणीययैव तत्सिद्धिः । 'अग्निरवमो देवानां, विष्णुः परमः, देवता एव तदुभयतः परिगृह्य दीक्षते' इति तदर्थवादश्रवणात् । यद्यपि 'दीक्षा सोमस्य' इति वचनात् सोममात्रार्था दीक्षणीया प्रधानदेवता एव गृह्णाति, तथापि तत्र विश्वदेवदेवतासत्त्वात् अङ्गदेवता अपि गृह्णाति । अस्मिंश्च पक्षे दीक्षणीयायां कर्तव्यमेव अग्न्यन्वाधानं स्वदेवतापरिग्रहार्थं, ततः परं तु न कार्यं इति विशेष इति सिद्धान्तः ।

**मण्डन**—'अन्वाधानमस्यां न च देवतापरम् ।'

**शंकर**—'दीक्षोर्ध्वाऽन्वाहितिर्न च ।'

**अग्न्यन्वाधानं ज्योतिष्टोमे दीक्षणीयादिषु न कार्यम् ॥**

**धारणार्थत्वात् सोमेऽग्न्यन्वाधानं न विद्यते । १२।१।१०।१९ ॥**

**भाष्यं**— सोमे दीक्षणीयादिषु ऐष्टिकेषु कर्मसु चोदकप्राप्तमग्न्यन्वाधानं किं कर्तव्यमुत नेति । कर्तव्यं, एवं चोदकोऽनुगृहीतो भविष्यति । **एवं प्राप्ते उच्यते ।** न कर्तव्यम् । कुतः ? धारणार्थत्वात् । विहृतस्याग्नेः धारणार्थं तत् । सोमार्थेन च विहृतस्य तत् कृतम् । तेन धृतोऽग्निः । न च धृतस्य धारणकार्यमस्ति । ननु अमन्त्रकं तत् । सत्यममन्त्रकं, अपि तु तत् कृतम् । न च कृतस्य मन्त्रार्थं पुनरावृत्तिरस्ति तस्मान्न कर्तव्यम् ।

**सोम**—पूर्ववत् अत्रापि पृथक् कर्तव्यता इत्युत्थितेः **संगतिः** । अन्वाधानं नाम विहरणानन्तरं आद्यो यो धारणार्थः काष्ठैर्बलवत्करणरूपः समिन्धनव्यापारः, तदर्थः काष्ठाधानात्मकव्यापारः , न तु समिन्धनार्थकाष्ठाधानमात्रम् । विहरणानन्तरं आदिमव्यापारश्चैक एव, इत्यन्वाधानस्य न पुनःपुनःकरणसंभवः । विहरणावृत्त्यभावेन अन्वाधानस्य पुनःपुनः कर्तुमशक्यत्वात् ।

**वि** --'अन्वाधानं दीक्षणीयादिषु स्यान्नास्ति वा,ऽस्ति तत् । चोदका, न्नास्ति सौमिक्यविहारेण धृतत्वतः ॥ '

**भाट्ट**— दर्शपूर्णमासयोः प्रणयनोत्तरं प्रादुष्करणोत्तरं वा अग्नीनां समन्त्रकं आद्यं समिन्धनं विहितम् । तत् अतिदेशेन सोमाङ्गेष्टिपश्वन्वादौ दीक्षणीयादिरूपे प्राप्तमपि न कार्यं, ततः पूर्वमेव साङ्गसोमकरणार्थप्रणयनाद्युत्तरं समिन्धनस्य कृतत्वात् । यद्यपि तदमन्त्रकं अर्थप्राप्तं च, तथापि तादृशेनैव कार्यस्य जातत्वात् न दीक्षणीयादिषु पृथगनुष्ठानम् । न च एकवारं समिद्धस्य पुनर्दार्ढ्यार्थं समन्त्रकसमिन्धनोपपत्तिः, ' ममाग्ने वर्च इति पूर्वमग्निं परिगृह्णाति ' इत्यनेन प्रणयनाद्युत्तरकालीनप्रथमाग्न्यन्वाधाने एव मन्त्रविधानात् । न च पूर्वपदस्य अग्निपदसामानाधिकरण्येन आहवनीयपरत्वात् प्रतिप्रधानं गुणावृत्तिन्यायेन प्रतिधारणं मन्त्रावृत्तिः, **बोधायनेनास्य** गार्हपत्यान्वाधाने विनियुक्ततया पूर्वपदस्य क्रियाविशेषणत्वमङ्गीकृत्य प्रथमान्वाधानविधिपरत्वात् । अत एव ' देवता एव पूर्वेद्युर्गृहीत्वा श्वोभूते यजते ' इत्यर्थवादानुरोधात् पूर्वपदं पूर्वेद्युःकालपरं इत्यपि केषां चिदुक्तं परास्तं, लक्षणाऽऽपत्तेः, पूर्वेद्युःकालीनानेकसमिन्धने मन्त्रावृत्तिप्रसङ्गाच्च, प्रकृतौ सद्यस्कालायां समन्त्रकान्वाधानकरणानापत्तेश्च, दीक्षणीयादेः सद्यस्कालतया प्रसङ्गसिद्धिकथनस्य अनुक्तिसहत्वाच्च । अतः अस्मदुक्तरीत्यैव आद्यान्वाधाने मन्त्रविधेः युक्त एव दीक्षणीयादौ प्रसङ्गः ।

**न्यायबिन्दुः**-- सोमाङ्गेषु ऐष्टिकेषु अग्न्यन्वाधानं कार्यं, **इति प्राप्ते**, तस्य धारणार्थत्वात् सोमार्थधारणेनैव च प्रसङ्गसिद्धेः न कर्तव्यं इति सिद्धान्तः ।

**मण्डन** —' न त्वादधातिः क्रतुमध्यगेष्टिषु ।' आदधातिः अन्वाधानम् ।

**शंकर**— ''सोमेऽग्न्यन्वाहितिर्न च ।'

***अग्न्यन्वाधानम्** । इदं अन्वाधानं इत्यप्युच्यते, अन्वाहितिः इति च । **के.** * अग्न्यन्वाधानं ऐष्टिकं ज्योतिष्टोमे सौमिकविहरणेन प्रसङ्गसिद्धत्वात् पृथङ् न कार्यम् । **वि.** १२।१।१०. * अग्न्यन्वाधानं ज्योतिष्टोमे ऐष्टिकेषु कर्मसु देवतापरिग्रहार्थमपि न कर्तव्यं, प्रधानदेवतावत् अङ्गदेवतानामपि गृहीतत्वात् । **भा.** १२।१।१२। २४-२८,* अग्न्यन्वाधानं यदि देवतापरिग्रहार्थं, तदपि निशीष्टौ भेदेन कर्तव्यम् । प्राकृतेन अग्न्यन्वाधानेन अमावास्यादेवताः परिगृहीताः , न च रक्षोहाऽग्निः परिगृहीतः । १२।२।५।१८. * अग्न्यन्वाधानं ये याज्ञिकाः यजमानकर्तृकमेव पक्षे वदन्ति, तेषां इत एव मन्त्रवर्णात् ( ममाग्ने वर्चः ) भ्रान्तिः । अथ तु किं चिद्वचनमुपन्यस्यन्ति तथापि किं कर्मविकल्पवत् फलं अध्वर्युयजमानयोर्विकल्पते किंवा फलं नित्यमेव याजमानं इति विचारः । याजमानमिति निर्णयः । **बा.** ३।८।१३।२६. * अग्न्यन्वाधानं समाख्यया आध्वर्यवम् । तच्च एवंगुणो मन्त्रः करोति आध्वर्यवः । स उच्यते अनेन मन्त्रेणेति । तस्मादाध्वर्यवो मन्त्रः । ' ममाग्ने वर्चोऽस्तु ' इत्यपि यजमानस्य वर्चो ममेति व्यपदिशति लक्षणया । **भा.** ३।८। १३।२६, * **अग्न्यन्वाधानेन** अग्निर्धार्येत, तत्कृतात्

अग्निधारणात् देवतापरिग्रहः। १२।४।७।१९, *अग्न्यन्वाधानेन देवताः परिगृह्यन्ते, नाग्निना। एवं श्रूयते 'यः पूर्वेद्युः अग्निं गृह्णाति स वै श्वोभूते देवता अभियजते' इति। १२।४।७।२५, * **अग्न्यन्वाधानस्य** देवतापरिग्रहार्थता वाक्यशेषे श्रूयते 'ममाग्ने वर्चो विहवेष्वस्तु इति पूर्वमग्निं परिगृह्णाति देवता एव तत् पूर्वेद्युः परिगृहीताः, श्वोभूते यजते' इति। तत् परिग्रहार्थमपि अग्निधारणार्थं भवत्येव। १२।२।५।१८. * **अग्न्यन्वाधानादिरूपे** प्रथमपदार्थे याज्ञिकानां दर्शपूर्णमासारम्भत्वस्य प्रसिद्धिः। **भाट्ट.** ९।१।११. * **अग्न्यन्वाधानादीनां** करिष्यमाणं प्रधानं निमित्तं, स्विष्टकृदादीनां तु कृतम्। अग्न्यन्वाधानादि प्रागुपाकरणात् साधारणं सर्वेषां सकृत् कृतम्। **टुप्.** ५।१।५।८.

𝕏 '**अग्न्यादयो** घटादीनां प्रसिद्धा ये प्रकाशकाः। न ते प्रकाशरूपा हि प्रकाशस्यानपेक्षणात्॥' **ऋजु.** पृ. २२१.

𝕏 **अग्न्यादिदेवतापदप्रयोगेऽपि न सप्तदशप्रजापतित्वभङ्गः॥**

'अग्नयेऽनुब्रूहि' इत्यादाविव 'अग्निं यज' 'ये यजामहेऽग्निं' इति तत्तद्देवतानाम्नां योगे सप्तदशाक्षरत्वभङ्गापत्तेः नियमादृष्टविरोधात् अश्रुतकल्पने मानाभावात् आकाङ्क्षितकर्मपदस्य 'छिनद्मि' इत्यादिवत् अर्थाध्याहारेणापि उपपत्तेः अग्निपदस्याध्याहारेऽपि तस्य प्रैषादौ प्रतिवचनान्ते एवेति नियमेऽपि मानाभावात् द्व्यक्षरपञ्चाक्षरावेव तौ प्रयोज्यौ, **इति प्राप्ते**, सर्वदेवतापदसाधारणांशमादायापि सप्तदशाक्षरत्वोपपत्तेः अर्थाध्याहारस्य निरस्तत्वाच्च देवताविशेषपदमन्तरेण यागविशेषप्रतिपत्तेरभावेन अनन्तराधिकरणसिद्धदृष्टार्थत्वभङ्गापत्तेश्च देवतानाम्नामादेशः। अत एव शाखान्तरे 'अमुष्मा अनुब्रूहि' 'अमुं यज' इत्यादिवचनैः देवतानामविशेषोपलक्षकः अदःशब्दः श्रूयते। 'असावेहि' 'अवधिष्मामुं' 'इदमहममुष्य' इत्यादिवचनैः देवतापदपौर्वापर्यनियमोऽपि एतद्बलादेव। **यत्तु** लिङ्गदर्शनमुक्तं **मूले** "यत् तनूनपातं यज इडो यजेति ब्रूयाज्जामि स्यात् यजयजेत्येव ब्रूयात्' 'मारुतस्यावद्यन् मरुद्भ्योऽनुब्रूहीत्याश्राव्य मरुतो यजेति ब्रूयात्' इत्यादिज्ञापकात् अन्यत्रापि देवतापदप्राप्तिः" इति **तन्न** शाखान्तरे 'तनूनपातं यज' इत्येव पाठात् तन्निषेधार्थकत्वेन पूर्वस्य, इतरस्य तु विधिरूपत्वेनापि उपपत्तेः विपरीतसाधकं इति तत्रैवोक्तम्। **संकर्ष.** २।३।२.

𝕏 **अग्न्याधेयम्**। अग्नीनां आधानं स्थापनमेव। सपत्नीकस्य सपुत्रस्य गृहस्थस्य अग्निहोत्रहोमदर्शपूर्णमासेष्टिज्योतिष्टोमादिसर्वश्रौतकर्मानुष्ठानार्थं प्रथमं त्रयः पञ्च वा अग्नयः विधिना स्थापनीयाः अस्मिन् कर्मणि। अनेन कर्मणा संस्कृतेषु आहवनीयाद्यग्निषु श्रौतानि कर्माणि भवन्ति। इदमेव आधानं, अग्न्याधानं, अग्न्याधेयं इति शब्दैरुच्यते। **के.** * अग्न्याधेयं अग्निप्रयुक्तं न कर्मप्रयुक्तम्। सर्वकर्मार्थास्तु अग्नयः। इति सर्वार्थमित्युच्यते। **भा.** ३।६।५।१५, * अग्न्याधेयं न पवमानेष्ट्यर्थं किंतु पवमानेष्टय एव अग्न्यर्थाः। ३।६।४।१२.

𝕏 **अग्न्याधेयस्य नैमित्तिके गुणविकारे दक्षिणादानमधिकं स्याद् वाक्यसंयोगात्। १०।३।५।३०॥**

आधाने 'एका देया, षड् देयाः, द्वादश देयाश्चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयं, अपरिमितं देयं' इति दक्षिणा श्रुता। अथ 'योऽग्नीनाधाय भाग्यज्यानिं पुत्रज्यानिं वा जीयेत स पुनरादधीत' (ज्यानिः हानिः नाशः) इति नैमित्तिकं पुनरग्न्याधेयं श्रुतम्। तत्र नैमित्तिके पुनराधेये गुणस्य प्राकृतदक्षिणायाः 'पुनर्निष्कृतो रथो दक्षिणा' 'पुनरुत्स्यूतं वासो दक्षिणा, पुनरुत्सृष्टोऽनड्वान्' इति वाक्येन विकारे बाधे प्राप्तेऽपि, दक्षिणादानं अधिकं स्यात् वाक्यसंयोगात् 'उभयीर्ददाति अग्न्याधेयिकीश्च पुनराधेयिकीश्च' इति। तस्मात् पुनराधाने प्रथमाग्न्याधेयिक्याः पुनराधेयिक्याश्चेति उभयोर्दक्षिणयोः समुच्चयः, न तु अग्न्याधेयिक्याः पुनराधेयिक्या बाधः इति पूर्वपक्षः।

**शिष्टत्वाच्चेतरासां यथास्थानम्। ३१॥**

पूर्वपक्षे साधकान्तरमाह। यथास्थानं स्थानं क्रममनतिक्रम्य क्रमानुसारेण इतरासां वैकृतीभ्यो भिन्नानां

एकषडादिगोरूपाणां प्राकृतीनां दक्षिणानां शिष्टत्वात् विहितत्वात्। तस्मात् समुच्चयः।

**विकारस्त्वप्रकरणे हि काम्यानि। ३२॥**

पूर्वपक्षं सूत्राभ्यां प्राप्तं तुशब्देन व्यावर्तयन् सिद्धान्तमाह। यदि 'पुनरुत्सृष्टो रथो दक्षिणा, पुनरुत्सृष्टं वासः, पुनरुत्सृष्टोऽनड्वान्' इति पुनरुत्सृष्टाम्नानं आधानप्रकरणे भवेत्, ततः तत् आधानदक्षिणां न बाधेत। अप्रकरणे तु आधानप्रकरणाम्नानाभावे तु यत् पुनराधाने पुनरुत्सृष्टत्वादि विधीयते, तत् काम्याम्नानं प्राकृतं नित्यं बाधमानमेव निविशते। तस्मात् काम्यनैमित्तिकाधानदक्षिणाम्नानं विकारः आधानदक्षिणायाः। एवं च पुनराधानदक्षिणया आधानदक्षिणाया बाधः, न समुच्चयः। विकारः, अप्रकरणे हि यस्मात् काम्यानि पठितानि इति सूत्रपदान्वयः। आधानदक्षिणायाः पुनराधानदक्षिणा विकारः बाधिका। हि यस्मात् काम्यानि पुनराधानदक्षिणाद्रव्याणि अप्रकरणे आधानप्रकरणादन्यत्र पुनराधानप्रकरणे पठितानि इति अन्वितपदार्थः।

**शङ्कते च निवृत्तेरुभयत्वं हि श्रूयते। ३३॥**

सिद्धान्तं हेत्वन्तरेण साधयति। यतः निवृत्तेः शङ्कते। प्राकृतदक्षिणानां स्वरूपतः फलतश्च निवृत्तेः शङ्कां मनसि कृत्वा हि यस्मात् उभयत्वं श्रूयते। एकयैव दक्षिणया उभयसिद्धिं दर्शयति श्रुतिः 'यद्वैकृतीर्ददाति दक्षिणाः, उभय्योऽपि तेन दक्षिणाः प्रत्ता भवन्ति' इति। यदि उभय्योऽपि दक्षिणाः स्वरूपेण एव दत्ताः विवक्षिताः, ततः 'उभय्योऽपि प्रत्ता भवन्ति' इति नावक्ष्यत्। तस्मात् पुनराधेयदक्षिणाभिः आधानदक्षिणा बाध्यन्ते इति सिद्धान्तः। **के.**

* **अग्न्याधेयस्य** ब्राह्मणराजन्यवैश्यानां प्रापकाणि श्रवणानि। तेन शूद्रस्य तत्र नाधिकारः। **भा.** २।३।३।४ पृ. ५९४, * अग्न्याधेयस्य सोमपूर्वत्वपक्षे सौमिकऋतुनक्षत्रातिक्रमो वचनात्।५।४।५।१५–१६, * **अग्न्याधेये** इष्टिपूर्वत्वं सोमपूर्वत्वं वा विकल्पेन।५।४।३।५–९, * अग्न्याधेये एक एव पुमान् स्त्रीसद्वितीयः अधिकारी, न तु द्वौ पुमांसौ। ६।१।५।२२–२३, * अग्न्याधेये एकषड्द्वादशादिगोदक्षिणानां विकल्पः। १२।४।५।९, * अग्न्याधेये 'जातपुत्रः कृष्णकेशोऽग्नीनादधीत' इत्यनेन अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यचरणं विरुध्यते। १।३।२।३, अपुंस्त्वं प्रच्छादयन्तः अष्टाचत्वारिंशद्वर्षाणि वेदब्रह्मचर्यं चरितवन्तः। तत एषा स्मृतिरित्यवगम्यते। १।३।२।४, * अग्न्याधेये त्रयाणां निर्देशो भवति 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति। शूद्रस्याधाने श्रुतिर्नास्ति इति अनग्निः शूद्रः असमर्थः अग्निहोत्रादि निर्वर्तयितुम्। ६।१।७।२६, * अग्न्याधेये पवमानेष्टिषु पवमानपावकशुचिदेवताकासु तन्त्रभेदः। स च भवन् एवं स्यात्, प्रथमाया भेदः, उत्तरयोस्तन्त्रम्। ब्रह्मवर्चसकामस्य तु तिसृणामपि सहप्रयोगः। ११।४।४।११–१४, * अग्न्याधेये पवमानेष्टिषु 'बुधन्वानाग्नेयः कार्यः, पावकवान् सौम्यः' इत्याज्यभागयोः निर्गुणावेव अग्निश्च सोमश्च ग्राह्यौ। बुधन्वान् पावकवांश्च मन्त्रावेव। १०।४।१५।३०–३१, * अग्न्याधेये ब्राह्मणस्य इष्टिपूर्वत्वं सोमपूर्वत्वं वा इत्युभौ पक्षौ। अग्नीषोमीयहविर्मात्रं तु सोमात् परस्तात् उत्कष्टव्यम्। ५।४।४।१०–१४,१७–१८, * अग्न्याधेये सामगानमुपांशु, आधानस्य याजुर्वैदिकत्वात्। ३।३।२।९, * **अग्न्याधेयगतानि** वैकङ्कतादीनि पात्राणि सर्वयागेषु दर्शपूर्णमासप्रभृतिषु निविशन्ते, न तु पवमानहविःषु एव। ३।१।१२।२२, * **अग्न्याधेयगतानां** दक्षिणानां पुनराधाने निवृत्तिः, न समुच्चयः। १०।३।५।३०-३३, * **अग्न्याधेयगतपवमानेष्टयः** न पवमानेष्टिसंस्कृतेऽग्नौ, किंतु आधानमात्रसंस्कृते कर्तव्याः। ३।६।६।१६–१७, * **अग्न्याधेयप्रकरणे** समाम्नातान्यपि पवमानहवींषि वाक्येन प्रकरणं बाधित्वा अग्नेरेव गुणभूतानि भवन्ति। ३।१।१२।२२, * **अग्न्याधेयप्रभृति** यज्ञपात्राणां धारणस्य नियमः। ११।३।१४।४३–४९.

**अग्न्यानयनन्यायः**। अग्निरानीयतां इत्युक्ते काष्ठादिकमपि आनीयते। **संग्रहः.** * यथा 'अग्निरानीयतां' इत्युक्ते अचोदितमपि पात्रानयनं अग्न्यानयने अन्तर्भवति इति, तथा प्रकृतेऽपि। **साहस्री.** १७१.

▓ **अग्न्युपस्थानं** क चित् कर्मविशेषे प्रगीतयैव ऋचा 'अयं सहस्रमानवः ( साम. ४५८ ) इत्येतया, आहवनीयमुपतिष्ठते ' न तु अप्रगीतया । **वि.** ९।२।८ वर्णकं २. ॥ **अग्न्युपादानं** न काष्ठन्। **संकर्ष.** ३।२।७.

▓ **अग्रतायाः काम्याया विधौ शुक्रादिग्रहस्य ऐन्द्रवायवग्रहापेक्षया पूर्वं प्रतिकर्षः, न तूपांशोः प्राक् ॥**

**पुरस्तादैन्द्रवायवस्याग्रस्य कृतदेशत्वात् । १०। ५।२०।७० ॥**

**भाष्यं** — अस्ति ज्योतिष्टोमः । तत्र ऐन्द्रवायवात् परे ग्रहाः कामाय श्रूयन्ते, 'आश्विनाग्रान् गृह्णीयादामयाविनः, शुक्राग्रानभिचरतः, मन्थ्यग्रानभिचर्यमाणस्य' इति । नैषां स्वक्रमस्थानां ग्रहणं, प्रतिकर्ष इति समधिगतमेतत् । अथेदानीमिदं संदिह्यते किं सर्वादितः प्रतिकर्षः, यतः कुतश्चिद्वा, उतैन्द्रवायवस्य पुरस्तात् प्रतिकर्ष इति । किं प्राप्तम् ? नियमकारिणः शास्त्रस्याभावादनियम इति । **एवं प्राप्ते ब्रूमः** । पुरस्तादैन्द्रवायवस्य प्रतिकर्ष इति । कुतः ? अग्रस्य कृतदेशत्वात् । एषोऽग्रस्य देशो विज्ञातो यदुपांश्वन्तर्यामाभ्यामूर्ध्वं, पुरस्ताच्चैन्द्रवायवस्य । कथमिव कृत्वा ? पूर्वेण वचनेनैन्द्रवायवाग्रा ग्रहाः प्रकृताः 'यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्' इति । तत्रैन्द्रवायवाग्रानुद्दिश्य तेषां ग्रहणं विहितम् । तेनैव विहितत्वान्न पुनराश्विनाग्रेषु शुक्राग्रेषु मन्थ्यग्रेषु च ग्रहणं विधीयते । अतो वाक्येन तदग्रता विधीयते । सा पुनरैन्द्रवायवाग्राणां, प्रकृतत्वात् । अभिचरतः शुक्राग्रान् किं कुर्यात् ? गृह्णीयादिति प्रकृतेनाभिसंबध्यते । शुक्राग्रान् ग्रहानिति नास्ति संबन्धः, ग्रहशब्दाभावात् । केन तर्हि संबन्धः ? प्रकृतेनैन्द्रवायवाग्रशब्देन, शुक्राग्रान् गृह्णीयात् ऐन्द्रवायवाग्रानिति । के ते ग्रहा इति, तत्रोक्तम् । तस्मादैन्द्रवायवस्य पुरस्तात्प्रतिकर्ष इति ।

**तुल्यधर्मत्वाच्च । ७१ ॥**

**भाष्यं**— तुल्यधर्माश्च ते ऐन्द्रवायवाग्रैः । तत्र धारासंयोगो दृश्यते । तस्माद्धाराग्रहानुद्दिश्यैतदग्रता विधीयते ।

**तथा च लिङ्गदर्शनम् । ७२ ॥**

**भाष्यं**—'धारयेयुरुक्तं, यं कामाय गृह्णीयुः । ऐन्द्रवायवं गृहीत्वा सादयेत् । अथ तं सादयेत्, यं कामाय गृह्णीयुः' इति काम्यस्य धारणानन्तरमैन्द्रवायवस्य ग्रहणं दर्शयति । तस्मादैन्द्रवायवस्य पुरस्तात् प्रतिकर्ष इति ।

**शा**— इदमेव वक्ष्यमाणानां ग्रहाणां साधारणोपक्रमप्रयोजनं, कथं नाम सर्वे एव वक्ष्यमाणा ग्रहाः काम्यानां गुणानामाश्रयत्वं प्रतिपद्येरन् इति ।

**सोम**—पूर्वत्रैव विशेषविचारात् **संगतिः** । असत्यस्मिन् धाराग्रहाणां सामान्येनोपक्रमे अविशेषादुपांश्वन्तर्यामयोरपि शुक्राग्रतादिगुणं प्रति आश्रयता स्यात् । सति त्वस्मिन् संनिहितानां धाराग्रहाणामेव आश्रयत्वं लभ्यते, इतीदमेवास्य सामान्यविधेः प्रयोजनम् । **न च** एतद्विध्यभावेऽपि 'अण्व्या धारया गृह्णाति' इति धाराग्रहाधिकारादेव उपांश्वन्तर्यामयोः आश्रयत्वव्यावृत्तिसिद्धेः नेदं प्रयोजनमिति **वाच्यम्** । 'अण्व्या धारया' इति वाक्ये न ग्रहणविधिः, किंतु ग्रहणे गुणमात्रविधिः । ततश्च ऐन्द्रवायवादीनां सामान्येनोपक्रमाभावे 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इति प्रातिस्विकविधीनां वक्ष्यमाणानां गुणवाक्यविधिसंनिधिपाठाभावेन ऐन्द्रवायवादिष्वेव अयं गुणो विधीयते इत्यत्र प्रमाणाभावेन धारावाक्यगतगृह्णातिना सर्वग्रहानुवादेन गुणविधिप्रसङ्गे सति सर्वेषां धाराग्रहत्वापत्त्या 'अण्व्या धारया' इति वाक्यस्य ऐन्द्रवायवादिमात्रविषयत्वस्य तत्संनिधिपठितोक्तसामान्यविधित्वेन 'अण्व्या धारया' इतिवाक्याधिकारमात्रेण उपांश्वन्तर्यामयोः आश्रयत्वव्यावृत्तेरलाभात् ।

**तन्त्ररत्नादौ** तु सामान्यविध्यभावे ऐन्द्रवायवादिवाक्यैरुत्पन्नानां ग्रहाणां प्राकरणिकक्रत्वर्थत्वबाधेन 'ऐन्द्रवायवाग्रान् गृह्णीयात् यः कामयेत यथापूर्वं प्रजाः कल्पेरन्' इति कामसंयुक्तवाक्येन पुरुषार्थत्वमेव प्राप्नोति इति क्रत्वर्थत्वप्रतिप्रसवार्थत्वं सामान्यविधेः इति प्रयोजनान्तरमुक्तं, **तच्चिन्त्यम्** । एवं सति खादिरत्वादेरपि क्रत्वर्थत्वं न स्यात्, तत्रापि 'खादिरो यूपो भवति' इति वाक्ये यूपसंबन्धमात्रस्यैव श्रवणेन क्रतुसंबन्धस्य प्रकरणकल्प्यतया तद्बाधनेन 'खादिरं वीर्यकामस्य' इति वाक्येन केवलपुरुषार्थत्वप्रसङ्गात् । **न च** प्रकरणाम्नानानर्थक्यमिय-

दुर्बलेनापि तेन ( प्रकरणेन ) क्रत्वर्थत्वं स्वादिरत्वादेर्लभ्यते । इह तु ऐन्द्रवायवादिदेवताविशिष्टग्रहणस्वरूपस्य अलौकिकदेवताघटिततया खादिरत्वादिवत् लोकप्रसिद्धत्वाभावेन तत्स्वरूपज्ञापनार्थतया द्वादशाहप्रकरणे व्यूढाम्नानस्येव प्रकरणाम्नानस्यार्थवत्त्वेन आनर्थक्याभावात् न तन्मात्रेण क्रत्वर्थत्वस्यापि लाभः इति **वाच्यम्** । एवमपि ' ऐन्द्रवायवं ' इत्यादिद्वितीयासंयोगात् यागीयद्रव्यसंस्कारार्थत्वावगमेन तद्बलादेव क्रत्वर्थत्वेऽपि तद्वाक्यस्यैव तात्पर्यकल्पनौचित्यात् । केवलस्वरूपज्ञापनार्थत्वे तु व्यूढाम्नानवत् स्वप्राधान्येनैव ग्रहाणामाम्नानं स्यात् , न तु क्रत्वर्थद्रव्यसंस्कारकत्वेन । तस्मादिह संस्कारकत्वाम्नानबलात् ऐन्द्रवायवादिप्रातिस्विकविधीनां क्रत्वर्थतातात्पर्येण प्रवृत्तानां प्रसङ्गात् स्वरूपज्ञापनद्वारा कामसंयोगवाक्येऽपि उपकारकत्वमात्रं, न तु एतावता कामार्थत्वमेवेति । किंच ' वाग्वै ' इत्यादिसामान्यविधावपि न साक्षात् क्रतुसंयोगः, किंतु प्रातिस्विकविधिसिद्धानां पुनराम्नानानर्थक्यबलात् कल्पनीयः । तत् वरं संस्कारकत्वबलात् क्रत्वर्थत्वकल्पनं , पुनराम्नानमपि च उक्तरीत्या उपांश्वन्तर्यामयोः काम्यशुक्राग्रत्वादिगुणं प्रति आश्रयत्वव्यावर्तनेन अर्थवदेव , इति कथं तदानर्थक्यम् । तस्मात् ग्रन्थोक्तमेव प्रयोजनम् । **सूत्रार्थस्तु–** ऐन्द्रवायवात् पुरस्तात् उपांश्वन्तर्यामयोरूर्ध्वं शुक्रादेरपकर्षः स्यात् धाराग्रहाधिकारेण तस्यैव काम्याग्रतादेशत्वेन कृतत्वात् इति ।

**वि**—' स सर्वादावैन्द्रवायवादौ वा , ऽत्राविशेषतः । सर्वादावाश्रया, दैन्द्रवायवादौ धृतेरपि ॥ ' स पूर्वोक्तः प्रतिकर्षः सर्वादौ उपांशोरपि पुरस्तात् , ऐन्द्रवायवादौ वा स्यात् इति संशयः । अत्र अविशेषतः सर्वादौ इति पूर्वपक्षः । धाराग्रहाणामाश्रयात् ' धारयेयुस्तं ' इति धृतेः उक्तत्वाच्च ऐन्द्रवायवादौ प्रतिकर्ष इति सिद्धान्तः ।

**भाट्ट**— प्रतिकर्षोऽपि ग्रहपदसंकोचे प्रमाणाभावात् महाप्रकरणेन सर्वग्रहाणामेवाश्रयत्वोपपत्तेः, 'वाग्वा एषा ' इत्यस्य च प्रयोजनान्तरसद्भावेन महाप्रकरणबाधकत्वानुपपत्तेः सर्वादित उपांश्वन्तर्यामात्पूर्वमपि । **इति प्राप्ते** , तन्त्ररत्नाद्युक्तप्रयोजनस्य दूषितत्वेन प्रयोजनान्तरस्यापि अवान्तरप्रकरणसंपादनद्वारैव प्रयोजनत्वात् , तत्संपादने च तेन धाराग्रहाणामेवाश्रयत्वोपपत्तेस्तेष्वेव पूर्वं शुक्रादेः प्रतिकर्षः ।

**न्यायबिन्दुः**— अविशेषात्सर्वादितः शुक्रग्रहः, **इति प्राप्ते**, ऐन्द्रवायवादिधाराग्रहाणां प्रकृतत्वात्तदाश्रितैव शुक्राग्रता फले विधीयते इति न सर्वादितः प्रतिकर्षः । इदमेव वक्ष्यमाणानां ' ऐन्द्रवायवाग्रा ग्रहा गृह्यन्ते ' इति कीर्तनस्य प्रयोजनं यत्तेषामाश्रयत्वलाभ इति सिद्धान्तः ।

**मण्डन**—' काम्येऽपि न स्यात् सकलग्रहेभ्यः । ' प्रतिकर्षणम् ।

**शंकर**—' सा तु धाराग्रहाश्रया । ' सा अग्रता ।

* **अग्रनाः**— (सू. १०।५।६२) अग्रे आदौ इत्यर्थः । ज्योतिष्टोमादौ ये धाराग्रहा गृह्यन्ते , तेषु को ग्रह आदौ ग्राह्यः इत्यत्र सामभेदेन भेद उक्तः ' यदि रथंतरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात् , यदि बृहत्सामा शुक्राग्रान् , यदि जगत्सामा आग्रयणाग्रान् ' इत्यादिना । बृहत्सामत्वे शुक्रग्रहः आदौ गृह्यते ततः ऐन्द्रवायवादयः एवं सर्वत्र । तदिदं अग्रताशब्देन सूच्यते । **के.** * **अग्रतायाः** एष देशो विज्ञातः , यत् उपांश्वन्तर्यामाभ्यामूर्ध्वं पुरस्ताच्चैन्द्रवायवस्य । **भा.** १०।५।२०।७०. * **अग्रताद्वयविधिः** द्वादशाहस्य समूढस्य त्र्यनीकायां अनैमित्तिकः । रथंतराभावेऽपि ऐन्द्रवायवाग्रत्वं , बृहदभावेऽपि शुक्राग्रत्वं इति । यथा गर्गत्रिरात्रे बृहत्सामत्वाभावेऽपि शुक्राग्रत्वम् । **वि.** १०।५।२३.

⌛ **अग्रमेव** शाखाच्छेदनादेः प्रयोजकं , न मूलम् । **भा.** ४।२।३।८–९.

⌛ **अग्रहणाद्वाऽनपायः स्यात्** । ३।२।१२।३२. अत्र पूर्वसूत्रस्थः पूर्वशब्दः शेषरूपार्थान्तरपरामर्शार्थेत्वेन अनुषञ्जनीयः । **सु. पृ.** ११४४.

⌛ **अग्रियवती** प्रतिपत् प्राकृती नैमित्तिकी अपचितौ एकाहे नानुष्ठेया , किंतु अन्यैव ग्राह्या । **भा.** १०।५।१६।५९–६१. * ' अग्रियवती बृहत्पृष्ठस्य प्रतिपदं कुर्यात् । ' अग्रियशब्दयुक्तां ' प्रयुजो वाचो अग्रियः ' इत्येताम् । **शा. सोम.** १०।५।१६.

अघन्यायः। ( ब्रसू. ४।१।३।१३ ) 'तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्' इत्ययमघन्यायः। अघं पापं तस्य ब्रह्मज्ञानेन नाशः। पुण्यस्यापि अश्लेषविनाशयो अघन्यायो निर्दिष्टः। तदधिगमे ब्रह्मप्राप्तौ सत्यां उत्तरस्य अघस्य अश्लेषः लेपाभावः, पूर्वस्य चाघस्य विनाशो भवति, तद्व्यपदेशात् तयोः अश्लेषविनाशयोः श्रुत्या व्यपदेशात् इति न्यायसूत्रार्थः। के.

अङ्गं नाम तत्, यत् प्रधानं फलवत् करोति। भा. १२।३।५।१६, * इतिकर्तव्यताकाङ्क्षस्य संनिधौ श्रूयमाणं इतिकर्तव्यताविशेषणत्वेन परिपूरणसमर्थं यत्, तत् अङ्गं भवितुमर्हति। ४।८।११।३४, * तद्धि अङ्गं, यत् प्रधानस्योपकरोति, न यदपकारे वर्तते। ६।३।२०।४१, * प्रधानस्य फलक्रियार्थमङ्गम्। ११।१।७।३३. * यद्धि येन रूपेण पुरुषस्य समीहितं भवति, तेन रूपेण तद्वस्तु तत्समीहानिमित्तपुरुषव्यापारगोचरीभूतेन येन वस्तुना साध्यते, तत् तस्य अङ्गं इत्युच्यते। इदमेव च परोद्देशप्रवृत्तकृतिव्याप्यत्वरूपत्वात् पारार्थ्यं इत्युच्यते। सोम. २।१।८ पृ. १०९. * 'अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतेः।' ( आकृष्यमाणमङ्गं अङ्गान्तरं नापकर्षति, अङ्गस्य अङ्गान्तरेण संबन्धाभावात् इत्यर्थः)। वा. २।२।३।६ पृ. ४८६. * अङ्गं गुणवत् क्रियते, प्रधानं सगुणं स्यादिति। तच्चेदङ्गे गुणवति क्रियमाणे प्रधानं विगुणमापद्येत, कोऽर्थोऽङ्गेन गुणवता कृतेन? भा. १२।२।९।२५. * अङ्गं द्विविधं, क्रत्वर्थं पुरुषार्थं चेति। आद्यं प्रयाजादि। द्वितीयं ज्योतिष्टोमदर्शपूर्णमासादि। अथ किं नाम क्रत्वर्थत्वं पुरुषार्थत्वं वा। नहि क्रतूपकारकत्वं क्रत्वर्थत्वं, पुरुषोपकारकत्वं पुरुषार्थत्वमिति युक्तम्। पुरुषार्थगोदोहनादेरपि प्रणयनद्वारा क्रतूपकारकत्वेन क्रत्वर्थत्वापत्तेः। प्रयाजादेरपि प्रधानद्वारा पुरुषोपकारकत्वेन पुरुषार्थत्वापत्तेश्च। उक्तलक्षणयोरेव क्रत्वन्यानुपकारकत्वादिघटनायां तूभयार्थदध्यादावव्याप्तेः, नानाविधोपकारकसाधारण्यापत्तेश्च, उपकारकत्वस्यैकस्याभावेन तद्घटितलक्षणाऽयोगाच्च। नापि क्रतूद्देशेन विधीयमानत्वं क्रत्वर्थत्वं, पुरुषोद्देशेन विधीयमानत्वं पुरुषार्थत्वम्। क्रत्वर्थेऽवघातादौ क्रतूद्देशेन विधीयमानत्वाभावात् क्रत्वर्थलक्षणाव्याप्तेः। नह्यवघातादेः क्रतूद्देशेन विधानं प्रमाणवत्। विशिष्टोद्देशेन विधाने विशेषणोद्देशेनापि विधेरावश्यकत्वे, अपूर्वीयत्वविशिष्टस्योद्देश्यत्वात् अस्तु अपूर्वोद्देशेनावघातादेर्विधानम्। न तु व्यापारघटकक्रतूद्देशेनापि, मानाभावात्। पुरुषोद्देशेन विधीयमानदीक्षणीयादौ पुरुषार्थत्वलक्षणस्यातिव्याप्त्यापत्तेश्च। ज्योतिष्टोमादेः स्वर्गाद्युद्देशेनैव विधीयमानत्वात् पुरुषार्थत्वलक्षणस्याव्याप्त्यापत्तेरपि इति चेत्।

अत्र तन्त्ररत्ने पार्थसारथिः स्वयंप्रार्थितसाध्याधीनानुष्ठानः पुरुषार्थः, तदुपकारार्थः क्रत्वर्थ इति तयोर्लक्षणे आह। तत्र स्वयंप्रार्थितसाध्याधीनानुष्ठानत्वं स्वयंप्रार्थितसाध्येच्छाजन्यप्रवृत्तिजन्यत्वम्। अस्ति चेदं ज्योतिष्टोमादौ। फलेच्छाया उपायेच्छां प्रति कारणत्वेन स्वयंप्रार्थितस्वर्गेच्छाजन्यज्योतिष्टोमादीच्छाजन्यप्रवृत्तिजन्यत्वस्य तत्र सत्त्वात्। स्वयंप्रार्थितत्वं च शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयत्वम्। यागादयो हि न शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयाः। तद्धि लोकावगतेष्टसाधनताज्ञानजन्येच्छाविषयत्वाद्वा भवेत्, इष्टसाधनताज्ञानानधीनेच्छाविषयत्वाद्वा भवेत्। न चोभयमपि यागादौ संभवति, तत्र लोकादिष्टसाधनत्वानवगतेः, इष्टसाधनताज्ञानं विना सुखत्वादिप्रकारकज्ञानादेव सुखादाविव यागत्वप्रकारकज्ञानेऽपि इच्छाया अनुत्पत्तेश्च। अतो न यागादौ स्वयंप्रार्थितत्वम्। स्वर्गादेस्तु स्रक्चन्दनवनिताद्यधिकरणीभूतदेशविशेषरूपत्वे तस्य लोकत एवेष्टसाधनत्वावगतेः; सुखविशेषरूपत्वे तु स्वर्गत्वादिप्रकारकज्ञानादेवेच्छोत्पत्तेश्च उक्तविधं स्वयंप्रार्थितत्वम्। पश्वादिरूपे फले इष्टसाधनताज्ञानाजन्येच्छाविषयत्वाभावादव्याप्तिः, अतः शास्त्राधीनेति। पश्वादौ तु लौकिकेष्टसाधनताज्ञानादेव इच्छोत्पत्तेर्न दोषः। इच्छात्वेनेच्छानुपादाने तु शास्त्राधीनेष्टसाधनताज्ञानाजन्ययागत्वप्रकारकज्ञानाविषयत्वात् यागादेः स्वयंप्रार्थितत्वापत्तिः। अतस्तदुपादानम्। इत्थं च शास्त्राधीनेष्टसाधनताज्ञानाजन्येच्छाविषयसाध्येच्छाजन्यप्रवृत्तिजन्यत्वं निरुक्तेष्टसाधनताज्ञानाजन्येच्छाजन्यप्रवृत्तिजन्यत्वं वा पार्थसारथिमते पुरुषार्थत्वलक्षणं पर्य-

वसन्नम् । तदुपकारार्थत्वं च तदुपकारप्रयोजकत्वम् । तेन प्रधानाङ्गाङ्गाभिक्रमणादेः प्रधानोपकाराजनकत्वेऽपि नाव्याप्तिः ।

**अत्रेदं बोध्यम्** । पुरुषार्थत्वलक्षणेऽपि काम्यकाले उपनयनाद्याश्रितपञ्चमवर्षादौ, काम्यजातौ च दधित्वादिरूपायामव्याप्तिः, तयोरननुष्ठेयत्वात् । क्रत्वर्थत्वलक्षणे पूर्वोदाहृतगोदोहनादावतिव्याप्तिः । किंच आधानाध्ययनयोरुभयभिन्नत्वेन तन्त्ररत्नोक्तेः तत्र क्रत्वर्थत्वलक्षणातिव्याप्तिः । **एतेने**तिकर्तव्यतात्वेनान्वितत्वं क्रत्वर्थत्वं, तद्भिन्नत्वं पुरुषार्थत्वमिति **शास्त्रदीपिको**क्तमपि **परास्तम्** । आधानाध्ययनयोः पुरुषार्थलक्षणातिव्याप्तेः । सिद्धपदार्थस्य सोमादेरितिकर्तव्यतात्वेनान्वितत्वाभावात् तत्र लक्षणद्वये क्रमेणातिव्याप्त्यव्याप्त्यापत्तेश्च । तस्यापि व्यापाराविष्टस्य इतिकर्तव्यतात्वमिति यदि विभाव्यते, तदा दध्नः उभयार्थत्वात् तत्र तद्भिन्नत्वाभावात् पुरुषार्थत्वलक्षणस्याव्याप्तिरिति ध्येयम् ।

( भाट्टदीपिकाचतुर्थाध्यायस्थमनूद्य दूषयति– ) **केचित्तु** स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वं, स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं क्रत्वर्थत्वम् । अत्र स्वयंप्रार्थितत्वं पूर्ववत् । उद्देश्यताविधेयते च स्वरूपसंबन्धरूपे, न तु साध्यत्वानुष्ठेयत्वात्मिके । एतेन कालादावनुष्ठेयत्वाभावेऽपि नाव्याप्तिः । न वा पुरुषार्थेषु अभ्यनुज्ञाविधिषु दोषाभावोद्देशेन तत्तत्क्रियाविधानेऽप्यव्याप्तिः । आधानाध्ययनयोस्तु स्वयंप्रार्थितभिन्नाग्न्यर्थज्ञानोद्देशेन विधानात् क्रत्वर्थत्वस्वीकारेऽपि न दोषः । ‘ फलं च पुरुषार्थत्वात् ’ (३।१।३।५) इत्यत्र तु फले पुरुषार्थत्वव्यवहारः अङ्गत्वव्यवहारवद्भाक्त इत्याहुः । **तदपि** यथाश्रुतं न साधीयः । ‘ अगन्म ’ इति मन्त्रस्य लिङ्गकल्पितश्रुत्या स्वयंप्रार्थितस्वर्गोद्देशेन विधानात् तत्र पुरुषार्थत्वलक्षणस्यातिव्याप्तेः । अत एव स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताकत्वाभावात् क्रत्वर्थत्वलक्षणस्याव्याप्तेश्च । किंच ‘ हीषिति वृष्टिकामाय निधनं कुर्यात् ’ इत्यादौ वृष्ट्याद्युद्देशेन स्वसाधनसौभरीयनिधनाधारत्वसंबन्धेन विधीयमानेषु हीषादिषु लक्षणस्यातिव्याप्त्यव्याप्ती ( पुरुषार्थत्वलक्षणस्यातिव्याप्तिः, क्रत्वर्थत्वलक्षणस्याव्याप्तिश्चेत्यर्थः ) । नहि तेषां पुरुषार्थत्वमिष्टम् । शाखाभेदेन सौभरीयनिधनाधारतया विहितानां हीषादीनामनियमेन वृष्ट्यर्थसौभरीयनिधनाधारत्वप्राप्तौ ‘हीष् इति वृष्टिकामाय निधनं कुर्यात्’ ‘ऊर्गित्यन्नाद्यकामाय ’ ‘ ऊ इति स्वर्गकामाय ’ इत्यादिवाक्यैः तत्तत्फलार्थसौभरीयनिधने हीषादीनां नियममात्रकरणात् । अत एवोक्तसंबन्धेन वृष्ट्याद्युद्देशेन हीषादेरपि वस्तुतः तत्तत्फलार्थसौभरीयनिधने आधारतया हीषादिनियमे एव तत्तद्विधितात्पर्यम् । **न चै**वमपि वृष्टिकामादिपदेन वृष्ट्यादिसाधनसौभरलक्षणया तदीयनिधनाधारत्वसंबन्धेन हीषादिविधिरस्तु । तथा चोद्देश्यसौभरस्य स्वयंप्रार्थितत्वाभावात् नाव्याप्त्यतिव्याप्ती इति **वाच्यम्** । औत्तरकालिकनियमविधिलाघवानुरोधेन गुरुधर्मावच्छिन्ने लक्षणाया अन्याय्यत्वात्, तदपेक्षया अपूर्वविधित्वापादकस्य सौभराधिकरणपूर्वपक्ष्यभिमतस्य (२।२।१३) फलान्तरोद्देशेन हीषादिविधेरेव युक्तत्वेन तदधिकरणसिद्धान्तानुपपत्तेः । अतो नियमविधिपरस्य तत्रत्यसिद्धान्तस्योक्तप्रकारे एव तात्पर्यमिति स्वेनैव तदधिकरणे प्रतिपादितम् । अतः कथं स्वोक्तिविरुद्धलक्षणकथनं युज्यते । अत एव तदुक्तरीत्यैव तद्दोषाभिधानम् । वस्तुतः ‘ हीषिति वृष्टिकामाय निधनं कुर्यात् ’ इत्यादौ न वृष्ट्याद्युद्देशेन निरुक्तसंबन्धेन हीषादिविधिः, तथात्वे वृष्टिकामपुरुषविशेषणतया श्रुताया वृष्टेरुद्देश्यतया अन्वयायोगात्, वृष्टिकामपदे वृष्टिलक्षणापत्तेश्चतुर्थ्याः कर्मत्वलक्षणाऽऽपत्तेश्च । अतो लक्षणाद्वयापत्तेस्तदपेक्षया एकस्मिन्निधनपदे वृष्टिप्रयोजकनिधनलक्षणया तदुद्देशेनैव हीषादिविधिर्युक्तः । निधनपदोत्तरद्वितीयया कर्मत्वस्य शक्त्यैवोक्तत्वात् लक्षणान्तराप्रसक्तेः । **न चास्मन्मते** वृष्टिकामादिपदे कर्मधारयाङ्गीकारान्न लक्षणान्तरप्रसक्तिरिति **वाच्यम्** । तथापि चतुर्थ्याः स्वशक्यतावच्छेदकानवच्छिन्नकर्मत्वलक्षणापेक्षया निधनपदेनैव स्वशक्यतावच्छेदकावच्छिन्ननिरुक्तनिधनलक्षणाया उचितत्वात्, विधिसंनिहितस्य पदस्योद्देश्यसमर्पकत्वे संभवति विप्रकृष्टपदस्य तथात्वायोगाच्च । अपि च भवन्मते निधनपदानुवादो निष्प्रयोजनः । न च संबन्धतात्पर्यग्राहकतया तदुपयोगः, नियमविधिलाघवानुगृहीत-

हीपादिपदस्यैव तत्त्वात्। अस्मन्मते तु निधनपदीयलक्षणातात्पर्यग्राहकतया वृष्टिकामादिपदसार्थक्यमिति न कस्यापि वैयर्थ्यम्। अत एव यत्र नैवंविधोद्देश्यसमर्पकपदश्रवणं यथा 'वासिठानां नाराशंसो द्वितीयः प्रयाजः' इत्यादौ, तत्र द्वितीयप्रयाजपदवैयर्थ्यमङ्गीकृत्यापि वासिठोद्देशेनैव तदभिलषितफलसाधनीभूतदर्शपूर्णमासाङ्गद्वितीयप्रयाजवृत्तित्वसंबन्धेन नाराशंसमन्त्रविधिः। नहि तत्र प्रयाजपदे निरुक्तप्रयाजलक्षणया तदुद्देशेन मन्त्रविधिः संभवति। तथात्वे प्रथमायामपि स्वशक्यतावच्छेदकानवच्छिन्नकर्मत्वलक्षणाङ्गीकारे लक्षणाद्वयापत्तेः। अतो वरं वासिष्ठपदोत्तरषष्ठ्याः स्वशक्यतावच्छेदकावच्छिन्नकर्मत्वलक्षणया निरुक्तप्रकाराङ्गीकरणम्। प्रकृते तु द्वितीयान्तविधिसंनिहितनिधनपदस्यैवोद्देश्यसमर्पकत्वे संभवति न तद्विपरीतवृष्टिकामादिपदस्य तदुचितम्।

एतेन सौभराधिकरणपूर्वपक्षाभिमतप्रकारोऽपि (२।२।३) निरस्तः, नियमविधिलाघवानुगृहीतनिरुक्तयुक्तिनिचयपराहतत्वात्। अत एवास्मन्मते उद्देश्यतावच्छेदकसंबन्धगौरवपराहतत्वाच्च। अतो वस्तुतो हीपादौ अतिव्याप्त्यव्याप्त्योरभावेऽपि तदुक्तपक्षमवलम्ब्य तदभिधानम्। 'अगन्म' इत्यादौ तु तयोर्दुर्वारत्वमेव।

**अथ** स्वयंप्रार्थितजनकत्वे सति स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वम्। विधेयतायामेव वा जनकतासंबन्धावच्छिन्नत्वं निवेश्यम्। 'अगन्म' इतिमन्त्रस्य स्मारकतया स्वर्गोद्देशेन विहितत्वेऽपि तदजनकत्वात्, हीपादेश्च परम्परया वृष्ट्याद्यर्थत्वान्नोक्तानुपपत्तिः। अत्र सत्यन्तमात्रविवक्षायां 'सूक्तवाकेन प्रस्तरं प्रहरति' इत्यत्र प्रतिपत्त्यर्थतया विहितस्यापि प्रहरणस्य तृतीयाऽवगतकरणत्वान्यथानुपपत्त्या आनुषङ्गिकायुरादिजनकत्वादतिव्याप्तिरतो विशेष्यदलम्। ततश्च आयुरादिप्रकाशकसूक्तवाकभागस्य प्रहरणाङ्गत्वनिर्वाहाय आयुरादेः तज्जन्यत्वमात्रकल्पनायामपि तदुद्देशेन प्रहरणविधेयत्वाभावान्नातिव्याप्तिः। इतरथा प्रस्तरस्याप्युद्देश्यत्वे वाक्यभेदप्रसङ्गात्। वाक्यान्तरकल्पनया आयुराद्युद्देशेन प्रहरणविधानं तु सूक्तवाककरणकत्वानुपपत्तेरायुरादिजनकत्वमात्रकल्पनयैव उपक्षीयमाणत्वादनुपपन्नम्। एवं चोक्तपुरुषार्थभिन्नाङ्गत्वमेव क्रत्वर्थत्वमिति न क्रत्वर्थत्वलक्षणे पूर्वोक्ताव्याप्त्यतिव्याप्ती **इति चेन्न**। दोषाभावोद्देशेन विधीयमानविवाहार्थानृतवदनादौ पुरुषार्थलक्षणाव्याप्तेः। दोषाभावस्याजन्यत्वात् जनकत्वस्याननुगतत्वेन तद्घटितलक्षणाऽयोगाच्च। क्रत्वर्थत्वलक्षणे, उभयार्थदध्यादौ अव्याप्तेश्च।

अत एवं वाच्यम्। अपूर्वीयत्वानवच्छिन्नस्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वम्। अस्ति चेदं स्वर्गाद्युद्देशेन विधीयमानज्योतिष्टोमादौ, अनिर्दिष्टप्रकारस्वर्गादिस्वरूपे आनर्थक्याभावेन तन्निष्ठोद्देश्यतायाः स्वर्गत्वादिनैवावच्छेदात्। अत्र पूर्वोक्तरीत्या अगन्मेत्यादौ अतिव्याप्तिवारणाय अपूर्वीयत्वानवच्छिन्नेत्युद्देश्यताविशेषणम्। तत्र स्वर्गादिनिष्ठोद्देश्यताया अपूर्वीयत्वावच्छिन्नत्वस्य नवमे (९।१।३) प्रतिपादितत्वान्न दोषः। आहवनीयादिस्वरूपे आनर्थक्याभावेन आहवनीयत्वादेरेवोद्देश्यतावच्छेदकत्वेन अपूर्वीयत्वानवच्छिन्नोद्देश्यतानिरूपितविधेयतावत्त्वस्य आधानादावपि सत्त्वात् स्वयंप्रार्थितवृत्तीत्युद्देश्यताविशेषणम्। अत एव हीपादिस्थलीयास्मदुक्तप्रकारे निधनादिनिष्ठोद्देश्यताया वृष्टिप्रयोजकनिधनत्वावच्छिन्नाया अपूर्वीयत्वानवच्छिन्नत्वेऽपि स्वयंप्रार्थितवृत्तित्वाभावान्न तत्रातिव्याप्तिः। एवं निरुक्तपुरुषार्थत्वघटकोद्देश्यताविलक्षणोद्देश्यतानिरूपितविधेयताशालित्वं क्रत्वर्थत्वम्। निरुक्तोद्देश्यताविलक्षणत्वं च निरुक्तोद्देश्यतावृत्त्यपूर्वीयत्वानवच्छिन्नत्वस्वयंप्रार्थितवृत्तित्वोभयाभाववत्त्वम्। भवति हि प्रयाजादिनिष्ठविधेयतानिरूपितदर्शपूर्णमासादिनिष्ठोद्देश्यता निरुक्तोभयाभाववती। दर्शपूर्णमासस्वरूपे आनर्थक्येन अपूर्वीयत्वेनैव तयोरुद्देश्यत्वात् स्वयंप्रार्थितवृत्तित्वाभावाच्च। अतः प्रयाजादेः क्रत्वर्थत्वम्। अत्रापूर्वीयत्वानवच्छिन्नत्वाभावमात्रोक्तौ 'यूपं छिनत्ति' 'हिरण्यशकलसहस्रेणाग्निं प्रोक्षति' इत्यादौ यूपादिस्वरूपे आनर्थक्याभावेन अपूर्वीयत्वलक्षणाभावात् यूपत्वादिनैव यूपादेरुद्देश्यत्वात् छेदनादौ अव्याप्तिः। एवं स्वयंप्रार्थितवृत्तित्वाभावमात्रोक्तौ अगन्मेत्यादावव्याप्तिः। अत उभयाभावपर्यन्तानुधावनम्। तथा च यूपादिवृत्त्युद्देश्यतायाः स्वयंप्रार्थितवृत्ति–

त्वाभावप्रयुक्तोभयाभाववत्त्वात् स्वर्गादिनिष्ठोद्देश्यतायाश्च अपूर्वीयत्वानवच्छिन्नत्वाभावप्रयुक्तोभयाभाववत्त्वात् नाव्याप्तिः । आधानादेस्तु क्रत्वर्थत्वमिष्टमेव ।

**ननु** ‘ तप्ते पयसि दध्यानयति ’ इत्यत्र पय उद्दिश्य दध्यानयनं विधीयते इत्यष्टमे ( ८।२।४ ) सिद्धान्तितम् । तत्र पयसो नापूर्वीयत्वेनोद्देश्यता । एतद्वाक्यप्रवृत्तेः पूर्वं पयस अपूर्वसाधनत्वानवगमेन पयःपदेन लक्षणाऽयोगात् । नहि ‘ व्रीहीनवहन्ति ’ इत्यादिवाक्यनिरपेक्षप्रवृत्तिकेन ‘ व्रीहिभिर्यजेत ’ इत्यादिवाक्येन व्रीहीणामिव प्रकृतवाक्यनिरपेक्षेण केन चिद्वाक्येन पयसोऽपूर्वसाधनत्वमवगतं, येन लक्ष्यतावच्छेदकस्य पूर्वमुपस्थितत्वात् तदवच्छिन्ने अवघातादिवाक्यस्थव्रीहिपदस्येव पयःपदस्य लक्षणा भवेत् । ‘ सा वैश्वदेव्यामिक्षा ’ इति वाक्यं तु प्रकृतवाक्यनिर्दिष्टपयःपरामर्शकतच्छब्दघटितत्वादुत्तरप्रवृत्तिकमेव, इत्यपूर्वीयत्वेन पयस उद्देश्यत्वायोगात् पयस्त्वेनैवोद्देश्यता वाच्या, तथा चापूर्वीयत्वानवच्छिन्नस्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयताकत्वादानयने पुरुषार्थलक्षणातिव्याप्तिः । एवं पयोगतोद्देश्यताया निरुक्तोभयाभाववत्त्वाभावात् क्रत्वर्थलक्षणाव्याप्तिरिति **चेन्न** । पयस आनयनासाध्यत्वेन अन्वयानुपपत्तेः पयःपदस्य पयस्त्वसमानाधिकरणधर्मावच्छिन्ने लक्षणाङ्गीकारात् । स च धर्मः आमिक्षावाक्यप्रवृत्त्युत्तरकालमपूर्वसाधनत्वरूपः एवेत्यवगमात् पयोवृत्त्युद्देश्यतायास्तदवच्छिन्नत्वात् नोक्ताव्याप्त्यतिव्याप्ती । **अत एव** ‘ व्रीहीनवहन्ति ’ इत्यादौ व्रीहित्वावच्छिन्नोद्देशेनैव अवघातादेर्विधानात् न अपूर्वार्थत्वकल्पनमित्यपूर्वीयत्वलक्षणाखण्डनप्रकारो **विधिरसायनोक्तो**ऽपि **निरस्तः** । अयोग्यतानिश्चयस्य प्रतिबन्धकत्वेन प्रथमतः शाब्दबोधस्यैवानुदयात् लक्षणाया आवश्यकत्वात् । **न चैवमपि** वैतुष्यादिविशिष्टे एव व्रीह्यादिपदलक्षणाऽस्त्विति **वाच्यम्** । लक्षणाया आवश्यकत्वे आनर्थक्यपरिहाराय अपूर्वीयत्वविशिष्टलक्षणायाः एवौचित्यात् । ( पद्यं २९ )

**नन्वेवमपि** ‘ व्रीहीनवहन्ति ’ इत्यादौ अपूर्वसाधनत्वलक्षणायामपि ‘ तप्ते पयसि ’ इत्यत्र न लक्षणा, तथा सति पयःपदस्य सप्तम्याश्च लक्षणामपेक्ष्य तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्य आरादुपकारकत्वेनैव विधानस्योचितत्वात् । अदृष्टकल्पनाप्रयुक्तगौरवस्य फलमुखत्वेनादोषत्वात् । अवघातादिवाक्ये तु आरादुपकारकत्वपक्षे प्रधानीभूतद्वितीयायाः करणत्वे लक्षणाप्रसङ्गात् गुणभूतप्रातिपदिके एवोक्तलक्षणाङ्गीकारात् संनिपत्योपकारकत्वमिति विशेषः । इति **चेन्न** । तच्छब्दस्य पूर्वोपस्थितप्रधानपरामर्शकत्वेन पूर्ववाक्ये प्रधानीभूतपरामृष्टव्यस्याभावे तदनुपपत्तेः, ‘ जुषन्तां युज्यं पयः ’ इति मन्त्रवर्णादिनिर्णीतपयःशक्तिकामिक्षापदसमभिव्याहृततच्छब्देन च दधिपरामर्शायोगात् तस्य प्राधान्यानुपपत्तेः पूर्वोक्तलक्षणाद्वयमङ्गीकृत्य पयसः उद्देश्यत्वावश्यकत्वादपूर्वसाधनत्वेनैव पयसः उद्देश्यत्वान्नोक्तलक्षणद्वयेऽप्युक्तदोषः । अयं च **प्राचीनमीमांसको**क्तवाक्यार्थमभिप्रेत्य दोषपरिहारः । **वस्तुतस्तु** निषादस्थपत्यधिकरणविरोधात् (६।१।१२) नायं वाक्यार्थः समञ्जसः । तच्छब्दस्य मन्त्रवर्णानुरोधेन गुणीभूतपयःपरामर्शकत्वानुपपत्तेः । पयसः उद्देश्यत्वेऽपि शाब्दबोधे गुणत्वेनैवान्वयात् भवन्मतेऽपि तच्छब्दस्य प्रधानपरामर्शकत्वाभावाच्च । नहि वस्तुतो यत् प्रधानं तत्परामर्शकत्वं तच्छब्दस्य । ‘ राजपुरुषः स सुन्दरः ’ इत्यादौ वस्तुतः प्रधानेऽपि राज्ञि सुन्दरत्वानन्वयात् । **अत एव** वैमृधन्यायेन (४।३।११) पदान्तरकल्पनया तप्तपयोधिकरणत्वविशिष्टदध्यानयनस्य पयोऽङ्गत्वेन विधिरिति **कैश्चिदुक्तमपि प्रत्युक्तम्** । पदान्तरकल्पनागौरवेण निषादस्थपत्यधिकरणविरोधतादवस्थ्यात् । वैमृधस्थले तु द्वितीयान्तविद्यमानपदस्यैवानुसंधानमात्रकल्पनान्न निषादस्थपत्यधिकरणविरोधः । अतो मन्त्रवर्णानुरोधेन तच्छब्दस्य गुणीभूतपयःपरामर्शकत्वमभ्युपेत्य पयोधिकरणकत्वविशिष्टदध्यानयनभावना, इष्टसामान्योद्देशेन विधीयते । इष्टविशेषाकाङ्क्षायां च सामर्थ्यात् वाक्यान्तरकल्पनया प्रधानाङ्गभूतामिक्षोद्देशेन निरुक्तानयनविधिः । न च वाक्यान्तरकल्पनायां सामर्थ्यादामिक्षाया इव वाजिनस्याप्युद्देश्यताऽऽपत्तेः आनयनप्रयोजकताऽऽपत्तिः । श्रुतवाक्ये पयसः आनयनव्याप्यदधिव्याप्यतया अवगतस्य कल्पितवाक्ये उद्देश्यत्वौचित्येन तस्यैव प्रयोजकत्वात् । तत्र चापूर्वसाधनत्वस्य पूर्वमवगतत्वात् तत्त्वेनैव

आमिक्षाया उद्देश्यता । फलमुखत्वाच्च वाक्यान्तरकल्पना न दोषः । अतो नोक्तलक्षणद्वयेऽव्याप्त्यतिव्याप्तिवार्ताऽपीति ।

नन्वाहवनीयत्वयूपत्वादेरपि आधानच्छेदनादिजन्यविजातीयापूर्वविशिष्टत्वरूपत्वात् तदवच्छिन्नोद्देश्यतायाः अपि अपूर्वीयत्वावच्छिन्नत्वात् पुरुषार्थलक्षणे आधानादिवारकस्वयंप्रार्थितवृत्तित्वस्य , क्रत्वर्थत्वलक्षणे अपूर्वीयत्वानवच्छिन्नत्वाभावमात्रस्य निषेधद्वयगर्भतायां गौरवेणापूर्वीयत्वावच्छिन्नत्वमात्रस्यैवोद्देश्यताविशेषणत्वेनोपपत्तौ उभयाभावस्य च वैयर्थ्यमिति चेन्न । आहवनीयादिनिष्ठाधानाद्युद्देश्यतायाः आधारतासंबन्धेन विजातीयापूर्वरूपाहवनीयत्वावच्छिन्नत्वेन अपूर्वसंबन्धित्वरूपापूर्वीयत्वानवच्छिन्नत्वात् , उक्ताव्याप्त्यतिव्याप्तिवारणाय लक्षणद्वयेऽप्युक्तविशेषणसार्थक्यात् । न चैवं स्वर्गनिष्ठमन्त्रोद्देश्यतायाः अपि लाघवात् साध्यतासंबन्धेनापूर्वावच्छेद्यत्वापत्तेः अपूर्वीयत्वानवच्छेद्यत्वेन आद्यलक्षणे 'अगन्म' इति मन्त्रेऽतिव्याप्तिः , क्रत्वर्थलक्षणे अव्याप्तिश्च दुर्वारेति वाच्यम् । साध्यत्वादेः संबन्धत्वे मानाभावेन अपूर्वस्य तेन संबन्धेन तत्रावच्छेदकत्वानुपपत्तेः अपूर्वसाध्यत्वेनैव स्वर्गस्योद्देश्यत्वात् । अत एव साधनतासंबन्धेन अपूर्वविशिष्टे लक्षणामपहाय व्रीह्यादिपदे अपूर्वसाधनत्वविशिष्टे एव लक्षणा अङ्गीकृता तेषामर्थाधिकरणादौ ( ३।१।४ ) । आधारतायास्तु संबन्धत्वे अविवादात् तत्संबन्धेन अपूर्वस्यैव आहवनीययूपादिनिष्ठोद्देश्यताऽवच्छेदकत्वान्नोक्तविशेषणवैयर्थ्यम् । न चैवमपि अपूर्वीयत्वस्य साध्यत्वसाधनत्वादिरूपत्वेनाननुगतत्वात् तद्घटितलक्षणाऽयोगः । अपूर्वसाध्यत्वसाधनत्वयोरपूर्वघटितधर्मत्वेनानुगमात् । अपूर्वघटितत्वं च नापूर्वाविषयकप्रतीत्यविषयत्वम् । अपूर्वस्यापि तत्त्वेन उक्तलक्षणद्वये उक्तरीत्या विशेषणद्वयवैयर्थ्यापत्तेः । नापि स्वाविषयकप्रतीतिविषयापूर्वाविषयकप्रतीत्यविषयत्वम् , स्वाविषयकप्रतीतिविषयत्वविशेषणेन अपूर्वं वारयित्वा लक्षणद्वये अतिव्याप्त्यव्याप्ती संपाद्य तद्द्वारकस्वयंप्रार्थितवृत्तित्वोभयाभावविशेषणदानस्य 'प्रक्षालनाद्धि पङ्कस्य ' इतिन्यायपराहतत्वात् , गौरवाच्च । किंतु निरूपितत्वसंबन्धेनापूर्वविशिष्टत्वम् । तच्चापूर्वव्यावृत्तमेव । अतो नोक्तविशेषणद्वयवैयर्थ्यम् । न चापूर्वाविषयकप्रतीत्यविषयत्वरूपापूर्वसाधारणापूर्वघटितत्वघटितलक्षणेनैव सामञ्जस्ये किमित्यपूर्वव्यावृत्तापूर्वघटितत्वघटनया उक्तविशेषणद्वयोपादानमिति वाच्यम् । तस्य लक्षणान्तरत्वात् । अपूर्वीयव्रीह्युद्देशेनावघातविधौ अपूर्वोद्देशेनापि तद्विधेरावश्यकत्वेन अपूर्वाविषयप्रतीत्यविषयधर्मानवच्छिन्नापूर्वनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वात् अवघाताद्यङ्गेषु अतिव्याप्तिवारणाय तल्लक्षणेऽपि स्वयंप्रार्थितवृत्तित्वविशेषणावश्यकत्वाच्च ।

वस्तुतस्तु अपूर्वसाधनत्वावच्छिन्नायाः अपूर्वावच्छिन्नायाः अपूर्वनिष्ठायाश्च क्रत्वर्थाङ्गीयोद्देश्यतायाः स्वयंप्रार्थितवृत्तित्वविशेषणेनैव वारणात् , 'अगन्म' इतिमन्त्रोद्देश्यतायाः स्वर्गनिष्ठायाः वारणाय अपूर्वसाध्यत्वानवच्छिन्नत्वमेव उद्देश्यताविशेषणम् । अतो नापूर्वघटितत्वनिर्वचनाय यतितव्यम् । अस्मिंश्च पक्षे अपूर्वसाध्यत्वानवच्छिन्नत्वस्वयंप्रार्थितवृत्तित्वोभयाभावघटितक्रत्वर्थत्वलक्षणे अपूर्वसाध्यत्वानवच्छिन्नत्वाभावमात्रोक्तौ 'अगन्म' इत्यादिफलाङ्गक्रत्वर्थातिरिक्तक्रत्वर्थेषु अव्याप्तिः । अतः स्वयंप्रार्थितवृत्तित्वघटितोभयाभावानुधावनम् ।

परमार्थतस्तु पुरुषार्थत्वलक्षणे अपूर्वानवच्छिन्नत्वमेवोद्देश्यताविशेषणम् । विशिष्टपर्याप्तावच्छेदकतायाः पर्याप्तिसंबन्धेन विशिष्टे इव स्वरूपसंबन्धेन विशिष्टघटकीभूतविशेषणेष्वपि वृत्तेः, अपूर्वनिष्ठावच्छेदकत्वानिरूपकत्वरूपापूर्वानवच्छिन्नत्वस्य स्वर्गनिष्ठमन्त्रोद्देश्यतायामपूर्वसाध्यत्वरूपविशिष्टधर्मावच्छिन्नायामभावेन तद्वारणसंभवात् । अपूर्वनिष्ठावघाताद्युद्देश्यताव्यावृत्तये स्वयंप्रार्थितवृत्तीति विशेषणम् । क्रत्वर्थत्वलक्षणे च अपूर्वावच्छिन्नत्वमेवोद्देश्यतायां निवेशनीयमिति नोभयाभावघटनाप्रयासोऽपि । सर्वेषामेव क्रत्वर्थानामुद्देश्यतायां मुख्यविशेष्यतया उद्देश्यताऽवच्छेदकघटकतया वा अपूर्वस्यावच्छेदकत्वमिति नाव्याप्तिः । अपूर्वनिष्ठावघाताद्युद्देश्यतायामपूर्वस्यानवच्छेदकत्वेऽपि श्रुतव्रीह्यादिनिष्ठोद्देश्यतामादायैवावघातादिषु लक्षणसमन्वयः इति दिक् । यदि तु 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत ' इत्यनेन बृहस्पतिसवस्य वाजपेय-

प्रयोगबहिर्भूतत्वावगमात् वाजपेयस्वरूपे इव तज्जन्यपरमापूर्वस्वरूपेऽपि आनर्थक्यात् प्रकरणकल्पितवाक्येन, वैमृधन्यायेन (४।३।११) वा बृहस्पतिसवस्य नापूर्वसाधनीभूतवाजपेयोद्देशेन विधानं, अपि तु स्वाराज्यभूतफलसाधनीभूतवाजपेयोद्देशेन। तत्र च विशिष्टोद्देशेन विधानेऽपि विशेषणोद्देशेन विधानस्य आवश्यकत्वात् स्वाराज्योद्देशेनापि बृहस्पतिसवविधिरिति सर्वेष्वेव स्वयंप्रार्थितवृत्त्युद्देश्यताघटितलक्षणेषु बृहस्पतिसवे नव्योक्तहीषादिस्थलीयप्रकारे हीषादौ चातिव्याप्तिः। अपूर्वावच्छिन्नत्वघटितक्रत्वर्थत्वलक्षणे चाव्याप्तिरिति सूक्ष्ममीक्ष्यते तदा पुरुषार्थत्वलक्षणे स्वोद्देश्यताऽनवच्छेदकत्वं स्वयंप्रार्थितविशेषणम्। स्वपदं पुरुषार्थत्वेन अभिमतपरम्। स्वाराज्यादेस्तु वाजपेयादिनिष्ठबृहस्पतिसवाद्युद्देश्यताऽवच्छेदकत्वान्नातिव्याप्तिः। स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयतावत्त्वं च क्रत्वर्थत्वम्। अतो नाव्याप्तिः। 'अगन्म' इत्यस्य च अपूर्वीयस्वर्गोद्देशेन विधौ अपूर्वोद्देशेन विधेरावश्यकत्वात् अपूर्वनिष्ठोद्देश्यतामादाय सर्वमनवद्यम्।

तच्चोभयविधमप्यङ्गत्वं प्रत्येकं द्विविधम्। सिद्धरूपं क्रियारूपं चेति। तत्र व्रीह्यादिकं सिद्धरूपं क्रत्वर्थम्। क्रियारूपं क्रत्वर्थं प्रयाजावघातादि। एवं सिद्धरूपं पुरुषार्थं दधिगोदोहनादि। क्रियारूपं पुरुषार्थं ज्योतिष्टोमदर्शपूर्णमासादि। क्रियारूपक्रत्वर्थं च द्विविधं संनिपत्योपकारकं, आरादुपकारकं चेति। तत्र द्रव्यदेवताऽन्यतरनिष्ठोद्देश्यतानिरूपितविधेयताशालि कर्म संनिपत्योपकारकम्। यथा प्रोक्षणावघातपशुपुरोडाशादि। 'अग्नीषोमीयस्य वपया प्रचर्याग्नीषोमीयं पशुपुरोडाशमेकादशकपालं निर्वपेत्' इत्यनेनोत्पन्नः पशुपुरोडाशयागो हि स्वीयोद्देशेन पशुयागीयदेवतासंस्कारार्थ इत्युक्तं दशमे (१०।१।९)। अत्र 'यस्य पर्णमयी जुहूर्भवति' इत्यादौ पर्णतादेः सिद्धरूपक्रत्वर्थस्य द्रव्यनिष्ठोद्देश्यतानिरूपितविधेयताशालित्वादतिव्याप्तिरतः कर्मत्वोपादानम्। यत्तु द्रव्यदेवताऽन्यतरसंस्कारकं कर्म संनिपत्योपकारकमिति। तन्न। यजमाननिष्ठप्रयाजादिजन्यादृष्टव्यावृत्तदृष्टादृष्टसंस्कारमात्रवृत्तिसंस्कारत्वस्य एकस्याभावेन तद्घटितलक्षणासंभवात्।

के चित्तु द्रव्यदेवताऽन्यतरनिष्ठापूर्वसाधनत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताशालित्वं संनिपत्योपकारकत्वम्। अन्यथा पुरुषोद्देशेन विधीयमानदीक्षणीयादेरिव स्वर्गकामपुरुषाद्युद्देशेन विधीयमानज्योतिष्टोमादेरपि संनिपत्योपकारकत्वापत्तेरित्याहुः। तन्न। यूपाद्युद्देशेन विधीयमानच्छेदनादौ अव्याप्तेः। तस्यादृष्टरूपफलादिस्वरूपे आनर्थक्याभावेनापूर्वीयत्वेनानुद्देश्यत्वात्। ज्योतिष्टोमादेस्तु पुरुषोद्देशेन विधीयमानत्वमसिद्धम्। भावनाया भाव्याकाङ्क्षायां सिद्धरूपस्य भाव्यत्वायोगेन स्वर्गकामादिपदस्य लक्षणया स्वर्गादिपरत्वात्। यदा तु उद्भिदादेः पश्वादिद्रव्योद्देशेन विधानात्तत्रातिव्याप्तिरिति विभाव्यते, तदा अस्तु प्रकृतलक्षणे क्रत्वर्थत्वनिवेशः। अस्तु वा अस्मदुक्तरीत्या अपूर्वावच्छिन्नत्वनिवेशः। न त्वपूर्वीयत्वावच्छिन्नत्वस्योद्देश्यतायां विशेषणत्वमिति ध्येयम्। निरुक्तसंनिपत्योपकारकभिन्नक्रत्वर्थक्रियात्वमेव आरादुपकारकत्वम्। संनिपत्योपकारके अतिव्याप्तिवारणाय भिन्नान्तम्। पुरुषार्थज्योतिष्टोमादिक्रियायामतिव्याप्तेः क्रत्वर्थेति। सिद्धरूपक्रत्वर्थवारणाय क्रियात्वोपादानम्। एतेषां लक्षणानामाकरोक्ततत्तल्लक्ष्यानुगत्यननुगती सुधीभिर्विभावनीये इत्यलं पल्लवितेन। **मुरारि.** ११५४--११६२.

नायं मुरारिः तृतीयस्य पथः प्रणेता। किंतु खण्डदेवादपि अर्वाचीनो न्यायजङ्गलसंचारी मीमांसकवरेण्यः। पार्थसारथेरिव भाट्टदीपिकाया अपि अनूद्य खण्डितत्वात्। अङ्गत्वनिरुक्तिसमाख्यस्तु निबन्धोऽस्य विद्वन्मनोहारी। **के.**

* अङ्गं प्रधानेन बाध्यते। यथा पवमानेष्टिषु अग्निहोत्रहवणी निर्वापेण। प्राप्तबाधोऽत्र। **बाल.** पृ. १३२. * अङ्गं यत् तन्त्रिणः अङ्गमध्यपात्यङ्गेन एकार्थं, तत् तस्य प्रसज्यते, यथा पाशुकाः प्रयाजाः पौरोडाशिकेषु। **भा.** १२।१।३।८, * अङ्गं हि द्विविधं अङ्गस्योपकारकं भवति। किं चिदपूर्वस्य एतदङ्गं विशिष्टं इत्यनेन कारणेन अङ्गेन संबध्यते। किं चित् अनपेक्ष्यैवापूर्वसंबन्धं स्वरूपेणैव कारणेन संबध्यते। यत् अपूर्वसंबन्धं कारणत्वेनोपादाय धर्मजातं अङ्गविशेषेण संबध्यते, तत्

अपूर्वप्रयुक्तं भवति । तादृशं च विकृतौ अर्थान्तरे तत्कार्यापन्ने ऊहितव्यं भवति । यत्र पुनः स्वरूपमङ्गस्य धर्मसंबन्धे कारणं भवति, तत् स्वरूपप्रयुक्तम् । तत्र यद्यपि तेन धर्मवता अपूर्वं साध्यते तत्र साध्यमानमपूर्वं न धर्मस्य प्रयोगहेतुभूतं भवति, न तत् प्रयोजकम् । तस्य स्वरूपं विद्यते इति न धर्मः प्रयुज्यते । तत्र विकृतौ अर्थान्तरे तद्रूपाभावात् ऊहो नावकल्पते । ९।१।२।२ पृ. १६४२–४३. * अविहितस्यानङ्गत्वात् अनङ्गस्य च प्रयोगवचनेनाग्रहणात् । वक्ष्यति हि ( ३।४।४।१३ ) न चाविहितमङ्गं भवति इति । **वा.** ३।४।१।९, * उत्पत्तिप्राप्तमपि विध्यनुपसंगृहीतं नैवाङ्गं भवति । ३।६।३।१० पृ. १०३६. * नहि अनुपकुर्वत् किंचिदपि अङ्गं कस्य चित् भवेत् । **के.** * नहि प्रधानं प्रधानेन अङ्गमङ्गेन संबन्धं याति । **भा.** १०।८।१७।५९, * **अङ्गानि** अवेष्टिपु न तन्त्रं, राजसूये । **भा.** ११।४।३।८–१०. * अङ्गानि इतरेतरयुक्तानि क्रतूपकारं कुर्वन्ति इति पूर्वस्मिन्नधिकरणे (११।१।२।५–१०) अवगतम् । **टुप्.** ११।१।३।११. * अङ्गानि करणपौष्कल्यसंपादकानि । **वि.** ३।८।२०. * अङ्गानि कानि चित् आराडुपकारकाणि, कानि चित् संनिपत्योपकारकाणि । **टुप्.** ९।१।१।१ पृ. १६३५.

* **अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्** । ( ११।२।२।८ ) इति अङ्गानामपि प्रधानविधिविहितत्वं वक्ष्यते । **कु.** ३।३।२।८. * 'अङ्गानि तु विधानत्वात्' इति अन्तरागर्भिणीन्याये अङ्गाङ्गानां प्रधानकालतोक्ता । **सु.** पृ. ७३३, * 'अङ्गानि तु' इति एकादशाधिकरणसिद्धान्ते य एव प्रधाने देशकालकर्तारः, त एवाङ्गेषु इति यत् अङ्गप्रधानेषु कर्तृतन्त्राभिधानं, तत् दक्षिणायाः सर्वार्थत्वे सति उपपत्स्यते नान्यथा । ( इदं पूर्वपक्षे ) ३।७ पृ. १०. * 'अङ्गानि तु विधानत्वात्' (११।२।२।८) इति **न्यायस्य स्वरूपं**–'चिकीर्षितस्य हि कस्मिन् काले कर्तव्यं इति कालापेक्षा । फलार्थिनश्च फलसामग्रीभूतसाङ्गप्रधानगोचरः फलभावनाख्यो व्यापार एव चिकीर्षितो न प्रधानमात्रं, अङ्गानुष्ठानाभावे फलानिष्पत्तेः । अतः आकाङ्क्षावशात् साङ्गप्रधानस्यैव कालसंबन्धो न प्रधानमात्रस्य अनाकाङ्क्षितत्वात्' इति । **सोम.** ४।३। १८ पृ. ३९३. * **ननु** यावन्मात्रमाधानस्य यजुर्वेदविहितं तन्मात्रस्यैवोपांशुत्वमित्यवगमात् नैव सामगानस्य प्राप्नोति, प्रधानमात्रं च अङ्गान्तराणि च याजुर्वैदिकानि, तेन तेषां केवलमुपांशुत्वमिति । **नैतदेवम्** । वक्ष्यति हि 'अङ्गानि तु०' इति । **वा.** ३।३। २।१ पृ. ८१०. * समस्तविषयकव्यापारात्मकप्रयोगे एव कर्तृसंबन्धः इति 'अङ्गानि तु०' इत्यधिकरणे व्यवस्थापयिष्यते । **कु.** ३।१।१०।१९. * अङ्गानि त्रिसंयुक्तयोर्द्वयोः न तन्त्रं, राजसूये । **भा.** ११।४। १।१–३, * अङ्गानि द्विविधानि आराडुपकारकाणि सामवायिकानि च । आराडुपकारकेभ्यः सामवायिकानि गरीयांसि । तत्र हि साक्षाद्वाक्यम् । आराडुपकारकेषु तु प्रकृतेन परोक्षेण एकवाक्यता स्यात् । १०।४।१९।३८, * अङ्गानि न तन्त्रं राजसूयगताग्नावैष्णवादीनां पृथग्दक्षिणायुक्तानाम् । ११।४।१।१–३, * अङ्गानि प्रकृतौ संक्षेपेण विस्तरेण चोच्यन्ते । 'पञ्च प्रयाजान् यजति' इति संक्षेपेण, 'समिधो यजति' इत्येवमादिना विस्तरेण । ३।६।१।६ . * अङ्गानि प्रधानवेदव्यपदेशं लभन्ते इति गुणमुख्यव्यतिक्रमे ( ३।३।२।९ ) इत्यत्र व्याख्यातम् । **वा.** ३।७।२३।५०. * अङ्गानि प्रधानशब्दगृहीतानि, यत्र प्रधानं तत्र विज्ञायन्ते । यदद्य प्रधानं तस्य अद्यकालान्यङ्गानि, यत् श्वः तस्य श्वःकालानि । **भा.** ११।४।६।२३, * अङ्गानि प्रधानानि च कर्तृतस्तुल्यानि 'दर्शपूर्णमासयोश्चत्वार ऋत्विजः' इति । देशतस्तुल्यानि 'समे दर्शपूर्णमासाभ्यां यजेत' इति । कालतस्तुल्यानि 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति । ११।१।१०।५६, * अङ्गानि प्रधानेन फलसिद्धौ उपदिश्यमानेन सह उपदिश्यन्ते । ११।२।२।८. * अङ्गानि प्रयाजाज्यभागादीनि करणे भिन्नानुपकारान् संपादयन्तीति पूर्वपक्षः । द्वारभेदेऽपि उपकारः एक एव इति सिद्धान्तः । तण्डुलकाष्ठस्थाल्यादीनां द्वारभेदेऽपि ओदननिष्पादनलक्षणं प्रधानकार्यमेकमेव । **वि.** ११।१।२.

* दृष्टमेव तु अर्थे अङ्गानि कुर्वन्ति प्रधानस्याङ्गवत्ताम् । भा. ११।१।७।३५, * न आधारः कृतमात्र एव प्रधानेपूपकरोति । यत् कारणं तस्मिन् काले प्रधानान्येव न सन्ति । यदा तु सर्वाण्यङ्गानि कृतानि, तदा तज्जन्यापूर्वाणि संभूय प्रधानेपूपकुर्वन्ति । ११।१।१०।५७. * पौर्णमास्यां त्रयाणां कालसंयोगात् तन्त्रेणाङ्गानि (एवममावास्यायामपि) । टुप्. ११।४।४।११. * प्रधानार्थेन हि अङ्गानि उपदिश्यन्ते । अङ्गवन्ति प्रधानानि कथं स्युः इति । भा. ११।१।१०।५४.* श्रुतिलिङ्गादिषट्कसहितेन विनियोगविधिना समिदादिभिरुपकृत्य 'दर्शपूर्णमासाभ्यां यजेत' इत्येवंरूपेण यानि विनियुज्यन्ते तान्यङ्गानि । तानि द्विविधानि सिद्धरूपाणि क्रियारूपाणि चेति । तत्र सिद्धानि जातिद्रव्यसंख्यादीनि । तानि च दृष्टार्थान्येव । क्रियारूपाणि च द्विविधानि गुणकर्माणि प्रधानकर्माणि चेति । एतान्येव संनिपत्योपकारकाणि आराडुपकारकाणीति चोच्यन्ते । तत्र कर्माङ्गद्रव्याद्युद्देशेन विधीयमानं कर्म संनिपत्योपकारकम् । यथा अवघातप्रोक्षणादि । तच्च दृष्टार्थमदृष्टार्थं च । दृष्टार्थमवघातादि । अदृष्टार्थं प्रोक्षणादि । दृष्टादृष्टार्थं पशुपुरोडाशयागादि । तद्धि द्रव्यत्यागांशेनादृष्टं, देवतोद्देशेन च देवतास्मरणं दृष्टं करोति । इदमेव च आश्रयिकर्म इत्युच्यते । तच्च संनिपत्योपकारकं द्विविधं उपयोक्ष्यमाणार्थमुपयुक्तार्थं चेति । तत्रावघातप्रोक्षणादि उपयोक्ष्यमाणार्थं, व्रीहीणां यागे उपयोक्ष्यमाणत्वात् । प्रतिपत्तिकर्म इडाभक्षणाद्युपयुक्तपुरोडाशसंस्कारकम् । उपयुक्तस्याकीर्णतानिवर्तकं कर्म प्रतिपत्तिकर्म । उपयुक्तसंस्कारार्थं च उपयोक्ष्यमाणसंस्कारार्थात् दुर्बलम् । उपयुक्तापेक्षया उपयोक्ष्यमाणे अत्यादरात् । अत एव 'प्रायणीयनिष्कासे उदयनीयमनुनिर्वपति' इत्यत्र निष्कासस्य निर्वापार्थत्वं, न तु तस्य तदर्थत्वं, निष्कासस्योपयुक्तत्वात् इत्युक्तमेकादशे (११।२।१६)। तच्च संनिपत्योपकारकमाराडुपकारकात् बलीयः । **ननु** अवघातादि भवतु बलीयः तस्य दृष्टार्थत्वात्, आराडुपकारकस्य चादृष्टार्थत्वात्, दृष्टे संभवत्यदृष्टस्यान्याय्यत्वात् । प्रोक्षणादि संनिपत्योपकारकं तु कथं बलीयः, उभयोरदृष्टार्थत्वाविशेषात् । किंच आराडुपकारकं साक्षात्प्रधानाङ्गं तस्यान्योद्देशेनाविधानात्, संनिपत्योपकारकं तु अङ्गाङ्गं कर्माङ्गव्रीह्याद्युद्देशेन विधानात् । अङ्गाङ्गापेक्षया च साक्षादङ्गं बलीयः, 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायात् । अत एव 'य इष्ट्या पशुना सोमेन यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति अविशेषविधानेऽपि पूर्वानुग्रहः सोमयागस्यैव क्रियते, न तु दीक्षणीयादेः । अतः कथं संनिपत्योपकारकस्य बलीयस्त्वम् ? **उच्यते** । सत्यप्यदृष्टार्थत्वाविशेषे संनिपत्योपकारकमाराडुपकारकात् बलीयः । संनिपत्योपकारके हि कर्मणि उपकार्योपकारकयोर्व्रीहिप्रोक्षणयोः संबन्धो वाक्यक्लृप्तः । उपकारमात्रं तु कल्प्यम् । आराडुपकारकस्थले तु दर्शपूर्णमासयोः प्रयाजानुयाजयोः संबन्धः कल्प्यः, उपकारोऽपि । किंच आराडुपकारकस्थले प्रकरणं विनियोजकं, इतरत्र तु 'व्रीहीन् प्रोक्षति' इति वाक्यमेव व्रीहिपदेनापूर्वसाधनलक्षणां कृत्वा क्रतौ विनियोजकमिति बलीयस्त्वम् । **यदुक्तं** 'अङ्गगुणविरोधे च तादर्थ्यात्' इति न्यायेन दुर्बलत्वमिति । **तदसत्** । नहि व्रीह्याद्युद्देशेन विधीयमानं प्रोक्षणादि तदर्थं भवति, तत्स्वरूपे आनर्थक्यात्, किंतु तत्संस्कारद्वारा क्रत्वर्थमेव । संनिपत्योपकारकाणामुत्पत्त्यपूर्वप्रयुक्तत्वस्य च वक्ष्यमाणत्वात् । अत उभयविधमप्यङ्गजातं क्रत्वर्थमेवेति नाङ्गगुणविरोधन्यायावतारः । दीक्षणीयादेः पर्वानुग्रहस्तु दीक्षणीयाद्यर्थ एव, तस्य तदपूर्वप्रयुक्तत्वात् । अतो युक्तं साक्षात् प्रधानाङ्गेन प्रधानपर्वानुग्रहेण स बाध्यते इति । तत् सिद्धं संनिपत्योपकारकस्याराडुपकारकात् बलीयस्त्वम् । अत एव स्थाणौ 'स्थाण्वाहुतिं जुहोति' इति विहिता स्थाण्वाहुतिः यूपव्रश्चनस्थाणुद्वारा यूपसंस्कारार्था, देवदत्तधारितायाः स्रजः शुचिदेशनिधानमिव देवदत्तसंस्कारार्थम् । न तु स्थाण्वाहुतिराराडुपकारिकेत्युक्तं दशमे (१०।१।६) इति दिक् । द्रव्याद्यनुद्दिश्य केवलं विधीयमानं कर्म आराडुपकारकम् । यथा प्रयाजादि । तदेवं निरूपितं द्विविधमप्यङ्गजातम् । तच्च न यागादिस्वरूपप्रयुक्तं, स्वरूपे आनर्थक्यात्, तदन्तरेणापि तत्सिद्धेः, किं त्वपूर्वप्रयुक्तमेव । नहि तदन्तरेणापूर्वं

भवतीत्यत्र किंचित् प्रमाणमस्ति, तस्माददृष्टत्वात् **न चैवं** प्राधान्यात् अदृष्टत्वाच्च फलप्रयुक्तमेव किं न स्यादिति वाच्यम् । फलभावनायां यागस्यैव करणत्वात् अङ्गानां च करणानुग्राहकत्वात्तदर्थत्वे बुद्धे, तत्र चानर्थक्यप्रसक्तौ तेन स्वापूर्वमेवोपस्थाप्यते संनिकर्षात्, दीक्षणीयादिशब्देनेव तदपूर्वं, न तु फलमुपस्थाप्यते विप्रकर्षात्, अतो न तत्प्रयुक्तत्वमङ्गानाम् । अत एव 'अगन्म सुवः सुवरगन्म' इति मन्त्रो विकृतौ ऊहितव्यः इत्युक्तं नवमे 'फलदेवतयोश्च' इत्यत्र (९।१।३।४)। फलप्रयुक्तत्वे तु सौर्यादिविकृतिषु स्वर्गरूपफलाभावान्मन्त्रो न प्रवर्तेत, नतरां चोहितव्यः स्यादिति। तत्सिद्धं अङ्गानामन्यप्रयुक्तत्वानुपपत्तेरपूर्वप्रयुक्तत्वम् । तत्रापि संनिपत्योपकारकाणां द्रव्यदेवतादिसंस्कारद्वारा यागस्वरूपोपयोगात् उत्पत्त्यपूर्वार्थत्वम् । अत एवौषधधर्मावघातादीनामाज्ये अप्रवृत्तिः, तेषामाग्नेयापूर्वप्रयुक्तत्वात्, आज्यस्य च तदर्थत्वाभावादित्युक्तं द्वितीये (तृतीये ३।१।४) आरादुपकारकाणां तु स्वरूपे अनुपयोगात् परमापूर्वार्थत्वम् । तत्रोत्पत्त्यपूर्वस्य यागस्वरूपानुष्ठानानन्तरमेवोत्पद्यमानत्वात् संनिपत्योपकारकाणां पूर्वाङ्गानां तदुत्पत्तावुपयोगः, उत्तराङ्गानां तेषां च तत्स्थितौ उपयोगः । परमापूर्वस्य तु साङ्गप्रयोगानुष्ठानानन्तरमेवोत्पद्यमानत्वात् सर्वेषामारादुपकारकाणां तदुत्पत्तौ, प्रयोगबहिर्भूतस्य तु तत्स्थितौ उपयोगः। यथा बृहस्पतिसवस्य 'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति विहितस्य वाजपेयोत्तरकालमङ्गत्वेन विहितस्य वाजपेयापूर्वस्थितौ उपयोगः, तस्य प्रागेवोत्पन्नत्वादित्युक्तं चतुर्थे (४।३।१७) । तत् सिद्धं सर्वथा अङ्गानामपूर्वार्थत्वम् । **मीन्या.** पृ. २०५–२२०.

* **अङ्गेन** एकेन अर्थवत्तायां अल्प उपकारो बहुभिर्महान् । **भा.** ११।१।३।१५. * अङ्गेन प्रकृतिप्रधानस्य प्रसङ्गो यथा यात्राद्यङ्गभूतश्राद्धेन नित्यामावास्याश्राद्धस्य । **बाल.** पृ. १५०, * अङ्गेन विकृतिप्रधानस्य प्रसङ्गो यथा यात्राद्यङ्गभूतश्राद्धेन नित्यश्राद्धस्य प्रसङ्गसिद्धिः । पृ. १५०. * **अङ्गैः** अनिज्याशेषैस्त्रिभिः स्विष्टकृद्यागो ज्योतिष्टोमे अग्नीषोमीये पशौ । **भा.** १०।७।३।१०–११, * सवनीयपशोस्तन्त्रस्य विप्रकर्षः श्रुतः, 'वपया प्रातःसवने चरन्ति, पुरोडाशेन माध्यंदिने, अङ्गैस्तृतीयसवने' इति । १२।२।१२।३२.

* **अङ्गस्य** अङ्गिसंबन्धापेक्षा । **सु.** पृ. ५२५, * अङ्गस्य अङ्गीकृतसंकल्पस्य अतिक्रमे प्रायश्चित्तविधिर्युक्तः । पृ. ९९६. * अङ्गस्य एतद्धि सामर्थ्यं, यत् प्रधानेन एककर्तृकं सत् उपकारं शक्नोति कर्तुं, न भिन्नकर्तृकम् । **वा.** ३।४।११।३१ पृ. ९६५. * अङ्गस्य पुनः उक्तपरिमाणं फलं प्रधानानां फलवत्तासंपादनम् । **भा.** ११।१।७।३२. * अङ्गस्य प्रकृतिप्रधानेन प्रसङ्गसिद्धिः यथा, काम्येनामावास्याश्राद्धेन यात्राद्यङ्गभूतश्राद्धस्य प्रसङ्गसिद्धिः । **बाल.** पृ. १५०. * अङ्गस्य प्रत्यक्षोपकारिणः प्रतिप्रधानमावृत्तिः। **भा.** ११।१।१०।५९. * अङ्गस्य यदुपकारकं भवति प्रणाड्याऽपि, तत् क्रियाया अपि उपकारकम् । **टुप्.** ४।२।५।११. * अङ्गस्य विकृतिप्रधानेन प्रसङ्गसिद्धिर्यथा, काम्यभरण्यादिश्राद्धेन यात्राद्यङ्गभूतश्राद्धस्य । **बाल.** पृ. १५०.

* **अङ्गानां** अज्ञातकालानां प्रधानकालत्वं वक्ष्यते (११।३।१।१ इत्यत्र) । **वा.** ३।६।७।२२ पृ. १०४७. * अङ्गानां, अध्वरकल्पायां प्रातरादिकालभेदेनानुष्ठीयमानानां त्र्याणां त्रयाणामर्थे भेदेनानुष्ठानं, न तन्त्रम् । **भा.** ११।२।४।१९-२३, * अङ्गानां अपि हि संभूयकारित्वमुक्तं 'अर्थैककार्थ्यादैककर्म्यं' (११।१।२।६) इति । ११।१।१०।५७, * अङ्गानां आघारादीनां तन्त्रेण अनुष्ठानं दर्शपूर्णमासयोः।११।१।१०।५४–६७, *अङ्गानां आवृत्तिः दर्शपूर्णमासचातुर्मास्यराजसूयेषु तत्तद्व्याप्यप्रयोगानुरोधेन । ११।२।३।१२–१८. * अङ्गानां आवृत्तिः कालभेदेन संघानुष्ठानभेदे, यथा दर्शे पूर्णमासे च । तत्र षण्णां यागानां द्वौ अवान्तरसंघौ, दर्शश्च पूर्णमासश्चेति । तयोश्च कालभेदः । **वि.** ११।२।३. * अङ्गानां एकं कार्यं ऐकार्थ्यात् । **भा.** ११।१।२।६. * अङ्गानां एककरणोपकारसंबन्धापेक्षा । **सु.** पृ. ५२५, * अङ्गानां करणानुग्रहभावनायां करणत्वात् इतिकर्तव्यताऽऽकाङ्क्षोपपत्तिः । पृ. १०५३. * अङ्गानां करणे योऽयमुपकारः, स केन चिदेकेनाङ्गेन विकल्पेन स्यात् इति एकः पक्षः । फलभूयस्त्वार्थं इच्छया

कानि चिदङ्गानि समुच्चयेन अनुष्ठेयानि इति द्वितीयः पक्षः। सर्वाण्यङ्गानि संभूय एकोपकारजननेन करणाकाङ्क्षां पूरयन्ति इति सर्वाण्येव अङ्गानि समुच्चयेन अनुष्ठेयानि इति सिद्धान्तः। **वि.** ११।१।३. * अङ्गानां कालस्य एकादशन्यायेन ( ११।२।२।३–१० ) प्रयोगान्वयः। **सोम.** ५।१।१७. * अङ्गानां केषां चित् वचनादन्यकालत्वं सर्वार्थानामपि। यथा ' आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति ' इति। **भा.** ११।३।४।६.

**अङ्गानां तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वम्।** ११।१।२।५ ॥

तुशब्दः पूर्ववैलक्षण्यार्थः। यथा दर्शपूर्णमासयोः प्रधानानां समवेतानां फलं नैवमङ्गानाम्। अङ्गानां तु फलान्यत्वम्। अङ्गस्याङ्गस्य पृथक् फलं स्यात्। शब्दभेदात् ' समिधो यजति ' ' तनूनपातं यजति ' इति चोदनाभेदात्। प्रत्यङ्गं हि पृथक् चोदना भवति इति फलस्यापि पृथक्त्वम्। क्रतुवत्, यथा सौर्यः ऐन्द्राग्नः इत्यादिषु पृथक्चोदनाचोदितेषु क्रतुषु पृथगेव फलसंबन्धः तद्वत् इति पूर्वः पक्षः।

**अर्थभेदस्तु तत्रार्थेहैकार्थ्यादैककर्म्यम्।** ६ ॥

आह सिद्धान्ती। तत्र सौर्यादौ क्रतौ अर्थभेदः फलभेदो युक्तः, भेदेन विधानात्। इह प्रयाजादिषु तु अङ्गेषु ऐकार्थ्यात् प्रधानोपकाररूपप्रयोजनैकत्वात् ऐककर्म्यं एककर्मत्वं संभूयकार्यकरत्वमेव युक्तम्। तस्मात् अङ्गानां न भिन्नं फलम्। एकः अर्थो येषामङ्गानां तानि एकार्थानि, तेषां भावः ऐकार्थ्यं, तस्मात्। अर्थः प्रधानोपकारः। एकं कर्म येषां तानि एककर्माणि, तेषां भावः ऐककर्म्यं प्रधानैः परस्परं च संभूय एकफलजनकत्वम्।

**शब्दभेदान्नेति चेत्।** ७ ॥

शब्दभेदात् 'समिधो यजति' इत्यादिचोदनाभेदात् न अङ्गानां फलैक्यं इति चेत् शङ्का स्यात्।

**कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात्।** ८ ॥

तत्राह सिद्धान्ती। प्रधानानां प्रयोगे उच्यमाने अङ्गानामपि प्रयोगस्य ताच्छब्द्यं स्यात्। तेनैव प्रधानप्रयोगवाचकेन शब्देन अङ्गानामपि प्रयोग उच्येत। तस्य प्रधानप्रयोगस्य शब्द एव शब्दो यस्य अङ्गप्रयोगस्य स तच्छब्दः। तस्य भावः ताच्छब्द्यम्। कर्मार्थत्वात् क्रियार्थत्वात् फलजननार्थत्वात् दर्शपूर्णमासयोः, तदर्थत्वात् दर्शपूर्णमासार्थत्वाच्च अङ्गानाम्। इतिकर्तव्यतासहितस्य हि कर्मणः प्रयोगश्चोद्यते। तस्मात् यथा प्रधानानां एकशब्दाभिसंयोगात् फलैक्यं एवमङ्गानामपीति।

**कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु।** ९ ॥

अत्राह पूर्वपक्षी। कर्तुर्यः प्रधाने विधिः 'दर्शपूर्णमासाभ्यां यजेत' इति, यश्च अङ्गेषु विधिः ' साङ्गाभ्यां ' इति, तस्य कर्तृविधेः तयोः विध्योः इत्यर्थः, गुणप्रधानेषु नानार्थत्वं प्रसज्यते। 'प्रधानविधिः फलार्थः, अङ्गविधिः प्रधानार्थः। तत्र प्रधानानि फलं प्रति विधातव्यानि, अङ्गानि प्रति अनूद्यानि इति प्रधानेषु विरुद्धगुणसंनिपातः। न च विध्यनुवादौ युगपत् संभवतः। तस्मात् नैकेन वाक्येन प्रधानानि तेषां चेतिकर्तव्यता शक्या विधातुम्। अतो न प्रधानचोदनागृहीतान्यङ्गानि।' इति भाष्यम्।

**आरम्भस्य शब्दपूर्वत्वात्।** १० ॥

प्रधानप्रयोगवचनेनैव अङ्गानामपि प्रयोगो विधीयते। आरम्भस्य व्यापारस्य क्रियायाः 'यजेत' इति शब्दपूर्वत्वात्। यजेत इति शब्दात् भाव्यकरणेतिकर्तव्यताः यौगपद्येन संबध्यन्ते। तथा च अङ्गानामपि यजेतेतिशब्दप्रमाणकत्वात् प्रधानमिव अङ्गजातमपि प्रयुज्येत। तेन न प्रधानेषु विरुद्धगुणसंनिपातप्रसङ्गः। **के.**

*अङ्गानां तु शब्दभेदात् (११।१।२।५–१९) इत्यादिपञ्चदशसूत्रे द्वितीयेऽधिकरणे प्रयाजानुयाजादीनामङ्गानां विकल्पः, अङ्गभूयस्त्वे फलभूयस्त्वं वा इति पूर्वपक्षद्वयं निरस्य एकप्रयोगविधिविधेयत्वात् समुच्चय उक्तः। **बाल.** पृ.१६६. * प्रयोगस्य एकदशाधिकरणन्यायेन ( अङ्गानां तु शब्दभेदात् ) साङ्गतावत् प्रधानविषयत्वात् अङ्गसाहित्यस्य प्रधानगतपरस्परसाहित्यस्य च विधेयविशेषणत्वेन विवक्षितत्वात् एकस्मिन् काले युगपत् साङ्गप्रधानत्रयकर्तव्यतासिद्धिः। **कौ.** २।२।३।३ पृ. १७०. * अङ्गानां पृथगनुष्ठानं वरुणप्रघासेषु दक्षिणविहारे क्रियमाणमारुत्यर्थम्। **भा.** ११।२।९।३५–४३. * अङ्गानां प्रधानदेशकालत्वनियमः।

संकर्ष. ३।१।८. * अङ्गाना प्रधानप्रयोगविधिप्रयोज्यत्वेन वेदान्तरोत्पन्नानामपि प्रधानप्रयोगवेदप्रयोज्यत्वम् । सु. पृ. ११७७. * अङ्गानां प्रयाजादीनां एकस्मिन् प्रयोगे सकृदनुष्ठानम् । भा. ११।१।७।२९. अङ्गानां प्रात्यात्मिकभिन्नव्यापारद्वारा संहत्य एकोपकारसाधनत्वम् । सु. पृ. १२०७.

अङ्गानां मुख्यकालत्वाद् यथोक्तमुत्कर्षे स्यात् । ५।१।१२।२३ ॥

दर्शादौ हविषि वेद्यामासादिते प्रयाजा इज्यन्ते । अग्नीषोमीये पशौ अपि पशुसंज्ञपनादूर्ध्वं हविषि आसादिते पश्चादेव चोदकेन प्रयाजाः प्राप्ताः । ते चात्र 'तिष्ठन्तं पशुं प्रयजन्ति' इति वचनात् जीवत्येव पशौ अपकृष्यन्ते । सोऽयं अपकर्षः । तथा सवनीयपशौ 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति वचनेन अनुयाजानामुत्कर्षः श्रुतः । तत्र प्रयाजमात्रस्य अपकर्षः उत प्रयाजादिगुणकाण्डस्य अपकर्षः, एवं अनुयाजमात्रस्य उत्कर्षः उत अनुयाजादिगुणकाण्डस्य उत्कर्षः इति विचारे प्रयाजमात्रस्यापकर्षः, अनुयाजमात्रस्य चोत्कर्षः इति पूर्वपक्षमाह इदं सूत्रम् । मुख्यस्य प्रधानस्य काल एव कालो येषां तानि मुख्यकालानि अङ्गानि । उत्कर्षे कर्तव्ये सति अङ्गानां मुख्यकालत्वात् हेतोः यथोक्तं उक्तमनतिक्रम्य प्रयाजमात्रमेव श्रुतं उत्कृष्येत न प्रयाजादि । उत्कर्षशब्दः अपकर्षस्याप्युपलक्षकः । एवं अपकर्षे कर्तव्ये सति अङ्गानां मुख्यकालत्वात् यथोक्तं अनुयाजमात्रस्य चोत्कर्षः । अन्यथा केषां चिदङ्गानां प्रधानविप्रकर्षः स्यात् । तस्मात् प्रयाजमात्रं अपकृष्टव्यं, अनुयाजमात्रं च उत्कर्ष्टव्यम् ।

तदादि वाऽभिसंबन्धात्, तदन्तमपकर्षे स्यात् । २४ ॥

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । न प्रयाजमात्रं अपकर्षणीयं न वा अनुयाजमात्रं उत्कर्षणीयं, किंतु तदादि अनुयाजादिगुणकाण्डं उत्कर्षे कर्तव्ये उत्कर्षणीयं स्यात्, तदन्तं प्रयाजान्तं च अपकर्षे कर्तव्ये अपकर्षणीयं स्यात् । अभिसंबन्धात् प्रकृतौ सूक्तवाकानामनुयाजोत्तरकालसंबन्धात् । प्रयोगविधिसंबन्धात् इति वा । यदनुयाजानां परस्तात् समाम्नायते तत् प्रधानादनन्तरं प्रयोगवचनेन प्राप्तं कथिञ्चा पाठसामर्थ्यात् अनुयाजेभ्यः परस्तात् क्रियते, यस्तत: परः, स ततः परस्तात् । एवमेक उत्कृष्यमाणः सर्वं गुणकाण्डमुत्कर्षति । तथा अपकृष्यमाणः अपकर्षतीति । तस्मात् तदादि उत्कर्षे, तदन्तमपकर्षे च स्यात् । अनुयाजादि उत्कृष्यते प्रयाजान्तं चापकृष्यते इति सिद्धान्तः । अस्मिन् सूत्रेऽपि अपकर्षशब्देन उत्कर्ष उपलक्षणीयः । के.

अङ्गानां मुख्यकालत्वाद् वचनादन्यकालत्वम् । ११।३।१।१ ॥

कालशब्द उपलक्षणं देशकर्त्रोः । अङ्गानां मुख्यकालदेशकर्तृकत्वात्, वचनात् वचनबलात्तु अन्यकालदेशकर्तृकत्वमपि क्व चित् स्यात् । यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति' 'अप्सु अवभृथेन चरन्ति' चयने सौत्रामण्यां च दक्षिणाभेदात् अन्यकर्तृकत्वम् । के.

*'अङ्गानां मुख्यकालत्वाद् वाक्यादस्माद् विनाऽप्ययम् । कालोऽस्त्येवेति नैतस्य वचसोऽत्र निमित्तता ॥' ('पौर्णमास्यां पौर्णमास्या यजेत' इत्यादिवचसः) उच्यते 'मुख्यकालत्वमङ्गानां न स्थितं मान्त्रवर्णिकम् । इदमेव हि तद्वाक्यं यद्बलेनैतदुच्यते ॥' वा. २।२।३।३ पृ. ४८२. ननु फलं भवद् भावयेत् अनेन इत्थं इति प्रयोगविधिना अङ्गप्रधानयोर्युगपदनुष्ठानविधानात् प्रयोगविधिवशेनैव अङ्गानां प्रधानकालत्वसिद्धेः एतद्वाक्यमनर्थकं इत्याशयेनाशङ्का । सु. पृ. ७३३.* अङ्गानां वेद्यादीनां मुख्यामुख्ययागोभयार्थत्वेन सर्वार्थता । मुख्यानि दर्शपूर्णमासयोराग्नेयपुरोडाशादीनि, अमुख्यानि प्रयाजादीनि । वेद्यादीनि तु स्वधर्मसहितानि मुख्यामुख्योभयार्थानि । वि. ३।७।१, * अङ्गानां संनिपत्योपकारिणां आरादुपकारिणां च सामान्येन अपूर्वप्रयुक्तत्वं सप्तमस्य प्रथमेऽधिकरणे वर्णितम् । ९।१।५. अङ्गानां संभूय कार्ये 'विधेस्त्वेकश्रुतित्वात्०' (११।१।३।१६) इत्यनेन न्यायेन । भा. ११।१।३।१८.

अङ्गानां समुच्चितानामेव प्रधानोपकारकत्वं काम्येषु ॥

एकेनापि समाप्येत कृतार्थत्वाद्, यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात् । ११।१।३।११ ॥

भाष्यं—इदं विचार्यते किं अग्निहोत्रादीनां कर्मणां एकदेशाङ्गयुक्तानामपि प्रयोगः, अथवा सर्वाङ्गोपसंहारेणैवेति। अथ तत्र किं वृत्तं 'सर्वशक्तौ प्रवृत्तिः स्यात्' (६।३।१) इति, तत्र नैयमिकमारम्भं प्रति चिन्ता कृता। 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यनया चोदनया योऽयं यावज्जीविकः प्रयोगनियम उच्यते, किं तत्र सर्वाङ्गोपसंहारः, उत नेति। इहेदानीं फलार्थे प्रयोगे चिन्ता। 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यनया चोदनया योऽयं स्वर्गार्थं आरम्भः, तत्रापि किं नैयमिकवदेव प्रयोगः, उत सर्वाङ्गोपसंहार इति। किं तावत् प्राप्तं? 'एकेनापि समाप्येत कृतार्थत्वाद् यथा क्रत्वन्तरेषु प्राप्तेषु चोत्तरावत् स्यात्।' एकदेशेनापि अङ्गानां समाप्येत कर्म, प्रयुज्येतेत्यर्थः। कुतः? कृतार्थत्वात्। याऽसौ 'दर्शपूर्णमासाभ्यां स्वर्गार्थं व्याप्रियेत' इत्युक्ते कथं व्यापारितव्यं इत्याकाङ्क्षा, सा एकेनापि अङ्गेन कृतार्था भवति। 'समिधो यजति' एवं व्यापारितव्यम्। तथा अङ्गद्वयेन अङ्गत्रयेण च। यो यावन्ति अङ्गानि करिष्यति,स तावत्कृतमुपकारं प्राप्स्यति। यथा क्रत्वन्तरेषु सौर्य आर्यमण–प्राजापत्य–नैर्ऋतादिषु यो यावन्ति कर्माणि करोति स तावद्भ्यः फलमश्नुते। ननु तत्संनिधानाविशेषात् सर्वाण्येव अङ्गानि प्राप्यन्ते, प्राप्तेषु च उत्तरावत् स्यात्। तद्यथा 'वाग्यतः तिस्रो दोहयित्वा विसृष्टवागनन्वारभ्य तूष्णीमुत्तरा दोहयति' इति यस्य यावत्यो गावः, स तावतीर्दोहयति इति तावतीष्वपि कृतार्थः उत्तराशब्दः। एवमिहापि यो यावन्ति अङ्गानि उत्सहते, स तावन्ति करिष्यति।

टुप्—पूर्वस्मिन्नधिकरणे इदमवगतं इतरेतरयुक्तानि अङ्गानि क्रतूपकारं कुर्वन्तीति। षष्ठे (६।६।१–२) नित्ये प्रयोगे एकदेशेनापि अधिक्रियते, काम्ये तु कृत्स्नामितिकर्तव्यतां यः शक्नोति कर्तुं, सोऽधिक्रियते इति स्थितम्। एतेषु अधिकरणेषु स्थितेषु केयं चिन्ता, काम्येषु किं एकदेशप्रयोगः, उत सर्वाङ्गोपसंहारः इति। तस्मादयुक्तोऽयं विचारः, गतार्थत्वात्। तेन 'अङ्गानां तु शब्दभेदात्' (११।१।९) इत्यारभ्य यावत् 'विधेस्त्वेकश्रुतित्वात्' (१६) इत्येतावत् एकमधिकरणं द्रष्टव्यम्। (एवं यदपरं सूत्रत्रयं [१७ १८–१९] तत् अन्वाचयहेतूपन्यासेन पूर्वाधिकरणस्यैव शेषभूतं द्रष्टव्यम्)।

**फलाभावान्नेति चेन। १२॥**

भाष्यं—इति चेत् भवान् पश्यति एकदेशाङ्गयुक्तानामनियतानां कर्मणां प्रयोगः इति, तत् न। कुतः? फलाभावात्। यावच्छ्रुतं स्वर्गकामस्य स्वर्गकामेन इदं कर्तव्यमिति, तत् साकल्येन अकुर्वतः फलाभावः स्यात्। सर्वं चेदं श्रुतम्। 'स्वर्गकामो यजेत' इत्युक्त्वा सर्वस्य अग्न्यन्वाधानादेः कर्मकलापस्याम्नानात्।

**न कर्मसंयोगात् प्रयोजनमशब्ददोषं स्यात्। १३॥**

भाष्यं- नैतदेवं अङ्गवैकल्ये फलाभावः इति। कुतः? कर्मसंयोगात्। प्रधानकर्मणा हि फलं संयुक्तं दर्शपूर्णमासाभ्यां स्वर्गकामः इति नाङ्गैः। अङ्गानि तु तदाकाङ्क्षया गृह्यन्ते। सा चाकाङ्क्षा एकेनापि कृतार्था भवतीत्युक्तम्। एवं चेत् प्रयोजनं अङ्गकृतः उपकारः फलं च स्वर्गादि, अशब्ददोषं स्यात्। दर्शपूर्णमासयोः फलार्थत्वे 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इत्येवं शब्दो न दुष्येत्, तत्संनिधौ चाङ्गानां विधायका ये समिदादयः, ते च तदुपकारित्वे न दुष्येयुः। तस्मान्नाङ्गाभावे फलाभावः।

**ऐकशब्द्यान्नेति चेत्। १४॥**

भाष्यं— इति चेत् पश्यसि दर्शपूर्णमासाभ्यां तत् फलं, न समिदादिभ्य इति, नैतद्युक्तम्। किं कारणम्? ऐकशब्द्यात्। एकः शब्दः उपदेशकः प्रयोगस्य दर्शपूर्णमासयोः समिदादीनां च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। तेन च फलसंबन्धः कृतः। तत्र कुत एतत् दर्शपूर्णमासतः फलं, नेतरेभ्य इति।

**नार्थपृथक्त्वात्, समत्वादगुणत्वम्। १५॥**

भाष्यं—नैतदेवं सर्वाणि फलसंयुक्तानि इति। किं तर्हि दर्शपूर्णमासावेव। कथं ज्ञायते? दर्शपूर्णमासाभ्यां स्वर्गं कुर्यात् इति दर्शपूर्णमासयोरेव स्वर्गं प्रति करणत्वं श्रूयते, न समिदादीनाम्। आकाङ्क्षया हि तेषां ग्रहणम्। सा च कथंभावस्याकाङ्क्षा 'कथं कुर्यात्' इति,

न करणस्य 'केन कुर्यात्' इति, तस्य निर्दिष्टत्वात् दर्शपूर्णमासाभ्यामिति। तस्मान्न समिदादीनां फलेन संयोगः। यदि च संयुज्येरन्, समानि आग्नेयादिभिः स्युः। समत्वाच्च अगुणत्वम्। तत्र यदुच्यते, एकदेशाङ्गयुक्तानामपि प्रयोग इति, तदेव नास्ति।

**ऐककर्म्यादिति चेत्।१४॥** (नञ्रहितः पाठः)

**भाष्यं**— ये तु 'ऐककर्म्यात्' इति सूत्रं पठन्ति तेषामयमर्थः। इति चेत् पश्यसि प्रधानानां अङ्गवत्तया अङ्गानि क्रियन्ते इति। तस्मात् ऐककर्म्यं भवतु, एकमेवाङ्गं प्रयुज्यतां एकेनापि प्रधानं अङ्गवत् भवति।

**नार्थपृथक्त्वात्, समत्वादगुणत्वम्।१५॥**

**भाष्यं**— नैतदेवम्। कस्मात्? अर्थपृथक्त्वात्। अर्थपृथक्त्वं भवति, उपकारपृथक्त्वम्। एकेनाङ्गेन अर्थवत्तायां अल्पः उपकारः, बहुभिर्महान्। कथं ज्ञायते? समत्वादगुणत्वम्। यदि एकेन बहुभिश्च सम उपकारः स्यात्, तत एकस्यैवाङ्गत्वं भवेत्, अन्येषामगुणत्वं स्यात्, अनङ्गत्वमित्यर्थः। तत्र बहूनामाम्नानमनर्थकं स्यात्। न चैषां विकल्प इत्युक्तं 'विधेस्त्वेकश्रुतित्वात्' इत्यत्र (१६)। तस्मात् अङ्गभूयस्त्वे फलभूयस्त्वमिति।

**विधेस्त्वेकश्रुतित्वादपर्यायविधानान्नित्यवच्छ्रुतभूताभिसंबन्धादर्थेन युगपत्प्राप्तेर्यथाप्राप्तं स्वशब्दो निवीतवत् सर्वप्रयोगे प्रवृत्तिः स्यात्।१६॥**

**भाष्यं**— न तु एतदेवं एकदेशेनापि अङ्गानां प्रयोग इति। कथं तर्हि? सर्वाङ्गोपसंहारेण। कुतः? विधेः एकश्रुतित्वात्। एकेन शब्देन अङ्गानां प्रयोगो विधीयते दर्शपूर्णमासाभ्यां यजेत इति सर्वापेक्षया इत्युक्तम्। सा त्वपेक्षा कृत्स्ने वा अग्न्याधानादिव्यापारे तदेकदेशे वा। तत्र एकदेशापेक्षा न युक्ता। कस्मात्? अपर्यायविधानात्। इमान्यङ्गानि न पर्यायेण विधीयन्ते कदा चित् समिधो यजति, कदा चित् तनूनपातमिति। कथं तर्हि? नित्यवत् यथाभूतानि च श्रुतानि, तथाभूतानि अपेक्षया अभिसंबध्यन्ते। अथोच्येत, नित्यवच्छ्रुतानामपि सतां एकदेशोऽपेक्षिष्यते इति, नैतद्युक्तम्। कुतः? अर्थेन युगपत्प्राप्तेः। अर्थेन प्रधानोपकारेण खलेकपोतवत् युगपत् संनिपतन्ति अङ्गानि। तत्र न गृह्यते विशेषः इदं प्राप्स्यते, इदं नेति। अतः सर्वाणि प्राप्स्यन्ते। यथाप्राप्तं च स्वशब्दार्थो निवीतवत्। यथा 'निवीता ऋत्विजः प्रचरन्ति' इति ऋत्विग्विशेषाभावात्, सर्वेषां च संनिधानात्, सर्वे ऋत्विजो निवीता भवन्ति, एवमिहापि सर्वप्रयोगे प्रवृत्तिः स्यात्।

**तथा कर्मोपदेशः स्यात्।१७॥**

**भाष्यं**—तथा च कृत्वा 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायां' इति आहुतिसंख्या पाक्षिकी न भविष्यति।

**क्रत्वन्तरेषु पुनर्वचनम्।१८॥**

**भाष्यं**— तत्र यदुक्तं 'यथा क्रत्वन्तरेषु' (सू. ११) इति, युक्तं तथा क्रत्वन्तरेषु पार्थक्यम्। 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्युक्त्वा पुनरुच्यते 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इति। किमतः? अतस्तेषां परस्परानपेक्षाणां कार्यं, न संभूय, इति गम्यते। परिसमाप्ते हि पूर्वस्य विधाने उत्तरः पृथक्त्वेन विधीयते। अथेह 'विधेस्त्वेकश्रुतित्वात्' (सू. १६) इत्यनेन न्यायेन संभूय कार्यमङ्गानां युक्तम्। तस्मात् वैषम्यं क्रतुभिः।

**उत्तरास्वश्रुतित्वाद् विशेषाणां कृतार्थत्वात् स्वदोहे यथाकामी प्रतीयेत।१९॥**

**भाष्यं**— 'प्राप्तेषु चोत्तरावत् स्यात्' इति यदुक्तं, युक्तं यत् उत्तरासु यावत्स्वं दोहनं, अश्रुतित्वात्। नात्रोत्तराणां दोहनं विधीयते। किं तर्हि? अनूद्यते। किं कारणं? कृतार्थत्वात् विशेषाणां, वाग्विसर्गादीनां विधानेन कृतार्थं तद्वाक्यं नोत्तराणां दोहनं विधातुमुत्सहते। विधीयमाने अर्थद्वये भिद्येत वाक्यम्। अनुवादश्च प्राप्तस्यार्थस्य भवति। अर्थाच्च यावत्स्वं दोहनं प्राप्तम्। अर्थात् अस्या न दोह्याः। स्वास्तु सर्वाः कथं दोह्याः? उपरिष्टादेतत् वक्ष्यामः 'तथा पयःप्रतिषेधः कुमाराणां' इत्यत्र (११।१।८।५२)। तस्मात् यथाकामी प्रतीयेत। (यस्य) यावत्यो गावः स तावतीर्दोहयति।

अत्र वार्तिककारैः पृथगधिकरणत्वस्य खण्डितत्वात् शास्त्रदीपिकाभाट्टदीपिकयोरपि पृथगधिकरणं नैव स्वीकृतम् । इति कृत्वा नात्र तयोरुद्धारः । एवं न्यायबिन्दोरपि । के.

त्रि— 'उपकारः स एकेन कैश्चिद्वा निखिलैरुत ।, आकाङ्क्षापूरणादाद्यः फलाधिक्याच्च मध्यमः ।।, कर्मणोऽन्त्ययौगपद्ये त्यागहेतोरभावतः । संभूयकरणाकाङ्क्षां पूरयन्त्युपकारतः ।। '

**मण्डन**— 'कार्यं प्रधानं सकलाङ्गयुक्तम् । '

शंकर— 'तेषां ( अङ्गानां ) च स्यात् समुच्चयः । '

**अङ्गानां समुच्चितानामेवैकोपकारकत्वम् ।।**

**अङ्गानां तु शब्दभेदात् क्रतुवत् स्यात् फलान्यत्वम् । ११।१।२।५ ।।**

**भाष्यं**— अङ्गेषु इदानीं चिन्ता किमङ्गानि संभूय कार्यं कुर्वन्ति, उत भेदेनेति । तत्रेदमुच्यते । यथा प्रधानानां समेतानामेकं फलं, नैवमङ्गानाम् । अङ्गानां तु प्रयोजनान्यत्वम् । अङ्गस्याङ्गस्य पृथक् फलम् । किं कारणम् ? शब्दभेदात् चोदनाभेदादित्यर्थः । 'समिधो यजति' 'तनूनपातं यजति' इत्येवमादिभिः परस्परानपेक्षाभिश्चोदनाभिः पृथक्त्वेन अङ्गानि चोद्यन्ते । तानि पृथगेव प्रयोजनानि आकाङ्क्षन्ति, न साहित्येन, साहित्यस्यानुक्तत्वात् । अतस्तेषां पृथगेव प्रयोजनैरभिसंबन्धो विज्ञायते । क्रतुवत्, यथा क्रतुषु सौर्यादिषु पृथक्त्वेन चोदितेषु पृथगेव फलसंबन्धो भवति ।

**टुप्**— 'समिधो यजति' इत्येवमादीनि परस्परनिरपेक्षाणि उत्पद्यन्ते । उत्पद्यमानानि प्रयोजनमपेक्षन्ते । प्रयोजनापेक्षायां च एकैकं अङ्गं क्रतूपकारं साधयति इतरनिरपेक्षम् । नात्र कश्चित् शब्दोऽस्ति, य इतरेतरयोगं कुर्यात्, येनैतानि संहत्य कार्यं कुर्युः । तस्मात् एकैकस्य क्रतूपकारः कार्यम् ।

**अर्थभेदस्तु तत्राथेहैकार्थ्यादैककर्म्यम् । ६ ।।**

**भाष्यं**— युक्तं यत् क्रतुषु फलभेदः । शब्देन तत्र भिन्नानि फलान्युक्तानि । 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इति । इह ऐकार्थ्ये, सर्वेषामङ्गानामेकोऽर्थः प्रधानेषूपकारः । उपकारापेक्षायां हि अङ्गानि श्रूयन्ते, तानि सर्वाणि एकार्थानि भवन्ति । ननु एवं सति एकार्थत्वात् एषां विकल्पः प्राप्नोति । वक्ष्यते तत्परिहारः 'विधेस्त्वेकश्रुतित्वात्' ( १६ सूत्रे ) इत्यत्र यथा विकल्पो न भवति अत ऐकार्थ्यात् अङ्गानामेकं कार्यमिति ।

**टुप्**— 'ननु एवं सति एकार्थत्वादेषां विकल्पः' इति ( भाष्यं ) एषा परिचोदना नोत्तिष्ठति । कथमत्र पूर्वः पक्षः ? एकैकं इतरनिरपेक्षं क्रतूपकारं साधयतीति तेनार्थादेव विकल्पः । 'अर्थभेदस्तु तत्र अथेहैकार्थ्यादैककर्म्यं' ( सूत्रं ६ ) इत्यनेन यदि इतरेतरयुक्तानां क्रतूपकारः प्रतिपादितः, एवं पूर्वपक्षनिराकरणं कृतं स्यात् । एवं च कृत्वा विकल्पपरिचोदना नोत्तिष्ठति । अथेदं सूत्रं नेतरेतरयोगं प्रतिपादयेत् क्रतूपकारं प्रति, तथा च सति किं निराकृतं पूर्वपक्षस्य ।

यदपि '**अथ यदुक्तं**' ( ७ सूत्रे भाष्यम् ) इत्यादिना '**तदेकार्थत्वेन**' इयुक्त्वा '**न परिह्रियन्ते, सर्वाणि च प्रधानस्योपकुर्युः, भिन्नानि च कार्याणि कुर्युः । तद्यथा कारकाणि कर्त्रादीनि**' इति । अनेन किं सिध्यति पूर्वपक्षवादिनः । एवमपि सर्वाण्येव प्रयोक्तव्यानि । सा च परिचोदना, या स्वपक्षं वा स्थापयति, परपक्षं वा दूषयति । ( अत्र स्वपक्षो विकल्पः । परपक्षः समुच्चयः ) यश्च दृष्टान्तः ( कर्त्रादीनि इति ) असौ सुतरां अविकल्पं प्रतिपादयति ।

अयमपि अयुक्तो ग्रन्थः ( परिहारग्रन्थः ) । '**समिदादिभिर्वाक्यैः अङ्गानां प्रयोग उच्यते समिद्यजिः प्रयोक्तव्यः**' इति । यदि सत्तामात्रमनेन क्रियते, तथा सति निराकाङ्क्षत्वादेषां प्रकरणेन संबन्ध एव न स्यात् । द्वयोर्हि साकाङ्क्षयोः संबन्धो भवति । तस्मादुत्पद्यमानानामेव एतेषां तिस्र आकाङ्क्षा उत्पद्यन्ते । विधायको नास्तीति चेत्, अर्थवादादिना कल्प्यः । यत्र च विधायको विद्यते अङ्गानां, तत्रापि एकं कार्यं वाच्यं सिद्धान्तिना । तत्र योपपत्तिः साऽत्रापि भविष्यति । इत्यनया उपपत्त्या एतन्न घटते यत् विधायको नास्तीति ।

तस्मादेतानि सूत्राणि अन्यथा वर्ण्यन्ते । '**अर्थभेदस्तु तत्रार्थे ह्यैकार्थ्यादैककर्म्यम्**' (६) इत्यनेन सूत्रेण सर्वेषामङ्गानां इतरेतरयुक्तानां क्रतूपकारनिर्वृत्तिः फलं कथ्यते । कथंभावाकाङ्क्षायामुत्पन्नायां अङ्गसंबन्धः । स कथंभावो यस्मिन्नेव क्षणे प्रयाजान् गृह्णाति, तस्मिन्नेव अनुयाजादीन्यपि । न च भिन्नः कथंभावः, येन भिन्नानि संबध्येरन् । तस्मात् सर्वेषां इतरेतरयुक्तानां क्रतूपकारनिर्वृत्तिः फलम् ।

**शब्दभेदान्नेति चेत्** । ७ ॥

**भाष्यं**— अथ यदुक्तं चोदनाभेदात् अङ्गानामर्थभेदो न्याय्य इति, तत् परिहर्तव्यम् । परिहृतं तदेकार्थत्वेन । न परिह्रियते, सर्वाणि च प्रधानस्योपकुर्युः, भिन्नानि च कार्याणि कुर्युः । तद्यथा कारकाणि कर्त्रादीनि सर्वाणि तावत् क्रियाया उपकुर्वन्ति, अथ च प्रतिकारकं कार्यभेदः । इदं तर्हि परिह्रियते, यदि समिदादिभिर्वाक्यैः अङ्गानां प्रयोग उच्यते समिद्यजिः प्रयोक्तव्यः, तनूनपाद्यजिः प्रयोक्तव्यः इति, ततः स्यात् प्रयोजनाकाङ्क्षा । सा च भवन्ती भेदेन स्यात् । न तु अत्र प्रयोग उच्यते । किं तर्हि ? रूपमात्रमाख्यायते, एवंलक्षणको याग इह भवतीति । तत् कस्य हेतोः ? प्रयोगवचनस्य प्रत्ययस्याभावात् । अन्येन च प्रयोगस्योक्तत्वात् । क्व पुनरेषां प्रयोग उक्तः ? उत्तरसूत्रे दर्शयिष्यामः । न चेदत्र प्रयोजनाकाङ्क्षा, कुतः प्रयोजनं, कुतो भेदः ।

**टुप्**—'शब्दभेदान्नेति चेत्' इति प्रत्यनुभाषणसूत्रम् ।

**कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात्** । ८ ॥

**भाष्यं**— प्रधानानां प्रयोगे उच्यमाने अङ्गानामपि ताच्छब्द्यं स्यात् प्रयोगस्य । तेनैव प्रधानप्रयोगवचनेनैव शब्देन अङ्गानामपि प्रयोग उच्यते 'दर्शपूर्णमासाभ्यां यजेत' इति । कुतः ? कर्मार्थत्वात्, क्रियार्थत्वादित्यर्थः । फलस्य क्रियार्थौ दर्शपूर्णमासौ श्रूयेते दर्शपूर्णमासाभ्यां स्वर्गं कुर्यात् इति । तत्र आकाङ्क्षा भवति कथमिति । सा समिदादिभिश्चोदनाभिर्निवर्त्यते 'समिधो यजति' 'तनूनपातं यजति' इत्येवमिति । तत् कस्य हेतोः ? तदर्थत्वात् । तदर्था एताः समिदादिचोदनाः, तेनाकाङ्क्षितत्वात् अफलत्वात् फलवत्संनिधानाच्च । सैषा दर्शपूर्णमासयोः फलं साधयतोः इतिकर्तव्यता । न च इतिकर्तव्यतामन्तरेण कर्मचोदना अर्थवती भवति । तस्मात् सेतिकर्तव्यताकस्य कर्मणः प्रयोगश्चोद्यते । तथा च सिद्धमेतत् प्रधानप्रयोगवचनेनैव शब्देन अङ्गानां प्रयोगश्चोद्यते इति । एवं च सति एकशब्दचोदितान्येवाङ्गानि । तत्र यथा प्रधानानां एकशब्दाभिसंयोगात् फलैक्यं, एवमङ्गानामपीति ।

**टुप्** — 'कर्मार्थत्वात् प्रयोगे ताच्छब्द्यं स्यात् तदर्थत्वात्' इति प्रत्यनुभाषणपरिहारः ।

**कर्तृविधेर्नानार्थत्वात् गुणप्रधानेषु** । ९॥

**भाष्यं**— अत्राह, नैतद्युक्तम् । कुतः ? कर्तुः यश्च प्रधाने विधिः 'दर्शपूर्णमासाभ्यां यजेत' इति, यश्च अङ्गेषु साङ्गाभ्यां इति, तयोर्नानार्थत्वम् । प्रधानविधिः फलार्थः, अङ्गविधिः प्रधानार्थः । तत्र प्रधानानि फलं प्रति विधातव्यानि, अङ्गानि प्रति अनूद्यानि । न च विध्यनुवादौ युगपत् संभवतः । तस्मात् नैकेन वाक्येन प्रधानानि तेषां चेतिकर्तव्यता शक्या विधातुम् । अतो न प्रधानचोदनागृहीतानि अङ्गानि ।

**टुप्**— 'कर्तृविधेर्नानार्थत्वाद् गुणप्रधानेषु ।' इति पुनः पूर्वपक्षः । यद्यपि यागः फलं प्रति विधीयेत, इतिकर्तव्यतां प्रति अनूद्येत । नहि सकृदुच्चरितः उभयार्थो लभ्यते । आवृत्तौ च वाक्यभेदः । अथोच्येत, न यागमनूद्य संबन्धं करिष्यति, किं तर्हि भावनया सर्वेषां संबन्ध इति, तथा सति इतिकर्तव्यता न दर्शपूर्णमासाङ्गं स्यात् (किंतु फलभावनासंबन्धात् करणवत् फलाङ्गमेव स्यात्) । तत्र को दोषः ? सौर्ये आग्नेयविध्यन्तो न स्यात्, आग्नेयस्य इतिकर्तव्यताऽभावात् ।

**आरम्भस्य शब्दपूर्वत्वात्** । १० ॥

**भाष्यं**— तत्राह नैतदयुक्तं, युक्तमेतत् । कुतः ? आरम्भो व्यापारः क्रिया इत्यनर्थान्तरम् (न अर्थान्तरम्) । यागेनेह स्वर्गस्य क्रियोच्यते यजेत – यागेन स्वर्गं कुर्यात्– स्वर्गार्थं व्याप्रियेत इत्यर्थः । इदं तु न ज्ञायते, कोऽसौ व्यापार इति । तत्संनिधौ च अन्यन्वा-

धानादि श्रूयते। तस्मिन् आकाङ्क्षितत्वात् संनिधानाच्च एतत् भवति, अयमस्मिन् व्यापारः, येन यागः स्वर्गं करोतीति। तस्मिन् विधीयमाने, नास्ति वाक्यभेदः।

अथवा प्रधानानां फलं प्रति, अङ्गानां च प्रधानानि प्रति विधिरविरुद्धः। कथं कृत्वा? दर्शपूर्णमासाभ्यां स्वर्गसाधनमपूर्वमुच्यते। तस्य सविशेषस्य वचनं प्रयुज्यते। यथा 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। तस्मात् प्रधानप्रयोगवचनेनैव अङ्गानां प्रयोगो विधीयते इति।

**टु**—नैवात्र यागमनूद्य इतिकर्तव्यता विधीयते। किं तर्हि? भावनयैव इतिकर्तव्यतासंबन्धः। कथं? 'यजेत' इत्यस्मिन् भावनावचने उच्चरिते तिस्र आकाङ्क्षा जायन्ते। तत्र किमंशे भाव्यो यः पुरुषार्थः, स उपनिपतति। द्वितीयस्यां करणम्। तृतीयस्यां इतिकर्तव्यता। एताश्चापेक्षा यौगपद्येन संबध्यन्ते। क्रमेणाख्यायन्ते। यथा 'अरुणया क्रीणाति' इति यस्मिन्नेव क्षणे एकहायनी संबध्यते तस्मिन्नेव क्षणे अरुणाऽपि, न च भेदेन। एवमिहापि एकक्षणोपनिपातस्त्रयाणाम्। प्रयोजकस्य (उत्पादकस्य) प्रयोज्यं प्रति (उत्पाद्यं प्रति) यो व्यापारः, स 'भावना' इत्युच्यते। यदुक्तं 'सौर्ये इतिकर्तव्यता न प्राप्नोति' इति। उच्यते। भावनया संबध्यमानैव इतिकर्तव्यता करणमनुगृह्णती संबध्यते। यथा अरुणः एकहायनीपरिच्छेदद्वारेण क्रयेण संबध्यते। एवं सति इतिकर्तव्यता पौर्णमासीयागेषु आवर्तते, अमावास्यायागेषु च। तस्मात् आग्नेयादीनां फलं साधयतां अङ्गमितिकर्तव्यता। सौर्येऽपि फलं साधयति (सति) इतिकर्तव्यतया भवितव्यम्। अयं न्यायस्तावत् वर्णित एव (भावनया इतिकर्तव्यता संबध्यते इति न्यायः भाष्ये नवमाद्ये वर्णितः)। प्रत्ययार्थेन हि इतिकर्तव्यता संबध्यते न यागेन, यागस्तु पूर्वापरीभूतः इतिकर्तव्यतां गृह्णाति, न निष्पन्नरूपः। यदा धातुमात्रमिदं, तदा नामार्थे वर्तेत। न च द्वयोर्नाम्नोः संबन्धोऽस्ति।

**शा**— अतःप्रभृति षड्भिः सूत्रैरेकमधिकरणं (५–१०) 'एकेनापि समाप्येत' इत्यतःप्रभृति च नवभिः सूत्रैः (११–१९) अधिकरणान्तरं भाष्यकारेण व्याख्यातं इति प्रतिभाति। तत्र च पूर्वाधिकरणे अङ्गानां कार्यभेदं पूर्वपक्षीकृत्य एककार्यत्वं सिद्धान्तितम्। उत्तराधिकरणे तु तस्मिन् एकस्मिन् कार्ये विकल्पमाशङ्क्य समुच्चयः प्रतिपाद्यते इति व्याचष्टे (प्राभाकरः)। तदिदं वार्तिककारो नानुमेने। ... तस्मादेकमेवेदं पञ्चदशसूत्रं समुच्चयप्रतिपादनार्थमधिकरणम्।

त्रयश्चेह पक्षाः, किं अङ्गानां इतरेतरनिरपेक्षाणां क्रतूपकारकतया विकल्पः, उत एकेन द्वाभ्यां बहुभिश्च उपकारसिद्धिः उपकारभूयस्तया च फलभूयस्त्वं, उत समुच्चितानामेव उपकारकत्वं इति। तदर्थमिदं विचार्यते, किं अङ्गानां आत्मीयैर्विधिभिः प्रयोगो विधीयते, किंवा प्रधानविधिभिः इति। तत्र प्रधानानि एकेन शब्देन तन्त्रेणाभिहितानि युगपत् फले विनियुक्तानि, युक्तं यत् फले समुच्चीयन्ते। अङ्गानि तु पृथक्-शब्देनाभिहितानि पृथगेव विहितानि फलमपेक्षमाणानि अन्योन्यनिरपेक्षाण्येव क्रतूपकारार्थतया विनियुक्तानि विकल्पितुमर्हन्ति। तेषां हि स्ववाक्यैरेव विधानम्। असति विधाने अङ्गत्वानुपपत्तेः। उक्तं हि 'न चाविहितमङ्गं भवति' इति (भा. ३।४।१।१)। स्ववाक्यानि च तेषां एकैकमेव विदधति इति कुतः समुच्चयः। नहि कश्चिच्छब्दोऽस्ति, येन एतेषां सहितानामनुष्ठानमुच्यते। तस्मात् यथा सत्यपि पशुफलत्वे चित्रोद्भिदादीनां पृथग्विधानात् असमुच्चयः, तथा अङ्गानामपि इति **प्रथमः पक्षः**। सत्यं निरपेक्षाणामुपकारकत्वं गम्यते, तथापि बह्वङ्गाम्नानसामर्थ्यात् विकल्पस्य च अन्याय्यत्वात् तेषामेकमपि प्रयुञ्जीत, तथा द्वे, बहूनि च। अङ्गभूयस्तया च उपकारभूयस्त्वात् फलभूयस्त्वं इति **द्वितीयः**। **सिद्धान्तस्तु,** युक्तं चित्रादीनां नैरपेक्ष्यम्। तेषु हि प्रतिवाक्यं भेदेन कामपदं श्रूयते। समिदादिषु तु यद्यपि प्रतिवाक्यं विधिश्रवणात् फलापेक्षा उपजायते, फलं तु न प्रतिवाक्यं श्रूयते। प्रधानभावनया हि एषां फलाकाङ्क्षिणां कथंभावापेक्षिण्या सह इत्थंभावेन संबन्धः। सा च सकृदुपात्ता सर्वैरङ्गैः अगृह्यमाणविशेषैर्विशिष्टा युगपत् प्रधानविधिना विधीयते इति सिद्धः समुच्चयः। यद्यपि च

प्रत्येकं विधिः श्रूयते, तथापि अंशत्रयालाभात् असौ उदास्ते। भाव्यांशस्तु विध्यवगमनबलादेव पुरुषार्थत्वः अपेक्ष्यते। एतावानेव च तत्र विधेरुपयोगः। तदभावे धात्वर्थ एव भाव्यांशेऽपि निपतेत्। सत्यां च फलापेक्षायां प्रकृतभावनया युगपत् संबन्धात्, तस्याश्च सर्वाङ्गविशिष्टायाः युगपत् प्रधानविधिना विधानात्, अङ्गानामपि तत एव अनुष्ठानसिद्धेः तस्मिन्नंशे अङ्गविधीनामनुवादकत्वं, सर्वविशिष्टविधानाच्च समुच्चयः।

**सोम**— पूर्ववैषम्येण उत्थानात् **संगतिः**।

**वि**— पञ्चमादिदशमान्तषट्सूत्रात्मकाधिकरणविषयकोऽयं श्लोकः। 'कार्यभेदो न वाऽङ्गानां, सौर्यचित्रादिवद् भिदा।, करणैक्यात् तदेकत्वं द्वारभेदो बहुत्वतः॥'

**भाट्ट**— इदमपि उपोद्घात एव। प्रयाजाद्यङ्गानां क्रतूपकाराख्यफलं प्रति विकल्पेन कारणता, उत समुच्चयेन इति चिन्ता। तत्र प्रधानानां प्रत्येकोत्पत्तावपि विनियोगे साहित्यावगमात् युक्तो दण्डचक्रादिवत् समुच्चयः। अङ्गानां तु प्रत्येकमुत्पन्नानां प्रत्येकमेव प्रयोजनाकाङ्क्षावशेन विनियोगविधिकल्पनात्, सत्यपि एकस्य प्रधानस्य एकस्मिन्नेव क्रतूपकाराख्ये फले, सर्वेषामङ्गानां तत्र साहित्यानवगमात् विकल्पेनैव तृणारणिमणिन्यायेन कारणता। **न च** निरपेक्षकारणत्वावगमेऽपि बह्वङ्गाम्नानसामर्थ्यात् भूयसां करणे फलभूमा, तदर्थित्वाभावे तु एकेनैव क्रतूपकारसिद्धिः इति **वाच्यम्**। साहित्यबोधकाभावे ईदृशकल्पनाया अन्याय्यत्वात्। अतो व्रीहियवादिवत् विकल्पः एव। एवं च वैकल्पिकानामङ्गानां एकैकस्याङ्गस्य सत्यपि प्रधानप्रयोगविधिनैव प्रयोगविधाने एकाङ्गविशिष्टप्रधानप्रयोगकरणापत्तेः संप्रतिपन्नदेवताकविजातीयाङ्गानां साहित्यानवगमात् न तन्त्रत्वम्। वस्तुतस्तु 'समिधो यजति' इत्यादि प्रत्येकं विधिश्रवणवैयर्थ्यापत्तेः प्रधानप्रयोगवाक्ये अङ्गानामश्रवणाच्च प्रयाजाद्यङ्गानां उत्पत्तिविनियोगयोरिव प्रयोगस्यापि पार्थक्येनैव प्रतीतेः सुतरां न तन्त्रत्वम्। न वा प्रधानप्रयोगमध्यपातः। अपि तु एकं किंचिदङ्गं प्रधानप्रयोगात् बहिःप्रयोगं कार्यम्। **इति प्राप्ते,** पृथगुत्पन्नानामङ्गानां पृथगेव प्रयोजनाकाङ्क्षत्वेऽपि एकस्य प्रधानस्य एक एव फलाधानसामर्थ्यौत्रीयाख्यः उपकारः सकृदेव स्वोपायमपेक्षते। अतश्च तया एकयैव आकाङ्क्षया खलेकपोतन्यायेन युगपत् सर्वेषामङ्गवाक्यानां प्रधानोत्पत्तिवाक्यैकवाक्यतामङ्गीकृत्य समिदाद्यङ्गोपकृतप्रधानेन इष्टं भावयेत् इत्येवंविधविनियोगविधेः एकस्यैव कल्पनात् एकवाक्योपादानेन सर्वेषामङ्गानां क्रतूपकाराख्ये फले जन्यमाने साहित्यावगतेः प्रधानवदेव अङ्गानामपि युक्तं तन्त्रत्वम्। वस्तुतस्तु प्रधानाकाङ्क्षासहकृतप्राथमिकाङ्गकाङ्क्षामात्रेण तन्मात्रविषयकविनियोगकल्पनोपपत्तौ इतराङ्गप्रतीक्षणे प्रमाणाभावात् समिद्यागेन क्रतूपकारं भावयेत्, तनूनपाद्यागेन क्रतूपकारं भावयेत् इत्येवं प्रातिस्विकः एव विनियोगविधिः। अत एव वैमृधादौ अतिदेशोपपत्तिरपि। इतरथा हि प्रयाजादीनां प्रकृत्यङ्गत्वस्य वैमृधीयप्रकृत्यङ्गत्वसमकालतया शुद्धस्यैव वैमृधस्य प्रकृत्यङ्गत्वापत्तेः, पश्चात् अतिदिष्टप्रयाजाद्यकरणेऽपि क्रतुवैगुण्यानापत्तिः। विनियोगविधिभेदे तु वैमृधाङ्गताबोधव्यतिरेकेणैव प्रयाजादीनामङ्गताबोधोपपत्तेः अतिदेशकल्पनया वैमृधे अङ्गवैशिष्ट्यबोधोपपत्तेः युक्तं तदभावे क्रतुवैगुण्यम्। अतश्च विनियोगविधिभेदसत्त्वेऽपि प्रयोगविध्यैक्यमादाय एकाङ्गसमुच्चय उपपादनीयः। तथाहि, नाङ्गविधिषु सत्यपि विधिश्रवणे प्रत्येकं प्रयोगविधानम्। उत्पत्तिविधिनैव चरितार्थस्य तस्य प्रयोगेऽपि तात्पर्यकल्पने गौरवात्, प्रयोगस्य अन्यतः सिद्धत्वाच्च। अत एव 'समिधो यजति' इत्यादौ विधिश्रवणं प्रयोगांशे अनुवाद एव। न चैवं उत्पत्तेः आख्यातान्तपदश्रवणमात्रेणापि सिद्धेः लेट्श्रवणवैयर्थ्यं, तदभावे प्रवर्तनाबोधाभावेन यागस्यैव समानपदश्रुत्या भाव्यत्वप्रसक्तौ तस्य प्रयोजनानाकाङ्क्षत्वेन अङ्गत्वानापत्तेः। अतश्च उत्पत्तिवाक्येषु विधिश्रवणेऽपि, न तत्र प्रयोगविधानम्। अपि तु प्रधानप्रयोगविधावेव, लाघवात्। अङ्गविधीनामपि एकवाक्यतां कल्पयित्वा 'पौर्णमास्यां साङ्गैः पौर्णमासीसंज्ञकैः प्रधानैः कृतैरिष्टं भवति' इत्येवं प्रधानप्रयोगविधिनैव अङ्गानामपि प्रयोगविधानम्। अतश्च तत्र एकवाक्योपादानात् प्रधानानामिव अङ्गानामपि साहित्यं उपादेयविशेषणत्वात् विवक्षितं

इति युक्त एव समुच्चयः। या तु उत्पत्तिवाक्ये विनियोग-वाक्ये च एकैकस्यांशस्य निरपेक्षस्य साधनता, सा उत्पत्तिवाक्ये प्रधानानामिव अवान्तरकार्यनिरूपिता इति न कश्चिद्दोषः। अत एव तत्र प्रयोगवाक्यावगत-समुच्चयानुरोधेन अवान्तरकार्येषु वैजात्यकल्पना। पर-मापूर्वस्थानापन्नं अखण्डकरणोपकाररूपं अपूर्वं यदि प्रधानेष्वस्ति, तदा अङ्गेष्वपि आवश्यकं, अन्यथा तत्रापि न, इति **कास्तुभे** विस्तरः। अवान्तरकार्ये तु यत्र प्रयोगविधितः पूर्वं नैकत्वं प्रमाणान्तरेणावधारितं, तत्र प्रयोगविधिना समुच्चयस्यैवावगमात् भेदकल्पनैव। यत्र तु एकत्वमेव सामर्थ्यादिना अवधारितं यथा व्रीहियवादौ, तत्र वैकल्पिकयोरेव प्रयोगविधिना प्रयोगविधानेऽपि न समुच्चयः। यत्र वा एक-पश्वाद्यर्थचित्रादीनां दृष्टार्थानामपि नैकप्रयोगविधिविषयता, तत्र समुच्चयग्राहकप्रमाणाभावेन विकल्प एव साम्ये, वैषम्ये तु फलभूमा इति ध्येयम्। प्रकृते तु प्रयोग-विधिना समुच्चयावगतेः सर्वैरेवाङ्गैः एकक्रतूपकारसिद्धिः। संप्रतिपन्नदेवताकस्थले च तन्त्रत्वं प्रधानप्रयोगान्तःपातश्च सुलभ एव। सूत्रभाष्ययोरपि अस्मिन्नेवार्थे योजना सुधीभिरिह उन्नेया।

**न्यायबिन्दुः**— अङ्गानां तु क्रतूपकारकत्वं परस्पर-निरपेक्षाणामेव तत्तद्वाक्यैरवगम्यते, तेन चित्रोद्भिदादीना-मिव पशुफले अङ्गानामपि क्रतूपकारे समुच्चयः इति। अथवा एकद्विबह्वङ्गकरणात् उपकारतारतम्यम्। **इति प्राप्ते, भेदेन** विनियोगात् चित्रोद्भिदादीनां निरपेक्षपशुफलसाध-नता, अङ्गानां तु प्रधानविधिनैकेन युगपत् इतिकर्त-व्यतात्वेन विधानात् सहितानामेव क्रतूपकारकत्वं इति समुच्चयः, इति सिद्धान्तः।

**मण्डन**— 'सर्वाङ्गजन्योपकृतिस्तथैव।'

**शंकर**— 'एकोपकाराण्यङ्गानि।'

* अङ्गानां सुत्याकालीनानां आवृत्तिः द्वादशाहे। **भा.** ११।४।६।२३–२६. * अङ्गानां स्वरूपं 'समिधो यजति' इत्यादिवाक्यैः बोध्यते। प्रकरणेन तु **अङ्गाङ्गिभावः। वि.** १०।१।४. * अविभक्तश्चाङ्गानां प्रधानेन प्रयोगः। **भा.** ११।२।३।१५, * एकं कारण-मङ्गानां प्रधानेषूपकारः। कः पुनरसौ? येन प्रधानानि फलं ददति। ११।१।७।३०. * एककाण्डाम्नाननिमित्तैकवा-क्यत्वाभावेऽपि अङ्गप्रधानानां अन्योन्या-पेक्षावशात् 'सर्वाङ्गानुगृहीतेन प्रधानेन फलं भावयेत्' इत्येवं वाक्यैकवाक्यत्वकल्पनया संनिकृष्टविप्र-कृष्टानां सर्वेषामङ्गानां प्रधानप्रयोगविधिप्रयोज्यत्वस्य वक्ष्य-माणत्वात् वेदान्तरीयाणामपि **अङ्गानां** प्रधानप्रयोगविधि-प्रयोज्यत्वोपपत्तिः। **सु.** पृ. ११७७. * पशौ तन्त्रमङ्गानां प्रयोगः। **भा.** ११।२।४।१९. * प्रधानप्रयोगवचनपरि-गृहीतत्वात् अन्यत्राप्युत्पन्नानामङ्गानां यत्रैव प्रधानं तत्रैव विधिः। **वा.** ३।३।२।९ पृ. ८१०. * प्रधानभेदे उक्ते अनुक्तोऽपि अङ्गानां भेदोऽभ्युपगम्यते। **भा.** ११।२। १०।४५. * प्रधानवशवर्तित्वेन प्रधानसंकल्पेनैव अनुष्ठान-सिद्धेः अङ्गानामसंकल्पनीयत्वेऽपि वैकल्पिकाङ्गस्थले निश्च-यार्थं संकल्पनीयता। **सु.** पृ. ९९६. * प्रयोगवचनेनैव अङ्गानां प्रयोगो विधीयते। **भा.** ११।१।२।१०.

**अङ्गे फलश्रुतिरर्थवादः** इति न्यायः। (४।३। १।१) एवं च कृष्णजयन्त्यां उपवासस्य पारार्थ्ये निर्णीते यः तद्वाक्ये फलोल्लेखः, स केवलः स्तावक एव पर्णता-दिवत् 'अङ्गे० वादः' इति न्यायात्। **समयमयूखः** पृ. २७. * **अङ्गेषु** अपि पशौ वपावत् पश्चात्त्वम्। **भा.** १०।७।२०।७२–७३. * **अङ्गेषु** अपि प्रधानापूर्वप्रयु-क्तानां क्रिया युक्ता। **वा.** ३।७।१।४. * **अङ्गेषु** औपादानिकी प्रवृत्तिः, तत्र स्वयं प्रागप्रवृत्तेः। प्रधान-प्रवृत्त्यैव अङ्गेषु प्रवृत्तिः, प्रधानोपकारकतया अङ्गेषु प्रवृत्तेः। **ऋजु.** पृ. ३१.

**अङ्गेषु च तदभावः प्रधानं प्रति निर्देशाद् यथा द्रव्यदेवतम्।** ११।२।२।३॥

'समे दर्शपूर्णमासाभ्यां यजेत' 'पौर्णमास्यां पौर्ण-मास्या यजेत' 'दर्शपूर्णमासयोर्यज्ञक्रतोश्चत्वार ऋत्विजः' इति वाक्यैः देशकालकर्तारो विहिताः। ते दर्शपूर्णमासा-ङ्गानां स्युर्न वेति विचारे पूर्वपक्षमाह। चशब्दः तुशब्द-स्थानापन्नः पूर्वसूत्रोक्ततन्त्रवैलक्षण्यमाह। भवतु प्रधानेषु देशकालकर्तृतन्त्रं, अङ्गेषु तु तदभावः तस्य देशादितन्त्र-स्याभावः। कुतः? प्रधानं प्रति देशादीनां निर्देशात्।

अङ्गेषु तु तथा निर्देशाभावात् न देशादितन्त्रम् । यथा द्रव्यदेवतम् । द्रव्याणि च देवताश्च तेषां समाहारः द्रव्यदेवतम्। प्रधानेषु यत् द्रव्यं पुरोडाशादि, याश्च देवता अग्न्यादयः, तद्यथा प्रयाजादिषु न भवति तत्र अन्यस्यैव तस्य सत्त्वात्, तथा प्रधाने ये देशकालकर्तारः, तेऽपि अङ्गेषु न स्युः इति ।

इतः परं ४–७ इति चत्वारि सूत्राणि पूर्वाधिकरणशेषभूतानि, ततः तदुत्तराणि सूत्राणि व्याख्यायन्ते ।

**अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरंस्तस्मात् स्यादेकदेशत्वम् । ८ ॥**

तुशब्दः पूर्वपक्षं व्यावर्तयति । अङ्गानि प्रधानेन सह उपदिश्येरन् विधानत्वात् विधीयन्ते इति विधानानि तद्भावात्, विधानत्वात् इतिकर्तव्यतारूपत्वात् इत्यर्थः । तस्मात् अङ्गानां प्रधानेन सह एकदेशत्वं स्यात् । देशपदं उपलक्षकं, एककालत्वं एककर्तृकत्वं च स्यात् । प्रधानेन सह अङ्गानामपि विहितत्वात् । ये प्रधानस्य देशकालकर्तारस्त एवाङ्गानामपि स्युरित्यर्थः ।

**द्रव्यदेवतं तथेति चेत् । ९ ॥**

यदुक्तं पूर्वपक्षिणा 'यथा द्रव्यदेवतं तथा देशादि' इति ( सू. ३ ) । तत् परिहर्तव्यम् । अनुवादसूत्रमिदम् ।

**न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ।१०॥**

उच्यते । नैतदेवम् । द्रव्यदेवताविधेः चोदनाविधिशेषत्वात् द्रव्यस्य देवतायाश्च विशेषः नियमार्थः । पौर्णमास्यां प्रथमे अग्निः पुरोडाशश्च, द्वितीये प्रजापत्यादिः आज्यं च, तृतीये अग्नीषोमौ पुरोडाशश्चेति । न च प्रधाने निर्दिष्टं अङ्गेषु भवितुमर्हति । तस्मात् विषमो दृष्टान्तः ।

**तेषु समवेतानां समवायात् तन्त्रमङ्गानि भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् तेषां प्रधानशब्दत्वात् । ११ ॥**

यदि तु अङ्गानां प्रधानानां च द्रव्यदेवतं समानं स्यात्, ततः तेषु समानेषु द्रव्यदेवतेषु समवेतानां अङ्गानां प्रधानानां च समवायात् संबन्धात् अङ्गानि प्रधानैः तन्त्रं स्यात्। न तु अङ्गानां प्रधानानां च द्रव्यदेवतं समानम् । किंतु भेदः । एवं तद्भेदात् तस्य द्रव्यदेवतस्य भेदात् प्रयोगे कर्मभेदः यागकर्मणः भेदः स्यात्, प्रधानयागेभ्यः अङ्गयागानां भेदः स्यात् । तेषां षण्णां यागानां प्रधानशब्दत्वात् प्रधानं इति शब्दो येषां तादृशत्वात् प्रधानत्वात् इत्यर्थः । तस्मात् अङ्गानां प्रधानानां च द्रव्यदेवतस्य भेदः ।

**तथा चान्यार्थदर्शनम् । १२ ॥**

तथा च अङ्गानां प्रधानानां च प्रयोगे भेदे सति 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायां' इति अन्यार्थदर्शनं उपपन्नं भवति। अङ्गप्रधानानां तन्त्रे तु तत् अनुपपन्नं स्यात् । तस्मात् द्रव्यदेवतस्य भेदः। सर्वथाऽपि अङ्गानां प्रधानैः सह एकदेशकालकर्तृकत्वं इति सिद्धान्तः । **के.**

**अङ्गेषु पाशुकेषु सर्वेषु प्रत्यभिघारणम् ॥**

'प्रत्यभिघारयति अयातयामत्वाय' इति श्रुतौ तादर्थ्ये-चतुर्थ्या प्रत्यभिघारणस्य यातयामतानिरासैकप्रयोजनकत्वावगतेः तस्याश्चेज्याशेषे एव प्रसक्त्या पशौ अनिज्याशेषेषु सौविष्टकृतव्यङ्गेषु स्वत एवायातयामेषु न हविःप्रत्यभिघारणम्। **इति प्राप्ते**, प्रत्यभिघारणस्य स्नेहनार्थताया दृष्टाया अर्थवादबलेन परित्यागस्यान्याय्यत्वात्प्रकृतितः प्राप्तत्वात् कर्तव्यमेव, अत एवोपस्तरणाभिघारणयोरप्यदनीयस्नेहनार्थत्वात् कृष्णलेषु तन्निवृत्तिरुक्ता। **संकर्ष.** २।२।१७.

* 'तत्संनिधौ असंयुक्तं **तदङ्गम्**' (४।४।११।३४ सूत्रांशः ) फलवत्संनिधौ अफलं तदङ्गं इत्यर्थः । * फलवत्संनिधौ अफलं तदङ्गम् । **बृहती.** पृ. ३. * यच्च येनारभ्यते तत् तदङ्गम् । **भा.** ६।३।६।१५, * यच्च येन विना न भवति तत् तदङ्गं इत्यवगम्यते । ११।२।१।१. * **समस्ताङ्गोपेत**प्रधानानुष्ठानविध्यन्यथाऽनुपपत्त्या उत्तराङ्गानामपि फलापूर्वोत्पादने प्रधानोत्पत्त्यपूर्वसहकारित्वावगमात् तदकरणे प्रधानोत्पत्त्यपूर्वाणां प्रधानानुष्ठानानन्तरमेव निष्पन्नानामपि फलापूर्वोत्पादनशक्तिः । **सु.** पृ. १५१२.

**अङ्गगुणविरोधन्यायः । अङ्गगुणन्यायः । अङ्गगुणविरोधाधिकरणन्यायः । ज्योतिष्टोमे सुत्या पर्वणि कार्या, दीक्षा तु अपर्वणि ॥**

**अङ्गगुणविरोधे च तादर्थ्यात् । १२।२।९।२५ ॥**

**भाष्यं**—ज्योतिष्टोमे दीक्षणीया 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दीक्षिष्यमाणः' इति। तत्रैव सौत्यमहः। तयोः पर्वकालः 'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वचनात्। यदा 'एका दीक्षा, तिस्र उपसदः' इत्येवमादयः कल्पाः, तदा विरोधः। तत्र चिन्ता किं दीक्षा पर्वणि कर्तव्या अपर्वणि सुत्या, उत विपर्यय इति। मुख्यत्वात् दीक्षा कार्या। **इति प्राप्ते उच्यते**। अङ्गगुणेन प्रधानगुणस्य विरोधे एतस्मिन् अङ्गगुणो बाध्येत। कुतः? तादर्थ्यात्। अङ्गं गुणवत् क्रियते प्रधानं सगुणं स्यादिति। तच्चेत् अङ्गे गुणवति क्रियमाणे विगुणमापद्यते, कोऽर्थोऽङ्गेन गुणवता कृतेन। तस्मात् पर्वणि सुत्या कर्तव्या, अपर्वणि दीक्षा।

**सुधा**—'य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा' इति दीक्षणीयेष्ट्यादीनामङ्गानां प्रधानस्य च सोमस्य बहुदिनव्यवधानेन उभयोः पर्वकालत्वसंपादनाशक्तेः किं पर्वणि सोमः अपर्वणि दीक्षा, विपरीतं वा इति संदिग्धे, प्राथम्यात् दीक्षायाः पर्वकालत्वे **प्राप्ते**, 'प्रधानसाद्गुण्यार्थत्वादङ्गानुष्ठानस्य प्रधानस्यैव पर्वकालता' इति वक्ष्यते। पृ. १७५.

**शा**—दीक्षणीयायाः सोमस्य च 'य इष्ट्या पशुना सोमेन' इत्यादिवचनेन एककालत्वे प्राप्ते सति, एकादिदीक्षापक्षे द्वयोः कालासंभवात् कस्य कालोऽनुग्राह्य इति विचारे अनियमः, मुख्यत्वाद्वा दीक्षणीयाधर्मानुग्रहे **प्राप्ते**, प्रधानधर्मत्वात् सुत्याकालानुग्रहः। सर्वाणि ह्यङ्गानि तदङ्गानि च प्रधानसाद्गुण्याय क्रियन्ते। न च साक्षात् साद्गुण्यसंभवे परंपरामाश्रयति। तस्मात् प्रधानकालानुग्रहोऽयम्। प्राप्तबाधचिन्ताऽपीयं विप्रतिषिद्धधर्मसमवायप्रसङ्गात् इह कृता।

**सोम**— पूर्वोक्तमुख्यधर्मानुग्रहापवादत्वात् **संगतिः**। न तु परोक्तरीत्या अङ्गकालानुग्रहे स एव कालः अङ्गद्वारा प्रधाने प्रसज्यते इति संगतिः, अङ्गकालानुग्रहे अङ्गिनो यथाश्रुतकालसिद्ध्या प्रसङ्गासंभवात्। **सूत्रार्थस्तु**—अङ्गगुणेन प्रधानगुणस्य विरोधे प्रधानगुणानुग्रह एव न्याय्यः प्रधानार्थत्वादङ्गानामिति।

**वि**—'य इष्ट्या पशुनेत्यादौ दीक्षाकालोऽथ सोमकः।, आद्यः प्राथम्यतो, मैवं प्रधानस्य बलित्वतः॥'

**भाट्ट**— यत्र तु मुख्यमङ्गं यथा दीक्षणीया प्रथमदिनकर्तव्या, यत्र वा बहून्यङ्गानि यथा औपवसथ्ये अह्नि उपसदग्नीषोमीयपशुपुरोडाशादीनि, प्रधानं तु जघन्यं एकं च, सोमयागः पञ्चमदिनकर्तव्यः, तत्र 'य इष्ट्या' इत्यादिवाक्येन विहितपर्वकालविरोधे प्रधानस्यैव धर्मानुग्रहः, अङ्गानां तु प्रधानसाद्गुण्यार्थत्वेन तद्विरोधे अङ्गसाद्गुण्यस्य अकिंचित्करत्वात्, लोके प्रथमं बहुभिरवरुद्धे स्थले पश्चादागतेन एकेनापि राज्ञा तद्ग्रहणदर्शनाच्च। अतस्तत्र सोमयागस्यैव पाठतः अनुष्ठानतश्च जघन्यस्यापि प्रधानतया पर्वकालकत्वम्। दीक्षणीयादेस्तु पाठतः अनुष्ठानतश्च प्रथमोपस्थितत्वेऽपि एकादिदीक्षापक्षे न पर्वानुग्रहः। द्वादशदीक्षापक्षे तु अविरोधात् दीक्षणीयायामपि सः। अग्नीषोमीयादौ तु सर्वपक्षेऽपि बाध एव। अतश्च तत्र सुत्यादिनावधिकतत्तद्दिनकर्तव्यताबोधकवचनानुमिततत्तत्कालेनैव प्रसङ्गसिद्धिः पर्वकालस्य, इति प्रसङ्गानुनिष्पन्नबाधप्रसङ्गेनैव वा बाधविचारः प्रासङ्गिकः।

**न्यायबिन्दुः**—दीक्षणीयायाः सोमस्य च पर्वकालत्वं 'य इष्ट्या पशुना सोमेन' इत्यादिवचनात्। तत्र द्वयोः तदसंभवात् मुख्यत्वेन दीक्षणीयाऽनुग्रहप्राप्तौ प्रधानतया सोमाङ्गानुग्रहः इति सिद्धान्तः।

**मडन**—'प्रधानस्य गुणो बली।'

**शंकर**—'अङ्गाङ्गिनोरपि तादृशम्।' मुख्यम्।

**अङ्गगुणविरोधे च तादर्थ्यात्। १२।२।९।२५॥**

'य इष्ट्या पशुना सोमेन वा यजेत, सोऽमावास्यायां पौर्णमास्यां वा यजेत' इति वचनात् ज्योतिष्टोमसुत्यायाः दीक्षणीयेष्टेश्च पर्वकाल आवश्यको भवति। न च दीक्षणीयासुत्ययोरनुष्ठाने एकः पर्वकालः संभवति। तत्र अन्यतरस्य पर्वकाले हातव्ये कस्य हातव्यः इति विचारे ज्योतिष्टोमारम्भे एव दीक्षणीयाया अनुष्ठेयत्वात् तस्या मुख्यत्वात् दीक्षणीया पर्वकालेऽनुष्ठातव्या, सुत्या तु अपर्वकाले स्यात् इति सुत्यायाः पर्वकाले हातव्य इति

पूर्वपक्षे प्राप्ते, चकारेण तुशब्दस्थानीयेन पूर्वपक्षनिरासं सूचयन् सिद्धान्तमाह । अङ्गगुणेन प्रधानगुणस्य विरोधे सति अङ्गस्य प्रधानार्थत्वात् । प्रधानसाद्गुण्यसिद्ध्यर्थं हि अङ्गं क्रियते । तस्मात् पर्वणि सुत्या अपर्वणि दीक्षा कर्तव्या इति सिद्धान्तः । अङ्गस्य गुणः अङ्गगुणः । अङ्गगुणशब्दात् प्रधानगुणपदं स्मर्यते । तच्च विरोधपदानुसारात् तृतीयान्तम् । तथा च प्रधानगुणेन अङ्गगुणस्य विरोधे सति इत्यक्षरयोजना । **के.**

* अङ्गगुणविरोधे च इति न्यायेन प्रधानगुणस्य प्रबलत्वम् । **सोम.** ६।३।२१, * अङ्गगुणविरोधे च तादर्थ्यात् इति न्यायः । अङ्गगुणन्यायः । अङ्गगुणविरोधाधिकरणन्यायः । इति सर्वमिदमेकमेव । * **अङ्गगुणविरोधे च तादर्थ्यात्** इदं न्यायप्रतिपादकं सूत्रम् । अस्य न्यायस्य **स्वरूपं तु** 'धर्मधर्मिविरोधे च धर्मिणो बलवत्तराः' इति । **वा.** १।३।३।५. 'प्रधानसाद्गुण्यार्थत्वात् अङ्गानुष्ठानस्य प्रधानस्यैव पर्वकालतादि ।' इति च । **सु.** पृ. १७५. अङ्गाङ्गापेक्षया साक्षादङ्गं बलीयः इति न्यायार्थः । **मीन्या.** * अङ्गगुणविरोधे च तादर्थ्यात् इति क्रत्वर्थो बलवान् । ( सत्रे ) यत्र क्रत्वर्थेन पुरुषार्थस्याविप्रतिषेधः तत्र (सर्वे यजमानाः) स्वार्थं करिष्यन्ति । विप्रतिषेधे तु परकीयं क्रत्वर्थम् । क्रत्वर्थे हि अक्रियमाणे क्रतुरेव न संपद्यते । पुरुषार्थे तु हीने पुरुषो विगुणः । **भा.** १२।४।१४।३९. * अङ्गगुणविरोधे च तादर्थ्यात् इत्यत्र अङ्गसाद्गुण्यानुष्ठानस्य प्रधानसाद्गुण्यार्थताया वक्ष्यमाणत्वात् विशेषणविशेषणस्य प्रधानान्वयः । **सु** पृ. ८६७. * अङ्गगुणविरोधे च तादर्थ्यात् इत्यधिकरणे मुख्यस्यापि दीक्षणीयाकालस्य पर्वणो यइष्ट्यादिवाक्यप्राप्तस्य एकदीक्षापक्षे प्रधानसुत्याकालेन पर्वणा बाधो वक्ष्यते । **कु.** ३।३।१।१. * अङ्गगुणविरोधे च तादर्थ्यात् इत्यनेन अङ्गत्वात् प्रैषस्य कर्तृलोपो युक्तो न प्रधानस्य । **वा.** ३।८।१२।२३. * अङ्गगुणविरोधे च तादर्थ्यात् इत्यनेन न्यायेन विशेषाभावे विध्युद्देशार्थवादविरोधे विध्युद्देशस्य अर्थवादं प्रति प्राधान्यात् बलीयस्त्वावगतेः विध्युद्देशरूपोपसंहारस्थऋगादिश्रुतिबलीयस्त्वात् तदनुरोधेन अर्थवादरूपोपक्रमस्था वेदश्रुतिर्व्याख्येया । **सु.** पृ. ११६७. * यदि गुणमुख्यव्यतिक्रमः अङ्गप्रधानधर्मविरोधो व्याख्यायते, ततः 'अङ्गगुणविरोधे च तादर्थ्यात्' इत्यनेन सह अपौनरुक्त्यं संप्रधारणीयम् । **वा.** ३।३।२।९ पृ. ८१४. * तदिदं भाष्यकारीयमधिकरणं(गुणमुख्यव्यतिक्रमाधिकरणं ३।३।२।८) अङ्गवेदस्वरस्यापि उच्चैस्त्वस्य प्रधाने श्रुतस्य अङ्गद्वारा प्रधानोपकारकतया तद्बाधेऽपि प्रधानवैगुण्यस्य दुर्वारत्वात् 'अङ्गगुणविरोधे च तादर्थ्यात्' इति द्वादशाधिकरणेन गतप्रायत्वात् प्रधानविध्याश्रितस्य प्रधाने श्रुतस्य अङ्गेषु अनुष्ठानकल्पनस्य गुरुत्वात् । **कु.** ३।३।२।८. *'नर्तुं प्रतीक्षेत' इत्यादिना आधानप्रकरणात् तस्यैव कालः प्रतिषिध्यते न सोमस्य, अप्रकृतत्वात् । एवं च **अङ्गगुणन्यायस्य** अविरोधो भवति । सोमाङ्गं हि अग्नयः, तेषामपि अङ्गमाधानं इति तस्यैव कालबाधो युक्तः । ( पूर्वपक्षे ) **रत्न.** ५।४।५. * **अङ्गगुणन्यायविरोधादपि** लिङ्गस्य प्रातिपदिकवाच्यतामभ्युपेत्य जातेर्वाच्यत्वनिरासो न युक्तः । **सु.** पृ. १४१४. * तिसृणामपि एतासां ( प्रयोग–विनियोग–उत्पत्तीनां ) सामरूपाङ्गविषयत्वात् **नाङ्गगुणविरोधन्यायोऽपि** । नहि प्रधानभूते आधाने अस्माभिरुपांशुत्वं बाध्यते, येन स आपद्येत । **कौ.** ३।३।२।९ पृ. ३२०. * न च अङ्गगुणविरोधन्यायः । उभयोः ( करणक्रियमाणानुवादिमन्त्रयोः) अङ्गत्वाविशेषात् । **टुप्.** ३।८।१०।२१.

* ( **अस्य न्यायस्य विषयाविषयौ** ) यानि प्रयोगविधिः उपादेयत्वेनाङ्गानि विधत्ते तन्मात्रविषयः अङ्गगुणविरोधन्यायः । यानि विध्यन्तरप्रयुक्तानि स्वयंसिद्धानि वा अङ्गत्वेन परिगृह्णाति प्रयोगविधिः, तानि तु स्वरूपत एव अधिकारिविशेषणतां प्रतिपद्यन्ते, न तु तत्र अङ्गगुणविरोधन्यायः । नापि सर्वशक्त्यधिकरणन्यायः (६।३।२) अन्यथा तिर्यगधिकरणे ( ६।१।२) अङ्गानुसारेण प्रधानवाक्यसंकोचाश्रयणं असंगतं स्यात् । **कु.** ३।४।१३।३२. * **अङ्गगुणविरोधन्यायेन** अङ्गस्वेव प्राकृतजातिबाधस्य युक्तत्वात् । **सु.** पृ. ६३५. *अङ्गगुणविरोधन्यायेन अर्थवादस्य असमञ्जसत्वं न्याय्यम् । **वा.** ३।४।११।३०. * अङ्गगुणविरोधन्यायेन आहवनीयत्यागशङ्का तु

( जयादिहोमेषु ) आहवनीयसाध्येषु कर्मसु अवैगुण्यसंभवे वैगुण्यापादकाङ्गस्यागायोगात् अयुक्ता । ( पूर्वपक्षे ) **सु.** पृ १४८३. * अङ्गगुणविरोधन्यायेन आहवनीयाभावे लौकिकेऽप्यग्नौ जयहोमानां कर्तुं शक्यत्वात् । (इदं पूर्वपक्षे ) **कु.** ३।४।१३।३२. * अङ्गगुणविरोधन्यायेन उत्कारके आधाने एव 'नर्तुं पृच्छेन्न नक्षत्रं' इत्यनेन कालबाधस्य न्याय्यत्वात् । ( इदं पूर्वपक्षे ) **भाट्ट.** ५।४।५. * अनुनिर्वाप्याणां देवसुवां हविषां अग्न्यर्थतया ( चयनार्थतया ) पशुपुरोडाशार्थत्वासंभवात् 'पशुपुरोडाशमनु निर्वपति' इति कालार्थ एव संयोगः, न तु 'वैमृधमनु निर्वपति' इतिवत् अङ्गाङ्गिभावः, तेन अङ्गगुणविरोधन्यायेन पुरोडाशधर्मस्य ग्रह किं न स्यात् इति शङ्काऽनवकाशः । **सोम.** १२।३।२. * अपच्छेदे । न च पुनःप्रयोगस्य प्रायश्चित्ततया पूर्वप्रयोगाङ्गत्वात् 'तत्र तद् दद्यात्' इत्यनेन च पूर्वप्रयोगाङ्गभूतपुनःप्रयोगाङ्गसर्वस्वदक्षिणाबाधेन प्रधानभूतपूर्वप्रयोगाङ्गदक्षिणायाः एव उत्तरप्रयोगवृत्तित्वमात्रविधानात् अङ्गगुणविरोधन्यायेन अङ्गभूतप्रयोगाङ्गसर्वस्वदक्षिणाबाधेन प्रधानभूतप्रयोगाङ्गदक्षिणाया एव देयत्वमुचितमिति वाच्यम् ( पूर्वपक्षशङ्का ) । * ( 'त्रयो वेदा अजायन्त' 'उच्चैर्ऋचा क्रियते' ) उपक्रमस्थस्यापि वेदपदस्य गुणभूतान्यपरार्थवादस्थत्वेन प्रधानभूतविध्युद्देशस्थऋगादिपदे निःसंदिग्धे अङ्गगुणविरोधन्यायेन लक्षणातात्पर्यग्राहकत्वात् वेदपदे एव तदेकदेशऋगादिलक्षणा इति प्राप्ते । **भाट्ट.** ३।३।१. * दर्शे अन्वाधानप्रधानयोः उभयोरपि चन्द्रादर्शनस्यावश्यकत्वे द्व्यहकालक्रियमाणयोः अङ्गप्रधानयोः तदसंभवे अङ्गगुणविरोधन्यायेन अन्वाधाने एव तद्बाधस्य युक्तत्वात् । **संकर्ष.** १।२।११. * न चातिदेशेन संमार्गस्य (स्रुचः संमार्ष्टि) क्लृप्तोपकारनानावृक्षीयस्रुग्विशिष्टस्यैव प्राप्तत्वात् तदबाधाय स्रुक्पदसंकोचोपपत्तिः, प्राकृतनानावृक्षीयत्वाबाधाय स्रुक्पदसंकोचाङ्गीकारे अङ्गगुणविरोधन्यायेन प्रधानस्रुक्षु नानावृक्षीयत्वानुग्रहेण स्रुक्ष्वेव शमीमयत्वादिनिवेशोपपत्तेः । **कौ.** २।१।५।१२ पृ. ८३, * **न चैवमपि** इन्द्रपीतपदे '**बहुव्रीहौ प्रकृत्या पूर्वपदं**' ( पा० ६।२।१ ), इति **स्मरणानुसारात् पूर्वपदे प्रकृतिस्वरस्य इकारोदात्तत्वस्य** बहुव्रीहिज्ञापकस्य वैदिकैः पठ्यमानत्वात् बहुव्रीहित्वावगतेः, तत्पुरुषाङ्गीकारे च अन्तोदात्तत्वापत्तेः, कथं तत्पुरुषाङ्गीकरणं इति **वाच्यम्** । सत्यपि बहुव्रीहिज्ञापके स्वरे प्रधानभूतस्वार्थानुग्रहाय तत्पुरुषावधारणात् शब्दधर्मस्य स्वरस्यैव अङ्गगुणविरोधन्यायेन 'सुप्तिङुपग्रहलिङ्गनराणां' इत्येवं व्यत्ययेन व्याख्यानात् । ३।२।१०।२७ पृ. २७८. * पर्वण्येव समन्त्रककर्मविधिबलात्, पर्वणि अध्ययननिषेधाच्च मन्त्राणां कर्मसु विकल्पः इति पूर्वपक्षो मन्दः । अङ्गगुणविरोधन्यायेन मन्त्रधर्मपरित्यागेन मन्त्रप्रयोगस्य न्याय्यत्वात्, 'पर्वणि नाध्येयं' इत्यस्य स्मार्तत्वेन ग्रहणाध्ययने सावकाशत्वेन च, कर्माङ्गत्वेन मन्त्रविधेः श्रौतत्वेन निरवकाशत्वेन च अतुल्यबलत्वात् । **सोम.** १२।३।७. * यत्र आर्त्विज्यसंस्कारयोर्विरोधः, तत्र द्विविधस्यापि संस्कारस्य आर्त्विज्यं प्रति गुणत्वात् अङ्गगुणविरोधन्यायेन आर्त्विज्यस्यैव अनुग्रहः, न संस्काराणाम् । **भाट्ट.** १२।४।१३, * 'येन कर्मणेर्त्सेत् तत्र जयान् जुहुयात्' । न च प्रधानसादेश्यासंभवात् अनङ्गत्वं, अङ्गगुणविरोधन्यायेन तदसंभवेऽपि अङ्गत्वोपपत्तेः, कृषिदेशे अग्निनयनेन समानदेशसंभवाच्च । ( इदं पूर्वपक्षे ) । ३।४।१३. * विध्युद्देशस्य प्रबलत्वात् तदनुसारेण तद्वाक्यशेषः उपक्रमगतोऽपि अङ्गगुणविरोधन्यायेन अन्यथा नेयः । दातुरपि यदि दोषः स्यात्, किमुत प्रतिग्रहीतुरपीति । **कु.** ३।४।१५।३७. * विध्युद्देशापेक्षया अङ्गगुणविरोधन्यायेन अर्थवादासामञ्जस्ये अभिहिते अर्थवादस्य विध्युद्देशाङ्गत्वे सति विध्युद्देशगुणयथाश्रुतत्वानुरोधेन अर्थवादगुणयथाश्रुतत्वबाधो युक्तः । **सु.** पृ. १४९७. * व्रीहीणां यागाङ्गत्वे अङ्गगुणविरोधन्यायेन पुरोडाशाङ्गभूतव्रीह्युपादानमेव इति षष्ठोक्तं प्रयोजनम् । **के.** * साक्षात् ग्रहणाङ्गभूतक्रमकालाद्यपेक्षया ग्रहणाङ्गभूतपात्राङ्गैकत्वस्य अङ्गगुणविरोधन्यायेन दौर्बल्यात् । **भाट्ट.** ५।२।८, * सौर्यादीनां दर्शान्वाधानस्य प्रातरेव कृतत्वेन तत्तन्त्रमध्यपातावश्यंभावात् प्रसङ्गापत्तिस्तु नास्ति, सौर्यादिप्रधानेषु आतिदेशिकस्यापि प्रातःकालस्य सत्त्वेन अङ्गगुणविरोधन्यायेन बाधानुपपत्तेः । दर्शाद्यन्वाधाने एव तद्बाधस्यौचित्येन विकृतिकरणोत्तरमेव दर्शपूर्णमासा-

रम्भात् प्रसङ्गानापत्तेः। १२।२।५. * ( उखाधिश्रयणावहन्त्यादीनां द्वादशानां कर्मद्वन्द्वानां ) **अङ्गगुणविरोधन्यायात्** आध्वर्यवत्वमेव, यजमानस्तु स्मारयिष्यति। **वा.** ३।८।९।२०. * पुरस्तादर्थवादेषु 'मुख्यं वा०' (१२।४।९।२५ ) इतिन्यायात् यथाश्रुतत्वावगमेऽपि एतन्यायबाधेन दीक्षणीयादिषु पूर्वानुष्ठेयत्वानाख्येयपर्वकालत्वबाधवत् अङ्गगुणविरोधन्यायात् यथाश्रुतत्वबाधावगतेः तदनुसारेण विध्यर्थकल्पना न युक्ता इत्याशङ्क्य प्रधानसादृगुण्यार्थस्य अङ्गगुणस्य पर्वकालत्वादेः प्रधानगुणविरोधे सादृगुण्यार्थत्वायोगात् बाधो युक्तः। अर्थवादानां तु यथाकथंचित् प्राशस्त्यप्रतिपादनमात्रेण विधिसादृगुण्यार्थत्वसिद्धेः तद्यथाश्रुतत्वस्य प्रधानभूतविधिसादृगुण्यार्थत्वाभावेन तादर्थ्यात् इति वैषम्यम्। **सु.** पृ. १४९९–१५००, * मुख्यत्वात् विध्युद्देशस्यापि अङ्गगुणविरोधन्यायात् बलीयस्त्वहेतुता न विरुद्धा। ११७१, * समाप्तेरुपक्रमं प्रति प्राधान्यावगमात् अङ्गगुणविरोधन्यायात् समाप्तिगुणेन उपक्रमगुणबाधावगतेः। **सु.*** स्तुतिसिद्ध्यर्थसालम्बनत्वानुरोधेन प्रधानभूतस्तुतिबाधः अङ्गगुणविरोधन्यायात् अयुक्तः। पृ. ६०. * **अङ्गगुणविरोधन्यायस्य** गुणीभूतस्य उपक्रमस्थाने नावतारः। **अद्वै. चं.** पृ. ३५६. * **ननु** सत्यं उपक्रमापेक्षया तत्प्रतिबद्धात्मलाभस्योपसंहारस्य दौर्बल्यम्। प्रतिबन्ध एव तु इहोपक्रमस्थेनापि अर्थवादत्वात् अङ्गभूतेन प्रधानभूतस्य विधेरशक्यसंपादः। अत एव यत्र न अङ्गप्रधानभावः, तत्रैव एकवाक्यत्वादौ, इति परस्य प्रथमोपस्थितापेक्षया दौर्बल्यम्। यथा 'यो होता सोऽध्वर्युः' इत्यादौ। प्रकृते तु यथैव 'य इष्ट्या' इत्यादौ उपसंहारस्थस्यापि प्रधानभूतस्य सोमस्य धर्मानुग्रहः, तथैव विधेरपि **इति चेत्**। सत्यं प्रधानभूतस्योपसंहारस्थस्यापि प्राबल्यं, न त्विह तथा, प्रधानभूतस्य 'उच्चैः क्रियते' इत्यस्य विधेः विरोधाभावात्। विरुद्धस्य च ऋगादिपदस्य न विध्यन्तर्भावः, उद्देश्यघटकत्वाप्रमापणात्। अतो नायं अङ्गगुणविरोधन्यायस्य विषयः। अत एव यत्र उत्तरस्यापि पूर्वाविरोधेन कार्यान्तरपरत्वासंभवः, तत्र परस्यापि शक्यार्थपरत्वात् तस्य च प्राधान्यात् अङ्गगुणविरोधन्यायः अपवादक उपक्रमन्यायस्य यथा 'य इष्ट्या' इत्यादौ। वस्तुतस्तु न तत्र उपक्रमन्यायोऽपि 'यजेत' इति प्रत्ययाभिहितसर्वभावनोद्देशेन विविदिषावाक्यवत् शब्दार्थविशिष्टकालविधेः प्रकरणान्तराधिकरणे (२।३।११ पृ. ८८) व्युत्पादितत्वेन इष्ट्यादिपदानां अनुवादमात्रतया तदभावात्। **एतेन** यत् कैश्चित् एतस्य अङ्गगुणविरोधन्यायोदाहरणत्वसिद्ध्यर्थं इष्ट्यादिवाक्ये वाक्यत्रयमेव अङ्गीकृत्य उपक्रमन्यायाभावः इत्युक्तं **तदपास्तम्**। अस्मदुक्तरीत्या एकवाक्यत्वोपपत्तौ तदङ्गीकारे प्रमाणाभावात्। **यदपि** च तद्ग्रन्थात् ( शंकरभट्टग्रन्थात् ) 'एकवाक्यत्वे सति उपक्रमन्यायस्यैव प्राबल्यं, तदभावे एव तु अङ्गगुणन्यायस्य' इति प्रतीयते, तत् 'चतुरो मुष्टीन्निर्वपति' इत्यादौ एकवाक्यत्वेऽपि मुष्टीनां प्राधान्यात् सतदशशरावे चरौ अनुग्रहः इत्येवं पूर्वपक्षकरणं, सिद्धान्ते च उभयोः क्रियान्वयित्वात् प्राधान्याभावोपपादनं दुर्घटं स्यात् इति **उपेक्षितम्**। तस्मात् सत्यपि अङ्गगुणविरोधन्यायस्य उपक्रमन्यायापवादकत्वे प्राधान्यापह्नवेनैव प्रकृतसिद्धान्तोपपादनं द्रष्टव्यम्। **कौ.** ३।३।१।२ पृ. ३१५–१६, * नहि प्रधानमपि उपसंहारस्थं दुर्बलं अङ्गगुणविरोधन्यायस्य 'मुख्यं वा पूर्वचोदनात्' (१२।२।८) इति न्यायापवादकत्वात्। अन्यथा 'य इष्ट्या पशुना सोमेन' इत्यत्र उपसंहारस्थस्यापि सोमयागस्य प्रधानत्वात् पर्वानुग्रहो वक्ष्यमाणो विरुध्येत। इदं पूर्वपक्षे। ३।३।१।१ पृ. ३१३. * अङ्गगुणविरोधन्यायस्य विध्युद्देशतद्वाक्यशेषान्यविषयतायाः उपक्रमाधिकरणे व्यवस्थापितत्वात्। **कु.** ३।४।१४।३७ पृ. ३७६. * दीक्षणीयाज्योतिष्टोमादीनां पौर्वापर्यकृतात् बाध्यबाधकत्वविशेषात् **अङ्गगुणविरोधन्यायबाध्यात्** विध्यर्थवादादीनां पौर्वापर्यकृतो बाध्यबाधकत्वविशेषः अङ्गगुणविरोधन्यायबाध्यत्वाभावेन अन्यो विषयो भवति। **सु.** पृ. १५००. * **अङ्गगुणविरोधन्यायविरोधेन** अङ्गकालानुरोधेन प्रधानकालबाधस्य अयुक्तत्वे अनङ्गार्थिकभोजनकालानुरोधेन प्रदोषकालिकशिवपूजनरूपप्रधानकालबाधे इष्टापत्तेरत्यन्तानुचितत्वात्।

**पुरुषार्थचिन्तामणौ प्रदीपे** । * प्रधानभूतविध्यनुरोधेन तदनुग्राहकार्थवादश्रुतिवृत्तित्वरूपधर्मत्यागस्य **अङ्गगुणविरोधन्यायसिद्धत्वात्** । **को**. १।४।१९।२९पृ.२९६. * **अङ्गगुणविरोधविरुद्धयोः** श्रुत्योः प्रधानश्रुतिः अङ्गगुणश्रुतेः बलीयसी । * **अङ्गगुणविरोधाधिकरणन्यायेन** अङ्गभूतब्रह्मशब्दार्थैकदेशं जीवाभेदं त्यक्त्वा प्रधानविध्यपेक्षितस्य कर्तृकर्मभेदस्य ग्रहणौचित्यात् (पूर्वपक्षे) । **परिमलः** ( ४।१।३।४ ब्रसू. ). * अङ्गगुणविरोधाधिकरणन्यायेन जयादीनामपि अपर्वकालत्वात् दीक्षणीयादीनामपि अपर्वकालत्वम् । **सोम**. ७।१।१ पृ. ५२४. * **अङ्गगुणेन** प्रधानगुणबाधस्य अन्याय्यत्वात् । **टुप्**. ४।१।१७।४८ पृ. १२२४. * अङ्गगुणेन प्रधानगुणस्य विरोधे अङ्गगुणो बाध्येत । **भा**. १२।२।९।२५. * **अङ्गगुणस्य** प्रधानसाद्गुण्यार्थस्य पर्वकालादेः प्रधानगुणविरोधे साद्गुण्यार्थत्वायोगात् बाधो युक्तः । **सु**. पृ. १४९९. * **अङ्गगुणविरोधे** प्रधानगुणस्यैव प्राबल्यम् । **वि**. १२।२।९.* **अङ्गगुणश्रुतेः** प्रधानश्रुतिर्बलीयसी । **वा**. ३।३।७।१४ पृ. ८४०. * भावनायाः करणापूर्वाभ्यां संबन्धे सत्यपि भावनायाः भाव्यनिष्ठत्वात् भाव्यनिष्पत्त्यर्थमेव इतिकर्तव्यतामपेक्षते इति भाव्यरूपापूर्वप्रयुक्तमेव **अङ्गजातं** न करणप्रयुक्तं इति बोध्यम् । **सोम**.७।१।१ पृ.५२६. * **अङ्गतन्त्रं** त्रेधा उपदिष्टानामेव अङ्गानां अन्योन्यं यथा दर्शाङ्गानां प्रयाजानाम् । उपदिष्टातिदिष्टयोः अन्योन्यं यथा 'दीक्षासु यूपं छिनत्ति' इति अपकृष्यमाणस्य अग्नीषोमीये उपदिष्टस्य, सवनीये चातिदिष्टस्य यूपस्य तत्संस्काराणां चान्योन्यम् । अतिदिष्टानामेव अन्योन्यं यथा वरुणप्रघासेषु उत्तरे विहारे अष्टसु हविःषु अतिदिष्टानां प्रयाजानां तन्त्रम् । **बाल**. पृ. १४८. * **अङ्गत्वं** कार्यजनने सहकारित्वम् । **मणि**. पृ. २. * अङ्गत्वं परंपरयाऽपि उपकारित्वमात्रेण युक्तम् । **सु**. पृ. ८५६. * अङ्गत्वं प्रकरणात् स्यात् वाक्यसंयोगाद्वा प्रत्यक्षोपकारदर्शनाद्वा । **भा**. १०।६।१०।३०. * अङ्गत्वं विभक्तिश्रुत्या विनियुज्यते यथा 'व्रीहिभिर्यजेत' इति तृतीयाश्रुत्या व्रीहीणां यागाङ्गत्वम् । **न च** उत्पत्तिशिष्टपुरोडाशावरुद्धे यागे कथं व्रीहीणामङ्गत्वमिति **वाच्यम्** । पुरोडाशप्रकृतितया उपपत्तेः, पशोरिव हृदयादिरूपहविष्प्रकृतितया यागाङ्गत्वम् । **न च** साक्षात् पशोरेवाङ्गत्वं किं न स्यादिति **वाच्यम्** । तस्य विशसनात्, अवदीयमानत्वाच्च हृदयादीनाम् । अवदीयमानं हि हविः, यथा पुरोडाशादि 'मध्यात् पूर्वार्धाच्चावद्यति' इति वाक्यात् । हृदयादीनि चावदीयमानानि, न पशुः, 'हृदयस्याग्रेऽवद्यति' इति वाक्यात् । अतो हृदयादीन्येव हवींषि, पशुस्तु प्रकृतिद्रव्यम् । पात्नीवतयागे तु साक्षात् पशुरेवाङ्गं, तस्य जीवत एव 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्युत्सर्गविधानात् । यत्र तु विशसनं, तत्र पशुः प्रकृतिद्रव्यमित्येव सिद्धम् । एवं व्रीहयोऽपि प्रकृतिद्रव्यतया यागाङ्गं तृतीयाश्रुत्या इति । आरुण्यस्यापि क्रयाङ्गत्वं तृतीयाश्रुत्या । **न चामूर्तस्य** तस्य कथं क्रयाङ्गत्वमिति **वाच्यम्** । एकहायनीरूपद्रव्यपरिच्छेदद्वारा तदुपपत्तेः । 'व्रीहीन् प्रोक्षति' इत्यत्र प्रोक्षणस्य व्रीह्यङ्गत्वं द्वितीयाश्रुत्या । तच्च प्रोक्षणं न व्रीहिस्वरूपार्थं, स्वरूपे आनर्थक्यात्, व्रीहिस्वरूपस्य प्रोक्षणं विनाऽनुपपत्त्यभावात्, किं त्वपूर्वसाधनत्वप्रयुक्तम् । यदि व्रीहिषु प्रोक्षणं क्रियते, तदा तैर्यागेऽनुष्ठिते अपूर्वं भवति नान्यथेति । अतः प्रकरणसहकृतया द्वितीयाश्रुत्या तण्डुलनिर्वृत्तिप्रणाड्या यदपूर्वसाधनं तदङ्गत्वं प्रोक्षणस्योच्यते इति । एवं सर्वेष्वप्यङ्गेषु अपूर्वप्रयुक्तत्वं वेदितव्यम् । एवं 'इमामगृभ्णन् रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्रापि द्वितीयाश्रुत्या मन्त्रस्य अश्वाभिधान्यङ्गत्वम् । यत्तु वाक्यीयोऽयं विनियोग इति, तन्न । तथा सति वाक्याल्लिङ्गस्य बलीयस्त्वेन यावद्वाक्यादश्वाभिधान्यङ्गत्वं भवति, तावल्लिङ्गाद्रशनामात्राङ्गत्वमेव स्यात्, 'स्योनं ते सदनं कृणोमि' इत्यस्येव सदनाङ्गत्वम् । श्रौतविनियोगपक्षे तु यावल्लिङ्गाद्रशनामात्राङ्गत्वं भवति तावच्छ्रुत्या 'ऐन्द्या गार्हपत्यमुपतिष्ठते' इत्यत्र तृतीयाश्रुत्या ऐन्द्याः ऋचो गार्हपत्योपस्थानाङ्गत्ववदश्वाभिधान्यां विनियोगः क्रियते इति युक्तं मन्त्रस्याश्वाभिधान्यङ्गत्वम् । तस्माच्छ्रौतः एवायं विनियोगः । 'यदाहवनीये जुहोति' इत्याहवनीयस्य होमाङ्गत्वं सप्तमीश्रुत्या । एवमन्येऽपि विभक्तिश्रुत्या विनियोगा ज्ञेयाः । 'पशुना यजेत' इत्यत्रैकत्वपुंस्त्वयोः समानाभिधानश्रुत्या

कारकाङ्गत्वम् । यजेतेत्याख्याताभिहितसंख्याया भावनाऽ-ङ्गत्वं समानाभिधानश्रुतेः, एकपदश्रुत्या च यागाङ्गत्वम् । **न चानूर्तायास्तस्याः कथं यागाङ्गत्वमिति वाच्यम्** । कर्तृ-परिच्छेदद्वारा तदुपपत्तेः । **मीन्या.** पृ. १२६–१३२. ॐ अङ्गत्वं शेषत्वम् । तच्च पारार्थ्यम् । **के चिन्** किल येन विना यन्न भवति बीजादिना इव अङ्कुरादिः, स बीजादिः तस्याङ्कुरादेः शेष इत्याहुः । **तदयुक्तम्** । रूपरसादीनां आग्नेयादीनां च मिथः अविनाभावेन शेष-त्वापत्तेः । प्रयोज्यत्वं शेषत्वं **इत्येतदपि** पुरोडाशकपाला-दिषु अप्रयोज्येष्वपि शेषत्वसंभवात् अव्यापकम् । **अन्ये तु** यत् यस्मादधिकं विधीयते, स तस्य शेष इत्याहुः । **तदतिमन्दम्** । अङ्गप्रधानानां परस्पराधिक्यात् । **अन्ये** विध्यन्तविहितत्वं शेषत्वमाहुः, तदपि विध्यादिविहिताना-मपि शाखाछेदनादीनां अङ्गत्वदर्शनात् **अयुक्तम्** । तस्मादुपकारकत्वमेव शेषत्वं **इत्यन्ये । तदप्ययुक्तम्** । प्रधानान्यपि अङ्गानामनुष्ठानोपयोगं कुर्वन्ति शेषत्वं गच्छेयुः । ‘ तस्मात् पारार्थ्यमेवैकं युज्यते शेषलक्षणम् । परोद्देशप्रवृत्तिश्च **पारार्थ्यमभिधीयते** ॥ ’ शा. ३।१।२. परोद्देशप्रवृत्तपुरुषव्यापारगोचरत्वं पारार्थ्यम् । तथा च प्रधानस्य अङ्गोद्देश्यकप्रवृत्त्यगोचरत्वात् नातिप्रसङ्गः । कर्तुरपि यागाद्युद्देशप्रवृत्तसञ्जीभावादिव्यापारविषयत्वात् नाव्याप्तिः । तथा कालस्य प्रतीक्षणव्यापारविषयत्वात् , देशस्य प्राप्त्यनुकूलव्यापारविषयत्वात् नाव्याप्तिः । **यद्वा** देशकालयोः व्यापारान्तराभावेऽपि प्रधानक्रियायाः तत्रा-नुष्ठानात् तमेव व्यापारमादाय लक्षणगमनम् । फलस्यापि पुरुषेण स्वोपभोग्यतया उत्पाद्यत्वात् तस्यापि पुरुषशेष-त्वोपपत्तिः । **सोम.** ॐ अङ्गत्वं शेषत्वम् । ‘ शेषः परा-र्थत्वात् ’ ३।१।२ । द्रव्यगुणसंस्कारेषु ( शेषत्वं इति ) बादरिः । ३ । कर्माण्यपि ( शेषः इति ) जैमिनिः फलार्थत्वात् । ४ । फलं च ( शेषः ) पुरुषार्थ-त्वात् । ५ । पुरुषश्च ( शेषः ) कर्मार्थत्वात् । ६ । तेषां ( द्रव्यादिपुरुषान्तानां ) अर्थेन ( प्रयोजनेन ) संबन्धः । ७ । जैमिनिसूत्राण्येतानि । ॐ पारार्थ्यमेव हि अङ्गत्वमुच्यते । परस्योत्पत्तौ कार्ये वा यत् अनुग्रहाय वर्तते , तत् परार्थमित्युच्यते । तदेव चाङ्गम् । तस्मात् विनियोगकृतमेवाङ्गत्वं, न प्रयुक्तिकृतम् । **बृहती.** पृ. ३. ॐ स्वरूपे कार्ये च उपयोगिनः अङ्गत्वमवसीयते । **सु.** पृ. १०२०. ॐ **अङ्गत्वनिरुक्तिः** । ‘नमामि तुळजां स्वीयकुलजा-द्यधिदेवताम् । सर्वाभीष्टफलप्राप्त्यै ब्रह्मादिभिरभिष्टुताम् ॥ मुरारिसंसेवनशुद्धबुद्धिः कुमारिलप्रोक्तमतानुसारी । मुरा-रिरङ्गत्वनिरुक्तिमेतां करोति सद्युक्तिगणैरुपेताम् ॥ ’ तत्रा-ङ्गत्वं न तावज्जातिः, तत्साधकाभावात् , क्रियात्वादिजात्या सांकर्याच्च , जात्यादिसाधारणाङ्गत्वस्य जातित्वायोगाच्च , ‘ व्रीहिभिर्यजेत ’ इत्यादौ व्रीहिपदवाच्यजात्यादेरेव द्रव्य-परिच्छेदद्वारा यागाङ्गत्वस्य सिद्धान्तसिद्धत्वात् अङ्गत्वस्य सनिरूपकत्वेन जातित्वायोगाच्च । सकलाङ्गसाधारणानु-गताकारप्रतीतेरभावादेव नाखण्डोपाधित्वम् । अतः ‘ **शेषः** परार्थत्वात् ’ इति सूत्रेण परार्थत्वमेवाङ्गत्वं जैमिनिराह । **न च** सूत्रे शेषत्वापरपर्यायाङ्गत्वे साध्ये परार्थत्वस्य पञ्चम्या हेतुत्वोक्तेः, हेतोश्च साध्याभिन्नत्वात् कथमङ्गत्वस्य परार्थत्वरूपत्वमिति **वाच्यम्** । तत्र शेषपदवाच्यत्वस्य साध्यत्वात् । अत एव शेषपदवाच्यत्वानुमाने , इतरभेद-साध्यकानुमाने इव पक्षताऽवच्छेदकमेतदेव । अस्मन्मते साध्यवदन्यावृत्तित्वरूपसाध्यसामानाधिकरण्याघटितव्याप्ति-ज्ञानस्यैवानुमितिहेतुतया पक्षताऽवच्छेदकहेत्वोरैक्येऽपि सिद्धसाधनासंभवात् , प्रकृतानुमानस्य व्यतिरेक्यनुमान-त्वेन साध्याभावव्यापकीभूताभावप्रतियोगित्वरूपव्यतिरेक-व्याप्तिज्ञानस्यानुमितिहेतुत्वेन तदभावाच्च । **वस्तुतो** व्यापकसामानाधिकरण्यरूपव्याप्तिज्ञानस्य अनुमितिहेतुत्वेन पक्षताऽवच्छेदकहेत्वोरैक्ये न सिद्धसाधनं, पक्षताऽ-वच्छेदकरूपहेतौ साध्यसामानाधिकरण्यग्रहकाले तुल्य-वित्तिवेद्यतया साध्ये पक्षताऽवच्छेदकाधिकरणवृत्तित्व-भानेऽपि पक्षताऽवच्छेदकावच्छिन्नविशेष्यताकसाध्यवत्ता-निर्णयाभावात् । अत एव पृथिवीत्वादेरपि पृथिव्यादि-लक्षणत्वमुक्तं तार्किकैरित्यन्यदेतत् । शेषपदशक्यता-ऽवच्छेदकमप्येतदेव , अन्यानिरुक्तेः । अत एव शेषत्वस्य वक्ष्यमाणरीत्या नानात्वेन तत्पदं नानार्थकं बोध्यम् ।

**अथ किं नाम परार्थत्वम्** ? न तावत् परोपकार-कत्वम् । तद्धि यद्यदुपकारकं तत्तदङ्गमिति विशिष्य निर्वा-

च्यम् । तथा च कृष्यादौ यागाद्यङ्गत्वप्रसङ्गः । नापि विहितत्वघटितं तत्, पश्वङ्गभूतप्रयाजगोदोहनादीनां पुरोडाशप्रणयनाद्युपकारकत्वेन तदङ्गत्वापत्तेः । **अथ** अन्यानुपकारकत्वघटितं तत् । प्रयाजादीनां पुरोडाशाद्युपकारकत्वेऽपि पुरोडाशाद्यन्यपशूपकारकत्वान्नोक्ताङ्गत्वप्रसङ्ग **इति चेत्**, उक्तानां पश्वङ्गत्वानापत्तेः । **अथ** अन्याप्रयुक्तत्वघटितं तत् । प्रयाजादीनां पश्वङ्गपुरोडाशाद्युपकारकत्वेऽपि तदप्रयुक्तत्वान्नाव्याप्तिः, पुरोडाशाद्यन्यपश्वप्रयुक्तत्वाच्च न पुरोडाशाद्यङ्गत्वप्रसङ्गः **इति चेत्**, प्रकृतिप्रयुक्तानामङ्गानां विकृत्यङ्गत्वानापत्तेः ।

**ननु** यदन्यमात्राप्रयुक्तत्वे सति यदुपकारकं यत्, तत् तदङ्गम् । यदन्यमात्रप्रयुक्तत्वं च यदप्रयुक्तत्वे सति यदन्यप्रयुक्तत्वं, लाघवात् । यदप्रयुक्तत्वस्यैव निवेशे अप्रयोज्यकालदेशाद्यङ्गेषु अव्याप्तिः, अतो विशिष्टाभावसंपत्त्यै यदन्यप्रयुक्तत्वरूपं विशेष्यम् । ( एवं यदन्यप्रयुक्तत्वस्यैव निवेशे विकृत्यन्यप्रकृतिप्रयुक्तानामङ्गानां विकृत्यङ्गत्वानापत्तिः, अतो यदप्रयुक्तत्वे सति इति विशेषणं बोध्यम् ) एवं च प्राकृताङ्गानां विकृत्यन्यप्रकृतिप्रयुक्तत्वेऽपि विकृत्यप्रयुक्ततत्वाभावात् विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वेन यदन्यमात्राप्रयुक्तत्वम् । अतो नाव्याप्तिः, **इति चेन्न** । पुरोडाशकपालस्य तुषोपवापाङ्गत्वानापत्तेः । 'पुरोडाशकपालेन तुषानुपवपति' इत्यत्र हि 'कपालेषु पुरोडाशं श्रपयति' इत्यनेन पुरोडाशप्रयुक्तत्वेनावगतस्यैव कपालस्य तुषोपवापाङ्गत्वेन विधानात् पुरोडाशकपालस्य न तुषोपवापप्रयुक्तत्वमित्युक्तं चतुर्थे ( ४।१।११।२६ ) । अतस्तुपोपवापान्यपुरोडाशमात्रप्रयुक्तत्वात् पुरोडाशकपालस्य तुषोपवापाङ्गत्वानापत्तिः । **यदि तु** यदन्यप्रयुक्तत्वानवच्छेदकयदुपकारकताऽवच्छेदकरूपवद्यत् तत् तदङ्गमित्यनवच्छेदकत्वघटितं तत्, तथा च प्राकृताङ्गानां विकृत्यङ्गत्वोपपत्तिः । तथा हि । प्राकृताङ्गानां तावद्विकृत्युपकारकत्वं न प्रकृतिप्रयुक्तत्वावच्छेदकसमित्त्वादिना, समित्त्वादेरननुगतत्वेन प्रत्येकातिदेशकल्पने गौरवापत्तेः । अपि तु दर्शपूर्णमाससंबन्ध्यङ्गत्वेन सर्वाण्यङ्गान्यनुगमय्य दर्शपूर्णमाससंबन्ध्यङ्गैर्विकृतिमुपकुर्यादित्येकातिदेशकल्पनया निरुक्तरूपेणोपकारकत्वम् । प्रकृतिप्रयुक्तत्वं तु तत्तद्वाक्यैस्तत्तद्रूपेणैवावगतमिति तत्तद्रूपस्यैव प्रकृतिप्रयुक्तत्वावच्छेदकत्वम् । अतश्च विकृत्यन्यप्रयुक्तत्वानवच्छेदकप्रकृतिसंबन्ध्यङ्गत्वरूपविकृत्युपकारकताऽवच्छेदकधर्मवत्त्वान्न प्राकृताङ्गानां विकृत्यङ्गत्वानापत्तिः, न वा पुरोडाशकपालस्य तुषोपवापाङ्गत्वानापत्तिः, कपालत्वस्य पुरोडाशप्रयुक्तत्वावच्छेदकत्वेन पुरोडाशीयत्वस्य च तुषोपवापोपकारकतावच्छेदकत्वेन पुरोडाशप्रयुक्तताऽनवच्छेदकपुरोडाशीयत्वरूपतुषोपवापोपकारकताऽवच्छेदकरूपवत्त्वादिति विभाव्येत । **तदा** भेदनहोमस्य दर्शपूर्णमासाङ्गत्वाऽनापत्तिः । भेदनरूपनिमित्तप्रयुक्तत्वावच्छेदकविजातीयहोमत्वस्यैव दर्शपूर्णमासोपकारकताऽवच्छेदकत्वात् । **न च** प्रकृतेऽन्यप्रयुक्तत्वं अन्यनिष्ठोद्देश्यतानिरूपककृतिविषयत्वम् । तत्र चोद्देश्यत्वमीप्सिततत्वरूपं, न त्वनुपादेयपञ्चकसाधारणम् । (अनुपादेयपञ्चकसाधारणमुद्देश्यत्वं च, कृतिसमवायाघटितसंबन्धेन प्रकृतभावनाऽन्वितत्वे सति प्रकृतविधिप्रयुक्त्यविषयत्वरूपं ज्ञेयम् । 'देशः कालो निमित्तं च फलं संस्कार्यमेव च । मीमांसानिपुणाः प्राहुरनुपादेयपञ्चकम् ॥' इत्यभियुक्तप्रसिद्ध्या देशादीनामनुपादेयत्वं विवक्षितम् । कर्तुस्तदेकत्वस्य चोपादेयत्वेनाभिमतस्य विधिप्रयुक्त्यविषयत्वेन तत्रातिव्याप्तिवारणाय कृतिसमवायाघटितसंबन्धेनेत्याद्यं विशेषणम् । यागादावतिव्याप्तिवारणाय प्रकृतविधिबोधितानुष्ठानाविषयत्वरूपं प्रकृतविधिप्रयुक्त्यविषयत्वमिति च बोध्यम् । ) तथा च भेदनादिरूपे निमित्ते उक्तविधोद्देश्यत्वाभावात् निरुक्तप्रयुक्तताऽवच्छेदकत्वं विजातीयहोमत्वेऽक्षतमिति **वाच्यम्** । तथापीन्द्रियादिप्रयुक्तत्वावच्छेदकदधित्वादिनैव होमोपकारकत्वात् दध्नो होमाङ्गत्वानापत्तेः । होमप्रयुक्तत्वावच्छेदकदधित्वादिना इन्द्रियोपकारकत्वात् तदङ्गत्वानापत्तेश्च । **किंच** विजातीयस्वर्गप्रयुक्तत्वावच्छेदकदर्शपूर्णमासत्वादिनैव पापक्षयोपकारकत्वावच्छेदकदर्शपूर्णमासादीनां पापक्षयाङ्गत्वानापत्तिः, नहि स्वर्गप्रयुक्तत्वावच्छेदकवैजात्यातिरिक्तं पापक्षयोपकारकताऽवच्छेदकं वैजात्यमस्ति, तथात्वे स्वर्गार्थमनुष्ठितप्रयोगेण नित्यस्य प्रसङ्गसिद्ध्यनापत्तेः । अपि च दर्शपूर्णमासप्रयुक्तत्वावच्छेदकाज्यभागत्वेनैव गृहमेधीयोपकारकत्वात् आज्यभागयोर्गृहमेधीयाङ्गत्वानापत्तिः । नहि विकृ-

त्यन्तरेऽतिदेशप्रापिताङ्गानां प्रकृतिसंबन्धित्वेन विकृत्युपकारकत्ववदिहाऽऽज्यभागयोर्दर्शपूर्णमाससंबन्धित्वेन गृहमेधीयोपकारकत्वं, येनान्यप्रयुक्तत्वानवच्छेदकदर्शपूर्णमाससंबन्ध्यङ्गत्वरूपगृहमेधीयोपकारकताऽवच्छेदकरूपवत्त्वात् आज्यभागयोर्गृहमेधीयाङ्गत्वं भवेत्, 'आज्यभागौ यजति' इति गृहमेधीयप्रकरणस्थप्रत्यक्षवचनेन आज्यभागत्वेनैवाऽऽज्यभागविधानात्। वस्तुतो दर्शपूर्णमाससंबन्ध्यङ्गत्वमपि विकृत्यन्तरप्रयुक्तत्वावच्छेदकं भवत्येवेति सत्यपि तस्य गृहमेधीयोपकारकताऽवच्छेदकत्वे नाऽऽज्यभागयोस्तदङ्गत्वनिर्वाहः। अत एव प्राकृताङ्गानां विकृत्यङ्गत्वानापत्तिरपि पूर्वोक्ता तदवस्थैव, तत्तद्विकृतिभेदेन लक्षणभेदादेकविकृत्युपकारताऽवच्छेदकदर्शपूर्णमाससंबन्ध्यङ्गत्वादेरपि विकृत्यन्तरप्रयुक्तत्वावच्छेदकत्वात्।

नापि परोद्देश्यककृतिविषयत्वं परार्थत्वं कृत्यविषये कालादावव्याप्तेः। अत एव नोक्तकृतिसमवायित्वमपि, कर्तरि लक्षणसत्त्वेऽपि प्रयाजादावव्याप्तेः। **अथ** समवायसाध्यत्वकालिकान्यतमसंबन्धेन तादृशकृतिमत्त्वम्। प्रयाजादौ साध्यत्वसंबन्धेन तादृशकृतिमत्त्वसत्त्वान्नोक्ताव्याप्तिः। **इति चेन्न**। जात्यादिरूपाङ्गेऽन्यतमसंबन्धेनाप्युक्तकृतेरभावादव्याप्तेः। येन केनापि संबन्धेनोक्तकृतिसंबन्धित्वोक्तौ निमित्तादावतिव्याप्तिरिति दुर्वचं परार्थत्वमिति **चेत्**।

**अत्र ब्रूमः**। निरूपकत्वसंबन्धेन यन्निष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितं यत्, तत्त्वं तदङ्गत्वम्। यथा दर्शपूर्णमासाभ्यामित्यत्र स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वं दर्शपूर्णमासयोः। अतस्तयोस्तदङ्गत्वम्। एवं 'समिधो यजति' इत्यादिवाक्येषूपस्थितदर्शपूर्णमासयोरेवोद्देश्यत्वेनान्वयात् दर्शपूर्णमासोद्देश्यताविशिष्टकृतिकारकत्वं प्रयाजादीनामतस्तेषां तदङ्गत्वम्। एवं द्रव्यगुणजात्यादीनां करणत्वेन, कर्तुश्च कर्तृत्वेन, कालादेरधिकरणत्वेनान्वयान्न क्वाप्यव्याप्तिः। अत्र यत्त्वतत्त्वादेरननुगमात् स्वर्गनिष्ठोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वं स्वर्गाङ्गत्वमित्येवंरीत्या उद्देश्यताऽवच्छेदकभेदेन लक्षणभेदो बोध्यः **न** त्वङ्गत्वावच्छेदकभेदेन, तस्य लक्षणे अप्रवेशात्। अत एव स्वर्गाङ्गसकलसाधारणमेकमङ्गत्वं, न तु आग्नेयत्वाग्नीषोमीयत्वादिभेदेन लक्षणभेदः इति ध्येयम्।

प्रकारतया निरूपकत्वनिवेशे गौरवात् ( निरूपकत्वस्य प्रकारतया प्रवेशे प्रकारताऽवच्छेदकसंबन्धस्यापि प्रवेशनीयतया गौरवम्। संबन्धविधया प्रवेशे तु संबन्धस्य संबन्धान्तरानपेक्षणात् लाघवम् ) निरूपकत्वसंबन्धेनोक्तोद्देश्यताविशिष्टकृतिकारकत्वेन विहितत्वमित्येवं संबन्धविधया तन्निवेशः। तत्प्रयोजनं तु स्वाश्रयप्रयोजकत्वसंबन्धेन, अन्तत एकज्ञानविषयत्वादिसंबन्धेन च स्वर्गनिष्ठोद्देश्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वस्य प्रयाजादौ सत्त्वादतिव्याप्तिवारणम्। अत्र शुद्धकृतिकारकत्व—उद्देश्यताविशिष्टकृतिकारकत्व — निष्ठोद्देश्यताविशिष्टकृतिकारकत्वानां प्रयाजादौ स्वर्गाद्यनङ्गप्रधाने च सत्त्वादतिव्याप्तिरतो विशिष्टमुपात्तम्। उद्देश्यतात्वेनोद्देश्यताऽनुपादाने तु निरूपकत्वसंबन्धेन स्वनिष्ठप्रयोज्यताविशिष्टप्रयाजाद्यनुकूलकृतिकारकत्वं प्रयाजादीनामतस्तदुपादानम्। कृतीति स्वरूपकथनं, तन्निवेशे प्रयोजनाभावात्। **न च** '**स्वर्गोद्देश्यको** यागः' इत्यादिप्रतीत्या स्वर्गनिष्ठोद्देश्यतानिरूपकत्वस्य दर्शपूर्णमासादावपि सत्त्वात्, तत्कारकत्वस्य च तज्जनकद्रव्यादावपि सत्त्वात्, तत्रातिव्याप्तिवारणमेव तत्प्रयोजनमिति **वाच्यम्**। अस्मन्मते कारकत्वस्य भावनैकनिरूपितत्वेन धात्वर्थयागाद्यनिरूपितत्वात्। स्वर्गनिष्ठत्वं च दैशिककालिकविशेषणत्वातिरिक्तस्वरूपसंबन्धेन, इतरथा कालिकसंबन्धेन प्रयाजादिकरणककृत्युद्देश्यताया अपि स्वर्गवृत्तित्वेनातिव्याप्तिप्रसङ्गात्। वस्तुतः स्वर्गनिष्ठत्वं विषयत्वीयस्वरूपसंबन्धेन। इत्थं चोद्देश्यतात्वेनोद्देश्यत्वानुपादानेऽपि न क्षतिः, प्रयाजादिकरणककृतिप्रयोज्यताया विषयत्वीयस्वरूपसंबन्धेन स्वर्गनिष्ठत्वाभावात्। निमित्तादावतिव्याप्तिवारणाय संबन्धित्वं विहाय कारकत्वनिवेशः। निमित्तस्य वक्ष्यमाणरीत्या अकारकत्वाददोषः। अत एव निमित्तत्वार्थकसप्तम्याः उपपदविभक्तित्वमुक्तं तत्रतत्र। कृष्यादावतिव्याप्तिवारणाय विहितेति। **न चोक्तकृतिकारकत्वस्य स्वर्गेऽपि सत्त्वात्** तस्य स्वाङ्गत्वापत्तिरिति **वाच्यम्**। **कर्मकारकभिन्नकारकत्वस्यैव** लक्षणे निवेशात्। एतदर्थमेव सूत्रे भिन्नार्थकं परपदम्। **न च** सूत्रे 'देवदत्तोऽयं परोपकारकः' इत्यादिवदौत्सर्गिकस्वप्रतियोगिकत्वलाभात्

अङ्गभेदस्यैव परपदादुपस्थितेः, कथं कर्मकारकभेदरूपस्याङ्गिभेदस्य ततः प्रतीतिरिति **वाच्यम्** । समानसंवित्संवेद्यतया अङ्गिभेदस्य तस्मादुपस्थितिसंभवात् । नहि स्वभिन्नस्वर्गोद्देश्यककृतिकारकत्वरूपं लक्षणं संभवति । स्वत्वाननुगमेनाङ्गभेदेन लक्षणभेदप्रसङ्गात् । अत उक्तभेदे एव परपदतात्पर्यम् ।

**ननु** क्रियाजन्यफलशालित्वरूपकर्मत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे गौरवात् कर्मत्वस्याखण्डोपाधिरूपत्वेऽपि च सामान्यतः कर्मत्वावच्छिन्नप्रतियोगिताकभेदस्य प्रयाजादिकरणककृतिकर्मदर्शपूर्णमासादावपि अभावेन स्वर्गोद्देश्यककृतिकर्मत्वावच्छिन्नप्रतियोगिताकभेदनिवेशे गौरवाल्लाघवेन स्वर्गत्वावच्छिन्नप्रतियोगिताकभेदस्यैव स्वर्गाङ्गत्वलक्षणे निवेशोऽस्तु । उद्देश्यभेदेन लक्षणभेदस्योक्तत्वादिति **चेन्न** । 'सर्वेभ्यो ज्योतिष्टोमः' इत्यादिवाक्योपात्तफलानां पश्वादीनां स्वर्गाङ्गत्वापत्तेः, स्वर्गत्वावच्छिन्नभिन्नत्वे सति उक्तकृतिकारकत्वस्य पश्वादौ सत्त्वात् । **न च** 'सर्वेभ्यो ज्योतिष्टोमः' इति वाक्ये प्रवृत्तिप्रयोजककामनाविषयत्वस्योद्देश्यताऽवच्छेदकत्वात् पश्वादौ स्वर्गत्वावच्छिन्नोद्देश्यताककृतिकारकत्वस्याभावान्नोक्तदोष इति **वाच्यम्** । एतद्वाक्ये स्वर्गत्वस्योद्देश्यताऽनवच्छेदकत्वेऽपि 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति वाक्ये तस्योद्देश्यताऽवच्छेदकत्वेन तदवच्छिन्नोद्देश्यताककृतिकारकत्वस्य पश्वादौ सत्त्वात् । वाक्यभेदेन कृतिभेदे प्रमाणाभावात् । अत एव पश्वर्थमनुष्ठीयमानप्रयोगात् स्वर्गस्याप्युत्पत्तिर्योगसिद्ध्यधिकरणोक्ता (४।३।९) संगच्छते । अतश्चाखण्डोपाधिरूपकर्मत्वस्वीकारे स्वर्गोद्देश्यककृतिकर्मत्वावच्छिन्नप्रतियोगिताकभेदघटितमेव लक्षणमङ्गीकार्यम् । **वस्तुतस्तु** स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यतावत्त्वसंबन्धेन स्वर्गत्ववद्भिन्नत्वं प्रकृतलक्षणे निवेश्यम् । स्वर्गपश्वादेश्च तेन संबन्धेन स्वर्गत्ववत्त्वान्नातिव्याप्तिः । **न चैवमपि** दर्शपूर्णमासादौ स्वर्गाद्यङ्गत्वानापत्तिः, 'व्रीहिभिर्यजेत' इत्यादिवाक्येषु स्वर्गोद्देश्यताकदर्शपूर्णमासाद्यनुकूलकृतावेव दर्शपूर्णमासयोरुद्देश्यत्वेन स्वावच्छिन्नोद्देश्यतानिरूपककृतिनिरूपितोद्देश्यत्वसंबन्धेन स्वर्गत्ववत्त्वस्य दर्शपूर्णमासादौ सत्त्वादिति **वाच्यम्** । स्वावच्छिन्नोद्देश्यतानिरूपकताऽवच्छेदकावच्छिन्ननिरूपितोद्देश्यताकत्वसंबन्धेन स्वर्गत्ववद्भिन्नत्वस्य विवक्षितत्वात् । 'दर्शपूर्णमासकरणककृतौ स्वर्गोद्देश्यकत्वं' इत्यादिप्रतीत्या हि दर्शपूर्णमासकरणककृतित्वे स्वर्गत्वावच्छिन्नोद्देश्यतानिरूपकताऽवच्छेदकत्वं सिध्यतीति तदवच्छिन्ननिरूपितोद्देश्यताकत्वसंबन्धेन स्वर्गत्ववत्त्वं स्वर्गे, यागे तद्भिन्नत्वमिति लक्षणसमन्वयः । नह्येवं स्वर्गत्वावच्छिन्नोद्देश्यतानिरूपकताऽवच्छेदकत्वं व्रीहिकरणककृतित्वेऽस्ति, येन तदवच्छिन्ननिरूपितोद्देश्यताकत्वसंबन्धेन स्वर्गत्ववत्त्वं यागे संभाव्येत । व्रीहिकरणककृतौ स्वर्गोद्देश्यकत्वमिति प्रतीतेरभावात् । वृत्त्यनियामकसंबन्धस्यात्यन्ताभावप्रतियोगिताऽनवच्छेदकत्वेऽपि भेदप्रतियोगिताऽवच्छेदकताऽवच्छेदकत्वस्य सिद्धान्तसिद्धत्वाच्च न सिद्धान्तविरोधः । सूत्रमपि ईदृशभेदपरतयैव व्याख्येयमिति तत्त्वम् ।

**नन्वेवं** सोमादेरपि स्वर्गाद्यङ्गत्वं स्यात् । **नवीनमते** मत्वर्थलक्षणाऽनङ्गीकारेण यागस्येव सोमस्यापि स्वर्गोद्देश्यककृतिकारकत्वात् । **न च** कारकत्वं वक्ष्यमाणरीत्या क्रियाऽन्वितकर्तृत्वाद्यन्यतमान्वितत्वम् । तत्र क्रियाऽन्वितत्वं कारकान्तराघटितसंबन्धे प्रकृतलक्षणे निवेश्यम् । तथा च सोमकरणत्वस्य स्वनिरूपकयागकरणकत्वसंबन्धेनैव भावनाऽन्वयात् उक्तसंबन्धेन क्रियाऽन्वितकर्तृत्वाद्यन्यतमान्वितत्वाभावान्न सोमे लक्षणातिप्रसङ्ग इति **वाच्यम्** । तथात्वे यागकरणत्वादेरपि स्वनिरूपकोद्देश्यकत्वादिरूपकर्मकारकघटितसंबन्धेनैव भावनाऽन्वयेनासंभवापत्तेः । **अथो**क्तातिव्याप्तिवारणाय प्रकृतकृतिकरणाद्यघटितसंबन्धेन क्रियाऽन्वितत्वं प्रकृतलक्षणे निवेश्यम् । 'समिधो यजति' इत्यादौ प्रयाजादिकरणत्वस्यैव कृत्यन्तरकरणीभूतदर्शपूर्णमासादिरूपभाव्यघटितसंबन्धेनैव भावनाऽन्वयादव्याप्तिरतः प्रकृतेति । 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इतिवाक्यघटकाख्यातोपात्तकृतौ दर्शपूर्णमासयोः करणत्वेऽपि 'समिधो यजति' इतिवाक्यघटकाख्यातोपात्तसमिदाद्यनुकूलकृतौ तयोरुपकारविशिष्टयोर्भाव्यत्वमेवेति नाव्याप्तिः । 'सोमेन यजेत'

इत्यादौ यागकरणत्वस्योद्देश्यत्वर्गादिघटितसंबन्धेन भावनाऽन्वयेऽपि प्रकृतकृतिकरणयागाद्यघटितसंबन्धेनैव क्रियाऽन्वयान्नोक्तदोषः । सोमादेस्तु प्रकृतकृतिकरणयागादिघटितसंबन्धेनैव भावनाऽन्वयान्नातिप्रसङ्ग **इति चेन्न** । 'दध्ना जुहोति' इत्यादौ अग्निहोत्रकरणककृतावेव अग्निहोत्रस्योद्देश्यत्वेन तत्र च स्वनिरूपकोद्देश्यकत्वरूपप्रकृतकृतिकरणघटितसंबन्धेनैव दधिकरणत्वस्यान्वयाद्‌ध्नो होमाङ्गत्वानापत्तेः, कृतौ प्रकृतत्वानिरुक्तेश्च । ननु प्रकृतवाक्यघटकाख्यातप्रतिपाद्यत्वं कृतौ प्रकृतत्वं, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्ये तत्तद्व्यक्तित्वादिरूपप्रकृतत्वसंभवेऽपि दर्शपूर्णमासाङ्गप्रतिपादकसकलवाक्यसाधारणप्रकृतत्वानिरुक्तेः । **यदि** तु स्वर्गोद्देश्यकत्वादिकमेव कृतौ प्रकृतत्वमतो नायं दोष इति विभाव्यते । **तथापि** दध्यादावव्याप्तिस्तदवस्थैव । अतः सोमादौ स्वर्गाद्यङ्गत्वप्रसङ्गो दुर्वार **इति चेत्** । **सत्यम्** । सोमादीनां स्वर्गाद्यङ्गत्वमिष्टमेव । नहि तत्स्वीकारे किंचिद्बाधकमस्ति । न चैवं तुल्ययुक्त्या 'यो दीक्षितो यदग्नीषोमीयं पशुमालभेत' इत्यत्र यागस्येव पश्वादेरपि ज्योतिष्टोमाङ्गत्वप्रसक्तौ तद्वदेव ज्योतिष्टोमविकृतावतिदेशापत्तिः, अग्नीषोमीयपृष्ठभावेनातिदेशस्येष्टत्वात् । अग्नीषोमीयाभाववत्यां विकृतौ तु द्वारलोपादेव नातिदेशः । अग्नीषोमीयस्थानापन्नयागान्तरसत्त्वे तु तस्याग्नीषोमीयविकृतित्वादेवातिदेशः । सोमादेः समप्राधान्यं तु यागद्वारेणैवाङ्गत्वेन निरसनीयमिति ध्येयम् ।

उद्देश्यत्वमत्रेप्सितत्वरूपं, न त्वनुपादेयपञ्चकसाधारणं, तथात्वे यावज्जीवमित्यादौ धात्वर्थादेर्निमित्ताङ्गत्वस्य दुर्वारत्वात् । अत एव यत्रानुपादेयपञ्चकसाधारणोद्देश्यताया निवेशः, यथा परोद्देश्यककृतिव्याप्यत्वरूपप्रयोज्यत्वे, तत्र निमित्तप्रयोज्यत्वं नैमित्तिकस्येष्टमेव । अत एव द्वितीयाविभक्तेरङ्गत्वघटकोद्देश्यताबोधकत्वेन अङ्गत्वप्रमाणत्वव्यवहारः । तृतीयादेस्तु तद्घटककरणत्वादिविभक्त्यर्थबोधकत्वेन तत्त्वव्यवहारः । लिङ्गादीनां तु बलाबलाधिकरणन्यायेन (३।३।७) एतदन्यतरबोधकद्वितीयातृतीयादिरूपश्रुतिकल्पकत्वेन सः । **एतेन** द्वितीयायाः प्राधान्यरूपोद्देश्यत्ववाचित्वेनाङ्गित्वप्रमाणत्वेऽपि नाङ्गत्वप्रमाणत्वमिति **निरस्तम्** । अङ्गत्वेऽप्युद्देश्यताया निविष्टत्वेन तदेकदेशबोधकत्वेनैव तत्प्रमाणत्वोपपत्तेः । इतरथा तृतीयादेरपि समुदिताङ्गत्वार्थकत्वाभावेन तत्प्रमाणत्वानापत्तेः । दृष्टश्च तदेकदेशप्रमाजनकत्वेऽपि तत्प्रमाजनकत्वव्यवहारः, यथा परमते ( नैयायिकमते ) द्वितीयायाः फलमात्रप्रमाजनकत्वेऽपि तद्घटितकर्मत्वप्रमाजनकत्वव्यवहारः इति ।

**ननु** किं नाम कृतिकारकत्वम् । न तावत् कृतिहेतुत्वं, धात्वर्थादिरूपकरणकारके अव्याप्तेः । नहि कृतिसाध्ये यागादौ कृतिहेतुत्वं संभवति पूर्ववृत्तित्वाभावात्, दध्यादिगुणरूपकारके पूर्ववृत्तित्वसत्त्वेऽपि रासभादिवदन्यथासिद्धत्वेन अनन्यथासिद्धत्वांशाभावाच्च— अत एव भावनाकरणत्वं भावनाभाव्यनिर्वर्तकत्वरूपं पारिभाषिकमिति **सांप्रदायिकाः**— निमित्तादौ कृतिहेतुत्वसत्त्वेनातिव्याप्यापत्तेश्च । नापि कृत्यन्वितत्वम् । धात्वर्थे यागादौ करणत्वादिसंबन्धेन भावनाऽन्वयस्वीकारेण लक्षणोपपत्तावपि तदितरकारकाणां विभक्त्यर्थे करणत्वादावेवान्वयेन तेष्वव्याप्तेः, करणत्वादीनामपि कृत्यन्वितत्वेनाङ्गत्वापत्तेश्च । नहि सोमो यागाङ्गमितिवत् सोमकरणत्वं यागाङ्गमिति कश्चित् प्रत्येति । गुणफलसंबन्धविधावेव परं गुणकरणत्वं फलाङ्गमित्युक्तं सांप्रदायिकैः । वस्तुतस्तु तत्रापि गुणस्यैव फलाङ्गत्वं, इतरवैलक्षण्ये प्रमाणाभावात् , भवन्मते दध्यादेर्होमार्थत्वात् तत्करणत्वस्य चेन्द्रियार्थत्वात् 'एकस्य तूभयत्वे संयोगपृथक्त्वम्' इति सूत्रे ( ४।३।५ ) एकस्यैवोभयार्थत्वोक्तिविरोधप्रसङ्गाच्च । **न च** 'दध्ना जुहोति' इत्यत्रापि दधिकरणत्वस्यैव होमोद्देशेन विधानान्नानुपपत्तिरिति **वाच्यम्** । तथात्वे दधिकरणत्वस्येन्द्रियकामवाक्ये इव स्वनिरूपकाश्रयसापेक्षत्वात्तस्य प्रमाणान्तरेणानुपस्थितेः एतद्वाक्यान्निराकाङ्क्षप्रतिपत्त्यनापत्तेः । इन्द्रियकामवाक्ये तु प्रकरणेन स्वनिरूपकीभूतहोमरूपाश्रयसंभवान्निराकाङ्क्षप्रतिपत्तिरिति विशेषः । किंच दधिकरणत्वस्य होमोद्देशेन विधौ तस्यादृष्टविधया होमोपकारकत्वेऽपि दृष्टविधया तदजनकत्वात् होमसिद्ध्यर्थमनियतद्रव्याक्षेपापत्तिः, एतद्विधेरपूर्वविधित्वापत्तिश्चेति ध्येयम् । नापि कृत्यन्वितान्वितत्वं,

धात्वर्थस्य करणत्वसंबन्धेन कृत्यन्वितत्वात्तत्राव्याप्तेः । **यदि तु** यागकरणिका भावनेत्यादिप्रतीतेः प्रकारतया करणत्वावगाहित्वात् तृतीयान्तनामपदसामानाधिकरण्याच्च धातुलक्षितकरणत्वस्यैव भावनाऽन्वयः, धात्वर्थस्य तु करणत्वे एवान्वयान्नोक्ताव्याप्तिरिति विभाव्यते । **तथापि** लिङ्गसंख्याभिन्नसुबर्थमात्रस्यैव भावनाऽन्वयनियमेन ( निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यः सुबुपात्तलिङ्गसंख्याव्यतिरिक्तोऽर्थः, तत्प्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति लिङ्गानन्वयिभावनावाचिपदजन्योपस्थितिर्विशेष्यतासंबन्धेन कारणं, इत्येवं प्रकारतानियामकव्युत्पत्तिं मीमांसकैर्लाघवादङ्गीकृतामनुरुध्य । ) 'भिन्ने जुहोति' इत्यादौ सप्तम्यर्थनिमित्तत्वादेरपि तदन्वयात्तदन्विते निमित्तादावतिव्याप्ति**रिति चेन्न** । कृत्यन्वितविभक्त्यर्थान्वितत्वस्य कृतिकारकत्वरूपत्वात् । विभक्त्यर्थत्वं च विभक्तिशक्यत्वमतो न निमित्तत्वादिकमादाय निमित्तादावतिव्याप्तिः, सप्तम्या अधिकरणत्वार्थत्वेन निमित्तत्वे शक्त्यभावात् । **न च** विभक्तिशक्यत्वं विभक्तिनिरूपितशक्तिविषयत्वम् । तथा च निमित्तत्वस्य सप्तमीनिरूपितशक्तिविषयत्वाभावेऽपि षष्ठ्याः 'षष्ठी शेषे' इत्यनुशासनात् संबन्धसामान्यार्थकत्वेन तदन्तर्गतनिमित्तत्वेऽपि षष्ठीनिरूपितशक्तिविषयत्वावश्यंभावात् तदादाय निमित्तादावतिव्याप्तिस्तदवस्थैवेति **वाच्यम्** । विभक्तिनिरूपितसंबन्धत्वानवच्छिन्नशक्तिविषयत्वस्य विवक्षितत्वात् । षष्ठीशक्यताऽवच्छेदकं हि संबन्धत्वमेव, अतो न दोषः । अत एव 'सप्तदश वैश्यस्य' इत्यादौ षष्ठीतो निमित्तत्वत्वेन निमित्तत्वप्रतीतिर्लक्षणयैवेति बोध्यम् । 'स्वर्गकामो यजेत' इत्यादौ करणत्वस्य धातुलक्ष्यत्वेऽपि वस्तुतो विभक्तिशक्यत्वानपायान्न दोषः । एवं 'सक्तून् जुहोति' इत्यादावपि विनियोगभङ्गाङ्गीकारेण द्वितीयायाः करणत्वलक्षणायामपि वस्तुतस्तस्य विभक्तिशक्यत्वानपायान्न सक्तूनां होमाङ्गत्वविरोधः । अनयैव रीत्या 'सोमारौद्रं चरुं निर्वपेत् कृष्णानां व्रीहीणाम्' इत्यादौ करणत्वस्य षष्ठीलक्ष्यत्वेऽपि व्रीहीणां यागाङ्गत्वमुपपादनीयम् । **एतेन** 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यादौ लिङ्गसंख्याव्यतिरिक्तसुबर्थमात्रस्य भावनाऽन्वयनियमेन षष्ठ्यर्थसंबन्धस्यापि भावनाऽन्वयापत्तेरतिव्याप्तिः । नहि तत्र द्विरात्रीयोत्तराहोद्देशेन षोडशिग्रहणं विधीयते, विशिष्टोद्देशे वाक्यभेदात् । **न च** षष्ठीस्थले परस्परान्वयस्य व्युत्पन्नत्वादवाक्यभेदः । तथात्वेऽप्युभयं हविरितिवत् 'उत्तरेऽहन्' इत्यत्र अहनि उत्तरत्ववैशिष्ट्यायोगेन वाक्यभेदात् । वस्तुतो लिङ्गसंख्याभिन्नसुबर्थमात्रस्यैव लाघवेन भावनाऽन्वयात् षष्ठ्यर्थस्यापि भावनाव्यतिरेकेणान्वयः अव्युत्पन्न एव । अतो द्विरात्रसंबन्धिनी षोडशिग्रहकरणिका भावना उत्तरपदार्थभागोद्देशेन विधीयते । उत्तरभागस्य च प्रतिसंबन्ध्यपेक्षायामरुणैकहायनीन्यायेन ( ३।१।६ ) पार्ष्ठिकबोधे द्विरात्ररूपप्रतिसंबन्धिलाभः । द्विरात्रसंबन्ध्युत्तरभागस्य चाहोरूपत्वात् 'ऐन्द्रवायवाग्रं प्रथममहः' इतिवत् अहन्नित्यनुवाद इत्येव बोध्यम् । तथा च क्रियाऽन्वितविभक्त्यर्थान्वितत्वेन द्विरात्रेऽतिव्याप्तिरिति **अपास्तं**, विभक्तिनिरूपितसंबन्धत्वानवच्छिन्नशक्तिविषयत्वनिवेशेनादोषात् । वस्तुतस्तु लाघवात् षष्ठ्याः कर्मत्वलक्षणामङ्गीकृत्य द्विरात्रोद्देशेनैव षोडशिग्रहणविधिः । द्विरात्रीयोत्तराहे एव चातिरात्रसंस्थाकत्वेन तत्रैव विकल्पितषोडशिग्रहणप्राप्तेर्नियमविधिलाघवानुरोधेनास्य विधेरेतद्विषयत्वात्, उत्तरेऽहन्नित्यनुवादः । **अत एव** द्विरात्रसंबन्ध्युत्तरभागोद्देशेनैव षोडशिग्रहणविधिः, द्विरात्रसंबन्ध्युत्तरभागस्य चाहोरूपत्वात् अहन्नित्यनुवाद इत्यपि, उक्तरीत्यैव लघुभूतोद्देश्यताऽवच्छेदके संभवति गुरुभूतोद्देश्यताऽवच्छेदकायोगात् **अयुक्तम्** । **न चोक्त**प्रकारे द्विरात्रत्वस्योद्देश्यताऽवच्छेदकत्वात् औत्तरकालिकनियमविधिलाघवानुरोधेनास्य विधेरुत्तराहमात्रविषयतया संकोचरूपबाधकल्पनमयुक्तमिति **वाच्यम्** । द्विरात्रस्वरूपे आनर्थक्ये प्रसक्ते दीक्षणीयावाङ्नियमन्यायेन (९।१।२) अवान्तरापूर्वसाधनत्वलक्षणाया द्विरात्रजन्यैकावान्तरापूर्वाभावेनासंभवेऽपि उत्तरपदसहकृतापूर्वाव्यभिचाररूपतात्पर्यग्राहकानुरोधेनोत्तराहजन्यविजातीयापूर्वद्वारकपरमापूर्वसाधनत्वावच्छिन्नस्यैव लक्षणयोद्देश्यत्वात् द्विरात्रत्वस्य उद्देश्यताऽवच्छेदकत्वेऽप्यनुपपत्त्यभावात् । आवश्यकी चेयमानर्थक्यभिया अपूर्वसाधनत्वावच्छिन्नलक्षणा, द्विरात्रसंबन्ध्युत्तराहोद्देशेन षोडशिग्रहणविधिमभ्युपगच्छतां

**प्राचामपि** । परंतु द्विरात्रसंबन्धयुत्तराहरूपवाक्यार्थसंबन्धेनोक्तपरमापूर्वसाधनत्वलक्षणा, अस्मन्मते तु द्विरात्रमात्रसंबन्धेनोक्तपरमापूर्वसाधनत्वलक्षणेति विशेषः । किंच त्वन्मते उत्तरेऽहन्निति सप्तम्या अधिकरणत्ववाचिन्याः स्वशक्यताऽवच्छेदकानवच्छिन्नकर्मणि लक्षणा, अस्मन्मते तु संबन्धसामान्यवाचिन्याः षष्ठ्याः स्वशक्यताऽवच्छेदकावच्छिन्ने लक्षणेत्यपि बोध्यम् । **न चैवमपि** चतुर्थ्याः संप्रदानत्वशक्तत्वेन देवतात्वस्य विभक्त्यर्थत्वायोगात् 'यदग्नये च प्रजापतये च सायं जुहोति' इत्यादौ देवताया होमाङ्गत्वानापत्तिरिति **वाच्यम्** । त्यज्यमानद्रव्योद्देश्यत्वे सति प्रतिग्रहीतृत्वरूपसंप्रदानत्वस्य चतुर्थ्यर्थत्वेन तद्घटकत्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्यापि तदर्थत्वानपायात् । **यदि** च 'विप्राय गां ददाति' इत्यादौ संप्रदानीभूतविप्रादौ देवतात्वव्यवहाराभावेन तत्र प्रतिग्रहीतृत्वाभावोऽप्यधिको निवेश्यते, अग्नीषोमयोर्व्यासज्यवृत्तिदेवतात्वानुरोधेन वा अखण्डोपाधिरूपमेव देवतात्वमुच्यते **तदा** अस्तु कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वमेव कृतिकारकत्वम् । देवतात्वस्याप्यन्यतमान्तर्गतत्वान्न दोषः । निमित्तत्वादीनां तु तदनन्तर्गतत्वान्न निमित्तादावतिव्याप्तिः । एवं च पूर्वोक्तकर्मकारकभेदस्य लक्षणे अनिवेशेऽपि न क्षतिः, कर्मत्वस्य कर्तृत्वाद्यन्यतमानन्तर्गतत्वेन तदन्विते स्वर्गादावतिव्याप्त्यभावात् । एवंविधान्यतमत्वबोधनार्थमेव सूत्रस्थं परपदमिति ध्येयम् ।

विहितत्वं च न प्रवर्तनारूपविधिजन्यत्वं, प्रवर्तनाज्ञानस्यैवेष्टसाधनत्वज्ञानद्वारा प्रवृत्तिप्रयोजकत्वेन प्रवृत्तावेव तदभावे तत्कारकेषु सुतरां तस्याभावात् । अत एव न प्रवर्तनाज्ञानजन्यत्वमपि । नापि साक्षात्परंपरासाधारणविधिप्रयोज्यत्वं, जात्यादिरूपाङ्गे अव्याप्तेः, तस्य नित्यत्वेन विधिप्रयोज्यत्वाभावात्, अनित्यानामपि सोमादीनां सिद्धरूपत्वेन विधिप्रयोज्यत्वाभावाच्च । अतो विध्यन्वयित्वं विहितत्वम् । तच्च स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकताऽवच्छेदकत्वसंबन्धेन विधिविशिष्टत्वम् । अस्ति चेदं यागादौ प्रवर्तनानिष्ठप्रकारतानिरूपितार्थभावनानिष्ठविशेष्यताऽवच्छेदकत्वं करणत्वादौ, तदवच्छेदकत्वस्य तत्र सत्त्वात् । **नन्विदं** धातुलक्षितकरणत्वादेर्भावनायां प्रकारतेति मते संभवति । करणत्वादिसंसर्गेण धात्वर्थस्यैव भावनायां प्रकारतेति मते तु अर्थभावनानिष्ठविशेष्यताऽवच्छेदकत्वस्यैव यागादौ सत्त्वात् स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकताऽवच्छेदकत्वसंबन्धेन विधिविशिष्टत्वाभावान्नोक्तविहितत्वस्य तत्र संभव इति **चेन्न** । स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकत्व-तदवच्छेदकत्वान्यतरसंबन्धेन विधिविशिष्टत्वस्य विवक्षितत्वात् । **न चैतस्य** सुबर्थकरणत्वादिसाधारणत्वादङ्गत्वलक्षणस्यातिव्याप्तिरिति **वाच्यम्** । तेषु निरुक्तविहितत्वसत्त्वेऽपि निरुक्तकृतिकारकत्वाभावेन उक्तदोषाभावात् । **यद्यपि** धात्वर्थस्यैव करणत्वादिसंसर्गेण भावनायामन्वय इति मते यागादावपि नोक्तकृतिकारकत्वं संभवति, **तथापि** कर्तृत्वाद्यन्यतमसंबन्धेन कृत्यन्वितत्व-कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वान्यतरवत्त्वमेव तन्मते कृतिकारकत्वम् । धात्वर्थे उक्तसंबन्धेन कृत्यन्वितत्वसत्त्वात्, सोमादिकारके चोक्तान्यतमान्वितत्वसत्त्वान्नोक्तदोषः । सुबर्थे निरूपकत्वादिसंबन्धेन कृत्यन्वितत्वसत्त्वादतिव्याप्तिवारणाय कर्तृत्वाद्यन्यतमसंबन्धनिवेशः । अत एव 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादावाश्रयत्वादिसंबन्धेन होमस्य कृत्यन्वितत्वेऽपि नेन्द्रियाङ्गत्वप्रसङ्गः । वस्तुतः पूर्वोक्तरीत्या धातुलक्षितकरणत्वादेरेव प्रकारतया भावनाऽन्वयात् लघुभूतं कृत्यन्वितकर्तृत्वाद्यन्यतमान्वितत्वं कृतिकारकत्वं, स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकताऽवच्छेदकत्वसंबन्धेन विधिविशिष्टत्वं विहितत्वमित्येव ज्यायः । विहितत्वं चेदं निर्विषयकभावनायाः प्रयोज्यतासंबन्धेन प्रवर्तनाऽन्वयायोग्यत्वात् प्रथमतः कृतौ सकलकारकान्वयः, ततः सकलकारकविशिष्टायां भावनायां प्रयोज्यत्वसंबन्धेन प्रवर्तनाऽन्वयः, इति 'एकविशिष्टे अपरवैशिष्ट्यं' इतिरीत्या शाब्दबोधमभिप्रेत्योक्तम् । अत एव **तन्त्ररत्ने** सप्तमे 'पञ्चसंचरेषु' इति सूत्रे (७।१।३।१७) विकृतौ अर्थवादातिदेशेऽपि विश्वजिदादौ नाऽऽर्थवादिकफलकल्पनेति प्रतिपादयितुमुक्तम् । 'विधिर्हि त्र्यंशपरिपूर्णामनुष्ठानयोग्यां भावनां प्राप्य पश्चात् पुरुषं प्रवर्तयितुं प्रवर्तमानः अपेक्षावशात् प्राशस्त्यज्ञानमुखेनार्थवादान् यत्रक्वचन स्थितान-

तिदेशेन संनिधापयति । विधेयभावना तु ततः प्रागेव स्वांशान् गृह्णाति । तस्यां वेलायामुपदेशेनातिदेशेन वा अर्थवादस्यासंनिधानात् तदुपात्तसंनिहितफलाभावात् स्वर्गमेव गृह्णातीति न स्वर्गन्यायबाधः' । ( ४।३।१५ ) इति । **यदा तु** योग्यताज्ञानं विनाऽपि अयोग्यता-निश्चयाभावमात्रेण शाब्दबोधस्य आनुभाविकत्वात् 'एकत्र द्वयं' इति रीत्या युगपदेव भावनाविशेषणानामन्वयः, समानाभिधानादिरूपप्रत्यासत्त्यनुग्रहेण वा प्रथमं प्रवर्तना-दीनामेव तत्रान्वयस्तत इतरकारकान्वयः, भाव्यभूतार्थभाव-नायां कारकान्वयात् पूर्वं भाव्यविशेषाकाङ्क्षाकलुषितत्वेन प्रवर्तनायाः विस्पष्टमितिकर्तव्यताऽऽकाङ्क्षाऽनुत्थानात् नार्थवादातिदेशः, इति न विश्वजिति आर्थवादिकफल-कल्पनाऽऽपत्तिरित्युच्येत । **तदा** पूर्वोक्तनिर्वचनानुपपत्तेः, लाघवाच्च प्रवर्तनारूपविधिविषयत्वमेव विहितत्वम् । अस्ति च विशिष्टभावनायां प्रवर्तनाविषयत्वात् तद्विशेषणेष्वपि प्रवर्तनाविषयत्वमिति बोध्यम् ।

**अथैवमपि** 'नानृतं वदेत्' इत्यादिनिषेधेषु प्रकृतलक्षणाव्याप्तिः । तथा हि, निवर्तनारूपे प्रवृत्त्यभावरूपे वा निषेधे नोक्तलक्षणं संभवति, कृतिका-रकत्वाभावात् । निवर्तना हि स्वप्रयोज्याभावप्रतियोगित्व-संबन्धेन आख्यातार्थकृतावेवान्वेति, एवं प्रवृत्त्यभावोऽपि प्रतियोगित्वसंबन्धेन, इति न तयोरुक्तविधं कृतिकारकत्वम् । एवं स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽवच्छेदकताऽवच्छे-दकत्वसंबन्धेन प्रवर्तनाविशिष्टत्वरूपं प्रवर्तनाविषयत्वरूपं वा विहितत्वं तयोर्न संभवति । निषेधेषु निवर्तनाया एवोक्त-संबन्धेन अर्थभावनायामेवान्वयात् । **यदि** तूक्तसंबन्धेन प्रवर्तनानिवर्तनाऽन्यतरविशिष्टत्वं तदन्यतरविषयत्वमेव वा विहितत्वमित्युच्येत, **ततः** 'न कलञ्जं भक्षयेत्' इत्यादौ भक्षणादीनां कलञ्जाद्यङ्गत्वापत्तिः, निवर्तनारूपे निषेधे तस्याप्यभावाच्च । नहि स्वनिष्ठप्रकारतानिरूपितविशेष्यताऽ-वच्छेदकताऽवच्छेदकत्वं वा स्वस्मिन् संभवति । न च निषे-धानामलक्ष्यत्वम् । तथात्वे कर्त्रधिकरणादौ (३।४।४) तेषां क्रत्वर्थत्वादिनिरूपणानापत्तेरिति चेत् । **सत्यम्** । तेष्वङ्ग-त्वव्यवहारस्य गौणत्वात् । अत एव 'नानृतं वदेत्' इत्यादौ निषेधो यदि निवर्तना, तर्हि तस्यां क्रतुवैगुण्य-जनकक्रियाविषयनिवर्तनात्वं क्रत्वर्थत्वम् । निवर्तनात्व-निवेशादनृतवदनादिज्ञानादौ नातिव्याप्तिः । यदि प्रवृत्त्य-भावः, तदा तस्मिन्नुक्तक्रियाप्रतियोगिकत्वम् । न च 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादिविध्युत्तरनिषेधे निषेध्यस्य क्रतुवैगुण्याजनकत्वादव्याप्तिः, क्रतुवैगुण्यक्रतु-साद्गुण्यान्यतरजनकत्वस्य विवक्षितत्वात् । न च प्रवृत्त्यभावनिषेधपक्षे प्रयाजक्रियाऽभावादावतिव्याप्तिः, उक्तक्रियाप्रतियोगिकत्वे सति वैदिकनिवर्तनाविषयत्वस्य विवक्षितत्वात् । एवं 'न कलञ्जं भक्षयेत्' इत्यादौ पुरुष-निष्ठप्रत्यवायजनकक्रियाविषयत्वं, उक्तक्रियाप्रतियोगिकत्वं वा पुरुषार्थत्वम् । अत एव गौणमुख्यसाधारण्येनाङ्गत्वं तृतीयाध्यायार्थ इति न कर्त्रधिकरणादौ अध्यायासंगतिरिति ध्येयम् । एवं 'फलं च पुरुषार्थत्वात्' ( ३।१।३।५ ) इत्यत्रोक्तं फलस्य पुरुषार्थत्वं भाक्तमेव । एवमेव च यागादेर्भावनां प्रति, प्रातिपदिकार्थस्य च कारकं प्रति, लिङ्गसंख्यादेश्च प्रातिपदिकार्थं प्रति, करणत्वादेश्च भावनां प्रति, तां प्रत्येव च शब्दभावनादेः अङ्गत्वव्यवहारो गौणो विशेषणत्वमात्रविवक्षया द्रष्टव्यः । उक्तविधाङ्गत्वोक्त्यैव चाङ्गत्वघटकीभूतोद्देश्यताशालि-त्वरूपमङ्गित्वमर्थसिद्धम् । अतः सूत्रकृता न पृथगुपन्य-स्तम् । न वा तृतीयाध्यायार्थः । अत्र चाङ्गत्वघटकीभूत-कारकत्वनिविष्टकर्तृत्वाद्यन्यतमनिरूपितत्वमङ्गित्वम् । अस्ति च स्वर्गादौ यागादिवृत्तिकरणत्वादिनिरूपकत्वम् । अतस्तस्य यागाद्यङ्गित्वमिति न भ्रमितव्यं, तथात्वे स्वर्गादिवृत्तिकर्मत्वादिनिरूपकत्वेन भावनायाः स्वर्गाङ्गि-त्वापत्तेः, उक्तापेक्षया तस्य गुरुत्वाच्च । **अत एव** अङ्ग-त्वघटकीभूतभेदप्रतियोगित्वमङ्गित्वम् । स्वर्गादिरूपकर्म-कारकादिभेदस्य पूर्वं निवेशितत्वाच्च स्वर्गादौ लक्षणसम-न्वयः **इत्यपि न**, तादात्म्यसंबन्धावच्छिन्नप्रतियोगिता-कत्वरूपभेदत्वनिवेशेन गुरुत्वात्, कर्तृत्वाद्यन्यतमत्वघटक-भेदप्रतियोगित्वमादायातिव्याप्त्यापत्तेश्चेति संक्षेपः ।

इदं चाङ्गत्वं प्राचीनोक्तपरोद्देशप्रवृत्तकृतिव्याप्यत्वमेव परिष्कृत्योक्तम् । **वस्तुतस्तु** लाघवात्, यन्निष्ठोद्देश्यता-निरूपितविधेयताशालि यत्, तत् तदङ्गम् । सर्वेषामेवा-ङ्गानां श्रुतैरार्थिकैर्वा विधिभिः स्वस्वप्रधानोद्देशेन

विधानात् सर्वत्र लक्षणसमन्वयः। उद्देश्यताविधेयते च स्वरूपसंबन्धरूपे, न तु साध्यत्वानुष्ठेयत्वात्मिके। तेनोक्तविधेयत्वाभाववति कालादौ उक्तोद्देश्यत्वाभाववन्नरकाभावोद्देशेन विधीयमानविवाहार्थानृतवदनादौ च नाव्याप्तिः। न वा तयोर्निरूप्यनिरूपकभावे मानाभावेन लक्षणासंभवः। एवंविधाङ्गत्वस्य तृतीयाध्यायार्थत्वादेव च स्वयंप्रार्थितवृत्त्युद्देश्यतानिरूपितविधेयत्व— स्वयंप्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयत्वरूपयोः क्रत्वर्थत्वपुरुषार्थत्वयोरङ्गत्वविशेषत्वेन मूले तृतीयसिद्धत्वोक्तिः। पूर्वोक्ताङ्गत्वस्य तृतीयाध्यायार्थत्वे तु विधेयत्वरूपयोः क्रत्वर्थत्वपुरुषार्थत्वयोर्निरुक्तकारकत्वादिरूपाङ्गत्वशेषत्वाभावान्न तृतीयसिद्धत्वमिति चतुर्थे निरूप्यत्वापत्तिः। **न च** निरुक्तकारकत्वादिरूपाङ्गत्वव्यापकत्वादेव क्रत्वर्थत्वपुरुषार्थत्वान्यतरस्य तृतीयसिद्धत्वमिति **वाच्यम्**। तथात्वे आमिक्षाप्रयोज्यत्वस्य आमिक्षाङ्गत्वव्यापकत्वात् तृतीयसिद्धत्वेन चतुर्थे प्रतिपाद्यत्वानापत्तेः। **यदि** निरुक्तोद्देश्यतानिरूपककृतिकारकत्वरूपं क्रत्वर्थत्वं पुरुषार्थत्वं च निरुच्य पूर्वोक्ताङ्गत्वविशेषत्वं तयोः समर्थ्यते, **तदा** 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इत्यादौ स्वर्गादिनिष्ठोद्देश्यतानिरूपककृतिकारकत्वेन पिण्डपितृयज्ञादेरिव कालादेरपि पुरुषार्थत्वापत्तिः। अस्मन्मते तु कालादौ स्वर्गादिनिष्ठोद्देश्यतानिरूपितविधेयतायाः स्वरूपसंबन्धरूपाया अभावेन नोक्तापत्तिः। कारकत्वादिघटनायां गौरवं तु स्फुटमेव। अतोऽस्मदुक्ताङ्गत्वस्वीकारेणैव निरुक्तविधेयतारूपयोः क्रत्वर्थत्वपुरुषार्थत्वयोस्तद्विशेषत्वं संगच्छते। सूत्रस्थपरार्थत्वस्याप्ययमेव निष्कर्षः। **न चैवं** श्रुत्यादीनामङ्गत्वैकदेशबोधकत्वस्याप्यभावात् अङ्गत्वप्रमाणत्वानापत्तिः। स्वरूपसंबन्धरूपोद्देश्यताया एव लक्षणघटकत्वात् द्वितीयाया अपि तदभावादिति **वाच्यम्**। अङ्गत्वघटकीभूतविधेयतोद्देश्यताऽन्यतरप्रयोजककर्मत्वकरणत्वाद्यन्यतमबोधकत्वेन अङ्गत्वप्रमाणत्वोपपत्तेः। कर्मणो ह्युद्देश्यत्वेनैवान्वयात् कर्मत्वमुद्देश्यत्वप्रयोजकम्। करणादीनां तु विधेयत्वेनान्वयात् करणत्वादिकं विधेयत्वप्रयोजकम्। तत्र श्रुतेर्निरुक्तान्यतमवाचकत्वेनैव निरुक्ताङ्गत्वप्रमाणत्वम्। लिङ्गादीनां तु साक्षात्परम्परया वा निरुक्तान्यतमवाचकश्रुतिकल्पकत्वेन तत्त्वमिति विशेषः। निरुक्ताङ्गत्वोक्त्यैव च अङ्गत्वघटकीभूतोद्देश्यताशालित्वरूपमङ्गित्वमर्थसिद्धमेव। अतो न सूत्रे तदुक्तं, न वाऽध्यायार्थः। **न च** विनिगमनाविरहः। यन्निष्ठविधेयतानिरूपितोद्देश्यताशालि यत्, तत् तदङ्गि। निरुक्ताङ्गित्वघटकविधेयताशालित्वरूपमङ्गत्वमर्थसिद्धमित्यस्यापि सुवचत्वादिति **वाच्यम्**। यत्त्वतत्त्वादेरननुगमाद्विशिष्यैव लक्षणानां निर्वक्तव्यत्वात् प्रधानापेक्षयाऽङ्गानां बहुत्वात् तत्तद्घटिताङ्गित्वोक्तौ **गौरवापत्तेरेव** विनिगमकत्वादिति **नवीनः पन्थाः**।

**के चित्तु** परोद्देशप्रवृत्तकृतिव्याप्यत्वमङ्गत्वमिति प्राचीनोक्तलक्षणमेवं व्याकुर्वन्ति। अत्र परोद्देशप्रवृत्तत्वं परोद्देशेनोपपादितत्वम्। तच्च कृतिव्याप्यत्वस्य विशेषणम्। व्याप्यत्वशब्देन चोद्देश्यत्वानुद्देश्यत्वसाधारणविषयत्वमुच्यते। ततश्च विध्यन्वयिन्यां कृतौ यद्विषयत्वानुपपत्तिर्यदुद्देश्यकत्वेन परिह्रियते, तत् तस्याङ्गं तदर्थं चेत्युक्तं भवति। प्रसिद्धं ह्येतत् प्रेक्षावत्कृतौ अपुरुषार्थविषयत्वं तत्साध्यपुरुषोद्देश्यकत्वमन्तरेणानुपपन्नमिति। भवति च वपनादिविषयत्वानुपपत्तिपरिहारः पुरुषोद्देश्यकत्वेन, तदुद्देश्यकत्वानुपपत्तिपरिहारश्च क्रत्वपूर्वोद्देश्यकत्वेनेति वपनपुरुषयोः पुरुषक्रत्वङ्गत्वसिद्धिः। इत्थं यागस्वर्गयोः स्वर्गपुरुषौ प्रति शेषत्वमूह्यम्। भवति हि **'यागः** किमर्थं कर्तव्यः' इत्याक्षेपे स्वर्गायेति समाधिः। **'स्वर्गः** किमर्थमुत्पाद्यः' इत्याक्षेपे पुरुषार्थमिति समाधिरिति। **अत्र त्विदं विभावनीयम्**। कथमेतल्लक्षणं कालादिषु योजनीयं, नहि विध्यन्वयिकृतिवृत्तिकालादिविषयकत्वं प्रसिद्धमस्ति, येन तदनुपपत्तिर्यागाद्युद्देश्यकत्वेन परिह्रियेत। त्रिविधा हि कृतिविषयता **साध्यता**, **उपादानता**, **उद्देश्यता** चेति। तद्यथा **'स्वर्गमुद्दिश्य** यागं साधयितुं हविरादिकमुपादत्ते' इत्यादिप्रतीत्या यागे साध्यताऽऽख्यविषयता, स्वर्गे उद्देश्यताऽऽख्या, हविरादावुपादानताऽऽख्या। न च कालादौ अन्यतमविषयताऽप्यस्ति, तत्र निरुक्तप्रतीतेरभावात्। अनुपादेयपञ्चकसाधारणोद्देश्यता तु न कृतिविषयता, अन्यथा निमित्तस्यापि कृतिविषयत्वापत्तेः। अतः कालादाव-

व्याप्तिः। अपि च भवन्मते तृतीयादेरङ्गत्वप्रमाणत्वानापत्तिः। अङ्गत्वघटकीभूतकरणत्वादिबोधकत्वेन हि तृतीयादेरङ्गत्वप्रमाणत्वमित्युक्तम्। भवदुक्तलक्षणस्य तु तदघटितत्वात्तदनापत्तिः। **अन्ये तु** परोद्देशप्रवृत्तत्वं शेषत्वम्। प्रवृत्तिरिति चेतनाचेतनकर्तृकव्यापारमात्रमभिधीयते। अस्ति च सर्वकारणानां स्वस्वव्यापारे कर्तृत्वम्। संभवति चोद्देश्यताऽऽत्मिका विषयता, तत्रापि प्रयोजनानां 'पाकाय काष्ठानि ज्वलन्ति' 'धान्याय जलं प्रस्रवति' इति व्यवहारात्। व्यवहारे चाचेतनशब्दकर्तृकेऽभिधाव्यापारे व्यक्तीनामुद्देश्यत्वं इति **भवदेवः**, प्रकृतिकर्तृकव्यापारे च प्रपञ्चोद्देश्यकत्वं इति **कपिलः**। ततश्च यदुद्देशेन यत् व्याप्रियते, तत्तदङ्गमित्याहुः। **तदपि च** यागाद्युद्देश्यकव्यापारकर्तरि शूद्रादावपि यागाद्यङ्गत्वापत्तेः, विहितत्वनिवेशेऽपि च तस्यापि स्वरूपतस्तत्कर्तृककर्मणि विहितत्वादुक्तदोषतादवस्थ्यात्। यदुद्देश्यकव्यापारकर्तृत्वेन यद्विहितं तत्तदङ्गमित्युक्तौ च, दध्यादिषु वस्तुतो होमाद्युद्देश्यकव्यापारकर्तृत्वेऽपि तत्त्वेन विहितत्वाभावादव्याप्तेरुपेक्षितम्। विधिप्रयोज्यप्रमाविषययदुद्देश्यकव्यापारकर्तृत्वं यत्र, तत्र तदङ्गत्वमित्युक्तौ तु न कोऽपि दोषः। प्रतीयते हि दध्यादीनां करणत्वादिना विधानेऽपि यागाद्युद्देश्यकव्यापारकर्तृत्वम्। परं त्वस्मदुक्तलक्षणापेक्षया गुरुत्वात्तदुपेक्षेति ध्येयम्। इदं च परार्थत्वमङ्गत्वस्वरूपं, नाङ्गस्य लक्षणम्। **मुरारिः** पृ. ११४८–११५४.

* यदेव हि अङ्गत्वलक्षणं तदेव शेषपदशक्यताऽवच्छेदकं, नान्यत्। **तत्राङ्गत्वं** नाम पारार्थ्यं, तच्च यदुद्देशप्रवृत्तकृतिकारकत्वेन विहितं यत्, तत्त्वं तदङ्गत्वम्। स्वर्गोद्देशप्रवृत्तपुरुषकृतौ यागानुकूलायां यागस्य कारकत्वेन विध्यन्वयात् यागे लक्षणसमन्वयः। प्रधानोद्देशप्रवृत्तपुरुषकृतौ प्रयाजाद्यनुकूलायां प्रयाजादेः कारकत्वेन विध्यन्वयात् प्रयाजादावपि सः। द्रव्यगुणकर्तृकालदेशादौ च यागाद्युद्देश्यकयागानुकूलकृतौ करणत्वकर्तृत्वाधिकरणत्वादिकारकत्वेन विधेयत्वात् यागाङ्गत्वाविघातः। षष्ठीस्थले च संबन्धसामान्याभिधानेऽपि कारकत्वे एव पर्यवसानान्नाव्याप्तिः। निमित्तस्य च क्रियान्वयिनोऽपि कारकत्वाभावात् नाङ्गत्वापत्तिः निमित्तस्यानुष्ठापकत्वाख्योद्देश्यत्वेऽपि ईप्सितत्वाख्योद्देश्यत्वाभावाच्च न यागस्य निमित्ताङ्गत्वं, लक्षणे तादृश्याः एवोद्देश्यताया विवक्षितत्वात्। उद्देश्यतापदेनैव च कर्मकारकलाभात् कारकपदं तदतिरिक्तम्। कृष्यादेरपि यागकृतिकारकत्वात् अङ्गत्वप्रसक्तौ विधेयत्वान्तम्। यथा चास्य न क्वाप्यव्याप्त्यतिव्याप्ती तथा **कौस्तुभे** विस्तरः। एवं च यत्रेदं न लक्षणं यथा यागादेर्भावनादिकं प्रति, तत्र भाक्तोऽङ्गत्वव्यवहारः शास्त्रे। यद्यपि च नेदृशमङ्गत्वं श्रुत्यादिप्रमाणकं, कारकत्वमात्राभिधायित्वात् तृतीयादेः, तथापि यत्पदार्थः स्वर्गादिपदात्, तदुद्देश्यकत्वं संसर्गादिना, कृतिराख्यातात्, कारकत्वं तृतीयादेः, विध्यन्वयित्वं विधिपदसमभिव्याहारात्। विधिर्हि विशिष्टभावनां विदधदर्थात् विशेषणान्यपि विधत्ते, इति सर्वेषामुद्देश्यत्वेन विधेयत्वेन वा विध्यन्वयः। अत एव अङ्गत्वघटकीभूतपदार्थान्तराणां प्रमाणान्तरेण प्रसिद्धावपि तद्घटककारकत्वस्य श्रुत्यादिगम्यत्वात् तेषामङ्गत्वप्रामाण्यव्यवहारः। **भाट्ट.** ३।१।२.

* **अङ्गधर्मः** प्रधानधर्मेण बाध्यते। प्राप्तबाधोऽत्र। यथा दीक्षणीयायाः पर्वकालत्वं सुत्यापर्वकालत्वेन। **बाल.** पृ. १३२. * **अङ्गधर्माः** प्रधानानि न संक्रामन्ति। **वा.** ३।३।२।९ पृ. ८११. * **अङ्गधर्मप्रधानधर्मयोर्विरोधे** प्रधानधर्मस्यैवानुग्रहः। अङ्गगुणविरोधन्यायस्य स्वरूपमिदम्। **भा.** १२।२।९।२५. * '**अङ्गधर्मानुष्ठानस्य** प्रधानसाद्गुण्यार्थत्वात् प्रधानद्वारधर्मानुरोधेन स्वरूपनिबन्धनधर्मव्यतिक्रमो न्याय्यः' इति गुणमुख्यव्यतिक्रमाधिकरणन्यायस्य स्वरूपम्। **सु.** पृ. ११७९.

**अङ्गनिर्णयः**। 'अङ्गस्वरूपसंबन्धप्रमाणं सप्रकारकम्। यदुक्तं वार्तिके सम्यक् तत् संक्षेपेण कथ्यते ॥ १॥' यदङ्गस्वरूपं यथाविधं च, यश्च तस्य प्रधानेन संबन्धो यथा च, यच्च तत्र प्रमाणं यथा च तत्प्रमाणं भवति, तत् सर्वं यथावार्तिकमनुसंधास्यामः।

तत्र 'दृष्टादृष्टोभयार्थत्वात् त्रेधाऽङ्गानि प्रचक्षते। दृष्टार्थानि चतुर्धा स्युर्जातिद्रव्यगुणक्रियाः ॥ २ ॥ अदृष्टार्थे द्विधा कर्म, द्व्यर्थमपि तन्मतम्। दृष्टार्थेष्वपि सर्वेषु नियमाददृष्टमिष्यते ॥ ३ ॥' त्रिविधमङ्गजातं दृष्टार्थमदृष्टा-

र्थमुभयार्थमिति । दृष्टार्थमपि जातिद्रव्यगुणक्रियात्मकम् । तत्र जातिगुणौ 'पशुना यजेत' 'अरुणया क्रीणाति' इति क्रियासाधनत्वेन विनियुक्तौ तत्साधनद्रव्यावच्छेदेन दृष्टेनैवोपकारेण तस्याः शेषभावमनुभवतः । कथं पुनर्द्रव्यपरिच्छेदात् क्रियासाधनत्वमिति चेत् । उच्यते । विशिष्टस्य क्रियासाधनत्वात् तस्य च विशेषणाधीनप्रतिपत्तित्वादप्रतिपन्नस्य च साधनभावासंभवात् तत्प्रतिपत्त्युपायभूतयोर्जातिगुणयोस्तद्द्वारेण भवति क्रियासाधनत्वम् । गुणस्य तु साधनत्वं श्रुतं यथोक्तेन प्रकारेणोपपादयितुं तद्विशिष्टस्य द्रव्यसाधनत्वं कल्प्यते । तदेवं जातिगुणयोर्दृष्टार्थत्वं, द्रव्यस्य तु साक्षादेव । क्रियाऽपि चावघातादिर्दृष्टार्थैव, यां संनिपत्योपकारकमाचक्षते । अदृष्टार्थत्वं तु क्रियाया एव । सा च द्वेधा संनिपत्योपकारकरूपा प्रोक्षणादिः, आरादुपकारकरूपा प्रयाजादिः । संनिपत्योपकारकाणि च दृष्टार्थानि कर्माणि स्वकारकाणां कर्मादीनामुत्पत्तिं प्राप्तिं विकारं वा कुर्वन्ति सन्ति, तत्साध्यस्य प्रधानस्योपकुर्वन्ति । यथा संयवनं पिण्डस्योत्पत्तिं, दोहनं पयसः प्राप्तिं, अवघातो व्रीहिविकारम् । अदृष्टार्थं तु संनिपातिसंस्कारं स्वकारकस्य कुर्वत् प्रधानोपकारि भवति । तदेवमुत्पत्त्यादिसाध्यभेदात् संनिपाति चतुर्विधं भवति । तच्च कर्मादीनामन्यतमे कारके यथायथमुत्पत्त्यादि करोति । तद्यथा कर्मण्यवघातः, कर्तरि व्रतं, करणे प्रयाजशेषाभिघारणं, संप्रदाने पशुपुरोडाशयागः, अपादाने 'अग्नेस्तृणान्यपचिनोति' इति, अधिकरणे दध्यानयनम् । आरादुपकारकं तु न कारकद्वारं, अपूर्वद्वारं तु तत् प्रधानस्योपकरोति । दृष्टादृष्टार्थं च किं चित् कर्म यदाश्रयिशब्दाभिधानीयकं भजते, यथा पशुपुरोडाशयागः । स हि त्यागांशेनादृष्टं, उद्देशांशेन च दृष्टं देवतास्मरणं करोतीत्युभयार्थः । 'एकं वा चोदनैकत्वात्' (४।३।६।१४) इत्येकेनैव विध्युपपत्तेः प्रयोजनद्वयं न युक्तमिति चेन्न, दृष्टत्वादेव तावत् प्रयोजनापेक्षायां प्रथमं स्मरणं स्वीक्रियते । स्वीकृते च तस्मिन् त्यागांशस्य तत्रोपयोगमपश्यतः पुनरपेक्षा जायते, सा चादृष्टकल्पनयैव निवर्तते । तेनैवंजातीयकमुभयार्थम् । यस्तु यागस्य साक्षाद् दृष्टोपकारित्वाभावात् , तदङ्गभूतयोश्चासेचनमन्त्रयोर्दृष्टं कुर्वतोर्यागे अधिकारानुप्रविष्टे तत्र विनियोगासंभवात् , तस्य चापूर्वमन्तरेण तदनुप्रवेशासंभवाददृष्टार्थत्वं , अङ्गद्वारेण च दृष्टार्थतेत्युभयार्थत्वं स्विष्टकृदादीनामाह, तस्य पशुपुरोडाशयागः पूर्वमेवाङ्गसंबन्धात् . दृष्टं कुर्वन् नोभयार्थः स्यात् । तेन यथोक्तेनैव न्यायेनोभयार्थत्वम् । अनेनैव च न्यायेन सर्वेषु दृष्टार्थेषु नियमादृष्टमुन्नेयम् । यदि तु दृष्टमेव तुषविमोचनमवहननस्य प्रयोजनं स्यात् , ततस्तस्यान्यतोऽपि संपत्तेर्नावश्यमवघातोऽनुष्ठीयेत, तत्रास्य विधिरुपरुध्येत । तेनावघातेन अदृष्टानुविद्धास्तण्डुला निष्पाद्यन्ते इति कल्प्यते । क्रियानिष्पाद्यमपि चादृष्टं नियमस्य प्रयोजनापेक्षायां तत्फलत्वेन कल्प्यमानं नियमादृष्टमित्युच्यते इति ।

किं पुनरेषामङ्गत्वं, किं च तत्र प्रमाणम् ? तदुच्यते 'कर्तुः समीहितं येन सिद्ध्यत्यङ्गं तदुच्यते । प्रमाणं च विधिस्तत्र श्रुतिलिङ्गादिसंयुतः ॥ ४ ॥' समीहितसाधनत्वं तावदङ्गत्वं, यद्यथा समीहितं पुरुषस्य, तत्तथा येन तत्समीहानिमित्तपुरुषव्यापारगोचरीभूतेन साध्यते, तत्तस्य समीहितस्याङ्गमुच्यते । इदमेव च पारार्थ्यम् । यथोक्तं 'उद्देशेन हि तादर्थ्यं विविच्यते' इति । उद्देशः समीहाऽभिसंधिरिच्छेति पर्यायाः । तेन समीहितसाधनमङ्गशब्देन शेषगुणादिपर्यायेणाभिधीयते । तत्र च विधिः प्रमाणम् । स हि चेतनप्रवर्तनात्मकः । न चासौ समीहितसाधनादन्यत्र प्रवर्तयितुं शक्यते । तेन विधिरेव स्वात्मा मा भाजीति स्वविषयस्य समीहितसाधनभावं कल्पयन् अङ्गत्वे प्रमाणम् । यदा तु श्रेयःसाधनत्वमेव विधिरित्याश्रीयते, तदा श्रौतमेवाङ्गत्वम् । सर्वथा विधिशब्द एव श्रुत्या अर्थाद्वा अङ्गत्वं बोधयति । कथं तर्हि श्रुत्यादीनि विनियोगकारणानि ? तादर्थ्यमेव विनियोगः, तच्चेद्विधितः, न श्रुत्यादीनां तत्कारणत्वमुपपद्यते । अत उक्तं श्रुतिलिङ्गादिसंयुत इति । विधिर्हि भावनायाः सामान्यतः श्रेयःसाधनत्वं बोधयन् तद्विशेषसमर्पकमन्यदपेक्षते । नहि व्रीह्यादिश्रुतिमन्तरेणावघातादिभावनाया व्रीह्याद्यर्थत्वं सिध्यति, बर्हिर्लवनमन्त्रस्य वा लिङ्गमन्तरेण लवनार्थत्वं, यागस्य वा स्वर्गकामादिपदसमभिव्याहारमन्तरेण

तादर्थ्ये, प्रयाजादीनां वा विना प्रकरणेन क्रत्वर्थत्वम् । तेन समीहितविशेषप्रतिपत्त्यर्थं तावत् श्रुत्याद्यपेक्षा । धात्वर्थानां नामार्थानां च विधेयत्वमेव श्रुत्याद्यपेक्षम् । विधिर्हि विधेयस्याङ्गत्वमवगमयति , नान्यस्य । न चासौ भावनाव्यतिरिक्तं साक्षाद्विधत्ते । तामेव तु विशिष्टां विषयीकुर्वन् तद्विशेषणान्यपि अर्थात् विधत्ते । यत्रापि च सामान्यतः प्राप्ता, तत्रापि विशिष्टविषयत्वेन प्रतीयमानो विधिः प्राप्ताप्राप्तविवेकेन विशेषणपरो भवति ; विशेषणत्वं च श्रुत्याद्यधीनम् । समानप्रत्ययाभिधानोपादानलक्षणया हि श्रुत्या कर्तृसंख्यादीनां भावनाविशेषणत्वं, फलश्रुत्या धात्वर्थस्य । पदान्तरोपात्तानां तु पश्वादीनां तत्संख्यालिङ्गयोश्च विभक्तिश्रुत्याद्यूहनीयम् । तदेवं शेषिविशेषप्रतिपादनेन शेषविशेषप्रतिपादनेन च अङ्गत्वं बोधयतो विधेः साहायकं कुर्वन्ति श्रुत्यादीनि विनियोगे कारणान्यभिधीयन्ते इत्यनवद्यम् । **न्यायरत्नमाला.** पृ. १२०-१२३.

* '**अङ्गप्रधानचिन्तेयं** चतुर्थाध्यायगोचरः ।' **वा.** २।२।३।३ पृ. ४७३. * **अङ्गप्रधानयोः** एककालत्वं, कालस्य प्रयोगापरनामधेयाङ्गप्रधानभावनया अन्वयात् इति एकादशे वक्ष्यते । **सोम.** ५।१।११.

**अङ्गप्रधानयोः एकदेशकालकर्तृकत्वम् ॥**

**अङ्गेषु च तदभावः प्रधानं प्रति निर्देशाद् यथा द्रव्यदेवतम् । ११।२।२।३ ॥**

**भाष्यं**— अङ्गेषु इदानीं विचार्यते । किं तेषां समादय एव देशकालकर्तारः, अथवा अनियमः इति । किं प्राप्तं ? अङ्गेषु च तदभावः । कुतः ? प्रधानं प्रति निर्देशात् । चोदनाविधिशेषत्वेन आग्नेयादीनि प्रधानानि प्रति समादयो निर्दिष्टा नान्यत्र भवन्ति । तस्मादनियमः । यथा द्रव्यदेवतं यत् प्रधानेषु न तदङ्गेषु, एवं देशादयोऽपि ।

( मध्ये अन्तरागर्भिणी अन्यत्र गृहीतम् ) ।

**अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरंस्तस्मात् स्यादेकदेशत्वम् । ८ ॥**

**भाष्यं**— यदुक्तं अङ्गेषु देशादीनामनियम इति, तत्र, अङ्गेषु समादिनियम इति । कुतः ? यतः अङ्गान्यपि प्रधानेन फलसिद्धौ उपदिश्यमानेन सह उपदिश्यन्ते । कथं ? विधानत्वात् । प्रधानानां फलं साधयतां विधानमेतत् , यदुत अङ्गप्रयोगः । विधानं , कल्पः , इतिकर्तव्यता इत्यर्थः । अतो 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यत्र अङ्गवान् प्रयोगः प्रधानानामुक्तः । यथाविधः तत्रोक्तः, तथाविधेन पुनःश्रुत्या समादीनां विधिः । अतः अङ्गानामपि प्रधानैः सह एकदेशकालकर्तृत्वं स्यात् ।

**द्रव्यदेवतं तथेति चेत् । ९ ॥**

**भाष्यं**— अथ यदुक्तं, यथा द्रव्यदेवतं प्रधानानामङ्गानां च भेदेन भवति, एवं देशादयोऽपि स्युरिति । तत् परिहर्तव्यम् । आभाषान्तं सूत्रम् ।

**न चोदनाविधिशेषत्वान्नियमार्थो विशेषः ।१०॥**

**भाष्यं**— नैतदेवम् । कुतः ? चोदनाविधिशेषत्वात् । चोदनाविधिशेषो हि द्रव्यदेवताविधिः । तेन प्रधानेषु द्रव्यदेवताविशेषो नियतः । इह अग्निः पुरोडाशश्च, इह आज्यं अग्नीषोमौ चेति । तथा अङ्गेष्वपि आज्येन प्रयाजान् यजति, शेषात् स्विष्टकृतं यजति इति । न चान्यत्र निर्दिष्टः अन्यत्र भवति । तथेह प्रयोगाङ्गत्वात् देशादीनां , तस्य च प्रयोगस्य साधारण्यात् तन्त्रभावः इत्यपदिष्टो हेतुः । तस्मात् विषमं द्रव्यदेवतेन ।

**तेषु समवेतानां समवायात्तन्त्रमङ्गानि, भेदस्तु तद्भेदात् कर्मभेदः प्रयोगे स्यात् , तेषां प्रधानशब्दत्वात् , तथा चान्यार्थदर्शनम् । ११ ॥**

**भाष्यं**— यदि च समानं द्रव्यदेवतं अङ्गानां प्रधानानां च स्यात् , ततस्तेषु द्रव्यदेवतेषु समानेषु समवेतानामङ्गानां प्रधानानां च समवायात् तदवस्थः अविशेषः, इति तन्त्रमिज्या स्यात् । भेदस्तु तद्भेदात् । अथ तु भेदो द्रव्यदेवतस्य, ततः तद्भेदात् कर्मभेदः प्रयोगे स्यात् । इज्याकर्मणः प्रयोगे विशेषग्रहणात् भेदः स्यात् । तथा च अन्यार्थदर्शनं युक्तं भविष्यति 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायां' इति । तस्मादपि द्रव्यदेवतस्य भेदः ।

**शा**— यदा चैवं उत्पत्तिवाक्यशेषत्वं कालादीनां, तदा उत्पत्तिवाक्ये प्रधानमात्राणां निरङ्गानां विधानात्

तन्मात्राणामेव अमी कालादयः, नाङ्गानां प्रधानदेशकालकर्तृत्वम् । तानि तु कामं कालान्तरादिष्वपि कर्तव्यानि । **इति प्राप्ते अभिधीयते** । ··· यदा चैवं प्रयोगवाक्यशेषत्वं कालादीनां, तदङ्गानामपि तत्कालत्वं सिध्यति । तथाहि, साध्यसाधनांशयुक्ता अवगता भावना कथमिति इत्थंभावमपेक्षते । भावनावगतस्वरूपविशेषः इत्थंभावः । प्रज्ञातरूपा च भावना कालादीनपेक्षते । तेन प्रकारापेक्षायां भावनायां तत्प्रकारत्वेन प्रयाजादिषु अवगतेषु सामस्त्यरूपेण भावनाख्ये व्यापारे प्रयोगापरपर्याये अवगते तच्छेषत्वेन कालादयो विधीयन्ते इति अङ्गानामपि त एव देशादयो भवन्ति । द्रव्यदेवतं तु पुनर्न समस्तप्रयोगसंबन्धित्वेन विधीयते, अनपेक्षितत्वात् अयोग्यत्वाच्च । नहि अग्न्यन्वाधानबर्हिःस्तरणाद्यनुरक्तस्य प्रयोगस्य द्रव्यदेवताऽपेक्षा । नापि तन्निष्पत्तौ द्रव्यदेवतं समर्थं, किंतु फलभावनाऽवयवयागरूपनिष्पादनेन द्रव्यदेवतं अपेक्षितत्वात् योग्यत्वाच्च संबध्यते । तस्मान्न प्रधानसंबन्धि द्रव्यदेवतं अङ्गानां भवति । कालादयस्तु आग्नेयादिकरणिकया फलभावनया समग्ररूपया संबध्यमानाः तदन्तर्गतानामङ्गानामपि भवन्ति इति विशेषः ।

**सोम**— अत्र भाष्ये अङ्गेषु किं समादिदेशकालकर्तारः, उत अनियमः इति अन्तराचिन्तान्तरम् । **यद्यपि** अमावास्यादिशब्दानां प्रधानमात्रवाचित्वेऽपि 'अमावास्यया यजेत' इत्यादितृतीयानिर्देशेन तत्करणकभावनाप्रतीतेः तदन्वितानां देशादीनां 'उच्चैः प्रवर्ग्येण' 'अप्सु अवभृथेन' इत्यादीनामिव अङ्गप्रधानार्थत्वमयत्नसिद्धं, **तथापि** यत्र देशादिविधानेन तृतीयया प्रधाननिर्देशः, तत्रापि देशादीनां साङ्गप्रधानार्थत्वसाधनाय अन्तराविचार आवश्यक इति ध्येयम् ।

**वि**— 'अङ्गे ये केऽपि देशाद्याः किंवा ते, देवतादिवत् । अनन्वयात् केऽपि, मैवं प्रयोगेण परिग्रहात् ॥'

**मण्डन**— 'तदेवाङ्गेषु नो पृथक् ।'

**शंकर**— 'अङ्गेषु च तदङ्गिभिः । कालाद्यैक्यम् ।'



* अङ्गप्रधानयोः यत्र वचनं तत्र अन्यकालत्वमपि भवति यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति । भा. ११।३।१।१.

**अङ्गप्रधानयोः वचनबलात् भिन्नदेशकालकर्तृकत्वमपि ॥**

**अङ्गानां मुख्यकालत्वाद् वचनादन्यकालत्वम् ।** ११।३।१।१ ॥

**भाष्यं**— अङ्गानां मुख्यकालत्वं मुख्यदेशत्वं मुख्यकर्तृत्वं चोक्तम् (११।२।२।८) । एवं च सर्वत्र प्राप्तम् । वचनादन्यकालत्वम् । यत्र वचनं तत्र अन्यकालत्वं अन्यदेशत्वं अन्यकर्तृत्वमपि भवति । यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति' 'अप्सु अवभृथेन चरन्ति' । अग्नौ सौत्रामण्यां दक्षिणाभेदादन्यकर्तृत्वं विज्ञायते । 'वडवा दक्षिणा' इति ।

**शा**— प्रधानसमानदेशत्वं प्रधानसमानकालत्वं चाङ्गानामुक्तम् । यत्र तु आहत्य अङ्गस्य भिन्नदेशकालत्वं वचनेनैवोक्तं तत्र तथा भवति, इति सुहृद् भूत्वोक्तवान् । नात्र निराकार्यमस्ति ।

**सोम**—पूर्वस्मिन् पादे कालादीनामङ्गप्रधानेषु तन्त्रता प्राधान्येन निरूपिता । इदानीं तदपवादतया क्वचिदङ्गप्रधानयोर्भिन्नकालत्वं प्रस्तुत्य भिन्नदेशकालानामङ्गानां तन्त्रत्वं व्युत्पाद्यते इति **पादान्तरत्वमानन्तर्यं च** । 'अप्स्ववभृथेन चरन्ति' इत्यादौ भिन्नदेशत्वं, 'पूर्वेद्युरमावास्यायां वेदिं करोति' इत्यादौ भिन्नकालत्वं, अग्नौ सौत्रामण्यां च 'वडवा दक्षिणा' इति दक्षिणाभेदात् भिन्नकर्तृकत्वं च द्रष्टव्यम् । 'अङ्गानां प्रधानदेशकालत्वं प्रयोगविधिविहितं, भिन्नदेशकालत्वमपि प्रागुदाहृतवचनविहितं, इत्युभयोर्विकल्पः, इति पूर्वपक्षं कृत्वा यस्याङ्गस्य प्रातिस्विकवचनेन कालादिविधिः, न तस्य कालाद्यन्तरापेक्षा इति तदतिरिक्ताङ्गविषयत्वं प्रयोगविधेः इति प्रतिपादनार्थमिदं' इत्युक्तं **प्राभाकरैः**, तदयुक्तं, विशेषेण सामान्यबाधस्य प्रागेव व्यवस्थापितत्वात् । न च सामान्यवचनस्य विशेषवचनेन बाधसिद्धावपि सामान्यवचनार्थावधारणेतिकर्तव्यताभूतन्यायस्य बाधव्युत्पादनार्थमिदं इति युक्तं, वचनबाधे न्यायबाधस्य कैमुतिकन्यायसिद्धत्वात् । **सूत्रे** कालग्रहणं देशकर्त्रोरप्युपलक्षणम् ।

**वि**—'वेद्यादिर्मुख्यकाले स्यात् स्वकाले वे, तराङ्गवत् । मुख्यकाले, न पूर्वेद्युरित्याद्युक्तेः स्वकालगः ॥'

**भाट्ट**— अङ्गानां प्रधानानां च एकप्रयोगविधिपरिगृहीतानां एकदेशकालकर्तृकत्वं इत्युक्तम् । क्व चिद् वचने सति अन्यकालदेशकर्तृकत्वमपि । यथा 'पूर्वेद्युरमावास्यायां वेदिं करोति' 'अप्सु अवभृथेन चरन्ति' 'वडवा दक्षिणा' इति । अत्र च कालाद्यन्यत्वं द्वेधा । क्व चित् महाप्रयोगान्तःपातेऽपि प्रचारविप्रकर्षमात्रेण, क्व चित् प्रयोगबहिर्भावेनैव, यथाप्रमाणान्तरम् । अग्न्यङ्गसौत्रामण्यादौ च दक्षिणाभेदात् कर्तृभेदो वक्ष्यते (११।४।११--३) । इदं च सिद्धमेव सुहृद् भूत्वा उत्तरविवक्षार्थं स्मार्यते ।

**मण्डन**—'वाक्यादङ्गे देशकालादिभेदः ।'

**शंकर**—'अङ्गाङ्गिनोः कालभेदः ।'

**अङ्गप्रधानानां एकदेशकालकर्तृकत्वन्यायः ।** (१२।१।१६।३२) यदा हि अश्वप्रतिग्रहवतः कर्मणः वारुणीष्टिः अङ्गमेवेत्यवधारितं, तदा अङ्गप्रधानाना० न्यायात् यः एव क्रतोः कर्ता, तेनैव इयमपि कर्तव्या । यश्च क्रतोः कर्ता, सः अश्वस्य दाता । तस्मादसंदिग्धमेव दातुरिष्ट्या भवितव्यम् । **वा.** ३।४।११।३१ पृ. ९६५.

* **अङ्गप्रधानानां** प्रयोगः अविभक्तः इत्युक्तं 'अङ्गानि तु विधानत्वात् प्रधानेनोपदिश्येरन्' (११।२।२।८) इति । **भा.** ११।२।८।३२, * **अङ्गप्रधानार्थं** अभिमर्शनं न प्रधानार्थमेव । ३।७।४।८, * अङ्गप्रधानार्थं बर्हिः बर्हिर्धर्माश्च, वेदिः वेदिधर्माश्च, न केवलं प्रधानार्थं दर्शपूर्णमासयोः । ३।७।१।१-५, * **अङ्गप्रधानार्था** ज्योतिष्टोमे वेदिः । ३।७।३।७,९. * **अङ्गप्रसङ्गलक्षणः** प्राप्तबाधः षोढा । तद्यथा, औपदेशिकेनाङ्गेन औपदेशिकस्य प्रसङ्गः । तत्रापि नैमित्तिकेन नित्यस्य यथा—वैश्यनिमित्तकसाप्तदश्येन नित्यस्य पाञ्चदश्यस्य । तथा काम्येन नित्यस्य नैमित्तिकस्य च, यथा प्रतिष्ठार्थेन एकविंशतित्वेन पाञ्चदश्यस्य नित्यस्य, वैश्यनैमित्तिकस्य च साप्तदश्यस्य । औपदेशिकेन आतिदेशिकस्य यथा दर्शार्थेन प्रयाजादिना निशीष्टयर्थस्य प्रयाजादेः । आतिदेशिकेन आतिदेशिकस्य यथा पश्वर्थेन प्रयाजादिना पशुपुरोडाशार्थस्य प्रयाजादेः । आतिदेशिकेन औपदेशिकस्य यथा 'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' इति काम्ये अनुवचनान्तरे नित्यानुवचनप्रकृतिके अतिदिष्टाभिः सामिधेनीभिः प्राकृतसामिधेनीकार्यस्य अग्निसमिन्धनस्य प्रसङ्गतः सिद्धेः तासां बाधः । **बाल.** पृ १३३. * **अङ्गभावनाः** स्वाङ्गपरिपूर्णाः परमभावनायां संबध्यन्ते, न तदधीनत्वेन तासां स्वधर्मनिवृत्तिः । **वा.** ३।१।११।२१ पृ.७३२. * **अङ्गभूतं** चोदकेन गृह्यते । **भा.** ३।६।६।१७, * **अङ्गभूतस्य च** प्रधानारम्भेणैव सिद्धिरित्युक्तम् । १०।१।४।७, * **अङ्गभूयस्त्वे** फलभूयस्त्वम् । ११।१।३।१५, * **अङ्गभेदः** कर्तृभेदात्, कर्तृभेदश्च दक्षिणाभेदात् । ११।४।१।२, * अङ्गभेदः कालभेदात् । 'तद्यथा पौर्णमासकालान्यङ्गानि कालभेदात् न दर्शस्योपकुर्वन्ति' । ११।४।१।२.

**अङ्गवत् क्रतूनामानुपूर्व्यम् । ५।३।१२।३२॥** इष्टिरूपाः पशुरूपाः सोमरूपाश्च ये क्रतवः, तेषामनुष्ठाने आनुपूर्व्यं अनुपूर्वत्वं अनुक्रमः पाठानुसारेण भवितुमर्हति । वेदेषु येन क्रमेण काम्याः उक्तक्रतवः पठिताः, तेनैव क्रमेण ते अनुष्ठातव्याः । अङ्गवत् प्रकृतौ अङ्गानां अनुष्ठानक्रमो यथा पाठक्रमेणैव भवति तद्वत् । अङ्गानामिव अङ्गवत् इति षष्ठ्यन्तात् वतिः । इति पूर्वः पक्षः ।

**न वाऽसंबन्धात् । ३३ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । न पाठक्रमेण अनुष्ठातव्याः, असंबन्धात् तेषां परस्परं संबन्धाभावात् । नहि तानि कर्माणि परस्परोपकारकाणि, तस्मान्न तत्र पाठक्रमः प्रमाणम् । किंतु यथाकाममनुष्ठानम् ।

**काम्यत्वाच्च । ३४ ॥**

सिद्धान्ते हेत्वन्तरपरं सूत्रम् । तेषां कर्मणां काम्यत्वात् काम्यनिमित्तकत्वात्, कामस्य च अनियतत्वात् यदा कामः तदा तत् कर्म इच्छया अनुष्ठेयं, न तु पाठक्रमेण । चकारः समुच्चये ।

**आनर्थक्यान्नेति चेत् । ३५ ॥**

पुनः शङ्कते । पाठक्रमस्य आनर्थक्यात् आनर्थक्यप्रसङ्गात् न अनुष्ठाने क्रमाभावः, किंतु पाठक्रमेणैव अनुष्ठेयं इति चेत् ।

**स्याद् विद्यार्थत्वात् परेषु सर्वस्वारात् । ३६ ॥** शङ्कां निरस्यति । कामनाऽनुसारेण अनुष्ठानेऽपि पाठः सफलः स्यात् । पाठस्य विद्यार्थत्वात् ज्ञानार्थत्वात् । अनुष्ठाने क्रमाभावेऽपि तत्तज्ज्ञानार्थमेव पाठः । पाठक्रमेण ज्ञाने तु अदृष्टं फलम् । यथा सर्वस्वारात् नाम यागात् परेषु यागेषु ज्ञानेन अदृष्टमेव फलं तद्वत् । सर्वस्वारो नाम यागो मरणार्थं एवानुष्ठीयते । श्रुतौ च सर्वस्वारं विधाय ततः परमपि अनेके यागा विहिताः । न च तेषां मरणोत्तरं अनुष्ठानं संभवति । मरणात् प्रागेव तु तेषां ज्ञानं भवत्येव । तावतैव ज्ञानजन्यमदृष्टमपि भवत्येव । तथा च पाठक्रमस्य ज्ञाने उपयोगो नानुष्ठाने । अनुष्ठानं तु कामनाऽनुसारेणैव । तस्मात् काम्यानां कर्मणां न पाठक्रमेणैवानुष्ठानं, किंतु फलेच्छाद्यनुसारेणेति सिद्धान्तः । **के.**

* अङ्गवत् । यथा प्रधानस्य साङ्गत्वोपपादनाय अङ्गानि क्रियन्ते । सकृत्कृतैश्च तदुपपादितमिति नाभ्यस्यन्ते, तद्वत् काम्यं कर्म सकृदेव प्रयोक्तव्यं इति पूर्वपक्षः । **भा.** ११।१।४।२२, * अङ्गवत् । यथा समिदाद्यङ्गानां पाठक्रमो नियामकः, न तथा काम्यानां नैमित्तिकानां च क्रतूनां पाठक्रमो नियामकः । ५।३।१२।३२. * अङ्गवत् । यथैव स्वाध्यायविधिविहिते पाठे क्रमार्थत्वाय समिदादिषु क्रमनियमः, तथा क्रत्वन्तरेष्वपि इति पूर्वः पक्षः । **रत्न.** ५।३।१२।३२. * अङ्गवत् । यथा 'यस्य खादिरः स्रुवो भवति, स छन्दसामेव रसेनावद्यति' इति फलार्थवादसरूपता एवं 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' इत्यपि । **भा.** ४।३।८।१७ (१८), ***अङ्गवस्तुकानि** गायकैः यानि नाम (पद्ये गीयमाने) प्रक्षिप्यन्ते, तानि गीतिकालगणनार्थानि, नार्थसंबन्धायोच्चार्यन्ते । सुखं हि अक्षरैः गीतिकालः परिच्छिद्यते । ९।२।१०।३५. * **अङ्गवाक्यानि** परिपूर्णस्वार्थानि सन्ति दर्शपूर्णमासवाक्येन एकवाक्यतां यान्ति । न चात्मरूपं जहति । **वा.** ३।१।८।२१ पृ. ७३२. * **अङ्गवाक्यानां** फलपर्यन्तगमने क्रमः सविस्तरं अर्थवादाधिकरणे वार्तिके द्रष्टव्यः । **के.** * **अङ्गविकलस्य** अन्धादेर्नास्ति कर्माधिकारः । **वि.** ६।१।२, * अङ्गविकलस्यापि वैकल्ये औषधादिना परिहृते अस्त्येवाधिकारः कर्मणि । ६।१।९. * प्रतिसमाधेयाङ्गवैकल्यस्यापि कर्मसु अधिकारः । **भा.** ६।१।९।४१. * **अङ्गवैकल्ये** औषधादिना असमाधेये तु काम्ये कर्मणि नाधिकारः । **वि.** ६।१।१०, * अङ्गवैकल्ये औषधादिना असमाधेयेऽपि नित्ये कर्मणि अधिकारः । ६।१।१०. * **अङ्गविधाने** एकाङ्गविधेये गुणार्थेन प्रधानविधिना अनुसंधीयमानस्य बुद्धिविच्छेदकाभावेन अङ्गान्तरविधेये पुनरनुसंधानानपेक्षत्वात् बह्वङ्गविधानेऽपि क्लेशाधिक्यं नास्ति । **सु.** पृ. ११८९. * **अङ्गविधिः।** नहि अनङ्गे कर्मणि अङ्गस्य विशेषविधिः स्यात् । भवति च विशेषविधिः 'आश्ववालः प्रस्तरः' इति । नहि असति विशेषे प्रस्तरविशेषः शिष्येत । यथा यस्य नास्ति पुत्रः, न तस्य पुत्रस्य क्रीडनकानि क्रियन्ते । **भा.** १०।३।१।५. * **अङ्गशास्त्रस्य** प्रधानसिद्धावेव तात्पर्यम् । **सोम.** ६।३।१७. * **अङ्गशास्त्राणां** प्राकृतानां विकृतौ स्वरूपेणातिदेशः दशमाद्ये निषेत्स्यते । **सु.** पृ. १३१७, * **अङ्गसाद्गुण्यानुष्ठानस्य** प्रधानसाद्गुण्यार्थता 'अङ्गगुणविरोधे च तादर्थ्यात्' (१२।२।२५) इत्यत्र वक्ष्यते । पृ. ८६७. * **अङ्गहविर्भिरपि** विगुणैः प्रधानापूर्वं न निष्पद्यते । **वा.** ३।७।१।४.

**अङ्गहीनश्च तद्धर्मा । ६।१।९।४१ ॥**

अङ्गं चक्षुरादि । कदा चित् रोगादिना चक्षुराद्यङ्गहीनत्वमुत्पद्यते, तथा सति तादृशः अङ्गहीनः साङ्गं कर्म कर्तुं न शक्नुयात् । तस्मात् अङ्गहीनस्य न कर्माधिकारः इति पूर्वः पक्षः । सिद्धान्तस्तु रोगादिना जायमानं अङ्गहीनत्वं औषधादिना प्रतिसमाधेयमपि भवति । नहि अङ्गहीनत्वं सर्वदा नियमेनोत्पद्यते । तथा च प्रतिसमाधेयाङ्गवैकल्यस्य कर्माधिकारे न कश्चिद्विरोधः इति ।

पूर्वाधिकरणे द्रव्यहीनस्य कर्मणि नाधिकारः कर्मणो द्रव्यसाध्यत्वात् इति पूर्वपक्षं कृत्वा द्रव्यहीनत्वं न नित्यं, तथा च आदौ द्रव्यहीनोऽपि प्रयत्नेन द्रव्यं संपादयिष्यति । तथा च प्रथमतो द्रव्यहीनस्यापि कर्माधिकारे न कश्चिद्विरोधः इति सिद्धान्तितम् । तस्य सर्वस्यैवाधिकरणार्थस्य अत्राधिकरणे तद्धर्मशब्देन

अतिदेशः क्रियते । चशब्दः पूर्वोक्तद्रव्यहीनदृष्टान्तार्थः । अङ्गहीनः अङ्गविकलोऽपि चेत् प्रतिसमाधेयवैकल्यवान्, तदा स तद्धर्मा, द्रव्यहीनधर्मा । द्रव्यहीनस्य पूर्वपक्षे यो धर्मः कर्माधिकारशून्यत्वं, यश्च सिद्धान्ते धर्मः वैकल्यस्य प्रतिसमाधेयत्वेन कर्माधिकारवत्त्वं तौ द्रव्यहीनस्य धर्मौ एव धर्मौ यस्य सः अङ्गहीनः तद्धर्मा स्यात् । तथा च पूर्वपक्षे कर्माधिकाराभावः, सिद्धान्ते च कर्माधिकारवत्त्वं इत्यर्थः । तद्धर्मा इत्यत्र ' धर्मादनिच् केवलात् ' इति अनिच् प्रत्ययः समासान्तः ।

अत्र सुधा. ( पृ. ५३१ ) । यः शक्नुयात् स कुर्यात् इति वक्तव्ये प्रतिसमाधेयाङ्गवैकल्ये सति तिमिराद्यपनयनेन आपादितस्यापि अधिकारस्य सद्भावं ' अङ्गहीनश्च तद्धर्मा ' इत्यत्र षष्ठाधिकरणे एव वक्ष्यमाणं सूचयितुं यथा शक्नुयात् तथा कुर्यात् इत्युक्तम् । इति । **के.**

**अङ्गाकर्षणन्यायः** । 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति ' इति तस्य स्वरूपम् । यदा हि भावना अन्यतः प्राप्ता भवति, तदा तस्याः पिष्टपेषणवत् प्रतिहतशक्तिर्विधायकः तां अविदधानः, न तत्संगतार्थानेकविधिव्यापारप्रसवहेतुत्वं प्रतिपद्यते । विशिष्टविधाने तु अर्थापत्त्या विध्यन्तराणि कल्प्यन्ते । **वा.** २।२।३।६ पृ. ४८६.

* **अङ्गाङ्गमपि** विनाऽपि तादर्थ्येन, प्रधानोपकारि इति विज्ञायते । **वा.** ३।७।१।४. * **अङ्गाङ्गापेक्षया साक्षादङ्गं बलीयः** । ' य इष्ट्या पशुना सोमेन वा यजेत सोऽमावास्यायां पौर्णमास्यां वा यजेत ' इति अविशेषविधानेऽपि पर्वानुग्रहः सोमयागस्यैव क्रियते, न तु दीक्षणीयादेः । **मीन्या.** * **अङ्गाङ्गिभावः** आधाराज्यभागप्रयाजानुयाजादयः कालसंयोगमन्तरेण आम्नाताः, आग्नेयादयः षट् यागास्तु कालसंयोगेन चोदिताः । ते सर्वे न समप्रधानाः, किं तु षट् यागा एव मुख्याः फलसंबन्धात् । आधारादयस्तु शेषः निष्फलत्वात् । **वि.** ४।४।११, * अङ्गाङ्गिभावः प्रकरणात् । ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ' ' समिधो यजति ' इत्यादीनां वाक्यैकवाक्यतारूपप्रकरणात् प्रयाजादीनां दर्शपूर्णमासाङ्गत्वम् । ३।३।४. * **अङ्गाङ्गिभावे** विभक्तिभिरेवाभिधीयमाने निष्प्रयोजनत्वमपवादः, न तु प्रयोजनसदसद्भावेन अङ्गाङ्गित्वं, इति विवेकः । **वा.** २।१।४।१२ पृ. ४१३, * **अङ्गाङ्गिसंबन्धः** क्रतुकर्थभावग्रहणात् स्यात् । २।२।१२।२७ पृ. ५६२.

**अङ्गाधिक्यात् फलाधिक्यं इति न्यायः** । स्पष्टार्थः । ( यथा प्रभूतघासचारणे गौः प्रभूतं दुग्धं ददाति, प्रभूतेषु वा काष्ठेषु अन्वाहितेषु अग्निर्भूयो वर्धते तद्वत् । ) **कल्पतरुः** ३।३।४२ ब्रसू.

* **अङ्गानुष्ठानं** नित्ये यथाशक्ति । **त्रि.** ६।३।१, * **अङ्गापूर्वं**, प्रधानापूर्वं, समुदायापूर्वं, परमापूर्वं इति अपूर्वस्य अवान्तरभेदाः । २।१।२, * यत् प्रयाजाद्यङ्गजातं, तत् **अङ्गापूर्वं** इत्युच्यते । प्रोक्षणाद्यङ्गजन्यानि अङ्गापूर्वाण्येव । तत्र संनिपत्योपकारकाङ्गजन्यानि उत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते । आरादुपकारकाङ्गजन्यानि तु फलापूर्वनिष्पत्तौ व्याप्रियन्ते इति विशेषः । २।१।२. * **अङ्गापूर्वाणि** । यदा तु सर्वाणि अङ्गानि कृतानि, तदा तज्जन्यापूर्वाणि संभूय प्रधानेषूपकुर्वन्ति । **भा.** ११।१।१०।५७. * **अङ्गापूर्वप्रयुक्त एव** 'यावत्या वाचा कामयेत तावत्या दीक्षणीयायां ' इत्यादिः स्वरः, न तु परमापूर्वप्रयुक्तः । ९।१।२।३ वर्णकं २.

**अङ्गापूर्वभेदाधिकरणम्** । अपूर्वाधिकरणं द्रष्टव्यम् । **भा.** २।१।२।५.

* **अङ्गारम्भेणैव** प्रधानस्यारब्धत्वम् । **वा.** ४।१।२।२.

**अङ्गावतारन्यायः** । (३।१।९।१८) 'उपांशु यजुर्वेदेन क्रियते ' इति कल्पसूत्रम् । ( सत्या० १।१।२५ ) उपांशुत्वं शब्दधर्मः इति यजुर्वेदविहितकर्मणि असंभवात् यजुर्वेदविहितकर्मार्थेषु मन्त्रेषु उपांशुत्वं पर्यवस्यति **अङ्गावतारन्यायात्** । **वैजयन्ती.** * ननु प्रकरणावगतप्रधानार्थत्वस्य मुष्टीकरणादेः अङ्गावतारन्यायात् अङ्गाङ्गत्वे सति एकाङ्गावतारमात्रेण प्रकरणाम्नानानर्थक्यपरिहारात् अनेकेष्वङ्गेषु अवतारकल्पनाऽनुपपत्तेः आनन्तर्यविशेषाच्च विशेषावधारणोपपत्तेः आवेदनादिमात्रे अवतारावसायात् न सिद्धान्तसिद्धिः स्यात् इत्याशङ्क्य । **सु.** पृ. १०७०, * **अङ्गावतारन्यायस्य** (आनर्थक्यतदङ्गन्यायस्य ३।१।९ ) **अनङ्गे न प्रवृत्तिः** । **पृ.** १०७०, * वारवन्तीयस्य यागानङ्गत्वात् यागाङ्गभूते स्तोत्रे

अवतारो न संभवति इति परिहर्तुं 'यो हि प्रधानोपकारित्वेन श्रूयते स तदङ्गेऽपि स्थितः उपकरोति इत्येवं कल्प्यते' इत्यौदुम्बराधिकरणवार्तिकोक्तं (वा. पृ.१३६) अङ्गावतार**न्यायस्य** अङ्गमात्रविषयकत्वं स्मारयति । पृ. ८५५, * ननु यागभावनाविशेषणत्वेऽपि साक्षात् तदन्वयायोगात् अङ्गत्वेन च अङ्गावतार**न्यायविषयत्वात्** तदङ्गावतारावगतेः । इत्याद्याशङ्क्य । पृ. ८६५, * वारवन्तीयस्य अद्रव्यदेवतात्मकत्वेन यागसिध्यशक्तत्वात् न साक्षात् प्रकृतयागान्वयोऽस्ति अङ्गावतारन्यायाविषयत्वाच्च स्तोत्रद्वाराऽपि पुरुषार्थत्वपक्षे नास्ति, क्रत्वर्थत्वपक्षे तु अङ्गावतारन्यायविषयत्वात् अस्ति, इति वैषम्यम् । पृ. ८६१, * अङ्गावतार**न्यायोदाहरणे** सततदशारत्नित्वे वाजपेयाङ्गत्वं दर्शयति । पृ. ८५५. * **अङ्गाश्रितं** अङ्गकर्त्रा कर्तव्यं इति कर्तृत्सर्गन्यायः । **परिमल:** १।४।१३।४४ ब्रसू.

**अङ्गानां** ( वेदाङ्गानां ) धर्मसूत्राणां च स्मृतित्वमविशिष्टम् । 'अथापि स्मृतिशब्देन नाङ्गानामभिधेयता । तथाप्येषां न शास्त्रत्वप्रमाणत्वनिराक्रिया ॥' **वा.** १।३।८।२७ पृ. २८५. * अङ्गानां ( षण्णां ) वेदोपकारकत्वम् । तच्च शिक्षायाः स्वरादिनिश्चयद्वारा, कल्पस्य शाखान्तरसंदिग्धविध्युपसंहारद्वारा न्यायलभ्यार्थतात्पर्यनिर्णयद्वारा च, व्याकरणस्य वैदिकोहविज्ञानद्वारा, ( निरुक्तस्य वैदिकशब्दव्युत्पत्त्यर्थनिर्णयद्वारा ), छन्दसां वैदिकवाक्यपरिमाणनिर्णयद्वारा, ज्यौतिषस्य वैदिककर्मप्रयोगोपयोगितिथ्यादिविज्ञानद्वारा । **मणि.** पृ. ५. * **अङ्गविद्यानां** निगमनिरुक्तव्याकरणादीनां उपदेशः काल्पनिकभेदपक्षे अर्थवान् । **ऋजु.** पृ. २७०. * **अङ्गविद्यायामपि** ( षडङ्ग ) क्रत्वर्थपुरुषार्थप्रतिपादनं लोकवेदपूर्वकत्वेन विवेक्तव्यम् । **वा.** १।३।१।२ पृ. १६७, * **वेदाङ्गान्यपि** वेदशब्दवाच्यानि स्मर्यन्ते 'मन्त्रब्राह्मणयोर्वेद इति नामधेयं षडङ्गमेके' इति । 'तस्मात् तान्यपि वेदा वा, प्रमाणानि स्वतोऽथवा । प्रतिभान्तीति कर्तव्यमन्यथा प्रतिपादनम् ॥' १।३।६।११ पृ. २३०. * व्याकरणा**द्यङ्गाध्ययन**विधानं पुनः न कस्यां चिच्छाखायां श्रूयते । ( पूर्वपक्षे इदम् ) १।३।८।२४ पृ. २६४.

**अङ्गारन्यायः** । यथा अङ्गारः उष्णस्तापयुक्तश्चेत् हस्तं दहति, उष्णेऽङ्गारे गृहीते हस्तो दग्धो भवति इत्यर्थः । शीतलश्चेत् स हस्तं मलिनीकरोति च, एवमङ्गारस्वभावो दुष्टजनोऽपि । अत एव तत्संसर्गं न कुर्यादिति विषये अस्य प्रवृत्तिः इति । **साहस्री.** ६४०.

* '**अङ्गारैर्द्वे** सवने विहरन्ति' इत्यादिना विहितं धिष्ण्यानां विहरणं आग्नीध्रीयादेव । **संकर्ष.** ३।२।१५. * **अङ्गाराणां** भस्मना सह अध्यारोपस्य बाधः सौर्ये चरौ । **भा.** १०।१।१८।५६, * न शक्यते एक**स्याङ्गारापोहनेन** सर्वेषां पाकः कर्तुं इति प्रतिप्रधानमावृत्तिः । ११।१।१०।५१, * **अङ्गारापोहनादीनि** संस्पर्शादीनि च प्रतिप्रधानं भिद्यन्ते दर्शपूर्णमासयोः । ११।१।१०।५५.

**अङ्गि मुख्यं, अङ्गं गुणः । वि.** ३।३।२, * अङ्गी अङ्गैरुपकृतः फलं साधयति । तथा सति अङ्गिनः अङ्गकृते उपकारे साक्षादपेक्षा । उपकारद्वारा तु अङ्गेषु । १०।१।१ वर्णकं १. * **अङ्गिनः** अङ्गसंबन्धापेक्षा । **सु.** पृ. ५२५.

**अङ्गिरसां द्विरात्रे षोडशिग्रहस्योपसंहारः ॥ अभावादतिरात्रेषु गृह्यते । १०।५।१३।५३ ॥**

**भाष्यं**— ( वृत्तिकारमतेन ) अस्ति अङ्गिरसां द्विरात्रः । तत्रेदमाम्नायते 'वैखानसं पूर्वेद्युः साम भवति, षोडश्युत्तरे' इति । तत्रायमर्थः सांशयिकः किमत्र षोडशिनो विधानं, उत प्राप्तस्य परिसंख्यानं इति । किं प्राप्तं ? अप्राप्तस्य विधानम् । आनुमानिकश्चोदकः । स विहिते न प्रापयति । विहितश्च 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनेन वचनेन । तस्मात् चोदको न प्रापयति, इत्यप्राप्तस्य विधानमिति गम्यते ।

**टुप्**— **ननु** 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति ( अनेन वचनेन ) प्राप्नोत्येव । तस्मात् किमनेन 'षोडश्युत्तरे' इति । **उच्यते** । द्विरात्रमात्रं वर्णोपात्तं, द्विरात्रविशेषः ( अङ्गिरसां द्विरात्रः ) नोपात्तः । द्विरात्रविशेषो वर्णैरुच्यते, तस्मादेतद्विधानम् । ननु सामान्यवचनेनापि लभ्यते एवैतत् । सत्यं लभ्यते । किं तर्हि ? प्रमाणवेलायां केन शीघ्रं प्रमीयते इति प्रमाणशक्तिं निरूपयामः न विधीयमानमर्थम् ।

**अन्वयो वाऽनारभ्यविधानात् । ५४ ॥**

**भाष्यं**— अन्वयो वा षोडशिनोऽपि अस्मिन् क्रतौ । परीसंख्यार्थमिदं श्रवणं 'वैखानसं साम पूर्वेद्युर्भवति, षोडश्युत्तरे' इति । कथमन्वयः? अनारम्य विधानात् । कतमोऽनारभ्यविधिः? 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति । तेन प्राप्ते उपसंहारः क्रियते । यदेतत् द्विरात्रस्य उत्तरे गृह्यते इति, एतत् अङ्गिरसां द्विरात्रस्य गृह्यते नान्यत्रेति ।

( **अथ भाष्यकारः स्वमतेन रचयति**–) अथवा एवं प्राप्तम् । '**अभावादतिरात्रेषु गृह्यते**' इति । यदेतत् प्राक्तं अतिरात्रेषु षोडशिग्रहणं, वैकल्पिकं तत् । विकल्पेनैव सर्वद्विरात्रेषु प्राप्तं नियम्येत 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति । तस्योपसंहारे कृते अन्यद्विरात्रेषु अभावः । अभावात् अङ्गिरसां द्विरात्रे नियतो गृह्यते 'षोडश्युत्तरे' इति । '**अन्वयो वाऽनारभ्यविधानात्** ।' अन्वितानि षोडशिना सर्वद्विरात्रेषु उत्तराण्यहानि, प्रत्यक्षश्रवणात्, 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनारम्यविधानेन । ननु उपसंहारः परिसंख्या वा 'षोडश्युत्तरे' इति । उच्यते । न शक्यं प्रत्यक्षश्रवणं परिसंख्यातुं विशेषवचनेन । त्रयो हि दोषाः प्रादुःष्युः अस्वार्थग्रहणं, परार्थकल्पना, प्राप्तबाधश्च । न चोपसंहारः, भिन्नत्वात् वाक्ययोः । किमर्थं तर्हीदं 'षोडश्युत्तरे' इति? नैवैतद्विधानं षोडशिनः । किं तर्हि? वैखानसस्य साम्नः । वैखानसं तत् साम पूर्वेद्युर्भवति इति विधीयते, उत्तरे षोडशी इत्यनूद्यते अनारम्यविधानेन प्राप्तत्वात् । तस्मात् प्राप्तस्य षोडशिनो ग्रहणमिति ।

**टुप्**— 'षोडश्युत्तरे' इति प्रकरणात् अस्मिन् द्विरात्रे इति गम्यते । द्विरात्रमात्रे श्रुत्यैव विधानम् । तस्मात् अङ्गिरसां द्विरात्रे अनेन प्रथमं प्राप्तिः, पश्चात्तु प्रकरणात् । किमर्थं तर्हि प्रकरणाम्नानं? परिसंख्यार्थम् । काऽत्र परिसंख्या? अङ्गिरसां द्विरात्रे एव षोडशी, नान्येषु द्विरात्रेषु । न पदार्थपरिसंख्या ( षोडश्येव, नान्ये पदार्था इति ) यदि बहवः पदार्था द्विरात्रेषु श्रूयेरन्, तथा सति एतत् ( वचनं ) पदार्थपरिसंख्यां कुर्यात् । न च पदार्थाः श्रूयन्ते । तस्मात् क्रतुपरिसंख्या ।

**शा**— वृत्त्यन्तरकारव्याख्यानं अधिकरणस्यानुपपन्नं इति मन्वानेन भाष्यकारेण व्याख्यानान्तरमारब्धम् । तत्र यः पूर्वस्मिन् व्याख्याने सिद्धान्तः स एव पूर्वपक्षः परिसंख्येति । सिद्धान्तस्तु परिसंख्यायाः त्रिदोषत्वात् वैखानसविधिशेषोऽयं, न विधिः परिसंख्या वा । तस्मात् सर्वद्विरात्रेषु उत्तरेषामह्नां नियत एव षोडशी, सामान्यवचनेन प्राप्तत्वात्, वचनान्तरेण अपरिसंख्यातत्वात् ।

**सोम** — स्तोत्रशस्त्रबाधवत् द्विरात्रान्तरे षोडशिनोऽप्यबाधः परिसंख्याया अभावादित्युत्थितेः **संगतिः** । नहि सामान्यशास्त्रस्य सामान्यशास्त्रत्वेन दुर्बलत्वं, किंतु मन्थरप्रवृत्तिकतया । इह तु सामान्यशास्त्रमेव शीघ्रप्रवृत्तिकं, न विशेषशास्त्रं इति सिद्धान्तः । **सूत्रार्थस्तु**– अङ्गिरसां द्विरात्रे षोडशिनः प्राप्त्यभावात् अप्राप्तविधानान्न परिसंख्या । ततश्च तदितरद्विरात्रेष्वपि गृह्यते इति **वृत्तिकारपक्षे, भाष्यकारपक्षे** तु द्विरात्रान्तरेषु परिसंख्यातत्वेन षोडशिनियमस्याभावात् अङ्गिरसां द्विरात्रे एव नियमेन षोडशी गृह्यते इति ।

**वि**— 'द्विरात्रेऽङ्गिरसां षोडश्यप्राप्तः किं विधीयते । परिसंख्यायते वा, ऽऽद्यश्चोदकाच्छीघ्रबुद्धितः ॥, अनारम्य विधेः प्राप्ते परिसंख्याऽतिदेशतः । विकल्पोऽन्यद्विरात्रेषु प्रोक्तं वृत्तिकृतो मतम् ॥' अथ भाष्यकारमतम्– 'परिसंख्या पूर्वपक्षो न सा युक्ता त्रिदोषतः । अप्राप्तस्यार्थवादेन विधेयः स न गम्यते ॥'

**भाट्ट**— अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेऽहन् साम भवति षोडश्युत्तरे' इति श्रुतम् । तत्र **वृत्तिकारेण** षोडश्युत्तरे इत्ययं अपूर्वविधिः इति पूर्वपक्षं कृत्वा 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति अनारम्यविधिना उत्तरस्मिन्नहनि अतिरात्रसंस्थाकत्वात् सर्वद्विरात्रेषु विकल्पेन अतिदेशतः प्राप्तस्य षोडशिनो नियमविधायिना उपसंहारार्थः । **न च** अनारभ्याधीतविधेः अतिदेशतः ब्राह्मणकर्तृकत्वनिमित्ते प्राप्तस्य षोडशिनः अनैमित्तिकत्वार्थत्वेनापि उपपत्तेः नावश्यं नियमार्थत्वं इति **वाच्यम्** । तथात्वे अस्यापि अनैमित्तिकत्वार्थत्वाङ्गीकारेण उपसंहारोपपत्तेः नियमफलकत्वे संभवति अपूर्वफलकत्वस्यान्याय्यत्वाच्च । **वस्तुतस्तु** उपदेशेन षोडशिविधौ निमित्त-

संबन्धस्यैव अभावपक्षस्यापि अनतिदेशात् फलद्वयस्यापि सिद्धिः इति फलसांकर्यमेवात्र युक्तम्। 'चतुर्थेचतुर्थेऽहन्यहीनस्य' इत्यत्र चतुर्थातिरिक्ताहरन्तरेषु अतिरात्रसंस्थाकत्वे तत्र षोडशिपरिसंख्यार्थत्वात् फलत्रयसांकर्यमपि। अत्र च प्राचां मते षष्ठीस्थले परस्परान्वयस्य व्युत्पन्नत्वात् द्विरात्रसंबन्ध्युत्तराहस्यैव उद्देश्यत्वेऽपि न विशिष्टोद्देशः। **यदा तु** षष्ठीस्थलेऽपि व्युत्पत्त्यन्तरकल्पनागौरवपरिहारार्थं तस्या अपि क्रियाऽन्वयः एवाङ्गीक्रियते **तदा** द्विरात्राद्युद्देशेनैव षोडशिग्रहणनियमविधिः। तस्य च उत्तरेऽहन्येव अतिरात्रसंस्थाकत्वेन पक्षप्राप्तेः उत्तरेऽहनीत्यनुवादः। **अथवा** अस्तु द्विरात्राद्युद्देशेन उत्तराद्यहरविकरणकषोडशिग्रहणविधिः। अत एव 'मध्यमेऽहंस्त्रिरात्रस्य' इत्यादौ त्रिरात्रमध्यमस्य क्व चित् अतिरात्रसंस्थाकत्वाभावेऽपि तदधिकरणस्य अपूर्वस्यैव षोडशिनो विधानात् न क्षतिः। अतश्च 'षोडश्युत्तरे' इत्यनेन 'उत्तरेऽहन् द्विरात्रस्य' इत्यस्योपसंहारात् द्विरात्रान्तरे षोडशिग्रहणविकल्पस्य बाधः इति सिद्धान्तितम्।

**भाष्यकारेण तु** अन्यथा व्याख्यातम्। तस्यायमाशयः। न तावत् पूर्वपक्षो युज्यते। मन्थरेणापि अतिदेशेन विकल्पस्य, मन्थरेणापि च सामान्यवाक्येन षोडशिग्रहणनियमस्य प्राप्स्यमानतया विधिवैयर्थ्यात्। नापि सिद्धान्तः, सामान्यवाक्यस्य वैयर्थ्यप्रसङ्गेन उपसंहारानुपपत्तेः। 'पुरोडाशं चतुर्धा करोति' इत्यादौ हि शाखान्तरत्वान्न वैयर्थ्यम्। 'सप्तदश सामिधेनीः' इत्यादावपि एकेन द्वारसंबन्धः, अपरेण क्रतुसंबन्धः इति न वैयर्थ्यम्। एवमन्यत्रापि तत्रतत्र सार्थक्यं द्रष्टव्यम्। प्रकृते तु कथमपि सार्थक्यासंभवात् नोपसंहारः। किंच वैखानसविधिशेषस्यास्य तत्स्तावकत्वेनोपपत्तौ न विध्यन्तरकल्पनया उपसंहारकत्वं युक्तम्। अतः उपसंहारः इति पूर्वपक्षं कृत्वा स्तावकत्वं इति सिद्धान्तः कार्यः, इत्येवाधिकरणरचना कार्येति।

**न्यायबिन्दुः**—अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेऽहन् साम भवति, षोडश्युत्तरे' इति षोडशिविधिः। **न च** 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति सामान्यवचनात् प्राप्तिः, अस्य विशेषवचनत्वेन शीघ्रप्रवृत्त्या विधिसंभवात्। **इति प्राप्ते**, प्रयोजनाभावात् शीघ्रप्रवृत्तेः द्विरात्रान्तरपरिसंख्यैव षोडशिनियमस्य क्रियते। तेन अङ्गिरसां द्विरात्रे एव नियमः, द्विरात्रान्तरे तु प्रकृतिवत् विकल्प एव इति वृत्तिकृत्। भाष्यकारास्तु परिसंख्यायां त्रैदोष्यात् वैखानसविध्यर्थवादत्वमेव इत्याहुः।

**मण्डन**—'प्राप्तस्य तस्य श्रवणं द्विरात्रे।'

**शंकर**—'द्विरात्रेऽङ्गिरसां नित्यः।' १३, 'सोऽन्येष्वपि मतान्तरे।' १४.

**अङ्गीकृता ग्लानिर्न दोषाय इति न्यायः।**

सोमपानं हि लोके वमनायैव प्रयोजनाय क्रियते। वमने हि अन्तर्गतदोषनिःसारणेन धातुसाम्यं जायते। ततश्च तात्कालिकेन्द्रियवीर्यशोषाभ्युपगमेनैव लोके वमनप्रवृत्तेः 'अङ्गीकृता ग्लानिर्न दोषाय' इतिन्यायेन लौकिकसोमवमने दोषो नास्ति। **कु.** ३।४।१६।३९.

**अङ्गुलम्।** 'तिर्यग् यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः। प्रमाणमङ्गुलस्योक्तम्।' **सु.** पृ. १२८.

**अङ्गुलीदीपिकया ध्वान्तध्वंसविधिः इति न्यायः।**

अङ्गुल्या वर्तिता दीपिका अङ्गुलीदीपिका। अनया ध्वान्तस्य अन्धकारस्य ध्वंसविधिः क्रियमाणः नो सफलतां प्राप्नोति। यत्र महाकर्मनिष्पत्तये स्वल्पं अर्थात् तत्रासमर्थप्रायं कारणं प्रयुज्यते, तत्रायं संचरति इति। **साहस्री.** ८७७.

**अङ्गुल्यग्रे करिणां शतं इति न्यायः।**

यत्र अश्रद्धेयतोपन्यासः विवक्ष्यते, तत्रायं अवतरति इति। **साहस्री.** ८७८.

**अङ्गुष्ठपर्वमात्रं देवतानामवद्यति। भा.** १०।२।२।६. * अङ्गुष्ठपर्वमात्रता अवदानधर्मः पुरोडाशादौ। **वि.** ३।४।१८. * प्रमाणवेलायां यावद्भिरङ्गुष्ठपर्वमात्रैरुपलक्षितः (पुरोडाशादिः) स यागसाधनम्। **वा.** ६।४।१।२.

**'अङ्गुष्ठमात्रं पुरुषं** निश्चकर्ष बलात् यमः' **इति** यदपि द्वैपायनेनोक्तं, तदपि काव्यशोभार्थं विस्पष्टमृत्युव्यवहारप्रशंसनार्थं च पतिव्रताप्रशंसापरे वाक्ये प्रजापतिवपोत्खेदनादिवत् द्रष्टव्यम्। **वा.** २।१।२।५ पृ. ४०३.

**अचिकित्स्याङ्गवैकल्यस्य** काम्येषु नाधिकारः। नित्यानां तु त्यक्तुमशक्यत्वात् ईषदङ्गलोपं सोढ्वाऽपि अधिकारो भवति। **वि.** ६।१।१०.

**'अचिन्त्याः खलु ये भावा न तांस्तर्केण साधयेत्' इति न्यायः।**

ये भावा जगज्जन्मोपादाननिमित्तपरिमाणधर्माऽधर्मादयः पदार्थाः चिन्तयितुमयोग्यास्तान्न तर्केण साधयेदिति। नहि ते तर्केण साधयितुं शक्यन्ते, तर्कान्तरेण तेषां बाधसंभवात्। **साहस्री.** ७५५.

**अचेतनात्** चेतनोत्पत्तिरस्ति नास्ति इति विवादास्पदीभूतमिदानीम्। **ऋजु.** पृ. १४९.

**अचेतनेष्वपि चेतनवदुपचारो दृश्यते इति न्यायः।**

देशान्तरप्राप्तिलक्षणकार्यदर्शनादचेतनेष्वपि क्रियाव्यवहारः 'अयमस्य कोणोऽभिनिःसृतः, अयमभिप्रविष्टः' इति। 'अभिनिष्क्रामति द्वारम्' (पा० ४।३।८६) इति सूत्रमहाभाष्योक्तोऽयं न्यायः। **साहस्री.** ८४१.

**'अचोदकाश्च संस्काराः'।** (२।२।६।१८) द्रव्यदेवतासंयोगेऽपि च एवंजातीयकानां यजिमत्त्वं निराकृतं 'अचोदकाश्च०' इति। **वा.** २।३।९।२० पृ. ६०९–६१०. 'ऐन्द्रवायवं गृह्णाति' इत्यादौ द्रव्यदेवताश्रवणेऽपि यजिमत्त्वस्य निरस्तत्वात्। **सु.** पृ. ९४४. **सूत्रार्थस्तु** — चशब्दो युक्त्यन्तरसमुच्चये। हृदयाद्यैन्द्रवायवादिशब्दसंदर्भाः अचोदकाः यागानां विधायकाः न भवन्ति। किंतु संस्काराः अवदानग्रहणविधायिनः एवैते। **कु.**

**अचोदितं च कर्म भेदात्।** ३।४।११।३० ॥

वारुणचतुष्कपालेष्टिः अश्वस्य प्रतिग्रहीतुर्दातुर्वा इति विचारे पूर्वपक्षमाह। वारुणचतुष्कपालरूपं कर्म अश्वदानकर्तुः यजमानस्य अचोदितं, न चोदितं, न विहितम्। भेदात् दानप्रतिग्रहकर्मणोः भेदात्। 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति वचने च प्रतिग्रहस्यैव ऋत्विक्कर्मणः उक्तत्वात्। चशब्दः तुशब्दार्थकः सिद्धान्तपक्षस्य व्यावर्तकः।

अथवा यजमानं चतुष्कपालकर्तृत्वेन अचोदितं विजानीमः इत्यर्थः। किंवा चतुष्कपालरूपं कर्म वारुणेष्टेः निमित्तत्वेन अचोदितं इत्यर्थः। अचोदितपदस्य त्रेधा संबन्धः, अक्षरार्थस्तु एक एव। अत्र कर्मभेदात् इत्यैकपद्यपक्षे दानप्रतिग्रहरूपयोः कर्मणोः भेदात् इत्यर्थः। कर्म अचोदितं भेदात् इति पदभेदपक्षे अन्वयः। तस्मादियमिष्टिः प्रतिग्रहीत्रा ऋत्विजा कर्तव्या इति पूर्वपक्षः।

**सा लिङ्गादार्त्विजे स्यात्।** ३१ ॥

सिद्धान्तमाह। सा इष्टिः न प्रतिग्रहकर्तुः, किं तर्हि हेतुकर्तुः प्रतिग्रहं कारयितुः दातुर्यजमानस्य स्यात्। आर्त्विजे ऋत्विजः प्रेरके यजमाने दातरि इष्टिः स्यात्। कुतः? लिङ्गात् 'प्रजापतिर्वरुणायाश्वमनयत्' इत्याद्युपक्रमे दातुः पीडाश्रवणात्। उपक्रमानुसारेण 'यावतोऽश्वान् प्रतिगृह्णीयात्' इति वाक्यशेषे प्रतिग्राहयेत् इति णिजध्याहारेण अर्थकरणस्यावश्यकत्वात्। तस्मात् दातुरिष्टिः इति सिद्धान्तः। यद्यपि मैत्रायणीयशाखावाक्यानुसारेण प्रतिग्रहीतुरिष्टिः इति सिध्यति तथापि शाखान्तरवाक्यानुसारेण दातुरिष्टिः इति स्वीकर्तव्यमेवेति इह साधितं इति न दोषः। **के.**

* अचोदितं च कर्म भेदात्। येन कारणेन अर्थवादानुरोधेन विधिर्न प्रवर्तते, तेन कारणेन प्रतिग्रहनिमित्तकत्वेन श्रुतं इष्ट्याख्यं कर्म दातुरचोदितम्। **सु.** पृ. १४९७.

**अच्छावाकः** होतुः पुरुषः। तृतीयवर्गस्थोऽयम्। अयं तृतीयी तृतीयांशभाक्। चतस्रो गा लभते। 'अच्छावाकं नेष्टा दीक्षयति'। **वि.** ३।७।१७. * **अच्छावाकस्य** साम रैवतं विश्वजिति सर्वपृष्ठे। **भा.** १०।६।५।१४, * अच्छावाकस्य शाक्वरं पृष्ठं विश्वजिति। ७।३।३।८.

**अजः** पशुषु मुख्यः, प्रजापतेर्मुखतः सृष्टत्वात्। **वि.** १।४।१४. * **अजस्य** बालः बर्करः। 'बर्करस्तरुणः पशुः' इति तु अमरः। **वा.** ३।४।४।१३. पृ. ९२०. * **अजद्रव्यस्य** प्राकृतस्य बाधः, द्यावापृथिव्यादौ धेनुवत्स–ऋषभशब्दोपदिष्टगोद्रव्येण। **भा.** १०।२।२९।६८, * अजद्रव्यस्य प्राकृतस्य वायव्यपशौ उपदिष्टेन श्वेतगुणेन न बाधः। १०।२।३०।६९, * **अजमांसानां** अविमांसानां च विषमः पाकः। यावता कालेन आजानि पच्यन्ते, तावता आविकानि विलीयन्ते। ११।४।१०।३७.

**अजगरवृत्तिन्यायः** । अजगरो यथा एकदा भुक्त्वा बहून् वारान् भोजनं विनैव आस्ते । किंवा स्थूलशरीरत्वात् गमनादिव्यवहारं मन्दंमन्दं करोति तद्वत् । **साहस्री.** ९५७.

* **अजस्रपक्षः** नाम अजस्रं निरन्तरं त्रयोऽप्यग्नयः पृथग्धार्या इति । उद्धरणपक्षे तु गार्हपत्यः एव निरन्तरं धार्यते, होमकाले तु गार्हपत्यायतनात् कियांश्चिदग्निः आहवनीयायतने दक्षिणाग्न्यायतने च स्थाप्यते । होमोत्तरं तु तौ निर्वातौ स्याताम् । इदानीं तु प्रायः सर्वैः अजस्रपक्ष एव स्वीक्रियते, उद्धरणपक्षे प्रायश्चित्ताधिक्यप्रसङ्गात् । **के.** * **अजस्रपक्षे** अग्नेरुद्वाने प्रायश्चित्तं न ज्योतिष्मतीष्टिः, किंतु मनस्वतीहोमाद्येव । **भाट्ट.** ९।४।६. * अजस्रपक्षे अरणित्रयं, उद्धरणपक्षे तु एकैवारणिः । उत्तराधरभेदेन तु भेदः । **संकर्ष.** ३।२।३२, * अजस्रपक्षे आहवनीयस्य सदा प्रदीपनं अरणिर्वा सदा धारणोपायः । ३।२।६, * अजस्रपक्षे सोमान्ते शालामुखीयस्यापि समारोपः । ३।२।३०.

* **अजहत्स्वार्था** बलवती, मुख्यार्थस्य वाक्यार्थे अन्वयात् । जहत्स्वार्था तु दुर्बला, अनन्वयात् । **बाल.** पृ. १४२, * अजहत्स्वार्था लक्षणा यत्र शक्यलक्ष्ययोरुभयोरपि प्राधान्यं ‘ काकेभ्यो दधि रक्ष्यतां ’ इत्यादौ, तत्रैव इति **गौतमीयाः** । तत्तु पारिभाषिकम् । पृ. १४२.

**अजहत्स्वार्था वृत्तिः इति न्यायः** । यथा एवं हि दृश्यते लोके, भिक्षुकोऽयं द्वितीयां भिक्षां समासाद्य पूर्वां नो जहाति, संचयायैव प्रवर्तते । किंच, यत्र वाच्यार्थस्य अर्थान्वयः, तत्र अजहत्स्वार्था वृत्तिर्भवति । यथा ‘छत्रिणो गच्छन्ति’ ‘काकेभ्यो दधि रक्ष्यतां’ इत्यादि । अत्र छत्रिपदमेकसार्थवाहित्वेन छत्र्यच्छत्रिपरमस्ति । काकपदं च काकतदितरसाधारणदध्युपघातकत्वावच्छिन्नपरमस्तीति ज्ञेयम् । **साहस्री.** ४३६. * **अजहत्स्वार्थाः** सर्वा वृत्तयः इति तत्सिद्धिसूत्रे उक्तम् । **सु.** पृ. १०८०. * अजहत्स्वार्थाः सर्वाः शब्दप्रवृत्तयः, पूर्वशक्त्यनुसारसंभवे शक्त्यन्तरकल्पने प्रमाणाभावात् । **वा.** १।४।१२।२३-१ पृ. ३५६. न जहाति शब्दः स्वमर्थं यासु वृत्तिषु इति विग्रहः । **सु.** पृ. ४९८. * **अजहत्स्वार्थया** जहत्स्वार्था बाध्यते, ते उभे अपि प्रकृतिगते, यथा ‘ सूक्तवाकेन प्रस्तरं प्रहरति ’ । अत्र सूक्तवाकदेवतानां संयोगे कल्पिते तदुपपत्त्यर्थं प्रक्षेपविशेषको यागः प्रहरतिना लक्ष्यते इति । **बाल.** पृ. १४२, * अजहत्स्वार्थया जहत्स्वार्था बाध्यते प्रकृतिप्रत्ययगते उभे अपि । यथा ‘ प्रोद्गातॄणां ’ इत्यत्र उद्गातृप्रातिपदिकं उद्गीथाख्यतृतीयसामभक्तेर्गातुः एकस्यैवाभिधायकम् । तत्र उद्गात्रादिपुरुषत्रयलक्षणा अजहत्स्वार्था । बहुवचने तु एकत्वलक्षणा जहत्स्वार्था, सा पूर्वया बाध्यते इत्युक्तं तृतीये । पृ. १४२. * **अजहत्स्वार्थलक्षणया** केवलविधेयस्तुतिपरत्वं अर्थवादानां, न स्वार्थपरत्वं इति प्रच्छन्नबौद्धाः के चिन्मीमांसकंमन्याः ( **प्राभाकराः** ) संगिरन्ते । वैदिकशिरोमणयो **वार्तिककृतस्तु** सर्वेष्वपि अर्थवादवाक्येषु अवयवार्थानतिक्रमेणैव अजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वं ( संगिरन्ते ) । **कु.** १।२।१।१८ पृ. ३०. * **अजहल्लक्षणा** शक्यलक्ष्योभयस्य क्रियान्वयित्वे इति **संप्रदायः** । स्वशक्यार्थविशेष्यकान्वयबोधप्रयोजिका अजहत्स्वार्था । यथा ‘ यष्टीः प्रवेशय ’ इत्यादौ, शक्यार्थस्यापि क्रियाऽन्वयात् । इयमेव उपादानलक्षणा इति **आलंकारिकाः** । **मणि.** पृ. ७५.

**अजाकृपाणीयन्यायः** । अजाकृपाणपदाभ्यां तदागमनपतने लक्ष्येते । अजागमनमिव कृपाणपतनमिव अजाकृपाणं, ततः अजाकृपाणमिव अजाकृपाणीयमिति । एवमागच्छन्त्या अजायाः कृपाणपतनाद्यथा वधः, तत्सदृशं मरणमिति फलितोऽर्थः । **साहस्री.** ५६.

**अजागलस्तनन्यायः** । यथा अजायाः छाग्याः गले कण्ठे स्तनौ स्तनाकारौ मांसविकारौ निष्प्रयोजनौ स्तः, तथा प्रकृतेऽपि । उक्तं च वसिष्ठसिद्धान्ते ‘चलसंस्कृततिग्मांशोः संक्रमो यः सुसंक्रमः । अजागलस्तन इव राशिसंक्रान्तिरुच्यते ॥’ इति । **साहस्री.** ५८२.

**अजातपुत्रनामोत्कीर्तनन्यायः** । भाविसंज्ञया निर्देशो विवक्षितोऽत्र । **साहस्री.** १६७.

* **अजावशाशब्देन** चोदिते कर्मणि छागाशब्देन वाचिषु निगमा भवन्ति । **भा.** १०।४।१४।२७.

**अञ्झलून्यायः**। अचः स्वराः। हलो व्यञ्जनानि। अयं श्लोकेन विवृतः। तथाहि– 'एकाकिनोऽपि राजन्ते सारसत्त्वाः स्वरा इव। व्यञ्जनानीव निःसत्त्वाः परेषामनुगामिनः॥' इति। **साहस्री.** ९३४.

* **अज्ञातशक्तिकस्य ज्ञापकत्वायोगः** । **सु.** पृ. १२१०.

* **अञ्यानयः** 'शतायुधाय' इति पञ्च मन्त्राः प्राणभृन्न्यायेन (१।४।१२।३–६)। **संकर्ष.**

* **अञ्जनं** अग्नीषोमीयपशोः। 'स्रुच्यमाघार्य जुह्वा पशुमनक्ति' स्वरुणा स्वधितिना वा। **वि.** ८।१।५, * अञ्जनं चक्षुषोः संस्कारः ज्योतिष्टोमे क्रत्वर्थः यजमानार्थः, नासौ फलप्रयुक्तः। तत्र फलश्रुतिरर्थवादः। ४।३।१. * अञ्जनं जुह्वा परिधिधर्मः। 'वसुरसि' इत्यादिस्तत्र मन्त्रः। **भा.** १२।२।१०।२६, * अञ्जनं यूपसंस्कारो घृतेन। ११।३।४।५. * अञ्जनं शर्कराणां घृतेन, न तैलादिना। **वि.** १।४।१९, * अञ्जनं हविर्धानशकटाक्षस्य सोमक्रयणीपदरजोभिः घृताक्तैः।४।१।१०. * **अञ्जनस्य** ('अक्ताः शर्करा उपदधाति' 'तेजो वै घृतम्') द्रव्यसामान्येन करणासंभवेन, प्रवृत्ते वैशेषिकविषयकत्वेन सामान्यस्य विशेषे पर्यवसानाय वाक्यशेषावश्यकत्वम् (स च 'तेजो वै घृतं' इति)। **पराक्रमः.** * अञ्जनस्य स्वरुर्न प्रयोजकः। अग्नीषोमीये पशौ यूपानुनिष्पन्नप्रथमशकलनाशे येन केन चित् काष्ठेन अञ्जनं पशोः। **भाट्ट.** ४।२।१. * **अञ्जन–अभ्यञ्जन–वपन–पावनानां** त्रित्वविशिष्ट एकः पदार्थः, इति बहुयजमानकेषु अहीनादिषु तादृशेन पदार्थेन अनुसमयः। **भा.** ५।२।३।४–५, * **अञ्जनवपनादि** यजमाने गुणभूतम्। ४।३।१।११, * **अञ्जनाज्ये** पशुगतयूपसंबन्धिनि दर्शपूर्णमासगताज्यनाम्ना धर्माणां नातिदेशः। ७।३।७।१८. * **अञ्जनादीनां** भोक्त्रंशपातित्वं संस्काराधिकरणव्युत्पाद्यम् (३।८।२।३–८)। **सु.**३।७ पृ. ५६. * '**अञ्जनादिपरिव्याणान्तं** यजमानो यूपं नावसृजेत्' इति वचनेन यजमानस्य यूपत्यागनिषेधः यूपैकादशिन्यां अञ्जनादिकाण्डस्यानुसमये सति उपपद्यते न पदार्थानुसमये। **वि.** ५।२।५, * अञ्जनादिपरिव्याणान्तकाण्डस्य यूपगणे अनुसमयः। 'यूपस्य घृतेनाञ्जनं, उच्छ्रयणं, अवटस्य समूहनं, यूपमूलस्य परिवृंहणं, मध्ये रशनया परिव्याणं' इति। सत्रे तु येन केनापि यजमानेन धारणसंभवात् पदार्थानुसमय एव। ५।२।५.

* **अञ्जनाद्याः** यजमानसंस्काराः सत्रे सर्वेषामेव, न तु गृहपतेरेव। **वि.** १२।४।१४. * दीक्षितो दक्षिणं नयनं प्रथममङ्क्ते 'सव्यं हि मनुष्याः पूर्वमञ्जते विधृत्यै'। **वा.** १।३।४।९ पृ. २२१. * 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति विहितं क्रत्वर्थं, क्रतुसंबन्धश्च प्रकरणेन। फलश्रवणं च अर्थवादः। **वि.** ४।३।१.

**अञ्जनाभ्यञ्जने सत्रे गौग्गुलवादिना नवनीतस्य समुच्चयः॥**

**संस्कारे चान्यसंयोगात्। १०।४।६।१०॥**

**भाष्यं**— अस्ति अञ्जनाभ्यञ्जनो नाम एकोनपञ्चाशद्रात्रः। तत्रेदं समाम्नायते 'गौग्गुलवेन प्रातःसवने समञ्जते, अभि वाऽञ्जते, पैलुदारवेण माध्यंदिने सवने, सौगन्धिकेन तृतीयसवने' इति। अस्ति तु प्रकृतौ नवनीतेन अभ्यञ्जनम्। तदिह चोदकेन प्राप्तम्। तत्र संशयः किं तत् वैकृतेन बाध्यते, उत नेति। किं प्राप्तं? प्रत्यक्षश्रुतत्वात्, 'वैकृतेषु अञ्जते अभि वाऽञ्जते' इति च प्रकृतिलिङ्गसंयोगात् बाध्यते इति। **आह,** ननु सुत्याकाले अञ्जनं अभ्यञ्जनं च सत्रे, दीक्षाकाले नवनीतेनाभ्यञ्जनं प्रकृतौ, अन्यकालत्वात् प्रयोजनान्तरे वर्तते इति बाधो न स्यात्। **उच्यते।** प्रयाजवत् अन्यकालमपि तत्कार्यमेव द्रष्टव्यम्। कालमात्रमन्यत्, पदार्थस्तु स एव। यथा 'तिष्ठन्तं पशुं प्रयजन्ति' इति तिष्ठति पशौ प्रयाजा वर्तमानाः प्राकृतकार्यका एव भवन्ति, एवमिहापि द्रष्टव्यम्। **एवं प्राप्ते ब्रूमः।** संस्कारे अञ्जने अभ्यञ्जने च प्राकृतेन सह समुच्चयः स्यात्। कुतः? अन्यसंयोगात्। अन्यकालमिदं कार्यान्तरे वर्तते। एवं चोदकोऽनुग्रहीष्यते। तस्मात् समुच्चय इति।

**प्रयाजवदिति चेत्। ११॥**

**भाष्यं**— इति यदुक्तं तत् परिहर्तव्यम्।

नार्थान्यत्वात् । १२ ॥

**भाष्यं**— न च प्रयाजवत् भवितुमर्हतीति । कुतः ? अर्थान्यत्वात् । स्नेहनार्थे आदौ नवनीतं सुखप्रचाराय । प्रवृत्ते कार्ये तुल्याकालं गौग्गुलवेन अभ्यञ्जनं विरूक्षीकरणार्थम् । प्रत्यक्षं कार्यान्तरं वर्तते, इति न प्राकृतं निवर्तयितुमर्हति ।

**सोम**— पूर्वत्र भिन्नकार्यत्वात् अनिवृत्तावपि इहैककार्यत्वात् निवृत्तिः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**— संस्कारे अभ्यञ्जने ( गौग्गुलवादीनां नवनीतेन ) समुच्चयः भिन्नकार्यसंयोगात् इति । [ यत्तु सोमनाथेन गौग्गुलवेन 'यन्त्राद्युपायसंपादितगुग्गुलुद्रव्येणेत्यर्थः' इत्युक्तं तन्न, गौग्गुलवादिशब्दत्रयेण तत्तत्तैलानामेव विवक्षितत्वात् इति ध्येयम् । **के.** ]

**वि**— 'अभ्यङ्गो नावनीतः किं बाध्यो गौग्गुलवादिभिः । न वा, ऽऽद्यो लेपजैकत्वा, न्न शैत्यस्नेहभेदतः ॥'

**भाट्ट**— अञ्जनाभ्यञ्जनाख्ये सत्रे 'गौग्गुलवेन प्रातःसवनेऽभ्यञ्जते' इति श्रुतम् । तत्र प्रकृतिप्राप्ताभ्यञ्जनानुवादेन कालद्रव्यरूपानेकगुणविधाने वाक्यभेदात् अवश्यं विधातव्येन अभ्यञ्जनान्तरेण प्राकाशाध्वर्युदानवत् ( १०।३।१७।६३–६४ ) प्राकृतकार्यनिष्पत्तेः प्राकृताभ्यञ्जनस्य तदीयकालद्रव्ययोश्च बाधः । **इति प्राप्ते, यदि** तावत् प्रकृतौ अभ्यञ्जनस्य दीक्षाऽङ्गत्वात् दीक्षायाश्च फलाधानयोग्यतासंपत्त्यनुकूलादृष्टजनकत्वेन अभ्यञ्जनस्यापि अदृष्टार्थत्वं, **तदा** उपहोमन्यायेन ( ५।२।९।१७–२० ) एतदभ्यञ्जनस्य तत्कार्यापन्नत्वे नैव किंचित् प्रमाणम् । अथ तु अस्य दीक्षारूपत्वेऽपि शरीरश्लक्ष्णीकरणद्वारा कर्तृसंस्कारकत्वस्य अभ्युपगमात् एककार्यत्वमुच्येत, ततो नवनीतेन प्रकृतौ श्लक्ष्णीभावकरणेऽपि गौग्गुलवेन रूक्षीकरणात् न तस्य तत्कार्यापन्नत्वम् । अस्तु वा तत्, तथापि कर्तृसंस्कारस्य तदुत्तरभाविकरिष्यमाणसर्वपदार्थोपकारकत्वात् प्रातःसवनपूर्वभाविपदार्थेषु नवनीताभ्यञ्जने बाधकाभावात् युक्त एव समुच्चयः ।

**न्यायबिन्दुः**— अञ्जनाभ्यञ्जने सत्रे 'गौग्गुलवेन प्रातःसवनेऽभ्यञ्जते' इति गौग्गुलवाभ्यञ्जनं प्राकृतनवनीताभ्यञ्जनस्य निवर्तकम् । **इति प्राप्ते,** नवनीताभ्यञ्जनस्य स्नेहनार्थत्वेन, गौग्गुलवादेस्तु चन्दनादिवत् रूक्षीकरणार्थत्वेन भिन्नार्थत्वात् समुच्चयः इति सिद्धान्तः ।

**मण्डन**— 'तथा गौग्गुलवाञ्जनम् ।' ८.

**शंकर**— 'नवनीतं च गुग्गुलोः ।' बाध्यं न । ८.

* **अञ्जलिः** द्विहस्तसंयोगः सव्याकोशः अर्थात् कर्तव्यः । तथा हि शक्यते होमो निर्वर्तयितुम् । **भा.** १।४।१४।२५. देवताप्रसादाभयप्रार्थनादौ संहतहस्तसंयोगमात्रमञ्जलिः । 'नाञ्जलिना वारि पिबेत्' इत्यादौ व्याकोशः । **वा.** * **'अञ्जलिना** सक्तून् प्रदाय (प्रदाव्ये इति भाष्ये पाठः ) जुहुयात्' । अत्र अञ्जलिः सक्तुग्रहणशक्ततया प्रसृतो ग्राह्यः, न नमस्कारकालीन इव । शक्तिरत्र नियामिका । **वि.** १।४।२०. * **अञ्जलौ** प्रत्यङ्गभूतो दक्षिणस्य पाणेः सव्यः पाणिः । तेन विना अञ्जलिरेव न भवति । नहि द्वाभ्यां दक्षिणाभ्यां अञ्जलिः इत्युच्यते । **भा.** ६।६।२।१५.

* **अणिमाद्यैश्वर्यं** 'स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान्' 'तरति शोकमात्मवित्' 'स यदि पितृलोककामो भवति संकल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन संपन्नो महीयते' इत्यादिना योगजन्याणिमाद्यष्टगुणैश्वर्यफलानि वर्णितानि । **वा.** १।३।९।२७ पृ. २८८.

⌛ **अणुरपि विशेषोऽध्यवसायकरः इति न्यायः** । इदमित्थमेवेति विषयपरिच्छेदोऽध्यवसायः । अध्यवसानमध्यवसायः । **सहस्री.** २४९.

* नच घटत्वादिकमादाय विनिगमनाविरहः 'अणुरपि०' इति **न्यायेन** संग्राहकतया सत्तायाः लघुत्वस्यैव विनिगमकत्वात् । **भवानन्दीप्रकाशे** उपाधौ । * यत्र तु 'ङः सि धुट्' इत्यादौ उभयोरप्यचारितार्थ्यं, तत्र 'तसिन्' इति सूत्रापेक्षया 'तसादित्युत्तरस्य' इत्यस्य परत्वात् तेनैव व्यवस्था । ( **शेखरः** ) विप्रतिषेधाभावेन 'विप्रतिषेधे' इति सूत्रविषयाभावेऽपि 'अणुरपि विशेषः' इति न्यायेन 'तस्मात्' इति सूत्रस्यैवात्र प्रवृत्तिसिद्धिः । **भूतिः** पृ. २६० परि० ७१.

⌛ **अण्डकुक्कुटीन्यायः** । अर्धजरतीयन्यायवत् अस्यार्थः । **साहस्री.** २१८.

**अतः शब्दः** वृत्तस्यापदेशको हेत्वर्थः । यथा 'क्षेममनुभिक्षोऽयं, अतः अहमस्मिन्देशे प्रतिनिवसामि' इति । एवं अधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातः । अनन्तरं धर्मो जिज्ञासितव्यः इति अतःशब्दस्य सामर्थ्यम् । भा. १।१।१।१ पृ. ८.

**'अतक्र्या कुट्टनीकूटरचना हि विधेरपि' इति न्यायः ।** परनारीं परपुंसा योजयित्री 'कुट्टनी' इति प्रसिद्धा । 'कुट्टनी संभली समे' इत्यमरः । तस्याः कूटरचना, कपटरचनेत्यर्थः । **साहस्री.** ९४७.

**अतस्मिन्स इत्येतद्भवति इति न्यायः ।** अयं 'पुंयोगादाख्यायाम्' ( पा. ४।१।४८ ) इति सूत्रमहाभाष्येऽभिहितः । तथाहि-'चतुर्भिः प्रकारैरतस्मिन्स इत्येतद्भवति-तात्स्थ्यात्, ताद्धर्म्यात्, तत्सामीप्यात्, तत्साहचर्यात् इति । तात्स्थ्यात्तावत्-'मञ्चा हसन्ति' 'गिरिर्दह्यते'। 'मञ्चा हसन्ति' इत्यत्र बालेषु मञ्चत्वारोपान्मञ्चशब्दप्रवृत्तिः हसन्तीतिपदान्तरप्रयोगाद्विज्ञायते इति **कैयटः** । ताद्धर्म्यात्-'जटिनं यान्तं ब्रह्मदत्त इत्याह' ब्रह्मदत्ते यानि कार्याणि, जटिन्यपि तानि क्रियन्ते इत्यतो जटी ब्रह्मदत्त इत्युच्यते । तत्सामीप्यात्-'गङ्गायां घोषः' 'कूपे गर्गकुलम्'। तत्साहचर्यात्-'कुन्तान् प्रवेशय' 'यष्टीः प्रवेशय' इति । इत्येवं यत्र विवक्ष्यते, तत्रायं प्रवर्तते । **साहस्री.** ६२९.

**अतिक्रमाधिकरणम् ।** अतिक्रमणाधिकरणम् । कर्मार्थफलाधिकरणम् । करणमन्त्रप्रकारयं कर्मोपयोगि फलं ऋत्विग्गामि ॥

**कर्मार्थे तु फलं तेषां स्वामिनं प्रत्यर्थवत्त्वात् । ३।८।१४।२९ ॥**

**भाष्यं**—इदं समधिगतं, करणेषु मन्त्रेषु स्वामिनः फलमाशासितव्यमिति । किमेष एवोत्सर्गः ? नेत्याह । क्वचिदृत्विजामपि फलमाशासितव्यमिति, यत्र कर्मार्थं फलम् । यथा 'अग्नाविष्णू मा वामवक्रमिषं विजिहाथां मा मा संताप्तम्' इति । असंततोऽध्वर्युः कर्म शक्नोति कर्तुम् । कर्मसिद्धिर्यजमानस्योपकारिकेति, ऋत्विक्फलमाशासितव्यमत्रेति ।

**वा**—यत्तु असंतापादि फलं कर्मप्रयोगे एवोपयुज्यते, तद्यजमानेनापि तथेष्यते एवेति नाऽऽत्मनेपदेन विरुध्यते ।

**व्यपदेशाच्च । ३० ॥**

**भाष्यं**— यत्र च व्यपदेशो भवति, तत्राऽऽर्त्विजम् । दक्षिणस्य हविर्धानस्याधस्ताच्चत्वार उपरवाः प्रादेशमुखाः प्रादेशान्तरालाः । तत्र हस्तौ प्रवेश्याध्वर्युर्यजमानमाह, किमत्रेति । स आह, भद्रमिति । तन्नौ सहेत्यध्वर्युः प्रत्याह इति व्यपदेशो भवत्यध्वर्योर्यजमानस्य च । तन्नौ सहेत्युभयोर्वचनमध्वर्युयजमानयोः । तस्मादध्वर्युफलमाशासितव्यमत्रेति ।

**वा** —'व्यपदेशादितरेषाम्' ( ३।८।५।१४ ) इत्यत्र ब्राह्मणगतमुदाहृतमिह तु प्रस्ताववशेन मन्त्रगतम् । तद्धि क्लेशेन कल्प्यमानं कदा चिदुभयोर्न शक्यते कल्पयितुमित्याशङ्का स्यात् । कल्पनाहेतुस्तु युगपत्प्रवृत्तेरविशिष्टः इति न किं चिद्गौरवम् । अथ कस्मान्नोभावेव प्रयुञ्जाते ? यदैकेनापि प्रयुज्यमानः शक्नोत्येवोभयगामि फलं प्रकाशयितुं, तदा सिद्धेऽर्थे न किं चिदुभयकर्तृकत्वेन प्रयोजनमस्तीत्यध्वर्युनियमः ।

**शा**—'मा मा संताप्तं' इति असंतापनादिकं फलं कर्मानुष्ठानौपयिकं यजमानस्य आत्मीयकर्माविघातार्थं ऋत्विग्गामि इति युक्तम् ।

**सोम**— पूर्वन्यायात् यजमानगामित्वं फलस्य इत्युत्थानात् **संगतिः** ।

**वि**—'मा मा संताप्तमित्येतत् कस्मिन्, स्वामिनि पूर्ववत् ।, अध्वर्यावस्तु तत् तेन स्वामिकर्मोपयोगतः ॥'

**भाट्ट**—यत्र तु 'मा मा संताप्तं' इत्यादौ इतिकरणविनियुक्ते एव असंतापनादिरूपं फलं ऋत्विग्गामित्वेऽपि क्रतुविरोधिसंतापनिवर्तकतया तदुपयोगि, तत्र 'यजमानस्य सा' इति षष्ठ्या परंपरयाऽपि उपपत्तेः लिङ्गाद्यनुरोधात् ऋत्विग्गाम्येव ।

**न्यायबिन्दुः**—'मा मा संताप्तम्' इति फलं तु ऋत्विग्गामित्वेनानुष्ठानोपयोगितया यजमानस्येष्टमिति ऋत्विग्गाम्येव युक्तम् ।

**मण्डन**—'न स्वामिनोऽसंतपनं फलं स्यात् ।' १५.

**शंकर**— 'असंतापाद्यार्त्विजं तु ।' १७.

*अतिक्रमे अवश्यं कर्तव्ये अन्यतरधर्मातिक्रमे गुणधर्मः अतिक्रमितव्यः । **वा.** ३।३।२।९ पृ. ८१०. * अतिक्रमे निषेधस्य, पुरुषः प्रत्यवैति । **भा.** ६।२।५।१९-२०.

**अतिक्रान्तावेक्षणन्यायः** । सिंहावलोकनन्यायसमानार्थक एवायम् । भूतपूर्वस्य पुनर्विचार इति तदर्थः । **के.** । ' वाक्यात् भविष्यति ' इति वाक्ये ' किं भविष्यति ' इत्यपेक्षायां अतिक्रान्तावेक्षणेन गुणगतस्य व्यापारस्य विधेयत्वप्रतीतिः इत्यवगमः । **सु.** पृ. ७७५.

**अतिग्राह्यः पृष्ठ्ये षडहे ' वैराजस्तोत्राय आग्नेयो गृह्यते ' इत्यत्र देवताविधिः ॥**

' वैराजस्य स्तोत्रायाग्नेयो गृह्यते ' इति वचनेन वैराजस्तोत्राख्यदेवताकयागविधिः । आग्नेय इत्यस्योपांश्वादिवन्नामधेयत्वेन देवतातद्धितत्वायोगात्, चतुर्थ्या आनर्थक्यप्रतिहतत्वाच्च । **इति प्राप्ते,** मान्त्रवर्णिकदेवतालाभेन तत्प्रख्यन्यायेनैव नामत्वेन देवताऽनाकाङ्क्षत्वात् संबन्धसामान्यार्थे षष्ठीस्थाने चतुर्थी । **न च** तादर्थ्यचतुर्थ्या ग्रहाणां स्तोत्राङ्गत्वं विनियोगभङ्गेन वैपरीत्यं वा **शङ्क्यं**, ' ये वा अमी वैराजस्य स्तोमास्तैरेवैते सामन्वन्तः ' इति श्रुत्या सस्तोत्रकग्रहान्तरसाम्यसंपिपादयिषया गौणसामवत्त्वोपपादनस्वारस्यविरोधात् । ' प्रातःसवनेऽतिग्राह्या गृह्यन्ते ' इतिवदवान्तरकालवादो वा सप्तमीकल्पनयेति द्रष्टव्यम् । **संकर्ष.** ३।३।६.

* **अतिग्राह्याः** (१०।८।२३ सू.) अतिक्रम्य ऐन्द्रवायवादीन् गृह्यन्ते इति अतिग्राह्याः नाम ग्रहविशेषाः, अग्निष्टोमे माध्यंदिने सवने आग्नेयः ऐन्द्रः सौर्यः इति त्रयः । **के.** * 'मासिमास्यतिग्राह्या गृह्यन्ते ' सत्रे । **भा.** १०।८।११।२४.

**अतिग्राह्याः प्रकृतौ अग्निष्टोमेऽपि, न विश्वजित्येव ॥**

तानेव प्रकृत्य ' विश्वजिति सर्वपृष्ठे ग्रहीतव्या अप्यग्निष्टोमे ' इति श्रुतोऽग्निष्टोमशब्दः प्रकरणादग्निष्टोमसंस्थविश्वजिद्यागपरः । **इति प्राप्ते,** ' अप्यग्निष्टोमे ' इति अपिशब्दात् द्वितीयवाक्यत्वेन निश्चितेऽपि विश्वजित्पदानुवृत्तौ विशिष्टोद्देशापत्तेर्वाक्येन प्रकरणबाधादग्निष्टोमसंस्थत्वेन यागस्योद्देश्यत्वात् प्रकृतौ वेति न्यायेन ( ३।६।१।२ ) प्रकृत्यग्निष्टोमे एवैष विधिः । **संकर्ष.** ३।३।२.

* **अतिग्राह्यं** चयनं च विकृतिषु चोदकः प्रापयति । **भा.** १०।८।११।२४.

* ' पञ्च ऐन्द्रान् **अतिग्राह्यान्** गृह्णाति ' । क्व चिद् विकृतौ । **भा.** १०।८।११।२६.

**अतिग्राह्याणां पार्ष्ठिकोक्थ्येषु विकल्पः, न पर्युदासः ॥**

प्रकृतितः प्राप्तानां प्रतिषेधे पाद्युकाज्यभागन्यायेन ( १०।८।२ ) विकल्पापत्तेः पर्युदासपक्ष एवाश्रयणीयः, अनुमितवाक्ये लक्षणाया अप्यभावात् । **इति प्राप्ते,** पृष्ठ्यषडहप्रकरणे एव ' वैराजस्य स्तोत्रायाग्नेयो गृह्यते, शाक्वराणामैन्द्रो, रैवतानां सौर्यः ' इति विधाय ' पृष्ठानि वा एतानि पृष्ठ्याच्च्यावयन्ति, यत्रैव पृष्ठानि युज्येरंस्तेषु तेऽतिग्राह्याः ' इति पुनर्विधिदर्शनेन ग्रहणाग्रहणवद्विकल्प एव । पार्ष्ठिकोक्थ्येतरक्रतूनामनुपस्थितत्वेन पर्युदासस्यायुक्तत्वात् । **संकर्ष.** ३।३।४.

**अतिग्राह्याणां पूर्वत्र्यहे उत्तरत्र्यहे च व्यवस्थितविकल्पः ॥**

यद्यप्यैच्छिकस्य तुल्यवद्विकल्पस्य अष्टदोषदुष्टत्वात् व्यवस्थितविकल्प एव युक्तः । नानापृष्ठ्ये षडहे अतिग्राह्या भवेयुः, बृहद्रथंतरपृष्ठ्ये तु नेति वैराजस्तोत्रादिकाले एव तेषां विधानात् । तथापि पृष्ठ्यसामान्ये प्राप्तानां ग्रहाणामङ्गभूतवैराजादिस्तोत्रानुसारेण संकोचायोगात् सर्वत्रैच्छिको विकल्पः । **न च** ग्रहाणां पृष्ठाप्रच्युतिहेतुत्वकथनस्याङ्गत्वे एव पर्यवसानात् प्रधानपृष्ठानुसारेणाङ्गभूता ग्रहा नियन्तुं युक्ता इति **वाच्यम्** । ' यदा स्तोत्राण्युपयन्ति तदा ग्रहाः ' इत्येवं समानकालिकत्वमात्रबोधनफलकत्वेनापि तदप्रच्युतिहेतुत्वोक्तिसंभवात् । अतस्तुल्यवद्विकल्पः । **इति प्राप्ते,** ' तान् वै पूर्वस्मिंस्त्र्यहे गृह्णीयात् ' ' उत्तरस्मिंस्त्र्यहे ग्रहीतव्याः ' इति वचनद्वयवशात् व्यवस्थित एव विकल्पः । त्र्यहद्वयेऽपि प्रत्यहं त्रयाणांत्रयाणां ग्रहणे पृष्ठ्यविधिनैव तत्सिद्धौ अनयोर्वैयर्थ्यापत्त्यैव प्रत्यहमेकैक एव ग्रहो ग्राह्य इत्याकारकसमासविधायकत्वेनैव सार्थक्यस्य वक्तव्यत्वात्, उत्तरस्मिन्

त्र्यहे समासानुरोधेनैव वैराजादिकालनियमनात्, 'उपस्तम्भनं वा अतिग्राह्याश्चक्रे पृष्ठानि' इति पृष्ठबहुत्वसंयोगाच्च, वैराजसामस्तोमैरतिग्राह्याणां सामन्वत्त्वेन स्तवनाच्च। **संकर्ष.** ३।३।५.

**अतिग्राह्याणां माहेन्द्रग्रहानन्तरमेव होमः, न तु सह ॥**

अतिग्राह्यानेव प्रकृत्य 'माहेन्द्रमनुहूयन्ते' इति श्रुतौ अनुशब्दः सहत्ववचनः, गामनु वत्सश्चरतीति साहित्येऽपि प्रयोगदर्शनात्। तदव्यवहितोत्तरकालस्यानुयागावरुद्धत्वात् वाचनिकत्वादेव अन्यदेवत्ययाऽपि माहेन्द्रग्रहयाज्ययैव ते हूयेरन्। **इति प्राप्ते,** 'अग्ने तेजस्विन्' इत्यादीनां मन्त्राणां होमकरणत्वेनाम्नानेन करणान्तरानाकाङ्क्षतया माहेन्द्रयागाव्यवहितोत्तरकालपर एवानुशब्दः, अनुयजतीति विधेरितरयागेषु लब्धावकाशत्वेन प्रकृते आनन्तर्यांशे बाधस्य युक्तत्वात्। तेन माहेन्द्रेणेष्ट्वा अतिग्राह्यान् हुत्वा अनुवषट् कुर्यात्। **यत्तु** भाष्ये अतिग्राह्याणामपि ग्रहत्वात् ग्रहसमानधर्मताऽऽवश्यकतया सवषट्कारमेवैषां प्रदानं, न पुनर्दार्विहोमत्वमित्युक्तम्। **तत्** दधिग्रहादिषु व्यभिचरितत्वादुत्तराधिकरणान्ते एव 'प्राणाय त्वा' इत्यादिरूपस्य मन्त्रस्य होमे सूत्रकृतैव विनियोगकथनेन तद्विरोधाच्च चिन्त्यम्। **संकर्ष.** ३।३।७.

* **अतिग्राह्याणां** विकृतिषु अतिदेशः 'यत् पृष्ठ्येऽतिगृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि गृह्णीयुः' 'यदुक्थ्येऽतिगृह्णीयात्' इति। **भा.** १०।८।११।२३.

**अतिग्राह्याणां समानविधित्वम् ॥**

आग्नेय ऐन्द्रः सौर्यश्चेति त्रयोऽतिग्राह्याख्या ग्रहास्तेषां सामानविध्यं पूर्वमुक्तमिति स्मारितं धर्मिज्ञानार्थम्। **संकर्ष.** ३।३।१.

**अतिग्राह्यनिषेधः पार्ष्ठिकोक्थ्ये एव ॥**

'यत्पृष्ठ्येन गृह्णीयात् प्राञ्चं यज्ञं पृष्ठानि संसृणीयुर्यदुक्थ्ये गृह्णीयात् प्रत्यञ्चं यज्ञमतिग्राह्याः संसृणीयुः' इति निन्दार्थवादगम्यः उक्थ्यसंस्थक्रतौ अतिग्राह्यनिषेध उक्थ्यन्यायेन प्रकृतिमात्र्येव'। **इति प्राप्ते,** 'यत्पृष्ठ्येन' इत्युपक्रमेणोक्थ्ये पार्ष्ठिकत्वरूपविशेषणलाभात् पार्ष्ठिकोक्थ्ये एवायं निषेधः। न च विशिष्टोद्देशः, अनुमितवाक्ये तस्यादोषत्वात्, समासपदस्यैवानुमेयत्वात्। **संकर्ष.** ३।३।३.

* **अतिग्राह्याधिकरणम्।** इदं 'अग्न्यतिग्राह्याधिकरणं' इत्यत्र द्रष्टव्यम्। अतिग्राह्या नाम ग्रहाः प्रकृतौ श्रुताः। तेऽपि विकृत्यन्तरेषु ग्राह्या न वा इति संशये ग्राह्या इति सिद्धान्तः। **भा.** १०।८।११।२३-२८.

* **अतिजगती।** पादेषु अक्षराणि १२।१२।१२।८।८. उदा० 'प्र वो महे मतयो०' (ऋसं ५।८७।१)। * अतिजगत्यामुत्पन्नं त्रैशोकं नाम साम द्वादशाहे चतुर्थेऽहनि। **भा.** ९।२।५।२१ वर्णकं २.

* **अतिथिवत्।** 'देवता वा प्रयोजयेद् अतिथिवद् भोजनस्य तदर्थत्वात्' यागो नाम देवतापूजा, तस्माद् यागो देवताप्रयुक्तः। तदेतदतिथिवत् द्रष्टव्यम्। यथा यावत् किंचिदतिथेः परिचरणं सर्वं तदतिथिप्रयुक्तं, एवमिदमपीति। **भा.** ९।१।४।६.

* **अतिदिष्टं** तन्त्रिताऽऽपादकं न भवति। आग्रयणगतद्यावापृथिव्यस्य प्रसूनबर्हिर्वत्। **वि.** १२।२।१५. * **अतिदिष्टस्य** अभावस्य उपदिष्टेन अभावेन वैकल्पिको बाधः। स तु न संभवति (इति नोदाहरणम्)। **बाल.** पृ. १३३, * अतिदिष्टस्य अभावस्य उपदिष्टेन भावेन वैकल्पिको बाधः। स च यत् प्रकृतौ किंचिन्नियमेन निषिद्धं, विकृतौ तदेव वैकल्पिकतया विधीयते। उदाहरणं मृग्यम्। पृ. १३३, * अतिदिष्टस्य भावस्य उपदिष्टेन भावेन बाधः। यथा पशौ आज्यभागौ अतिदेशतः प्राप्तौ 'न तौ पशौ करोति' इति निषेधात् बाध्येते। पृ. १३३. * **अतिदिष्टानां** उपदिष्टैर्बाधो यथा कुशानां शरैः। **भा.** १०।४।१।१-२ वर्णकं २. * **अतिदिष्टानामेव अङ्गतन्त्रम्।** यथा वरुणप्रघासेषु उत्तरे विहारे अष्टसु हविःषु अतिदिष्टानां प्रयाजानां तन्त्रम्। **बाल.** पृ. १४८.

**अतिदेशः।** (**स्वरूपं**–) अतिदेशो नाम ये परत्र विहिता धर्माः तमतीत्य अन्यत्र तेषां देशः। यथा देवदत्तस्य भोजनविधिं कृत्वा 'शालिसूपमांसापूपैर्देवदत्तो भोजयितव्यः' इति, तमेव विधिं यज्ञदत्ते अतिदिशति

'देवदत्तवत् यज्ञदत्तो भोजयितव्यः' इति । भा. ७।१।१।१२. * अन्यत्रविहितानां धर्माणां तत्संबन्धापरित्यागेन अन्यसंबन्धप्राप्तिफलकं शास्त्रम् । मीन्या. * 'अन्यत्रैव प्रणीतायाः कृत्स्नाया धर्मसंततेः । अन्यत्र कार्यतः प्राप्तिरतिदेशोऽभिधीयते ॥' वि. प्रस्तावे ७।१।१. * अन्यधर्मत्वेनावगतानां तत्संबन्धादरेण अन्यत्र प्रदेशे प्रापणं येन व्यापारेण भवति, सोऽतिदेशो नाम । तथा चोक्तं 'प्राकृतात् कर्मणो यस्मात् तत्सामान्येषु कर्मसु । धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्मृतः ॥' इति । अयमत्रान्वयः, प्राकृतात् कर्मणः धर्मप्रदेशो येन स्यात् सोऽतिदेशः । क्व धर्मप्रदेशो इत्यपेक्षायामाह—यस्मात् तत्समानेषु इति । यस्मात् प्राकृतात् आग्नेयादेर्धर्माः प्रदिश्यन्ते तत्समानेषु सौर्यादिषु कर्मसु इति । शा. ७।१।१ पृ. ५२६. सोम— अतीत्य देशः अतिदेशः । व्यापारस्यातिदेशत्वे तद्वतः शास्त्रस्य करणव्युत्पत्त्या शास्त्रे अतिदेशत्वव्यवहार इति द्रष्टव्यम् । ...... अन्यधर्माणामन्यत्र प्रापकव्यापारः अतिदेशः इत्येव लक्षणम् । तत्समानेषु इति तु प्रायिकस्वरूपकथनम् । * यः पदार्थो यादृशोपकारद्वारा यदङ्गत्वेन अवधारितः, तस्य पदार्थस्य तत्संबन्धित्वेन रूपेण तादृशोपकारद्वारैव अन्याङ्गताबोधकं प्रमाणम् (अतिदेशः) । भवति हि 'प्रकृतिवत् विकृतिः कर्तव्या' इत्येवमादिकं वाक्यं प्रयाजादिपदार्थानां यादृशोपकारद्वारा आग्नेयाङ्गत्वेन अवधारितानां आग्नेयादिसंबन्धित्वेन रूपेण, तादृशोपकारद्वारा सौर्याद्यङ्गत्वबोधकम् । 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इत्यपि च तदीयब्राह्मणवत्त्वज्ञापनद्वारा तदीयधर्माणां ब्राह्मणार्थभूतानां उक्तरीत्यैव विकृत्यङ्गत्वबोधकम् । मासमग्निहोत्रं इति नामापि तदीयधर्मवत्त्वलक्षणया गौण्यैव वा उक्तविधाङ्गत्वबोधकम् । एवं स्थानापत्त्यतिदेशे आश्रयतो धर्मातिदेशेऽपि च लक्षणसमन्वयो बोध्यः । अत्र च दर्शपूर्णमासादीनां स्वर्गाद्यङ्गत्वेन अवधारितानां तेनैव द्वारेण पापक्षयाद्यङ्गताबोधके यावज्जीवादिवाक्ये अतिप्रसङ्गवारणाय तत्संबन्धित्वरूपेण इति विशेषणम् । नहि दर्शादेः स्वर्गसंबन्धित्वेन रूपेण पापक्षयार्थता प्रमाणाभावात्, अपि तु दर्शत्वादिनैव। प्रकृते तु प्रयाजादीनां आग्नेयेतिकर्तव्यतात्वेनैव अनुगमात् तदेव विकृतिसंबन्धिताऽवच्छेदकम् । पुरोडाशकपालादेश्च पुरोडाशसंबन्धित्वेन अवधारितस्य तेनैव रूपेण तुषोपवापाङ्गत्वात् तद्बोधकवाक्ये अतिप्रसङ्गवारणार्थं तादृशोपकारद्वारा इति विशेषणम् । पुरोडाशे स्वप्रयोजकीभूतश्रपणाधिकरणत्वेन, तुषोपवापे स्वाप्रयोजकीभूतोपवापकरणत्वेन इति तत्र द्वारभेदात् । केचित्तु सादृश्यकल्पितवाक्यत्वं अतिदेशकत्वं इत्याहुः । तत् अतिदेशान्तरेषु अव्यापकत्वात् उपेक्षितम् । भाट्ट. ७।१।१.

* (स कदा भवति, न भवति च) अतिदेशः उपदेशासंभवे भवति । वा. ३।६।१६।४१ पृ. १०६१, * अतिदेशः षड्विधोपदेशप्रत्यस्तमये कल्प्यते । ३।६। ७।१९. * अतिदेशः फलसंबन्धोत्तरकालः । मीन्या. * अतिदेशः उपदेशानवगते न प्रवर्तते । वा. २।१।२।५ पृ. ३९०, * अतिदेशः कथंभावे असति न प्रवर्तते । २।२।७।२१ पृ. ५२५.

* (अतिदेशः कीदृशः क्व उच्यते) सप्तमादि-(अध्याय-) षट्कः उपदेशपूर्वकातिदेशविषयकः । वा. ३।१।१।१ पृ. ६५१. * अतिदेशलक्षणं सामान्यतः सप्तमेनाध्यायेनोक्तम् । भा. ८।१।१।१. * तदेवं त्रिविधोऽतिदेशो निरूपितः । तत्रापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन चिन्ता वृत्ता । चोदनालिङ्गातिदेशस्य तु सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थं अष्टम आरभ्यते । भाट्ट. ८।१।१. * अतिदेशः विशेषतः प्रतिपाद्यते अष्टमाध्याये । भा. ८।१।१।१.

* (तस्य नियामकम्) अतिदेशसाधकः एकसंज्ञायोगः प्रयोजनान्तररहितः । भाट्ट. ८।१।३ पृ. ५. * अतिदेशप्रमाणानि वचन-नाम-लिङ्गानि त्रीणि । मणि. पृ. १३. * नहि अतिदेशस्य संनिधिः कारणं सारूप्यप्रभवत्वेन वक्ष्यमाणत्वात् (सप्तमाध्याये) । अथ कार्यापत्त्या, तत्रापि कारणान्तरत्वं निराकृतम् । ... 'न च सारूप्यमेवैकमतिदेशस्य कारणम् ।' यथा 'दध्नेन्द्रियकामस्य' इत्यत्र व्याख्यातम् (३।६।१३।३६ सूत्रे) । वा. ३।६।१६।४३ पृ. १०६८. * यस्यैव सादृश्यविशेषेण शीघ्रोपस्थितिः, तत एव धर्मातिदेशः । तच्च

सादृश्यं शब्दघटितमर्थघटितं च । भाट्ट. ८।१।१.

* (स एकस्मिन् एकस्मात्) अतिदेशः एकस्मिन् कर्मणि एकस्मादेव कर्मणः न तु सर्वकर्मभ्यः। भा. ८।१।१।१.

* ( स पदार्थानामेव, क्व चिच्छास्त्रस्य ) अतिदेशः पदार्थानाम् । 'दशमाद्याधिकरणन्यायेन उपकारमुखेनैव पदार्थानामतिदेशो न स्वरूपेण । ततश्च अखिलपदार्थविशिष्टाखण्डोपकारातिदेशे उपकारात् पृथग्भावेन पदार्थानां स्वातन्त्र्येण अनुपस्थितत्वात् नियोजनस्य स्वरूपेण बुद्धौ विपरिवृत्तिर्नास्ति । सोम. १।२।२ पृ. ११. * उपकारस्य तत्पृष्ठभावेन पदार्थानामेवातिदेशः, न तु पदार्थबोधकशास्त्राणाम् । तथापि इह ( एतद्ब्राह्मणान्येव इत्यत्र ) शास्त्रस्यैवातिदेशः । वस्तुतस्तु अत्रापि अर्थस्यैवातिदेशः। भाट्ट. ७।१।३, * ( तस्य विभागः ) अतिदेशः द्विविधः । वचनातिदेशः नामातिदेशश्चेति । आद्योऽपि द्विविधः प्रत्यक्षवचनातिदेशः अनुमितवचनातिदेशश्चेति । अनुमितवचनातिदेशोऽपि त्रिविधः सादृश्यकल्पितवचनातिदेशः, स्थानापत्तिकल्पितवचनातिदेशः, आश्रयोपस्थितिकल्पितवचनातिदेशश्चेति । ७।१।१. * अतिदेशः त्रिविधः प्रत्यक्षवचनात् नामधेयात् चोदनालिङ्गानुमितवचनाच्चेति । तत्र प्रत्यक्षवचनात् तावच्चिन्त्यते । ( इष्टौ, पञ्चसंचरेषु, वैश्वदेवे कार्ये एककपाले ऐन्द्राग्ने द्वादशकपाले च, साकमेधीये, कवत्यादिषु चेति ) । शा. ७।१।१ पृ. ५२७,

इदानीं नामातिदेशः प्रस्तूयते । ( अग्निहोत्रं, प्रायणीयं ( न ), सर्वपृष्ठः, अवभृथः, वैष्णवः ( न ), निर्मन्थ्यः ( न ), प्रणयनं (न), स्वरसामा) ७।३।१,

कर्मनामधेयानां अग्निहोत्रादिशब्दानां उक्तमतिदेशकत्वम् । यौगिकानां प्रायणीयादिशब्दानां गुणविधीनां च वैष्णवादिशब्दानां गुणविधित्वात् लिङ्गविशेषशून्यानां नास्ति अतिदेशनिमित्तत्वमित्युक्तम् । कर्मनामवदेव संस्कारनाम्नां यूपादीनां सिद्धमेव अतिदेशकत्वम् । ७।३।११,

गतो नामातिदेशः, इदानीं आनुमानिकेन वचनेन अतिदेश उच्यते । ७।४।१.

चोदनालिङ्गानुमितशब्देन अतिदेशो विचार्यते सौर्ये चरौ । ( प्रथमे पादे प्रत्यक्षवचनात्, नामधेयात् तृतीये पादे, अनुमितवचनाच्च चतुर्थे पादे ) सोम. * अतिदेशः प्रत्यक्षवचनात् 'समानमितरच्छ्येनेन' इति इषौ । वि. ७।१।२, 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वरुणप्रघासेषु । ७।१।३, ' एतद्ब्राह्मण ऐन्द्राग्न एतद्ब्राह्मण एककपालः' इति साकमेधेषु। ७।१।४. * आनुमानिकवचनातिदेशोऽपि अर्थवादातिदेशसिद्धिकः । भाट्ट. ७।१।३. * अतिदेशः लिङ्गानुमितवचनात् सौर्ये चरौ। वि. ७।१।१, स च वैदिके एव । ७।४।२, ज्योतिः गौः आयुः एतेषु तु द्वादशाहिको नास्ति , किंतु ऐकाहिकः । ७।४।३. * प्रत्यक्षवचनानिदेशः ७।१–२, कर्मनामातिदेशः ७।३।१–७, चोदनालिङ्गातिदेशः ७।३।८, संस्कारनामातिदेशः ७।३।९–१२, कल्पितवचनातिदेशः ७।४।१, नामातिदेशसत्त्वे न चोदनालिङ्गातिदेशः । ७।४।२ इति भेदः सप्तमेऽध्याये। के. * वाचनिकातिदेशस्य भिन्नवाक्यविधया प्रमाणत्वात् । उत्पत्तिवाक्ये इतिकर्तव्यतासामान्याक्षेप आवश्यक एव । भाट्ट. ७।१।३ पृ. ३४४. * स पुनः विभक्तविभागेन सप्तविधः । प्रथमं तावत् नामातिदेशो वचनातिदेशश्च इति द्वेधा । तत्र नाम त्रिविधं अतिदेशकं कर्मनाम, संस्कारनाम, यौगिकं चेति । वचनं पुनर्द्विविधं प्रत्यक्षश्रुतं आनुमानिकं चेति। आनुमानिकमपि त्रिविधं चोदनासामान्यातिदेशः, आश्रयातिदेशः, स्थानापत्त्यतिदेशश्चेति । तत्र यद्यपि अन्त्यौ द्वौ भेदौ सप्तमाध्याये नोक्तौ तथापि तयोराद्यः इन्द्रियकामाधिकरणे ( ४।३।३।५–७ ) निरूपितः । बुद्धौ विपरिवर्तमानः आश्रयः एव हि तत्र स्वेतिकर्तव्यतायाः ' आश्रयवत् ' इति कल्पनया प्रापको भवति, न चोदनासामान्यम् । स्थानापत्त्यतिदेशोऽपि फलचमसाधिकरणे ( ३।५।१९ ) निरूपितः । न च ' सोमं भक्षयति ' इति चोदनासामान्यमिह भक्षश्रुतेरिति वाच्यम् । इन्द्रियकामवाक्ये जुहोतेरिव नारिष्ठादिसाधारण्येन, भक्षस्यापि इडादिभक्षसाधारण्येन चोदनालिङ्गत्वा-

योगात्। अतः प्रकृतभक्षयोगात् सोमकार्यस्य च स्वैः क्रयाभिषवादिधर्मैर्विना अनुपपत्तेः आकाङ्क्षया 'सोमवत्' इति कल्पनात् नायं चोदनासामान्येऽन्तर्गतः इति सप्तविधत्वं सिद्धम्। अतश्च श्लोके 'तत्समानेषु' इत्यविवक्षितं, चोदनासामान्यनिमित्तातिदेशव्यतिरिक्ते भेदषट्के अव्याप्तेः। तथा 'कर्मसु' इत्यपि अविवक्षितं, फलचमसविषये स्थानापत्त्यतिदेशभेदे अव्याप्तेः। यद्वा फलचमसवत् दध्युन्मार्जनस्यापि विधेयत्वेन वाक्यभेदप्रसङ्गात् तदुभयविशिष्टं अवेष्टिवत् यजमानचमसाभ्यासप्रयोगान्तरमेव विधीयते इति कर्मग्रहणे विवक्षितेऽपि नाव्याप्तिः। तथापि 'खलेवाली यूपो भवति' इति खलेवालीद्रव्यविषययूपशब्दरूपसंस्कारनामातिदेशे कर्मग्रहणविवक्षायां अव्याप्तिः स्यादेव, इति तत् अविवक्षितमेवेति। अत्र **मिश्राः**। षड्विध एवातिदेशः। यौगिकशब्देन हि केवलयौगिकं वोक्तं योगरूढं वा। तत्राद्यं विश्वजिति सर्वपृष्ठादि, तन्नैव नाम, गुणविधित्वात्। उत्तरं तु अग्निहोत्रोद्भिदादि कर्मनाम शब्देनैवोक्तम्। प्रायणीये तु प्रथमं अयन्त्यनेन इति येनैव योगेन द्वादशाहे प्रवृत्तिः, तेनैव गवामयनेऽपि इति श्रुतिवृत्तेः, न धर्मलक्षकं इत्यनतिदेशकमेव। **भाष्ये** तु अतिदेशकानतिदेशकनामसु भूम्ना अतिदेशकशब्द इति। **वयं तु** कर्मनाम इति प्रागुक्तयोगरूढभिन्नं श्येनादि। नहि तत्रापि रूढिरस्ति, गुणविशेषस्यैव निमित्तत्वात् 'सिंहो माणवकः' इतिवत्। न च योगः। यौगिकमिति च योगरूढमिति भाष्यार्थे न कोऽपि दोषः। **टुप्टीका** तु यौगिकं नातिदेशिकं इति प्रायणीयादिकेवलयौगिकपरं भाष्यस्थं यौगिकपदं न भवति, किंतु योगरूढपरं इत्येवमाशया। (इति अतिदेशलक्षणतद्भेदनिरूपणम्) **बाल.** पृ. ११७–११९.

* **(तत्र बलाबलम्)** अतिदेशः उपदेशात् दुर्बलः। (यथा वारुणप्राघासिकेऽवभृथे–) तुषनिष्कासाभ्यां पुरोडाशो बाध्यते। **वि.** ७।३।५. * अतिदेशोऽपि क्व चित् उपदेशात् बलीयान्, आनर्थक्यप्रतिहतानां विपरीतं बलाबलं इति न्यायात्। **सु.** पृ. ८१४. * अतिदेशनियामकद्रव्यनिष्ठसादृश्ययोः परस्परविरोधे तु देवतासादृश्योपष्टब्धस्यापि द्रव्यसादृश्यस्य श्रौतलिङ्गोपष्टब्धद्रव्यसादृश्यापेक्षया दुर्बलत्वम्। **भाट्ट.** ८।१।९. * अतिदेशप्राप्ताः श्रुत्यादयः प्रत्यक्षैः (श्रुत्यादिभिः) विकृतिषु बाधिष्यन्ते। **वा.** ३।३।७।१४ पृ. ८४१. * तदेवं निरूपितः त्रिविधोऽपि **अतिदेशः**। तत्र प्रत्यक्षवचनातिदेशस्य द्विविधादपि अतिदेशात् प्राबल्यं, धर्माणां उपात्तत्वात् वाक्यवैयर्थ्यापत्तेश्च पूर्वमेव प्रसङ्गादुपपादितम्। अतस्तादृशविषये चोदनालिङ्गातिदेशस्य नैव कल्पना। नाम्नस्तु यदि समानविषयत्वं तदा प्रत्यक्षवचनापादितसिद्धसादृश्यमादायैव नाम्नो गौणत्वोपपत्तेः नातिदेशकत्वम्। यदि तु भिन्नावयवत्वेन न सादृश्यसंपत्तिः, तदा नाम्नोऽपि अविरुद्धधर्मातिदेशकत्वम्। एवं नामातिदेशसत्त्वेऽपि समाने असमाने वा विषये चोदनालिङ्गातिदेशस्य नैव कल्पना, नाम्नः प्रत्यक्षत्वेन तेनैव इतिकर्तव्यताऽऽकाङ्क्षाशान्तेः। **भाट्ट.** ७।४।२. * नामातिदेशस्य आनुमानिकातिदेशात् प्रबलत्वात्। **बृ.** ६।७।१६.

* **(अतिदेशः यस्य यस्मिन्)** अतिदेशः अग्निचयनस्य विकृतौ। **भा.** १०।८।११।२३–२८, * अग्निहोत्रधर्माणां नाम्ना कौण्डपायिनामयनगतेऽग्निहोत्रे। ७।३।१।१–५, * अग्नीषोमीयपशुधर्माणां सवनीयादिपशुषु। ८।१।६।१३, * अग्नीषोमीयपुरोडाशविध्यन्तस्य अध्वरकल्पागते आग्नावैष्णवे। ८।३।१।१–२, * अग्न्यतिग्राह्यस्य विकृतौ। १०।८।११।२३–२८, * अतिरात्रगतानां स्तोत्राणां शतातिरात्रादिषु। ८।३।५।१०–११, * अभिवतीगीतिविशेषस्य कवत्यादिषु। ७।२।१।१–२१, * आग्नेयद्रव्यधर्माणां विकल्पेन सौर्ये चरौ। ८।१।१५।२६, * आग्नेयपुरोडाशस्य दार्शपौर्णमासिकस्य धर्माणां सौर्ये चरौ। ८।१।१६।२७–३१, * आग्नेयपुरोडाशधर्माणां पवमानेष्टिषु शुचिदेवताके। ८।३।१।१–२, * आग्नेयपुरोडाशधर्माणां शतकृष्णलचरौ। ८।१।१८।३६–३९, * इतिकर्तव्यताया दर्शादिगतायाः अविहितेतिकर्तव्यताकेषु सौर्यादिषु। ७।४।१।१, * इतिकर्तव्यता वैदिकी एव सौर्ये चरौ, ऐन्द्राबार्हस्पत्ये चरौ, महापितृयज्ञे, गृहमेधीये च। ७।४।२।२-१२, * उपांशुयाजधर्माणां चित्रेष्टिगते उदके मधुनि च हविषि। ८।१।१९। ४०-४३, * एकाहकाण्डपठितज्योतिरादिधर्माणां गवा-

मयनगतज्योतिरादिषु । ७।४।३।१३-२०, * ऐकादशिन-पशुधर्माणां पशुगणेषु । ८।१।८।१५, * ऐष्टिकधर्माणां वाजिनयागे सुराग्रहे च । ८।२।१।१-९, * गवामयन-गतस्वरसामधर्माणां 'पृष्ठ्यः षडहो द्वौ स्वरसामानौ' इत्यत्र । ७।३।१०।२६-२७, * गवामयनधर्माणां संवत्सर-सत्रेषु । ८।१।११।१८, * चातुर्मास्यवरुणप्रघासगतकायैक-कपालधर्माणां साकमेधीयवैश्वकर्मणैककपाले । ७।१।५।२३, *चातुर्मास्यवैश्वदेविकद्यावापृथिव्यैककपालधर्माणां आग्रयण-गतद्यावापृथिव्यैककपाले वरुणप्रघासगतद्यावापृथिव्यैककपाले च । ७।३।१०।२६–२७, * चातुर्मास्यवैश्वदेविकवैश्वदेव्या-मिक्षाविध्यन्तस्य मैत्रावरुण्यामिक्षायाम् ।७।३।१०।२६-२७, * दर्शपूर्णमासधर्माणां अग्नीषोमीये पशौ । ८।१।५।१२, * दर्शपूर्णमासधर्माणां ऐन्द्राग्नादिपशुषु । ८।१।४।११, * द्वादशाहस्य सत्रात्मकस्य धर्माणां पञ्चदशरात्रे कुण्ड-पायिनामयने च । ८।२।६।२९–३२, *द्वादशाहस्य सत्रा-हीनोभयात्मकस्य धर्माणां सत्रेषु अहीनेषु च व्यवस्थया । ८।२।५।२४–२८, * द्वादशाहधर्माणां अहर्गणेषु द्विरात्रा-दिषु । ८।१।१०।१७, * द्वादशाहधर्माणां पञ्चोक्थ्य–शतोक्थ्य–शताग्निष्टोम–शतातिरात्रादिषु । परं तु तत्रतत्र तत्तत्संस्थता । ८।३।४।८–९, * द्वादशाहिकानां सताना-महां जनकसतरात्रे । ८।३।२।३–५, * धर्माणामति-देशः सादृश्यविशेषेण नियतप्रकृतितः । ८।१।२।२, * पयोधर्माणां अग्नीषोमीये पशौ । ८।२।३।१५–१८. * यजमानमन्त्राणां दर्शपूर्णमासविकारेषु । **संकर्ष.** २।२। ४. * योनिस्थस्तोभानां उत्तरयोर्ऋचोः । **भा.** ९।२।१०। ३३–३७, * रथंतरयोनिगीतेः रथंतरस्य उत्तरयोः । ७।२। १।१–२१. * वाजिनयागस्य आमिक्षाविकारे, अनु-निष्पन्नप्रतिपत्तित्वात् । **भाट्ट.** ४।१।९. * वारुणप्राघा-सिकसार्थवादविधिकाण्डस्य साकमेधीयैन्द्राग्नैककपालयोः । **भा.** ७।१।४।२२. * वैश्वदेवगतानां पञ्चानां हविषां ब्राह्मणस्य वरुणप्रघासगतेषु पञ्चसु हविःषु । **भाट्ट.**७।१।३. * श्येनविशेषधर्माणां इषौ यागे । **भा.** ७।१।२।१३–१६, * षडहगतपृष्ठानां विश्वजिति । ७।३।३।६-११, * षडह-धर्माणां षट्त्रिंशद्रात्रे । ८।३।३।६–७, * सवनीयपशु-धर्माणां ऐकादशिनेषु पशुषु । ८।१।७।१४, * सांना-य्यधर्माणां अग्नीषोमीये पशौ । ८।२।२।१०-१४, * सांना-य्यधर्माणां 'आग्नेयं पयः' इत्यत्र । ८।१।१७।३२-३४, * सांनाय्यपयोधर्माणां वैश्वदेव्यामिक्षायाम् । ८।२।४।१९-२३, * साह्स्र-साद्यस्क्रयोः पूर्वयोर्धर्माणां उत्तरेषु साहस्र-साद्यस्क्रेषु । ८।१।१२।१९, * सौमिकधर्माणां उद्भिदा-दिषु अव्यक्तयागेषु । ८।१।९।१६, * सौमिकावभृथधर्माणां (केषां चित्) वरुणप्रघासगतावभृथे । ७।३।४।१२-१५, * स्तोत्राणां अग्निष्टोमीयादीनां शताग्निष्टोमादिषु । ८।३। ५।१०.

* **( अतिदेशो न यस्य यस्मिन् )** अतिदेशो न अग्नीषोमीयनिर्मन्थ्यधर्माणां चयनगतनिर्मन्थ्ये । **भा.** ७।३।७।१८, * न ऐष्टिकधर्माणां सोमे । ८।१।३।३-१०, * न दर्शपूर्णमासगतबर्हिर्धर्माणां पशुगतयूपावटबर्हिषि बर्हि-र्नाम्ना । ७।३।७।१८, * न दर्शपूर्णमासगताज्यधर्माणां पशुगतयूपाञ्जनाज्ये । ७।३।७।१८, * न दार्शपौर्णमासि-कस्य फलनियमकर्तृसमुदायस्य सौर्यादिषु । ८।१।१३। २०-२२, * न द्वादशाहगतप्रथमाहधर्माणां प्रायणीय-नाम्ना गवामयनगते प्रथमेऽहनि । ७।३।२।५, * न पवमानेष्टीनां पवमानेष्टिषु । ३।६।६।१६-१७, * न पार्वणहोमयोः विकृतौ । ९।२।१८।५१-५६. * न प्रकृति-धर्माणां क्व चित् विकृतौ । **वि.** ५।१।११. * न प्राकृ-तानां गोदोहनादीनां काम्यगुणानां, विकृतौ । **भा.** ८।१।१४।२३-२५, * न यूपधर्माणां समन्त्रकाणां उपशये यूपे । ७।३।१३।३३-३४, * न वारुणपुरोडाशस्य वरुणप्रघासगतावभृथे । ७।३।५।१६, * न सौमिकपृष्ठ-धर्माणां अग्निचयनगतपृष्ठेषु, अग्नौ पृष्ठशब्दस्य मन्त्र-वाचित्वात् । ७।३।१४।३५-३६, * न सौमिकाग्निप्रणयन-धर्माणां चातुर्मास्यगताग्निप्रणयने, किंतु दर्शपूर्णमासगता-ग्निप्रणयनधर्माणाम् । इति भाष्यमतम् । न दार्शिकं न सौमिकं, किंतु अपूर्वमिदं अग्निप्रणयनं इति वार्तिक-मतम् । इदं च प्रणयनं मध्यमयोरेव पर्वणोः । ७।३। ९।२३-२५. **के.** * न सौमिकातिथ्येष्टिगतवैष्णवधर्माणां राजसूये पूर्वत्रिकगतवैष्णवत्रिकपाले वैष्णवशब्देन । **भा.** ७।३।६।१७.

* ( प्रकीर्णकम् ) अतिदेशविषयाः प्रवृत्ति-काण्ड-मुख्यक्रमाः प्रधानभूताः पदार्थाः । **वा.** ५।१।१।१ पृ. १२८७. * अतिदेशस्थलेऽपि वैधशब्देनैव देवताभिधानम् । **वि.** १०।४।१५. * उत्पत्तिश्च सर्वत्र उपदेशेन गम्यते , नातिदेशेन । **वा.** २।२।७।२१ पृ. ८२५, * व्यवहितातिदेशाश्च ' पानव्यापच्च तद्वत् ' (३।४।३२) इत्यादिषु आश्रिताः । ३।४।१९+१ पृ. ८९५.

**अतिदेशः अध्वरकल्पागताग्नावैष्णवादौ अग्नीषोमीयादिपुरोडाशधर्माणाम् ॥**

**हविर्गणे परमुत्तरस्य देशसामान्यात् ।८।३।१।१॥**

**भाष्यं**— इह हविर्गणा उदाहरणं ' आग्नावैष्णवमेकादशकपालं निर्वपेत् सारस्वतं चरुं बार्हस्पत्यं चरुम् ' ' अग्नये पावकाय , अग्नये शुचये ' इत्येवमादयः । तत्र चिन्त्यते किं शुचिदेवतस्य अग्नीषोमीयविध्यन्तः आग्नावैष्णवस्यापि आग्नेयविध्यन्तः, उत विपर्ययः इति । किं प्राप्तं ? हविर्गणे परं शुचिदेवतं उत्तरस्य अग्नीषोमीयस्य विकारः, पूर्वमपि आग्नावैष्णवं पूर्वस्याग्नेयस्य विकारः । कुतः ? देशसामान्यात् । क्रमसामान्यादित्यर्थः । इह शुचिदेवतो द्वितीयः, प्रकृतौ अपि अग्नीषोमीयो द्वितीयः। इतरत्रापि आग्नावैष्णवः प्रथमः, प्रकृतावपि आग्नेयः प्रथमः । देशसामान्येन लिङ्गेन परं उत्तरस्य, पूर्वं पूर्वस्य विकारः ।

**देवतया वा नियम्येत शब्दवत्त्वादितरस्याश्रुतित्वात् । २ ॥**

**भाष्यं**— न वा देशेन नियमः स्यात् । किं तर्हि ? देवतया , देवतासामान्यात् । कुतः ? शब्दवती देवता आग्नावैष्णवं, अग्नये शुचये, इति । इतरस्य देशस्य अश्रुतित्वात् । देशो न श्रूयते । किं तर्हि प्रचयात् गम्यते । किमतः ? एतदतो भवति, देवताप्रत्ययः कर्मचोदनायां अनन्तरत्वान्मुख्यः । इतरस्तु पौर्वापर्यापेक्षया उत्पद्यते, तस्माज्जघन्यः । मुख्यानुग्रहश्च न्याय्यः। अतः शुचिदेवत्ये आग्नेयस्य विध्यन्तः, आग्नावैष्णवे च अग्नीषोमीयस्य ।

**सोम**— अध्वरकल्पायामयं विचारः । प्रथमद्वितीयभावस्य इतरनिरूप्यत्वेन विलम्बितत्वात् , निरपेक्षतयोत्पत्तिवेलयामेव प्रथमप्रतीतदेवतासामान्यं प्रबलं, इति देवतासामान्यात् प्रथमस्थानेऽपि आग्नावैष्णवे तृतीयस्थानाग्नीषोमीयविध्यन्तः, तृतीयस्थानेऽपि बार्हस्पत्ये प्रथमस्थानाग्नेयविध्यन्तः । **सूत्रार्थस्तु**— हविर्गणे परं हविः उत्तरस्य हविषो विकारः स्याद्देशसामान्यादिति ।

**वि**—'आग्नावैष्णव आग्नेयविकृतिः शुचिदेवकः। अग्नीषोमीयविकृतिरथवा व्यत्ययो द्वयोः ॥, प्रथमत्वद्वितीयत्वसाम्यादाद्यो, ऽन्तिमो भवेत् । द्विदेवत्वैकदेवत्वसाम्यस्य श्रुतिमत्त्वतः ॥ ' द्विदेवत्वादिसाम्यस्य श्रूयमाणत्वेन अर्थसिद्धस्थानतो बलीयस्त्वात् ।

**भाट्ट**— ' आग्नावैष्णवमेकादशकपालं, सारस्वतं चरुं, बार्हस्पत्यं चरुं ' इत्यादिहविर्गणे क्रमसामान्यात् प्रथमतृतीययोः आग्नावैष्णवबार्हस्पत्ययोः आग्नेयाग्नीषोमीयविकारत्वम् । **इति प्राप्ते**, क्रमसामान्यस्य अशाब्दस्य अन्यसापेक्षत्वेन विलम्बोपस्थितिकत्वात् उत्पत्तिवाक्यगतदेवतासादृश्यस्य अनन्यापेक्षत्वेन यागस्वरूपपरिचायकत्वेन च शीघ्रोपस्थितिकस्य बलवत्त्वात् । तेन आग्नावैष्णवस्य अग्नीषोमीयविकारत्वं बार्हस्पत्यस्य च आग्नेयविकारत्वम् ।

**न्यायबिन्दुः**— ' आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्, सरस्वत्याज्यभागा, बार्हस्पत्यं चरुम् ' इत्यत्र प्रथमे प्रथमस्याग्नेयस्य तृतीयेऽग्नीषोमीयस्य स्थानसाम्यात् **अतिदेशप्राप्तौ**, एकानेकदेवतत्वाभ्यां प्रथमतृतीययोः तृतीयप्रथमविध्यन्तः इति सिद्धान्तः । स्थानैक्यस्य बहिरङ्गत्वेन दुर्बलत्वात् ।

**मण्डन**— ' हविर्गणे देवतयाऽतिदेशः । '

**शंकर**— ' स्थानसाम्यान्न चोदकः । '

**अतिदेशः अहर्गणेषु द्वादशाहिकधर्माणाम् ॥**

**गणेषु द्वादशाहस्य । ८।१।१०।१७ ॥**

**भाष्यं**—इह अहर्गणा उदाहरणं द्विरात्रादयः शतरात्रपर्यन्ताः । तेषु संदेहः किं ज्यौतिष्टोमिको विध्यन्तः, उत द्वादशाहिकः इति । पूर्वेण न्यायेन **सौमिके प्राप्ते उच्यते** । गणेषु द्वादशाहिको विध्यन्तः इति । **कुतः** ? चोदनासामान्यात् । ' द्वादशाहेन यजेत ' ' द्विरात्रेण यजेत ' इति । अहःशब्दोऽपि अहोरात्रवचनः, रात्रिशब्दोऽपि । एतत् शब्दगतं लिङ्गम् । अर्थगतमपि

गणत्वम् । गणः एव संघातधर्मैः गणमनुग्रहीतुं समर्थः नैकाहः । 'द्वाभ्यां लोमावद्यति, द्वाभ्यां मांसं' इत्येतदारभ्य द्वादशोपसत्त्वं द्वादशाहिकं धर्मं गवामयने दर्शयति । तस्मात् अहर्गणानां द्वादशाहः प्रकृतिः ।

**शा**—द्विरात्रादिषु अहर्गणेषु अव्यक्तत्वं गणत्वं च अधिकं विद्यते । तस्मात् द्वादशाहविध्यन्तः । एवं च 'पत्नीसंयाजान्तानि अहानि संतिष्ठन्ते' इत्यादयो गणधर्मा लभ्यन्ते ।

**सोम**—ननु द्विरात्रादिषु अव्यक्तत्वात् सौमिक एव विध्यन्तः । न च गणत्वात् द्वादशाहविध्यन्तप्राप्तिः, तथात्वे गणत्वाविशेषात् पशुगणलक्षणैकादशिनीविध्यन्तस्यापि प्रसङ्गात् इति उत्थितेः **संगतिपूर्वपक्षौ** । अव्यक्तत्वे सति गणत्वं लिङ्गं, तच्च न सोमे, नैकादशिन्यां, इत्याशयः । **न च** अहरुपहितोऽन्यथा गणो द्वादशाहः, रात्र्युपहितोऽन्यथा गणः द्विरात्रादिः, इति वैसादृश्यात् कथं तद्विकारत्वं इति **वाच्यम्** । अहःशब्दस्य रात्रिशब्दस्य च अहोरात्रपरत्वेन उभयोरपि अहोरात्रनिमित्तगणत्वेन वैसादृश्याभावात् ।

**वि**—'अहर्गणेषु सोमस्य द्वादशाहस्य वा,ऽग्रिमः । पूर्ववद्,दिनसंघादिविशेषैरन्तिमो भवेत् ॥'

**भाट्ट**—गवामयनादिसत्रेषु द्विरात्राद्यहीनेषु च सुत्यागणेषु द्वादशाहविकारत्वम् । अहोरात्रसाध्यकर्मवाचिपदवाच्यत्वसामान्यात् । अत्र हि रात्रिशब्दः अहःशब्दश्च अहोरात्रसाध्यकर्मविशेषपरः । सुत्यागणान्तर्गतत्वसादृश्याच्च द्वादशाहविकारत्वम् । अत एव गवामयनादौ 'द्वाभ्यां लोमावद्यति' इत्यादिना द्वादशोपसत्त्वानुवादो विध्यन्तरस्तुत्यर्थः संगच्छते । स्थिते च द्वादशाहविकारत्वे प्रथमोत्तमौ वर्जयित्वा दशाहस्यैव प्रवृत्तिः इति वक्ष्यते । तत्रापि सत्रेषु सत्रात्मकस्य, अहीनेषु अहीनात्मकस्य च द्वादशाहस्य अवान्तरसादृश्यात् इत्यपि वक्ष्यते (८।२।५) । ८।१।३.

**मण्डन**—'स्याद् द्वादशाहोक्तमहर्गणेषु ।'

**शंकर**—'द्वादशाहादहर्गणे ।' विध्यन्तः । ११.

**अतिदेशः इषौ श्येनीयविशेषधर्माणाम्** ॥

**समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात्** । ७।१।२।१३ ॥

**भाष्यं**— अस्ति इषुर्नाम एकाहः, अपरः श्येनः । तौ द्वावपि आभिचारिकौ । तत्र इषौ कांश्चित् धर्मान् विधाय आह 'समानमितरत् श्येनेन' इति । एतच्चिन्त्यते किमयमनुवादो विधिर्वेति । यदि विधिः, ततोऽतिदेशः, श्येनधर्मान् इषौ अतिदिशति । अथ अनुवादः ततो नेति । तत्र किं प्राप्तं ? तत् सूत्रेणैव उपक्रम्यते 'समाने पूर्ववत्त्वादुत्पन्नाधिकारः स्यात्' 'समानमितरत् श्येनेन' इत्यत्र उत्पन्नाधिकारः स्यात् । अनुवादः इत्यर्थः । कुतः ? पूर्ववत्त्वात् । अयं इषुः पूर्ववान् ज्योतिष्टोमपूर्वकः ज्यौतिष्टोमिकोऽत्र विध्यन्त इत्यर्थः । अत्र चोदकेन उत्पन्नाः ज्यौतिष्टोमिका धर्माः सन्ति । श्येनोऽपि ज्योतिष्टोमपूर्वकः । तत्रापि ते सन्ति । ये इषौ श्येने च समाना भवन्ति, तानधिकृत्य अयं वादो युज्यते । तस्मात् उत्पन्नाधिकारत्वात् अनुवादः । किंच इतरत् इति च अभावे नोपपद्यते । इतरशब्दश्च असंनिहिते अनुपपन्नः संनिहिते एव भवति । यथा 'इतरः प्रावारो दीयताम्' 'इतरः कम्बलो दीयतां' इति संनिहितो दीयते, न प्रावारमात्रं कम्बलमात्रं वा । ज्यौतिष्टोमिकाश्च संनिहिताः । तस्मात् तेषामनुवादः । विहिता हि ते चोदकेनेति ।

**श्येनस्येति चेत्** । १४ ॥

**भाष्यं**—इति चेत् पश्यसि ज्यौतिष्टोमिकानामनुवादः इति, नैवम् । श्येनस्य वैशेषिकाणां लोहितोष्णीषादीनां धर्माणां विधिः । कुतः ? श्येनग्रहणसामर्थ्यात् । एवं श्येनग्रहणं अर्थवत् भविष्यति, धर्मान् विशेषयत् । इतरथा अनर्थकं स्यात् । सर्वेषां हि एकाह-अहीन-सत्राणां ते समानाः, तत्र भविष्यति । यावदुक्तं स्यात् समानमितरत् इति, तावदेव समानमितरत् श्येनेन इति ।

**नासंनिधानात्** । १५ ॥

**भाष्यं**—नायं श्येनवैशेषिकाणां वादो युज्यते । कस्मात् ? असंनिधानात् । अयं इतरशब्दः संनिहिते भवति । न च श्येनशब्देन वैशेषिकाः इषौ धर्माः संनिहिताः । यत्तु श्येनशब्दो वैशेषिको भवतीति, विधिपक्षे अवैशेषिकत्वं दोषः स्यात् । अनुवादपक्षे तु नैव कश्चित् विधीयते, किं विशेषयिष्यति ? ज्यौतिष्टोमिकास्तु

सर्वसाधारणाः सन्तः श्येनस्यापि भवन्ति इत्यनुवादो युज्यते। तस्मात् ज्यौतिष्टोमिकानामेव अनुवादः।

**अपिवा यद्यपूर्वत्वादितरदधिकार्थे ज्यौतिष्टोमिकाद्विधेस्तद्वाचकं समानं स्यात्। १६॥**

**भाष्यं**— अपिवेति पक्षान्तरपरिग्रहे। विधिरयं श्येनवैशेषिकाणां, न ज्यौतिष्टोमिकानामनुवादः। कुतः? अपूर्वत्वात्, एवं अपूर्वं अर्थं विधास्यति। तथा प्रवृत्तिविशेषकरो भविष्यति। अनुवादः सन् अप्रवृत्तिविशेषकरोऽनर्थकः स्यात्। ननु इतरशब्दोऽयं संनिहिते भवति। उच्यते। इतरदधिकार्थे। समानमितरत् समानमधिकं इत्यर्थः। ननु संनिहितवचनोऽयं नाधिकार्थवचनः इति। उच्यते। न केवलं अयं संनिहितवचनः एव, पूर्वोक्तसदृशमसंनिहितमपि ब्रूते, अवशिष्टं च। यदा हि वस्त्राणि अनुक्रम्य इतरशब्दः प्रयुज्यते 'देवदत्ताय कम्बलो दीयतां, विष्णुमित्राय कौशेयं, यज्ञदत्ताय क्षौमं, इतरत् चैत्राय' इति तदा वस्त्रमेव प्रदीयते, न हिरण्यं रजतं वा। इह ज्यौतिष्टोमिकेभ्यः अधिकान् लोहितोष्णीषादीन् धर्मान् अनुक्रम्य इतरशब्दः प्रयुक्तः, तेन अत्रापि अधिकानेव वक्तुमर्हति, तथा अधिकवचनो भवति। अथ ज्यौतिष्टोमिकान् ब्रूते, तथा संनिहितवचनः। तत्र अवश्यं अन्यतरत् हेयम्। यदि अधिकार्थतां हित्वा संनिहितार्थता आश्रीयते, अनुवादमात्रं अनर्थकं भवति। श्येनशब्दश्च अविवक्षितार्थः। अथ संनिहितार्थतां हित्वा अधिकार्थता गृह्यते, न कश्चित् दोषो भवति। तस्मात् सूत्रकारः आह 'इतरदधिकार्थे' इति। अतो ज्यौतिष्टोमिकात् विधेः अधिकाः श्येनवैशेषिकाः ये, ते इह अतिदिश्यन्ते। तद्वाचकं समानं स्यात्, समानशब्दः स्यादित्यर्थः। भवति श्येनशब्दश्च विवक्षितः।

**टुप्**— (भाष्यसिद्धान्तमाक्षिपति–) इतरशब्दो नाधिक्ये लोके प्रसिद्धः (तादृशं सादृश्यमस्य न वाच्यमित्यर्थः)। किं तर्हि? उपयुक्तात् यत् इतरत् संनिहितं तत्र (प्रसिद्धः)। न च एकस्य (शब्दस्य) द्वावर्थौ। तस्मात् (मुख्यार्थलाभात् 'ज्योतिष्टोमाच्चोदकेन' इत्यादिना उत्तरेण संबन्धः) इषौ वषट्कारनिधनविष्टुतिसमत्वं भवति इत्युक्त्वा समानमितरत् श्येनेन इति। (पूर्ववाक्ये 'वषट्कारनिधनं भवति, इषुं विष्टुतिं करोति, समत्वं भवति' इत्यत्र प्राकृते साम्नि वषट्कारनिधनत्वं, चोदकप्राप्ताया विष्टुतेः इष्वाकारत्वं, समत्वाख्यं च साम स्तोत्रस्य विहितम्। तत्र–) ज्योतिष्टोमात् चोदकेन यत् प्राप्तं, तत् इतरशब्देन परामृश्य (श्येनसंबन्धी–) विकारो विधीयते। यत् इतरत् ज्योतिष्टोमात् प्राप्तं, तत् श्येनेन समानम्। तस्मात् लोहितोष्णीषादिमात्रमतिदिश्यते। (सूत्रार्थमाह–) इतरदधिकार्थे, विकारे इत्यर्थः। (सूत्रे इतरत् इति 'समानमितरत् श्येनेन' इति वचनं निर्दिश्यते। 'अपिवा यदि' इति यद्यपिवा इति विपर्यस्य पक्षव्यावृत्तौ व्याख्येयम्। तदयमर्थः– 'यदि अपूर्वार्थविधिलाभाय 'समानमितरत्' इति वचनं ज्यौतिष्टोमिकान् चोदकप्राप्ताद्विधेः अधिकविकारविधानार्थं, तदा तद्वाचकं समानपदं स्यात् ज्यौतिष्टोमिकानामतिदेशप्राप्तानां श्येनवत् विकारः कर्तव्यः' इति) अथवा (अधिकार्थः प्रयोजनम्। अर्थशब्दः प्रयोजनवाची। इतरत् इति च पदनिर्देशः। तेनायमर्थः– 'इतरत् इति पदेन विकाराधिक्यविधानार्थं ज्यौतिष्टोमिका अतिदिश्यन्ते, तस्य च विकारस्य समानपदं विधायकं' इति। एवं च चोदनासामान्यात् ज्योतिष्टोमविकार एव इषुः, न श्येनविकारः। विकारमात्रं तु श्येनादतिदिश्यते वचनेन। भाष्यकारपक्षात् अस्मिन् पक्षे अनुष्ठानविशेषं दर्शयति–) अधिकार्थे (अधिकवाचिनि) इतरशब्दे वर्ण्यमाने येऽपि अप्राकृतकार्याः (पदार्थाः श्येने विहिताः) कण्टकवितोदनादयः तेषामपि अतिदेशः स्यात् भाष्यकारव्याख्याने यत् (श्येनेन) समानं तत् इतरत् इत्याश्रीयमाणे। (अस्मत्पक्षे पुनः इतरशब्दस्य संनिहितवाचित्वात् तेन ज्यौतिष्टोमिकानुद्दिश्य श्येनेन समानं इत्यनेन विकारमात्रं विधीयते इति न कण्टकवितोदनादिप्राप्तिः इति विशेषः। यत्तु स्तुत्यर्थमिति तत्राह–) स्तुतिरपि नोपपद्यते। (कथं?) प्रदेशान्तरे (वाक्यान्तरे) इषुर्विहितः। प्रदेशान्तरे च 'समानं (इतरत्') इति (वचने)। तस्मात् आनर्थक्यात् वाक्यस्य पूर्वपक्षवचनव्यक्तिपरित्यागः।

**शा**—सत्यं इतरत्-शब्दः संनिहितं अभिधत्ते न तु तन्मात्रम् । किंतु पूर्वनिर्दिष्टसदृशं संनिहितं च यत् द्रव्यं, तदभिधत्ते । तदिह यत् संनिहितं ज्यौतिष्टोमिकं, न तत् पूर्वोक्तसदृशं, अप्राकृतानां सप्तहादीनां पूर्वमुक्तत्वात् । यत्तु अप्राकृतं लोहितोष्णीषादि श्येनवैशेषिकं, तत् यद्यपि असंनिहितं तथापि सादृश्यमस्ति, इति अवश्यं हातव्ये अन्यतरस्मिन्, वचनार्थवत्त्वाय संनिधिं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणां वादः । (इति भाष्यमतम्) । यद्वा चोदकप्राप्तानां विष्टुत्यादीनां विकारः 'इषुं विष्टुतिं ' इत्यादिना पूर्वं विहितः, तत् इतरत् चोदकप्राप्तं इतरच्छब्देन उद्दिश्य, तस्य लोहितोष्णीषादिविकारः श्येनात् अतिदिश्यते । एवं च संनिहितवचनत्वं अर्थवत्त्वं च वचनस्य भविष्यति ( इति वार्तिकमतम् ) ।

**सोम**—किंचिद्धर्मपुरस्कारेण बुद्धिस्थमध्ये एकस्मिन् उपयुक्ते तदवशिष्टं यत्, तत् इतरशब्दवाच्यम् । तस्य च यद्धर्मपुरस्कारेण प्रथमं बुद्धिस्थता, तद्धर्ममादाय सादृश्यं संनिहितत्वं च अस्ति इति । इत्थं इतरशब्दस्य संनिहितसदृशपरत्वं लोकसिद्धम् । **भाष्यकारेणापि** अमुमेवार्थमङ्गीकृत्य सप्तहादीन् विशेषान् अनुक्रम्य ' इतरत् इति प्रयोगात् वैशेषिकतया सदृशेन संनिहितेन च भवितव्यम् । तत्र च उभयासंभवात् अन्यतरपरिग्रहे वचनार्थवत्त्वाय सादृश्यं परिगृह्यते ' इत्युक्तम् । **वार्तिककारमते** तु चोदकप्राप्ताङ्गमध्ये विष्टुत्यादेः विकारविधानार्थं उपयुक्तत्वेन तत् इतरत् यत् ज्यौतिष्टोमिकं, तत् श्येनेन समानं कर्तव्यं, श्येने यादृशविकारयुक्तं तादृशविकारयुक्तं कर्तव्यं, इति संनिहितसदृशवचनतोपपत्तेः संनिहितत्वं न परित्याज्यं इति । **सूत्रार्थस्तु**— समाने 'समानमितरत्' इति वाक्ये उत्पन्नाधिकारः चोदकावगतनिर्देशः स्यात् । कुतः ? पूर्ववत्त्वात् इषोर्ज्योतिष्टोमलक्षणप्रकृतिमत्त्वादिति ।

**वि**— ' इषौ समानमितरच्छ्येनेनेत्यनुवादकम् । श्येनवैशेषिकाणां वाऽतिदेशोऽत्रानुवादकः ॥, ज्योतिष्टोमविकारत्वात् तद्धर्माश्चोदकात् समाः । श्येनेष्वोरितरत्वोक्तिरिषुवैशेषिकं प्रति ॥, इषुवैशेषिकादुक्तादितरत् श्येनगं स्फुरेत् । वैशेषिकं लोहितोष्णीषादि तेनातिदिश्यते ॥ '

**भाट्ट** — प्रत्यक्षवचनातिदेशो निरूप्यते (सप्तमस्य प्रथमे पादे ) । इषुर्नाम एकाहः ज्योतिष्टोमविकारः । तत्र प्राकृते साम्नि वषट्कारनिधनमाम्नातं, प्राकृतविष्टुतौ च इष्वाकारत्वं, स्तोत्रे प्राकृते सप्ताहाख्यं साम ( सप्तहं इति पाठः भा. वा. ) । ततः ' समानमितरच्छ्येनेन ' इति श्रुतम् । तत् किं अनुवादः, उत अतिदेशविधिः इति चिन्तायां इतरशब्दस्य संनिहितवचनत्वेन लोके प्रसिद्धत्वात् नास्य असंनिहितश्येनवैशेषिकधर्मवाचित्वं, तेषामसंनिहितत्वात् । अपि तु ये ज्योतिष्टोमातिदेशेन संनिहिताः तत्परत्वमेव । तेषां च श्येनेऽपि अतिदेशप्राप्तत्वेन श्येनसादृश्योपपत्तेः अनुवाद एवायं, इति न श्येनवैशेषिकाणां वचनातिदेशः । **इति प्राप्ते**, इतरशब्दस्य संनिहितवाचित्ववत् पूर्वोक्तेतरतत्सदृशवाचित्वमपि लोकसिद्धम् । ' चैत्रमैत्रयोः कम्बलकौशेये प्रदेये इतरत् विष्णुमित्राय ' इत्यत्र संनिहितपूर्वोक्तेतरतत्सदृशवस्त्रादेरेव प्रतीतेः । अतश्च **वार्तिककारीया** पूर्वोक्तसादृश्यस्य अवाच्यत्वोक्तिः उपेक्षणीयैव । ततश्च यत् संनिहितं प्राकृतं, न तत् पूर्वोक्तसदृशं अप्राकृतानां सप्तहादीनां पूर्वोक्तत्वात् । यच्च सदृशं श्येनवैशेषिकं अप्राकृतत्वसाधर्म्यात्, न तत् संनिहितम् । ततश्च अवश्यहातव्ये अन्यतरस्मिन्, वचनस्य अर्थवत्त्वाय, संनिहितं हित्वा सादृश्यपरिग्रहेण श्येनवैशेषिकाणामेव इतरशब्देन ग्रहणम् । नहि अन्यथा विध्यन्तराशेषभूतस्य अनुवादस्य अर्थवत्त्वं संभवति । ततश्च श्येनसादृश्यवत् यत् पूर्वोक्तसदृशं सत् पूर्वोक्तभिन्नं, तत् इषौ कुर्यात् इति वाक्यार्थः । श्येनसादृश्यं च श्येननिष्ठाङ्गवृत्तिधर्मसमानजातीयधर्मवत्त्वम् । भवति हि श्येननिष्ठाङ्गानां कण्टकवितोदनादीनां ये धर्माः कण्टकवितोदनत्वादयः तत्समानजातीयाः त एव, तद्वत्त्वं कण्टकवितोदनादौ । अत एव श्येनपदं श्येनाङ्गपरं, न तु यथाश्रुतम् । नहि श्येनप्रतियोगिकं सादृश्यं कण्टकवितोदनादौ संभवति । अतश्च फलतः श्येनधर्मा एव पूर्वोक्तसदृशाः पूर्वोक्तभिन्नाश्च कार्याः इति पर्यवसितो-

ऽर्थः। पूर्वोक्तसादृश्यं च अप्राकृतत्वेन, प्राकृताङ्गनुद्दिश्य विहितत्वेन वा। तेन श्येने ये अपूर्वा धर्माः कण्टकवितोदनादयः ते इहापि अतिदिश्यन्ते, ये वा श्येने प्राकृताङ्गानुवादेन विहिताः लोहितोष्णीषादयः, त एव अतिदिश्यन्ते।

यत्तु अस्मिन् पक्षे नैतेषामेव नियमः इति **तन्त्ररत्नोक्तं, तन्न** अवान्तरसादृश्यत्यागे प्रमाणाभावात् उपेक्षितम्। अस्मिंश्च पक्षे इषुयागोद्देशेन अनेकपदार्थविधानायोगात् पदद्वयेन लक्षणया श्येनीयप्राकृताङ्गसंबन्धिविकारमात्रस्य इषूद्देशेन विधानम्।

यद्वा इतरपदे संनिहितत्वत्यागे प्रमाणाभावात्, प्राकृताङ्गानामपि च उद्देश्यतया पूर्वमुक्तत्वात्, पूर्वोक्तप्राकृताङ्गभिन्नतत्सदृशप्राकृताङ्गान्तराणामेव इतरपदेन ग्रहणम्। तेषामतिदेशेन संनिहितत्वात् तादृशप्राकृताङ्गोद्देशेनैव च श्येनसादृश्यविधिः। सादृश्यं च अस्मिन् पक्षे श्येनीयप्राकृताङ्गवृत्तिधर्मसमानधर्मवत्त्वम्। स च धर्मः श्येनप्राकृताङ्गानुवादेन विहितो विकारो लोहितोष्णीषादिः। अत एव सादृश्यं न श्येननिरूपितं, अपि तु श्येनीयप्राकृताङ्गनिरूपितमेव। उपमानताऽवच्छेदकसंबन्धेन श्येनवृत्तिधर्मस्य लोहितोष्णीषादेः तेनैव संबन्धेन प्राकृताङ्गेषु अभावात् उपमानताऽवच्छेदकसंबन्धेन उपमेयवृत्तित्वे एव उपमानियमात्। अत एव अस्मिन् पक्षे श्येनपदं श्येनीयप्राकृताङ्गपरम्। ततश्च फलतः तादृशधर्मा एव इष्वपूर्वसाधनीभूततादृशप्राकृताङ्गोद्देशेन विधीयन्ते। अत एव विधेयसामर्थ्यानुरोधेन श्येने यो विकारो यत्प्राकृताङ्गे विहितः, तत्प्राकृताङ्गे एव सोऽत्र विधीयते। इतरथा अप्राकृतकार्यकारिताऽऽपत्तेः। अतः अस्मिन्नपि पक्षे विवक्षितगत्या इषुसंबन्धि वेनैव तादृशश्येनीयविकारविधिः। न चैवं अस्यातिदेशस्य कल्पितत्वाभावात् आनुमानिकवचनातिदेशापेक्षया प्राबल्येऽपि श्येनेन समानं इति पदद्वये तादृशविकारलक्षणायाश्च आवश्यकत्वात् नामातिदेशापेक्षया प्राबल्ये मानाभावः, नामातिदेशस्थले अग्निहोत्रपदेन अनभिहितानामेव धर्माणां लक्षणा, वचनातिदेशे तु समानपदेन उक्तानामेव तादृशधर्माणां विधेयताऽवच्छेदकीभूतश्येनीयप्राकृताङ्गवृत्तिविकारत्वावच्छिन्नत्वसिद्ध्यर्थं लक्षणा इति तस्य तदपेक्षया प्राबल्यात्।

**न्यायबिन्दुः**— इषुसंज्ञके एकाहे 'समानमितरच्छ्येनेन' इति श्रुतम्। तत्र ज्योतिष्टोमधर्माणामतिदेशात् श्येने इव इहापि प्राप्तेः अनुवादोऽयम्। **इति प्राप्ते,** इतरशब्दस्य संनिहितसदृशपरत्वात् ज्यौतिष्टोमिकानां संनिहितत्वेऽपि पूर्वोक्ताप्राकृतासादृश्यात् तत्सदृशस्य च लोहितोष्णीषादेः श्येनवैशेषिकस्य असंनिहितत्वेऽपि वचनार्थवत्त्वाय सादृश्यमात्रपरिग्रहेण श्येनवैशेषिकविधिः। यद्वा इतरशब्देन अतिदेशप्राप्तमुद्दिश्य तस्य लोहितोष्णीषादिविकारः श्येनादतिदिश्यते। सोऽयं प्रत्यक्षवचनातिदेशः इति सिद्धान्तः।

**मण्डन**— 'इषौ श्येनसमो विधिः।'

**शंकर**— 'वचनाच्चातिदेशनम्।'

**अतिदेशः उद्भिदादिषु अव्यक्तयागेषु सौमिकधर्माणाम्॥**

**अव्यक्तासु तु सोमस्य**। ८।१।९।१६॥

**भाष्यं**—इदं श्रूयते 'अभिजिता यजेत' 'विश्वजिता यजेत' इति। एवंजातीयका यजतयः। तेषु विध्यन्तचिन्ता किं एषु सौमिको विध्यन्तः, उत दार्शपौर्णमासिकः इति। अविशेषात् **अनियमे प्राप्ते उच्यते**। अव्यक्तासु तु सोमस्य। का अव्यक्तता? द्रव्यदेवतस्याभावः। द्रव्यदेवतेन हि यागोऽभिव्यज्यते। एताश्च अद्रव्यदेवताश्चोदनाः 'अभिजिता यजेत' इति। एतासु अव्यक्तासु सौमिको विध्यन्तः स्यात्। कुतः? अव्यक्तसामान्यात्। सोमोऽपि अव्यक्तचोदनः 'ज्योतिष्टोमेन यजेत' इति। ननु 'सोमेन यजेत' इत्येषा व्यक्तचोदना। तथापि देवताया अभावात् अव्यक्तता। तथा च 'श्येनेन यजेत' इति अव्यक्तचोदिते दीक्षणीयादीनि सोमाङ्गानि दर्शयति 'दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायां' इति। तस्मात् तासु सौमिको विध्यन्तः।

**शा**—'विश्वजिता यजेत' इत्यादिषु एकाहेषु द्वादशाहे च किं दार्शपौर्णमासिको विध्यन्तः, उत सौमिकः इति संशये विशेषाभावात् **अनियमे प्राप्ते**

( **नच** विशेषनियामकाभावेऽपि दर्विहोमवदपूर्वत्वं किं न स्यादिति **वाच्यम्** । दर्विहोमानामपूर्वत्वेऽपि वाचनिकद्रव्यदेवतासद्भावेन संभवति शास्त्रपर्यवसानम् । इह तु 'यजेत' इत्येतावन्मात्रं श्रूयते यागश्च द्रव्यदेवतानिर्वाह्यः। तथा च कुतश्चित् प्रकृतेः द्रव्यदेवतयोरलाभे यागनिर्वाहाभावात् शास्त्रमपर्यवसितं स्यात् इति तात्पर्यावसानाय अनियमस्यैव युक्तत्वात् इति भावः ), **उच्यते**, सौमिकः स्यात् अव्यक्तत्वसामान्यात् । केयमव्यक्तता ? स्वार्थतया विनियुक्तदेवताविरहः । ( सोमयागे च न स्वार्थतया विनियुक्ता देवता 'ऐन्द्रवायवं गृह्णाति' इति ग्रहणार्थतयैव विनियोगात् । **ननु** इदमयुक्तं ग्रहणार्थाया अपि देवताया यागापेक्षा वर्तते, यागादन्यत्र देवताया असंभवात्, 'सोमेन यजेत' इति यागस्यापि देवताऽपेक्षा विद्यते, तयोश्च नष्टाश्वदग्धरथवत् परस्परसंबन्धावश्यंभावात् **इत्यत आह**–) यत्र तद्धितचतुर्थीमन्त्रवर्णैः यागार्थतयैव देवता विनियुक्ता तत् व्यक्तं, इतरत्तु अव्यक्तम् । ( अत्र एवकारेण प्राथम्यं लभ्यते । तथा च तद्धितादिभिर्यागार्थतया प्रथमं देवताविनियोगराहित्यं अव्यक्तत्वं, तच्च सोमयागेऽप्यस्त्येव । एवकारमदृष्ट्वा शङ्कते–– ) ननु 'ऐन्द्रवायवं गृह्णाति' इति तद्धितेनैव देवताऽपि सोमे विहिता । ( एवकारं गृहीत्वा उत्तरमाह– ) न यागे देवता अनेन ( प्रथमं उत्पत्तिवाक्ये ) विधीयते, किंतु ग्रहणे । तद्गतायास्तु पश्चात् आर्थिको यागसंबन्धः, न प्रथममेव यागान्वये इति अव्यक्तत्वम् । ( **के चित्तु** ग्रहणार्थाया देवतायाः प्रसङ्गात् यागे उपकारकत्वं न तादर्थ्यं इत्याहुः । **तन्न** । तथा सति गोदोहनादिवत् विकृतिषु अतिदेशाभावप्रसङ्गात् ) ।

**सोम**––– इष्टिषु प्रकृतिचिन्तानन्तरं स्वाङ्गदीक्षणीयादिषु तदपेक्षया जघन्यस्य सोमस्य विकृतिपरंपरा चिन्त्यते इति **पेटिकासंगतिः** । पूर्ववत् विशेषनियामकाभावात् अनियमः इत्युत्थितेः **अवान्तरसंगति**रित्याहुः । **सूत्रे** चोदनाभिप्रायेण अव्यक्तासु इति स्त्रीलिङ्गनिर्देशः ।

**वि**––– 'इष्टेः सोमस्य वा धर्मा विश्वजित्प्रमुखेष्विह ।, अविशेषादैच्छिकाः स्युः, सोमस्याव्यक्तिसाम्यतः ॥ '

**भाट्ट**––– उद्भिदादिषु तु अव्यक्तत्वसादृश्यात् ज्योतिष्टोमविकारत्वम् । अव्यक्तत्वं च स्वाङ्गतया अविहितदेवताकत्वम् । ग्रहणाङ्गभूताया ऐन्द्रवायवादिदेवतायाः प्रसङ्गेन सोमयागोपकारकत्वेऽपि ज्योतिष्टोमाङ्गत्वाभावात् । अतश्च अव्यक्तत्वेन तदतिदेशे सिद्धे आतिदेशिकग्रहणाद्यङ्गभूतदेवताया उद्भिदाद्युपकारकत्वकल्पनेन अपलापः सुलभः । अत एव श्येने दीक्षणीयादिप्राप्तौ 'दीक्षणीयायां द्वादशमानं हिरण्यं दक्षिणा, चतुर्विंशतिमानं प्रायणीयायां' इति दक्षिणादानविधिः संगच्छते । ( ८।१।३ स्थं भित्त्वा गृहीतमिदम् )

**मण्डन**–– 'अव्यक्तयागेषु तु सोमधर्माः ।'

**शंकर**––– 'अव्यक्तचोदिते सोमात् ।'

## ❖ अतिदेशः ऐकादशिनेषु पशुषु सवनीयपशुधर्माणाम् ॥

**ऐकादशिनेषु सौत्यस्य द्वैरशन्यस्य दर्शनात् । ८।१।७।१४ ॥**

**भाष्यं**––– ऐकादशिनाः पशव उदाहरणं 'कृष्णशीर्ष आग्नेयः' इत्यारभ्य आम्नाताः । अन्येषां च ( शाखिनां ) 'आग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, प्रजनयति सौम्येन' इति । तेषु संदेहः किं अग्नीषोमीयविध्यन्ताः, उत सवनीयविध्यन्ता इति । किं प्राप्तं ? पूर्वोक्तेन न्यायेन अग्नीषोमीयस्य । **इति प्राप्ते उच्यते** । ऐकादशिनेषु सौत्यस्य । सौत्य इति सुत्याकालत्वात् सवनीयमाहुः । तदीयो विध्यन्तः ऐकादशिनेषु । कुतः ? द्वैरशन्यस्य दर्शनात् । 'अग्निष्ठात् द्वेद्वे रशने आदाय द्वाभ्यां रशनाभ्यां एकैकं यूपं परिव्ययति' इति। अग्नीषोमीयप्रकृतित्वे एकैकरशन्यं स्यात् । **अथ** वचनमिदं कस्मान्न भवति 'अग्निष्ठात् द्वेद्वे रशने आदाय' इत्येतत् । **अत्र विधीयते** । यदि रशनाद्वित्वमपि विधीयते, तदा वाक्यं भिद्यते । तस्मात्तत् अनूद्यते । ननु लिङ्गमपदिष्टं, कुतः प्राप्तिः ? उच्यते । समाने पशुत्वे सुत्याकालता वैशेषिकं लिङ्गम् । ततः प्राप्तिः ।

**सोम**––– ननु ऐकादशिनेषु दैक्षस्यैव विध्यन्ताः, न सवनीयस्य, तस्य स्वयमधर्मकत्वात् इत्युत्थितेः **संगतिः** । सुत्याकालत्वसामान्याधिक्यात् सवनीय-

विकारत्वम् । सुत्याकालत्वं च 'क्रतुपशवः ऐकादशिनाश्च विकल्प्यन्ते' इति विकल्पविधानात् अवगम्यते । सवनीये 'त्रिवृता यूपं परिवीय' इत्येका रशना, दैक्षविकारत्वाच्चापरा इति द्वैरशन्यम् । इहापि 'द्वेद्वे रशने यूपमृच्छतः' इति द्वैरशन्यदर्शनात् सवनीयविध्यन्तः । ततश्च 'आग्नीध्रीये सवनीयस्याज्यानि गृह्णाति' इत्यादिधर्मप्राप्तिः ।

वि— 'स्यादैकादशिने दैक्षात् सौत्याद्वा, ऽऽद्योऽस्तु पूर्ववत् ;, रशनाद्वयसौत्यत्वविशेषाल्लिङ्गतोऽन्तिमः ॥'

भाट्ट— ऐकादशिनेषु तु सुत्यादिनस्थत्वस्य आधिक्यात् प्रचारविप्रकर्षादिरूपधर्माधिक्याच्च सवनीयपशुविकारत्वम् । 'अग्निष्ठात् द्वेद्वे रशने आदाय द्वाभ्यांद्वाभ्यां रशनाभ्यामेकैकं यूपं परिव्ययति' इत्येतदपि द्वैरशन्यरूपसवनीयधर्मानुवादकमुपपद्यते । नहि अयं विधिः, 'अग्निष्ठात् द्वेद्वे' इत्यस्य विधेयत्वात्, विध्यन्तरैकवाक्यत्वाद्वा लिङ्गत्वोपपत्तेः । ( ८।१।३ मध्यस्थं मित्वा गृहीतमिदम् )

मण्डन— 'सौत्यस्य चैकादशिनेषु धर्माः ।'

शंकर— 'सौत्यादेकादशिन्यां स्यात् ।' अतिदेशः ।

**अतिदेशः ऐन्द्राग्नादिविकृतौ दार्शपौर्णमासिकधर्माणाम् ॥**

**इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः स्यात् । ८।१।४।११ ॥**

**भाष्यं**— इष्टय उदाहरणं 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्येवमाद्याः । तत्र संदेहः किं दार्शपौर्णमासिको वा सौमिको वा विध्यन्तः, उत दार्शपौर्णमासिक एवेति । किं प्राप्तं ? अनियमः । दर्शपूर्णमासयोरपि विध्यन्तोऽस्ति, सोमेऽपि । इमाश्च इष्टयो विध्यन्तापेक्षाः । एकेन च विध्यन्तेन भवितव्यमित्युक्तम् ( ८।१।१।१ ) । न च गृह्यते अन्यतरनियमे विशेषः । तस्मादनियमः । **एवं प्राप्ते उच्यते** । इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः । हेतुर्नोक्तः, प्रज्ञात इति । कः पुनरसौ ? चोदनायां प्रकृतिलिङ्गसंयोगः । किं पुनस्तत् प्रकृतिलिङ्गं ? तद्धितेन देवतोपदेशः, कपालवत्ता, निर्वपतिशब्दश्च 'ऐन्द्राग्नमेकादशकपालं निर्वपेत्' इति । इतरत्रापि तथैव 'ऐन्द्राग्नो द्वादशकपालः' इति । निर्वपतिरपि 'अग्निहोत्रहवण्या हवींषि निर्वपति' इति । प्रकृतिलिङ्गेन च विध्यन्तविशेष उक्तः 'यस्य लिङ्गमर्थसंयोगात्' ( ८।१।२।२ ) इति । तस्मात् दार्शपौर्णमासिकः तासु विध्यन्तः । तच्च दर्शयति 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति । अलिङ्गास्वपि स्थालीपुलाकवत् सिद्धिः ।

शा — 'सौर्यं चरुं निर्वपेत्' इत्यादिषु इष्टिषु निर्वपत्यादिसामान्येन दर्शपूर्णमासविध्यन्तोपस्थानात् तस्यातिदेशः । इत्थं च 'यस्य लिङ्गं' ( ८।१।२।२ ) इत्यस्य प्रपञ्चः, इति नातीवपूर्वपक्षे यतितव्यम् । एवमुत्तरत्रापि सर्वत्र ।

सोम—प्रपञ्चादेव **संगतिः** ।

वि— 'ऐन्द्राग्नादौ सौमिकः स्यादैष्टिको वा, द्वयोरिह । संभवादैच्छिको,ऽन्त्योऽत्र स्यात् कपालादिलिङ्गतः ॥'

भाट्ट—सौर्यादिषु इष्टिसमाख्यातेषु इष्टिसमाख्यातत्वसामान्यात्, निर्वपतिधातुमद्वाक्यसंबन्धित्वात्, तद्धितपदविहितदेवताकत्वाच्च दर्शपूर्णमासविकारत्वमेव । अत एव 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति लिङ्गम् । ( ८।१।३ स्थम् )

मण्डन—'दर्शेष्टिधर्मः सकलेष्टिगामी ।'

शंकर— 'दर्शादिष्टिष्वसौ मतः ।' दर्शात् इष्टिषु असौ अतिदेशः मतः ।

**अतिदेशः ऐन्द्रे पुरोडाशे आग्नेयपुरोडाशधर्माणाम् ॥**

**विप्रतिपत्तौ हविषा नियम्येत, कर्मणस्तदुपाख्यत्वात् । ८।१।१७।३२ ॥**

**भाष्यं**— इदं श्रूयते 'ऐन्द्रमेकादशकपालं निर्वपेत्' इति । तथा 'आग्नेयं पयः' इति । तत्र संदेहः किं देवतासामान्यात् ऐन्द्रपुरोडाशे सांनाय्यस्य विध्यन्तः, आग्नेये च पयसि औषधस्य, देवतासामान्यं बलवत्तरं; अथ हविःसामान्यात् उत्तरत्र सांनाय्यस्य, पूर्वत्र औषधस्य, हविःसामान्यं बलीयः इति । किं प्राप्तं ? उच्यते । देवतासामान्यं बलीय इति । कुतः ? मुख्यत्वात् । मुख्यनियन्त्रिता देवता ऐन्द्रं, आग्नेयं

इति, जघन्यनियन्त्रितं हविः, तयोर्विरोधे मुख्यानुग्रहो न्याय्यः, मुख्यस्याविरुद्धप्रवृत्तित्वात्, जघन्यस्य तु मुख्येन विरुद्धा प्रवृत्तिः। तस्मात् देवतासामान्यं बलीयः। **इति प्राप्ते ब्रूमः**। विप्रतिपत्तौ हविषा नियम्येत। विप्रतिपत्तौ एतस्यां हविर्देवतयोः हविषा विध्यन्तो नियम्येत। कुतः? कर्मणस्तदुपाख्यत्वात्। कर्म देवतां प्रति द्रव्यस्य उत्सर्गः, स च हविःषु उपाख्यायते उपलक्ष्यते इत्यर्थः। हविः त्यज्यमानं दृश्यते। किमतः? अतो हविः कर्मणः प्रत्यासन्नम्। प्रत्यासत्तिश्च लिङ्गम्। **ननु** देवताऽपि यागेन संबद्धा, न तया विना यागो भवति। **उच्यते**। सत्यं संबद्धा। आराटुपकारिणी तु सा। नासौ त्यज्यते। तस्मात् बहिरङ्गम्। अतो हविःसामान्यं बलीयः।

**तेन च कर्मसंयोगात्**। ३३॥

**भाष्यं**— तेन च हविषा संयुज्य कर्म चोद्यते। ऐन्द्रं आग्नेयं इति हविःप्रधानः शब्दः। किमतः? अतो हविरत्र बुद्धौ संनिहितं, तत् लिङ्गं भवति। यथा धूमो बुद्धिविषयतामापन्नः अग्नेर्लिङ्गं, न विद्यमानः।

**गुणत्वेन देवताश्रुतिः**। ३४॥

**भाष्यं**— **ननु** देवताऽपि अत्र श्रूयते ऐन्द्रं आग्नेयं इति। **उच्यते**। विशेषणत्वेन देवता श्रूयते, हविः विशेष्यत्वेन। विशेष्यं च बुद्धौ संनिहितं भवति, न विशेषणम्। तत् विशेष्यं विशेष्य निवर्तते। कथं ज्ञायते? विशेष्यानुबन्धसंयोगात्। यथा 'राजपुरुषः पूज्यः' इत्युक्ते पुरुषः पूज्यो गम्यते, न राजा। एवमिहापि। ऐन्द्रं पय इत्युक्ते हविः बुद्धौ संनिधीयते, न देवता। यच्च बुद्धौ संनिहितं, तत् लिङ्गं इत्युक्तम्। तस्मात् हविःसामान्यं बलीयः। अतः ऐन्द्रे पुरोडाशे आग्नेयस्य विध्यन्तः। आग्नेये च पयसि सांनाय्यस्येति।

**गुणत्वेन देवताश्रुतिः** इत्येतस्य अपरा व्याख्या। इदं पदोत्तरं सूत्रम्। यदुक्तं हविःसामान्यं बलीय इति, नैतद्युक्तम्। देवतासामान्यं बलीय इति। कुतः? सर्वोऽयं प्रयासः देवताराधनार्थः एव। सा अस्य प्रसन्ना फलं ददाति। एवं श्रूयते 'तृप्त एवैनमिन्द्रः प्रजया पशुभिस्तर्पयति' इति। यश्च इन्द्रस्य प्रसादनोपायः इति ज्ञातः, पुनरपि इन्द्रे प्रसादयितव्ये स एव आस्थेयो भवति। तस्मात् देवतासामान्यं बलीय इति। **अत्र ब्रूमः**। स्यादेतदेवं यदि देवतातः फलं स्यात्। यागात्तु फलं 'स्वर्गकामो यजेत' इति श्रूयते। यत्तु 'तृप्त एवैनमिन्द्रः' इति, तत्रेदमुच्यते, गुणत्वेन देवताश्रुतिः। यागे गुणभूता देवता। तस्या दातृत्वं स्तुत्या उच्यते। यथा 'अमात्येन मे ग्रामो दत्तः' 'सेनापतिना मे ग्रामो दत्तः' इति। न च अमात्यः सेनापतिर्वा ग्रामस्य प्रभवति। राजैव प्रभवति। इतरस्मिन् गुणभूते स्तुत्या दातृत्ववादः। तस्मात् यथोक्तेनैव न्यायेन हविःसामान्यमेव बलीय इति।

**शा**— मुख्यत्वप्राधान्याभ्यां देवतायाः प्राबल्यं मन्वानस्य उत्तरं 'हविषस्त्यज्यमानत्वात् प्रत्यासत्तिर्हि कर्मणि। उद्देशमात्ररूपत्वाद् देवताऽऽराटुपस्थिता॥'

**सोम**— यदि सौर्यादौ देवतासामान्यात् आग्नेयविध्यन्तः, तदा ऐन्द्रपुरोडाशादौ अपि इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**— देवतासामान्यहविःसामान्यबलाबलविप्रतिपत्तौ हविषः सामान्येन विध्यन्तो नियम्येत कर्मणो हविस्त्यागस्य त्यज्यमानहविर्निरूप्यत्वादिति।

**वि**— 'देवो बली हविर्वैन्द्रे पुरोडाशे, ऽग्रिमो यतः। देवो मुख्यो, ऽन्तरङ्गं तद् हविः कर्मण्यतो बलि॥'

**भाट्ट**— एवं सादृश्यस्य नियामकत्वे निरूपिते अधुना तयोर्विरोधे बलाबलं चिन्त्यते। तत्रापि द्रव्यघटितदेवताघटितसादृश्ययोः यत्र विप्रतिपत्तिः यथा 'ऐन्द्रः पुरोडाशः' 'आग्नेयं पयः' इत्यादौ, तत्र कस्य बलवत्त्वं इति चिन्तायां, देवतायाः प्रथमोपस्थितत्वेन मुख्यत्वात् प्रधानत्वाच्च तत्सादृश्यमेव बलवत्। 'तृप्त एवैनमिन्द्रः प्रजया पशुभिश्च तर्पयति' इत्याद्यर्थवादवशात् हि यागो देवताऽऽराधनार्थः। आराधिता च सा फलं ददाति इति तस्याः प्रधानत्वम्। देवतासादृश्यं च यद्यपि निरुक्तैकदेवताकत्वरूपं (८।१।७ भाट्ट.) द्रव्यसादृश्याविरोधि, तथापि समानशब्दार्थकत्वरूपं तद्विरोधि इति तस्य बलवत्त्वम्। **इति प्राप्ते**, प्रथमोपस्थितत्वेऽपि कर्मविध्युत्तरकालं अतिदेशकल्पनात्, तदा च द्रव्यस्यैव प्रत्यासन्नत्वेन शीघ्रोपस्थितेः, तत्सादृश्यस्यैव बलवत्त्वम्। यागो हि वृद्धव्यवहारात् देवतोद्देशविशिष्टद्रव्यत्यागरूपः। तत्र द्रव्यस्य प्रधानभूते त्यागे विशेषणत्वं, देवतायास्तु विशेषणीभूते

उद्देशे। अतो द्रव्यं यागे प्रत्यासन्नम्। यद्यपि च देवताप्रसादस्यैव अर्थवादवशात् यागस्य फलसाधनत्वे द्वारत्वं कल्प्यते, तथापि देवतायाः शाब्दबोधे यागं प्रति द्रव्यं प्रति वा प्राधान्ये प्रमाणाभावात्। प्रत्युत द्रव्यस्यैव पार्ष्ठिकान्वये विशेष्यत्वेन प्राधान्यावगतेः न देवतासामान्यस्य बलवत्त्वाशङ्का। वस्तुतस्तु 'न देवताप्रसादस्य द्वारत्वं' इति जैमिनिमतं वक्ष्यते एव (९।१।४।६-१०)। अतः अन्तरङ्गत्ववशादेव द्रव्यसादृश्यस्य बलवत्त्वम्। एवं धर्मानुग्रहोऽपि आञ्जस्येन संगच्छते। इतरथा पुरोडाशे शाखाच्छेदनादीनां बाधापत्तेः। एवमन्यत्रापि अन्तरङ्गत्वादिना सर्वत्र सादृश्ययोः बलाबलं द्रष्टव्यम्। यत्र तु न्यायेन अन्यादृशं बलाबलं, कल्पसूत्रयाज्ञिकाचाराश्च अन्यादृशाः, तत्र तन्मूलभूतश्रुतिरूपवचनातिदेशेन न्यायकल्प्यातिदेशस्य बाधः इत्येवं द्रष्टव्यम्। अत एव 'सौम्यश्चरुः' इत्यादौ शब्दार्थगतसमानत्वरूपसादृश्यस्य निरुक्तैकदेवताकत्वरूपसादृश्यापेक्षया अन्तरङ्गत्वेऽपि न अग्नीषोमीयविकारत्वं, अपि तु आग्नेयविकारत्वमेव। एवं 'आग्नेयमेकादशकपालं' इत्यादौ देवतासामान्यस्य कपालसंख्यासादृश्याद्यपेक्षया अन्तरङ्गत्वेऽपि नाग्नेयविकारत्वं, अपि तु अग्नीषोमीयादिविकारत्वमेव। के चित्तु एतादृशविषये कपालैकादशत्वादीनां द्रव्यनिष्ठसाधनताऽवच्छेदककोटिप्रविष्टत्वात् द्रव्यसादृश्यघटकत्वमेव इति अग्नीषोमीयविकारत्वं समर्थयन्ते। ८।१।८.

**न्यायबिन्दुः**—ऐन्द्रपुरोडाशे आग्नेये च पयसि मुख्यत्वप्राधान्याभ्यां देवतासादृश्यात् सांनाय्यस्य औषधस्य चातिदेशः। **इति प्राप्ते**, त्यज्यमानत्वेन हविषः कर्मप्रत्यासत्तेः तत्सादृश्यादेवातिदेशः। देवता तु प्रातिपदिकार्थतया मुख्याऽपि बहिरङ्गम्। प्राधान्यं तु नास्त्येव यागगुणत्वात्, औषधे सांनाय्यधर्माणां सांनाय्ये चौषधधर्माणामसंभवाच्च। अतो हविःसाम्यं बलवत् इति सिद्धान्तः।

**मण्डन**—'भवेद्बलीयो हविषः सदृक्त्वम्।'

**शंकर**—'देवतातो बलि हविः।' १८.

**अतिदेशः कृष्णलचरौ आग्नेयधर्माणाम्॥**

**हिरण्यमाज्यधर्म तेजस्त्वात्। ८।१।१८।३५॥**

**भाष्यं**—'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति श्रूयते। तत् हिरण्यं आज्यधर्म स्यात् उपांशुयाजविध्यन्तस्तत्र भवेत्। कुतः? तेजस्वसामान्यात्। तेजस्त्वं सामान्यम्। हिरण्यमश्मनां तेजः, आज्यमपि गवां सार इत्यर्थः। अथवा हिरण्यमपि तेजस्वित्वादुज्ज्वलं, आज्यमपि स्निग्धत्वादुज्ज्वलमेव। तस्मात् सामान्यात् उपांशुयाजधर्मा शतकृष्णलश्चरुः।

**धर्मानुग्रहाच्च। ३६॥**

**भाष्यं**—हिरण्ये च बहव आज्यधर्मा अनुगृह्यन्ते अवेक्षणादयः। औषधधर्मास्तु हीयेरन् अवहन्त्यादयः। तस्मादपि आज्यधर्माः।

**औषधं वा विशदत्वात्। ३७॥**

**भाष्यं**—अथवा औषधस्य हिरण्ये विध्यन्तः। कुतः? विशदत्वात्। हिरण्यमपि विशदं, औषधमपि विशदम्। कः पुनरनयोः सामान्ययोर्विशेषः? न खलु कश्चित्। किंतु विशदत्वस्य कारणद्वयं (विशदत्वं चरुत्वं चेति) उपोद्बलकम्। तेजस्वितायाः तद्धर्मानुग्रह एकः।

**चरुशब्दाच्च। ३८॥**

**भाष्यं**—चरुशब्दश्चात्र भवति 'प्राजापत्यं चरुं' इति। चरुशब्दश्च औषधस्य वक्ता। तत् बलवदौषधस्य लिङ्गम्।

**तस्मिंश्च श्रपणश्रुतेः। ३९॥**

**भाष्यं**— तस्मिंश्चाज्ये श्रपणं श्रूयते 'घृते श्रपयति' इति। किमतः? अत एतद्भवति, औषधविध्यन्तेन श्रपणं प्राप्यते, तत्र केवलमाज्यं विधायिष्यते। आज्यविध्यन्ते तु श्रपणमाज्यं च विधीयेयाताम्। तथा वाक्यं भिद्येत।

'तस्मिंश्च श्रपणश्रुतेः' इत्येतस्यापरा व्याख्या। आह, साक्षादेवेह आज्यं श्रूयते, तस्मात् तस्य विध्यन्त इति। तत उत्तरमिदं तस्मिंश्च श्रपणश्रुतेः (इति) दार्शपौर्णमासिकं श्रपणं तस्मिंश्चाज्ये श्रूयते। गुणगतं तत् सामान्यं, हविर्गतं तु वैशद्यं चरुशब्दश्च। तस्मात्ते बलवती।

**सोम**— यदि धर्मबाधप्रसङ्गात् न ऐन्द्रपुरोडाशे सांनाय्यविध्यन्तः, तर्हि कृष्णलचरावपि तत एव नौषधविध्यन्तः इत्युत्थितेः **संगतिः**। चरुशब्दस्य ओदनगतत्वेन प्रथमोपस्थितत्वात् तदुपोद्बलितेन विशदत्वेन प्रथमं औषधविध्यन्ते निश्चिते पश्चाद्द्वाविधर्मबाधो न्यायप्राप्तत्वाददोषः। विशदं विभक्तावयवं इति 'भक्ष्येण मिश्रीकरणं' (पा० २।१।३५) इत्यत्र **हरदत्तः**।

**वि**— 'कृष्णलेषु घृतस्योत व्रीहेस्, तेजोयुतेर्भवेत्। घृतस्य, मैवं वैशद्याच्चरुशब्दयुतेस्तथा ॥'

**भाट्ट**— द्रव्यनिष्ठसादृश्ययोः परस्परविरोधे तु देवतासादृश्योपष्टब्धस्यापि द्रव्यसादृश्यस्य श्रौतलिङ्गोपष्टब्धद्रव्यसादृश्यापेक्षया दुर्बलत्वम्। यथा 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इत्यत्र कृष्णलानां दीप्तिमत्त्वलक्षणतेजस्वित्वसादृश्यस्य प्रजापतिदेवताकत्वसादृश्योपष्टब्धस्यापि कठिनत्वापरपर्यायविशदत्वसादृश्यापेक्षया दुर्बलत्वम्। तेन नायं यागः तेजस्वित्वसादृश्यात् उपांशुयाजविकारः। अपि तु कठिनत्वसादृश्यात् आग्नेयविकार एव, चरुशब्दप्रयोगात्, 'घृते श्रपयति' इति श्रपणविधानाच्च। यद्यपि नायं विक्लित्त्यभावेन मुख्यश्चरुः, तथापि अचरौ चरुशब्दानुवादः चरुधर्मयोगादुपपद्यते इति औषधधर्मप्रापकं भवति लिङ्गम्। **न च** आग्नेये चरोरभावात् आग्नेयधर्माणां चरुगतत्वाभावेन कथं चरुशब्दः तत्र औपधधर्मप्रापकः इति **वाच्यम्**। सौर्यचरोः आग्नेयविकारत्वेन आग्नेयधर्माणामपि चरुगतत्वात् चरुशब्दस्य तत्प्रापकत्वसंभवात्। एवं श्रपणवाक्येऽपि। **यद्यपि** न श्रपणानुवादेन घृतविधिः, श्रपणस्य आग्नेयविकारत्वेऽपि विक्लित्तिरूपप्रयोजनाभावेन बाधात्, घृतस्योत्पत्तिवाक्ये प्राप्तत्वाच्च, **तथापि** अग्निसंयोगमात्ररूपश्रपणं शक्त्या लक्षणया वा प्रतिप्रसवविधया विधीयते। तच्च घृतविशिष्टं शुद्धं वा इत्यन्यदेतत्, क्व विशिष्टविधित्वं इत्यत्र नियामकाभावात्। उत्पत्तिवाक्ये घृतस्य परंपरासंबन्धेन यागान्वये तस्य विलम्बोपस्थितिकत्वात् अत्रैव विशिष्टविधिः इति तु युक्तमुत्पश्यामः। **यद्यपि** च श्रपणस्य उपांशुयाजविकारत्वेऽपि प्रतिप्रसवविधित्वं युज्यते एव, आज्येऽपि अग्निसंयोगसद्भावात्, **तथापि** द्रव्यान्तरसंयोगस्य अत्यन्ताप्राप्तस्य उपांशुयाजविकारत्वे विधेयत्वापत्तेः, आग्नेयविकारत्वे द्रव्यान्तरस्य जलस्य प्राप्तौ तत्र घृतविधाने लाघवं इति लिङ्गत्वोपपत्तिः। एतदस्वरसेनैव वा भाष्यकारेण 'तस्मिंश्च श्रपणश्रुतेः' इति सूत्रस्य (३९) घृतद्रव्यकत्वसादृश्यात् उपांशुयाजविकारत्वमाशङ्क्य घृतस्य अधिकरणत्वश्रुतेः प्रदेयत्वाभावात् इति व्याख्यानान्तरं कृतम्। सर्वथा श्रौतलिङ्गोपष्टब्धस्य सादृश्यस्य बलवत्त्वात् हिरण्ययागः औषधविकार एव। एवं च यत्र हिरण्ययागान्तरे लिङ्गाभावः तत्र देवतासादृश्यात्, तदभावेऽपि वा आज्यधर्माणां भूयसामनुग्रहात् तेजस्वित्वसादृश्येन आज्यविकारत्वमेव। चरुशब्दस्य वा स्थालीपुलाकन्यायेन (७।४।२।१२) गमकत्वात् औषधविकारत्वं कृष्णलेष्टिविकारत्वं वा। ८।१।९.

**न्यायबिन्दुः**— कृष्णले चरौ दीप्तिमत्त्वसाम्यात् आज्यातिदेशे **प्राप्ते**, विविक्तावयवत्वात् चरुशब्दाच्च औषधातिदेश इति सिद्धान्तः।

**मण्डन**— 'चरौ हिरण्ये विधिरौषधः स्यात्।'

**शंकर**— 'कृष्णले च सधर्मता।' १९.

## अतिदेशः गवामयनगतज्योतिरादिषु एकाहकाण्डपठितज्योतिरादिधर्माणाम् ॥

**द्वादशाहिकमहर्गणे तत्प्रकृतित्वादैकाहिकमधिकागमात् तदाख्यं स्यादेकाहवत्। ७।४।३।१३ ॥**

**भाष्यं**— 'प्रजाकामा गवामयनमुपेयुः' इति सत्रं विधाय आम्नायते 'ज्योतिर्गौरायुः' इति। गवामयने द्वादशाहिको विध्यन्तः इति वक्ष्यति 'गणेषु द्वादशाहस्य' इति (८।१।१०।१७)। तत्र चोदकेन द्वादशाहिका धर्माः प्राप्यन्ते। एकाहानामपि यथास्वं नामभिः प्रातिस्विकाः। ये तत्र द्वादशाहिकाः ऐकाहिकैः अविरुद्धाः, ते यथाप्राप्तं क्रियन्ते। विरुद्धेषु संशयः किं द्वादशाहिको धर्मः कर्तव्यः, उत ऐकाहिक इति। किं प्राप्तं? तत्र सूत्रेणैवोपक्रमः 'द्वादशाहिकमहर्गणे तत्प्रकृतित्वात्'। द्वादशाहप्रकृतित्वात् विध्यन्तेनैव प्राप्यन्ते। ननु एवं नामधेयं बाध्यते। न बाधिष्यते नामधेयं ज्योतिरादि। अधिकागमात् भविष्यति। ये ज्यौतिष्टोमिकेभ्यः अधिकाः स्तोत्रशस्त्रविकाराः, तदागमात्।

एकाहवत्। यथा तस्मिन्नेव ज्योतिषि एकाहे ज्योतिः-शब्दः अधिकागमात् भवति, सत्सु ज्यौतिष्टोमिकेषु ज्योतिष्टोमे अभावात् अधिकधर्मार्थोऽयं शब्दः। न च अधिकानां द्वादशाहिकैर्विरोधोऽस्ति। तस्मात् द्वादशाहिकं धर्मजातं विरुद्धं कर्तव्यं इति।

'अधिकागमात् तदाख्यं स्यात् एकाहवत्' इत्येतस्य अपरा व्याख्या। ये द्वादशाहे अधिका ऐकाहिकेभ्यः के चित् धर्मा उच्यन्ते 'अभिप्लवः अन्वहं भवति' 'गौरिवीतं अन्वहं भवति' इति, तेषां अधिकानां आगमात् तदाख्यं स्यात् एतत् द्वादशाहिकं अहः ज्योतिराख्यं आयुराख्यं वा। कथं? एकाहवत्। यथा तस्मिन्नेव एकाहे अयं ज्योतिरादिशब्दः ज्यौतिष्टोमिकेभ्योऽधिकेषु वैशेषिकेषु धर्मेषु आगतेषु भवति, एवमिहापि अधिकागमसामान्यात् गौणो भविष्यति। यथा षाडहिकानां पृष्ठानां भावात् एकाहः विश्वजित् षडहः इत्युक्त 'तमेकाहं षडह इत्याचक्षते' इति। एवमिहापि। गौणश्चेन्न प्रापकः। तस्मात् नास्ति नामधेयात् धर्मप्राप्तिरिति।

**टुप्—** चोदकनामधेययोः बलाबलं चिन्त्यते। तत्र चोदको बलवान् नामधेयात्। कुतः? फले विधीयमाने इतिकर्तव्यतामाकाङ्क्षति। गणश्च फले विधीयते। (अतो) गणत्वसामान्यात् द्वादशाहिको विध्यन्तः। अथवा चोदकप्राप्तेभ्यो यत् अधिकं ज्योतिष्टोमाद्धर्मजातं (स्तोत्रशस्त्रादि) आम्नायते, तदपेक्ष्य गौः आयुः इत्येवमाद्याः (संज्ञाः) प्रवृत्ताः। इहापि नामधेयं श्रूयमाणं तान् विशिष्टान् धर्मान् अतिदिशति। अथवा तत्र (मुख्ये ज्योतिरादौ) अधिकधर्मागमात् नामधेयं प्रवृत्तम्। इहापि (गवामयने) अधिकागमेनैव नामधेयं भविष्यति। अस्मिन् पक्षे नामधेयं नातिदेशकम्।

**लिङ्गाच्च। १४ ॥**

**भाष्यं—** लिङ्गाच्च एतज्ज्ञायते यथा द्वादशाहिकं कर्तव्यमिति। किं लिङ्गं भवति? 'द्वाभ्यां लोम अवद्यति, द्वाभ्यां त्वचं, द्वाभ्यामसृक्, द्वाभ्यां मांसं' (द्वाभ्यामस्थि, द्वाभ्यां मज्जानं) इत्येवं षट् द्विकान् अनुक्रम्य आह 'यद् द्वादशोपसदो भवन्ति आत्मानमेतन्निरवदयते' इति द्वादशाहिकं धर्मं द्वादशोपसत्त्वं दर्शयति, तदुपपद्यते यदि द्वादशाहिकं धर्मजातं विरोधि कर्तव्यम्। इतरथा च ऐकाहिकं त्र्युपसत्त्वं स्यात्। तस्मात् पश्यामो द्वादशाहिकं कर्तव्यं इति। तथा इदमपरं लिङ्गम्। 'यस्यातिरिक्तमेकादशिन्यामालभेरन् अप्रियं भ्रातृव्यमतिरिच्येत। अथ यत् द्वौद्वौ पशू समस्येयुः, कनीय आयुः कुर्वीरन्। यद्येते ब्राह्मणवन्तः पशव आलभ्यन्ते नाप्रियं भ्रातृव्यमतिरिच्येत, न कनीय आयुः कुर्वते' इति एकादशिन्यां विहारं द्वादशाहिकं धर्मं दर्शयति। कथं? विहारे सति अतिरेकः पशूनां आपद्यते। अतिरेकभयाच्च द्वयोर्द्वयोः समासः। एकाहधर्मप्राप्तौ विहारो न स्यात्। तत्र एतद्दर्शनं न युज्यते। तस्मात् द्वादशाहिकं कार्यम्।

**न वा क्रत्वभिधानादधिकानामशब्दत्वम्। १५॥**

**भाष्यं—** न वा द्वादशाहिकं कार्यं, किं तर्हि? ऐकाहिकम्। किं कारणं? चोदकेन द्वादशाहिकं प्राप्नोति, नामधेयेन ऐकाहिकं, नामधेयं च चोदकात् बलीयः। कुतः? प्रत्यक्षत्वात्। प्रत्यक्षं नामधेयं, चोदकं तु आनुमानिकम्। ननु विध्यन्तोऽपि प्रत्यक्षः। सत्यं, प्रकृतौ प्रत्यक्षो विध्यन्तः, विकृतौ तु आनुमानिकः। नामधेयं पुनः विकृतौ अपि प्रत्यक्षम्। प्रत्यक्षं च अनुमानात् बलीयः। तस्मात् ऐकाहिकं कार्यम्। ननु अधिकार्थं नामधेयं इत्युक्तम्। अत्रोच्यते। अधिकानां अशब्दत्वम्। अधिकानां शब्दो नास्ति। इमे ज्योतिरादयः शब्दाः कर्मनामधेयानि इत्युक्तं 'अपि वा नामधेयं स्याद् यदुत्पत्तावपूर्वमविधायकत्वात्' इति (१।४।१।२)। यत्तु 'अधिकागमात् तदाख्यं स्यात्' (१३ सू.) इति, तत्र ब्रूमः। वचनात् अधिकागमः, न नामधेयेन। यत्तु तेषु असत्सु शब्दस्याभावात् इति, नैते कदा चित् आयुरादिषु न सन्ति। कथं? तेषामभावे शब्दस्याभावो दृष्टः। यत्तु ज्योतिष्टोमे नास्ति ज्योतिरादिः शब्द इति, कर्मान्तरत्वात् ज्योतिष्टोमे आयुरादिः शब्दो नास्ति, न धर्माभावात्। तस्मात् ऐकाहिकं विरुद्धं धर्मजातं कर्तव्यमिति।

'अधिकागमात् तदाख्यं स्यादेकाहवत्' इत्येतस्य द्वितीयव्याख्यापरिहारः, गौणः सन् अनुवादमात्रमनर्थकं स्यात्। तस्मात् पूर्वोक्तेन न्यायेन नामधेयं धर्माणां प्रापकमिति।

**टुप्—** उत्पद्यमानमेव कर्म आकाङ्क्षात्रितयसंबद्धमुत्पद्यते। तत्र अस्मिन् (उत्पत्ति-) वाक्ये नामधेयं श्रूयमाणं लक्षणया शक्नोति इतिकर्तव्यतामवगमयितुं आत्मीयाम्। चोदकस्तु उपमितलक्षितप्रापणेन (इतिकर्तव्यतां) अवगमयति। तत्र न किंचित् प्रत्यक्षम्। यागसामानाधिकरण्याच्च यागनामधेयमिदं, न धर्माणाम्। यदपि अधिकमामान्यात् इति, तत्र किंचित् (अनुवादमात्रानर्थक्यात्)। क्रतुलक्षणा दोषः।

**लिङ्गं संघातधर्मः स्यात्, तदर्थापत्तेर्द्रव्यवत्। १६॥**

**भाष्यं—** अथ यल्लिङ्गमुपदिष्टं द्वादशोपसत्त्वदर्शनं, तस्य कः परिहारः? उच्यते। लिङ्गं संघातधर्मः स्यात्। द्वादशाहः अहःसंघातः। स फलाय चोद्यते, 'द्वादशाहमृद्धिकामा उपेयुः' इति। गवामयनमपि अहःसंघातान्तरं, तस्मिन्नेव कार्ये फलसिद्धौ विधीयते। तस्य तत्कार्यापत्त्या द्वादशाहधर्मान् गृह्णाति, न चोदकेन। द्रव्यवत्। यथा द्रव्ये व्रीहौ धर्माः श्रुताः, ते तत्कार्यापन्नेषु नीवारेषु प्रतिनिधिभूतेषु प्राप्यन्ते, न चोदकेन, तद्वत्।

**न वाऽर्थधर्मत्वात्, संघातस्य गुणत्वात्। १७॥**

**भाष्यं—** नैतद्युक्तम्। कुतः? अर्थधर्मत्वात् अपूर्वधर्मत्वादित्यर्थः। अपूर्वधर्मो द्वादशोपसत्त्वं, न संघातधर्मः। कस्मात्? संघातस्य गुणत्वात्। अहानि अत्र प्रधानानि, द्वादशाहेन इति द्वादशत्वं तेषां गुणः, विशेषणमित्यर्थः। विशेष्ये एव कार्यं प्रतीयते, न विशेषणे यथा 'राजपुरुष आनीयतां' इत्युक्ते पुरुष आनीयते न राजा। यथा च 'मृष्टं भुङ्क्ते देवदत्तः' इत्युक्ते न शाकं सूपो वा प्रतीयते। यदेव प्रधानं, तत् प्रतीयते। किमतः? अतः अहानि फलवन्ति, न संघातः। फलवतश्च धर्माः। तस्मान्न द्वादशोपसत्त्वं संघातधर्मः। एवं चेन्न गवामयने कार्यापत्तितो धर्माः प्राप्यन्ते। अतः अपरिहारोऽयम्।

**अर्थापत्तेर्द्रव्येषु धर्मलाभः स्यात्। १८॥**

**भाष्यं—** यच्चोक्तं द्रव्यवदिति, युक्तं द्रव्येषु। तत्र हि व्रीहिकार्यापन्ना नीवाराः कार्यापत्तितः तद्धर्मान् लभन्ते। इह पुनः द्वादशोपसत्त्वं नैव संघातधर्मः इत्यपदिष्टो हेतुः। तस्मात् अदृष्टान्तो द्रव्यवदिति।

**प्रवृत्त्या नियतस्य लिङ्गदर्शनम्। १९॥**

**भाष्यं—** आह, कथं तर्हि लिङ्गदर्शनम्? अत्रोच्यते। गवामयने द्वादशाहिकं प्रथममहः प्रायणीयोऽतिरात्रः। तस्य धर्मो द्वादशोपसत्त्वम्। तदुपादाने मुख्यस्यानुग्रहः। षडुपसत्त्वोपादाने जघन्यानां ज्योतिरादीनां मुख्यस्य प्राप्तकालं अनुग्रहं अतिक्रमितुं किंचित् कारणं नास्ति। अतः तदनुग्रहार्थं द्वादशोपसत्त्वं भवति। तस्मात् मुख्यया प्रवृत्त्या नियतस्य एतद्दर्शनं, न चोदकप्राप्त्या। यस्मात् चोदको नामधेयात् अबलः। वक्ष्यति च 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्' (१२।२।७।२२) 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति (१२।३।८।२३।)

**टुप्—**'गवामयने द्वादशाहिकं' इत्येवमादिः 'मुख्यं वा पूर्वचोदनात् लोकवत्' इत्येवमन्तः अयुक्तो ग्रन्थः। (भाष्य)। प्रायणीयशब्दो यौगिकत्वात् नातिदेशकः (इत्युक्तं ७।३।२।५)। तस्मात् कुतोऽत्र द्वादशोपसत्ताप्राप्तिः। अतः प्रायणीयातिरात्रे (द्वादशाहगवामयनयोः) उभयोरपि ज्योतिर्विध्यन्तः (ज्यौतिष्टोमिको विध्यन्तः)। 'भूयसां स्यात् सधर्मत्वं' इति नेदं पूर्वपक्षसूत्रम्। किं तर्हि? यत्र बहूनां अल्पानां च धर्मविरोधः, तत्र भूयोऽनुग्रहः। यत्र तुल्यसंख्यानि, तत्र 'मुख्यं वा पूर्वचोदनाल्लोकवत्' इति। नहि न्यूनसंख्यं मुख्यत्वेन कारणेन भूयांसि समर्थं बाधितुम्। तस्मादन्यथा वर्ण्यते। भूयसामत्र द्वादशाहिको विध्यन्तः (प्राप्नोति)। अल्पानामैकाहिकः। तत्र भूयसां स्यादनुग्रहः इति अधिकप्रवृत्त्या (नियतस्य द्वादशाहिकोपसत्त्वस्य) लिङ्गदर्शनं सिद्धम्।

**विहारदर्शनं विशिष्टस्यानारभ्यवादानां प्रकृत्यर्थत्वात्। २०॥**

**भाष्यं—** अथ यत् द्वितीयं लिङ्गदर्शनमुक्तं, एकादशिन्यां विहारदर्शनम्। तत्रोच्यते। अनारभ्य एका-

दशिन्यां विहारः शिष्टः । 'यथा हि प्रभवः पशवः स्युः । तानेव अनूचीनानहरह आलभेरन्, आग्नेयमेव प्रथमेऽहनि आलभेरन् , सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये,... वारुणमन्ततः ( एकादशेऽहनि )। अथ पुनः ज्योतिरादीनां पर्यावर्तेषु आग्नेयमेव प्रथमेऽहन्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये... वारुणमन्ततः ' इति । तदनारभ्यवादानां प्रकृत्यर्थत्वात् ज्योतिष्टोमं प्रविष्टं, तत्र अह्नां बहुत्वस्याभावात् असंभवात् अपरां प्रकृतिं द्वादशाहं आगतम् । तत्रापि पुनः ज्योतिरादीनां पर्यावर्तेषु इति एतन्न युज्यते, इति तृतीयां प्रकृतिं गवामयनं ( आगतम् ) । एवं आगतस्य एतद्दर्शनं इति ।

**शा**--चोदको बलीयान्, **इति प्राप्ते अभिधीयते** । 'प्रत्यक्षं श्रूयते नाम चोदकस्त्वानुमानिकः । न प्रत्यक्षविरुद्धार्थमनुमानं प्रवर्तते ॥ '

**सोम**-- चोदकनामधेययोः अतिदेशप्रामाण्यनिरूपणानन्तरं प्राप्तावसरतया तयोर्बलाबलं चिन्त्यते इति **संगतिः** । अत्र किं द्वादशाहिकाः कर्तव्याः, उत ऐकाहिकाः इति फलसंशयः; किं चोदको बलवान्, उत नामधेयं इति अधिकरणाङ्गसंशयश्च द्रष्टव्यः । तत्रायं विशेषः, नामधेययुक्तेषु अहःसु अविरुद्धाः द्वयेऽपि कर्तव्याः, विरुद्धास्तु नामप्रापिताः । विरुद्धा अपि असुत्याकाला ये सर्वेषामह्नां तन्त्रेणानुष्ठेया धर्माः, ते भूयोऽनुग्रहन्यायेन चोदकप्राप्ता एव कर्तव्याः, न नामप्रापिता इति । **सूत्रार्थस्तु**-- अहर्गणे गवामयने द्वादशाहिकमेव धर्मजातं प्राप्यते, अहर्गणस्य द्वादशाहप्रकृतिकत्वात् । ऐकाहिकज्योतिरादिनाम तु ज्योतिष्टोमादधिकानां धर्माणां सद्भावात् मुख्ये ज्योतिरादौ प्रवृत्तं, इहापि द्वादशाहिका अधिकाः सन्ति, इत्येकाहवदधिकागमसामान्यादनुवादः, नातिदेशिकमिति ।

**वि**-- ' गावामयनिके ज्योतिरादौ किं द्वादशाहिकी । ऐकाहिकी वा, ऽनुमानादाद्यो, ऽन्यो नामबाधनात् ॥ '

**भाट्ट**-- तदेवं निरूपितः त्रिविधोऽतिदेशः । तत्र प्रत्यक्षवचनातिदेशस्य द्विविधादपि अतिदेशात् प्राबल्यं धर्माणामुपात्तत्वात् वाक्यवैयर्थ्यापत्तेश्च पूर्वमेव प्रसङ्गादुपपादितम् । अतः तादृशविषये चोदनालिङ्गातिदेशस्य नैव कल्पना । नाम्नस्तु यदि समानविषयत्वं, तदा प्रत्यक्षवचनापादितसिद्धसादृश्यत्वादेव नाम्नो गौणत्वापत्तेर्नातिदेशकत्वम् । यदि तु भिन्नावयवत्वेन न सादृश्यसंपत्तिः, तदा नाम्नोऽपि, अविरुद्धधर्मातिदेशकत्वमवधेयम् । एवं नामातिदेशसत्त्वेऽपि समाने असमाने वा विषये चोदनालिङ्गातिदेशस्य नैव कल्पना, नाम्नः प्रत्यक्षत्वेन तेनैव इतिकर्तव्यताऽऽकाङ्क्षाशान्तेः । अत एव गवामयने ' ज्योतिर्गौरायुः ' इत्येवमादिषु अहःसु एकाहकाण्डपठितज्योतिरादिधर्माणां नाम्ना प्राप्तिः, न तु गणत्वसादृश्यात् द्वादशाहधर्माणाम् । न च अहरन्तरार्थं अवश्यकल्प्येन गणत्वसादृश्यात् गवामयननिष्ठद्वादशाहिकातिदेशेनैव तद्धर्मप्राप्तिरेव आवश्यकी, तत्तदहरुत्पत्तिवाक्येष्वेव भावनाया इतिकर्तव्यताऽऽकाङ्क्षायां गणान्तर्गतत्वसादृश्येन चातुर्मास्यान्तर्गताग्नेयादिवत् प्रत्येकमेव अतिदेशकल्पनेन ज्योतिरादिनामातिदेशसत्त्वेन चोदनालिङ्गातिदेशस्यैव अकल्पनात् । न च लाघवात् गवामयने एक एवातिदेशः, गवामयनत्वस्य प्रत्येकवृत्तित्वेन प्रत्येकमेव फलसंबन्धात् , साधनानां समुच्चयेऽपि तत्तत्साधनानां प्रत्येकमेव इतिकर्तव्यताऽऽकाङ्क्षया प्रत्येकमेव तत्कल्पनात् । अतो ज्योतिरादौ नैव चोदनालिङ्गातिदेशः । न च एवं तेषु त्र्युपसत्त्वस्यैव प्राप्तेः ' द्वाभ्यां लोमावद्यति द्वाभ्यां मांसं ' इत्यादि षट् द्विकान् अनुक्रम्य ' यद् द्वादशोपसदो भवन्ति ' इति द्वादशाहिकद्वादशोपसत्त्वदर्शनानुपपत्तिः, तस्य भूयोऽहरन्तरानुरोधेन नामातिदेशप्रापितत्रित्वबाधकत्वोपपत्तेः, द्वादशसु तिसृणामपि उपकारकत्वोपपत्तेश्च । तस्मात् तत्तत्सुत्याकालीनाङ्गानां अन्येषामपि वा त्रित्वाद्यतिरिक्तानामेव नामातिदेश इति सिद्धम् ।

**ननु** एवमपि एकादशिन्यां विहारदर्शनानुपपत्तिः । तथाहि, ज्योतिष्टोमे सौत्येऽहनि वैकल्पिकी एकादशिनी समाम्नाता । तस्याश्च द्वादशाहे विहारः श्रुतः । तस्यातिदेशेन गवामयने एकषष्ट्यधिकशतत्रयसुत्यात्मके प्राप्तौ इदं श्रुतं ' यस्यातिरिक्तमेकादशिन्यामालभेरन् अप्रियं भ्रातृव्यमतिरिच्येत, यदि द्वौद्वौ पशू समस्येयुः कनीय

आयुः कुर्वीरन्, यदेते ब्राह्मणवन्तः नव पशव आलभ्यन्ते नाप्रियं भ्रातृव्यमतिरिच्यते, न कनीय आयुः कुर्वीत ' इति । गवामयने हि संपूर्णैकादशिन्या द्वात्रिंशद्वारमावृत्तौ द्विपञ्चाशदधिकशतत्रयं अहानि पूर्यन्ते, अवशिष्टानि नव, तत्र पुनरेकादशिनीकरणे अतिरेकः समासो वा आपद्येत । अतो ब्राह्मणवतां तेषु विधानम् । तत् यदि चोदनालिङ्गातिदेशेन ज्योतिरादिसुत्यास्वपि विहारः प्राप्यते, तत एव तल्लिङ्गमुपपद्येत । यदि तु नामातिदेशप्राबल्यं, तदा तद्बलेन ज्योतिरादिसुत्यासु संपूर्णाया एकादशिन्या एव प्राप्तेः विहारदर्शनानुपपत्तिः । इति चेन्न, एकादशिनीविहारस्य अनारभ्याम्नातस्य गवामयने औपदेशिकत्वेन तदंशे नामातिदेशबाधात् । तथाहि, 'यथा हि प्रभवः पशवः स्युः तानेतान् अनूचीनानालभेरन्, आग्नेयमेव प्रथमेऽहन्यालभेरन्, सारस्वतीं मेषीं द्वितीये, सौम्यं बभ्रुं तृतीये, वारुणमन्ततः, अथ पुनर्ज्योतिरादीनां पर्यावर्तेषु आग्नेयमेव प्रथमेऽहनि ' इत्यादि अनारभ्याधीतस्य एकादशिनीविहारस्य प्रकृतौ ज्योतिष्टोमे, द्वादशाहे वा ज्योतिराद्यहःसमूहाभावेन निवेशानुपपत्तेः तृतीयप्रकृतौ गवामयने निवेशः । अन्ततः एकादशेऽहनि । अतश्च औपदेशिकत्वात् नामातिदेशः तदंशे एव बाध्येत इत्युपपन्नं लिङ्गम् । ७।४।२.

**न्यायबिन्दुः**— गवामयने ज्योतिः गौः इत्यादिसंज्ञकयागेषु ' गणेषु द्वादशाहस्य ' इति द्वादशाहेतिकर्तव्यता, नाम्ना ज्योतिराद्येकाहगता च अविरोधे क्रियते । विरोधे तु आनुमानिकातिदेशो बलवान्, प्रयोगवाक्यगतत्वात् । तत्रैव हि फलसंबन्धादितिकर्तव्यताऽऽकाङ्क्षा, न च तत्र नाम श्रूयते । **इति प्राप्ते**, नाम्ना प्रत्यक्षत्वात् न तद्विरोधेऽनुमानम् । प्रयोगवाक्यं च उत्पत्तिवाक्यालोचनेनैव प्रवर्तते, इति तद्गतनाम्ना उपस्थितेतिकर्तव्यतैव बलवती इति सिद्धान्तः ।

**मण्डन**— ' सत्रैकाहाङ्गमेवात्र । ' सत्रेषु ये एकाहाः, तेषामङ्गं ग्राह्यम् ।

**शंकर**— ' चोदकाद् बलवन्नाम । '

**अतिदेशः चित्रेष्टौ मधूदकयोः उपांशुयाजधर्माणाम् ॥**

**मधूदके द्रवसामान्यात् पयोविकारः स्यात् । ८।१।१९।४० ॥**

**भाष्यं**— चित्रायामिष्टौ श्रूयते ' दधि मधु घृतं पयो धाना उदकं तण्डुलाः तत् संसृष्टं प्राजापत्यं भवति ' इति । तत्र मधूदके पयोविकारः स्यात् । कुतः ? द्रवसामान्यात् । द्रवे च मधूदके, पयोऽपि द्रवम् ।

**टुप्**— प्रथमपादान्ते । ( ' तत् संसृष्टं ' इत्यत्र– ) तदिति सर्वनाम्ना एकवचनान्तेन यत् परामृश्यते तत् देवतासंबन्धि । न च तेन धानादीनि परामृश्यन्ते । यदि हि परामृश्येरन् तानीति बहुवचनं स्यात् । यद्वा तत्तत् इति वीप्सानिर्देशः ( स्यात् ) । तस्मान्न धानादीनां परामर्शः । यदि चैतानि परामृश्य ( तच्छब्देन ) देवतायां संबध्येरन् ( ततः ) प्राजापत्यानि इति बहुवचनमभविष्यत् । अतः सर्वनाम्ना एकवचनान्तेन संसृष्टं इति परामृश्य ( तस्य ) देवतासंबन्धः ( क्रियते । एवं चैको यागः । पक्षान्तरमाह– ) तत्र ( **के चित्** ) **एवं वर्णयन्ति** । ' सर्वनाम निर्दिष्टस्य प्रतिनिर्देशकम् ' । द्रव्याणि च निर्दिष्टानि, न संसर्गः । ( तस्मात् द्रव्याणां परामर्शः ) । तर्हि बहुवचनाभावः कथं ? ( उत्तरम्– ) प्रातिपदिकविरोधात् अविवक्षितं पाशवत् । अथवा गुणत्वात् ( गुणवचनत्वादित्यर्थः । सर्वनाम– ) यद्यत् परामृशति तदीयं लिङ्गं संख्यां ( च ) भजते । ( तर्हि बहुवचनं स्यात्, तत्राह– ) तस्य चैकैकस्य ( धानादिद्रव्यस्य ) परामर्शात् एकवचनमविरुद्धम् । ( ननु तर्हि वीप्सा स्यात्, अत आह– ) असत्यामपि वीप्सायां वीप्साकार्ये वर्तते ( सर्वनामशब्दः ) । एवं ( च सति ) संसृष्टमिति एकप्रदानत्वात् अनूद्यते । ( यत्तु प्राजापत्यशब्दो बहुवचनान्तः स्यादिति, तत्राह– ) प्राजापत्यमिति एकदेवताभिप्रायेणैकवचनम् । ( एकदैवतत्वात् संसृज्य एकीभूतं प्रदीयते इति तदभिप्रायमेकवचनं इति । तस्मात् बहवो यागाः । इति पुनः प्रथमपक्षवादिनः आहुः ) इदमपि ( दर्शनं ) अशोभनम् । यदि संनिहितस्य निर्दिष्टस्य प्रतिनिर्देशकं

सर्वनाम, (ततः) अनन्तरत्वात् तण्डुलानामेव तत् परामर्शकम्। किंच तत् इति नपुंसकलिङ्गप्रातिपदिकार्थवाचकम्। अतो यत्र (नपुंसक--)लिङ्गं (विद्यते) तदनेन परामृश्यते (दधि मधु घृतं उदकं च), धानानां तण्डुलानां च नपुंसकलिङ्गत्वाभावात् अशक्यः परामर्शः (विलिङ्गत्वात्)। अयं च न्यायः अन्यत्राप्यभिहितः 'लिङ्गविशेषनिर्देशात् समानविधानेष्वप्राप्ता सारस्वती स्त्रीत्वात्' (९।१।१७।४५) इति (सूत्रकारेण), पुंलिङ्गं मेष्यां न संबध्यते स्त्रीत्वात् (इति)। अतः संसृष्टशब्देन नपुंसकलिङ्गेन अस्य (तच्छब्दस्य) संबन्धः (लिङ्गानुगुण्यात्)। तस्य च (संसृष्टस्य) एकत्वात् एकदेवतासंबन्धे (सति) एकवचनं न विरुध्यते। अत एको यागः।

(प्रासङ्गिकं परिसमाप्य अधिकरणमनुसंधत्ते-) मधूदके द्रवसामान्यात् इति। विरोधे धर्माणां भूयस्त्वेन धर्मनियमं वक्ष्यति (विप्रतिषिद्धधर्माणां० १२।२।७।२२ इत्यत्र)। तेन सिद्धेन इदं (अधिकरणं) आरभ्यते किमाज्यात् धर्मप्राप्तिः (मधूदकयोः), उत सांनाय्यादिति।

**आज्यं वा वर्णसामान्यात्। ४१॥**

**भाष्यं**-- आज्यं वा इमे विकुर्याताम्। उपांशुयाजस्य तयोर्विध्यन्तः स्यात्। कुतः? वर्णसामान्यात्। समानवर्णे मधूदके आज्येन।

**धर्मानुग्रहाच्च। ४२॥**

**भाष्यं**-- आज्यधर्माश्च बहवो मधूदकयोः शक्याः कर्तुं उत्पवनादयः, न तु पयोधर्मा दोहनादयः।

**पूर्वस्य चाविशिष्टत्वात्। ४३॥**

**भाष्यं**--यत्तु पूर्वं कारणमुक्तं द्रवत्वसामान्यं, तदविशिष्टम्। आज्यमपि अग्निसंयोगात् द्रवीभवति। तस्मात् उपांशुयाजविध्यन्तो मधूदकयोरिति।

**शा**-- 'वर्णसाम्यस्य चाधिक्याद् द्रवत्वस्याविशेषतः। अनुग्रहाच्च धर्माणामाज्यधर्म मधूदकम्॥' इति सिद्धान्तः।

**सोम**-- हिरण्यवत् मधूदकयोरपि नाज्यधर्मप्रवृत्तिः इत्युत्थितेः **संगतिः। न च यो गुण उत्पत्तौ** दृश्यते, स तस्य स्वाभाविकः यथा घटस्य श्यामता, तथा आज्यस्यापि द्रवत्वं स्वाभाविकमेवेति **वाच्यम्**। करकाकाठिन्यादौ व्यभिचारात्। हविरवस्थायां हि साम्यमपेक्षितं, विलीनावस्थाऽऽपन्नमेव च हविः, इति तद्दशायां द्रवत्वस्य सद्भावात् स्वाभाविकत्वकृतो विशेषः अकिंचित्करः।

**वि**--'क्षीरस्याज्यस्य वा नीरे मधुन्यप्य, ग्रिमो यतः। द्रवत्वं, न घृतेऽप्यस्य सत्त्वाद् वर्णाच्च संभवात्॥'

**भाट्ट**-- चित्रेष्टौ अनेके यागाः इत्युक्तं चित्राधिकरणे (१।४।३) **कौस्तुभे**। तत्र दधिघृतपयोधानातण्डुलयागानां निर्णीतैव प्रकृतिः। मधूदकयोस्तु वर्णसाम्यात् उपांशुयाजविकारत्वं प्रकृतोदाहरणे देवतासामान्यस्य आधिक्याच्च, न तु स्वाभाविकद्रवत्वसादृश्यात् पयोयागविकारत्वम्। सत्यपि सादृश्यद्वये लिङ्गविशेषस्य निर्णायकत्वाभावे बहुतराज्यधर्मानुग्रहस्यैव नियामकत्वात्। नैमित्तिकद्रवत्वस्य आज्येऽपि सत्त्वाच्च। अतश्च सर्वयागानां एकफलकत्वेन एकतन्त्रत्वात् भूयसामनुग्रहाय त्रयाणां मधुघृतोदकयागानां उपांशुयाजधर्माः तत्रानुष्ठीयमानविरुद्धधर्मविषये कार्याः। आवृत्त्या अनुष्ठीयमानद्रव्यसंस्कारविषये तु तत्तद्यागीयधर्माः तत्तद्द्रव्येषु कार्याः। ८।१।१०.

**न्यायबिन्दुः**-- चित्रेष्टौ मधूदकयोः स्वाभाविकद्रवत्वात् पयोविध्यन्तप्राप्तौ वर्णसामान्याधिक्यात् आज्यविध्यन्तः इसि सिद्धान्तः।

**मण्डन**-- 'आज्यस्य धर्मो मधुनीरयोः स्यात्।'

**शंकर**--'आज्यान्मधूदके चासौ।' विध्यन्तः। २०.

**अतिदेशः धर्माणां सादृश्यविशेषेण नियतप्रकृतितः॥**

**यस्य लिङ्गमर्थसंयोगादभिधानवत्। ८।१।२।२॥**

**भाष्यं**-- यस्य वैदिकस्य विध्यन्तस्य लिङ्गं किंचित् शब्दगतं अर्थगतं वा वैकृत्यां कर्मचोदनायां तद्गुणवाक्ये वा दृश्यते, तत्र स विध्यन्तः स्यात्। कुतः? अर्थसंयोगात्। तस्य अर्थस्य लिङ्गस्य तेन विध्यन्तविशेषणेन संयोगः अनुभूतपूर्वः। संयोगिनोश्च अन्यतरो दृश्यमानः इतरं अदृश्यमानमपि अनुमानात् बुद्धौ संनिधापयति। अभिधानवत्। यथा 'अग्निहोत्रं' इत्यभिधानं

कौण्डपायिनामयने श्रूयमाणं नैयमिकाग्निहोत्रधर्मान् बुद्धौ संनिधापयति। किमतोऽत्र? एतद्दतो भवति, अपूर्णं यद्वाक्यं तत् पूरणसमर्थेन अवयवेन बुद्धौ संनिहितेन एकवाक्यतां याति, यथा 'दर्शपूर्णमासाभ्यां यजेत' इति विध्यादिः कथमिति विध्यन्तापेक्षः अग्न्यन्वाधानादिविधानकाण्डेन पाठात् बुद्धौ संनिहितेन एकवाक्यतां याति, दर्शपूर्णमासाभ्यां यजेत इत्थं इति। एवं विध्यन्तापेक्षो यो वैकृतो विध्यादिः, सोऽपि वैदिकेन विध्यन्तेन अनुमानात् बुद्धौ संनिहितेन एकवाक्यतां यास्यति। यथा, 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इति। तत्र 'कथं' इति विध्यन्तापेक्षायां अनेकविध्यन्तसंनिपाते असाधारणेन निर्वपतिशब्देन दार्शपौर्णमासिकविध्यन्तसंयोगिना लिङ्गेन तदीयो विध्यन्तः प्रसज्यते। तत्रापि आग्नेयाद्यनेकापूर्वविध्यन्तप्रसङ्गे एकदेवतात्वेन वा औषधादिना वा असाधारणेन लिङ्गेन आग्नेयविध्यन्तो नियम्यते। तदेतत् एवं विज्ञायते सौर्यं चरुं निर्वपेत् आग्नेयवत्, आग्नावैष्णवमेकादशकपालं निर्वपेत् अग्नीषोमीयवत्। सर्वत्रैवम्। प्रतिपदाख्याने तु गौरवं परिहरद्भिः वृत्तिकारैः सर्वसामान्यः शब्दः परिगृहीतः 'प्रकृतिवत्' इति। एवं यत्र सूक्ष्ममपि किं चित् सामान्यं शब्दो वा अर्थो वा हविर्देवतादि, तद्-गुणा वा रूपादयः उपलभ्येरन्, तत्र तदीयो विध्यन्तः कल्प्यः। तदेतत् संक्षेपेण अत्रैव सर्वमुक्तम्। शिष्यहितार्थे उत्तरः प्रपञ्चः। श्लोकमप्युदाहरन्ति 'वितीर्य (विस्तीर्य) हि महज्जालमृषिः संक्षिप्य चाब्रवीत्। इष्टं हि विदुषां लोके समासव्यासधारणम्॥' इति।

टुप्— 'तस्यार्थस्य लिङ्गस्य तेन विध्यन्तविशेषेण संयोगोऽनुभूतपूर्वः। संयोगिनोश्च अन्यतरो दृश्यमानः इतरमदृश्यमानं अनुमानात् बुद्धौ संनिधापयति' इति अयुक्तोऽयं (भाष्य-) ग्रन्थः। कथं? यथा अग्निधूमयोः संबन्धे अवगते धूमो दृश्यमानः (अदृश्यमानं) अग्निमवगमयति, एवं निर्वापादयो न शक्नुवन्ति अनुमापयितुं प्रयाजादीनि। (कुतः?) न निर्वापस्य प्रयाजादीनां च संबन्धोऽस्ति। प्रधानेन (सह) अमीषां संबन्धः। परस्परसंबन्धे (तु) नास्ति (एषां) प्रमाणं (गुणानां च परार्थत्वात् ३।१।१२।२२ इति न्यायात्। एकार्थसंबन्धादनुमापकत्वमिति चेत्तत्राह-) यत्र निर्वापादयो न श्रूयेरन्, तत्र अग्न्यन्वाधानादीनामवबोधो न स्यात् (यथा 'आदित्यः प्रायणीयः पयसि चरुः' इत्यादौ) यथा धूमाभावे अग्न्यवबोधाभावः। एवमिहापि। अथोच्येत, कर्म अस्माभिः इतिकर्तव्यतायुक्तं फलसाधनं दृष्टम्। इदमपि (प्रायणीयादि) कर्म, तस्मादस्यापि इतिकर्तव्यतया भवितव्यम् (असत्यपि निर्वापादिलिङ्गे, कर्मत्वमेव लिङ्गं भविष्यति। दूषयति-) एवं सति दर्विहोमानामपि (अतिदेशेन) इतिकर्तव्यता (प्राप्नोति)। अथोच्येत, यदेकदेवतं सत् फलसाधनं (आग्नेयादि) पुरोडाशद्रव्यकं (वा), तदितिकर्तव्यतायुक्तं दृष्टम् (औषधोपलक्षणार्थं पुरोडाशग्रहणम्)। इहापि (प्रायणीये) एकदेवतत्वात् पुरोडाशद्रव्यकत्वाच्च इतिकर्तव्यतया भवितव्यम्। (इदमनुमानमङ्गीकृत्यापि अभिमतसिद्धिर्नास्तीत्याह-) उच्यते। अनुमानात् इतिकर्तव्यतासद्भावः (सामान्येन त्वया) उक्तः। स तु आग्नेयात् प्रवर्तते इति नैतद्विषयमनुमानं (अस्ति। तेन विशेषातिदेशो न सिध्यति)। अथोच्येत, येन (यस्मादित्यर्थः) एकदेवत्यस्य फलसाधनस्य अग्न्यन्वाधानादि (अङ्गं) दृष्टं, अयमपि चैकदेवत्यः, तस्मादस्यापि भवितव्यमग्न्यन्वाधानादिभिरिति (विशेषस्यैवानुमानं संभवतीति)। तत्र (एवं सति) देवदत्तस्य प्रयोजनं साधयतः (अङ्गत्वेन) शुक्ले वाससी निर्ज्ञाते, यज्ञदत्तस्यापि प्रयोजनं साधयतः ते एव प्राप्नुतः त्वदीयेन न्यायेन (पुरुषत्वसाम्यात्)। किंच फलवतोऽङ्गं प्रयाजादयो दृष्टाः, अग्निहोत्रेऽपि फलवत्त्वात् स्युः। तस्मात् अनुमानेन इतिकर्तव्यतायां बहु असमञ्जसं (स्यात् अतिप्रसङ्गात्)। तस्मात् उपमानेन धर्मप्राप्तिः (नेतव्या। कथमित्याह-) यजेत इति (उक्ते) किं, केन, कथं इत्याकाङ्क्षात्रयं भवति। (तत्र) किं, केन इति (अस्मिन्नंशे) फलकरणाभ्यां (ब्रह्मवर्चसयागाभ्यां) निराकाङ्क्षीकृते (सति) कथमिति (आकाङ्क्षायां) अव्यावृत्तायां संनिधानेन आम्नानात् इतिकर्तव्यतायास्तुल्यं वाक्यं (उपमानेन) बुद्धौ संनिधी-

यते। तत् ( च वाक्यं ) संनिधापितमाम्नीयमर्थं बुद्धौ संनिधापयति । ( तदेवमुपमितात् प्रधानवाक्यात् ) अर्थद्वारेण अग्न्यन्वाधानादिका इतिकर्तव्यता अनुषज्यते ( संबध्यते । भाष्ये च अनुष्ठानशब्देन पश्चान्मानसामान्यात् उपमानमेवोच्यते ) । एवं चेत् यत्र सादृश्यं तत्रैव धर्माः प्राप्यन्ते । (असति तु सादृश्ये दर्विहोमेषु न धर्मप्राप्तिः ) । ननु नैवमाकाङ्क्षायामुत्पन्नायां ( अपि ) इतिकर्तव्यता संनिधाने नास्ति, तस्मात् भ्रान्त्या आकाङ्क्षा इति ( कल्प्यताम् । परिहरति– ) नासौ भ्रान्त्या भवति ( नहि इतिकर्तव्यताम्नानकृता आकाङ्क्षा । किंतु भावनास्वभावकृता । कथमित्याह– ) प्रकृतावपि ( यत्र धर्मा आम्नातास्तत्रापि ) आकाङ्क्षासद्भावे ( सत्येव ) इतिकर्तव्यतासंबन्धः । एवं चेत् प्रकृतिविकृत्योर्न कश्चिद्विशेषः ।

**शा**— तदयमर्थः यथा आग्नेयेन स्वर्गः कृतः तथा सौर्येण ब्रह्मवर्चसमिति । एवं अनेकदैवतेषु अग्नीषोमीयैन्द्राग्नविध्यन्तः (तत्रापि व्यक्षरत्र्यक्षरेषु ऐन्द्राग्नविध्यन्तः, चतुरक्षरादिषु अग्नीषोमीयविध्यन्तः इति याज्ञिकाः । ) आज्यद्रव्यकेषु उपांशुयाजस्य । पयोदध्यामिक्षादिषु दैक्षपशौ च सांनाय्यस्य । पश्वन्तरेषु दैक्षस्य । ऐकादशिनेषु सवनीयस्य । पशुगणान्तरेषु ऐकादशिनस्य । अव्यक्तेषु सोमस्य । अहर्गणेषु सत्रेषु अहीनेषु च द्वादशाहस्य । संवत्सरादिषु गावामयनिकस्य इत्यादि द्रष्टव्यम् । एवमिह विशेषातिदेशः । उत्तरस्तु अस्यैव प्रपञ्चः ।

**सोम—ननु** यदि शास्त्रातिदेशः स्यात् , तर्हि यथा अर्थभावनाऽऽकाङ्क्षाऽनुसारात् इतिकर्तव्यताविधायकशास्त्रस्यातिदेशः, तथा शब्दभावनाऽऽकाङ्क्षाऽनुसारात् अर्थवादानामपि अतिदेशः स्यात् , तथा च विश्वजिदादौ अपि रात्रिसत्रन्यायात् आर्थवादिकमेव फलं स्यात् , ततश्च विश्वजिन्न्यायः प्रत्युद्धृतः स्यात् । **इति चेन्मैवम्** । विधिर्हि त्र्यंशपरिपूर्णां भावनां प्रापय्य पश्चात् पुरुषं प्रवर्तयितुं प्राशस्त्यमपेक्षमाणः अतिदेशेनार्थवादैः संबध्यते । ततश्च शब्दभावनाया भाव्यरूपांशत्रययुक्तार्थभावनासंबन्धस्य प्राथमिकत्वात् तद्दशायामेव अर्थभावना भाव्यमपेक्षते तदानीमुपदेशेनातिदेशेन वा अर्थवादसंबन्धाभावात् न विश्वजिन्न्यायप्रत्युद्धारः । किंच शास्त्रातिदेशपक्षेऽपि अर्थवादभागस्य न सर्वत्रातिदेशः, किंतु ' एतद्ब्राह्मणानि ' इत्यादौ यत्र अर्थवादवाचकब्राह्मणपदयुक्तं प्रत्यक्षवचनं तत्रैव, अन्यत्र तु 'विधेरेव द्वे शक्ती कल्पयिष्यामः' इत्यङ्गीकारात् प्राशस्त्यज्ञानं विधित एव । तस्मात् विश्वजिन्न्याये नानुपपत्तिः ।

**वि**—' तद्धितोक्त्यादि लिङ्गं किं न विशेषनियामकम् । भवेद्वा , नह्यशब्दत्वाद् , भवेच्छब्दे प्रवेशतः ॥' लिङ्गस्य शब्दे प्रवेशात् , ' आग्नेयवत् सौर्योऽनुष्ठेयः ' इत्येतादृशं चोदकवाक्यमनुमापयता लिङ्गेन धर्मविशेषा नियम्यन्ते ।

**भाट्टे** तु द्वितीयाधिकरणं प्रथमेऽन्तर्भावितम् ।

**न्यायबिन्दुः**— नियमे कारणमुच्यते । यस्य कर्मणो लिङ्गं चिह्नं शब्दगतमर्थगतं वा यत्र विकृतौ दृश्यते, तस्य तत्रातिदेशः । यथा औषधद्रव्यकत्वात् तद्धितेन देवतोक्तेः(च) आग्नेयस्य सौर्ये, तथा अनेकदेवतेषु अग्नीषोमीयैन्द्राग्नयोः, आज्यद्रव्यकेषु उपांशुयाजस्य, पयोदध्यादिषु दैक्षपशौ च सांनाय्यस्य, पश्वन्तरेषु दैक्षस्य, ऐकादशिनेषु सुत्याकालत्वात् सवनीयस्य, पशुगणान्तरेषु ऐकादशिनस्य, अव्यक्तदेवतेषु सोमस्य, अहर्गणेषु सत्रेषु अहीनेषु च द्वादशाहस्य, संवत्सरादिषु गवामयनस्य इत्यादि बोध्यमिति ।

**मण्डन**— ' स चोदनालिङ्गसमानभावात् । '

**शंकर**— 'यस्य लिङ्गं च तस्य सः ।' विध्यन्तः । ३.

**अतिदेशः निकायिनामुत्तरेषु पूर्वनिकायिधर्माणाम् ॥**

**निकायिनां च पूर्वस्योत्तरेषु प्रवृत्तिः स्यात् ।** ८।१।१२।१९ ॥

**भाष्यं**— निकाय इति संघातः, औत्तराधर्येण अवस्थितः उच्यते । स येषां ते निकायिनः, यथा साहस्राः साद्यस्क्राः । तेषां पूर्वस्य के चिद्धर्मा आम्नाताः । उत्तरे त्वधर्मकाः । तत्र चिन्त्यते, किं ज्योतिष्टोमस्य विध्यन्तः, उत प्रथमस्य निकायिन इति । अव्यक्तचोदनत्वात् ज्योतिष्टोमस्य । **इति प्राप्ते उच्यते** । निकायिनां

च पूर्वस्य उत्तरेषु प्रवृत्तिः स्यात् । कुतः ? निकायित्व-सामान्यात् । साहस्राणां साहस्रसामान्यात्, साद्यस्क्राणां साद्यस्क्रसामान्यात् । एवं सर्वत्र । पूर्वस्मिंश्च साहस्रे सहस्रं दक्षिणां आम्नाय उत्तरस्मिन् दर्शयति ' यावदस्य साहस्रस्य उत्तरा गौः समाहिता भवति, तावदस्माल्लोकात् असौ लोकः' इति । तथा पूर्वस्मिन् साद्यस्क्रे 'साण्डस्त्रिसंवत्सरः सोमक्रयणः स्पर्धमानानां' इत्याम्नाय उत्तरस्मिन्नपि तमेव दर्शयति ' स्त्री गौः सोमक्रयणी, व्यावृत्ता ह्येषां स्पर्धिता ' इति । तस्मात् पूर्वस्य उत्तरेषु धर्माः ।

**सोम**— पूर्ववत् विशेषनियामकाभावात् अव्यक्तत्वेन सौमिकविध्यन्त एव इति उत्थितेः **संगतिः** ।

**वि**— ' साद्यस्क्रे सौमिकः पूर्वधर्मो वा, ऽव्यक्तभावतः । सौमिकः स्या, देकनामैकसंघस्थत्वतोऽन्तिमः ॥'

**भाट्ट**— ये तु साहस्राः साद्यस्क्राः इत्येवं एकसंज्ञायोगिनो यागाः, ते संघातरूपनिकाययोगात् निकायिन उच्यन्ते । तेषां य एव एको धर्मवान्, तस्य अधर्मकेषु प्रवृत्तिः, एकसंज्ञायोगित्वसादृश्यात् । न चात्र नाम्नैव अतिदेशः, सर्वेष्वपि मुख्यत्वेन तदसंभवात् । एकत्र मुख्यस्य हि नाम्नः अपरत्र गौणत्वे नामातिदेशः, न तु सर्वत्र प्रवृत्तिनिमित्तसत्त्वेन मुख्यत्वेऽपि । न चैवं प्रायणीयस्थलेऽपि एकसंज्ञायोगात् अतिदेशापत्तिः, तस्य प्राथम्यसिद्ध्यर्थत्वेन द्वादशाहिकद्वितीयाहर्धर्मदर्शनेन चानतिदेशकत्वात् । अत एव प्रयोजनान्तररहितः एव एकसंज्ञायोगः अतिदेशसाधकः । अत्र च य एव धर्मवान्, तस्य अधर्मकेषु प्रवृत्तिः । स पूर्वो वा उत्तरो वा युक्तिसाम्यात् । प्रायशः पूर्व एव तादृश इति सूत्रादौ तथोक्तिः । अत एव पूर्वपूर्वस्य किंचित्किंचिदधिकधर्मवत्त्वे उत्तरोत्तरेषु प्रवृत्तिः । अत एव पूर्वस्मिन् साहस्रे सहस्रं ( दक्षिणां ) विधाय उत्तरस्मिन् ' यावदस्य सहस्रस्य उत्तरा गौः समाहिता भवति, तावदस्माल्लोकादसौ लोकः' इति सहस्रं दक्षिणां दर्शयति । साद्यस्क्रे च पूर्वस्मिन् साण्डं सोमक्रयणं विधाय उत्तरस्मिन् तत्रासौ ' स्त्री गौः सोमक्रयणी, व्यावृत्ता ह्येषां स्पर्धिता ' इत्यनेन स्त्रियो विधानं स्पर्धिताव्यावृत्त्यनुवादश्च संगच्छते । ८।१।३।११-१९. ( अस्य एकदेशो गृहीतोऽत्र )

**न्यायबिन्दुः**— साहस्राः साद्यस्क्राः इत्येकनाम्ना युगपदुपक्रम्य पश्चात् क्रमेण विहिता यागा निकायिनः । तेषु एकसमूहवर्तित्वं एकनामत्वं च अवान्तरसादृश्यमस्ति, इति पूर्वस्य उत्तरेषु विध्यन्तः, न तु सोमस्येति ।

**मण्डन**— ' निकायिनां पूर्ववदुत्तरेषु । '

**शंकर**— ' निकाय्याद्यात् परेषु सः । ' विध्यन्तः । १३.

**अतिदेशः पञ्चदशरात्रे कुण्डपायिनामयने च सत्रात्मकद्वादशाहधर्माणाम्** ॥

**अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च, तद्भूतेष्वहीनत्वस्य दर्शनात्** । ८।२।६।२९ ॥

**भाष्यं**— पञ्चदशरात्रं कुण्डपायिनामयनं च उभावप्यहीनौ । कस्मात् ? अन्यतरतोऽतिरात्रत्वात् । उभावपि एतौ अन्यतरतोऽतिरात्रौ, तेन अहीनौ इति । पञ्चदशरात्रस्तावत् ' त्रिवृदग्निष्टुदग्निष्टोमः, त्रिरात्रः, दशरात्रः, उदयनीयोऽतिरात्रः' इति । कुण्डपायिनामयनमपि ' मासमग्निहोत्रं जुहोति ' इत्यारभ्य यावत् ' दशरात्रः, महाव्रतं, उदयनीयोऽतिरात्रः ' इति । यश्चान्यतरतोऽतिरात्रः सोऽहीनः । कथं ज्ञायते ? ' तद्भूतेषु अहीनत्वस्य दर्शनात् ' तद्भूतेषु अन्यतरतोऽतिरात्रभूतेषु अहीनत्वं श्रूयते ' यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति ।

**टुप्**— द्वितीये अन्त्यं ( अधिकरणं व्याख्यायते ) । यत्र अतिरात्रोऽन्ते ( दृश्यते ) सोऽहीनः । ( यथा द्विरात्रादिः ) अत्र च (पञ्चदशरात्रे कुण्डपायिनामयने च) अतिरात्रोऽन्ते ( दृश्यते, नादौ ) । तस्मात् तत्त्वम् ( अहीनत्वम् ) ! एवं चेत् अहीनविध्यन्तोऽत्र ।

**अहीनवचनाच्च** । ३० ॥

**भाष्यं**—अहीन इति चायं पञ्चदशरात्रः प्रत्यक्षमुक्तः । ' यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति । तस्मादप्यहीन इति ।

**सत्रे वोपायिचोदनात्** । ३१ ॥

**भाष्यं**— सत्रे वैते, नाहीनौ । कुतः ? उपायिचोदनात् । ये एव भूतिकार्यमिच्छन्तस्ते एनं पञ्चदशरात्रमुपेयुः । कुण्डपायिनामयनेऽपि ' भूतिकामा उपेयुः '

इति । कः पुनरेतयोर्लिङ्गयोर्विशेषः ? चोदनागतमेकं, वाक्यान्तरगतमन्यच्च । चोदनागतं यत्, तत् अन्तरङ्गं भवति, बहिरङ्गमितरत् । अयं चापरो विशेषः, अहीनलिङ्गेन च नित्येन अहीनस्य संस्तुतिर्नोपपद्यते, उपपत्त्या एतदहीनत्वमुच्यते 'यदन्यतरतोऽतिरात्रस्तेनाहीन' इति । सा यदि तावदुपपत्तिः साधिका, ततः अन्तरेणापि वचनं सिद्धमहीनत्वम् । अथ न साधिका, उच्यमानमपि न सिध्यति । तस्मान्नैतद्वचनम् । किं तर्हि ? अनुवादोऽयं स्तुत्यर्थः । स्तुतिश्च नित्येन अहीनलिङ्गेन अन्यतरतोऽतिरात्रत्वेन अहीनस्य नोपपद्यते । यत् कारणं सर्व एवाहीनः अन्यतरतोऽतिरात्रः । सत्रस्य तु उपपद्यते । येन तावदयं अन्यतरतोऽतिरात्रः, तेनाहीनः, आत्मना च सत्रम् । अत उभयात्मा विशिष्टोऽयं अन्येभ्यः सत्रेभ्य इति ।

**टुप्**— अध्येतारः सत्रमिदं स्मरन्ति । न च ईदृक् वचनमस्ति, 'योऽन्यतरतोऽतिरात्रः सोऽहीनः' इति । यदध्येतारः अहीन इति स्मरन्ति सोऽहीनः । उपायिचोदनेन सत्रलिङ्गेन सत्रत्वम् ।

**सत्रलिङ्गं च दर्शयति । ३२ ॥**

**भाष्यं**— सत्रलिङ्गं च कुण्डपायिनामयने दर्शयति 'गृहपतिर्गृहपतिः, सुब्रह्मण्यः सुब्रह्मण्यः' इति । गृहपतिर्हि सत्रे आम्नातः 'गृहपतिसप्तदशाः सत्रमुपेयुः' इति । सत्रे च तेनार्थः ऋत्वर्थान् याजमानान् कर्तुम् । अन्येषां यजमानानां व्यावृत्तत्वात् । तस्मात् सत्रे एव एते इति ।

**शा**— 'तत्रोपर्यतिरात्रत्वाद् द्विरात्रादिवदेतयोः । अहीनत्वं भवे,न्नैवमासनोपायिचोदनात् ॥ सत्रसंज्ञान्तकाण्डे च समाम्नातमिदं द्वयम् । तस्मात् सत्रमतः सत्रविध्यन्तोऽत्र प्रवर्तते ॥'

**सोम**— अहीनत्वात् कुण्डपायिनामयने पञ्चदशरात्रे च पूर्वाधिकरणन्यायेन अहीनधर्मप्राप्तिः इत्युत्थितेः **संगतिः । सूत्रार्थस्तु**—पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च अन्यतरतोऽतिरात्रत्वात् अहीनत्वम् । अन्यतरतोऽतिरात्रभूतेषु अहीनत्वदर्शनादिति ।

**वि**— 'किं पञ्चदशरात्रस्य कुण्डपाय्ययनस्य च । अहीनत्वं सत्रता वा, ऽतिरात्रैकत्वतोऽग्रिमः ॥, उपायिलिङ्गतः सत्रे प्रकृतं विधिवाक्यगम् । सत्रान्तरेभ्योऽहीनत्वलिङ्गेनैतत् प्रशस्यते ॥'

**भाट्ट**— पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च न सत्रत्वं 'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति श्रुत्या अन्यतरतोऽतिरात्रत्वस्य अहीनलक्षणकरणात् अर्थाच्च उभयतोऽतिरात्रत्वस्य सत्रलक्षणत्वेन पञ्चदशरात्रादौ अहीनलक्षणसत्त्वेन तदनुपपत्तेः । अत एव न सत्राहीनयोर्भवदुक्तलक्षणम् । न च एकादशरात्रान्तमेव शुद्धाहीनत्वम् । अतश्च पञ्चदशरात्रादौ अहीनात्मकद्वादशाहस्यैव प्रवृत्तिः । **इति प्राप्ते,** अहीनत्वाभावेऽपि प्राचुर्येण अहीने अन्यतरतोऽतिरात्रत्वात् अस्मिन्नपि पञ्चदशरात्रे अन्यतरतोऽतिरात्रत्वेन अहीनत्वोपचारस्य स्तुत्यर्थत्वेन उपपत्तेः अभियुक्तप्रसिद्ध्या निरुक्तलक्षणकस्यैव सत्रत्वादेरङ्गीकारात् । पञ्चदशरात्रकुण्डपायिनामयनयोरपि सत्रत्वमेव । अत एव 'गृहपतिर्गृहपतिः' इति गृहपतिशब्दः सत्रैकान्तवृत्तिः कुण्डपायिनामयने । अतः सत्रात्मकद्वादशाहप्रकृतिकत्वमेवानयोः ।

**न्यायबिन्दुः**—पञ्चदशरात्रस्य कुण्डपायिनामयनस्य च आसनोपायिचोदनात् सत्रकाण्डाम्नातत्वाच्च सत्रत्वमेव, न तु अन्तेऽतिरात्रत्वमात्रेणाहीनत्वम् । अतः सत्रविध्यन्त एवेति सिद्धान्तः ।

**मण्डन**— 'सत्रं पञ्चदशाहकः ।'

**शंकर**— 'कौण्डपायिनसत्रत्वम् ।'

**अतिदेशः पशुगणेषु ऐकादशिनपशुधर्माणाम् ॥**

**तत्प्रवृत्तिर्गणेषु स्यात्, प्रतिपशुयूपदर्शनात् । ८।१।८।१५ ॥**

**भाष्यं**— इह पशुगणा उदाहरणं 'वसन्ते ललामांस्त्रीन् वृषभानालभते' तथा 'मैत्रं श्वेतमालभेत वारुणं कृष्णमपां चौषधीनां च संधावन्नकामः' (वन्नाद्यकामः) इति । तत्र विचार्यते किं अग्नीषोमीयस्य विध्यन्तः, उत ऐकादशिनानामिति । यथोक्तेन न्यायेन अग्नीषोमीयस्य । **एवं प्राप्ते उच्यते** । तत्प्रवृत्तिर्गणेषु स्यात् । तेषां ऐका-

दशिनानां प्रवृत्तिः पशुगणेषु स्यात् । कुतः ? प्रतिपशुयूपदर्शनात् । 'यत् त्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्, भ्रातृव्यमस्य जनयेत्, एकयूप आलभेत' इति यूपत्रित्वं प्रतिषिध्य एकं यूपं सौत्रामण्यां विदधाति । तदुपपद्यते, यदि ऐकादशिनविध्यन्तः । तत्र हि प्रतिपशु यूपाः । अग्नीषोमीयप्रकृतित्वे एक एव यूपः स्यात् । तत्र एतन्नोपपद्यते । तस्मादैकादशिनानां विध्यन्तः पशुगणेषु ।

**शा**— सौत्रामण्यादिषु पशुगणेषु गणत्वसामान्यातिरेकात् ऐकादशिनविध्यन्तः ।

**सोम**— ननु सौत्रामण्यादिपशुगणेषु अग्नीषोमीयविध्यन्त एव युक्तः । **न च** गणत्वसामान्यात् ऐकादशिनप्राप्तिरिति **वाच्यम्** । प्रत्येकमेव पशूनां इतिकर्तव्यताऽऽकाङ्क्षत्वात्, प्रत्येकं गणत्वाभावात् । अतो मूलप्रकृतितया अग्नीषोमीयविध्यन्त एवेत्युत्थितेः **संगतिपूर्वपक्षौ** । **सूत्रार्थस्तु**— पशुगणेषु ऐकादशिनविध्यन्तप्रवृत्तिः स्यात् सौत्रामण्यां त्रिपशुकायां 'यत् त्रिषु यूपेष्वालभेत बहिर्धाऽस्मादिन्द्रियं वीर्यं दध्यात्' इति यूपत्रयनिषेधबलेन प्रतिपशुयूपप्राप्त्यवगमात् ऐकादशिनेषु पशुभेदेन यूपभेदसद्भावात् इति ।

**वि**— 'ललामादिगणे दैक्षादैकादशिनतोऽथवा ।, आद्यो विशेषराहित्या, न गणत्वाविशेषतः ॥'

**भाट्ट**— पशुगणेषु तु सौत्येषु असौत्येषु वा पशुगणान्तर्गतत्वसादृश्यात् गणधर्माधिक्यलाभाच्च ऐकादशिनविकारत्वम् । अत एव सौत्येषु प्रचारविप्रकर्षाद्यप्राप्तौ अपि गणधर्मान्तरप्राप्तिरविरुद्धा । अत एव सौत्रामण्यां प्रतिपशु वैकल्पिके यूपानेकत्वे प्राप्ते तत् प्रतिषिध्य यूपैकत्वनियमविधिः 'एकयूप आलभेत' इत्ययमुपपद्यते । ८।१।३।११-१९. ( एकदेशो गृहीतोऽयम् )

**मण्डन**— 'गणेषु चैकादशिनस्य धर्माः ।'

**संकर**— 'तस्याः पशुगणेषु सः ।' तस्याः एकादशिन्याः, सः विध्यन्तः ।

**अतिदेशः वरुणप्रघासगतपञ्चसंचरेषु वैश्वदेविकसार्थवादविधिकाण्डस्य ॥**

**पञ्चसंचरेष्वर्थवादातिदेशः, संनिधानात् ।** ७।१।३।१७ ॥

**भाष्यं**— चातुर्मास्यानां वैश्वदेवे पर्वणि आग्नेयादीनि हवींषि सार्थवादवाक्यैर्विहितानि । धर्माश्च तेषामुक्ताः । वरुणप्रघासेषु केवलानि हवींषि आम्नाय यत् वैश्वदेविकानां ब्राह्मणं, तत् तेषामतिदिश्यते 'एतद्-ब्राह्मणान्येव पञ्चहवींषि, यद्ब्राह्मणानीतराणि' इति । तत्र किं अर्थवादमात्रस्य अयमतिदेशः, उत सार्थवादकस्य सविधिकस्य कृत्स्नस्य काण्डस्य इति । कथं पुनः अर्थवादमात्रस्य अतिदेशो भवति ? यथा 'पम्पाकुलायप्रतिमाश्च वृक्षाः' इति । के पुनर्विधयः, के अर्थवादाः ? 'त्रेधा संनद्धं बर्हिर्भवति, त्रेधा संनद्ध इध्मः' 'नव प्रयाजा इज्यन्ते, नवानुयाजाः' इत्येवमादयो विधयः । 'वार्त्रघ्नानि वा एतानि हवींषि' इत्यर्थवादाः । तत्रेदमुच्यते । पञ्चसंचरेष्वर्थवादातिदेशः संनिधानात् । पञ्च एतानि हवींषि सर्वपर्वसु संचरन्ति इति पञ्चसंचराणि इत्युच्यन्ते । तेषु पञ्चसंचरेषु अर्थवादमात्रस्य अतिदेश इति । कुतः ? संनिधानात् । हविषां संनिहिता अर्थवादाः हविर्विधिभिः एकवाक्यसंबद्धत्वात्, न धर्मविधयः । किमतः ? अत एतद्भवति, यत् पूर्वेषां ब्राह्मणमिति व्यपदेशो युज्यते । तद्धि तेषां ब्राह्मणं येन संबन्धः, अन्यत्र विधेयविधायकभावात् । अर्थवादैश्च एतानि विधीयन्ते, न धर्मविधिभिः । धर्मविधिभिस्तु यानि विधीयन्ते, न तानि हवींषि । तस्मात् अर्थवादानामतिदेशः, न धर्मविधीनाम् । अपि च वरुणप्रघासेष्वपि केचित् वैश्वदेविका धर्मा विधीयन्ते, यथा 'अग्निं मन्थन्ति' 'प्रसुवो भवन्ति' इति । तेषां अतिदेशेन विहितानां पुनराम्नानं अनर्थकं स्यात्, यदि विधयः अतिदिश्येरन् । तस्मात् अर्थवादातिदेश इति ।

**सर्वस्य वैकशब्द्यात् ।** १८ ॥

**भाष्यं**— नैतदेवं अर्थवादमात्रस्य अतिदेश इति । सविधिकस्य सार्थवादस्य कृत्स्नस्य काण्डस्यातिदेश इति । कुतः ? ऐकशब्द्यात् समानशब्दत्वात् इत्यर्थः ।

समानोऽयं 'ब्राह्मणं' इति शब्दः विधीनां अर्थवादानां च। स यथा अर्थवादान् गृह्णाति, एवं विधीनपि। गृह्णाति चेत्, तानपि अतिदिशति। यत्तु विधीनां हविर्भिः संबन्धो नास्तीति, विधेयविधायकसंबन्धो नास्ति, उपकारलक्षणः संबन्धो भविष्यति। क उपकारः? यदेषां अङ्गानि विदधति। अस्ति चेत् संबन्धः, ब्राह्मणशब्दश्रुत्या सर्वातिदेशो न्याय्य इति।

**लिङ्गदर्शनाच्च। १९॥**

**भाष्यं—** लिङ्गं च विधीनामतिदेशं दर्शयति। किं लिङ्गं? वरुणप्रघासेषु श्रूयते, 'त्रिंशदाहुतयो हूयेरन्, वाजिनो यजन्ति आहुतीनां संपत्त्यै त्रिंशत्त्वाय' इति। वरुणप्रघासेषु त्रिंशतं आहुतीर्दर्शयति। यदि विधयो नातिदिश्येरन्, ता न स्युः। तस्मादतिदिश्यन्ते।

**विहिताम्नानान्नेति चेत्। २०॥**

**भाष्यं—** विहिताम्नानात् इति यदुक्तं तस्य कः परिहारः? इति आभाषान्तं सूत्रम्।

**नेतरार्थत्वात्। २१॥**

**भाष्यं—** अत्रोच्यते। विध्यतिदेशेऽपि सति, न अग्निमन्थनादीनां आम्नानं अनर्थकम्। इतरस्य हविषोऽर्थेन भविष्यति, दक्षिणवैहारिकस्य मारुत्याख्यस्य। तस्मात् न एतत् ज्ञापकं विधीनां अनतिदेशस्य भविष्यति।

**शा—** 'पूर्वेषां ब्राह्मणं यत्, तदुत्तरेष्वतिदिश्यते। चोद्यते येन वाक्येन, तत् तेषां ब्राह्मणं मतम्॥ यद्यप्यङ्गत्वविधिभिर्हविषां न विधेयता। तथाप्यस्त्येव संबन्धस्तत्संबन्ध्यङ्गचोदनात्॥' तस्मात् सर्वेषामतिदेशः।

**सोम—** पूर्वाधिकरणे भावनया साक्षादपेक्षितधर्मगोचरः अतिदेशो निरूपितः। इदानीं ततो जघन्यः धर्मबोधकब्राह्मणातिदेशो विचार्यते इति **संगतिः**। वैश्वदेवे पर्वणि 'आग्नेयमष्टाकपालं निर्वपति, सौम्यं चरुं, सावित्रं द्वादशकपालं, सारस्वतं चरुं, पौष्णं चरुं, मारुतं सप्तकपालं, वैश्वदेवीमामिक्षां, द्यावापृथिव्यमेककपालम्' इति अष्टौ हवींषि आम्नातानि। तथा वरुणप्रघासेष्वपि। तेषामाद्यानि पञ्च हवींषि आम्नाय तेषु 'एतद्ब्राह्मणान्येव पञ्च हवींषि यद्-ब्राह्मणानि इतराणि' इत्यनेन इतराणि वैश्वदेविकानि यद्-ब्राह्मणानि, एतद्-ब्राह्मणान्येव वारुणप्राघासिकानि पञ्च हवींषि इति ब्राह्मणमतिदिष्टम्। अर्थवादानामपि न साक्षात् विधायकत्वं, किंतु विध्येकवाक्यतया। सा च अङ्गविधीनामपि अविशिष्टा। **सूत्रार्थस्तु—** आग्नेयादीनि पञ्च हवींषि सर्वेषु पर्वसु संचरन्ति इति पञ्चसंचराणि, तेषु अर्थवादातिदेशः हविर्विध्यन्तर्गततया हविःसंनिधानादिति।

**वि—** 'वैश्वदेवब्राह्मणस्यातिदेशो वादमात्रगः। सवादाङ्गविधिस्थो वा, हविर्विध्यन्वयाद्भवेत्॥ अर्थवादैकनिष्ठोऽसौ, मैवमङ्गविधेरपि। समानः सोऽन्वयोऽङ्गानां विधिरप्यतिदिश्यताम्॥'

**भाट्ट—** चातुर्मास्येषु वैश्वदेवे पर्वणि आद्यानि पञ्च हवींषि सधर्मकाणि विधाय वरुणप्रघासेषु विहितानि। तेषां च विनिगमनाविरहेण अभ्यासात् कर्मान्तरत्वम्। वरुणप्रघासस्थहविःसंनिधौ च 'एतद्-ब्राह्मणान्येव पञ्च हवींषि, यद्ब्राह्मणानीतराणि' इति श्रुतम्। इतराणि वैश्वदेविकानि इत्यर्थः। अत्र च ब्राह्मणस्यैवातिदेशः। **यद्यपि** च अन्यत्र उपकारस्य तत्प्रभावेन पदार्थानामेवातिदेशः, न तु पदार्थबोधकशास्त्राणां, प्रयोजनाभावात्। **तथापि** इह लक्षणायां प्रमाणाभावात् शास्त्रस्यैवातिदेशः। न च शास्त्रातिदेशे तद्बोधितपदार्थानां प्राकृतोपकाराभावे उपकारान्तरकल्पनात् ऊहबाधानुपपत्तिः, शास्त्रस्यापि विजातीयोपकारजनकविजातीयपदार्थप्रतिपादकतया निरूपितरूपस्यैव अतिदेशात् उपकारान्तरकल्पनाऽनुपपत्त्या ऊहबाधोपपत्तेः। वस्तुतस्तु ब्राह्मणपदेन अर्थविधायकवाक्यस्य उक्तत्वात् लाघवात् अपेक्षितत्वाच्च अत्रापि अर्थस्यैवातिदेशः। अत एव अतिदेशलक्षणमपि नासंगतम्। तदिह अर्थविधायकवाक्यस्यैव एतद्ब्राह्मणपदेन उक्तत्वात् सार्थवादकस्यैव विधायकत्वात् आकाङ्क्षाऽभावेन प्रधानातिदेशाभावेऽपि स्तुतिमात्रस्यातिदेशः, न तु अङ्गानाम्। एतेषां स्वस्वाङ्गविधिविधेयत्वेन हविर्विधिविधेयत्वाभावात्। अत एव वरुणप्रघासेषु 'अग्निं मन्थति' 'प्रसुवो भवन्ति' इत्यादिविधयोऽपि उपपद्यन्ते। अन्यथा अतिदेशादेव प्राप्तत्वेन वैयर्थ्यापत्तेः। **इति प्राप्ते,** अङ्गविधीनामपि एतद्धविःसंबन्ध्यङ्गविधायक-

त्वेन एतद्-ब्राह्मणत्वोपपत्तेः शास्त्रस्य महाविषयत्वसिद्ध्यर्थं अङ्गानां स्तुतेश्चातिदेशः । न च अपेक्षाक्रमेणैव सर्वत्रान्वयात् अर्थभावनायाः इतिकर्तव्यताऽपेक्षायां अङ्गातिदेशो अवगते पश्चात् तद्विशिष्टार्थभावनायाः विधिसंबन्धावगमोत्तरं तस्य स्तुत्यपेक्षायां स्तुत्यतिदेशः इति विरम्यव्यापारापत्तिः, इष्टसामान्यवत् इतिकर्तव्यतासामान्याक्षेपादेव तद्विशिष्टभावनाविधिसिद्धेः स्तुत्यपेक्षावेलायामेव अतिदेशप्रवृत्तेः । अत एव आनुमानिकवचनातिदेशोऽपि अर्थवादातिदेशसिद्धिः । या तु एवं सति विश्वजिति आतिदेशिकार्थवादिकफलकल्पनाप्रसक्तिः, सा **कौस्तुभे** एव निरस्ता । वस्तुतस्तु वाचनिकातिदेशस्य भिन्नवाक्यविधया प्रमाणत्वात् उत्पत्तिवाक्ये इतिकर्तव्यतासामान्याक्षेपः आवश्यक एव । न च प्राशस्त्यातिदेशे तस्य निरुक्ताङ्गत्वसत्त्वे प्रमाणाभावात् अतिदेशलक्षणस्य अव्याप्तिः, लक्षणे अङ्गत्वपदेन भावनेतिकर्तव्यतात्वेन अन्वितस्य विवक्षितत्वात् । अतश्च अर्थभावनेतिकर्तव्यतात्वस्य तत्करणोपकारजनकत्वरूपस्य शाब्दभावनेतिकर्तव्यतात्वस्य च रुचिरूपतत्करणोपकारजनकज्ञानविषयत्वाख्यस्य द्विविधस्यापि संग्रहः । अन्वितपदोपादानाच्च आर्थिके प्रासङ्गिके वा उपकारजनकेऽपि नातिदेशः, तस्य प्रकृतिभावनाऽनन्वितत्वात् । तस्मादुभयातिदेशः । अग्निमथनादीनां तु दक्षिणविहारे प्राप्त्यभावात् युक्तः तदर्थं पुनर्विधिः । अत एव नवप्रयाजत्वादेरतिदेशात् 'वाजिनो यजन्ति आहुतीनां संपत्त्यै त्रिंशत्त्वाय' इति लिङ्गमपि उपपद्यते । इतरथा त्रिंशत्त्वानुपपत्तेः इति **सूत्रकारभाष्यकारौ । वस्तुतस्तु** मारुतीयागस्यापि वैश्वदेविकामिक्षायागविकारत्वात् नवप्रयाजत्वादिवदेव अग्निमथनादीनामपि प्राप्तिसंभवात् नायं वैयर्थ्यपरिहारः, आमिक्षैककपालानुरोधेनैव च नवप्रयाजत्वादिसिद्धेः त्रिंशत्त्वस्यापि उपपत्तिः । न च भूयसां दर्शपूर्णमासविकारत्वात् तदनुरोधेन पञ्चप्रयाजत्वं, पशुपुरोडाशवत् नवावृत्तावपि पञ्चत्वाविरोधात् । अतो भाष्यमनादृत्य सूत्रमेवं व्याख्येयं, अग्निमन्थनादिवाक्यानां औचित्येन अतिदेशविधिस्तुत्यर्थत्वात् नेतरार्थत्वात् इति सूत्रं (२१) विधायकत्वातिरिक्तस्तावकत्वरूपप्रयोजनकथनार्थं, तदेव च अतिदेशवाक्यस्याङ्गविधिपरत्वे लिङ्गं इति लिङ्गदर्शनसूत्रस्यार्थः ( १९ ) । अतः सिद्धं अङ्गानामपि अतिदेश इति । न च आमिक्षैककपालयागानुरोधेनैव वैश्वदेविकधर्मप्राप्तिसिद्धेः अतिदेशविध्यानर्थक्यं, यत्र धाय्याविराजादिविरुद्धनानाधर्मविषये मुख्यत्वभूयस्त्वाभ्यां दार्शिकधर्मप्रसक्तिः, तद्विषये वैश्वदेविकधर्मप्राप्त्यर्थत्वेन सार्थक्यात् ।

**न्यायबिन्दुः**—चातुर्मास्येषु 'एतद्ब्राह्मणान्येव पञ्च हवींषि' इति वैश्वदेवपर्वगतानामाम्नातानां पञ्चानां हविषां यत् ब्राह्मणं, तत् वारुणप्राघासिकेषु पञ्चसु अतिदिष्टम् । तत्र ब्राह्मणशब्देन विधायकं वाक्यमुच्यते । तत्र प्रधानवाक्यस्य अतिदेशानुपयोगात् अङ्गविधीनां च प्रधानविधायकत्वाभावात् प्रधानविध्यर्थवाद एवातिदिश्यते । **इति प्राप्ते,** अङ्गविधीनामपि प्रधानसंबन्ध्यङ्गविधायकत्वेन ग्रहणसंभवात् तेषामपि अतिदेश इति सिद्धान्तः ।

**मण्डन**—'अतिदेशो विधेरिष्टः ।'

**शंकर**—'स्यात् पञ्चसंचरेष्वेवम् ।'

**अतिदेशः वरुणप्रघासावभृथे अवभृथनाम्ना सौमिकावभृथधर्माणाम् ॥**

**तथाऽवभृथः सोमात् । ७।३।४।१३ ॥**

**भाष्यं** — वरुणप्रघासेषु श्रूयते 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति । तत्र संदेहः किं दार्शपूर्णमासिके अपां न्युत्सेके तुषनिष्कासं विधीयते, उत सौमिकादवभृथात् धर्मातिदेश इति । किं युक्तं ? दार्शपूर्णमासिके गुणविधिः, एवं संनिहितप्रत्ययोऽनुगृह्यते, संनिहितो ह्यसौ चोदकेन प्रापितः । ननु नासौ अवभृथः । उच्यते, अस्ति तत्रावभृथशब्द इति 'एष वै दर्शपूर्णमासयोरवभृथः' इति । **एवं प्राप्ते**, इदमाह 'तथाऽवभृथः सोमात्' । यथा षडहात् पृष्ठानामतिदेशः, एवं सौमिकादवभृथात् इह धर्मातिदेशः । कुतः ? अभिहितो न्यायः 'उक्तं क्रियाभिधानं तच्छ्रुतावन्यत्र विधिप्रदेशः स्यात्' इति (७।३।१।१) ।

**प्रकृतेरिति चेत्** । १४ ॥

**भाष्यं**— अथ यदुक्तं 'दार्शपौर्णमासिके अवभृथे गुणविधिर्भवतु' इति, तस्य कः परिहारः ? इत्याभाष्यान्तं सूत्रम् ।

**न भक्तित्वात्** । १५ ॥

**भाष्यं**— नैतद्युक्तम् । कुतः ? यतो नास्ति दर्शपूर्णमासयोरवभृथः । ननु 'एष वै दर्शपूर्णमासयोरवभृथः' इति श्रूयते, सत्यं श्रूयते, न त्वेवं अवभृथत्वमस्य भवति । कथं ? उच्यते । 'एष वै दर्शपूर्णमासयोरवभृथः' इत्येतस्य वाक्यस्य द्वयी वचनव्यक्तिः, निर्ज्ञातावभृथत्वस्य वा पदार्थस्य दर्शपूर्णमाससंबन्ध उच्यते, यथा 'देवदत्तो यज्ञदत्तस्य पुत्रः' इति निर्ज्ञातपुत्रत्वस्य देवदत्तस्य यज्ञदत्तसंबन्ध उच्यते । निर्ज्ञातसंबन्धस्य वा अनिर्ज्ञातावभृथत्वस्यावभृथत्वं, यथा 'अयमाम्रो यज्ञदत्तस्य पुत्रः' इति निर्ज्ञातयज्ञदत्तसंबन्धस्य आम्रपुत्रत्वमुच्यते । तदस्य अपां व्युत्सेकस्य दर्शपूर्णमाससंबन्धः प्रकरणान्निर्ज्ञातः, नावभृथत्वं, अतोऽस्यावभृथत्वमुच्यते, न चायमवभृथः । ननु अयमपि अवभृथो भवतु । नैतद्युक्तं, अन्यायो ह्यनेकार्थत्वम् । कथं तर्हि शब्दप्रयोगः ? सादृश्यात् । किं सादृश्यं ? अप्सु संबन्धः । स एष भक्त्या प्रशंसावादः अपां व्युत्सेकस्य, अवभृथ इवायमिति, यथा आम्रे पुत्रवादः । तस्मान्नास्ति दर्शपूर्णमासयोरवभृथः । अतो नात्र गुणविधिः ।

**लिङ्गदर्शनाच्च** । १६ ॥

**भाष्यं**— लिङ्गं चैतमर्थं दर्शयति । किं लिङ्गं भवति ? एवमाह 'नायुर्दा जुहोति, न साम गायति, न वा गमनमन्त्रं जपति' इति सौमिकावभृथधर्माणां प्रतिषेधं ब्रुवन् तद्धर्मप्राप्तिं दर्शयति । तस्मात् सौमिकादवभृथात् धर्मप्रदेश इति ।

**शा**—अपां व्युत्सेकेऽपि अवभृथशब्दप्रयोगात् तदनुवादः । ननु तत्र गौणोऽवभृथशब्दः, न चेह गौणग्रहणं न्याय्यम् । तुल्यमिदं तवापि गौणत्वम् । अपि च ममानुवादे गौणः, तव तु विधौ, तस्मादपां व्युत्सेके गुणविधिः । ( **इति प्राप्ते ब्रूमः** ) 'सत्यं ममापि तुल्यत्वमस्ति तत्तु प्रमाणवत् । कर्मान्तरे प्रयुक्तत्वाद्, भवतस्त्वप्रमाणवत् ॥ गौणत्वं नहि शब्दस्य स्वरसादवगम्यते । अर्थान्तरे प्रयोगे तु निश्चिते गौणता भवेत् ॥' न चेह अपां व्युत्सेकपरत्वे अवभृथशब्दस्य प्रमाणमस्ति । 'यन्ति' इत्यनेन तु प्रकरणान्तरन्यायेन ( २।३।११ ) कर्मान्तरं विधीयते । तत्र प्रयुज्यमानोऽवभृथशब्दः मुख्यावभृथसादृश्यं विदधत् तद्धर्मानतिदिशति इति न्याय्यम् ।

**सोम**— गौणत्वाविशेषेऽपि 'तात्पर्याद्धि वृत्तिः, न वृत्तेस्तात्पर्यं' इति कार्यान्तरविधिपक्षे सामानाधिकरण्येन तत्परत्वनिश्चयात् सिद्धान्ते गौणत्वं संभवति, पूर्वपक्षे तु अपां व्युत्सेकपरत्वस्य प्रमाणान्तरेणानिश्चयात् गौणत्वं न संभवति । **सूत्रार्थस्तु**— यथा सर्वपृष्ठशब्दः षाडहिकातिदेशकः, तथाऽवभृथशब्दोऽपि सौमिकावभृथधर्मानतिदिशति इति ।

**वि**— 'निष्कासेन तुषैश्चावभृथं यन्तीत्यनूद्यते । नीरोत्सेकः कर्मणो वा विधिः सौमिकधर्मणः ॥, यो दर्शपूर्णमासाभ्यां वारुण्यां चोदकागतः । व्युत्सेकोऽनूद्यतामेष, मैवं कर्मणि सौमिके ॥ मुख्यावभृथशब्दो यस्तत्सादृश्यविवक्षया । धर्मानतिदिशन् कर्म विधत्ते धर्मसंयुतम् ॥'

**भाट्ट**— वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इति श्रुतम् । तत्र दार्शपूर्णमासिकं अपां व्युत्सेकं अवभृथपदेनानूद्य लाघवात् तुषनिष्कासौ विधीयेते ( वारुण्याः इति ) षष्ठीबलात् ( तुषैश्च इति ) चशब्दस्य निपातत्वाच्च परस्परान्वयस्य व्युत्पन्नत्वेन न विधेयानेकता दोषाय । अस्ति च अपां व्युत्सेकेऽपि अवभृथपदप्रयोगः 'एष वै दर्शपूर्णमासयोरवभृथः' इत्यादौ । अतो नात्र विशिष्टकर्मान्तरविधिः, न वा अवभृथशब्दस्य विधौ गौणत्वमङ्गीकृत्य नामातिदेशकत्वम् । **इति प्राप्ते**, अनेकशक्तिकल्पनाभिया अपां व्युत्सेके आर्थवादिकावभृथशब्दस्य जलसंबन्धित्वसादृश्येन गौणत्वात्, प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदापत्तेश्च, कर्मान्तरविधिरेवायम् । सत्यामपि च निपातस्य उपपदार्थान्वयव्युत्पत्तौ उपपदार्थद्वयस्य परस्परान्वयव्युत्पत्त्यभावात् विधेयानेकता स्पष्टैव । अतश्च गुणात् प्रकरणान्तराद्वा अत्र कर्मभेदः । वारुणीनिष्कासस्य वैमृधन्यायेन (४।३।१३)।

पदान्तरकल्पनया संस्कार्यत्वात् एकादशे वक्ष्यमाणमर्थकर्मत्वं परं तुषांशे इत्युक्तं प्रकरणान्तराधिकरणे कौस्तुभे ( २।३।११ पृ. ८५ )। अतश्च तत्रावभृथनाम्ना सौमिकावभृथधर्मातिदेशः। अत एव 'नायुर्दो जुहोति, न साम गायति, न गमनमन्त्रं जपति' इत्यादिनिषेधोऽपि संगच्छते। अतिदेशेऽपि च न तदीयद्रव्यस्य एककपालस्यातिदेशः, औपदेशिकेन विशेषविहितेन च तुषनिष्कासद्रव्येण लाक्षणिकस्य सामान्यविहितस्यातिदेशप्राप्तस्य द्रव्यस्य बाधात्।

**न्यायबिन्दुः**— वरुणप्रघासेषु 'वारुण्या निष्कासेन तुषैश्चावभृथं यन्ति' इत्यवभृथशब्देन अपां व्युत्सेकं दर्शपूर्णमासातिदेशप्राप्तमनूद्य तत्र तुषनिष्कासविधिः। इति प्राप्ते, अवभृथशब्दस्य तत्परत्वे मानाभावात् 'यन्ति' इतिविहितकर्मान्तरे अवभृथशब्दो गौणः, इति मुख्यावभृथधर्मातिदेशः, इति सिद्धान्तः।

**मण्डन**— 'धर्माश्च सोमावभृथात् प्रघासे।'

**शंकर**— 'तुषावभृथकर्म भित्।' भित् भिन्नं क्विप्।

## अतिदेशः वाजिनसुराग्रहयोः ऐष्टिकधर्माणाम्॥

**वाजिने सोमपूर्वत्वं सौत्रामण्यां च ग्रहेषु ताच्छब्द्यात्। ८।२।१।१॥**

**भाष्यं**— चातुर्मास्येषु वाजिनेज्या श्रुता 'वाजिभ्यो वाजिनं' इति। सौत्रामण्यां च सुराग्रहाः 'आश्विनं ग्रहं गृह्णाति सारस्वतं ऐन्द्रं' इति। तत्र संशयः किं उभयोः सौमिको विध्यन्तः, उत दार्शपौर्णमासिक इति। तदुच्यते। वाजिने, सौत्रामण्यां च ग्रहेषु सोमपूर्वत्वं, सौमिको विध्यन्तः। कुतः? ताच्छब्द्यात्, सोमशब्दत्वात्। सोमशब्दस्तु अत्र श्रूयते 'सोमो वै वाजिनं, सुरा सोमः' इति। न तावत् वाजिनं सोमः, न सुरा। न च तयोः सोमेन सादृश्यमस्ति। सादृश्याच्च परशब्दः परत्र प्रवर्तते। तस्मात् सादृश्यमत्र विधीयते। सादृश्यं चात्र सोमधर्मकत्वं शक्यं विधातुं, नान्यत्। स एष नाम्ना धर्मातिदेशः, न विध्यन्तेन। यथा कौण्डपायिनामयने अग्निहोत्रे।

**अनुवषट्काराच्च। २॥**

**भाष्यं**— अनुवषट्कारं च सोमधर्मं दर्शयति 'वाजिनस्य अग्ने वीहि इत्यनुवषट् करोति' 'सुरायाः वीहि इत्यनुवषट् करोति' इति।

**समुपहूय भक्षणाच्च। ३॥**

**भाष्यं**— समुपहूय भक्षणं च सोमधर्मः तत्र दृश्यते 'शेषं समं विभज्य समुपहूय भक्षयन्ति' इति।

**क्रयणश्रयणपुरोरुगुपयामग्रहणासादनवासोपनहनं च तद्वत्। ४॥** ( क्रयणं च, श्रयणं च, पुरोरुक् च, उपयामग्रहणं च, आसादनं च, वासोपनहनं वासेन वाससा उपनहनं च, तेषां समाहारः )

**भाष्यं**— क्रयणादींश्च सोमधर्मान् सुरायां दर्शयति 'सीसेन क्लीबात् क्रय्या' 'कुवलसक्तुभिराश्विनं श्रीणाति' इति। 'एका पुरोरुक्, एका याज्या।' 'उपयामगृहीतोऽस्यच्छिद्राय त्वाऽच्छिद्रेणाश्विनं ग्रहं गृह्णामि इति गृह्णाति, गृहीत्वा सादयति। त्रिरात्रं संहता वसन्ति। क्षौमे वाससि उपनद्धानि तोक्मानि शष्पाणि ( च ) भवन्ति' इति। विधौ सति अनेकार्थानि वाक्यानि स्युः। क्रयादीन् सीसकादींश्च विदधति। तस्मात् उभयोः सौमिको विध्यन्तः।

**हविषा वा नियम्येत, तद्विकारत्वात्। ५॥**

**भाष्यं**— हविःसामान्येन वा अत्र दार्शपौर्णमासिको विध्यन्तो नियम्येत। कुतः? तद्विकारत्वात्। दार्शपौर्णमासिकस्य हविषो विकारः सुरावाजिने। औषधविकृतिः सुरा, सांनाय्यविकृतं वाजिनम्।

**प्रशंसा सोमशब्दः। ६॥**

**भाष्यं**— अथ यदुक्तं ताच्छब्द्यात् इति। तत्र ब्रूमः। प्रशंसार्थोऽयं सोमशब्दः, न विध्यर्थः, विधायकस्याभावात्। 'सोमो वै वाजिनं, सुरा सोमः' इति प्रकृष्टफलवत्त्वात् सोमस्य तद्भावेन सुरावाजिनयोः प्रशंसा, यथा 'सिंहो देवदत्तः' इति पुरुषस्य। तस्मान्नायं नाम्ना धर्मातिदेशः।

**वचनानीतराणि । ७ ॥**

**भाष्यं**— इतराणि तु सीसक्रयादीनि वाचनिकानि प्राप्तेरभावात् । अगत्या च वाक्यानामनेकार्थता सगुणकर्मविधानेन ।

**व्यपदेशश्च तद्वत् । ८ ॥**

**भाष्यं**— 'शष्पैरेव दीक्षणीयामाप्नोति, तोक्मभिः प्रायणीयां, सिंहलोमभिरातिथ्यां' इति । सोमविकारत्वे प्रत्यक्षमेव दीक्षणीयादीनि प्राप्नुयुः । प्राप्तानां शष्पादिभिः तदाप्तिवचनं नोपपद्यते ।

**पशुपुरोडाशस्य च लिङ्गदर्शनम् । ९ ॥**

**भाष्यं**— पशुपुरोडाशता च ग्रहाणां श्रूयते 'नैतेषां पशूनां पुरोडाशा विद्यन्ते, ग्रहपुरोडाशा ह्येते पशवः' इति । तन्न तावदत्र ग्रहाः पुरोडाशाः । ग्रहा एव ते । यदि तु पुरोडाशधर्मकाः, तत एतदुपपद्यते । तस्मात् पौरोडाशिकः तेषु विध्यन्तः ।

**सोम**— पूर्वपादे स्पष्टलिङ्गातिदेश उक्तः । तद्धितेन देवतानिर्देशैकदेवताकत्वनिर्वपत्यादीनां स्पष्टत्वात् । इह तु अस्पष्टलिङ्गातिदेश इति पादान्तरत्वमानन्तर्यं च । वाजिनादौ वक्ष्यमाणलिङ्गानां यथाकथंचित् उपपादनीयत्वात् झटित्यप्रतीतेश्च अस्पष्टता । अर्थवादगतस्य सोमशब्दस्य वाचनिककतिपयधर्मनिबन्धनं वा प्रत्यक्षाद्यवगतं वा सिद्धमेव सादृश्यमादाय स्तुत्यर्थतया उपपत्तेः विध्युद्देशगताग्निहोत्रशब्दवत् साध्यसादृश्यपरत्वे प्रमाणाभावात् नातिदेशकत्वं इति सिद्धान्तः । अत्र सोमशब्दस्यार्थवादगतत्वात् अनतिदेशकत्वमिति स्थितेऽपि सप्तमे (७।३।१३) 'उपशयो यूपो भवति' इत्यत्र पृथगाख्यातश्रवणात् विधायकतयैव यूपशब्दस्यातिदेशकत्वमाशङ्क्य पृथगाख्यातश्रवणेऽपि पुरुषव्यापाराद्यश्रवणात् विध्यन्तैरैकवाक्यत्वाच्च विधायकत्वाभावात् अनतिदेशकत्वं इत्यपुनरुक्तिः । **सूत्रार्थस्तु**— वाजिने सौत्रामणिग्रहेषु च सोमप्रकृतिकत्वं सोमशब्दवत्त्वादिति ।

**वि**— 'सुरावाजिनयोः सोमस्येष्टेर्वा, सोमशब्दतः । आद्यो, मैवं हविःसाम्यात् सोमशब्दः प्रशस्तये ॥'

**भाट्ट**— वाजिनयागस्य आमिक्षाऽनुनिष्पन्नवाजिनप्रतिपत्तिकर्मणोऽपि अङ्गापेक्षायां किं सौमिकातिदेशः, उत दार्शिक इति चिन्त्यते । सौत्रामण्यङ्गदेवतासंस्कारार्थसुराग्रहेषु च एवमेव चिन्ता । तत्र 'सोमो वै वाजिनं, सुरा सोमः' इति असोमे सोमशब्दः सोमधर्मातिदेशार्थः । न च 'उपशयो यूपो भवति' इतिवत् अर्थवादस्थत्वात् अनतिदेशकत्वं, तद्वदिह सिद्धसादृश्याभावेन नानातिदेशावश्यकत्वात् । अत एव अनुवषट्कारमन्त्रौ, सनुपहूय भक्षणं ( च ) उभयत्र दर्शयति । सुरायां सीसेन क्रयणं, कुवलसक्तुभिः श्रयणं, एका पुरोरुक्, उपयाम इति मन्त्रः, गृहीत्वा आसादनं, क्षौमे वाससि उपनहनं (च) दर्शयति । ग्रहशब्दश्च एवं सति सुतरामुपपद्यते । **इति प्राप्ते,** आर्थवादिकस्य सोमशब्दस्य प्रकृष्टफलत्वरूपसिद्धसादृश्येन उपपत्तौ वाक्यभेदापादकविधिपरत्वे प्रमाणाभावात् ग्रहशब्दस्य प्रायणीयवत् ग्रहणस्य औपदेशिकत्वेनैव उपपत्तेः । लिङ्गानां च वाचनिकतयाऽपि उपपत्तौ अप्रतिबद्धेन चोदनालिङ्गातिदेशेन दार्शिकविध्यन्त एव । तत्रापि वाजिने पशुप्रभवत्वसादृश्यात् पयोयागविध्यन्तः । सुरायां पौरोडाशिकः, औषधद्रव्यकत्वात् । अत एव 'शष्पैरेव दीक्षणीयामाप्नोति' इति दीक्षणीयाप्राप्तिवचनं संगच्छते । इतरथा हि तस्याः प्रत्यक्षत्वेन प्राप्तिवचनेन स्तुतिः असंगतैव स्यात् । तथा 'नैतेषां पशूनां पुरोडाशा विद्यन्ते ग्रहपुरोडाशा ह्येते पशवः' इति ग्रहेषु पुरोडाशशब्दानुवादः तद्धर्मकत्वे संगच्छते । यद्यपि च एतेषां ग्रहयागान्तराणां **वार्तिककारमते** पशुपुरोडाशकार्यापन्नत्वस्य दशमे ( १०।१।३३ सू. ) वक्ष्यमाणत्वात् स्थानापत्त्यैव पुरोडाशशब्दोपपत्तिः, तथापि स्थानापत्त्याऽपि तावत् पशुपुरोडाशधर्मप्राप्तेः लिङ्गोपपत्तिः । वस्तुतस्तु अङ्गापेक्षायां अङ्गघटितसादृश्यस्यैव पुरःस्फूर्तिकत्वेन स्थानापत्यतिदेशापेक्षया चोदनालिङ्गातिदेशस्य बलवत्त्वात् औषधद्रव्यकत्वेन सर्वप्रकृतिभूतदर्शपूर्णमासविकारत्वमेव । अत एव 'एषामसंभवे कुर्यादिष्टिं वैश्वानरीं बुधः' इत्यादौ 'त्रैधातव्या दीक्षणीया', इत्यादौ च न ज्योतिष्टोमादि- ( दीक्षणीयादि )धर्माः । यदा तु दाशमिकसूत्रभाष्यकाररीत्या ( १०।१।३३ सू. ) प्राकृतपशुपुरोडाशयागे एव सुरादिद्रव्यान्तरमात्रविधिः इत्याश्रीयते, तदा सोमादिशब्दस्य नामातिदेशनिराकरणमात्रार्थं इदमधिकरणं, न तु

औषधद्रव्यकत्वलिङ्गकातिदेशसिद्ध्यर्थं, ' एतदलाभेऽपि पशुपुरोडाशस्य दर्शपूर्णमासविकारत्वसिद्धेः इति ध्येयम् ।

**न्यायबिन्दुः**— वाजिने सौत्रामणीग्रहेषु च सोमातिदेशः ' सोमो वै वाजिनं, सुरा सोमः ' इति गौणप्रयोगात् । **इति प्राप्ते**, अर्थवादस्याविधायकत्वात् वाजिने पयोविध्यन्तः, सुराग्रहेषु च औषधविध्यन्तः इति सिद्धान्तः ।

**मण्डन**— ' न वाजिने सोमधर्मः । '

**शंकर**— ' पयसो वाजिने च सः । ' विध्यन्तः ।

**अतिदेशः विश्वजिति षडहगतपृष्ठानाम् ॥**

**विश्वजिति सर्वपृष्ठे तत्पूर्वकत्वाज्ज्यौतिष्टोमिकानि पृष्ठान्यस्ति च पृष्ठशब्दः । ७।३।३।७ ॥**

**भाष्यं**— ' विश्वजित् सर्वपृष्ठो भवति ' इति श्रूयते । तत्र विचार्यते किमयमनुवादो विधिर्वेति । किं प्राप्तं ? अनुवाद इति । कुतः ? यो हि असर्वपृष्ठः, तस्य सर्वपृष्ठता विधेया । यस्तु सर्वपृष्ठ एव, तस्य तया किं विहितया । अयं च सर्वपृष्ठ एव । कथं ? तत्पूर्वकत्वात् ज्योतिष्टोमपूर्वकत्वात् ज्यौतिष्टोमिकानि स्तोत्राणि अत्र प्राप्यन्ते । तेषु माहेन्द्रस्तोत्रादीनि चत्वारि सन्ति, तानि सर्वाण्यस्य । तैरयं सर्वपृष्ठो भवति । ननु न तानि पृष्ठानि । उच्यते । अस्ति च पृष्ठशब्दः, तेष्वस्ति पृष्ठशब्दः ' सप्तदशानि पृष्ठानि ' इति । तस्मादनुवादः ।

**षडहाद्वा, तत्र हि चोदनाः । ८ ॥**

**भाष्यं**—नायमनुवादः । किं तर्हि ? विधिः । अनुवादः अप्रवृत्तिविशेषकरः अनर्थकः स्यात् । अपि च ज्योतिष्टोमे न पृष्ठबहुत्वमस्ति, यस्यायमनुवादः स्यात् । षडहे तु तदस्ति । तत्र हि चोदनाः पृष्ठानां ' रथंतरं पृष्ठं भवति ' इत्येवमाद्याः । तस्मात् षाडहिकानां आतिदेशिको विधिरिति ।

**टुप्**—ज्योतिष्टोमे ' रथंतरं पृष्ठं भवति ' ( किमनुवादमात्रं सर्वपृष्ठशब्दः, उत विकल्पप्राप्तयोर्बृहद्रथंतरयोः सामस्त्यविधानं, आहोस्वित् षाडहिकानां सर्वेषां पृष्ठानामतिदेशः इति चिन्त्यते । तत्र प्रथमं पक्षं दूषयति— ) इत्येकस्य पृष्ठस्य विहितत्वात् ( बहुत्वापेक्षिणः ) सर्वशब्दस्याभिधेयाभावात् वाक्यानर्थक्यं ( प्रसज्येत ) । षडहे तु गायत्रं प्रकृत्य सर्वाणि पृष्ठानि ( कार्याणि ) इति विहितं, तत्र सर्वपृष्ठशब्दार्थवत्ता । ज्योतिष्टोमे ( तु ) छत्रिन्यायेन पृष्ठशब्दस्य (माहेन्द्रादिषु) प्रयोगात् लक्षणा । ' सप्तदशानि ' इति च सप्तदशता विधीयते, न पृष्ठता । ( चशब्दो हेतौ । द्वितीयं पक्षं दूषयति ) न च विकल्पप्राप्तयोः समुच्चयेनार्थवत्ता, व्यर्थत्वादेव सर्वशब्दस्य ( बह्वपेक्षत्वात्तस्य ) । सर्वपृष्ठ इति समासोऽयम् । समासेन च विदधतो नानेकगुणविधानं दुष्करम् । ( भाष्योक्तं परिहारमाह- ) अथवा पृष्ठगता सर्वता साक्षात् विधीयते । ( न चाविधाय पृष्ठानि तत्सर्वता शक्या विधातुम् ) । तस्मात् ( अर्थापत्त्या ) पृष्ठानां विधानम् । तस्मात् षाडहिकानि सर्वपृष्ठानि विधीयन्ते ।

**लिङ्गदर्शनाच्च । ९ ॥**

**भाष्यं**—लिङ्गं च एतमर्थं दर्शयति ' पवमाने रथंतरं करोति, आर्भवे बृहत्, मध्ये इतराणि, वैरूपं होतुः साम, वैराजं मैत्रावरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य ' इति विनिवेशपरे वाक्ये षाडहिकानि पृष्ठानि दर्शयति ।

**टुप्**—(लिङ्गदर्शनाच्चेति सूत्रार्थमाह—) एवं च क्रमविधिपरं वाक्यं ( ' पवमाने रथंतरं, आर्भवे बृहत् ' इत्यादि ) उपपत्स्यते तस्मिन् ( विश्वजिति ) ।

**उत्पन्नाधिकारो ज्योतिष्टोमः । १० ॥**

**भाष्यं**— अथ यदुक्तं, अस्ति च पृष्ठशब्द इति, तत्र ब्रूमः । न तु तत्र औत्पत्तिकः पृष्ठशब्दः । उत्पन्नानां स्तोत्राणामसौ अधिकारः यानि एतानि पृष्ठानीति । ज्ञाते च तेषां पृष्ठत्वे तदुपपद्यते, न च तत्र ज्ञातम् । कथं तर्हि अयमनुवादः ? लिङ्गसमवायात् । एकं तत्र माहेन्द्रस्तोत्रं इति । षाडहिकानां पुनः पृष्ठत्वं ज्ञातम् । कथं ? तत्र हि चोदना इत्युक्तम् । तेषां वादे श्रौतः पृष्ठशब्दस्यार्थः परिगृहीतो भवति । इतरथा लाक्षणिकः । तस्मात् षाडहिकानां प्रदेश इति ।

**द्वयोर्विधिरिति चेत् । ११ ॥**

**भाष्यं**— षाडहिकानां पृष्ठानां विधिरिति, नैतद्युक्तम् । किं कारणं ? द्विकर एवं सर्वपृष्ठशब्दोऽभ्युपगतो भवति पृष्ठानि च विदधाति, तेषां च सर्वत्वम् । अस्तु

को दोषः ? असंभव इत्याह । यदि पृष्ठशब्दः पृष्ठानि विदधाति, सर्वशब्देन न शक्यते विशेषयितुम् । अथ अनुवदति तथा शक्यते, पृष्ठानि तु अविहितानि भवन्ति । तेषु असत्सु कस्येदं सर्वत्वं विधीयते ? उभयक्रियायाश्च असंभवः । अथात्र बृहद्रथंतरयोः विकल्पेन प्राप्तयोः सामस्त्यं केवलं विधीयते सर्वपृष्ठो भवतीति । उभे अपि बृहद्रथंतरे भवतः, नैकमिति, ततोऽयं दोषो न भवति । तस्मात् द्वयोरधिकारः ।

**न, व्यर्थत्वात् सर्वशब्दस्य । १२ ॥**

**भाष्यं**—नैवमेतत् । कुतः ? व्यर्थत्वात् सर्वशब्दस्य । एवं सति सर्वशब्दो व्यर्थो भवति अर्थशून्यः । अयं हि बहुविषयो द्वयोर्न युज्यते । षाडहिकानां तु विधाने नैष दोषः । ननु च तत्रापि द्विकरः शब्दो भविष्यति । उच्यते । न भविष्यति । सर्वत्वं केवलं पृष्ठानां विधास्यति, न पृष्ठानि । ननु उक्तं पृष्ठेषु असत्सु कस्येदं सर्वत्वं विधीयते इति । उच्यते । पृष्ठानां सर्वत्वं हि विहितम् । तत् संपादयितव्यम् । न च पृष्ठानि अकुर्वता तत् संपादयितुं शक्यते । तत्र अर्थात् पृष्ठानि करिष्यति । एवं न द्व्यर्थः शब्दो भविष्यति, सर्वशब्दश्च समर्थितः । तस्मात् षाडहिकानां अतिदेशः इति ।

**शा**— कर्मसमानाधिकरणपदनिमित्तोऽयं अतिदेशः इति नामाधिकारे चिन्तितः । परमार्थतस्तु वाचनिक एवायं अतिदेशः ।

**सोम**— प्रसङ्गात् **संगतिः** । पृष्ठशब्देन षाडहिक-पृष्ठस्तुतीनामतिदेशः इति कल्पना युक्ता, न तु साम्नां, पृष्ठशब्दस्य लक्षणाप्रसङ्गात् । लक्षणाऽङ्गीकारे च माहेन्द्रादिषु चतुर्षु ‘ सप्तदशानि पृष्ठानि ’ ‘ पृष्ठैः स्तुवते ’ इत्यादिषु निरूढाया एव स्वीकर्तुमुचितत्वेन लक्षणाप्रसङ्गेन प्रथमपूर्वपक्षनिराकरणं अनुपपन्नं स्यात् । **न च** ‘ रथंतरं पवमाने ’ इति साम्नामेव व्यवस्थावचनबलात् सामपरत्वं **शङ्कनीयम्** । यथाप्राप्ति व्यवस्था वक्तव्या इति प्राथमिक-पृष्ठशब्दमुख्यत्वानुसारेण स्तुतीनामेव प्राप्तौ निश्चितायां व्यवस्थावाक्यस्थरथंतरादिशब्दानामेव स्तुतिपरत्वस्य युक्तत्वात् । किंच साम्नां स्तोत्रान्तरसाधनत्वेन व्यवस्थायां अप्राकृतकार्यत्वं स्यात् । स्तोत्राणां तु अदृष्टार्थतया न अप्राकृतकार्यत्वापत्तिः इति ।

अत्र ‘ विश्वजिता यजेत ’ इत्युत्पन्ने विश्वजिति पृष्ठानां सर्वतायाश्च विधौ अपि न वाक्यभेदः । विशेषण-वैशिष्ट्यांशे विशेष्यांशे च यदि विधिव्यापारः, तर्हि वाक्यभेदः । इह तु विधिव्यापारं विनैव समासबलादेव षडहप्रसिद्धविशिष्टार्थप्रतीतेः, ‘ वषट्कर्तुः प्रथमभक्षः ’ इत्यत्र प्राथम्यविशिष्टभक्षविधौ इव, ‘ विष्णवे शिपिविष्टाय ’ इति व्याप्तेः विनाऽपि समासं सामानाधिकरण्य-मात्रलब्धविशिष्टविधौ इव च न वाक्यभेदः इति **वार्तिक-कारीयाः** । पृष्ठगतसर्वताविधौ पृष्ठानां अर्थात् प्राप्तिः इति **भाष्यकारीयाः** । **सूत्रार्थस्तु**– विश्वजिति ‘ सर्व-पृष्ठो भवति ’ इति ज्यौतिष्टोमिकानि पृष्ठानि अनूद्यन्ते, विश्वजितो ज्योतिष्टोमपूर्वकत्वात् । अस्ति च माहेन्द्रादिषु चतुर्षु पृष्ठशब्दः, तथा च पृष्ठबहुत्वं ज्योतिष्टोमे उपपन्नं, इति तदनुवाद इति ।

**वि**— ‘ विश्वजित् सर्वपृष्ठः किमनुवादो रथंतरम् । बृहता वा समुच्चेयं यद्वा षाडहिकानि षट् ॥ अतिदे-श्यानि, तत्राद्यो माहेन्द्रादिचतुष्टये । पृष्ठशब्दाच्चोदकेन सर्वेषामिह संभवात् ॥ समुच्चयो वा, विषये सर्वत्वं बह्वपेक्षया । न तु द्वयोरतः षण्णां पृष्ठानामतिदेशनम् ॥’ यद्यपि विश्वजितः ऐकाहिकत्वात् ज्योतिष्टोमविकृतित्व-मेव, न षडहविकृतित्वं, तथापि सर्वपृष्ठोक्तिबलात् तानि षट् पृष्ठानि अतिदिश्यन्ते ।

**भाट्ट**— ‘ विश्वजित् सर्वपृष्ठोऽतिरात्रः ’ इत्यत्र सर्वपृष्ठशब्दः अनुवादः, अथवा षाडहिकानां रथंतर–बृहत्–वैरूप–वैराज–शाक्वर–रैवतानां साम्नां विधिः इति चिन्तायां, पृष्ठशब्दस्य स्तोत्रवाचित्वात् सामपरत्वे विधौ लक्षणाऽऽपत्तेः, ज्योतिष्टोमे च ‘ पृष्ठैः स्तुवते ’ इत्यनेन षण्णां पृष्ठस्तोत्राणां विधानस्य चित्राऽधिकरणे ( १।४।३ ) **कौस्तुभे** व्युत्पादितत्वात् इह अतिदेशेन बहुत्वप्राप्त्युपपत्तेः, विशिष्टविधिगौरवाच्च अनुवाद एवायम् । **इति प्राप्ते**, अनुवादत्वे वैयर्थ्यापत्तेः ‘ पवमाने रथंतरं, आर्भवे बृहत्, मध्यत इतराणि, वैरूपं होतुः पृष्ठे, वैराजं मैत्रा-वरुणस्य, रैवतं ब्राह्मणाच्छंसिनः, शाक्वरमच्छावाकस्य ’

इति संनिवेशमात्रविधिरूपतात्पर्यग्राहकबलेन सर्वपृष्ठशब्दस्य निरूढलक्षणया षाडहिकरथंतरादिसामपरत्वावगतेः तेषामेव विधिः । निरूपितश्च पृष्ठशब्दस्य निरूढलक्षणाऽन्वाख्यानार्थः अर्थवादः **कौस्तुभे । अत एव** सर्वपदेन अतिदेशप्राप्तयोः वैकल्पिकयोः बृहद्रथंतरयोः समुच्चयविधिः **इत्यपास्तम्** । हेतुः पृष्ठे वैरूपस्य औपदेशिकत्वेन तयोर्बाधात्, सर्वशब्दस्य बहुत्वापेक्षत्वेन द्वयोरसंभवाच्च । अतः षाडहिकानां विधिः । यन्मते तु एकमेव प्रकृतौ पृष्ठस्तोत्रं पृष्ठद्वयं वा तन्मते प्राप्तत्वादपि नानुवादः ।

अयं च यद्यपि न नामातिदेशः सर्वपृष्ठशब्दस्य षडहवाचित्वाभावात्, विश्वजिति बहुव्रीहिणैव प्रवृत्तेः गौणत्वाभावाच्च । न वा अयं वचनातिदेशः, गृहमेधीये 'आज्यभागौ यजति' इतिवदेव षडहीयत्वस्य विधेयताऽनवच्छेदकत्वात् । तथापि उपदेश एवायं रथंतरादीनाम् । अत एव न षडहधर्मान्तराणां इह करणं अन्यकर्माङ्गत्वस्य एतद्वाक्यप्रवृत्तेः पूर्वावगमसाम्यात् । कर्मसमानाधिकरणपदगम्यत्वसाम्याच्च सप्तमे नामातिदेशप्रस्तावे समारम्भः । 'प्रधानं नीयमानं' इति न्यायेनैव च रथंतरादिधर्माणां आवश्यकस्तोभादीनां पवमानादिकार्यान्तरोपयोगिरथंतरादिसाधनत्वेनापि प्राप्तिरविरुद्धा ।

**न्यायबिन्दुः**— 'विश्वजित् सर्वपृष्ठः' इति ज्योतिष्टोमातिदेशप्राप्तमाहेन्द्रादिस्तोत्रचतुष्टयानुवादः, तेषु 'सप्तदशानि पृष्ठानि' इति पृष्ठशब्दप्रयोगात् । अथवा बृहद्रथंतरस्तोत्रयोरेव पृष्ठशब्दः, अन्यत्र गौणः । तेन विकल्पेन प्राप्तयोः सर्वत्वं समुच्चयो विधीयते । **इति प्राप्ते,** बह्वर्थसर्वशब्दस्य द्वयोरसंभवात् षाडहिकानां षण्णां पृष्ठानां वचनादतिदेशः इति सिद्धान्तः ।

**मण्डन**— 'स्यात् सर्वपृष्ठे षडहोक्तपृष्ठम् ।'

**शंकर**— 'सर्वपृष्ठेऽतिदेशः स्यात् ।'

## ✱ अतिदेशः वैश्वदेव्यामिक्षायां सांनाय्यपयोधर्माणाम् ॥

**आमिक्षोभयभाव्यत्वादुभयविकारः स्यात् । ८।२।४।१९ ॥**

**भाष्यं**— वैश्वदेव्यामिक्षा उभयोर्दधिपयसोर्विकारः स्यात् । उभयभाव्यत्वात् । उभाभ्यां हि सा भाव्यते । तत्र न गृह्यते विशेषः अस्यैव, नेतरस्येति । तस्मादुभयोः ।

**एकं वा चोदनैकत्वात् । २० ॥**

**भाष्यं**—एकं वा विकुर्यात्, दधि पयो वा, नोभे । चोदनैकत्वात् । एकैषा चोदना 'वैश्वदेव्यामिक्षा' इति । सा एकेन विध्यन्तेन निराकाङ्क्षीक्रियते । तस्मादेकं विकुर्यात् ।

**दधि संघातसामान्यात् । २१ ॥**

**भाष्यं**— यत्तु न गृह्यते विशेष इति, तत्रोच्यते । संहतं दधि, आमिक्षाऽपि संहता, पयो द्रवम् । एष विशेषः । तस्मात् दध्नो विकारः इति ।

**पयो वा, तत्प्रधानत्वाल्लोकवद्, दध्नस्तदर्थत्वात् । २२ ॥**

**भाष्यं**— पयो वा आमिक्षया विक्रियते, न दधि । पयःप्रधानत्वात् अस्य संसर्गस्य । किं प्राधान्यं पयसः ? भूयस्त्वम् । प्रभूतं तत्र पयः, अल्पं दधि । दध्नश्च तदर्थत्वात् । दधि च तत्र पयो घनीभावयितुं उपादीयते । लोकवत् । लोकेऽपि पय एव घनीभावयितुं दधि उपादीयते । कथं ? दध्यभावे अन्येनाम्लेनापि काञ्जिकादिना क्रियते । तत्रापि च आमिक्षाशब्दो भवति । दधिनियमो अम्ले हि अदृष्टार्थः । तस्मात् पय एव अम्लसंयोगेन घनीभूतं आमिक्षा इत्युच्यते । पयश्चेदामिक्षा, पयस एव विकारो न्याय्यः ।

**धर्मानुग्रहाच्च । २३ ॥**

**भाष्यं**—सद्यस्कालता धर्मः पयोविकारत्वेन अनुग्रहीष्यते, वैश्वदेवस्य सद्यस्कालत्वात् । दधिविकारत्वे बाध्येत । वैश्वदेवोऽपि त्र्यहकालः क्रियेत, तथा तस्य धर्मो बाध्येत ।

**सद्योभावं च दर्शयति । २४ ॥**

**भाष्यं**— 'जुषन्तां युज्यं पयः' इति । यदि दध्नो विकारः स्यात् तथा त्र्यहकालभावे दातव्यं, न कथं चन पयः स्यात्, तत्र एतद्दर्शनं नोपपद्यते । तस्मात् पयोविकार आमिक्षा, दध्नश्चाधर्मकत्वम् ।

शा—'दधि क्षीरं च संसृष्टमामिक्षेत्यभिधीयते । उभयोश्च रसस्तस्यां दृश्यतेऽतो द्वयात्मिका ॥ विशेषाग्रहणात् तस्मादुभयोर्विकृतिर्भवेत् । तप्तेपयसिवाक्ये तु सप्तम्या गुणतः पयः ॥ दधि द्वितीयानिर्देशात् प्रधानं, तेन सा–पदम् । दध्येव प्रतिनिर्दिश्य तेन बध्नाति देवताम् ॥ दध्येवातो हविस्तस्मात् सायंदोहविकारता । ( इति प्राप्ते उच्यते ) पयसस्तु प्रधानत्वं तत्र कर्मसमाश्रितः ॥ दध्ना हि नीयमानेन तदेव व्याप्यते पयः। कर्मतोऽपि प्रधानत्वं तस्य स्यात् संप्रदानवत् ॥ सर्वनाम्ना परामर्शस्तस्यैवातोऽवकल्पते । तदेव दधिसंयोगाद् घनीभूतमतो हविः ॥ तस्यैव देवतायोग आमिक्षाऽपि तदेव नः । प्रातर्दोहविकारत्वमामिक्षायास्ततः स्थितम् ॥'

सोम— पशोर्दधिविकारत्वाभावेऽपि आमिक्षायाः दधिविकारत्वं स्यात् इत्युत्थितेः **संगतिः** । चतुर्थे ( ४। १।९।२२–२४ ) दध्नः प्राधान्येऽपि आमिक्षैव दध्यानयनप्रयोजिका, न वाजिनं इति सिद्धे, पयःप्राधान्यं अत्रत्यमेव वस्तुगतिमनुसृत्य व्यवहृतं, इहैव विशेषातिदेशसिध्यर्थं पयःप्राधान्यं साधनीयं इत्यपुनरुक्तिः ।

वि—' द्वयोर्दध्नोऽथ पयस आमिक्षायां, द्विजत्वतः। द्वयोर्दध्नो घनत्वेन, प्राधान्यात् पयसो भवेत् ॥ '

**भाट्ट**—आमिक्षा तावन्नार्थान्तरं, अपि तु दधिपयोऽन्यतररूपं इति साधितं चतुर्थे ( ४।१।९ ) । अतश्च तदन्यतरविकार इति तावदविवादम् । तत्रापि तु विशेषचिन्तायां ' तप्ते पयसि ' इत्यत्र द्वितीयानिर्दिष्टदध्नः एव ' सा वैश्वदेवी ' इति तच्छब्देन परामर्शः, न तु सप्तम्यन्तपदनिर्दिष्टस्य पयसः, गुणभूतत्वात् । न च ' आनयति ' इति द्विकर्मकत्वात् पयसो व्याप्यमानत्वेन दध्यपेक्षयाऽपि प्राधान्यावगतिः, द्विकर्मकधातुस्थले अधिकरणत्वादिकारकान्तरविवक्षायां संबन्धमात्रविवक्षायां च संबन्धसामान्ये षष्ठीप्राप्तौ ' अकथितं च ' इति सूत्रेण ( पा० १।४।५१ ) कर्मसंज्ञाकरणात् द्वितीयाविधानावगतावपि प्राधान्ये प्रमाणाभावात्, प्रकृते सप्तमीश्रवणेन अधिकरणत्वविवक्षाऽवगतेः द्वितीयकर्मप्रसक्त्यभावाच्च । अतश्च दधिरूपत्वादामिक्षायाः दधियागविकारत्वमेव इति लौकिकस्य पयसः अधिकरणत्वम् । इति प्राप्ते, मधुररसभूयस्त्वात् दध्यभावेऽपि च अम्लान्तरेण आमिक्षानिवृत्तेः अन्वयव्यतिरेकाभ्यां, ' जुषन्तां युज्यं पयः ' इति मन्त्रवर्णाच्च पयस एव अवस्थाविशेषापन्नस्य आमिक्षापदवाच्यत्वावगतेः तदनुरोधेन तच्छब्दस्यापि सप्तम्यन्तपदनिर्दिष्टपयःपरामर्शित्वस्यैव अवगतेः पय एव आमिक्षा । अतश्च तद्यागविकारत्वमेव । एवं च ' तप्ते पयसि ' इत्यत्र सप्तम्या प्राधान्यलक्षणा, द्वितीयया च सक्तुन्यायेन (२।१।४।१२) करणत्वलक्षणा इत्यपि ध्येयम् । अवस्थाविशेषरूपा आमिक्षा च न तापं विना, इति न तस्यापि विवक्षा । यदि तु तापं विनाऽपि आमिक्षा लोके संभाव्यते तदा न सप्तम्या प्राधान्यलक्षणाऽपि । तप्तपयोऽधिकरणत्वविशिष्टदध्यानयनस्यैव अवस्थाविशेषविशिष्टपयोरूपामिक्षोद्देशेन विधेयत्वात् उद्देश्यवाचकपदकल्पनया च वाक्यार्थपूर्तिः । तस्यैव च तच्छब्देन परामर्शात् सुतरां लिङ्गोपपत्तिः । अधिकरणत्वस्यैव च दध्यानयनं प्रति अङ्गत्वेऽपि पयसो नाङ्गत्वं, क्लृप्तप्रयोजनत्वात् इति ध्येयम् । अत आमिक्षायाः अवस्थाविशेषविशिष्टपयोरूपत्वात् पयोयागविकारत्वम् । तेन पयस्येव प्रातर्दोहादिधर्माः । दधि तु लौकिकमेव संस्कारकम् ।

**न्यायबिन्दुः**—आमिक्षा उभयजन्यत्वादुभयविकारः। घनत्वाद्वा दधिविकारः । इति प्राप्ते, ' तप्ते पयसि ' इति वाक्ये पयस एव प्राधान्यात् तदेवामिक्षा । अतः पयोविकारत्वमेवेति सिद्धान्तः ।

**मण्डन**— ' आमिक्षायां पयोगताः । ' धर्माः ।

**शंकर**— ' आमिक्षायां पयस्तोऽसौ । ' विध्यन्तः ।

**अतिदेशः शतोक्थ्यादिसंस्थागणेषु द्वादशाहिकधर्माणाम् ॥**

**संस्थागणेषु तदभ्यासः प्रतीयेत, कृतलक्षणग्रहणात् । ८।३।४।८ ॥**

**भाष्यं**— इह संस्थागणा उदाहरणं ' अग्निष्टोमः, पञ्चोक्थ्यः, शताग्निष्टोमं भवति, शतातिरात्रं भवति ' इत्येवमादयः। अत्र चिन्त्यते किं ज्योतिष्टोमस्यायमभ्यासः, उत एवंसंख्यानां संस्थाविशिष्टानामह्नां वाद इति । किं प्राप्तं ? संस्थागणेषु तदभ्यासः प्रतीयेत । तस्यैव प्राकृतस्य

ज्योतिष्टोमस्य अयमभ्यासः। कुतः ? कृतलक्षणग्रहणात्। तस्य एतत् कृतं लक्षणं अग्निष्टोमः, उक्थ्यः, षोडशी, अतिरात्रः इति। तत्संयोगेन एताः संस्थाः उत्पन्नाः। स ताभिः शक्यते लक्षयितुम्। तं च लक्षयित्वा संख्यां केवलां विधास्यति। नानाऽह्नां तु वादे संस्था संख्या च उभयं विधीयते, 'उक्थ्यसंस्था भवन्ति, ते च पञ्च भवन्ति' इति, तथा वाक्यं भिद्यते। तस्मात् ज्योतिष्टोमाभ्यासः।

**अधिकाराद्वा प्रकृतिस्तद्विशिष्टा स्यादभिधानस्य तन्निमित्तत्वात्। ९॥**

**भाष्यं**— नैतदेवं ज्योतिष्टोमाभ्यास इति। कथं तर्हि ? प्रकृतिः तद्विशिष्टा स्यात्। द्वादशाहिकानि अहानि संस्थाविशिष्टानि स्युः; कस्मात् ? अधिकारात्। तानि अत्र चोदकेन अधिकृतानि। एवं चोदकानुग्रहो भविष्यति। ननु प्रत्यक्षविहितो ज्योतिष्टोमः अग्निष्टोमादिभिः शब्दैः। नेत्याह। कथं ? अभिधानस्य तन्निमित्तत्वात्। अग्निष्टोमाद्यभिधानं संस्थानिमित्तं, न ज्योतिष्टोमाभिधायकम्। तत्तत्संस्थं क्रतुं वदितुं शक्नोति, न ज्योतिष्टोममेव। यत्तु अनेकार्थत्वमिति, नानेकार्थत्वं भविष्यति। गणचोदनया प्राप्तानां अह्नां पञ्चानां संस्थामात्रं विधायिष्यते। शताग्निष्टोमं इत्यपि समासः उभयविशेषणविशिष्टं गणमाह। स एक एवार्थः, यथा 'लोहितोष्णीषा ऋत्विजः प्रचरन्ति' इति। पृथक्त्वनिवेशिनी च एवं संख्या अनुगृहीता भविष्यति, तस्मात् द्वादशाहिकानां नानाऽह्नां वादः।

**शा**— 'संस्थानिमित्तास्त्वेते न क्रतोः कस्यापि वाचकाः। संनिध्यभावतः संस्थाविशिष्टगणचोदना ॥' तस्मात् द्वादशाहविध्यन्तः।

**सोम**— पूर्वत्र षडहावृत्तिः न प्रसिद्धषडहार्था, इह तु प्रसिद्धज्योतिष्टोमार्था इत्युत्थितेः **संगतिः**। **सूत्रार्थस्तु**—शतोक्थ्यादिषु संस्थागणेषु ज्योतिष्टोमाभ्यासः प्रतीयेत, उक्थ्यादिभिः कृतलक्षणस्य कृततत्संज्ञस्य ज्योतिष्टोमस्य ग्रहणादनुवाद इति।

**वि**— 'शतोक्थ्ये ज्योतिष्टो यद्वा द्वादशाहस्य, [illegible] आद्यः, समासिन्नैतत् संघत्वादन्तिमो भवेत् ॥'

**भाट्ट**— अनारभ्य 'शताग्निष्टोमं भवति, शतोक्थ्यं, शतातिरात्रं' इति श्रुतम्। तत्र अग्निष्टोमादिशब्दानां ज्योतिष्टोमे एव प्रचुरप्रयोगात् तदनुवादेन शतसंख्या अभ्यासापादिका विधीयते। नहि अग्निष्टोमादिशब्दानां संस्थाविशिष्टक्रतुसामान्यवाचित्वं, तथात्वे 'अथातोऽग्निमग्निष्टोमेन' इत्यादौ प्राकरणिकोत्तरवेद्यवरोधेन चयनस्य विकृतौ निवेशापत्तेः। अतो ज्योतिष्टोमत्वात् नात्र द्वादशाहप्रवृत्तिः। अथवा अग्निष्टोमादिशब्दानां नागृहीतविशेषणान्यायेन संस्थामात्रवाचित्वात्, ज्योतिष्टोमे निरूढलक्षणाङ्गीकारेऽपि प्रकृते तदाश्रयणे प्रमाणाभावात्, नित्यकाम्यसंस्थाऽनुवादेनैव शतावृत्तिविधिः। अस्मिन्नपि पक्षे ज्योतिष्टोमस्यैव आश्रयत्वादिना सत्त्वान्न गणातिदेशः। अस्तु वा इदं कर्मान्तरं, तथापि अन्यपदार्थस्य एकवचनान्तत्वात् एकमेव तत्। शतसंख्यायाश्च संस्थागतत्वेन अभेदकत्वात्। अतः शतसंख्याकं अभ्यस्तं एकं कर्म ज्योतिष्टोमविकारः, इति न गणातिदेशः। **इति प्राप्ते,** एकप्रसरताभङ्गापत्तेः न तावत् ज्योतिष्टोमोद्देशेन संस्थोद्देशेन वा संख्याविधिः। अतः वषट्कर्तृभक्षवदेव कर्मान्तरम्। तदपि नैकम्। तथात्वे एकस्य कर्मणः अनेकसंस्थाकत्वस्य अभ्यासमन्तरेण अनुपपत्तेः अश्रुतसुत्याऽभ्यासकल्पनाऽऽपत्तेः। अतः अग्निष्टोमोक्थ्यादिपदानां 'त्रिवृदग्निष्टुदग्निष्टोमः' 'उक्थ्यो वैरूपसामा' इत्यादौ विकृतियज्ञसामानाधिकरण्येनापि क्वाचित्कप्रयोगेण सांप्रतिकलक्षणया तत्तत्संस्थाकयज्ञान्तरपरत्वं अङ्गीकृत्य शतसंख्याभिन्नतावद्यज्ञविधिरेवायम्। एवं च अन्यपदार्थः न कर्म, अपि तु शतं उक्थ्यसंस्थाकाः यज्ञाः "करणं यस्मिन् इति व्युत्पत्त्या फलमेव इति ध्येयम्। तदपि च नोद्दिश्य यज्ञविधिः, एकप्रसरताभङ्गतादवस्थ्यापत्तेः। अपि तु तात्पर्यगत्या अंशत्रयविशिष्टतावद्भावनाविधिरेव इति युक्ता गणस्यैव अतिदेशात् शतवारमावृत्तिः। द्विगुसमासत्वाद्वा न कश्चिद्दोषः। कर्मैकत्वेऽपि वा आवृत्तेरावश्यकत्वेन सुत्यागणत्वानपायाद्वा दशाहधर्माविरोधः।

**न्यायबिन्दुः**— 'शतोक्थ्यं भवति' इत्यादौ उक्थ्यादिशब्दानां ज्योतिष्टोमनामत्वात् तदनुवादेन शतावृत्तिविधिः। **इति प्राप्ते,** संस्थावाचकत्वात् न क्रत्वनु-

वादः, किंतु संख्यासंस्थोभयविशिष्टापूर्वकर्मविधिः प्रकरणान्तरात्। अतो गणरूपत्वात् द्वादशाहविध्यन्तः इति सिद्धान्तः।

**मण्डन**— 'संस्थादिनानां ग्रहणं दिनेभ्यः।'

**शंकर**— 'द्वादशाहाच्छतोक्थ्ये सः।' सः चोदकः।

**अतिदेशः शतोक्थ्यादौ ज्यौतिष्टोमिकोक्थ्यादिस्तोत्राणाम्॥**

**गणादुपचयस्तत्प्रकृतित्वात्। ८।३।५।१०॥**

**भाष्यं**— 'शतोक्थ्यं भवति' 'शतातिरात्रं भवति' इति श्रूयते। तत्र द्वादशाहिकानि अहानि प्रवर्तन्ते। तानि च प्रायेण उक्थ्यसंस्थानि, द्वौ अग्निष्टोमौ। 'शतोक्थ्यं भवति' इत्युक्ते अग्निष्टोमयोः उक्थ्यस्तोत्रोपचयः प्राप्तः, 'शतातिरात्रं भवति' इति सर्वेषु रात्रिपर्यायोपचयः। तत्र चिन्त्यते किं द्वादशाहात् उपचयः कर्तव्यः, उत ज्योतिष्टोमात् इति। किं प्राप्तं? गणादुपचयः। कुतः? तत्प्रकृतित्वात्। द्वादशाहप्रकृतयः एते अहर्गणाः, तेषु द्वादशाहिको विध्यन्तः प्राप्यते। यदि द्वादशाहादुपचयः, एवं चोदकानुग्रहो भविष्यति। तस्मात् गणादुपचयः।

**एकाहाद्वा तेषां समत्वात् स्यात्। ११॥**

**भाष्यं**— एकाहाद्वा ज्योतिष्टोमादुपचयः, न द्वादशाहात्। कस्मात्? तेषां समत्वात्। द्वादशाहिकानामह्नां इतरैर्वैकृतैः समत्वं भवति। तान्यपि अन्यतः संस्थां आकाङ्क्षन्ति, इमान्यपि। न च भिक्षुका भिक्षुकादाकाङ्क्षन्ति, सति अन्यस्मिन् प्रसवसमर्थे अभिक्षुके। किमेतदुक्तं भवति? द्वादशाहे संस्थास्तोत्राणि आम्नातानि, इत्यतः यत्राम्नातानि तत आकाङ्क्षन्ति, वैकृतेषु अहःसु तानि नाम्नातानीति। तस्मात् वैकृतानि अहानि यत्र विहितानि, तत एव आकाङ्क्षितुमर्हन्ति। ज्योतिष्टोमे च तानि आम्नातानि। तस्मात् ज्योतिष्टोमादुपचयः।

**सोम**— यदि शतोक्थ्यादौ गणे द्वादशाहविध्यन्तः, तर्हि उक्थ्यस्तोत्राण्यपि तदीयोक्थ्यस्तोत्रविकाराः इत्युत्थितेः **संगतिः**। यद्यपि पूर्वत्र द्वादशाहविध्यन्तः इत्येतावन्मात्रमुक्तं, तथापि दाशमिकन्यायेन (१०।५।४। १२-१३) तदीयो दशरात्र एव प्रवर्तते। स च संख्यापूरणार्थः शतोक्थ्यादौ आवर्तनीयः। दशरात्रे च अभितो द्वौ अग्निष्टोमौ, मध्ये अष्टौ उक्थ्याः। केषां चित् सप्तोक्थ्याः, तृतीयः षोडशी। तथा च शतोक्थ्यादौ विंशतिरग्निष्टोमाः, ते चोक्थ्यसंस्थया वर्धयितव्याः। पक्षान्तरे च षोडशिनः उक्थ्यसंस्थोपचये कर्तव्येऽपि द्वादशाहस्यैव षोडशिस्तोत्ररहितस्य प्रवृत्तिः, न तु ज्यौतिष्टोमिकस्य। **सूत्रार्थस्तु**—गणात् द्वादशाहादुपचय उक्थ्यस्तोत्रादीनाम्। कुतः? द्वादशाहविकृतित्वात् सर्वेषामहर्गणानाम्। ततः संनिधानादुक्थ्यस्तोत्रोपचयोऽपि तत एव ग्राह्यः इति।

**वि**— 'शतोक्थ्यादौ स्तोत्रवृद्धिर्गणादेकाहतोऽथवा।, आद्यो गणविकारत्वा, दन्त्योऽत्र स्तोत्रजन्मतः॥'

**भाट्ट**— शताग्निष्टोमादौ द्वादशाहगतदशरात्रप्रवृत्तिः इत्युक्तम्। द्वादशाहे च प्रथमोत्तमौ अतिरात्रसंस्थाकौ। दशरात्रप्रथमोत्तमौ च अग्निष्टोमसंस्थाकौ। मध्यगतानि च अष्टौ उक्थ्यसंस्थाकानि। केषां चित् सप्त उक्थ्यसंस्थाकानि, एकः षोडशी। तदिह शताग्निष्टोमे तावत् अतिदेशप्राप्तानां उक्थ्यादीनां बाधात् अग्निष्टोमसंस्थाकत्वे न काऽपि क्षतिः। उक्थ्यातिरात्रयोस्तु येषु अतिदेशेनैव उक्थ्यस्तोत्रादि प्राप्तं, तेष्वपि न का चित् शङ्का। येषु तु अग्निष्टोमसंस्थाकत्वप्राप्तिः, तेषु वचनादेव उक्थ्येषु कर्तव्येषु द्वादशाहिकान्येव उक्थ्यातिरात्रस्तोत्राणि उपस्थितत्वात् कर्तव्यानि। **इति प्राप्ते, न तावत् अतिदेशेन** तेषामुपस्थितिः। प्रथमस्य प्रथमं इत्येवं क्रमेण प्रत्येकमेव तत्तदहःसु तत्तदह्नां अतिदेशेन यानि अहानि उक्थ्यसंस्थाकप्राकृताहर्विकाराणि, तेषु तदीयोक्थ्यप्राप्तावपि अग्निष्टोमसंस्थाकप्राकृताहर्विकारेषु तत्प्राप्तौ प्रमाणाभावात्, प्रथमोत्तमयोरेव अतिरात्रसंस्थाकत्वेन तयोः क्वापि अनतिदेशेन रात्रिपर्यायाणां सुतरामप्राप्तेश्च। अतः शतोक्थ्यादौ तेषुतेषु अहःसु वाचनिकानि स्तोत्राणि, 'नहि भिक्षुको भिक्षुकान्तरं याचते' इति न्यायेन ज्योतिष्टोमस्थान्येव कार्याणि। अयं च नातिदेशः, अपि तु कर्मान्तरत्वे प्रमाणाभावात् यत्र उक्थ्यप्रसिद्धिः, तत्रत्यानि वचनेन विधीयन्ते। किंच स्तोत्राणामुत्पत्तिः ज्योतिष्टोमे एव। द्वादशाहे तु अतिदेशप्राप्तस्तोत्रानुवादेन धर्मविशेष-

मात्रम्। अतश्च ज्यौतिष्टोमिकानामेव उपदेशेन विधानम्। अत एव रात्रिपर्यायादीनां ज्योतिष्टोमे फलार्थसंस्थाङ्गत्वेन इह अनतिदेशेऽपि न का चित् क्षतिः, उपदेशेनैव तद्विधानाङ्गीकारात्।

**न्यायबिन्दुः**—शतोक्थ्ये द्वादशाहिकदशरात्रावृत्तिः। तस्मिंश्च प्रथमदशमयोः अग्निष्टोमसंस्था। इह तु उक्थ्यसंस्थायाः औपदेशिकत्वात् अग्निष्टोमस्तोत्रोत्तरं उक्थ्यविवृद्धिः। तत्रागम्यमानेषु उक्थ्यस्तोत्रेषु द्वादशाहिकोक्थ्यविध्यन्तः। **इति प्राप्ते**, ज्योतिष्टोमे एव उक्थ्यधर्मोपदेशात् तद्विकारत्वमेव, न तु द्वादशाहिकविकारत्वम्। 'नहि भिक्षुको भिक्षुकान्तरं याचते' इति न्यायात् सिद्धान्तः।

**मण्डन**—'अहर्गणान्नोपचयो विधेयः।'

**शंकर**—'प्राकृतोक्थ्याच्च तत्र सः।' तत्र शतोक्थ्ये, सः चोदकः।

**अतिदेशः षट्त्रिंशद्रात्रे षडहधर्माणाम्॥**

**कालाभ्यासेऽपि बादरिः कर्मभेदात्।८।३।३।६॥**

**भाष्यं**—क चित् कर्मविशेषे (षट्त्रिंशद्रात्रे) श्रूयते 'षडहा भवन्ति, चत्वारो भवन्ति' 'पञ्चाहा भवन्ति'। तत्र संदेहः किं द्वादशाहिकानां अह्नां प्रवृत्तिः, उत षडहस्येति। किं प्राप्तं? कालाभ्यासेऽपि बादरिः। षडहकालाभ्यासेऽपि एतस्मिन् श्रूयमाणे बादरिराचार्यः द्वादशाहिकानामह्नां प्रवृत्तिं मन्यते स्म। कुतः? कर्मभेदात्। षडहशब्देन अत्र अहर्मितानि षट् सौत्यानि कर्माणि उच्यन्ते। तेषां च षट्कानां भेदो गम्यते। 'चत्वारः षडहाः' इति पृथक्त्वनिवेशात् संख्यायाः। यदि एकस्यैव कर्मषट्कस्य पार्ष्ठिकस्य आभिप्लविकस्य वा अभ्यासः कल्प्येत, ततः चतुःषडहाः इति स्यात्। अथ पुनः चत्वारः षडहाः इत्युक्ते चतुर्विंशत्यहानि प्रतीयन्ते, सा अहःसंघातचोदना प्रकृतिलिङ्गत्वात् द्वादशाहिकीं अहःप्रवृत्तिं गृह्णाति। तस्मात् नानाऽह्नां द्वादशाहिकानां प्रवृत्तिः।

**तदावृत्तिं तु जैमिनिरह्नामप्रत्यक्षसंख्यत्वात्।७॥**

**भाष्यं**—तदावृत्तिं पार्ष्ठिकस्यैव प्रज्ञातस्य षडहस्य आवृत्तिं जैमिनिराचार्यो मेने। कुतः? अह्नां अप्रत्यक्षसंख्यत्वात्। चतुर्विंशतिः अह्नां अप्रत्यक्षा संख्या अनुमानात् गम्यते। तस्याश्च षडहचतुष्टयेनैव अनुमानम्। तेन पूर्वं तावत् षडहचतुष्टयमेव प्रत्येति, तत् समाहृत्य चतुर्विंशतिसंख्याम्। यथा पूर्वं धूमं प्रतिपद्यते, पश्चादग्निम्। यश्च धूमप्रत्ययेनैव कृतार्थो भवति, नासौ अग्निप्रत्ययमाद्रियते। इहापि षडहप्रत्ययादेव तत्प्रवृत्तिः प्रसज्यते, तया च कृतार्थः किं चतुर्विंशतिसंख्यया प्रतीतया करिष्यति। तस्मात् षडहाभ्यासः। अथ यदुक्तं पृथक्त्वनिवेशिनी संख्या आवृत्तौ बाध्येत इति, तत्र ब्रूमः। षडहः इति प्रज्ञातः षडहः संनिहितो गृह्यते। तस्य चतुःसंख्यासंबन्धः साक्षान्नास्ति इति आवृत्त्या भविष्यति। यथा उपसदां प्रयाजानुयाजानां च। यस्यापि चतुर्विंशतिरात्रः चत्वारः षडहाः इत्येवं चोद्यते तस्यापि दशरात्रे प्रवर्तमाने आवृत्त्यैव संख्यापूरणं भिन्नानां षडहानां अभावात्। यश्चोभयोर्दोषो नासौ एकं पक्षं निवर्तयति।

**शा**—'चतुर्विंशतिरेतानि चत्वारः षडहा इति। चोद्यन्तेऽहानि तेनैषु द्वादशाहः प्रवर्तते॥' **उच्यते** 'चतुर्विंशतिसंख्योऽत्र गणः साक्षान्न चोद्यते। चतुःसंख्यैस्तु षडहैरनुमानेन गम्यते॥ चतुःसंख्यास्तु षडहाः प्रत्यक्षेणैव चोदिताः। तस्मात् षडहविध्यन्तः शीघ्रमत्रावगम्यते॥'

**सोम**— पूर्वत्र यथा चतुर्णां द्वादशाहिकानामह्नां प्रवृत्तिः, तथाऽत्रापि द्वादशाहिकदशरात्रस्य इत्युत्थानात् **संगतिः**। **सूत्रार्थस्तु**— कालाभ्यासे कालशब्देन षडहादिभिरहोभिः संमितानि कर्माण्युच्यन्ते, तेषामभ्यासेऽपि बादरिराचार्यः कर्मभेदात् द्वादशाहिकानां प्रवृत्तिरिति मन्यते इति।

**वि**—'चत्वारः षडहा द्वादशाहस्य षडहस्य वा।, चतुर्विंशतिसंघार्थमाद्यो, ऽन्त्यः षडहश्रुतेः॥'

**भाट्ट**— षट्त्रिंशद्रात्रे 'षडहा भवन्ति, चत्वारो भवन्ति' इति श्रुतम्। द्वादशाहान्तर्गतदशाहे च आद्य एकः षडहः सधर्मकः श्रुतः। तदिह तस्यैव वारचतुष्टयं अत्र प्रवृत्तिः, उत दशाहस्यावृत्तिः इति चिन्तायां, न तावदत्र षडहशब्दो नामातिदेशकः, तस्य संख्याविशिष्टा-

हृर्वाचकस्य गुणविशिष्टकर्मविधायित्वेन नामत्वाभावात्, नामत्वेऽपि वा यौगिकत्वेन उक्तविधायित्वाक्षतेः नामातिदेशकल्पायोगाच्च । नापि प्राकृतषडहानुवादेन संख्याविधिः, द्वादशाहत्वानुपपत्त्या तस्य अनतिदेशात् । अतः कर्मान्तराण्येव संख्यया चतुर्विंशतिर्विधीयन्ते, न तु षडहस्य चतुरावृत्तिः । तथात्वे चतुः षडहो भवति इति क्रियाऽभ्यावृत्तिविहितसुच्प्रत्ययापत्तिः । 'चत्वारो भवन्ति' इति श्रवणात्तु पृथक्त्वनिवेशिन्या संख्यया भेद एव । अतश्च गणत्वसामान्यात् दशाहं द्विरभ्यस्य अवशिष्टेषु चतुर्षु दशाहाद्यानां चतुर्णां प्रवृत्तिः । **इति प्राप्ते,** यद्यपि **तन्त्ररत्न**रीत्या चतुर्विंशतिरेतानि कर्माणि तथापि षडहशब्दवत्त्वसादृश्येन तस्यैव चतुर्वारं प्रवृत्तिः । वस्तुतस्तु नात्र तावन्ति कर्माणि, चतुर्विंशतिसंख्याया अश्रवणात् । षट्संख्यायाश्चतुःसंख्यायाश्च 'एकत्र द्वयं' इति न्यायेन कर्मान्वयमङ्गीकृत्य भेदाङ्गीकारे कर्मदशकापत्तेः, षट्संख्यायाः समासगतत्वेन तथाऽन्वयानुपपत्तेश्च । अतः 'एकविशिष्टे अपरवैशिष्ट्यं' इति न्यायेनैव षट्संख्याविशिष्टे चतुःसंख्यान्वयो वाच्यः । अतश्च सत्यपि एकवाक्यत्वे प्रयाजैकादशत्वन्यायेन ( ५। ३।१ ) निर्ज्ञातसंख्यत्वात् चतुःसंख्या आवृत्त्यापादिकैव । वस्तुतस्तु पृथगाख्यातश्रवणात् अत्रापि भिन्नवाक्यत्वमेव । तेन षण्णामेव कर्मणां चतुर्वारमावृत्तिः । सुच्प्रत्ययाभावेऽपि च प्रमाणान्तरेण आवृत्तिकल्पने न कश्चिद्दोषः । अतः सूत्रभाष्यस्वारस्येन षण्णामेव आवृत्तेः षट्संख्यत्वसादृश्यादिना षडहस्यैव वारचतुष्टयं धर्माः ।

**न्यायबिन्दुः**—षट्त्रिंशद्रात्रे 'षडहा भवन्ति, चत्वारो भवन्ति' इति चतुर्विंशतिरहानि विधीयन्ते । तत्र च गणत्वसाम्यात् द्वादशाहगतदशरात्रविध्यन्तप्राप्तौ चतुर्विंशतिगणस्य अशाब्दत्वात्, षडहानां च प्रत्यक्षश्रुतेः, तद्विध्यन्तः एवेति सिद्धान्तः ।

**मण्डन**— 'अभ्यस्य धर्मः षडहस्य कार्यः ।' चतुर्वारमभ्यस्य कार्यः ।

**शंकर**— 'षडहेषु गणत्वतः ।'

## ३ अतिदेशः संवत्सरसत्रेषु गवामयनधर्माणाम् ॥

**गव्यस्य च तदादिषु । ८।१।११।१८ ॥**

**भाष्यं**—इह संवत्सरसत्राणि उदाहरणं आदित्यानामयनप्रभृतीनि । तेषु चिन्ता किं द्वादशाहिको विध्यन्तः, उत गावामयनिक इति । पूर्वोक्तेन न्यायेन द्वादशाहिके **प्राप्ते अभिधीयते** । 'गव्यस्य च तदादिषु' । गव्यमिति गवामयनं ब्रूमः, गोसंबन्धात् 'गावो वा एतत् सत्रमासत' इति । तस्य विध्यन्तः तदादिषु संवत्सरसत्रेषु स्यात् । कुतः ? संवत्सरसामान्यात् । 'पत्नय उपगायन्ति' इति च माहाव्रतिकं धर्मं संवत्सरसत्रे दर्शयति, 'ऋत्विज उपगायन्ति' इति च सहस्रसंवत्सरे ।

**शा**—संवत्सरसत्रेषु आदित्यानामयनप्रभृतिषु संवत्सरसत्रत्वसामान्यात् गवामयनविध्यन्तः ।

**सोम**—नतु आदित्यानामयनादिष्वपि गणत्वसामान्यात् द्वादशाहविध्यन्त एव युक्तः । **न च** अयनत्वात् गवामयनविध्यन्त इति **वाच्यम्** । दाक्षायणविध्यन्तस्यापि प्रसङ्गात् इति **संगतिपूर्वपक्षौ** । गव्यशब्दो यद्यपि 'गोपयसोर्यत्' ( पा० ४।३।१६० ) इति पयोव्यतिरिक्तविकारावयवयोर्व्युत्पन्नः, तथापि 'गावो वा एतत् सत्रमासत' इत्यर्थवादावगतगोसंबन्धमात्रेण उपचारात् **सूत्रे** गवामयने प्रयुक्त इति द्रष्टव्यम् ।

**वि**— 'द्वादशाहस्य गव्यस्य वाऽऽदित्याद्यङ्किताय‍ने ।, पुरेवाद्यो, गव्यधर्मा वत्सरत्वादिलिङ्गतः ॥'

**भाट्ट**— सत्रेष्वपि यानि संवत्सरसाध्यानि सत्राणि, तेषु संवत्सरसत्रत्वसामान्यात् अयनशब्दवत्त्वसामान्याच्च संवत्सरनियमादिधर्मलाभाय गवामयनस्य विध्यन्तः । अत एव गवामयनान्तर्गतमाहाव्रतिकं 'पत्नय उपगायन्ति' इति धर्मं विध्यन्तरस्तुत्यर्थं संवत्सरसत्रान्तरे अनुवदति । ८।१।३. ( एकदेशस्योद्धारोऽयम् । )

**मण्डन**—'गव्यस्य सांवत्सरिका विकाराः ।'

**शंकर**— 'गव्यात् तदादिसत्रेषु ।' १२.

अतिदेशः सत्राहीनयोः सत्राहीनोभयात्मकद्वादशाहधर्माणां व्यवस्थया ॥

**सत्रमहीनश्च द्वादशाहस्तस्योभयथा प्रवृत्तिरैककर्म्यात् । ८।२।५।२५ ॥**

**भाष्यं—** द्वादशाहः अहर्गणः 'प्रायणीयोऽतिरात्रः, पृष्ठ्यः षडहः, त्रयश्छन्दोमाः, अविवाक्यमहः, उदयनीयोऽतिरात्रः' इति । स उभयसंज्ञकः सत्रं अहीनश्च । कथं ज्ञायते ? अभियुक्तानामुपदेशात् । एवं हि उपदिशन्ति सत्रं अहीनश्च द्वादशाह इति । शब्दार्थाधिगमे च अभियुक्तोपदेशः प्रमाणम् । संज्ञाव्यवस्थया च तस्य धर्मा आम्नाताः । 'एको द्वौ बहवोऽपि वा अहीनेन यजेरन्, तान् दीक्षिता याजयेयुः' 'गृहपतिसप्तदशाः स्वयमृत्विजो ब्राह्मणाः सत्रमुपेयुः' इत्येवमादयः । धर्मभेदाच्च संज्ञाव्यवस्था । यथा ब्राह्मणः परिव्राट् वानप्रस्थः इति । तत् दशमेऽध्याये वक्ष्यते 'द्वादशाहस्य सत्रत्वमासनोपायिचोदनेन यजमानबहुत्वेन च सत्रशब्दाभिसंयोगात्' ( १०।६।१६।६० ) 'यजतिचोदनादहीनत्वं स्वामिनां चास्थितपरिमाणत्वात्' ( ६१ ) इति । स द्विरात्रादिषु अहर्गणेषु प्रवर्तते इत्युक्तं 'गणेषु द्वादशाहस्य' ( ८।१।१०।१७ ) इति । तत्र संदिह्यते किं उभयप्रकारोऽसौ विकृतौ प्रवर्तते, उत व्यवस्थया क्व चिदहीनभूतः, क्व चित्सत्रभूत इति । किं प्राप्तं ? तस्योभयथा प्रवृत्तिः स्यात् ऐककर्म्यात् । उभयविधस्तत्र प्रवर्तेत । कुतः ? ऐककर्म्यात् । एकमिदं कर्म उभयविधं इत्युक्तम् । न तस्य प्रवृत्तौ विशेषो गृह्यते, इह एवंविधः इह नेति । तस्मादुभयविधः प्रवर्तेत । ननु एका चेत् द्विधा प्रवृत्ता, द्वितीयया कार्यं नास्ति । ऐककर्म्यात् विकल्पो भविष्यति, यथा आग्नेयविकारेषु अभिमर्शनस्य ।

**अपिवा यजतिश्रुतेरहीनभूतप्रवृत्तिः स्यात्, प्रकृत्या तुल्यशब्दत्वात् । २६ ॥**

**भाष्यं—** अपिवा नैतदेवं सर्वत्र उभयथा प्रवृत्तिरिति । यत्र यजतिः श्रूयते, तत्र अहीनभूतस्य प्रवृत्तिः । पारिशेष्यात् यत्र आसनोपायिचोदना, तत्र सत्रभूतस्य । कस्मात् ? प्रकृत्या तुल्यशब्दत्वात् । प्रकृत्या हि विकृतिः तुल्यशब्दा भवति । तस्मात् चोदनासामान्यात् प्रकृतिनियमः । अहीनभूतश्च यजतिचोदनः 'द्वादशाहेन प्रजाकामो यजेत' इति । सत्रभूतः आसनोपायिचोदनः 'द्वादशाहमृद्धिकामा उपेयुः' 'द्वादशाहमृद्धिकामा उपासीरन्' इति ।

**द्विरात्रादीनामैकादशरात्रादहीनत्वं यजतिचोदनात् । २७ ॥**

**भाष्यं—** अत्राह, के पुनस्ते अहर्गणाः यजतिचोदनाः येषु अहीनभूतः प्रवर्तते, के वा आसनोपायिचोदनाः येषु सत्रभूत इति । तदुच्यते । द्विरात्रादीनां आ एकादशरात्रात् अहीनत्वं, तत्र अहीनभूतः प्रवर्तते, तेषां यजतिशब्देन चोदनात् 'द्विरात्रेण यजेत' इति ।

**त्रयोदशरात्रादिषु सत्रभूतस्तेष्वासनोपायिचोदनात् । २८ ॥**

**भाष्यं—** 'त्रयोदशरात्रमृद्धिकामा उपेयुः' 'चतुर्दशरात्रं प्रतिष्ठाकामा उपासीरन्' इति । सुहृद् भूत्वा आचष्टे ( सूत्रकारः ) । एवं वा ( सूत्रार्थः— ) यस्मात् यजतिचोदनः अहीनः, तस्मात् द्विरात्रादीनामपि अहीनत्वम् । तेऽपि हि यजतिचोदनाः । यस्मात् आसनोपायिचोदनं सत्रं, तस्मात् त्रयोदशरात्रादीनि सत्राणि, तान्यपि तच्चोदनानि इति ।

**लिङ्गाच्च । २९ ॥**

**भाष्यं—**'अग्निष्टोमो वै प्रजापतिः स उत्तरानेकाहानसृजत, तमेतं द्विरात्रादयः अहर्गणा ऊचुः, त्वमस्मान् मा हासीः इति, तदेषां अहीनत्वं' इति द्विरात्रादीनामहीनत्वं दर्शयति ।

**शा—** 'सत्रस्यैव तु सत्रेषु प्रवृत्तिः सत्रसाम्यतः । तथाऽहीनेष्वहीनस्य सुसदृक्त्वादिति स्थितम् ॥'

**सोम—**आमिक्षाया विशेषग्रहणात् उभयविकारत्वाभावेऽपि अहर्गणेषु उभयविकारत्वं अव्यवस्थया इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**—सत्राहीनोभयरूपस्यापि द्वादशाहस्य गणेषु अव्यवस्थया प्रवृत्तिः स्यात् द्वादशाहरूपकर्मणः एकत्वादिति ।

**वि—**'अहीनसत्रयोर्द्वादशाहान्तावव्यस्थितौ । व्यवस्थितौ वा, ऽविशेषादाद्यो, ऽन्त्यः स्वस्वलिङ्गतः ॥' अन्तौ विध्यन्तौ ।

**भाट्ट**—अहर्गणेषु द्वादशाहस्य प्रवृत्तिः इत्युक्तम् । द्वादशाहे चास्ति सत्रत्वमहीनत्वं चेति धर्मद्वयम् । तत्र आसीरन्, उपेयुः इत्यादिचोदनाचोदिते सत्रत्वं अखण्डोपाधिः, अनियतस्वामिके यजतिचोदनाचोदिते च अहीनत्वं अखण्डोपाधिः, वृद्धव्यवहारात् । तत्तद्धर्मकत्वे निमित्ते च तत्तद्धर्मविशेषा विहिताः । तथा अन्येऽपि सत्रसंज्ञकाः अहीनसंज्ञकाश्च अहर्गणा अधर्मकाः समाम्नाताः । तत्र द्विविधेष्वपि द्वादशाहस्य एकस्य धर्मप्रवृत्तिः । अतः अविरुद्धाः समुच्चीयन्ते, विरुद्धाश्च विकल्प्यन्ते । नहि अत्र द्वादशाहभेदोऽस्ति, येन अवान्तरसामान्यात् 'तत्तद्–द्वादशाहवत्' इत्यतिदेशवाक्यं कल्प्येत । भेदे प्रमाणाभावात्तु 'द्वादशाहवत्' इत्येव अतिदेशवाक्यकल्पने अव्यवस्थैव युक्ता इति । **एवं प्राप्ते**, सत्यपि द्वादशाहत्वेनैव अतिदेशे, सत्रत्वरूपनिमित्ताभावात् तन्नैमित्तिकधर्माः नाहीने, अहीनत्वरूपनिमित्ताभावाच्च तन्नैमित्तिका धर्मा न सत्रे प्रवर्तन्ते, इति फलतो व्यवस्थितं प्रकृतित्वं सत्रात्मकेषु अहर्गणेषु सत्रात्मकस्य द्वादशाहस्य, अहीनात्मकेषु अहीनात्मकस्य इति । द्विरात्रादारभ्य आ एकादशरात्रान्तं अहीनाः, द्वादशाहः उभयात्मा, त्रयोदशरात्रादारभ्य सर्वे सत्रभूता एव, तथैवोक्तलक्षणसत्त्वात्, वृद्धव्यवहाराच्च । अतस्तेषुतेषु तत्तद्रूपस्य द्वादशाहस्य प्रवृत्तिः ।

**न्यायबिन्दुः**— सत्राख्येष्वहर्गणेषु सत्ररूपद्वादशाहातिदेशः, अहीनेषु अहीनस्य इति सिद्धान्तः ।

**मण्डन**—'धर्मो व्यवस्थयाऽह्नां स्यात् ।'

**शंकर**—'सत्राहीनेषु तादृशात् ।' सत्राहीनात्मकात् द्वादशाहात् ।

**अतिदेशः साकमेधीयैककपाले वारुणप्राघासिकैककपालधर्माणाम् ॥**

**एककपालानां वैश्वदेविकः प्रकृतिराग्रयणे सर्वहोमापरिवृत्तिदर्शनादवभृथे च सकृद्–द्व्यवदानस्य वचनात् । ७।१।५।२३ ॥**

**भाष्यं**—साकमेधे( धेषु ) श्रूयते 'एतद्–ब्राह्मण एककपालः' इति । तत्र चिन्त्यते वैश्वदेविकस्य एककपालस्य इदं ग्रहणं, उत वारुणप्रघासिकस्येति । किं प्राप्तं ? वैश्वदेविकस्येति ब्रूमः । किं कारणं ? तस्य विहिता धर्माः 'अलंकृत्य अभिपूर्य उपांशु यष्टव्यः, आविःपृष्ठः कार्यः' इत्येवमादयः । वारुणप्रघासिकस्तु अधर्मकः । यस्य विहिताः धर्मास्तेनैतदुच्यते वक्तुं तद्वदिदं कर्तव्यमिति । तस्मात् वैश्वदेविकस्य ग्रहणम् । ननु ऐन्द्राग्नसमुच्चारणात् एककपालोऽपि वारुणप्रघासिक एव स्यात्, नावश्यं एकपर्वणोरेव समुच्चारणेन भवितव्यं, नानापर्वणोरपि समुच्चारणमविरुद्धम् । तस्मात् वैश्वदेविकस्य ग्रहणम् । **इति प्राप्ते उच्यते** । वारुणप्रघासिकस्य एककपालस्य ग्रहणमिति । कुतः ? यत एककपालानां वैश्वदेविकः प्रकृतिः । कथं ज्ञायते ? आग्रयणे सर्वहोमापरिवृत्तिदर्शनात् । आग्रयणे द्यावापृथिवीयस्य एककपालस्य सर्वहोमं अपर्यावृत्तिं च दर्शयति 'यत् सर्वहुतं करोति सा त्वेका परित्रक्षा, हुतोऽहुतः पर्यावर्तते सा द्वितीया, आज्यस्यैव द्यावापृथिव्यौ यजेत' इति आज्ययागविधिपरे वाक्ये एककपालस्य सर्वहोमं अपर्यावृत्तिं च प्राप्तां दर्शयति । एतस्मात् दर्शनात्, अवभृथे च सकृद्–द्व्यवदानस्य वचनात् । अवभृथे च अवधारणं भवति 'इदमेव एककपालस्य द्विरवद्यति' इति । तेन ज्ञायते नूनमन्यत्र न द्विरवदानमिति । तच्च एतत्सर्वं वैश्वदेविके एककपाले विहितम् । तस्मात् एककपालानां वैश्वदेविकः प्रकृतिः । किमतः ? साकमेधिकेऽपि एककपाले वैश्वदेविका **धर्माः** प्राप्ताः, तेषामतिदेशः अनर्थकः । वारुणप्रघासिकस्य ये धर्माः वैशेषिका अप्राप्ताः, तेषामतिदेशः **अर्थवान्** । तस्मात् वारुणप्रघासिकस्य एककपालस्य इदं ग्रहणमिति । उच्यते, लिङ्गमेतत्, कुतः प्राप्तिः ? इति । प्राप्तिमुत्तरत्र वक्ष्यामः 'स्वरसामैककपालामिक्षं च' (७।३।१०।२६) इत्यत्र । के पुनस्ते धर्माः ? 'हिरण्मय्यः स्रुचो भवन्ति, शमीमय्यो वा' इत्येवमादयः ।

**सोम**—यथा 'एतद्–ब्राह्मणान्येव पञ्च हवींषि' इत्यत्र वचनस्य बहुविषयत्वलाभाय साङ्गविधिकस्य सार्थवादस्य कृत्स्नस्य काण्डस्य अतिदेशः, **तथा अत्रापि** बहुविषयत्वलाभाय वैश्वदेविकातिदेशः इत्युत्थानात्, पूर्वे सामान्यतः सिद्धस्य कृत्स्नकाण्डातिदेशस्य विशेषविचाराद्वा **संगतिः** ।

**वि**—'किं वैश्वदेविकादेककपालादतिदेशनम्। साकमेधेषु वरुणप्रघासस्थाद्रुता, ऽग्रिमः ॥ प्रकृतावर्थबाहुल्या, दन्तिमः संनिधानतः । ऐन्द्राग्नसाहचर्याच्च सार्थत्वमपिकत्वतः ॥'

**भाट्ट**— एककपालस्य प्रकृतिभूत एककपालः वारुणप्रघासिक एव, न तु धर्मभूयस्त्वेऽपि वैश्वदेविकः, वक्ष्यमाणात् सर्वैककपालेषु चोदनालिङ्गातिदेशादेव वैश्वदेविकधर्मप्राप्तिसिद्धेः। अनन्यलभ्यकतिपयधर्मप्राप्त्यर्थं वारुणप्रघासिक एव। एवं च ऐन्द्राग्नप्रायपाठोऽपि उपपद्यते। तत्र हि न दार्शिकैन्द्राग्नातिदेशविधिः, चोदनालिङ्गातिदेशादेव सिद्धेः। नापि ऐन्द्राग्नान्तराणां, अनुपस्थितत्वात्। अत एव चातुर्मास्यप्रकरणस्थत्वेन उपस्थितत्वात्, वैश्वदेवे च ऐन्द्राग्नाभावात् वारुणप्रघासिकस्यैव। अतः तत्प्रायपाठादपि साकमेधैककपालस्य वारुणप्रघासिकैककपालप्रकृतिकत्वम्। धर्माश्च 'हिरण्मय्यः स्रुचो भवन्ति' इत्यादयः सामान्यविहिताः इति **भाष्यकारः**। **वस्तुतस्तु** साकमेधस्थपञ्चसञ्चरेषु अतिदेशविधिरस्ति, न वा ? अन्त्ये दर्शपूर्णमासविकारत्वापत्तेः भूयोऽनुग्रहाय न हिरण्मयत्वादिप्रसक्तिः। आद्येऽपि एतदधिकरणन्यायस्य अन्यलभ्यत्वस्य अभावात् धर्मभूयस्त्वलाभाय वैश्वदेविकपञ्चसञ्चराणामेव धर्मातिदेशात् तथैव वारुणप्रघासिकहिरण्मयत्वाद्यप्राप्तिः।

**वस्तुतस्तु याज्ञिकाचारात्** यत्र वरुणप्रघासेषु स्रुगन्तरोत्पत्तिप्रसक्तिः, तत्रैव हिरण्मयत्वशमीमयत्वादेर्विध्यौचित्येन दक्षिणविहारे एव तन्निवेशात् ऐन्द्राग्नैककपालयोरपि न हिरण्मयत्वाद्यतिदेशः। अस्तु वा सः, तथापि यदि ऐन्द्राग्नाद्यतिदेशविधिवैयर्थ्यभियैव भूयसां अनुग्रहमपि अनङ्गीकृत्य हिरण्मयत्वाद्यभ्यनुज्ञानं इत्युच्येत, ततः ऐन्द्राग्नैककपालयोर्मध्ये अन्यतरातिदेशेनैव तत्प्राप्तिसिद्धेः इतरानर्थक्यम्। अतोऽवश्यं तत्तद्विशेषविहितधर्मप्राप्तिसिद्ध्यर्थमेव इदं अतिदेशद्वयम्। विशेषविहितधर्माश्च ऐन्द्राग्ने याज्यादयः। एककपालेऽपि केचित् शाखान्तरेषु अनुसंधेयाः इति ध्येयम्।

**न्यायबिन्दुः**—साकमेधेषु वैश्वकर्मणः एककपालः, ऐन्द्राग्न एकादशकपालः। तत्र 'एतद्ब्राह्मण एककपालः' इत्यतिदेशः वैश्वदेविकयोरेव, तत्र अङ्गबाहुल्यात्। **इति प्राप्ते**, अव्यवधानात् वचनार्थवत्त्वाय वारुणप्राघासिकयोरेव इति सिद्धान्तः।

**मण्डन**—'प्राघासिकातिदेशः स्यात्।'

**शंकर**—'द्वितीयपर्वैतच्छब्दम्।'

**अतिदेशः साकमेधीयैन्द्राग्नैककपालयोः वारुणप्रघासिकसार्थवादविधिकाण्डस्य ॥**

**एककपालैन्द्राग्नौ च तद्वत्। ७।१।४।२२॥**

**भाष्यं**—वैश्वदेवे एककपाल आम्नातः 'द्यावापृथिव्य एककपालः' इति। वरुणप्रघासेष्वपि 'काय एककपालः' इति। तत्रापरः 'ऐन्द्राग्नो द्वादशकपालः, मारुत्यामिक्षा' इति। तथा साकमेधेष्वपि एककपालैन्द्राग्नौ आम्नातौ 'ऐन्द्राग्न एकादशकपालः, इन्द्राय वृत्रघ्ने चरुः, वैश्वकर्मण एककपालः' इति। तत्रेदमाम्नातं 'एतद्-ब्राह्मण ऐन्द्राग्नः, एतद्-ब्राह्मण एककपालो, यद्-ब्राह्मण इतर इतरश्च' इति। तत्रेदमुच्यते। 'एककपालैन्द्राग्नौ च तद्वत्।' यद्वत् पञ्चसंचराणि। अत्रापि सविधिकस्य सार्थवादकस्य काण्डस्यातिदेशः तेनैव न्यायेनेति। प्राप्तिसूत्रमेतत् उत्तरचिन्तार्थम्।

**सोम**—**ननु** अतुल्यरूपे न्यायातिदेशो युक्तः, न तु तुल्यरूपे उदाहरणान्तरे, न्यायप्राप्तेः स्वतःसिद्धत्वात्, **इति चेत्**, उच्यते। नात्र सूत्रकृतोऽतिदेशे व्यापारः, किंतु उत्तरविवक्षया प्राप्तिमात्रे। **न च** एककपाले एव न्यायव्युत्पादनं क्रियतां, तथा च सूत्रकृतः उत्तरविवक्षया प्राप्त्यर्थं यत्नान्तरमपि न भवेदिति **वाच्यम्**। वैश्वदेवे 'त्रिंशत् संपद्यन्ते' इत्याहुतीनां त्रिंशत्त्वमुक्तं, वरुणप्रघासे 'वाजिनो यजति आहुतीनां संपत्त्यै त्रिंशत्त्वाय' इत्याहुतित्रिंशत्त्वादिलिङ्गबलेन स्फुटतया पञ्चसंचरेष्वेव न्यायव्युत्पादनस्य युक्तत्वात्।

**वि**—'श्रुतमेककपालस्थब्राह्मणस्यातिदेशनम्। तत् पूर्ववत् तथैन्द्राग्न एतद्ब्राह्मण इत्यपि ॥' पूर्वन्यायस्य विषयव्याप्तये वक्ष्यमाणोदाहरणस्य स्मारणाय बीजकथनम्।

**भाट्ट**— एवं साकमेधेषु श्रुतयोः ऐन्द्राग्नैककपालयोरपि 'एतद्-ब्राह्मण ऐन्द्राग्नः, यद्-ब्राह्मण इतरः,

'एतद्-ब्राह्मण एककपालो यद्-ब्राह्मण इतरः' इति वाक्याभ्यां सार्थवादिकसाङ्गविधिकाण्डस्य अतिदेशः इत्युत्तरविवक्षया स्मार्यते।

**न्यायविन्दुः**—वैश्वदेवे द्यावापृथिव्य एककपालः, वरुणप्रघासेषु काय एककपालः ऐन्द्राग्नो द्वादशकपालश्च। तेषामङ्गातिदेशः तत्सदृशेषु एककपालादिषु।

**मण्डन**—'तद्वदेककपालके।'

**शंकर**—'ऐन्द्राग्नैककपालयोः।' अतिदेशनम्।

**अतिदेशः सौर्यादौ इतिकर्तव्यतायाः ॥**

**इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वम्।** ८।४।१।१ ॥

**भाष्यं**— अनारभ्य किंचित् श्रूयते 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इति। तत्र एषोऽर्थः समधिगतः, यागोऽयं चोद्यते इति 'यजतिस्तु द्रव्यफलभोक्तृसंयोगादेतेषां कर्मसंबन्धात्' इति (२।३।५।१४)। तथा इदमप्युक्तं कर्मफलयोः संबन्धे कर्म गुणतः, फलं प्रधानतः इति 'प्रत्यर्थं चाभिसंयोगात् कर्मतोऽह्यभिसंबन्धस्तस्मात् कर्मोपदेशः स्यात्' इति (६।१।१।३)। इदमपि चोक्तं यजिः अपूर्वं साधयति, ततश्च अपूर्वात् कालान्तरे फलं भवति इति 'चोदना पुनरारम्भः' इत्यत्र (२।१।२।५)। एवमेतस्मिन् सति 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यत्र सौर्ययागेन अपूर्वं कृत्वा ब्रह्मवर्चसकामः इत्येवं विज्ञायते। **आह**, यत्र तृतीयायुक्तो यजिः, तत्र युक्तो गुणभावाभ्युपगमः यथा 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति। इह तु असत्यां तृतीयायां कथं तृतीयार्थो गम्यते इति। **उच्यते**। किमत्र तृतीयानिर्दिष्टेन यजिना कार्यं, यदा स्वभावसिद्धः कर्मणां फलं प्रति गुणभावः। यत्राप्यसौ श्रुतः, तत्रापि अकिंचित्कर एव, गतार्थत्वात्। तथा यत्रापि द्वितीयाश्रुतिः यथा 'अग्निहोत्रं जुहुयात्' इति, तत्रापि विभक्तिव्यत्ययो वा ईप्सिततमत्वस्य वा अविवक्षा। कामं वा आनर्थक्यं स्यात्, न तु कथं चिदपि कर्मणः प्रति गुणभावः शक्यः अपह्नोतुम्। तस्मात् यागेन अपूर्वसाधनं अत्रोच्यते। तत्र यागो विज्ञायते, लौकिकोऽसौ पदार्थः। तेन तु कथं अपूर्वं साध्यते इत्येतन्न विज्ञायते। इह तु यागेन अपूर्वं साधयेत् इत्येतावदेवोक्तम्। कथं साधयेत् इति इतिकर्तव्यता नोक्ता। येषां चार्थानां ज्ञायते एव इतिकर्तव्यता, तेषां कर्तव्यत्वमात्रं उपदिश्यते यथा 'ओदनं पचेत्' इति। येषां तु न ज्ञायते, ते सह इतिकर्तव्यतयैव उपदिश्यन्ते यथा दर्शपूर्णमासौ। एवं चेत् नूनं ज्ञायते, यागेन अपूर्वनिर्वृत्तौ इतिकर्तव्यता यस्मान्नोक्ता तस्मात् नूनं असौ अस्तीति। **आह**, यदि अस्ति लोके ततो ज्ञायेतैव, अथ नास्त्येव कथं शक्या ज्ञातुं इति। **उच्यते**। बाढमस्ति लौकिकी वैदिकी च। लौकिकी तावत् पार्वणस्थालीपाकादिषु, वैदिकी दर्शपूर्णमासादिषु। यदि तत्पूर्वा एताश्चोदनाः तदपेक्षाः सौर्ययागेन अपूर्वं साधयेत् यथाज्ञातया इतिकर्तव्यतया इति, ततो युक्त इतिकर्तव्यताया अविधिः। न च विधीयते। अतः इतिकर्तव्यताया अविधेः यजतेः पूर्ववत्त्वं विहितेतिकर्तव्यताकत्वं इति। अथ ये आहुः, यजेत यागं कुर्यात् इति, जुहुयात् होमं कुर्यात् इति, तेषां किं नैव धर्माकाङ्क्षा भवति? भवतीति ब्रूमः। यद्यपि प्रज्ञातेतिकर्तव्यताको यजिः द्रव्यं देवतां प्रति उत्सृज्यते इति, तथापि यदा फलार्थः क्रियते, तदा धर्मानाकाङ्क्षति। नहि अधर्मकात् फलं भवति। कथं ज्ञायते? यो हि अमेध्यं द्रव्यं, उच्छिष्टः शयानः प्रौढपादो वा, वामेन हस्तेन वा पादेन वा, यथाकथंचित् देवतायै उत्सृजति, तस्य फलं न भवति इति शिष्टाः स्मरन्ति। यस्तु मेध्यं द्रव्यं, शुचौ देशे, प्रयतः, प्राङ्मुखः, दक्षिणेन हस्तेन, समाहितमनाः मन्त्रवत् नियमवच्च देवतायै उत्सृजति, तस्य फलं भवति इति स्मरन्ति। तस्मात् यावान् यजतिः फलाय आम्नायते, स सर्वो धर्मानाकाङ्क्षति। अतस्तेषामपि अस्ति धर्माकाङ्क्षा। सत्यामाकाङ्क्षायां संनिहितैर्धर्मैः अविप्रतिषिद्धः संबन्धः प्रकृतौ, विकृतौ तु आनुमानिकैः।

**टुप्**— नाम्ना अतिदेशोऽभिहितः। इदानीमानुमानिकेन (वचनेन) अतिदेश उच्यते। 'किमत्र तृतीयया कार्यं? यदा स्वभावसिद्धः (एव) कर्मणां फलं प्रति गुणभावः' (इति भाष्योक्त आक्षेपसमाधानं,

आक्षिपति- ) एतदयुक्तम् । ( कुतः ? ) साध्यसाधन-संबन्धस्य वैदिकत्वात् । (तेन) यथा श्रुतं, तथा भवति । (ततः किं ? तत्राह-) न चाश्रवणे तृतीयायाः, (फल-) साधनतां ( यागः ) प्रतिपद्यते । न च सामान्यतोदृष्टं, लौकिकं कर्म गुणभूतं ( दृष्टम् ), अनेनापि (कर्मत्वात्) गुणभूतेन भवितव्यम् ( इति, सामान्यतोदृष्टस्य एवं-जातीयकेषु अप्रमाणत्वात् ) । अतः कः (अस्य भाष्य-) ग्रन्थस्यार्थः । ( समाधत्ते- ) यजेत इत्युच्चरिते (भावना-ऽवगमात्) तिस्र आकाङ्क्षाः ( समुत्पद्यन्ते । तत्र ) किमिति ( आकाङ्क्षायां ) नित्यमेव पुरुषार्थ आक्षि-प्यते साक्षात् पारंपर्येण वा भाव्यतया । धातुस्तु करणी-भवति पुरुषार्थस्य कर्मभूतत्वात् । अत आह ( भाष्य-कारः ) स्वभावसिद्धः कर्मणां गुणभावः (इति । पुरुषार्थ-भाव्यवत्या भावनया संबध्यमानं कर्म स्वयमपुरुषार्थ-स्वभावत्वात् करणत्वेनैव संबध्यते इति भाष्यार्थः ) अथवा स्वर्गं प्रार्थयमानस्य करणमभिलषतः तृतीयया करणं निर्दिश्यते । ( तत्र यथा ) ईदृश्यां ( करण- ) विवक्षायां दर्शपूर्णमासादीनि ( तृतीयान्तानि ) निर्दि-श्यन्ते, स्वर्गं प्रार्थयमानः केनाभ्युपायेन कुर्यात् ? तत्र ( उपायत्वेन ) यागं कुर्यादिति । ( तथा ) ईदृश्यामेव विवक्षायां ( अतृतीयान्ता अपि ) सौर्यादयो विधीयन्ते ( तस्मात् तेषामपि फलं प्रति गुणत्वं स्वभावसिद्धम् । इति भाष्यार्थः ) । भवति हि द्विप्रकारस्य ( अपि लोके ) अपेक्षा ( साध्यस्य साधनस्य च ) । तस्मादविरोधः ( भाष्यस्य ) ।

" येषां चार्थानां ज्ञायते एवेतिकर्तव्यता ( तेषां ) कर्तव्यतामात्रमुपदिश्यते, यथा 'ओदनं पचेत्' इति " ( इदं भाष्यमाक्षिपति ) अयुक्तमिदम् । ओदनं पचेत् इत्यत्रापि तिस्र आकाङ्क्षा विद्यन्ते । एवं चेत् ( किं केन कथमिति ) आकाङ्क्षायां (सत्यां) इतिकर्तव्यताऽपि संबध्यते । प्रत्यक्षादिना तत्र ( पाके इतिकर्तव्यता ) निर्दिश्यते । इह तु ( दर्शपूर्णमासादौ ) शास्त्रेण निर्दि-श्यते । आकाङ्क्षामात्रं तुल्यमेव । ( अतः ) ओदनं पचेत् इत्यत्र केवलः ( पाकः ) न निर्दिश्यते । (आक्षेपं समाधत्ते-) फलेन तु ग्रन्थः ( योजयितव्यः ) ।

( सूत्रं योजयति- ) यत्र ( सौर्यादौ इतिकर्तव्यता ) समीपे नाम्नायते तत्र कस्यापि कर्तव्यतया भवितव्यं ( कथंभावसाकाङ्क्षत्वात् ) यथा विश्वजिति फलमनु-षज्यते (अध्याह्रियते इत्यर्थः ) । एवमिहापि ( सौर्यादौ इतिकर्तव्यता आहर्तव्या) इति । इदं सूत्रं उत्तरविवक्षार्थं, न्यायादेवैतत् ज्ञायते ।

**शा**— यागेन भावयेत् ब्रह्मवर्चसं इति भावनां इति-कर्तव्यताऽपेक्षामुपदिश्य श्रुत्याद्युपदेशेन तस्या इतिकर्तव्य-ताया असमर्पणात् नूनं अन्यतः सिद्धा इतिकर्तव्यता अत्र शास्त्रेण अङ्गीकृता इति निश्चीयते । अस्ति चान्यत्र लौकिके ( स्मार्ते ) पार्वणस्थालीपाकादौ, वैदिके दर्श-पूर्णमासादौ । तयोरन्यतरात् इह प्रतिदिश्यते ।

**सोम** — प्रत्यक्षवचननिमित्तातिदेशविचारानन्तरं कल्प्यश्रुतिकतया ततो विलम्बितनामधेयनिमित्तातिदेशं विचार्य अनन्तरं कृत्स्नस्य वचनस्यैव कल्प्यतया नामा-पेक्षयाऽपि विलम्बितेन चोदनालिङ्गानुमितशब्देनातिदेशो विचार्यते इति **पादभेद आनन्तर्यं च** ।

**वि** — ' सौर्ये चरौ न धर्माः स्युः स्युर्वा, मानविवर्ज-नात् । न स्युः, स्युः करणं यागोऽपेक्ष्यते ह्युपकारिणः ॥'

भाष्ये प्रथममधिकरणं एकसूत्रात्मकमेव । द्वितीया-दिद्वादशान्तैः द्वितीयमधिकरणम् । भाट्टादौ तु प्रथमादि-द्वादशभिः सूत्रैः एकमेवाधिकरणं स्वीकृतं तदेवात्र उद्ध्रियते । **के.**

**भाट्ट**— तदेवं सप्रसङ्गो नामातिदेशो निरूपितः । इदानीं कल्पितवचनातिदेशो निरूप्यते । यत्र उद्भित्सौ-र्यादौ नैव इतिकर्तव्यता आम्नाता, यत्र वा द्रव्यदेवतोप-होमादिरूपा समाम्नाताऽपि न निराकाङ्क्षीकरणसमर्था, तत्र भावनास्वाभाव्येन तस्याः करणानुग्राहकव्यापाररूपेति-कर्तव्यताऽऽकाङ्क्षायां वक्ष्यमाणसादृश्येन प्रकृतिभावनोप-स्थितौ तदंशत्रयस्यापि उपस्थितेः, तत्र च फलकरणयोः अनपेक्षितत्वादिना अतिदेशस्य निराकरिष्यमाणत्वात् इतिकर्तव्यतैव प्रकृतिवत् इत्येवं कल्पितेन विकृतिवाक्य-शेषरूपातिदेशेन विकृत्यङ्गतया विधीयते । **न च** प्रबल-प्रमाणेन प्रकृत्यङ्गतया अवगतायाः कथं विकृत्यङ्गत्वं इति **वाच्यम्** । प्रबलस्यापि विकृतिविधेः इतिकर्तव्यताऽऽकाङ्क्षा-

शान्त्यभावेन आनर्थक्यप्रसङ्गात् दुर्बलप्रमाणबाधकत्वानुपपत्तेः । अतः सर्वत्र अनाम्नातेतिकर्तव्यताकस्थले आम्नातेतिकर्तव्यताकस्य अतिदेशः । आम्नातेतिकर्तव्यताकाश्च सोमदर्शपूर्णमासादयः श्रुताः त्रेताग्निसाध्याः । पार्वणस्थालीपाकादयश्च स्मार्ताग्निसाध्याः, ते एव मूले ( भाष्ये ) लौकिकपदेन उच्यन्ते । तत्र अविशेषात् सौर्यादौ उभयोरप्यतिदेशः । यदि तु प्रकृतौ एकैकस्याः प्रत्येकं निराकाङ्क्षीकरणसमर्थायाः इह समुच्चयेन मिलितायाः निराकाङ्क्षीकरणसामर्थ्यकल्पने प्रमाणाभावात् एकस्या एव अतिदेशः इत्याशङ्क्येत, ततोऽस्तु लौकिक्या एव अतिदेशः, तस्याः कल्पसूत्रकारादिवचनैः आग्रहायणिककर्मादौ अतिदेशस्य क्लृप्तत्वेन दृष्टप्रवृत्तिकतया सौर्यादावपि तस्या एवातिदेशात् । यत्तु सौर्यादौ ' प्रयाजेप्रयाजे कृष्णलं जुहोति ', ऐन्द्राबार्हते 'अर्धं बर्हिषो लुनाति ', पितृयज्ञे ' न होतारं वृणीते', गृहमेधीये ' आज्यभागौ यजति ' इत्यादिलिङ्गदर्शनं तत् ' यत्र नित्यानुवादवचनानि स्युः' ( ७।४।५ सू. ) इत्येवं परिहर्तव्यम् । तथाहि यत्र प्रयाजदर्शपूर्णमासादौ तत्र कृष्णलहोमविधिः इति **तन्त्ररत्नकारः** । वस्तुतस्तु प्रयाजोद्देशेन कृष्णलहोमान्तरविधौ आराडुपकारकत्वेन सर्वप्रयाजार्थे तन्त्रेणानुष्ठानापत्तेः प्रयाजेप्रयाजे इति वीप्साऽनुवादानुपपत्तिः, प्रयाजीयहोमोद्देशेन कृष्णलमात्रविधौ विशिष्टोद्देशः, होममात्रोद्देशेन विधौ अतिप्रसङ्गः । अतः प्रयाजोद्देशेन कृष्णलमात्रं पूर्वपक्षे आज्येन सह विकल्पेन प्रतिनिधित्वेन वा विधीयते । सिद्धान्ते तु तद्बाधकत्वेन । प्रयाजाश्च पूर्वपक्षे दर्शपूर्णमासीयाः, सिद्धान्ते सौरीयाः इत्येतावान् विशेषः । जुहोतिस्तु संस्कारकत्वेन प्राप्तः अनूद्यते । अत एव **भाष्यकारोक्तं** अस्य वचनोदाहरणत्वमपि पञ्चमविधिप्रकारापत्तेः अयुक्तम् । **याज्ञिकास्तु** आज्येनैव प्रयाजहोमे कृष्णलप्रक्षेपं अधिकं कुर्वन्ति । एवं 'अर्धं बर्हिषः' इत्यत्रापि । यत्र दर्शादौ बर्हिर्लवनं, तत्र लवनानुवादेन अर्धत्वविधिः । ' न होतारं ' इति तु नित्यानुवादः । आज्यभागविधिस्तु अपूर्वविधितया वचनं इति द्रष्टव्यम् । यत्र हि गुणोपादानं भवेत्, तत्र सर्वत्र तृतीयविधिप्रकारलोभेन ' यत्र ' इत्यस्यैव उदाहरणत्वं भवेत्, न वचनस्य । अस्तु वा यत्र प्राकरणिकगुणावरुद्धे गुणान्तरस्य प्रतिनिधित्वादिनाऽपि कथंचित् निवेशासंभवः, तत् वचनोदाहरणम् । सर्वथा अतिदेशाभावेऽपि लिङ्गोपपत्तिः । **इति प्राप्ते**, स्वप्रत्यक्षपठितवेदविहितत्वसादृश्यात्, वैतानिकाग्निसाध्यत्वसादृश्याच्च वैदिक्या एवातिदेशः । अतिदेशाभावेऽपि हि सौर्यादीनां गृह्यसूत्रेषु अनुक्तत्वात् न स्मार्ताग्निसाध्यत्वम् । अतः सामान्यविहिताहवनीयादिसाध्यत्वे बाधकाभावात् सादृश्योपपत्तिः । अत एवंजातीयकेषु दर्शपूर्णमासादिधर्माणामेव अतिदेश इति सिद्धम् । लिङ्गान्यपि एवं सति उपपन्नानि भवन्ति । इतरथा प्रकरणबाधो वाक्यानर्थक्यं वा प्रसज्येत ।

**न्यायबिन्दुः**—' सौर्यं चरुं ' इत्यादौ इतिकर्तव्यताऽऽकाङ्क्षायां लौकिकस्थालीपाकादीतिकर्तव्यता ग्राह्या, दर्शादिगताया वैदिक्या अन्यसंबन्धित्वेनासंभवात् । **इति प्राप्ते**, वैदिकत्वेन, औषधद्रव्यकत्वादिसादृश्येन चोपस्थिता दर्शादीतिकर्तव्यतैव प्रकृतिवच्छब्देन कल्पितेनातिदिश्यते ' प्रकृतिवत् सौर्येण कुर्यात् ' इति । न तु लौकिकी इति सिद्धान्तः ।

**मण्डन**— ' सौर्येऽनुमेयान्यङ्गानि । '

**शंकर**— ' लिङ्गातिदेशः सौर्यादौ । '

**अतिदेशः सौर्ये चरौ आग्नेयद्वयधर्माणां विकल्पेन** ॥

**एककर्मणि विकल्पोऽविभागो हि चोदनैकत्वात् । ८।१।१५।२६ ॥**

**भाष्यं**—' सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः ' इति श्रूयते । अस्ति तु प्रकृतौ अभिमर्शनद्वयं ' चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्यां ' इति । तदिह चोदकेन प्राप्यते । तत्र संशयः किं सौर्यो यदा पौर्णमास्यां प्रयुज्यते तदा चतुर्होत्रा अभिमृष्टव्यः यदा अमावास्यायां तदा पञ्चहोत्रा, उत उभयत्र विकल्पः चतुर्होत्रा वा पञ्चहोत्रा वेति । किं प्राप्तं ? व्यवस्था इति । कुतः ? चोदकानुग्रहात् । प्रकृतौ व्यवस्था कृता, इहापि चोदको व्यवस्थां प्रापयति । **एवं प्राप्ते उच्यते** । एकस्मिन् कर्मणि अत्र सौर्ये विकल्पः । कुतः ? अविभागो हि चोदनैकत्वात् । एकैषा चोदना ' सौर्यं चरुं

निर्वपेद् ब्रह्मवर्चसकामः' इति । तत्र अविभागो भवति । उभौ अपि (मन्त्रौ) अभिमर्शने प्राप्येते । तयोरेकार्थत्वात् समुच्चयो न संभवति, तस्मात् विकल्पः । यत्तु प्रकृतौ व्यवस्थेति, नासौ कालकृता, किं तर्हि ? समुदायकृता । न च सौर्ये तौ समुदायौ स्तः । यदि एवं, अभिमर्शनमेव तर्हि न प्राप्नोति, तयोः समुदाययोरभावादिति । **अत्रोच्यते** । न प्राप्नोति, यदि समुदाययोरभिमर्शनमुच्येत । तयोस्तु अनभिप्रेतत्वात्, समुदायिनां तदुच्यते लक्षणया । समुदायिविकारश्च सौर्यः । तस्मात् तत्रापि चोदकः प्रापयति तत् ।

**टुप्**— सौर्यः आग्नेयात् उपमितलक्षितप्रापणेन इतिकर्तव्यतां गृह्णाति ( इत्युत्तरे अधिकरणे वक्ष्यामः ) । आग्नेयस्य च पौर्णमास्यां अमावास्यायां च विद्यमानत्वात् अशक्यमवधारयितुं किं पौर्णमासिकस्य संबन्धिनी इतिकर्तव्यता प्रवर्तते, उत आमावास्यस्येति । तस्मात् अगृह्यमाणविशेषत्वात् विकल्पः । 'आसन्नानि हवींषि अभिमृशति' इति हविरभिमर्शने मन्त्रस्य करणत्वात् विकल्पे प्राप्ते, यद्यपि कालकृता व्यवस्था ( हविरन्तरवशेन प्रकृतौ जाता, तथापि विकृतौ अशक्या व्यवस्था ) कर्तुं न ज्ञायते सौर्ये कतरस्य आग्नेयस्य धर्माः प्रवर्तन्ते इति । तस्मात् आग्नेयाविशेषात् विकल्पः ।

**शा**— 'व्यवस्था प्रकृतौ दृष्टा प्राप्यते विकृतावपि । प्रकृतावार्थिकी त्वेषा विकृतौ नातिदिश्यते ॥' ( पूर्वार्धे पूर्वपक्षः, उत्तरार्धे सिद्धान्तः ) ।

**सोम**— गोदोहनादीनां अनतिद्देशेऽपि व्यवस्थाया अतिदेश इत्युत्थानात् **संगतिः** । व्यवस्थाया आर्थिकत्वात् शास्त्रगम्यत्वाभावात् नातिदेशः इति सिद्धान्तः । **अत्र केचित्** पौर्णमास्याममावास्यायां च आग्नेयो भिद्यते असंभवद्विकल्पसमुच्चयन्यायात् । तथाहि, 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' इत्याग्नेयोत्पत्तिवाक्ये अमावास्यापौर्णमासीरूपकालद्वयस्य न समुच्चयः असंभवात्, नापि विकल्पः चशब्दविरोधात् । तस्मात् विकल्पसमुच्चयायोग्यगुणद्वयश्रवणात् कर्मभेदः । तथा च पौर्णमास्यामुत्पन्नस्याग्नेयस्य चतुर्होता अङ्गं, अमावास्यायामुत्पन्नस्य पञ्चहोता, इति व्यवस्था कालभेदेन कर्मभेदात् शास्त्रीयैव, न तु हविरन्तराविरोधप्रसक्तत्वादार्थिकी। एवं च सौर्यस्य रथंतराधिकरणन्यायेन (२।३।१) आग्नेयद्वयविकारत्वात् मन्त्रद्वयप्राप्त्या अभिमर्शने निरपेक्षसाधनयोः समुच्चयासंभवेन विकल्पादव्यवस्था सिध्यति इतीदमधिकरणं प्रपञ्चार्थमित्याहुः । **अन्ये तु** एकस्मिन्नेव कर्मणि कालद्वयसंबन्धमात्रेण चशब्दोपपत्तेः एक एवाग्नेयः, तत्र मन्त्रद्वयस्य कालभेदेन व्यवस्थायाः शास्त्रीयत्वे सौर्येऽपि व्यवस्थैव प्राप्नोति, अतोऽत्राधिकरणे व्यवस्थाया आर्थिकत्वं प्रतिपादनीयम् । आग्नेयश्च पौर्णमास्यमावास्ययोरुत्पन्नः उभयसंज्ञकः, तेन चतुर्होत्रा पञ्चहोत्रा च तस्य कालद्वयेऽभिमर्शनं इत्यादिग्रन्थस्वरसादपि एकत्वमेव प्रतीयते इत्याहुः । **सूत्रार्थस्तु**—एककर्मणि सौर्ये चोदनैकत्वादविभागः आग्नेयवत् व्यवस्थाहेतुकर्मभेदाभाव इति ।

**वि**— 'स्पर्शद्वयं व्यवस्थाप्यं विकल्प्यं वा, व्यवस्थितिः । प्रकृताविव, नो तत्र तस्याः शाब्दत्ववर्जनात् ॥'

**भाट्ट**— सौर्यादिः औषधद्रव्यकत्वैकदेवताकत्वाभ्यां आग्नेयविकारः इति वक्ष्यते (अव्यवहितोत्तराधिकरणे) । आग्नेयवाक्ये च आग्नेयद्वयं पौर्णमास्यमावास्याकालं इत्युक्तं पौर्णमास्यधिकरणे ( २।२।३ ) कौस्तुभे । सौर्यश्च विनिगमनाविरहात् उभयविकार इत्यप्यविवादम् । सौर्ये च 'य इष्ट्या' इति वचनात् वैकल्पिकः पौर्णमास्यमावास्याकालः । तदत्र आग्नेययोः किं पौर्णमासीकालीनसौर्यप्रयोगे पौर्णमासीकालीनाग्नेयस्य, अमावास्याकालीनसौर्यप्रयोगे च अमावास्याकालीनस्य व्यवस्थितं प्रकृतित्वं, उत अव्यवस्थितं विकल्पेन इति चिन्तायां, तत्तत्कालकत्वरूपावान्तरसादृश्यात् व्यवस्थितम् । एवं च 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्यां' इति विहिततत्तदङ्गमन्त्रयोरपि व्यवस्था । अत्र हि पौर्णमास्यादिसंज्ञकप्रधानसंबन्धिहविरेव पौर्णमास्यादिपदेन लक्षयित्वा तदुद्देशेन मन्त्रमात्रविधिः । अभिमर्शनं तु 'आसन्नानि हवींषि अभिमृशति' इति वाक्यान्तरप्राप्तं आश्रयत्वेन अनूद्यते इति साधितं तृतीये ( ३।७।३ ) । अतश्च मन्त्रयोरपि व्यवस्थोपपत्तेः प्रकृतित्व (तिवत्) व्यवस्था । **इति प्राप्ते**, भावनाया विजातीययागत्वावच्छिन्नस्य वा अनुग्राहकरूपेतिकर्तव्यताऽऽ-

काङ्क्षा, न तु प्रयोगविशेषस्य । अतश्च एकजातीयस्य सौर्यस्य वैकल्पिकोभयकालकत्वात् वैकल्पिकोभयविकारत्वावगतेः अव्यवस्थयैव तत्तदाग्नेयप्रकृतित्वं मन्त्राणां चाव्यवस्था इति सिद्धम् ।

**यत्तु पार्थसारथिना** वार्तिकस्वारस्यात् आग्नेयैकत्वमभ्युपगम्य मन्त्रयोर्दृष्टार्थत्वेन विकल्पात् एकस्मिन् आग्नेये प्रधानान्तरसाहित्यानुरोधेन प्रकृतौ व्यवस्थायामपि विकृतौ तदभावेन व्यवस्थाकारणाभावात् अव्यवस्थितविकल्पो मन्त्रयोः इति सिद्धान्तितं, **तत्** मन्त्रविकल्पचिन्तायाः द्वादशे संगततया अतिदेशविचाराभावेन अध्यायसंगत्यभावापत्तेः आग्नेयभेदस्य च स्थापितत्वेन ऐक्यानुपपत्तेः उपेक्षितम् ।

**न्यायबिन्दुः**— आग्नेयविकारे सौर्ये 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्यायां' इति प्रकृतिवत् व्यवस्था । **इति प्राप्ते**, हविरन्तरानुरोधेन प्रकृतौ आर्थिकी व्यवस्था, न तु शास्त्रार्थः । समुदायद्वयेऽपि आग्नेयसत्त्वेन समुदायकृतव्यवस्थायाः शास्त्रीयाया असंभवात् । तस्मात् विकृतौ अव्यवस्थैव इति सिद्धान्तः ।

**मण्डन**— 'सौर्ये विकल्पादभिमर्शमन्त्रः ।'

**शंकर**— 'सौर्ये मन्त्रव्यवस्था न ।'

**अतिदेशः सौर्ये चरौ आग्नेयस्यैव धर्माणाम् ॥**

**लिङ्गसाधारण्याद् विकल्पः स्यात् । ८।१।१६। २७ ॥**

**भाष्यं**—सौर्ये कर्मणि दार्शपौर्णमासिको विध्यन्तः इत्युक्तं 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः' (८।१।४।११) इति । सन्ति तु तत्र कर्माणि आग्नेयादीनि । तत्र विचारः किं यस्य कस्य चित् दार्शपौर्णमासिकस्य कर्मणः सौर्ये विध्यन्तः, उत आग्नेयस्येति । किं प्राप्तं ? विकल्पः । कुतः ? लिङ्गसाधारण्यात् । सौर्ये दार्शपौर्णमासिकविध्यन्तप्राप्तौ यत् लिङ्गमुपदिष्टं 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति, तत् साधारणं सर्वेषां विध्यन्ते संभवति । न च समुच्चयः । तस्मात् विकल्पः ।

**ऐकार्थ्याद्वा नियम्येत, पूर्ववत्त्वाद् विकारो हि । २८ ॥**

**भाष्यं**— आग्नेयस्य विध्यन्तो नियम्येत । कुतः ? ऐकार्थ्यात्, एकदेवतत्वादित्यर्थः । आग्नेय एकदेवत्यः, सौर्योऽपि । तेन एकदेवतत्वेन लिङ्गेन आग्नेयविध्यन्तो नियम्येत । पूर्ववत्त्वात् । पूर्ववानयं सौर्यः, पूर्वत्राभिहितं विध्यन्तमपेक्षते । विकारो हि, विकृतिरेषा । सर्वाश्च विकृतयः पूर्ववत्यः चोदनावाक्यानामसमाम्नानात् । तत्र लिङ्गेन विध्यन्तनियमो भवतीत्युक्तम् (८।१।२) । अस्ति च एकदेवतत्वं लिङ्गम् । तेन आग्नेयविध्यन्तः ।

**अश्रुतत्वान्नेति चेत् । २९ ॥**

**भाष्यं**— अत्राह, स्यादेतदेवं यदि अत्र एकत्वं श्रूयेत । न तु श्रूयते । कथं ? तद्धितेनायं निर्देशः सौर्यमिति, तथा आग्नेयमिति । तत्र वचनव्यक्तिर्न ज्ञायते किं सूर्यो देवता अस्य, उत सूर्यौ च सूर्याश्चेति । तथा आग्नेयेऽपि ।

**स्याल्लिङ्गभावात् । ३० ॥**

**भाष्यं**—स्याद् व्यवस्थितिरेकत्वस्य । कुतः । लिङ्गभावात् । लिङ्गमत्रास्ति । किं ? वाक्यशेषे एकत्वं श्रूयते । सौर्ये तावत्, 'अमुमेवादित्यं स्वेन भागधेयेनोपधावति स एवैनं ब्रह्मवर्चसं गमयति' इति । आग्नेयेऽपि 'अङ्गिरसो वा इत उत्तमाः स्वर्गं लोकमायन्, ते यज्ञवास्तु अभ्यायन्, ते पुरोडाशं कूर्मं भूत्वा प्रसर्पन्तमपश्यन्, तमब्रुवन् इन्द्राय ध्रियस्व बृहस्पतये ध्रियस्व विश्वेभ्यो देवेभ्यो ध्रियस्वेति, स तानाह न ध्रिये, तमब्रुवन् अग्नये ध्रियस्वेति, सोऽब्रवीत् ध्रियेऽहम् । यदाग्नेयोऽष्टाकपालोऽमावास्यायां पूर्णमास्यां चाच्युतो भवति, अग्निमेव स्वेन भागधेयेन समर्धयति' इति ।

**तथा चान्यार्थदर्शनम् । ३१ ॥**

**भाष्यं**— अनुवाक्यायामेकत्वश्रवणं (च लिङ्गम्) 'अग्निर्मूर्धा दिवः' इत्याग्नेये 'उदु त्यं जातवेदसं' इति सौर्ये । ननु पुनरुक्तमेतत् लिङ्गद्वयोपदर्शनमिति, तदुच्यते । नैतत् पुनरुक्तम् । एकमत्र चोदनागतं, एकं मन्त्रगतम् । चोदनागतं प्रापकं, मन्त्रगतं प्राप्तस्य द्योतकमिति ।

**सोम**— सौर्यस्य आग्नेयविकारत्वं सिद्धं कृत्वा पूर्वं विचारः प्रवर्तितः, तदेवेदानीं चिन्त्यते इति **संगतिः** ।

**न च** तद्धितादिवृत्तौ स्वरसत एकत्वं प्रतीयते, द्वित्वबहुत्वादि तु प्रमाणान्तरगम्यमिति विशेष इति **वाच्यम्**। संख्याविशेषमात्रस्यैव वृत्तौ प्रतीत्यभावात्। अत एव 'अभेदैकत्वसंख्यावगमः' इति वदद्भिः **शाब्दिकैरपि** अभेदैकत्वसंख्या नाम एकत्वादीनां भेदतिरोधानं एकत्वादिसंख्यासाधारणसंख्यान्तरं वा प्रतीयते इत्येवोक्तं, न त्वेकत्वस्य प्रतीतिरिति। अत एव **कैयटेन** 'शौर्पिकः' इत्यादौ परिमाणार्थतद्धितबलादेव एकत्वप्रतीतिः, 'तावकः' इत्यादौ आदेशबलादेकत्वप्रतीतिः इत्येकत्वप्रतीतावपि यत्न एवाश्रितः। सिद्धान्ते तु वृत्तौ संख्याविशेषानवगमेऽपि संख्याऽपेक्षायां प्रथमातिक्रमे कारणाभावात् कपिञ्जलाधिकरणन्यायेनैकत्वं प्रतीयते, ततश्चैकदेवताकेष्वाग्नेयस्य, अनेकदेवतेषु अग्नीषोमीयैन्द्राग्नयोः। तत्राप्यवान्तरनियमस्तु 'यस्य लिङ्गं' (८।१।२।२) इत्यत्रैवोक्तः। **सूत्रार्थस्तु**— लिङ्गस्य प्रयाजादेः आग्नेयादिसाधारण्यात् आग्नेयविध्यन्तविकल्पः स्यादिति।

**वि**— 'षट्सु कस्याप्युताग्नेयस्यैव सौर्ये, ऽग्निमो यतः। अविशेषो, न देवैक्यादौषधद्रव्यकत्वतः॥'

**भाट्ट**—इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिरित्युक्तम्। तत्रापि सौर्यादिषु औषधद्रव्यकत्वविशिष्टैकदेवताकत्वरूपविशेषसादृश्यात् आग्नेयविकारत्वम्। अत्र च सांनाय्यस्य एकदेवताकत्वेऽपि औषधद्रव्यकत्वाभावात् आद्यं विशेषणम्। अग्नीषोमीयादेः औषधद्रव्यकत्वेऽपि अनेकदेवताकत्वात् अपरम्। अत्र **यद्यपि** एकदेवताकत्वं नाम न एकदेवतात्वकत्वं, अग्नीषोमीयादावपि व्यासज्यवृत्तिदेवतात्वस्य एकत्वेन अतिप्रसङ्गात्। नापि एकदेवतात्वाधिष्ठानकत्वं, देवतात्वस्य शब्दनिष्ठत्वेन देवतात्वीयस्वरूपसंबन्धेन प्रत्येकाक्षराणामेव तदधिष्ठानतया आग्नेयेऽपि अव्याप्तेः, पर्याप्तिसंबन्धावच्छिन्नाधिष्ठानत्वविवक्षायां अग्नीषोमीयेऽपि अतिव्याप्तेश्च, संबन्धद्वयातिरेकेण पदमात्राधिष्ठानत्वस्य वक्तुमशक्यत्वाच्च। **तथापि** देवतात्वाश्रयप्रतिपाद्यैकार्थकत्वमेव ऐकदेवताकत्वम्। एकत्वं एकत्वसंख्याकत्वम्। अर्थस्य देवतात्वपक्षे तु एकदेवतात्वाधिष्ठानकत्वमेव एतत्। अस्ति चेदं आग्नेये सौर्ये च। प्रथमातिक्रमे कारणाभावेन एकवचनान्तेनैव तद्धितविग्रहात्, 'अग्निमेव स्वेन भागधेयेन समर्धयति' 'अमुमेवादित्यं स्वेन भागधेयेनोपधावति' इत्यर्थवादाच्च, 'अग्निर्मूर्धा' 'उदु त्यं जातवेदसं' इति मन्त्रवर्णाच्च। अग्नीषोमीयैन्द्राग्नयोस्तु तदभावात् नैकदेवताकत्वम्। अत एव 'मारुतं सप्तकपालं' इत्यादौ 'मरुतो यस्य हि क्षये' इति मन्त्रवर्णात् अनेकदेवत्यत्वावगतेः सत्यपि पदैक्ये नाग्नेयविकारत्वम्। 'अग्नये क्षामवते चरुं' इत्यादौ च सत्यपि पदभेदे, प्रमाणान्तरेण अर्थैकत्वावगमात् आग्नेयविकारत्वम्। अनेकदेवताकेषु तु अग्नीषोमीयैन्द्राग्नयोः। तत्रापि अग्नीषोमदेवत्यस्य सोमपदघटितानेकदेवत्यस्य चतुरक्षरानेकदेवत्यस्य वा अग्नीषोमीयविकारत्वमेव। इन्द्राग्निदेवत्यस्य इन्द्रपदघटितानेकदेवत्यस्य त्र्यक्षरानेकदेवत्यस्य वा ऐन्द्राग्नविकारत्वमेव इति व्यवस्था। तथा ऐन्द्राग्ने शाखाभेदेन एकादशकपालत्व-द्वादशकपालत्वयोर्विकल्पात् द्वादशकपालायां तदधिकसंख्याककपालायां वा विकृतौ ऐन्द्राग्नविकारत्वमेव। तन्न्यूनसंख्याककपालायां अष्टाकपालभिन्नायां तु विकल्प एव व्यवस्थापकसामान्याभावे। अष्टाकपालायां तु सत्यपि अनेकदेवताकत्वे द्रव्यघटितसादृश्यस्य बलवत्त्वात् आग्नेयविकारत्वमेव इत्याद्यूह्यम्। आज्यद्रव्यकायां उपांशुयाजस्य, दधिपयोरूपसांनाय्यद्रव्यकायां तत्तद्द्रव्यकस्य, इत्यादिविशेषतः प्रकृतित्वं बोध्यम्। ८।१।७.

**न्यायबिन्दुः**—इष्टिषु षण्णामाग्नेयादीनां अनियमेनातिदेशः। इति प्राप्ते, एकदैवत्यासु आग्नेयस्य, अनेकदैवत्यासु अग्नीषोमीयैन्द्राग्नयोः, आज्यादिद्रव्यकेषु उपांशुयाजस्य इति नियमः, सादृश्यविशेषात् इति सिद्धान्तः।

**मण्डन**— 'आग्नेयविध्यन्तमुपैति सौर्यः।'

**शंकर**— 'तस्याग्नेयाच्च चोदकः।' तस्य सौर्यस्य।

## ॥ अतिदेशन्यायः ॥

**श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाधिकारं भावः स्यात्। ७।१।१।१॥**

**भाष्यं**— पूर्वेण अध्यायषट्केन प्रत्यक्षविहितधर्माणां कर्मणां दर्शपूर्णमासादीनां इतिकर्तव्यता चिन्तिता। उत्तरेण इदानीं अविहितेतिकर्तव्यताकेषु ऐन्द्राग्नादिषु चिन्तयितुमिष्यते। तत्र यदि दर्शपूर्णमासादीनां प्रकरणे ये विहिता

धर्माः ते सर्वकर्मसु विहिता भवन्ति, ततस्तैरेव धर्मैः ऐन्द्राग्नादयोऽपि धर्मवन्त उक्ताः, तथा कर्तव्याश्चेति नार्थ उत्तरेण षट्केन । अथ ये यस्य प्रकरणे उच्यन्ते ते तत्रैवोक्ता भवन्ति ततः अधर्मकाणि ऐन्द्राग्नादीनि, इति तेषु चिन्ता भवति किमेषां धर्माः सन्ति, उत नेति। यदा च सन्ति तदा के कियन्तो वा कथं चानुष्ठातव्या इति । तदर्थं उत्तरः षट्कः प्रवर्तनीयः । तत्र सप्तमेन तावत् सन्ति धर्मा इत्युच्यते । अष्टमेन च इमे अस्येति। इत्थं प्रयोक्तव्या इति नवमेन । दशमैकादशद्वादशैः एतावन्तः प्रयोक्तव्या नातोऽधिका इति ।

तत्रेदं विचार्यते किं यजिप्रयुक्ता एते धर्माः कथं यजिः गुणवान् स्यात् इत्येवमर्थं आम्नायन्ते, आहोस्वित् अपूर्वप्रयुक्ताः कथमपूर्वं स्यादिति । यदि यजिप्रयुक्ताः, ततः सर्वार्थाः । अथ अपूर्वप्रयुक्ताः, ततो यथाप्रकरणं व्यवतिष्ठन्ते । किं पुनरत्र युक्तं ? अपूर्वप्रयुक्ता इति । अपूर्वं हि फलवत् , अफलो यजिः । फलवति च प्रयासो विधीयमानोऽर्थवान् भवति । तस्मात् अपूर्वप्रयुक्ताः धर्मा इति। अतः परं आचार्यस्य सूत्रोपन्यासः **'श्रुतिप्रमाणत्वात् शेषाणां मुख्यभेदे यथाऽधिकारं भावः स्यात्'** इति । मुख्यानि अपूर्वाणि । तानि हि फलवत्त्वात् प्रधानानि । प्रधाने च मुख्यशब्दः । तेषां भेद उक्तः शब्दान्तरादिभिर्हेतुभिः । तस्मिन् मुख्यभेदे सति यथाऽधिकारं भावः स्यात् शेषाणाम् । ये यस्य अपूर्वस्याधिकारे प्रकरणे शिष्यन्ते ते तस्यैव भवेयुः , श्रुतिप्रमाणत्वात् । अयमस्य अपूर्वस्य शेषः अयमस्य, इत्यत्र श्रुतिरेव प्रमाणं क्रमते , न प्रत्यक्षादीनामन्यतमम् । श्रुत्या च ये यस्य प्रकरणे श्रूयन्ते, ते तस्यैव भवितुमर्हन्ति । न च अन्यस्योक्तोऽर्थः अन्यस्य भवति । नहि यत् देवदत्तस्य ग्रासाच्छादनादिकं, तत् यज्ञदत्तस्य भवति। तस्मात् यथाप्रकरणं व्यवस्था धर्माणाम् ।

**टुप्—** 'प्रत्यक्षविहितधर्माणां दर्शपूर्णमासादीनां इतिकर्तव्यता चिन्तिता' इति एतत् ( भाष्यं ) अयुक्तम् । सर्वपृष्ठायां किं सकृदुत्तरार्धात् स्विष्टकृते अवदेयं, उत भेदेन इति चिन्तितं ( ३।५।४।१६ ) । तथा 'दृतिनवनीतमाज्यं भवति' इत्येवमादिषु प्रत्यक्षधर्मकेष्वपि चिन्ता वृत्ता । अत एवं वाच्यम् । प्रकृतौ विकृतौ च उपदेशश्चिन्तितः ( पूर्वषट्के ) । 'समदश प्राजापत्यान्' इत्येवमादिषु प्रत्यक्ष एवोपदेशः । सर्वपृष्ठादिषु आनुमानिकवचनोपदिष्टानां उपदेश एव चिन्तितः ।

सप्तमेन विकृतीनां अतिदेशेन धर्मा भवन्ति इति प्रतिपाद्यते । अष्टमेन विशेषातिदेशः । नवमे विशेषानिर्देशप्रसङ्गेन आरभ्यते , किं मन्त्रः अग्निस्वरूपप्रकाशनार्थमुच्चार्यते, उत अग्निस्वरूपं अविवक्षितं तस्मात् इत्थं प्रयोक्तव्यं , इति अतिदेशप्रकार एव चिन्त्यते । स दशमव्यापारमनुमन्यमान एव आत्मानं लभते । दशमे बाधाभ्युच्चयानुनिष्पादिनो शेषेयत्ताचिन्ता । इयत्ताप्रसङ्गेन च एकादशः प्रयोगेयत्ताविचारार्थमारभ्यते । तन्त्रावापेन ईदृश्यां इयत्तायां प्राप्तायां तदपवादत्वेन द्वादशः आरभ्यते । अन्यादृशी इयत्ता प्रसङ्गेन भवति । यद्यपि तन्त्रावापप्रसङ्गाः उभयत्र (उपदेशे अतिदेशे च) अविशिष्टाः, तथापि पूर्वषट्के नैषामवसरः। यावत् भेदो नावधृतः तावच्छेषशेषिता नास्ति । प्रयोजकाप्रयोजकत्वं च शेषशेषित्वादृते ( नास्ति ) । तथा क्रमः प्रयोजकाप्रयोजकत्वादृते ( नास्ति ) । ततः ईदृशैः ( भेदाभेदशेषशेषिप्रयोजकाप्रयोजकैकक्रमयुक्तैः ) कर्मभिः कोऽधिक्रियते इत्यधिकारलक्षणमापतति । न च पञ्चमसप्तमयोर्मध्ये तन्त्रावापप्रसङ्गानामवसरः । ( कथं ? ) अधिकारानन्तरं इदं विपरिवर्तते, किं धर्मैः यागोऽधिक्रियते ( उत ) न ( किंतु अपूर्वं ) इति, अनेन प्रसङ्गेन आद्यं ( सप्तमाद्यं ) आरभ्यते । **अथवा** सौर्यादयः प्राकृतैर्धर्मैरधिक्रियन्ते अतिदेशेन ( प्रमाणेन, किंवा ) न इत्यनेन प्रसङ्गेन सप्तमः ( अध्याय आरभ्यते । तद्बलेन च विशेषातिदेशोहबाधानामारम्भः । परिहारान्तरमाह— ) पर्यनुयोगाविशेषाच्च दशमानन्तरं तन्त्रावापप्रसङ्गाः प्रस्तूयन्ते । 'श्रुतिप्रमाणत्वाच्छेषाणां मुख्यभेदे यथाऽधिकारं भावः स्यात्' ( सूत्रं ) इति । करण– इतिकर्तव्यता–नामपद–विशिष्टा भावना विधीयते । तत्र यत् अस्यां करणं इतिकर्तव्यता च, तत् अन्यत्र न भवति, कर्मान्तरत्वात् ( भावनान्तरत्वात् ) । शब्दान्तरे कर्मभेदः ( २।२।१ सू. ) इत्युक्तम् । इतिकर्तव्यता च

भावनया आकाङ्क्षिता किं केन कथं इति। न यागापूर्वफलानां स्वयं 'इत्थं' इत्याकाङ्क्षा अस्ति। तस्मात् भावनया संबन्धः।

**उत्पत्त्यर्थाविभागाद्वा सत्त्ववदैकधर्म्यं स्यात्॥२॥**

**भाष्यं**— अथवा नैतदेवं यथाप्रकरणं धर्माणां व्यवस्था इति। कथं तर्हि? ऐकधर्म्यं स्यादिति समानधर्मता। सर्वे धर्माः सर्वार्थाः। कुतः? उत्पत्त्यर्थाविभागात्। उत्पत्तिरिति यजिं ब्रूमः, अपूर्वस्य उत्पादनात्। अर्थ इति अपूर्वं ब्रूमः, यजिप्रयोजनत्वात्। तयोः अविभागः। सर्वाणि अपूर्वाणि यजिमन्ति। यजिसंयोगेन धर्माः शिष्यन्ते। यजेत इत्युक्त्वा उक्ताः ते यजौ न संभवन्ति, तस्य अफलत्वात्। तत्र असंभवन्तः तत्संबद्धेषु अपूर्वेषु विज्ञायन्ते। स च यजिसंबन्धः सर्वेषामपूर्वाणां तुल्यः। तस्मात् सर्वार्था भवन्ति। सत्त्वधर्मवत्। यथा सत्त्वधर्माः 'गौर्न पदा स्प्रष्टव्यः' इति गोत्वसंबन्धेन श्रूयमाणाः, तत्र असंभवन्तः तत्संबद्धेषु पिण्डेषु विज्ञायन्ते। तस्य च गोत्वसंबन्धस्य अविशेषात् सर्वगवीषु शुक्लनीलकपिलकपोतिकासु भवन्ति, एवमिहापि। **उच्यते**। विषम उपन्यासः। तत्र गोसामान्यसंबन्धेन धर्मा विधीयन्ते 'गौर्न पदा स्प्रष्टव्यः' इति। इह पुनः यजिविशेषसंबन्धेन धर्मा विधीयन्ते 'दर्शपूर्णमासाभ्यां यजेत' 'ज्योतिष्टोमेन यजेत' इति। विशिष्टयजिसंबद्धे एवापूर्वे भवितुमर्हन्ति, न सर्वत्रेति। **तत्र ब्रूमः**। दर्शपूर्णमासाभ्यां यजेत इत्यत्र न शक्यन्ते यागविशेषे धर्मा विधातुम्। किं कारणं? यदा यजौ धर्मा विधीयन्ते, तदा यजिरनूद्यते यजेत इत्थं इति। यदि यजिर्विधीयेत न धर्मैः संबध्येत। नहि द्वयोर्विधीयमानयोः परस्परेण संबन्धो भवति। अनुवादश्च सन् अविशेषात् सर्वयागानुवादः। तस्मात् सर्वार्था धर्माः। ननु दर्शपूर्णमासशब्दो विशेषको भविष्यति, न दर्शपूर्णमासशब्दः शक्नोति यागं विशेष्टुम्। अयं हि विधिर्वा स्यात् अनुवादो वा? यदा अनुवादः, तदा धर्मसंबन्धार्थः। स च धर्मसंबन्धो यागानुवादेनैव तयोः सिद्धः। ननु निवृत्तिकरो भविष्यति दर्शपूर्णमासौ एव इत्थं कुर्यात्, नान्यान् इति। नैवं शक्यम्। यत् कारणं न तस्य अन्यनिवृत्तिरर्थः। ननु परिसंख्यया करिष्यति। नात्र परिसंख्या युज्यते। यदि अन्येन वाक्येन यागमात्रे धर्मप्रसङ्गः कृतः स्यात्, तत एतत् पुनर्वचनं परिसंख्यां कुर्यात्। अथ पुनः असति प्रसङ्गे अनेनैव प्रसङ्गः, अनेनैव निवृत्तिः, इति अतिभार एकस्यैव वाक्यस्य भवति। एवं तर्हि नात्र यजेत इति शब्दः धर्मविधिभिः संबध्यते यजेत इत्थं इति। केन तर्हि? दर्शपूर्णमासशब्देन। प्रत्यक्षो हि तेन अस्य संयोगः, दर्शपूर्णमासाभ्यां यजेत इति, परोक्षो धर्मविधिभिः। कस्तदा वाक्यार्थः? दर्शपूर्णमासौ कुर्यात् इति। नैवं शक्यम्। एवं सति धर्माः असंबद्धाः पारिप्लवा भवन्ति। कथं कृत्वा? येयं आख्यातिकी विभक्तिः यजेत इति, सा दर्शपूर्णमासयोः कर्तव्यतां विदधाति। तत्र कथं यागमात्रेण यागविशेषेण वा धर्मसंबन्धः स्यात्। विधायिका विभक्तिर्नास्ति इति असंबद्धा धर्मा भवन्ति। नैष दोषः। न वयं वाक्येन धर्माणां संबन्धं करिष्यामः। केन तर्हि? प्रकरणेन। कथं? कर्तव्यतायां चोदितायां इतिकर्तव्यताऽऽकाङ्क्षा भवति, कथं कुर्यादिति। प्रकरणेन धर्माः संबध्यन्ते इत्थं कुर्यादिति। नैवं शक्यम्। यदा हि दर्शपूर्णमासौ कर्तव्यतया चोद्येते, तदा इतिकर्तव्यताऽऽकाङ्क्षैव नास्ति। प्रज्ञातेतिकर्तव्यतात्वात् तयोः। असत्यां च इतिकर्तव्यताऽऽकाङ्क्षायां प्रकरणमेव नास्ति। एवं तर्हि उक्तं 'असंयुक्तं प्रकरणादितिकर्तव्यताऽर्थित्वात्' इति (३।३।४।११)। एवं तर्हि नैवात्र यागे धर्मा विधीयन्ते, नापि दर्शपूर्णमासयोः कर्तव्यता उच्यते। किं तर्हि? दर्शपूर्णमासाभ्यां यजेत इति पदद्वयेन विशिष्टं यागमनूद्य अत्र धर्मा विधीयन्ते दर्शपूर्णमासाभ्यां यजेत इत्थं इति। एवमपि दर्शपूर्णमासाभ्यां इत्यनुवादो न युज्यते, तृतीयार्थस्य असिद्धत्वात्। पूर्ववान् अनुवादो भवति। अपूर्वश्च तृतीयार्थः। सोऽवश्यं विधातव्यः। तस्मिंश्च विधीयमाने अन्यदेव असंबद्धमापद्यते, दर्शपूर्णमासौ यजेः करणमिति। तस्मात् स एव प्रथमः पक्षोऽस्तु यागानुवादेन धर्माणां विधिरिति। ननु तत्रापि दर्शपूर्णमासाभ्यां इत्येतन्न संबध्यते। ननु संभन्त्स्यते। कालवचनः सन् प्रायिको नित्यानुवादो भविष्यति। प्रायेण यागानां दर्शपूर्णमास-

कालत्वात् । तृतीया च कालस्य अर्थकृतं गुणभावमालोच्य उपपद्यते । तथा चेत् सर्वे धर्माः सर्वार्था भवन्ति ।

टुप्—यजिप्रयुक्ता धर्माः ( ततश्च पारिप्लवा इति ) । कथं ? तत्र केचित् ( भाष्यमनादृत्य पूर्वपक्षं ) वर्णयन्ति । प्रकरणाम्नानानुमितेन वाक्येन (धर्माणां यजिना) संबन्धः ( इति ) । एतत् ( व्याख्यानं ) अपरे ( भाष्यानुसारिणः ) दूषयन्ति । यः फले चोद्यते स कथंभावाकाङ्क्षी सन् न धर्मैः संबध्यते । स च विशेषः साकाङ्क्षः । तस्मात् अन्यस्मिन् ( विशेषान्तरे ) कुतो धर्मप्राप्तिः । अयं यजिविशेषः श्रुत्या वाक्येन प्रकरणेन च ( धर्मैः ) संबध्यते ( तस्मान्न पारिप्लवत्वम् ) । तत्र ( तस्मिन् पक्षे दूषिते पुनः पारिप्लवसिद्ध्यर्थं पक्षान्तरं दर्शयन्तः ) प्रयोगवाक्यं ( दर्शपूर्णमासाभ्यां यजेत इति ) धर्मसंबन्धित्वेन उदाहरन्ति ( अतो न यागमुद्दिश्य धर्माः विधीयन्ते । कथं ? ) यागोत्पत्तिः ( तावत् ) नानेन क्रियते, वाक्यान्तरैः ( 'यदाग्नेयोऽष्टाकपालो भवति' इत्यादिभिः ) उत्पन्नत्वात् । फलसंबन्धश्च ( नानेन क्रियते ) विश्वजिन्न्यायेन प्राप्तत्वात् । परिशेषात् इतिकर्तव्यतासंबन्धार्थमिदम् । यथा 'अध्वर्युर्गृहपतिं दीक्षयित्वा' ( ब्रह्माणं दीक्षयति ) इति दीक्षाक्रमपरं वाक्यं तदर्थम् ( धर्मविधानार्थम् ) । तत्र उद्दिश्यमानत्वात् यागस्य स्वपदस्थं ( ग्रहैकत्ववत् ) पदान्तरस्थं वा ( हविरुभयत्ववत् ) विशेषणमविवक्षितम् ; तस्मात् ( अविशेषितेन यजिना आग्नेयादिसर्वयागोद्देशात् ) सर्वयागेषु धर्माः ( विधीयन्ते ) । न च दर्शपूर्णमासपदेन संबध्यन्ते ( धर्माः ) अन्यन्तवाक्यत्वात् । यागे विधीयमानेषु ( धर्मेषु ) धात्वर्थे किंचिद्विधानात् श्रुतिः ( पीडिता स्यात् । सोऽयं भाष्यकारीयः पक्षः । तमिदानीं प्रथमपक्षवादिनो दूषयन्ति— ) एतदप्ययुक्तम् । प्रयाजादीनामपि अनेन ( विश्वजित्— ) न्यायेन ( स्वर्गरूप— ) फलसंबन्धः स्यात् । ततश्च ( अङ्गत्वाभावात् ) कतरे धर्माश्चिन्त्यन्ते ? विश्वजिति (तु) अन्यथाऽनुपपत्त्या फलकल्पना । इह तु शाब्दत्वात् फलस्य अन्यथाऽनुपपत्तिः क्षीणा । तस्मात् ( विश्वजिन्न्यायेन फलकल्पनाऽभावात् 'प्रयोगवाक्यमेव फलसंबन्धपरं, न धर्मपरं' इति) प्रथममेव व्याख्यानं (युक्तम्) प्रकरणाम्नानानुमितवाक्येन धर्मसंबन्धः इति । तदेवं द्वेधा पूर्वः पक्षः प्रयोगवाक्येनैव धर्मसंबन्धः, प्रकरणाम्नातानुमितेन वाक्येन वेति । यत्तु अस्मिन् पक्षे पारिप्लवत्वसिद्धिः आग्नेयादियागविशेषस्यैव फले विधानात् तेनैव धर्माणां संबन्धात् इत्युक्तं तत्राह—सत्यं— ) यः फले चोद्यते स इतिकर्तव्यतया ( संबध्यते । स तु ) संबध्यमानः इतिकर्तव्यतां प्रति प्रधानम् । प्रधानस्य च उद्दिश्यमानस्य विशेषणमविवक्षितम् । प्रकरणाम्नानानुमितेऽपि वाक्ये स्ववाक्त्या सर्वयागानां धर्मसंबन्धः । ( तदेवं द्वेधाऽपि यजिप्रयुक्तत्वे पारिप्लवत्वं [ सर्वगतत्वं ] धर्माणां प्रतिपाद्य, इदानीं यजिप्रयुक्तत्वे युक्तिं पक्षद्वयसाधारणीं दर्शयति—) उपपत्तिस्तु— करणानुग्राहिणी इतिकर्तव्यता ( लोके ) दृष्टा, इहापि तथैव भवितुमर्हति ।

'सर्वाण्यपूर्वाणि यजिमन्ति' इत्येवमादिः 'स च यजिसंबन्धः सर्वेषामपूर्वाणां तुल्यः' इत्यन्तः अयुक्तः ( भाष्य—) ग्रन्थः ( पृ. १५२८ पं. १–४ ) । ( कथं ? ) यागः अपूर्वेण अविनाभूतः, न तु अपूर्वं यागेन (अविनाभूतं, होमादिषु अपूर्वसद्भावात् । तस्मादयुक्तं सर्वापूर्वाणां यजिसंबन्धः इति । यच्च भाष्यकारेण 'उत्पत्तौ विध्यभावात्' इति सप्तमे सूत्रे 'केवलं यजौ श्रूयन्ते क्रियन्ते च, नैतावता तदर्था भवन्ति' इत्यादि उक्तं [ पृ. १५३२ पं. ७–१० ] तदर्थतः पठित्वा आक्षिपति—) 'अपूर्वे चासंभवन्तो यागे क्रियन्ते' इत्यपि अयुक्तम् । ( एवं तु ) अन्यत्र ( अपूर्वे ) श्रुताः अन्यत्र ( यागे ) कृताः स्युः । ( न चैवं युक्तमिति ) प्रथमाक्षेपं समाधत्ते— ) अविनाभावमङ्गीकृत्य 'सर्वाण्यपूर्वाणि यजिमन्ति' इति ब्रवीति ( यानि यजिविषयाणि अपूर्वाणि यागाविनाभूतानि तदभिप्रायमिदं भाष्यं, न त्वपूर्वमात्राभिप्रायम् । द्वितीयं समाधत्ते—) अपूर्वे चासंभवन्तः इति ( अपि युक्तं ) यागस्यैव शक्तिरपूर्वमिति । शक्तिमति ( यागे ) क्रियमाणाः नाश्रुते कृता भवन्ति ( शक्तिशक्तिमतोः अत्यन्तभेदाभावादिति ) ।

**चोदनाशेषभावाद्वा तद्भेदाद् व्यवतिष्ठेरन्नुत्पत्तेर्गुणभूतत्वात् । ३ ॥**

**भाष्यं**—कर्मचोदनायाः शेषभूतो धर्मसमाम्नायः एकदेशभूत इत्यर्थः । दर्शपूर्णमासाभ्यां यजेत अनया अग्न्यन्वाधानादिकया इतिकर्तव्यतया इति । तस्यां चोदनायां यजेर्गुणभावः श्रूयते दर्शपूर्णमासाभ्यां इति । दर्शपूर्णमासशब्दो हि यजिवचनः । करणभावोऽत्र यजेः श्रूयते दर्शपूर्णमासाख्येन यागसमुदायेन अन्यत् कुर्यात् इति । यत् ततोऽन्यत्, तत् कर्तव्यतया चोद्यते, न यजिः । अपूर्वं च तत् । ननु फलमत्र वाक्ये श्रूयते, स्वर्गकामो यजेत इति, तत् कर्तव्यं स्यात् । सत्यं श्रूयते, न तु तद्यजिना क्रियते, विनष्टे यजौ तद्भवति । अपूर्वं तु तेन क्रियते । तस्मात् तस्य कर्तव्यता उच्यते । यस्य कर्तव्यता, तत् इतिकर्तव्यतया संबध्यते । तस्मादपूर्वार्था धर्माः । तेषां चापूर्वाणां भेद उक्तः । अतः तद्भेदात् यथाप्रकरणं व्यवतिष्ठन्ते धर्मा इति ।

अथ एतस्मिन् पक्षे कथं दर्शपूर्णमासशब्देन यागो विशेष्यते । उच्यते । नैवात्र यागो विशेष्यते । किं तर्हि, अपूर्वभावनैव उभयपदविशिष्टा उच्यते । यथा 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति' इति । विषम उपन्यासः । तत्र हि अन्यत् द्रव्यं अन्यो गुणः । तेन तत्र उभयविशेषणत्वं युज्यते । इह पुनर्याग एव तौ दर्शपूर्णमासौ, तेन इह उभयपदविशेषणत्वं न युज्यते । उच्यते । इहापि यजेत इति सामान्यं, दर्शपूर्णमासौ इति विशेषः । अन्यच्च सामान्यं अन्यो विशेषः । एवमपि श्रुत्या सामान्यस्य भावना, वाक्यात् विशेषस्य । न चैतत् युगपद्भवतीति ।

एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते । किं तर्हि वाक्यार्थः । किं कारणं ? श्रुत्यर्थे परिगृह्यमाणे दर्शपूर्णमासशब्दोऽनर्थको भवति, यजतिश्चानुवादः, यजत्यात्मकत्वात् दर्शपूर्णमासयोः, यजतिसामानाधिकरण्याच्च दर्शपूर्णमासशब्दस्य ।

**टुप्**—चोदनाशेषभावात् भावनाशेषभावादित्यर्थः । **तद्भेदात् व्यवतिष्ठेरन्** [अयं लिखिते मुद्रिते च विद्यमानोऽपि टुप्-ग्रन्थः तन्त्ररत्ने न स्पृष्टः । ] उत्पत्तेः (उत्पद्यते अनेनापूर्वं इत्युत्पत्तिर्यागः । तस्य भावनां प्रति–) गुणभूतत्वात् । यागो हि तस्याः (भावनायाः करणत्वेन) गुणभूतः । (तस्मात्) न स धर्मैः संबध्यते । संबध्यमाने च स्वार्थपरार्थता च (चशब्दो हेतौ) वाक्यभेदादिदोषश्च (स्यात् । उपसंहरति–) अतः सर्वविशेषणविशिष्टा भावना विधीयते । अर्थात् (ऐकार्थ्यात्) परस्परनियमः (उपकार्योपकारकत्वलक्षणः) ।

'एवमपि श्रुत्या सामान्यस्य भावना, वाक्यात् विशेषस्य । न चैतत् युगपत् संभवति' इत्ययुक्तोऽयं (भाष्य-) ग्रन्थः (पृ. १५२९) (तत्र) उपश्लेषलक्षणया (विशेषणविशेष्यभावमात्रप्रतिपादिकया पद-) श्रुत्या धातुना संबन्धः (भावनायाः) तृतीयया तादर्थ्येन (करणभावेन) दर्शपूर्णमासयोः (भावनाऽन्वयः) । तत्र उपश्लेषलक्षणया तादर्थ्यं (अशब्दमेव) कल्प्यम् (तृतीयया तु उक्तं, अतो विपरीतं बलाबलम् । किंच अविरोधादपि न श्रुत्या वाक्यस्य बाधो युक्त इत्याह—) यदि दर्शपूर्णमासौ भावनया संबध्यमानौ यागवत् भाव्यस्य (भावनायाः–) करणतां प्रतिपद्येयातां, ततः विरोधे (सति श्रुतिः परित्यज्येत) श्रुत्या (वा) वाक्यं बाध्येत । इह च विरोध एव नास्ति (इतिकर्तव्यतात्वसंभवात्) । यदि च ईदृश्यः (वाक्यविरोधिन्यः) श्रुतयः (एव वाक्यं बाधित्वा) परिगृह्यन्ते, ततः ('सोमेन यजेत' 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यादौ सर्वत्र) नामपदानां असंबन्धात् (रत्नपाठः । संबन्धाभावात् इति उभयटुप्पाठः) केवलान्याख्यातानि अवतिष्ठेरन् । (एवं चोद्यभाष्यमाक्षिप्य परिहारभाष्यमपि आक्षिपति–) 'एवं तर्हि नैवात्र श्रुत्यर्थः परिगृह्यते, किं तर्हि ? वाक्यार्थः' इति (एतदपि–) अयुक्तं, भावार्थाधिकरणविपरीतत्वात् । (तत्र हि धात्वर्थ एव फलभावनायां करणं भवति, न नामार्थः इत्युक्तम्) । किंच यागसामानाधिकरण्यात् यागवचनम् (दर्शपूर्णमासपदं भवति) । तच्च (सामानाधिकरण्यं) यागफलसंबन्धे (सति) भवति । (तदभावे गुणविधित्वमेव स्यात्) तस्मात् न ज्ञायते किमनेनोच्यते इति । अपि च फले विधीयमानस्य आश्रयो देयः क्रिया । सा

च ( क्रिया ) गोदोहनादिवत् ( गोदोहनादेरिव प्रणयनादि, प्रकरणात् ) न लभ्यते , अविहितत्वात् ( वाक्यान्तरेण ) यागस्य । ( ततश्च ) आश्रयः ( अपि तेनैव ) वाक्येन देयः । तत्र ( गुणफलसंबन्धस्य च विधानात् ) वाक्यभेदः । ( समाधत्ते– यस्मादेव वर्ण्यमाने दोषः ) तस्मात् अन्यथा ( भाष्यार्थो ) वर्ण्यते । ( तत्र चोद्याभिप्रायं तावत् व्याचष्टे– ) ' एवमपि ( श्रुत्या सामान्यस्य भावना ' इति ) नोपश्लेषलक्षणां श्रुतिमभिप्रेत्य, किं तर्हि अभिधात्रीम् । 'यजेत ' इत्ययं ( शब्दः ) प्रकृताप्रकृतं ( सर्वं ) यागं भावनासंबन्धित्वेन ( श्रुतिमात्रात् ) प्रतिपादयति, दर्शपूर्णमासपदेन ( तत्समानाधिकरणेन ) प्रकृते अवस्थाप्यते । तत्र प्रकृतत्वाविशेषेऽपि ( सति ) विशिष्टेषु ( आग्नेयादिष्वेव प्रकृतेषु ) स्थाप्यते, न प्रयाजादिष्वपि । तस्मादिदं ( पदान्तरालोचनव्याक्षेपेण ) विलम्बितं दृष्ट्वा वाक्यमित्युक्तम् । (न चैतत् युगपत् भवति इति भाष्यार्थमाह– ) न च सकृदुच्चरितः ( श्रुतिवशेन ) प्रकृताप्रकृतवचनः, ( वाक्यवशेन ) प्रकृतवचनश्च (संभवति । परिहारभाष्याभिप्रायमाह–) इतरस्त्वाह, ये एव ( आग्नेयादयो ) यागाः ( फलाकाङ्क्षिणो ) विपरिवर्तन्ते, ते एव फलेन संबध्यन्ते ( न सर्वे ) । कुतः ? रूपवतां संनिधौ अरूपः शिष्यमाणः प्रकृतग्राहकः ( भवति ), 'यजेत' इति चायमरूपः ( शब्दः । तस्मान्न प्रकृतानादरेण यागान्तरं विधातुं समर्थः ) । तत्र प्रकृतत्वाविशेषात् सर्वेषु ( प्रयाजादिष्वपि यागेषु ) प्रसक्तेषु दर्शपूर्णमास- ( शब्द- ) वाच्या एव फले विधीयन्ते । अतः ( अयं वाक्यार्थः–) भावयेत् ( स्वर्गं ) यागेन करणेन दर्शपूर्णमाससंज्ञकेन इति दर्शपूर्णमासाभ्यामिति । फलेनोपसंहृतं भाष्यकारेण ।

**सत्त्वे लक्षणसंयोगात् सार्वत्रिकं प्रतीयेत । ४ ॥**

**भाष्यं**— यत्तु सत्त्ववदिति । अत्र गवाकृतौ धर्मः श्रूयते आकृतेः पदार्थत्वात् । न च तत्र संभवति । अतोऽसौ आकृतिः सहचारिपिण्डलक्षणार्था विज्ञायते । यथा ' गङ्गायां घोष ' इति । तच्च साहचर्यं सर्वपिण्डानामविशिष्टं, इति सर्वपिण्डेषु विहितं भवति । तस्मात् तत् सार्वत्रिकं प्रतीयेत । इह तु यजेर्गुणभावेन श्रवणात् नैव यजौ धर्माः श्रूयन्ते । क्व तर्हि ? अपूर्वे इति । एवमनपदिष्टो हेतुः । तस्मात् अनुपन्यासः सत्त्ववदिति ।

**टुप्**— ( लक्षणसंयोगात् इति सौत्रपदस्याभिप्रायं स्वमतेनाह–) [ सत्त्वं ] लक्षयित्वा ( उद्दिश्य ) यो धर्मः सार्वत्रिकः ( भवति ) । गवादयश्च उद्दिश्यन्ते ( स्पर्शप्रतिषेधाय । इह तु ) उपादीयमाने विपरीतम् ( तन्न सार्वत्रिकत्वम् ) । ' न च तत्र संभवति ( प्रतिषेधः, आकृतेरमूर्तत्वेन स्पर्शप्रसङ्गाभावात् ) । अतोऽसौ आकृतिः सहचारिपिण्डलक्षणार्था ' इत्युक्तमिदं ( भाष्यं अतिप्रसङ्गात् । एवं हि ) पशुमालभेत ( स्पर्शेत् ) इत्यत्रापि एकस्यालम्भः ( स्पर्शः ) न स्यात्, अनेन न्यायेन ( आकृतिलक्षितासु व्यक्तिषु संभवात् ) शक्यते च आकृतिः स्प्रष्टुं ( व्यक्त्याकृत्योरत्यन्तभेदाभावात् ) । तस्मात् अनेन ( न्यायेन ) यत् सार्वत्रिकत्वमुक्तं, तदतिप्रसज्येत । ( तस्मात् पूर्वव्याख्यानमेव रमणीयम् । ' पशुमालभेत ' इत्यत्र पशोरुपादेयत्वात् न सार्वत्रिकत्वप्रसङ्गः इति ) ।

**अविभागात्तु नैवं स्यात् । ५ ॥**

**भाष्यं**— अयं तुशब्दः पक्षव्यावृत्तौ । नैतदेवं अपूर्वप्रयुक्ता धर्मा इति, यजिप्रयुक्ता एव । कुतः ? अविभागात् । यजिना अविभागो धर्माणाम् । प्रत्यक्षं केचित् द्रव्ये श्रूयन्ते, केचिद्देवतायां, केचित् मन्त्रेषु । एष च यजिः, यत् द्रव्यं देवतामुद्दिश्य मन्त्रेण त्यज्यते । स एष प्रत्यक्षो यजिना संबन्धो धर्माणाम् । अपूर्वेण तु आनुमानिकः । फलेऽपि यजेः प्रत्यक्षश्रुतो गुणभावः 'स्वर्गकामो यजेत' इति । आनुमानिकः अपूर्वेण । अनुमानाच्च प्रत्यक्षं बलीयः । तस्मात् यज्यर्था धर्माः । ननु यजिः भङ्गित्वात् कालान्तरे फलं दातुं असमर्थः, तत्र कृता धर्माः अनर्थका एव भवन्तीत्युक्तम् । अत्र स्थितस्य न्यायस्य आक्षेपेण प्रत्यवस्थान क्रियते । तैलपानवदेतत् भविष्यति । यथा तैलपानं घृतपानं वा भङ्गित्वेऽपि सति कालान्तरे मेधास्मृतिबलपुष्ट्यादीनि फलानि करोति । एवं यजिरपि करिष्यति । किं नः अदृष्टाश्रुतेन अपूर्वेण कल्पितेन इति ।

टुप्—अनेन ( पूर्वपक्षसूत्रेण ) संनिपत्योपकारकाः ( प्रोक्षणावघातादयः ) तदर्थाः ( यागार्थाः ) उच्यन्ते। तन्मध्यपातात् प्रयाजादीनामपि अङ्गतामाह ।

**द्व्यर्थत्वं च विप्रतिषिद्धम् । ६ ॥**

**भाष्यं**— एवं च सति सर्वे धर्माः सर्वार्था भवन्ति। तथा च ऐन्द्राग्नादिषु प्रयाजादयः सन्ति। तत्र सौर्ये कर्मणि प्रयाजानां दर्शनमुपपद्यते 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति। इतरथा प्रयाजाश्च विधातव्याः, प्रयाजेषु च कृष्णलहोमः। तथा च द्व्यर्थं तत् स्यात् । द्व्यर्थत्वं च विप्रतिषिद्धम्। तस्मात् यजिप्रयुक्ता धर्मा इति ।

**उत्पत्तौ विध्यभावाद्वा चोदनायां प्रवृत्तिः स्यात्, ततश्च कर्मभेदः स्यात् । ७ ॥**

**भाष्यं**— नैतदेवं यजिप्रयुक्ता धर्मा इति। चोदनायां प्रवृत्तिः स्यात्। चोदनेति अपूर्वं ब्रूमः। चोदनार्थत्वात् अपूर्वार्थत्वात् अपूर्वप्रयुक्ता धर्माः। फलवत्त्वात् इत्युक्तो हेतुः। यत्तु प्रत्यक्षो यजिसंबन्धो धर्माणां इति, अत्र ब्रूमः। उत्पत्तौ विध्यभावात्। उत्पत्तिरिति यजिं ब्रूमः। उत्पत्तौ यजौ नास्ति विधिः यज्यर्था धर्मा इति। केवलं यजौ श्रूयन्ते क्रियन्ते च। नैतावता तदर्था भवन्ति। यथा वाससि रागः श्रूयते 'वासो रञ्जयति' इति, वाससि च क्रियते न चासौ तदर्थः। स्त्र्यर्थः पुरुषार्थो वा भवति। एवमिहापि यजौ श्रूयमाणाः क्रियमाणाश्च अपूर्वार्था भवेयुः अर्थवत्त्वाय। ततश्च कर्मभेदः स्यात्, यतः अपूर्वार्था इति। यश्च यजेः प्रत्यक्षः फले गुणभाव इति, स नाकृत्वा अपूर्वं भवति इति प्राणालिको विज्ञायते। प्रणाड्याऽपि च येन क्रियते, तत् कारणं भवति। यथा 'गोमयैः पचति' 'तुषपक्वा भवन्ति' इति। यत्तु, तैलपानवत् यजितः फलं भविष्यतीति। अत्र ब्रूमः। तैलपानस्यापि न कालान्तरे फलं भवति। धातुसाम्यं तस्य फलम्। तच्च तत्कालमेव। यच्च फलं बलपुष्ट्यादि, तत् सम्यगाहारपरिणामात् भवति। तस्मात् विषम उपन्यासः।

**यदि वाऽप्यभिधानवत् सामान्यात् सर्वधर्मः स्यात् । ८ ॥**

**भाष्यं**— यद्यपि अपूर्वं प्रयोजकं धर्माणां, तथापि सर्वधर्मः स्यात् सर्व पदार्थः। अभिधानवत् सामान्यात्। अभिधानं तावदेतेषां समानं अपूर्वमिति। अभिधानवत् धर्मेणापि अस्य समानेन भवितव्यम्। वाहीकवत्। यथा 'वाहीकः अतिथिरागतः, यवान्नमस्मै प्रक्रियतां' इत्युक्ते योयो वाहीकः, तस्यतस्य यवान्नं क्रियते। यथा वा 'अक्ष्यामये मुद्गौदनो भोक्तव्यः, उदरामये पयः पातव्यं' इति। सर्वत्र च हि अक्ष्यामये मुद्गौदनो भुज्यते, उदरामयेऽपि पयः पीयते। एवमिहापि एकस्यापूर्वस्य ये धर्माः श्रुताः, ते सर्वापूर्वाणां भवितुमर्हन्ति। अपि च अरुणपराशरा नाम शाखिनः। तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति। 'ये दर्शपूर्णमासयोर्धर्माः, ते सर्वेष्टीनां अग्नीषोमीयस्य च' इत्यारभ्य यावत् 'सर्वाः प्रकृतिविकृतयोऽनुक्रान्ताः' इति। तच्च अनुक्रमणं एतमेव न्यायं सूचयति। तस्मात् अपूर्वप्रयुक्तत्वेऽपि सर्वे धर्माः सर्वार्था इति।

**अर्थस्य त्वविभक्तत्वात्तथा स्यादभिधानेषु, पूर्ववत्त्वात् प्रयोगस्य, कर्मणः शब्दभाव्यत्वाद्, विभागाच्छेषाणामप्रवृत्तिः स्यात् । ९ ॥**

**भाष्यं**— उपवर्णनापरिहारस्तावदुच्यते। यदुक्तं वाहीकवदिति, अत्र ब्रूमः। अर्थस्य तु अविभक्तत्वात् तथा स्यात् अभिधानेषु। अर्थो वाहीकत्वं तद्देशसंबन्धः, सोऽविभक्तः सर्ववाहीकेषु अनुगत इत्यर्थः। तन्निमित्तश्च प्रीतिविशेषः, न पुरुषनिमित्तः। कथं ज्ञायते? पूर्ववत्त्वात् प्रयोगस्य। पूर्ववानत्र प्रयोगः। बहुशो वाहीकाश्च अवाहीकाश्च भोजिताः। तत्र अन्वयव्यतिरेकाभ्यां ज्ञातमेतत्, देशनिमित्तेयं यवान्नप्रियता, न पुरुषनिमित्ता। तस्मात्तथा स्यात् वाहीकादिषु अभिधानेषु। अथ इह कर्मणः शब्दभाव्यत्वात् नान्यतः शक्यमेतत् ज्ञातुं के कस्यापूर्वस्य धर्मा इति। शब्देन च व्यवस्थिता विज्ञाता धर्माः। अपूर्वाणां च विभागः । अतः शेषाणां अन्यत्र विहितानां अन्यत्र अप्रवृत्तिः स्यात्।

**स्मृतिरिति चेत् । १० ॥**

**भाष्यं**—अथ यदुक्तं स्मृतिरिति, तस्य कः परिहारः?

**न पूर्ववत्त्वात् । ११ ॥**

**भाष्यं**— पूर्ववती हीयं स्मृतिः—चोदकं धर्मग्राहकं वक्ष्यति 'विध्यन्तो वा प्रकृतिवत्' इति (७।४।२।१०)।

तेन प्रापितानां धर्माणां अयमनुवादः—एतन्न्यायपूर्विका, न अप्राप्तानां विधायिका । यत् कारणं, व्यवस्था धर्माणां एतेन न्यायेन भवति ।

**अर्थस्य शब्दभाव्यत्वात् प्रतिप्रकरणं च निबन्धनाच्छब्दादेवान्यत्र भावः स्यात् । १२ ॥**

**भाष्यं—** इदं निगमनसूत्रम् । निगमनं च प्रतिज्ञाया हेतोश्च पुनर्वचनम् । तदिदमुच्यते । यस्मादेवं तस्मात् अर्थस्य अग्न्यन्वाधानादेः शब्दभाव्यत्वात्, प्रतिप्रकरणं च निबन्धनात् शब्दादेव अन्यत्र भावः स्यात् । यथा 'गन्धर्वाप्सरसो वा एतमुन्मादयन्ति, य उन्माद्यति, एता वै गन्धर्वाप्सरसो यद्राष्ट्रभृतम् । तस्मै स्वाहा ताभ्यः स्वाहेति जुहोति' इति । अग्निप्रकरणे उत्पन्नानां राष्ट्रभृतां उद्वाहे उपदेशः 'एतेषां राष्ट्रभृतो जुहोति अभ्यातानान् जुहोति' इति । असति एतस्मिन् वचने यथाऽधिकारं व्यवतिष्ठेरन् धर्मा इति । एवं च सति अधर्मकाणि ऐन्द्राग्नादीनि । तदर्थं उत्तरोऽध्यायषट्कः प्रारब्धव्य इति ।

तत्र सप्तमेन तावत् ऐन्द्राग्नादीनां कर्मणां धर्माः सन्तीत्युच्यते । ते चातिदेशेनेति । अतिदेशो नाम, ये परत्र विहिताः धर्माः, तमतीत्य अन्यत्र तेषां देशः । यथा देवदत्तस्य भोजनविधिं कृत्वा 'शालिसूपमांसापूपैर्देवदत्तो भोजयितव्यः' इति । तमेव विधिं यज्ञदत्ते अतिदिशति, 'देवदत्तवत् यज्ञदत्तो भोजयितव्यः' इति । श्लोकमप्युदाहरन्ति 'प्रकृतात् कर्मणो यस्मात् तत्समानेषु कर्मसु । धर्मप्रदेशो येन स्यात् सोऽतिदेश इति स्थितिः ॥' इति । स च नाम्ना वचनेन वा । तत्र नाम त्रिविधं आतिदेशिकं कर्मनाम, संस्कारनाम, यौगिकमिति । वचनं पुनर्द्विविधं प्रत्यक्षश्रुतं आनुमानिकं च । तयोरानुमानिकं उपरिष्टात् वक्ष्यते । प्रत्यक्षश्रुतं तु इदानीमेव चिन्त्यते ।

**टुप्**— त्रिविधं नामधेयम् । कर्मनामधेयं, संस्कारनामधेयं, यौगिकं चेति । तत्र यौगिकं नातिदेशकम् । कथं ? येनैव योगेन द्वादशाहे प्रायणीयशब्दः तेनैव गवामयनेऽपीति ।

**शा**—'धर्माणां करणाङ्गत्वे विचारो (विवादो इति पाठः) नैव विद्यते । भावनान्वयपक्षे च तादर्थ्यं नावकल्पते ॥' तस्मात् सर्वार्था धर्माः इति अनारभ्यः अतिदेशविचारः । **इति प्राप्तेऽभिधीयते** । 'प्रधानविधिवाक्यं खल्वङ्गवाक्यसमन्वितम् । अङ्गप्रधानसंयुक्तां विधत्तेऽपूर्वभावनाम् ॥ भावनाऽन्वयतः पश्चादङ्गयोरार्थिकोऽन्वयः । ततः कर्मान्तरेऽङ्गानां प्राप्तिराशङ्क्यते कुतः ॥ भावनाऽन्वयितामात्रान्नांशयोस्तुल्यकल्पना । अपरित्यक्तरूपत्वाद् गुणप्राधान्यसंभवात् ॥'

**सोम**— पूर्वे षट्के उपदेशविचारं परिसमाप्य इदानीमुत्तरषट्के अतिदेशविचारो हेतुहेतुमद्भावसंगत्या प्रस्तोष्यते । 'इत्थं कुर्यात्' इत्युपदेशपूर्वकत्वात् 'तद्वत् कुर्यात्' इत्युपदेशस्य तद्विचारयोरपि हेतुहेतुमद्भावः । यथाप्रकरणं दर्शपूर्णमासादिषु धर्मव्यवस्थायां साधितायां धर्माकाङ्क्षेषु सौर्यादिषु अतिदेशेन धर्मप्राप्त्यर्थं सप्तमः । 'अस्मात् कर्मण इमे धर्मा अत्र भवन्ति' इति तद्विशेषसिद्ध्यर्थमष्टमः । अतिदिष्टपदार्थप्रयोगविकारात्मकोहसिद्ध्यर्थं नवमः । अतिदिष्टपदार्थबाधसिद्ध्यर्थं दशमः । प्रथममधिकरणं उपोद्घातत्वात् संगतम् । अयमत्र चिन्ताक्रमः, उत्तरषट्कः किमारम्भणीयो नेति, तदर्थमियं चिन्ता किं सौर्यादिषु अतिदेशेन धर्माः भवन्ति, उत नेति । तदर्थमन्या चिन्ता किं प्रयाजादयो धर्माः सर्वयागार्थत्वेनोपदिश्यन्ते, उत यथाप्रकरणं व्यवतिष्ठन्ते इति । तदर्थमपरा चिन्ता किं यजिप्रयुक्ता धर्माः, उतापूर्वप्रयुक्ता इति । तदर्थमपरा चिन्ता किं यज्यर्था धर्माः, उतापूर्वार्था इति, किं यागसंबन्धपूर्वकः अपूर्वभावनासंबन्धः, उत तत्पूर्वको यागसंबन्ध इति । **सूत्रार्थस्तु**—मुख्यानामपूर्वाणां भेदे यथाऽधिकारं यथाप्रकरणं धर्माणां भाव्ये व्यवस्थानं स्यात् । कुतः ? श्रुतिप्रमाणत्वात् शेषशेषिभावस्य श्रुत्येकगम्यत्वादिति ।

**वि**—'सर्वार्थे प्रकृतार्थे वा प्रयाजाद्युपदेशनम् ।, यज्यन्वयेन सार्वार्थ्यान्नातिदेशो विचार्यताम् ॥, अङ्गप्रधानयोर्मुख्यापूर्वभेदसमन्वयात् । प्रकृतार्थे ततः कार्यमतिदेशविचारणम् ॥'

**भाट्ट**— एवं साधिकारे उपदेशे अवगते अधुना तदधीनसिद्धिरतिदेशो निरूप्यते। ( अतिदेशलक्षणप्रतिपादको भाट्टग्रन्थः अन्यत्र गृहीत इति तदुत्तरग्रन्थोऽत्र संगृह्यते इति बोध्यम् ) अतिदेशनिरूपणोपोद्घातत्वेन इदं निरूप्यते, किं प्रयाजादीनामुपदेशेन प्रकृतिमात्रार्थत्वं, उत प्रकृतिविकृतिसाधारण्यं इति। साधारण्ये हि अतिदेशवैयर्थ्यं, इति उपोद्घातता। तत्र **यद्यपि** प्रयाजादिषु आग्नेयादिमात्रविषयप्रकरणादेर्विशेषविषयत्वं, **तथापि** तत्कल्प्यस्य वाक्यस्य 'प्रयाजादिभिर्यजेत' इत्येतादृशस्यैव कल्पना न तु 'प्रयाजादिभिः आग्नेयः कार्यः' इति। आग्नेयादिभेदेन अनेकवाक्यकल्पनाऽऽपत्तेः। नापि 'दर्शपूर्णमासौ कार्यौ' इति, तथात्वे उद्देश्यवाचकस्य विधिवाचकस्य च पदद्वयस्य कल्पनाऽऽपत्तेः। तत्र च यागत्वस्यैव उद्देश्यताऽवच्छेदकत्वात् सर्वार्थत्वसिद्धिः। नहि तत्र प्रयाजादिविशिष्टयागकरणकप्रकृतभावनाविधिः, येन विशिष्टक्रयविधिवत् प्रयाजादीनां प्रकृतभावनायामेव अन्वयात् पार्ष्ठिकान्वयेऽपि प्रकृतयागे एव अन्वयः स्यात् इत्याशङ्क्येत। भावनानां उत्पत्तिवाक्यादेव प्राप्तत्वात् न च विशिष्टविध्याशङ्का। उत्पत्तिवाक्येष्वेव तु प्रयाजादिवैशिष्ट्यं भिन्नवाक्यत्वादेव असंभवि। नहि तत्तद्वाक्यार्थबोधवेलायां अनन्वितस्य प्रयाजादेः वाक्यैकवाक्यतावेलायां अन्वयः संभवी। सकृदुच्चरितस्य विधेः ऐकरूप्येण एकशाब्दबोधजनकत्वनियमात्। अतः प्रयाजादीनां प्रकृतिमात्रगामित्वम्। **अथवा** 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति वाक्यं न स्वर्गसंबन्धपरं सार्वकाम्यवाक्येनैव प्राप्तेः, अपि तु समिदादिवाक्यैकवाक्यतया यागोद्देशेन प्रयाजादिविधिपरम्। अतश्च तत्र यागत्वस्यैव उद्देश्यताऽवच्छेदकत्वात् सर्वार्थता। **न च** तत्र दर्शपूर्णमासपदं उद्देश्यविशेषणं उद्देश्यसमर्पकं वा अस्तु इति **शङ्क्यम्**। विशिष्टोद्देशे वाक्यभेदापत्तेः, धातोः उद्देश्यपरत्वे संभवति उपपदस्य अन्याय्यत्वाच्च। अतश्च तत्रत्यं दर्शपूर्णमासपदं रूढ्या कालपरमेव सत् सर्वयागेषु 'य इष्ट्या' इतिवाक्यप्राप्तकालानुवादकम्। अधिकरणस्यापि करणत्वाच्च तृतीया। तथा स्वर्गकामपदं अवयुत्यानुवादः। सर्वथा सर्वधर्माणां सर्वफलवदर्थत्वमुपदेशेनैव इति न क्वचित् अतिदेशसिद्धिः। एवं च 'समानमितरत् श्येनेन' इत्याद्यनुवाद एव। 'अग्निहोत्रं' इत्यादीनामपि 'सिंहो देवदत्तः' इतिवत् सिद्धसादृश्यं, तत्प्रख्यन्यायमेव वा आदाय अनुवादः। **इति प्राप्ते**, यद्यपि यागानुवादेन धर्मविधिः, तथापि अनुवादस्य सति संभवे संनिहितगामित्वनियमात् 'व्रीहिभिर्यजेत' इतिवत् प्रकृतमात्रगामित्वं, विशेषतश्च नवमाद्यन्यायेन यागस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणार्थमपि प्रकरणानुप्रवेशः। **वस्तुतस्तु**, उत्पत्तिवाक्येषु आकाङ्क्षाबलेन इष्टसामान्यस्य भाव्यत्वकल्पनवत् इतिकर्तव्यतासामान्यस्यापि 'इत्थं' इति पदकल्पनया अन्वयस्वीकारात्, स्वर्गादिवाक्यवच्च प्रयाजादिवाक्यानां विशेषसमर्पकतया तद्वदेव वाक्यैकवाक्यत्वोपपत्तेः, अंशत्रयविशिष्टविजातीयभावनाया एव विधानात्, पार्ष्ठिकान्वये च प्रकृते एव तद्भावनाकरणीभूते यागे अनुग्राहकत्वकल्पनात्, न सर्वार्थत्वं औपदेशिकम्। उत्पत्तिवाक्ये इतिकर्तव्यतासामान्यान्वयाच्च न सकृदुच्चरितस्य इति विरूपानेकबोधजनकता। वाक्यैकवाक्यताजन्यबोधस्तु न श्रुतशाब्दबोधः, इति न सरूपनानाबोधजनकत्वमपि एकस्य। अतः पारिप्लवत्वाभावात् अधर्मकाणां ऐन्द्राग्नादीनां धर्माकाङ्क्षायां अतिदेशसिद्धिः।

यत्तु मूले अतिदेशसिद्ध्यर्थं यजिप्रयुक्तत्वं वा धर्माणां अपूर्वप्रयुक्तत्वं वा इति चिन्तान्तरं कृतं, तत् यजिप्रयुक्तत्वेऽपि प्रकृतयजिप्रयुक्तत्वोपपत्तेः, इतरथा अपूर्वप्रयुक्तत्वेऽपि तदनापत्तेः, नावमिकेन पौनरुक्त्यापत्तेश्च उपेक्षितम्।

स चातिदेशो द्विविधः वचनातिदेशः, नामातिदेश श्चेति। आद्योऽपि द्विविधः प्रत्यक्षवचनातिदेशः, अनुमितवचनातिदेशश्चेति। अनुमितवचनातिदेशोऽपि त्रिविधः सादृश्यकल्पितवचनातिदेशः, स्थानापत्तिकल्पितवचनातिदेशः, आश्रयोपस्थितिकल्पितवचनातिदेशश्चेति।

**न्यायबिन्दुः**—दर्शपूर्णमासादिप्रकरणाम्नाताः प्रयाजादयः सर्वयागार्थाः, प्रकरणानुमितवाक्येनावगतस्य उद्देश्ययागस्य दर्शादिभिर्विशेषणे वाक्यभेदात्। **इति प्राप्ते**, 'कथं भावयेत्' इति इतिकर्तव्यताऽऽकाङ्क्षारूपप्रकरणात्

अङ्गवाक्यैकवाक्यताऽऽपन्नप्रधानविधिना तद्विशिष्टापूर्वभावनाविधानोत्तरं अङ्गप्रधानयोः पार्ष्ठिकान्वयात् नाङ्गानामुपदेशतः कर्मान्तरसंबन्धः, किंतु अतिदेशादेव इति सिद्धान्तः । अतिदेशश्च क चिदुपदिष्टानां कर्मान्तरे साहश्यात् 'तद्वत् कर्तव्यं' इति विधिः । स च क चित् प्रत्यक्षवचनात्, तथा नामधेयात्, आनुमानिकवचनाद्वा इति त्रिविधः ।

**मण्डन**— 'व्यवस्था स्यात् प्रयाजादौ ।'

**शंकर**— 'पारिप्लवा न धर्माः स्युः ।'

* **अतिदेशन्यायः** । तद्वत्करणमतिदेशः । यत्र तत्स्थानापन्ने तद्धर्मारोपोऽतिदिश्यते, तत्रायमवतरतीति । **साहस्री.** ६१५.

* **अतिदेशपारायणम्** । 'विकृतौ ये पदार्थानामतिदेशं न मन्वते । करणस्योपदेशं च तेषामुत्तरमुच्यते ॥ १ ॥ प्राकृतेनोपकारेण पदार्थैश्चैव वैकृतः । प्रयोगविधिना स्वेन विधिरन्वित उच्यते ॥२॥ यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते । तेनान्वितो हि विध्यर्थः स्वशब्देनैव भण्यते ॥ ३ ॥ साध्यभूतश्च विध्यर्थ उपकारमपेक्षते । तिवादिभिः प्राकृतश्च स योग्यः संनिधाप्यते ॥४॥ अन्यथाऽनवगम्यत्वाद् यद्यप्यङ्गपुरःसरः । उपकारः प्राकृतोऽसौ विकृतौ संनिधाप्यते ॥५॥ तथाप्यपेक्षितत्वेन प्रकारं प्रथमं विधिः । स्वीकरोति पदार्थांस्तु प्रतीतानप्यपेक्षते ॥ ६ ॥ पश्चात्तु तैरपि पुनरुपकारप्रसिद्धये । अपेक्षितैस्तद्वशेन प्राप्तैरन्वयमृच्छति ॥ ७ ॥ गुणप्रधानभावेन सर्वत्रैवान्वयो मतः । प्रधानं च विधिर्धर्मा गुणास्तं प्रति संमताः ॥ ८ ॥ अन्वितस्याभिधानं च न शब्दोपस्थितैः परम् । दर्शनात् पितृयज्ञादौ कल्प्येनाप्यधिकारिणा ॥९॥ संबन्धिना न सर्वेण सहसैवान्विताऽभिधा । संबन्धिनां संनिधानक्रमेण तु यथायथम् ॥१०॥ प्रकृतौ तु स्वशब्दत्वात् पदार्थानां पुरोऽन्वयः । उपकारस्य कल्प्यस्य पश्चादिति परं भिदा ॥११॥ व्युत्क्रमेणोपकारेण पदार्थैश्चैव वैकृतः । प्राकृतैर्विधिरन्वेति सोऽतिदेशश्च संमतः ॥१२॥ यस्य देशे विधिर्यस्मिंस्ततोऽन्यत्रापि तद्गतिः । अतिदेशः प्रकारस्य धर्माणां चैव युज्यते ॥ १३ ॥ अन्यत्रत्यो यथाऽन्यत्र प्रकारोऽन्वयमृच्छति । तथा धर्मा अपीष्यन्ते तेषामप्यतिदेश्यता ॥ १४ ॥ नन्वेवं दशमाद्येन विरोधस्ते प्रसज्यते । नैवं कार्यानपेक्षोऽसावतिदेशो निवारितः ॥ १५ ॥ तद्भावेन संबन्धो धर्माणामेव चेद्भवेत् । अनपेक्ष्यप्रकारत्वात् तदा बाधो न सिध्यति ॥१६॥ प्रकृतौ हि पदार्थानां संबन्धेऽवगते यथा । द्वारं दृष्टमदृष्टं वा संबन्धार्थे प्रकल्प्यते ॥१७॥ कार्यानपेक्ष्यसंबन्धे तथैवावगते सति । द्वारं दृष्टमदृष्टं वा कल्प्ये (ल्प्यं) स्याद् विकृतावपि ॥ १८ ॥ ततो न घटते बाधः कार्यलोपनिबन्धनः । दृष्टाभावेऽप्यदृष्टस्य द्वारस्य खलु संभवात् ॥ १९ ॥ कार्यापेक्षा यदा धर्मा विकृतौ यान्ति संगतिम् । तदा कार्यावलोपेन तेषां बाधः प्रसिध्यति ॥ २० ॥ प्राप्नुवन्तो हि कार्येण धर्मा द्वारसमन्विताः । प्राप्नुवन्तीति न द्वारकल्पनाऽवसरस्तदा ॥ २१ ॥ क्लृप्तद्वारावलोपेन तेषां बाधः प्रमाणवान् । अतिदेशेन धर्माणां प्राप्तानामपि सिध्यति ॥२२॥ कार्यानपेक्षसंबन्धो धर्माणामुच्यते यदि । दशमाद्यविरोधः स्यात्तदानीं, न च तत्तथा ॥ २३ ॥ तद्भावेन न किं धर्माः प्रकारो वाऽपि गृह्यते । इत्येषा दशमाद्ये हि चिन्ता बाधप्रसिद्धये ॥ २४ ॥ **पूर्वपक्षी** च तत्राह पदार्थानां परिग्रहम् । नोपकारे हि धर्मेभ्यो विना शक्यं निरूपणम् ॥ २५ ॥ यद्यप्याकाङ्क्षति विधिः प्रकारं प्रथमं स्वयम् । तथापि तस्य प्रकृतावपि नैव स्वरूपतः ॥ २६ ॥ परिज्ञानं, किंतु यथाश्रुतैर्धर्मैस्तथैव हि । तस्मात् पदार्थपूर्वैव सदा तस्या निरूपणा ॥ २७ ॥ अतः पूर्वप्रतीतत्वात् पदार्थैरेव वैकृतः । विधिः संबन्धमाप्नोति तान् गृहीत्वा तु स स्वयम् ॥ २८ ॥ उपकारं प्रकृतिवत् कल्पयत्यात्मसिद्धये । अतश्च प्राकृते द्वारे लुप्ते बाधं तु नार्हति ॥ २९ ॥ **राद्धान्ती** तु वदत्येवं सत्यं धर्माः पुरःसराः । तथापि तेन गृह्यन्ते तदानीमनपेक्षणात् ॥ ३० ॥ प्रकारं हि पुनः साध्यरूपो विधिरुपेक्षते । न पदार्थानिति हि तान् प्रतीतेनाप्युपेक्षते ॥ ३१ ॥ प्रकारेणैव संबन्धे प्रथमं प्रतिपद्यते । प्रकारकल्पितैः पश्चात् पदार्थैरिति दर्शितम् ॥ ३२ ॥ धर्माणामन्यदीयानां कथमन्यत्र संगमः । इति चेदुपकारेऽपि तुल्यमेतदथोच्यते ॥ ३३ ॥ नोपकारस्य संबन्ध इति हास्यमिदं वचः । यद्यसौ नान्यदीयः स्यात् कथं तर्ह्यतिदिश्यते ॥ ३४ ॥

अन्यत्र ह्यन्यदीयस्य देशोऽतिदेश उच्यते । तद्भ्रावेन तत्प्राप्तौ विरोधश्चेन्न विद्यते ॥३५॥ तद्भ्रावोपपत्त्यर्थं पदार्थेष्वपि तत् समम् । प्रतिपत्तिविरोधोऽयमन्यदीयान्यसंगमे ॥ ३६ ॥ मुखान्तरेण संबन्धे स च नास्ति कथंचन । ये तु नेच्छन्ति धर्माणां संबन्धं वैकृतैः सह ॥३७॥ अपूर्वे प्राकृताङ्गानां ग्रन्थस्तेषां विरुध्यते । सप्तमाष्टमयोस्तेषां प्रकारप्राप्तिचिन्तनम् ॥३८॥ न युक्तं, तत्र चिन्ता हि षट्केऽस्मिन् कार्यबन्धना । नियोगोऽप्यथ कार्यं चेत् तदर्थमपि चिन्त्यते ॥३९॥ चतुर्थाध्यायचिन्ताऽपि षट्केऽस्मिन्नापतेत्तथा । कार्यतो ह्युपदेशार्थाद् विध्यर्थाद्यत् प्रतीयते ॥४०॥ यथा तस्योपदिष्टत्वं तथाऽध्यक्षेण वक्ष्यते । तेन विध्यर्थमुत्सृज्य कार्यमन्यत् समाश्रितम् ॥ ४१ ॥ द्वारभूतमियं चिन्ता कार्यषट्के विधीयते । अतिदेशः पदार्थानां तेन षट्केऽत्र चिन्तितः ॥ ४२ ॥ तस्यैव हेतुभूतः स उपकारोऽपि दर्शितः । षड्भिर्दीक्षयतीत्यत्र प्राकृतानां च वैकृतः ॥ ४३ ॥ अङ्गभूतैरनङ्गानां बाधश्चैवं प्रसज्यते । प्रधानबोधवाह्यत्वादुपकारप्रसिद्धये ॥ ४४॥ नैव प्रयुक्तिमात्रेण क्रियते प्राकृतं पुनः । अतः कार्यातिदेशोऽयं संमतस्त्वौपदेशिकः ॥४५॥ उपदेशप्रमेयेण विध्यर्थेनोपकल्पितः । प्रकृतावुपकारस्य यदपूर्वेण कल्पना ॥ ४६ ॥ नियोज्यस्य च वृद्धानामुपदेशेन संमता । उपदेशो हि नामात्र ग्रन्थसंदर्भ उच्यते ॥ ४७ ॥ स च प्रमाणं विध्यर्थे कार्यरूपेऽवधारितः । योऽर्थः प्रतीयते यस्मात् स परं नौपदेशिकः ॥ ४८ ॥ विध्यर्थः स्वप्रतीत्यर्थं यमाक्षिपति सोऽपि च । अपर्यवस्यन् विध्यर्थोऽयं प्रकल्पयितुं क्षमः ॥ ४९ ॥ औपदेशिकता युक्ता तस्याप्यक्षरबोध्यता । उपकारविशेषं च विधिः कल्पयितुं क्षमः ॥५०॥ न पदार्थविशेषं तु वैकृतः प्राकृतो यथा । उपकारविशेषस्य कल्पनायां क्षमोऽपि यत् ॥ ५१ ॥ प्रकृतेरेव गृह्णाति लाघवं तत्र कारणम् । क्लृप्तकल्प्यविरोधे हि लघुः क्लृप्तपरिग्रहः ॥५२॥ स्ववाक्यानामलिङ्गैश्च क्लृप्तोऽसौ संनिधाप्यते । पदार्थभेदप्राप्तिस्तु नोपकारं विना भवेत् ॥ ५३॥ तत्प्राप्तेः कार्यतस्तेषां प्रकारश्चोपदेशतः । विकृतौ कार्यतो धर्माः प्रकारश्चोपदेशतः ॥५४॥ उपदिष्टेऽपि वैतस्मिन्नतिदेशपदाभिधा । निवार्यतेऽस्ति तस्यार्थे देशेऽन्यत्वं निजाद् विधेः ॥५५॥ उपदिष्टातिदिष्टत्वं न त्वेकस्य विरुध्यते । नोपदेशातिदेशौ हि प्रमाणे इति संमते ॥५६॥ उपदेशातिदेशौ हि प्रमाणे भवतो यदि । तदा विरोधो जायेत न चैवमिव संमतम् ॥५७॥ तेनोपदेशमेयत्वादुपदेशत्वमिष्यते । अन्यस्मिन्नन्यताभावादतिदेशोऽपि युज्यते ॥५८॥ उपदेशः कार्यरूपप्रमाणद्वयसंश्रयौ । षट्कावुभौ नोपदेशमतिदेशं च संश्रितौ ॥ ५९ ॥ अतिदेशाश्रयत्वे हि बाधे तन्त्रे च भूयसी । उपदिष्टार्थविषया चिन्ता नैवोपपद्यते ॥ ६० ॥ द्वारकार्याश्रयत्वे तु सर्वासामुपपन्नता । चिन्तानामिति चिन्तेह युक्ता कार्यसमाश्रया ॥ ६१ ॥ नन्वेवमुपदिष्टत्वं पदार्थानां प्रसज्यते । कार्यवत्तैरपि यतो विध्यर्थोऽन्वित उच्यते ॥ ६२ ॥ उच्यते शाब्दतैवं स्यान्नोपदेशप्रमेयता । प्रमाणद्वयभेदोऽयमुपस्थाननिबन्धनः ॥ ६३ ॥ उपदेशोपस्थितो यो वाक्यार्थान्वयमृच्छति । स औपदेशिको ज्ञेयः स च द्वैधमुपस्थितः ॥६४॥ ग्रन्थेनोपस्थितश्चैव विध्यर्थोपस्थितस्तथा । यथोपकारः प्रकृतौ नियोज्यो वा श्रुतो यथा ॥ ६५ ॥ प्रकारोपस्थितो यश्च द्वेधा नासावुपस्थितः । तेनौपदेशिको नासौ केवलं कार्यबन्धनः ॥ ६६ ॥ पूर्वनिबन्धनिबन्धनमपनेतुं सम्यगीहमानेन । शालिकनाथेन कृतः कृतिनामानन्ददो यत्नः ॥ ६७ ॥ ( इति शालिकनाथप्रणीतायां प्रकरणपञ्जिकायां अतिदेशपारायणम् ) पञ्जिका, पृ. २२६–२३१.

## ✠ अतिदेशविशेषप्रतिपादनप्रतिज्ञा ॥

### अथ विशेषलक्षणम् । ८।१।१।१ ॥

**भाष्यं**— एवं तावत् सप्तमेनाध्यायेन सामान्यतोऽतिदेशलक्षणमुक्तम् । अविहितधर्मकेषु ऐन्द्राग्नादिषु कर्मसु विहितधर्मकेभ्यो दर्शपूर्णमासादिभ्यो धर्मा अतिदिश्यन्ते इति । तत्र चिन्ता भवति, किं एकस्मिन् कर्मणि सर्वकर्मसु ( सर्वकर्मभ्यः) धर्मातिदेशः उत एकस्मात् इति । अविशेषात् सर्वेभ्य इति प्राप्तम् । एकेन तु निराकाङ्क्षीकृते कर्मणि द्वितीयधर्मप्राप्तौ किं चित् कारणं नास्ति । सत्यं, तदेव तु न ज्ञायते कस्मिन् कस्येति । तदर्थं विशेषलक्षणं वक्तव्यं अस्मिन् अस्य इति । तदिदं अध्यायादौ प्रतिज्ञायते ' अथ विशेषलक्षणं ' इति । अथे-

दानीं वृत्तात् सामान्यातिदेशलक्षणात् अनन्तरं विशेषलक्षणं वक्ष्यामः । तदुच्यमानं यथाकालं बोद्धव्यं इति ।

**टुप्** — ' किमेकस्मिन् कर्मणि सर्वकर्मसु धर्मातिदेशः ' इति ( अस्य भाष्यग्रन्थस्य यदि तावदयमर्थः -) एकस्मिन् कर्मणि ( दर्शपूर्णमासादौ ) ये धर्माः समाम्नाताः ते सर्वकर्मसु ( इष्टिपशुबन्धसोमादिषु ) अतिदिश्यन्ते, उताहो नैकस्मात् सर्वकर्मसु अतिदेशः ( इति सोऽयमयुक्तः । कथं ? ) एतस्मिन् ग्रन्थार्थे ( यद्यपि ) न्यायो न विरुध्यते । परस्तु ग्रन्थो ( एकेन निराकृते इत्यादिः ) न संबध्यते इतरेण ( संशयग्रन्थेन ) । यदि एकस्यां विकृतौ सर्वधर्मा अतिदिश्यन्ते इत्ययं पक्ष आश्रितः स्यात्, तत इदमुत्तरं युज्यते, एकेन विध्यन्तेन निराकाङ्क्षीकृते (कर्मणि) द्वितीयस्य प्राप्तिर्नास्ति ( इति, नान्यथा ) । अथ ( एवं वर्ण्यते ) एकस्मिन् कर्मणि सर्वधर्मातिदेशः ( सर्वकर्मसु ये धर्माः तेषामतिदेशः ), उताहो न ( एवं, किंतु ) एकस्मात् ( एव एकस्मिन् कर्मणि अतिदेशः ) इति । ( तथापि न युक्तम् ) सर्वकर्मधर्मातिदेशः इत्ययं पक्षो निराकृतः ( विध्यन्ताधिकरणे ७।४।२ । तत्र हि-) अथ कस्मात् उभे ( अपि ) इतिकर्तव्यते (लौकिकी वैदिकी च सह ) न प्रवर्तेते (इत्याशङ्क्य) ' मिथो विप्रतिषेधात् ' इति सूत्रेण (७।४।६) निराकृतोऽयं पक्षः । एकया निराकाङ्क्षीकृते द्वितीया न प्रवर्तते, प्रमाणाभावात् । तस्मात् सर्वधर्मातिदेशः इति निर्मूलोऽयं पक्षः । (इत्ययुक्तोऽयं भाष्यकारीयः संशयः । तस्मात् ) ईदृशः संशयो युक्तः किं अनियमेन यस्य कस्यचित् सकाशात् इतिकर्तव्यता प्रवर्तते, उतास्ति कश्चित् नियमः इति । तत्र अनियमः इति पूर्वः पक्षः । उत्तरस्तु नियतैव ( एका इतिकर्तव्यता प्रवर्तते । सूत्रार्थमाह-) 'अथ विशेषलक्षणम् ' इति एकस्मान्नियता प्रवर्तते इत्यर्थः । ( कथमयमर्थः इति चेदाह- ) विशेषः इत्यसाधारणमुच्यते । यदि चानियमेन ( प्रवर्तेत ) ततः असाधारण्यं न ( स्यात् ) । असाधारण्याभावाच्च विशेषो न ( स्यात् ) । **अथवा** अन्यः सूत्रार्थः । विशेषात् विशेषस्य धर्माः प्रवर्तन्ते ( इति सिद्धम् । तत्र ) कतरस्मात् ( विशेषात् ) कतरस्य इत्यत आह ' यस्य लिङ्गमर्थसंयोगात् ' इति । संशयस्तु नैव कार्योऽस्मिन् पक्षे । ( अस्मिन् पक्षे प्रथमद्वितीयसूत्रद्वयात्मकमधिकरणं द्रष्टव्यम् ) ।

**शा**—विध्यन्ताधिकरणे (७।४।१) सौर्यादिषु आनुमानिकवचनेन वैदिकी इतिकर्तव्यता अस्तीत्युक्तम् । तस्येदानीं विशेष उच्यते कस्य विध्यन्तः क्व प्रवर्तते इति ।

**सोम**— सामान्यतोऽतिदेशनिरूपणानन्तरं विशेषातिदेशो निरूप्यते इत्यध्याययोः **संगतिः** । 'सामान्यातिदेशलक्षणानन्तरं विशेषलक्षणं वक्ष्यामः' इति **भाष्ये** सूत्रं व्याख्यातम् । **वार्तिके** तु विशेषशब्दस्य असाधारणार्थतामङ्गीकृत्य एकैवेतिकर्तव्यता प्रवर्तते इत्यर्थे व्याख्यातम् ।

**वि** — ' कस्माच्चिदतिदिश्यन्ते नियतात् कर्मणोऽथवा । , अविशेषादादिमो, ऽन्यः शास्त्रार्थस्य व्यवस्थितेः ॥ '

**भाट्ट** — तदेवं त्रिविधोऽतिदेशो निरूपितः । तत्रापि प्रत्यक्षवचननामातिदेशयोः कार्त्स्न्येन चिन्ता वृत्ता । चोदनालिङ्गातिदेशस्य तु सामान्यतो निरूपितस्य प्रकृतिविशेषनिरूपणार्थं अष्टमः आरभ्यते । तत्र एकस्मिन् सौर्यादौ एकविध्यन्तेनैव निराकाङ्क्षत्वात् सर्वविध्यन्तसमुच्चययोगेऽपि नियामकाभावात् अनियमेन अनेकप्रकृतिविध्यन्तप्राप्तिः । **इति प्राप्ते**, अष्टदोषदुष्टविकल्पापत्तेः यस्यैव सादृश्यविशेषेण शीघ्रोपस्थितिः, तत एव धर्मातिदेशः । तच्च सादृश्यं शब्दघटितं अर्थघटितं च उत्तरत्र प्रपञ्चयिष्यते । अत एव यत्र कथमपि न सादृश्यस्य नियामकता, यथा द्यावापृथिव्ये एककपाले, तत्र अग्नीषोमीयैन्द्राग्नयोर्विकल्पेनैव प्रकृतित्वम् ।

**न्यायबिन्दुः**— एकस्मिन् कर्मणि अग्निहोत्राद्यनेकातिदेशात् तत्तदितिकर्तव्यताया **विकल्पे प्राप्ते**, नियमेन एकस्यैव एकत्र इतिकर्तव्यता, अन्यथा अव्यवस्थाऽऽपत्तेः इति सिद्धान्तः ।

**मण्डन**— ' सौर्ये चरावङ्गविशेष इष्टः । '

**शंकर**— ' अष्टमार्थस्य प्रतिश्रुतिः । ' १. ( इदं

सौत्रमधिकरणं प्रथमम् ) ' एकस्मिन्नेकविध्यन्तः । ' २. ( इदं भाष्यगतं द्वितीयमधिकरणम् ) ।

**अतिदेशो न उपशये यूपसंस्काराणाम् ॥**

**संस्कृतं स्यात् तच्छब्दत्वात् । ७।३।१३।३३ ॥**

**भाष्यं**— एकादशिन्यां श्रूयते 'उपशयो यूपो भवति' इति । तत्र संदेहः किं एतदुपशयद्रव्यं संस्कृतं, जोषणादयः संस्कारा अत्र कर्तव्याः, उत नेति । किं युक्तं ? संस्कृतं स्यात् । कर्तव्या अत्र जोषणादयः संस्काराः । कुतः ? तच्छब्दत्वात् । अयं यूपशब्दः संस्कारनिमित्तः, स एषः असत्सु संस्कारेषु नोपपद्यते । तस्मात् ते कार्या इति ।

**भक्त्या वाऽयज्ञशेषत्वाद् , गुणानामभिधानत्वात् । ३४ ॥**

**भाष्यं**— न वा कर्तव्याः । कुतः ? अयज्ञशेषत्वात् । एते संस्काराः अस्मिन् काष्ठे क्रियन्ते, एतेन द्वारेण यजतिना संभन्त्स्यते, इत्थं संस्कृते काष्ठे नियुक्तेन पशुना यजिः क्रियमाणः अपूर्वं निर्वर्तयति इति । अस्मिंश्चोपशये न पशुर्नियुज्यते, तत्र कृताः संस्काराः अनर्थकाः स्युः । ननु वचनसामर्थ्यात् अदृष्टार्था भविष्यन्ति । उच्यते । नात्र वचनं, यूपः कर्तव्य इति । वर्तमानापदेशोऽयम् ! ननु वर्तमानापदेशोऽपि न घटते संस्काराणामभावे । उच्यते । भक्त्या भविष्यति, यथा 'यजमानो वै यूपः' इति । आह, तत्र सादृश्यात्, इह पुनः कथमिति ? उच्यते । गुणानामभिधानत्वात् । यूपगुणानां यूपसंस्काराणां अभिधानत्वात् । यूपसंस्कारास्तत्र के चित् अर्थप्राप्ताश्छेदनादयः तूष्णींकृताः सन्ति । तैरयमभिधीयते यूप इति अयूपः सन् । यथा स्नाता कन्या अनलंकृता मालागुणेनापि अलंकृता इति । एवं एकदेशेनापि संस्काराणां संस्कृतः इति स्तुत्या अभिधीयते ।

**शा**—'उपशयो यूपो भवति' इति अनुवादोऽयं उपसयस्तुत्यर्थः, न संस्कृतिमपेक्षते । तस्मात् लौकिकाः यूपधर्माः के चित् छेदनादयः उपशये वचनादनुष्ठीयन्ते, तेन निमित्तेन गौणोऽयं वादः ।

**सोमः**— संस्कारनाम्नः अतिदेशकत्वं उक्तं क्वचिदपोद्यते इति **संगतिः** । सर्वेषां यूपानां दक्षिणतः उपशेते इति उपशयः काष्ठविशेषः स यूपः । न धर्मातिदेशकत्वं यूपशब्दस्य इति सिद्धान्तः । **सूत्रार्थस्तु**–उपशयद्रव्यं संस्कृतं यूपशब्दाभिधेयसंस्कारयुक्तं स्यात् संस्कारवाचकयूपशब्दश्रवणादिति ।

**वि**—' संस्कारः स्यादुपशये न वा, यूपोक्तितोऽग्रिमः ।, न स्यान्नियोजनाभावात् तूष्णींछेदेन यूपता ॥'

**भाट्ट**— यूपैकादशिन्यां यूपसमीपे एकं काष्ठं स्थापनीयं इति विधाय 'उपशयो यूपो भवति' इति श्रुतम् । तत्र उपशये काष्ठे यूपशब्दोऽयं यूपधर्मान् जोषणादीन् संस्कारनिमित्तत्वात् असत्यपि स्थानापत्त्यतिदेशे नामातिदेशविधया अतिदिशेत् । **इति प्राप्ते**, अस्य गौण्या शक्त्यैव वा धर्मविधायित्वे वाक्यभेदापत्तेः, उपशयस्तुत्यर्थत्वेन तद्विध्येकवाक्यतापन्नस्य अस्य पृथक् विधित्वानुपपत्तेः, अर्थप्राप्तकतिपयच्छेदनादिधर्मयोगेन गौण्या वृत्त्या उपशयस्तुतिरेव इदं, न तु नामातिदेशकम् । ७।३।११.

**न्यायबिन्दुः** —' उपशयो यूपो भवति ' इत्यर्थवादः छेदनादिनिमित्तः, न तु आतिदेशिकः इति सिद्धान्तः ।

**मण्डन**—' यूपस्य नैवोपशयेऽङ्गजातम् ।'

**शंकर**—' स्तुतिस्तूपशयो यूपः ।'

**अतिदेशो न प्रायणीयनाम्ना ॥**

**अपिवा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् । ७।३।२।५ ॥**

**भाष्यं**— किं एष एवोत्सर्गः सर्वं कर्मनाम अन्यत्र श्रूयमाणं धर्माणां ग्राहकमिति ? एवं खलु प्राप्तम् । एवं प्राप्ते इदमारभ्यते । गवामयने श्रूयते 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति' इति । अस्ति तु द्वादशाहे प्रथममहः प्रायणीयं नाम ' प्रायणीयोऽतिरात्रः ' इति । तयोर्नानात्वं तेनैव न्यायेन सिद्धं ' प्रकरणान्तरे प्रयोजनान्यत्वं ' इति (२।३।११।२४) तत्र अयं प्रायणीयशब्दः परत्रापि श्रूयमाणो न धर्माणां ग्राहकः । किं तर्हि ? गुणार्था एषा श्रुतिः । कथं ? लक्षणया नामधेयं धर्माणां ग्राहकमुक्तम् । असति च श्रुत्यर्थे लक्षणार्थो

ग्राह्यः। इह तु श्रुत्यर्थे एव संभवति। गुणार्थे एव शब्दः। गुणेन क्रियायोगेन तस्मिन् कर्मणि श्रुत्यैव प्रयुज्यते। प्रयन्ति अनेन इति प्रायणीयं, प्रवर्तन्ते अनेन सत्रे इति।

**वाक्यशेषाच्च। ६॥**

**भाष्यं**— वाक्यशेषश्चास्य एतमेवार्थमाह 'ज्योतिरेव पुरस्ताद्दधाति' इति। येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात् क्रियते इत्यर्थो 'ज्योतिरेव पुरस्ताद्दधाति' इति। तस्मान्नायमतिदेशः।

**टुप**— (पूर्वाधिकरणापवाद आरभ्यते। तेनैव न्यायेन पूर्वः पक्षः। सिद्धान्तमाह-) प्रयन्ति (प्रारभन्ते) अनेन इति प्रायणीयं इत्यनेन योगेन द्वादशाहे (प्रथमेऽहनि) इयं संज्ञा प्रवृत्ता। गवामयने च (प्रथमेऽहनि) अयं योगो विद्यते एव। तस्मात् (क्लृप्तयोगवशेन मुख्यत्वोपपत्तौ गौण्या वृत्त्या) धर्मातिदेशो नास्ति। यत्र तु पञ्चमः षष्ठो वा प्रायणीयः, तस्य योगाभावात् अनुदाहरणत्वम् (तत्र पूर्वाधिकरणन्यायेन भवत्येवातिदेशः)। तस्मात् तादृशो न पूर्वाधिकरणापवादः।

**शा**— अतिदेशे प्राप्तेऽभिधीयते 'प्रायणीयपदं येन निमित्तेन प्रवर्तते। प्राथम्येन तदस्त्येव गावामयनिकेऽपि नः॥ तस्मात् सिद्धनिमित्तेन श्रुत्या नामत्वसंभवात्। न गौणत्वेन धर्माणामतिदेशोऽवकल्पते॥'

**साम**— आपवादिका संगतिः। प्रयन्ति प्रारभन्ते अनेन इति प्रायणीयः। बाहुलकात् करणे अनीयर्-प्रत्ययः, प्रायणमारम्भः, तत्र भवः इति वा प्रायणीयः। गहादिषु वेणुकादेराकृतिगणत्वात् छण्। तथा च प्राथम्यं प्रायणीयशब्दस्य प्रवृत्तिनिमित्तम्। तच्च द्वादशाहिकगावामयनिकयोस्तुल्यं इति उभयत्रापि नामधेयं, इति न गौणत्वेन धर्मातिदेशकत्वम्। एवं च यत्र चतुर्थे पञ्चमे वा अहनि प्रायणीयशब्दः, तत्र प्राथम्यरूपप्रवृत्तिनिमित्तासंभवात् गौण्या वृत्त्या धर्मातिदेशकत्वं युक्तम्। **एतेन** '**चतुर्विंशः प्रायणीयो भवति**' इति चतुर्विंशाख्ये द्वितीयेऽहनि प्रयुक्तस्य प्रायणीयशब्दस्य विधास्यमानषडहावृत्तिलक्षणमासापेक्षया प्राथम्यमादाय मुख्यत्वात् अनतिदेशकत्वं इति वेदभाष्ये **माधवोक्तं** चिन्त्यम्। सर्वापेक्षया प्राथम्ये एव प्रायणीयशब्दस्य मुख्यत्वं, मासादिविवक्ष-यापेक्षया तु प्राथम्ये गौणत्वेन, तथा च अवयवसंबन्धेन गौणत्वे धर्मविधिविशिष्टतया अतिदेशकत्वस्यैव युक्तत्वात्। **सूत्रार्थस्तु**— सत्रकर्मणि प्रयन्त्यनेन इति श्रुतिः प्रायणीयशब्दः गुणार्थः अवयवयोगार्थः स्यादिति।

**वि**— 'गवामयन आद्येऽह्नि प्रायणीयेति नाम यत्। तद् द्वादशाहिकादह्नो धर्मातिदिदेशि वा॥, पूर्वन्यायेनातिदेशो, मैवं प्रथमता द्वयोः। अह्नोस्तुल्येति मुख्यत्वं समं नातिदिशेदतः॥'

**भाट्ट**— द्वादशाहे प्रथममहः प्रायणीयं सधर्मकं विधाय गवामयने 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति' इति श्रुतम्। तदेते द्वे कर्मणी विनिगमनाविरहात् इति निर्णीतं प्रकरणान्तराधिकरणे (२।३।८) कौस्तुभे। तदत्र गावामयनिकं प्रायणीयपदं पूर्वन्यायेनैव द्वादशाहिकप्रायणीयधर्मातिदेशार्थम्। न च चोदनालिङ्गातिदेशादेव तत्प्राप्तिसिद्धेः नामातिदेशवैयर्थ्यं, गणत्वसाम्येऽपि द्वादशाहान्तर्गतदशाहस्यैव चोदनालिङ्गातिदेशेन धर्मप्राप्तेर्वक्ष्यमाणत्वात्। इति प्राप्ते, येनैव प्रथमं यन्ति अनेन इति व्युत्पत्त्या प्राथम्यगुणयोगेन द्वादशाहिके अहनि प्रवृत्तिः, तेनैव गावामयनिकेऽपि इति प्राथम्ययोगेन उभयत्रापि मुख्यतयैव प्रवृत्तौ गौणत्वे प्रमाणाभावः। न चात्र पूर्ववत् द्वादशाहिके प्रचुरतरप्रयोगः, येन तत्रैव रूढिः निरूढलक्षणा वा, अन्यत्र गौणी इत्याश्रीयेत। अतोऽत्र न नामातिदेशः प्रायणीयपदे। वैश्वानरपदं तु प्रकरणे वैश्वानरग्रहविधानात् तत्प्रख्यन्यायेन नामधेयमपि वैश्वानरसंज्ञकस्य कर्मान्तरस्य अप्रसिद्धेः नैवातिदेशकम्। ज्योतिष्टोमपदं तु ज्योतिष्टोमधर्मप्रतिप्रसवार्थं सत् भवत्येव अतिदेशकम्। तेन एतत्तुल्यायां विरोधे न गणत्वसामान्यात् द्वादशाहिकद्वितीयाहधर्माः, अपि तु ज्यौतिष्टोमिकाः। साधारणास्तु भूयोऽनुग्रहात् द्वादशाहिका एव।

इदं चाधिकरणं गावामयनिके प्रथमेऽहनि प्रायणीयपदस्य भाष्यकारादिलेखनात् अवगन्तव्यम्। यदा तु छन्दोगसूत्रानुसारेण प्रायणीयपदस्य गावामयनिके द्वितीये चतुर्विंशेऽहनि प्रयोगः, तदा अतिदेशो भवत्येवेति ध्येयम्।

**न्यायबिन्दुः**—द्वादशाहिकप्रथमाहर्वाचकः प्रायणीयशब्दो गवामयनप्रथमेऽहनि गौण इति **अतिदेशे प्राप्ते,** प्राथम्येन निमित्तेन प्रायणीयपदस्य तत्रापि शक्तत्वेन गौण्यभावात् नातिदेश इति सिद्धान्तः।

**मण्डन**—'न प्रायणीयेऽप्यतिदेशो नाम।'

**शंकर**- 'प्रायणीयपदं न तु।' अतिदेशकम्।

**अतिदेशो न फल-नियम-कर्तृ-समुदायस्य दार्शपौर्णमासिकस्य ॥**

**कर्मणस्त्वप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्यानन्वयस्तद्बन्धनत्वात्। ८।१।१३।२०॥**

**भाष्यं**— इह फलनियमकर्तृसमुदाया उदाहरणम्। फलं स्वर्गः। नियमो यावज्जीविकोऽभ्यासः। कर्ता स्वर्गकामः। समुदायो दर्शपूर्णमासौ इति। तत्र चिन्त्यते किं फलनियमकर्तृसमुदायानां सौर्यादिषु प्रवृत्तिः, नेति। किं प्राप्तं? 'इष्टिषु दर्शपूर्णमासयोः प्रवृत्तिः' (८।१।४।११) इत्यनेन न्यायेन प्रवृत्तिः इति प्राप्तम्। **तथा प्राप्ते उच्यते,** फलनियमकर्तृसमुदायस्य अप्रवृत्तिः। कुतः? कर्मणः अप्रवृत्तित्वात्, तद्बन्धनत्वाच्च फलादीनाम्। कर्म तावन्न प्रवर्तते। किं कारणं? विध्यन्तेन धर्माः प्रवर्तन्ते। न च कर्म विध्यन्तविहितं, विध्यादिविहितं तत्। तस्मान्न प्रवर्तते। तस्य अप्रवृत्तित्वात् फलनियमकर्तृसमुदायस्य अनन्वयः, अप्रवृत्तिरित्यर्थः। कुतः? तद्बन्धनत्वात्। फलं तावत् 'दर्शपूर्णमासाभ्यां यजेत' इति दर्शपूर्णमाससंयुक्तं श्रुतम्। तत् यत्र दर्शपूर्णमासौ, तत्र भवितुमर्हति। न च सौर्यादिषु तौ स्तः। अतः स्वर्गस्यापि तत्राभावः। एवं नियमोऽपि कर्मबन्धनः 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इति। स दर्शपूर्णमासाभावे कथं स्यात्? तथा कर्ता कर्मबन्धनः 'दर्शपूर्णमासाभ्यां स्वर्गकामः' इति। सोऽपि कथं तयोरसतोः स्यात्? समुदायोऽपि आग्नेयादीनां, तानि सौर्यादिषु न सन्ति, इति तत्समुदायः कथं तत्र भवेत्? तस्मात् तेषामप्रवृत्तिः।

**टुप्**— सौर्ये करणस्य प्रत्यक्षत्वात् करणान्तरस्य अप्रवृत्तिः, आनुमानिकत्वात्। इतिकर्तव्यताऽऽकाङ्क्षायां इतिकर्तव्यता अतिदिश्यते। न च फलं इतिकर्तव्यता। यावज्जीविको नियमः कर्तृधर्मः, स पुरुषार्थत्वान्नातिदिश्यते। फलेन व्याप्यमानो यः कर्ता, स नातिदिश्यते। तेनांशेन अन्यत्र प्रधानत्वात् न क्रत्वर्थः। यः पुनः 'यजेत' इत्यत्र कर्ता, स क्रतुं निर्वर्तयति इति क्रत्वर्थः, सोऽतिदेशात् प्राप्नोति। किंतु यत्र बहवः कर्तारः श्रूयन्ते, तत्र तावत् आनुमानिको नातिदिश्यते। यत्रापि एकसंख्यः, तत्रापि अनुवादोऽतिदेशः। तस्मात् अर्थालाभात् कर्तुरनतिदेशो गुणभूतस्यापि। समुदायः करणपरिच्छेदेन उपकृतवान्, स इह परिच्छेद्याभावात् नातिदेश्यः। समुदायं च गृह्णता आग्नेयादयः कार्याः, ते तु क्रियमाणाः स्वर्गं साधयेयुः, तथा सति यथाश्रुतफलव्याघातः। **अथोच्येत,** समुदायं गृह्णन् नान्तरीयकतया आग्नेयादीन् करिष्यति, न फलसाधनत्वेन। **उच्यते**। समुदाय एषां गुणभूतः, न च गुणः आकृष्यमाणो गुणिनमाकर्षति, अतादर्थ्यात्।

**प्रवृत्तौ चापि तादर्थ्यात्। २१ ॥**

**भाष्यं**— अपि च धर्माणां प्रवृत्तिः कर्मार्था, कर्मणः उपकर्तुम्। न च फलादीनि कर्मणः उपकुर्वन्ति। फलं तावत् पुरुषस्योपकरोति, न कर्मणः। उक्तं हि 'फलं च पुरुषार्थत्वात्' इति (३।१।३।५)। नियमोऽपि न कर्मधर्मः, कर्तृधर्मोऽसौ इत्युक्तं 'कर्तुर्वा श्रुतिसंयोगात्' इति (२।४।१।२)। तथा कर्ता स्वर्गकामो न कर्मार्थः, कर्म स्वर्गकामार्थम्। नहि स्वर्गकामः कर्मणः उपदिश्यते 'स्वर्गकामो यजेत' इति, किं तर्हि? कर्म स्वर्गकामस्य उपदिश्यते, स्वर्गकामो यजेत, नान्यत् कुर्यात् इति। तथा समुदायो न कर्मार्थः, फलार्थोऽसौ, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति। एवमेतेषां कर्मणः अनुपकारकत्वात् प्रवृत्तिरनर्थिका स्यात्। तस्मात् न प्रवर्तेरन्।

**अश्रुतित्वाच्च। २२ ॥**

**भाष्यं**— अत्राह, यदि दर्शपूर्णमाससंयोगात् फलादीनां अप्रवृत्तिः, प्रयाजादीनामपि तत्संबन्धात् अप्रवृत्तिः प्राप्ता, तान्यपि हि तत्संयुक्तानीति। **उच्यते**। यद्यपि तानि दर्शपूर्णमासयोः श्रुतानि, विध्यन्तेन तु सौर्यादिष्वपि अतिदिष्टानि (८।१।२)। फलादीनि तु न विध्यन्तेन अतिदिश्यन्ते। तेषां यदि प्रत्यक्षा प्रवर्तिका श्रुतिः स्यात्, ततः प्रवर्तेरन्। न चासावस्ति। तस्मात् अश्रुतित्वात् न प्रवर्तन्ते।

**शा**—‘ तत्र प्रकृतिसंबन्धात् विकृतावतिदेशनम् । प्रयाजादिवदेतेषामिति **प्राप्तेऽभिधीयते** ।। प्रकृत्यैव निबद्धत्वाद् विकृत्या सह नान्वयः । न चातिदेशतः प्राप्तिरित्थंभावान्वयादृते ।। ’

**सोम**— अङ्गवत् फलादीनामपि अतिदेशः इति उत्थितेः **संगतिः** । **सूत्रार्थस्तु**— कर्मणः करणस्य विकृतौ अप्रवृत्तेः फलादीनां तन्नियतसंबन्धादप्रवृत्तिरिति ।

**वि**— फलं च नियमः कर्ता संघः सौर्ये न वा, ऽग्रिमः । प्रयाजवत्, न विध्यादिविध्यन्तत्वविभेदतः ।। ’

**भाट्ट**— एवं प्रकृतिविशेषे निरूपिते फलनियमकर्तृसमुदायांशे तेषां न प्रकृतित्वं, यतस्तेषामनतिदेशः । तथाहि, प्रकृतिफलं तावत् प्रकृतेरनतिदेशादेव नातिदिश्यते । नहि प्रकृतिरपि अतिदेष्टुं शक्या, विकृतिभावनाया विकृतिकरणेनैव निराकाङ्क्षत्वात् । **न च** सौर्यादिवाक्ये द्रव्यदेवतामात्रविशिष्टभावनाविधौ कृते साहश्येन प्राकृतभावनोपस्थितौ तत्संबन्धिकरणस्यैव प्रयाजादिवत् अतिदेशोपपत्तिः इति **वाच्यम्** । अनुमितिसामग्र्या बलवत्त्वेन सूर्यादिदेवतया यागानुमानस्यापि आवश्यकतया शाब्दबोधे विजातीययागस्यापि भावनाविशेषणतया विधेरावश्यकत्वेन करणाकाङ्क्षाऽभावात् अतिदेशानुपपत्तेः । न च तथापि तद्वैजात्ये आग्नेयत्वभेदकल्पने गौरवात् तद्यागे आग्नेयत्वापत्तिः, विनिगमनाविरहसहकृतविधिपुनःश्रवणेन वैजात्यानां भेदसिद्धेः, अन्यथा आग्नेयेऽपि सौर्यत्वापत्तौ सौर्यादीनां सांकर्यापत्तेश्च । अतः सौर्यादीनां भिन्नानामेव करणानां लाभात् न तेषामतिदेश इति सिद्धम् । अतश्च तदभावात् न तज्जन्यफलातिदेशः । न च तदभावेऽपि अङ्गवत् विकृतेः फलाकाङ्क्षाऽस्ति ब्रह्मवर्चसादिश्रुतफलेनैव निराकाङ्क्षत्वात् । यत्रापि विश्वजिदादौ न फलश्रवणं तत्रापि न तदतिदेशः । स हि अङ्गातिदेशकेन प्रकृतिवच्छब्देन भवेत् भिन्नेन वा ? **नाद्यः**, एकेनैव ‘ प्रकृतिवद्विकृतिः कार्या ’ इति वाक्येन विकृत्युद्देशेन अङ्गविधानं, फलोद्देशेन च विकृतिविधानं, इति वैरूप्यापत्तेः । **यद्यपि च** प्रकृतिवच्छब्दमात्रस्य विकृतिविधिवाक्यशेषत्वकल्पनया अंशत्रयविशिष्टविकृतिभावनाविधानेन अवैरूप्यं इत्याशङ्क्येत, **तथापि** एकस्यैव प्रकृतिवच्छब्दस्य अङ्गोद्देशे विधेयत्वमर्थकत्वं, फलोद्देशे च उद्देश्यत्वमर्थकत्वं इति वैरूप्यापत्तिः तदवस्थैव । **नान्त्यः**, स्वविध्युद्देश्यापेक्षितविश्वजिन्न्यायेनैव (४।३।५) फलकल्पनोपपत्तौ अतिदेशकल्पने प्रमाणाभावात् । अतो न फलस्यातिदेशः । नियमो निमित्तम् ; तस्य विकृतिभावनया अनपेक्षितत्वादेव अनतिदेशः । न हि निमित्तमङ्गं, येन प्रयाजादिवत् अतिदेशो भवेत्, प्रमाणाभावात् । कारकत्वाभावाच्च न तस्याङ्गत्वम् । एवं सत्यपि यदि प्रकृतिवदिति स्यात्, ततो भेदनवत् विकृतावेव निमित्तसंनिपाते नैमित्तिकं विकृत्यङ्गतया प्रकृत्यनुष्ठानं प्रसज्येत भेदनहोमानुष्ठानवत्, न त्वेतदस्ति । सर्वथा न निमित्तातिदेशो नैमित्तिकत्वं वा विकृतेः । कर्ता अधिकारी, तस्यापि प्रकृतौ अनङ्गत्वात् तद्विशेषणानां स्वर्गकामत्वाहिताग्नित्वादीनां अनतिदेशः । अत एव स्थपतीष्ट्यादौ आहिताग्नित्वस्य अनतिदेशः । राजत्वादेस्तु कर्तृविशेषणत्वात् तस्य च प्रकृतौ अङ्गत्वात् विकृतौ अतिदेश इष्ट एव । नहि तत् प्रकृतौ अधिकारिविशेषणं, अधिकारिणः शाब्दविधिबोध्यत्वपक्षे उद्देश्यविशेषणस्य राजत्वादेः अविवक्षाऽऽपत्तेः । वस्तुतस्तु प्रथमापेक्षितत्वेन स्वाराज्यकामपदस्य फलपरत्वात् अधिकारिपरत्वानुपपत्तेः अधिकारी आर्थिकविधिबोध्य एव इति तत्र न शाब्दस्य राजत्वादेः अन्वयसंभवः इति राजत्वादेः कर्तृविशेषणत्वमेव । अत एव आहिताग्नित्वादेः यौक्तिकस्य आर्थिके अधिकारिविधौ विशेषणत्वकल्पनम् । **याज्ञिकास्तु** राजत्वादेः अधिकारिविशेषणत्वमङ्गीकृत्य अनतिदेशं मन्यन्ते । समुदायः अग्नीषोमीयादिप्रधानान्तरसाहित्यम् । तस्य प्रकृतौ अङ्गत्वेऽपि परप्रयुक्ताग्नीषोमीयादिप्रतियोगिकत्वात् तदभावे विकृतौ नातिदेशः । ८।१।४.

**न्यायबिन्दुः**—स्वर्ग–यावज्जीव–स्वर्गकाम–आग्नेयादिसमुदायानां प्रधानत्वेन कर्मानङ्गत्वात् न विकृतावतिदेश इति सिद्धान्तः ।

**मण्डन**—‘ फलादयोऽप्यत्र न चातिदेश्याः । ’

**शंकर**—‘ फलादेर्नातिदेशः स्यात् । ’

अतिदेशो न विकृतौ प्राकृतकाम्यगुणानाम् ॥ गुणकामेष्वाश्रितत्वात् प्रवृत्तिः स्यात् । ८।१। १४।२३ ॥

**भाष्यं**—इह गुणकामा उदाहरणं 'गोदोहनेन प्रणयेत् पशुकामस्य' 'उगास्मै गायता नरः इति ग्रामकामाय प्रतिपदं कुर्यात्' इत्येवमादयः । तत्र विचार्यते किं गुणकामानां वैकृतेषु प्रवृत्तिः, उत नेति । ततः सूत्रेणैवोपक्रमः । गुणकामेष्वाश्रितत्वात् प्रवृत्ति स्यात् । प्रवृत्तिर्गुणकामानाम् । कुतः ? आश्रितत्वात् । गोदोहनं प्रणयनाश्रितं 'गोदोहनेन प्रणयेत्' इति । तत्र प्रणयनं प्रवर्तते । आश्रये च प्रवर्तमाने तदाश्रितमपि प्रवर्तते । यथा पटे आकृष्यमाणे तदाश्रितं चित्रमपि आकृष्यते । यथा च चमसः प्रवर्तते, यथा च 'खादिरं वीर्यकामाय यूपं कुर्यात्' इति, एवं गोदोहनमपि प्रवर्तते । गोदोहने च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तितुमर्हति । तस्मात् गुणकामानां प्रवृत्तिः ।

**निवृत्तिर्वा, कर्मभेदात् । २४ ॥**

**भाष्यं**— निवृत्तिर्वा गुणकामानां अप्रवृत्तिः । कुतः ? कर्मभेदात् । कार्यभेदादित्यर्थः । अन्यत् कार्यं गोदोहनस्य, अन्यच्चमसस्य । चमसः क्रत्वर्थः, गोदोहनं तु पुरुषार्थः । तदुक्तं 'यस्मिन् प्रीतिः पुरुषस्य, तस्य लिप्साऽर्थलक्षणाऽविभक्तत्वात्' (४।१।२।२) इत्यत्र । अक्रत्वर्थः किमर्थं प्रवर्तेत ? क्रतूपकाराय हि तस्य प्रवृत्तिः । एवं प्रतिपदः । तस्मात् न प्रवर्तेरन् गुणकामाः ।

**टुप्**— यत् क्रत्वर्थं तदतिदिश्यते । न च गोदोहनादीनां क्रत्वर्थता ।

**अपिवाऽतद्विकारत्वात् क्रत्वर्थत्वात् प्रवृत्तिः स्यात् । २५ ॥**

**भाष्यं**—यत्तु उपन्यस्तं, यथा 'खादिरं वीर्यकामाय यूपं कुर्यात्' इत्यत्र प्रवृत्तिः एवमत्रापीति, तत्र ब्रूमः । अपिवा एवंविधेषु प्रवृत्तिः स्यात् । कुतः ? अतद्विकारत्वात् । न खादिरः क्रत्वर्थविकारः । अयमपि क्रत्वर्थ एव । तदुक्तं 'एकस्य तूभयत्वे संयोगपृथक्त्वं' इति (४।३।३।५), क्रत्वर्थश्चेत् पलाशवत् प्रवर्तेत । तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते । खादिरेण हि स सिध्यति । स च खादिरोऽस्ति । तस्मात् कामं साधयिष्यति ।

**टुप्**— गोदोहनादि पुरुषार्थत्वात् चमसं विकृत्य निविशते ( न तु स्वयं क्रत्वर्थम् ) । खदिरस्तु ( पुरुषार्थोऽपि ) क्रत्वर्थत्वात् न किं चित् विकरोति । एवं चेत् खदिरः ( एव ) प्रवर्तते । 'तस्मिंश्च प्रवर्तमाने तदाश्रितः कामोऽपि प्रवर्तते' ( इति भाष्यमाक्षिपति— ) एतदयुक्तम् । यत् ( हि ) क्रत्वर्थं, तत् प्रवर्तते । न च फलं क्रत्वर्थम् । वीर्यकामो यदि खदिरार्थः ( स्यात् ), ततः खदिरे प्रवर्तमाने तदाश्रितत्वात् ( तदङ्गत्वात् इति यावत् ) प्रवर्तेत । इह तु विपरीतं ( तादर्थ्ये ), खदिरः ( एव हि ) तदर्थः । ( एवं तर्हि ) खदिरः पुरुषार्थत्वात् ( विकृतौ ) न प्रवर्तेत इति चेत्, उच्यते । येनांशेन क्रत्वर्थः, तेन प्रवर्तिष्यते, न द्वितीयेन ( पुरुषार्थांशेन ) ।

**शा**— उच्यते 'नहि गोदोहनादीनामित्थंभावेन संग्रहः । इत्थंभावातिदेशेन तेषां नातोऽतिदेशधीः ॥'

**सोम**— पूर्वाधिकरणवैषम्येण **संगतिः** । अत्रेदमवधेयम् । फलस्यातिदेशेन प्रवृत्तिः इति न पूर्वपक्षः । पूर्वपक्षिणाऽपि अनुपकारकस्य अतिदेशानङ्गीकारात् । किंतु फलसाधनभूते गोदोहने अतिदेशेन प्रवर्तमाने साधनसद्भावात् फलं भवितुमर्हति इति । एवं च अतिदेशचिन्तारूपत्वाभावात् अध्याये **प्रसङ्गात् संगतिर्द्रष्टव्या** । **केचित्** अध्यायसंगत्यर्थं फलसाधनीभूतगोदोहनादीनां प्रवृत्तिरस्ति न वा, इति चिन्ताया एव अधिकरणाङ्गत्वं, फलप्रवृत्तिचिन्ता तु तत्प्रयोजनचिन्तेत्याहुः । अत्राधिकरणे उपकारकतामात्रेण नातिदेशः, किंतु अङ्गस्यैव इति स्थिते, तृतीये पवमानेष्ट्यधिकरणे ( ३।६।४, ६ ) उपकारकस्यापि यथा उपदेशः, तथा अतिदेशोऽपि किं न स्यात् इत्याशङ्क्य उपदेशवैषम्येण सिद्धान्तितं इत्यपुनरुक्तिः । **सूत्रार्थस्तु**— गुणकामानां प्रणयनाश्रितगोदोहनाश्रितत्वात् प्रवृत्त्या विकृतौ प्रवृत्तिः स्यादिति ।

**वि**—'गोदोहनाद्यस्ति नो वा, भवेत् प्रणयनाश्रयात् ।, अनङ्गत्वादपेक्षाया अभावान्नातिदिश्यते ॥'

भाट्ट--ये प्रकृतौ गोदोहनादिगुणजन्याः कामाः, तेषामनङ्गत्वात् अनुपकारकत्वाच्च यद्यपि नातिदेशः, तथापि तज्जनकीभूतगोदोहनादिगुणानां प्रणयनोपकारकत्वेन अतिदेशे विकृतावपि कामनायां सत्यां फलोत्पत्तौ न किंचिद् बाधकम्। न च अङ्गमेव विकृतौ अतिदेश्यं इति नियमे प्रमाणमस्ति, करणोपकारमाकाङ्क्षन्त्या विकृतिभावनायाः तज्जनकापेक्षायां उपकारकमात्रस्यैव अतिदेशात्। नहि विकृतिभावना अङ्गमपेक्षते, प्रमाणाभावात्। अतः खादिरत्वादिवदेव गोदोहनादीनामपि अतिदेशः फलोत्पत्तिश्च। इति प्राप्ते. सत्यं विकृतिभावना उपकारकमेवापेक्षते, तथापि सादृश्यात् प्रकृतिचोदना तदर्थं एव वा प्रथमत उपतिष्ठते, पश्चाच्च तदन्वितमुपकारकम्। तदत्र चोदनार्थभूतायां प्रकृतिभावनायां यदन्वितं तदतिदिश्यते, अनन्वितस्य उपस्थित्यभावेन अतिदेशायोगात्। अन्वितं च अपशुकामप्रयोगे चमसविशिष्टं प्रणयनं, पशुकामप्रयोगे प्रणयनमात्रं, तत्प्रयोगे प्रणयनस्य परप्रयुक्तगोदोहनोपजीवित्वेन द्रव्यानपेक्षत्वेन स्वरूपेणैव प्रधानभावनाऽन्वयात्। अङ्गमेव प्रधानभावनायामन्वेति इत्यभिप्रायेण तस्यैवातिदेशः इति प्रवादः। अतश्च फलार्थगुणानामनतिदेशः। न च अतिदेशाभावेऽपि आश्रयस्य प्रणयनस्य विकृतावपि सत्त्वात् तत्रैव कामनायां सत्यां गोदोहनानुष्ठानोपपत्तिः, प्रकरणपाठवैयर्थ्यापत्तेः, गुणफलसंबन्धविधेः आश्रयप्रयोजकत्वशक्तिकल्पनागौरवप्रसङ्गाच्च। प्रणयनमात्रस्य आश्रयत्वानुपपत्तेः अवश्यं दर्शपूर्णमासापूर्वसाधनीभूतप्रणयनत्वेनैव आश्रयत्वात्, विकृतौ तदभावेन गोदोहनानुष्ठानानुपपत्तेः। अत एव खादिरत्वादेः संयोगपृथक्त्वन्यायेन (४।३।३) क्रत्वर्थत्वस्यापि सत्त्वात् अतिदेशोपपत्तावपि अग्नीषोमीयापूर्वसाधनीभूतयूपाभावात् न तेन वीर्यादिफलोत्पत्तिः। भाष्यकारस्य तु एतादृशविषये फलोत्पत्तिं मन्यमानस्य अभिप्रायं न विद्मः। यत्र तु नाश्रयापेक्षा विजातीयप्रस्तरप्रहरणत्वादिनैव च आयुरादिफलं प्रति साधनत्वं, आयुरादिप्रकाशनमन्त्रस्य च स्वप्रकाश्यफलजनकत्वेन प्रहरणाङ्गत्वं, तत्र भवत्येव विकृतावपि तस्मात् फलोत्पत्तिः। ८।१।२.

न्यायबिन्दुः—'गोदोहनेन पशुकामस्य' इत्यादिफलार्थगुणानां गोदोहनादीनां प्रकृताविव विकृतौ प्रवृत्तिः, तथा तत्फलस्यापि। इति प्राप्ते. फलार्थानामेषां प्रकृत्यनङ्गत्वान्नातिदेशः। प्रणयनं तु चमसेनैव भवति, स्वेच्छया गोदोहनेन तद्बाधायोगात्, दर्शपूर्णमासापूर्वसाधनप्रणयनस्यैव आश्रयत्वेन विकृतौ तदभावाच्च न गुणफलप्रवृत्तिः इति सिद्धान्तः।

मण्डन—'न चातिदेश्यो गुणकाम इष्टः।'

शंकर—'फलार्थस्य गुणस्य च।' नातिदेशः।

## अतिदेशो न सोमे ऐष्टिकधर्माणाम्॥

**प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात्। ८।१।३।३॥**

भाष्यं—'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रूयते। तत्र विध्यन्तं प्रति चिन्ता, कुतोऽस्मिन् विध्यन्तः स्यादिति। तदुच्यते प्रवृत्तत्वादिष्टेः सोमे प्रवृत्तिः स्यात्। दार्शपौर्णमासिको विध्यन्तः सोमे स्यात्। कुतः? प्रवृत्तत्वात्। दीक्षणीयादिषु इष्टिषु दार्शपौर्णमासिको विध्यन्तः प्रवृत्तः। दीक्षणीयायां, आतिथ्यायां, प्रायणीयायां, पशौ च। तदनन्तरं सोमः। तत्रापि स एव प्रवृत्त्या विज्ञायते। यथा 'देवदत्तो भोजयितव्यः, विष्णुमित्रो भोजयितव्यः, माठरः कौण्डिन्यो भारद्वाजः' इति। उत्तरेष्वपि भोजयितव्य इति प्रवृत्त्या अनुबध्यते। तस्मादैष्टिकः सोमे विध्यन्तः।

**लिङ्गदर्शनाच्च। ४॥**

भाष्यं—'तस्यैकशतं प्रयाजानुयाजाः' इति च ऐष्टिका धर्माः सोमे दृश्यन्ते। तस्माच्च अस्मिन् ऐष्टिको विध्यन्तः।

**कृत्स्नविधानाद्वाऽपूर्वत्वम्। ५॥**

भाष्यं—अपूर्वत्वमेव हि सोमे। स न कुतश्चित् धर्मान् गृह्णाति। कुतः? कृत्स्नविधानात् 'इतिकर्तव्यताऽविधेर्यजतेः पूर्ववत्त्वं' उक्तम्। विहितेतिकर्तव्यताकश्चायम्। तस्मादपूर्वः।

टुप्—अत्र सूत्रं भाष्यं च उभयमप्ययुक्तम्। न ज्ञायते कियत्या इतिकर्तव्यतया निराकाङ्क्षी भवतीति। अथोच्येत, यस्य संनिधाने एको द्वौ बहवो वा पदार्थाः

समान्नायन्ते, तत् ( तैरेव ) निराकाङ्क्षत्वात् नातिदेशमपेक्षते । एवं सति उपहोमादिभिर्निराकाङ्क्षत्वात् ( सांग्रहण्यादिषु ) अतिदेशो न प्राप्नोति । तत्र एवं ( परिहारं ) वर्णयन्ति, उपहोमाः प्राकृतानां प्रयाजानुयाजानां मध्ये श्रुताः ( 'आमनमस्यामनस्य देवा इति तिस्र आहुतीर्जुहोति' इति ) तत्संबन्धिपदव्यवायात् ( मिश्रत्वात् ) तेऽपि ( प्रयाजादयः ) कथंभावे उपनिपतन्तः ( एव ) गृह्यन्ते । ( तस्मादतिदेशः इति । एतं परिहारं दूषयति– ) एवं वर्ण्यमाने यत्रापूर्वमङ्गं प्राकृतेनासंबद्धं ( श्रूयते ), तत्र तेनैव निराकाङ्क्षत्वात् अतिदेशो न ( प्राप्नोति, न चैवमिष्यते ) [ इत्यन्तैव लिखिते टुप्टीका । उत्तरं तु तन्त्ररत्नं मुद्रितां च टुप्टीकां तुलयित्वा गृह्णीमः ] ( समाधत्ते— यस्मादेवं संनिध्याम्नातपदार्थमात्रेण अपूर्वत्वे सोमस्य वर्ण्यमाने अतिप्रसङ्गो भवति– ) तस्मादन्यथा वर्ण्यते । कथं ? ( इत्याकाङ्क्षायां ) यत्र संनिधौ आम्नातं निराकाङ्क्षीकरणक्षमं ( भवति ) तत्र तेनैव निराकाङ्क्षत्वात् भवति कृत्स्नविधानता । इह तु ( सोमे ) संनिपत्योपकारकाः आम्नायमानाः निराकाङ्क्षीकरणसमर्थाः । उपहोमादिषु ( तु ) संनिपत्योपकारकत्वाभावात् कृत्स्नविधानता नास्ति, तस्मात्तत्र आकाङ्क्षा न निवर्तते ( तस्मात् तत्रातिदेशो न विहन्यते । सोमे तु नैराकाङ्क्ष्यात् नातिदेशः, इति नैष्टिकविध्यन्तप्राप्तिः । युक्त्यन्तरमाह– ) अथवा सादृश्येन विध्यन्तो नियम्यते, न च सोमस्य दर्शपूर्णमासाभ्यां ( व्यक्तचोदनाभ्यां सादृश्यं अस्ति । तस्य देवताऽभावेन ) अव्यक्तचोदनत्वात् । ननु उत्पत्तिवाक्ये ( 'सोमेन यजेत' इत्यत्र ) देवताऽभावात् अव्यक्तचोदनः, प्रयोगवाक्ये ( प्रकरणाम्नातानामैन्द्रवायवादीनां ) देवतानां विद्यमानत्वात् व्यक्तचोदनः । उच्यते । ग्रहणे देवताश्रवणं, न यागे । प्रसङ्गात्तु यागं निवर्तयन्ति, न तु तासां यागं प्रति तादर्थ्ये प्रामाण्यमस्ति । क्रत्वर्थेन ग्रहणेन देवताः संयुक्ताः, ता यागमभिलषन्ति, यागोऽपि देवताऽभिलषी, तयोः संबन्धोऽर्थात् भविष्यति । ( कथं ? ) यागो द्रव्यं गृह्णन् तदाश्रितां देवतां गृह्णाति । यथा प्रणयनं क्रत्वर्थे आत्मनिर्वर्तकं साधनमपेक्षमाणं ( पशुकामप्रयोगे चमसस्य बाधितत्वात् ) गोदोहनं पुरुषार्थं ( अपि प्रसङ्गात् ) गृह्णाति । ( तत्र ) यथा ( अनयोः ) अर्थात् संबन्धः, एवमिहापि । तस्मात् तादर्थ्याभावात् ( यागार्थत्वाभावात् ) देवताऽभावः ( यागस्य स्वार्थतया विनियुक्तदेवताऽभावः ) । एवं चेत् अव्यक्तचोदनः ( स्वार्थदेवतावैधुर्यमेव अव्यक्तत्वमिति भावः ) । अत आह सूत्रकारः 'अव्यक्तासु तु सोमस्य' इति ( ८।१।९।१६ ) । ननु एवमुपांशुयाजस्योत्पत्तिवाक्ये देवताश्रवणाभावात् अव्यक्तता ( प्राप्नोति, ततश्च तत्प्रकृतिः सोमः स्यात् ) । उच्यते । मन्त्रवर्णात् तत्र देवतायास्तादर्थ्यात् व्यक्तचोदनः (सः नाव्यक्तचोदनः) । अतः सादृश्याभावात् ( अपि ) अपूर्वत्वं ( सोमस्य ) । कृत्स्नविधानात् इति ( अस्यायमर्थः– ) यदाम्नायते धर्मजातं, तेन निराकाङ्क्षत्वात् अर्थप्राप्तं ( ऐष्टिकविध्यन्तं ) न गृह्णाति ।

**स्रुगभिघारणाभावस्य च नित्यानुवादात् । ६ ॥**

**भाष्यं**— स्रुगभिघारणस्य च अभावात् अनुवादः सोमे भवति । 'वृत्रं वै देवा वज्रं कृत्वा सोममघ्नन्, स्रुचौ बाहू, तस्मात् स्रुचि सोमहविर्नासाद्यते, न सोममाज्येनाभिघारयति' इति । तदुपपद्यते यदि अपूर्वः सोमः । अथ दर्शपूर्णमासप्रकृतिः स्यात् आज्येनाभिघार्य स्रुग्भ्यां हूयेत । तत्रैतद्दर्शनं नोपपद्यते । तस्मादपूर्वः ।

**विधिरिति चेत् । ७ ॥**

**भाष्यं**— इति चेत् पश्यसि स्रुगभिघारणाभावानुवाददर्शनात् अपूर्वः सोम इति । अथ कस्मात् दर्शपूर्णमासप्रकृतित्वेन प्राप्तस्य स्रुगभिघारणस्य प्रतिषेधकोऽयं विधिर्न भवतीति ? स्थितायां प्रतिज्ञायां सूत्रेण परिचोदयति ।

**न वाक्यशेषत्वात् । ८ ॥**

**भाष्यं**—नायं विधिः । कस्मात् ? वाक्यशेषत्वात् । अन्योऽत्र विधिराम्नातः । 'यदाह, अंशुरंशुस्ते देव सोमाप्यायतां' इति तस्य वाक्यशेषोऽयम् । कथं ज्ञायते ? तेन आकाङ्क्षितत्वात् । 'अवधिषुर्वा एतत् सोमं यदभिषुण्वन्ति, यदस्य स्रुचौ बाहू कुर्वन्ति, यच्च आज्यमन्तिकमकार्षुः, यदाह, अंशुरंशुस्ते देव सोमाप्यायतामिति,

यदेवास्याश्नन्तं क्षुरमकुर्वन् तदाप्याययन्ति ' इति ( यदेवास्यादातुः क्षुरनक्षुरः तदाप्याययन्ति इति पाठः क्वचित् ) । यदि अयमपि विधिः स्यात्, वाक्यं भिद्येत । तस्मात् न विधिः ।

शङ्के चानुपोषणात् । ९ ॥

भाष्यं— सोमे शङ्के ' यदनुपोष्य प्रयायाद् ग्रीवबद्धमेनममुष्मिन् लोके नेनीयेरन् ' इति । दार्शपौर्णमासिके विध्यन्ते सति नियतमुपोषणं स्यात् । तदा अनुपोषणशङ्का न युज्यते । अपूर्वत्वे तु प्राक् उपोषणविधानात् उपोष्य अनुपोष्य वा प्रयायात् । तत्र अनुपोषणशङ्का युज्यते । तस्मादपूर्वः ।

दर्शनमैष्टिकानां स्यात् । १० ॥

भाष्यं—यच्च प्रयाजानुयाजानां दर्शनं लिङ्गत्वेनोपदिष्टं, 'तस्यैकशतं प्रयाजानुयाजाः' इति, तत् दीक्षणीयादीनां सोमाङ्गभूतानां कर्मणां ये प्रयाजानुयाजाः, तेषां समुच्चयवचनम् । किं कारणं ? सोमस्यापूर्वत्वात् । तेषां च तावतां तत्र भावात् । अङ्गाङ्गमपि च 'तस्य' इति शक्यते वक्तुम् । यथा 'वाजपेयस्य यूपः' इति । तस्मादपूर्वः सोमः ।

सोम—पूर्वत्र लिङ्गादतिदेश इत्युक्तं, इह तु लिङ्गाभावेऽपि प्रवृत्त्या अतिदेशमाशङ्क्य निराक्रियते इति **संगतिः** । अत्र **प्राभाकरैः** अग्निहोत्रदर्शपूर्णमाससोमानुदाहृत्य तेषूपदेशेनोपकारसमाप्तिलक्षणं मूलप्रकृतित्वं चिन्त्यते इत्युक्तम् । **तदयुक्तं,** संनिपातिवर्गपौष्कल्येन निराकाङ्क्षतया अतिदेशाप्रसङ्गेन उपदेशेनोपकारसमाप्तिलक्षणमूलप्रकृतित्वस्याविचारितसिद्धतया अधिकरणवैयर्थ्यात् । **न च** न संनिपातिवर्गमात्रादुपकाराकाङ्क्षाशान्तिः, किंतु आरादुपकारकवर्गादपि, तस्य च इयत्तानिश्चायकाभावादतिदेशप्रसङ्गे तन्निराकरणेन मूलप्रकृतित्वसाधनायाधिकरणमावश्यकमिति **वाच्यम्** । तथा सति आरादुपकारकरहितस्याग्निहोत्रस्य सिद्धान्तेऽपि निराकाङ्क्षत्वाभावप्रसङ्गात् । **सूत्रार्थस्तु**—ऐष्टिकविध्यन्तस्य दीक्षणीयादिषु प्रवृत्तत्वात् सोमेऽपि प्रवृत्तिः स्यादिति ।

**वि—** ' विध्यन्त ऐष्टिकः सोमे स्यान्नो वा, स्यात् प्रवृत्तितः ।, उपदिष्टैर्नैरपेक्ष्याद् विध्यन्तो नैष्टिकोऽत्र हि ॥'

**भाट्ट**— यत्र द्रव्यदेवतादिसंनिपत्योपकारकाङ्गसामग्रीसकलस्य आम्नानरूपं कृत्स्नविधानं, तत्र अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमानां न परस्परं धर्मातिदेशः, स्वसंनिधौ यावदाम्नातैः अङ्गैरेव इतिकर्तव्यताऽऽकाङ्क्षाशान्तेः, सादृश्यस्यापि तादृशस्य नियामकस्याभावाच्च । ज्योतिष्टोमे तु ' तस्यैकशतं प्रयाजानूयाजाः ' इति प्रकृतिप्राप्तप्रयाजाद्यनुवादेन शतसंख्याविधानलिङ्गात् दीक्षणीयादिषु दार्शिकधर्माणां प्रवृत्ततया तन्मध्यवर्तिनि सोमेऽपि दार्शिकविध्यन्तप्राप्तिं मन्यमानस्योत्तरं, दीक्षणीयादिषु विद्यमानानामेव प्रयाजादीनां परंपरया सोमसंबन्धात् ' वाजपेयस्य यूपः' इतिवत् 'तस्य' इति षष्ठ्यनुवादोपपत्तेः, प्रवृत्तत्वस्य हेतोः आकाङ्क्षानिबन्धनत्वेन तदभावे असाधकत्वात् न सोमे अतिदेशः । अत एव ' घृतं वै देवा वज्रं कृत्वा सोममघ्नन्, स्रुचौ बाहू, तस्मात् स्रुचि सोमहविर्नासाद्यते, नाज्येनाभिघारयति ' इति दार्शिकासादनाद्यभावानुवाद उपपद्यते । नहि अयं पर्युदासविधिः, ' यदाह अंशुरंशुस्ते देव सोमाप्यायताम् ' इत्येतद्विध्येकवाक्यत्वेन तदर्थवादस्य स्वतन्त्रविधित्वानुपपत्तेः । किंच ' यदनुपोष्य प्रयायात् ग्रीवबद्धमेनं अमुष्मिंल्लोके नेनीयेरन् तस्मादुपोष्य ( दग्ध्वा वेदिं ) प्रयायात्' इत्युपोषणविधिरपि अनतिदेश उपपद्यते । अन्यथा अतिदेशादेव तत्प्राप्तिसिद्धेः विधिवैयर्थ्यात् । तस्मान्न कस्याप्यतिदेशः सोमे । ८।१।२.

**न्यायबिन्दुः**— सोमे इष्टिपशुषु दर्शेतिकर्तव्यताया उपस्थितेः सोमेऽपि तदन्वयशङ्कायां अभिषवादिसंनिपत्योपकारकाङ्गैर्निराकाङ्क्षत्वात् न सोमे तदन्वयः । ' तस्यैकशतं प्रयाजानुयाजाः' इति तु दीक्षाद्यङ्गद्वारकसंबन्धानुवादः इति सिद्धान्तः ।

**मण्डन**— ' न सोमयागो भवतीष्टिधर्मा । '

**शंकर**— ' इष्टेः सोमे नातिदेशः । ' ४.

* **अतिधृतिः** । पादेषु अक्षराणि १२।१२।८।८।८।१२।८।८ उदा० 'स हि शर्धो न मारुतं' ( ऋसं. १।१२७।६ ) बाल. पृ. ६६, के.

* **अतिनिचृत्** गायत्री । पादेषु अक्षराणि ७।६।७ उदा० 'पुरुतमं पुरूणां' (ऋसं. ६।४५।२९) । **बाल. पृ. ६६, के.**

* **अतिपातनस्य** अनारम्भरूपत्वे प्रमाणाभावात् यागाकरणस्य अनभ्युपगमत्वेन अतिपातनत्वाङ्गीकारेण तद्दर्शनोपपत्तिः । अनारम्भरूपत्वेऽपि वा द्रव्यार्जनस्य प्रयोगबहिर्भूतत्वाङ्गत्वाङ्गीकारेण प्रयोगान्तःपातेऽपि भृतिवननप्रयाजादिवदेव प्रतिप्रयोगावृत्त्यङ्गीकारेण अतिपातदर्शने न काचिदनुपपत्तिः । **भाट्ट.** ४।१।२ पृ. ८५.

* **अतिरात्रः** अहीनेषु आदितः अन्ततो वा भवति । 'सर्व एवाहीनः अन्यतरतोऽतिरात्रः' । **भा.** ८।२।६।३१, * **अतिरात्रः** कश्चित् सहस्रनसानि । 'अतिरात्रेण सहस्रसाध्येन यजेत ।' १०।६।१०।३।३७. * **अतिरात्रः** काम्यः संस्थाविशेषो ज्योतिष्टोमस्य । अयं अग्निष्टोमात् प्राक् नानुष्ठेयः । **वि.** ५।३।१३, * **अतिरात्र** प्रायणीयरूपः उदयनीयरूपश्च द्वादशाहे । ८।२।५. * **तत्र** ( ज्योतिष्टोमे ) संस्थाः समाम्नाताः अग्निष्टोमः, उक्थ्यः, षोडशी अतिरात्रः इति । **भा.** ३।६।१६।४१. * **अतिरात्राः** त्रयोदश— १ त्रयस्त्रिंशदशः प्रजाकामस्य । २ विषुवान् ज्येष्ठस्य ज्यैष्ठिनेयस्य । ३ गौः भ्रातृव्यवतः । ४ आयुः स्वर्गकामस्य आमयाविनो वा । ५ ज्योतिष्टोमातिरात्रः ऋद्धिकामस्य । ६ विश्वजिदतिरात्रः पशुकामस्य । ७ त्रिवृदतिरात्रः ब्रह्मवर्चसकामस्य । ८ पञ्चदशातिरात्रः वीर्यकामस्य । ९ सप्तदशातिरात्रः अन्नाद्यकामस्य । १० एकविंशतिरात्रः प्रतिष्ठाकामस्य । ११ अप्तोर्यामातिरात्रः । १२ अभिजिदतिरात्रः भ्रातृव्यवतः । १३ सर्वस्तोमातिरात्रः बुभूषतः, **इति काठीये । बाल. पृ. ३४.** * 'अतिरात्रेण प्रजाकामं याजयेत्' इति वचनात् अतिरात्रसंस्था काम्या । **भाट्ट.** ३।६।१६. * **अतिरात्रस्य** शतवारमभ्यासे शतातिरात्रो नाम गणः । तत्र द्वादशाहगतदशरात्रस्य विध्यन्तः संघत्वसामान्यात् । प्रतिदशरात्रस्य च आद्यन्तौ द्वावग्निष्टोमौ । तत्र स्तोत्रविवृद्ध्या अतिरात्रत्वं संपादनीयम् । तत्र स्तोत्रातिदेशस्तु ज्योतिष्टोमादेव, न तु द्वादशाहात् । **के.** * **अतिरात्रे एकविंशादौ** आगमेन संख्यापूरणे पाठक्रमेणैव ऋचः आगमयितव्याः । **भा.** ५।१।६।१३.

**अतिरात्रे एकविंशादौ काम्ये अधिकसंख्यापूरणमप्राकृतानां साम्नामागमेन कर्तव्यम् ॥**

**स्तोमविवृद्धौ प्राकृतानामभ्यासेन संख्यापूरणमधिकारात्, संख्यायां गुणशब्दत्वादन्यस्य चाश्रुतित्वात् । १०।५।६।१५ ॥**

**भाष्यं**— इह विवृद्धस्तोमकाः क्रतव उदाहरणं 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामं' इति । तत्रायं संशयः किं प्राकृतानां साम्नामभ्यासेन संख्या पूरयितव्या, उत अप्राकृतानामागमेनेति । किं प्राप्तम् ? अनियमः अविशेषात् । इति प्राप्ते ब्रूमः । स्तोमविवृद्धावभ्यासेन संख्या पूर्यते । एवं हि प्रकृतग्रहणं, इतरथा अप्रकृतक्रियेति । संख्या हि प्राकृतानां प्रधानभूतानां साम्नां गुणभावेनोच्यते, न प्राधान्येन । न चान्यत् सामद्रव्यं श्रुत्या विधीयते । यावांश्च श्रुतस्यार्थस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम् । तस्मादभ्यसितव्यानि प्राकृतानि सामानि यथा धुरि सामानीति ।

**टुप्**— पूर्वपक्षस्तु, प्राकृतस्य संख्याविधानं ( प्रकृतेष्वेव संख्याविधानम् ) संख्येयस्याबाधितत्वात् ( नहि केन चित् शब्देन संख्येयानां साम्नां निवृत्तिर्गम्यते ) । तस्मात् तेषामेवाभ्यासः ( संख्येयानां संख्यासंप्रत्ययार्थम् ) यथा प्रयाजानां एकादशत्वे विधीयमाने संख्या- (मात्र-) विधानं संख्येयास्तु त एव ( अवतिष्ठन्ते पशौ ) ।

**आगमेन वाऽभ्यासस्याश्रुतित्वात् । १६ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । अप्राकृतानां साम्नामागमेन संख्या पूरयितव्येति । कुतः ? अभ्यासो नहि श्रूयते । एतावत् श्रूयते, 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इति । यावांश्च श्रुतस्योत्सर्गे दोषस्तावानश्रुतकल्पनायाम् । नन्वागमोऽपि न श्रूयते । उच्यते । उभयस्मिन् अश्रूयमाणे आगमो न्याय्यः । एवमागमपूरिता संख्या समञ्जसा भविष्यति । इतरथा अभ्यासपूरिता असमञ्जसा स्यात् । तस्मादागमेन पूरयितव्येति ।

**टुप्**— सिद्धान्तस्तु पृथक्त्वनिवेशः संख्यायाः ( न्याय्यः ) यत्र वचनं नास्ति । ( वचनेन तु बाध्यते यथा धुर्येषु 'आवृत्तं धूर्षु स्तुवते' इति । ) यत्र

संख्येयानुवादेन संख्याविधानं, यथा 'एकादश प्रयाजान्' इति। (तत्र हि प्रयाजा वाक्येनोपात्ताः) तत्र संख्याऽभ्यस्यते (अभ्यासेन संख्या पूर्यते)। उपात्तत्वात् संख्येयस्य। इह तु नोपात्तं संख्येयं (वाक्येन), यथा प्रयाजेषु। तस्मादत्र पृथक्त्वनिवेश एव, (नाभ्यासः)।

**संख्यायाश्च पृथक्त्वनिवेशात्। १७॥**

**भाष्यं**--इतश्चाऽऽगमेनेति। कुतः? पृथक्त्वनिवेशिनी हि संख्या यथा अष्टौ घटा इति। अभ्यासेनापृथक् स्यात्। तस्मादागमेन पूरयितव्येति।

**पराक्शब्दत्वात्। १८॥**

**भाष्यं**--इतश्चाऽऽगमेनेति। कुतः? पराक्शब्दो हि भवति। 'पराग् बहिष्पवमानेन स्तुवन्ति' इति। स चानभ्यासस्य वाचकः। यथा, 'पराचीः सामिधेनीरन्वाह' इति, अनभ्यस्ता इति गम्यते। तस्मादागमः।

**उक्ताविकाराच्च। १९॥**

**भाष्यं**-- इतश्चाऽऽगमः। एवमुक्तस्याविकारो भवति। किमिदं अविकार इति? अपुनर्वचनम्। तत्र जामितादोषो न भविष्यति। अभ्यासे हि स स्यात्। 'जामि वा एतद्यज्ञस्य क्रियते यदेकं भूयः क्रियेत' इति।

**अश्रुतित्वान्नेति चेत्। २०॥**

**भाष्यं**--इति चेत्, इति पुनर्यदुक्तमागमोऽपि नैव श्रूयते इति। तत्परिहर्तव्यम्।

**स्यादर्थचोदितानां परिमाणशास्त्रम्। २१॥**

**भाष्यं**--अर्थेन सामानि चोद्यन्ते। कतमेनार्थेन? 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इत्येवमादीनां वाक्यानामर्थेनेति। नह्यनागम्यमानेषु सामसु एताः संख्याः सामञ्जस्येन संभवन्ति। तस्मादर्थचोदितानामिदं परिमाणशासनं कृत्वा कृतार्थः शब्दः 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इति अर्थप्राप्तमागमं न शक्नोति वारयितुम्। तस्मादागमेन पूरणमिति।

**आवापवचनं चाभ्यासे नोपपद्यते। २२॥**

**भाष्यं**--इतश्चाऽऽगम इति पश्यामः। आवापवचनं हि भवति। 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्। अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्ति' इति। एतदभ्यासे नावकल्पते। तस्मादप्यागम इति।

**साम्नां चोत्पत्तिसामर्थ्यात्। २३॥**

**भाष्यं**--इतश्चाऽऽगमः। कुतः? साम्नां ह्येवमुत्पत्तिरर्थवती भवति 'दश सामसहस्राणि शतानि च चतुर्दश। साङ्गानि सरहस्यानि यानि गायन्ति सामगाः॥ अशीतिशतमाग्नेयं पावमानं चतुःशतम्। ऐन्द्रं स्यात् सप्तविंशानि यानि गायन्ति सामगाः॥' इति। इतरथा एषां साम्नामुत्पत्तिरनर्थिका स्यात्। तस्मादप्यागम इति।

**धुर्येष्वपीति चेत्। २४॥**

**भाष्यं**--अथ यदुपवर्णितं, यथा धुरि सामस्विति। तत्परिहर्तव्यम्।

**नाऽऽवृत्तिधर्मत्वात्। २५॥**

**भाष्यं**--नैतदेवं, युक्तं धुरि सामसु, आवृत्तिधर्मकाणि हि तानि, वचनप्रामाण्यात्। इदं तत्र वचनं 'आवृत्तं धूर्षु स्तुवते' 'पुनरावृत्तं पृष्ठैरुपतिष्ठते' इति। वचनात्तत्र क्रियते। तद्वदिह वचनं नास्ति। तस्माद्विषममेतदुपवर्णनम्। अत्राऽऽगमेन संख्या पूरयितव्येति सम्यगेतदिति।

**सोम** — पूर्वत्र यथा 'सप्तभिराधूनोति' इत्यादेः संख्यामात्रविधायकत्वं, एवमिहापि एकविंशेन इत्यादीनां संख्यामात्रविधायकत्वात् अभ्यासः इत्युत्थितेः **संगतिः**। **ननु** अयं विचारो न तावत् पवमानविषयः, तत्र 'त्रीणि ह वै यज्ञस्योदराणि' इत्यावापवचने जाग्रति अभ्यासेन संख्यापूरणमिति पूर्वपक्षानुत्थितेः। नापि स्तोत्रान्तरविषयः, स्तोत्रान्तरेषु सिद्धान्तेऽपि अभ्यासेनैव संख्यापूरणाभ्युपगमात्। तस्मादिदमधिकरणमनर्थकं **इति चेन्न**। नहि 'त्रीणि' इति वचनमपूर्वविधिः, किंतु परिसंख्याविधिः। तथा च असत्यस्मिन्नधिकरणे यत्र क्रतौ प्राकृतेभ्योऽधिकानि सामानि, तत्र पठितानां साम्नां पाठबलात् यत्र क्व चिदावापे प्राप्ते 'पवमानेष्वेव, नेतरेषु' इत्येवं परिसंख्याय 'त्रीणि ह वै' इत्यस्य चरितार्थत्वात्। यत्र विवृद्धस्तोमके न वैशेषिकसामपाठः, तत्र कथं 'पवमानेष्वागमः, इतरत्राभ्यासः' इति व्यवस्था स्यात्, आगमप्रापकवचनाभावात् न्यायव्युत्पादना-

भावाच्च । सति अस्मिन्नधिकरणे पवमानतदितरसाधारण्येन आगमे व्युत्पादिते, वैशेषिकसामपाठस्थले इव तदितरस्थलेऽपि पवमानेषु सिध्यत्यागमः, तद्व्यापकन्यायस्य व्युत्पादनात्, पाठवलप्राप्तस्यापि पवमानेष्वेव नियमितत्वात्, इतरस्तोत्रेषु अभ्यासश्च सिध्यति । तस्मात् सामान्येन सर्वस्तोत्रविषय एवायं विचारः । **सूत्रार्थस्तु**—स्तोमविवृद्धौ प्राकृतानां साम्नामभ्यासेन संख्यापूरणं स्यात् अवि(धि)कारात् चोदकतः संनिधानात् तद्गुणत्वेन संख्यामात्रविधानात् सामान्तरस्याश्रुतत्वाच्चेति ।

**वि**—'स्तोमवृद्धिः किमभ्यासादागमाद्वा, ऽग्रिमो यतः । तत्कल्प्यमश्रुतं, मैवं संख्याऽऽवापादिलिङ्गतः ॥' तस्मादागमेन वृद्धिः ।

**भाट्ट**—विवृद्धस्तोमकेषु क्रतुषु 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्' इत्यादिषु सामावापः पवमानविषय एव । स्तोत्रान्तरेषु तु परिसंख्यायते इत्युक्तम् । तदिह सर्वस्तोत्रेषु सामागमस्य प्राप्तिरेव नास्ति, कथं तत्परिसंख्यायते इत्याक्षिप्य समाधीयते । संख्यासंपत्तिर्हि प्रयाजैकादशत्वन्यायेन (५।३।१) अभ्यासेनाप्युपपत्तेर्न सामान्तरागममाक्षिपति । किंच संख्याऽत्र स्तोमरूपा । स्तोमश्च स्तोत्रीयासंख्याकृतस्तुतिसंख्येत्युक्तम् । स्तोत्रीया स्तोत्रसाधनीभूता मुख्या ऋगेव । साम तु तत्संस्कारकतया साधनम् । अतः ऋग्भेदस्यैवावश्यकत्वात् तासामेवागमः स्यात् न साम्नां, तेषां तु प्राकृतानामेव प्रकृतौ स्तोत्रापूर्वसंबन्धिऋक्संस्कारकत्वात्, प्रतिप्रधानं गुणावृत्तिन्यायेन आगम्यमानास्वपि आवृत्तौ न कोऽपि दोषः । वस्तुतस्तु प्रयाजैकादशत्वन्यायेन (५।३।१) ऋचामप्यभ्यास एव । आवापविधिस्तु यावद्वचनमपूर्वविधिरेव । **इति प्राप्ते**, प्रयाजोद्देशेन हि विधीयमाना संख्या प्रयाजशब्दस्य कर्मविशेषवाचित्वादभ्यासमन्तरेण संपादयितुमशक्तेर्भवति तदापादिका । इह तु स्तोत्रीयात्वस्य आगम्यमानास्वपि संभवात् पृथक्त्वनिवेशित्वानुरोधेन संख्यायाः प्राकृतस्तोत्रीयातिरिक्तस्तोत्रीयाऽऽक्षेपकत्वमेव । अत एव तासां दाशतयीभ्य आनीयमानानामेतत्कर्माङ्गत्वे संख्याऽन्यथाऽनुपपत्तिरेव प्रमाणम् । स्तोत्रीया च न केवला ऋक्, प्रगीतमन्त्रस्यैव स्तुतिसाधनत्वात् । अतः सर्वस्तोत्रेषु 'साम्नामृचां चागमः' इतिन्यायादवगतेः 'अत्र ह्येवावपन्ति' इत्यनेन 'त्रिच्छन्दा आवापः' इत्यावापपदेन वा पूर्वोक्तविधया सामावापस्य पवमानमात्रविषयत्वसंपादनात् स्तोत्रान्तरेषु तत्परिसंख्या युक्तैव । अतः स्तोत्रान्तरे साम्नामभ्यास एव ।

**न्यायबिन्दुः**— एकविंशेनातिरात्रेणेति स्तोमवृद्धौ सामान्तरागमः एव संख्यासामञ्जस्यात्, ऋचां तु नागमः, अत्र ह्येवावपन्तीत्यनेन आवतव्यानां गायत्र्याद्याधारत्वनियमात्, ऋचामसंभवात् । सामागमोऽपि अत एव पवमानस्तोत्रविषयः एव, स्तोत्रान्तरेष्वगत्या अभ्यास इति ज्ञेयम् ।

**मण्डन**— 'सामागमेनाधिकसंख्यपूर्तिः ।'

**शंकर**— 'स्तोमे सामागमोऽधिके ।'

* अतिरात्रे एकविंशे त्रिणवे त्रयस्त्रिंशे च विवृद्धानां तृचानां क्रमेण चतुर्णां षण्णां अष्टानां च पर्यासोत्तरं निवेशः, न तु पर्यासात् पुरस्तात् बहिष्पवमाने । त्रि. ५।३।४, * अतिरात्रे कामभेदेन विवृद्धाः स्तोमा उक्ताः 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामं' इति । तत्र बहिष्पवमाने ऊर्ध्वगानमेव, नावृत्तिः । अधिकसंख्यापूरणाय क्रमेण चत्वारः षट् अष्टौ च तृचा आगमयितव्याः । आगमितानां च ऋचां अन्ते निवेशः । माध्यंदिनपवमाने च सामागमेन संख्यापूरणम् । आगमितानां च साम्नां 'उच्चा ते जातमन्धसः' इति गायत्रे तृचे आवापः । आर्भवपवमाने च 'स्वादिष्ठया' इति गायत्रे तृचे अधिकसामावापः इति विशेषः । अनयोरुत्तरयोः पवमानयोः आवृत्तिरेव नोर्ध्वगानम् । ५।३।४–५.

**अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थं बहिष्पवमाने आगमितानां तृचानां पर्यासोत्तरं निवेशः ॥**

**स्तोमविवृद्धौ बहिष्पवमाने पुरस्तात् पर्यासादागन्तवः स्युस्तथा हि दृष्टं द्वादशाहे । ५।३।४।७ ॥**

**भाष्यं**—सन्ति विवृद्धस्तोमकाः क्रतवः, 'एकविंशेनातिरात्रेण प्रजाकामं याजयेत्, त्रिणवेनौजस्कामं, त्रयस्त्रिंशेन प्रतिष्ठाकामं' इति । तत्राऽऽगमेन संख्यापूरणं

वक्ष्यते ( १०।५।७।२६ )। अथ बहिष्पवमाने वैकृतेष्वानीयमानेषु भवति संशयः किं वैकृतानामन्ते निवेशः, उत प्राक् पर्यासादिति। किं प्राप्तम्? पुरस्तात् पर्यासादागन्तवः स्युः, तथा हि दृष्टं द्वादशाहे। 'स्तोत्रीयानुरूपौ तृचौ भवतः। वृषण्वन्तस्तृचा भवन्ति। तृच उत्तमः पर्यासः' इति। इहापि प्राक् पर्यासादागन्तुभिर्भवितव्यम्।

**टुप्**— बहिष्पवमानस्य अन्त्यतृचात् पूर्वमागन्तवः ( तृचाः ) स्युः ( नान्ततः )। कुतः? ज्योतिष्टोमे बहिष्पवमाने त्रयस्तृचा अभूवन् स्तोत्रीयः अनुरूपः पर्यासश्चेति ( एवंसंज्ञकाः )। द्वादशाहस्य षाडहिके द्वितीयेऽहनि स्तोत्रीयानुरूपौ ( प्राकृतौ ) पठित्वा ( ततः परे ) अपूर्वास्तृचाः ( वृषण्वन्तः ) पठ्यन्ते। तत उत्तरः ( प्राकृत एव ) पर्यासः पठितः। तस्मात् ( द्वादशाहे ) पर्यासात् पूर्वं ( आगन्तूनां ) निवेशो दृष्टः। इहापि ( विवृद्धस्तोमकेषु ऋक्वन्तरेष्वपि ) तथैव भवितुमर्हति।

**पर्यास इति चान्ताऽऽख्या। ८॥**

**भाष्यं**— पर्यासशब्दश्च अन्तवचनो लोके दृश्यते, यथा 'क्षेत्रपर्यासः, नदीपर्यासः' इति। एवं पर्यासः अन्ते कृतो भविष्यति।

**टुप्**— पर्यास इति चान्त उच्यते। तस्य ( पर्यासस्य ) उपरि यदि अन्ये ( आगन्तवस्तृचाः ) क्रियेरन्, ततः ( तस्य ) अन्तता व्याहन्येत।

**अन्ते वा, तदुक्तम्। ९॥**

**भाष्यं**— अन्ते वा एवंजातीयकं वैकृतं स्यात्। उक्तं 'अन्ते तु बादरायणः' इति ( ५।२।९।१९ )।

**टुप्**— ( अन्ते तु बादरायणः इति— ) न्यायात् अन्ते एवैते निवेश्याः। द्वादशाहे तु प्रत्यक्षपाठात् वृषण्वतां मध्ये निवेशः। द्वादशाहप्राकृतिकेष्वपि ( सत्राहीनेषु ) विशिष्टानामेव ( वृषण्वतां ) तृचानां ( चोदकबलात् ) मध्ये निवेशः। नहि अयमपूर्वाणां ( पर्यासात् प्राग्भावित्व- ) धर्मोपचयः स्यात्।

**वचनात्तु द्वादशाहे। १०॥**

**भाष्यं**— अथ यदुक्तं 'तथा हि दृष्टं द्वादशाहे' इति, तत्परिहर्तव्यम्। अत्रोच्यते। वचनात् द्वादशाहे भवति। 'स्तोत्रीयानुरूपौ तृचौ भवतः, वृषण्वन्तस्तृचा भवन्ति, तृच उत्तमः पर्यासः' इति। नहि वचनस्यातिभारोऽस्ति।

**अतद्विकारश्च। ११॥**

**भाष्यं** — न चायं तद्विकारः, यत्ततो धर्मान् गृह्णीयादिति।

**तद्विकारेऽप्यपूर्वत्वात्। १२॥**

**भाष्यं**—योऽपि तद्विकारः, तत्राप्यन्ते एव निवेशः। कुतः? अपूर्वत्वात् वृषण्वतां तृचानाम्। वृषण्वन्तावेव प्राक् पर्यासात् 'यावद्वचनं वाचनिकं, न सदृशानुदसंक्रामति'।

**शा**—'तत्र प्रत्यक्षपाठेन द्वादशाहे वृषण्वताम्। प्राक् पर्यासान्निविष्टत्वादन्यत्राप्यनुमीयते ( पर्यासात् प्राङ् निवेशः )॥' **उच्यते**, 'नेदृशेनानुमानेन शास्त्रार्थोऽध्यवसीयते। समाख्या प्रकृतावेव चरितार्थेति साऽप्यतः॥ अन्ते निवेशमागन्तोर्न्यायप्राप्तं न बाधते। द्वादशाहविकारेऽपि केवलानां वृषण्वताम्॥ प्राक् पर्यासान्निवेशः स्यादतिदेशविधेर्बलात्। अन्ये त्वागन्तवोऽन्ते स्युर्बादरायणदर्शनात्॥'

**सोम**— पूर्वत्र धाय्याशब्दवत् इह पर्यासशब्दोऽस्ति इति प्रत्यवस्थानात् संगतिः।

**वि** —'स्तोमवृद्धौ किमागन्तोर्मध्येऽन्ते वा, ऽस्तु मध्यतः। द्वादशाहव, दन्यत्र मध्यानुक्तेर्न मध्यतः॥' तस्मादागन्तूनामन्ते निवेशः। एकविंशेऽतिरात्रे तत्पूरणाय चत्वारस्तृचा आगमयितव्याः। त्रिणवस्तोमपूरणाय षट् तृचाः। त्रयस्त्रिंशस्तोमपूरणाय अष्टौ तृचाः।

**भाट्ट**—प्रकृतौ बहिष्पवमाने त्रयस्तृचाः स्तोत्रीयोऽनुरूपः पर्यासश्चेत्येवंसंज्ञाः। विवृद्धस्तोमकायां विकृतौ बहिष्पवमाने ऋगागमो वक्ष्यते। तत्रागम्यमानानामृचां प्राक्पर्यासान्निवेशः। पर्यासशब्दस्य 'नदीपर्यासः, क्षेत्रपर्यासः' इत्यादौ अन्तवचनत्वेन प्रसिद्धेः समाख्ययैवान्तिमस्थानत्वावगतेः तदबाधार्थं प्राक्पर्यासादागन्तूनां निवेशकल्पनात्। अत एव द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि पञ्चदशस्तोमके स्तोत्रीयानुरूपौ पठित्वा वृषण्वन्तौ तृचौ समाम्नाय पश्चात् पर्यासः पठितः। **इति प्राप्ते, प्रकृति-**

क्रमस्यानुरूपानन्तर्यस्य पर्यासे बाधे प्रमाणाभावात्, समाख्यायाश्च प्रकृतौ पाठप्राप्तान्तिमस्थानकत्वानुवादकत्वेन स्थानविधिकल्पकत्वाभावात् अन्ते एवागन्तूनां निवेशः। द्वादशाहे पार्ष्ठिके द्वितीयेऽहनि तु वाचनिकं वृषण्वतोस्तृचयोः प्राक्पर्यासादनुष्ठानम्। तदपि तयोरेव। तद्विकारेष्वन्येषामागमस्त्वन्ते एव।

**न्यायबिन्दुः**—बहिष्पवमाने स्तोत्रीयोऽनुरूपः पर्यासश्चेति त्रयस्तृचा विवृद्धस्तोमकेषु क्रतुषु अतिदेशप्राप्ताः। तत्रागन्तूनामृचां पर्यासात् प्राक् निवेशः। द्वादशाहे वृषण्वतीनां पर्यासात् पाक् पाठदर्शनात्, तत्रापि तथाऽनुमानात् पर्यासशब्दस्य चान्तवचनत्वप्रसिद्धेः। इति प्राप्ते, अनुमानस्याप्रमाणत्वादन्ते निवेश एव न्यायादिति सिद्धान्तः।

**मण्डन**—'स्तोमेष्वागन्त्वृचोऽन्ततः।'

**शंकर**—'आगन्त्वृचोऽन्ते पर्यासात्।'

**अतिरात्रे काम्यस्तोमविवृद्धौ संख्यापूरणार्थं माध्यंदिनार्भवपवमानयोरागमितानां साम्नां गायत्रीछन्दस्के तृचे आवापः॥**

**अन्ते तूत्तरयोर्दध्यात्। ५।३।५।१३॥**

**भाष्यं**—इहापि विवृद्धस्तोमकाः क्रतव उदाहरणम्। तत्रोत्तरयोः पवमानयोः साम्नामागम इति वक्ष्यते (१०।५।७।२६)। तत्र आगम्यमानेषु सामसु संदेहः किं तेषामन्ते निवेशः, उत गायत्रीबृहत्यनुष्टुप्सु इति। किं प्राप्तम्? अन्ते, उत्तरयोर्दध्यात्। उक्तोऽत्र न्यायः, 'अन्ते तु बादरायणः' इति। तस्मादन्ते निवेश इति।

**अपिवा गायत्रीबृहत्यनुष्टुप्सु वचनात् ।१४॥**

**भाष्यं**—गायत्रीबृहत्यनुष्टुप्सु निवेशः। कस्मात्? वचनात्। 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुबिति, अत्र ह्येवाऽऽवपन्ति, अत एवोद्वपन्ति' इति वचने नास्त्युपालम्भः। तस्मान्नैषामन्ते निवेश इति।

**शा**—अथवा नैवात्र विचारः पूर्वोक्तबहिष्पवमानग्रहणप्रत्युदाहरणमात्रमिदम्। बहिष्पवमाने एवान्ते निवेशः, उत्तरयोस्तु (पवमानयोः) गायत्र्यादिष्वेव निवेशो वचनादिति।

**सोम**—पूर्ववत् अन्ते निवेश इति प्रत्यवस्थानात् **संगतिः**। दशमे 'पवमाने स्यातां तस्मिन्नावापोद्वापदर्शनात्' (१०।४।११।२१-२२) इत्यधिकरणे अस्य वचनस्य (अत्र ह्येवावपन्ति इत्यादेः) विधित्वं स्थापयिष्यते, एवं च पूर्वपक्षाभावात् नेदमधिकरणं युक्तम्।

**वि**—'आर्भवे साम्न आगन्तोरन्ते मध्येऽथवा, ऽग्रिमः। पूर्ववत्, त्रीणि यज्ञस्येत्युक्त्या मध्ये निवेशनम्॥' 'उच्चा ते जातमन्धसः' इति माध्यंदिनपवमानस्य आद्ये गायत्रे तृचे, 'स्वादिष्ठया' इति आर्भवपवमानस्य आद्ये गायत्रे तृचे च आवपनीयम्।

**भाट्ट**—यत्र तु विवृद्धस्तोमकेष्वेव क्रतुषु उत्तरयोर्माध्यंदिनार्भवपवमानयोर्वक्ष्यमाणः सामागमः, तत्र स नान्ते, अनारभ्याधीतेन 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप्, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति वचनेन अप्रातिबलब्धविधिशक्तिकेन गायत्र्यादिष्वेव सामावापविधानात्। अतो नान्ते इति प्रत्युदाहरणमात्रमिदम्।

**न्यायबिन्दुः**—विवृद्धस्तोमकेष्वेव बहिष्पवमानोत्तरयोर्माध्यंदिनार्भवपवमानयोः सामागमो वक्ष्यमाणोऽन्ते तृचे। इति प्राप्ते, 'त्रीणि ह वै यज्ञस्योदराणि गायत्री बृहत्यनुष्टुप् च, अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति वचनात् पवमानगतगायत्र्यादिष्वेव निवेश इति सिद्धान्तः।

**मण्डन**—'गायत्र्यादावृगावापः।' ऋगावापः तदध्यूढसामावापः।

**शंकर**—'गायत्र्यादिषु सामसु।'

* अतिरात्रे क्रतुपशवः चत्वारः आग्नेयः, ऐन्द्राग्नः, ऐन्द्रो वृष्णिः, सारस्वती मेषी चेति। **भा.** ९।१।१७।४५, * अतिरात्रे गृह्णाति षोडशिनं इति विधाय (नातिरात्रे षोडशिनं गृह्णाति इति) प्रतिषेधार्थं स्यात्। १०।८।६।९, * 'अतिरात्रे गृह्णाति षोडशिनं' इति विहितः षोडशी 'नातिरात्रे गृह्णाति षोडशिनं' इति प्रतिषिद्धः। तेन पक्षे द्वयोः स्तोत्रीययोः अतिरेकः, पक्षे तिसृणाम्। तस्माददोषः। कथं पुनरयं द्वयोस्तिसृणां वा अतिरेकः? (उच्यते-) त्रिवृद्बहिष्पवमानं, तत्तान्नवकम्। पञ्चदशानि

आज्यानि, तानि तावच्चत्वारि, तेन सा षष्टिः। पञ्चदशो माध्यंदिनः पवमानः। तया पञ्चदशसंख्यया सह पूर्वया च नवसंख्यया चतुरशीतिः। (९+६०+१५=८४)। सप्तदशानि पृष्ठानि चत्वारि, सप्तदश आर्भवः पवमानः। पञ्च सप्तदशकानि तानि इति पञ्चाशीतिः। पूर्वया चतुरशीत्या सह एकोनसप्ततिशतम्। एकविंशं यज्ञायज्ञीयं, तया एकविंशत्या सह तस्य 'नवतिशतं (१९०) स्तोत्रीयाः' इति ब्राह्मणवादः अग्निष्टोममात्रमभिप्रेत्य उच्यते। सा विराट् संपूर्णा। विराट् इति दशकाख्या। (१९०÷१० अवशिष्टं न किमपि इति विराट् संपूर्णा)।

त्रय एकविंशका उक्थ्यपर्यायाः, सा त्रिषष्टिः, एकविंशः षोडशी, तया एकविंशत्या सह चतुरशीतिः। पञ्चदशका रात्रिपर्यायास्त्रयः। तत्र एकैकपर्यायः चतुःस्तोत्रः। तत् अशीतिशतं, संपूर्णा विराट् (१८०÷१० पूर्णम्)।

त्रिवृत् रथंतरं पञ्चसाम तन्नवकम्। ततः चतुरशीतेः एकं नवकमागच्छति (अग्निष्टोमोत्तरं षोडश्यन्ता या चतुरशीतिः तस्याः एकं नवकं अधिकं आगच्छति। अयमर्थः—अग्निष्टोमान्तं १९० स्तोत्रीयाः। ततः षोडश्यन्तं ८४, ततः रात्रिपर्यायाणां १८०, रथंतरं ९, मिलित्वा ४६३ स्तोत्रीया भवन्ति। तत्र दशभिर्भागहरणे तिस्रः अतिरिच्यन्ते इति। तदाह—) तथा तिस्रः संस्तुतानां विराजं अतिरिच्यन्ते। यदा षोडशी न गृह्यते, तदा एकविंशत्या विना (४६३−२१=४४२ दशभिर्भक्ते) द्वे संस्तुतानां विराजं अतिरिच्येते। २।४।२।२७, * अतिरात्रे चयनं कर्तुं शक्यते। 'तमतिरात्रेण' तं अग्निं अतिरात्रेण अनुयजति इति। १०।५।२३।७८. * अतिरात्रे तदुत्तरं (षोडश्याः उत्तरं) द्वादश स्तोत्रात्मकाः त्रयो रात्रिपर्यायाः आश्विनस्तोत्रं च। सा अतिरात्रसंस्था। (अत्र एकोनत्रिंशत् स्तोत्राणि) **भाट्ट.** ३।६।१६. * अतिरात्रे बहिष्पवमाने। बहिष्पवमानशब्दे द्रष्टव्यम्। **वि.** * 'अतिरात्रे ब्राह्मणस्य गृह्णीयात्' अत्र न पूर्वसंस्थोपमर्देन संस्थान्तरविधिः। ब्राह्मणस्य विकल्पः, अन्येषां प्रापकप्रमाणाभावादेव स नैव, इति ध्येयम्। (गृह्णीयात् षोडशिनं नाम सोमग्रहम्) **भाट्ट.** १०।५।१२. * अतिरात्रे माध्यंदिनार्भवपवमानयोः चोदकप्राप्तौ पञ्चदशसप्तदशस्तोमौ बाधितुं एकविंशादिः विवृद्धस्तोमः वचनादनुष्ठीयते। तत्र बहिष्पवमानवत् ऋगागमनं न भवति, किंतु सामागमेन स्तोमपूरण इति दशमे वक्ष्यते। तत्र 'उच्चा ते जातमन्धसः' इत्येष माध्यंदिनपवमानस्य आद्यस्तृचः। 'स्वादिष्ठया' इत्येष आर्भवपवमानस्य। तावुभौ गायत्रीछन्दस्कौ, तयोरावापः। न तु त्रिष्टुप्जगतीछन्दस्कयोस्तृचयोः साम आवपनीयम्। **वि.** ५।३।५. * अतिरात्रे 'यदि बृहत्सामाऽतिरात्रः स्यात्, सौभरमुक्थ्यानां ब्रह्मसाम कार्यम्' इति नैमित्तिकं सौभरमुक्तम्। **कौ.** २।२।१३।२७ पृ २९३.

### अतिरात्रे रात्रिपर्यायेषु ग्रहचमसानां समुच्चयः॥

रात्रिपर्यायेष्वनाम्नातसोमानि स्तुतशस्त्राणि सन्ति। तेषु सोमाकाङ्क्षायां 'ग्रहं वा गृहीत्वा चमसं वोन्नीय स्तोत्रमुपाकुर्यात्' इति वचनाद् ग्रहो वा चमसो वा विकल्पेन प्राप्नोति। ग्रहाणां वचनान्तरैः प्राप्तत्वेन तदंशे अस्य वचनस्यानुवादमात्रत्वेन चमसैकविधानपरत्वात् चमस एव। **इति प्राप्ते,** क्व चित्केवलग्रहाणां केवलचमसानां च, क्व चित् समुच्चितानां च तत्तद्यागाभ्याससंनिहितवचनैरेव यथायथं प्राप्तत्वेन तेषु स्तोत्रशस्त्रोभयवत्सु स्तोत्रोपाकरणे विकल्पितकालमात्रविधानार्थे प्रवृत्तेऽस्मिन्वाक्ये 'स्तुतशस्त्रवतः सोमानाह' इत्यत्रैव समासवचनमात्रम्। रात्रिपर्यायेषु तु ग्रहचमसानां समुच्चय एव, तत्समुच्चयवदभ्यासविकारत्वात्। **संकर्ष.** ३।३।१६.

* अतिरात्रे 'व्यत्यस्तं षोडशिनं शंसति' इति व्यत्यासः श्रौतः क्रमः षोडशिशस्त्रशंसने। **भा.** ५।१।४।७. * अतिरात्रे षट् स्तोमाः त्रिवृत्, पञ्चदशः, सप्तदशः, एकविंशः, त्रिणवः (२७), त्रयस्त्रिंशः इति। अत्र षोडशी ग्रहो भवति। **के.** * 'अतिरात्रे षोडशिनं गृह्णाति'। अग्रहणेऽपि न्यूनताऽभावात् ग्रहणे फलभूमा। **भाट्ट.** ११।१।५. * 'अतिरात्रे षोडशिनं गृह्णाति' इति, 'नातिरात्रे षोडशिनं गृह्णाति' इति च श्रूयते। अत्र अनुष्ठानविकल्पाङ्गीकारेण भिन्नप्रयोगविषयत्वात् गत्यन्तराभावात् विकल्पोऽभ्युपेयः। **वि.** १०।८।३.

* 'अतिरात्रे षोडशिनं गृह्णाति' इति वचनं क्व विनिविश्यते, तत् 'अतिरात्रे ब्राह्मणस्य' इत्येतदेव ब्राह्मणपदपरित्यागेन इति वेदितव्यम्। भिन्नत्वेऽपि वा ब्राह्मणवाक्येन उपसंहारः इति ध्येयम्। अस्तु वा तेनैव सर्वेषां प्रसक्तस्य षोडशियागाभ्यासस्य 'नातिरात्रे' इत्यनेन विकल्पः। ब्राह्मणवाक्ये तु तन्नियमार्थं पुनःश्रवणम्। भाट्ट. १०।५।१२, * 'अतिरात्रे षोडशिनं गृह्णाति,' 'नातिरात्रे षोडशिनं गृह्णाति' इति यत्र तस्मिन्नेवार्थे विधिः तस्मिन्नेव च निषेधः, तत्र विकल्पस्यावश्यकत्वात् नञर्थः प्रतिषेध एव, न तु पर्युदासः, लक्षणायां प्रमाणाभावात्। नापि अर्थवादः प्राप्त्यभावात्। १०।८।३. *अतिरात्रे षोडशिनि 'अनुष्टुप्छन्दस इति भक्षमन्त्रं नमति' इति दर्शनम्। भा. ३।२।११।२९. * अतिरात्रे सारस्वती मेषी चतुर्थः क्रतुपशुः। तस्याः अग्निप्रैषे 'प्रासा अग्निं' इत्यादिरंशः नोच्चार्यः। कृत्वाचिन्तेयम्। वि. ९।१।१७. * अतिरात्रयोः प्रायणीयोदयनीयरूपयोः ऐकादशिनाः पशवः विभज्य कर्तव्याः। 'तत्र प्रायणीये पञ्चालभ्यन्ते, षट् उदयनीये इत्यध्यवस्यामः'। भा १०।६।४।१०, * अतिरात्रगतानां स्तोत्राणां शतातिरात्रादिषु अतिदेशः। ८।३।५।१०–११. * अतिरात्रप्रथमाहारोत्तरमपि अग्निष्टोमसंस्थां कृत्वैव उद्भिदादयः कार्याः। भाट्ट. ५।३।१३. * 'अतिरात्रमेके प्रथमं यज्ञमधीयते, अग्निष्टोमं प्रथमं वयम्'। सत्याषाढः ७।१।७. * अतिरात्रशब्दोऽपि रात्रिमतीत्य संतिष्ठते इति व्युत्पत्त्या संस्थानिमित्तकः एव। रात्रिमतीत्य वर्तते इति व्युत्पत्त्याश्रयणे तु अग्निष्टोमादिष्वपि तत्प्रयोगापत्तिः। कु. ३।६। १६।४१. * अतिरात्रसंस्थाकज्योतिष्टोमस्य 'अतिरात्रमेके प्रथममाहरन्ति' इति वचनादेव प्रथममनुष्ठानम्। भाट्ट. ५।३।१३.

* अतिशक्वरी। पादेषु अक्षराणि १६।१६।१२।८।८ उदा० 'साकं जातः क्रतुना' (ऋसं. २।२२।३) बाल. वृ. ६६. के.

* 'अतिहायेडो बर्हिः प्रति समानयति जुह्वौपभृताम्' पञ्चानां प्रयाजानां मध्ये तृतीयः प्रयाजः इडन्तेन बहुवचनान्तेन अभिधीयते। तं तृतीयं प्रयाजमतिक्रम्य बर्हिर्नामकं चतुर्थं प्रयाजं होतुं उपभृत्संज्ञकायां स्रुचि स्थितं घृतं जुह्वां आनेतव्यं इति अस्यार्थः। वि. ४।१।१५.

※ अतीतमहिषीस्नेहन्यायः। यथा कश्चिद्यतिः गार्हस्थ्यदशायां कस्यां चिन्महिष्यां स्नेहं कृत्वा पश्चात् संन्यासानन्तरं श्रवणे प्रवृत्तोऽपि तेनैव स्नेहजनितप्रतिबन्धेन तत्त्वं गुरुणोपदिष्टमपि न ज्ञातवानिति लोके गाथा प्रतीयते, तथाभूतोऽपि प्रतिबन्धो ज्ञानमवरुणद्धि। विस्तरस्तु वेदान्तग्रन्थेषु बोध्यः। साहस्री. ४५६.

* अतीन्द्रियशक्तिसमर्थनम्। संप्रत्यतीन्द्रियशक्तिसमर्थनं अनुमानेन क्रियते। अग्न्यादिकमजनकदशातो जनकदशायामतिशयवत्, कार्यकरत्वात् कुठारादिवत्। सर्वकार्याणामदृष्टस्यापि हेतुत्वात् सिद्धसाधनमिति चेन्न. अग्न्यादेरदृष्टातिशयवत्त्वाभावात्। न चाप्यौष्ण्यातिशयेन सिद्धसाधनता, औष्ण्यस्यापि कादाचित्कत्वेन तज्जननेऽप्यतिशयान्तरानुमानप्रसङ्गात्। न च प्रतिबन्धकाभावेन सिद्धसाधनता, अभावस्यापि भावान्तरत्वस्य स्थितत्वात्, भावत्वे स्वरूपादीनां चाजनकदशायामपि संभवान्न तेषां कारणत्वम्। अजनकदशाविलक्षणस्यैव भावस्य प्रतिबन्धकाभावत्वे नामान्तरेण शक्तिरेवाङ्गीकृता। भावान्तराभावपक्षेऽपि नाभावाद्भावोत्पत्तिः संभवति। अभावप्रमेयस्य नास्तिज्ञानजनकत्वात् संभवतीति चेन्न, विषयस्याकारणत्वात् इतरथा अतीतानागतयोरपि विषयत्वेन कारणत्वप्रसङ्गात्। विहिताकरणात् प्रत्यवायोत्पत्तिरिति चेत्, नाकरणात् प्रत्यवायोत्पत्तिः, किंतु अन्यकरणात्। तदुक्तं 'स्वकाले यदकुर्वंस्तु करोत्यन्यदचेतनः। प्रत्यवायोऽपि तेनैव नाभावेन स जन्यते॥' इति। अनुपलब्धेर्नास्तिज्ञानजनकत्वमिति चेन्न, अनुपलब्ध्यभावेऽपि नास्तिज्ञानोत्पत्तिदर्शनात् दृश्यमानस्यैवार्थस्य 'प्रागयमिह नासीत्' इति प्रतिपत्तिर्दृश्यते। इदानीमुपलम्भवदेवानुपलम्भोऽस्ति। प्रातरनुपलम्भोऽनुवर्तते इति चेन्न, प्रातर्भानादेव तस्य गतत्वात्। एतच्चाभावनिराकरणे प्रपञ्चयिष्यामः, भाववदन्वयव्यतिरेकयोस्तुल्यत्वात्। प्रतिबन्धकाभावस्य कारणत्वमिति चेन्न अन्यथा सिद्धत्वात् व्यतिरेकस्य। तथाहि, न मुद्गराभिघाते

घटानुत्पत्तिर्न, प्रतिबन्धकाभावात्, किंतु मुद्गरपाते सति प्रतिपन्नकारणभूतावयवसंयोगविशेषाभावात् । अनन्यथासिद्धान्वयव्यतिरेकौ हि कार्यकारणभावं कल्पयतः, अन्यथा अनवस्थाप्रसङ्गात् । किंच कार्यविघातकरः प्रतिबन्धकः इति सर्ववादिभिरभ्युपेयं, प्रतिबन्धकाभावस्यापि कारणत्वमभ्युपगच्छता अवश्यं प्रतिबन्धकोऽभ्युपगन्तव्यः । तथा च सति प्रतिबन्धकसद्भावादेव कार्यविघातोपपत्तौ, न तदभावस्य कारणत्वमुचितं, अन्यथासिद्धत्वात् कल्पनायाः। प्रतिबन्धकाभावस्य कारणत्वेऽपि क्व चित् प्रध्वंसः, क्व चित्तु प्रागभावः, क्व चिदुत्तेजकासहभावः, इत्यनेककारणकल्पनं स्यात्, तद्वरं शक्तिकल्पनम् । ननु शक्तिवादिनामपि प्रतिबन्धावस्थायां शक्तेर्विनाशादिकं कल्पनीयं, न। शक्तेर्विनाशोत्पादौ नाभ्युपेयेते, शक्तेः कारणकल्पनाप्रसङ्गात्, शक्तेरपि शक्तिकल्पनाप्रसङ्गाच्च । अतो यावद्द्रव्यभाविनी शक्तिरिति स्थितम् । एवं च सति विद्यमानाया एव शक्तेः प्रतिबन्धकसद्भावादेव कार्याकरणं, तदभावे करणमित्यास्थेयम् । एवं च सति स्वरूपस्यैव प्रतिबन्धकाभावे कार्यकरणं, तदभावे चाकरणमस्तु, किमनया शक्त्या ? मैवम् । उपलभ्यमानस्यैव स्वरूपस्य प्रतिबन्धानुपपत्तेः । अनुपलभ्यमानस्य हि घटस्य कुड्यादिना प्रतिबन्धो दृष्टः । अतः स्वरूपस्यैव प्रतिबन्धकत्वकल्पनायां प्रमाणविरोधः । शक्तेस्तु कार्यकल्प्यत्वादेव कार्यादर्शने प्रतिबन्धकत्वकल्पनाया न विरोधः । यत्तूक्तं 'कोऽयं शक्तेः प्रतिबन्धः किं प्रागभावः, किंवा प्रध्वंसाभावः, आहोस्वित् सहकारिवैकल्यं' इति । तस्यैषां पक्षाणामनभ्युपगम एव परिहारः । किंतु कार्यविघात एव ( वस्तुतः परिहारः ) मणिमन्त्रादिसंनिधाने कार्यं नोत्पद्यते, तदभावे चोत्पद्यते इति सर्वं सिद्धम् ।

ननु कार्याभावः कारणाभावादेव, न च भवतां कारणाभावः, अस्मन्मते तु प्रतिबन्धकाभावरूपकारणाभावः । नैवं, प्रतिबन्धकस्यैवाभावप्रसङ्गात् । तथा च सति प्रतिबन्धके तदभावस्य कारणत्वमपि न स्यात्। नहि कारणाभावमात्रस्य प्रतिबन्धकत्वं, मुद्गराभिघातो घटस्य प्रतिबन्धकः, न मृदाद्यभावः इति व्यवस्थाऽनुपपत्तेः। अतोऽनुमानसिद्धस्यातिशयस्येन्द्रियविषयत्वाभावादतीन्द्रियत्वम् ।

ननु अजनकदशायामपि शक्तेरभ्युपगमात् जनकदशायामतिशयत्वं शक्तेर्न स्यात् । नैवं, प्रतिबन्धावस्थायां शक्त्यवगमो नानुमानायत्तः, किंतु जनकदशानो विलक्षणरूपेणैवानुमानसिद्धस्यैव पश्चादेवं विनर्शो जायते 'प्रतिबन्धावस्थायां किं नाश एव युक्तः, उत कार्याकरत्वमेव' इति, ततश्च कार्याकरत्वमेवेति निर्णयो जायते । ततः कल्पनालाघवात् कार्याकरत्वमात्रं, न नाशोत्पादादिति । तेनानुमानमूलत्वादस्य निर्णयस्य न तेनानुमानबाधनम् । अतः सिद्धमतीन्द्रिया शक्तिरनुमेया इति । **प्रावि. पृ.** ३९–४२. ❋ नचैवंजातीयकेषु **अतीन्द्रियेषु** अर्थेषु पुरुषवचनं प्रामाण्यमुपैति, जात्यन्धानामिव वचनं रूपविशेषेषु । **भा.** १।१।२।२ **पृ.** १६.

❋ **'अतुल्यत्वात्तु वाक्ययोः'** ( २।२।११।२६ ) इत्यत्र गुणफलसंबन्धपर्यवसायित्वं उक्तम् । **वा.** २।३।५।११ **पृ.** ५९७.

**'अतूर्तो होता तूर्णिर्हव्यवाट्' इति आहवनीयवादः ॥**

'अतूर्तो होता तूर्णिर्हव्यवाट्' इति वाक्ये हव्यवहनलिङ्गात् गार्हपत्यः एवाभिधीयते । इति प्राप्ते, 'देवेद्धो मन्विद्धः' इत्युपक्रमे समिध्यत्वलिङ्गेन सामिधेनीभिः स्तुतस्याहवनीयस्यैवैष वादः । **संकर्ष.** ४।२।१३.

**'अत्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्। इष्टस्यार्थस्य संप्राप्तौ को विद्वान् यत्नमाचरेत् ॥' इति न्यायः ॥** अत्कं गृहाङ्गणकोणः । अक्के इतिपाठेऽपि स एवार्थः । अर्के इति पाठे तु 'रुई' इति भाषायामुच्यमानो वृक्षः । **के.** क्रतुभिर्हि फलानि अभिजिहीर्षमाणः क्रतुसाधनीभूताहवनीयाद्यग्निनिर्वर्तकाग्न्याधेयान्तर्गतपूर्णाहुत्यैव सर्वक्रतुफलावाप्तौ सत्यां किमिति क्रतुषु प्रवर्तेत । तदाहुः 'अत्के चेत्० चरेत्' इति । 'गृहकोणोऽत्क इत्यपि' इति जयन्तः । **कु.** १।२।१।४.

❋ **अत्यग्निष्टोमः** । अग्निष्टोमसंस्थायां अग्निष्टोमस्तोत्रोत्तरं राजन्यस्य स्तुतशस्त्रसहितः षोडशी ग्रहो गृह्यते । अर्थात् तदानीं अग्निष्टोमसंस्थोपमर्दो भवति । उक्थ्यस्तोत्राणां चाकरणमेव तत्र । एवं यदा अनुष्ठानं तदा अत्यग्निष्टोमः । एवं ब्राह्मणस्यापि । **के.** ( **भाट्ट.** १०।

५।१२.) * अत्यग्निष्टोमः काम्यः अग्निष्टोमस्य आगन्तुकाकारविशेषः। अग्निष्टोमानुष्ठानात् प्राङ्नानुष्ठेयोऽयम्। वि. ५।३।१३. * अत्यग्निष्टोमः ज्योतिष्टोमस्य केवलविकार एव, न गुणविकारः ज्योतिष्टोमप्रकरणे तद्विध्यभावात्। कु. ३।६।१६।४७.

* 'अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति वचनात् अत्यग्निष्टोमो राजन्यस्य नित्यः। भाट्ट. ३।६।१६. अत्यग्निष्टोमः नाम सोमस्य द्वितीया संस्था। तस्मिन् क्षत्रियस्य यजमानस्य षोडशिनं ग्रहं गृह्णीयात् इति श्रुत्यर्थः। के. * 'अत्यग्निष्टोमे राजन्यस्य गृह्णीयात्' इति शाखान्तरवचनम्। यत्र अग्निष्टोमस्तोत्रोत्तरं उक्थ्यपर्यायान् अकृत्वा षोडशिस्तोत्रं क्रियते सा अग्निष्टोमसंस्थैव अत्यग्निष्टोमपदवाच्या। भाट्ट. ३।६।१६.

ꕢ 'अत्यन्तबलवन्तोऽपि पौरजानपदा जनाः। दुर्बलैरपि बाध्यन्ते पुरुषैः पार्थिवाश्रितैः॥' इति न्यायः। अयं यत्र निर्बलेनापि प्रबलसहायेन प्रबलो बाध्यते तत्र प्रवर्तते। साहस्री. २३१. * 'अत्यन्तबलवन्तोऽपि०' (वा. ३।३।७।१४ पृ. ८४१.) पदार्थप्राबल्यन्यायस्य (१।३।४) स्वरूपमिदम्। के.

* अत्यन्तादृष्टार्थं नियमादृष्टार्थेन बाध्यते। अप्राप्तबाधोऽयम्। वा. ३।३।७।१४ पृ. ८६०. यथा अवघाते आज्यसांनाय्यार्थमौषधार्थत्वेन। बाल. पृ. १४०.

*अत्यन्ताभावः। 'शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः। शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते॥' श्लोवा. अभावप्रामाण्यवादे ४. * अत्यन्ताभावप्रत्ययः। नञ्समभिव्याहाराभावे यत्पदार्थयोः आधाराधेयभावसंसर्गेण अन्वयः, तत्र नञ्समभिव्याहारे अत्यन्ताभावप्रत्ययः। मणि. पृ. १५८.

ꕢ 'अत्यन्तासत्यपि ज्ञानमर्थे शब्दः करोति हि' इति न्यायेन (श्लोवा. १।१।२।६.) बाधितस्यापि द्वारवाक्यार्थस्य बोधः शब्दशक्तिस्वाभाव्यात् उल्लसन् न दुष्वारितः। प्रमाणप्रकाशः पृ. ३६४.

* अत्यष्टिः। पादेषु अक्षराणि १२।१२।८।८।८।१२।८ यथा० 'अग्निं होतारं मन्ये' (ऋसं. १।१२७।१) बाल. पृ. ६६. के.

* 'अत्र ह्येवावपन्ति' अविवृद्धस्तोमके कौत्सादीनां न्यायादेव पवमानद्वये एव प्राकृतऋगधिकरणकावापसिद्धौ पवमानवृत्तित्रिष्टुबाद्यधिकरणत्वव्यावृत्तिफलकः गायत्र्याद्यधिकरणनियमोऽयं इति ध्येयम्। भाट्ट. १०।४।१२, * 'अत्र ह्येवावपन्ति' इति वचनेन कौत्सादिवत् समसंख्यप्राकृतसामबाधेन पवमानस्तोत्रयोरेव निवेशः इति पूर्वपक्षी। कौत्सादिन्यायेनैव समसंख्यप्राकृतसामबाधकतया यत्किंचित्स्तोत्रे तन्निवेशप्रसक्तौ साहस्यविशेषेण तन्नियमः अस्य सामान्यवाक्यत्वात् इति सिद्धान्ती। १०।६।६, * 'अत्र ह्येवावपन्ति' इत्यस्य पवमानवृत्तित्रिष्टुब्व्यावृत्तिफलकत्वं उक्तम्। १०।५।७, * 'अत्र ह्येवावपन्ति' इत्यादौ अप्राप्तपरिसंख्यैव अङ्गीकृता कौस्तुभे। ९।४।२, * 'अत्र ह्येवावपन्ति' इत्यादौ एवकारयुक्तेऽपि विधिदर्शनात् एवकारस्य विधिशक्तिप्रतिबन्धकत्वे मानाभावः इति पूर्वपक्षी। ९।४।२, * 'अत्र ह्येवावपन्ति' इत्यादौ एवकारार्थविधौ विकल्पापत्तिरित्युक्तं कौस्तुभे। ९।४।२. * 'अत्र ह्येवावपन्ति' इत्यावापोद्देशेन देशविशेषविधिरयम्। वि. १०।५।६. * 'अत्र ह्येवावपन्ति' सर्वस्तोत्रेषु अनेन सामावापस्य पवमानमात्रविषयत्वसंपादनात् स्तोत्रान्तरेषु तत्परिसंख्या युक्तैव। भाट्ट. १०।५।६, * यत्र तु न निषेधपूर्वकता तत्र अनुभवबलादेव कारकसंबन्धस्यापि विधाने न का चित् क्षतिः, यथा 'अत्र ह्येवावपन्ति' इत्यादौ। ९।४।२. * 'अत्र ह्येवावपन्ति, अत एवोद्वपन्ति' अत्र गायत्रीबृहत्यनुष्टुप्सु एव साम्नां आवापोद्वापौ इत्यर्थः। वि. १०।४।१३.

* अत्रीणां नाराशंसो द्वितीयः प्रयाजः। भा. ६।६।१।१.

ꕢ 'अत्रैवर्णिकेन निषादेन कृतमपि आधानं आहवनीयसंस्काराधायकं न भवति, तस्य आधाने विशेषवचनाभावात्' इति न्यायः स्थपत्यधिकरणे प्रतिपादितः। (६।८।३।१०-२१) परिमलः ३।४।११। ४१-४२ ब्रसू.

ꕢ अत्र्यार्षेयस्य हानं स्यात्। ६।१।११।४३॥ दर्शपूर्णमासयोः 'आर्षेयं वृणीते, एकं वृणीते, द्वौ वृणीते, त्रीन् वृणीते, न चतुरो वृणीते, न पञ्चाति वृणीते'

इति प्रवरप्रवरणं श्रुतम् । तत्र अत्र्यार्षेयस्य यो न त्र्यार्षेयः त्रिप्रवरान्वितः तस्य आर्षेयवरणे अर्थात् याज्ञे कर्मणि हानं त्यागः स्यात् । तस्य न कर्माधिकार इति सिद्धान्तः ।

अत्र यथाश्रुतसूत्रभाष्याभ्यां एकार्षेयस्य द्व्यार्षेयस्य पञ्चार्षेयस्य च नास्ति कर्माधिकार इति भाति । परंतु **वार्तिककार** एवमाह 'त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति सोऽधिक्रियते । चतुरार्षेयस्य त्रित्वसंपादने अस्ति सामर्थ्यम् । मनुवत्पक्षे तु यस्याप्येको यस्यापि पञ्च, तस्यापि सकृदेवोच्चारणं मनुवत् इति' इति । आर्षेयं प्रवरः । त्रीणि आर्षेयाणि यस्य स त्र्यार्षेयः । तथा यो भवति एकार्षेयो वा द्व्यार्षेयो वा पञ्चार्षेयो वा, सः अत्र्यार्षेयः । तस्य यज्ञाधिकारो नास्तीति जैमिनिमतम् । तस्यापि अस्ति इति इतरेषां ऋषीणां मतम् । इत्यादि 'अधिकारः त्र्यार्षेयस्यैव' इति बिन्दौ भाट्टे द्रष्टव्यम् । **के.**

* **अथर्ववेदः** 'क्रीतराजकभोज्यान्नवाक्यं चाथर्ववैदिकम् । न च तस्याप्रमाणत्वे किंचिदप्यस्ति कारणम् ॥ यदि यज्ञोपयोगित्वं नेहास्त्याथर्वणश्रुतेः । अर्थान्तरप्रमाणत्वं केनास्याः प्रतिहन्यते ॥ ( अर्थान्तरमेवाह– ) शान्तिपुष्ट्यभिचारार्था ह्येकब्रह्मर्त्विगाश्रिताः । क्रियास्तया प्रमीयन्तेऽत्राप्येवाऽऽत्मीयगोचराः ॥ न चायमपि यज्ञाङ्गविधिः शान्त्यादिशास्त्रवत् । अतोऽस्यापि प्रमाणत्वं पुरुषार्थे न वार्यते ॥' **वा.** १।३।२।४ पृ. १८९. * **अथर्ववेदोक्तं** कर्म यथा गोप्यं तथा काम्या इष्टयो गोप्या इति तासु प्रधाने उपांशुत्वम् । **वि.** ३।८।२०.

## अथ विशेषलक्षणम् । ८।१।१।१ ॥

अथ सामान्यातिदेशप्रतिपादनानन्तरं विशेषस्य अतिदेशविशेषस्य लक्षणं उच्यते । इति अष्टमाध्यायार्थस्य प्रतिज्ञा । **के.**

* **अथशब्दः** आनन्तर्ये वर्तते । यदा च पूर्वोत्तरौ पदार्थौ अवगतौ तदा आनन्तर्यम् । यदा तु तौ न स्तः, कस्य आनन्तर्यं ब्रूयात् ( 'अथ जिह्वाया अथ वक्षसः' इत्यत्र । **टुप्.** १०।७।१।२ पृ. २०२२. * **अथशब्दः** वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः । ...तच्च वेदाध्ययनम् । तस्मिन् हि सति सा ( जिज्ञासा ) अवकल्पते । भा. १।१।१।१ पृ. २–३, तादृशीं तु धर्मजिज्ञासामधिकृत्य अथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न संभवति । कथम् ? वेदवाक्यानामनेकविधो विचारः इह वर्तिष्यते । पृ. ४, वेदमधीत्य त्वरितेन न स्नातव्यं, अनन्तरं धर्मो जिज्ञासितव्य इति अथशब्दस्यार्थः । पृ.८. * अथशब्दः वृत्तादनन्तरस्य प्रक्रियार्थोऽयम् । यावच्च पूर्वोत्तरपदार्थौ नावधृतौ तावन्नास्ति । तौ चेदवधृतौ पाठादेव क्रमः सिध्यति । श्रुतिरपीयं सापेक्षत्वात् दुर्बला 'हृदयस्याग्रेऽवद्यति अथ जिह्वायाः' इत्यादौ । यत्र तु प्रमाणान्तरेण अवधृतः कर्तव्यः पदार्थः, अपरः अन्येन, तत्र अथशब्दः आनन्तर्यं ब्रवीति । **टुप्.** ५।१।१।१ पृ. १२८९. * **अथशब्दस्य** आनन्तर्यवाचित्वं शक्त्यैव । **भाट्ट.** ५।१।१ पृ. १५४.

## अथातः क्रत्वर्थपुरुषार्थयोर्जिज्ञासा ।४।१।१।१॥

अथ शेषशेषिनिरूपणानन्तरम् । अतः शेषशेषिभावस्य प्रयोजकत्वाप्रयोजकत्वनिर्णयहेतुत्वात् इदानीं क्रत्वर्थस्य पुरुषार्थस्य च जिज्ञासा विचारः, प्रस्तूयते इति शेषः । कः क्रत्वर्थः, कः पुरुषार्थः; कः प्रयोजकः, कश्च न प्रयोजकः; अर्थात् कः प्रयोज्यः कश्च न प्रयोज्यः इति चतुर्थाध्याये विचार्यते । **के.**

## अथातः शेषलक्षणम् । ३।१।१।१॥

अथशब्दस्य आनन्तर्यार्थत्वे धर्मप्रमाणभेदनिरूपणानन्तरं इत्यर्थः । अधिकारार्थो वा अथशब्दोऽयम् । अतःशब्दः संगतिसूचनार्थः, हेतोर्निरूपणानन्तरं हेतुमतो निरूपणं युक्तं इत्यर्थः । तस्मात् शेषस्य लक्षणं आरभ्यते । शेषश्च शेषपदशक्यतावच्छेदकं, श्रुत्यादीनि षट् प्रमाणानि, तेषां विरोधे बलाबलं, विरोधः क्वास्ति क्व नास्ति, इत्यादिः, तस्य लक्षणं निरूपणं आरभ्यते इति । **के.**

* **'अथातः शेषलक्षणं' इति सूत्रेण** 'द्विलक्षण्याः परं शिष्टं यावत्किंचन लक्षणम् । तत् सर्वं वक्तुमारब्धमथातः शेषलक्षणम् ॥' "यत्तु शेषः परार्थत्वादित्यनन्तरलक्षणम् । तदङ्गत्वस्य वाच्यत्वादादौ तन्मात्रगोचरम् ॥' बहुष्वपि हि लक्षणार्थेषु विवक्षितेषु क्रमवशात् एकस्तावदङ्गत्वरूपः शेष एतल्लक्षणगोचरः परार्थत्वहेतुकः प्रतिपाद्यते । समासश्च द्वेधा विगृह्य द्वयो-

वाक्यार्थयोः प्रदर्शनीयः। शेषं च तल्लक्षणं च, शेषस्य वा अर्थस्य लक्षणमिति। षष्ठीसमासमात्राश्रयणेन वा यथा-व्याख्यावमानार्थम्। ' अङ्गलक्षणमेवेदमिहोक्तं शेषलक्षणम्। '' वा. ३।१।१।१ पृ. ६४७, 'अथवाऽस्त्विदमेवैकं तृतीयं शेषलक्षणम्। तदेव सूचितं वक्तुमथातः शेषलक्षणम्॥' पृ. ६४८.

* ' **अथातोऽग्निमग्निष्टोमेन** ' इत्यत्राग्निष्टोमपदेन अग्निष्टोमसंस्थाकज्योतिष्टोमत्वोक्तावपि नाग्निष्टोमसंस्थाकत्वस्य उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वं गौरवात्, प्रयोजनाभावाच्च। किंतु ज्योतिष्टोमत्वस्यैव उद्देश्यताऽवच्छेदकत्वम्। **भाट्ट.** १०।८।१२, * ' अथातोऽग्निमग्निष्टोमेन ' इत्यादौ प्राकरणिकोत्तरवेद्यवरोधेन चयनस्य विकृतौ निवेशः। ८।३।४. * ' अथातोऽग्निमग्निष्टोमेनानुयजति, तमुक्थ्येन, तमतिरात्रेण, तं द्विरात्रेण ' इति वाक्येन प्रकृतौ अग्निष्टोमे कासु चित् उक्थ्यादिषु विकृतिषु च अग्निचयनलक्षण आश्रयः उपदिश्यते। **वि.** १०।८।११, * ' अथातोऽग्निमग्निष्टोमेनानुयजति, तमुक्थ्येन, तं षोडशिना, तमतिरात्रेण ' इदं ' य एवं विद्वानग्निं चिनुते ' इत्येवं विधाय श्रूयते। तत्र उक्तं चयनं अग्निद्रव्यसंस्कारः। न चात्र अग्निशब्दो यागवाची, किंतु वह्निद्रव्यवाच्येव। २।३।१०. * ' अथातोऽग्निमग्निष्टोमेनानुयजन्ति ' इत्यनारभ्याधीतेन चयनरूपस्याग्नेः ज्योतिष्टोमाङ्गत्वेन विधिः इति स्थितं द्वितीये (२।३।१०), अत्रत्याग्निष्टोमशब्दस्य ज्योतिष्टोमपरतया कौस्तुभे व्यवस्थापितत्वात्। **भाट्ट.**१०।८।११,*'अथातोऽग्निमग्निष्टोमेनानुजयन्ति, तमुक्थ्येन, तमतिरात्रेण, तं द्विरात्रेण' इत्याद्युत्तरवाक्येषु अग्निष्टोमादियज्ञानां चयनयुक्तत्वं विहितम्। २।३।१०.*'अथातोऽग्निमग्निष्टोमेनैवानुयजति, तमुक्थ्येन, तं षोडशिना, तमतिरात्रेण, तं त्रिरात्रेण, तं चतूरात्रेण, तं पञ्चरात्रेण, तं षड्रात्रेण, तं सप्तरात्रेण, तमष्टरात्रेण, तं नवरात्रेण, तं दशरात्रेण, तमेकादशरात्रेण ' इति वाक्यं अग्निशब्दस्य यागनामत्वे प्रापकम्। (पूर्वपक्षे) **सु.** पृ.९४५.

**अथातो धर्मजिज्ञासा। १।१।१।१॥**

**भाष्यं— लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तदर्थान्येव सूत्रेषु इत्यवगन्तव्यम्।** नाध्याहारादिभिरेषां परिकल्पनीयोऽर्थः परिभाषितव्यो वा। एवं वेदवाक्यान्येव एभिः व्याख्यायन्ते। इतरथा वेदवाक्यानि व्याख्येयानि स्वपदार्थाश्च व्याख्येयाः इति प्रयत्नगौरवं प्रसज्येत। तत्र लोके अयमथशब्दः वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः। न चेह किं चित् वृत्तमुपलभ्यते। भवितव्यं तु तेन, यस्मिन् सति अनन्तरं धर्मजिज्ञासा अवकल्पते। तथा हि प्रसिद्धपदार्थकः सः ( अथशब्दः ) कल्पितो भवति। तत्तु वेदाध्ययनम्। तस्मिन् हि सति सा ( जिज्ञासा ) अवकल्पते। नैतदेवम्। अन्यस्यापि कर्मणोऽनन्तरं धर्मजिज्ञासा युक्ता, प्रागपि च वेदाध्ययनात्। उच्यते। तादृशीं तु धर्मजिज्ञासां अधिकृत्य अथशब्दं प्रयुक्तवानाचार्यं, या वेदाध्ययनमन्तरेण न संभवति। कथम्? वेदवाक्यानां अनेकविधो विचार इह वर्तिष्यते। अपि च नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः, परस्ताच्च आनन्तर्यम्। नहि एतदेकं वाक्यं पुरस्ताच्च वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधिष्यति, परस्ताच्च आनन्तर्यं प्रकरिष्यति। भिद्येत हि तथा वाक्यम्। अन्या हि वचनव्यक्तिरस्य पुरस्तात् वेदाध्ययनात्, धर्मजिज्ञासां प्रतिषेधति, अन्या च परस्तात् आनन्तर्यं उपदिशति। ' वेदानधीत्य ' इति एकस्यां विधीयते अनूद्य आनन्तर्यं, विपरीतं अन्यस्याम्। अर्थैकत्वाच्च एकवाक्यतां वक्ष्यति ( २।१।१४।४६ )। किंतु अधीते वेदे द्वयमापतति गुरुकुलाच्च समावर्तितव्यं, वेदवाक्यानि च विचारयितव्यानि। तत्र गुरुकुलान्मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थोऽयमुपदेशः। यद्येवं, न तर्हि वेदाध्ययनं पूर्वं गम्यते, एवं हि समामनन्ति ' वेदमधीत्य स्नायात् ' इति। इह च वेदमधीत्य स्नास्यन् धर्मं जिज्ञासमानः इममाम्नायमतिक्रामेत्। न च आम्नायो नाम अतिक्रमितव्यः। तदुच्यते। अतिक्रमिष्याम इममाम्नायम्। अनतिक्रामन्तः, वेदमर्थवन्तं सन्तं अनर्थकमवकल्पयेम। दृष्टो हि तस्यार्थः कर्मावबोधनं नाम। न च तस्य अध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति। यदपि च समामनन्तीव ( ' यंयं क्रतुमधीते तेनतेनास्य इष्टं भवति ' इति ) तत्रापि ' द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुति-

र्थवादः स्यात् ' ( ४।३।१ ) इत्यर्थवादतां वक्ष्यति। न च अधीतवेदस्य स्नानानन्तर्यं एतत् विधीयते। नहि अत्र आनन्तर्यस्य वक्ता कश्चित् शब्दोऽस्ति। पूर्वकालतायां क्त्वा स्मर्यते, नानन्तर्ये। दृष्टार्थता वा अध्ययनस्य आनन्तर्ये व्याहन्येत। लक्षणया तु एषोऽर्थः स्यात्। न वा इदं स्नानं अदृष्टार्थं विधीयते। किंतु लक्षणया अस्नानादिनियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः ' वेदमधीत्य स्नायात् '। ' गुरुकुलान्मा समावर्तिष्ट ' इति अदृष्टार्थतापरिहारायैव। तस्मात् वेदाध्ययनमेव पूर्वमभिनिर्वर्त्य अनन्तरं धर्मो जिज्ञासितव्यः इति अथशब्दस्य सामर्थ्यम्। न च ब्रूमः, अन्यस्य कर्मणः अनन्तरं धर्मजिज्ञासा न कर्तव्येति। किंतु वेदमधीत्य त्वरितेन न स्नातव्यं, अनन्तरं धर्मो जिज्ञासितव्यः। इति अथशब्दस्यार्थः।

अतःशब्दो वृत्तस्यापदेशको हेत्वर्थः। यथा ' क्षेमसुभिक्षोऽयं अतोऽहमस्मिन् देशे प्रतिवसामि ' इति। एवमधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातः ( अतः ) अनन्तरं धर्मो जिज्ञासितव्यः इति अतःशब्दस्य सामर्थ्यम्। धर्माय हि वेदवाक्यानि विचारयितुं अनधीतवेदो न शक्नुयात्, अतः एतस्मात् कारणात् अनन्तरं धर्मं जिज्ञासितुमिच्छेत् इति अतःशब्दस्यार्थः।

धर्माय जिज्ञासा धर्मजिज्ञासा, सा हि तस्य ज्ञातुमिच्छा। स कथं जिज्ञासितव्यः ? को धर्मः, कथंलक्षणः, कानि अस्य साधनानि, कानि साधनाभासानि, किंपरश्चेति। तत्र को धर्मः, कथंलक्षणः इत्येकेन सूत्रेण व्याख्यातं ' चोदनालक्षणोऽर्थो धर्मः ' इति। कानि अस्य साधनानि कानि साधनाभासानि, किंपरश्च ( किंफलः ) इति शेषलक्षणेन व्याख्यातम्। क्व पुरुषपरत्वं, क्व वा पुरुषो गुणभूतः। इत्येतासां प्रतिज्ञानां पिण्डस्य एतत् सूत्रं ' अथातो धर्मजिज्ञासा ' इति।

धर्मः प्रसिद्धो वा स्यादप्रसिद्धो वा ? स चेत् प्रसिद्धः, न जिज्ञासितव्यः। अथ अप्रसिद्धः, नतराम्। तदेतदनर्थकं धर्मजिज्ञासाप्रकरणम्। अथवा अर्थवत्। धर्मं प्रति हि विप्रतिपन्ना बहुविदः, के चिदन्यं धर्ममाहुः, के चिदन्यम्। सोऽयमविचार्य प्रवर्तमानः कं चिदेव उपाददानो विहन्येत, अनर्थं च ऋच्छेत्। तस्माद्धर्मो जिज्ञासितव्यः इति।

श्लोका — ' विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे। श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे। १ ॥ अभिवन्द्य गुरूनादौ शिष्यधीपद्मभास्करान्। तत्प्रसादात् करिष्येऽहं मीमांसाश्लोकवार्तिकम्। २ ॥ तद्विद्वांसोऽनुगृह्णन्तु चित्तश्रोत्रैः प्रसादिभिः। सन्तः प्रणयिवाक्यानि गृह्णन्ति ह्यनसूयवः। ३ ॥ न चात्रातीव कर्तव्यं दोषदृष्टिपरं मनः। दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते। ४ ॥ कुतो वा गृह्यते दोषं सूक्तौ मद्विधोक्तिषु। नेष्यते यः परस्थोऽपि स स्वयं गृह्यते कथम्। ५ ॥ निर्दोषत्वैकवाक्यत्वं क्व वा लोकस्य दृश्यते। सापवादा यतः केचिन्मोक्षस्वर्गावपि प्रति ॥ ६ ॥ आगमप्रवणश्चाहं नापवाद्यः स्खलन्नपि। नहि सद्वर्त्मना गच्छन् स्खलितेष्वप्यपोद्यते। ७॥ यथाकथंचिदारब्धा त्रयीमार्गानुसारिणी। वाग्वृत्तिरल्पसाराऽपि श्रद्दधानस्य शोभते। ८ ॥ मीमांसाशास्त्रतेजोभिर्विशेषेणोज्ज्वलीकृते। वेदार्थज्ञानरत्ने मे तृष्णाऽतीव विजृम्भते। ९ ॥ प्रायेणैव हि मीमांसा लोके लोकायतीकृता। तामास्तिकपथे कर्तुमयं यत्नः कृतो मया। १० ॥ ( **रत्नाकर–भर्तृमित्रादिभिः** ' नित्यनिषिद्धयोः इष्टानिष्टं फलं नास्ति ' इत्यादिबह्वपसिद्धान्तपरिग्रहेण मीमांसा लोकायतीकृता नास्तिकपथे नीता। तामास्तिकपथे कर्तुं वार्तिकारम्भयत्नः इति )

अथातो धर्मजिज्ञासा सूत्रमाद्यमिदं कृतम्। धर्माख्यं विषयं वक्तुं मीमांसायाः प्रयोजनम्। ११ ॥ सर्वस्यैव हि शास्त्रस्य कर्मणो वाऽपि कस्य चित्। यावत् प्रयोजनं नोक्तं तावत् तत् केन गृह्यते। १२ ॥ मीमांसाख्या तु विद्येयं बहुविद्यान्तराश्रिता। न शुश्रूषयितुं शक्या प्रागनुक्त्वा प्रयोजनम्। १३ ॥ विद्यान्तरेषु ना ( चा ) प्येतद् यद्यभीष्टं प्रयोजनम्। अनर्थप्रापणं तावत् तेभ्यो नाशङ्क्यते क्व चित्। १४ ॥ मीमांसायां त्विहाज्ञाते दुर्ज्ञाते वाऽविवेकतः। न्यायमार्गे महान् दोष इति यत्नोपचर्यता। १५ ॥ तस्मात् प्रयोजनं पूर्वमुक्तं सूत्रकृता स्वयम्। यत् स्वेनोक्तं वदेयुस्तद् भाष्यकारादयः कथम्। १६ ॥ सिद्धार्थं ज्ञातसंबन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः

संबन्धः सप्रयोजनः । १७ ॥ शास्त्रं प्रयोजनं चैव संबन्धस्याश्रयावुभौ । तदुक्त्यन्तर्गतस्तस्माद् भिन्नो ( शिष्यप्रश्नानन्तर्यादिरूपः ) नोक्तः प्रयोजनात् । १८ ॥ सिद्धिः श्रोतृप्रवृत्तीनां संबन्धकथनाद् यतः । तस्मात् सर्वेषु शास्त्रेषु संबन्धः पूर्वमुच्यते । १९ ॥ यावत् प्रयोजनेनास्य संबन्धो नाभिधीयते । असंबद्धप्रलापित्वाद् भवेत् तावदसंगतिः । २० ॥ इह त्वाक्षिप्य संबन्धं भाष्य एवाभिधास्यते । धर्मप्रसिद्ध्यसिद्धिभ्यां, तस्मान्नान्योऽभिधीयते । २१ ॥ न चाप्यत्राथशब्देन शास्त्रसंबन्ध उच्यते । संबन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक् । २२ ॥ ( क्रिययोः श्रोतृक्रियाया जिज्ञासायाः, वक्तृक्रियायाश्च विचारात्मिकाया मीमांसायाः ) । तस्माद् व्याख्याङ्गमिच्छद्भिः सहेतुः सप्रयोजनः । शास्त्रावतारसंबन्धो वाच्यो नान्यस्तु निष्फलः । २५ ॥

जिज्ञास्यः संशयाद्धर्मः श्रेयस्करतयाऽपि च । असंदिग्धो ह्यजिज्ञास्यो यो वा स्यान्निष्प्रयोजनः । १२५ ॥ स्वरूपादिषु धर्मस्य द्विधा विप्रतिपद्यते । पूर्वं प्रमाणरूपाभ्यां पादेनाद्यस्य निर्णयः । १२६ ॥ स्थिते वेदप्रमाणत्वे पुनर्वाक्यार्थनिर्णये । मतिर्बहुविदां पुंसां संशयान्नोपजायते । १२७ ॥ केचिदाहुरसावर्थः केचिन्नासावयं त्विति । तन्निर्णयार्थमप्येतत् परं शास्त्रं प्रणीयते । १२८ ॥

बृहती—'लोके' इत्यादिभाष्यस्याथातइत्येतत्पदद्वयस्य अलौकिकार्थाशङ्कानिवृत्तिः प्रयोजनम् । कुत एतत् ? स्वाध्यायाध्ययनविधेः अविवक्षितार्थत्वनिराकरणात् । कथं पुनरविवक्षाऽऽशङ्का ? स्वाध्यायाध्ययनविधेः अधिकाराश्रवणात् आचार्यकरणविधिप्रयोज्यत्वाच्च । कथं पुनः अन्यस्य विधेः अन्येन प्रयुक्तिः ? प्रयाजादिविधिवत् इति चेत् न । तत्र हि अधिकाराभेदात् युक्तम् । अत्रापि अधिकारांशो न भिद्यते इति चेत् न । अङ्गाङ्गिभावाभावात् (एवं तावत् अङ्गता नास्तीति गृहीत्वैव प्रयुक्तिर्दूषिता । इदानीं प्रयुक्तिमङ्गीकृत्य अनङ्गत्वं दूषयति– ) कथं पुनरङ्गता नास्ति, प्रयोज्यत्वं च ? ( परिहरति– ) न प्रयुक्तिरङ्गत्वे हेतुः । कस्तर्हि ? विनियोगः । ननु विनियोगः पारार्थ्ये कारणम् । विनियुक्तस्यैव हि अङ्गत्वं दर्शयति 'न च अविहितमङ्गं भवति' 'फलवत्संनिधावफलं तदङ्गं' इति च । मैवम् । पारार्थ्यमेव हि अङ्गता उच्यते । परस्य उत्पत्तौ कार्ये वा यदनुग्रहाय वर्तते, तत् परार्थमित्युच्यते । तदेव चाङ्गम् । तस्मात् विनियोगकृतमेव अङ्गत्वं, न प्रयुक्तिकृतम् । कथं तर्हि पश्वेकत्वादीनामङ्गत्वम् । उक्तं हि पशोरुपादानशेषत्वं, प्रयुक्तिकृतं च तत् । तदपि नैव प्रयुक्तिकृतम् । किं तर्हि ? विनियोगकृतमेव । ननु विभक्तिभिः प्रातिपदिकार्थो विनियुज्यते, न पुनः एकत्वादयो विभक्त्यर्थाः । सत्यं, न विनियुज्यन्ते । न पुनः विनियुक्तोपादानेऽपि नावगम्यते विभक्तिभिः । विनियुक्तस्यैव एकत्वादयो विभक्तिभिरभिधीयन्ते असंबन्धस्य अनवगमात् । अत एव च एकवाक्यत्वं संख्याविधानस्य विभक्तिविधानस्य च । तस्माद्युक्तं उपादानशेषत्वमेकत्वादेः । स्वाध्यायाध्ययनं तु न विनियुक्तं, नापि विनियुक्तत्वमवगम्यते । अतः प्रयोज्यं, न चाङ्गं इति सिद्धम् ।

कथं पुनः अविनियुक्तं असंबन्धमेव इदमाक्षिप्यते ? नैव विनियोग आक्षेपे हेतुः । किं तर्हि ? कार्यम् । विनियुक्तत्वमपि कार्येणैव आक्षिप्यते, न तु अङ्गत्वे हेतुः । यत् पुनरिदमुक्तं, 'न चाविहितमङ्गं भवति' 'फलवत्संनिधावफलं तदङ्गं' इति च, ( तत्रोच्यते– ) कार्याङ्गत्वप्रतिपत्त्यर्थोऽसौ ( भाष्य– )ग्रन्थः, न पुनः अङ्गत्वप्रतिपत्त्यर्थः । अस्ति हि कामस्य ( काम्यस्येत्यर्थः ) अधिकारे प्रयोज्यत्वं, न चाङ्गता । तस्मात् अन्यत् प्रयोज्यत्वं, अन्या चाङ्गता । तथा च उभयं पदानामस्ति प्रयोज्यत्वं, न शेषता ( प्रयोज्यत्वं शेषत्वाभावश्चेत्युभयं ) । मन्त्रस्य हि विनियोगे न शेषतोच्यते, नाक्षिप्तपदानां, अमन्त्रत्वात् । तस्मात् प्रयोज्यत्वात् अनङ्गत्वाच्च स्वाध्यायाध्ययनस्य भवति संशयः किं प्रयोज्यत्वात् एककार्यत्वं, उत अनङ्गत्वात् भिन्नकार्यत्वं इति । अत्र पूर्वपक्षवादी प्रयोज्यत्वादेककार्यतां मन्वानः अविवक्षां मेने । तन्निराकृतये इदं 'अथ अतः' इति पदद्वयं अङ्गीकृतवान् सूत्रकारः । न च अनेन पदद्वयेन अयमर्थो निराकृतः इति पाठादेवावगम्यते, पूर्वमनुपन्यस्तत्वादस्यार्थस्य । अतो भवति अलौकिकार्थाशङ्का कस्य

चित् । अतः स्थितपूर्वपक्षनिरसनसमर्थं पदद्वयं मन्वानः भाष्यकार आह— ' लोके येष्वर्थेषु प्रसिद्धानि पदानि, तानि सति संभवे तदर्थान्येव सूत्रेषु इत्यवगन्तव्यं, नाध्याहारादिभिः एषां कल्पनीयोऽ ( परिकल्प० इति मूले ) र्थः परिभाषितव्यो वा, इति । किंच न केवलमस्य अलौकिकार्थाशङ्कानिरासोऽवगम्यते परिभाषादियत्नगौरवकरणात् ।

' तत्र लोके अयं अथशब्दः वृत्तादनन्तरस्य प्रक्रियार्थो दृष्टः । न चेह किं चित् वृत्तमुपलभ्यते ' इति ( भाष्यं ) अलौकिकार्थाशङ्कां प्रकटयति । ' भवितव्यं तु तेन ' इति न्यायानपेतत्वं आशङ्कायाः कथयति । श्रुतसिद्धयर्थं हि प्रकरणादि अन्वेष्यम् । श्रुतस्य हि अयथार्थत्वे न श्रुतत्वमेव कारणम् । तच्च प्रकरणादिकं सर्वमत्रास्तीति 'तत्तु वेदाध्ययनं' इत्युक्तं 'तस्मिन् हि सति साऽवकल्पते' इति । इदानीं अविवक्षितार्थस्वाध्यायाध्ययनवादी आह , यदि तावत् भवान् सकलतन्त्रार्थपर्यालोचनया वेदाध्ययनस्य वृत्तत्वं मन्यते, तदयुक्तम् । स्वाध्यायाध्ययनविधेः आचार्यकरणविधिप्रयुक्तत्वात् अविवक्षितस्वार्थतैव अवगम्यते । अथ अदृष्टार्थमेवेदं सूत्रं वेदमधीत्य अनन्तरं धर्मजिज्ञासा इति, एवं तर्हि अर्थद्वयविधानं प्राप्नोति 'वेदमधीत्य, अनन्तरं च ' इति । यदि च ' वेदमधीत्य ' इत्युच्यते, अन्यस्यापि कर्मणः अनन्तरं धर्मजिज्ञासा अवकल्पते । अथ आनन्तर्यं विधीयते, प्रागपि वेदाध्ययनात् प्राप्नोति । न च अदृष्टार्थस्य वाक्यस्य अर्थद्वयविधानं द्विधा संभवति । उच्यते । नैवेदं अदृष्टार्थं सूत्रं, वेदार्थविचारायैव इदमारभ्यते । कुतः ? ' तादृशीं तु धर्मजिज्ञासामधिकृत्य अथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न संभवति वेदवाक्यार्थे विचार इह वर्तिष्यते ' । ननु ( न तु इति युक्तं पठितुम् ) अविवक्षितस्वार्थं वेदाध्ययनमित्युक्तवान् । विवक्षिते वा किं वेदाध्ययनपूर्वकेण आनन्तर्ये विधानेन, स्वतः प्राप्तेः । 'अपि च एवं सति नैव वयमिह वेदाध्ययनात् पूर्वं धर्मजिज्ञासायाः प्रतिषेधं शिष्मः ( शिंषमः ) परस्ताच्च आनन्तर्यम् । नहि एतदेकं वाक्यं पुरस्तात् ( च ) वेदाध्ययनात् धर्मजिज्ञासां प्रतिषेधति ( षेधिष्यति ) परस्ताच्च आनन्तर्यं उपदिशति ( प्रकरिष्यति ) । भिद्येत हि तदा ( तथा ) वाक्यम् । वेदानधीत्य इति एकस्यां, विपरीतमेकस्याम् । अर्थैकत्वाच्च एकवाक्यतां वक्ष्यति ' । अत एव अदृष्टार्थाशङ्का नैव सूत्रे कर्तव्या । किमर्थं तर्हि सूत्रं ? स्वाध्यायाध्ययनविधेः आचार्यकरणात् गुरुकुलनिवृत्तिरेव अनन्तरं भाति । अनङ्गत्वात्तु स्वार्थपरतैव न्याय्या, नाविवक्षितार्थता इति सूत्रस्य प्रयोजनम् । तदिदमाह ' किंच अधीते वेदे द्वयमापतति गुरुकुलाच्च समावर्तितव्यं वेदवाक्यानि ( च ) विचारयितव्यानि । तत्मा समावर्तिष्ट, कथं नु वेदवाक्यानि विचारयेत् इत्येवमर्थ उपदेशः । यद्येवं , न तर्हि वेदाध्ययनं पूर्वं ' अनन्तरं धर्मजिज्ञासायाः ( धर्मजिज्ञासायाः पूर्वं स्यादपि वेदाध्ययनं, आनन्तर्यं तु नास्ति, इति भाष्यं पूरयति अनन्तरशब्दं प्रक्षिपन् । ऋजु. ) । अविवक्षितस्वार्थतां वेदाध्ययनस्य स्मृतिकारो मन्यते ' वेदमधीत्य स्नायात् ' इति । न चेदमन्याय्यं स्मृतिवचनं स्वाध्यायाध्ययनविधेः विनियुक्तविषयत्वात् , तत्पूर्वकत्वाच्च स्वार्थावगतेः । तस्मादविवक्षितार्थतैव न्याय्या वेदादवगम्यते । 'न चाम्नायोऽतिक्रमितव्यः । तदुच्यते । अतिक्रमिष्याम इममाम्नायं, अनतिक्रामन्तो वेदमर्थवन्तं सन्तमनर्थकं कल्पयेम' आचार्यकरणविधेः अध्ययनमात्राच्च नार्थावबोधप्रत्यार्थिता संभवति । ननु च स्वाध्यायाध्ययनविधेः प्रयोजनद्वयासंभवात् अविवक्षैव । (उत्तरं—) केन चोक्तं स्वाध्यायाध्ययनविधेः प्रयोजनं एतत् ( आचार्यकरणनिष्पत्तिः ) इति । ( किं तर्हि प्रयोजनं ? ) ' दृष्टो हि तस्यार्थः कर्मावबोधनं नाम ' । उक्तं च अशेषत्वं स्वाध्यायाध्ययनस्य, तस्याधिकाराश्रवणात् । तदिदमाह " न च तस्याध्ययनमात्रात् तत्रभवन्तो याज्ञिकाः फलं समामनन्ति । यदपि च समामनन्तीव तत्रापि ' द्रव्यसंस्कारकर्मसु परार्थत्वात् फलश्रुतिरर्थवादः स्यात् ' ( ४।३।१ ) इत्यर्थवादतां वक्ष्यति" इति । ननु नैवात्र विरोधो विद्यते, किं विरोधनिराकरणार्थेन सूत्रेण ? कथमविरोधः ? ' न चाधीतवेदस्य स्नानानन्तर्यमेवत् विधीयते । नहि आनन्तर्यस्य वक्ता कश्चित् शब्दोऽस्ति । पूर्वकालतायां हि क्त्वा स्मर्यते नानन्तर्ये । दृष्टार्थता च अध्ययनस्य आनन्तर्ये व्याहन्येत ' । स्यादेतदेवं यदि अस्याः स्मृतेर्मूलान्तरमस्ति । आचार्यकरणविध्यर्थपरिसमाप्तिरेव अस्या

मूलं, वेदानुवचनान्तकत्वात् आचार्यकरणविधेः। (उच्यते) किंतु 'लक्षणया एषोऽर्थः स्यात्'। किमिदमुच्यते लक्षणया तु एषोऽर्थः स्यादिति ? इदमुच्यते 'न चेदमदृष्टार्थं विधीयते । किंतु लक्षणया अस्नानादि-नियमस्य पर्यवसानं वेदाध्ययनसमकालमाहुः वेद-मधीत्य स्नायात् इति'। अतः अपन्यायमूलतां कथयितुं सूत्रम्। 'गुरुकुलान्मा समावर्तिष्ट इति' मूला-न्तरत्वं च स्मृतेः अदृष्टं कल्पयितव्यं अतः 'अदृष्टार्थता-परिहारायैव' आचार्यकरणविधिरेव अस्या मूलम्। 'तस्मात् वेदाध्ययनमेव पूर्वमभिनिर्वर्त्य अनन्तरं धर्मो जिज्ञासितव्यः इति स्थितं अथशब्दप्रयोगसामर्थ्यात्'। एवं चेत् नेदमदृष्टार्थं, प्राप्तत्वात्। गुरुकुलनिवृत्तिरेव निवार्यते। 'न ब्रूमः अन्यस्यापि कर्मणः अनन्तरं धर्म-जिज्ञासा न कर्तव्येति। वेदमधीत्य न त्वरितेन स्नातव्यं, अनन्तरं धर्मो जिज्ञासितव्यः इति अथशब्दस्यार्थः'।

'अतःशब्दो वृत्तस्यापदेशको हेत्वर्थः।' ननु कस्य वृत्तस्य हेतुतामपदिशति ? वेदाध्ययनस्येति ब्रूमः। कथं पुनर्वेदाध्ययनस्य हेतुता ? अध्ययनानन्तरं अर्थाव-बोधदर्शनात्। अतः अधीतवेदस्य अनन्तरं धर्म-जिज्ञासा। तदिदं 'अथ' इत्युक्तम्। अतः अर्थाव-गमार्थं धर्मजिज्ञासाहेतुः अध्ययनम्। 'यथा क्षेमसु-भिक्षोऽयं देशः, अतोऽहमस्मिन् देशे वसामि इति' पूर्वोक्तस्य वाक्यस्य अतःशब्दो हेतुतामुपदिशति इति लौकिकार्थतां दर्शयति। 'एवमधीतो वेदो धर्मजिज्ञासायां हेतुर्ज्ञातः, अनन्तरं धर्मो जिज्ञासितव्यः' इति अथ-शब्दव्याख्यानमेव प्रयुक्तवान् हेतुत्वावगमाय। 'धर्माय हि वेदवाक्यानि अनधीतवेदो विचारयितुं न शक्नुयात्' इत्यनेन अधिकारशून्यां स्वार्थविवक्षां दर्शयति। 'अतः एतस्मात् कारणात् अनन्तरं धर्मं जिज्ञासितुमिच्छेत् इत्यर्थः।' निगमनवाक्यमेतत्। धर्मं जिज्ञासितुमिच्छेत् इति कस्य सूत्रावयवस्य व्याख्यानमेतत् ? धर्मजिज्ञासा-पदस्य इति ब्रूमः। ननु धर्मं जिज्ञासेत् इति वक्तव्यम्। (उच्यते) प्रकृतिप्रत्यययोर्हि प्रत्ययार्थस्य प्राधान्यमित्यु-क्तम्। धर्मजिज्ञासापदे पुनः प्रकृत्यर्थप्राधान्यप्रदर्शनाय अयं प्रयत्नः।

'धर्माय हि जिज्ञासा धर्मजिज्ञासा'। कथं पुनः प्रकृत्यर्थो ज्ञानं, प्रत्ययार्थ इच्छा ? यस्मादीदृश एवार्थे सन् स्मर्यते 'धातोः कर्मणः' (पा० ३।१।७) इति। एवं तर्हि ज्ञानस्य प्राधान्यं, न धर्मस्य। नहि अन-न्यार्था क्रिया प्रधानं भवतीति (क्लेशात्मकत्वात् क्रियायाः) धर्मकर्मिकैव सा प्राधानम्। अतो धर्मार्था जिज्ञासा। तदिदमाह 'सा हि तस्य ज्ञातुमिच्छा' इति।

उक्ता धर्मार्था जिज्ञासा 'स पुनः कथं जिज्ञासितव्यः ? को धर्मः, कथंलक्षणः, कानि अस्य साधनानि, कानि साधनाभासानि किंपरश्चेति' एवमविज्ञातो धर्मः नानु-ष्ठानायालं भवति। अननुष्ठितो धर्मः न धर्मकार्यं करोति इत्युक्तम्। 'आसां प्रतिज्ञानां पिण्डस्य एतत् सूत्रं "अथातो धर्मजिज्ञासा" इति।' केयं किंपरता नाम ? अधिकाराभिप्रायमेतदुच्यते, 'क पुरुषपरत्वं क वा पुरुषो गुणभूतः' इति च।

'धर्मः प्रसिद्धः अप्रसिद्धो वा' इति च कोऽभिप्रायः। यदि पुनर्वेदादेव अयमर्थो गम्यते किमत्र जिज्ञास्यते ? सत्यं, विप्रतिपन्नास्तु महर्षयः, केचित् प्रमाणान्तरपूर्वक-मर्थं वर्णयन्ति, केचित् मन्त्रार्थवादानामपि यथाश्रुते एवार्थे प्रामाण्यमिच्छन्ति, अकार्येऽपि अर्थे वेदः प्रमाण-मिति वदन्तः। अतोऽस्यां विप्रतिपत्तौ सत्यां प्रारभ्यते जिज्ञासा तत्त्वावगमाय। तत्त्वेन अपरिज्ञातोऽर्थः अनुष्ठी-यमानः विहन्ति अनुष्ठातारम्। ज्ञात्वा अनुष्ठितो निःश्रे-यसेन संयुनक्ति इत्यारभ्यते जिज्ञासा।

(**न्यायरत्नमालायां** प्राभाकरमतेन विरचितमधि-करणमित्थम्— ) 'तत्र तावदिमं केचित् पूर्वपक्षं प्रचक्षते। आचार्यकनियोगार्थः स्वाध्यायस्तत्प्रयुक्तितः॥ प्रथमावगतत्वेन तद्धि युक्तं प्रयोजनम्। तत्र वाक्यार्थ-विज्ञानं तद्धि पश्चात् प्रतीयते॥ तेनाविवक्षितार्थत्वाद् वेद-स्यार्थविचारणम्। न कर्तव्यमतः शास्त्रं मीमांसार्थमनर्थ-कम्॥' आचार्यकरणविधिप्रयुक्तस्य हि स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां पुरुषान्तरगामित्वेन बहिरङ्गमपि प्रथमा-वगतत्वेन तत्सिद्धिरेव अस्य प्रयोजनं युक्तं, न तु अर्थ-ज्ञानं पश्चाद्भावित्वात्। तेन अन्यार्थत्वात् वेदाध्ययनस्य

अविवक्षितोऽर्थः । अविवक्षितश्च न निर्णेतव्यः, प्रयोजनाभावात् । अकर्तव्ये च निर्णये न विचारः कर्तव्यः इति तदात्मकं मीमांसाशास्त्रमनर्थकत्वात् अनारम्भणीयमिति । कथमाचार्यकरणविधिप्रयुक्तमध्ययनं न स्वविधिप्रयुक्तम् ? उच्यते । ' न स्वाध्यायविधावस्ति नियोज्यस्तत्र चासति । न प्रयोजकता युक्ता प्रयाजादिनियोगवत् ।।' नहि अनधिकारस्य विधेः विषयानुष्ठापकत्वं संभवति प्रयाजादिनियोगवत् । न च स्वाध्यायाध्ययनविधौ अधिकारी श्रूयते । तस्मान्नास्य प्रयोजकत्वं संभवति । ' न च कल्पयितुं शक्यो नियोज्यः पितृयज्ञवत् । अकल्पितेऽपि यत् तस्मिन्ननुष्ठानं हि सिध्यति ।। ' अश्रूयमाणोऽपि नियोज्यः पितृयज्ञादिवत् कल्प्यते इति, तन्न । अकल्पितेऽपि नियोज्ये यस्मादनुष्ठानं सिध्यति । सिद्धे तस्मिन् नासौ कल्पयितुं शक्यते, अनुपपत्त्यभावात् । अनुष्ठानाधीनसिद्धिर्हि नियोगः तत्सिद्ध्यर्थं अनुष्ठातारमाक्षिप्य अनधिकारिणि अनुष्ठातृत्वासंभवात्, अनियोज्यस्य च अधिकारासंभवात् नियोज्यं कल्पयति । यदा तु विध्यन्तरानुष्ठापितेनैव विषयेण स्वात्मलाभं पश्यति, तदा अनुपपत्त्यभावात् न नियोज्यं कल्पयति प्रयाजादिनियोगवत् । संभवति चेह आचार्यकरणविध्यनुष्ठापितेनैव आत्मविषयेण अध्ययननियोगसिद्धिः इति न नियोज्यकल्पनासंभवः । कथं पुनः आचार्यकरणविधिः अध्ययनं प्रयुङ्क्ते ? तदुच्यते । उपनीय अध्यापनात् आचार्यकं भवति । न च अध्यापनं अध्ययनमन्तरेण संभवति, इति तदाक्षिपति । उपनयनमपि क्त्वाप्रत्ययेन अध्यापनसमानकर्तृकं अवगम्यमानं तदङ्गमेव विज्ञायते । तस्य च द्वारापेक्षायां उपनेयासत्तिरेव द्वारं लिङ्गादवगम्यते । उपनेयोऽपि नाकिंचित्करः अङ्गं, इति तद्व्यापारापेक्षायां उपनयनं प्रक्रम्य अधीतमध्ययनं अध्यापनोपकारित्वेन तद्व्यापारत्वेन अध्यवसीयते । एवं च वेदाध्ययनं कुर्वन् माणवकः अध्यापनस्य उपकरोति इत्यवगमात् तद्विषयमेव अध्ययनं आचार्यकसाधनं इति तद्द्वारेण सर्वस्य अध्ययनाङ्गस्य व्रतादेः तत एव अनुष्ठानसिद्धिः । तस्मात् आचार्यकरणविधिसिद्धिप्रयोजनत्वात् अध्ययनस्य अविवक्षितस्वार्थत्वात् वेदस्य, न तदर्थनिर्णयार्थं मीमांसाशास्त्रं आरब्धव्यं इति । ( पूर्वपक्षः )

सिद्धान्तस्तु । सत्यं, आचार्यकरणविधिप्रयुक्तमध्ययनं, न तु तत्सिद्धिरेव अस्य प्रयोजनं, बहिरङ्गत्वात् । कर्तृगामित्वेन अन्तरङ्गत्वात् अर्थज्ञानं प्रयोजनत्वेन स्वीक्रियते । ननु प्रथमावगतत्वेन प्रयोजनापेक्षं अध्ययनं आचार्यकमेव तावत् स्वीकरोति, स्वीकृते च तस्मिन् अपेक्षाऽभावात् पश्चादवगतमर्थज्ञानं अन्तरङ्गमपि न प्रयोजनं भवितुमर्हति । मैवम् । प्रथमं आचार्यकस्य प्रयोजनत्वापरिकल्पनात् । यदि अकल्पिते तस्मिन् अध्ययनस्य अनुष्ठानं न सिध्येत् तर्हि तत् कल्प्येत । न त्वेतदस्ति । अकल्पितेऽपि तस्मिन् अनुष्ठानलाभात् । अनुष्ठिते तु अध्ययने प्रयोजनापेक्षायां अन्तरङ्गत्वात् अर्थज्ञानमेव अङ्गीक्रियते । ननु नियोग एव शब्दावगतः प्रयोजनं स्यात्, नार्थज्ञानम् । न । अर्थज्ञानस्यापि प्रतीयमानस्य त्यागायोगात् । तेन उभयोरपि प्रयोजनत्वं युक्तं, अवगतत्वात् अर्थज्ञानस्य नियोगस्य च । तत्र अर्थज्ञानरूपं प्रयोजनं न विचारमन्तरेण अध्ययनेन संपादयितुं शक्यते इति अध्ययनविधिरेव तत्सिद्ध्यर्थं विचारमाक्षिपति इति तदात्मकं शास्त्रमारब्धव्यमिति । पृ. १–४.

शा— अनेन सूत्रेण प्रारिप्सितस्य शास्त्रस्य श्रोतृप्रवृत्तिसिद्धये धर्मज्ञानं प्रयोजनं कथ्यते । ... य एवायं प्रयोजनेन सह शास्त्रस्य साध्यसाधनत्वसंबन्धः स एव शास्त्रस्य प्रस्तावको नान्यः । भवति हि साधनत्वमेव साध्यार्थिनः साधने प्रवृत्तिहेतुः ... ।

अत्रेदं चिन्त्यते किं अध्ययनानन्तरं धर्मजिज्ञासया गुरुगृहेऽवस्थातव्यं, उत गुरुगृहात् समावर्तितव्यमिति । यदि हि स्वाध्यायाध्ययनविधिना धर्ममात्रार्थं अध्ययनं स्वर्गाद्यर्थेन विधीयते, ततस्तन्मात्रेणैव शास्त्रार्थस्य समाप्तत्वात् ' अधीत्य स्नायात् ' इति स्मृतिवचनबलेन च समावर्तितव्यं इति । अथ अक्षरग्रहणादिपरंपरोपजायमानवाक्यार्थज्ञानार्थमध्ययनं विधीयते, ततस्तस्य विचारमन्तरेण असंभवात् अध्ययनविधिनैव अर्थात् विचारो विहितः, इति गुरुगृहे एव अवस्थाय विचारयितव्यो धर्मः । तत्र ' विनाऽपि विधिना ज्ञानलाभान्नहि तदर्थता । कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत् ।। ' ... तस्मात् अदृष्टार्थमेव स्वाध्यायाध्ययनं इति

अध्ययनमात्रादेव समाप्ते शास्त्रार्थे गुरुगृहात् समावर्तितव्यम्। इति प्राप्ते **अभिधीयते**। 'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना। विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति॥' तेन अर्थज्ञानावसानं अध्ययनं अध्ययनविधिना विधीयते इति, विचारमन्तरेण तदनुपपत्तेः, अध्ययनविधिरेव विचारमाक्षिपन् तद्विरुद्धं स्मार्तं स्नानं बाधते इति, सिद्धं अध्ययनानन्तरं धर्मजिज्ञासा कर्तव्या इति। **सूत्रे** धर्मग्रहणमुपलक्षणार्थं, अधर्मस्यापि हानाय जिज्ञास्यत्वात्। अकारप्रश्लेषेण वा सूत्रं अधर्मजिज्ञासायामपि व्याख्येयम्।

**वि**— 'स्वाध्यायोऽध्येय इत्यस्य विधानस्य प्रयुक्तितः। विचारशास्त्रं नारम्भ्यमारम्भ्यं वेति संशयः॥, अर्थधीहेतुताऽधीतेर्लोकसिद्धाऽवघातवत्। नियामकं नचैवातो वैधारम्भो न संभवी॥, दर्शापूर्ववदस्त्यत्र क्रत्वपूर्वं नियामकम्। अर्थनिर्णायकं शास्त्रमत आरम्भ्यतां विधेः॥' **गुरुमतेन तु**— 'अथवाऽध्यापनात् सिद्धेर्नैवास्त्यध्ययने विधिः। तेन पूर्वोत्तरौ पक्षौ प्रसाध्यावन्यहेतुभिः॥ विधेयाध्यापनं सिद्धेद् बालस्यार्थधियं विना। तेन निर्विषयं शास्त्रं निष्फलं चेत्युपेक्ष्यताम्॥, स्वतः प्राप्तार्थबोधस्य विवक्षाऽनपनोदनात्। विषयादि सुसंपादं शास्त्रमारभ्यते ततः॥' 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' इत्यध्यापनं विहितम्। न चात्र नियोज्याभावः, आचार्यत्वकामिनो नियोज्यत्वात्। 'उपनयीत' इत्यनेन आचार्यकरणे 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' (अत्र सि० कौमुदी—अत्र उत्सञ्जन-ज्ञान-विगणन-व्ययाः नयतेर्वाच्याः। इतरे प्रयोगोपाधयः। तथाहि, 'शास्त्रे नयते' शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयति इत्यर्थः। तेन च शिष्यसंमाननं फलितम्। उत्सञ्जने 'दण्डमुन्नयते' उत्क्षिपतीत्यर्थः। 'माणवकमुपनयते' विधिना आत्मसमीपं प्रापयतीत्यर्थः। उपनयनपूर्वकेणाध्यापनेन हि उपनेतरि आचार्यत्वं क्रियते। ज्ञाने 'तत्त्वं नयते' निश्चिनोति इत्यर्थः। 'कर्मकरानुपनयते' भृतिदानेन स्वसमीपं प्रापयतीत्यर्थः। विगणने ऋणादेर्निर्यातनम्। 'करं विनयते' राज्ञे देयं भागं परिशोधयतीत्यर्थः। 'शतं विनयते' धर्मार्थं विनियुङ्क्ते इत्यर्थः। इति) इति पाणिनिसूत्रेण (१।३।३६) विहितेन आत्मनेपदेन नियोज्यविशेषणं आचार्यत्वं प्रतीयते। उपनयने यो नियोज्यः स एवाध्यापनेऽपि, तयोरेकप्रयोजनत्वात्। एवं सति आचार्यकर्तृकं अध्यापनं माणवककर्तृकेणाध्ययनेन विना न सिध्यति, इति अध्यापनविधिप्रयुक्त्यैव अध्ययनानुष्ठानसिद्धेः न पृथक् अध्ययने विधिरभ्युपगन्तव्यः। श्रूयमाणं विधिवाक्यं नित्यानुवादत्वेनापि उपपद्यते।

विचारशास्त्रं विषयः अवैधं वैधं वेति संशयः। तत्र वैधत्ववादी प्रष्टव्यः, विधेयं आचार्यकर्तृकमध्यापनं किं माणवकस्य अर्थज्ञानमपि प्रयुञ्जीत, किंवा पाठमात्रम्। नाद्यः, अन्तरेणापि अर्थज्ञानं अध्यापनसिद्धेः। पाठमात्रं तु विचारस्य विषयो न भवति। आपाततः प्रतीतः संदिग्धोऽर्थो विषयः, तथा सति यत्र अर्थप्रतीतिरेव नास्ति, तत्र संदेहस्य का कथा। निर्णयो विचारस्य फलं, सोऽपि विषयवत् दूरापेतः। अतो विषयप्रयोजनाभावात् विचारशास्त्रं नारम्भणीयम्। **इति पूर्वः पक्षः। अत्रोच्यते**। मा नाम अध्यापनेन अर्थावबोधः प्रयुज्यताम्। तथापि साङ्गवेदाध्यायिनो निगमनिरुक्तव्याकरणैः व्युत्पन्नस्य पौरुषेयग्रन्थेष्विव वेदेऽपि अर्थावबोधः स्वत एव प्राप्नोति। **ननु** यथा 'विषं भुङ्क्ष्व' इत्यत्र प्रतीयमानोऽप्यर्थो न विवक्षितः, तथा वेदार्थस्यापि विवक्षाद्यभावस्तदवस्थ इति **चेत् न**। विवक्षाया अपनोदितुमशक्यत्वात्। विषभोजनवाक्यस्य आप्तप्रणीतत्वेन बाधो मा भूत् इति मुख्यार्थस्तत्र परित्यक्तः, वेदे तु कुतो न विवक्षितार्थत्वम्? विवक्षिते च वेदार्थे यत्रयत्र पुरुषस्य संदेहः, स सर्वोऽपि विचारशास्त्रस्य विषयः। तन्निर्णयः प्रयोजनम्। ततः अध्यापनविधिप्रयुक्तेन अध्ययनेन बुध्यमानस्यार्थस्य विचार्यत्वात् विचारशास्त्रस्य वैधत्वं सिद्धम्।

**भाट्ट**— 'विश्वेश्वरं नमस्कृत्य खण्डदेवः सतां मुदे। तनुते तत्प्रसादेन संक्षिप्तां भाट्टदीपिकाम्॥' इह खलु निखिलपुमर्थानर्थसाधनौ धर्माधर्मौ साङ्गोपाङ्गवेदाध्ययनसमधिगम्यौ। तच्च विचारमन्तरेण न भाव्यायाल,

इति तत्प्रदर्शनाय परमकारुणिको भगवान् जैमिनिराचार्यः सकलविद्योपकारिणीं धर्ममीमांसां 'अथातो धर्मजिज्ञासा' इत्यारभ्य 'विद्यते वाऽन्यकालत्वात् यथा याज्यासंप्रैषो यथा याज्यासंप्रैषः' इत्यन्तैः सूत्रैः बह्वधिकरणगर्भितां **षोडशलक्षणीं** अभ्यर्हितां विद्यां प्रकटीचकार।

अधिकरणं तु वेदवत् षडङ्गम्। यदाहुः 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरम्। प्रयोजनं संगतिश्च प्राञ्चोऽधिकरणं विदुः॥' इति। संगतिस्तु प्रसङ्गादिभेदात् बहुविधा। तत्रेदमाद्यमधिकरणम्।

अथातो धर्मजिज्ञासा। अत्र 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनविधिवाक्यं विषयः। वेदाध्ययनानन्तरं वेदार्थविचारः कर्तव्यो वा न वा इति संदेहः। तत्र **पूर्वः पक्षः**— 'अधीत्य स्नायात्' इति स्मृत्या अध्ययनानन्तरमेव गुरुकुलात् परावर्तनविधानविरोधात् न कर्तव्यः। न च अध्ययनविधित एव अर्थज्ञानभाव्यकत्वावगमात् तत्सिद्धिः, अर्थज्ञानजनकत्वेन अध्ययनस्य लोकसिद्धत्वेन अविधेयत्वात्, तन्नियमस्य च अर्थज्ञाने अनुपयोगात्, अव्यभिचरितक्रतुसंबन्धाभावेन क्रतुं यावत् उपयोगकल्पनाऽनुपपत्तेश्च न विधेयत्वम्। अतः स्वर्गाद्यर्थमेव अध्ययनं विधीयते। लोकतः पूर्वं प्रवृत्त्यङ्गीकारेण यथाश्रुतार्थज्ञानार्थं वा अध्ययनमेव वा भावनाभाव्यमस्तु। न चैवं इष्टभाव्यकत्वाभावात् प्रवृत्त्यनुपपत्तिः, 'अनधीयाना व्रात्या भवन्ति' इति वचनेन अकरणे प्रत्यवायबोधनेनापि प्रवृत्तिसिद्धेः। तस्मात् नार्थविचारार्थं गुरुकुले अवस्थानं इति। **सिद्धान्तस्तु**, न स्वाध्यायविधिः स्वर्गाद्यर्थं अध्ययनं विधत्ते, दृष्टे संभवति अदृष्टस्यान्याय्यत्वात्। नापि यथाश्रुतार्थज्ञानार्थम्। तथात्वे व्रात्यताबोधकवाक्येन अध्ययनस्यावश्यकत्वात्, गृहीतपदपदार्थसंगतिकस्य 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्' इत्यादिवचनाच्च ज्ञानस्याप्यावश्यकत्वेन यथाश्रुतार्थज्ञानस्य आनुषङ्गिकतयाऽपि सिद्धेः स्वाध्यायविधिवैयर्थ्यप्रसङ्गात्। एतेन अध्ययनभाव्यकत्वपक्षोऽपि निरस्तः। अतो वैयर्थ्यपरिहारार्थं प्रयोजनवदर्थज्ञानाद्युद्देशेन स्वाध्यायाध्ययनं तव्यप्रत्ययेन लक्षणया विधीयते, प्रयोजनवदर्थज्ञानादिसाधनीभूतस्वाध्यायोद्देशेन वा अध्ययनमात्रं, तव्यप्रत्ययेन स्वाध्यायस्य कर्तव्यत्वाभिधानात्। अतश्च गुरुसदन–अध्ययन–अक्षरावाप्ति–तदर्थज्ञान–साधनीभूतस्वाध्याय–धर्मानुष्ठान–गुरुस्वर्ग–विधिविधानाद् उत्तरोत्तरस्य पूर्वपूर्वभाव्यतायाः श्रुत्यादिसिद्धत्वात् न यावदर्थज्ञानं गुरुकुलात् परावृत्तिः। अतः सिद्धः अर्थविचारः। उक्तं च 'अतो नित्यः क्रतुविचारः त्रैवर्णिकमात्रस्य' इति। स्मृतौ क्त्वाप्रत्ययस्तु उत्तरकालमात्रपरः इति।

उपोद्घातः **संगतिः**। **प्रयोजनं** तु स्पष्टम्। वेदाध्ययनानन्तरं अर्थविचारः धर्माधर्मज्ञानाय उपनीतैः कर्तव्यः सहकारित्वात् इति सूत्रार्थवशात् अनुबन्धचतुष्कसिद्धिः। एवं प्रत्यधिकरणं अङ्गान्युन्नेयानि।

**न्यायबिन्दुः**— अध्ययनस्य स्वर्गाद्यर्थत्वात् कर्तव्यान्तराभावात् तदनन्तरमेव गुरुगृहात् समावर्तितव्यम्। **इति प्राप्ते**, अर्थज्ञानरूपदृष्टफले संभवति अदृष्टकल्पनाऽयोगात् अर्थज्ञानस्य च विचारं विना असंभवात् तं कृत्वा समावर्तनं इति सिद्धम्।

**मण्डन**—'अथायं धर्मजिज्ञासां प्रतिज्ञाय प्रमाणतः। आदौ......।'

**शंकर**— 'अधीतिरत्र दृष्टार्था।'

* **अथातो धर्मजिज्ञासा**। अनेन सूत्रेण विषयप्रयोजनकथनद्वारा शास्त्रारम्भकर्तव्यता प्रतिपाद्यते। कर्तव्यपदाध्याहारेण जिज्ञासापदे विचारलक्षणया च वेदाध्ययनानन्तरं वेदाध्ययनहेतुकः धर्मज्ञानेच्छाप्रयोज्यः धर्मप्रमाफलको विचारः कर्तव्यः इति सूत्रार्थः। तेन विचारहेतुसूत्रसमुदायरूपशास्त्रस्य धर्मज्ञानप्रयोजनकता धर्मविषयता चोक्ता। संबन्धोऽपि प्रतिपाद्यप्रतिपादकभावः। वेदाध्ययनहेतुकता चाधीतवेदस्य 'धर्मेण पापमपनुदति' इत्यादिवाक्येभ्यः, सामान्यतो धर्मज्ञानस्य विशेषधर्मप्रकारकज्ञानेच्छाहेतुत्वात्। तथाहि, 'धर्मेण' इतिवाक्येन सामान्यतो धर्मज्ञाने तदुत्तरं तदनुव्यवसाये धर्मज्ञानत्वसामान्यप्रत्यासत्त्या सकलधर्मज्ञानज्ञानं, घटत्वसामान्यप्रत्यासत्त्या नीलघटादिज्ञानवत्। ततः तद्विषयकेच्छा, इति क्रमेण सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकेच्छाप्रयोजकत्वम्। सा चेच्छा 'सप्रमाणकधर्मज्ञानं जायतां' इत्याद्याकारिका,

तादृशेष्टसाधनताज्ञानजन्या च। तादृशज्ञानज्ञानं च धर्मज्ञानत्वसामान्यलक्षणप्रत्यासत्त्या इति। तेन च अधीतवेदोऽधिकारी प्रदर्शितः। इदं च सूत्रं स्मृतिरूपं स्वसूचितन्यायानुग्राह्यप्रमाणसापेक्षं च इति अध्ययनविधिमूलकम्। तेनापि वेदाध्ययनानन्तरं तदर्थज्ञानाय विचारविधानात्। ......अधीतवेदस्य प्रयोजनवत्त्वं चेत्थमवसेयम्। विधीनां प्रवृत्तिजनकप्रवर्तनाज्ञानं, अर्थवादानां प्राशस्त्यज्ञानं, मन्त्राणां विशिष्टार्थस्मरणं, नाम्नां कर्मभेदो गुणफलोपबन्धः संकल्पलाघवं च, साम्नां अक्षराभिव्यक्तिः, स्तोभानां सामकालपूर्तिः, उपनिषदां पारलौकिकफलककर्मप्रवृत्तिजनकशरीरव्यतिरिक्तजीवात्मज्ञानं क्रमज्ञानादि च यथेष्टमूहनीयम्।

अधिकरणं च पञ्चाङ्गं 'विषयः संशयश्चैव पूर्वपक्षस्तथोत्तरः। प्रयोजनं च पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम्॥' संगतिश्चेति क चित् पाठः। तच्चेत्थम्। अध्ययनविधिर्विषयः वेदाध्ययनोत्तरं धर्माधर्मज्ञानफलकविचारविधायकः, न वा इति संशयः। अध्ययनस्य गुरुमुखोच्चारणपूर्वकोच्चारणरूपत्वात् तस्य विश्वजिद्वत् स्वर्गार्थत्वात् 'अधीत्य स्नायात्' इति स्नानविधिना न कर्तव्यः इति पूर्वपक्षः। उक्तयुक्त्या अध्ययनविधेः अर्थज्ञानपर्यन्ततया तस्य विचारमन्तरेण असंभवात् कर्तव्यः। स्मृतिस्तु अध्ययनकरणकभावनोत्तरकालं स्नानं इति व्याख्येया, श्रुत्यनुरोधात् इति सिद्धान्तः। प्रयोजनं स्पष्टम् (निर्णीतार्थज्ञानम्)। तथा च सिद्धं धर्मज्ञानाय शास्त्रमारम्भणीयं इति। तज्ज्ञानं च स्वरूपप्रमाणसाधनप्रयोजनविचारद्वारेण इति तच्चिन्ता।

एवं सूत्रे अकारप्रश्लेषेण अधर्मचिन्ताया अपि शास्त्रे विषयत्वमुक्तम्।

अत्र जैमिनेः विघ्नाभावनिश्चयात् ग्रन्थादौ न मङ्गलाचरणे प्रवृत्तिः इति **जीर्णाः**। वस्तुतस्तु अतःपदेन अध्ययनहेतुत्वोक्तेः आनन्तर्यस्यापि अर्थप्राप्तत्वात् अथशब्दानर्थक्यापत्त्या अथशब्दो मङ्गलार्थकः। **मणि.** पृ.१-६.

* अथातो धर्मजिज्ञासा इति सूत्रं 'वेदमधीत्य' इति स्मृतेः अपन्यायमूलतां कथयितुं प्रवृत्तम्। यदि स्मृतेः 'वेदमधीत्य स्नायात्' इति वेदाध्ययनोत्तरकालताविशिष्टस्नानमात्रविधायकत्वं स्यात्, ततः स्मृतेरपि मूलान्तरं कल्प्यं स्यात्। यदा तु अध्ययनानन्तरं अस्नानादिनियमनिवृत्त्यर्थता भवेत्, ततः पूर्वपक्षन्यायमूलत्वात् नादृष्टमूलान्तरानुमानं स्यात्। तत्र अदृष्टकल्पनाया असंभवात् दृष्टे पूर्वपक्षन्याये सति तन्मूलत्वमेव न्याय्यं स्मृतेः। तन्मूलत्वे च अस्ति विरोधः। पूर्वपक्षे हि अनुवचनान्त एव आचार्यकरणविध्यर्थः। तस्मिन् निर्वृत्ते तत्प्रयुक्ताः सर्वेऽपि अस्नानादयो नियमाः निवर्तन्ते इति वेदाध्ययनानन्तरमेव गुरुकुलात् निवृत्तिः। अतः अपन्यायमूलतां स्मृतेः कथयितुं सूत्रं इति स्थितम्। **ऋजु.** पृ. १०-११.

* (अथातो धर्मजिज्ञासा इति सूत्रस्थयोः 'अथ, अतः' इति शब्दयोः व्याख्यानम्) अतो वेदाध्ययनात् हेतोः धर्मजिज्ञासा अध्ययनानन्तरमेव कर्तव्या। हेतोः सिद्धत्वात् विलम्बानुपपत्तेः। कथमध्ययनमानन्तर्यहेतुः? यस्मात् अध्ययनानन्तरं अर्थावबोधः, तस्मादध्ययनं हेतुरिति। तदिदमथेत्युक्तम्। हेतुमदानन्तर्यं हेतुत्वावगमाय इति हेतुमता विना हेतुत्वावगमासिद्धेः हेतुमदथशब्दव्याख्यानं युक्तम्। **ऋजु.** पृ. १२.

**अथातो धर्मजिज्ञासा**। धर्मशब्देन गौतमीयादिवत् नापूर्वमुच्यते। किंतु तत्साधनं यागाद्येव। तदुक्तं श्रेयस्करभाष्ये 'धर्मश्च फलसंबद्धं कर्म यागादि वर्ण्यते' इति। अपवादतया चात्र अधर्मोऽपि जिज्ञास्यः द्वितीयलक्षणे भेदापवादत्वेन अभेदवत्, इति न शास्त्रस्य विषयनानात्वं शङ्क्यम्। इह च धर्मजिज्ञासापदं न विचारं लक्षयति। औपनिषदानां तु ब्रह्मजिज्ञासापदं तल्लक्षकं इति वैषम्यम्। 'धर्मं जिज्ञासितुमिच्छेत्' (भा. पृ.८), 'तस्माद्धर्मो जिज्ञासितव्यः' (भा. पृ. ११) इत्यादिभाष्ये 'संबन्धं क्रिययोर्ह्येष ब्रूते शास्त्राच्च ते पृथक्' इत्यादिवार्तिके, तद्व्याख्यार्थे न्यायरत्नाकरे च 'अध्ययनजिज्ञासाक्रिययोः संबन्धं अथशब्दो ब्रूते, ते च शास्त्रादत्यन्तभिन्ने, नहि जिज्ञासाशब्दो मीमांसापर्यायः' इति श्रौतार्थपरत्वस्यैवोक्तेः। तथा 'आनन्तर्यवचोव्यक्तिराश्रितैवात्र गम्यते' (श्लोवा. प्रतिज्ञासूत्रे ८६) इति वार्तिके अथशब्दः आनन्तर्यार्थो नाधिकारार्थः इत्युक्तम्। जिज्ञासा-

पदस्य च विचारलक्षकत्वे अधिकारार्थताऽप्यविरुद्धा इति। तृतीयेऽप्युक्तं ' प्रथमाध्यायप्रथमसूत्रे हि धर्मज्ञानेच्छाया वक्ष्यमाणाया व्याख्येयत्वेन अनुपन्यासात् अनन्तरानुष्ठेयमात्रमेव उपदेष्टव्यं इत्यधिकारार्थत्वं नोक्तम् ' ( वा. पृ. ६५१ ) । ' इह त्वध्यायरूपं वा तदर्थात्मकमेव वा । व्याख्येयमधिकर्तुं हि शक्यते शेषलक्षणम् ॥ ' ( वा. पृ ६५१ ) इति ग्रन्थयोः । आद्ये प्रथमसूत्रे विचारानुपादानात् अधिकारार्थता अथशब्दस्य नास्तीत्युक्तम् । द्वितीयग्रन्थे तु तृतीयाध्यायाद्यसूत्रे विचारोपादानात् अधिकारार्थतेति । तस्मात् सर्वस्य (शास्त्रस्य) धर्मो विषयः । समस्तस्य चार्थस्य द्वादशविधस्य वक्ष्यमाणस्य प्रतिज्ञापिण्डोऽयं ' धर्मजिज्ञासा ' इति ।

अत्र सूत्रे धर्ममीमांसा आरम्भ्या, न वेति चिन्त्यते। तदर्थं च अथशब्देन योग्यतया अध्ययनानन्तर्यमुक्त्वा धर्मजिज्ञासा कर्तव्या इत्युपदेशात्मकजैमिनिसूत्ररूपस्मृत्या 'अधीत्य स्नायात्' इति स्मृतिः बाध्या, न वेति। तदर्थं च अध्ययनविधिः स्वर्गाद्यदृष्टार्थः, उत फलवदर्थावबोधरूपदृष्टार्थः इति । तत्र ' स स्वर्गः स्यात् ' इति विश्वजिन्न्यायेन पूर्वपक्षयित्वा दृष्टे संभवति अदृष्टकल्पनाऽनवकाशात् सिद्धान्तितम् । ततश्च अध्ययनविधिमूलया जैमिनिसूत्रस्मृत्या ' अधीत्य स्नायात् ' इति स्मृतेः बाधात् यथावदर्थज्ञानार्थं न्यायनिरूपणात्मिका मीमांसा आरम्भ्या । **बाल. पृ. १–२.**

**॥ अथातो धर्मजिज्ञासा । १।१।१।१ ॥**

मीमांसाशास्त्रारम्भप्रतिपादनार्थं प्रथमं सूत्रम् । धर्मः कथं जिज्ञासितव्यः, को धर्मः , कथंलक्षणः , कान्यस्य साधनानि, कानि साधनाभासानि, किंपरश्च, क्व पुरुषपरत्वं क्व वा पुरुषो गुणभूतः इत्येतासां प्रतिज्ञानां पिण्डः एतत्सूत्रम् ।

अथशब्दः अनन्तरं इत्यर्थकः । आनन्तर्यं च वेदाध्ययनात् । अतःशब्दो हेत्वर्थः वेदाध्ययनस्य कर्मानुष्ठानोपयोगिज्ञानरूपदृष्टार्थत्वं ब्रूते । धर्मः द्वितीयसूत्रे लक्ष्यमाणः । ज्ञातुमिच्छा जिज्ञासा । कर्तव्या इति पदं अध्याहार्यम् । कर्तव्यपदान्वयार्थं च जिज्ञासापदस्य ज्ञानेच्छासाध्यविचारे लक्षणा । धर्मस्य जिज्ञासा इति समासः । धर्माय जिज्ञासा इत्यपि समासः स्वीकृतः । मुख्यस्तु षष्ठीतत्पुरुष एव । तथा च वेदाध्ययनस्य कर्मानुष्ठानोपयोगिवेदार्थज्ञानहेतुत्वात् वेदाध्ययनात् अनन्तरं धर्मज्ञानार्थं वेदवाक्यार्थविचारः कर्तव्यः इति वाक्यार्थः । निर्णीतार्थज्ञानार्थं मीमांसाशास्त्रं आरम्भणीयं इत्यधिकरणार्थः । अत्र सूत्रे धर्मपदं अधर्मस्याप्युपलक्षणं, अकारप्रश्लेषोऽपि वा । अधर्मज्ञानं च त्यागार्थम् । **के.**

* ' **अथादधीत** ' इत्यनेन आधाने एव कालबाधः इति वक्ष्यते । **भाट्ट. २।४।३.**

**॥ अथान्येनेति संस्थानां वादः, संनिधानात् । ५।३।१४।३९॥**

' एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमः, य एतेनानिष्ट्वा अथान्येन यजेत गर्तपत्यमेव तज्जायते ' इतिवाक्ये ' अथ अन्येन ' इति अन्यशब्देन उक्थ्यादीनां संस्थानामेव वादः उक्तिः इति ज्ञेयं, प्रकरणे तासामेव संनिधानात् संनिहितत्वात् , सर्वनाम्नां च प्रकृतवाचित्वात् । इति पूर्वः पक्षः ।

**तत्प्रकृतेर्वाऽऽपत्तिविहारौ हि न तुल्येषूपपद्येते । ४० ॥**

सूत्रेण प्राप्तं पूर्वपक्षं वाशब्देन निरस्य सिद्धान्तमाह । अन्येन इति तत्प्रकृतेः निर्देशः स्यात्। सः अग्निष्टोमः प्रकृतिर्यस्य उक्थ्यादेः गोष्टोमायुष्टोमादेश्च, सः सर्वः तत्प्रकृतिः । तस्य सर्वस्य अन्यपदेन निर्देशः स्यात् , न केवलं संस्थानामेव । कुतः ? हि यस्मात् तुल्येषु ज्योतिष्टोमशब्दकेषु उक्थ्यषोडश्यतिरात्राप्तोर्यामेषु आपत्तिविहारौ न उपपद्येते। आपत्तिः त्रिवृदादीनां विकृतिभूतसर्वसोमरूपताप्राप्तिः । विहारश्च त्रिवृदादिस्तोमानां अग्निष्टोमात् निर्गमनम् । तत्र ' प्रजापतिर्वा अग्निष्टोमः स उत्तरानेकाहानसृजत , ते सृष्टास्तमब्रुवन् , न वै स्वेनात्मना प्रभवाम । तेभ्यः स्वातन्त्र्यं प्रायच्छत् , तथा च ते प्राभवन् ' । ' तद्यथा वा इदमग्नेर्जातादन्येऽग्नयो विह्रियन्ते , एवं वा एतस्मात् यज्ञादन्ये यज्ञक्रतवो विह्रियन्ते । यो वै त्रिवृदन्यं यज्ञक्रतुमापद्यते स तं दीपयति, यः पञ्चदशं स तं, यः सप्तदशं स तं, य एकविंशं स तं, इत्येवमाहुरेको यज्ञ इति । एते वै सर्वे ज्योतिष्टोमा भवन्ति ' इति श्रुतिः

आपत्तिविहारयोर्बोधिका । तस्मात् अन्येन इति शब्देन अग्निष्टोमभिन्नानां संस्थानां गवादीनां च निर्देशः ।

**प्रशंसा वा, विहरणाभावात् । ४१ ॥**

पुनः पूर्वपक्षी आह । आपत्तिविहारवर्णनं प्रशंसा केवलं, वस्तुनो विहरणाभावात् । ज्योतिष्टोमाङ्गानां प्रकरणेन ज्योतिष्टोमे एव विश्रान्तत्वेन उत्तरक्रतुषु तदसंभवात् । अत्रच विहरणशब्देन आपत्तेरपि उपलक्षणम् । नहि विकृतिसोमानां अग्निष्टोमात् निर्गमनरूपं विहरणमुपलभ्यते, नापि त्रिवृदादयः अग्निष्टोमादन्यान् यज्ञक्रतून् प्राप्नुवन्त उपलभ्यन्ते । वाशब्दः सिद्धान्तपक्षव्यावृत्त्यर्थः ।

**विधिप्रत्ययाद्वा, नह्यकस्मात् प्रशंसा स्यात् । ४२ ॥**

' आपत्तिविहारबोधकवाक्ययोः केवलप्रशंसापरत्वं, न तेन अन्यशब्दार्थनिश्चयो भवति ' इति शङ्कां वाशब्देन निरस्यन् सिद्धान्ती आह । विधिप्रत्ययात् आपत्तिविहारयोः साक्षाद्विध्यभावेऽपि ' प्रकृतिवद्विकृतिः ' इति अतिदेशशास्त्रात्मकविधिजन्यात् प्रत्ययात् आपत्तिविहारयोर्ज्ञानात् ज्योतिष्टोमप्रकृतिकाः सर्वे यज्ञक्रतवः ' अथान्येन ' इति अन्यशब्देन निर्दिष्टा इति गम्यते । नहि किल अकस्मात् प्रापकशास्त्रं विना प्रशंसाऽपि स्यात् । तथा च आपत्तिविहारप्रदर्शनात् सर्वेषां यज्ञक्रतूनां अग्निष्टोमादुत्पत्तिः, अग्निष्टोमरूपताप्राप्तिश्च ज्ञायते । तेन अन्यशब्देन अग्निष्टोमभिन्नानां उक्थ्यादीनां गौरायुर्ज्योतिः इत्यादीनां च निर्देशः इति सिद्धान्तः । **के.**

* अथान्येन इत्यन्यशब्दः सप्तसंस्थामात्रपरः सत्राहीनादिसाधारणो वा इति संशये, सप्त संस्थाश्च सत्राहीनाश्च इति सर्वसाधारणः अन्यशब्दः इति सिद्धान्तः । **भा.** ५।३।१४।३९–४२. * अथान्येन इत्यन्यशब्देन एकस्तोमका अनेकस्तोमका वा सोमविकाराः सर्वे क्रतवो गृह्यन्ते । तेषां सर्वेषां प्रथमयज्ञोऽग्निष्टोमः । **वि.** ५।३।१५.

**' अथापि शास्त्रतन्त्रत्वं तथापि तदनेकता ' इति** ग्रहाधिकरण–( ३।१।७ )–**वार्तिकोक्तन्यायेन सकृदुच्चरितस्यापि** प्रत्ययस्य एकपदोपात्तानेकार्थविधिशक्तत्वम् । **सु. पृ.** ४१९.

* **' अथैष एकत्रिकः** तस्यैकस्यां ( ऋचि ) बहिष्पवमानं, तिसृषु होतुराज्यं, एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमानः ' इति एकत्रिकनामकः क्रतुः श्रुतः, एकसंख्यायास्त्रिसंख्यायाश्च व्यतिषङ्गात् । **वि.** १०।५।२.

* **' अथैष ज्योतिः '** इत्यस्मिन् वक्ष्यमाणोदाहरणे ( २।२।८ ) यागावगमात् प्रागेव संज्ञात्वावगमात् संज्ञायाः कर्मभेदहेतुत्वम् । **वि.** २।२।२. * ' अथैष ज्योतिः ' ' अथैष विश्वज्योतिः ' ' अथैष सर्वज्योतिः ' 'एतेन सहस्रदक्षिणेन यजेत' अयं परस्तादनुषङ्गेण विधिः । **बाल. पृ.** २८. * अथैष ज्योतिः० इत्यत्र अथशब्देन विच्छेदात् संज्ञाया भेदकत्वम् । ...अत्र द्योतनादिगुणयोगेन ज्योतिरादिसंज्ञं कर्मत्रयं सोमयागप्रकृतिकं तत्तद्वाक्यैरुत्पन्नं सहस्रदक्षिणाकं 'एतेन ऋद्धिकामो यजेत' इति वाक्येन फले विधीयते । **भाट्ट.** २।२।८.

* **'अथैष भूः'** इति भूनामकं एकाहविशेषमुपक्रम्य 'धेनुर्दक्षिणा' इति श्रूयते । **वि.** १०।३।१४. * 'अथैष भूर्वैश्वदेवः ' इत्यनेन विहिते भूसंज्ञके एकाहे ' धेनुर्दक्षिणा ' इत्याम्नातम् । सा धेनुः 'गौश्चाश्वश्च' इत्यनेन विहितसर्वद्रव्यबाधिका । **भाट्ट.** १०।३।१४. * ' अथैष भूर्वैश्वदेवः ' इत्यादौ यत्र न यागत्वपरिचायकपदश्रवणं, तत्र वैकल्पिकसंस्थाप्रकृतिकत्वं पूर्वपक्षे । सिद्धान्ते तु ज्योतिष्टोमप्रकृतिकत्वमेव । **भाट्ट.** ३।६।१६.

**अदग्धदहनन्यायः** । यथा नहि वह्निर्दग्धं दहति किन्तु अदग्धमिति, तथा प्रकृतेऽपि । ' इको झल् ' ( पा० १।२।९ ) इति सूत्रमहाभाष्येऽप्ययमभिहितः । तद्यथा– ' अकृतकारि खल्वपि शास्त्रमग्निवद्भवति । तद्यथा–अग्निर्यददग्धं तद्दहति, यद्दग्धं तन्न दहति ' इति । **साहस्री.** २९३.

* **अदन्तत्वं** ( हेतुमात्रमदन्तत्वं ३।३।४५ सू. ) दन्तराहित्यं पूष्णो देवस्य, तस्मात् तदर्थस्य हविषः पेषणं कर्तव्यम् । तच्च पूषैकदेवत्ये एव । **के.**

* **अदर्शनं** न असत्त्वेनैव, किंतु अनभिव्यक्तावपि घटते एव । **ऋजु.** २०३.

☒ **अदर्शनाद्दृष्टन्यायः** । अदर्शनात् दर्शनाभावात् अदृष्टं अज्ञातं नास्ति इति गम्यते तद्वत् । संप्रदायस्य पौरुषेयत्वेन मूलप्रमाणापेक्षत्वात्, ग्रहैकत्वादिविवक्षाविषयभूतस्य च प्रमाणान्तरस्य अदर्शनाद्दृष्टन्यायमूलत्वसंभवे च अदृष्टमूलान्तरकल्पनाऽयोगात् न्यायमूलत्वावगतेः, न्यायाविरोधे संप्रदायात् वेदार्थावगमेऽपि विरोधे न्यायावगम्यविधिशब्दशक्त्यनुसारेणैव याज्ञिकैरपि व्याख्येयत्वात् तद्–व्याचिख्यासा चिन्तयितुं युक्ता । **सु.** पृ. १००७.

* **अदाक्षिण्य–सर्वस्वदाक्षिण्ययोर्विकल्पः** अपच्छेदयौगपद्ये । **वि** ६।५।१८.

* **अदाभ्यः ग्रहः** काम्यो नित्यश्च । ‘ भ्रातृव्यवताऽदाभ्यो ग्राह्यः ’ ‘ एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते ’ इति वचनयोर्वैयर्थ्यापत्तेः संयोगपृथक्त्वेन उभयार्थत्वात् । **संकर्ष.** ३।३।१५. * अदाभ्यः ग्रहः ‘ देवा वै यद् यज्ञेऽकुर्वत तदसुरा अकुर्वत, ते देवा अदाभ्ये छन्दांसि सवनानि समवस्थापयन् ’ इति वचनात् ग्रहणाङ्गम् । **सोम.** २।३।९. * अदाभ्यः नाम ग्रहः क्रतुशेषः, न तु सवनशेषः । तेन तस्य सकृत् ग्रहणं प्रातःसवने धाराग्रहेभ्यः पूर्वमेव, न तु प्रतिसवनम् । **के.** * अदाभ्यश्च अंशुश्चेति ग्रहौ ज्योतिष्टोमे एव विहितौ न तु तत् यागान्तरम् । **भा.** २।३।९।२०, * **‘ अदाभ्यं गृह्णाति ’** अयं ग्रहः प्राकरणिकैर्ग्रहैः समुच्चीयते ज्योतिष्टोमे । १०। ४।२।३. * ‘ अदाभ्यं गृह्णाति ’ इति अनारभ्य श्रुतम् । तस्यादाभ्यस्य सादनसंमार्गादयो ग्रहधर्माः सन्ति । **वि.** ३।६।११, * **अदाभ्यग्रहस्य** विनियोजकं वाक्यं तैत्तिरीयाणां षष्ठकाण्डे षष्ठे प्रपाठके प्राकरणिकं द्रष्टव्यम् । २।३।९.

* **‘अदितिः पाशं** प्रमुमोक्त्वेतं’ इति दैक्षे एव पशुपाशप्रमोचने अनुमन्त्रणमन्त्रः । **भाट्ट.** ९।३।४, * **‘ अदितिः पाशान्** प्रमुमोक्त्वेतान् ’ इति दैक्षे पशुपाशप्रमोचने बहुवचनान्तो मन्त्र आम्नातः । ( मैसं. ४।२।१०८, कासं. ३०।४५ ) **भाट्ट.** ९।३।४.

* **अदृष्टः** उपकारः शास्त्रादेव बोध्यः । **वि.** ११।१।७. * ‘अदृष्टो योऽश्रुतो यऽर्थो न सोऽस्तीत्यवगम्यते । तस्मिन्नसति दृष्टश्चेच्छ्रुतो वा न विरुध्यते ॥ विरुध्यमाने कल्प्यः स्याज्ज्ञायते तेन सोऽर्थवान् । विरोधश्चेन्न गम्येत ततो नैकोऽपि कल्प्यते ॥ ’ **भा.** २।२।२।१ पृ. ४६२. * यो हि यस्य फलस्य फलवतो वा शेषत्वेन अवधारितो भवति, स कथं तस्य उपकरिष्यति इत्यपेक्षिते सति दृष्टमुपकारमपश्यद्भिः तस्मात् **अदृष्टः** परिकल्प्यते । **वा.** ३।१।२।२ पृ. ६५७, * आम्नानान्यथाऽनुपपत्त्या हि **अदृष्टं** कल्प्यते । तच्च आम्नानं ( यत्र ) अन्यथैव दृष्टार्थतया उपपन्नं (तत्र) अर्थापत्तेरसंभवः । ३।१।४।१० पृ. ६६८. * **अदृष्टात्** दृष्टकार्यं बलीयः । **भा.** १०।१।९।२३, * **अदृष्टकल्पनायाः** लक्षणा ज्यायसी प्रमाणाद्धि सा भवति । ३।२।१५।३७. * सर्वत्रैव च **अदृष्टकल्पनायां** तादृशं कल्पयितव्यं, यत् दृष्टं न विरुणद्धि, न वा अदृष्टान्तरमातञ्चयति । **वा.** १।३।१।२. पृ. १६३, * प्रमाणवशाच्च **अनेकादृष्टकल्पना**ऽपि निर्दोषा । २।२।७।२१ पृ. ५२६. * **अदृष्टफल**भोजिनो यजमानस्य अदृष्टरूपः शास्त्रीयः संस्कारः । **वि.** ३।७।२.

* प्रतिप्रयोगं **अदृष्टभेदात्** कर्मनानात्वं भवेत् । **भा.** ११।४।१६।४९. * ‘ **अदृष्टशतभागो**ऽपि न कल्प्यो ह्यप्रमाणकः । ’ **वा.** ३।१।२।५ पृ. ३९९. * यः खलु **अदृष्टार्थः**, ततः अपूर्वम् । **भा.** ४।१।७।१९. * **अदृष्टार्थौ** सामान्यविशेषविधी यथा उदाहृतौ आहवनीयपदविधी । प्रतिप्रसवविधिस्तु द्विविधोऽपि अदृष्टार्थ एव । उपसंहारविधिः पुरुषार्थः पूर्वोक्तः अदृष्टार्थः । व्यवस्थाविधिस्तु प्रागुक्तः सर्वोऽपि अदृष्टार्थ एव । पर्युदासविधिस्तु प्रागुक्तो द्विविधोऽपि पुरुषार्थः अदृष्टार्थ एव । अभावविधिः पुरुषार्थः अदृष्टार्थः । **बाल.** पृ. २१, केवलादृष्टार्थः नियमविधिर्यथा प्रकृतौ वैकल्पिकयोः बृहद्रथंतरपृष्ठयोः अदृष्टार्थयोः अन्यतरस्य क्व चित् विकृतौ नियमः श्रूयते इति । पृ. २४, परिसंख्यायां इतरनिवृत्त्यंशः सर्वत्रापि अदृष्टार्थ एव । अदृष्टार्थोदाहरणं तु गृहमेधीये पञ्चमे पक्षे इति । पृ.२६. ***अदृष्टार्थ** द्वेष्याय दानं दार्शपौर्णमासिकपत्नीसंयाजगत–

कपालाभिहोमनिमित्तकवैश्वानरेष्टौ। भा. १०।२।१६।४७. ※ अदृष्टार्थं संनिपत्योपकारकं त्रिविधं भूतोपयोगसंस्कारार्थं भाव्युपयोगसंस्कारार्थं उपयोगसमकालं चेति। तत्राद्यं यथा हुतहविर्दाहः शिष्टाचारकल्प्यविधिप्राप्तः। भाव्युपयोगद्रव्यसंस्कारार्थमपि द्विविधम्। साक्षाद्विनियुक्तसंस्कारार्थं साक्षाद्विनियुक्तस्य यदुपकारकं, तत्संस्कारार्थं चेति। तत्राद्यं यथा 'व्रीहीन् प्रोक्षति' इति। द्वितीयं यथा स्थाण्वाहुतिः। तृतीयं यथा एककपाले 'अपर्यावर्तयन् जुहोति' इति। बाल. पृ. ८२-८३. ※ अदृष्टार्थं सारस्वते सत्रे कामेष्टौ दक्षिणादानम्। भा. १०।२।१५।४५-४६. ※ **अदृष्टार्थानि** अङ्गानि फलयोग्यतामपि (कर्तुः) कुर्वन्ति, नाङ्गत्वात् प्रच्यवन्ते च। वा. ३।७।२।६ पृ. १०७८. ※ अदृष्टार्थानि। एतद्विषयको विस्तरः 'विधिः द्विविधः' इति बिन्दौ बालप्रकाशे द्रष्टव्यः। के. ※ **अदृष्टार्थात्** शब्दवृत्तिः (लक्षणा) लघीयसी (सुकरा, बलवती इत्यर्थः)। भा. ११।१।९।४९, ※ **अदृष्टार्थस्य** चयने सर्वौषधावघातस्य अनभ्यासः। ११।१।६।२८. ※ अदृष्टार्थस्य प्रतिनिध्यभावः। मीन्या. ※ **अदृष्टार्थयोः** ऋतुयाज्यावरणहिरण्ययोः अनुष्ठानं कार्यं द्वादशाहादौ सत्रे। भा. १०।२।२६।६२, ※ **अदृष्टार्थानां** उपकारकल्पना अल्पीयसी न्याय्या। २।२।१ पृ. ४६२. ※ अदृष्टार्थानां समुच्चयः इति चेन्न। प्रकृतयागप्रत्यवेक्षणेन दृष्टार्थत्वात्। सत्यपि चादृष्टार्थत्वे निरपेक्षाणां गत्यन्तरे सति समुच्चयानाश्रयणात्। वा. ३।३।५। १२. ※ **अदृष्टार्थेषु** कार्यभेदात् वैकृतेन प्राकृतस्य न बाधः। वि. १०।४।१. ※ 'आर्यास्तावद्विशिष्येरन्नदृष्टार्थेषु कर्मसु।' वा. १।३।४।९ पृ. २१९, ※ **अत्यन्तादृष्टार्थं** नियमादृष्टार्थेन बाध्यते। अप्राप्तबाधः। ३।३।७।१४ पृ. ८६०, ※ **अदृष्टार्थया** दृष्टार्था स्मृतिर्बाध्यते। अप्राप्तबाधोऽयम्। ३।३।७।१४पृ.८६०.※**अदृष्टार्थता** आश्रयिकर्मणाम्। भा. ४।१।७।१८-२०. ※ यावानिह **अदृष्टार्थांशः** स वैदिकविधिप्रतिषेधद्वयादेव उपपन्नः। वा. १।३।८।२७ पृ. २८२.

**'अदोषतैव स गुणो विगुणे' इति न्यायः।** अयं सुबोधिन्यां प्रथमस्कन्धत्रयोदशाध्यायसप्तविंशे पद्ये द्रष्टव्य इति। साहस्री. ५९१.

※ **अदोषनिर्घातार्थं** अनियतनिमित्तकं वैदिकं कर्म यथा 'भिन्ने जुहोति' इत्यादि। बाल. पृ. ८५. ※ **अदोषनिर्घातार्थानां** प्रायश्चित्तानां समुच्चयः। भा. १२।३।६।१७.

※ **अद्य** इत्युक्ते श्वः परश्वो वा इति नोक्तो भवति। भा. ११।३।११।२२. ※ **अद्यतनत्वं** वर्तमानाहोरात्रवृत्तिप्रागभावध्वंसान्यतराप्रतियोग्युत्पत्तिकत्वम्। तद्भिन्नत्वं अनद्यतनत्वम्। मणि. पृ. ११६. 'अतीताया रात्रेः पश्चार्धेन आगामिन्याः पूर्वार्धेन च सहितो दिवसः अद्यतनः' इति भट्टोजीदीक्षिताः कालोपसर्जने च तुल्यं इत्यत्र। के.

**अद्रव्यत्वात् केवले कर्मशेषः स्यात्। २।३।९।२०॥**

न कस्य चिदपि प्रकरणे श्रूयते 'एष वै हविषा हविर्यजते, योऽदाभ्यं गृहीत्वा सोमाय यजते।' 'परा वा एतस्यायुः प्राण एति योंऽशुं गृह्णाति' इति। अत्र संदेहः किं यागान्तरमेतद्गुणकं, उत ज्योतिष्टोमे यागे गुणविधिः इति। पूर्वं 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इत्यस्य यजिमदभिधानं निराकृत्य इदानीं प्रसङ्गादंश्वदाभ्यवाक्ययोरपि यजिमदभिधानं निराक्रियते। अत्रायं पूर्वपक्षिणोऽभिसंधिः। स्तुत्या तावदत्र विधिः कल्पनीयः। अंश्वदाभ्यवाक्ये तावत् प्रधानत्वात् यागः एव कल्पयितुमुचितः, अनारभ्याधीतत्वेन तदनुवादेन ग्राह्यविशेषरहितग्रहणलक्षणगुणविधानासंभवात्। सोमायेति चतुर्थ्या सोमो देवता, द्रव्यमपि 'हविषा हविर्यजते' इत्यनुवादात्। तदैव हविषा हविर्यजति, यदि सोमद्रव्येण सोममेव देवतां यजते। अदाभ्यमिति संज्ञाऽपि, अदृष्टार्थस्य प्रधानयागस्यैव गुणफलोपबन्धनत्वार्थमुचिता, न दृष्टार्थस्य ग्रहणस्य, संज्ञां विनाऽपि तत्र व्यवहारसंभवात्। सोमद्रव्यकत्वाच्च ज्योतिष्टोमविकारोऽयम्। तथा च सति ग्रहणमपि प्रकृतिप्राप्तमेवानूद्यते। तेन अदाभ्यवाक्ये तावत् सोमद्रव्यकं सोमदेवताकं च कर्म विधीयते, इति सिद्धं कर्मनामधेयत्वम्। तत्र च ग्रहणे संस्कारत्वेन नामधेयसंबन्धायोग्यत्वात् प्रत्ययार्थोऽत्र संज्ञाऽवच्छिन्नो विधीयते अंशुं कुर्यादिति। ग्रहणं त्वनूद्यते। अनुवादस्य च

प्राप्तविषयत्वात् ग्रहणलिङ्गेनैव ग्रहणत्वमस्योन्नीयते, न ज्योतिष्टोमगतातिदिष्टद्रव्यदेवतासंबन्धात्। यागत्वैव अंशुसंज्ञिका क्रिया विधीयते इति यथाकथंचिदत्र पूर्वपक्षगमनिकेति। तस्मादंश्वदाभ्यवाक्ययोरपि यजिनदभिधानमिति। **एवं प्राप्ते अभिधीयते**। भवेदेवं, यदि ग्रहणरूपसंस्कारमात्रपर्यवसितोऽयं विधिर्भवेत्। तथाहि न तावदत्र विधिः श्रूयते, किंतु कल्पनयाऽसौ। यदि विशिष्टयागविषयोऽसौ कल्प्येत, तदानीमंशुविशेषणविधिकल्पनं, अतिदेशकल्पनं, फलकल्पनं चेति कल्पनागौरवमापद्येत। ग्रहणस्वरूपसंस्कारविधिकल्पनायां तु न कल्पनागौरवमिति तद्विधिरेव कल्प्यते, यागश्चानूद्यते। स च सोमद्रव्यश्रुतेः सोमयागो निर्णीयते। ननु सोमायेति नायं द्रव्यनिर्देशः। किं तर्हि? देवतानिर्देशोऽयमित्युक्तम्। मैवं विधौ लक्षणाप्रसङ्गात्। किंतु अनुशासनवशादियं तादर्थ्ये चतुर्थी द्रव्यनिर्देशार्था। तेनायं संबन्धः, सोमार्थमदाभ्यसंज्ञकग्रहणं कुर्यादिति। सामानाधिकरण्याददाभ्यस्य ग्रहणनामधेयत्वमेव। न च संस्कारे नामधेयानुपयोगः। 'त्रैधातवीया दीक्षणीया भवति' इत्यादिषु त्रैधातवीयानामावच्छिन्नस्यैव संस्कारस्य दीक्षणीयादिकार्ये विधानोपयोगदर्शनात्। तेनात्र सोमस्य देवतात्वाभावात् 'हविषा हविर्यजते' इत्यर्थवादादपि न सोमद्रव्यदेवतासंबन्धप्राप्तिरिति न यागशङ्कासंभवः। तस्माददाभ्ये तावन्न यागविधानम्। किंतु ज्योतिष्टोमानुवादेन अदाभ्यसंज्ञकग्रहणान्तरविधानमेवेति। अंशौ यजिशब्दाभावात् द्रव्यदेवतासंबन्धाभावाच्च विधिरुन्नीयमानः अंशुग्रहणविषयः एवावतिष्ठते। ज्योतिष्टोमशब्दश्च वैदिकगृह्णातिसामान्येन ज्योतिष्टोमस्यैवोपस्थितिर्निश्चीयते।

तदुक्तं 'ग्रहणं नामधेयं च केवलं यत्र गम्यते। वत्सालम्भादपि न्यूनं तदद्रव्यतयेष्यते॥' इति( वा. पृ.६०९) एतत्तु अभ्युपगमवादेनोक्तम्। वस्तुतस्तु श्रीमत्तैत्तिरीयशाखायां ज्योतिष्टोमप्रकरणे एवानयोराम्नानमिति स्फुटं ज्योतिष्टोमे एव ग्रहणविधानम्। तथा च सति यथा 'सप्तदश सामिधेनीरनुब्रूयात्' इत्यनारभ्यवादेन सामिधेनीसाप्तदश्यस्योत्पत्तिः मित्रविन्दाध्वरकल्पायां प्रकरणाधीतेन विनियोगः, तथा अत्रापि अनारभ्यश्रुत्या उत्पादकत्वं, आरम्भ श्रुत्या च विनियोजकत्वमिति विवेक्तव्यम्। अतोऽत्रापि गुणविधायकत्वं, न तु यागविधायकत्वमिति सिद्धम्। प्रयोजनं पूर्वपक्षे ज्योतिष्टोमधर्मकं यागान्तरमनुष्ठेयम्। सिद्धान्ते तु ज्योतिष्टोमे एव ग्रहणान्तरानुष्ठानमिति। **सूत्रं** तु अद्रव्यत्वात् देवतासंबन्धित्वाभावात् केवले ग्रहणे श्रुतं फलवतो ज्योतिष्टोमस्यैव ग्रहणं शेषो भवेदिति। **तौता.**

**अद्रव्यदेवताकत्वात्तु केवले कर्मशेषः स्यात्। २।३।९।२०॥**

अनारभ्य श्रूयते 'एष वै हविषा हविर्यजते योऽदाभ्यं गृहीत्वा सोमाय यजते' इति, 'परा वा एतस्यायुः प्राण एति, योंऽशुं गृह्णाति' इति च। अत्र किं यागान्तरमेतत्, उत ज्योतिष्टोमे ग्रहविधिः इति विचारे, अदाभ्यसंज्ञकं अंशुसंज्ञकं च यागान्तरं स्यात् अपूर्वनामधेयसंयोगात् इति उत्सूत्रे **पूर्वपक्षे प्राप्ते** सिद्धान्तमाह। केवले द्रव्यदेवताशून्ये नामधेये श्रूयमाणे सति कर्मशेषः ज्योतिष्टोमकर्मणः शेषः स्यात्। ग्रहाभ्यासविशेषविधानं स्यादित्यर्थः। उक्ताभ्यां वाक्याभ्यां अंशुसंज्ञकः अदाभ्यसंज्ञकश्चेति द्वौ ग्रहौ धाराग्रहेभ्यः प्राक् कर्तव्यौ विहितौ। कुतः? अद्रव्यदेवताकत्वात् अंश्वदाभ्ययोः। नहि वाक्येन द्रव्यं देवता वा विहिता। तस्मान्न यागान्तरं संभवति। द्रव्यं च देवता च द्रव्यदेवते। अविद्यमाने द्रव्यदेवते ययोः तौ अंश्वदाभ्यौ अद्रव्यदेवताकौ तादृशत्वात्। इति। तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः। **के.**

* अद्रव्यत्वात् केवले कर्मशेषः स्यात्। इत्यधिकरणे यजतिना जुहोतिना वा अन्येन वा शब्देन यागो यत्र चोद्यते देवतोद्देश्यकद्रव्यत्यागात्मकः, तत्र किं द्रव्यं, का देवता इति विशेषाकाङ्क्षायां मन्त्रवर्णस्तावत् द्रव्यविशेषं देवताविशेषं च समर्पयति। न तु असत्यामपि यागचोदनायां कल्पयितुं प्रभवति इति द्वितीयस्य तृतीये अवोचाम। **कु.** ३।२।५।१३.

* **अद्विर्वचनं वा श्रुतिसंयोगाविशेषात् ( २।४।२।१६ )** इत्यत्र सूत्रे अनेकेषामपि नानाशाखास्थवाक्यानां एककर्मविषयेऽपि अध्येतृपुरुषभेदेन अज्ञातज्ञापनरूपकर्मोत्पत्तिपरत्वं वक्ष्यते। **कौ.** २।४।२।१३.

* **अद्वैतवादखण्डनम्। स्यान्मतम्।** आत्मैव एकः जगदादौ आसीत्। स एव स्वेच्छया व्योमादिप्रपञ्चरूपेण परिणमति बीजमिव वृक्षरूपेण। चिदेकरसं ब्रह्म कथं जडरूपेण परिणमतीति चेत्, न परमार्थतः परिणामं ब्रूमः, किंतु अपरिणतमेव परिणतवत्, एकमेव सत् अनेकधा मुखमिव आदर्शादिषु अविद्यावशात् विवर्तमानं, चिद्रूपं जडरूपमिव, अद्वितीयं सद्वितीयमिव पश्यति। सेयमविद्योपादाना स्वप्नप्रपञ्चवत् महदादिप्रपञ्चसृष्टिः। तथा च 'सर्वं खल्विदं ब्रह्म' 'आत्मैवेदं सर्वं' 'नेह नानाऽस्ति किं चन' इत्यादयः बहवः अद्वैतवादाः। तथा 'इन्द्रो मायाभिः पुरुरूप ईयते' इति भेदावगतेः व्यक्तमेव मायानिबन्धनत्वं दर्शितम्। तथा 'लोकास्तं परादुर्योऽन्यत्रात्मनो लोकान् वेद' इत्यादिना अनात्मदर्शने निन्दा 'सर्वमिदं अद्वितीयमेव ब्रह्म पारमार्थिकं भेददृष्टिश्च अविद्योपादाना' इत्येतमर्थं प्रकटयतीति। **(अत्रोच्यते)** किमिदानीं असन्नेवायं प्रपञ्चः? ओमिति चेत् न, प्रत्यक्षविरोधात्। तथा च प्रत्यक्षं प्रपञ्चसद्भावग्राहकं तथोक्तं प्रत्यक्षसूत्रे (१।१।४।४)। न च आगमेन प्रत्यक्षबाधः संभवति, प्रत्यक्षस्य शीघ्रप्रवृत्तत्वेन सर्वेभ्यो बलीयस्त्वात्। **न च** पौर्वापर्यन्यायेन प्रवृत्तमेव प्रत्यक्षं आगमेन पश्चाद्बाध्यते इति **वाच्यम्**। आगमस्य प्रत्यक्षेण प्रवृत्तिविरोधात्। आगमप्रवृत्तिसमयेऽपि हि भेदप्रपञ्चमुपदर्शयत् प्रत्यक्षं आगमप्रवृत्तिमेव निरुणद्धि। यथा खलु उत्पत्तुं उपक्रममाण एव घटः दण्डेन आहन्यमानः नोत्पत्तुं प्रभवति, तथा आगमोऽपि। किंच प्रपञ्चाभावं प्रतियता अवश्यमागमोऽपि प्रपञ्चान्तर्गतत्वात् असद्रूपतया प्रत्येतव्यः। कथं च आगमेनैव आगमस्याभावः प्रतीयेत। असद्रूपतया हि प्रतीयमानो न कस्यचिदपि अर्थस्य प्रमाणं स्यात्, प्रामाण्ये वा नासत्त्वम्। **कश्चित्** पुनराह, नासत्त्वं प्रपञ्चस्य ब्रूमः, प्रत्यक्षादिप्रमाणतः सिद्धत्वात्। नापि परमार्थतः सत्त्वं, आत्मज्ञानेन बाध्यमानत्वात्। तस्मात् सदसद्भ्यामनिर्वाच्योऽयं प्रपञ्च इति। **तदिदं असारम्।** सतोऽन्यत्वमेव असत्त्वम्। तद्यदि प्रपञ्चः सन् न भवति, व्यक्तं असन्नेवायम्। असत्त्वाभावे वा सत्त्वापत्तिः। सदसत्त्वयोः एकनिषेधस्य इतरविधिनान्तरीयकत्वात्। न च विधाद्वयरहिते विधान्तरं संभवति। **अथापि** यन्न कदा चित् प्रतीयते तदसत्, यथा शशविषाणं, यत् प्रतीतं न कदा चिद्बाध्यते तत् सत्, यथा आत्मतत्त्वं, प्रपञ्चस्तु प्रतीयमानत्वात् बाध्यमानत्वाच्च भावाभावाभ्यामनिर्वाच्यः इति मतम्। **तदनुपपन्नं,** लोकविरोधात्। यदि प्रतीतं बाध्यते मृगतोयरज्जुसर्पादि, तदसदेवेति हि लौकिकी प्रसिद्धिः। नहि शशविषाणादीनां मृगतोयादीनां न कश्चिद्विशेषो लोके। सोऽयं प्रपञ्चोऽपि बाध्यते चेत् असन् एव, इति नानिर्वाच्यत्वम्। **अथापि** लोकप्रसिद्धिमनादृत्य बुद्ध्यादिवत् परिभाषारूपेण अनिर्वाच्यः इत्युच्यते, **तथापि** अयुक्तं, प्रपञ्चस्य बाध्यत्वाभावात्। न तावत् संसारावस्थायां आगमेन बाधः संभवति इत्युक्तम्। मुक्तस्य तु बाधकज्ञानं नाशङ्कनीयमेव, प्रलीनसर्वकरणत्वात्, करणाभावे च ज्ञानासंभवात्। न च अस्मर्यमाणस्य प्रपञ्चस्याभावः शक्यते प्रत्येतुम्। न च तस्यामवस्थायां संभवति स्मरणं, सर्वसंस्काराणामुच्छिन्नत्वात्। तस्मात् न बाधसंभवः। यच्च अविद्याकृतोऽयं प्रपञ्च इति, का पुनः इयमविद्या? किं भ्रान्तिज्ञानं, किं वा भ्रान्तिज्ञानकारणभूतं वस्त्वन्तरम्। यदि भ्रान्तिः, सा कस्य? न ब्रह्मणः, तस्य स्वच्छविद्यारूपत्वात्। नहि भास्करे तिमिरस्यावकाशः संभवति। न च जीवानां, तेषां ब्रह्मातिरेकेणाभावात्। भ्रान्त्यभावादेव च तत्कारणभूतं वस्त्वन्तरमपि अनुपपन्नमेव। ब्रह्मातिरेकेण भ्रान्तिज्ञानं तत्कारणं च अभ्युपगच्छतां अद्वैतहानिः। किंकृता च ब्रह्मणः अविद्या, नहि कारणान्तरमस्ति। स्वाभाविकी इति चेत्, कथं विद्यास्वभावं अविद्यास्वभावं स्यात्। स्वाभाविकत्वे च अस्याः केन विनाशः स्यात्। आगमिकं ध्यानादि तज्जन्यं वा स्वरूपज्ञानं ब्रह्माविद्यां नाशयति इति चेत्, न। नहि आगमो वा ध्यानादयो वा तज्जन्यं वा ज्ञानं नित्यज्ञानात्मकब्रह्मातिरिक्तमस्ति, यत् अविद्यां नाशयेत्। तद्वरं अस्मात् मायावादात् माहायानिकवादः, यत्र नीलपीतादिवैचित्र्यं, कार्यकारणभावः, बद्धमुक्तादिव्यवस्था च संतानभेदेन समर्थ्यते। नित्यमेकरसं निष्प्रपञ्चमात्मानं उपेयुषां तु समस्तलोकवेदव्यवहारोच्छित्तिरेव स्यात्।

यदप्याहुः, अज्ञानजन्यः प्रपञ्चः ज्ञानेन विनाश्यते, मृगतोयवत् स्वप्नप्रपञ्चवच्चेति । **तदप्ययुक्तम्** । यदि कुलालादिव्यापारस्थानीयेन अज्ञानेन घटवदुत्पन्नः प्रपञ्चः मुसलस्थानीयेन ज्ञानेन नाश्यते, तथापि न असत्त्वं प्रपञ्चस्य स्यात्, उत्पत्तिविनाशयोगात् अनित्यतामात्रं स्यात्, नात्यन्ताभावः । केन च ज्ञानेन नाशः ? नात्म-ज्ञानेन, विरोधाभावात् । निष्प्रपञ्चात्मज्ञानेन इति चेत् न । तत्र आत्मज्ञानांशस्य अविरोधात् । निष्प्रपञ्चत्वज्ञानं विनाशकमिति पारिशेष्यात् आपन्नम् । प्रपञ्चाभावश्च निष्प्रपञ्चत्वं, न च विद्यमाने प्रपञ्चे तदभावज्ञानं उत्प-त्तुमर्हति । ज्ञानेन हि उत्पन्नेन प्रपञ्चो नाशितव्यः, प्राक् च ज्ञानात् सद्रूप एव प्रपञ्चः, तस्मिन् सद्रूपेऽवस्थिते कथं तदभावविषयस्य ज्ञानस्योत्पत्तिः । तत्र ज्ञानोत्पत्तौ सत्यां प्रपञ्चस्य नाशः, तद्विनाशे च सति तदभाव-विषयज्ञानोत्पत्तिः इति इतरेतराश्रयत्वम् । एतेन मृग-तृष्णिकाजलस्य ज्ञानविनाश्यत्वं प्रत्यूढम् । नहि तज्जलं सत् पश्चात् नाश्यते । प्रागपि हि तत्र नैव जलम् । अजलमेव हि रश्मिप्रततमूषरं भ्रान्त्या जलात्मना अव-गतं, पश्चात् बाधकेन यथावस्थितरूपं अवगम्यते, इत्य-लमनेन बालजल्पितेन । ( **इत्यद्वैतमतनिरासः** ) **शा.** १।१।५ तर्कपादे पृ. ११०–१११. ✻ **अद्वैत-वादिनां** सर्वेषामेकत्वैकान्तप्रतिपादनम् । **सु.** पृ. १३१.

✻ **अधर्मः** । धर्माधर्मत्वं निःश्रेयसप्रत्यवायलक्षणम् । **बृहती.** पृ. २७. ✻ **अधर्मः** यागफलस्य प्रतिबन्धको भवति, अश्रेयस्करो हि सः । तस्मिन् सति न श्रेयो भवितुमर्हति । **भा.** ३।८।३।९. ✻ **अधर्मत्वं** निवर्तक-वेदवाक्यबोधितानिष्टसाधनताकत्वम् । **कु.** १।१।२।२. ✻ अधर्मत्वं निषेधबोधितालौकिकानिष्टसाधनत्वम् । **मणि.** पृ. ९. ✻ अधर्मत्वं प्रत्यवायहेतुत्वेनोक्तं अनर्थ-त्वेन चोदनालक्षणमुक्तम् । **ऋजु.** पृ. २७. ✻ **अधर्म-फलं** दुःखम् । **भा.** ३।८।३।९.

📜 **अधिकं च विवर्णं च जैमिनिः, स्तोभ-शब्दत्वात्** । ९।२।११।३८॥

स्तोभलक्षणमाह प्रसङ्गात् । अधिकं ऋगक्षरभिन्नं, विवर्णं ऋगक्षरैः असवर्णम् । अधिकं सत् यत् विवर्णं तादृशस्य अक्षरस्य अक्षरसमुदायस्य वा स्तोभत्वमर्थिनं जैमिनिराचार्यो मन्यते, लोके तादृशस्यैव स्तोभशब्दत्वात् स्तोभशब्दवाच्यत्वस्य प्रसिद्धत्वात् 'देवत्वेन समायां परं नवता बहुस्तोभं कार्थिनं' इत्यादौ, भवति हि किं चिदधिकं, न विवर्णं यथा 'श्रुतिः श्रुतिः' इति अभ्यासः । तथा किं चित् विवर्णं नाधिकं यथा विकारः 'ओम्रा ई' इति । तस्मात् अधिकत्वे सति विवर्णत्वं स्तोभलक्षणम् । **के.**

📜 **अधिकं तु प्रविष्टं न तद्धानिः इति न्यायः** । यत्राधिकप्रवेशेऽपि प्रकृतस्य न हानिस्तत्रायं प्रवर्तते इति । **साहस्री.** ५९३. ✻ **अधिकं प्रविष्टं न तु तद्धानिः इति न्यायः** । सर्वेषु वाक्येषु अकामहतस्य मुक्तस्य एकत्वेऽपि तदानन्दे सर्वानन्दानामन्तर्भावात् स एव तस्मिंस्तस्मिन्नानन्दे वक्तव्ये परामृश्यते । तत्तदिन्द्रादिसाम्येन तस्य सर्वत्राभि-धानोपपत्तेः 'अधिकं प्रविष्टं न तु तद्धानिः' इति न्यायात् । **अद्वैत.** ४।३।७२–७८.

📜 '**अधिकं नैव दोषाय**' इति **लौकिक-न्यायेन** तृतीयसवने पश्वङ्गहोमः, न तु वपायां न्यूनत्व-बुद्ध्या । **ऐत्रासा.** ७।१।९.

✻ **अधिकरणम्** । तस्य विषयः, संदेहः, संगतिः, पूर्वपक्षः, सिद्धान्तश्चेति पञ्चावयवाः । **वि.**(प्रस्तावनायाम्) श्लो. ७–८. ✻ अधिकरणं पञ्चाङ्गम् । 'विषयः संशयश्चैव पूर्वपक्षस्तथोत्तरः । प्रयोजनं च पञ्चाङ्गं शास्त्रेऽधिकरणं स्मृतम् ॥' संगतिश्चेति क चित् पाठः । **मणि.** पृ. ५. 'विषयो विशयश्चैव पूर्वपक्षस्तथोत्तरः । संगतिश्चेति पञ्चाङ्गं शास्त्रेऽधिकरणं विदुः ॥' इति अन्यत्र पाठः । तत्रापि 'संगतिश्च' इत्यत्र 'फलावाप्तिः' इति पाठः । **के.** ✻ अधिकरणं उदाहरणभेदात् न भिद्यते । न्यायवि-षयत्वेन तु अधिकरणानां तद्भेद एव अपौनरुक्त्ये हेतुः । **वा.** १।२।२।१९ पृ. १३२, ✻ भवन्ति चेदृशान्यपि **अधिकरणानि** येषां न्यायेन पूर्वपक्षं कृत्वा वचनेन सिद्धान्तो भवति । न त्वेतद्युक्तम् । ३।५।५।१८. ✻ **अधिकरणे एकस्मिन् चिन्ताद्वयं न युक्तम्** । 'प्रयोग-चोदनाभावादर्थैकत्वमविभागात्' ( १।३।३० ) इत्यत्र तु तन्त्रेण चिन्ताद्वयम् । **सु.** पृ. ७२०.

* **अधिकरणं** हि ( **कारकं** ) कर्त्रादीनि धारयति। तानि अधार्यमाणानि न शक्नुवन्ति क्रियामभिनिर्वर्तयितुम् । भा. ३।१।६।१२ पृ. ६९६. * **अधिकरणस्य** आधेयसंस्कारार्थत्वेन 'अगारे गावो वास्यन्तां' इत्यादौ प्राधान्यदर्शनात् लक्षणया अधिकरणवाचिन्याः सप्तम्याः प्राधान्यार्थता युक्ता । सु. पृ. ७२२. * **अधिकरणे** षष्ठी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा 'पञ्चकृत्वो द्विर्वा अह्नो भुङ्क्ते' । बाल. पृ. ४५, * अधिकरणे सप्तमी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः यथा 'समे दर्शपूर्णमासाभ्यां यजेत' । पृ. ४५.

**अधिकश्च गुणः साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि । १२।२।१४।३४ ॥**

अमुख्ये अपि नैमित्तिकेऽपि आग्रयणगतद्यावापृथिव्यहविर्बर्हिषि अधिकः गुणः ऐन्द्राग्नवैश्वदेवबर्हिरपेक्षया अधिकः गुणः सपुष्पत्वं स्यात् । ऐन्द्राग्नवैश्वदेवयोः सपुष्पत्वासपुष्पत्वविशिष्टे बर्हिषि साधारणे सति सपुष्पत्वस्य अविरोधात् । कांस्यभोजिवत् । तद्यथा शिष्यस्य कांस्यभोजित्वनियमः, उपाध्यायस्य च न नियमः । यदि तयोः एकस्मिन् पात्रे भोजनमापद्यते, तदा अमुख्यस्यापि शिष्यस्य कृते उपाध्यायेनापि कांस्यपात्रमेव ग्राह्यम्। तथा सति शिष्यस्य नियमो न व्याहतः स्यात्, उपाध्यायस्यापि कांस्यपात्रेण न विरोध आपद्येत, तद्वत् अत्रापि।

अत्र एवं स्थितिः । आग्रयणे द्यावापृथिव्यः एककपालः, तत्र प्रकृतेः सकाशात् सपुष्पं बर्हिः प्राप्तम् । तच्च ऐद्राग्नवैश्वदेवबर्हिषि अपि प्रसक्तम् । न च तयोः सपुष्पत्वेऽपि विरोधः, तद्बर्हिषः सपुष्पत्वापुष्पत्वयोः साधारणत्वात् । द्यावापृथिव्ये तु एककपाले चोदकप्राप्तं सपुष्पत्वमेव नियतम् । यद्यपि द्यावापृथिव्यः अन्तिमत्वादमुख्यः, तथापि सर्वस्मिन् आग्रयणे सपुष्पमेव बर्हिर्ग्राह्यम् । तेन अमुख्यस्य नियमः सेत्स्यति, मुख्यस्य च न विरोधः इति । तस्मात् आग्रयणे अमुख्यानुरोधेनापि सपुष्पं बर्हिर्ग्राह्यं इति सिद्धान्तः । **के**

* 'अधिकश्च गुणः साधारणेऽविरोधात् कांस्यभोजिवदमुख्येऽपि' इत्यत्र आग्रयणे द्यावापृथिवीयस्यैककपालस्य वैश्वदेवैककपालप्रकृतिकत्वेन प्रसूनबर्हिर्नियमात् अनियतबर्हिषो मुख्यस्यापि ऐन्द्राग्नादेः अमुख्यानुरोधेनापि प्रसूनबर्हिर्नियमो वक्ष्यते । सु. पृ ६३७. * **अधिकस्य** न्यूनत्वे लक्षणा इत्यत्रोदाहरणं 'चतुरवत्तं जुहोति' इति । अत्र जुहोतेर्देवतोद्देशत्यागविशिष्टप्रक्षेपवचनस्य आग्नेयादिचोदनयैव इतरयोरंशयोः प्राप्तौ प्रक्षेपमात्रपरत्वेन न्यूनत्वे लक्षणा । बाल. पृ. ४, * अधिकस्य सतो न्यूनत्वे वाक्यभेदः इत्यत्रोदाहरणं 'वषट्कर्तुः प्रथमभक्षः' इति । अत्र हि प्राथम्यमात्रविधौ भक्षानुवादात् प्राथम्यस्य च विधानात् एकपदे च उभयासंभवात् वाक्यभेदः । पृ. ४.

**अधिकारः अग्निहोत्रादौ प्रतिसमाधेयाङ्गवैकल्यस्यापि ॥**

**अङ्गहीनश्च तद्धर्मा । ६।१।९।४१ ॥**

**भाष्यं**— अग्निहोत्रादिष्वेव अङ्गहीन प्रति संदेहः किमसौ अधिक्रियते, उत नेति । तत्रापि अधिकरणातिदेशः । असमर्थ इति कृत्वा पूर्वः पक्षः । शक्तेर्विद्यमानत्वात् ( अस्ति अधिकारः- ) इति उत्तरः पक्षः । तदिदमभिधीयते अङ्गहीनश्च तद्धर्मा इति । किंधर्मा ? अद्रव्यधर्मेति ( अद्रव्यतुल्यः इत्यर्थः ) ।

**शा**— अङ्गहीनोऽपि द्रव्यहीनवत् प्रतिसमाधानेन तत् कुर्यात् । द्रव्यहानिः बहिरङ्गं अधिकारं व्यरौत्सीत्, अङ्गहानिस्तु अन्तरङ्गं विरुणद्धि इति विशेषाशङ्का । ( नहि द्रव्यहानेरङ्गहानेश्च प्रतिसमाधानमनपेक्ष्य प्राभाकरवत् अस्माभिरनुष्ठानमिष्यते । अत एव अन्तरङ्गस्याकिंचित्करत्वं स्पष्टमित्यपरितोषादाह- ) अथवा अद्रव्यवदङ्गहीनस्य सिद्धमेवाधिकारं उत्तरविवक्षया ( अप्रतिसमाधेयाङ्गप्रत्युदाहरणत्वेनोत्तरं प्रवर्तयितुम्) । अनुवदतीत्यपौनरुक्त्यम् ।

**सोम**— सूत्रे तद्धर्मा द्रव्यरहितधर्मा तत्तुल्य इति।

**वि**— 'अङ्गहीनो न कुरुते कर्ता वा, नाक्षमत्वतः । , समाधायाङ्गवैकल्यं करोति द्रव्यहीनवत् ॥'

**भाट्ट**— चक्षुराद्यङ्गहीनोऽपि आज्यावेक्षणादिमति कर्मणि प्रतिसमाधाय चक्षुराद्यङ्गं अधिक्रियते ।

**न्यायबिन्दुः**— अङ्गहीनोऽपि तत्प्रतिसमाधानेन अद्रव्यवत् अधिक्रियते ।

**मण्डन**—— ' अङ्गहीनोऽप्यधिकृतः । '

**शंकर**—— ' अङ्गाभाववतस्तथा । ' प्रतीकारं कृते ।

**अधिकारः अध्वरकल्पादिषु श्रुतसामिधेनी-साप्तदश्यासु विकृतिषु वर्णत्रयस्यापि ॥**

**पुरुषकल्पेन वा विकृतौ कर्तृनियमः स्याद्, यज्ञस्य तद्गुणत्वादभावादितरान् प्रत्येकस्मिन्नधिकारः स्यात् । ६।६।७।३६ ॥**

**भाष्यं**— अध्वरकल्पा उदाहरणम् । आग्रयणेष्टिः पशुः इत्येवंलक्षणकानि कर्माणि, येषु सप्तदश सामिधेन्यः, तेषु संदेहः किं त्रयाणामपि वर्णानां एभिः कर्मभिरधिकारः, उत वैश्यस्यैवेति । किं प्राप्तं ? एतस्यां विकृतौ पुरुषकल्पेन कर्ता नियम्येत । कुतः ? यज्ञस्य तद्गुणत्वात् । यज्ञोऽयं अध्वरकल्पादिः एतत्संख्यागुणकः । इयं च संख्या वैश्यस्योक्ता ' सप्तदशानुब्रूयाद् वैश्यस्य ' इति । तेन वैश्य एव एतत् कर्म कृत्स्नं कर्तुं समर्थः । सप्तदशगुणकमेतत् कर्म । तच्च साप्तदश्यं अवैश्येन क्रियमाणमसाधु । इतरान् प्रति हि तन्न चोद्यते । तेन ' यजेत ' इति असामर्थ्यात् ब्राह्मणक्षत्रियान् नाधिकरिष्यतीति ।

**टुप्** -- ' सप्तदश वैश्यस्यानुब्रूयात् ' इति साप्तदश्यस्य वैश्यः कर्ता विधीयते इति पूर्वपक्षवाद्यभिप्रायः । तद्वन्ति अध्वरकल्पादीनि नान्यः शक्नोति कर्तुमिति ।

**लिङ्गाच्चेज्याविशेषवत् । ३७ ॥**

**भाष्यं**— लिङ्गं च भवति यथा वैश्यस्य साप्तदश्यमिति ' सप्तदशो वै वैश्यः ' इति । तेन नावैश्यस्य साप्तदश्यम् । अतो वैश्यस्य एवंजातीयकानि कर्माणि । यथा इज्याविशेषो वैश्यस्य भवति ' वैश्यो वैश्यस्तोमेन यजेत ' इति वैश्यसंबन्धात्, एवं साप्तदश्यं तस्यैवेति ।

**न वा संयोगपृथक्त्वाद्, गुणस्येज्याप्रधानत्वादसंयुक्ता हि चोदना । ३८ ॥**

**भाष्यं**— न चैतदस्ति । पृथगेतौ संयोगौ । एकं वाक्यं ' सप्तदश वैश्यस्यानुब्रूयात् ' इति, वाक्यान्तरं अध्वरकल्पादिषु ' सप्तदशानुब्रूयात् ' इति । स च गुण इज्याप्रधानो भवति, न इज्या गुणार्था । किमतो यद्येवं ? यत्रेज्या तत्र तद्गुणेन भवितव्यं, न यत्र गुणः तत्रेज्यया, वैश्यस्य गुणानुरोधेन इज्याऽपि । त्रयाणां वर्णानामिज्या । सा तत्र गुणानुवर्तिनी । अपि च इज्यागुणभूतस्य अपरा चोदना, न सा वैश्यसंयुक्ता । सा तु अवैश्यकं गुणं प्रत्याययति । कथं सवैश्यकमिति चेत्, वैश्यस्य प्रधानत्वात् । प्रधानभूतस्तत्र यस्यः श्रूयते तस्मात् सर्वाधिकारः ।

**टुप** - वैश्यस्य साप्तदश्यमनुपकारकं विधीयते इति सिद्धान्तः ।

**इज्यायां तद्गुणत्वाद् विशेषेण नियम्येत । ३९ ॥**

**भाष्यं**--अथ यदुक्तं वैश्यस्तोमे यथा, तथा इहापीति, युक्तं तत्र, इज्या वैश्यस्य श्रूयते, तत्र वाचनिकेनैव विशेषेण नियम्येत । तस्मात् तत्र अदोष इति

**शा**—— ' प्रकृतौ हि श्रुतं वाक्यं ततो नोत्कर्षमर्हति तस्माद् वैश्यानुवादेन साप्तदश्यं विधीयते ॥ तच्च वैश्यनिमित्तत्वात् पाञ्चदश्यस्य बाधकम् । वैकृतैर्वचनैः साप्तदश्यं कल्वङ्गमुच्यते ॥ तदनैमित्तिकत्वेन त्रयाणां विशिष्यते । तस्मादध्वरकल्पादौ त्रयाणामधिकारिता । इति सिद्धान्तः ।

**सोम** सत्रे अनाहिताग्निवत् ब्राह्म क्षत्रिययोर्नाध्वरकल्पादौ अधिकार इति प्रत्यवस्था **संगतिः** । स्थिते चास्मिन् प्रकरणात् वैश्यस्योद्दे प्रकरणानुग्रहात् नाराशंसकर्तृकत्वेन वसिष्ठविधिः इ शङ्कानिराकरणार्थं पादाद्यं इत्यपुनरुक्तता इति त **रत्ने** । **सूत्रार्थस्तु**—पुरुषविशेषकर्तृकत्वेन आम्नात दश्यकत्वेन विकृतौ अध्वरकल्पादौ कर्तृनियमः स्य यज्ञस्याध्वरकल्पादेः साप्तदश्यगुणत्वात्, इतरान् ब्रा दीन् प्रति तदभावात् साप्तदश्यानाम्नानात्, एतस्मिन् एव विधिकारस्न्यात् अनुष्ठेयसाकल्यात्, ' सप्तदशो ' इति लिङ्गाच्च वैश्यस्तोमवत् वैश्याधिकार इति ।

**वि**— ' सामिधेनीसाप्तदश्यं वैकृतं वैश्यगा वर्णत्रयस्य वा, ऽऽद्योऽस्तु वैश्यकर्तृविधानत प्रकृतौ पाञ्चदश्यस्य बाधकं वैश्य ईरितम् । विकृतौ वाक्यं त्रयोऽतोऽत्राधिकारिणः ॥ '

**भाट्ट**— यासु विकृतिषु ' सप्तदश सामिधेनीर इति श्रुतं, तासु वैश्यस्यैवाधिकारः, प्रकृतौ ' वैश्यस्य ' इत्यनेन तत्तद्विकृतिस्थसाप्तदश्यानुवादेन

कर्तृत्वेन विधानात् । वैश्योद्देशेन अपूर्वसाप्तदश्यविधौ पाञ्चदश्यबाधापत्तेः । 'वासिष्ठानां' इत्यत्र तु व्यवस्थार्थत्वात् तथाऽङ्गीकरणं इति विशेषः । अतश्च वैश्यकर्तृकसाप्तदश्यानुरोधेन तस्यैव तासु अधिकारः । इति प्राप्ते, सामिधेनीसाधनीभूतसाप्तदश्योद्देशे विशिष्टोद्देशापत्तेः, साप्तदश्यमात्रोद्देशे च विकृत्यपूर्वसाधनीभूतसामिधेनीनामेव विशिष्य उपस्थापकाभावेन अनुवादायोगात् यूपसाप्तदश्यादावपि विधानापत्तेः प्रकरणानुग्रहाच्च, वैश्योद्देशेनैव तदधिकारिकदर्शपूर्णमाससंबन्धिसामिधेनीवृत्तित्वसंबन्धेन साप्तदश्यं विधीयते, अर्थाच्च वैश्यस्य निमित्तत्वम् । विकृतौ च अनैमित्तिकत्वार्थं पुनःश्रवणं इति सर्वाधिकारः ।

**न्यायबिन्दुः**— 'सप्तदश वैश्यस्य' इति दर्शप्रकरणगतवाक्येन सामिधेनीसाप्तदश्याङ्गत्वेन वैश्यः कर्ता विधीयते । तेन यत्राध्वरकल्पादौ साप्तदश्यं, तत्र वैश्यस्यैवाधिकारः । इति प्राप्ते, प्रकरणे एव वैश्यानुवादेन साप्तदश्यविध्युपपत्तौ उत्कर्षायोगात् प्रकृतौ वैश्यनिमित्तकं साप्तदश्यम् । अध्वरकल्पादौ तु स्वाभाविकं, इति त्रयाणामप्यधिकारः इति सिद्धान्तः ।

**मण्डन**— 'भवेद् विशामेव न साप्तदश्यम् ।'

**शंकर**— 'वैश्यस्यैव न पश्वादि ।' (अत्र पश्वादि इति न संगच्छते । इति तत् किं स्यादिति न ज्ञायते । के.)

**॥ अधिकारः आर्त्विज्ये ब्राह्मणस्यैव ॥**

**प्रभुत्वादार्त्विज्यं सर्ववर्णानां स्यात् । १२।४।१५। ४२ ॥**

**भाष्यं**— ऋत्विक्त्वं सर्ववर्णानां ब्राह्मणराजन्यवैश्यानां स्यात् । कुतः? प्रभुत्वात् । प्रभवन्ति सर्वे शक्नुवन्ति कर्तुम् । सर्वे अध्ययनवन्तः विद्वांसश्च । नहि अविद्वान् विहितोऽस्ति ( ३।८।८।१८ ) । ऋणापाकरणं सर्वेषां कर्म । प्रदर्शनार्थं ब्राह्मणग्रहणं इत्युक्तम् ( ६।२। ११।३१ ) ।

**स्मृतेर्वा स्याद् ब्राह्मणानाम् । ४३ ॥**

**भाष्यं**— ब्राह्मणानामेव आर्त्विज्यं स्यात्, नेतरयोर्वर्णयोः । कुतः? स्मृतेः, एवं शिष्टाः स्मरन्ति 'याजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः' इति । स्मृतिश्च प्रमाणमित्युक्तं 'अपि वा कारणाग्रहणे प्रयुक्तानि प्रतीयेरन्' ( १।३।३।७ ) [ इति ] । तस्मात् ब्राह्मणा एव याजयेयुः ।

**फलचमसविधानाच्चेतरेषाम् । ४४ ॥**

**भाष्यं**— इतरेषां राजन्यवैश्यानां फलचमसो विधीयते । 'स यदि राजन्यं वैश्यं वा याजयेत्, स यदि सोमं बिभक्षयिषेत्, न्यग्रोधस्तिमिनीराहृत्य ताः संपिष्य दधनि उन्मृज्य तमस्मै भक्षं प्रयच्छेन्न सोमं' इति । यथा यदि क्षीरे लिप्सति तक्रं दीयते, तत्र यदि वा क्षीराभावो विज्ञायते, यदि वा भोक्तुरक्षीरभोजित्वम् । इहापि सोमे बिभक्षयिषिते फलानि दीयन्ते, तत्रापि सोमाभावो वा, यदि वा भोक्तुरसोमपत्वं विज्ञायते । तत्र सोमस्तावत् संनिहितः । तस्मात् न सोमाभावः । भोक्तुस्तु असोमपत्वं विज्ञायते । न चासोमपाभ्यां शक्यते आर्त्विज्यं कर्तुं, नियमात् सोमभक्षस्य । तस्मात् न राजन्यवैश्ययोरार्त्विज्यम् ।

**सांनाय्येऽप्येवं प्रतिषेधोऽसोमपीथहेतुत्वात् । ४५ ॥**

**भाष्यं**— अपि च सांनाय्ये भक्षं राजन्यवैश्ययोः प्रतिषेधन् असोमपीथत्वं हेतुमाह । 'न राजन्यो न वैश्यो वा सांनाय्यं पिबेत् असोमपीथो ह्येषः' इत्येवं ब्रुवन् सोमपीथाभावं राजन्यवैश्यानां दर्शयति ।

**चतुर्धाकरणे च निर्देशात् । ४६ ॥**

**भाष्यं**— दर्शपूर्णमासयोश्च पुरोडाशस्य चतुर्धाकरणे ब्राह्मणा एव निर्दिश्यन्ते । 'ब्राह्मणानामिदं हविः सौम्यानां सोमपीथिनां, नेहाब्राह्मणस्यास्ति' इति । शेषभक्षणार्थं चतुर्धाकरणं इत्युक्तं ( ३।५।१७।५० ) । शेषभक्षाश्च ऋत्विजाम् । यदि राजन्यवैश्ययोरपि आर्त्विज्यमस्ति, न ब्राह्मणानामेव इदं हविः स्यात् । राजन्यवैश्ययोरपि पक्षे स्यात् । तत्र इदमवधारणं असमर्थं भवेत् ।

**अन्वाहार्ये च दर्शनात् । ४७ ॥**

**भाष्यं**— दार्शपूर्णमासिक्यां च अन्वाहार्यदक्षिणायां ब्राह्मणा एव दृश्यन्ते । 'त एते वै देवा अहुतादो यद् ब्राह्मणाः, यदन्वाहार्यमाहरन्ति तानेव तेन प्रीणाति' इति । दक्षिणा च ऋत्विग्भ्यो दीयते । तस्मात् ब्राह्मणा-

नामार्त्विज्यम्। यस्मादित्थं स्मृतिः। तां च एतानि दर्श-नानि उपोद्बलयन्ति। तस्मादार्त्विज्यं ब्राह्मणानामेव स्यात् नेतरयोर्वर्णयोरिति।

शा— 'विप्रतिषेधे परं' इति सूत्रे ( १२।४।१५।३९ ) 'याजमानार्त्विज्ययोरार्त्विज्यं बलीयः' इति सिद्धम्। तत्प्रसङ्गात् आर्त्विज्ये कर्तारश्चिन्त्यन्ते। दर्श-पूर्णमासज्योतिष्टोमादिषु किं त्रिभिरपि द्विजातिभिः आर्त्विज्यं कारयितव्यं, उत ब्राह्मणैरेव इति संशयः। तत्र 'त्रयोऽप्यार्त्विज्यमर्हन्ति विद्वत्त्वात्, स्मरणं पुनः। पुरुषार्थमतः कर्मवैगुण्यं नास्ति किं चन॥' **इति प्राप्तेऽभिधीयते** 'द्विजोत्तमानामार्त्विज्यं न तु क्षत्रिय-वैश्ययोः। ब्राह्मणार्त्विज्यनियमः क्रत्वर्थेनापि हि स्मृतः॥'

**सोम**— याजननियमशास्त्रस्य नियमार्थे प्रवृत्तस्य क्रतुविधिष्वपि उपकारेण तच्छास्त्रस्य प्रसङ्गविचारपर्यव-सानात् अस्याधिकरणस्य साक्षादपि **संगतिः** संभवति।

**वि**— 'आर्त्विज्यं किं त्रिवर्णस्थं विप्रयोग्येव वा, ऽग्रिमः। विद्यावत्त्वात्, न तदुक्तं ब्राह्मणस्यैव तत्स्मृतेः॥'

**भाट्ट**— प्रसङ्गात् ब्राह्मणस्यैवार्त्विज्यं, उत त्रयाणामपि वर्णानां इति चिन्तायां विद्वत्त्वाविशेषात् त्रयाणामपि। यत्तु 'षण्णां तु कर्मणामस्य त्रीणि कर्माणि जीविका' इत्यनेन ब्राह्मणस्यैव याजनमुक्तं तत् पुरुषार्थम्। अतश्च क्षत्रियवैश्ययोः प्रत्यवायं सोढ्वाऽपि आर्त्विज्यकरणे न क्रतुवैगुण्यम्। **इति प्राप्ते**, 'यज्ञं व्याख्यास्यामः' इत्युपक्रम्य 'ब्राह्मणा ऋत्विजः' इति कल्पसूत्रकारैः **कात्यायनादिभिः** आर्त्विज्योद्देशेन ब्राह्मण्यविधानात् मन्त्रार्थवादेतिहासादौ तत्तद्धर्मकसत्त्वाच्च ब्राह्मणस्यैव आर्त्विज्यं इति सिद्धम्। तदेवं निरूपितौ द्वादशभिरध्यायैः धर्माधर्मौ। 'जैमिनेर्विमलसूक्तिषु मग्नं शुद्धिमाप विमलं मम चेतः। प्रीतिमेतु नृहरेः पदपद्मे येन जन्मनिवहो न पुनः स्यात्॥' १२।४।१४.

**न्यायबिन्दुः**— आर्त्विज्यं त्रयाणामपि वर्णानां विद्वत्त्वाविशेषात्। 'याजनं ब्राह्मणस्यैव' इति स्मृत्युक्तस्तु नियमः पुरुषार्थः इति न तदतिक्रमे क्रतु-वैगुण्यम्। **इति प्राप्ते**, 'यज्ञं व्याख्यास्यामः' इत्युपक्रम्य 'ब्राह्मणानामार्त्विज्यं' इति यज्ञसूत्रकारस्मरणं क्रत्वर्थ-त्वेनैव नियमबोधकम्। अत एव राजन्ये 'क्षत्रियो याजको यस्य चण्डालस्य विशेषतः। कथं तद्दत्ति भोक्तारो हविस्तस्य सुरर्षयः॥' इति। सुराः देवतानुताः, ऋषयश्च ऋत्विक्सुताः इत्यर्थः। देवतानां अभोक्तृत्वात् क्रतुवैगुण्ये एव तात्पर्यम्। तथा 'राजन्ययाजकस्यान्नं विनश्यति यथा हविः' इत्यपि वचनं क्रतुवैगुण्यबोधक-मेव। एवं वैदिकलिङ्गान्यपि 'ब्राह्मणानामिदं हविः' इत्येवमादीनि द्रष्टव्यानि। तस्मात् ब्राह्मणानामेव आर्त्विज्यं इति सिद्धम्।

**मण्डन**— 'आर्त्विज्यं ब्राह्मणस्यैव।'

**शंकर**— 'विप्राणामेव तच्च नः।' तत् आर्त्विज्यम्। नः अस्माकं मतेन।

## अधिकारः कर्मसु द्रव्यरहितस्यापि॥

**त्रयाणां द्रव्यसंपन्नः, कर्मणो द्रव्यसिद्धित्वात्।** ६।१।८।३९॥

**भाष्यं**— अग्निहोत्रादिष्वेव संदेहः किं अद्रव्यस्या-धिकारो नेति। उच्यते। त्रयाणां ( ब्रह्मक्षत्रविशां ) द्रव्य-संपन्नोऽधिक्रियेत, नाद्रव्यः। कुतः? न हि शक्नोति अद्रव्यः द्रव्यसंयुक्तं कर्मानुष्ठातुम्। तस्मात् अद्रव्यस्यानधिकारः।

**अनित्यत्वात्तु नैवं स्यादर्थाद्धि द्रव्यसंयोगः।** ४०॥

**भाष्यं**— नैवं स्यात्, यदुक्तं अद्रव्यस्यानधिकार इति। कुतः? अनित्यत्वात्। अनित्यः अद्रव्यसंयोगः। न हि कश्चित् जात्या ( जन्मना ) अद्रव्य एव पुरुषः। अस्त्युपायो येन द्रव्यवान् भवति। यः शक्नोति यष्टुं, तस्य 'यजेत' इति वाचको भवति। यो न कथं चिदपि शक्नोति यागमभिनिर्वर्तयितुं तं नाधिकरोति 'यजेत' इति शब्दः। यस्तु केन चित् **प्रकारेण** शक्नोति, न तं वर्जयित्वा प्रवर्तते। **अर्थाच्च द्रव्यसंयोगो** भविष्यति। जीविष्यति विना धनेन, इत्येतत् विप्रति-षिद्धम्। तदिदं अभिधीयते। तस्मात् अर्थादेव द्रव्यसंयोगः। अधिकारः अद्रव्यस्यापि इति।

**टुप्**— न च जात्या कश्चित् अद्रव्यो **नाम**, येन इतरे अधिक्रियेरन्। तस्मात् द्रव्यवत्त्वस्य अनव-स्थितत्वात् कारणस्य, सर्वे अधिक्रियेरन्।

**शा**— पुरुषार्थोपात्तद्रव्यवतां लाभात् नाद्रव्यस्य तदर्जनं क्रतुभिराक्षिप्यते । अतो विदुषामिव द्रव्यवतामधिकारः । नैतत् तुल्यम् । विद्या हि प्रत्यक्षविधिसिद्धा त्रयाणां, इति तैरेव उपपन्नाः क्रतवः, न शूद्रस्य ( विद्यां ) आक्षिपन्ति इति युक्तम् । ( ननु विध्यन्तराभावेऽपि भोजनाद्यर्थमुपात्तं यस्य द्रव्यमस्ति, तत एव क्रत्वनुष्ठानसिद्धेः अद्रव्यस्य न क्रतुभिर्द्रव्याक्षेपः इत्यत आह- ) द्रव्यार्जनं तु सर्वपुरुषाणां द्रव्यकार्यैरेव आक्षेतव्यम् । तत्राविशेषात् भोजनादिवत् क्रतूनामपि तदाक्षेपकत्वं न वार्यते । ( भवेदेवं यदि ' भोजनादिभिरेव द्रव्यमाक्षेप्यं, न क्रतुभिः' इति नियमे किं चित् प्रमाणं स्यात् । भोजनादयोऽपि हि द्रव्यकार्यत्वात् द्रव्यमाक्षिपन्ति इत्येतावन्मात्रम् । तथा सति क्रतोरपि द्रव्यकार्यत्वाविशेषेण भोजनादितुल्यतया द्रव्याक्षेपकत्वं अवर्जनीयम् । न चैतावता अर्जननियमस्य क्रत्वर्थत्वप्रसङ्गः, श्रुत्याद्यभावात् अर्जनस्य क्रतुव्यभिचाराच्च) अतः अद्रव्योऽपि द्रव्यमर्जयित्वा कुर्यात् ।

**वि** —'धन्येव कर्तोतान्योऽपि, धन्येव विधिसार्थ्यतः ।, अन्योऽधिकुरुते द्रव्यमाक्षिपेद् भुक्तिवत् क्रतुः ॥ ' धनी द्रव्यवान् एव कर्ता उत अन्योऽपि इति संशयः । सार्थ्यतः सार्थक्यात् ।

**भाट्ट**— अग्निविद्ययोरिव द्रव्यस्यापि प्रतिग्रहादिपुरुषार्थोपायविधिबलादेव लब्धतया क्रतुविधिभिरनाक्षेपात् परप्रयुक्तसिद्धद्रव्यवत एवाधिकारः, न तु असिद्धद्रव्यस्य तदर्जयित्वा । **इति प्राप्ते**, प्रतिग्रहाद्युपायविधेरपि अनुज्ञाविधिमात्रत्वस्य स्थापितत्वात् ( ४।१।२ वर्णकं ३ ) द्रव्यस्य स्वतन्त्रविधिप्रयुक्तत्वाभावेन जीवनादिकार्येणेव क्रतुनाऽपि तदाक्षेपोपपत्तेः प्रतिग्रहादेरपि संयोगपृथक्त्वन्यायेन ( ४।३।३।५ ) क्रत्वर्थत्वस्य स्थापितत्वात् प्रयाजादिवत् क्रतुनाऽपि तदाक्षेपोपपत्तेश्च अद्रव्योऽपि द्रव्यमर्जयित्वा अधिक्रियते एव ।

**न्यायबिन्दुः**— एवमेव, सिद्धद्रव्याणामेवाधिकारः, क्रतुभिर्द्रव्यार्जनाक्षेपे गौरवात् । **इति प्राप्ते**, द्रव्यस्य प्रयोजनवशेनार्जनात् भोजनादिवत् क्रतूनामपि तदाक्षेपकत्वमविरुद्धम् । विद्या तु न रागप्राप्ता, किंतु प्रत्यक्षविधिसिद्धैव गृह्यते इति भेद इति सिद्धान्तः ।

**मण्डन** — ' अद्रव्योऽप्यधिकारवान् । '

**शंकर** — 'प्रतीकारेऽद्रव्यवतः ।' आदौ अद्रव्यवतोऽपि अद्रव्यत्वस्य प्रतीकारे कृते सति यागानुष्ठानाधिकारः संभवतीत्यर्थः ।

**अधिकारः कुलाययज्ञे भिन्नकल्पयोरपि ॥**

**वचनात्तु द्विसंयोगस्तस्मादेकस्य पाणिवत् । ६।६।२।१२ ॥**

**भाष्यं** — इदं समामनन्ति ' एतेन राजपुरोहितौ सायुज्यकामौ यजेयातां ' इति । तत्र संदेहः किं राज्ञो द्वौ पुरोहितौ यजेयातां, उत राजा च पुरोहितश्चेति । किं प्राप्तं ? राज्ञो द्वौ पुरोहितौ इति । कुतः ? पुरोहितशब्दात् परं द्विवचनं श्रूयते, तत् शब्दवाच्यस्य द्वित्वं शक्नोति वदितुम् । पुरोहितश्च तच्छब्दवाच्यः श्रुत्या, न राजा । पुरोहितवचनः पुरोहितशब्दः । लक्षणया युगपदधिकरणवचनतायां हि तद्भवति । **ननु** एकस्य द्वौ पुरोहितौ न स्तः । ' पुरोहितं वृणीते ' इति हि उपादीयमानस्य विवक्षितमेकत्वमिति । **उच्यते** । वचनादेतत् भविष्यति । किं हि वचनं न कल्पयेत् । एतेनैव कारणेन द्वौ भविष्यतः । यथा वचनेन ' अञ्जलिना जुहोति ' इति एकस्यैव द्वौ पाणी भवतः, यद्यपि सव्यः अप्राप्तस्तथापीति ।

**टुप्**— अभिन्नकल्पानामधिकारः इति पूर्वत्र स्थितम् । इह राजपुरोहितौ इति भिन्नकल्पयोरधिकारः इति प्रतिपादयितुं अधिकरणम् । ( राजपुरोहितौ इति ) किमयं षष्ठीतत्पुरुषैकशेषः, उत कृतैकशेषेण उत्तरपदेन तत्पुरुषः, उत समानाधिकरणैकशेषः, उत द्वंद्वः इति संशयः । तत्र न तावत् कृतसमासस्य एकशेषः राजशब्दानर्थक्यात् । राज्ञ एव हि स भवति । न च कृतैकशेषेण उत्तरपदेन इति ( पक्षे ) भाष्य एवोक्तम् ( उत्तरम् ) । न समानाधिकरणैकशेषः, राज्ञः अपुरोहितत्वात् । द्वंद्वोऽस्तु इति सिद्धान्तः । भिन्नकल्पयोः इह अधिकारः ।

**अर्थाभावात्तु नैवं स्यात् । १३ ॥**

**भाष्यं**-- तुशब्दात् पक्षो विपरिवर्तते नैवं स्यात् द्वौ पुरोहितौ इति । कुतः ? अर्थाभावात् । नैवायमर्थोऽस्ति, द्वौ पुरोहितौ इति । एकस्य राज्ञः

एक एव पुरोहितः उपादेयत्वेन श्रूयते ‘पुरोहितं करोति’ इति। एकत्वं विवक्षितम्। ननु वचनादित्युक्तम्। उच्यते। न तु वचनादेतत् शक्यं, संस्कारनिमित्तत्वात् पुरोहितशब्दस्य। क्रियमाणोऽपि न पुरोहितः स्यात्।

**अर्थानां च विभक्तत्वान्न तच्छ्रुतेन संबन्धः। १४॥**

भाष्यं—अर्थानां च विभक्तत्वं श्रूयते ‘तेजःसंस्तवो ब्राह्मणस्य’ ‘वीर्यसंस्तवो राजन्यस्य’ ताभ्यां वर्णाभ्यां तेनतेन फलेन संबन्धोऽनूद्यते। तस्मादपि न द्वौ पुरोहितौ एकस्य राज्ञ इति।

**पाणेः प्रत्यङ्गभावादसंबन्धः प्रतीयेत। १५॥**

भाष्यं— अथ यदुक्तं एतस्मादेव कारणात् एकस्यैव पुरुषस्य द्वौ पाणी भवत इति। युक्तं तत्र, पाणेः प्रत्यङ्गभूतत्वात्। अञ्जलौ प्रत्यङ्गभूतः दक्षिणस्य पाणेः सव्यः पाणिः। तेन विना अञ्जलिरेव न भवति। नहि द्वाभ्यां दक्षिणाभ्यां अञ्जलिरित्युच्यते। तस्मात् राजा च पुरोहितश्च स्यात्। **ननु** तत्र राजपुरोहितश्च राजपुरोहितश्च राजपुरोहितौ यजेयातां इति। **उच्यते**। न तौ सायुज्यकामौ भवतः। स राजा पुरोहितेन सह एककार्यो भवति, न तु पुरोहितः पुरोहितेन। उभावपि तौ हि राजानमभि चरन्तौ पुरोहितौ इत्युच्येते, नहि तमिच्छन्तौ, संस्कारशब्दो हि पुरोहित इति। ननु लक्षणा भवति भवत्पक्षे। उच्यते। श्रुत्यभावे लक्षणयाऽपि व्यवहारो भवति, यथा ‘अग्नौ तिष्ठति’ ‘अवटे तिष्ठति’ इति। तस्मात् राजा च पुरोहितश्च राजपुरोहितौ इति।

**शा**— राज्ञः पुरोहितस्य चात्र (कुलाययज्ञे) भिन्नकल्पयोरेव सतोर्वचनात् अधिकारः।

**सोम**— पूर्वापवादात् **संगतिः**। यद्यपि प्रयाजादिषु तुल्यः कल्पो राजपुरोहितयोरपि संभवति, तथापि ‘हविष्कृदागहीति राजन्यस्य’ ‘तमस्मै भक्षं प्रयच्छेत्’ इत्येवं बहुशो राजन्यस्य कल्पान्तराम्नानेन राजन्यपुरोहितयोः एकरूपप्रयोगस्य अत्यन्तमसंभवितत्वात् भिन्नकल्पत्वमवर्जनीयम्।

**वि**— ‘सायुज्यकामौ यजतोऽनेन राजपुरोहितौ। राज्ञः पुरोहितौ राज्ञोस्तौ वा राजात्मकावुभौ॥ द्वयोर्द्वंद्वसमासो वा, तुल्यकार्याविनौ द्वयोः। निर्द्वंद्वे द्वितीयो राज्ञोऽभिन्नार्थवाच तृतीयकः। अन्यद्वन्द्वे चतुर्थः स्याद् वचनं द्विजकल्पता। तत्पुरुषकर्मधारयौ विकल्प्येते समन्ततः॥’

**भाट्ट**—‘एतेन राजपुरोहितौ सायुज्यकामौ यजेयातां’ इत्यत्रापि न भिन्नकल्पयोरधिकारः। द्वंद्वस्य युगपदधिकरणवचनत्वेन पदद्वयेऽपि लक्षणाप्रवृत्तत्वात्, तदनङ्गीकारेऽपि वा साहित्यबोधार्थं पदद्वये लक्षणाया आवश्यकत्वाच्च। अन्यथा देवतात्वादेः व्यासज्यवृत्तित्वानुपपत्तेः। अतः तत्पुरुष एवायं, तदुत्तरं च एकशेषः। अतश्च समासादुत्पन्नं द्विवचनं तदर्थस्यैव द्वित्वमाह। तस्मात् राजद्वयसंबन्धिनौ द्वौ पुरोहितौ समानकल्पावेव यजेयातां, **इत्याद्यः पक्षः**। द्विवचनस्य विशेषणविधित्वव्युत्पत्तेः संख्याधिकरणे (२।२।३।२१) व्युत्पादितत्वात् एकस्य अनेकस्य वा राज्ञो द्वौ पुरोहितौ, **इत्यपरः**। अथवा एकशेषं कृत्वैव तत्पुरुषः कार्यः, इतरथा पदद्वयावृत्तिप्रसङ्गात् राजपदवैयर्थ्यप्रसङ्गाच्च। अत एव एकस्यैव राज्ञो द्वौ पुरोहितौ इत्यन्यः। पूर्वपदे लक्षणायां प्रमाणाभावात् ‘पुरोहितं वृणीते’ इत्युपादेयतादशायां एकत्वस्य विवक्षितत्वेन एकस्य राज्ञः पुरोहितद्वयाभावाच्च कर्मधारय एवायं (इति **चतुर्थः पक्षः**)। **इति प्राप्ते**, ब्राह्मणानामेव पौरोहित्यश्रवणात् कर्मधारयानुपपत्तेः द्वंद्व एवायम्। न च तत्र पदद्वये लक्षणा, युगपदधिकरणवचनत्वस्य निराकृतत्वात् (६।१।५)। न च साहित्यप्रतीत्यर्थं लक्षणा, तत्प्रतीतेरानुमानिकत्वेनापि उपपत्तौ लक्षणायां प्रमाणाभावात्। समाहारे परं एकत्वान्वयार्थं पदद्वयेऽपि समुदायलक्षणा इति विशेषः। वस्तुतस्तु इतरेतरद्वंद्वेऽपि व्याप्त्यभावेन साहित्यप्रतीतेः आनुमानिकत्वायोगात् अवश्यं प्रतीयमानस्य तस्य यद्यपि लाक्षणिकत्वमावश्यकमेव, तथापि तल्लक्षणाया एकशेषेऽपि समानत्वेन सर्वपक्षेषु आवश्यकत्वात् पूर्वोक्तयुक्त्या द्वंद्वत्वोपपत्तिः। अतश्च राज्ञः पुरोहितस्य च भिन्नकल्पयोरपि अधिकारः। पुरोहितोऽपि तस्यैव राज्ञः, पुरोहितत्वस्य ससंबन्धिकत्वेन राजप्रतियोगित्वावश्यंभावे ऐहिकस्य एकराज्यपतित्वरूपसायुज्यफलकत्वस्य अन्यत्रानुपपत्तेः। अस्तु वा अन्यस्यापि।

भिन्नकल्पत्वे च यद्यपि न नराशंसमन्त्रे, राज्ञोऽनुरोधेन पुरोहितस्यापि नराशंससमानकल्पस्यैव संभवेन तादृशयोरेव तयोः अधिकारोपपत्तेः, तथापि सोमफलचमसरूपभिन्नकल्पयोरपि अधिकारः । तत्रापि न विकल्पः । राज्ञः प्राथमिकत्वात् निमित्तत्वाच्च तन्नैमित्तिकेन सोमस्य बाधात् ।

**न्यायविन्दुः**— ' एतेन राजपुरोहितौ सायुज्यकामौ यजेयातां ' इत्यहीनविशेषे ( कुलायाख्ये ) श्रुतम् । तत्र तत्पुरुषे लक्षणादोषात् एकस्य च राज्ञः पुरोहितद्वयाभावात् कर्मधारयस्य चासंभवात् द्वंद्व एवायम् । अतो राज्ञः पुरोहितस्य च भिन्नकल्पयोर्वचनादधिकारः इति सिद्धान्तः ।

**मण्डन**— ' यजेत राजा सपुरोहितस्तु । '

**शंकर**— ' कुलाये न तथा भवेत् । ' कुलाये तथा तुल्यकल्पत्वं न भवेत् ।

**अधिकारः क्रतुषु स्त्रिया अपि ॥**

**लिङ्गविशेषनिर्देशात् पुंयुक्तमैतिशायनः । ६।१।३।६ ॥**

**भाष्यं**— ' दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत ', इत्येवमादि समाम्नायते । तत्र संदेहः किं स्वर्गकामं पुमांसमधिकृत्य यजेत इत्येष शब्द उच्चरितः, अथवा अनियमः स्त्रियं पुमांसं वेति । किं प्राप्तं ? पुंलिङ्गमधिकृतं नेन ऐतिशायनः । कुतः ? लिङ्गविशेषनिर्देशात् । पुंलिङ्गेन विशेषेण निर्देशो भवति ' स्वर्गकामो यजेत ' इति । तस्मात् पुमान् उक्तो यजेतेति, न स्त्री ।

**टुप्**— ग्रहाधिकरणे ( ३।१।७ ) विभक्तिवाच्यस्य ( एकत्वस्य ) अविवक्षा उक्ता, न प्रातिपदिकार्थस्य ( लिङ्गस्य ) । तस्मादयं ( पूर्वपक्षवादिनः ) अभिप्रायः, अर्थस्य उद्दिश्यमानस्यापि यथा विवक्षा, एवं ( तद्वाच्यस्य ) लिङ्गस्यापीति ।

**तदुक्तित्वाच्च दोषश्रुतिरविज्ञाते । ७ ॥**

**भाष्यं**— अविज्ञाते गर्भे हते भ्रूणहत्यानुवादो भवति ' तस्मादविज्ञातेन गर्भेण हतेन भ्रूणहा भवति ' इति । ' भ्रूणहा पापकृत्तमः ' यश्च उभयोर्लोकयोरुपकरोति तस्य हन्ता भ्रूणहा, यज्ञहन्ता भ्रूणहा, स यज्ञसाधनवधकारी । तस्मात् यज्ञं भ्रूणशब्देन अभिदधाति । स हि बिभर्ति वा सर्वं, भूतिं वा नयति, अतो भ्रूणहा यज्ञवधकारी । स पुंयुक्तत्वात् अनुवादोऽवकल्पते । अविज्ञाते गर्भे हन्यमाने कदा चित् पुमान् हन्येत । तत्र यज्ञाधिकृतस्य हतत्वात् यज्ञवधो भ्रूणहत्या स्यात् । इतरथा यदि उभयोरधिकारः, ततो विज्ञाते चाविज्ञाते च यज्ञवधः स्यात् । तत्र अविज्ञातग्रहणं अतन्त्रमिति कल्प्येत । तस्मात् विवक्षिता पुंलिङ्गस्य वाचिका विभक्तिरिति । तथा ' आत्रेयीं हत्वा भ्रूणहा भवति' आत्रेयीमापन्नगर्भामाहुः । अत्र कुक्षौ अस्याः विद्यते इत्यात्रेयी । तस्मादपि पुंसोऽधिकारो गम्यते । यथा ' पशुमालभेत ' इति पुंपशुरेवालभ्यते, लिङ्गविशेषनिर्देशात् । एवमिहापि द्रष्टव्यं इति ।

**जातिं तु बादरायणोऽविशेषात् , तस्मात् स्त्र्यपि प्रतीयेत , जात्यर्थस्याविशिष्टत्वात् । ८ ॥**

**भाष्यं**— एवं प्राप्ते ब्रूमः । तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति पुंस एवाधिकार इति । जातिं तु भगवान् बादरायणः अधिकृतां मन्यते स्म । आह , किमयं स्वर्गकामः इति जातिशब्दः समधिगतः ? नेत्याह । कथ तर्हि ? यौगिकः , स्वर्गेच्छायोगेन वर्तते । केन तर्हि शब्देन जातिरुक्ता या अधिकृतेति गम्यते ? नैव वयं ब्रूमः जातिवचनः इह शब्दः अधिकारक इति । किं तर्हि ? स्वर्गकामशब्देन उभावपि स्त्रीपुंसौ अधिक्रियेते इति । अतो न विवक्षितं पुंलिङ्गमिति । कुतः ? अविशेषात् । नहि शक्नोति एषा विभक्तिः स्वर्गकामं लिङ्गेन विशेष्टुम् । कथं ? लक्षणत्वेन श्रवणात् । स्वर्गे कामो यस्य तमेष लक्षयति शब्दः । तेन लक्षणेन अधिकृतो यजेतइतिशब्देन उच्यते । तच्च लक्षणमविशिष्टं स्त्रियां पुंसि च । तस्मात् शब्देन उभावपि स्त्रीपुंसौ अधिकृतौ इति गम्यते । तत्र केन अधिकारः स्त्रिया निवर्त्यते ? । विभक्त्येति चेत् , तन्न । कस्मात् ? पुंवचनत्वात् स्त्रीनिवृत्तौ अशक्तिः । पुंसो विभक्त्या पुनर्वचनं अनर्थकं इति चेन्न । आनर्थक्येऽपि स्त्रीनिवृत्तेरभावः । परिसंख्यायां स्वार्थहानिः , परार्थकल्पना , प्राप्तबाधश्च । न चानर्थक्यं , निर्देशार्थ-

त्वात् । तस्मात् स्त्री अपि प्रतीयेत, जात्यर्थस्य अविशिष्टत्वात् ।

**चोदितत्वाद्यथाश्रुति ॥ ९ ॥**

**भाष्यं**— अथ यदुक्तं 'पशुमालभेत' इति पुंपशुरालभ्यते पुंलिङ्गवचनसामर्थ्यात्, एवमिहापि पुंलिङ्गवचनसामर्थ्यात् पुमानधिक्रियते यागवचनेनेति, तत् परिहर्तव्यम् । अत्रोच्यते । नात्र जातिः द्रव्यस्य लक्षणत्वेन श्रूयते । यदि हि लक्षणत्वेन श्रूयेत, ततः स्त्रिया अपि याग उक्तो न पुंवचनेन निवर्त्येत । इदं तु पशुत्वं यागस्य विशेषणत्वेन श्रूयते । तत्र पशुत्वस्य यागस्य च संबन्धः, न द्रव्ययागयोः । यथा पशुत्वं यागसंबद्धं, एवं पुंस्त्वं एकत्वं च । सोऽयं अनेकविशेषणविशिष्टो यागः श्रूयते । स यथाश्रुति एव कर्तव्यः, उपादेयत्वेन चोदितत्वात् । यच्च दोषश्रुतिरविज्ञाते गर्भे हते आत्रेय्यां च पुंयुक्तत्वेनेति, तत् परिहर्तव्यम् । अत्रोच्यते । अविज्ञातेन गर्भेण इत्यनुवादः प्रशंसार्थः । आत्रेयी च न हन्तव्येति, इत्थं गर्भो न हन्तव्यः, यद्व्यक्तेनापि एनस्वी भवति । पुंलिङ्गविभक्तिः श्रूयमाणा न शक्नोति स्त्रियं निवर्तयितुं, किमङ्ग पुनः अविज्ञातगर्भवचनं लिङ्गम् । तथा गोत्रप्रशंसार्थे आत्रेय्या अवधसंकीर्तनम् । न च आपन्नसत्त्वा आत्रेयी, गोत्रं ह्येतत् । नहि अत्रशब्दात् अयं तद्धित उत्पन्नः । समर्थानां हि तद्धित उत्पद्यते । न च अत्रशब्दस्य सामर्थ्यमस्ति ।

**द्रव्यवत्त्वात्तु पुंसां स्याद् द्रव्यसंयुक्तं, क्रयविक्रयाभ्यामद्रव्यत्वं स्त्रीणां, द्रव्यैः समानयोगित्वात् । १० ॥**

**भाष्यं**— पुंसां तु स्यात् अधिकारः द्रव्यवत्त्वात् । द्रव्यवन्तो हि पुमांसः, न स्त्रियः । द्रव्यसंयुक्तं चैतत् कर्म 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इत्येवमादि । कथं अद्रव्यत्वं स्त्रीणां ? क्रयविक्रयाभ्याम् । क्रयविक्रयसंयुक्ता हि स्त्रियः । पित्रा विक्रीयन्ते, भर्त्रा क्रीयन्ते । विक्रीतत्वाच्च पितृधनानां अनीशिन्यः, क्रीतत्वाच्च भर्तृधनानाम् । विक्रयो हि श्रूयते 'शतमतिरथं दुहितृमते दद्यात्, आर्षे गोमिथुनं' इति । न चैतत् दृष्टार्थे सति आनमने, अदृष्टार्थं भवितुमर्हति । एवं द्रव्यैः समानयोगित्वं स्त्रीणाम् ।

**तथा चान्यार्थदर्शनम् । ११ ॥**

**भाष्यं**— 'या पत्या क्रीता सती अथान्यैश्चरति' इति क्रीततां दर्शयति ।

**तादर्थ्यात् कर्मतादर्थ्यम् । १२ ॥**

**भाष्यं**— आह, यदनया भक्तोत्सर्पणेन वा कर्तनेन वा धनमुपार्जितं, तेन यक्ष्यते इति । उच्यते । तदपि अस्याः न स्वम् । यदा हि सा अन्यस्य स्वभूता, तदा यत् तदीयं, तदपि तस्यैव । अपि च स्वामिनः तया कर्म कर्तव्यम् । न तत् परित्यज्य स्वकर्म अर्हति कर्तुम् । यत् तया अन्येन प्रकारेण उपार्ज्यते, तत् पत्युरेव स्वं भवितुमर्हति इति । एवं स्मरति 'भार्या दासश्च पुत्रश्च निर्धनाः सर्व एव ते । यत् ते समधिगच्छन्ति यस्य ते तस्य तद् धनम् ॥' इति ।

**फलोत्साहाविशेषात्तु । १३ ॥**

**भाष्यं**— तुशब्दः पक्षं व्यावर्तयति । न चैतदस्ति 'निर्धना स्त्री' इति । द्रव्यवती हि सा फलोत्साहाविशेषात् । स्मृतिप्रामाण्यात् अस्वया तया भवितव्यं फलार्थिन्याऽपि । श्रुतिविशेषात् फलार्थिन्या यष्टव्यम् । यदि स्मृतिमनुरुद्ध्यमाना परवशा निर्धना च स्यात् यजेत इत्युक्ते सति न यजेत, तत्र स्मृत्या श्रुतिर्बाध्येत । न चैतन्न्याय्यम् । तस्मात् फलार्थिनी सती स्मृतिं अप्रमाणीकृत्य द्रव्यं परिगृह्णीयात् यजेत चेति ।

**अर्थेन च समवेतत्वात् । १४ ॥**

**भाष्यं**— अर्थेन च अस्याः समवेतत्वं भवति । एवं दानकाले संवादः क्रियते 'धर्मे चार्थे च कामे च नातिचरितव्या' इति । यत्तूच्यते भार्यादयो निर्धना इति, स्मर्यमाणमपि निर्धनत्वं अन्याय्यमेव श्रुतिविरोधात् । तस्मात् अस्वातन्त्र्यं अनेन प्रकारेण उच्यते संव्यवहारप्रसिद्ध्यर्थम् ।

**क्रयस्य धर्ममात्रत्वम् । १५ ॥**

**भाष्यं**— यत्तु क्रयः श्रूयते, धर्ममात्रं तु तत्, नासौ क्रय इति । क्रयो हि उच्चनीचपण्यपणो भवति, नियतं तु इदं दानं शतमतिरथं शोभनां अशोभनां च

कन्यां प्रति । स्मार्ते च श्रुतिविरुद्धं विक्रयं नानुमन्यन्ते । तस्मात् अविक्रयोऽयं इति ।

**स्ववत्तामपि दर्शयति । १६ ॥**

**भाष्यं** — 'पत्नी वै पारिणय्यस्येष्टे पत्यैव गतमनुमतं क्रियते'। तथा 'जाघन्या पत्नीः संयाजयन्ति, मसत्रीर्या हि पत्नयः, भमदा वा एताः परगृहाणामैश्वर्यमवरुन्धते' इति ।

**क्रीतत्वात्तु भक्त्या स्वामित्वमुच्यते । १९ ॥**

**भाष्यं**— स्थितादुत्तरमुच्यते । तुशब्दः पक्षं व्यावर्तयति । नैतदस्ति, यदुक्तं स्ववती स्त्रीति । क्रीता हि सा, दृष्टार्थत्वात् अतिरथशतदानस्य । अतो यदस्याः स्वामित्वमुच्यते, तत् भक्त्या । यथा 'पूर्णकोऽस्माकं बलीवर्दानामीष्टे' इति । एवं पत्नी अपि पारिणय्यस्येष्टे इति ।

**फलार्थित्वात्तु स्वामित्वेनाभिसंबन्धः । २० ॥**

**भाष्यं**— नैतदस्ति क्रयो मुख्यः, गौणं स्वामित्वमिति । फलार्थिनी हि सा, स्मृतिर्नाऽऽदरिष्यते । स्मृत्यनुरोधात् अस्वा स्यात् । स्ववती श्रुत्यनुरोधात् ।

**फलवत्तां च दर्शयति । २१ ॥**

**भाष्यं**— 'सं पत्नी पत्या सुकृतेन गच्छतां यज्ञस्य धुर्या युक्तावभूताम् । संजानानौ विजहीतामरातीर्दिवि ज्योतिरजरमारभेताम् ॥' इति दंपत्योः फलं दर्शयति । तस्मादपि उभौ अधिकृतौ इति सिद्धम् ।

**शा**— 'तत्र पुंलिङ्गनिर्देशात् पुंस एवाधिकारिता । प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥' उच्यते, 'प्रकृत्यर्थोऽपि खल्वेतदुद्देश्यस्य विशेषणम् । संख्यया तुल्यनीतित्वान्न विवक्षां प्रपद्यते ॥' न च अद्रव्यत्वमस्याः, कर्तनादिभिरर्जनसंभवात्, पित्रादिदत्तसंभवात्, दायादिसंभवाच्च । 'पुत्राभावे दुहिता' इत्यादिस्मरणात्, पत्या अर्जितस्य चोभयसाधारणत्वात् 'धर्मे चार्थे च कामे च नातिचरितव्या' 'पाणिग्रहणात्त सहत्वं कर्मसु तथा पुण्यफलेषु द्रव्यपरिग्रहेषु च' इत्यादिवचनात् । 'ये यज्ञपत्नीं वर्धान्' इत्यादिमन्त्रवर्णेभ्यश्च स्पष्टः स्त्रिया अधिकारः, पत्नीशब्दस्य स्वामिवचनत्वात् ।

**सोम**— यथा अन्धादिकं प्रति क्रतोरविधानात् तस्य अनधिकारः, एवं स्त्रिया अपि, इति प्रत्यवस्थानात् **संगतिः** । **सूत्रार्थस्तु**— स्ववतोर्द्रव्यवतोः आज्यावेक्षणान्वारम्भादिवचनादैककर्म्ये सहप्रयोगः स्यादिति ।

**वि**— 'स्त्रिया न सोऽस्त्यस्ति वा, नो पुंलिङ्गेन तदीरणात् । प्रकृत्यर्थतया लिङ्गं संख्यावन्नाविवक्षितम् ॥, अस्त्युद्देशगतत्वेन संख्यया सदृशत्वतः । यद्विभक्तिविकारादेरर्थस्तत्प्रकृतेर्न तु ॥'

**भाट्ट**— क्रतुषु पुंस एवाधिकारः, उत स्त्रिया अपि इति चिन्तायां 'स्वर्गकामः' इति पुंलिङ्गश्रवणात् पुंस एव । नहीदं अधिकारिविशेषणं कर्तृसमानाधिकरणत्वेन तद्विशेषणस्य अस्य अश्रुताधिकारिविशेषणत्वानुपपत्तेः । अतश्च आख्यातोपात्तैकत्ववदेव पुंस्त्वस्यापि अस्य विवक्षा नानुपपन्ना । किंच अद्रव्यत्वादपि स्त्रिया नाधिकारः 'भार्या पुत्रश्च दासश्च त्रय एवाधना: स्मृताः । यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम् ॥' इति वचनात् । 'शतमतिरथं दुहितृमते दद्यात्, आर्षेयविवाहे गोमिथुनम्' इत्यादिना पित्रा भर्त्रे मौल्येन दासवत् विक्रीतत्वाच्च । अत एव 'गर्भेणाविज्ञातेन हतेन भ्रूणहा' इति यज्ञसाधनपुंगर्भहननशङ्कया भ्रूणपदवाच्ययज्ञहन्तृत्वलिङ्गं अवकल्पते । अन्यथा स्त्रीत्वेन विज्ञातेऽपि यज्ञहन्तृत्वाविशेषात् अविज्ञातपदं अनर्थकं स्यात् । तथा 'आत्रेयीं हत्वा भ्रूणहा' इति लिङ्गम् । आत्रेयी सगर्भा । अतः पुमानेव अधिक्रियते । इति प्राप्ते, यद्यपि कर्तृविशेषणं पुंस्त्वं, तथापि प्रमाणान्तरेण स्त्रियाः अधिकारावगतेः विधिलाघवानुरोधेन साधुत्वार्थं अवयुत्यानुवाद एव पुंस्त्वं, यथा 'वसन्ते ब्राह्मणः' इत्यादौ । प्रकृते तु अनपेक्षितत्वात् नास्य कर्तृविशेषणत्वं, अपि तु योग्यत्वात् अधिकारिविशेषणत्वमेव । ततश्च तस्य फलं प्रत्यपि प्राधान्यात् उद्देश्यत्वेन तद्विशेषणाविवक्षा । वस्तुतस्तु प्रथमापेक्षितत्वात् स्वर्गकामादिपदस्य फलपरत्वमेव इति क्व पुंस्त्वस्य विवक्षाप्रसक्तिः । न चाद्रव्यत्वं कर्तनादिभिरर्जनसंभवात्, पित्रादिदत्तस्य दायस्य वा स्मृतिसूक्तत्वाच्च, 'धर्मे चार्थे च कामे च नातिचरितव्या' इति स्मृत्या पत्या अर्जित-

स्यापि उभयसाधारणत्वाच्च, 'भसदा वा एताः परगृहाणामैश्वर्यमवरुन्धते' इति स्मरणाच्च, 'सं पत्नी पत्या सुकृतेन गच्छताम्' इत्यादिमन्त्रवर्णात्, 'पाणिग्रहणाद्धि सहत्वं कर्मसु तथा पुण्यफलेषु' इति स्मरणाच्च, पत्न्या अप्यधिकारः। 'पत्युर्नो यज्ञसंयोगे' (पा० ४।१।३३) इतिस्मृतेः पत्नीशब्दस्य स्वामित्वाभावे अनुपपत्तेश्च। यत्तु 'भार्या पुत्रश्च' इति वचनं क्रीतत्वादिवचनं च, तत् 'न स्त्री स्वातन्त्र्यमर्हति' इति वचनान्तरानुसारात् अस्वातन्त्र्यपरम्। मौल्यदानं तु अदृष्टार्थं कन्यायां कन्यात्वातिरिक्तस्वत्वाभावस्य वक्ष्यमाणत्वेन तद्दानस्यापि औपचारिकत्वाच्च। आत्रेयी च अत्रिगोत्रोत्पन्ना, न तु आपन्नगर्भा। सत्यपि च स्त्रियाः क्व चित् कर्माधिकारे, असति गमकान्तरे, जपादिसकलवैदिककर्मानधिकारात् अविज्ञातलिङ्गदर्शनं पुंवत्वे प्रायश्चित्तविशेषविधानार्थम्। तस्मात् सिद्धः स्त्रिया अपि अधिकारः।

**न्यायबिन्दुः**—'स्वर्गकामः' इत्यत्र पुंस्त्वस्य प्रकृत्यर्थत्वात् विवक्षितत्वं इति स्त्रिया नाधिकारः, 'भार्या पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः' इति स्मरणाच्च। **इति प्राप्ते**, प्रकृत्यर्थत्वेऽपि उद्देश्यविशेषणत्वात् अविवक्षितमेव पुंस्त्वम्। ङीबाद्यर्थत्वात्तु संख्यातुल्यत्वमेव। न चाधनत्वं, पित्रादिदत्तसंभवात्, 'धर्मे चार्थे च' इत्यादिवचनाच्च। पत्नीशब्दस्य यज्ञसंयोगे निष्पत्तेः। 'भार्या पुत्रश्च' इति वचनं तु अस्वातन्त्र्यपरम्। तस्मात् स्त्रिया अप्यधिकारः इति सिद्धान्तः।

**मण्डन**—'पत्नीनां चाधिकारोऽत्र।'

**शंकर**—'स्यात् स्त्रिया अप्यधिक्रिया।'

**अधिकारः चतुर्होतृहोमेषु अनाहिताग्नेरेव॥**

**इष्टिपूर्वत्वादक्रतुशेषो होमः संस्कृतेष्वग्निषु स्यादपूर्वोऽप्याधानस्य सर्वशेषत्वात्। ६।८।१।१॥**

**भाष्यं**— इह चतुर्होतृषु आम्नायते 'प्रजाकामं चतुर्होत्रा याजयेत्, चतुर्गृहीतमाज्यं गृहीत्वा चतुर्होतारं व्याचक्षीत, पूर्वेण ग्रहेणार्धं जुहुयात्, तदुत्तरेणार्धं' इति। तत्र संदेहः किं पवमानेष्टिसंस्कृतेषु अग्निषु एवमादयः, उत असंस्कृतेषु इति। तथा पक्षान्तराश्रयणमपि वक्ष्यमाणं विचारयिष्यते। किं तावत् प्राप्तं? संस्कृतेषु अग्निषु एवंजातीयकः अक्रतुशेषोऽपि होमः स्यात्। यद्यपि अपूर्वा दर्विहोमाः न कुतश्चित् धर्मानाकाङ्क्षन्ति, तथापि आहवनीयादयो होमदेशान् आकाङ्क्षन्ति, 'यदाहवनीये जुहोति तेन सोऽस्याभीष्टः प्रीतो भवति' इत्येवमादिभिः श्रुतिभिः। एवं इष्टिपूर्वत्वात् सर्वहोमानां संस्कृताग्निवृत्तित्वं एवंजातीयकानामिति।

**इष्टित्वेन तु संस्तवश्चतुर्होतृनसंस्कृतेषु दर्शयति। २॥**

**भाष्य**— तुशब्दात् पक्षो विपरिवर्तते। चतुर्होतृहोमा असंस्कृतेषु अग्निषु भवेयुः। तथाहि दर्शयति 'एषा वाऽनाहिताग्नेरिष्टिर्यच्चतुर्होतारः' इति। अनाहिताग्नेः इष्टयो न विद्यन्ते, ये त्वेते चतुर्होतारः तस्य एषैव इष्टिः, इति अनाहिताग्नेः एवंजातीयकान् होमान् दर्शयति। तस्मात् असंस्कृतेषु भवेयुः।

**उपदेशस्त्वपूर्वत्वात्। ३॥**

**भाष्यं**— ननु लिङ्गमसाधकं, प्राप्तिर्वक्तव्येति। तदुच्यते। एवं तर्हि अक्रतुशेषाणां विधिरेष भविष्यति एषा वा अनाहिताग्नेः क्रिया इति। एवं अर्थवत् वचनं भविष्यति, वादमात्रमनर्थकं भवति। अस्य चास्ति विधिसामर्थ्यम्। तस्मात् विधिः असंस्कृतेषु इति।

**स सर्वेषामविशेषात्। ४॥**

**भाष्यं**— आह, एतत् गृह्यते विधिरिति। यत्तु अक्रतुशेषाणामिति, तन्न। सर्वेषां क्रतुशेषाणां अक्रतुशेषाणां च चतुर्होतृहोमानां (विधिः)। कुतः? अविशेषात्। चतुर्होतृणामयं धर्म उच्यते, न विशेषः क्रतुशेषाणामक्रतुशेषाणां चेति। तस्मात् सर्वेषाम्।

**अपिवा क्रत्वभावादनाहिताग्नेरशेषभूतनिर्देशः। ५॥**

**भाष्यं**—अपिवेति पक्षव्यावृत्तिः। अक्रतुशेषाणामेवायं धर्मः, न क्रतुशेषाणाम्। कुतः? अनाहिताग्नेः क्रत्वभावात्। नहि अनाहिताग्नेः क्रतवः सन्ति। न च क्रत्वङ्गं केवलं प्रयुज्यमानं कस्मै चित् प्रयोजनाय स्यात्। न चास्य अन्यत् फलं प्रकल्प्येत प्रमाणाभावात्। वचनस्य हि अन्यदपि प्रयोजनमस्ति। न चानेन

वचनेन शक्यते अनाहिताग्नेः क्रतुः कल्पयितुम्। तस्मात् अक्रतुशेषाणां अयं धर्म इति।

**जपो वाऽनग्निसंयोगात्। ६ ॥**

**भाष्यं**— वाशब्दात् पक्षो विपरिवर्तते। न असंस्कृतेषु अग्निषु एवंजातीयका होमाः स्युः। कुतः? आधानस्य सर्वशेषत्वात्। ननु वचनमिदं 'एषा वा अनाहिताग्नेरिष्टिः' इति। नेति ब्रूमः। जपार्थवाद एष भविष्यति। ये जपरूपाः तेषामर्थवादः, न सर्वेषां चतुर्होतॄणाम्। एवं 'यदाहवनीये जुहोति' इत्येवमादीनां वचनानामर्थवत्ता भविष्यति।

**इष्टित्वेन तु संस्तुते होमः स्यादनारभ्याग्निसंयोगादितरेषामवाच्यत्वात्। ७ ॥**

**भाष्यं**— यदुक्तं एषा वा अनाहिताग्नेः क्रिया इष्टितुल्या इति, जपानामेष वाद इति, तन्न। कथं? नैषा वचनव्यक्तिः 'या एषा अनाहिताग्नेः क्रिया सा इष्टितुल्या' इति। किं कारणं? सादृश्यमात्रानुवादः अनर्थकः स्यात्। इतरस्मिन् पक्षे विधिरर्थवान्। येयमिष्टिः, एषा अनाहिताग्नेः इति तदिष्टिसंस्तवात् होमानामेव वादः। कथं? इष्टियोगः, स एव आसेचनाधिको होमः। यदुक्तं सर्वहोमार्थ आहवनीय इति, तन्न चतुर्होतॄनेव अधिकृत्य उच्यते, किंतु अविशेषेण होमान्। स चतुर्होतृषु असंभवात् अन्येषु भविष्यति। चतुर्होतृषु च अनाहिताग्नेः उच्यमानेषु आहवनीयो नाङ्गमिति।

**उभयोः पितृयज्ञवत्। ८ ॥**

**भाष्यं**— नैतदस्ति अनाहिताग्नेरेव चतुर्होतार इति। उभयोः स्युः पितृयज्ञवत्। यथा पितृयज्ञः आहिताग्नेः अनाहिताग्नेश्च, एवं चतुर्होतारोऽपि। कथमवगम्यते? वर्णितमेतत् यदा अनुवादपक्षः तदा आहिताग्नेः, यदा विधिपक्षः तदा अनाहिताग्नेः। उभयथा वचनव्यक्तिः प्रतीयते। न च प्रतीयमानोऽर्थः शक्यते अपह्नोतुम्। तस्मात् उभयोश्चतुर्होतारः इति।

**निर्देशो वाऽनाहिताग्नेरनारभ्याग्निसंयोगात्। ९ ॥**

**भाष्यं**— न चैतदस्ति पितृयज्ञवत् उभयोः चतुर्होतारो भवेयुरिति। कथं? एष हि अनाहिताग्निनिर्देशः 'एषा वा इष्टिः अनाहिताग्नेः' इति वचनेन अधिकृतः, न आहिताग्निः, निर्देशसामर्थ्यात्। अर्थवादे चोपक्षीणं तत्रैव न विरुध्यते इति। 'यदाहवनीये जुहोति' इति वचनं न चतुर्होतॄनेव अधिकृत्य उच्यते इत्युक्तम्। तस्मात् अनाहिताग्नेः एवंजातीयका होमाः।

**पितृयज्ञे संयुक्तस्य पुनर्वचनम्। १० ॥**

**भाष्यं**— अथ यदुक्तं पितृयज्ञवत् इति, युक्तं पितृयज्ञे, तत्र आहिताग्निसंयुक्तस्य पुनरेतद्वचनं भवति 'अप्यनाहिताग्निना कार्यः' इति। एतद्वचनं अनाहिताग्नेरपि इति अनाहिताग्निना अन्वाचयं करोति। इह तथा नास्ति वचनम्। नियोगत एको निर्देशः 'एषा वाऽनाहिताग्नेरिष्टिः' इति। नात्र अपिशब्दोऽस्ति। तस्मात् पितृयज्ञेन अतुल्यमेतत्।

**शा**— 'वचनस्यार्थवत्त्वायानाहिताग्नेरधिक्रिया। आहत्य च तदर्थास्ते चोदिता नान्यगामिनः ॥'

**सोम**— चतुर्होतृहोमादिषु आहिताग्नेर्नास्त्यधिकार इत्येवमधिकारापवादोऽत्र प्राधान्येन व्युत्पाद्यते इति पादानन्तर्यमानन्तर्यं च। **सूत्रार्थस्तु**—दर्विहोमवत् अपूर्वोऽपि अक्रतुशेषश्चतुर्होतृहोमः संस्कृतेष्वग्निषु स्यात्। न चापूर्वत्वे कुतश्चित् प्रकृतेराहवनीयाप्राप्तेः कथं संस्कृतेषु इति **वाच्यम्**। आधानस्य सर्वहोमोपकारकत्वात् सर्वेषामपि होमानां पवमानेष्टिपूर्वत्वात् 'आहवनीये जुहोति' इत्यनारभ्य विधानात् सर्वहोमसाधारण्येनाहवनीयप्राप्तेः इति।

**वि**— 'चतुर्होत्राख्यमन्त्रेण होमः साग्नेरुतोभयोः। अनग्निके विधिर्वा, ऽऽद्यो होमत्वात् क्रतुहोमवत् ॥ उभयोः पुरुषार्थत्वात्, तृतीयो वचनात्तु तत्। अनाहिताग्नेरेषा वा इत्यग्नौ लौकिके हुतिः ॥'

**भाट्ट**— सन्ति चतुर्होतृसंज्ञका मन्त्राः 'पृथिवी होता। द्यौरध्वर्युः' इत्यादयः। तैर्जपा होमाश्च विहिताः। तत्र ये तावत् क्रत्वर्थाः, पुरुषार्था अपि वा वचनात् क्रतुप्रयोगमध्यवर्तिनः, तेषु विवाद एव नास्ति। येऽपि पृथग्भूताः काम्या जपास्तेष्वपि अविवाद एव आहिताग्न्यनाहिताग्निसाधारणत्वात्। ये तु तादृशा होमाः, तेषां 'यदाहवनीये जुहोति' इत्यनेन आहवनीयाधिकरणक-

त्वस्य विहितत्वात् इतरहोमवदेव आहिताग्निमात्राधिकारकत्वम्। 'यत्तु एषा वै अनाहिताग्नेरिष्टिः' इति चतुर्होतृसंनिधौ वचनं, तत् येयं अनाहिताग्नेः क्रिया जपादिरूपा सा इष्टितुल्या इत्येवं इष्टिसादृश्यमात्रानुवादेन जपाभिप्रायकतया नानुपपन्ना। यदि तु विध्यन्तरशेषत्वाभावेन अर्थवादत्वानुपपत्तेः जपे इष्टिसादृश्यस्य कथनमपि अनुपपत्तेश्च 'येयं त्यागघटितत्वसादृश्यात् चतुर्होतृहोमरूपा इष्टिः सा अनाहिताग्नेः' इत्यर्थाङ्गीकारेण विधिः इत्याश्रीयेत, तथापि अस्य आहिताग्निपरिसंख्यार्थत्वे प्रमाणाभावात् पिण्डपितृयज्ञवत् उभयाधिकारिकत्वम्। इति प्राप्ते, प्रत्यक्षवचनेन अनाहिताग्नेः कर्तृत्वविधौ तत एव स्मार्ताग्न्यधिकरणकत्वप्राप्तेः आहवनीयाधिकरणकत्वस्य असंभवादेव बाधात् परिसंख्यात्वानापत्तेः अनाहिताग्नेरेव अधिकारः। पिण्डपितृयज्ञे तु 'एवमनाहिताग्नेः' इति वचने अनाहिताग्नेरपि अभ्यनुज्ञानात् उभयाधिकारः इति विशेषः।

**न्यायविन्दुः**—'चतुर्होतारं प्रयुञ्जीत' 'चतुर्होत्रा प्रजाकामो जुहुयात्' इति चतुर्होतृसंज्ञकमन्त्रैः जपहोमाः श्रुताः। तत्र होमा आहिताग्नेरेव। 'एषा ह वा अनाहिताग्नेरिष्टिः' इति तु जपविषयम्। जपे एव स्तुत्यर्थमिष्टिशब्दः। **इति प्राप्ते**, वचनसाफल्याय अनाहिताग्नेरत्राधिकारो वचनार्थ इति सिद्धान्तः।

**मण्डन**—'चातुर्होत्रेऽनग्निरेवाधिकारी।'

**शंकर**—'चतुर्होत्रादि लौकिके। १। होमा नैव क्रतोरङ्गम्।' २।

अत्र आदिमैस्त्रिभिः सूत्रैरेकमधिकरणम्। चतुर्थादिभिर्दशमान्तैर्द्वितीयं इति श्रीशंकरभट्टाभिप्रायः।

**अधिकारः दर्शपूर्णमासादौ एकस्यैव कर्तुः स्त्रीसद्वितीयस्य॥**

**प्रयोगे पुरुषश्रुतेर्यथाकामी प्रयोगे स्यात्।** ६।२।२।३॥ (प्रयोगेऽपुरुषश्रुतेः इति वा वार्तिके पाठः)

**भाष्यं**—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इति श्रूयते। अत्र संदेहः किं अनियमेन एको द्वौ बहवो वा यजेरन्, अथवा एक एव यजेत इति। ननु तृतीये उक्तं 'शास्त्रफलं प्रयोक्तरि' इति (३।७।८।१८)। यदा प्रयोक्तरि तदा विवक्षितमेकत्वं यथा, तथा वक्ष्यामः। इह तु तदेव आक्षिप्यते, पुनश्च निर्णेष्यते इति। किं प्राप्तं? यथाकामी प्रयोगे स्यात्। कुतः? पुरुषश्रुतेः। पुरुषः श्रूयते। पुरुषे यागं श्रावयित्वा कृतार्थः शब्दः एकस्य द्वयोः बहूनां वा यागं न वारयति। नास्मौ पुरुषो यागे श्रूयते, यागमभिनिर्वर्तयेत् यागेन वा फलमभिनिर्वर्तयेत् इति। कथं तर्हि? यागेन फलं प्राप्नुयात् इति। यागस्य वा फलनिर्वृत्तेर्वा नाङ्गं पुरुषः। यदि हि अङ्गमभविष्यत् यागे फलनिर्वृत्तौ वा, तदा संख्या गुणभूता तदङ्गं पुरुषं परिच्छिन्द्यात्। अथ पुनरङ्गभूतं प्रकाशयन् लक्षणत्वेनैव पुरुषशब्दः संबध्येत, न गुणवचनतया, तत्र चाविवक्षितं संख्यावचनम्। यावानर्थी समर्थश्च, तावन्तं सर्वं अधिकृत्य एतदुच्यमानं न शक्यते एकेन वचनेन विशेषयितुम्। कथं च पुरुषप्राधान्यं? न फलेनास्त्या किं चित् प्रयोजनमस्ति, न यागेनास्त्या। आत्मा तु फलसंबद्धः सर्वस्येष्टः। तदर्थं कर्म कर्तव्यम्। इतरथा उच्यमानमपि न क्रियेत। तत्र वचनानर्थक्यं स्यात्। तस्मात् याथाकाम्यं स्यात् एको द्वौ बहवो वा यजेरन्निति। तथा च दर्शयति 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्' इति। तथा 'एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः' इति द्वयोर्बहूनां च यागं प्रदर्शयति।

**टुप्**—ननु यागनिर्वर्तकत्वेन उपादीयमानत्वात् विवक्षिता संख्या, कुतः संशयः? उच्यते। फलेन व्याप्यमानत्वात् कर्ता प्रधानभूतः। प्रधानभूतस्य च अविवक्षिता संख्या। तत्रासौ नान्तरीयकत्वात् यागमनुतिष्ठति। तस्यां (प्रधानत्व-)विवक्षायां अविवक्षिता संख्या। अथवा यागप्रयोगनिर्वर्तकत्वेन कर्ता उपदिश्यते (उपादीयते)। उपदेशाच्च विवक्षिता संख्या। किं प्राप्तं? अविवक्षिता (संख्या)। 'यजेत स्वर्गकामः' इति (पदद्वयस्य) सामानाधिकरण्यम्। स्वर्गेण (च) कर्ता व्याप्यते। भवति व्याप्यमानश्च (स्वर्गः, तत्साधन च प्रति) प्रधानभूतः। ततः अस्मिन् (स्वर्गकाम-)पदे अविवक्षिता

संख्या । ( एवं ) 'यजेत' इत्यत्रापि यदि अविवक्षितैव, ततः सामानाधिकरण्यमुपपद्यते ( एकार्थवृत्तित्वात् ) । एकत्र ( तु आख्याते ) विवक्षिता संख्या, न ( तु ) इतरत्र ( स्वर्गकामपदे ) इति ( अभ्युपगम्यमाने ) नास्ति सामानाधिकरण्यम् । किंच सर्वः ' फलेनाहं व्याप्येय ' इत्येवमर्थं यतते । ( कथं तर्हि अनुष्ठान-सिद्धिः ? अत आह– ) तत्रेतरथा ( यदि नानुतिष्ठति, ततः ) ' फलमहं नाप्नुयां ' इत्यर्थात् यागमनुतिष्ठति । एवं चेत् अचोदितत्वात् प्रयोगे ( पुरुषस्य ) कथं तस्य संख्या विवक्ष्येत ? । ' प्रयोगे अपुरुषश्रुतेः ' ( सूत्रं ) प्रयोगे पुरुषस्य अश्रवणादित्यर्थः । अथवा प्रयोगे पुरुष-श्रुतेः प्रयोगे पुरुषं श्रावयित्वा कृतार्थः शब्दः । ' तेन यागः कार्यः ' इति यदि ईदृश उपदेशो भवेत् ततो निर्वर्तकत्वेन ( गुणभावात् ) विवक्षिता संख्या स्यात् । न च ईदृश उपदेशोऽस्ति ।

**प्रत्यर्थं श्रुतिभाव इति चेत् । ४ ॥**

**भाष्यं**— इति चेत्, एवं चेत् भवान् पश्यति अविवक्षितमेकत्वमिति । प्रत्यर्थं श्रुतिभावः स्यात्, याग-मभिनिर्वर्तयेत् ततश्च फलं प्राप्नुयात् इति । कुतः ? एतदुभयं हि एतस्मादवगम्यते । कतरदत्र जहीमः इति नाध्यवस्यामः । तस्मादुभयमपि प्रत्येतव्यम् । आह, ननु अनेकार्थवचनता न न्याय्या इति । उच्यते । यदवगम्यते तत् न्याय्यम् । उभयं च प्रतीयते । तस्मादुभयार्थवचन-तैव न्याय्या । यागं प्रति च गुणभावात् विवक्षित एक-वचनम् ।

**टुप्**— ( यदुक्तं ) फलेन व्याप्यमानस्य नान्तरी-यकत्वात् यागे गुणभाव इति । एतन्नोपपद्यते । कथ ? स्वर्गः साध्यः, यागः साधनम् । तत्र साध्यसाधनसंबन्धो विधीयते । नहि (विधिमन्तरेण) अर्थात् यागः साधनं ( साधनत्वं ) प्राप्नोति । अतो विधीयमानः ( यागः ) निर्वर्तकं कर्तारमपेक्षते, तत्परिच्छेदिकां च संख्याम् । तस्मात् ( अपेक्षावशात् ) अस्मिन् ( आख्यात– ) पदे विवक्षिता संख्या । ( यत्तु अविवक्षितत्वमुक्तं, तत्राह— ) पदार्थपूर्वकत्वाच्च वाक्यार्थस्य यादृशोऽर्थः ( संख्याविशिष्टः ) पदवेलायामवगतः तादृशः एव उत्त-रेण ( काम– )पदेन संबध्यते । ( कथं सामानाधि-करण्यमत आह— ) तस्मात् यद्यपि स्वर्गकामपदेन अनियता संख्या प्राप्ता, तथापि अनया आख्यातनियत-विशेषणविशेष्यतया ( आख्यातेन सह या विशेषणविशे-ष्यता नियता अवश्यंभाविनी, तया ) सामानाधिकरण्य-मुपपत्स्यते । ( कर्त्रधिकारिणोरैक्यात् आख्यातोपात्त-कर्तृसंख्या अर्थादधिकारिणमवच्छिनत्ति इति विशेषण-विशेष्यभावेन एकार्थवृत्तित्वात् युक्तं सामानाधिकरण्यम्)। अथवा उपादीयमानत्वात् ( ' उपादीयमानस्य विशेषण-त्वात् ' इति तु तन्त्ररत्ने पाठः ) विवक्षिता संख्या । (कामपदेन तु) व्याप्यमानत्वात् अविवक्षिता । न चान्य-( संख्या– )युक्तेन क्रियमाणो यागः फलं साधयति यदा विवक्षिता स्यात् आख्याते संख्या । न च वाक्यभेद-दोषः । यत्र सकृदुच्चरिते (शब्दे) द्वे रूपे (विवक्षितत्वा-विवक्षितत्वे) भवतः, तत्र वाक्यभेदः (दोषः स्यात्), इह तु भिन्नपदोपादानात् विवक्षाऽविवक्षाभेददोषो नास्ति (काम-पदे हि अविवक्षा, आख्यातपदे च विवक्षेति ) । यदुक्तं न यागः कर्तव्य उपदिश्यते, यागेन वा कर्तव्यं ( फलं ) इति ( नोपदिश्यते ) । उच्यते । ' यागं कुर्यात् ' इति सत्यं नोपदिश्यते । यदि यागेन ( फलं ) कुर्यात् इति नोपदिश्येत, ततः साध्यसाधनसंबन्धाभावात् फलं न स्यात् । ततश्च सर्वमेव ( वाक्यं ) नोपपद्येत ( अन-र्थकं स्यात् । कथमानर्थक्यमत आह– ) न स्वर्गकाम इति विधीयते ( ' यस्मिन् प्रीतिः ' इति सूत्रे फलाविधे-यत्वस्य प्रतिपादनात् । तस्मात् ) अनर्थकं वाक्यं स्यात् । तस्मात् ( यागस्य विधेयत्वात् । तन्निर्वर्तकस्य पुरुषस्य परिच्छेदकत्वेन ) विवक्षिता संख्या ।

सिद्धान्तसूत्रमिदं न सुविवृतम् । ( तेन इदं चोद्य-पूर्वकं विवरीतुमुत्तरसूत्रद्वयम् ) ।

**तादर्थ्ये न गुणार्थता, ऽनुक्तेऽर्थान्तरत्वात्, कर्तुः प्रधानभूतत्वात् । ५ ॥**

**भाष्यं**— नैतदेवं, तादर्थ्ये पुरुषे प्रधानभूते सति नाङ्गभूतः पुरुषः प्रतीयते । अनुक्ते हि न्याये न प्रतीमः । अर्थान्तरं यतो गुणभावात् प्रधानभावः । प्रधानभूत-श्चात्र कर्ता वचनस्यार्थवत्त्वात् । अतो न गुणभावः कर्तु-

स्वकल्पते । (तन्त्ररत्ने तु ' तादर्थ्यानुगुणार्थता नानुक्तेऽ-र्थान्तरत्वात् कर्तुः प्रधानभूतत्वात् ' इति सूत्राक्षरपाठः )

**टुप्**—फलेन व्याप्यमानत्वात् प्रधानभूतः (पुरुषः)। प्रधानभूतश्चेत् अविवक्षिता संख्या । ततो ' यजेत ' इति ( आख्यातगता ) या संख्या प्रतीयते, सा गुणभूतांशेन विवक्षिता इत्येतन्न । ( कुतः ) अनुक्ते ( हि ) न्याये स्यात् ( विवक्षा ) । उक्तश्च ( अस्माभिः अविवक्षितत्वे ) न्यायः । व्याप्यमानगता ( कामपदस्था ) संख्या ( तावत् ) अविवक्षिता । ( अतः ) तद्विरोधात् इतरदपि ( आख्यातगतं ) अविवक्षितम् ( एकत्वम् ) ।

**चोदनैकत्वात् । ६ ॥**

**भाष्यं**— एका हि विधायिका चोदना । सा यदि फलोत्पत्तिं यागोत्पत्तिं वा विधत्ते तदा कर्ता न स्वार्थेन, यदा पुनः स्वार्थेन तदा यागः फलं वा तादर्थ्येन । न चैतत् यौगपद्येन भवति । स्वार्थे एकः, तदर्थे इतरः, वैपरीत्येन वेति । यथा ' उभाभ्यां बाहुभ्यां इषूनस्यति ' देवदत्त इति गम्यते, न च यौगपद्येन । यदा दक्षिणेनास्यति, तदा सव्येन धनुःपृष्ठं नमयति, न तेनापि अस्यति इति गम्यते, तत्र व्यापृतत्वात् । एवं यदा पुरुषप्राधान्यं, तदा यागस्य फलस्य वा गुणभावो गम्यते, तत्र व्यापृतत्वात्, न तयोः प्राधान्यमपि गम्यते । तस्मान्न यागे फले वा पुरुषस्य गुणभावः । अतो याथाकाम्यं स्यात्, एको द्वौ बहवो वा यजेरन्निति ।

**अपि वा कामसंयोगे संबन्धात् प्रयोगायोपदिश्येत, प्रत्यर्थं हि विधिश्रुतिर्विषाणावत् । ७ ॥**

**भाष्यं**— अपिवेति पक्षव्यावृत्तिः । प्रयोगाय उपदिश्येत कर्ता न स्वार्थेन । कथं ? यजेत इत्यस्य अर्थः यागं कुर्यात् यागेन वा कुर्यात् इति सत्ताऽभिव्यक्तिमात्रं गम्यते, न फलस्य कर्ता आधारता वा । स्वर्गकामशब्दश्च स्वर्गकाममात्रे वर्तते, न विशेषमवलम्बते आत्मनः परस्य वेति । शब्दप्रमाणकाश्च वयं ईदृशेषु अर्थेषु । कथं तर्हि ? कामस्य आत्मसंबन्धोऽवगम्यते संबन्धात् । फलकामः अनुक्तेऽपि शब्देन आत्मनः एव फलं कामयते, न परस्य । यत्र तु उभावर्थौ वक्तव्यौ भवतः, प्रत्यर्थं तत्र विधिः श्रूयते, यथा ' कृष्णविषाणया कण्डूयति ' ' प्राक्काले कृष्णविषाणां प्रास्यति ' इति । तत्र एते द्वे श्रुती विधायिके भवतः, तत्र गुणभावः प्राधान्यं च गम्यते, न तु अत्र एते द्वे विधायिके श्रुती विद्येते, गुणभूतस्तु पुरुषः श्रूयते भावयेदिति । तत्र यस्यार्थः करणं कर्म वा, संबन्धात्तु पुरुषप्राधान्यं, न कस्य चित् गुणेन उपदेशेन प्रयोजनम् । गुणसंबन्धेन आम्नानन्तु कृत्यम् । तस्मात् संबन्धात् पुरुषप्राधान्यं गम्यते, न श्रुतेः । अतो गुणभूतस्य पुरुषस्य संख्या विवक्षितेति ।

**टुप्**— फलेन व्याप्यमानस्य ( पुरुषस्य प्रधानभूतस्य ) एकत्वाद्यविवक्षा । सा च अर्थात् (स्वारस्यात्) फलेन व्याप्तिमात्मनः इच्छति । ( तेन ) या अत्र ( काम- )पदे ( फलव्याप्तिं प्रति प्राधान्य- ) विवक्षा, सा न शास्त्रात्, किं तर्हि अर्थात् स्वर्गकामशब्देन अनूद्यते । अत आत्मार्थता ( फलस्य ) सिध्यति । यजेत इत्येकत्वविवक्षा तु शास्त्रात् ( कर्तृसंख्याविवक्षाऽपि उपलक्ष्यते ) । तत्र यदि शास्त्रात् द्वे अपि ( गुणप्रधानत्वे ) विवक्षिते स्यातां, ततः अर्थान्तरत्वात् ( अर्थभेदात् वाक्यभेद- )दोषो भवेत् ( न त्वेवमस्ति । यस्मात् स्वार्थमेव फलं काम्यते- ) तस्मात् यः स्वर्गं प्रार्थयमानः आत्मसंबन्धितया आत्मनः इच्छति, तस्य यागोऽभ्युपायः इत्यर्थादेवावगम्यते । तस्मात् विवक्षितमेकत्वम् ।

अथवा यजेत इति भावना प्रतीयते कालोपग्रहनिमित्तादिविशिष्टा ( दर्शादिना कालेन, कर्तृगामिफलत्वरूपेण उपग्रहेण आत्मनेपदेन, जीवनेन च निमित्तेन, आदिपदाच्च प्रयाजादिभिरङ्गैः, स्वर्गादिफलेन, तद्भोक्त्रा प्रधानपुरुषेण, निर्वर्तकेन च गुणभूतेन कर्त्रा विशिष्टा भावना अवगम्यते ) । तत्र संख्या ( उपात्ता ) गुणभूतस्य पुरुषस्य ( कर्तृरूपस्य ) परिच्छेदिका ( अवगम्यमाना ) येनांऽशेन व्याप्यते ( पुरुषः ) तेन ( अंशेन क्रियया ) अविवक्षिता, ( कर्तृगामित्वेन तु विवक्षितैव ) । तदुभयमपि ( गुणत्वं प्रधानत्वं च ) अनन्य- ( प्रमाण- ) गम्यत्वात् अस्मिन् ( एव वाक्ये ) विवक्षितम् ।

**अन्यस्य स्यादिति चेन् । ८ ॥**

**भाष्यं**— इति चेद्भवान् पश्यति एवं सति यदि स्वर्गकामः अन्यस्यापि स्वर्गं कामयमानो भवति, अन्यस्य स्वर्गं कामयमानोऽपि अन्यो यजेत ( इति ), तत्र पूर्वोक्तो न्यायः प्रत्युद्धृतो भवति 'शास्त्रफलं प्रयोक्तरि' इति ( ३।७।८।१८ ) ।

**टुप्**— यदि स्वर्गकामशब्दः परस्य आत्मनो वा यः स्वर्गं कामयते तत्र अविशेषेण वर्तते, एवं चेत् ( अनुवादपक्षेऽपि ) परस्यापि स्वर्गमिच्छन् यजेत इति । ( अयं मुद्रितपाठः । लिखिते तु 'यः स्वर्गं' इत्यादि सर्वं वर्तते, ततः प्राक्तनं तु नास्ति )

**अन्यार्थे नाभिसंबन्धः । ९ ॥**

**भाष्य**— न परस्य स्वर्गकामो न, इत्येवं न यजेत, नापि अन्यस्य स्वर्गकामशब्दो न वाचक इति । किं तर्हि ? फलमसौ न प्राप्नोति इति । कथं पुनः फलस्याप्राप्तिः ? उपग्रहविशेषश्रवणात् यजेत इति । यद्वा आधाने 'ब्राह्मणो वसन्तेऽग्निमादधीत' इति । तदा तु कामश्रुतौ उपग्रहः, अनुवाद एव ।

**टुप्**— आत्मनेपदात् कर्तृगामि क्रियाफलम् । तस्मात् यो न कर्ता तस्य ( क्रिया- )फलं नास्ति । सौर्यादीनां तु आधानगतात्मनेपदेन आधानकर्तुः फलं भवति । ननु आधानस्य अग्न्युत्पत्तिरेव ( अग्निगताद्दृष्टोत्पत्तिरित्यर्थः ) फलं ? उच्यते । ज्वलनपचनप्रकाशनादीनि आधातुश्च (,अनाधातुश्च) तुल्यानि इति (हेतोः) न तत् फलं ( ज्वलनादिक आत्मनेपदेन कर्तुः ) नियन्तुं शक्यम् । तस्मात् आहवनीयेन यानि साध्यन्ते अपूर्वाणि ( क्रत्वपूर्वाणि ) तदभिप्रायमात्मनेपदम् । दर्शपूर्णमासज्योतिष्टोमादिषु यत् आहवनीयसाध्यं ( प्रधानफलं गुणफलं वा ) तत्र अनुवाद्येव आत्मनेपदम् । यानि तु अनग्निसाध्यानि ( अङ्गफलानि ) 'गोदोहनेन पशुकामस्य' इत्यादीनि तदर्थम् ( प्रधानवाक्यगतमात्मनेपदम् । )

**फलकामो निमित्तमिति चेत् । १० ॥**

**भाष्यं**— एवं चेत् भवान् मन्यते, न स्वर्गकामशब्दो न वाचक इति अन्यो न यजेत, फलाभावात् नास्य याग इति, सूक्तवाकफलार्थं तर्हि यजेत, 'आशास्तेऽयं यजमानः आयुराशास्ते' इति प्रयोजयितारं निर्देक्ष्यति होता । फलविधिश्च 'सूक्तवाकेन प्रस्तरं प्रहरति' इति विधानात् । यदि फलविधिरयं, मान्त्रवर्णिकी देवता । ततः सूक्तवाकेन प्रस्तरः प्रहृतो भवति । इतरथा अदृष्टं कल्प्येत । तस्मात् आनुषङ्गिकफलार्थं अन्यस्य स्वर्गकामः अन्यो यजेतेति ।

**न नित्यत्वात् । ११ ॥**

**भाष्यं**— नैतदस्ति । यस्यैव प्रधानकर्मफलं तस्यैव आनुषङ्गिकमपि भवितुमर्हति । एवं स्वार्थेन आधानं कृतं भवति । नहि आधानस्य स्वार्थतायामस्ति विशेषः । प्रधानफलं वा आनुषङ्गिकं वा सर्वमेव आधातरि समवेतुमर्हति । नित्यकाम्यता च विरुध्येत । यदि आयुरादिकामो यजेत, न तर्हि नित्यम् । यदि नित्यं, न आयुरादिकामः । तस्मान्नावस्थितो न्यायः प्रत्युद्ध्रियेत । न च पुरुषः प्रधानभूतश्चोद्यते । गुणभावात्तु अस्य विवक्षितमेकत्वम् । तस्मादेक एव यजेत ।

**कर्म तथेति चेत् । १२ ॥**

**भाष्य**— अथ यदुक्तं द्वयोर्बहूनां च यागं दर्शयति 'युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्, एते असृग्रमिन्दवः इति बहुभ्यो यजमानेभ्यः प्रतिपदं कुर्यात्' इति द्वियजमानके बहुयजमानके च कर्मणि प्रतिपद्विधाने कर्म तथायुक्तं स्यात् इति । तत् परिहर्तव्यम् ।

**न, समवायात् । १३ ॥**

**भाष्यं**— नैतदेवम् । समवेतं हि कर्म विद्यते द्वाभ्यां यजमानाभ्यां बहुभिश्च यजमानैर्वचनेन । यथा अहीनाः । तेषु प्रतिपद्विधानं अर्थवत् भविष्यति । तस्मात् एको यजेतेति ।

**शा**— 'फलार्थिनं समुद्दिश्य कर्मणामुपदेशनात् । उद्देश्यगामिनी संख्या ग्रहवन्न विवक्षिता ॥' **स्यान्मतम्** । यद्यपि कामपदगता संख्या उद्देश्यगतत्वात् तद्गतलिङ्गवत् ग्रहैकत्ववच्च अविवक्षिता, तथापि आख्यातोपात्ता संख्या विधीयमानक्रियाऽऽक्षिप्तगुणभूतकर्तृगामित्वात् विवक्षितेति । **तदसत्** । अविधेयत्वात् क्रियायाः । यागेन स्वर्गमाप्नुयात् इत्येतावदुच्यते, नानु-

ष्ठानं, तत् अर्थप्राप्तम् । स्वर्गप्राप्तौ च पुंसः प्रधानत्वात् अविवक्षिता संख्या । यदि ' स्वर्गं कुर्यात् ' इत्युच्येत ततः अन्योऽपि स्वर्गमाप्नुयात् न कर्तैव । यद्यपि स्वर्गं कुर्यात् इत्युच्यते तथापि अविधेयैव क्रिया, ' यो हि यदिच्छति स तत् करोति ' इत्येवं फलकामस्य फलविषया क्रिया प्राप्तैव, तां प्रत्ययेनानूद्य प्रकृत्यर्थो यागादिः करणतया विधीयते । प्रत्ययार्थश्च कर्तृसंख्या, तेनासौ अनुवाद्यगतत्वात् अविवक्षिता । नहि एकेन प्रत्ययेन फलकामस्य रागप्राप्तां फलभावनां उद्दिशता कर्तृसंख्या-भावनां यागं वा प्रति उपादातुं शक्यते वैरूप्यप्रसङ्गात् । **अथ मतं,** यद्यपि यागाननुरक्ता फलक्रिया प्राप्तैव, तथापि यागक्रियाया अप्राप्तत्वेन विधेयत्वात् तद्विशेषण-भूता संख्या विधेयगतत्वात् विवक्षितेति । **तदयुक्तम्** । यद्यपि यागानुरक्ता क्रिया न प्राप्ता, तथापि क्रियास्वरूपं तावत् प्राप्तमेव । । तत्र विशिष्टक्रियाविषयोऽपि विधिः श्रूयमाणः प्राप्ताप्राप्तविवेकेन यागानुरागमात्रपरो भवति । नहि फलक्रियातः क्रियान्तरं यागेनानुरज्यते । सा चेत् प्राप्तैव, तद्विशेषणं च संख्या न साक्षात् यागगता, प्रत्ययार्थत्वात् । तस्मादविवक्षितेति । **अत्रोच्यते** । ' रागप्राप्ता फलप्राप्तिर्न सा शब्देन बोध्यते । प्रत्ययश्च क्रियावाची न प्राप्तिं प्रतिपादयेत् ॥ उपग्रहविशेषाच्च ( आत्मनेपदात् ) नाकर्तुः फलसंगतिः । विधेश्चैव-मतोऽन्यस्य न फलप्राप्तिसंभवः ॥ स्वर्गादिकाममुद्दिश्य क्रियैवेह विधीयते । यागादियुक्ता संख्या च तद्गतत्वाद् विवक्षिता ॥ फलक्रियानियोगेन नहि पुंसां फलार्थिनाम् । रागप्राप्ता यतो ह्येषा शब्देन न विधीयते ॥ ' अर्थिपदेन तावत् अर्थितामात्रमुच्यते , न प्रवृत्तिः । आख्यातमपि यच्छब्दाद्युपबन्धाभावात् यागादिविशिष्टभावनाविधिपरमेव स्वरसादवगम्यते । ततश्च यः ' स्वर्गो मे स्यात् ' इत्येवं कामयते ' स तं यागेन भावयेत् ' इति भावनैव सर्वविशेषणविशिष्टा फलोपायत्वेन कामिनो विधीयते । न च अवश्यं अर्थिनस्तद्विषया प्रवृत्तिः प्राप्ता , येन बलात् तत उत्तार्य विधिर्यागानुरागमात्रपरत्वेनैव व्यवस्था-प्येत । न च फलकामः प्राक् वचनात् इदं जानाति ' प्रवृत्तस्य मे स्वर्गः सिध्यति , न तु अप्रवृत्तस्य दैवात् कारणान्तराद्वा ' इति , तदज्ञानात् स्वर्गार्थिनोऽनिश्चयात् [illegible] उच्यते ; यदा तु वचनं अस्य यागादिविशिष्टं व्यापारं विधत्ते , तदा तस्ये-प्सितोपायत्वं विधिविज्ञानादवगम्य तत्र प्रवर्तते । तस्मात् विधेरेव भावना यागादिविशिष्टा , संख्या च तद्विशेषणं , इति विवक्षितैव । लिङ्गं तु कामपदगतं उद्देश्यविशेषणत्वात् अविवक्षितं इति विशेषः । अतो भावनायाः विधेयत्वात् तद्विशेषणभूता कर्तृसंख्या उपादेयगतत्वात् विवक्षिता इति सिद्धम् ।

**सोम**— यथा पूर्वत्र उद्देश्यगतत्वेन नाहित्यन-विवक्षितं एवमिहापि संख्या इति प्रत्यवस्थानात् **संगतिः** । पदार्थपूर्वकत्वात् वाक्यार्थस्य प्रथममाख्याते पुरुषस्य गुणभावे स्वर्गकामपदे च प्राधान्ये चावगते तदविरोधेनैव सामानाधिकरण्यस्य वाच्यत्वात् , सत्यपि गुणप्रधानभावेन भिन्नार्थत्वे स्वर्गकामपदेन अनियत-संख्याकत्वेन प्राप्तस्य आख्यातेन नियतसंख्याया विशेषणे सति कर्त्रधिकारिणोः ऐक्यात् आख्यातोपात्तसंख्या अर्थात् अधिकारिणमपि अवच्छिनत्ति , इत्येवं विशेषणविशेष्य-भावात् उपपन्नं सामानाधिकरण्यम् । **सूत्रार्थस्तु**— प्रयोगे पुरुषमात्रश्रवणात् तस्य गुणभावाश्रवणात् संख्याविवक्षाया अभावात् यथाकामी प्रयोगे स्यात् इति ।

**वि**— ' दर्शे कर्त्रैक्यनियमो नास्त्युतास्ति, न कामिनि । उद्देश्ये ग्रहवत् संख्या यतो नैव विवक्षिता ॥, आख्यातोपात्तसंख्याऽत्र विधेयस्य विशेषणम् । विव-क्षिताऽतः सेत्यत्र कर्त्रैक्यं विनियम्यते ॥ '

**भाट्ट**— ' स्वर्गकामो यजेत ' इत्याद्येकवचनश्रवणे **मूले** तावत् एकत्वमविवक्षितं स्वर्गकामपदस्य स्वर्गमात्र-परत्वात् । अधिकारिपरत्वेऽपि वा तस्य उद्देश्यत्वेन तद्वि-शेषणस्य अविवक्षितत्वात् । अतश्च तत्सामानाधिकरण्यात् आख्यातेऽपि तत् अविवक्षितम् । किंच आख्यातस्य प्राप्तिमात्रमर्थः । ततश्च यागेन स्वर्गं पुरुषः प्राप्नुयात् इत्यर्थः । तेन तत्रापि तस्य उद्देश्यत्वात् विशेषणस्य अवि-वक्षा । अस्तु वा करोतिना विवरणात्, लिङः प्रवर्तना-ऽभिधायित्वाच्च, आख्यातस्य प्रवृत्तिरेवार्थः । तथापि फलोद्देश्य-( श्यि- )कायाः तस्याः लोकत एव प्राप्तत्वात् तत्र

यागमात्रविधानेन तस्या अनुवाद्यत्वात् तद्विशेषणस्य तत्कर्तृविशेषणस्य एकत्वस्य अविवक्षा इति एको द्वौ बहवो (वा) कर्तारः इति पूर्वः पक्षः कृतः । **तत्** फलोद्देश्यकस्य विजातीयस्य पुरुषप्रयत्नस्य अप्राप्तत्वेन विधेयत्वेन तत्रतत्र स्थापितत्वात् तद्विशेषणस्य कर्त्रैकत्वस्य विवक्षोपपत्तेः, स्वर्गकामपदे तदविवक्षायामपि तत्सामानाधिकरण्ये बाधकाभावात् उपेक्षितम् ।

अन्यथा पूर्वपक्षो रच्यते । आख्यातोपात्तैकत्वस्य विवक्षायामपि अनेकेषां कर्तृत्वम् । तद्धि कर्तृत्वे अन्वेति न तु तदाश्रये, अन्यथा दंपत्योः व्यासज्यवृत्तिकर्तृत्वानुपपत्तेः । अतश्च तदाश्रयाणां अनेकत्वस्य पत्नीरादाय आवश्यकत्वे पुरुषानादाय तत्करणे बाधकाभावात् अनेकेषामपि कर्तृत्वम् । **इति प्राप्ते**, असति विशेषग्राहकप्रमाणे तदाश्रयस्यापि प्रथमातिक्रमे कारणाभावात् एकस्यैव प्रतीतिः आनुभविकी । अत एव संध्यावन्दनश्राद्धादौ एकस्यैवाधिकारः । तत्र 'धर्मे च' इत्यादिवाक्यस्य प्रमाणान्तरसिद्धपत्न्यधिकारककर्ममात्रविषयत्वे पत्न्या अपि ग्रहणे प्रमाणाभावे पुरुषान्तरस्य अप्रसक्तेः । यत्र तु पत्नीग्राहकप्रमाणसद्भावः, तत्र सत्यपि तासां कर्तृत्वाधिष्ठानत्वे पुरुषस्य एकस्यैव तत्, प्रथमातिक्रमे कारणाभावात्, 'स्वर्गकामो यजेत, यजमानः केशश्मश्रु वपते, मेखलया यजमानं' इत्यादौ विना कारणं सुबुपात्तैकत्वस्य पाक्षिकानुवादत्वानुपपत्तेश्च । अतः पुरुष एक एवाधिकारी ।

**न्यायबिन्दुः**— 'स्वर्गकामो यजेत' इति स्वर्गकामस्य उद्देश्यत्वेन तद्गतैकत्वस्याविवक्षितत्वात् एको द्वौ बहवो वा यजेरन् । न च आख्यातोपात्तसंख्या क्रियाऽऽक्षिप्तकर्तृविशेषणं, फलवदेव फलभावनायाः रागप्राप्तत्वात् । **इति प्राप्ते**, फलेच्छायाः प्राप्तत्वेऽपि भावनाया अप्राप्तत्वात् तदाक्षिप्ते कर्तरि विवक्षितमेवैकत्वम् । नहि प्रवृत्तस्यैव फलं इति लोकतो निर्णीयते । तस्मात् एक एव कर्तेति सिद्धान्तः ।

**मण्डन**—'दर्शादियागे यजमान एकः ।'

**शंकर**—'विवक्षिता कर्तृसंख्या ।'

**अधिकारः विश्वसृजामयने मनुष्याणामेव, संवत्सरशब्दस्य दिवसपरत्वात्** ॥

**सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु** ।६।७।१३।३१ ॥

**भाष्यं**— अस्ति सहस्रसंवत्सरं सत्रं विश्वसृजामयनं ( नाम ), 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजामयनं सहस्रसंवत्सरम्' इति । तत्र संदेहः किं ये सहस्रायुषः तेषामनेन अधिकारः, उत मनुष्याणामिति । यदाऽपि मनुष्याणां, तदाऽपि बहवो विकल्पा वक्ष्यमाणाः, अथवा दिवसेषु संवत्सरशब्दः इति । किं प्राप्तं ? सहस्रायुषां भवितुमर्हति । कुतः ? असंभवान्मनुष्येषु । न मनुष्याणां एतावदायुर्विद्यते । गन्धर्वादयस्तु एतावदायुषः इति भवति स्मृतिः । उपचारोऽन्यार्थदर्शनं च 'प्रजापतिं वै प्रजाः सृजमानं पाप्मा मृत्युरभिजघान, स तपोऽतप्यत सहस्रसंवत्सरान् पाप्मानं विजिहासन्' इति । विस्पष्टं चेदं सहस्रसंवत्सरम् । तस्मान्न मनुष्याणामिति ।

**अपि वा तदधिकारान्मनुष्यधर्मः स्यात्** । ३२ ॥

**भाष्यं**— अपिवेति पक्षव्यावृत्तिः । न गन्धर्वादीनाम् । मनुष्याणामेवाधिकार इति । कुतः ? तदधिकारात् । मनुष्याधिकारं शास्त्रं समधिगतमिति । ते हि शक्नुवन्ति कात्स्र्न्येन यथोदितं विधिमुपसंहर्तुमिति । आह, ननु नैतावदायुषो मनुष्याः । उच्यते, रसायनैः आयुः दीर्घं प्राप्स्यन्तीति ।

**नासामर्थ्यात्** । ३३ ॥

**भाष्यं**— न रसायनानां एतावत् सामर्थ्यं दृष्टं, येन सहस्रसंवत्सरं जीवेयुः । एतानि हि अग्नेर्वर्धकानि, वलीपलितस्य नाशकानि, स्वरवर्णप्रसादकानि, मेधाजननानि । नैतावदायुषो दातॄणि दृश्यन्ते । ननु स्वरवर्णप्रसादादिदर्शनादेव ज्योक्जीवनमपि अनुमास्यते । नेति ब्रूमः । कुतः ? 'शतायुर्वै पुरुषः' इत्यनुवादः, स एवं ज्योक्जीवने नावकल्पते । अत्रोच्यते । शतानि आयुरस्य इति विग्रहीष्यामः । नैवं संख्याशब्दानां समास इष्यते । न च गमकानि भवन्ति । द्विवचनबहुवचनान्तानां असमास इति च अभियुक्तवचनात् ।

**टुप्**— 'सहस्रसंवत्सरं तदायुषामसंभवान्मनुष्येषु'।

शतान्यायुरस्य इति विग्रहीष्यामः, इति ( चोद्ये ) उक्ते ' नैवं संख्याशब्दानां समास इष्यते ' इति ( उत्तरमुक्तं भाष्ये । तस्यार्थः--) यौ द्विवचनबहुवचनान्तौ संख्याशब्दौ, ताभ्यां न समास इष्यते । कया उपपत्त्या ? द्विवचनबहुवचनान्तयोः प्रमाणाभावात् । राजपुरुष इत्युक्ते न राजशब्दात् परं द्विवचनं बहुवचनं वा श्रूयते । ननु एकत्वेऽपि प्रमाणं नास्ति, तेन वा कथं विग्रहः ? उच्यते। एकत्वं जात्यपेक्षं लिङ्गं अर्थप्राप्तव्यक्त्यपेक्षम् । तस्मादेकवचनान्तेन अन्यतमलिङ्गयुक्तेन विग्रहो भवति । चित्रगुः इति चित्रा गावो यस्य इति ( बहुवचनान्तेन ) विग्रहे प्रयोगस्मृतिः प्रमाणम् । भूमादिष्वर्थेषु मतुवादयः इति ( स्मरणात् । मत्वर्थे हि बहुव्रीहिः, भूम्नि च मतुप् स्मर्यते, इति बहुव्रीहिरेव भूमानं गमयति, इति युक्तो बहुवचनेन विग्रहः ) ।

**सबन्धादर्शनात् । ३४ ।।**

**भाष्यं--** नहि एतावदायुषा रसायनानां संबन्धो दृष्टपूर्वः । न च संबन्धादर्शने अनुमानमस्ति । ननु सामान्यतोदृष्टं भविष्यति । दृश्यन्ते तावत् अल्पस्य स्थिरभावस्य कारकाणि । एवमभ्यस्यमानानि वीर्यवत्तमानि स्थिरशरीरतां उत्पादयिष्यन्ति । शतायुः पुरुषः इति सत्यपि वचने अधिकं जीवनं दृश्यते एवेति । **अत्रोच्यते** । नायमेकान्तः । कदा चित् यां च यावतीं च शरीरस्थिरतां उत्पादयेयुः, न द्राघिष्ठकालम् । यथा प्रक्रामन्तोऽभ्यासात् प्रक्रमाणां वृद्धेः यां च यावतीं च मात्रां प्राप्नुवन्ति, न तु अभ्यस्यन्तः पुरुषायुषेणापि, योजनमात्रं प्रक्रमेयुः। एवमिहापि संबन्धाभावात् सहस्रायुष्ट्वं प्राप्नुयुर्न वेति संदिग्धम् । संदिग्धं चेत् सामान्यतोदृष्ट न प्रमाणम् । न च अदृष्टोऽर्थः प्रमाणमन्तरेण शक्योऽभ्युपगन्तुम् । तस्मादसंशयं नैतावदायुषः सन्तीति । पुरुषवचने चोक्तम् ।

**स कुलकल्पः स्यादिति कार्ष्णाजिनिरेकस्मिन्नसंभवात् । ३५ ॥**

**भाष्यं--** कथं तर्हीति ? स मनुष्याधिकारपक्षे कुलकल्पो भविष्यति इत्येवं कार्ष्णाजिनिराचार्यो मन्यते स्म । कुतः ? एकस्मिन् असंभवात् । पुरुषाणामिदमनुशासनम् । न चैतदेकः शक्नोति पारयितुम् । यथा शक्यते तथा वक्तव्यं इति मन्यमाने वदतः शक्नुवन्तः प्रवर्तेरन् । अन्येऽपि तत्कुलीनाः अन्येन आरब्धं समापयेयुः इति ।

**अपिवा कृत्स्नसंयोगादेकस्यैव प्रयोगः स्यात् । ३६ ॥**

**भाष्यं--** शास्त्रफलं हि प्रयोक्तरि इति समधिगतम् । यश्च कार्त्स्न्येन विधिमुपसंहर्तुं समर्थः, स एवाधिक्रियते इति । तस्मान्न कुलकल्पोऽवकल्पते । कथं तर्हि ? संप्रदायनाशेन धर्म इत्यध्यवसीयते । एवं श्रूयते ' स्वाध्यायोऽध्येतव्यः ' इति । एवं तर्हि एतदध्ययनेनैव, वचनप्रामाण्यात् एतत् कर्म कुर्वतां आयुर्वर्धते इति । तच्च न, प्रमाणाभावात् । नहि एतस्मिन्नर्थे वाक्यं अन्यद्वा प्रमाणमस्ति । ननु अर्थापत्तिः, अन्यथा आनर्थक्यं भविष्यतीति । उच्यते । नानर्थक्यम् । अध्ययनादेव हि अदृष्टं भविष्यति । तथाहि सामान्येन अदृष्टं कल्पयितुं लघीयः, न तु कर्मणा आयुर्वर्धते इति विशेषादृष्टकल्पना । अथवा आनर्थक्यमेव अभ्युपगम्येत कामं, न अयुक्ति फलकल्पनम् । अथोच्येत, अर्धतृतीयानि शतानि (२५०) दीक्षिष्यन्ते, चतुर्भिर्वर्षैः समाप्यते इति । एवमपि नियतपरिमाणं हीयते ' चतुर्विंशतिपरमाः सप्तदशावराः सत्रमासीरन् ' इति । वचनस्य तु आनर्थक्यपरिहाराय परिमाणं हापयिष्यते इति चेत्, तदयुक्तम् । अध्ययनात् फलमस्ति तस्मान्नैषा कल्पनेति ।

**विप्रतिषेधात्तु गुण्यन्यतरः स्यादिति लावुकायनः । ३७ ॥**

**भाष्यं--** कथं तर्हि ? एवं, अन्यतरोऽत्र गौणः शब्दः स्यात् । यदि वा असंवत्सरे संवत्सरशब्दः, यदि वा पञ्चपञ्चाशतः इति शब्दो गौण इति । कुत एतत् ? विप्रतिषेधात्, विप्रतिषेधो हि भवति उभयस्मिन् विहिते । कथं ? वाक्यं हि भिद्येत । यदि पञ्चपञ्चाशतः त्रिवृतः, न संवत्सराः; अथ संवत्सराः त्रिवृतः, न पञ्चपञ्चाशतः । तस्मात् विरोधात् अन्यतरत् वचनं गौणं इति लावुकायन आचार्यो मन्यते स्म । आचार्यग्रहणं पूजार्थं नात्मीयमतप्रतिषेधार्थम् ।

**संवत्सरो विचालित्वात् । ३८ ॥**

**भाष्यं--** एतदुक्तं अन्यतरन् वचनं गौणमिति, तदवधारयितव्यम् । तदुच्यते संवत्सरवचनं गौणमिति । कुतः ? विचालित्वात् । विचाली हि संवत्सरशब्दः । सावनोऽपि गणितदिवसकः, शीतोष्णवर्षालक्षणोऽपि, चान्द्रमसोऽपि । स एवंलक्षणकः अनुवादः शक्यते कल्पयितुम् । पञ्चपञ्चाशतः इत्ययं तु व्यक्तपरिमाणस्य अर्थस्य वाचकः. एकेनापि ऊने न भवति ।

**मासाः प्रकृतिः स्यादधिकारात् । ३९ ॥**

**भाष्यं—** गवामयने मासाः प्रकृताः । मासेषु च संवत्सरशब्दः उक्तः 'यो मासः स संवत्सरः' इति । तस्मात् पञ्चपञ्चाशतो मासा इति (८३ संव० ४ मासाश्च) ननु एतस्मिन् पक्षे सहस्रसंवत्सरशब्दो नावकल्पते । उच्यते । नामधेयमेतत् सहस्रसंवत्सरशब्द इति, न गुणविधिः । नामधेयं च न विधीयते । अविधीयमानं च येन केन चित् गुणेन अवकल्पिष्यते । नैषोऽपि पक्षो युज्यते । अत्रापि हि स एव दोषः । न तावत् जीवनमस्ति, यावता एतदवकल्प्येत दाराग्निकालसोमपूर्वत्वापेक्षयेति । तेन एतस्मिंश्च क्रियमाणे अपरिसमाप्ते एव अस्यायुः पर्युपयुक्तं स्यात्, तथा च अध्ययनादेव अदृष्टं कल्प्येत । एवं तर्हि द्वादशाहः प्रकृतिः, इति पञ्चपञ्चाशतो द्वादशाहा भविष्यन्ति इति । तथा च दृश्यते 'द्वादश वै रात्रयः संवत्सरस्य प्रतिमाः ( मा ? )', इति । तत्र स दोषो न भविष्यति । नैवम् । तत्र संवत्सरशब्दस्य साक्षात् प्रतिमाशब्देन संयोगात् । अपिच 'पञ्चपञ्चाशतस्त्रिवृतः' इत्युक्तम् । त्रिवृच्छब्दश्च द्वादशाहे दिवसे दृष्टः, न द्वादशरात्रे । तस्मान्नैवम् ।

**अहानि वाऽभिसंख्यत्वात् । ४० ॥**

**भाष्यं--** वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति पञ्चपञ्चाशतो द्वादशरात्रा इति । अहान्येव त्रिवृच्छब्देन आख्यायन्ते । तस्मात् अहःसु संवत्सरशब्द इति । अथवा, वाशब्दः पक्षान्तरं व्यावर्तयति । न पञ्चपञ्चाशतो मासाः, किं तर्हि दिवसाः । द्वादशाहे त्रिवृदहः प्रकृतम् । तत्र संवत्सरशब्दो दृश्यते । 'आदित्यो वा सर्व ऋतवः, स यदैवोदेति अथ वसन्तो, यदा संगवोऽथ ग्रीष्मो, यदा मध्यंदिनोऽथ वर्षाः, यदाऽपराह्णोऽथ शरद्, यदाऽस्तमेति अथ हेमन्तशिशिरौ' इति सर्वानृतून् अहनि संपादयति । सर्वे च ऋतवः संवत्सरः । तस्मात् अहः संवत्सरशब्देन उच्यते । अपि च पञ्चपञ्चाशतस्त्रिवृतः इति त्रिवृतां पञ्चपञ्चाशत्त्वम् । न च द्वादशरात्रस्त्रिवृत् । एकं हि द्वादशाहे त्रिवृदहः । न तत्र त्रिवृत्संख्याया द्वादशरात्रेण मुख्यया वृत्त्या सामानाधिकरण्यम् । त्रिवृदहः संबन्धलक्षणया स्यात् । अभिसंख्यं त्रिवृदहः । तेन श्रुत्यैव सामानाधिकरण्यम् । श्रुतिश्च लक्षणाया ज्यायसी । तस्मात् पञ्चपञ्चाशदहानि संवत्सरः स्यादिति । ( अस्यैव सूत्रस्य अन्यथाव्याख्यानरूपो भाष्यग्रन्थः लिखितपुस्तकेषूपलब्धः इति भा-टिप्पणी । स च एवम्- ) वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति द्वादशाहे संवत्सरशब्द इति । किं तर्हि ? अहःसु । कुतः ? दर्शनात् । 'अहरिव संवत्सरः' इति ब्राह्मणम् । ननु द्वादशाहे संवत्सरशब्दः । नैव हि तत्र संवत्सरशब्दः । साक्षात् प्रतिमाशब्देन संयोगात् । अहानि पञ्चपञ्चाशतस्त्रिवृतः इति त्रिवृच्छब्देन आख्यायन्ते, न संवत्सरः । तस्मात् अहःसु संवत्सरशब्द इति ( इति ) ।

**शा —** 'त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते । नाहःसंघस्ततोऽहःसु गौणी संवत्सराभिधा ॥'

**सोम—** पूर्वत्र वृष्णिगोत्राणामेव इति नियमाभावेऽपि इह गन्धर्वाद्यधिकारनियमोऽस्ति इति प्रत्यवस्थानात् **संगतिः । सूत्रार्थस्तु–** सहस्रसंवत्सरं सत्रं मनुष्येष्वसंभवात् सहस्रायुषां गन्धर्वादीनां स्यादिति ।

**वि—** 'सहस्रवत्सरं सत्रं गन्धर्वादेर्नृणामुत । रसायनेन सिद्धानां कुलकल्पोऽथवोक्तितः ॥ तदायुर्वाऽथ सार्धद्विशतानामुत मासगा । वत्सरोक्तिरुत द्वादशरात्रेषु दिनेषु वा ॥, आद्यो दीर्घायुषः सत्त्वान्नृणामेवाग्निसंभवे । द्वितीयोऽस्तु रसस्यायुर्हेतुत्वे तृतीयकः ॥ कृत्स्नकर्तुः फलित्वेऽस्तु तुर्योऽर्थासंभवे सति । पञ्चमोऽस्तु चतुर्विंशत्युत्तमाः सत्रिणो यदि ॥ षष्ठोऽस्तु यो मास एव संवत्सर इतीरणात् । सहस्रमासा नाधानादूर्ध्वं चेदस्तु सप्तमः ॥ वत्सरप्रतिमा द्वादश रात्रय इति

श्रुतेः। न रात्रिष्वब्दशब्दोऽत्र प्रतिमाया विरोधतः॥ स्वारस्यात् त्रिवृदाद्युक्तेरह्नः पक्ष इष्यते। त्रिवृदादिपदैः स्तोमविशिष्टमहरुच्यते॥ नाहःसंघस्ततोऽहःसु गौणी संवत्सराभिधा। तस्माद्विश्वसृजां सत्रं सहस्रदिनमिष्यते॥'

**भाट्ट**— 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजामयनं सहस्रसंवत्सरं' इति श्रुतम्। तत्र पञ्चाशच्छब्दः संख्यापर एव। त्रिवृत्-संवत्सरशब्दौ तु लक्षणया त्रिवृत्स्तोमकसंवत्सरसाध्यक्रतु-वृत्तिपरौ। पञ्चाशच्छब्दविशेषणं पञ्चशब्दोऽपि। तेन तादृशक्रतुवर्तिनी पञ्चत्वसंख्याऽवच्छिन्ना पञ्चाशसंख्या (५×५०) इति पार्ष्ठिकान्वयवेलायां फलितोऽर्थः। तदिदं त्रिवृदादिस्तोमकत्वं यद्यपि साक्षात्संबन्धेन अहन्येव, तथापि तादृशाहर्घटितत्वात् संवत्सरेऽपि तत् संभवति इति न कोऽपि दोषः। तत्र संवत्सरशब्दो मुख्यया वृत्त्या संवत्सरमेवाभिधत्ते। तेन मनुष्याणां सहस्रायुष्ट्वाभावात् तिर्यगधिकरणे (६।१।२) निराकृतोऽपि श्रुतिबलात् गन्धर्वादीनामेवाधिकारः। तेषां तु अग्न्याद्युपसंहारासामर्थ्यात् मनुष्याणामेव वा रसायनलब्धसहस्रायुषां सः। रसायनादेः एतावदायुःसंपादनसामर्थ्ये प्रमाणाभावात् 'शतायुर्वै पुरुषः' इति श्रुतेश्च एकेन आरब्धस्य पुत्रादिपारंपर्येण समापनं इति कुलकल्पो वा। 'शास्त्रफलं प्रयोक्तरि' (३।७।८) इति न्यायस्य विना वचनं अपवादे प्रमाणाभावात्, समस्तकर्मानुष्ठानाभावे विकलानुष्ठायिनां फलानुत्पत्तिप्रसङ्गात्, सत्रारम्भादेव सहस्रायुष्यं जायते इति वा कल्प्यम्। एतादृशकल्पनेऽपि प्रमाणाभावात् पञ्चपञ्चाशतः इति यजमानाभिप्राया संख्या। तेन एकोऽपि त्रिवृत्स्तोमकयागयुक्तः संवत्सरः पञ्चपञ्चाशत्संख्याकैः यजमानैः संबध्यमानः तावत्संख्यः इत्युपचर्यते। अतः चतुःसंवत्सरमिदं सत्रं सार्धशतद्वयैः यजमानैः कार्यं इति वा पक्षान्तरम्। अस्यापि बुद्धौ अत्यन्तमनारोहात्, 'सप्तदशावराः चतुर्विंशतिपरमाः' इति आतिदेशिकपरिमाणबाधापत्तेश्च अनुपपत्तिः। तस्मात् संख्याशब्दं संवत्सरशब्दं वा गौणमाश्रित्यैव मनुष्याधिकारः समर्थनीयः। तत्रापि संख्याशब्दोऽनुपपत्तेः अर्थनिश्चयानर्थक्याच्च न स्वार्थपराः। संवत्सरशब्दस्तु तदर्थवत् गौणत्वादिभेदेन अनेकार्थत्वाच्च अर्थनिश्चयसमर्थं भवति इति गौणम्। तत्र 'यो मासः स संवत्सरः' इति दर्शनात् मासेष्वेव संवत्सरशब्दः इत्येकः पक्षः। तदपि तु अयुक्तः तदवस्थैव। नहि आधानादूर्ध्वं सहस्रमासवर्तनं (८३ वर्षाणि ४ मासाश्च) जीवनं संभवति। अतः 'संवत्सरप्रतिमा वै द्वादश रात्रयः' इति प्रयोगात् द्वादशरात्रिषु इति अपरः पक्षः। प्रतिमाशब्दविरोधस्तु अत्र संवत्सरशब्दः, न तस्य द्वादशरात्रिषु प्रयोगः। तेन त्रिवृदादिशब्दानामसङ्गत्यात् दिवसेषु संवत्सरशब्दः। त्रिवृदादिशब्दैर्हि स्तोत्रमात्रवाचकैरपि तद्विशिष्टं अहरेव लक्षणया प्रकाश्यते। तत्संबन्धु लक्षितलक्षणया लक्ष्यताऽवच्छेदकगौरवाङ्गीकारेण वा। अतः तद्दिवा संवत्सरपदं दिवसपरमेव इति सिद्धान्तः।

इदं च कृतादियुगान्तरेष्वपि मनुष्याणां शतमेव परमायुः इति कृत्वाचिन्तया। यदा तु स्मृतिपुराणेतिहासादौ श्रुतस्य प्रकृष्टतरपुण्ययोगादिफलस्य अनेकलक्षवत्सरपरिमितस्य आयुषोऽपि प्रकृतश्रुत्युपष्टब्धस्य प्रामाणिकत्वं, एतज्ज्ञापकबलेनैव च 'शतायुर्वै पुरुषः' इति श्रुतौ शतानि आयूंषि यस्य इति विग्रहः कलीयुगाभिप्रायत्वं वा आश्रयणीयं, तदा त्रिवृदादिशब्देन अहःसंघमेव त्रिवृत्स्तोमकाहर्घटितत्वसंबन्धेन लक्षयित्वा संवत्सरशब्दो यथाश्रुत एव। सत्रं च गोत्रवादिवत् युगान्तरस्थतावदायुष्यमनुष्यपरं इति ध्येयम्। नहि मीमांसकमते युगादिव्यवस्था अलीका, तत्तद्युगधर्मव्यवस्थापकस्मार्तविधीनां निर्विषयत्वापत्तेः।

**न्यायविन्दुः**— 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः, विश्वसृजामयनं सहस्रसंवत्सरं' इति। अत्र सहस्रायुषां गन्धर्वादीनामधिकारस्य अग्न्याद्यभावेनासंभवात्, मनुष्याणां सहस्रायुष्ट्वस्य रसायनेनापि असंभवात्, कुलकल्पे कस्यापि समग्रानुष्ठानाभावेन फलायोगात्, एतत्सत्रारम्भादेव एतावदायुःकल्पने मानाभावात्, पञ्चपञ्चाशत इति यजमानसंख्या

तेन चतुःसंवत्सरमिदं सत्रं सार्धशतद्वयैः क्रियमाणं सहस्रसंवत्सरं इति। इदमपि 'चतुर्विंशतिपरमाः सत्रमासीरन्' इतिवचनविरुद्धम्। अतः संवत्सरशब्दः एकाहःपरः। मासपरत्वेऽपि आधानादूर्ध्वं तावज्जीवनासंभवात् इति सिद्धान्तः।

**मण्डन**— 'अह्नां सहस्रसंख्या स्यात्।'

**शंकर**— 'सहस्रवत्सरं पुंसाम्।'

* अधिकारः सत्रे प्रत्येकं कृत्स्नेन फलेनार्थिनाम्। प्रयोजनाधिकरणमिदं इति तन्त्ररत्ने। तस्मात् तत्र बिन्दौ द्रष्टव्यम्। ६।२।१।१-२.

**अधिकारः सत्रे ब्राह्मणानामेव ॥**

**सत्राणि सर्ववर्णानामविशेषात्।** ६।६।३।१६ ॥

**भाष्यं**— इह सत्राण्युदाहरणम्। 'य एवं विद्वांसः सत्रमासते' 'य एवं विद्वांसः सत्रमुपयन्ति' इति। तत्र संदेहः किं सत्राणि त्रयाणामपि वर्णानां, उत ब्राह्मणानामेवेति। किं प्राप्तं? सत्राणि सर्ववर्णानां भवेयुरिति। कस्मात् अविशेषात्। नहि कश्चित् विशेषः आश्रीयते, अमीषां वर्णानां सत्राणि भवन्ति, अमीषां नेति। तस्मात् त्रयाणामपि वर्णानां अधिकार इति।

**टुप्**— 'सत्राणि सर्ववर्णानामविशेषात्' (६।६।३।१६), 'न स्वामित्वं हि विधीयते' (२०)। (पूर्वपक्षसिद्धान्तसूत्रे इह पठिते)। 'ये यजमानास्ते ऋत्विजः' इत्येवं यत् आनुपूर्व्यं, तत्र यजमानऋत्विक्शब्दयोः सामानाधिकरण्यानुपपत्त्या एकेन लक्षणार्थेन भवितव्यम्। तत्र मुख्यत्वात् यजमानशब्दः श्रुतिवृत्तः, जघन्यत्वात् ऋत्विक्शब्दो लक्षणाऽर्थः। यच्छब्दतच्छब्दौ (यथाक्रमं) उद्देश्यप्रतिनिर्देशकौ इति (स्थिते) को वाक्यार्थ इति चिन्त्यते। तत्र (सर्ववर्णानां) यजमानानां निर्दिष्टप्रतिनिर्दिष्टानां आर्त्विज्यं विधीयते (संस्कारत्वेन) इति पूर्वः पक्षः। सिद्धान्तस्तु, (सत्यं) सर्वे वर्णा उद्दिष्टप्रतिनिर्दिष्टाः ('सत्रमासीरन्' इति विशेषाश्रवणात्। किंतु इह) यजमानाः आर्त्विज्यस्य कर्तृत्वेन विधीयन्ते। तदिह प्रधानम्। तस्य (च) द्वौ धर्मौ (प्रकृतितः प्राप्तौ) अन्यकर्तृकता ब्राह्मणकर्तृकता च। तेन अन्यकर्तृकता (वचनेन) व्यावर्तते। ब्राह्मणकर्तृकता (तु) स्वधर्मे कर्तॄणां यजमानानां (गुणभूतानां सत्रमासीरन् इति ब्राह्मणमात्रचरितार्थसामान्यवचनप्राप्तेन) धर्मेण त्रैवर्णिकत्वेन न जहाति। तदुक्तं 'अङ्गगुणविरोधे च तादर्थ्यात्' (१२।२।९।२५) इति।

**लिङ्गदर्शनाच्च।** १७॥

**भाष्यं**— इतश्च पश्यामः त्रयाणां सत्राणीति। कुतः? लिङ्गदर्शनात्। किं लिङ्गं भवति? एवमाह, 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति द्वादशाहे भवति वचनं ब्रह्मसामविधानपरम्। तस्मिन् राजन्यवैश्यानां दर्शनं भवति। तस्मादपि सर्ववर्णानामधिकार इति।

**ब्राह्मणानां वेतरयोरार्त्विज्याभावात्।** १८॥

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति। न चैतदस्ति, त्रयाणामपि वर्णानां अधिकार इति। किं तर्हि? ब्राह्मणानामेव स्यात्। कुतः? इतरयोः आर्त्विज्याभावात्। इतरयोर्हि वर्णयोः राजन्यवैश्ययोः आर्त्विज्यं प्रतिषिद्धम्। स्वयमेव आर्त्विज्येन विना विगुणत्वम्। तस्मात् ब्राह्मणानामेव स्यात्।

**वचनादिति चेत्।** १९॥

**भाष्यं**— इति चेत् पश्यसि राजन्यवैश्ययोर्वैगुण्यमापद्यते इति। वचनात् यजमानाः सन्तः ऋत्विजो भविष्यन्ति 'ये यजमानास्त ऋत्विजः' इति। के पुनर्यजमानाः? ये सत्रफलं कामयमानाः सत्रकर्मणि प्रवृत्ताः, ते राजन्या अपि, वैश्या अपि। तेषामृत्विक्कर्म विधीयते। तत्र एतत् स्यात्, येषामार्त्विज्यं शक्यं कर्तुं तेषामिदं आर्त्विज्यविधानमिति। नैतदेवम्। यथैव ब्राह्मणानां यजमानानामप्राप्तं वचनप्रामाण्यात् भवति, एवमब्राह्मणानामपि यजमानानां वचनप्रामाण्यादेव भवितुमर्हति इति। तस्मात् आर्त्विज्यसंस्कृता राजन्यवैश्या अपि सत्रमासीरन् इति।

**न, स्वामित्वं हि विधीयते।** २०॥

**भाष्यं**— नैतदेवम्। स्वामित्वमनेन वचनेन विधीयते, एवंकामाः सत्रमासीरन् इति विधीयते, नार्त्विज्यम्। अथ 'ये यजमानास्त ऋत्विजः' इत्यनेन वचनेन विहितमार्त्विज्यं इति। उच्यते। तदपि न।

कथं ? नात्रैषा वचनव्यक्तिः, ये यजमाना इति उद्देश्यपदं ऋत्विजः इति विधेयपदम् । तथाहि सति आर्त्विज्यमङ्गं यजमानसंस्कारकं विधीयेत, न यजमानाः आर्त्विज्यस्य अङ्गम् । तत्र प्राकृतार्थता नैषामार्त्विज्यानां स्यात् । संस्कारश्च अदृष्टः कल्प्येत । स च यजमानविषय इति पुनरदृष्टम् । तस्मान्न यजमानानां सतामार्त्विज्याः पदार्था विधीयन्ते । किं तर्हि ? आर्त्विजानां पदार्थानां अनन्यकर्तृकता । एषा च वचनव्यक्तिः, ऋत्विज इति उद्देश्यपदं, ते इति विधीयते, ये यजमानाः त एव ऋत्विजो भवन्ति नान्ये, इति आर्त्विजेषु पदार्थेषु यजमानाः कर्तारो विधीयन्ते । प्रत्याम्नानात् अन्ये निवर्तन्ते । एवं सति प्राकृतप्रयोजना एव आर्त्विजाः पदार्थाः, न यजमानसंस्कारः अदृष्टो विधीयते इति । यजमानकर्तृकल्पनायामपि एषामदृष्टं इति यदि कल्प्येत, तत्र ब्रूमः । इतरस्मिन्नपि पक्षे यजमानविषयः सोऽदृष्टः संस्कारः इत्यवश्यं कल्पनीयम् । यश्चोभयोः पक्षयोर्दोषो न तमेकश्चोद्यो भवति ।

**गार्हपते वा स्यातामविप्रतिषेधात् । २१ ॥**

**भाष्यं**— गार्हपते पदार्थे राजन्यवैश्यौ भविष्यतः । न च तत्र आर्त्विजेन प्रयोजनम् । तस्मादविप्रतिषेधस्तेषामिति ।

**न वा, कल्पविरोधात् । २२ ॥**

**भाष्यं**— न चैतदस्ति गार्हपते वा पदार्थे राजन्यवैश्यौ इति । कल्पविरोधो हि स्यात् । यजमानचमसः सोममयः एकेषां, फलचमसमय एकेषाम् । तथा ब्रह्मसाम बार्हद्गिरं ब्राह्मणानां, पार्थुरश्मं राजन्यानां, रायोवाजीयं वैश्यानाम् । तस्मात् गार्हपते निवेशः इत्येतदपि नास्ति ।

**स्वामित्वादितरेषामहीने लिङ्गदर्शनम् । २३ ॥**

**भाष्यं**— अथ यदुक्तं लिङ्गदर्शनादिति, तत् परिहर्तव्यम् । अत्रोच्यते । अहीनमेव सत्रशब्देन वक्ष्यति । यतः स्वामित्वमृत्विजां विधीयते । अत ऋत्विजां स्वामित्वात् राजन्यवैश्यानां सत्रं नावकल्पते इति । तस्मात् अहीने लिङ्गदर्शनम् ।

**शा**— 'सत्राणि सर्ववर्णानां नैवेयुर्वेदिनः । ऋद्धिकामादिवाक्येषु विशेषः श्रूयते नहि ॥ यागेषु त्रिषु वर्णेषु यच्छब्देनोपलक्षणम् । संस्कारार्थत्वं तेषामार्त्विज्यमुपयुज्यते ॥' एवं प्राप्ते ब्रूमः । 'नार्त्विज्यं यजमानानां संस्कारत्वेन चोद्यते । तथात्वे तु कृतं कार्यमार्त्विज्यस्य प्रसज्यते ॥ तेन यच्छब्दयोगेऽपि नोद्देशः स्वामिनामिह । आर्त्विज्यमेव तूद्दिश्य यजमानविधिर्भवेत् ॥' तस्मात् ब्राह्मणा एव सत्रमासीरन् ।

**सोम**— पूर्ववदिहापि राज्ञोऽविकारः इति प्रत्यवस्थानात् **संगतिः** । यजमानऋत्विक्शब्दयोः भिन्नार्थयोः श्रुत्या सामानाधिकरण्याभावात् एकस्य लक्षकत्वे, जघन्यस्य ऋत्विक्शब्दस्य तत्कार्यपदार्थलक्षणामाश्रित्य तेषु यजमानाः कर्तृत्वेन विधीयन्ते । **न च** ऋत्विक्शब्द ऋतुयजननिमित्तः इति मुख्यमेव सामानाधिकरण्यं संभवतीति **वाच्यम्** । वस्तुतः ऋत्विक्-शब्दस्य ऋतुयजननिमित्तकत्वेऽपि अस्मिन् वाक्ये तत्परत्वे यजमानानां तत्सत्त्वेन विध्यनर्हतया वाक्यानर्थक्यापत्तेः । ये परार्थं ऋतौ यजन्ति तत्परतया मुख्यसामानाधिकरण्याभावात् । एवं च ऋतुयजननिमित्तेन ऋत्विजामेव सतां यजमानानां ऋत्विग्विशेषकार्येषु परार्थेषु विधिः ।

**वि**— 'सत्रं वर्णत्रयस्योत विप्रस्यैवा,–विशेषतः । त्रयस्य, मैवं स्वामित्वं विप्राणामृत्विजां सताम् ॥'

**भाट्ट**— सत्रेऽपि 'ये यजमानास्त ऋत्विजः' इति श्रुतम् । तत्र न तावत् यजमानानां ऋतुयजनकर्तृत्वरूपमृत्विक्त्वं आदाय द्वयोः प्रथमान्तयोः सामानाधिकरण्येनान्वयः । 'स्वामिसतदशाः' इतिन्यायेन (३।७।१८।३८) प्राप्ततया वाक्यवैयर्थ्यापत्तेः । अतोऽत्र ऋत्विक्पदं परिक्रयक्रीतर्त्विक्परम् । तेनापि च न यजमानपदस्य यागकर्त्रभिन्नाः इत्येवं सामानाधिकरण्येनान्वयः, स्वात्मनि परिक्रयासंभवेन बाधात् । न च ऋत्विक्पदेन प्रकृतौ वस्तुतो ये परिक्रयक्रीताः तत्कार्यकर्तॄन् अभिधाय तेन सह यजमानपदस्य अभेदान्वयः, सुबन्तयोः परस्परान्वयस्य अव्युत्पन्नत्वात्, विशिष्टकर्तृलक्षणापेक्षया तत्कार्यलक्षणाया एव ऋत्विक्पदे न्याय्यत्वाच्च । अतो 'यो होता सोऽध्वर्युः' इतिवत् जघन्ये

ऋत्विक्पदे एव तत्कार्यं लक्षयित्वा यजमानसंस्कारार्थत्वेन तत् विधीयते, यच्छब्दप्राथम्याभ्यां यजमानस्यैव उद्देश्यत्वप्रतीतेः। अत एव फलमुखत्वात् अप्राकृतकार्यकल्पनाऽपि न दोषः। एवं ऋद्धिकामत्वाविशेषात् त्रयाणामपि वर्णानां आर्त्विज्यसंस्कार्यत्वावगतेः त्रयाणामपि सत्रे अधिकारः। अत एव द्वादशाहे 'बार्हद्गिरं ब्राह्मणस्य' इत्यादिलिङ्गमपि उपपद्यते। एवं च यजमानसंस्कारकैरेव ऋत्विक्पदार्थैः प्राकृतक्रतूपकारस्यापि सिद्धेः न तदर्थं परिक्रियादिभिः ऋत्विगन्तरसंपादनं इत्यपि द्रष्टव्यम्। **इति प्राप्ते,** ज्ञापकसत्त्वे व्यवहितान्वयकल्पनया शाब्दबोधस्य लोके दृष्टत्वात् इह अपूर्वविधित्वादृष्टरूपाप्राकृतकार्यकल्पनादिदोषभिया यच्छब्दस्य व्यवहितान्वयेन स्वरूपप्राप्तिमात्रसूचनेन वा ऋत्विक्कार्यस्यैव उद्देश्यत्वमङ्गीकृत्य यजमानाः कर्तारो विधीयन्ते। न च एतावता अनृत्विक्कर्तृकत्वं शङ्क्यं, यजमानानामपि ऋत्विक्त्वस्य श्रावितत्वात्। वरणादिविध्युन्नीतं यजमानभिन्नत्वं परं अतिदेशप्राप्तं उपदेशेन बाध्यते। न तु एतावता अब्राह्मणकर्तृकत्वमपि, इति तदनुग्रहाय ब्राह्मणानामेवाधिकारः। बार्हद्गिरादिदर्शनं तु अहीनाभिप्रायेण।

**न्यायबिन्दुः—** सत्रे त्रयाणामप्यधिकारः 'ये यजमानास्त ऋत्विजः' इति यजमाने संस्कारत्वेन आर्त्विज्यविधिः, गुणभूतकर्तृपरिच्छेदकतया ब्राह्मण्यं आर्त्विज्याङ्गम्। अत्र तु कर्तृप्राधान्यात् द्वारलोपात् बाध्यते। **इति प्राप्ते,** संस्कारत्वेन आर्त्विज्यविधौ अप्राकृतकार्यत्वापत्तेः तदुद्देशेनैव यजमानविधिः। तेन अन्यकर्तृकत्वबाधः। ब्राह्मणकर्तृकस्य (कत्वस्य) तु न बाधकमस्ति। अतो ब्राह्मणानामेव सत्रं इति सिद्धान्तः।

**मण्डन—** 'अब्राह्मणस्याधिकृतिर्न सत्रे।'

**शंकर—** 'सत्रेऽधिकारी विप्रः स्यात्।'

**अधिकारः सत्रे वैश्वामित्रतत्समानकल्पानामेव॥**

**वासिष्ठानां वा, ब्रह्मत्वनियमात्। ६।६।४।२४॥**

**भाष्यं—** एतत् समधिगतं ब्राह्मणानामेव सत्रं, न राजन्यवैश्यानामिति। अथेदानीमिदं संदिग्धं किं सर्वेषां ब्राह्मणानां, उत वासिष्ठानां सः, उत भृगुशुनकवसिष्ठान् वर्जयित्वा अन्येषामिति। किं प्राप्तं? सर्वेषामविशेषात्। नहि कश्चित् विशेष आश्रीयते अमीषां ब्राह्मणानां सत्रं, अमीषां नेति। तस्मात् सर्वेषामिति। **एवं प्राप्ते ब्रूमः।** वासिष्ठानां ब्रह्मत्वस्य नियमात् वासिष्ठानां सत्रं स्यात्, नान्येषाम्। कुतः? ब्रह्मत्वस्य नियमो भवति 'वासिष्ठो ब्रह्मा भवति' इति। अतो वासिष्ठानां तत्समानकल्पानां च सत्रं स्यादिति।

**सर्वेषां वा, प्रतिप्रसवात्। २५॥**

**भाष्यं—** सर्वेषां वा सत्रं स्यात् अविशेषात्। ननु वासिष्ठो ब्रह्मा इत्युच्यते। नेत्याह। पुनः प्रतिप्रसूयते 'य एव कश्चन स्तोमभागमधीयीत स एव ब्रह्मा भवेत्' इति। वासिष्ठोपदेश इदानीं किमर्थं इति चेत्, स्तोमभागप्रशंसार्थः। स्तोमभागान् अधीयानः अवासिष्ठोऽपि वासिष्ठकार्ये समर्थः कर्तुमिति।

**वैश्वामित्रस्य हौत्रनियमाद्, भृगुशुनकवसिष्ठानामनधिकारः। २६॥**

**भाष्यं—** भृग्वादीनां अनधिकारः स्यात्। कुतः? वैश्वामित्रस्य हौत्रं नियम्यते 'विश्वामित्रो होता भवति' इति। तस्मात् वैश्वामित्राणां, तैश्च समानकल्पानां अधिकार इति।

**सोम—** पूर्वत्रैव विशेषविचारात् **संगतिः।**

**वि—** 'विप्रस्य सत्रं सर्वस्य वासिष्ठस्यैव वा भवेत्। विश्वामित्रस्यैव वा, ऽऽद्य ऋद्धीच्छुत्वेन मध्यमः॥ ब्रह्मत्वाय ह्यवासिष्ठे, ब्रह्मता स्तोमभागतः। वैश्वामित्रसमानानामेव होतृत्वसिद्धये॥' 'रश्मिरसि क्षयाय त्वा' इत्यादयो मन्त्राः स्तोमभागा नाम। तानधीयानः स्वयमवासिष्ठोऽपि वासिष्ठ एव।

**भाट्ट—** प्रकृतौ 'वासिष्ठो ब्रह्मा, वैश्वामित्रो होता' इति ब्रह्मत्वाद्युद्देशेन वासिष्ठादिविधानात् तयोश्च विरुद्धकल्पत्वात् सत्रे विकल्पः। **इति प्राप्ते** 'य एव कश्चित् स्तोमभागानधीते स एव वासिष्ठः' इत्यर्थवादेन श्येनपदस्येव विधिस्थवासिष्ठपदस्य लक्षणया स्तोमभागाध्येतृमात्रपरत्वावसायात् शक्यार्थविध्यभावेन वैश्वामित्रसमानकल्पानामेव अधिकारः। भाष्ये तु 'य एव कश्चित् स्तोमभागानधीते स एव ब्रह्मा भवेत्' इति

वाक्यमुदाहृत्य तस्य विधित्वाङ्गीकारेण वासिष्ठो ब्रह्मा इत्यस्य तदर्थवादत्वात् शक्यार्थविध्यभावः इत्युक्तम् ।

**न्यायबिन्दुः**— तत्रापि ( ब्राह्मणेष्वपि ) ' वासिष्ठो ब्रह्मा ' इति प्रकृतौ वचनात् ब्रह्मत्वस्यावैगुण्याय वासिष्ठे सति तत्कल्पानामधिकारः । **इति प्राप्ते,** ' य एव स्तोमभागानधीयीत स एव वासिष्ठः ' इति वचनात् नावश्यं वासिष्ठः, किंतु ' वैश्वामित्रो होता ' इति वचनात् वैश्वामित्रतुल्यकल्पानामधिकार इति सिद्धान्तः ।

**मण्डन**— ' वासिष्ठशब्दो भवतीह गौणः । '

**शंकर**— ' वैश्वामित्रश्च तत्समः । ' अधिकारी सत्रे ।

**अधिकारः सत्रे संपादितसाधारणपात्राणामेव यजमानानाम् ॥**

**जुह्वादीनामप्रयुक्तत्वात् संदेहे यथाकामी प्रतीयेत । ६।६।६।३३ ॥**

**भाष्यं**— एवं लिङ्गपरिहारावशिष्टे अधिकरणे अन्यत् चिन्त्यते किं जुह्वादीनि पात्राणि कस्य चिदेव यजमानस्योपादाय प्रयोगः कर्तव्यः उत अन्यानि साधारणानि कर्तव्यानि इति । अस्मिन् संशये उच्यते । किं प्राप्तं ? जुह्वादिषु यथाकामी भवेत् । यस्य कस्य चिदेव यजमानस्य उपादाय प्रयोगः कर्तव्यः । कुतः ? नहि स्वं पात्रं यजमानः प्रयुङ्क्ते स्वेन पात्रेण प्रयोगः कर्तव्य इति । तस्मात् परकीयपात्रैः अन्ये यजेरन्निति ।

**अपिवाऽन्यानि पात्राणि साधारणानि कुर्वीरन्, विप्रतिषेधाच्छास्त्रकृतत्वात् । ३४ ॥**

**भाष्यं**— अपिवेति पक्षव्यावृत्तिः । नैतदेवम् । अन्यानि पात्राणि साधारणानि कर्तव्यानि । कस्मात् ? विप्रतिषेधात् । विप्रतिषेधो हि भवति । कदाचित् तानि पात्राणि उपात्तानि भवेयुः, अथ मरणं कस्य चित् यजमानस्य आपद्येत, तत्र विप्रतिषेधः स्यात् ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च ' इति । यदि तं तैर्दहेयुः, इतरेषां यज्ञो विरुध्येत । अथ तैर्यज्ञं समापयेयुः, इतरस्य शरीरसंस्कारः परिलुप्येत । अन्येषु पुनः साधारणेषु उपादीयमानेषु न किं चिदपि विरुध्येत । तस्मात् तथा कार्यमिति ।

**सोम**— ' स्वार्थेन च प्रयुक्तत्वात् ' इत्यनेन सूत्रेण अङ्गानामनारभ्याधीतत्वेनेदम् [illegible] उक्ते तद्व्यतिरेकेण पूर्वपक्षमुक्त्वा इदमधिकरणमनन्तरं प्रवर्तितम् । **सूत्रार्थस्तु**— जुह्वादीनां स्वार्थेन प्रयुक्तत्वाभावात् तद्विषये यथाकामं प्रतीयेतेति ।

**वि**— ' जुह्वादयो यस्य कस्य कार्याः साधारणा उत ।, अविरोधादग्रिमो, ऽन्यो मृतदाहे विरोधतः ॥ '

**भाट्ट**— जुह्वादिपात्रेषु तु आत्मनेपदाश्रवणात् औदुम्बरीसंमानवत् गौणत्वाच्च यस्य कस्य चित् यजमानस्य पात्रैरपि सत्रे अधिकारः । **इति प्राप्ते,** यस्यैव पात्रैरुपक्रान्तः प्रयोगः तस्यैव यजमानस्य सत्रप्रयोगमध्ये कदाचिन्मरणे यदि तत्पात्रैः तस्य दाहः, तदा सत्रवैगुण्यं, यदि न दाहः, तदा 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च, दक्षिणे हस्ते जुहूमासादयति ' इत्यादिना विहितस्य पात्रप्रतिपत्तिपूर्वकस्य पात्रगुणकदाहस्य लोपप्रसङ्गः । अतः साधारणानि अन्यानि पात्राणि उत्पाद्य सत्रे अधिकारः ।

**न्यायबिन्दुः**— यस्य कस्य चित् जुह्वादिपात्रैः सत्रं कार्यमविरोधात् । **इति प्राप्ते,** ' आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च, दक्षिणहस्ते जुहूमासादयति ' इत्यादिवचनैः पात्राणां दाहे गुणत्वस्य सादनप्रतिपाद्यत्वस्य च विधानात् पात्रस्वामिनः प्रयोगमध्ये मरणे तल्लोपापत्तेः, अन्यथा च प्रयोगवैगुण्यात् सर्वसाधारणानि पात्राणि कार्याणि इति सिद्धान्तः ।

**मण्डन**— ' जुह्वादि पात्रं पृथगत्र कार्यम् । '

**शंकर**— ' पात्राण्यन्यानि तत्र च । ' तत्र सत्रे ।

**अधिकारः सत्रे समानकल्पानामेव । (कल्पशब्दोऽत्र प्रयोगविषयः, न कल्पसूत्रविषयकः ) ॥**

**संनिपातेऽवैगुण्यात् प्रकृतिवत् तुल्यकल्पा यजेरन् । ६।६।१।१ ॥**

**भाष्यं**— सत्राण्युदाहरणम् । ' सप्तदशावराः सत्रमासीरन् ' ' य एवं विद्वांसः सत्रमासते ' ' य एवं विद्वांसः सत्रमुपयन्ति ' इति । तत्र संदेहः किं समानकल्पानां भिन्नकल्पानां च सहाधिकारः, उत समानकल्पानामेवेति । के पुनः समानकल्पाः ? 'राजन्य–अत्रि–वध्र्यश्व–वसिष्ठ–वैश्य–शुनकानां कण्व–कश्यप–संकृतीनां नाराशंसो द्वितीयः

प्रयाजः, तनूनपादितरेषाम् ।' एवं के चित् नाराशंसकल्पाः, के चित् तनूनपात्कल्पाः । तत्र किं तावत् प्राप्तं ? संनिपाते बहूनां यजमानानां ये एव तुल्याः, ते एव सह सत्रमासीरन् । कुतः ? अवैगुण्यात् । इतरथा यस्य कल्पो नोपसंह्रियेत तस्य वैगुण्यं स्यात् । यथा प्रकृतावेव विना साद्गुण्येन फलाभावः एवमिहापि इति ।

टुप्— सिद्धान्तोनक्रममिदमधिकरणम् । ( इयं पङ्क्तिः मुद्रिते लिखिते चास्ति, परंतु तन्त्ररत्ने नास्ति )। भिन्नकल्पानामधिकारः ( अस्ति ) इति पूर्वः पक्षः । ( कुतः ? ) एवंकामाः सत्रमासीरन् इति सामान्यवचनप्राप्तेः । वसिष्ठानां कर्तॄणां नाराशंसो द्वितीयः प्रयाजः । इति पूर्वपक्षाभिप्रायः । तत्र (वसिष्ठानामितरेषां च कर्तृत्व-) संनिपाते ( सति ) अतत्कर्तृत्वात् ( अवसिष्ठकर्तृत्वात् , क्रतौ ) निमित्तविघातात् अनङ्गं नाराशंसः । ( पक्षान्तरमाह– ) तत्कर्तृत्वाद्वा ( नाराशंसकर्तृत्वात् ) वासिष्ठानां, तैरपि क्रियमाणेन नाराशंसेन इतरेषां कल्पसिद्धिः ( कार्यसिद्धिः ) इति पूर्वः पक्षः । ( वसिष्ठा हि कर्तारो नाराशंसं साङ्गं, इतरे तु तनूनपातम् । उभयकर्तृसंनिपाते तु द्वयोरपि कार्त्स्न्येन कर्तृत्वात् नाराशंसोऽपि तावत् वासिष्ठेन क्रियते एव इति नास्ति वैगुण्यम् । एवं तनूनपादपि अविगुण एव इति येन केनापि सगुणः क्रतुः सर्वेषां फलसाधनमिति ) । सिद्धान्तस्तु —वसिष्ठानामिति ( षष्ठी ) स्वामिलक्षणार्था, ( अतः ) येषां स्वं नाराशंसः, तेषामेव कर्मसिद्धिं करोति, नेतरेषाम् ।

असत्राण्यपि अनेककर्तृकाणि उदाहरणमेव ( तुल्यन्यायत्वात् । प्रदर्शनार्थं तु भाष्ये सत्रग्रहणम् ) ।

**वचनाद्वा शिरोवत् स्यात् । २ ॥**

**भाष्यं** — वाशब्दात् पक्षो विपरिवर्तते । न चैतदस्ति भिन्नकल्पानामनधिकार इति । तेऽप्यधिक्रियेरन् । कुतः ? अविशेषात् । अविशेषेण सर्वेषां यजमानानां प्राप्तिः । न च भिन्नकल्पानां प्रतिषेधः । ननु वैगुण्यं भिन्नकल्पानाम् । अत्रोच्यते । वचनात् , सामान्यवचनेन भिन्नकल्पा अपि गृहीताः । तत्र शिरोवत् बाधः स्यात् । यथा 'पुरुषशीर्षमुपदधाति' इति वचनसामर्थ्यात् शवशिरसंस्पर्शनं स्मृतिविप्रतिषिद्धमपि क्रियते एवमिहापि । **अथवा आशिरवत्** । यथा ऋतपेये 'घृतव्रतो भवति' इति वचनात् व्रतदुहि निवृत्तायां अन्यामाशिरे गां कल्पयन्ति । एवमेतदपि वचनात् भविष्यति ।

**न वाऽनारभ्यवादत्वात् । ३ ॥**

**भाष्यं**— नैतदस्ति, यदुक्तं भिन्नकल्पानामपि अधिकार इति । समानकल्पा एव अधिक्रियेरन् । कुतः ? अवैगुण्यात् । अथ यदुक्तं वचनात् वैगुण्येनापि सेत्स्यतीति, तन्न, अनारभ्यवादत्वात् । तद्धि वचनात् प्रकल्प्यते, यस्मिन् अकल्प्यमाने वचनमनर्थकं भवति । यदि हि आरभ्य भिन्नकल्पान् एतदुच्येत, ततो वचनमनर्थकं भवति, इति भिन्नकल्पानामपि सत्रमभ्युपगम्येत, न तु आरभ्य भिन्नकल्पान् एतदुच्यते । समानकल्पेषु अर्थवत्ता अस्य वचनस्य भविष्यति । तस्मान्न भिन्नकल्पानामधिकार इति ।

**स्याद्वा, यज्ञार्थत्वादौदुम्बरीवत् । ४ ॥**

**भाष्यं** — स्याद्वा भिन्नकल्पानामधिकारः । कुतः ? यज्ञार्थत्वात् कल्पस्य । वसिष्ठादीनां नाराशंसकल्पो यज्ञस्य साधकः । स च यज्ञः सर्वेषां साधारणः परकल्पेनापि सिद्धः सिद्धो भवति । यथा 'यजमानेन संमितामौदुम्बरीं परिवासयन्ति' इति यस्य कस्य चित् परिमाणेन सिद्धो यज्ञः अन्येषामपि सिद्धो भवति । उच्यते । ननु प्रयाजस्य वाक्येन पुरुषसंबन्धः । स च प्रकरणप्राप्तां यागार्थतां बाधिष्यते इति । नेति ब्रूमः । फलं हि तदा कल्पयितव्यम् । ननु इतरथाऽपि अदृष्टं अवश्यं कल्पनीयम् । तत्रोच्यते । सत्यं कल्पनीयं, प्रमाणेन तु प्रयोगवचनैकवाक्येन । द्वितीये तु पक्षे कल्पयित्वा शब्दं तेन एकवाक्यता स्यात् । अथोच्यते । क्व चित् समाम्नातेन सह एकवाक्यता भविष्यति, तथापि अप्रकृतेन व्यवहितेन च कल्प्यमाना प्रकृतकल्पनायाः गुरुतरा स्यात् ।

**न, तत्प्रधानत्वात् । ५ ॥**

**भाष्यं** — नैतदेवं तत्प्रधानत्वात् । पुरुषार्थो ह्येष कल्पः । कथं ? वासिष्ठादीनां नाराशंसो यज्ञाङ्गमिति । यच्च यस्य यज्ञाङ्गं, तेन सह फलदं कर्म तस्य भवति । तेन एवमभिसंबन्धः क्रियते, वासिष्ठादीनां नाराशंसेन सहितं कर्म फलदं भवतीति ।

**औदुम्बर्याः परार्थत्वात्, कपालवत् । ६ ॥**

**भाष्यं**— अथ यदुपवर्णितं यथा औदुम्बरी तथा इहेति । परार्थत्वादौदुम्बर्याः यजमानो गुणत्वेन श्रूयते । ननु तत्रापि प्रयोगवचनः पुरुषप्राधान्यं कुर्यात् । नैष दोषः । एकेनापि यजमानेन संमिता चेयं सर्वेषां यजमानसंमिता भवति । न तु इह एकस्य कल्पे संगृहीते सर्वेषां संगृहीतो भवति । तस्मात् औदुम्बर्याः पारार्थ्यं कपालवत् । 'यथा पुरोडाशकपालेन तुषानुपवपति' इति परार्थकपालेन तुषा उपवप्तव्या इति उपादीयते, एवमेतदपीति ।

**अन्येनापीति चेत् । ७ ॥**

**भाष्यं**— एवं चेद्भवान् पश्यति, यजमानेन समानं तत्प्रयोजनं, न स्वेन अन्येन वा यजमानेनेति, तथा प्रयोगान्तरे यो यजमानः, तेनापि संमानं प्राप्नोति ।

**नैकत्वात्, तस्य चानधिकाराच्छब्दस्य चाविभक्तत्वात् । ८ ॥**

**भाष्यं** - अत्रोच्यते । न प्रयोगान्तरस्य यजमानः प्रसज्यते । न तु यजमानशब्दे कश्चित् विशेषः, यतो यजमानशब्दात् व्यवस्था स्यात् । किं तर्हि ? एकत्वस्य विवक्षितत्वात्, न द्वाभ्यां याजमानानि कर्तव्यानि इति नान्य आनीयते । आह, अन्य एव तर्हि सर्वयाजमानेषु भवतु । नैवम् । कामिनं हि अधिकृत्य साङ्गस्य यागस्य वचनम् । यजमानशब्दश्च अविभक्त इह औदुम्बर्याः संमाने । तस्मान्नान्यो भविष्यति ।

**संनिपातात्तु निमित्तविघातः स्याद्, बृहद्रथंतरवद् विभक्तशिष्टत्वाद्वसिष्ठनिर्वर्त्ये । ९ ॥**

**भाष्यं** — तुशब्दः पक्षं व्यावर्तयति । बहुषु यजमानेषु संनिपातात् निमित्तविघातः स्यात् । कुतः ? विभक्तशिष्टत्वात् । वसिष्ठनिर्वर्त्ये प्रयोगे नाराशंसो नैमित्तिकः, अन्यस्मिन् तनूनपात् नैमित्तिकः । यत्र इदानीं उभये कर्तारः ससहायेन, तत्र निर्वृत्तिर्न केवलेन । तस्मान्न केवलः कर्ता । न चेत् वासिष्ठः केवलः कर्ता, तर्हि तन्निमित्तं तत्र न कर्तव्यं, न चेतरनिमित्तम् । उभयोरपि अन्योन्येन विघातः । बृहद्रथंतरवत् । तद्यथा 'बृहद्रथंतरं पृष्ठं भवति' इति न बृहत्साधनकं, न रथंतरसाधनकं इति नैव तत्र बृहत् निमित्तं भवति, न रथंतरं वा; उभयनिवृत्तिरिति ।

**अपि वा कृत्स्नसंयोगादविघातः प्रतीयेत, स्वामित्वेनाभिसंबन्धात् । १० ॥**

**भाष्यं**— अपि वेति पक्षं व्यावर्तयति । कृत्स्नं प्रति केवलस्य कर्तृत्वेन संयोगो भवति । तस्मादविघातो नैमित्तिकानाम् । कथं पुनः कार्त्स्न्येन कर्तृत्वं ? स्वामित्वेन अभिसंबन्धात् । कर्म प्रति स्वामित्वेन केवलानां वसिष्ठादीनां अभिसंबन्धो भवति । कर्म पुरुषाणामुपकारकम् । तद्धि एकैकस्य शक्नोति फलं निर्वर्तयितुम् । तस्मादेकैकः कृत्स्नस्य कर्ता इति तन्नैमित्तिकं सर्वं प्राप्नोति । यथा तुण्डमात्रे दीयतां इति । यद्यपि सा तुण्डडपित्थयोर्माता, तथापि तस्यै दीयते । कार्त्स्न्येन हि तस्य सा माता भवति, नहि व्यासज्यते मातृत्वम् । तद्वदिहापि द्रष्टव्यम् । तस्मात् असमानकल्पानामनधिकारः ।

**साम्नोः कर्मवृद्ध्यैकदेशेन संयोगो गुणत्वेनाभिसंबन्धस्तस्मात् तत्र विघातः स्यात् । ११ ॥**

**भाष्यं**— अथ यदुक्तं बृहद्रथंतरवदिति, तत् परिहरणीयम् । बृहद्रथंतरयोः साम्नोः नैमित्तिककर्मवृद्ध्या एकदेशेन संयोगो भवति । तत्र हि उभयोः साधकत्वं, नैकस्य । स्तोत्रैकदेशेन तु तत्र साम्नोः संबन्धः, न कृत्स्नेन स्तोत्रेण । गुणत्वेन हि तत्र साम श्रूयते, स्तोत्रं प्राधान्येन । तस्मात् तत्र विघातः स्यात् ।

**सोम— न च** ' राजन्यात्रिवध्र्यश्ववैश्यशुनकानां कण्वकाश्यपसंकृतिकानां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषां' इति वाक्ये धातोरेवाभावात् कथं धात्वर्थविधानमुच्यते इति **वाच्यम्** । अत्र अवश्यं विधिप्रत्ययस्य कल्पनीयत्वात्, तस्य च प्रकृतिं विना अनुपपत्त्या प्रकृतेरपि कल्पनायां ' एतेषां नाराशंसं द्वितीयं प्रयजेत् ' इत्येवंरूपं संपन्नं वाक्यं, इति धात्वर्थविधानोपपत्तेः । 'द्वितीयः प्रयाजः कार्यः' इति कल्पनायामपि कृतिसामान्यवाचकस्य प्रयाजे एव पर्यवसानात् धात्वर्थविधिरुपपद्यते ।

**के**— पूर्वापवादात् संगतिः ।

**वि**— ' भिन्नप्रयाजादिकल्पा अपि सत्रेऽधिकारिणः । तुल्यकल्पा एव वा, ऽऽद्यो वसिष्ठादिविधा-

ननः ।', नाराशंसाद्यङ्गतायां स्वामित्वोद्देशपूर्वकम्। नाराशंनविधौ संनिकर्षान् साद्गुण्यतोऽन्तिमः ॥ '

भाट्ट— दर्शपूर्णमासादौ कल्पभेदः श्रुतः 'राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषां ' इत्यादिना । अत्र हि ' तनूनपातं यजति ' इत्यनेन एकदेशप्रवृत्तिनिमित्तनामधेयं अङ्गीकृत्य विहितस्य द्वितीयप्रयाजस्य क्रमे शाखाभेदेन समाम्नातयोः नाराशंसतनूनपान्मन्त्रयोः अव्यवस्थया विकल्पेन द्वितीयप्रयाजसंबन्धित्वेन प्राप्तयोः वासिष्ठसंबन्धमात्रं नाराशंसस्य क्रियते। अत एव नाराशंस इति तद्धितः द्वितीयपदं प्रयाजपदं चानुवादः । ततश्च परिशेषादेव तनूनपान्मन्त्रे अन्यसंबन्धसिद्धेः 'तनूनपादन्येषां ' इत्यपि ' षोडश्युत्तरे ' इतिवत् अनुवाद एव। **न च** नाराशंसमन्त्रस्य पशुप्रकरणे पाठेऽपि दर्शपूर्णमासप्रकरणे पाठाभावः इति केषां चिदुक्तं **युक्तं**, पशुप्रकरणेऽपि सूक्ते वैकृतनाराशंसमन्त्रपाठेऽपि ' नाराशंसोऽग्र आज्यस्य वेतु ' इत्यस्य दर्शपूर्णमासप्रकरणे पाठात् । अत एव आश्वलायनादिभिः तत्रैव स पठितः । **यत्तु** नाराशंसवाक्ये द्वितीयत्वादिविशिष्टप्रयाजान्तरविधिः, तस्य च वासिष्ठसंबन्धित्वेन विधानात् अन्येषामभाव इति, **तन्न**, तथात्वे समिद्यागोत्तरत्वरूपद्वितीयत्वस्य नराशंसयागे विधानेऽपि वासिष्ठानां तनूनपाद्यागबाधे प्रमाणाभावात् नाराशंसोत्तरं तत्करणाद्यापत्तेः । नहि द्वितीयपदे तत्कार्यकारित्वेन नाराशंसविधिः, येन तेषां तनूनपाद्बाधः शङ्क्येत । तथात्वे सिद्धान्ते वासिष्ठानामपि उद्देश्यत्वेन वाक्यभेदापत्तेः । न च ' तनूनपादन्येषां ' इत्यनेन अन्येषामेव तनूनपाद्विधानात् वासिष्ठानां तद्बाधोपपत्तिः, तस्य एकवाक्यत्वेनोपपत्तौ वाक्यभेदाङ्गीकारे प्रमाणाभावात्, विशिष्टविध्यपूर्वविधिकर्मान्तरकल्पनागौरवप्रसङ्गाच्च । अतः पूर्वोक्तप्रकारेण मन्त्रस्यैव वसिष्ठसंबन्धविधानेन कल्पभेद उपपादनीयः । स च दीक्षणीयादिद्वारा अनेककर्तृकेषु सत्रादिषु प्राप्तः ।

तत्र सत्रादौ भिन्नकल्पानामप्यधिकारः, उत समानकल्पानामेव इति चिन्तायां, अविशेषात् भिन्नकल्पानामपि । **न च एककल्पकरणे अन्येषां वैगुण्यप्रसङ्गः, वासिष्ठानां इत्यत्र मन्त्रस्य शुद्धवासिष्ठार्थत्वविधाने प्रकरणबाधाद्या**पत्तेः । क्रतुयुक्तपुरुषधर्मत्वे च परिसंख्याऽऽपत्तेः वासिष्ठत्वस्य, नाराशंसमन्त्रे हौत्रे वैश्वामित्रविधानात् साक्षात्कर्तृपरिच्छेदकत्वेन विध्ययोगेऽपि प्रयोजककर्तृभूतयजमानपरिच्छेदकत्वेन वासिष्ठत्वविध्युपपत्तेः, सत्रादौ औदुम्बरीसंमानवत् एकवासिष्ठकर्तृकत्वेऽपि अन्येषां वैगुण्यानापत्तेः। अतो भिन्नकल्पानामपि अधिकारः । **इति प्राप्ते**, विकल्पेन प्राप्तयोर्मन्त्रयोः नियमार्थत्वेन वाक्यसार्थक्योपपत्तौ नियतप्राप्तावासिष्ठव्यावृत्तिरूपपरिसंख्याफलकत्वायोगात् , वासिष्ठोद्देशेनैव प्रमाणान्तरवशात् वासिष्ठाभिलषितफलसाधनीभूतदर्शपूर्णमासाङ्गभूतद्वितीयप्रयाजद्वारा नराशसमन्त्रविनियोगविधिः । अतश्च नराशंसमन्त्रस्य वासिष्ठेषु विनियोगाभावादेव निवृत्तिः, इति न तत्परिसंख्यायाः वाक्यप्रवृत्तिफलकत्वम् । अतश्च भिन्नकल्पानामपि अधिकारे एकाङ्गभूतमन्त्रपाठे इतरेषां फलानापत्तेः समानकल्पानामेव अधिकारः ।

**न्यायबिन्दुः**— दर्शपूर्णमासयोः ' राजन्यवासिष्ठानां नाराशंसो द्वितीयः प्रयाजः, तनूनपादन्येषां ' इति श्रुतम् । तत् दीक्षणीयादिद्वारा सत्रेषु प्राप्नोति । तत्र वसिष्ठावसिष्ठैः कृतो नाराशंसो वसिष्ठकर्तृकः संपन्न इति, एवं तनूनपादपि अन्यैः, इति कं चित् कल्पमाश्रित्य भिन्नकल्पा अपि सत्रं कुर्युः । **इति प्राप्ते**, वासिष्ठाद्यर्थत्वेन नाराशंसादिविधिः, क्रतूपकारद्वारेण तादर्थ्यं इति न फलान्तरकल्पना , धात्वर्थस्य विधेयत्वं च युक्तं संनिकृष्टत्वात् । एवं च एककल्पाश्रयणे अन्येषां क्रतुवैगुण्यात् समानकल्पानामेव सत्रं इति सिद्धान्तः ।

**मण्डन**— ' न भिन्नकल्पाः खलु सत्रिणः स्युः । '

**शंकर**— ' सत्रं कुर्युस्तुल्यकल्पाः । '

**अधिकारः सारस्वतभिन्नसत्रेषु आहिताग्नीनामेव ॥**

**विहारस्य प्रभुत्वादनग्नीनामपि स्यात् । ६।६।५। २७ ॥**

**भाष्यं**— सत्राण्येव उदाहरणम् । ' य एवं विद्वांसः सत्रमासते ' ' य एवं विद्वांसः सत्रमुपयन्ति ' इति । तेषु संदेहः किं साग्नीनामनग्नीनां च तानि भवन्ति, उत साग्नीनामेव इति । किं प्राप्तं ? साग्नीनामनग्नीनां च ।

कुतः ? विहारस्य प्रभुत्वात् । प्रभवति हि परकीयोऽपि विहारः सर्वेषामुपकर्तुम् । क्रत्वर्थो हि तेन सिध्यति । स यदीयेन तदीयेन वा सिद्धिमुपैति । तस्मादनग्नीनामपि भवितुमर्हति इति ।

**सारस्वते च दर्शनात् । २८ ॥**

**भाष्यं**— सारस्वते च सत्रे भवति दर्शनम् । 'परस्थैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयः सत्रमासते' इति अनाहिताग्नीनां सत्रं दर्शयति । तस्मादपि सर्वेषाम् ।

**प्रायश्चित्तविधानाच्च । २९ ॥**

**भाष्यं**— प्रायश्चित्तं विधीयते 'अग्नये विविचयेऽष्टाकपालं पुरोडाशं निर्वपेत्, यस्याहिताग्नेरन्यैरग्निभिरग्नयः संसृज्येरन्' इति संसर्गे अग्नीनां प्रायश्चित्तं दर्शयति । सः (संसर्गः) एवं स्यात् अनाहितैः, नान्यथा । तस्मादपि अनग्नीनां सत्राणीति ।

**साग्नीनां वेष्टिपूर्वत्वात् । ३० ॥**

**भाष्यं**— साग्नीनां वा सत्राणि नानग्नीनाम् । कस्मात् ? इष्टिपूर्वत्वात् । इष्टिपूर्वत्वं सोमानामाम्नानम् । 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत' इति ज्योतिष्टोमस्य इष्टिपूर्वत्वम् । तच्चोदकपरंपरया सत्राणि प्रति प्राप्तम् । तस्मात् नानग्नीनां तानि भवेयुरिति ।

**स्वार्थेन च प्रयुक्तत्वात् । ३१ ॥**

**भाष्यं**— स्वार्थेन च अग्नयः प्रयुक्ताः । कथं ? उपग्रहविशेषात् । उपग्रहविशेषो हि भवति 'अग्नीनादधीत' इति । तस्मात् अन्यस्याग्निभिः अन्यस्य न सिद्धिः, यद्यपि क्रत्वर्था अग्नयः इति ।

**संनिवापं च दर्शयति । ३२ ॥**

**भाष्यं**— 'सावित्राणि होष्यन्तः संनिवपेरन्' इति । तेनापि साग्नयः सत्राणि उपासते इति गम्यते ।

**प्रायश्चित्तमापदि स्यात् । ३५ ॥**

**भाष्यं**— एवं लिङ्गपरिहारावशिष्टेऽधिकरणे अन्यत् चिन्त्यते । ... अथेदानीं पूर्वोक्तस्य (२९ सूत्रे) लिङ्गस्य परिहार उच्यते । प्रायश्चित्तमस्मत्पक्षेऽपि अवकल्पिष्यते । कथं ? अरण्ये कान्तारे गच्छतां स्थितानां वा दस्युभयात् श्वापदभयाद्वा त्रासे जाते, दावाग्निना वा संसृज्येरन् मिथो वा, स विषयः प्रायश्चित्तस्य भविष्यति इति ।

शा— 'तत्राग्नीनां परार्थत्वाद् यस्य कस्य चिदग्निषु । साधितं कर्म सर्वेषां फलं साधयति ध्रुवम् ॥' नैवम् । 'इष्टिपूर्वकता सोमविकाराणामवस्थिता । इष्टौ चानाहिताग्नीनां न कर्म किंचिदिष्यते ॥ आधातुरग्नयः कार्ये नान्येषां साधयन्ति च । उपग्रहविशेषेण कर्तुरेव फलान्वयात् ॥'

सोम— पूर्वत्रैव विशेषविचारात् संगतिः । वचनात् सारस्वतसत्रे अनग्नीनामधिकारेऽपि नान्यत्राधिकारः प्रमाणवत्वात् । सूत्रार्थस्तु— विहारस्याग्नीनां अन्यदीयानामपि अन्योपकारे प्रभुत्वादनाहिताग्नीनामपि सत्रं स्यादिति ।

वि— 'अनाधातुश्च तत् किंवाऽऽधातुरेवा, ग्निनो यतः । एकस्याग्निषु तत्सिद्धि, र्न स्याग्निष्वात्मनेपदात् ॥'

भाट्ट— सारस्वतसत्रे 'परस्थैर्वा एते स्वर्गं लोकं यन्ति, येऽनाहिताग्नयः सत्रमासते' इति विधौ सत्रग्रहणस्य प्रकरणेन संकोचे प्रमाणाभावात् सर्वसत्रेषु अनाहिताग्नीनामपि आहिताग्निसहितानां अधिकारः इति मन्यते । अत एव सारस्वतसत्रवदेव इतरसर्वसत्रव्यतिरिक्तविषयमेव आधानगतात्मनेपदम् । इष्टिसोमोत्तरकालता तु क्रत्वङ्गत्वात् एकं कं चित् तादृशं इष्टिसोमकर्तारं अपेक्ष्योपपन्नैव । नहि तत्र इष्टिसोमसमानकर्तृकत्वमपि विधीयते, वाक्यभेदप्रसङ्गात् । इति प्राप्ते, 'दर्शपूर्णमासाभ्यामिष्ट्वा सोमेन यजेत, य एतेनानिष्ट्वा उत्तरेण यजेत गर्तपत्यमेव तद् भवति' इति वाक्येभ्यः अतिदेशात् एककर्तृत्वापदोपादानेन वाक्यभेदाभावात् इष्टिसोमसमानकर्तृकत्वावगतेः । तत्र च आधानगतात्मनेपदानुरोधेन आहिताग्निमात्रकर्तृकत्वावगतेः, सारस्वतसत्रप्रकरणस्थविधिवाक्ये च व्रीह्यादिवत् तत्रैव अनाहिताग्नेः अभ्यनुज्ञानात् आत्मनेपदानुरोधेन इतरसत्रेषु आहिताग्नीनामेव अधिकारः ।

**न्यायबिन्दुः**— अनाहिताग्नेरपि, कस्य चिदग्निभिः कार्यसिद्धेः तेन सह सत्रेऽधिक्रियते । इति प्राप्ते, सोमविकाराणां इष्टिपूर्वकत्वात् अनाहिताग्नेश्च इष्ट्यभावात् नाधिकारः । 'आदधीत' इत्यात्मनेपदात् आधातुरेवाग्नयः कर्मसाधनं, अतोऽपि नानग्नीनामधिकारः इति सिद्धान्तः ।

मण्डन— 'सत्रेऽधिकारी न भवेन्निरग्निः।'

शंकर— 'आधानाधिकृतः सत्रे।' अधिकारी।

**अधिकारः स्मार्तादिकर्मसु उपनीतस्यैव ॥**

**तस्मिंस्तु शिष्यमाणानि जननेन प्रवर्तेरन्।** ६।२।६।२२ ॥

**भाष्यं**— इह स्मार्ताः पदार्था उदाहरणं प्रत्युपस्थितनियमाश्चाऽऽचाराः। 'गुरुरनुगन्तव्योऽभिवादयितव्यश्च' 'वृद्धवयाः प्रत्युत्थेयः समन्तव्यश्च' इति। तत्र संदेहः किं जातमात्राणामिमे पदार्थाः, उतोपनीतानामिति। किं प्राप्तम् ? अविशेषोपदेशाज्जातमात्राणाम्। कुतः ? पुरुषे ते शिष्यन्ते, जननाच्च पुरुषो भवति। तस्माज्जातमात्राणामिमे पदार्था इति।

**अपि वा, वेदतुल्यत्वादुपायेन प्रवर्तेरन्। २३ ॥**

**भाष्यं**— एवं प्राप्ते ब्रूमः। अपि वेति पक्षव्यावृत्तिः। उपायेन प्रवर्तेरन्। उपनयनेन सह प्रवर्तेरन्, वेदतुल्यत्वात्। वेदतुल्या हि स्मृतिः। वैदिका एव पदार्थाः स्मर्यन्ते इत्युक्तम्। वैदिकाश्च पदार्था उपनयनोत्तरकाले समाम्नाताः। स्मार्ताश्चैते वैदिका एव। तस्मादुपनयनोत्तरकाला एते इति।

**टुप्**—( अत्र भाष्यकारेण सामान्यतोदृष्टेन सिद्धान्तः कथितः, तमाक्षिपति– ) न सामान्यतोदृष्टेन शास्त्रे व्यवहारः ( युक्तः ) येन उपनयनोत्तरकालं वैदिकानि कर्माणि ( दृष्टानि, तस्मात् ) इयमपि ( वैदिककार्यविषयत्वात् ) उपनयनोत्तरकालं ( एव ) प्रवर्तते स्मृतिः ( इत्यनुमानमुक्तम् ), तस्मात् तेन सामान्यतोदृष्टेन ( सिद्धान्तः ) अवकल्पते। कथं तर्हि ? 'सुरा न पेया' 'ब्राह्मणो न हन्तव्यः' इत्यादयो जातमात्रेण न कर्तव्याः ( तथैव शिष्टैः स्मरणात् )। अन्यांस्तु (सामान्येन प्रतिषिद्धानपि) प्रागुपनयनात् कामचारवादभक्षाः इति ( प्रतिप्रसूतत्वेन ) अप्रतिषिद्धत्वात् ( अनुपनीतः ) करिष्यति। ( तथा ) उपनयनोत्तरकालं अभिवादनप्रत्युत्थानादीनि उपदिश्यन्ते। ( सूत्रार्थं दर्शयति– ) स्वाध्यायोऽपि तत्काले एव ( उपनयनोत्तरकाले उपदिश्यते ) अतः ( वेदाध्ययनकाले उपदेशात् ) वेदतुल्यत्वात् ( वेदाध्ययनतुल्यकालत्वात् ) इति ( उच्यते )। अथवा विशिष्टकाले एव एते स्मर्यन्ते। स्मृतीनां वेदमूलत्वात् वेदतुल्यता। ( वेदमूलत्वात् स्मृतीनां, तासु च उपनयनोत्तरकालमेव अभिवादनाद्युपदेशात् उपनयनेन सह एषां प्रवृत्तिः इति सूत्रार्थः )।

**सोम**— पूर्वोक्ताधिकारिविशेषविचारात् **संगतिः**। **न च** 'उपनयनादिर्नियमः' इति स्मरणे जाग्रति कथं पूर्वपक्षप्रवृत्तिरिति **वाच्यम्**। सिद्धान्तेऽपि हि 'ब्राह्मणो न हन्तव्यः' 'न सुरां पिबेत्' इत्यादीनां शक्तमात्राधिकारित्वमिष्यते, तद्वदन्येषामपि तथात्वमिष्यतां इति प्रतिबन्द्या क्त्वाचिन्तया वा तत्प्रवृत्तेः। 'न कलञ्जं भक्षयेत्' इत्यादीनां तु उपनीताधिकारिकत्वमेव। **द्वितीयसूत्रे** 'तस्मिन्' पुरुषे इत्यर्थः।

**वि**— 'प्राङ्मुखत्वादिनियम उपनीतेः पुराऽप्युत। ऊर्ध्वं, मन्त्राग्न्यसाध्यत्वादाद्यो, ऽन्त्योऽस्तु तथा स्मृतेः॥'

**भाट्ट**— श्रौतेषु स्मृत्युक्तेषु च निषेधेषु, तथा स्मार्तेष्वेव अनग्निसाध्येषु अमन्त्रसाध्येषु विधिषु उपनयनात् पूर्वमपि शक्तस्याधिकारः, स्मार्तविधौ उपनयनादिनियमे प्रमाणाभावात्, उपनयनस्य वेदमात्राध्ययनाङ्गत्वात्। निषेधेषु तु जातमात्रस्याधिकारः 'ब्राह्मणो न सुरां पिबेत्' इतिवत् परप्रेरणादिजन्याया अपि भक्षणादिभावनाया निषेधात्, तत्र च स्मृत्याद्यध्ययनस्यानुपयोगात्। **इति प्राप्ते**, स्मृत्यध्ययनस्यापि 'ब्राह्मणेन षडङ्गो वेदोऽध्येयो ज्ञेयश्च' इति स्मृत्या उपनयनाङ्गकत्वविधानात् स्मार्तविधीनामपि उपनीताधिकारकत्वम्। निषेधेषु तु 'प्रागुपनयनात् कामचारकामवादकामभक्षाः' इति स्मृत्यैवाभ्यनुज्ञानात् उपनयनोत्तरकालत्वम्। अत एव वर्णपुरस्कारेण आम्नातानां सुरापानादिनिषेधानां जातमात्राधिकारिकत्वमेव स्मृतिसिद्धम्। येषां तु शूद्रादीनां उपनयनाभावः तेषां विवाहावधि, तस्य तत्स्थानत्वेन विधानात्।

**न्यायबिन्दुः**— प्राङ्मुखो भुञ्जीत, इत्यादयः स्मार्ता धर्माः प्रागप्युपनयनात् प्रवर्तन्ते अग्न्यध्ययनासाध्यत्वात्। **इति प्राप्ते**, 'उपनयनादिर्नियमः' इति 'प्रागुपनयनात् कामचारः' इति च स्मृतेरुपनयनानन्तरमेवेति सिद्धान्तः।

मण्डन— 'स्मार्ताश्च धर्मा उपनीतकार्याः।'

शंकर— 'नियमा उपनीत्यूर्ध्वम्।'

* **अधिकारः ( स्वरूपलक्षणम् )** पुरुषस्य ऐश्वर्ये कर्मणि ( अयं अनुष्ठाने प्रवृत्तेरुपयुक्तः ) । **ऋजु.** पृ १८. * अधिकारः फलभोक्तृतया स्वामित्वम् ( इत आरभ्य अधिकारः षष्ठाध्यायविषय एव ) । वि. ६।१।१. * अधिकारः साकाङ्क्षबुद्धिविपरिवृत्तिः ( अयं अनुवृत्तिरूपः प्रकरणात्मकः ) । **कौ.** ३।३।५।१३ पृ. ३३७.

* **(क निरूपितः)** अधिकारः कर्तृसमीहितसाधनात्मिकायाः कर्तव्यतायाः विधेरंशः इति षष्ठे निरूप्यते। **कणिका.** पृ. ४३०. * अधिकारः कर्मस्वरूपे अवधारिते तद्योग्यतया शक्यो निरूपयितुं इति पश्चापि लक्षणानि ( अध्यायान् ) प्रतीक्षते ( षष्ठाध्यायार्थः ) । **वा.** २।१।१।१ पृ. ३७२, * अधिकारः यथोपदिष्टकर्मानुष्ठानसामर्थ्येन कर्तुरवधार्यते इति क्रमनियमपर्यन्तोपदेशज्ञानोत्तरकालं आरभ्यते । ३।१।१।१ पृ. ६५१. * अधिकारः षष्ठाध्यायार्थः । **के.**

**( कस्य क )** अधिकारः अनाहिताग्नेरेव चतुर्होतृहोमेषु । **भा.** ६।८।१।१–१०, * आहिताग्नीनामेव सारस्वतभिन्नसत्रेषु । ६।६।५।२७–३२, ३५, * उपनीतस्यैव स्मार्तादिकर्मसु । ६।२।६।२१–२२, *एकस्यैव पुंसः स्त्रीसद्वितीयस्य दर्शपूर्णमासादौ ।६।२।२।३–१२, * एकस्यैव पुरुषस्य स्त्रीसद्वितीयस्य, न तु द्वयोः पुरुषयोः, आधाने । ६।१।५।२२–२३. * अधिकारः तत्तत्क्रतुप्रतिपादकस्वाध्यायाध्ययनवत एव तत्तत्क्रतौ इति वार्तिककाराः । तथाहि 'यद्यपि स्वाध्यायग्रहणेन सकलो वेदः परिगृहीतः, तथापि दर्शपूर्णमासौ कुर्वाणस्य ज्यौतिष्टोमिकमन्त्रब्राह्मणं न क्व चिदुपयुज्यते इति असदपि नाधिकारं व्यावर्तयति इष्टिवेदेनैव योग्यतायाः सिद्धत्वात् । तेन तद्याजिनः तावानेव स्वाध्यायः ।' **वा.** ३।८।८।१८. * त्र्यार्षेयस्यैव दर्शपूर्णमासयोः । 'त्रीणि आर्षेयाणि यः संपादयितुं शक्नोति सोऽधिक्रियते।' **टुप्.** ६।१।११।४३. * दंपत्योः सह, कर्मसु । **भा.** ६।१।४।१७–२१, * द्रव्यरहितस्यापि कर्मसु । ६।१।८।३९–४०, * निषादस्थपतेः अध्ययनविधिसिद्धज्ञानविरहिणोऽपि 'एतया निषादस्थपतिं याजयेत्' इति वचनात् निषादेष्ट्याम् । निषादस्थपतिशब्दे हि निषादश्चासौ स्थपतिश्चेति कर्मधारयः, न तु निषादानां स्थपतिः इति षष्ठीतत्पुरुषः, षष्ठ्यर्थे लक्षणाऽऽपत्तेः । इयांस्तु विशेषः, निषादस्य अध्ययनविधिसिद्धज्ञानाभावेन एतस्यैव विधेः तत्कर्मौपयिकज्ञानाक्षेपकत्वम् । मीन्या. २३३–४०. * निषादस्थपतेः रौद्रे चरौ । **भा.** ६।१।१३।५१–५२, * पुंस एव उपस्थानादिषु, स्त्रियास्तु यावदुक्तं आशीर्ब्रह्मचर्यम् । ६।१। ६।२४. * प्रकृष्टधियामेव न मन्दधियां, स्वसंबन्धिप्रेरणावगतिहेतुकानुष्ठेयत्वावगतिपूर्वकस्यैवानुष्ठानस्य वैदिकेषु कर्मसु अधिकारशब्देन विवक्षितत्वात् । **सु.** पृ. १३८१. * प्रतिसमाधेयाङ्गवैकल्यस्यापि कर्मसु । **भा.** ६।१।३।४१, * प्रत्येकं कृत्स्नफलभोक्तॄणां सत्रे । ६।२।१।१–२, * फलकामस्यैव तत्तत्फलसाधनेषु कर्मसु । ६।१।१।१–३, *ब्राह्मणस्यैव आर्त्विज्ये । १२।४।५।४३–४७, * ब्राह्मणानामेव सत्रे । ६।६।३।१३–२३, * भिन्नकल्पयोरपि कुलाययज्ञे । ६।६।२।१२–१५, * मनुष्याणामेव विश्वसृजामयने, संवत्सरशब्दस्य दिवसपरत्वात् । ६।७।१३।३१–४०, * यथाशक्त्यङ्गानुष्ठातुरपि नित्ये कर्मणि । ६।३।१।१–७, * रथकारस्य सौधन्वनापरपर्यायस्य आधाने । ६।१।१२।४४–५०. **यद्यपि** च 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेन रथकारस्य सौधन्वनापरपर्यायस्य आधानं विहितं योगात् रूढेर्बलीयस्त्वात्, **तथापि** नास्य उत्तरकर्मसु अधिकारः, अध्ययनविधिसिद्धज्ञानाभावात् । **न च** तदभावे आधानेऽपि कथमधिकार इति **वाच्यम्** । तस्य अध्ययनविधिसिद्धज्ञानाभावेऽपि 'वर्षासु रथकारोऽग्नीनादधीत' इत्यनेनैव विधिना आधानमात्रौपयिकज्ञानापेक्षणात्, अन्यथा एतस्यैव विधेरनुपपत्तेः । अतश्च रथकारस्य आधानमात्रे अधिकारेऽपि नोत्तरकर्मसु अधिकारो विद्याऽभावात् । एवं च तदाधानं नाग्निसंस्कारार्थं संस्कृतानामग्नीनां उत्तरत्रोपयोगाभावात्, किंतु तदाधानं लौकिकाग्निगुणकं विश्वजिन्न्यायेन स्वर्गफलं च स्वतन्त्रमेव प्रधानकर्म विधीयते । अग्नीन् इति च द्वितीया

'सक्तून् जुहोति' इतिवत् तृतीयार्था इति । मीन्या. पृ. २३६–२३७. * वर्णत्रयस्यापि श्रुतसामिधेनीसात-दृश्यात् अध्वरकल्पादिषु । भा. ६।६।७।३६–३९, * विहितकालजीविनः अग्निहोत्रादिकर्मसु । ६।२।७। २३–२६, * वैश्वामित्रतत्समानकल्पानामेव सत्रे । ६।६।४।२८–२६, * समानकल्पानामेव सत्रे । ( कल्पशब्दोऽत्र प्रयोगविषयकः, न तु कल्पसूत्र-विषयकः) । ६।३।१।१–११, * सर्वाङ्गोपसंहारसमर्थस्यैव काम्येषु । ६।३।२।८–१०, * साधारणपात्राणामेव सत्रे । ६।६।६।३३–३४, * स्त्रिया अपि क्रतुषु । ६।१।३।६–१६. **ननु** एवं स्त्रिया अधिकारो न स्यात् तस्या अध्य-यनप्रतिषेधे तद्विधिसिद्धज्ञानाभावात् । न च नास्त्येवेति वाच्यम् । 'यजेत स्वर्गकामः' इत्यादौ स्वर्गकामपदस्य उद्दे-श्यसमर्पकत्वेन पुंस्त्वस्य उद्देश्यविशेषणत्वात् ग्रहैकत्ववत् अविवक्षितत्वेन स्त्रिया अधिकारस्य साधितत्वात् **इति चेन्**, सत्यं अधिकारः साधितः, न तु स्वातन्त्र्येण 'न स्त्री स्वातन्त्र्यमर्हति' इत्यादिना तस्य निषिद्धत्वात्, स्वातन्त्र्येण कर्तृत्वे प्रयोगद्वयस्यापि वैगुण्यापत्तेश्च । यज-मानप्रयोगे पत्नीकर्तृकाज्यावेक्षणादिलोपप्रसङ्गात्, पत्नीप्र-योगे च यजमानकर्तृकाज्यावेक्षणादिलोपात् । अतो दंपत्योः सहाधिकारः । सहाधिकारत्वेन यजमानविद्यैव पत्न्या अपि कार्यसिद्धेर्न ज्ञानं विना तस्या अधिकारानुपपत्तिः । 'पाणिग्रहणात्तु सहत्वं सर्वकर्मसु तथा पुण्यफलेषु' इति वचनेन स्त्रिया अधिकारनिर्णयाच्च । मीन्या. पृ. २३७–२३९. * (यस्य न यत्र ) **अधिकारः न** अन्धपङ्गु-बधिरमूकानां तिरश्चां वा वैदिके कर्मणि । वि. ६।१।२। ४–५. * अधिकारः न अप्रतिसमाधेयाङ्गवैकल्यस्य कर्मसु । भा. ६।१।१०।४२. * अधिकारः न द्वादशशतन्यून-धनस्य विश्वजिति । भा. ६।७।९।१८–२०. * अधिकारः न शूद्रस्य यागादौ । तस्य अध्ययनविधि-सिद्धज्ञानाभावात्, आधानसिद्धाग्न्यभावाच्च । अध्ययनस्य उपनीताधिकारत्वात्, उपनयनस्य च 'अष्टवर्षं ब्राह्मण-मुपनयीत' इत्यादिना त्रैवर्णिकाधिकारत्वात्, आधान-स्यापि 'वसन्ते ब्राह्मणोऽग्नीनादधीत' इत्यादिना त्रैवर्णि-काधिकारत्वात् । मीन्या. पृ. २३६. *अधिकारः न शूद्रस्य वैदिके कर्मणि । भा. ६।१।७।२५–३८. * प्रेक्षापूर्व-कारिणां फलोद्देशं विना अधिकारायोगः । सु. पृ. १३८१.

**अधिकारन्यायः** (६।१।१।१–३ ) अत्र स्वर्गः प्रधानतः, कर्म गुणतः इति, स्वर्गकाममधिकृत्य 'यजेत' इति वचनं, इत्यधिकारलक्षणमिदं सिद्धं भवति, इत्यु-क्तम् । इदमेव स्वर्गकामाधिकरणम् । स्वर्गादिकामुकस्यैव काम्ये कर्मणि अधिकारः इति न्यायार्थः । के. * **अधिकार-लक्षणस्य प्रकरणस्य** विनियोजकत्वं नाभ्युपगम्यते । सु. पृ. ११९२. * **अधिकारविधिः** फलसंबन्धबोधको विधिः । यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । मणि. पृ. ९९. * फलस्वाम्यबोधको विधिरधिकारविधिः । फलस्वाम्यं च कर्मजन्यफलभोक्तृत्वम् । स च 'यजेत स्वर्गकामः' इत्येवंरूपः । अनेन हि स्वर्गमुद्दिश्य यागं विदधता स्वर्गकामस्य यागजन्यफलभोक्तृत्वं प्रतिपाद्यते । 'यस्याहिताग्नेरग्निर्गृहान् दहेत्, सोऽग्नये क्षामवतेऽष्टा-कपालं निर्वपेत्' इत्यादिभिस्तु अग्निदाहादौ निमित्ते कर्म विदधद्भिः निमित्तवतः कर्मजन्यपापक्षयरूपफल-स्वाम्यं प्रतिपाद्यते । तच्च फलस्वाम्यं तस्यैव, योऽधिकारि-विशेषणविशिष्टः । मीन्या. पृ. २३५–३६. * अधि-**कारविधिविषयकं** 'विधिः द्विविधः' इति बिन्दौ बालप्रकाशे द्रष्टव्यम् । के. * **अधिकारविधेः** एव 'कार्ये ज्ञातेऽधिकारः स्यात्' इत्यनेन न्यायेन प्रयोग-विधिप्रयोज्यसमस्ताङ्गावधारणपूर्वकत्वेन प्रयोगविध्यनुरोध-वृत्तित्वं न्याय्यम् । सु. पृ. ५३१. * **अधिकार-हेतुः** । यत्तु उपादानहेतुतां ( अनुष्ठानहेतुतां ) प्रतिपद्यते तत् अधिकृतौ कारणम् । बृहती. पृ. ३०. * **अधि-कारात्मकस्य प्रकरणस्य** प्रकृतत्वमात्रापेक्षित्वात् बहू-नामल्पानां च प्रकृतत्वाविशेषात् तुल्यकालं ग्रहणावगतेः न अवान्तरमहाधिकारयोः बलाबलविशेषोऽस्ति । सु. पृ. ९११.

* **अधिकारी** आविर्भूतसर्वाङ्गकरणसामर्थ्यः, नाङ्गसा-मर्थ्याभिभवे अधिकारवान् । कणिका. पृ. ३४०. * अधि-कारी इति कर्मणां उपरिभावेनावस्थितः, स्वामी इत्यर्थः । वा. ६।१।१।२ पृ. १३५४. * अधिकारी कर्मसु कियता पुनर्विदितेन विद्वान् अधिक्रियते ? । यावता विदितेन

शक्तो भवति । यथोक्तं, क्रतुमभिनिर्वर्तयितुं तावत् यो वेद स तेन क्रतुना अधिक्रियते । अन्यस्मिन् क्रतौ कर्तव्ये अन्यक्रतुज्ञानं न दृष्टाय भवति । तस्मात् क्रत्वन्तरज्ञानं अधिकारे नादर्तव्यम् । क्रत्वन्तरज्ञानाय क्रत्वन्तरग्रन्थः । तस्मात् स्वपदार्थज्ञः अधिक्रियेत इति । भा. ३।८।८।१८, * अधिकारी कर्मसु 'नहि अविद्वान् विहितोऽस्ति' । १२।४।१५।४२. * अधिकारी शाब्दविधिबोध्य इति पक्षः । वस्तुतस्तु अधिकारी आर्थिकविधिबोध्य एव । **भाट्ट.** ८।१।४.

**अधिकारिणः प्रमितिजनको वेदः इति न्यायात्** सम्यक्पदार्थविज्ञानवत एव वाक्यार्थबोधे अधिकारः । **उपदेशसाहस्री.** पद्य. रामतीर्थः १८। १९१. * अधिकारित्वं फलभागित्वम् । **मणि.** पृ. ८६. * **अधिकारिविशेषणं** च तदेव, यत् पुरुषविशेषणत्वेन श्रुतम् । अत एव 'राजा राजसूयेन स्वाराज्यकामो यजेत' इत्यनेन स्वाराज्यमुद्दिश्य राजसूयं विदधताऽपि न स्वाराज्यकाममात्रस्य तत्फलभोक्तृत्वं प्रतिपाद्यते, किंतु राज्ञः सतः तत्कामस्य । किंचित्तु पुरुषविशेषणत्वेन अश्रुतमपि अधिकारिविशेषणं भवति । यथा अध्ययनविधिसिद्धा विद्या, अग्निसाध्येषु च कर्मसु आधानसिद्धा अग्निमत्ता, सामर्थ्यं च । एतेषां पुरुषविशेषणत्वेन अश्रवणेऽपि अधिकारिविशेषणत्वमस्त्येव, उत्तरक्रतुविधीनां ज्ञानाक्षेपशक्तेर्भावेन अध्ययनविधिसिद्धज्ञानवन्तं प्रत्येव प्रवृत्तेः, अग्निसाध्यकर्मणां च अग्न्याक्षेपकत्वेन तद्विधीनां आधानसिद्धाग्निमन्तं प्रत्येव प्रवृत्तेः । एवं सामर्थ्यमपि अधिकारिविशेषणं, असमर्थं प्रति विध्यप्रवृत्तेः । 'आख्यातानामर्थं ब्रुवतां शक्तिः सहकारिणी' इति न्यायात् । तच्च सामर्थ्यं काम्ये कर्मणि अङ्गप्रधानविषयम् । न तु अङ्गासमर्थः प्रधानमात्रसमर्थश्च काम्ये कर्मणि अधिकारी, प्रधानविधेः अङ्गविध्येकवाक्यताऽऽपन्नस्य साङ्गकर्मसमर्थं प्रत्येव प्रवृत्तेः यथाविनियोगमधिकारात् । यदि हि समर्थं प्रत्येव प्रवृत्तौ कया चित् श्रुत्या विरोधः स्यात्, तदा असमर्थस्यापि अधिकारः स्यात्, न च विरोधोऽस्ति स्वर्गकामश्रुतेः समर्थं प्रत्येव प्रवृत्तौ विरोधाभावात् । प्रत्युत असमर्थं प्रति प्रवृत्तौ प्रधानविधेः अङ्गवाक्यैकवाक्यतया प्रतिपन्नस्य अङ्गसाहित्यस्य बाधापत्तेः, नित्यवच्छ्रुतानामङ्गानां साङ्गिकत्वप्रसङ्गाच्च । अतः साङ्गे कर्मणि समर्थस्यैव काम्ये कर्मणि अधिकारः । नित्यकर्मणां तु अङ्गेषु यथाशक्तिन्यायः । तानि हि यावज्जीवश्रुत्या यावज्जीवं कर्तव्यत्वेन चोदितानि । न च यावज्जीवं केनापि साङ्गः प्रयोगः कर्तुं शक्यते । अतः नित्यकर्मसु प्रधानमात्रसमर्थो (ऽपि) ऽधिकारी । अङ्गानि तु यावन्ति कर्तुं शक्यन्ते, तावन्ति कार्याणि इत्यास्तां बहूक्त्या, सूरिभिः पराक्रान्तत्वात् । **मीन्या.** पृ. २३६–२४१. * **अधिकारिसंकोचः** ज्ञानाद्याक्षेपशक्तिकल्पनागौरवपरिहारार्थम् । **भाट्ट.** ४।१।१४.

**अधिकारे च मन्त्रविधिरतदाख्येषु, शिष्टत्वात् । ३।२।८।२१ ॥**

'आग्नेय्या आग्नीध्रमुपतिष्ठते, ऐन्द्या सदः, वैष्णव्या हविर्धानं' इति ज्योतिष्टोमे श्रूयते । किं प्रकृताभिरेव आग्नेय्यादिभिर्ऋग्भिः उपस्थातव्यं किंवा दाशतयीभ्यः एवंलिङ्गाः आगमयितव्याः इति विचारे पूर्वपक्षमाह । 'आग्नेय्या उपतिष्ठते' इति मन्त्रस्य विधिः अधिकारे ज्योतिष्टोमप्रकरणस्थे मन्त्रे अतदाख्येषु तदाख्यभिन्नेषु अप्रकृतेषु च मन्त्रेषु वा स्यात् । शिष्टत्वात् प्रकृताप्रकृतसाधारणत्वेन विहितत्वात् । तस्मात् प्रकृतो वा ग्राह्यः दाशतयीस्थो वा आगमयितव्यः ।

**तदाख्यो वा, प्रकरणोपपत्तिभ्याम् । २२ ॥**

पूर्वपक्षं सूत्रप्राप्तं वाशब्देन व्यावर्तयन् सिद्धान्तमाह । तदाख्यः तेन अधिकारेण आख्यायते स प्रकरणस्थ एव ग्राह्यः । प्रकरणात् उपपत्तेश्च । तत्र आग्नेयमन्त्रे प्रकरणं, अन्यत्र च उपपत्तिः 'अग्निर्देवता अस्य' इति वृत्तिस्थसर्वनाम्ना प्रकृत एव मन्त्रः परामृश्यते । ब्रह्मौदनप्राशनादिविधौ च प्रकृतानामेव चतुर्णां मन्त्राणां ग्रहणेन लाघवाख्या उपपत्तिः । तस्मात् प्रकृता एव मन्त्रा ग्राह्या इति सिद्धान्तः ।

**अनर्थकश्चोपदेशः स्यादसंबन्धात् फलवता, नह्युपस्थानं फलवत् । २३ ॥**

'आग्नेय्या आग्नीध्रमुपतिष्ठते' इति उपदेशः आग्नीध्रोपस्थानजन्यापूर्वलक्षणाया अभावे अनर्थकः निष्फलः

स्यात्। फलवता असंबन्धात् अनन्वयात्। नहि क्रत्व-संबन्धिना उपस्थानमात्रेण फलमस्ति। हि यस्मात् उपस्थानं अपूर्वातिरिक्तेन फलवत् फल्युक्तं न भवति। तस्मात् प्रकृतैव आग्नेयी ऋक् ग्राह्या इति सिद्धान्तः।

अत्र सुधा – क्रत्वैकान्तिकत्वेऽपि आग्नीध्रादीनां उपस्थानस्य तत्स्वरूपान्वयिधर्मत्वेन तद्द्वारकत्वन्वया-योगात् आग्नीध्रादिशब्दानां च संस्कारनिमित्तत्वा-भावेन आहवनीयादिवत् स्वरूपनिष्पत्त्यैव संस्कारानपे-क्षणात् नैष्फल्यापत्तेः उपस्थानस्वरूपमन्त्रोपदेशः सन्मा-त्रस्य फलवदसंबन्धापत्तेः अनर्थकः स्यात् इति फलवता इत्यन्तस्यार्थः स्पष्टः इति।

**सर्वेषां चोपदिष्टत्वात्। २४॥**

'आग्नेय्याऽऽग्नीध्रमुपतिष्ठते' इति विहिता आग्नेयी ऋक् प्रकरणस्थैव ग्राह्या इति सिद्धान्त उक्तः। ननु प्रकरणपठितानां आग्नेयीनां स्तोत्रादिप्रयोजनान्तरसंब-न्धेन निराकाङ्क्षत्वात् प्रयोजनाकाङ्क्षाणां अप्रकृतानामेव ग्रहणं युक्तं इति चेत् तत्राह। सर्वेषां च सर्वेषामेव मन्त्राणां वाचःस्तोमादौ उपदिष्टत्वात् प्रयोजनान्तरसंबन्धेन निराकाङ्क्षत्वमविशिष्टं प्रकृतानामप्रकृतानां च। तस्मात् प्रकृतग्रहणमेव युक्तं इति सिद्धान्तः। **के.**

**अधिकारो नास्ति कर्मणि अप्रतिसमाधेया-ङ्गवैकल्यस्य॥**

**उत्पत्तौ नित्यसंयोगात्। ६।१।१०।४२॥**

**भाष्यं**— यस्य तु अप्रतिसमाधेयं अङ्गवैकल्यं तं प्रति विचारः किं अधिक्रियते नेति। पूर्वाधिकरणेन अधिक्रियते। **इति प्राप्ते ब्रूमः** नाधिक्रियते इति। कुतः? शक्त्यभावात्। **नासौ** केन चिदपि प्रकारेण शक्नोति यष्टुम्। तस्मात् तस्याधिकारो न गम्यते। **ननु** यच्छक्नोति, तत्राधिक्रियते इति। चक्षुर्विकलो विना आज्यावेक्षणेन, विना विष्णुक्रमैः पङ्गुः, विना प्रैषादिश्रवणेन च बधिरः। एतान् पदार्थान् प्रति चक्षुर्विकलादीनां अनधिकारः इति। **नेत्युच्यते।** नाज्यावेक्षणादि पुरुषं प्रति निर्दिश्यते। यदि हि तं प्रति निर्दिश्येत, ततो विकलोऽपि अधिक्रियेत। क्रतुं प्रति एषामुपदेशः प्रकरणाविशेषात्। पुरुषस्य च आख्यातेन अनभिधानादिति। उक्तमेतत् 'विधिर्वा संयोगान्तरात्' (३।४।४।१३) इत्यत्र। तैश्च विना विगुणं कर्म प्रयुक्तमपि न फलं साधयेत्। तस्मात्तस्या-नधिकारः।

**शा**— यस्य तु अप्रतिसमाधेयमङ्गवैकल्यं, स न कथं चित् शक्नोति कर्तुं इति न काम्येऽधिक्रियते। नित्येषु तु आहिताग्निश्चेत् यथाशक्ति कुर्वन् अधिक्रियते एव।

**सोम— सूत्रार्थस्तु** – उत्पत्तावेव येषामङ्गवैक-ल्यं जात्यन्धादीनां, इदमुपलक्षणं सर्वेषामप्रतिसमाधेयाङ्ग-वैकल्यानां, ते नाधिक्रियन्ते आज्यावेक्षणादिभिः क्रतोर्नित्यसंयोगादिति।

**वि**— 'असमाधेयवैकल्ये कथं, काम्येष्वकर्तृता। नित्येषु त्वाहिताग्निश्चेद् यथाशक्ति करोति हि॥'

**भाट्ट** — अप्रतिसमाधेयाङ्गवैकल्ये तु काम्ये नाधि-क्रियते। नित्ये तु यथाशक्तिन्यायात् (६।३।१।१–७) अधिक्रियते एव। यत्तु पार्थसारथिना 'आहिताग्निश्चेत् नित्ये अधिक्रियते' इत्युक्तं तत् आधानस्यापि नित्यत्वे-नोपेक्षितम्।

अत्र विचार्यम्– आधानात् प्राक् अप्रतिसमाधेयाङ्ग-वैकल्ये प्राप्ते आधानादिनित्यकर्मस्वपि तस्याधिकारो न स्यात्। आधानोत्तरं तादृशे वैकल्ये प्राप्ते तु इष्ट्यन्त-नित्यकर्मणि यथाशक्तिन्यायेन अधिकारो न निरस्येत। एतदभिप्राया एव भाष्यादयो ग्रन्थाः स्युः। तथा च पार्थसारथ्युक्तिरपि एतदभिप्राया युक्तैवेति। **के.**

**न्यायबिन्दुः**—यस्य तु अप्रतिसमाधेयं अङ्गवैकल्यं, सः असमर्थत्वात् न काम्येषु अधिक्रियते, नित्येषु तु आहिताग्निश्चेत् यथाशक्ति कुर्वन् अधिक्रियते एव।

**मण्डन**— 'न त्वत्यन्ताङ्गहीनकः।'

**शंकर**— 'नाङ्गाभावाप्रतीकारे।'

**अधिकारो नास्ति विश्वजिति द्वादशशत-न्यूनधनस्य॥**

**विकारः सन्नुभयतोऽविशेषात्। ६।७।९।२८॥**

**भाष्यं**— विश्वजिति 'सर्वस्वं ददाति' इति। तत्र एषोऽर्थः सांशयिकः किं यस्य द्वादशशतं अधिकमूनं वा

विद्यते तस्यापि विश्वजिति अधिकारः, उत यस्य सकलं अधिकं वा तस्यैवेति । किं प्राप्तं ? विकारः सन्नुभयतोऽविशेषात् । न विशेषः कश्चिदाश्रीयते । यस्य द्वादशशतं अधिकमूनं वा अस्तीति । तस्मात् सर्वस्य विश्वजिति अधिकार इति ।

**अधिकं वा, प्रतिप्रसवात् । १९ ॥**

**भाष्यं—** न चैतदस्ति सर्वस्य विश्वजिति अधिकार इति । कस्य तर्हि ? यस्य द्वादशशतमस्ति अधिकं वेति । कुतः ? प्रतिप्रसवात् । प्रतिप्रसवो हि ज्योतिष्टोमे सर्वस्वस्य उच्यते । द्वादशशतं विधाय आह 'एतावता वाव ऋत्विज: आनेया अपिवा सर्वस्वेन ' इति । यदि एतावता नेच्छेयुः सर्वस्वेनापि आनमयितव्या इति । तद्यदि द्वादशेन शतेन नेच्छन्ति नेच्छन्तितरां ततो न्यूनेन । तस्मात् द्वादशशतं ज्योतिष्टोमे, यद्वा सर्वस्वम् । तदिह उभयमपि प्राप्तम् । तत्र एकः पक्षो नियम्यते, सर्वस्वं देयमिति । स एष न विधिः, प्राप्तत्वात् । अनियतप्राप्तस्तु नियम्यते । स चेन्नियम्यते यादृशस्तत्र, तादृश एवेह । तत्र च द्वादशशतं अधिकं वा सर्वस्वं, इहापि तद्वदेव । तस्मान्न न्यूनधनस्य अधिकार इति ।

**अनुग्रहाच्च पादवत् । २० ॥**

**भाष्यं—** चशब्देन अन्वाचयः । इतश्च अधिकं सर्वस्वम् । अधिके हि दीयमाने तदन्तर्गतत्वात् द्वादशशतमपि दत्तं भवति । पादवत् । यथा कार्षापणे दीयमाने पादोऽपि दत्तो भवति, एवमिहापीति ।

**शा—** 'तत्र न्यूनेऽधिके वाऽपि सर्वशब्दोपपत्तितः । उभयोरधिकारः स्यान्न न्यूनाधिकदायिनोः ॥ इदं तु प्रकृतेः प्राप्तं सर्वदानं नियम्यते । तत्र चानतिसिद्ध्यर्थमधिकं सर्वमीरितम् ॥ '

**सोम—** यथा सर्वविश्वजितामविशेषः, एवं सर्वस्वदाने सर्वपुरुषाणामविशेषः इति प्रत्यवस्थानात् **संगतिः** । **सूत्रार्थस्तु—** सर्वस्वधर्मः प्रकृतिविकारः सन् उभयतो न्यूनेऽधिके च स्यादविशेषादिति ।

**वि—** 'न्यूनेऽप्युक्तशतात् किं स्यात् सर्वताऽधिक एव वा ।, संभवादग्रिमो, ऽन्त्यः स्यादानत्यै सर्ववर्णनात् ॥ '

**भाट्ट—** प्रकृतिभूते विश्वजिति द्वादशशतादिन्यूनधनस्यापि सर्वस्वपदवाच्यत्वोपपत्तेः तद्वतोऽप्यधिकारः । **इति प्राप्ते**, प्रकृतौ ज्योतिष्टोमे 'यदि एतावता ऋत्विजो नानमेयुः अपि तु सर्वस्वेन ' इत्यनेन द्वादशशतनाख्यायामानतौ सर्वस्वविधानात् तत्र च तदधिकस्यैव योग्यतया प्राप्तेः, तादृशस्यैवात्र पक्षप्राप्तस्य नियममात्रकरणात् द्वादशशताधिकधनवत एव विश्वजिति अधिकारः ।

**न्यायबिन्दुः—** सर्वस्वं द्वादशशतादूनमपि देयम् । **इति प्राप्ते**, प्रकृतौ पक्षे विहितस्य सर्वस्य इह नियममात्रविधानात्, तत्र च 'यद्येतावता न नमेयुरपि सर्वस्वेन ' इति द्वादशशतादधिकस्यैवोक्तेः, तद्दानमेवेति सिद्धान्तः ।

**मण्डन—** 'तद् द्वादशशतादूर्ध्वम् । ' तत् सर्वस्वम् ।

**शंकर—** 'सर्वस्वं प्राकृताधिकम् । ' ११.

**अधिवपनकालेऽपि समन्त्रक एव विभागः ॥**

**चरुपुरोडाशाः** । यत्र चर्वर्थे पुरोडाशार्थे च व्रीहिनिर्वापादितण्डुलीकरणान्तक्रिया वृत्ता, तत्र तेषां तन्त्रेणाधिवपनस्यासंभवात्तस्मिन्नेव काले विभागः प्रसक्तः । स चामन्त्रक एव कार्यः, प्राकृतकालात् भिन्नकालत्वेन मन्त्राप्रवृत्तेः । साकंप्रस्थाय्ये कुम्भीनो दारुपात्रेषु दोहानां ग्रहणदशायामवदानधर्माणामन्यकालत्वादेव प्रवृत्त्यभावात् । **इति प्राप्ते**, अवदानादिप्रदानान्तैकपदार्थप्रथमावयवरूपहविर्ग्रहणस्याभिक्रमणादितः पूर्वकालिकस्य कुम्भीभिरेव वृत्तत्वात्, दारुपात्राणां होमकरणत्वनिर्वाहकस्य ग्रहणान्तरस्याप्राकृतत्वेन चतुरवदानरूपत्वाभावात्, तत्तदवयवोपस्तरणादेरप्रवृत्तावपि हविर्विभागस्य सामर्थ्यवशेन प्रागेव करणेऽपि प्राकृतत्वानपायात् तदङ्गमन्त्राणां च प्रधानानुसारित्वावश्यंभावात्, पाशुकप्रयाजानामन्यकालत्वेऽपि तन्मन्त्राणामिव प्रवृत्तिः । **संकर्ष.** १।३।२१.

* **अधिवापः** दर्शपूर्णमासयोः । 'अधि च वपते'। **भा.** ३।८।९।१९. अत्र **सत्याषाढः**— 'दृषदि तण्डुलानधिवपति १।५।८२ । त्रिर्यजुषा, तूष्णीं चतुर्थम् ८३ । पिनष्टि ८४ । ' पेषणार्थं दृषदि तण्डुलस्थापनं अधिवापः । **के.** * अधिवापमन्त्रे 'धान्यमसि धिनुहि देवान्'

इत्यत्र शाक्यानामयने दृषदि पेषणाय मांसमावपन् 'मांसमसि धिनुहि देवान्' इति ऊहेत। **वि.** ९।१।१३ वर्णकं २.

* **अधिश्रयणादि-अभिवासनान्तेन** काण्डेन वारुणचतुष्कपालपुरोडाशेषु अनुसमयः कर्तव्यः। **वि.** ५।२।२.

* **अधिषवणफलके** अवभृथदेशे नेतव्ये। एतत् प्रतिपत्तिकर्म। **भा.** ४।२।८।२०–२२. * अधिषवणफलकयोः (सोमाभिषवाधारभूतकाष्ठफलकयोः) उक्थ्यादिषु विकृतिषु संतर्दनं नाम दृढः संश्लेषः कार्यः। **त्रि.** ३।३।११. * अधिषवणफलकयोः संतर्दनं उक्थ्यादिसंस्थासु अहीनादिषु च निविशते, ज्योतिष्टोमात् तु नोत्कर्षः, न च अग्निष्टोमे निवेशः। **भा.** ३।३।११।२४–३१.

* **अधिष्ठानैक्येऽपि व्यपदेशभेदः।** 'सत्यपि द्रव्यैकत्वे सगुणनिर्गुणाश्रयणाद्देवतान्तरत्वम् ( इन्द्रो महेन्द्रः इति )। आह च 'आचार्यो मातुलश्चेति द्रव्यैकत्वेऽपि दृश्यते। अपेक्षाहेतुभेदेन व्यवहारः पृथक्तया॥' **वा.** २।३।५।१७ पृ. ४२४. अत्र **सुधा–** आचार्यशब्दार्थस्य शिष्यमेव प्रति सद्भावेन शिष्यापेक्षत्वात् अपेक्षणीयाभावे चापेक्षाऽनुपपत्तेः अपेक्षणीयः शिष्यः प्रतिसंबन्ध्याचार्यस्य शिष्यापेक्षायां हेतुः। मातुलस्य च भागिनेयापेक्षायां भागिनेयो हेतुः। तद्भेदेन द्रव्यैक्येऽपि पृथक्त्वेन व्यवहारो दृश्यते इति वृद्धश्लोकार्थः। पृ. ६५३–५४.

* **अधीतेऽपि वेदे** धर्मविचारणाय गुरुकुले एवाधिवासः कर्तव्यः। **वि.** १।१।१. * **अधीतवेदो हि** विदितवेदार्थः वेदार्थेषु अधिक्रियते। शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्य अपेक्षितत्वात्। **के.**

* **अधीतेः** गुरुमुखोच्चारणानूच्चारणानुकूलक्रिया अर्थः। **मणि.** पृ १४०.

* **'अधीत्य स्नायात्'** इति स्मृत्या अध्ययनानन्तरमेव गुरुकुलात् परावर्तनविरोधात् वेदाध्ययनानन्तरं **वेदार्थविचारः न कर्तव्यः इति पूर्वपक्षः। स्मृतौ क्त्वाप्रत्ययः उत्तरकालमात्रपरः न तु अव्यवधानपरः।** तस्मात् वेदार्थविचारः कर्तव्य इति सिद्धान्तः। **भाट्ट.** १।१।१.

* **अध्ययनं** अनारभ्यविधानात् विधेरेव साध्यत्वात्। प्रधानकर्मेदम्। **ऋजु.** पृ. १० * अध्ययनं जपयज्ञपारायणक्रतुज्ञानसिद्धिप्रयोजनम्। **रत्नमाला.** पृ. २८. * अध्ययनं दृष्टे सति नादृष्टाय। **भा.** ९।२।२।१३. * अध्ययनं दृष्टार्थज्ञानार्थम्। **शा.** तर्क. पृ. ६. * अध्ययनं न क्रत्वर्थं न पुरुषार्थं इत्युक्तं तन्त्ररत्ने द्रव्यार्जनवर्णके ( ४।१।२ वर्णकं २ )। **बाल.** पृ. ८१. * अध्ययनं नित्यं क्रत्वनुष्ठानस्य नित्यत्वात्। **वि** ६।२।११. * अध्ययनं नित्यं तत्फलस्य कर्माधिकारस्य आवश्यकत्वात्। असति तस्मिन् नित्यनैमित्तिकाननुष्ठानेन प्रत्यवायात्। सर्वस्यापि वेदस्याध्ययनं आवश्यकपारायणाद्युपयोगित्वादावश्यकमेव। **रत्नमाला.** पृ. २८. * अध्ययनं नियमापूर्वद्वारैव क्रतुज्ञानसाधनं सत् अशेषक्रतुजन्यापूर्वजनकं भवति। **त्रि.** १।५।१, * अध्ययनं स्त्रियाः नास्ति। 'अध्ययनरहितया स्त्रिया तत् ( उपस्थानादि ) अनुष्ठातुमशक्यत्वात्।' ६।१।६. * यत्तावत् उपाध्याय' शिष्यसंनिधौ अधीते, तत् ( **अध्ययनं** ) ग्रहणार्थम्। यत् शिष्यः, तद्धारणार्थम्। ग्रहणधारणे प्रयोगार्थे। **भा.** ९।२।२।१३. * यमनियमादिभिः अध्ययनं पुरुषार्थत्वेन अवगतम्। **वा.** ६।१।१।३७. * **अध्ययनस्य**, कर्मणां नित्यतया फलतो नित्यत्वम्। **मणि.** पृ. ४. * अध्ययनस्य ज्योतिष्टोमाद्यर्थत्वाभावेऽपि तादृशज्ञानार्थत्वात् क्रत्वर्थत्वम्। **भाट्ट.** ४।१।२ पृ. ८२. * अध्ययनस्य तु न स्वर्गः फलं, दृष्टप्रयोजनस्य अनुष्ठेयविज्ञानस्य संभवात्। **वि.** ६।२।११. * अध्ययनस्य दृष्टार्थता। **भा.** १।५।१।१ पृ. ६. * अध्ययनस्य नित्यत्वसिद्धिः 'अत ऊर्ध्वं पतन्त्येते' इति वाक्येन 'अनधीयाना व्रात्या भवन्ति' इति निषेधेन च। **मणि.** पृ. ४–५. * **अध्ययने** अध्यापने चानध्यायः। न तु नित्यादिकर्मसु मन्त्रपाठे अनध्यायः। **वि.** १२।३।७.

* **अध्ययनधर्माः** पर्वणि नाध्येयं, वाते नाध्येयं, स्तनयित्नौ नाध्येय इत्यादयः। नैते कर्मणि प्रयोगधर्माः। **भा.** १२।३।७।१८–१९. * अध्ययनधर्मा भूमिभोजनादयः

कार्यगतवाक्याध्ययनादौ । वि. २।४।२, * **अध्ययननियमा**जन्यस्यापूर्वस्य अशेषक्रतुजन्यमपूर्वं कल्पकम् । १।१।१. * **अध्ययनप्रकरण**पठितस्यापि अध्यायानध्यायादिधर्मजातस्य स्वरूपे कार्ये च अनुपयोगात् अध्ययनेनैव फलवत्कर्मावबोधं भावयेत् इति अध्ययननियमस्य अनारभ्यविहितस्यापि अध्ययनजनितज्ञानोपस्थापितज्ञेयकर्माङ्गतया सामर्थ्योपबृंहितेन संनिधिना अवधारणात् तद्-द्वारा कर्माङ्गत्वावगतेः अमावास्यादौ कर्माङ्गभूतयाज्यानुवाक्यादिमन्त्रोच्चारणं न कार्यं इति 'मन्त्राणां कर्मसंयोगे स्वधर्मेण प्रयोगः स्यात् धर्मस्य तन्निमित्तत्वात् ' ( १२।३।७।१८ ) इति सूत्रेण पूर्वपक्षयित्वा प्रकरणेन अध्ययनाङ्गतया अवधारितस्य अन्यार्थत्वे प्रमाणाभावात् अविघ्नपरिसमाप्त्यर्थत्वेन तदुपयोगसंभवात् कर्माङ्गत्वाभावेन कर्मकाले अध्यायानध्यायादिधर्मानादरेण अमावास्यादावपि कर्माङ्गमन्त्रोच्चारणं कार्यं इति 'विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात् कर्मार्थत्वात् प्रयोगस्य' ( १९ ) इति सूत्रेण सिद्धान्तयिष्यते । **सु. पृ.** ५२. * न च तस्य ( वेदस्य ) **अध्ययनमात्रात्** तत्रभवन्तो याज्ञिकाः फलं समामनन्ति । यदपि समामनन्तीव तत्रापि ' द्रव्यसंस्कारकर्मसु ' ( ४।३।१।१ ) इत्यर्थवादतां वक्ष्यति । **भा.** १।१।१।१ पृ. ६. * **अध्ययनविधिः** अपूर्वविधिः दृष्टार्थश्च । **बाल. पृ.** २२. * अध्ययनविधिः एव सर्वस्य पुरुषार्थपर्यवसायित्वे प्रमाणं इति स्वमतेन वार्तिककारः प्रतिपादयति । **सु. पृ.** २१. वार्तिकं चेत्थम् । " सकलस्य तावत् वेदस्य ' स्वाध्यायोऽध्येतव्यः' इति अध्ययनभावना विधीयते । तत्र किं भावयेत् इत्यपेक्षायां अध्ययनं इत्यागतमपि पुरुषप्रवर्तनाशक्तियुक्तेन विधायकेन अपुरुषार्थसाध्यायां भावनायां प्रवर्तनाशक्तिप्रसक्तेः तदंशात् निराक्रियते । ततश्च अध्ययनेन इत्यविरोधात् संनिधेश्च करणांशे निविशते । 'तेन किं' इत्यपेक्षिते 'यत् शक्यते' इत्युपबन्धात् अक्षरग्रहणं इत्यापतति । तस्यापि अपुरुषार्थत्वात् ' तेन किं ' इति पदावधारणं इत्युपतिष्ठते । तेनापि पदार्थज्ञानं, तेन वाक्यार्थज्ञानं, तेन च अनुष्ठानं, अनुष्ठानेन स्वर्गादिफलप्राप्तिः इत्येतावति प्राप्ते निराकाङ्क्षीभवति । " इति । **वा.** १।२।१।७ पृ. ११३.

* अध्ययनविधिः कर्तृनिर्देशः कार्यपेक्षात् उपसन्नानेव कर्तॄन् गृह्णाति इति अध्ययनविधिरनुष्ठानाध्ययनजन्यार्थज्ञानं त्रैवर्णिकानामेव विधत्ते । **मणि. पृ.** ४. * अध्ययनविधिः त्रैवर्णिकानामेव न शूद्रस्य । **वि.** ३।१।७. * अध्ययनविधिः प्रतिग्रहादिनियमवत् अध्ययननियमार्थः । तस्य निषेधेषु अध्ययनेनैव निषेधार्थज्ञानम् प्रत्येयात् इति कल्पनात् साफल्यम् । इति पितृचरणाः । **मणि. पृ.** ३. * अध्ययनविधिः स्वर्गार्थः विश्वजिन्न्यायेन इति जिज्ञासाधिकरणे पूर्वपक्षः । दृष्टे संभवति अदृष्टकल्पनाऽनवकाशात् फलवदर्थावबोधरूपदृष्टार्थः इति सिद्धान्तः । **बाल. पृ.** २. * अध्ययनविधिः ' स्वाध्यायोऽध्येतव्यः ' इति अक्षरग्रहणमात्रपर्यवसायी इति केचिन्मन्यन्ते । अर्थज्ञानरूपदृष्टप्रयोजनायेदमध्ययनं विधीयते । अर्थज्ञानं च विचारमन्तरेण न संभवति । ततो विधिः विचारशास्त्रस्य प्रयोजकः इति सिद्धान्तः । **वि.** १।१।१. * **अध्ययनविधिना** अध्ययनेनैव वेदोपादाननियम उक्तः । **सु. पृ.** ६९०. * **अध्ययनविधेः** प्रयोजनवदर्थावबोधन दृष्टं प्रयोजनम् । अक्षरग्रहणार्थत्वे तु अदृष्टार्थता स्यात् । **कणिका. पृ.** २७१. * अध्ययनविधेः फलं अर्थज्ञानपर्यन्तं गुरुकुलवासः विचारकरणं च । **मणि. पृ.** ४. * योऽयं अग्निहोत्रादिषु अधीतवेदानां त्रैवर्णिकानामेव अधिकारः न अनधीतवेदानां शूद्राणां इति अधिकारनियमः, स प्रयोजनं **अध्ययनविधेः** । **शा. पृ.** ६. * **अध्ययनविधौ** स्वाध्यायं इति द्वितीयया गुणत्वमेव लक्ष्यते अन्यथा स्वाध्याये वाजपेयवाक्ये इव यागे गुणविधौ वैरूप्यापत्तेः इति **भवदेवः** । तन्न ' श्रूयमाणस्य वाक्यस्य न्यूनाधिकविकल्पने । लक्षणावाक्यभेदादिदोषो नानुमिते त्वसौ ॥ ' इति **वार्तिकोक्त**न्यायेन परिहारात् । **बाल. पृ.** २.

* **अध्ययनविधिप्रयुक्तमध्ययनं नाध्यापनविधिप्रयुक्तम्** ॥ आचार्यकरणविधिप्रयुक्तस्य हि स्वाध्यायाध्ययनस्य प्रयोजनापेक्षायां पुरुषान्तरगामित्वेन बहिरङ्गमपि प्रथमावगतत्वेन तत्सिद्धिरेवास्य प्रयोजनं युक्तं, न त्वर्थज्ञानं पश्चाद्भावित्वात् । तेन अन्यार्थत्वाद्वेदाध्ययनस्य अविवक्षितोऽर्थः । अविवक्षितश्च न निर्णेतव्यः, प्रयोजनाभावात् ।

अकर्तव्ये च निर्णये न विचारः कर्तव्य इति तदात्मकं मीमांसाशास्त्रमनर्थकत्वादनारम्भणीयमिति । कथं आचार्यकरणविधिप्रयुक्तमध्ययनं, न स्वविधिप्रयुक्तं ? उच्यते—

**न स्वाध्यायविधावस्ति नियोज्यस्तत्र चासति ।**
**न प्रयोजकता युक्ता प्रयाजादिनियोगवत् ॥ ७ ॥**

नह्यनधिकारस्य विधेर्विषयानुष्ठापकत्वं संभवति प्रयाजादिनियोगवत् । न च स्वाध्यायाध्ययनविधावधिकारी श्रूयते । तस्मान्नास्य प्रयोजकत्वं संभवति ।

**न च कल्पयितुं शक्यो नियोज्यः पितृयज्ञवत् ।**
**अकल्पितेऽपि यत्तस्मिन्ननुष्ठानं हि सिध्यति । ८ ॥**

अश्रूयमाणोऽपि नियोज्यः पितृयज्ञादिवत् कल्प्यते इति । तन्न । अकल्पितेऽपि नियोज्ये यस्मादनुष्ठानं सिध्यति । सिद्धे तस्मिन्नासौ कल्पयितुं शक्यते अनुपपत्त्यभावात् । अनुष्ठानाधीनसिद्धिर्हि नियोगः तत्सिद्ध्यर्थमनुष्ठातारमाक्षिप्य अनधिकारिणः अनुष्ठातृत्वासंभवात्, अनियोज्यस्य चाधिकारासंभवान्नियोज्यं कल्पयति । यदा तु विध्यन्तरानुष्ठापितेनैव विषयेण स्वात्मलाभं पश्यति, तदा अनुपपत्त्यभावान्न नियोज्यं कल्पयति, प्रयाजादिनियोगवत् । संभवति चेह आचार्यकरणविध्यनुष्ठापितेनैवात्मविषयेणाध्ययननियोगसिद्धिरिति न नियोज्यकल्पनासंभवः । कथं पुनराचार्यकरणविधिरध्ययनं प्रयुङ्क्ते । तदुच्यते । उपनीयाध्यापनादाचार्यकं भवति, न चाध्यापनमध्ययनमन्तरेण संभवतीति तदाक्षिपति । उपनयनमपि क्त्वाप्रत्ययेनाध्यापनसमानकर्तृकमवगम्यमानं तदङ्गमेव विज्ञायते । तस्य च द्वारापेक्षायामुपनेयासत्तिरेव द्वारं लिङ्गादवगम्यते । उपनेयोऽपि नाकिंचित्करः अङ्गमिति तद्व्यापारापेक्षायामुपनयनं प्रक्रम्याधीतमध्ययनं अध्यापनोपकारित्वेन तद्व्यापारत्वेनाध्यवसीयते । एवं च वेदाध्ययनं कुर्वन् माणवकः अध्यापनस्योपकरोतीत्यवगमात् तद्विषयमेवाध्ययनमाचार्यकसाधनमिति तद्द्वारेण सर्वस्याध्ययनाङ्गस्य व्रतादेस्तत एवानुष्ठानसिद्धिः । तस्मादाचार्यकरणविधिसिद्धिप्रयोजनत्वादध्ययनस्य अविवक्षितस्वार्थत्वाद्वेदस्य, न तदर्थनिर्णयार्थं मीमांसाशास्त्रमारब्धव्यमिति ( पूर्वः पक्षः ) ।

**सिद्धान्तस्तु** सत्यं आचार्यकरणविधिप्रयुक्तमध्ययनं, न तु तत्सिद्धिरेवास्य प्रयोजनं बहिरङ्गत्वात् । कर्तृगामित्वेनान्तरङ्गत्वात् अर्थज्ञानं प्रयोजनत्वेन स्वीक्रियते । **ननु** प्रथमावगतत्वेन प्रयोजनापेक्षमध्ययनं आचार्यकमेव तावत् स्वीकरोति । स्वीकृते च तस्मिन्नपेक्षाभावात् पश्चादवगतमर्थज्ञानमन्तरङ्गमपि न प्रयोजनं भवितुमर्हति । **मैवम्,** प्रथममाचार्यकस्य प्रयोजनत्वापरिकल्पनात्, यद्यकल्पिते तस्मिन् अध्ययनस्यानुष्ठानं न सिध्येत् तर्हि तत् कल्प्येत, न त्वेतदस्ति अकल्पितेऽपि तस्मिन्ननुष्ठानलाभात् । अनुष्ठिते त्वध्ययने प्रयोजनापेक्षायामन्तरङ्गत्वादर्थज्ञानमेवाङ्गीक्रियते । **ननु** नियोग एव शब्दावगतः प्रयोजनं स्यान्नार्थज्ञानम् । **न,** अर्थज्ञानस्यापि प्रतीयमानस्य त्यागायोगात् । तेनोभयोरपि प्रयोजनत्वं युक्तमवगतत्वात् अर्थज्ञानस्य नियोगस्य च । तत्रार्थज्ञानरूपं प्रयोजनं न विचारमन्तरेणाध्ययनेन संपादयितुं शक्यते इति अध्यनविधिरेव तत्सिद्ध्यर्थं विचारमाक्षिपति, इति तदात्मकं शास्त्रमारब्धव्यमिति ।

**अत्राभिधीयते नायं विचार उपपद्यते ।**
**अध्यापनप्रयुक्ते हि स्वाध्यायाध्ययने सति । ९ ॥**
**विचारो युज्यते कर्तुं न तत् तेन प्रयुज्यते ।**
**स्वकीयेनैव विधिना प्रयोक्तुं शक्यते यतः । १० ॥**

यदि ह्यध्ययनमध्यापनविधिप्रयुक्तमभविष्यत्, ततः किं तत्सिद्धिरेवास्य प्रयोजनं, उतार्थज्ञानमिति विचार उपापत्स्यत, न तु तत्प्रयुक्तं, स्वकीयेनैव विधिना प्रयुक्तिसंभवात् ।

**नियोज्याभावतो यत्तु प्रयोक्तृत्वनिवारणम् ।**
**अध्यापनेऽपि तत् तुल्यं न हि तत्राप्यसौ श्रुतः । ११ ॥**

नियोज्याभावान्नाध्ययनविधिरध्ययनस्य प्रयोजको भवितुं क्षमते इति यदुक्तं, तदध्यापनविधावपि तुल्यम् । नहि 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इत्यत्र ' उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥ ' इत्यत्र कश्चिन्नियोज्यः श्रुतः, तेनाध्यापनेऽपि न तावत् प्रयोजकत्वं स्यात्, कुत एवाध्ययने ।

अथाचार्यककामस्य नियोज्यत्वं प्रकल्प्यते ।
ज्ञानकामस्य किं नैवमन्यत्रापि प्रकल्प्यते ॥ १२ ॥

यदि ह्यध्यापनविधावाचार्यककामः अश्रुतो नियोज्यः कल्प्यते, तर्ह्यध्ययनविधावपि अर्थज्ञानकामस्य कल्पना तुल्यैव। **ननु** नार्थज्ञानकामः संभवति यो नियुज्यते। ज्ञातस्तावदर्थो ज्ञातत्वादेव न ज्ञातुमिष्यते, नाप्यज्ञातेऽर्थे ज्ञानेच्छा संभवति। कथं हि बुद्धयनारूढं 'अहमिमं जिज्ञासेय' इति ज्ञातुमाशंसीत । तस्मान्नार्थज्ञानकामस्य नियोज्यता संभवतीति। **तदुच्यते**। अहो बत भवान् आत्मानं शिष्यान् सकलं च लोकमभिसंधातुमुद्युक्तः। कथं हि दुर्गवर्त्मगामिनं दस्युसरीसृपकण्टकव्यालव्याघ्रकण्ठीरवादिसदसद्भावजिज्ञासया तत्रतत्र दृष्टिं चालयन्तमात्मानं वेदार्थबुभुत्सया वा आत्मानमुपधावतः शिष्यान् प्रियादिसद्भावजिज्ञासया तंतमपवरकादिदेशमवलोकयमानं शास्त्रश्रवणपुस्तकनिरीक्षणादिषु च तत्तदर्थज्ञानार्थं घटमानं सकलं च लोकमनभिसंधाय ज्ञानेच्छापह्नवः शक्यते कर्तुम्। अथवा अस्य नेदृशो निह्नवो विस्मयपदम्। अयं ह्यागोपालं सर्वलोकप्रसिद्धं द्विचन्द्रादिज्ञानं धर्माधर्मानुष्ठानस्य चार्थानर्थहेतुत्वं निह्नुते। तानेव तु वयं शोचामः, ये एवं वेदार्थबुभुत्सयोपधावन्तो बुभुत्सा नाम नास्तीति सकललोकविपरीतमभिदधानं न विजहति। सूत्रकारश्च कथं हि विहाय सुमनःसदृशीं जिज्ञासां कर्तव्यत्वेन प्रतिपादयति, भाष्यकारेणापि चैषा प्रसिद्धा अप्रसिद्धत्वेनाक्षिप्य समाहिता। **कथं** पुनः समाधानम्? **उच्यते**। यद्यपि नात्यन्तापरिज्ञातोऽर्थो ज्ञातुमिष्यते, नापि सर्वात्मना ज्ञातः, तथापि केन चिदात्मना ज्ञातः, केन चिदात्मना जिज्ञास्यते, तथा दर्शनात्। यथोद्भिदादिपदं गुणकर्मान्यतराभिधायित्वेनावगतं विशेषरूपेण जिज्ञास्यते। यथा च लोके कुड्यादिव्यवहिते देशे छायाचलनादिना वस्तुसत्तामात्रमवगम्य गवाश्वादिविशेषं जिज्ञास्यते, तथा धर्माधर्मौ अर्थानर्थहेतुत्वमात्रेण वृद्धेभ्यः पित्रादिभ्योऽवगम्य विशेषरूपेणापरिज्ञातयोस्तयोः हानोपादानाशक्तेः तत्परिज्ञानेच्छा संभवतीति युक्तमेवैतत् 'ज्ञानकामस्य नियोज्यत्वं, धर्माधर्मज्ञानकामः स्वाध्यायमधीयीत' इति।

यस्तु वदति न वयं ज्ञानेच्छामनुभवामहे, तस्याः सर्वलोकप्रसिद्धत्वेनाशक्यनिह्नवत्वात्। इष्टानिष्टप्राप्तिपरिहारोपायज्ञानं हि सर्वैः प्रार्थ्यते, कस्तत्र विप्रतिपद्यते। वेदार्थज्ञाने तु नास्ति काम इत्युच्यते। यदि हि सकलस्य वेदार्थस्येष्टानिष्टप्राप्तिपरिहारहेतुता भवेत्, ततस्तज्ज्ञानं पुरुषेणार्थ्येत। न त्वसावस्ति, नैमित्तिकनिषेधाधिकारयोर्विध्यनुष्ठानमात्रपरिनिष्ठितत्वात्। तस्मान्नार्थज्ञानकामस्य नियोज्यत्वमिति। **स वक्तव्यः** किमिदानीं नैमित्तिकवाक्यार्थज्ञानमनपेक्षितमेव। यद्येवं, तर्हि पिकनेमकाकदशनविमर्शसदृशं किं सर्वत्र शक्तौ प्रवृत्तिः स्यात् अपि वाऽप्येकदेशे, तथा च कालमपि किमनादृत्य यजस्वेत्येव यष्टव्यं उत काले एव, मुख्याभावे द्रव्यान्तरं प्रतिनिधेयं उत न, तच्च सदृशमसदृशमित्यादि न कर्तव्यं स्यात्। निर्णयार्थत्वाद्विमर्शस्य, तदर्थस्य चानिर्णिनीषितत्वात्। अतोऽवदयनसत्यपि फले विध्यर्थानुष्ठानसिद्ध्यर्थमेव तद्वाक्यार्थज्ञानमपेक्षितव्यमित्यभ्युपगन्तव्यमिति युक्तमर्थज्ञानकामस्य नियोज्यत्वमिति। यद्येवं तर्हि प्रागेव वेदाध्ययनाद्धर्मजिज्ञासोत्पादात् 'अथातो धर्मजिज्ञासा' इत्यनुपपन्नं स्यात्, न जिज्ञासाभेदात्। यथाह,

जिज्ञासैकोपनीतस्य द्वितीया पठितश्रुतेः।
ज्ञातवेदाङ्गकस्यान्या या मीमांसापुरःसरा। १३ ॥ इति।

प्रथमं तावद्धर्माधर्मौ ज्ञातव्याविति वृद्धेभ्यः श्रुत्वा तज्ज्ञातुमिच्छन् स्वाध्यायाध्ययनविधिना तादर्थ्येन विहितमध्ययनमपि तेभ्य एवावधार्य अधीते वेदं, ततः अव्युत्पन्नस्य अधीतादपि वेदादर्थज्ञानानुदयात् किमनेनोच्यते इति पुनरन्यादृशी जिज्ञासा जायते, तद्वशेन च व्युत्पत्त्युपाये निगमनिरुक्तव्याकरणादिश्रवणे यतते, ततश्च पदार्थज्ञानाद्वाक्यार्थं प्रतीयमानो न्यायानवधारणात् संशयितो भवति, ततः पुनर्वाक्यार्थविशेषजिज्ञासा भवति, तदिदं पश्चात्तनं जिज्ञासाद्वयमभिप्रेत्य अथातो धर्मजिज्ञासेत्युक्तम्। यथोक्तं भाष्यकारेण न जिज्ञासामात्राभिप्रायेणेदमुच्यते, किन्तु 'तादृशीं धर्मजिज्ञासामधिकृत्यायमथशब्दं प्रयुक्तवानाचार्यः, या वेदाध्ययनमन्तरेण न संभवति' इति। प्रामाण्याप्रामाण्यजिज्ञासा तु यद्यपि वेदाध्ययनात्

प्रागपि संभवति, तथापि अध्ययनकालानियतिभयात् पश्चादेव करिष्यते। तदलमतिदूरं गत्वा। सिद्धं तावदर्थज्ञानकामस्याध्ययननियोज्यत्वमिति। प्रत्युताध्यापने एव नियोज्यो न संभवति, आचार्यकस्य सामान्यतोऽपि प्रागस्माद्वचनादनवगमादिति अनन्तरमेव वक्ष्यामः।

**अथानियोगजन्यत्वान्नियोज्यस्य विशेषणम्।**
**न युक्तमर्थविज्ञानं तुल्यमाचार्यकेऽपि तत्।१४॥**

यदेव हि नियोगफलं तदेव काम्यमानतया नियोज्यमवच्छेत्तुमलं तृप्तिविमोकादिवत्। ज्ञानं तु विषयभूताध्ययनफलं, न नियोगजन्यमिति न तत्कामस्य नियोज्यत्वं संभवतीति चेत्, तर्ह्यनेनैव हेतुना आचार्यकमपि न नियोज्यविशेषणं स्यात्, तस्यापि विषयफलत्वात्। किंच,

**प्रमाणान्तरविज्ञाते कामनोत्पद्यते प्रिये।**
**आचार्यकं तु न ज्ञातं मानेनान्येन केन चित्। १५॥**

आहवनीयादिवदलौकिकमाचार्यकं प्रमाणान्तरेणानवगतं अध्यापनविधायकेनैव वचनेनावगम्यते, इति भवतां दर्शनम्। न चानवगते कामना संभवतीति न तत्कामस्य नियोज्यत्वसंभवः। अनेनैव तु वचनेन ज्ञात्वा काम्यते इत्याश्रीयमाणे परस्पराश्रयदोषापत्तिः।

**सिद्धं तत्काममुद्दिश्य विधिरेष प्रवर्तते।**
**विधावस्मिन् प्रवृत्ते च तत्कामस्य निरूपणम्। १६॥**

स्यादेतत्—

**अधिकारादनुष्ठानं विद्यते स त्विहापि च।**
**असत्यपि नियोज्यत्वे तद्धि साक्षान्न साधनम्। १७॥**

नियोगं प्रति हि नियोज्यता, नासौ साक्षाद्विषयानुष्ठानसाधनं, किंतु नियोज्यत्वेन संबद्धस्य पुरुषस्य नियोगः कर्तव्यो भवति। स एव हि नियोज्यः, यो नियोगं ममेदं कार्यमिति बुध्यते। यस्य च नियोगः कर्तव्यस्तस्य च तत्साधने कर्मण्यधिकारो भवति, स्वकार्यसाधनत्वात्, अधिकाराच्चानुष्ठानम्। यत्र चान्तरेणापि नियोज्यत्वमधिकारो भवत्यवगतः, तत्र तत एवानुष्ठानसिद्धेः किं नियोज्यत्वेन। विद्यते चाध्यापनेऽधिकारः, आचार्यकसाधनत्वात्। आचार्यकसाधनत्वेनाध्यापने वचनेन प्रतिपादिते तदर्थिनस्तत्र अग्न्यर्थिन इवाधाने अनुष्ठानसिद्धिः। तदाश्रितानुष्ठानेनैवाध्ययनेन लब्धात्मकः अध्ययननियोगो न नियोज्यं परिकल्पयतीति। एवं तर्हि—

**अधिकारादनुष्ठानसिद्धेरध्ययनस्य च।**
**अध्यापनप्रयुक्तत्ववाचोयुक्तिरनर्थिका॥ १८॥**

विनापि विनियोज्यत्वं अर्थज्ञानसाधने अध्ययने स्वाधिकारादेव तर्हि तदर्थिनः अनुष्ठानसिद्धेरध्यापनप्रयुक्तत्वानुपपत्तिः। भवद्भिरपि चेष्यते एवाध्ययनेऽधिकारः। नियोज्यत्वमात्रं तु नेष्यते। न तावता परप्रयुक्तत्वमनुष्ठाने संभवति, स्वकीयादेवाधिकारादनुष्ठानलाभात्। सत्यपि च नियोज्ये फलसाधने कर्मणि तत एवानुष्ठानं, न नियोगात् कामाधिकारवत्। फलं चासत्यपि नियोज्ये साधनानुष्ठानं प्रयोक्तुं क्षममिति किं नियोज्यसदसद्भावविचारेण। यत्र तु नियोज्याधीनैव फलावगतिः विश्वजिदादौ, तत्र भवतु नियोज्यापेक्षा, अत्र तु अन्तरेणापि नियोज्यमर्थज्ञानसाधनत्वेनाध्ययनमवगम्यते इति तत एवानुष्ठानसिद्धेर्नाध्ययनस्याध्यापनप्रयुक्तत्वसंभवः। ततश्च—

**अप्रयोजकता तुल्या नियोज्याभावतो द्वयोः।**
**अधिकारात् प्रयोक्तृत्वं समानमुभयोरपि।१९॥**

यदि नियोज्याभावादप्रयोजकत्वमध्ययनविधेः, ततोऽध्यापनविधेरपि तदभावादप्रयोजकत्वं भवति। अथाधिकारसद्भावात् तस्य प्रयोजकत्वं, अध्ययनविधेरपि तर्हि तत्सद्भावात् प्रयोजकत्वं युक्तमित्युभयोरपि तुल्यत्वात् नाध्यापनविधिप्रयुक्तत्वमध्ययनस्य संभवति।

**विचारस्य प्रयुक्तिश्च नाचार्यकविधानतः।**
**स्वेनैव त्वधिकारेण तद्वदध्ययनस्य सा॥ २०॥**

आचार्यकमध्यापनसाध्यमध्ययनमात्रमाक्षिपेत् न विचारं, विचारमन्तरेणाप्यात्मलाभात्। तेनावश्यमध्ययनजन्येनैवाधिकारेण विचारमन्तरेणानुपपद्यमानेन तत्प्रयुक्तिरास्थेया। तद्वदेवाध्ययनस्यापि तेनैव प्रयुक्तिः संभवतीति न प्रयोजकान्तरं मृग्यम्। येन हि फलेनार्थज्ञानाख्येनेतिकर्तव्यताभूतो विचारः प्रयुज्यते, प्रयुज्यतेतरामनेन करणभूतमध्ययनम्। **अथोच्येत** अध्यापन-

विधिरेव विचारस्यापि प्रयोजकः, स हि विशिष्टप्रयोजनाध्ययनगोचरमध्यापनं विदधत् तत्सिद्ध्यर्थं तादृशमध्ययनं प्रयुङ्क्ते, तादृशत्वं चाध्ययनस्य विचारमन्तरेणानुपपन्नमिति तेनैवासौ आक्षिप्यते इति ।

**तदयुक्तं विशिष्टस्य यद्यप्यध्ययनस्य सः ।**
**अनुष्ठानं प्रयुङ्क्ते न ज्ञानस्यानङ्गभावतः । २१॥**

यद्यपि उपनयनद्वारेणाध्ययनं प्रयुञ्जानोऽध्यापनविधिः उपनयनप्रक्रमाधीतस्वाध्यायोऽध्येतव्यइत्येतद्वाक्यविहितं यदर्थज्ञानार्थमध्ययनं, तस्यैवानुष्ठानं प्रयुङ्क्ते, तथापि तत्स्वरूपमात्रमेवोपकारकत्वात् प्रयुङ्क्ते, न त्वर्थज्ञानानुष्ठानं अनुपकारकत्वात् । यदि तु अर्थज्ञानमध्ययनाङ्गं भवेत्ततोऽध्ययनप्रयोजकेन विधिना तद्द्वारेण प्रयुज्येत ज्योतिष्टोमविधिनेव दीक्षणीयाद्वारेण वाङ्नियमः । न तज्ज्ञानमध्ययनाङ्गं, अध्ययनमेव तु तदङ्गं, न चाङ्गद्वारेण प्रधानं प्रयोक्तुं शक्यम् । यश्च ज्ञानं न प्रयुङ्क्ते, नासौ तत्सिद्ध्यर्थं विचारं प्रयोक्तुमर्हति । ननु यद्यपि न ज्ञानमङ्गं विचारस्त्वङ्गमेव, सत्यं, न त्वध्ययनाङ्गस्यापि तद्द्वारेणाध्यापनेन प्रयुक्तिसंभवः ।

**यदि तेन विना न स्यात्प्रधानस्यात्मसंभवः ।**
**प्रयोजकस्य चासिद्धिस्ततस्तेन प्रयुज्यते । २२॥**
**अन्यथाऽपि तु तल्लाभे स्वात्मलाभे च सिध्यति ।**
**नैव कार्यान्तराङ्गस्य प्रयुक्तिस्तेन सिध्यति । २३॥**

अध्यापनं ह्यध्ययनमन्तरेणानुपपद्यमानं तत्स्वरूपमात्रमेव तावत् साक्षात्प्रयुङ्क्ते, न तु तदङ्गम् । यदि त्वङ्गेन विना प्रधानभूतमध्ययनमेव न संभवेत्, ततस्तद्द्वारेणाङ्गमपि प्रयुञ्जीत पशुपूर्वमिव यूपद्वारेण छेदनादीन् । यदि चाङ्गशून्येनाध्ययनेनाध्यापनं न सिध्येत् यत्किञ्चित्स्वाङ्गोपेतमेवाध्ययनमध्यापनोपकारि स्यात्, ततोऽध्यापनविधिनैवाध्ययनाङ्गं प्रयुज्येत ज्योतिष्टोमेनेव वाङ्नियमः । न त्वेतदुभयमप्यस्ति, विनाऽप्यङ्गेनाध्ययनस्वरूपसिद्धेः, अध्यापनस्य तत्स्वरूपमात्रेणात्मलाभात् । तेन यद्यप्यविघ्नपरिसमाप्त्युपयोगितया अध्ययनस्वरूपोपयोगिनां व्रतादीनां सकलवेदाध्यापनविषयेणाचार्यकविधिना अविघ्नपरिसमाप्त्याकाङ्क्षिणा प्रयुक्तिसंभवः, तथापि न विचारस्तेनाक्षिप्यते, कार्यान्तराङ्गत्वात् । अर्थज्ञानाख्यं हि कार्यान्तरं नाध्ययनोऽध्ययनस्य विचारोऽङ्गं, नाध्यापनोपकारिनः । तेन नाध्यापनविधिना प्रयुज्यते, किंतु अध्ययनजन्यैवाधिकारेण । ततश्च—

**तद्वदध्ययनस्यापि तत एव प्रयुक्तितः ।**
**नाध्यापनविधानेन प्रयुक्तिरुपपद्यते ॥ २४ ॥**

अथ मन्यसे सत्यमध्ययनेऽस्यैवाधिकारः किंतु—

**अधीयानेन बालत्वात्तदा त्वेष न गम्यते ।**
**न चाविज्ञायमानेन प्रयुक्तिरुपपद्यते । २५ ॥**
**समाप्ताध्ययनेनासौ व्युत्पन्नेनावगम्यते ।**
**ज्ञातेन च तदा तेन विचारोऽपि प्रयुज्यते । २६॥**

ज्ञायमानो ह्यधिकारः प्रयोजको भवति, न चाध्ययनावस्थायां बालेन माणवकेन असाववगन्तुं शक्यते । अतो नाध्ययनं स्वाधिकारप्रयुक्तं, विद्वदधिकाराध्यापनवशेनैवानुष्ठितेऽध्ययने साङ्गे व्युत्पन्नेन माणवकेन वेदार्थावगमात् । अध्ययने त्वान्ननो नासौ अवगन्तुं शक्यते, वेदार्थावगमवशादध्ययने स्वाधिकारोऽवगम्यते, अवगतेन च तेन विचारः प्रयुज्यते इति, **तदयुक्तम्** ।

**हितकारिभिरेवासौ ज्ञायमानः प्रवर्तकः ।**
**कर्त्राऽविज्ञायमानोऽपि नैव स्यादप्रयोजकः । २७ ॥**

**यथैवातुरार्थं** भिषग्भिर्हितकारिभिरौषधसेवाफलवेदिभिः आतुरापेक्षितफलान्तरप्रतिपादनेन तत्फलप्रदर्शनेन वा साम्ना वा उपायेनानुष्ठाप्यमानस्यौषधस्य स्वाधिकारः एव प्रयोजकः तदभिसंधिप्रवृत्तत्वात् । औषधफलमेव ह्यारोग्यमभिसंधाय भिषज्यन्तस्तमनुष्ठापयन्ति, तथा अत्राप्यध्ययनसाध्यमधिकारमवगच्छद्भिर्हितकारिभिः पित्रादिभिरनुष्ठाप्यमानस्याध्ययनस्य तत्प्रयुक्तिता उपपद्यते । यदि चावश्यमनुष्ठात्रैव प्रयोजको ज्ञातव्यः, ततोऽध्यापनविधिरपि बालेन तेनाज्ञायमानः प्रयोजको न स्यात् । अतो यथा तस्य ग्राहकावगतस्य प्रयोजकत्वं, एवमध्ययनसाध्यस्यापि अधिकारस्य भविष्यति, इति नाध्यापनविधिप्रयुक्तमध्ययनम् । यदि च तत्प्रयुक्तं स्यात्ततो नार्थज्ञानार्थता सिध्येत् । नहि प्रतिलब्धानुष्ठानस्य प्रयोजनापेक्षा समस्ति, यदन्तरङ्गत्वादर्थज्ञानस्य प्रयोजनत्वं स्यात् । **ननु** अधिकारपर्यवसायिनः सर्वे विधय इति अध्ययन-

विधिनाऽपि तथा भवितव्यम् । न, प्रयोजनानुष्ठानलाभात् । अनुष्ठानार्थं ह्यधिकारोऽपेक्ष्यते । लब्धे तु तस्मिन् न तदपेक्षायां निबन्धनमस्ति ।

स्यादेतत्, अध्ययनविधिरधिकारपर्यवसायी विधित्वादग्निहोत्रादिविधिवत् इति । तदयुक्तम् । अध्ययनविधिरधिकारविधुरः तदभावेऽपि लब्धात्मकत्वात्, यस्य विधेर्यदभावेऽपि आत्मलाभो भवति स तद्विधुरः, नैमित्तिकविधिरिव फलविधुरः, इति प्रतिहेतुसद्भावात् । यदि चानुपपत्त्यभावेऽपि अन्यत्र 'इष्टमिति कृत्वाऽधिकारः कल्प्यते, ततः फलपर्यन्तत्वं काम्येषु इष्टमिति नैमित्तिकनिषेधविध्योरपि तत्पर्यन्तत्वं स्यात्, न चैतदिष्टं भवता । तस्मान्नाध्ययनेऽधिकारसिद्धिः । अथ विधेः अतत्परत्वेऽपि दृष्टत्वादर्थज्ञानं प्रयोजनमङ्गीक्रियते, हन्त अतत्परत्वेऽध्ययनस्याध्यापनपरत्वेन प्रतीयमानस्यार्थस्याविवक्षितत्वात्, अविवक्षितस्य च विचारानर्हत्वात्, अनारभ्यमेव शास्त्रं स्यात् । अथापि कथं चिद्विवक्ष्यते, तथापि विधेरतत्परत्वान्न वैधत्वं विचारस्य सिध्यति । अवैधश्च न वैधं स्नानमुत्क्रष्टुमर्हति । यदि ह्यध्ययनविधिरेवाध्ययनमर्थज्ञानावसानं विदध्यात् ततस्तेन विचारमन्तरेणार्थस्य ज्ञातुमशक्यत्वाद्विचारोऽप्यर्थाक्षिप्तः स्वविरुद्धं स्नानमुत्कर्षेत् । यदा त्वध्ययनमात्रादेव विध्यर्थोऽनुष्ठितः, तदा न विधिस्तावद्विचारानुष्ठानमाक्षिपति । यदि परमुत्तरकर्मानुष्ठानार्थं पुरुषः स्वेच्छया लौकिकेन रूपेणार्थज्ञानोपायेषु उपदेष्टृवचनादिषु प्रवर्तमानः कदा चिद्विचारमपि कुर्यात्, तथा सति कर्मानुष्ठाने समुपस्थिते, सति उपदेष्टृलाभे चासावनुष्ठीयते, ततो नावश्यमध्ययनानन्तरमेवानुष्ठानं सिध्येत्। नन्वध्ययनाङ्गभूतो विचारः, न चानङ्गेन करणेन विधिः सिध्यतीति विधिरेव स्वसिद्ध्यर्थं विचारमनुष्ठापयतीति कथमवैधत्वं विचारस्य। सत्यमध्ययनाङ्गं विचारः, तथापि न विधिसिद्धावुपयुज्यते, अर्थज्ञानाख्यकार्योपयोगित्वात्। न च कार्यान्तरोपयोग्यङ्गं कार्यान्तरेण तदेककरणकेनापि वृष्टिकामापूर्वेणेव सौभरकरणकेनान्नाद्यकामापूर्वोपयोगिसौभराङ्गं ऊर्कूनिधनं प्रयुज्यते । अथ विधिरेवार्थज्ञानार्थाध्ययनसाध्यत्वात् तादृग्विषयसंपत्त्यै विचारमाक्षिपतीत्युच्यते, तदध्यापनविधिप्रयुक्तत्वं विचारस्य निराकुर्वद्भिरस्माभिर्निराकृतम् । यद्यप्यर्थज्ञानार्थमध्ययनं, तथापि न तेन रूपेण विधिसाधनत्वं, स्वरूपेणैव तत्साधनत्वात् । यदन्तरेण विधिर्न सिध्यति, तस्यैवासावनुष्ठानमाक्षिपति, नान्यस्य । यद्यपि विचारमन्तरेण विधिर्न सिध्येत्, तथापि नासौ विचारानुष्ठानमाक्षिपति, नियोज्याभावात् । न ह्यसौ केन चित् पुरुषेण ममेदं कार्यमिति प्रतीयते, तेन न स स्वात्मन्यपि तावन्नरं प्रेरयेत्, कुत एव स्वसिद्ध्युपाये । अत एवाध्ययनेऽप्यनुष्ठापकत्वं न सिध्यति । यस्य हि करणेऽपि नियोज्याभावादनुष्ठापकत्वं न संभवति, तस्य कथमङ्गेषु संभवेत् । तस्मान्न वैधत्वं विचारस्य सिध्यति ।

**स्यादेतत्** अध्ययनविधिरेव अध्ययनस्यार्थात् ज्ञातमर्थज्ञानं प्रयोजनत्वेन स्वीकृत्य तत्सिद्ध्यर्थं विचारमाक्षिपतीति । **तदयुक्तम्** । अध्ययनविधिरर्थात् जातमर्थज्ञानं प्रयोजकत्वेन स्वीकरोतीत्यस्य कोऽर्थः । न तावत्तत्र विनियुङ्क्ते, प्रमाणान्तरत एव तत्साधनताऽवगमात्, अवघातादिवन्नियमविध्यनवगमाच्च । अथ तादर्थ्यमनुमन्यते इत्युच्यते, तन्न अननुमतस्यापि तादर्थ्यस्य लाभात् । यदनुमत्यभावेऽपि यल्लभ्यते तत्तदनुमन्यते, इति हास्यमेतत् । लभ्यते चान्तरेणापि विध्यनुमतिं अध्ययनस्यार्थज्ञानार्थतेति कोऽर्थोऽनुमत्या । तस्मान्न कथंचिद्विचारस्य वैधत्वं सिध्यतीति न तद्बलेन स्नानोत्कर्षः शक्यते कर्तुम्। अध्ययनमात्रेणैव समाप्ते विध्यर्थे सति अनन्तरं 'वेदमधीत्य स्नायात्' इतिस्मृतिबलेन स्नात्वा पश्चाज्ज्योतिष्टोमादिकर्मानुष्ठाने समुपस्थिते तन्निर्णयार्थमुपायान्तरालाभे च विचारोऽपि कदा चिदनुष्ठीयेत वा न वा, इति नाथातो धर्मजिज्ञासेति सूत्रमानन्तर्यप्रतिपादनपरमुपपन्नं स्यात् । तस्मान्नाध्यापनविधिप्रयुक्तमध्ययनमिति ।

कश्चासावध्यापनविधिः, यत्प्रयुक्तमध्ययनम् । **यदुच्येत** 'उपनीय तु यः शिष्यं वेदमध्यापयेद् द्विजः । सकल्पं सरहस्यं च तमाचार्यं प्रचक्षते ॥' इति स्मृत्यनुमितेन उपनीयाध्यापनेनाचार्यकं भावयेदिति एवंरूपं वचनमिति, **तदयुक्तम्**—

**नाध्यापनमिदं वाक्यं विधातुं क्षमते, यतः ।**
**द्रव्यार्जनार्थं प्राप्तत्वाद्यच्छब्देन च संगतेः ।२८।**

 अध्ययनविधिप्रयुक्त

**यथैव** 'एतयाऽन्नाद्यकामं याजयेत्' इति याजयतेः परः श्रूयमाणोऽपि विधिः यागविधिपर एव प्रयोजकव्यापारपरः शब्दो द्रव्यार्जनार्थप्राप्तकर्त्विग्व्यापारानुवाद इति स्थास्यति, **तथा** 'अध्यापयेत्' इत्यध्ययनविधिपरः एव, नाध्यापनविधिपरः, द्रव्यार्जनोपायतयैव प्राप्तत्वात् । उपनयनमप्यध्ययनाङ्गमेव अध्येतृसंस्कारत्वात् । एतेनैव 'अष्टवर्षं ब्राह्मणमुपनयीत तमध्यापयीत' इतिवचनं व्याख्यातम् । ननु तत्रोपनयनस्यात्मनेपदश्रवणात् आचार्यकार्यत्वमवगम्यते । न, अकर्त्रभिप्रायत्वान्नयतेरात्मनेपदविधानस्य । अन्यथा 'स्वरितञितः' इत्यनेनैवाचार्यकसाधनेऽप्यर्थे वर्तमानान्नयतेरात्मनेपदं सिध्यतीति संमाननेतिसूत्रमनर्थकं स्यात् । तथा चाहुः 'अकर्त्रभिप्रायार्थः पुनरारम्भः' इति । तस्मादध्येतृसंस्कारद्वारेणाध्ययनाङ्गमेवोपनयनं अनुषङ्गात् वाजिनमिवामिक्षार्थं दध्यानयनं आचार्यकं साधयति, न तु तदर्थम् । तस्मान्नाचार्यकार्थतया अध्यापनस्य विधायकं वचनमस्ति । किंच, न चालौकिकमाचार्यकं, उपनीय वेदाध्यापयितुराचार्यशब्दो वाचकः पाठकादिवत् । उपनीय तु यः शिष्यमित्यपि शब्दार्थप्रतिपादनपरमेव । तेनाविद्यमानत्वादध्यापनविधेर्न तत्प्रयुक्तमध्ययनम् । अथापि 'विद्यादानेन सुमतिर्ब्रह्मलोके महीयते' इत्यादिभिर्विद्यादानात्मकत्वादध्यापनमपि फलान्तरशेषतया विहितं भवेत्, तथापि तत्र सर्वत्र नियोज्याश्रवणादधिकारमात्रस्य चाध्ययनेऽपि सद्भावात्, विचारस्यावैधत्वप्रसङ्गान्नाध्यापनविधिप्रयुक्तमध्ययनम् ।

**कश्चित्** पुनराह, यद्यप्यध्ययनस्य स्वाधिकारेण प्रयुक्तिः संभवति, तथापि नासावाश्रयितुं युज्यते । तथाहि,

**ज्ञानं नाध्ययनस्य स्यात् स्वमहिम्ना प्रयोजकम् ।**
**तत्साध्यमग्निहोत्रादि तद्द्वारेण प्रयोजकम् ।२९।।**

न ह्यर्थज्ञानं स्वयमपुरुषार्थत्वादध्ययनस्य प्रयोजकं भवितुमर्हति । ज्ञानसाध्यानि तु अग्निहोत्राद्यपूर्वाणि तद्द्वारेण प्रयोजकानि भवन्ति, न तु तेषां ज्ञानमङ्गं किंतूपकारकमात्रम् । आचार्यकस्य तु अध्यापनमङ्गमेव अतस्तत् स्वाङ्गद्वारेणापि प्रयोजकत्वं लभते, अग्निहोत्राद्यपूर्वाणि तूपकारकद्वारेण । न चामिक्षावदङ्गद्वारेणापि प्रयोजकत्वलाभे सति उपकारकद्वारेण वाजिनवत् प्रयोजकत्वं युक्तमङ्गीकर्तुं, तस्मादध्यापनविधिप्रयुक्तमध्ययनमिति । **तदयुक्तम्** । यद्यपि हि,

**न ज्ञानं कर्मणामङ्गं ज्ञानस्याध्ययनं मतम् ।**
**अङ्गं नाध्यापनस्यैतन्न तेनातः प्रयुज्यते ।३०।।**

यद्यपि न कर्माङ्गं ज्ञानं, अध्ययनं तु ज्ञानाङ्गमेव, तेन प्रयुज्यमानमध्ययनं शेषिप्रयुक्तमेव भवति, न त्वध्ययनमङ्गं, अतस्तेन प्रयुक्तमध्ययनं उपकार्यमात्रप्रयुक्तं स्यात्, न शेषिप्रयुक्तम् । तेन शेषिप्रयुक्तत्वे संभवति उपकार्यमात्रप्रयुक्तत्वमयुक्तमिति सुतरां स्वाधिकारप्रयुक्तमध्ययनं नाध्यापनप्रयुक्तम् । यद्यपि ज्ञानं स्वरूपेणापुरुषार्थः, तथापि कर्मानुष्ठानौपयिकत्वात् पुरुषैरर्थ्यते एवेति पुरुषार्थत्वादध्ययनस्य प्रयोजकत्वं संभवत्याचार्यकवत् । तदपि हि स्वरूपेणानभिलषितं दक्षिणालाभसिद्ध्यर्थमेव पुरुषेणार्थ्यते । अतो यथा तस्य प्रयोजकत्वं, एवं ज्ञानस्यापि । नह्यवश्य स्वरूपेणैवार्थितं प्रयोजकमिति नियमः समस्ति, सुखसाधनपशुपुत्रादिवत् फलान्तरसाधनतया अर्थितस्य प्रयोजकत्वाविरोधात् । यद्यपि चाग्निहोत्राद्यपूर्वमेव ज्ञानद्वारेण प्रयोजकं, तथापि तदेव युक्तं नाध्यापनं, पुरुषान्तरगामित्वात् । अध्येतृगाम्येव तु ज्ञानं वा तत्साध्यं वा अग्निहोत्रादि प्रयोजकमध्ययनस्य युक्तम् । **योऽपि** अङ्गद्वारेणाध्यापनविधेः प्रयोजकत्वमुपकारकद्वारेणाग्निहोत्रादीनामिति विशेषोऽभिहितः **सोऽपि** नास्ति । द्वयोरप्यङ्गत्वमुपकारकत्वं च द्वारमेव । तथाहि । अग्निहोत्राद्युपकारकत्वात्तज्ज्ञानं तदङ्गत्वाच्चाध्ययनं प्रयुङ्क्ते । आचार्यकं तु अङ्गत्वादध्यापनं तदुपकारकत्वाच्चाध्ययनं प्रयुङ्क्ते इति क्रमभेदमात्रम् । नैतावता कश्चिद्विशेषः समानपुरुषगामित्वादग्निहोत्रादीनामेव प्रयोजकत्वं नाध्यापनविधेरिति । न चाग्निहोत्रादि प्रयोजकं, ज्ञानमेव तु प्रयोजकमित्युक्तम् । तदेतद्विस्पष्टं प्रपञ्चयिष्यते । **कथं** चाचार्यकविधिः पुरुषान्तरगामी पुरुषान्तरकर्तृकमध्ययनं प्रयुञ्जीत ? समानपुरुषगामिनो हि दर्शपूर्णमासादिविषयः कार्यतया प्रतीयमाना युक्तं यत् तस्यैव पुरुषस्य स्वसाधनेषु प्रयाजादिषु स्वसिद्ध्यर्थमनुष्ठानं प्रयुञ्जते । अन्यसाध्यं तु कार्यमन्यस्य

कथमिवानुष्ठापकं भवेत् । नहि स्वकार्यसाधनादन्यत्र चेतनः प्रवर्तते ।

**यद्यध्यापयितैवास्य स्वाधिकारप्रदर्शनात् ।**
**अनुष्ठापयिता तत्र स्वाधिकारप्रयुक्तता ॥ ३१ ॥**

यद्युच्यते आचार्य एव स्वकार्यसिद्ध्यर्थमध्ययने माणवकं स्वाधिकारप्रदर्शनेन प्रवर्तयतीति । सत्यमेवं, किंतु तथा सति स्वाधिकारः एव तत्र प्रयोजकः स्यान्नाध्यापनविधिः स्थपतीष्टेरिव स्वाधिकारः । सा ह्यनभिज्ञनिषादाधिकाराऽपि द्रव्यार्जनप्रवृत्तैः ऋत्विग्भिरधिकारप्रदर्शनेन निषादेनानुष्ठाप्यमाना स्वाधिकारप्रयुक्तैव, न द्रव्यार्जनप्रयुक्ता तथा अध्ययनमपि ।

**पूर्वपक्षे न शक्यं स्यात् स्वाधिकारप्रदर्शनम् ।**
**नाध्यापनप्रयुक्तत्वमतस्तत्र प्रसिध्यति ॥ ३२ ॥**

भवतु वा अध्यापयित्रा स्वाधिकारप्रदर्शनेनाऽपि माणवकस्यानुष्ठाप्यमानस्य अध्यापनप्रयुक्तत्वम् । न चैतदपि पूर्वपक्षे संभवति । नहि तत्र माणवकस्य कश्चिदधिकारोऽस्ति, यत्प्रदर्शनेनासौ अध्याप्येत, आचार्यकसिद्धिमात्रप्रयोजनत्वादध्ययनस्य पूर्वपक्षे । ननु नियोगसिद्ध्या पूर्वपक्षेऽप्यधिकारः संभवति, न, अकार्यत्वात् । नहि माणवकस्य नियोगः कार्यः, येन तत्सिद्ध्या अधिकारः स्यात्, अनियोज्यत्वात् । नह्यनियोज्यस्य नियोगः कार्यः । अतस्तत्सिद्ध्या नाधिकारसंभवः । अथासत्यपि स्वाधिकारे सामादिनोपायान्तरेण कथं चिदध्याप्येत, तथा सति विश्वजिदादीनामपि कथं चिदार्त्विज्ये प्रवृत्तैरेव ऋत्विग्भिः प्रवर्त्यमानेन यजमानेनानुष्ठानसंभवात् नानुष्ठानसिद्धये अधिकारसिद्ध्यर्थं नियोज्यपरिकल्पनं शक्येत । अथानर्थक्यान्नर्त्विजो यजमानमाह्वयन्ति नह्यसावनधिकारी तेभ्यो दक्षिणां ददातीति, तदत्रापि समानम् । नह्यध्ययनेऽधिक्रियमाणो माणवको दक्षिणादानादि आचार्यस्याचरति (इति न) तल्लिप्सया आचार्यस्याचार्यकमिष्टम् । नह्याचार्यकं पुरुषस्य स्वरूपेणाभिलषितम् । न च पूर्वपक्षे अध्ययनं माणवकमधिकरोतीति नाध्यापनेन प्रयुक्तिः संभवति । पक्षद्वयसाधारणी तत्प्रयुक्तिर्भवद्भिरिष्यते । 'विद्यादानेन सुमतिः' इत्याद्यपि पुरुषार्थज्ञानदानाभिप्रायम् । अन्यथा लौकायतिकशास्त्रार्थज्ञानदानमपि ब्रह्मलोकाय कल्पेत । न चाध्ययनस्य पूर्वपक्षे पुरुषार्थताऽस्तीति, न ब्रह्मलोकप्राप्तिफलविद्यादानविधिवशादपि तस्य प्रयुक्तिः संभवति । तत्सिद्धं नाध्यापनविधिप्रयुक्तमध्ययनमिति नैवं पूर्वपक्षो नरपक्षावुपपन्नाविति । याऽपि किमध्ययनस्याचार्यकमर्थज्ञानं वा प्रयोजनमिति चिन्ता, साऽप्ययुक्ता । किमियं विधिगम्यस्य प्रयोजनस्य चिन्ता, किं वा प्रमाणान्तरगम्यस्य ? न तावत् प्रमाणान्तरगम्यमात्रं शास्त्रे चिन्तनीयम् । उभयोश्च प्रमाणान्तरेणावगम्यमानत्वान्न चिन्तावसरः । न च विधिगम्यचिन्ताऽपि संभवति नहि विधिर्नियोगार्थः । ( **न्यायरत्नमाला.** पृ. १ – ११ )

**तस्माद्वार्तिककारोक्ता गम्भीरा भाष्यसंमता ।**
**स्वाध्यायविधिवाक्यार्थगोचरा नीतिरुच्यते ॥ ३३ ॥**

'स्वाध्यायो ऽध्येतव्यः' इत्यध्ययनावच्छिन्नभावना विधिप्रयुक्ता तव्यप्रत्ययेनाभिहिता । तस्या भाव्यापेक्षायां समानपदोपात्तमपि अध्ययनमपुरुषार्थत्वादुल्लङ्घ्य पुरुषार्थरूपं, किमपि भाव्यमपेक्षमाणाऽवतिष्ठते । तत्र संदेहः किं विश्वजिदादिन्यायेन स्वर्गोऽस्या भाव्यः कल्प्यतां, उताक्षरग्रहणादिपरम्परया साध्यमानं वाक्यार्थज्ञानमेव भाव्यमङ्गीकर्तव्यमिति । **तत्र पूर्वः पक्षः ।**

**नार्थज्ञानार्थता युक्ता प्रमाणान्तरसिद्धितः ।**
**स स्वर्गः स्यादिति न्यायादतः स्वर्गार्थता भवेत् ॥ ३४ ॥**

यद्यपि चाध्ययनानन्तरं अक्षरग्रहणादिपदावधारणपदार्थसंवित्प्रणाडिकया वाक्यार्थज्ञानमुपजायमानं दृश्यते, तच्च फलवत्कर्मानुष्ठानोपयोगितया पुरुषस्याभिलषितं शक्नोत्येव भाव्यभावमनुभवितुम् । न च दृष्टे संभवत्यदृष्टं कल्पयितुं शक्यमित्यर्थज्ञानार्थतैव युक्तेति बुद्धिर्भवतीति, तथाप्यप्राप्ते शास्त्रस्यार्थवत्त्वात् प्रमाणान्तरादेवार्थज्ञानस्याध्ययनभावनाभाव्यतासिद्धेः तादर्थ्ये विध्यानर्थक्यप्रसङ्गात् विश्वजिन्न्यायेन स्वर्गार्थतैव युक्ता । यद्युच्येत—

**प्रमाणान्तरसिद्धेऽपि नियमार्थोऽवहन्तिवत् ।**
**उपपन्नो विधिर्नैवं क्रत्वर्थत्वाद्विना न तत् ॥ ३५ ॥**

प्रमाणान्तरादेवार्थज्ञानार्थतासिद्धावपि अवघातादिवन्नियमार्थत्वात् विधेर्नानर्थक्यमिति चेद्, नैवं युक्तमक्रत्वर्थत्वादध्ययनस्य । अवघातादयो हि क्रतावेव नियम्यन्ते ।

अवघातेनैव निर्वर्त्यमानास्तण्डुलाः क्रत्वपूर्वं साधयन्तीति न तण्डुलस्वरूपे प्रमाणान्तरविरोधात्, प्रस्थप्रतिपेषणनखनिर्लुञ्चनादिना तन्निर्वृत्तिदर्शनात् । एवमिहापि ज्ञानोत्पत्तेरन्तरेणाप्यध्ययनं पुस्तकनिरीक्षणादेरपि संभवात् न तत्स्वरूपे तावन्नियमः संभवति । यदि परमध्ययनानादितज्ज्ञानपूर्वकमेव क्रत्वनुष्ठानमभ्युदयाय घटते इति नियम्येत, तच्च क्रत्वर्थत्वादध्ययनस्यायुक्तं, तन्नियमार्थत्वानुपपत्तेः स्वर्गार्थतैव वरमिति । अथ निर्देशादार्थवादिकमेव फलं युक्तं, अश्रुतौ हि फलस्यानुमानं स्यात् । इह तु 'यंयं क्रतुमधीते तेनतेनास्येष्टं भवति' इति क्रतुफलावाप्तिः । 'यदृचोऽधीते पयसः कुल्याः अस्य पितॄन् स्वधा अभिवहन्ति, पयआहुतिभिरेव तद्देवांस्तर्पयति, ते पितरो देवाश्चैनमध्येतारं तृप्ता आयुरादिभिस्तर्पयन्ति' इति आयुरादिप्राप्तिः । 'यस्तु सम्यग्द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहम् । आहैव स नखाग्रेभ्यः परमं तप्यते तपः ॥' इति तपःफलप्राप्तिरपि श्रूयते एव । तस्मान्न स्वर्गार्थता युक्तेति । **अत्र ब्रूमः,**

**आद्ये त्वध्ययने नैव का चिदस्ति फलश्रुतिः ।**
**धारणे जपयज्ञे च फलश्रुतिरियं यतः ॥ ३६ ॥**

क्रतुफलायुरादिप्राप्तिस्तावत् जपयज्ञाध्ययनगोचरा, धारणाध्ययनगोचरा तु तपःफलप्राप्तिः । आद्ये तु स्वीकरणाध्ययने न किंचित्फलश्रवणमस्ति, यतो निर्देशादश्रुतानुमानं न क्रियेत । चोदकादपि शब्दभावनेतिकर्तव्यताभूतं प्राशस्त्यमात्रं लभ्यते, न त्वायुरादिस्वरूपम् । तस्मात् स्वगार्थत्वादध्ययनस्य अनुवचनमात्रेणैव विचारमन्तरेणैव स्वाध्यायाध्ययनलक्षणशास्त्रार्थसमाप्तेर्न तद्वशेन स्नानोत्कर्षः शक्यते वक्तुं, इत्यध्ययनानन्तरं 'वेदमधीत्य स्नायात्' इति स्मृत्यनुमितश्रुतिवचनबलेन स्नात्वा पश्चात् प्रयोजनवशेन विचारयतु मा वा, न त्वन्यार्थादध्ययनात् प्रतीयमानोऽर्थो न विवक्षित इति कथं विचाराभ्यनुज्ञा । नैष दोषः । अर्थप्रतिपादकस्यापि अदृष्टार्थाध्ययनसंभवात् । यथा तावत् सिद्धान्ते एव 'याजयित्वा प्रतिगृह्य चानशनस्त्रिः स्वाध्यायं वेदमधीयीत' इति प्रायश्चित्तार्थेऽप्यध्ययने विहिते न वेदस्याविवक्षितार्थता आपद्येत, तथा स्वर्गार्थेऽप्यध्ययने द्रष्टव्यम् । नह्यर्थप्रतिपादनसमर्थस्य वाक्यस्य कदाचिददृष्टार्थमुच्चारणं क्वचिद्दृष्टं तावता स्वाभाविकमर्थपरत्वं हीयते । तस्मादिदं नाध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति । अत्रोच्यते—

**दृष्टप्रयोजनाभावे ह्यदृष्टं परिकल्प्यते ।**
**दृष्टमेव त्विह ज्ञानं विधेश्च नियमार्थता ॥ ३७ ॥**

यद्यपि अध्ययनस्यार्थज्ञानार्थता प्रमाणान्तरसिद्धा, तथापि न विधेरानर्थक्यं, नियमार्थत्वात् ।

**अक्रत्वर्थतया यत्तु नियमार्थत्ववारणम् ।**
**तत्प्रयोजनमात्रत्वान्नियमस्य न दूषणम् ॥ ३८ ॥**

यदि हि वाक्यार्थ एव नियमः स्यात्, ततः अर्थज्ञानस्वरूपे नियमायोगात् क्रतौ चातदर्थस्यानियमान्न नियमार्थताऽवकल्पते, न त्वेतदस्ति । अप्राप्तविधिरेवायम् । यावद्धि फलवत्कर्मानुष्ठानोपयोगिज्ञानोपायतया अध्ययनाद्यनुष्ठानं नोत्प्रेक्षितं, तावत् द्विजातीनामनुपनीतानां तत्प्रकमाधीतया 'स्वाध्यायोऽध्येतव्यः' इति प्रत्यक्षश्रुत्या अध्ययनं विधीयते श्रुतेर्लिङ्गाच्छीघ्रं प्रवृत्तेः । विहिते तु तस्मिन् तदापादितज्ञानैरेव लब्धानुष्ठानान्युत्तरकर्माणि 'अवैद्यत्वादभावः कर्मणि स्यात्' (६।१।७।३७) इत्यनेन न्यायेन विद्वांसमधिकृत्य प्रवृत्तानि न तस्य ज्ञानसिद्ध्यर्थमुपायान्तरमाक्षिपन्तीति फलतो नियमभाषा । तद्यथा रशनादानमन्त्रस्य लिङ्गादेवाश्वरशनाङ्गत्वे सिद्धेऽपि प्रत्यक्षश्रुतिविनियोगः परिसंख्याफलम् । नहि तत्र परिसंख्या वाक्यार्थ एव, स्वार्थहानादिप्रसङ्गात्, श्रुतेश्च पूर्वं लिङ्गेन गर्दभरशनायामप्राप्तेः । अतः अप्राप्तविधिरेव फलतः परिसंख्यावाचोयुक्तिः, एवमध्ययनविधावपि नियमवाचोयुक्तिर्द्रष्टव्या । न चैतावता अध्ययनस्य क्रत्वर्थत्वप्रसङ्गः, तदापादितमर्थज्ञानं क्रत्वङ्गं, अध्ययनं तु ज्ञानाङ्गमेव । यथा आधानसाध्यानामग्नीनां क्रत्वर्थत्वेऽपि नाधानस्य 'द्रव्यसंस्कारकर्मकालनिष्पत्तेः प्रयोगस्यातदर्थत्वं' (११।३।१।२) इति न्यायेन क्रत्वर्थत्वं, एवमिहापि द्रष्टव्यम् । एकदेशिभिरपि चाध्ययनविधिगोचराध्यापनविधिप्रयुक्ताध्ययनसंपादितमेव ज्ञानमुत्तरकर्माङ्गमित्यभ्युपगन्तव्यम् । अन्यथा यः कश्चिच्छूद्रोऽपि वैयात्यादध्ययनेनोपायान्तरेण वा क्रत्वर्थं ज्ञानं संपादयेत्, तस्यानिवार्योऽधिकारः स्यात् । तेनाध्ययनविधिविहितोपनीतकर्तृक-

व्रतनियमादीतिकर्तव्यतोपेताध्ययनसंपादितज्ञानवतामेवोत्तर-कर्मस्वधिकारः। तथा सत्यपि नाध्ययनस्य क्रत्वर्थत्वमिति। इदं तावदेकदेशिनामस्माकं च तुल्यमेव। अध्ययनं तु स्वविधिप्रयुक्तमाचार्यककरणविधिप्रयुक्तं वेत्यत्र विवादः। तेनाप्रकरणाधीतत्वान्नापूर्वीयज्ञानार्थतयाऽध्ययनविधानं येन क्रत्वर्थं स्यात्, किं त्वध्ययनापादितं ज्ञानं क्रत्वर्थं इति।

**तत्सिद्धं नियमार्थत्वान्नानर्थक्यं विधेर्भवेत्।**
**तेन दृष्टार्थतालाभादर्थज्ञानार्थता स्थिता। ३९॥**

कथमिदानीमनर्थकानां हुंफडादीनामध्ययनमर्थज्ञानार्थं, कथं च क्षत्रियाद्यधिकाराश्वमेधादिप्रतिपादकस्य वेदभागस्य ब्राह्मणादिभिरर्थज्ञानार्थमध्ययनम्। यद्यपि कथं चिद् ब्राह्मणस्य याजनोपयोगिज्ञानार्थमध्ययनं संभाव्येत, तथापि क्षत्रियवैश्ययोः वैश्यस्तोमाश्वमेधाध्ययनमनर्थकमेवादृष्टार्थं वा। कथं च निषेधवाक्येषु 'नावगुरेन्न हन्यात्' इत्यादिषु नियमवर्णनम्। यदि तावदध्ययनापादितज्ञानवत एवाव-गोरणानुष्ठानं प्रत्यवायकरं नान्यस्येति कल्प्यते, तथा सति अनिष्टफलत्वमेवाध्ययनस्य स्यात्। को हि नाम प्रत्यवायफलकं निषेधवाक्यार्थज्ञानमिच्छेद्, यस्तदर्थम-ध्ययनमनुतिष्ठेत्। अथ निषेधे अननुष्ठानस्य शास्त्रार्थ-त्वात्तद्विषय एवायं नियम इति अध्ययनपूर्वकज्ञानवत एवानुष्ठानं प्रत्यवायपरिहाराय भवति इतरेषां त्वननुष्ठाने-ऽपि नैवासौ परिह्रियते इति, तथा सति अनधीतवेदा-नामननुष्ठाने प्रत्यवायस्यावश्यकत्वाद् अनुष्ठानेऽपि तस्य तावत्त्वात् यथाकामं निषिद्धानुष्ठानं स्यात्। न चैतदिष्टं, अहिंसादीनां सर्ववर्णसाधारणत्वात्। तस्मान्न तत्र नियमोपपत्तिः। कथं च स्वाध्यायाध्ययनवाक्ये नियमः। नहि तदर्थानुष्ठानं तदध्ययनपूर्वकं संभवति, अध्ययनमेव हि वाक्यार्थः। कथं चाध्ययनपूर्वकमध्ययनं संभवति, आत्माश्रयदोषप्रसङ्गात्। अथैवमादिषु अदृष्टार्थमध्ययनं, तथा सति अवैरूप्यात् सर्वत्रैव तथा प्रसज्येत। तस्मान्नार्थज्ञानार्थमध्ययनमिति। अत्राभिधीयते —

**न केवलार्थविज्ञानसिद्धिरस्य प्रयोजनम्।**
**अपेक्षितं दृश्यते यत् सर्वं तत्फलमिष्यते। ४०॥**

यदि ह्यध्ययनस्य केवलमर्थज्ञानं प्रयोजनमस्माभिरि-ष्यते, ततो यथोदाहृतेष्वेषु तदसंभवादुपालम्भः स्यात्, न तु केवलं तत् प्रयोजनम्। यदेव हि विध्यन्तरोपयोग्य-पेक्षितमध्ययनेन साध्यमानं दृश्यते, तत् सर्वमस्य प्रयोज-नम्। तेन यथा क्रतुविधिभिस्तज्ज्ञानमपेक्षितमिति तत् प्रयोजनं, एवं नित्यनैमित्तिकजपयज्ञपारायणादिविधिभिः 'अहरहः स्वाध्यायोऽध्येतव्यः' 'याजयित्वा प्रतिगृह्य चान-श्नन्त्रिः स्वाध्यायं वेदमधीयीत' इत्यादिभिर्वेदस्वरूपावधारण-मपेक्षितव्यमिति, तदपि प्रयोजनम्। तेनाध्ययनोपात्तस्य वेदस्य यथायोगं प्रयोजनकल्पनात् तदनुरोधेन च नियमवर्णनात् ज्योतिष्टोमादिष्वध्ययनार्जितेनैव वेदेन विज्ञातः क्रतुः फलं साधयतीति नियमः। मन्त्रेष्व-ध्ययनोपात्तमन्त्रकृतमेव स्मरणमनुष्ठानाङ्गमिति। द्रुमादिषु अध्ययनोपात्तैरेव गीतिकालोपलक्षणं भवतीति स्तोत्रशस्त्र-जपमात्रोपयोगिषु च तदुपात्तैरेव स्तोत्रादि कार्यमिति। निषेधवाक्येषु च ब्राह्मणादीनां चाश्वमेधादिषु जपयज्ञादि-मात्रोपयोगिषु अध्ययनोपात्तैरेव जपयज्ञादि कर्तव्यमिति। आह च 'यत्र तावद् गुरुसकाशादध्ययने विचारस्तत्र साधारणजपयज्ञक्रतुज्ञानसिद्धिनिराकाङ्क्षत्वान्न कश्चित्फ-लान्तरकल्पनावसरः' इति। अध्ययनविधौ तु तद्विधेय-स्याध्ययनस्य करणांशाध्ययनपूर्वकत्वमात्माश्रयदोषप्रसङ्गान्न संभवतीति तद्विधेयस्यैव विचारस्य इतिकर्तव्यताभूतस्य भवति तत्पूर्वकत्वनियमः। अध्ययनोपात्तैनैवाध्ययनविधिना विचारस्य कर्तव्यतामवगम्य विचारोऽनुष्ठातव्य इति। अत एवाध्ययनविधिनैव विचारस्य कर्तव्यतां विचारा-नुष्ठानात् प्रागेवावगन्तुं शास्त्रादौ अध्ययनविधिवाक्यार्थ-विचारः कृतः। अर्थवादेष्वध्ययनोपात्तैरेवार्थवादैः प्ररोचितं कर्मानुष्ठातव्यमिति। उपनिषत्सु यानि क्रतूपयोगि-कर्तृभोक्तृरूपात्मप्रतिपादकानि वचनानि तैरध्ययनोपात्तै-रेव भूतभौतिकसंघातातिरिक्तं सांपरायिकफलोपभोगयोग्य-मात्मानं ज्ञात्वा क्रतुरनुष्ठेय इति। यानि तु अकर्तृभोक्तृरूपा-त्मप्रतिपादकानि 'अयमात्माऽपहतपाप्मा विजरो विमृत्युः' इत्येवमादीनि, तेषु ज्ञानस्य स्वयमेव 'सर्वांश्च कामानाप्नोति' 'न स पुनरावर्तते' इत्यादिप्रदर्शिताभ्युदयनिःश्रेयसफल-त्वादध्ययनोपात्ताभिरेवोपनिषद्भिः संपादितमात्मज्ञानमभ्यु-दयनिःश्रेयसफलकं भवतीति नियमः। सर्वश्चायं नियमः फलत एव संपन्नः, न तु वाक्यार्थ एवेति द्रष्टव्यम्। न चैवं नाना-

प्रयोजनाङ्गीकरणात् वैरूप्यमध्ययनविधेर्मन्तव्यं, स्वाध्यायसंस्कारभूतेनाध्ययनेन यच्छक्यतेऽपेक्षितं संपादयितुं तत् कुर्यादित्येकयैव वचनभङ्ग्या सर्वार्थलाभेन वैरूप्याभावात्। यदि ह्यध्ययनं स्वाध्यायद्रव्यकं कदा चित् स्यात् प्रधानं कर्म, कदा चिच्च स्वाध्यायसंस्कारः, तदा 'स्वाध्यायोऽध्येतव्यः' इति पदद्वयार्थयोर्गुणप्रधानभावाद्वैरूप्यं स्यात्। न त्वेतदस्ति, सर्वथैवाध्ययनस्य स्वाध्यायप्रधानत्वात्। **कश्चित्त्वाह** न संस्कारत्वमध्ययनस्योपपद्यते, स्वाध्यायस्य भूतभाव्युपयोगाभावात्। नहि तस्यार्थज्ञाने विनियोजकं किंचिदस्ति। न चाध्ययनविधिरेवास्य विनियोजक इति युक्तं, संस्कारविधित्वात्। सक्तुसंस्कारहोमविधिवत् (यथा) सक्तून् संस्कार्यं विनियुङ्क्ते। तेन नाध्ययनस्य संस्कारार्थत्वं संभवति।

तदेतद्भाष्यवार्तिकपरिश्रमविधुरस्यापन्यायशिक्षातमिस्रातिरस्कृतविवेकस्य मीमांसान्यायसौक्ष्म्यानभिज्ञस्य अनुपासितगुरोः मातुः प्रियस्य यत्किंचित्प्रलपितम्। तथाहि,

**स्वाध्यायमात्रपर्यन्ते विनियोगे भवेदयम्।**
**दोषो, ऽर्थज्ञानपर्यन्ते सति सामादिवद्भवेत्॥४१॥**

यदि हि अध्ययनस्य स्वाध्यायसंस्कारमात्रपर्यन्तो विनियोगः स्यात्, तदाऽयं दोषः स्यात्। यदा तु अध्ययनस्याक्षरग्रहणादिपरंपरयाऽर्थज्ञानसाधनस्य दृष्टसामर्थ्यानुसारेण तत्पर्यन्त एव विनियोगः, तदाऽनेनैव विधिना स्वाध्यायस्याप्यर्थज्ञाने विनियोगो लभ्यते। तत्संस्कारद्वारेण तस्यार्थज्ञानजननसामर्थ्यात् किमिति पुनस्तन्मात्रे पर्यवस्यति। तत्तदपि द्वारीकृत्य क्रत्वनुष्ठानं फलं वा यावन्न गच्छति, न अन्यत एव सिद्धत्वात् ज्ञानस्य फलवत्क्रत्वनुष्ठानाङ्गत्वं सामर्थ्यादेव नियमेन सिद्धं, इति न तत्र स्वाध्यायविधेर्नियमेन व्यापारः। अध्ययनादि तु ज्ञानपर्यन्तं न नियमतः सिद्धमिति भवति तत्र विधेरर्थवत्ता। तेन ज्ञानप्रयुक्तमध्ययनं, न तु क्रतुप्रयुक्तमिति तेनाध्ययनेन यथादृष्टसामर्थ्येनार्थज्ञानं कुर्यादित्युक्ते अयमर्थः संपद्यते 'अधीतेन स्वाध्यायेनार्थं जानीयात्' इति। अत एवार्थज्ञानं प्रति उपादेयतया स्वाध्यायस्य संस्कार्यत्वविवक्षा शाखान्तराधिकरणे दर्शिता। **तद्यथा** साम्नः स्तुतौ विनियुक्तस्यापि स्वाभाविक्यक्षरसंस्कारता न हीयते तद्द्वारेणैव स्तुतिसाधनत्वात्, नहि तत्र ऋचां वाक्यान्तरेण स्तुतौ विनियोगोऽस्ति, अथ च तत्संस्कारकत्वमेव तस्या भवति, तथा स्वलिङ्गतो अविनियुक्तेऽपि चरौ 'चरुमुपदधाति' इत्यनेनैव चरूपधाने त्वन्याङ्गत्वा विनियुक्ते तस्य स्वयं स्वर्गनिर्वर्तकत्वाभावात् उपधानेन चरुणा तन्निर्वृत्तिदर्शनात् तद्द्वारेण चरूपधानस्यापि दृष्टार्थत्वे संभवति आरादुपकारकत्वकल्पनाऽयोगात् चरोः स्वत्वाङ्गत्वं उपधानस्य च तत्संस्कारकत्वं भवति। अत एवंजातीयकं स्वभावतः संस्कारकत्वमपि पूर्वविनियुक्तसंस्कार्योद्देशेनाविधानात् कदा चिदर्थकर्माभिधानमपि लभते। अनेनैवाभिप्रायेणोक्तं 'अर्थकर्मण्यपि चोपधानं प्रति प्राधान्यमस्यैव' इति (वा. २।३।७।१८ पृ. ६०५)। न तु परमार्थेनोऽर्थकर्म सामवदेव। अतः संस्कारकर्म। संस्कार्यं तु अनेनैव विनियुक्तं कार्यस्याङ्गमिति। एतेन ऋचां स्तुतौ अविनियोगादनङ्गत्वमभिदधाना उपेक्षणीयाः। तत् सिद्धं नाध्ययनविधेर्वैरूप्यमिति।

नन्वनल्पापि वैरूप्ये नानाप्रयोजनकल्पनमयुक्तं 'एकं वा चोदनैकत्वात्' (४।३।६।१४) इति न्यायात्। स्यादेतत् यदि कल्पनीयं स्यात्, क्लृप्तमेव तु तत्। यथोक्तं बहुप्रयोजनसाधनत्वमध्ययनस्य स्वभावतः, ततश्चाध्ययनेन स्वाध्यायद्वारं यदपेक्षितं शक्यते संपादयितुं तत् संपादयेदित्येकप्रयत्नेनैव सर्वार्थत्वलाभान्न किं चित् गौरवं वैरूप्यं वा। अत एव विधायकानामपि समिदादिवाक्यानां स्मारकत्वमभ्युपगम्यते यत्र मन्त्रः स्मारको न विद्यते, शक्यते हि विधायकैरपि संनिधिदर्शननिमित्तं स्मरणं संपादयितुम्। अस्मिंश्चांशे स्वाध्यायविधिविहितस्य वाक्यक्रमस्य एवंक्रमकैरेव वाक्यैः पदार्थाः स्मर्तव्या इति। नहि विधौ तेषां क्रमेण कार्यमस्ति, स्मरणं तु कुर्वतामेषां क्रमः स्मरणे क्रममाधाय स्मार्यपदार्थानुष्ठानक्रमं फलतीति भवत्यङ्गम्।

**तदेतत् सूत्रकारेण पञ्चमे स्पष्टमीरितम्।**
**क्रत्वेकत्वे परार्थत्वात् तद्व्याख्याभाष्यकृत् स्वयम्॥४२॥**

'क्रत्वेकत्वे परार्थत्वात्' (५।१।४।६) इत्येतत्सूत्रं व्याचक्षाणो भाष्यकारो वक्ष्यति परार्थो हि वेदः यदनेन

शक्यते कर्तुं तस्मै एष समाख्यायते, शक्यते चानेन पदार्थोऽभिधातुं, शक्यते च क्रियाकाले प्रतिपत्तुम्। तस्माद्वेदः पदार्थाश्च ज्ञातुमुपादेयाः क्रियाकाले च प्रतिपत्तुम्। न च गम्यते विशेषो विधातुमयं समाम्नायते न प्रतिपत्तुमिति। अनवगम्यमाने विशेषे उभयार्थमुपादेय इति गम्यते। तत्र प्रतिपत्तुं चानेन क्रमेण शक्यते नान्येन, इति। ( बहुः पाठभेदोऽत्र ) यत्र तु मन्त्रो विद्यते, तत्र तस्यानन्यार्थत्वात्। विधायकस्य तु विधानेनापि कृतार्थत्वान्मन्त्रस्यैव स्मारकत्वम्। अत एव तत्र मन्त्रक्रमेणैव पदार्थानुष्ठानं न विधिक्रमेण, तत्र ब्राह्मणक्रमो जपयज्ञादावुपयुज्यते, तथा क्रत्वन्तरप्रतिपादकानामपीत्यलमतिविस्तरेण। तत्सिद्धं दृष्टार्थत्वेऽपि अध्ययनविधेर्नियमार्थत्वादानर्थक्याभावादर्थज्ञानार्थमध्ययनम्। न चायं नियमो यत् क्रत्वर्थेष्वेव नियमविधिरिति, पुरुषार्थेष्वपि द्रव्यार्जनादिषु नियमविध्यभ्युपगमात्। तेन तद्वन्नियमविधिरर्थवानेव। फलत एव तु पूर्वोक्तनीत्या नियमं न्यायविदो वदन्ति। तस्माज्जपयज्ञपारायणक्रतुज्ञानसिद्धिप्रयोजनमध्ययनम्। अत एव नित्यम्। तत्फलस्य कर्माधिकारस्यावश्यकत्वात्। असति तस्मिन्नित्यनैमित्तिकाननुष्ठानेन प्रत्यवायात्। सर्वस्यापि वेदस्याध्ययनमावश्यकपारायणाद्युपयोगित्वात् आवश्यकमेव। तथा चानधीतवेदस्यानधिकारात् शूद्रवद्भावं स्मरन्ति 'योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्। स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥' 'स शूद्रेण समस्तावद्यावद्वेदे न जायते।' इत्यादिभिः। तस्मादर्थज्ञानार्थत्वादध्ययनस्य, तस्य च विचारमन्तरेणासंभवात्तदनन्तरं धर्मजिज्ञासा कर्तव्येति सिद्धम्।

**आचार्यमतमाश्रित्य श्रीमद्यज्ञात्मसूनुना।**
**पार्थसारथिमिश्रेण प्रयुक्तितिलकः कृतः। ४३॥**

* **अध्ययनविधिविचारः**। अथाक्षरग्रहणादिपरंपरोपजायमानवाक्यार्थज्ञानार्थमध्ययनं विधीयते। ततस्तस्य विचारमन्तरेणासंभवात् अध्ययनविधिनैव अर्थाद्विचारो विहितः, इति गुरुगृहे एवावस्थाय विचारयितव्यो धर्मः। तत्र 'विनापि विधिना ज्ञानलाभान्नहि तदर्थता। कल्प्यस्तु विधिसामर्थ्यात् स्वर्गो विश्वजिदादिवत्॥' स्वाध्यायसंस्कारद्वारेणाध्ययनस्यार्थज्ञानहेतुत्वं विनैव विधिना प्रमाणान्तरेण सिद्धमेवेति तादर्थ्ये विध्यानर्थक्यम्। न चावघातादिविधिवन्नियमार्थत्वम्। अवघातो हि दर्शपूर्णमासापूर्वे नियम्यते अवघातनिष्पन्नैरेव तण्डुलैरपूर्वं सिध्यतीति, न तण्डुलस्वरूपे, प्रमाणान्तरविरोधात्। तद्वदिहापि ज्ञानस्याध्ययनमन्तरेणापि दर्शनात् तत्स्वरूपे नियमासंभवात् क्रत्वपूर्वेष्वेव अध्ययननियमो विधातव्यः, अधीतैरेव वेदैरवगतानि कर्माणि फलदानीति। नचैवं युक्तम्। अक्रत्वर्थत्वादध्ययनस्य, अनारभ्याधीतत्वात् श्रुत्याद्यभावाच्चाक्रत्वर्थत्वम्। तस्माददृष्टार्थमेव स्वाध्यायाध्ययनं, इत्यध्ययनमात्रादेव समाप्ते शास्त्रार्थे गुरुगृहात् समावर्तितव्यम्। इति प्राप्तेऽभिधीयते— 'लभ्यमाने फले दृष्टे नादृष्टपरिकल्पना। विधेश्च नियमार्थत्वान्नानर्थक्यं भविष्यति॥' यदुक्तं—ज्ञानस्वरूपे क्रत्वपूर्वे वा न नियमः संभवतीति, तत्राभिधीयते। नोभयथाऽपि ब्रूमः। कथं तर्हि, योऽयमग्निहोत्रादिषु अधीतवेदानां त्रैवर्णिकानामेवाधिकारो नानधीतवेदानां शूद्राणामित्यधिकारनियमः, स प्रयोजनमध्ययनविधेः। तथाहि असति अध्ययनविधौ अग्निहोत्रादिशास्त्राणि विद्वांसमलभमानानि अविद्वांसमेवाधिकृत्य विद्यामन्तरेणानुष्ठानासंभवाद्विद्यामाक्षिपन्ति अविशेषाच्चतुरो वर्णानधिकुर्युः। सति त्वध्ययनविधौ त्रैवर्णिकानामेव विदुषामधिकारो भवति न तुरीयादेः। तथाहि 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं' इति द्वितीयानिर्देशात् उपनयनसंस्कृतास्त्रैवर्णिकाः 'किमस्माभिः कर्तव्यं' इत्यपेक्षन्ते। तत्संनिधौ चाध्ययनमनिर्दिष्टकर्तृकं विधीयमानं कर्तारमपेक्षते। तत्रापेक्षासंनिधियोग्यत्वैरेवं विज्ञायते 'त्रैवर्णिकैरेवोपनीतैः अक्षरग्रहणेनाध्ययनादिपरंपरया अर्थज्ञानं कर्तव्यं' इति। एवंच फलवदध्ययनकर्तृभूतमाणवकसंस्कारत्वात् उपनयनमध्ययनाङ्गं, अध्ययनमपि दृष्टार्थज्ञानार्थं, अर्थज्ञानं तु अनुष्ठानौपयिकत्वात् प्रसिद्धफलकमेवेति सर्वेषां फलवत्त्वम्। एवंच त्रैवर्णिकेषु विद्वत्सु लब्धेषु नाग्निहोत्रादिविधयश्चतुर्थवर्णस्य विद्यामाक्षिपन्ति, किंतु त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति। सोऽयमधिकारनियमः अपशूद्राधिकरणे ( ६।१।७।२५–३८ ) वक्ष्यमाणोऽध्ययनविधिप्रसादलभ्यः इति फलवानेव विधिः। तेनार्थज्ञानावसानमध्ययनमध्ययनविधिना विधीयते इति विचारमन्तरेण

तदनुपपत्तेरध्ययनविधिरेव विचारमाक्षिपन् तद्विरुद्धं स्मार्तं स्नानं बाधते इति सिद्धमध्ययनानन्तरं धर्मजिज्ञासा कर्तव्येति । शा. १।१।१ पृ. ५–७.

* **अध्ययनविधिविचारः** । ‘स्वाध्यायोऽध्येतव्यः’ इति वेदार्थज्ञानाय अध्ययनविधिः । अत्र हि विधौ कर्मणि तव्यप्रत्ययः । उत्पाद्यत्वं आप्यत्वं संस्कार्यत्वं वा कर्मत्वं यथा ‘घटं करोति’ ‘ग्रामं गच्छति’ ‘व्रीहीन् प्रोक्षति’ इति । अध्ययनं च भावार्थाधिकरण-न्यायेन ( २।१।१।१ वर्णकं २ ) भावनायां करणत्वेन अन्वेति । स्वाध्यायस्य च तेन उत्पाद्यत्वासंभवात् आप्यत्वं संस्कार्यत्वं वा कर्मत्वं भवति । ततश्च ‘अध्ययनेन स्वाध्यायं प्राप्नुयात्’ इति वचनव्यक्तिः, ‘अध्ययनेन स्वाध्यायं संस्कुर्यात्’ इति वा । तत्र अध्ययनेन अवाप्तस्य संस्कृतस्य वा स्वाध्यायस्य स्वतः अपुरुषार्थ-त्वात् फलाकाङ्क्षायां अधीतवेदजन्यधर्मावबोधस्य दृष्टस्य स्वर्गादिसाधनतया फलत्वात्, सति च संभवे अदृष्ट-कल्पनाऽयोगात् तमेव प्रयोजनवदर्थावबोधापरनामधेयं अधीतस्वाध्यायः फलत्वेन गृह्णाति, अनारभ्याधीतस्यापि अध्ययनस्य सामर्थ्यादेव क्रतुविध्याक्षितार्थज्ञाने उपयोग-संभवात् । ततश्च, ‘अधीतेन स्वाध्यायेन अर्थावबोधं भावयेत्’ इति पर्यवसन्नोऽर्थः । तत्र अर्थवादानां वाच्य-विधया धर्मप्रमितिजननशक्त्यभावेऽपि कृत्स्नस्य वेदस्य प्रयोजनवदर्थावबोधपर्यवसानं बोधयता अध्ययनविधिनैव विध्यपेक्षितप्राशस्त्यतात्पर्योन्नयनमुखेन उत्थापितलक्ष्य-विधया तत्प्रतिपादनद्वारा विध्युपयोगात् धर्मप्रामाण्यमुप-पद्यते इति वार्तिकादिग्रन्थेषु स्थितम् । वस्तुतस्तु स्वाध्यायविधिः अक्षरानुपूर्व्यवधारणरूपग्रहणार्थः । अर्थाव-बोधस्तु गृहीतपदपदार्थसंगतिकस्य स्वत एव भवति, न तु तत्र अध्ययनविधेर्व्यापारः, धर्मावबोधान्तत्वे अध्यय-नाकात्स्न्यप्रसङ्गात् । ब्राह्मणस्य राजसूयाद्यभावेन तन्मन्त्र-ब्राह्मणाध्ययनस्य व्यर्थत्वात् । किंच अग्निहोत्रादिलक्षण-वेदार्थस्य अध्ययनात् प्राक् संध्योपासनवत् पित्राद्युपदेशतो ज्ञाने सति ज्ञातत्वादेव तदवबोधस्य काम्यत्वाभावात् फलत्वानुपपत्तिः । ततः प्राक् तदज्ञाने तु न स कामयितुं शक्यः । ज्ञाते एव इच्छानियमात् । **अथ** सामान्यतो ज्ञाते, विशिष्य अज्ञाते तदिच्छा संभवति । विधावुद्देश्यो विशि-ष्यावगतोऽपि औद्देशिकज्ञानस्य न तावता विशेषाय दुर्बो-धकत्वात् च युक्त इति **चेन्न** । अग्निहोत्रादिविशेषज्ञानानां हि न तावत् एकबुद्ध्या विशेषाकारेण उद्देशः, अनन्तत्वात् । सामान्याकारेण उद्देशे च सामान्यज्ञानमेव विधिफलं स्यात्, न तु विशेषज्ञानम् । अतः अर्थावबोधस्य उद्देश्यत्वा-योगात् न फलत्वम् । **न च** अध्ययनविधेः अर्थावबोधान्त-त्वाभावे वेदस्य कथं स्वार्थे तात्पर्यावगमः इति **वाच्यम्** । उपक्रमादिसद्भूतशब्दबलादेव तत्संभवात् । तस्मात् अध्ययनविधिः अक्षरग्रहणमात्रफलक एव । तथा च **पुरुषार्थानुशासनसूत्राणि** वेदभाष्योदाहृतानि ‘बोधान्तत्वे-ऽध्ययनाकात्स्न्यम्’ । ‘सोऽकाम्यः प्राग्बोधभावा-भावयोः’ । ‘उद्देशायोगाच्च’ इत्यादीनि । एवं च व्याक-रणमहाभाष्ये पस्पशाह्निके ‘ब्राह्मणेन निष्कारणो वेदः षडङ्गोऽध्येयो ज्ञेयश्च’ इत्युदाहृतायां श्रुतौ ‘ज्ञेयश्च’ इति पृथक् ज्ञानविधिः अर्थवान् भवति । अध्ययनविधेः बोधान्तत्वे तु तदानर्थक्यं स्पष्टमेव । निष्कारणः– कार्यते अनेन इति कारणं फलम् । दृष्टप्रयोजननिरपेक्षः शिक्षा-व्याकरणादिषडङ्गसहितो वेदः अध्ययनेन ग्राह्यः तदर्थश्च प्रतिपत्तव्यः । सोऽयं धर्मो न दृष्टफलः, नित्य इति यावत् । तदभावे हि प्रत्यवायः स्मर्यते ‘स्थाणुरयं भार-हारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्’ इत्यादिः । **न च** गृहीतपदपदार्थसंगतिकस्य स्वत एव ज्ञानसंभवात् तद्विधिर्व्यर्थ इति **वाच्यम्** । नहि अवश्यं गृहीतपदपदार्थसंगतिकेन भाव्यं इति लोकतो लभ्यं, अव्युत्पन्नानामपि बहुलमुपलम्भात्, पदपदार्थ-संगतिग्रहणमात्रसत्त्वेऽपि अतिगहनवेदार्थज्ञानस्य न्याय-विचारमन्तरा अनुपपत्तेश्च । अतः पदपदार्थसंगति-मधिगम्य न्यायविचारतो यथावत् वेदार्थज्ञानमात्रं नित्य-तया विधीयते । तदपि स्वस्वपित्रादिक्रमागतवेद-भागशाखामात्रस्य, नेतरस्य वेदभागस्य, स्वाध्यायविधौ स्वपदानर्थक्यापातात् । तथा च स्वशाखाया अध्ययनं अर्थ-ज्ञानं च नित्यम् । इतरशाखानां तु अध्ययनं अर्थज्ञानं च क्रतुविधिप्रयुक्तं आर्थिकमेव, न च तत्र स्वाध्यायविधे-र्व्यापारः । एवं च स्वशाखायामपि स्वाधिकृतकर्मविधि-

भागमात्रस्य अर्थज्ञानेनापि कर्मसिद्धिः अप्रत्यूहा । पुरुषस्तु परं प्रत्यवेक्ष्यति इति तृतीये 'ज्ञाते च वाचनं नह्यविद्वान् विहितोऽस्ति' ( ३।८।१८ सू. ) इत्यत्र भाष्यवार्तिकयोः स्पष्टम् । **न च** स्वाध्यायविधिगतस्वशब्दानुसारेण 'वेदोऽध्येयः' इतिवेदशब्दस्य स्वशाखामात्रपरत्वेऽपि 'ज्ञेयः' इत्यंशे वेदशब्दस्य तथा संकोचे मानाभाव इति **वाच्यम्** । अध्येयः इत्यत्र अन्वितस्यैव वेदशब्दस्य स्वशाखामात्रपरतया निश्चितस्य 'ज्ञेयः' इत्यत्रापि अन्वयवशादेव तथा संकोचलाभात् । कृत्स्नवेदार्थज्ञानस्य अध्ययनविधिप्रयुक्तत्वाभावादेव कल्पसूत्रप्रणयनमर्थवत् । उक्तं च **भवस्वामिभाष्ये** 'ब्राह्मणानां बहुत्वात्, एकैकस्यां शाखायां अपरिसमाप्तत्वात्, अर्थस्य च दुर्बोधत्वात् असर्वजनीनत्वाच्च, संक्षेपविवरणार्थं सुखं बुद्ध्वा कर्माण्यनुष्ठाय फलानि सर्वे प्राप्नुयुः इति कल्प आरब्ध आचार्येण' इति ।

किंचैवं 'यो ह वा अविदितार्षेयच्छन्दोदैवतब्राह्मणेन मन्त्रेण याजयति वाऽध्यापयति वा, स्थाणुं वर्च्छति गर्ते वा पद्यते पापीयान् भवति, प्र वा मीयते, यातयामान्यस्य च्छन्दांसि भवन्ति, तस्मादेतानि मन्त्रेमन्त्रे विद्यात्' इति **ताण्डकतलवकारादि**शाखासु मन्त्रप्रतिपाद्यदेवतानां विनियोजकब्राह्मणानां च स्मरणविधानं कृत्स्नवेदार्थज्ञानस्य आवश्यकत्वे अनर्थकं स्यात् । मन्त्रेषु देवतावगमस्तु **कात्यायनादिप्रणीतसर्वानुक्रमणिकादि**ग्रन्थतो वेदार्थज्ञानाभावेऽपि सुलभ एव । विनियोजकब्राह्मणवाक्यज्ञानं च कल्पसूत्रतः सुलभमेव, नानाशाखागतविनियोजकब्राह्मणवाक्यसंग्रहात्मकत्वात् कल्पसूत्राणाम् । 'एवंविदमेवाध्वर्युं कुर्वीत नानेवंविदं' 'एवंविदमेव होतारं कुर्वीत नानेवंविदं' 'एवंविदमेवोद्गातारं कुर्वीत नानेवंविदं' 'एवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदं' इत्यादि **वाजसनेयकादि**शाखागतानि स्रुगादानादिब्राह्मणतदर्थविदामेव अध्वर्य्वादिवरणपराणि च कृत्स्नवेदार्थज्ञानस्य अनावश्यकतां गमयन्ति । अत एव च कल्पसूत्रेषु सर्वाङ्गोपसंहरणाय प्रवृत्तेषु कृत्स्नवेदार्थज्ञानं कर्माधिकारिविशेषणतया नोपनिबद्धम् । **किंच** ब्रह्ममीमांसायां तृतीयचतुर्थाद्याधिकरणे 'शेषत्वात् पुरुषार्थवादो यथाऽन्येष्विति जैमिनिः' इति सूत्रेण ( ३।४।१।२ ) आत्मज्ञानं कर्मशेषभूतकर्तृद्वारा पर्णतादिवत् कर्माङ्गं, 'तरति शोकमात्मवित्' इति फलश्रुतिस्तु अपापश्लोकश्रवणादिवत् अर्थवादः इति जैमिनिमतं पूर्वपक्षतया उद्भाव्य 'तद्वतो विधानात्' ( ३।४।१।६ ब्रसू. ) इति सूत्रान्तरेण 'आचार्यकुलाद्वेदमधीत्य' इति श्रुत्या सकलवेदार्थज्ञानवतः कर्मविधानादपि लिङ्गात् कर्माङ्गं आत्मविद्या इति स्वयं युक्त्यन्तरमुद्भाव्य 'अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात्' ( ३।४।१।८ ब्रसू. ) इति सिद्धान्तमुपक्षिप्य 'अध्ययनमात्रवतः' इति सूत्रेण ( ३।४।१।१२ ब्रसू. ) 'आचार्यकुलाद्वेदमधीत्य' इति वाक्ये वेदाध्ययनमात्रवतः कर्म विधीयते न तु तदर्थज्ञानवतः, येन कृत्स्नवेदार्थज्ञानवतः कर्मविधानात् औपनिषदात्मज्ञानस्य कर्मशेषता स्यात् । क्रतुविधिप्रयुक्तार्थज्ञानं तु आर्थिकत्वात् न कर्माङ्गं व्रीह्यादिविधौ कर्षणादिवत् । एवं च क्रतुविधिभिः यावदुपयुक्तवेदभागमात्रार्थज्ञानस्य अपेक्षणात् न तद्विरुद्धनिर्गुणात्मज्ञानस्य कर्मशेषता युज्यते इत्यास्थितं भगवता **बादरायणेन** । तदेतत् भाष्ये भगवत्पादैः तद्व्याख्यातृभिश्च वाचस्पतिप्रभृतिभिः बहुधा प्रपञ्चितं इति नेह तन्यते । **किंच** 'न प्रथमयज्ञे प्रवृञ्ज्यात्, प्रवृञ्ज्याद्वा' इत्युपक्रम्य 'योऽनूचानः श्रोत्रियः तस्य प्रवृञ्ज्यात्' इति आपस्तम्ब–सत्याषाढ–भारद्वाजाद्युदाहृतबह्वृचब्राह्मणे 'एकां शाखामधीत्य श्रोत्रियो भवति' इतिलक्षितश्रोत्रियस्य, 'साङ्गाध्यायी अनूचानः' इतिलक्षितानूचानस्य च प्रथमयज्ञे प्रवर्ग्यनियमविधानात् अतथाविधस्य प्रथमयज्ञे प्रवर्ग्यानियमविधौ पर्यवसानावगमात् कृत्स्नवेदार्थज्ञानस्य कर्मशेषता दूरापास्ता । ततश्च स्वाध्यायविधिः स्वशाखामात्राध्ययनं प्रयोजयति । 'ज्ञेयश्च' इति विधिरपि स्वशाखामात्रार्थज्ञानस्य प्रयोजकः । तदनुवर्तनोल्लङ्घनयोः पुरुषस्य अभ्युदयप्रत्यवायौ । क्रतुविधयस्तु यावदुपयुक्तवेदतदर्थावगममात्रेणापि कृतार्थाः कृत्स्नवेदतदर्थाधिगमे तावत् नैव व्याप्रियन्ते । एवं च अर्थवादविषये स्वाध्यायविधितः फलवदर्थपर्यवसानालाभात् तेषां विध्युद्देशाकाङ्क्षाऽनुत्था-

नात् विध्यर्थवादानां परस्पराकाङ्क्षावशात् एकवाक्यत्वं इति सिद्धान्तो वार्तिककाराद्युक्तः अनुपपन्नः ।

अर्थवादानां स्तुतिपरतया विध्येकवाक्यता तु अन्यतराकाङ्क्षयैव उपपाद्या । तथाहि । यथा 'रक्तः पटो भवति' इति वाक्ये 'पटो भवति' इत्येतावति निराकाङ्क्षेऽपि 'रक्तः' इत्यस्य भवतिक्रियाऽन्वयं विना आनर्थक्यापत्त्या संनिधिपाठवैयर्थ्यापत्त्या च पटवाक्यस्य रक्तपदे आकाङ्क्षोत्थितौ पटविशेषणसमर्पकतया रक्तपदं पटवाक्यान्तर्भावमापद्यते, तथा अर्थवादानां स्वार्थतो निराकाङ्क्षत्वेऽपि विधिप्रत्ययगम्यायाः शब्दभावनायाः अंशत्रयमपेक्षमाणायाः विधिप्रत्ययत एव भाव्यांशं पुरुषप्रवृत्तिं, करणांशं शक्तिग्रहादिकं च व्याकरणादितो लब्धवत्याः, तृतीयांशं स्तुतिं अपेक्षमाणायाः स्तुतिलाभमन्तरा अनुपपत्त्या विध्युद्देशसंनिध्याम्नानवैयर्थ्यापत्त्या च अर्थवादानां विध्युद्देशाकाङ्क्षा उत्तिष्ठति । तद्वशाच्च लक्षणया तेषां स्तुतिपरत्वं इति भाष्यानुयायी सुगमः पन्थाः । **किंच** 'औषधं पिब शिखा ते वर्धिष्यते' इत्यादिलौकिकवाक्येष्विव 'स आत्मनो वपामुदक्खिदत्' 'गावो वा एतत् सत्रमासत' इत्याद्यर्थवादवाक्येष्वपि असद्वृत्तावलम्बनेन केवलविधेयस्तुतिपरत्वं, न तु स्वार्थपरत्वमपि, तथा सति अप्रामाण्यप्रसङ्गात् । नहि वेदे मात्रामात्रस्यापि आनर्थक्यमिष्यते । तथा च 'तत्सामान्यादितरेषु तथात्वं' इति न्यायेन (१।२।२।२३) तदितरेषामपि 'वायुर्वै क्षेपिष्ठा' इत्याद्यर्थवादानां न स्वार्थपरत्वम् । किंतु जहत्स्वार्थलक्षणया केवलविधेयस्तुतिपरत्वं इति प्रच्छन्नबौद्धाः केचित् मीमांसकंमन्याः ( प्राभाकराः ) संगिरन्ते । वैदिकशिरोमणयो वार्तिककृतस्तु सर्वेष्वपि अर्थवादवाक्येषु अवयवार्थानतिक्रमेणैव अजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम् ( प्रतिपादयन्ति ) । 'स आत्मनो वपां' इत्यत्रापि सर्गादौ परमेश्वर एव स्वमहिम्ना पशुरूपं अन्यदेकं स्वीकृत्य तद्वपोत्कर्तनेन कर्म प्रायुङ्क्त इत्येवं प्रकारेण सर्वत्र स्वार्थे सत्यता उन्नेया । 'आत्मा वा इदमेक एवाग्र आसीत्' 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च' इत्याद्यर्थवादवाक्यैः अचिन्त्यशक्तिकपरमेश्वरतत्कर्तृकसृष्टिप्रलयाद्यङ्गीकारात् । 'आदित्यो यूपः' इत्यादावपि ऊर्ध्वत्वादिगुणयोगात् स्तावकत्वमिति । तथा च 'विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥' इति मन्यन्ते । उक्तं चैतद् 'गुणवादस्तु' 'रूपात् प्रायात्' 'दूरभूयस्त्वात्' 'स्वपराधात् कर्तुश्च पुत्रदर्शनात्' 'आकालिकेप्सा' इत्यादिभिः अर्थवादाधिकरणसूत्रैः 'स्तेनं मनः' इत्यादिषु गौण्या वृत्त्या अवयवार्थपरत्वस्यापि प्रदर्शनात् । **किंच** अर्थवादानामवयवार्थपरत्वाभावे 'विधिशब्दाश्च' इति मन्त्राधिकरणस्थसूत्रविरोधः । तत्र 'अग्ने गृहपते सुगृहपतिः' इत्यादिमन्त्रेषु 'शतं हिमाः' इत्याद्यंशानां 'शतं त्वा हेमन्तानिन्धिषीय इति वावैतदाह' इत्यादिवाक्यशेषाः मन्त्राणां विवक्षितार्थत्वे लिङ्गं इति व्यवस्थापनात् । **किंच** स्मृतिपादे यववराहाधिकरणविरोधः ( १।३।४।८-९ वा. पृ. २१८-२२० ) । तत्र यववराहवेतसशब्दानां क्रमेण प्रियङ्गुवायसजम्बूषु दीर्घशूकसूकरवञ्जुलेषु च लोके प्रयुज्यमानानामपि वेदे 'यवमयश्चरुर्भवति' 'वाराही उपानहौ उपमुञ्चते' 'वैतसे कटे प्राजापत्यान् संचिनोति' इत्यत्र 'यत्रान्या ओषधयो म्लायन्तेऽथैते मोदमाना इवोत्तिष्ठन्ति' 'वराहं गावोऽनुधावन्ति' 'अप्सुजो वेतसः' इति वाक्यशेषैः दीर्घशूकसूकरवञ्जुलपरत्वव्यवस्थापनात् । **किंच** त्रिवृच्चर्वाद्यधिकरणविरोधः (१।३।४।९ वा. पृ. २२१-२२४)। तत्र अश्ववालशब्दस्य 'यज्ञो वै देवेभ्योऽश्वो भूत्वाऽपाक्रामत्, सोऽपः प्राविशत्, स वालधौ गृहीतः, स वालान् मुक्त्वा विवेश, ते वालाः काशा अभवन्' इति वाक्यशेषेण काशपरताव्यवस्थापनात् । **किंच** चित्राज्याधिकरणविरोधः ( १।४।२।३ ) । तत्र 'यदाजिमयुः तदाज्यानामाज्यत्वं' इत्याज्यशब्दनिर्वचनेन 'आपो वा ऋत्वियमार्छन् तासां वायुः पृष्ठे व्यवर्तत' इत्यार्तवयुक्तानामपां वायुस्पर्शात् रथंतरादीनामुत्पत्तिप्रतिपादनेन स्पर्शजन्यं पृष्ठं इति निर्वचनेन च आज्यपृष्ठशब्दयोर्नामधेयत्वव्यवस्थापनात् । **किंच** 'तद्व्यपदेशं च' ( १।४।४।५ ) इत्यधिकरणविरोधः । तत्र 'यथा ह वै श्येनो निपत्यादत्ते एवमयं द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इति वाक्यशेषसिद्धां गौणीं वृत्तिमाश्रित्य नामधेयत्व-

व्यवस्थापनात्। **किंच** नामधेयपादे 'वैश्वदेवे विकल्प इति चेत्' ( १।४।१०।१३-१६ ) इत्यधिकरणविरोधः। तत्र 'यद्विश्वेदेवाः समयजन्त तद् वैश्वदेवस्य वैश्वदेवत्वं' इति निर्वचनमाश्रित्य वैश्वदेवशब्दस्य नामधेयत्वव्यवस्थापनात्। **किंच** तत्सिद्ध्यधिकरणविरोधः ( १।४।१२।२३-१ )। तत्र 'यजमानः प्रस्तरः' इति यजमानशब्दस्य क्रतुनिर्वर्तकत्वगुणयोगात् गौण्या वृत्त्या प्रस्तरे वृत्तेर्व्यवस्थापनात्। **किंच** जात्यधिकरणविरोधः ( १।४।१२।२३-२ )। तत्र 'अग्निर्वै ब्राह्मणः' इत्यग्निशब्दस्य 'स मुखतस्त्रिवृतं निरमिमीत, तमग्निर्देवताऽन्वसृज्यत, गायत्री छन्दो, रथंतरं साम, ब्राह्मणो मनुष्याणां, अजः पशूनाम्' इति मुखजातत्वगुणयोगात् गौण्या वृत्त्या ब्राह्मणे वृत्तेर्व्यवस्थापनात्। **किंच** सारूप्याधिकरण- ( १।४।१२।२३-३ ) विरोधः। तत्र 'यजमानो यूपः' इति यजमानशब्दस्य ऊर्ध्वत्वगुणयोगात् गौण्या वृत्त्या यूपे वृत्तेर्व्यवस्थापनात्। **किंच** प्रशंसाऽधिकरणविरोधः (१।४।१२।२३-४)। तत्र 'अपशवो वा अन्ये गोअश्वेभ्यः पशवो गोअश्वाः' इति अपशुशब्दस्य अप्राशस्त्यगुणयोगात् गौण्या वृत्त्या अजादिपशुषु वृत्तेर्व्यवस्थापनात्। **किंच** 'संदिग्धेषु वाक्यशेषात्' इत्यधिकरणविरोधः। तत्र 'अक्ताः शर्करा उपदध्यात्' इति विधितः सामान्यावगतं अञ्जनसाधनं 'तेजो घृतं' इति वाक्यशेषात् घृते व्यवतिष्ठते इति व्यवस्थापनात्। एवं अधिकरणान्तराणि बहूनि विरुध्येरन्। विस्तरभिया विरम्यते। तस्मादर्थवादेषु अवयवार्थानतिक्रमेणैव अजहत्स्वार्थलक्षणया प्राशस्त्यपरत्वम्। **कु.** पृ. २७-३१.

* **अध्ययनविधिविचारः**। 'स्वाध्यायोऽध्येतव्यः' इत्यत्र अध्ययनकरणकभावनायां अर्थज्ञानं भाव्यं कर्मानुष्ठानौपयिकत्वेन पुरुषार्थत्वात् इति। **स्वर्गार्थ**त्वमिति चेत् न, अदृष्टार्थत्वापत्तेः। नापि अक्षरग्रहणं, पुरुषार्थाननुबन्धित्वात्, व्याकरणादीनां वेदाङ्गत्वोपपत्तेश्च। अङ्गत्वं कार्यजनने सहकारित्वम्। तच्च वेदाध्ययनस्य अर्थज्ञानार्थत्वे उपपद्यते। व्याकरणादीनां वेदार्थज्ञानोपयोगित्वात्, स्वर्गार्थत्वे वा तदनुपयोगात्। वेदाध्ययनं इष्टजनकदृष्टार्थकं अर्थवद्विषयकविहिताध्ययनत्वात् अङ्गाध्ययनवत् इत्यनुमानात्। अत्र स्तोभाध्ययने व्यभिचारवारणाय अर्थवद्विषयकेति। विषमन्त्राध्ययने व्यभिचारवारणाय विहितेति। अतः अर्थज्ञानं भाव्यम्। न च अर्थज्ञानस्य भाव्यत्वे अनध्यायादिनियमानां स्वरूपकार्ययोः अनुपयोगात् अध्ययनाङ्गत्वानुपपत्तिः, कार्योपयोगाभावेऽपि विघ्ननिवारणार्थत्वेन स्वरूपोपयोगित्वात्, नियमापूर्वे उपयोगाच्च। कर्मार्थकतव्यप्रत्ययस्तु संबन्धमात्रे लाक्षणिकः। 'विषं भुनक्ति' 'सक्तून् जुहोति' इतिवत् अनीप्सितकर्मत्वपरो वा। 'ईप्सितकर्मत्वपरत्वेऽपि स्वाध्यायकर्मकभावनाविशिष्टतत्करणभावनाविधित्वेन एतस्य विधेः अर्थज्ञानभाव्यकत्वं' इति **कश्चित्**।

अत्र स्वाध्यायत्वं स्वशाखात्वम्। स्वत्वं च परंपरया अध्ययनविषयत्वं, अनुष्ठानविषयत्वं च। तेन वेदत्रयान्तर्गतैकैकशाखापरः स्वाध्यायशब्दः। तेन अध्ययनानुष्ठानयोः स्वपरंपरापरिगृहीताध्ययनानुष्ठानविषयत्वोपपत्तिः। तत्र इतिकर्तव्यताऽपेक्षायां योग्यतया विचारः इतिकर्तव्यतात्वेन संबध्यते इति विचारकर्तव्यतासिद्धिः। एवं च 'स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्। योऽर्थज्ञ इत् सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा ॥' ( निरुक्तं १।१८ ) इत्यर्थाभिज्ञतदनभिज्ञनिन्दास्तुती उपपद्येते इति वार्तिकादयः।

**पितृचरणास्तु** प्रोक्षणादिविधौ अपूर्वसाधनत्वेन व्रीहीणामिव अत्रापि प्रयोजनवदर्थज्ञानजनकत्वेन स्वाध्यायस्यैव भाव्यत्वम्। वेदार्थज्ञानस्य द्रव्यप्राप्तिप्रतिष्ठौपयिकत्ववत् कर्मानुष्ठानौपयिकत्वं इति लोकसिद्धं पुरुषार्थत्वं द्रव्यार्जनवत्। अतोऽयं विधिः प्रतिग्रहादिनियमवत् अध्ययननियमार्थः। **ननु** अध्ययननियमस्य निषेधेषु नोपयोगः अध्ययनेनैव विध्यर्थं जानन् विधेयानुष्ठानेन फलमाप्नुयात् इतिवत्, अध्ययनेनैव निषेधार्थं जानन् निषेध्यानुष्ठानेन प्रत्यवेयात् इतिकल्पनायां निषेधाध्ययने प्रवृत्त्ययोगात् **इति चेत्, न**। तत्र अगत्या अध्ययनेनैव निषेधार्थं अजानन् प्रत्यवेयात् इतिकल्पनात्। न चैतावता अदृष्टार्थकत्वं, नापि विनियोगभङ्गः। '**यदेव** विद्यया करोति' इति वाक्यं तु अर्थज्ञानस्य नाङ्गताबोधकं, किंतु श्रद्धोपनिषज्जन्यज्ञानार्थवादः, अस्तु वा

'यत् करोति' इति वैदिककर्मसामान्यमुद्दिश्य विचारपदलक्षितार्थज्ञानविशेषनियमार्थः सन् अङ्गतात्बोधकः व्रीहिविधिवत्, तथापि न क्रत्वपूर्वार्थज्ञानजनकत्वेनैव उद्देश्यता, येन अध्ययनस्य अङ्गता स्यात्, स्याच्च प्रकरणापेक्षा। स्वाध्यायस्योद्देश्यत्वादेव तद्गतैकत्वाविवक्षया 'वेदानधीत्य' इत्यादिस्मृतेः एतन्मूलकत्वे न तन्मूलश्रुत्यन्तरकल्पनागौरवम्। तेन अर्जनविधिवत् अर्थज्ञानजनकत्वेनैव उद्देश्यता इति अर्थज्ञानफलकविधिः विचारकर्तव्यताऽऽक्षेपक इत्याहुः। तेन अर्थज्ञानपर्यन्तं गुरुकुलवासो विचारकरणं च अध्ययनविधेः फलं, क्रत्वधिकारनियमाच्च। तथाहि 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं' इत्यादिवाक्यैः ब्राह्मणाद्यङ्गत्वेन उपनयनं विधीयते। 'अष्टवर्षं ब्राह्मणमुपनयीत' इत्यादिवाक्येषु ब्राह्मणाद्युद्देशेन अष्टवर्षत्वादिविधिः तत्संनिधिपठितश्च अध्ययनविधिः कर्तृसापेक्षः कार्यापेक्षात् उपनीतानेव कर्तॄन् गृह्णाति, इति अध्ययनविधिप्रयुक्ताध्ययनजन्यार्थज्ञाने त्रैवर्णिकानामेव सिद्धे क्रतुविधयोऽपि अर्थज्ञानोपायाक्षेपकत्वाभावलाघवसहकृताः ब्राह्मणादिपराः एव भवन्ति, इति शूद्रादेः उपनीतकर्तृकाध्ययनजन्यार्थज्ञानरूपाङ्गसंपादनासमर्थस्य नधिकारः। 'तमध्यापयीत' इति संनिधिसिद्धोपनीतकर्तृकत्वानुवादः, यद्वा उपनयनाध्यापनवाक्ययोः प्रयोजकव्यापारविवक्षया उपगमनाध्ययनविधिः, 'अष्टवर्षो ब्राह्मण उपगच्छेत् सोऽधीयीत' इति। शाखान्तरीयत्वेन स्वाध्यायविधेर्नानर्थक्यम्। कर्मणां नित्यतया उपनयनाध्ययनयोः फलतो नित्यत्वम्। यद्वा 'ब्रह्मक्षत्रविशां काल औपनायनिकः परः। अत ऊर्ध्वं पतन्त्येते' इतिवाक्येन 'अनधीयाना व्रात्या भवन्ति' इति निषेधेन च नित्यत्वसिद्धिः। **मणि.** पृ. २–५. *** अध्ययनविधिसामर्थ्यलक्षणेन** हेतुना सर्वस्य वेदस्य व्यंशत्वावधारणम्। **सु.** पृ. ३९४. *** अध्ययनादिनियमे** श्रौते उपनीतस्याधिकारो नानुपनीतस्य। **वि.** ६।२।६. *** अध्ययनाधानयोः** निर्ज्ञातत्रैवर्णिककर्तृकत्वात् तदधीनसिद्धीनां कर्मणां अर्थिमात्रसंबन्धावगमेऽपि सति अपशूद्रविषयत्वमेवावतिष्ठते ( तथा च शूद्रस्याधिकारो नास्ति )। **वा.** १।३।१२ पृ. ५३१. *** अध्ययनानन्तरं** मीमांसा कर्तव्या न वा इति संशये धर्मज्ञानार्थं कर्तव्या इति सिद्धान्तः। **भा.** १।१।१।१.

*** अध्यापनम्।** यजनाध्यापनप्रतिग्रहाः ब्राह्मणस्यैव वृत्त्युपायाः स्मृत्युक्ताः। **भा.** १२।४।१९।४३. *** अध्यापने** ग्रहणार्थे 'पर्वणि नाध्येयं' इति निषेधः। **वि.** १२।३।७, *** अध्यापनविधिप्रयुक्तेन** अध्ययनेन प्रयुक्तं धर्मविचारशास्त्रं इति प्राभाकराः। साक्षात् अध्ययनविधिप्रयुक्तमेव तत् इति भाट्टाः। १।१।१. *** अध्यापनादि** अपि मित्रान्तरक्षत्रियवैश्यप्रतियोगित्वात् संदिग्धम्। नवे च दुष्टशूद्रेषु संभाव्यमानत्वात् अनिश्चितम्। **वा.** १।२।१।२ पृ. १०८.

*** अध्याये दशमे** बाध उच्यते। 'निवृत्तित्वाद्विप्रकृष्टो दशमे बाध उच्यते।' **वि.** दशमाध्यायप्रस्तावनायाम्. *** अध्यायनामानि** अध्यायार्थप्रतिपादकानि— 'प्रमाण–भेद–शेषत्व–प्रयुक्ति–क्रमसंज्ञकाः। अधिकारो, ऽतिदेशश्च सामान्येन, विशेषतः। ऊहो, बाधश्च, तन्त्रं च प्रसङ्गश्चोदिताः क्रमात्॥' **वि.** प्रस्तावनायां श्लो. ११–१२. *** अध्यायादिसंबन्धो** हि अर्थद्वारः, न ग्रन्थस्वरूपाश्रयः। **वा.** ३।१।१।१ पृ. ६४९.

**⌛ अध्यारोपापवादन्यायः।** विवेकिनां बुद्धिं आत्मनि अवतारयितुं विशेषणविशेष्यादिप्रबन्धकल्पना यथाप्रतीति सत्तामादाय क्रियते अध्यारोपापवादन्यायेन। **उपदेशसाहस्री** पद्यं. रामतीर्थः १८।१९५. *** अध्यारोपापवादाभ्यां** निष्प्रपञ्चं प्रपञ्चितम्। ननु ब्रह्मणो निर्विशेषत्वात् आनन्दप्रदायकत्वं अनुपपन्नं, अध्यारोपा॰ प्रपञ्चितं इति पूर्वाचार्योक्तन्यायमनुसृत्य प्रपञ्चस्य व्यवहारमात्रसत्यत्वाङ्गीकारात् इति चेन्न। **श्रीकरः** १।१।१५ **ब्रसू.** ***** अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते इति न्यायः। वस्तुन्यवस्त्वारोपोऽध्यारोपः। यथा—असर्पभूतायां रज्जौ सर्पारोपः, अरजतभूतायां शुक्तौ रजतारोपश्चेति वेदान्तिनः। अपवादो नाम रज्जुविवर्तस्य सर्पस्य रज्जुमात्रत्ववद्वस्तुविवर्तस्यावस्तुनोऽज्ञानादेः प्रपञ्चस्य वस्तुमात्रत्वमिति। ताभ्यामध्यारोपापवादाभ्यां निष्प्रपञ्चं सच्चिदानन्दानन्ताद्वयं ब्रह्म प्रपञ्च्यते, विस्तार्यते इति भावः। **साहस्री.** ४७. ***** अध्यारोपापवादाभ्यां॰ इति न्यायेन आद्यं पक्षचतुष्टयं

व्यवहारस्य पारमार्थिकत्वपरं अध्यारोपदृष्ट्या उपन्यस्तम्। अन्त्यः पक्षः अपवाददृष्ट्या व्यवहारापलापेन। **सनत्सुजातीये नीलकण्ठः** २।३६. * शिवत्वप्राप्तिपर्यन्तं भेदः, ततो नदीसमुद्रवत् जीवब्रह्मणोरभेदे न विरोधः। अध्यारोपा० प्रपञ्च्यते इति न्यायातिक्रमणे ज्ञानोत्पत्त्यभावेन मुक्त्यभावप्रसङ्गात्। **श्रीकरः** २।१।८ ब्रसू.

* **अध्याहारः** अभिमतस्य बुद्धिसंनिधानम्। **शा.** १।१।५ पृ. ८२. * अध्याहारः अश्रुतपदान्तरकल्पनम्। **वैद्यनाथः** १।१।१।१ पृ. ३. * अध्याहारः अनुषङ्गेण बाध्यते। यथा 'या ते अग्ने रजाशया' इत्यादौ। **बाल.** पृ. १४४. * अध्याहारः वाक्यदोषः। **वा.** १।४।२।३ पृ. ३२९. * अध्याहारः। 'विश्वजिता यजेत' इत्यत्र स्वर्गकामः इति वा स्वर्गार्थमिति वा, 'सौर्यं चरुं निर्वपेत् ब्रह्मवर्चसकामः' इत्यादौ प्राकृताग्न्यन्वाधानादीतिकर्तव्यतावाचकस्य आग्नेयवत् इति पदस्य, 'प्रतितिष्ठन्ति ह वा य एता रात्रीरुपयन्ति' 'सर्वेभ्यो दर्शपूर्णमासौ' इत्यादौ विधिपदस्य, सौर्यादिविकृतौ आतिदेशिकमन्त्रे अर्थलोपेन निवृत्ताग्निपदके सूर्यादिपदस्य च अध्याहारात् इति व्याख्यातम्। स्वस्थानस्थितस्य पुनरनुसंधानमावृत्तिः। नेदीयःस्थानान्तरस्थस्य अनुसंधानं अनुषङ्गः। दवीयःस्थानान्तरस्थस्य अनुसंधानं अनुवृत्तिः। सा च सिंहावलोकित–मण्डूकप्लुति–गङ्गास्रोतोवदिति त्रिधा। आवृत्त्यनुषङ्गानुवृत्त्यसाधारणलक्षणं श्रुतपदस्यानुसंधानम्। अश्रुतपदस्यानुसंधानं **अध्याहारः**। स च सर्वापेक्षया जघन्यः इति। **मणि.** पृ. ७१. * अध्याहारः 'सं ते प्राणो वातेन' इत्यादौ एकवाक्यत्वार्थं, न तु अनुषङ्गः, व्यवेतत्वात्। **वि.** २।१।१८. * 'अध्याहारोऽश्रुताक्षेपो व्यत्यासो व्यवधिः पदैः। मतो विपरिणामोऽसौ प्रकृतिप्रत्ययान्यता॥ वाक्यान्यथात्वकरणं व्यवधारणकल्पना॥' तत्र अध्याहारोदाहरणं यथा 'विश्वजिता यजेत' इति। अत्र हि चतुर्थे स्वर्गकामपदाध्याहार उक्तः। **बाल** पृ. २६. * विकलवाक्यप्रयोगासंभवात् अवाचकप्रयोगानुपपत्तेश्च अध्याहारः। **वा.** २।१।१५।४७ पृ. ४५०. * भवति च **अध्याहारेणापि** कल्पना। यथा द्वारंद्वारं इत्युक्ते संव्रियतां अपाव्रियतां इति वा। **भा.** ४।३।५।११. **अध्याहारात्** वरमनुषङ्गः। **वि.** २।१।१६. * अध्याहारात् व्यवहितकल्पना ज्यायसी। अध्याहारे हि अश्रुतः शब्दः कल्प्येत, इतरत्र श्रुतेन संबन्धः। **भा.** ७।४।२।१०. * परित्यागात् वरं अध्याहृत्य पूरणम्। अध्याहारादपि स्वपदवृत्तिरेव व्यवहितकल्पनया लघीयसी, धर्ममात्रबाधात्। **वा.** २।३।१।१ पृ. ५७३, * **अध्याहारे** यः समवेतार्थः, सः अध्याह्रियते। ११।४।७।२८. * **अध्याहारदोषः** न्यूनस्य अधिकार्थविषयत्वे यथा–'विश्वजिता यजेत'। अत्र स्वर्गकल्पना अधिका। सा च अगत्या स्वीक्रियते। **बाल.** पृ. ३.

⌛ **अध्याहारन्यायः** 'अनुषङ्गाधिकरणं' इति बिन्दौ द्रष्टव्यः। **भा.** २।१।१६।४८.

⌛ **अध्याहारानुषङ्गन्यायः** 'अनुषङ्गाधिकरणं' इति बिन्दौ द्रष्टव्यः।

* **अध्याहारापेक्षया** लक्षणाया लघुत्वम्। **मणि.** पृ. ११०. * **अध्याहारोदाहरणं** सूत्रे 'शेषभाजां भवेल्लोप इत्यध्याहारकल्पना'। **श्लोवा.** १।१।१।५४. अत्र न्यायरत्नाकरः– दर्शपूर्णमासयोः प्रधानार्थस्य अवदानस्य नाशदोषापहारेषु सत्सु शेषादवदानं पूर्वपक्षीकृत्य हविरन्तरोत्पादने सिद्धान्तिते शेषकार्यार्थं गृहीतस्यावदानस्य नाशादौ सति किं कर्तव्यमित्यपेक्षायां सूत्रं 'अपिवा शेषभाजां स्यात्' (६।४।३ सू.) इति। अत्र किं स्यात् इत्यस्य अनिर्देशात् अनन्तरोक्तं हविरन्तरोत्पादनं संबध्यते, तच्चायुक्तं, नहि प्रतिपत्तिर्द्रव्यं प्रयुङ्क्ते। अथ तद्–व्यावृत्तिसमर्थात् अपिवाशब्दात् तत्रत्यपूर्वपक्षोक्तं शेषावदानं संबध्येत, तदप्ययुक्तम्। शेषस्य प्रतिपत्त्यन्तरगृहीतस्य नष्टावयवपूर्वप्रतिपत्तिसंबन्धाभावात्। तस्मात् लोपः एव अस्यां दशायां युज्यते इति लोपपदाध्याहारः कल्पयिष्यते। इति। * न शक्यं परिपूर्णे वाक्ये अध्याहर्तुम्। **भा.** ४।३।५।१०.

⌛ **अध्यूध्नी तु होतुस्त्र्यङ्गवदिडाभक्षविकारः स्यात्।** १०।७।४।१२॥

सिद्धान्तसूत्रम्। तुशब्दः संशयनिरासार्थः। अग्नीषोमीये पशौ शेषभक्षे अध्यूध्नी शिश्नरूपः एव होतुः

स्यात् न संशयः । अध्यूध्नी इडाभक्षविकारः स्यात् इतरस्य इडाभक्षस्य विकारः बाधः स्यात् । अध्यूध्नी-भिन्ना इडा होतुर्नास्तीत्यर्थः । व्यङ्गवत् । यथा अनिज्या-शेषैः त्रिभिरङ्गैः इज्याशेषाणि अङ्गानि बाध्यन्ते तद्वत् । अध्यूध्नी नाम शिश्नत्वो भाग इति के चित् । ऊधसः उपरि वर्तमानाः स्तनभागरूपा इत्यन्ये । यद्यपि पुंस्त्वशोः ऊधसः स्तनस्यापि चाभावः तथापि तस्याग्नीये मांस-पिण्डे तात्पर्यम् ।

**शेषे वा समवैति, तस्माद्रथवन्नियमः स्यात् ।१३॥**

वाशब्दः पक्षं व्यावर्तयति । अध्यूध्नी न इडाभक्ष-विकारः । सा शेषे समवैति 'अनस्थिभिरिडां वर्ध-यन्ति' इति तस्याः इडायां हरणं प्राप्तम् । तस्मात् होतु-र्भागे तस्या नियमः स्यात् होत्रे एव हरन्ति नान्यस्मै, होत्रे अन्यं भक्षं तु कुर्वन्त्येव इति । रथवत् । यथा, 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति रथस्य अध्वर्युभागे नियमः तद्वत् । इति पूर्वः पक्षः ।

**अशास्त्रत्वात्तु नैवं स्यात् । १४ ॥**

तुशब्दः नियमपूर्वपक्षव्यावृत्त्यर्थः । एवं न स्यात् अध्यूध्न्याः होतृभागे नियमो न स्यात् । अशास्त्रत्वात् तादृशस्य शास्त्रस्य अभावात् । अध्यूध्नी इडायामप्राप्ता 'अथ यद्यत् परिशिष्यते तत्समवत्तधान्यामानयति, यद् हृदयं प्रास्यति, जिह्वां, वक्षः, स्तनिम, वनिष्ठुं' इत्यत्र अध्यूध्न्याः कीर्तनाभावात् । तस्मात् सा होतृहरणमुद्दिश्य विधीयते अध्यूध्नीमेव होत्रे हरन्ति नान्यत् इति । ततश्च इडाभक्षविकारः इति सिद्धान्तः ।

**अपिवा दानमात्रं स्याद्, भक्षशब्दानभिसंयो-गात् । १५ ॥**

अपिवा इति सिद्धान्तस्य व्यावृत्तिः । अध्यूध्नी न इडाभक्षविकारः किंतु तस्याः होत्रे दानमात्रं स्यात् । भक्ष-शब्दानभिसंयोगात् । भक्षशब्देन भक्षेण तस्याः अभि-संयोगस्य संबन्धस्य अभावात् । सा हि अपूर्वा विधीयते न भक्षार्था । भक्षशब्दानभिसंयोगात् भक्षशब्दाभिसंयो-गस्य अभावात् । तस्मान्न भक्षविकारः, नापि नियमः इति तटस्थशङ्का ।

**दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् । १६ ॥**

तुशब्दः दानपक्षस्य व्यावृत्त्यर्थः । अध्यूध्न्याः न दानम् । दातुः अविद्यमानत्वात् । यजमानेन अन्तर्वेदि अग्नीषो-मीयः पशुः संकल्पितः । ततश्च शेषं प्रति यजमानस्य होत्रा अविशिष्टत्वात् । यथा होता न प्रभुः तथा यजमा-नोऽपि । अप्रभुत्वमिदानीं अविशिष्टम् । शेषं प्रति अवि-शिष्टत्वात् दातुः अविद्यमानत्वं, तस्मात् अध्यूध्नी होतुः इडाभक्षविकारः स्यात् । होत्रे अध्यूध्नी एव, नान्यत् इडागतं किं चित् । इति सिद्धान्तः । के.

☞ **अध्यूध्नीन्यायः** । अग्नीषोमीये पशौ अध्यूध्न्या होतुः कृत्स्नेडाभक्षस्य निवृत्तिः ॥

**अध्यूध्नी तु होतुरुत्यङ्गवदिडाभक्षविकारः स्यात् । १०।७।४।१२ ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमा-म्नायते 'अध्यूध्नीं होत्रे हरन्ति' इति । तत्रायमर्थः सांशयिकः किमध्यूध्नी होतृभक्षस्य विकार उताविकारः, होतुर्नियम्यते इति । कथं विकारः स्यात्, कथं नियम्यते इति ? यदि अध्यूध्नी विधीयते 'होत्रे हरन्ति' इत्ये-तदनूद्य, ततो विकारः । अथ अध्यूध्नीमुद्दिश्य होत्रे हरन्ति इति विधीयते, ततो नियमः । किं प्राप्तं ? होतुः भक्षस्य विकारः स्यात् । कुतः ? अपूर्वा अध्यूध्नी अदैवत-शेषत्वात् इडाभक्षे न प्राप्ता, सा न शक्याऽनुवदितुम् । अतो विधीयते होतृभागहरणे । अध्यूध्नी भवन्ती होतृ-हरणे प्रत्यक्षा आनुमानिकमिडाभक्षं निवर्तयतीति । त्र्यङ्गवत् । यथा अनिज्याशेषैस्त्र्यङ्गैः इज्याशेषाणि निव-र्तन्ते तद्वत् ।

**शेषे वा समवैति, तस्माद्रथवन्नियमः स्यात् । १३ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति, इडाभक्ष-विकार इति । कथं स्यादिडाभक्षविकारः, यद्यपूर्वा अध्यूध्नी स्यात् । सा हीडायां समवैति । कथं ? 'अन-स्थिभिरिडां वर्धयन्ति' इति तस्या हरणं प्राप्तं, होतृसंबन्धो न प्राप्तः, स विधीयते, 'यामिमां अध्यूध्नीं हरन्ति,

तां होत्रे, नान्यस्मै' इति । होत्रे तु अन्यं भक्षं कुर्वन्तीति । अपिच 'होत्रे हरन्ति' इति आनन्तर्यादेकवाक्यता प्रत्यक्षा । इतरस्मिन् पक्षे ' अध्यूध्नीं हरन्ति ' इति च होतृशब्दव्यवधानात् कल्पयितव्या भवेत् । तस्मात् भागे नियमो रथवत् । यथा ' यजुर्युक्तं रथमध्वर्यवे ददाति' इति रथस्य वाक्यान्तरेण प्राप्तत्वात् अव्यवधानाच्च अध्वर्युभागे नियमः । एवमिहापि होतृभागे नियम इति ।

**अशास्त्रत्वात्तु नैवं स्यात् । १४ ॥**

**भाष्यं**—तुशब्दः पक्षं व्यावर्तयति । न भागे नियमः, इडाभक्षविकार इति । कुतः ? नास्ति शास्त्रं येन इडाभक्षे अध्यूध्नी स्यात् । **ननु** इदमुक्तं 'अनस्थिभिरिडां वर्धयन्ति' इति । **उच्यते** । अनुवादस्वरूपत्वादस्य, प्राप्तत्वाच्च अनस्थिकानां वचनान्तरेण ' अथ यद्यत् परिशिष्यते तत् समवत्तधान्यामानयति, यद् हृदयं प्रास्यति, जिह्वां, वक्षः, स्तनिम, तस्या वनिष्ठुं' इति अनुवाद इति गम्यते । न चात्र अध्यूध्नी कीर्त्यते । तस्मादप्राप्ता, अप्राप्ता चेत् होतृहरणमुद्दिश्य विधीयते । यत्तु व्यवधानात् अप्राप्तैव एकवाक्यता कल्पयितव्या इति, अपूर्वत्वादध्यूध्न्याः अनुवादाभावे अनर्थकत्वपरिहाराय कल्पयिष्यामः । एवं च स्वपदगतं हरणं विहितं भविष्यतीति । इतरथा तु होत्रध्यूध्नीसंबन्धो विधीयेत, न स्वपदगतं हरणम् । तस्मादपि भक्षविकारः ।

**अपिवा दानमात्रं स्याद्, भक्षशब्दानभिसंयोगात् । १५ ॥**

**भाष्यं**—अपिवेति पक्षव्यावृत्तिः । यद्येवं, न वचनान्तरेण इडाभक्षे अध्यूध्नी प्राप्ता, सा अपूर्वा हर्तव्या विधीयते, न तर्हि भक्षविकारः । दानमात्रमेतत् ' होत्रे अध्यूध्नीं हरन्ति ' इति । नात्र भक्षशब्देन अभिसंयोगो विधीयते । तस्मान्न भक्षविकार इति ।

**दातुस्त्वविद्यमानत्वादिडाभक्षविकारः स्याच्छेषं प्रत्यविशिष्टत्वात् । १६ ॥**

**भाष्यं**— तुशब्दः पक्षं व्यावर्तयति दानमात्रमेतत् न भक्षविकार इति । नैतद्दानं दातुरभावात् । पशुर्हि एवं संकल्पितः भागं वर्जयित्वा नान्यत् स्वकार्ये अनेन कार्यमिति । तेन स्वाम्यभावात् दानं नास्ति । कथं स्वाम्यभावः ? शेषं प्रति अविशिष्टत्वात् । शेषं प्रति यथा यजमानस्तथा होता । उभावपि न प्रभवतो द्रव्यस्य, इति नास्ति दानम् । अथ कथं भक्षशब्दानभिसंयोगे भक्षः ? चतुर्थीश्रवणात् । चतुर्थी तादर्थ्ये भवति, होत्रर्था अध्यूध्नी, तया होता अभिप्रेयते, सा होतुरुपकरोति । सा भक्ष्यमाणा सामर्थ्यजननस्य द्रव्यस्य लाभाय यया च यावत्या च मात्रया उपकारिणी भवति । तत्र चतुर्थीश्रुतिरनुगृह्यते । इतरथा हि अदृश्यमाने उपकारे चतुर्थीश्रुतिर्बाध्यते । तस्मादिडाभक्षविकार इति ।

**शा**—यत् होत्रे हरन्ति तदध्यूध्नीं इति प्राकृतं होतृसंप्रदानकं हरणं अध्यूध्नीप्रतिपादने विनियुज्यते । तस्मात् इडाभक्षविकारः ।

**सोम**— त्र्यङ्गैरनिज्याशेषैः हृदयादीनामिज्याशेषाणां बाधेऽपि अनिज्याशेषभूताध्यूध्न्या न तेषां बाधः इत्युत्थितेः **संगतिः** । ( अध्यूध्नी हस्तादिभ्योऽन्यदङ्गं इति के चित् । अनस्थिरूपप्राया शिश्नाख्या अध्यूध्नी इत्यन्ये) 'अध्यूध्निस्तरसो मांसं' इति धूर्तस्वामी । **सूत्रार्थस्तु**—अध्यूध्नी होतुर्भक्षविकारः स्यात्, यथा त्र्यङ्गानामिज्याशेषविकारत्वं तद्वदिति ।

**वि**—' होतुर्नियम्यतेऽध्यूध्नी किं वेडां विकरोति सा ।, अनस्थिभिरिति प्राप्ता होतुः पक्षे नियम्यते ।।, अनुवादोऽनस्थिवाक्यं प्रापिका परिशिष्टगीः । नाध्यूध्नी तत्र तेनेडा होतुर्विक्रियते तया ।। '

**भाट्ट**—पशौ इडां अतिदेशप्राप्तां प्रक्रम्य ' अध्यूध्नीं होत्रे हरन्ति ' इति श्रुता अध्यूध्नी प्राकृतस्य कृत्स्नस्य होतुरिडाभागस्य निवर्तिका न वा इति चिन्तायां, अध्यूध्नी तावत् अत्र द्वितीयान्तत्वादुद्देश्या प्रतिपाद्या च आकीर्णकरत्वात् । तदुद्देशेन च होतृसंप्रदानकं भक्षार्थे हरणं प्राकृतकार्यापन्नं संस्कारकत्वेन विधीयते । हरणं च यद्यपि न दानं अध्वर्योः स्वत्वाभावेन तत्त्वानुपपत्तेः, तथापि भक्षार्थे समर्पणं, तत्रैव च कथं चित् संप्रदानत्वोपपत्तिः । अथवा होतृकर्तृकभक्षणोपयोगित्वेन होत्रर्थत्वात् तादर्थ्यचतुर्थी इयम् । सर्वथा होतृविशिष्टस्य प्राकृतस्य हरणस्य अध्यूध्नीसंस्कारार्थत्वेन विधिः । अतिदेश-

प्राप्तं हरणमनूद्य तदाश्रितं होतृसंप्रदानकत्वाद्येव वा तदुद्देशेन विधीयते। एतावच्च पक्षद्वयेऽपि अविशिष्टम्। परंतु ' अनस्थिभिरिडां वर्धयन्ति' इति वचनात् अनस्थिरूपायाः शिश्नाख्यायाः अध्यूध्न्याः इडायां प्राप्तत्वात् तत्र होतृसंप्रदानकहरणस्यापि पक्षे प्राप्तत्वेन तन्नियमविधिप्रतीतेः होतुरेव अध्यूध्नी इत्यर्थावगमेऽपि न तस्य भागान्तरनिवृत्तिः। **इति प्राप्ते**, ' अथ यद्यत् परिशिष्टं तत्तत् समवत्तधान्यामावपति । यद् हृदयं प्रास्यति, जिह्वां, वक्षः, स्तनिम, तस्यै वनिष्ठुं ' इति वचनेन हृदयादीनामेव इडायां प्रासनविधानात्, तदभिप्रायेणैव च अनस्थिभिः इत्यस्य वर्तमानापदेशस्य अनुवादत्वोपपत्तेः अध्यूध्न्याः इडायामप्राप्तत्वेन तस्यां होतृनियमायोगात्, प्राकृतहोतृहरणमेव उपस्थितत्वात् अप्राकृतसंस्कार्यान्तरसंबन्धित्वेन विधीयते, प्राकृतहरणाश्रितो होतैव वा तथा विधीयते । ततश्च तद्धरणस्य प्रकृतौ भक्षार्थत्वात् अध्यूध्न्या अपि भक्षसिद्धिः । प्राकृतेडाभक्षणस्य च पूर्ववत् कर्त्रन्तरेणैव सिद्धेः, न तस्य पुनः होत्रा अनुष्ठानम् । अत एव नात्र होतृसंप्रदानकहरणान्तरमेव अध्यूध्नीसंस्कारार्थत्वेन विधीयते , प्राकृतेडाभक्षणार्थहरणस्योपस्थितत्वेन कर्मान्तरत्वे प्रमाणाभावात् । अतः सिद्धं कृत्स्नस्य होतुरिडाभागस्य अध्यूध्न्या निवृत्तिः इति । **यदा तु आपस्तम्बाद्युक्तरीत्या** हृदयादीनामाद्यानां षण्णां प्रदेयानामेव इडात्वं तत्संस्कारार्थं च ' अनस्थिभिरिडां वर्धयन्ति' इत्यनेन अनस्थिकरणकं वर्धनं विधीयते, तस्यापि च दृष्टविधया भक्षौपयिकत्वात् भक्षार्थत्वमेव, **तथापि** 'क्लोमानं प्लीहानं पुरीततं' इत्यग्रिमवाक्यशेषेण अवयवत्रयस्यैव अनस्थिपदेन ग्रहणात् अध्यूध्न्याः प्राप्त्यभावेन पूर्ववत् अपूर्वाया एव हरणसंबन्धात् प्राकृतेडाभक्षविकारत्वसिद्धिः । **धूर्तस्वाम्यादीनां तु** वाक्यशेषस्य उपलक्षणत्वमङ्गीकृत्य अध्यूध्न्याः अनस्थित्वेन इडावर्धकत्वात् प्राप्तायां तस्यां होतृनियममात्राङ्गीकारेण इडाभक्षाबाधकत्वाभिधानं, उपलक्षणत्वे प्रमाणाभावादुपेक्षितम् ।

**न्यायबिन्दुः**— पशौ ' अध्यूध्नीं होत्रे हरति ' इति श्रुतम् । तत्र ' अत्रानस्थिभिरिडां वर्धयन्ति ' इति वचनात् इडान्तर्गता अध्यूध्नी नाम अङ्गम् उपरि स्तनभागरूपा होतृभागे निवध्यते इति नेडाभक्षबाधिका । इति प्राप्ते, ' अनस्थिभिः' इत्यस्य ' हृदयं प्रास्यति जिह्वां वक्षः ' इत्यादिवचनेनानुवादात्, तत्र च अध्यूध्न्यकीर्तनाभावात्, ' यत् होत्रे हरति, तत् अध्यूध्नीं ' इति अपूर्वविधानात्, इडाभक्षबाधिकैव इति सिद्धान्तः ।

**मण्डन** - ' अध्यूध्निका होतृभजेर्विकारः । ' भजेः भागस्य ।

**शंकर**— ' अध्यूध्न्येडाभक्षबाधः । '

* **अध्येतृस्मरणान्मन्त्रत्वम्** । ' न चास्य ( वायुर्वै क्षेपिष्ठा इत्यस्य मन्त्रत्वं ) ताद्रूप्येणाप्रतीतेः, अध्येतृस्मरणाभावाच्च । ' **वा.** १।४।१।१ पृ. ३२१.

* **अध्रिगुप्रैषः** । मन्त्रः-(आश्वश्रौ. ३।३।१)'' दैव्याः शमितार आरभध्वमुत मनुष्याः, उपनयत मेध्या दुर आशासाना मेधपतिभ्यां मेधम् । प्रास्मा अग्निं भरत, स्तृणीत बर्हिः, अन्वेनं माता मन्यतामनु पिताऽनु भ्राता सगर्भ्योऽनु सखा सयूथ्यः । उदीचीनान् अस्य पदो निधत्तात्, सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात्, अन्तरिक्षमसुं, दिशः श्रोत्रं, पृथिवीं शरीरम् । एकधाऽस्य त्वचमाच्छ्यतात्, पुरा नाभ्या अपि शसो वपामुत्खिदतात्, अन्तरेवोष्माणं वारयध्वात् ( वारयतात्–तैत्रा. ), श्येनमस्य वक्षः कृणुतात्, प्रशसा बाहू, शला दोषणी, कश्यपेवांसा, अच्छिद्रे श्रोणी, कवषोरू, स्रेकपर्णाऽष्ठीवन्ता, षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयताद् गात्रंगात्रमस्यानूनं कृणुतात् । ऊवध्यगोहं पार्थिवं खनतात् । अस्ना रक्षः संसृजतात् । वनिष्ठुमस्य मा राविष्टोरूकं मन्यमाना नेद्वस्तोके तनये रविता रवच्छमितारः । अध्रिगो शमीध्वं सुशमि शमीध्वं शमीध्वमध्रिगाऽऽऽउ अपाप '' इति । अत्र मन्त्रे **पशोः कानि अङ्गानि** कीदृशानि छित्त्वा ग्राह्याणि इति **सर्वं होता** शमित्रे आह । **के.** । ' लिङ्गात् शमितृप्रैषमेनमवगच्छामः । तथारूपाणि हि अत्र वाक्यानि ' दैव्याः शमितार उत मनुष्याः आरभध्वम् ' इति । तथा षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतात् ' इति । **भा.** ९।४।१।१०,

* **अध्रिगुः अङ्गानां ( पशोः ) उद्धरणार्थः** । अङ्गानां

कात्स्न्येंन उद्धरणं कथं स्यादित्येवमर्थः । 'गात्रंगात्रमस्यानूनं कृणुतात्' इति वचनात् । ९।४।५।२७, * अध्रिगुप्रैषः प्रातःसवने। ११।४।२०।५४, * **अध्रिगुप्रैषस्य** आवृत्तिर्वाजपेये प्राजापत्यपशुषु ऋतुपशुषु च कालभेदात्। ११।४।२०।५४-५६. * 'अङ्गानि ज्ञातिनामानि चोपमाश्चेन्द्रियाणि च । एतानि नोहं गच्छन्ति **अध्रिगौ** विषमं हि तत्।।' इति टीकाकारैरुक्तम् । **वा.** १।३।८।२४ पृ. २६४. माता इत्यादीनि ज्ञातिनामानि । श्येनमस्य इत्याद्याः उपमाः । चक्षुः सूर्यं इत्यादीनि इन्द्रियाणि । अन्यैः ऊहविषयैर्वैषम्यात् नोहं गच्छन्ति । **सु.** पृ. २८४. ( अध्रिगुप्रैषगतानां विचार्यपदानां पाठक्रमेणैव उत्तरे लघुसिद्धान्ता निवेशिता इति ज्ञातव्यम् । **के.** ) * 'आशासाना मेधपतिभ्यां मेधं' इत्यत्र **मेधपतिशब्दो** देवतापरः । तथा च एक-द्वि-बहुदेवतानुसारेण मेधपतये मेधपतिभ्यां मेधपतिभ्यः इत्येवं यथायथं ऊहनीयः । ऐतरेयब्राह्मणे तादृशोहस्य मेधपतिशब्दं देवतापरं स्वीकृत्यैव स्पष्टमेव विधानात् । **के.** ९।३।१२।३२-४०. * ऐकादशिनेषु पशुषु मेधपतिशब्दः एकवन्निगदः निवर्तते, द्विवन्निगदस्तु 'मेधपतिभ्यो मेधं' इति ऊहितव्य एव देवतापृथक्त्वात् गणत्वाभावात् । **भा.** ९।३।१४।४३. * बहुदेवताके पशौ देवानां गणत्वे सति 'मेधपतिभ्यो मेधं' इत्यनेन सह 'मेधपतये मेधं' इत्येकवचनान्तोऽपि मन्त्रो विकल्प्यते एकवचनेन गणस्य बोधनात् यथा 'अविं वशामादित्येभ्यः कामायालभेत' इत्यत्र । **वि.** ९।३।१३. * अध्रिगुप्रैषे मेधपतिशब्दः बहुदेवत्ये पशौ द्विवन्निगदः ऊहेन, एकवन्निगदश्च अविकृतः इत्युभयोर्विकल्पः । **भा.** ९।३।१३।४१-४२. * यत्र तु देवतानां गणत्वं नास्ति किंतु पृथक्पृथगेव देवत्वं यथा ऐकादशिनेषु, तत्र 'मेधपतिभ्यो मेधं' इति बहुवचनान्तत्वमेव ऊहनीयं, न तु विकल्पः । **वि.** ९।३।१४. * '**प्रास्मै**' इत्यस्य न विकारः यदा अग्नीषोमीयः सवनीयाश्च समानविधानाः । **भा.** ९।३।८।२२. * अतिरात्रगतसवनीयपशुचतुष्टयविषये 'प्रास्मै' इत्यस्य बहुवचनत्वेनोहो न कर्तव्यः । कृत्वाचिन्तेयम् । वस्तुतस्तु ऊहः कर्तव्यः । **वि.** ९।३।८. * अध्रिगुवचनं अतिरात्रे सारस्वत्यां मेष्याम् । यदि साधारणाः पशुधर्माः, ततः सारस्वती अध्रिगुवचनं अप्राप्ता । अथ अग्नीषोमीयधर्माः, ततः अस्यां अध्रिगुवचनं ऊहेन प्राप्यते '**प्रास्यै अग्निं**' इति । **भा.** ९।१।१७।४९. * उक्थ्यगतसवनीयपशुद्वयविषये '**प्रास्मै**' इत्यत्र द्विवचनान्तत्वेन ऊहो न कर्तव्यः। कृत्वाचिन्तेयं, वस्तुतस्तु कर्तव्य एव । **वि.** ९।३।८, * षोडशिगतसवनीयपशुत्रयविषये 'प्रास्मै' इत्यस्य बहुवचनत्वेनोहो न कर्तव्यः । कृत्वाचिन्तेयम् । ९।३।८. * 'सूर्यं चक्षुर्गमयतात्' इत्यादौ द्विबहुपशुकयागेषु संसर्गिद्रव्यवाचक**चक्षुरादिशब्दानां** गोलकवाचित्वाभावात् द्विबहुवचनान्तत्वेन ऊहो न कर्तव्यः । **भा.** ९।३।१७। २७-२८. * '**एकधा**' इत्यस्य प्रतिपशु अभ्यासः कर्तव्यः । एकधा सकृत्प्रयत्नेन इत्यर्थः । तत्र द्विपशुकत्वे एकधैकधाऽनयोस्त्वचावाच्छयतात् इति, बहुत्वे तु एकधैकधैकधैषां त्वच आच्छयतात् इत्यूहः । **के.** ९।३। ११।२९-३१. * 'एकधा अस्य त्वचमाच्छयतात्' इत्यत्र '**अस्य**' इति पदं पशुगणे यथायथं द्विबहुवचनान्तेन ऊहितव्यं इत्यविवादम् । **भाट्ट.** ९।३।११, * 'एकधाऽस्य त्वचं आच्छयतात्' इत्यत्र **त्वचं** इति पदं पशुगणेषु यथायथं द्विबहुवचनान्तेन ऊहितव्यं इत्यविवादम् । ९।३।११. * '**श्येन**मस्य वक्षः कृणुतात्' इत्यस्य यथा श्येनसदृशं वक्षः न नश्यति तथा साकल्येनोद्धरणीयं इत्यर्थः, न तु वक्षसः श्येनाकारोत्पादनम् । एवं शला- कश्यप- कवष- स्रेकपर्णेषु कार्त्स्न्यमेव प्रतिपाद्यते न तु आकारविशेषसंपादनम् । **वि.** ९।४।६. * 'प्रशसा बाहू' इति **प्रशसाशब्दस्य** असिः इति नार्थः किंतु प्रशस्तौ इत्यर्थः । तथा द्विबहुपशुके प्रशसाशब्दस्य द्विबहुवचनान्तत्वेन ऊहः कर्तव्यः प्रशसौ बाहू इति वा प्रशसो बाहून् इति वा । अथवा प्रशस्शब्दः स्वधितिपर एव । तथा च याज्ञिकसंमतशस्त्र ( स्वधिति ) वृद्धौ एव ऊहः । स्वधितिबहुत्वे प्रशोभिर्बाहू इत्यूहः अश्वमेधे। **के.** ९।४।४ * '**शला दोषणी**' अत्र पश्वनेकत्वेऽपि शलाशब्दे नोहः, एकेनापि उपमानेन सादृश्यप्रतिपादनस्य शक्यत्वात् । शला शल्यकलोमसदृशौ । शलाकाकारौ इति भट्टभास्करः । दोषणी भुजौ । **सोम.** ९।४।६,

* 'कश्यपेवांसा' इति। पशुबहुत्वेऽपि कश्यपाशब्दे नोहः, तस्य कार्त्स्न्यसंपादनपरत्वात्। अंसा=अंसौ। कश्यपा इव कच्छपाविव इति माधवः। ९।४।६, * कवपोरू इत्यत्र पशुबहुत्वेऽपि कवपाशब्दे नोहः तस्य कार्त्स्न्यपरत्वात्। ऊरू कवषा कवाटसदृशौ इति भट्टभास्करः। गतिसाधनाश्वादियानसदृशौ इति भाट्टदीपिका। खट्वासदृशौ इत्यन्ये। के ९।४।५।२५–२७, * 'स्रेकपर्णाऽष्ठीवन्ता'। पशुबहुत्वेऽपि स्रेकपर्णशब्दे नोहः, तस्य कार्त्स्न्यसंपादनपरत्वात्। अष्ठीवन्तौ ऊर्वोः पूर्वभागौ। स्रेकपर्णा—करवीरपत्रसदृशौ। शुकपत्रसदृशौ इति भट्टभास्करः। अष्ठीवन्तौ अस्थिसंयुक्तौ इति भाट्टदीपिका। ९।४।५।२५–२७. * अश्वमेधे 'षड्विंशतिरस्य वङ्क्रयः' इत्यस्य स्थाने अश्वार्थे 'चतुस्त्रिंशद्वाजिनो देवबन्धोः' (ऋसं. १।१६२।१८) इति ऋचं पठित्वा, तूपरगोमृगयोरर्थे 'द्विपञ्चाशदनयोर्वङ्क्रयः' इति पठितव्यम्। किंवा 'षडशीतिरेषां वङ्क्रयः' इति समस्य वचनं कर्तव्यम्। भा. ९।४।१।१७–२१, * 'षड्विंशतिरस्य वङ्क्रयः ता अनुष्ठयोच्च्यावयतात्' इत्यत्र 'द्विपञ्चाशदनयोर्वङ्क्रयः, अष्टसप्ततिरेषां वङ्क्रयः' इत्येवं पशुसंख्यानुसारेण मुख्यानां वङ्क्रीणां संख्याकथनार्थं द्विबहुपशुयागेषु यथायथं समस्य वचनं कर्तव्यम्।९।४।१।१–१६, * 'वनिष्ठुमस्य मा राविष्ट उरूकं मन्यमानाः' इति। अत्र उरूकशब्दस्य वपा इत्यर्थः। तथा च अनेकवपासु विकृतिषु एकवचनान्तोरूकशब्दः द्विबहुवचनान्तेन यथायथं ऊहनीयः। तत्र द्वित्वे 'उरुणी के मन्यमानाः' इति पदभेदपक्षे 'उरूके मन्यमानाः' इति पदैकत्वपक्षे वक्तव्यम्। बहुत्वे च 'उरूणि कानि मन्यमानाः' इति वा 'उरूकाणि मन्यमानाः' इति वा वक्तव्यम्। ९।४।३।२२.

**अध्रिगुप्रैषगतस्य प्रास्मै इति पदस्य अग्नीषोमीयसवनीययोः समानविधित्वपक्षे न विकारः॥**

**अध्रिगौ सवनीयेषु तद्वत्, समानविधानाश्चेत्। ९।३।८।२३ ॥**

**भाष्यं—** अस्ति सोमे पशुरग्नीषोमीयः 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्र अध्रिगौ इदं समाम्नायते 'प्रास्मा अग्निं भरत, स्तृणीत बर्हिः अन्वेनं माता मन्यतामनु पिताऽनु भ्राता' इत्येवमादि। यदा तु अग्नीषोमीयः सवनीयाश्च समानविधानाः, तदेह विचार्यते किमध्रिगौ 'प्रास्मै' इत्येवमादि पदं ऊहितव्यं, उत नेति। किं प्राप्तं? तन्निर्देशः क्रियते। अध्रिगौ तद्वत् इति। तत्र यः पूर्वाधिकरणे (९।३।७) पूर्वपक्षः स इह पूर्वपक्षः। यः सिद्धान्तः स इह सिद्धान्तः। ऊहः इति पूर्वपक्षः। अविकार इति सिद्धान्तः।

**शा —** तृतीयेऽध्याये संस्थापशवः समानविधानाः इति पूर्वपक्षे (३।६।१६।४१–४७) समानविधानत्वं यदुक्तं, तस्येदं प्रयोजनं पूर्वाधिकरणेन सिद्धं अनेन सूत्रेण कथ्यते। यदा समानविधानाः, तदा उक्थ्यषोडश्यादिद्विबहुपशुकेऽपि सवनीयगणे प्रवर्तमानः प्रास्मै इत्यध्रिगुप्रैषगतैकवचनान्तः शब्दः पत्नीशब्दवदेव नोहितव्यः, विकारपक्षे तु ऊहितव्यः।

**वि—** 'अग्नीषोमीयसवनस्थास्तुल्यविधयो यदि। प्रास्मा इति तदा मन्त्रो पत्न्यान्यायेन नोहनम्॥' परमार्थतस्तु सवनीयपशूनां अग्नीषोमीयविकृतित्वात् अस्त्येव लिङ्गवचनयोः पाशन्यायेन ऊहः।

**भाट्ट—** एवं क्रतुपशूनां समानविधानत्वपूर्वपक्षे 'प्रास्मै' इत्यध्रिगुप्रैषे एकवचनान्त एव तेषु प्रयोक्तव्यः पत्नीशब्दवत्। न तु एकवचनानुरोधेन एकपशुके एव दैक्षादौ। एकवचनस्य प्रत्येकव्यक्त्यभिप्रायेण गणेऽपि श्रुत्यैव संभवात्। अत एव यस्य पुंलिङ्गस्य श्रुत्या स्त्रीपुंसगणे असंभवः, तत्र अत्यन्तनिषिद्धलक्षणायां प्रमाणाभावात् मेषीवर्जे पुंपशुष्वेव संकोच इति वैषम्यम्। असमानविधानसिद्धान्ते तु प्रास्मै इत्ययं वचने लिङ्गे च 'प्रैभ्यो अस्या अग्निं भरत' इत्येवमूहितव्य एव। तदेतत् तार्तीयस्य समानविधानत्वविचारस्य प्रयोजनमात्रकथनम्।

**न्यायबिन्दुः—** संस्थापशूनां सामानविध्यपूर्वपक्षे द्विबहुपशुके सवनीयगणे 'प्रास्मै' इत्यध्रिगुप्रैषगतमेकवचनं पत्नीशब्दवदेव नोहितव्यं इति प्रयोजनं, सिद्धान्ते तु ऊहः इति प्रसङ्गादुक्तम्। प्रास्मै इति पुंलिङ्गं तु अत्यन्तानुपपत्तेः न सारस्वत्यां प्रवर्तते इति वैषम्यम्।

**मण्डन**— 'नोहोऽध्रिगौ तुल्यविधानपक्षे ।'

**शंकर**— 'नोक्थ्यादावध्रिगुस्तथा ।' नोह्यः ।

**अध्रिगुप्रैषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य एकादशिन्यामूहः ॥**

**अर्थान्तरे विकारः स्याद्देवतापृथक्त्वादेकाभिसमवायात् स्यात् । ९।३।१४।४४ ॥**

**भाष्यं**— अस्त्येकादशिनी 'ग्रैवाऽऽग्नेयेन वापयति, मिथुनं सारस्वत्या करोति, रेतः सौम्येन दधाति, प्रजनयति पौष्णेन' इत्येवमादि । अस्ति च प्रकृतावध्रिगुप्रैषे एकवन्निगदो द्विवन्निगदश्च मेधपतिशब्दः । तस्येह चोदकप्राप्तिश्चिन्त्यते । द्विवन्निगद ऊहितव्य एव । अथैकवन्निगदः किमविकारेण प्रवर्तेत, उत निवर्तेतेति । किं प्राप्तम् ? 'विकल्पो वा प्रकृतिवत्' इति ( पूर्वाधिकरणन्यायेन ) । **एवं प्राप्ते ब्रूमः** । विकार एवैकादशिन्यां, न विकल्पः । तत एवैकवचनान्तेन निवर्तितव्यम् । कुतः ? देवतापृथक्त्वात् । पृथगत्र देवता अन्यस्य पशोरन्या देवता, अन्यस्यान्येत्येवम् । नात्र गणो देवतात्वेन । तदभावात् संसर्गित्वमपि नास्ति । प्रकृतौ चैतत् द्वयं कारणं एकवचनान्तस्य निवेशे । न तदभावादिहास्ति प्रवृत्तिः । यच्चोक्तं, 'एकत्वेऽपि गुणानपायात्' इति ( ९।३।१३।४० ), परपक्षमन्वारुह्य तद्वचनं, न स्वपक्षः । तस्माददोष इति ।

**शा**— गणाभिप्रायेण पूर्ववदनूहं मन्वानस्योत्तरं 'देवतात्मन एकत्वादविकारः पुरोदितः । तद्रूपस्य तु भिन्नत्वे को नामोहं निवारयेत् ॥'

**सोम**— बहूनां देवतात्वात् देवताकारकस्यैक्यात् पूर्ववदनूहः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**—अर्थान्तरे ऐकादशिनादौ देवताकारकभेदाद्विकारः स्यात् प्रत्येकमेव तद्धितादिसमवायात् प्रत्येकमेव देवता स्यादिति ।

**वि**— 'कृष्णग्रीवादिके नोह ऊहो वा, ऽस्य न पूर्ववत् ।, देवत्वं न गणस्यात ऊहो बह्वभिवित्सया ॥'

**भाट्ट**— यत्र तु देवतात्वानि अनेकानि अधिष्ठानं तु एकमनेकं वा तत्र ( अध्रिगुप्रैषगतमेधपतिशब्दस्य ) एकवचनान्तस्यापि ऊहः । यथा 'त्वाष्ट्रं पात्नीवतं' 'अग्नये पावकाय पशुमालभेत' 'आग्नेयः कृष्णग्रीवः, सारस्वती मेषी, बभ्रुः सौम्यः' इत्यादौ । अत्र त्वाष्ट्रपत्नीवतोः अग्निपावकयोश्च अधिष्ठानैकत्वेऽपि तद्धितचतुर्थीभेदात् देवतात्वभेदः । तृतीयोदाहरणे तु उभयभेदः । अतस्तत्र उभयोरपि मन्त्रयोः तत्तत्संख्यावशेन ऊहः । **न च** अनयोर्मन्त्रयोः अर्थद्वयपरत्ववशेन ऊहाङ्गीकारे प्रकृतौ विकृतौ वा देवतात्वतदधिष्ठानरूपार्थभेदात् समुच्चयापत्तिरिति वाच्यम् । उभयोरपि उभयार्थप्रतिपादकत्वेन विकल्पोपपत्तेः । एकवचनान्तो हि देवतात्वे परंपरासंबन्धेन मेधपतित्वं वदन् परंपरासंबन्धघटकतया अधिष्ठानमपि उपस्थापयति । अग्नीषोमत्वादिना तदुपस्थितिस्तु मेधपतिपदात् अशक्यैव । द्विवचनान्तोऽपि अधिष्ठाने मेधपतित्वं वदन् स्वीकाराख्यसंबन्धस्य देवतात्वाधीनत्वात् देवतात्वमपि उपस्थापयति इति सत्यपि विषयताभेदे उभयोरपि उभयोपस्थापकत्वात् विकल्पोपपत्तिः ।

**न्यायबिन्दुः**— पशुगणे तु गणाभिप्रायेणैकवचनानूहं मन्वानस्योत्तरं देवतारूपभेदे ऊह एव, तदैक्ये परं नानूह इति सिद्धान्तः ।

**मण्डन**— 'एकादशिन्यां विकृतिस्तु तत्र' तत्र मेधपतिशब्दे विकृतिः विकारः ऊहः ।

**शंकर**—'देवताभेद ऊहः स्यात् ।' भेदे ऊहः । १५.

**अध्रिगुप्रैषगतस्य मेधपतिशब्दस्यैकवचनान्तस्य बहुदेवत्ये पशौ द्विवचनान्तेन विकल्पः ॥**

**नियमो बहुदेवते विकारः स्यात् । ९।३।१३।४२॥**

**भाष्यं**— अस्ति बहुदेवत्यः पशुः । 'स एतान् पशूनादित्येभ्यः कामायाऽऽलभते' इति । तथा 'वैश्वदेवं धूम्रमालभेत' इति । अस्ति तु प्रकृतावग्नीषोमीये द्विवन्निगद एकवन्निगदश्च मेधपतिशब्दः । अत्र चोदकप्राप्तः संदिह्यते किं द्विवन्निगद ऊहितव्यः एकवन्निगदो निवर्तेत, उतोभावपि परस्परेण विकल्पमानौ निविशेयातामिति । किं तावत्प्राप्तम् ? द्विवन्निगदः समवेताभिधायित्वादूहितव्यः । एकवन्निगदः अशक्नुवन्नभिधातुमित्येतावता दर्शनेन निवर्तते । एष नियमः । आह । ननु प्रकृतौ द्वित्वस्याविवक्षितत्वादविकारेण प्रयोगः प्राप्नोतीति । उच्यते । अविशेषकमत्र द्वित्वं, न तु तत्र

समवेत न गम्यते न च गम्यमानं निष्प्रयोजनं, अन्यसंख्यापरिच्छेदेन पुनः संख्येयमुपस्थापयति, तदस्य दृष्टमेव प्रयोजनम् । तस्मात् बहुष्वप्यूहो भवतीति ।

टुप् — सिद्धेऽपि पूर्वाधिकरणे पूर्वपक्षोऽस्य यत् क्रियते, तत्र ( परशङ्कया, शङ्कान्तरासद्भावात् । प्रायेण इत्युक्तेरभिप्रायमाह— ) 'एकत्वेऽपि गुणत्वनात् ' ( ९।३।१२।४९ ) इति ( पूर्वाधिकरणे ), किंतु तत्र एकत्वस्याविवक्षा उक्ता । ( किंतु इति भिन्नक्रमः, किंतु अस्मिन् सूत्रे अविवक्षा उक्ता इति । तत्रेत्युपन्यासार्थम् । कथं तर्हि गतार्थत्वमिति, अत आह— ) स एव हेतुः विवक्षायामपीति । तस्मात् पूर्वस्यैव एतत् प्रयोजनाधिकरणम् । उत्तरस्य ( च ) औपोद्घातिकं ( इदमधिकरणम् ) ।

**विकल्पो वा, प्रकृतिवत् । ४३ ॥**

**भाष्यं**— यदुक्तं द्विवचनान्त ऊहितव्य इति । तत् गृह्णीमः । यत्त्वेकवचनान्तो निवर्तेतेति, तन्न । एकवचनान्तोऽपि प्रकृतिवदिह द्विवचनान्तेन विकल्पितुमर्हति । उक्तं हि गणाभिप्रायं तत्प्रकृतौ, संसर्गित्वाद्वा देवतानामिति । तद्वदिहापि गणाभिप्रायात्, संसर्गित्वाद्वा देवतानां विकल्पेन निर्वेक्ष्यते इति ।

**सोम**— पूर्वोक्तकारकल्पार्थत्वाक्षेपात् **संगतिः** । सिद्धे ह्यत्राविकारे उत्तराधिकरणे अनेनैव न्यायेन पूर्वपक्षमाशङ्क्य प्रत्युदाहरणरूपेण सिद्धान्तः प्रदर्शयितुं शक्यते, इति उत्तरस्य उपोद्घातोऽयम् । **सूत्रार्थस्तु**—एकवन्निगदस्य बहुदेवताऽधिष्ठानके नियमो निवृत्तिः, एकवचनान्ततया निवृत्तिरिति यावत् । तस्माद्विकारः स्यादिति ।

**वि**— 'आदित्येष्वेकवाच्येष ऊह्यो नो वो,–ह्यतेऽन्यवत् । , गणार्थत्वादनूहोऽतो विकल्पः प्रकृताविव ॥'

**भाट्ट**—यत्र देवतात्वमेकं, अधिष्ठानं तु एकं बहु वा, तत्र द्विवचनान्तस्य अधिष्ठानपरत्वात् तदनुरोधेन ऊहः । एकवचनान्तस्य तु अविकार एव देवतात्वस्य एकत्वात् यथा 'वायव्यं श्वेतमालभेत' 'वैश्वदेवं धूम्रमालभेत' 'स एतान् पशूनादित्येभ्य आलभेत' इत्यादौ । अत्र वायुरेकमधिष्ठानं, विश्वशब्दस्य समस्तवाचित्वात् बहवो देवा अधिष्ठानम् । यद्यपि च शब्दस्यैव देवतात्वात् नात्र शब्दानां बहुत्वं, तथापि देवतात्वादिव्यवहारसिद्ध्यर्थं कल्पनस्य स्वीकारस्यापि अर्थनिष्ठत्वेनैव करणात् स्वीकरणादीनामनतिप्रसक्ते अर्थे स्वीकृतेः, अतः स्वार्थाधिकरणे परंपरया देवतात्वविष्टानत्वेन उच्यते इति बहुत्वोपपत्तिः । एवं आदित्यानामपि बहूनामेव अधिष्ठानत्वं बहुवचनानुरोधात्, न च शब्दस्य देवतात्वपक्षे चतुर्थ्यन्तादेवतात्वे प्रातिपदिकलक्ष्यस्य आदित्यपदस्यैव अन्वयात्, तस्य च एकत्वेन बहुवचनेनापि एकत्वस्यैव लक्षणात्, कथमधिष्ठानानेकत्वं इति वाच्यम् । तस्यामपि लक्षणायां स्वशक्त्याश्रयवाचकपदवृत्तित्वसंबन्धेनैव लक्षणात् आश्रयरूपेऽर्थे बहुत्वोपपत्तेः । अतश्च तत्तत्र अधिष्ठानसंख्याऽनुरोधेन द्विवचनान्तस्य ऊहः, देवतात्वं तु एकं, अनेकत्वे प्रमाणाभावात् । आदित्येभ्यः इत्यत्रापि न बहुत्वं विभक्त्युपात्तदेवतात्वान्वयि, अपि तु बहुत्वस्य आर्थिकं अधिसंबन्धं गृहीत्वा तल्लक्षितैकत्वमेव, इति तत्रापि देवतात्वैकत्वम् । अस्तु वा बहुवचनबलात् तत्र देवतात्वभेदः इति न तदिह उदाहरणं, किंतु अग्रिमसूत्रे एव । तदेतत् पूर्वाधिकरणस्य प्रयोजनमात्रकथनं इति मन्तव्यम् ।

**न्यायबिन्दुः**—वैश्वदेवादिवद्दैवत्ये एकवचनासामर्थ्यादूहः इति शङ्कायां देवतात्वैक्यात् प्रकृतिवदनूह इति पूर्वाधिकरणप्रयोजनमुक्तम् ।

**मण्डन**— 'एकद्विवाची न खलूहनीयः ।' मेषपतिशब्दः ।

**शंकर**— 'बहुष्वैक्यस्य नोह्यता ।' १४.

**अध्रिगुप्रैषगताः श्येनशलादिशब्दाः कृत्स्नोद्धरणप्रकाशकाः ॥**

**श्येनशलाकश्यपकवषस्रेकपर्णेष्वाकृतिवचनं, प्रसिद्धसंनिधानात् । ९।४।५।२५ ॥**

**भाष्यं**— अस्मिन्नेवाध्रिगौ इदमाम्नायते 'श्येनमस्य वक्षः कृणुतात्, शला दोषणी, कश्यपेवांसौ, कवषोरू, स्रेकपर्णाऽष्ठीवन्तौ' इति । एषु संशयः किं आकृतिवचनं एषु भवति, उत कार्त्स्न्योद्धरणं इति । किं प्राप्तं ? प्रसिद्धसंनिधानात् आकृतिवचनम् । इह प्रसिद्धस्य संनिधौ यदभिधीयते किंचिदिदं कर्तव्यमिति, तत्र आकृ-

तिवचनं गम्यते, यथा 'अमी पिष्टपिण्डाः सिंहाः क्रियन्तां' इति, 'अर्जुनबदराः मेखलाः क्रियन्तां' इति सिंहाकृतिवचनं मेखलाऽऽकृतिवचनं च गम्यते। एवं श्येनाकृति वक्षः कर्तव्यं, शलाकृती दोषणी, कश्यपाकृती अंसौ, कवषाकृती ऊरू, करवीरपर्णाकृती अष्ठीवन्तौ इति।

**कार्त्स्न्यं वा स्यात्, तथाभावात्। २६॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति, न चैतदस्ति आकृतिवचनं इति। किं तर्हि? कृत्स्नोद्धरणं विवक्षितम्। कृत्स्नानि उद्धृतानि एतानि एतदाकृतिकानि भवन्ति। यथा श्येनाद्याकृतिकानि भवन्ति तथैतानि कुरुत, कृत्स्नानि उद्धरत इत्ययमर्थोऽवगम्यते। लक्षणया इदं चोद्यमानं दृष्टार्थं भवति। कृत्स्नोद्धृतैर्हि तैः प्रयोजनम्। तथाहि तदाकृतिकानामवत्तं भवति। इतरथा अतदाकृतिकानां अवद्यात्। तस्मात् कार्त्स्न्यमवगम्यते इति।

**अध्रिगोश्च तदर्थत्वात्। २७॥**

**भाष्यं**— अध्रिगुश्च अङ्गानामुद्धरणार्थः, अङ्गानां कार्त्स्न्येनोद्धरणं कथं स्यादित्येवमर्थः। कथं? एवं हि भवति वचनं, 'गात्रंगात्रमस्यानूनं कृणुतात्' इति। तस्मादपि श्येनादिभिः कृत्स्नोद्धरणं गम्यते इति। प्रयोजनं पक्षोक्तम्।

**शा**—वक्ष उद्धृत्य कर्तनाद्युपायेन पक्षचरणचञ्च्वादिसंपादनेन श्येनसंस्थानं कर्तव्यं (इति पूर्वः पक्षः)। नैतद्युक्तं अदृष्टार्थताप्रसङ्गात्, कर्तने च वक्षसो वैकल्यात् हविर्विनाशः स्यात्। तस्मात् साकल्यमत्र विधीयते (इति सिद्धान्तः)। ९।४।६.

**सोम**—प्रशसाशब्दस्य प्रशंसामात्रपरत्वे आनर्थक्यात् तन्मुखेन साकल्यपरत्वेऽपि श्येनादिशब्दानां सादृश्यमात्रपरत्वोपपत्तेः न तन्मुखेन साकल्यपरत्वं इत्युत्थितेः **संगतिः**। शला दोषणी इत्यत्र "दोषणी भुजौ, शला शल्यकलोमसदृशौ 'श्वावित्तु शल्यस्तल्लोम्नि शलली शललं शलं' इत्यमरकोशात् शलाकाकारौ इति **भट्टभास्करः**। अंसौ कश्यपे कच्छपौ इव इति **माधवः**। ऊरू कवषा कवाटसदृशौ इति **भट्टभास्करः**। खट्वासदृशौ इत्यन्ये। अष्ठीवन्तौ ऊर्वोः पूर्वभागौ। ऋग्ब्राह्मणभाष्ये **माधवो**ऽप्येवमाह। स्रेकपर्णा करवीरपत्रसदृशौ। शुकपत्रसदृशौ इति **भट्टभास्करः**। **सूत्रार्थस्तु**— श्येनादिष्वाकृतिवचनं चञ्चुचरणाद्यवयवसंस्थानाभिधानं स्यात् प्रसिद्धस्य श्येनादेः संनिधाने तदाकृतेरेव झटिति प्रतीतेः इति।

**वि**— 'सादृश्यमुत साकल्यं श्येनाद्युक्त्या विवक्षितम्।, प्रसिद्धसंनिधेराद्य, स्तत्सत्त्वादखिलोद्धृतिः॥' ९।४।६.

**भाट्ट**—तत्रैव (अध्रिगु-)प्रैषे 'श्येनमस्य वक्षः कृणुतात्' इति श्रुतम्। तत्र श्येनपदं इवशब्दानुषङ्गेण वक्षस उपमार्थं इत्यविवादम्। इवशब्दार्थश्च सादृश्यं इत्यपि। तच्च बहुतरधर्मैः संभवे कतिपयधर्मैः अन्याय्यत्वात् आकारविशेषेणैव। अतश्च वक्ष उद्धृत्य कर्तनादिना श्येनाकारतां संपाद्य यष्टव्यं इति। वक्षोविधिस्तु पशुवत् प्रकृतित्वेन। **इति प्राप्ते**, अवदानवाक्येऽपि 'अथ वक्षसः' इति श्रवणात् तस्यैव हविष्ट्वप्रतीतेः न कर्तनादिना तन्नाशः शक्यः कल्पयितुम्। तेन सादृश्यसंपत्तिः अविकलोद्धरणादेव जायते इति अविकलोद्धरणं प्रकाशयितुमेव सादृश्यानुवादो दृष्टार्थत्वात्। इतरथा श्येनाकारतायाः मान्त्रवर्णिक्याः विधाने गौरवं अदृष्टार्थता वा आपद्येत। एवं 'शला दोषणी, कश्यपेवांसा, कवषोरू, स्रेकपर्णाऽष्ठीवन्ता' इत्यादिष्वपि द्रष्टव्यम्। शला शलाके। कश्यपा इव कच्छपौ इव। कवषा गतिसाधनाश्वादियानसदृशे। स्रेकपर्णा करवीरपर्णाकृती। अष्ठीवन्ता अस्थिसंयुक्तौ। अत्र पूर्वपक्षे सिद्धान्ते च श्येनादीनां उपमानत्वस्य आवश्यकत्वात् तत्रापि च इवशब्दश्रवणेन 'सिंहो देवदत्तः' इतिवत् गौणत्वाभावात् 'सिंह इवैते वीराः' इतिवत् वक्षोविवृद्धौ अनूहितश्येनपदेनैव उपमानसिद्धेः अनूह एव श्येनादिपदानां न्यायसिद्धः कल्पसूत्रकारसंमतश्चेति। यद्यपि इदमधिकरणं नोहविचारोपयोगि, तथापि प्रासङ्गिकत्वात् न दोषः।

**न्यायबिन्दुः**— 'श्येनमस्य वक्षः कृणुतात्' इति श्येनसदृशमित्यर्थः। तेन कर्तनाद्युपायेन श्येनाकृति वक्षः कार्यम्। **इति प्राप्ते**, एवं सति अदृष्टार्थताऽऽपत्तेः

कर्णेन हविर्नाशाच्च वक्षःसाकल्यमत्र विवक्षितं सकलस्य श्येनसदृशत्वात्। एवं च दृष्टार्थता भवति। तथा शला दोषणी शलाकाऽऽकारौ हस्तौ। कच्छपा इव अंसौ कूर्माकारौ इत्यर्थः। कवषा ऊरु कवाटसदृशौ स्थूलासदृशौ वा ऊरू। अष्ठीवन्तौ ऊर्वोः पूर्वभागौ स्रेकपर्णौ करवीर-पत्रसदृशौ इत्यपि साकल्यपरमेव इति सिद्धान्तः।

**मण्डन**—'कृत्स्नोद्धृतौ श्येनवचः।'

**शंकर**—'श्येनादौ चापि साकल्यम्।' ६.

**अध्रिगुप्रैषगतानां संसर्गिद्रव्यवाचकचक्षु-रादिपदानां पशुगणे ऊहो न॥**

**संसर्गिषु चार्थस्यास्थितपरिमाणत्वात्। ९।३। १०।२८॥**

**भाष्यं**— सन्ति अध्रिगुप्रैषे संसर्गिणोऽर्थाः। तद्यथा चक्षुः प्राणः इत्येवमादयः 'सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृजतात्' इति। द्विपश्वादिषु पशुगणेषु किं ऊहितव्यः, उत नेति। उच्यते। ननु अन्याय-निगदत्वादेव अयं नोहितव्यः, द्वयोश्चक्षुषोः एकवनान्तो यतः श्रूयते। उच्यते। नायं अध्रिगौ अधिष्ठानयोः सूर्यगमनमाह, नहि अधिष्ठाने सूर्यं गच्छतः, तेजो-रश्मिवचनस्तु अयम्। एकं च तत्तेजः। तस्मात् नायं अन्यायनिगदः। द्विपश्वादिषु च वैकृतेषु 'मैत्रं श्वेतमा-लभेत, वारुणं कृष्णं, अपां चौषधीनां च संधौ अन्न-कामः' इत्येवमादिषु पशुभेदात् तेजसो भेदे गम्यमाने ऊहः स्यात् इति प्राप्नोति। ननु एकस्मिन्नपि पशौ अधिष्ठानभेदेन भिन्ने एव तेजसी। नेत्युच्यते। 'सूर्यमस्य चक्षुर्गमयतात्' इति यत् पशोस्तेजः तद् विवक्षितं, नाधिष्ठानभेदः। पश्वन्तरेषु पशुतेजोभेदात् ऊहः इति। **एवं प्राप्ते ब्रूमः।** संसर्गिषु चार्थस्यास्थित-परिमाणत्वात्। संसर्गिषु अर्थेषु यद्यपि पशुभेदः, तथापि रश्मीनां संसर्ग एव, एकीभूताः तेषां रश्मयः। यथैव पानीयस्य तैलस्य घृतस्य वा स्तोकाः नानादेशेषु भिन्नाः समानदेशे एकीभूता भवन्ति, तद्वद् रश्मयः। तस्मादेकवचनान्तः तेषां वाचक इति अनूहः स्यात्।

लिङ्गदर्शनाच्च। २९।

**भाष्यं**— लिङ्गं खल्वपि भवति यथा संसर्गिणो नोह्यन्ते इति 'न माता वर्धते, न पिता, न नाभिः, प्राणो हि सः' इति, प्राणस्य लिङ्गत्वं हेतुत्वेन उप-दिशति। तस्मात् संसर्गिणो नोह्यन्ते इति।

**सोम**— नीवारशतावयवेषु व्रीहिशब्दस्येव एकवच-नान्तचक्षुःशब्दस्य अनेकचक्षुषु सामर्थ्याभावात् ऊहः इत्युत्थितेः **संगतिः**। ये संयुक्ता एकीभवन्ति, न घटा-दिवत् संयुक्ता अपि पृथगवतिष्ठन्ते, ते संसर्गिणः यथा आज्यतैलजलतेजःप्रभृतयः। **सूत्रार्थस्तु**— संसर्गिषु चानूहः अर्थस्य तेजःप्रभृतेः अस्थितपरिमाणत्वात् नियतपरिमाणत्वाभावात्। अत्र परिमाणशब्दः संख्या-परः। तथा च संख्यानियमः संसर्गिषु नास्ति इति निर्गतानां बहूनामपि एकत्वसंभवादनूहः इति।

**वि**—'द्विपश्वोश्चक्षुराद्यूहो न वो,-हः पशुभेदतः।, तेजोनाशस्य सूर्यादिवैकीभावादनूहनम्॥'

**भाट्ट**—दैक्षे अध्रिगुप्रैषे 'उदीचीनान् अस्य पदो निधत्तात्, सूर्यं चक्षुर्गमयतात्, वातं प्राणमन्ववसृज-तात्, अन्तरिक्षमसुं, दिशः श्रोत्रं, पृथिवीं शरीरम्' इति श्रुतम्। तत्र पशुगणे 'अस्य' इत्येकवचने द्विवचन-बहुवचनोहो निरपवादः, 'पदः' इत्यत्र अनूहोऽपि। चक्षुरादिपञ्चकविषये तु ऊहानूहचिन्तायां सत्यपि अधि-ष्ठानभेदे इन्द्रियं लाघवात् व्यासज्यवृत्ति एकमेव कल्प्यते। अभिमतं च परेषामपि इदं प्राणवायौ। अतश्च तस्य एकत्वात् एकवचनं समवेतार्थकमेव पशुभेदे तद्भेदादू-हितव्यम्। प्राणपदवाच्यप्राणं तु अधिष्ठानस्यापि एकत्वा-देकमेवेति तत्र सुतरामूहः। शरीरस्य तु प्रत्यक्षत एक-त्वात् ततोऽपि। न च चक्षुषो व्यासज्यवृत्तित्वे एकगोलक-विनाशेऽपि चाक्षुषानापत्तिः, एकगोलकमात्रवृत्तिखण्ड-चक्षुरन्तरेणैव चाक्षुषोपपत्तेः। **इति प्राप्ते,** भिन्नदेशावस्थि-ताश्रयभेदे तदाधेयभेदस्य रूपादौ औत्सर्गिकस्य त्यागेन व्यासज्यवृत्तित्वकल्पने प्रमाणाभावात्। अन्यथा सर्वप्राणि-साधारण्येनैव एकचक्षुःकल्पनाऽऽपत्तौ अस्मदिष्टसिद्ध्या-पत्तेः प्रत्यधिष्ठानं नानैवेन्द्रियम्। तच्च प्रमाणान्तरवशात् तैजसादि इत्यन्यदेतत्। तत्र च पत्नीन्यायेन (९।३।६।२०)

एकत्वस्य प्रत्येकवृत्त्यभिप्रायेणापि उपपत्तेः अनूह एव। वस्तुतस्तु गोलकाधिष्ठितस्य सूर्यगमनासंभवात् ततो निर्गतस्यैव अत्र चक्षुःपदेनाभिधानम्। **न च** पर्यग्निकरणोत्तरमेव अध्रिगुप्रैषात् तदानीं चक्षुरादीनां गोलकस्थत्वात् न निर्गमनं इति **वाच्यम्**। अनन्तरभाविसंज्ञपनफलस्यैव पूर्वमुच्यमानत्वेन बाधकाभावात्। अतश्च निर्गतस्यैव चक्षुषः प्रदीपप्रभावत् अनेकस्यापि संसर्गेण एकीभावात् प्रकृतौ एकवचनं निर्वाह्यम्। ततश्च विकृतावपि तथैव संभवादनूहः। नहि निर्गतचक्षुषां प्रदीपानामिव भिन्नदेशावस्थानस्यैव कल्पनान्नैकीभावः, एकगोलकमीलने तत्पुरःप्रदेशावस्थितघटादेः गोलकान्तरस्थितचक्षुषा दर्शनेन निर्गतचक्षुषः विस्फारणकल्पनात् एकीभावोपपत्तेः। अत्र च तेजस्त्वादिवत् चक्षुष्ट्वादिकमपि अवयवावयविवृत्तिजातिः, तेन तत्तद्गोलकस्थिततत्तच्चक्षुर्भिः आरब्धः अवयवी अपि चक्षुरेव इति नोहप्रसक्तिः। एवं प्राणपदवाच्यघ्राणेन्द्रियेऽपि बोध्यम्। शरीरे तु यद्यपि नैकीभावसंभवः, तथापि उच्यमानस्य कारणीभूतसूक्ष्मपृथिव्यां लयापरपर्यायगमनस्य प्रत्यक्षबाधितत्वात् प्रकृतावेव स्तुत्यर्थमुच्यमानतया असमवेतार्थकत्वात् अनूहो द्रष्टव्यः। शरीरे ऊहं के चिदिच्छन्ति।

**न्यायबिन्दुः**— अध्रिगुप्रैषे 'सूर्यं चक्षुर्गमयतात्' इत्यादौ द्विबहुपशुकेषु द्विबहुवचनोहः, एकवचनस्य प्रकृतौ चक्षुषस्तेजस्त्वेन जलवत् संसर्गितया स्वरूपतः संख्याऽनर्हत्वेन पशूपाधिकत्वात् अधिष्ठानौपाधिकत्वे द्वित्वापत्तेः। अतः पशुसंख्यावशेनोहः। **इति प्राप्ते**, अधिष्ठानान्निर्गतं तेजः एकीभवति इत्यभिप्रायमेकवचनं, न तु अधिष्ठानाभिप्रायं, तयोः सूर्यगमनायोगात्, द्वित्वाच्च। अतः पशुभेदेऽपि उक्तैक्यसंभवात् अनूहः इति सिद्धान्तः।

**मण्डन**— 'नोहं विदध्यात् खलु चक्षुरादौ।'

**शंकर**— 'संसर्गिष्वध्रिगौ ( गुर् ) नोह्यः।' ११.

**अध्रिगुप्रैषगतेन उरूकशब्देन वपाऽभिधानम्॥**

**वनिष्ठुसंनिधानादुरूकेण वपाऽभिधानम्।** ९।४।३।२२॥

**भाष्यं**— ज्योतिष्टोमे अग्नीषोमीये पशौ अध्रिगौ वचनं 'वनिष्ठुमस्य मा राविष्टोरूकं मन्यमानाः' इति। तत्र उरूकशब्दं प्रति विचारः किं वनिष्ठुं अस्य मा राविष्ट उलूकसदृशं मन्यमानाः, उत उरूकं वपां मन्यमानाः वनिष्ठुं मा राविष्ट इति। किं प्राप्तं? वनिष्ठुं उलूकं मन्यमाना इति। कथं उरूकशब्दः उलूकवचनः? रलयोः समानवृत्तित्वात्। पर्यङ्कः पल्यङ्कः, रोमाणि लोमानि, अङ्गुरिः अङ्गुलिः। उलूकसदृशत्वाच्च वनिष्ठोः, वपायां चाप्रसिद्धेः। **एवं प्राप्ते ब्रूमः**, उरूकशब्देन वपाऽभिधानं स्यात्। वपां मन्यमानाः वनिष्ठुं मा राविष्ट इत्येषा बुद्धिः क्रियमाणा दृष्टार्था। भवति हि वनिष्ठुसंनिधानात् व्यामोहेन वनिष्ठोर्लवनप्रसङ्गः। तं च निवर्तयन् एष शब्दो दृष्टप्रयोजनो भवति। नहि वनिष्ठुर्न लवितव्य एव। वपोद्धरणकाले वपां मन्यमानैः न लवितव्यः। इतरस्मिन् पक्षे वनिष्ठुं मा राविष्ट इति लवितव्ये वनिष्ठौ अनर्थकः प्रतिषेधः। उलूकसदृशवचनं चादृष्टार्थम्। कथं पुनर्वपायां अप्रयुक्तो वपां प्रत्याययिष्यति उरूकशब्दः इति? । उच्यते। अवयवप्रसिद्ध्या। उरुशब्दस्तावत् विस्तीर्णवचनो दृष्टः। तद्यथा 'उरु राजाङ्गणं' 'उरु तैलिकाङ्गणं' इति। तथा, 'उरुं हि राजा वरुणश्चकार सूर्याय पन्थामन्वेतवा उ' इति। तथा, 'उरु विष्णो विक्रमस्व' इति। इहापि स विस्तीर्णवचन एव। तथा कशब्दो मेदसि प्रसिद्धः। यथा, 'कशवाहिनो रथाः' मेदोवाहिन इति गम्यते। तस्यैकदेशः कशब्दः समुदायप्रत्ययमादधाति। मेदस्विनी तस्य वपा। न विस्तीर्णे मेदो मन्यमानेन तत्संनिकृष्टो वनिष्ठुः लवितव्यः इति वपावचनता सिद्धा भवति। किं भवति **प्रयोजनं**? वनिष्ठुवचनपक्षे उपमानस्य उरूकशब्दस्य अनूहः। वपावचनपक्षे उरुशब्द ऊहितव्यः कशब्दश्चेति 'उरुणी के, उरूणि कानि'। अथवा उरूके उरूकाणि यदि समासाभिप्रायः।

**सोम**— षड्विंशतिशब्दे समस्यवचनात्मकोहेऽपि उरूकशब्दे नोहः इत्युत्थितेः **संगतिः**। वनिष्ठुर्नाम वपासंनिहितो वपासदृशः अवयवविशेषः। **सूत्रार्थस्तु**—

उरुकशब्देन वपाऽभिधानं स्यात् वनिष्ठुसंनिधानात्। वनिष्ठुसंनिधानकृतव्यामोहनिवर्तनेन दृष्टार्थत्वादिति।

**वि**— 'पक्षी वपाऽथवोरूको, रलयोरविशेषतः। पक्षी, वपा संनिधानाद् भ्रान्तिच्छेदनिषेधतः॥' अनेकवपासु विकृतिषु उरुकशब्द ऊहनीयः।

**भाट्ट**— अग्निगुप्रैषे एव 'वनिष्ठुमस्य मा राविष्ट उरूकं मन्यमानाः' इति श्रुतम्। तत्र उरूकपदेन किं उलूकस्याभिधानं, किंवा वपाया इति चिन्तायां, वपायां उरुकशब्दप्रयोगाभावात्, अन्यत्र वेदे लकारस्थाने रेफदर्शनात् लोकेऽपि च रोमाणि लोमानि इत्यादौ रलघटितपदयोः समानवृत्तिकत्वदर्शनात्, उरूकपदेन उलूकाभिधानं, ततश्च उलूकबुद्ध्या वनिष्ठुं मा छिन्दत इति मन्त्रार्थः। ततश्च वपाऽनेकत्वे (अपि) न उरुकशब्दस्योहः। **इति प्राप्ते**, न तावत् वनिष्ठोः सर्वथैव लवनं निषिध्यते, हृदयादिवत् तस्य हविष्ट्वेन लवनस्यावश्यकत्वात्। नापि उलूकसादृश्यबुद्धिः लवनकाले निषिध्यते, अदृष्टार्थत्वापत्तेः। अतः उरुकशब्देन अवयवयोगेन वपाऽभिधानमेव। वपोद्धरणकाले वपां मन्यमानाः भ्रान्त्या वनिष्ठुं मा छिन्दत इत्यर्थः। वनिष्ठोः वपायागोत्तरकालं लवितव्यत्वात्। अतः तस्य पूर्वं लवनप्रतिषेधवचनं दृष्टार्थं भवति। अवयवयोगश्च उरुशब्दो विस्तीर्णवाची, दीर्घश्छान्दसः, कशब्दो मेदोवाची, नामैकदेशे नामग्रहणात् क-शब्दोऽपि तद्वचन एव, ततश्च पदद्वयमिदं समासो वा। विस्तीर्णं मेदो वपाऽऽख्यं च तदर्थः। न च रूढ्या योगबाधः, रेफघटितस्य पदस्य उलूकेऽपि रूढ्यभावात्। अतश्च वपाऽनेकत्वे उरूणि कानि इतिपदद्वयपक्षे, उरूकाणि इति समासपक्षे ऊहः कार्यः।

**न्यायबिन्दुः**— 'वनिष्ठुमस्य मा राविष्टोरुकं मन्यमानाः' इत्यत्र उरुकशब्देन रलयोरेकत्वात् उलूकाभिधानात् तत्सादृश्यबुद्ध्या वनिष्ठोः अवयवविशेषस्य लवनप्रतिषेधः। **इति प्राप्ते**, उरु विस्तीर्णं, कं मांसं इति वपाऽभिधानम्। वपोद्धरणकाले संनिधानात् भ्रान्त्या वनिष्ठोर्लवनं प्राप्तं निषिध्यते। तस्मात् वपाविवृद्धौ ऊहः इति सिद्धान्तः।

**मण्डन**— 'वनिष्ठुभावो नोलूके।'

**शंकर**— 'अग्निर्गौ च वपोरुकम्।'

॥ अग्निगुप्रैषगतेन प्रशसाशब्देन बाह्वोः प्रशंसा।

**प्रशसाऽस्यभिधानम्। ९।४।२३॥**

**भाष्यं**— तस्मिन्नेवाग्निगौ आम्नायते 'प्रशसा बाहू' इति। तत्र संदेहः किं प्रशसा बाहू कृणुतात्, प्रशसा इति तृतीयान्तः प्रशसा बाहू ग्रहीतव्यौ इति, उत प्रशसा इति द्विवचने आकारे निमित्ते कृते प्रशस्तौ बाहू कर्तव्यौ इति। किं प्राप्तं? प्रशसा अस्यभिधानम्। असौ हि शासशब्दः प्रसिद्धः। तथाहि तमनुवदति, 'दश प्रयाजानिष्ट्वा आह शासमाहर' इति। 'असिं वै शासमाचक्षते' इति। अनर्थिका च बाह्वोः स्तुतिः। स्तुतौ बाहू किमपि अदृष्टं कुरुतः इति मान्त्रवर्णिकं तयोर्दैवतात्वं कल्पितं स्यात्। तच्चायुक्तं अन्यस्मिन् पक्षे सति। तथा शौनःशेपे भवति दर्शनं 'अतस्त्वामग्निं शासहस्तं शासेन विशसन्त्वाम्न द्रष्टुमर्हे' इति। तस्मात् असिना प्रशसा इति गम्यते।

**बाहुप्रशंसा वा। २४॥**

**भाष्यं**— अथवा बाहुप्रशंसा एषा। प्रशसा बाहू कृणुतात्, प्रशस्तौ बाहू छेत्तव्याविति। तथा प्रशसाशब्दस्य दृष्टार्थता भविष्यतीति। कार्त्स्न्येन हि बाह्वोः प्रशस्तता। कृत्स्नौ बाहू उद्धरत इत्यर्थः। कृत्स्नौ च बाहू उद्धर्तव्यौ इति। इतरस्मिन् पक्षे स्वधितिना विशसनं क्रियते, असेश्च वाचकः शब्द उच्चार्यते। यदि वा मान्त्रवर्णिकं द्रव्यं विधीयते, असिना बाहू छेत्तव्यौ इति, तच्चायुक्तं विधिविहिते स्वधितौ सति। न च न प्रशस्तौ बाहू, ताभ्यां पशुर्हि गच्छति। अवनम्य च शमीकरीरं (शमीकरीरे इति पाठः) भक्षयति। तस्मात् बाहुप्रशंसा। किं भवति **प्रयोजनं**? अश्वमेधे शतं राजता हरितत्सरवः असयः। तत्र असिपर ऊहो भवति यथा पूर्वः पक्षः। यथा तर्हि सिद्धान्तः, तथा बाहुपरेण ऊहेन भवितव्यम्।

**शा**— बाहुविवृद्धौ ऊहः।

**सोम**— यथा उरुकशब्दस्य पक्ष्यभिधाने निष्प्रयोजनतया प्रयोजनवत्त्वाय वपाऽभिधायकत्वं, तथा प्रशसा-

शब्दस्यापि प्रशस्तवाचकत्वे प्रयोजनाभावात् अस्यभिधायकत्वं इत्युत्थितेः **संगतिः** । **सूत्रे** प्रशसा प्रशसाशब्देनेत्यर्थः ।

**त्रि** -- ‘ प्रशसेत्यसिरर्थः स्यात् स्तुतिर्वा, छेदनादसिः । , स्तुतिः कार्त्स्न्याय बाह्वोः स्यात् स्वधितिश्छेदसाधनम् ॥ ’ न तु असिः छेदसाधनम् ।

**भाट्ट** -- तत्रैव प्रैषे ( अध्रिगुप्रैषे ) ‘ प्रशसा बाहू ’ इति श्रुतम् । अत्र कृणुतात् इत्यनुषज्यते । तत्र प्रशसा इत्यनेन किं करणीभूतः शासः उच्यते, उत प्रशस्तत्वं इति चिन्तायां, प्रशसायां अदृष्टार्थत्वापत्तेः प्रशसा इति तृतीयान्तं अकारलोपेन ह्रस्वेन च शासवाची । शासशब्दश्च ‘ असिं वै शासमाचक्षते ’ इत्यादिलिङ्गात् असिवचनः । ततश्च असिना खड्गेन बाहू छिन्दत इति प्रैषार्थः । यद्यपि च स्वधितिरेव पशुप्रकरणे सामान्यतः छेदने विहितः, तथापि बाहुच्छेदने मान्त्रवर्णिको विशेषविधिः अनेन न विरुध्यते । अतश्च अश्वमेधे ‘ शतं राजता हरितत्सरवः असयः भवन्ति ’ इति असिबहुत्वस्य विधानात् तदनुरोधेन ऊहः । **इति प्राप्ते**, भाष्यकारादिभिः एवं समाहितं, प्रत्यक्षविहितस्वधितिसत्त्वे मान्त्रवर्णिकशासविधिकल्पनायां **गौरवात्** प्रशसापदं प्रशस्तत्वपरमेवेति । तत्तु स्वयमेव ‘ दश प्रयाजानिष्ट्वा आह शासमाहर ’ इति वाक्यस्य लिखितत्वात्, शासस्यापि पशौ विहितत्वेन उपेक्षितम् । वस्तुतस्तु बोधायनादिसकलकल्पपर्यालोचनया शासपदस्य स्वधितावपि शक्त्यवगमात् बाहुच्छेदनेऽपि स्वधितेरेव प्रसक्तेः न मान्त्रवर्णिकद्रव्यान्तरकल्पना । यत्तु ‘ असिं वै शासमाचक्षते’ इति लिङ्गं, तत् स्वधितेरेव असितुल्यत्वेन स्तुत्यर्थम् । असिशब्दस्य निघण्टौ स्वधितिपर्यायत्वेन पाठाद्वा शासशब्दस्य स्वधितिपर्यायत्वसूचनार्थं न विरुध्यते । अतश्च शासस्य बाहुच्छेदने करणत्वसत्त्वेऽपि प्रशसा इति पदेन न तदभिधानम् । तकारमात्रलोपस्य बाहुलकत्वे संभवति, अकारलोपस्य ह्रस्वस्य च बाहुलकत्वाङ्गीकारे प्रमाणाभावः । द्वितीयाद्विवचनान्तत्वाङ्गीकारेण बाहुसमानाधिकरण्ये संभवति वैयधिकरण्यस्य अन्याय्यत्वाच्च । द्विवचनस्य आकारादेशस्तु स्वतन्त्रसूत्रविहितः ( सुपां सुलुक्० इति) इति न तस्य बाहुलकत्वम् । एवं च ‘शलादोपणी ’ इत्यादिप्रायपाठोऽपि संगच्छते । अतश्च प्रशसापदेन प्रशस्तत्वाभिधानात्, तस्य च अविकलत्वसूचनार्थतया दृष्टार्थत्वात्, बाहुविवृद्धौ ऊहः । तत्रापि प्राकृतपदस्य बाहुद्वये छान्दसत्वात् बाहुबहुत्वे, द्विपाशिकायां विकृतौ बहुवचनान्तपाशमन्त्रस्येव अप्रवृत्तेः ‘ स्वाधीने शब्दप्रयोगे ’ इति न्यायेन ‘प्रशस्तान् बाहून्’ इत्यूहः । पूर्वपक्षे च ‘ प्रशासैः ’ ( इति ऊहः ) इति द्रष्टव्यम् । इदं च महाभाष्यस्वारस्यात् कान्तधातोरिव मान्तधातोरपि तुल्यन्यायत्वात् क्विब्विचौ न स्तः इत्यङ्गीकृत्य शासपदस्यैव शस इति छान्दसं इत्याशय प्रशंसार्थत्वमुक्तम् । यदा तु महावार्तिकस्वारस्यात् बहुतरप्रयोगाच्च सान्तधातोः क्विब्विचौ इष्येते तदा पठ्यमानस्वरानुगुण्यात् ‘ शसु हिंसायां ’ इत्यनुशिष्टस्य हिंसार्थकस्य शस्धातोः लुप्तक्विबन्तस्य तृतीयान्तरूपाश्रयणेऽपि छान्दसत्वकल्पनाऽभावात् हिंसासाधनस्वधितिकरणकत्वावगतेः याज्ञिकसंमतः शासवृद्धौ एव ऊहः अनुसंधेयः । (याज्ञिकास्तु प्रशसाशब्दे अनूहं, बाहुशब्दे चोहं कुर्वन्ति । कु )

**मण्डन** — ‘ प्रशसा बाहुसंस्तुतिः । ’

**शंकर** — ‘ प्रशसा च प्रशस्तता । ’ ५.

* अध्रिगुप्रैषे ‘ ता अनुष्ठ्योच्च्यावयतात् ’ इत्यत्र अनुष्ठ्या इति अनुतिष्ठतेः प्रयत्नकर्मणः स्त्रियां ‘ आतश्चोपसर्गे ’ ( पा० ३।३।१०६ अङ् स्यात् क्तिनोऽपवादः ) इति अङन्तात् टाप् तृतीयैकवचनम् । ‘ सुपां सुलुक् ’ (पा० ७।१।३९) इत्यादिना प्रादेशिकलोपश्च । उच्च्यावयतेः उद्धरणकर्मणः प्रैषे लोटः मध्यमपुरुषबहुवचनस्य तातङादेशे रूपं उच्च्यावयतात् इति । प्रयत्नेन उद्धरत इत्यर्थः । **रत्न.** ९।४।१।१.

**अध्रिगुप्रैषे पशुगणे समस्तवङ्क्रीयत्ताप्रकाशनार्थं समासेन वचनम् ॥**

**षड्विंशतिरभ्यासेन, पशुगणे तत्प्रकृतित्वाद्, गुणस्य प्रविभक्तत्वादविकारे हि तासामकार्त्स्न्येनाभिसंबन्धो विकारान्न समासः स्यादसंयोगाच्च सर्वाभिः । ९।४।१।१ ॥**

**भाष्यं**— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः, 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति। तत्राध्रिगुप्रैषे इदमाम्नायते 'षड्विंशतिरस्य वङ्क्रयः' इति। तच्चोदकेन द्विपश्वादीन् पशुगणान् संप्राप्तं, 'मैत्रं श्वेतमालभेत, वारुणं कृष्णमपां चौषधीनां च संधावन्नकामः' इत्येवमादिषु। अयमर्थः सांशयिकः किं षड्विंशतिशब्दोऽभ्यसितव्यः, किमविकारेण प्रयोक्तव्यः, किं वचनमात्रमूहितव्यं, अथवा अस्यपदाभ्यासः, उत समस्य वचनमिति। किं प्राप्तम्? षड्विंशतिशब्दोऽभ्यसितव्यो द्विपश्वादिषु पशुगणेषु। किं कारणम्? प्रकृतावेकस्य पशोः षड्विंशतिर्वङ्क्रय उक्ताः। इह स गुणः प्रविभक्तः। पशौपशौ षड्विंशतिर्वङ्क्रय इति। तत्र यद्यविकारेण प्रयुज्येत, न कृत्स्ना वङ्क्रीरभिवदेत्। अथ समस्य वचनं क्रियते, तथा षड्विंशतिशब्दो निवर्तेत, तत्राऽऽर्षं बाधितं स्यात्। न च सर्वाभिर्वङ्क्रिभिः पशोः संबन्धोऽस्ति। पशुद्वयस्य ताभिः संबन्धः। न च पशुद्वयं पशुः। **ननु** पशोः कार्ये यः पशोः स्थाने, स वङ्क्रिभिः संबन्धयितव्यः, तथा हि प्रकृतौ वचनं कृतम्। समस्ताभिर्वङ्क्रिभिः पशुद्वयस्य संबन्धे कृते एकैकस्य षड्विंशत्या संबन्धः प्रत्यायितः स्यात्। **अत्रोच्यते**। नैवं प्रकृतौ कृतम्। प्रकृतौ च साक्षात् षड्विंशत्या पशुसंबन्धः। इह परसंख्यया संबन्धे क्रियमाणे परोक्षया अवयवसंख्यया संबन्ध आनुमानिकः स्यात्। न च नियोगतः षड्विंशत्या एकैकस्य संबन्धः प्रत्यायितः स्यात्। पञ्चविंशतिरेकस्य सप्तविंशतिरेकस्येदृशमपि तत्र गम्यते। न चैवं प्रकृतावभिधानं कृतम्। तस्मादभ्यसितव्य इति।

**टुप्**— अस्मिन्नधिकरणे पञ्च पक्षाः। (षड्विंशतिः अस्य इति पदयोरभ्यासः इति प्रथमः। अविकारः इति द्वितीयः। षड्विंशतिपदे वचनोहः इति तृतीयः। अस्य-पदस्य ऊहः इति चतुर्थः। समासः इति पञ्चमः। तत्र—) पक्षस्य वचनव्यक्तिः (तात्पर्यं) निरूप्यते। षड्विंशतिः (अस्य वङ्क्रयः) इति त्रिपदं वाक्यम्। तत्र एकः पक्षः संबन्धप्रधानः। (कः संबन्धः इत्युच्यते—) 'षड्विंशतिः अस्य' अनयोः (पदयोः) यः संबन्धः (सोऽत्र मन्त्रे प्रधानम्। एवं च प्रथमः पक्षः सिध्यति।) तस्य (च संबन्धस्य) शब्दो वाचको नास्ति, येन असौ उच्येत। यः (च) प्रधानं, सोऽवश्यं प्रकाश्यः। तत्र अर्थात् संबन्धिनौ अन्वस्येते (षड्विंशतिः षड्विंशतिरस्यास्य वङ्क्रयः इति। अस्योपपत्तिमाह—) एवं (संबन्धप्राधान्ये अन्वानमात्रं) अल्पं विकृतं भविष्यतीति। (तर्हि वङ्क्रिशब्दस्य कथमन्वयः। अत आह—) वङ्क्रिशब्दश्च षड्विंशत्यर्थः (षड्विंशतिशब्दविशेषणार्थः,) द्रष्टव्यः।

(अथ) द्वितीयः पक्षः। अकरणोऽयं मन्त्रः प्रमाणान्तरेण प्रकाशितमर्थं प्रकाशयति। न (च प्रमाणान्तरेण) प्रकाशितस्य प्रकाशने प्रयोजनमस्ति (इत्यदृष्टार्थोऽयम्)। एवं च यत् प्रकृतौ कृतं, तत् विकृतौ भवति, (इति) न किं चित् बाधितम् (तस्मादविकारः इति)।

(अथ) तृतीयः पक्षः। षड्विंशतिशब्दः उभाभ्यां (अस्य-वङ्क्रिपदाभ्यां) विशेष्यते। सोऽत्र प्रधानभूतः। (एवं च तृतीयः पक्षः सिध्यतीत्याह—) द्वयोः (पश्वोः) षड्विंशतिसंख्ये प्रकाश्येते। ते च अविकृतेन षड्विंशतिशब्देन अशक्ये प्रतिपादयितुं, तस्मात् वचनोहः (षड्विंशती इति। उपपत्तिमाह—) एवमल्पं विकृतं भविष्यति। (आम्नातास्तु इति द्वादशे सूत्रे 'ननु षड्विंशती इत्यभिधाने' इत्यादिभाष्यं अर्थतोऽनुभाष्य व्याचष्टे—) ननु षड्विंशतिशब्दप्राधान्ये वङ्क्रीणां प्रथमा न प्राप्नोति इति। कोऽभिप्रायः? द्वेधा हि संख्याशब्दाः (प्राक् विंशतेः संख्येयप्रधानाः द्वौ त्रयः इत्यादयः) ऊर्ध्वं (तु) विंशतेः उभयप्रधानाः। तत्र यदा संख्या आत्मानमुपसर्जनीकृत्य संख्येये वर्तते, तदा विना षष्ठ्या सामानाधिकरण्यं भवति यथा 'विंशतिर्गावः' इति। यदा (पुनः) संख्या प्रधानभूता (संख्येयं न स्पृशति) तदा षष्ठीमन्तरेण संख्येयशब्देन सामानाधिकरण्यं नास्ति 'विंशतिर्गवां' इति यथा। इह च संख्या प्रधानभूता (त्वन्मते) वङ्क्रयश्च प्रथमान्ताः। (तत्) कथं विना षष्ठ्या सामानाधिकरण्यं इत्यभिप्रायः परिचोदयतः। अत्र (उत्तरमाह भाष्यकारः १२ सूत्रे) लक्षणया सामानाधिकरण्यं वाक्येन इत्यर्थः (नहि अन्यथा

संख्याप्रधानेन शब्देन एकवाक्यत्वं घटते। ननु द्रव्यवाचिनां गुणपरत्वं क चिन्न दृष्टं, अत आह–) दृश्यते च प्रयोगः **यथा इन्द्राग्नी देवता इति**। यदा देवतात्वेन गणः ( समुदायः ) विवक्षितो भवति न च प्रधानभूतः, तदाऽपि विनैव षष्ठ्या सामानाधिकरण्यं दृश्यते **यथा देवदत्तविष्णुमित्रयज्ञदत्ताः पर्षदिति**। अत्र पर्षच्छब्दश्च प्रधानभूतः, इतरे देवदत्तादयः शब्दाः तद्विशेषणत्वेन, तथा वेदेऽपि **पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः** इति। अत्र ( पञ्चाशत्- ) संख्या प्रधानभूता, तथापि विनैव षष्ठ्या ( त्रिवृत्संवत्सरशब्दाभ्यां संख्येयवाचिभ्यां ) सामानाधिकरण्यम्। ननु ( अत्र ) संख्या संवत्सरविशेषणार्था। ( नेत्याह– ) तथा सति पञ्चशब्दः अकिंचित्करो भवति, पञ्चाशच्छब्दं तु ( संख्याप्रधानं ) विशेषयन् अर्थवान् ( भवति। उपसंहरति– ) तस्मात् संख्या प्रधानभूता।

( अथ ) चतुर्थः पक्षः। वङ्क्रिशब्दः अस्यपदविशेषणं, संख्या च (तस्यैव विशेषणम्)। ननु अस्यशब्दः षष्ठ्या परार्थः, ( सः ) कथं प्राधान्यं प्रतिपद्यते। ( उत्तरं ) आह, **' यथा इन्द्रस्य नु वीर्याणि प्रवोचम् इति '** ( पुरोऽनुवाक्यायां ) इन्द्रे षष्ठी चास्ति, न च ( तावता ) परार्थः। ( स्तोत्रशस्त्रेषु हि गुणवचनस्यैव प्रधानत्वात् वीर्यविशेषणमिन्द्रः, पुरोऽनुवाक्यायां तु स देवताभूतः प्रकाशयितव्यः। अत्र आह इत्युक्त्या भाष्यपङ्क्तिरभिप्रेता वार्तिककारस्य, सा च प्रकृताधिकरणे नास्ति, परंतु २।१।५।२४ सूत्रे ' अपि तु श्रुतिसंयोगो भवति षष्ठीविभक्तिसंयोगः, यथा इन्द्रस्य नु वीर्याणि प्रवोचं इति। तेन देवताशब्दः स्तुतिसंबन्धार्थः इत्युच्यते ' इति भाष्यपङ्क्तिर्विद्यते, सैवेह अभिप्रेता स्यात् इति ध्येयम् )। लोके च यथा ' चित्रगुः आनीयतां ' इत्युक्ते षष्ठीनिर्दिष्टोऽपि ( विग्रहे पुरुषः, समासवेलायां ) प्रधानम्। एवमिहापि ( षष्ठ्या विशेषणभूतोऽपि पशुः तात्पर्यवृत्त्या प्रधानं भवति। तेन– ) **यत्र द्वौ पशू विद्येते, तत्र द्वयोः प्रकाशनं कर्तव्यम्। तच्च ( अनभ्यस्तेन ) अस्यशब्देन न क्रियते ( तस्मात् अस्यशब्दः अभ्यसितव्यः। कथं पशुः प्रधानं, तत्राह–)** पशुश्चोदितः ( प्रयोजनवान् ) स च प्रकाशयितव्यः ( अनुष्ठानाय )।

सिद्धान्तस्तु ( पञ्चमः पक्षः। अस्यशब्देन षड्विंशतिशब्देन च ) उभाभ्यां वङ्क्रीयत्ता परिच्छिद्यते एतावत्योऽस्य वङ्क्रयः इति अस्यशब्दस्य षष्ठ्यन्तत्वात् संख्याशब्दस्य ( च षड्विंशतिशब्दस्य ) संख्येयप्राधान्यात्। ( ततः किं ? तत्राह– ) तत् यत्र द्वौ पशू ( विद्येते ), तत्र वङ्क्रीयत्तापरिच्छेदकः शब्दः उच्चारयितव्यः। न च समासमन्तरेण ( तत्र ) इयत्ता शक्यते वदितुम्। ( तस्मात् समस्य वचनं ' द्विपञ्चाशदनयोर्वङ्क्रयः ' इत्यादि कर्तव्यम्।

इदानीं प्रातिलोम्येन चतुर्थपक्षे दूषणमाह– ) तत्र यत् तावत् पशुप्राधान्यं, तत् यज्ञपतिशब्देन प्रत्युक्तम्। ( यथा ' ये यज्ञपतिं वर्धान् ' इत्यत्र ) यज्ञपतेः ( कर्मसमवेतस्यापि ) परविशेषणत्वात् न प्राधान्यं ( एवं पशोरपि वङ्क्रिविशेषणत्वान्न प्राधान्यम्। ' मेधपतिशब्देन प्रत्युक्तं ' इति क्वचित् पाठः। तत्र यज्ञपतिशब्द एव मेधपतिशब्दः इति व्याख्येयम्। क चित्तु ' मेधपतिपशुशब्देन प्रत्युक्तं ' इति पाठः। तत्रायमर्थः, यथा ' मेधपतिभ्यां मेधं ' इत्यत्र यजमानस्य मेधपतित्वे मेधपतये यो मेधः पशुः तमुपनयत इत्याश्रीयमाणे प्रयोजनानिर्देशात् साकाङ्क्षं वाक्यं स्यात् इत्युक्तं मेधपत्यधिकरणे ९।३।१२, एवमिहापि पशुप्राधान्यं साकाङ्क्षत्वदूषणादेव प्रत्युक्तं इति ) [ इतःपरं पङ्क्तिद्वयोत्तरं 'किंच वङ्क्रीणां तु यागसंबन्धात् प्रकाशनमवश्यं कर्तव्यं, ता हि हविः, न तु पशुः, स हविषः प्रकृतिः। तुशब्दः चशब्दार्थे। तथा च दृष्टार्थता अध्रिगोर्भवति कृत्स्नं पार्श्वमुद्धरिष्यते इति। तस्मात् न पशोः प्राधान्यम् ' इति पङ्क्तिः तन्त्ररत्ने उपलभ्यते। टुप्टीकायां तु अत्रत्यं न किमप्युपलभ्यते। इति विचार्यमिदम्। ] ( तृतीयपक्षदूषणमाह– षड्विंशति– )संख्यायाः प्राधान्ये ( यत् ) सामानाधिकरण्यं लक्षणया, स एव दोषः, अदृष्टार्थता च ( दोषः )। न च सर्वं प्राकृतं ( भवति, तत्रापि पक्षे विंशती विंशतयः इति वचनान्यथाभावात्। द्वितीयं पक्षं दूषयति– ) अदृष्टार्थत्वे ( मन्त्रस्य ) अदृष्टार्थतैव दोषः

सत्यां दृष्टार्थतायाम् । ( प्रथमपक्षं दूषयति– ) न च संबन्धो वचनेन ( मन्त्रवाक्येन ) चोदितः ( विहितः ) यः प्रकाश्यते । ( अथापि नाम शक्यते प्रकाशयितुं, तथापि-- ) अदृष्टार्थता अवस्थितैव । (तत्रापि च पक्षे–) प्राकृतशब्दबाधश्च ( अस्त्येव, अभ्यासाश्रवणात् । दूषणान्तरमपि द्वितीयवर्जं इतरेषु पक्षेषु दर्शयति–) 'ता अनुष्ठ्योच्च्यावयतात्' इति च सर्वनामशब्दो वङ्क्रीवचनप्रत्यवमर्शकः । ( तत्र ) यदि ( पशुप्राधान्यमाश्रित्य ) अस्यपदस्याभ्यासः ( क्रियते यथा चतुर्थपक्षे, ततः पशोः पुंलिङ्गत्वात् ) 'तौ' ( तान् ) इति प्राप्नोति । ( ततश्च तत्पदेऽपि आर्षबाधः । प्रकृते च पशोरेकत्वात् पुंस्त्वाच्च 'तं' इति प्राप्नोति) । यदि संख्यायाः (प्राधान्यं यथा तृतीयः पक्षः, तथा सति एकत्वात् संख्यायाः 'तां' इति ( प्राप्नोति । प्रथमपक्षे तु संबन्धे प्रधाने तस्यैकत्वात् पुंस्त्वाच्च 'तं' इति प्राप्नोति । तेन 'ताः' इति निर्देशात् वङ्क्रीणां प्राधान्यं गम्यते ) ।

**अभ्यासेऽपि तथेति चेत् । २ ॥**

**भाष्यं**— इति चेद्भवान् पश्यति, समासवचने अप्राकृतः शब्द उच्चरितो भवतीति । अभ्यासेऽपि अनभ्यस्तं प्रकृतौ वचनम् । इह साभ्यासमप्राकृतं स्यात् ।

**न, गुणादर्थकृतत्वाच्च । ३ ॥**

**भाष्यं**—नैष दोषः । गुण एष शब्दस्याभ्यासो नाम । स मत्पक्षे अप्राकृतः, त्वत्पक्षे पुनः शब्द एव । 'अङ्गगुणविरोधे च तादर्थ्यात्' ( १२।२।९।२० ) इत्युक्तम् । अर्थाच्च मयैतदश्रुतमुपादीयते , प्रविभक्तं गुणं वक्तुम् । यच्च श्रुतचिकीर्षया अश्रुतं क्रियते, इष्यते एव तदस्माभिः । तस्माददोषः ।

**समासेऽपि तथेति चेत् । ४ ॥**

**भाष्यं**— इति चेत्पश्यसि, अभ्यासवचने चोदकोऽनुगृहीतो भविष्यति । कार्त्स्न्येन वङ्क्रयो वक्ष्यन्ते इति । समासेऽपि चोदकानुग्रहः कार्त्स्न्येन वङ्क्रीणामभिधानात् । अपि च समासवचने यौगपद्यवचनात् प्रयोगवचनः अनुगृहीतो भविष्यति । तस्मात् समसितव्या वङ्क्रयः इति ।

**नासंभवात् । ५ ॥**

**भाष्यं**— नैतदेवम् । न चोदकोऽनुगृहीतः, षड्विंशतिशब्दप्रयोगात् । तत्र प्रयोगवचनः, समस्तवचनात् । न च संभवति चोदके प्रयोगवचनं प्रति अदर्शनम् । बलीयान् हि चोदकः । स हि धर्माणामनुग्राहकः प्रत्यक्षश्च । प्रयोगवचनः प्रमाणानुग्रहसंग्राहकः । स उत्तरकालः अर्थविप्रकर्षात् दुर्बलः । तस्मादभ्यसितव्यं वचनमिति ।

**स्वाभिश्च वचनं प्रकृतौ, तथेह स्यात् । ६ ॥**

**भाष्यं**— स्वाभिश्च वङ्क्रिभिः पशुरुपलक्षितः प्रकृतौ, इहापि तथैवोपलक्षयितव्यः, नोऽभ्यासवचने शक्यते । समासवचने हि परसंख्या समुदायस्योक्ता भवति, तथा न स्वाभिः पशव उपलक्षिता भवन्ति । तस्मादसदेतत् ।

**वङ्क्रीणां तु प्रधानत्वात् समासेनाभिधानं स्यात् , प्राधान्यमध्रिगोस्तदर्थत्वात् । ७ ॥**

**भाष्यं**– तुशब्दः पक्षं व्यावर्तयति । नैतदेवं अभ्यसितव्यः षड्विंशतिशब्द इति । किं तर्हि ? समस्य वदितव्या वङ्क्रय इति । कुतः ? तत्र वङ्क्रीणां प्रधानत्वात् । प्राधान्यं हि तासाम् । प्रकृतौ षड्विंशतिरेता वङ्क्रय इत्यभिसंबन्धस्तत्रेप्सितः । षड्विंशतिरस्येति वङ्क्रयो गणिताः । न ताभिर्गणिताभिः पशुरुपलक्षितः । किं कारणम् ? वङ्क्रिभिर्गणिताभिर्दृष्टं प्रयोजनं, कृत्स्नं पार्श्वमुद्धरिष्यते इति । न तु वङ्क्रिभिर्गणिताभिः पशौ उपलक्ष्यमाणे किं चित् दृष्टमभ्यधिकं भवति । तस्मान्न पशुसंबन्धो विवक्षितः । एवं प्राधान्यं वङ्क्रीणाम् । अध्रिगोः वङ्क्रयर्थत्वान्न तस्य संख्यापशुसंबन्धः प्रयोजनम् । तस्मात् समस्य वचनं कर्तव्यम् । एतावत्त्वं प्रकृतावुक्तमिति विकृतौ एतावत्त्वैव वक्तव्येति । तस्मात् समस्य वचनं कर्तव्यमिति ( सिद्धान्तः ) ।

**तासां च कृत्स्नवचनात् । ८ ॥**

**भाष्यं**— तासां च वङ्क्रीणामिदं कार्त्स्न्यमुच्यते, न पशूनाम् । 'ता अनुष्ठ्योच्च्यावयतात्' इति, षड्विंशतिर्वङ्क्रयस्ताः प्रयत्नेनोद्धर्तव्या इति । इतरथा षड्विंशतिरस्य वङ्क्रयस्तं प्रयत्नेन किंचित् कुर्यादित्येवमभिसंबन्धो भवेत् । यद्धि लक्ष्यते, तद्धि कार्यसंबन्धार्थं प्रति-

निर्दिश्यते । तदिह 'षड्विंशतिरस्य वङ्क्रयस्ताः' इति वङ्क्रीणां प्रतिनिर्देशः कार्यार्थः। तस्मात्तासां प्राधान्यमिति ।

**अपित्वसंनिपातित्वात् पत्नीवदाम्नातेनाभिधानं स्यात् । ९ ॥**

**भाष्यं** — अपित्विति पक्षव्यावृत्तिः । नैतदेवं, समसितव्या वङ्क्रय इति । किं तर्हि ? अविकृतः षड्विंशतिशब्दः प्रयोक्तव्यः । कुतः ? असंनिपातित्वात् । असंनिपाती ह्यध्रिगुः न करणत्वेन निर्दिश्यते । यदि हि करणत्वेन निर्दिश्येत, ततोऽनेन प्रकाशितं कर्तव्यं न ध्यानादिनेति मन्त्रान्तेन कर्मसंनिपातः स्यात् । तत्राशक्यमविकृतेन यौगपद्यं कर्तुमिति विक्रियेत, अभ्यस्येत वा । अथ पुनरेतदकरणं क्रियमाणानुवादि नयनकालमध्रिगुवचनमनेकस्मिन् पशौ चोदकेनात्र निपतितम् । तत्रैषां स्वसंख्यावतीर्वङ्क्रीरभिवदितुमशक्तं विप्रतिपन्नरूपं तत् । तस्मान्न तद्वङ्क्रीणामियत्ता वदितव्या । किं तर्हि ? षड्विंशतिसंख्यायाः संबन्धः कर्तव्यः । यथा, द्विपत्नीके बहुपत्नीके वा प्रयोगे पत्नीशब्दः एकवचनान्तो न संख्यया पत्नीः परिच्छिनत्ति । किं तर्हि ? एकत्वेन संबध्नाति, एवमिहापि । तस्मादविकारेण प्रयोगः । एवमविकारे, आर्षमनुग्रहीष्यते इति ।

**टुप्** — ( सूत्रार्थमाह — ) अकरणेन अध्रिगुणा प्रकरणे समाम्नानात् प्रकरणिनः उपकर्तव्यम् । तत् कथं ( इत्यपेक्षायां ) यथा शक्नुयात् ( इति उपबध्यते ) किं च शक्नोत्ययं ( कर्तुं ? ) इति ( अपेक्षायां ) क्रियाप्रधानेन ( अनेन मन्त्रेण ) यथासमाम्नातैः पदैः अभिधानं ( क्रियामात्रं शक्यं कर्तुम् । ततः किमित्यत आह — ) तत्र वङ्क्रिषड्विंशत्यभिधानात् अदृष्टं यथा प्रकृतौ, तथा विकृतावपि इति ।

**विकारस्तु, प्रदेशत्वाद्यजमानवत् । १० ॥**

**भाष्यं**— तुशब्दात् पक्षो विपरिवर्तते । नाविकारः, ऊहः कर्तव्य इति । यत् यत्संख्येषु आहत्य तत्संख्योचार्यते, तत्र वचनप्रामाण्यात् विप्रतिपन्नसंख्याकस्य शब्दस्य प्रयुज्यमानस्यादृष्टोऽर्थोऽभ्युपगम्यते । यथा, प्रकृतौ पत्नीशब्दस्य । न त्विह आहत्य षड्विंशतिशब्दः अनेकस्मिन् पशौ प्रयुज्यते । किंतु चोदकेनेह प्राकृतवचनं प्राप्यते । तत्र यत् न्याय्यं तच्चोदकः प्रापयिष्यति, न आहत्य षड्विंशतिशब्दम् । किं तन्न्याय्यम् । यत् प्रकृतौ विवक्षितम् । प्रकृतौ च वङ्क्रीणामियत्ता कथिता । तस्मादिह सा प्रदिश्यते । नन्वेतदुक्तं नाध्रिगोः करणत्वेन निर्देशः इति । यदा च न करणं, तदा कथमयं वङ्क्रीयत्तावचनः, श्रुत्या षड्विंशतिसंख्यावचनः एव भवितुमर्हतीति । उच्यते । यद्यपि नास्य तृतीयया निर्देशः, तथापि प्रयोगवचनेनोपगृहीतः साधको भवन् कमन्यं दृष्टमुपकारं करिष्यति अन्यतः अवदानप्रकाशनात् । अत्रोच्यते । नास्यावदानैरभिसंबन्धः, प्रकृतयागप्रयोगवचनो यागेन संबध्नाति । तत्र च हविःसंकीर्तनं दृष्टं प्रयोजनम् । षड्विंशतिशब्दोऽपि तत्स्तुतये भविष्यतीति । नैतदेवमिति ब्रूमः । प्रकरणात् यागमात्रेणाभिसंबन्धे सति ऋत्विजां प्रैषः इति गम्यते । लिङ्गात्तु शमितृप्रैषमेनमध्यवस्यामः । तथारूपाणि ह्यत्र वाक्यानि, 'दैव्याः शमितार उत मनुष्या आरभध्वं' इति । तथा, 'षड्विंशतिरस्य वङ्क्रयस्ता अनुष्ठ्योच्च्यावयतात्' इति । तस्माद्वङ्क्रीयत्तावचन एषः, न षड्विंशतिसंख्यावचनः । यथा, यजमानशब्दे एकयजमानवाचिनि स्वसंख्यावाचि एकवचनमिति कृत्वा द्वियजमानके च प्रयोगे स्वसंख्यावचनप्रदेशादूहः क्रियते, एवमिहापीति ।

**टुप्**— उच्यते । यदि वङ्क्रिषड्विंशत्योः ( शब्दयोः प्रकृतौ ) समवेतार्थता नाभविष्यत्, ततः अदृष्टार्थतामवकल्पयेम । अस्ति तु समवेतः अवदानसंबद्धः वङ्क्रयर्थः ( तेन वङ्क्रिशब्दस्तावत् समवेतार्थः ) । स च ( वङ्क्रयर्थः ) स्वभावात् ( प्रकृतौ ) षड्विंशत्यैव परिच्छिन्नः ( तेन संख्याशब्दोऽपि समवेतार्थः ) । तस्य (च वङ्क्रयर्थस्य) अवदातुः ( शमितुः ) संस्कारो दृष्टार्थमेव प्रसरणम् । ( अन्यथा विस्मृत्या विकला उद्धरेत् । तस्मात् वङ्क्रीणां ) प्रकाशनार्थं प्रकृतौ ( अध्रिगुवचनम् ), तद्वत् ( विकृतौ ) अपीति ( समस्य वचनं कर्तव्यम् ) ।

**अपूर्वत्वात्तथा पत्न्याम् । ११ ॥**

**भाष्यं**—यदुक्तं पत्नीवदिति । युक्तं पत्न्यां, न तत्रैकपत्नीके यजमाने पत्नीशब्दः समाम्नातः, द्विपत्नीके

बहुपत्नीके च प्रदेशाद्भवति । यथा, एकस्याः पत्न्याः स्वसंख्यावचनः, एवं द्वयोर्बहूनां च स्वसंख्यावचनः इति । तस्माद्वैषम्यं पत्न्याम् ।

**आम्नातस्त्वविकारात् संख्यासु सर्वगामित्वात् । १२ ।**

**भाष्यं—** तुशब्दोऽन्यं पक्षमवतारयति, न समस्य वचनं, संख्योहः स्यादिति । यथासमाम्नातषड्विंशतिप्रातिपदिकं प्रयोक्तव्यम् । एवमविकारे, आर्षानुग्रहो भविष्यति । प्रविभक्तं गुणमभिवदितुं वचनमूहिष्यते । षड्विंशती एतयोर्वङ्क्रय इति । ननु षड्विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति । उच्यते । यदा षड्विंशतिगुणः प्राधान्येन विवक्षितो भवति, तद्विशेषणार्थं संख्येयमुच्चार्यते, तदा प्रथमान्तेनापि लक्षणया संख्या विशेष्यते । यथा, इन्द्राग्नी देवतेति । यदा द्विवेरैश्वर्यकर्मणोऽर्थो गुणो विवक्षितो भवति, तदैकवचनान्तं द्विवचनान्तः एवेन्द्राग्नी इति शब्दो लक्षणया विशिनष्टि । तथा च प्रयोगो दृश्यते, 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः, पञ्चपञ्चाशतः पञ्चदशाः, पञ्चपञ्चाशतः सप्तदशाः, पञ्चपञ्चाशत एकविंशाः' इति संख्यावचनः शब्दस्त्रिवृत इत्यनेन लक्षणया विशेष्यते । यथा देवदत्तयज्ञदत्तविष्णुमित्राः पर्षदिति । एवं षड्विंशती वङ्क्रय इति । एवमविकारश्च भविष्यति, सर्ववङ्क्रिगामी च षड्विंशतिशब्दो भविष्यतीति ।

**टुप्—**( तृतीयः पक्षः । तत्र भाष्यकारेण संख्याख्यगुणप्रधानोऽयं तस्मात् वचनोहः इत्युक्त्वा चोदितं– ) ननु षड्विंशती इत्यभिधाने वङ्क्रीणां प्रथमा न प्राप्नोति ( इति । तस्य ) कोऽर्थः ? ( कथं संख्यायाः प्राधान्यं, यत्रेदं चोद्यं इति प्रश्नार्थः । उत्तरं– ) गुणवचनो हि कश्चित् द्रव्यसंसृष्टगुणवचनो भवति यथा शुक्लः पटः इति । कश्चित् ( तु ) निष्कृष्टगुणवचनः ( भवति ) यथा शौक्ल्यं पटस्य इति । तत्र ( संख्याशब्देषु ये ) प्राक् विंशतेः ( ते ) संसृष्टगुणवचनाः ( एव यथा ) 'पञ्च गावो, दश गावः' इति । विंशत्यादयस्तु- उभयवचनाः । ( तत्र ) यदि इह द्रव्यं प्रधानं ( ततः ) 'वङ्क्रयः' इति प्रथमाबहुवचननिर्देशात् षड्विंशतिशब्देनापि ( समानाधिकरणेन ) बहुवचनान्तेन भवितव्यं 'गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति' इति (स्मरणात्) ; इत्यपरिहरश्चायं ( प्रश्नः ), अतोऽन्यः पक्ष आश्रीयते निष्कृष्टो गुणः प्रधानभूतः षड्विंशतिरित्यभिधीयते । ननु एवं वङ्क्रयः इति प्रथमा न प्राप्नोति, षष्ठ्या भवितव्यम् । ( उत्तरं– ) शक्यपरिहारं तु इदं चोद्यम् । तत् ( च ) परिहृतं भाष्यकारेण ( लक्षणया सामानाधिकरण्यमिति, विवृतं चास्माभिः प्रागेव प्रथमसूत्रे ) ।

**संख्या त्वेवं प्रधानं स्याद्, वङ्क्रयः पुनः प्रधानम् । १३ ॥**

**भाष्यं—** सत्यमुपपद्यते एव वचनं, षड्विंशती वङ्क्रयः इति । संख्याप्रधानस्तु एव निर्देशः कृतो भवति । षड्विंशतिगुणः प्राधान्येन विवक्षितः । तद्विशेषणत्वेन वङ्क्रीणामुच्चारणम् । वङ्क्रयः पुनः प्रकृतौ प्रधानं, न संख्या । तदुक्तं, 'प्राधान्यमध्रिगोस्तदर्थत्वात्' ( ९।४।१७ ) । 'तासां च कृत्स्नवचनात्' ( ८ ) इति । तदेवं न प्रकृतिवदभिधानं कृतं भवेत्, तत्र चोदक एव बाध्येत । तस्मात् समसितव्यमेव वचनमिति ।

**टुप्—** 'संख्या त्वेवं प्रधानं स्यात् वङ्क्रयः पुनः प्रधानम्' इति उक्तम् ( इति सूत्रं निगदव्याख्यातम् । पूर्वोक्तं चोद्यमनुभाषते– ) ननु एवं सति षड्विंशतौ बहुवचनं प्राप्नोति ( अन्यथा वङ्क्रिभिः सामानाधिकरण्यायोगात् ) । उच्यते । उभयत्र ( वङ्क्रिपदे षड्विंशतिपदे च यथाक्रमं ) प्रत्ययेन प्रातिपदिकेन ( च ) उपात्तं बहुत्वं ( सामान्यं ) तद्विशेषश्च ( षड्विंशत्यात्मकः ) । तत्र वङ्क्रयः इति यत् तद्गतं (प्रत्ययगतं सामान्यरूपं) बहुत्वं, यच्च षड्विंशतिप्रातिपदिकगतं विशेषरूपं, तयोः ( सहितयोः ) एकं वङ्क्रिद्रव्यमधिकरणम् । अतः ( तयोः सामानाधिकरण्यात् ) विशेष्यविशेषणभावः ( युक्तः ) । यत्तु षड्विंशतौ एकवचनं, तत् विशेषणस्य एकत्वात् । स्वभावोऽसौ विंशत्यादीनां यदेते स्वाभिधेयवर्तिनीं संख्यां भजन्ते, न तु द्रव्यसंख्याम् । तद्यथा 'विंशतिर्गावो गच्छन्ति' इति ( संख्याविशिष्टाः )

गात्रः प्रधानम्। यथा एकवचनमेव विंशतौ, एवमिहापि। त्वत्पक्षेऽपि तुल्यः (अयमनुयोगः। तत्रापि हि वङ्क्रिषु संख्याविशेषणभूतासु बहुवचनमनुपपन्नम्। अथ बहुवचनान्विताभिर्वङ्क्रिभिः पश्चात् षड्विंशतिसंख्या लक्ष्यते 'वङ्क्रीणां या षड्विंशतिः संख्या' इति, ततोऽस्मत्पक्षेऽपि एकवचनान्विता षड्विंशतिसंख्या पश्चात् वङ्क्रीर्विशिनष्टि षड्विंशतेः संबन्धिन्यो याः वङ्क्रयः, ताः इति। न तु लक्षितासु वङ्क्रिषु पश्चात् वचनयोगः, येन बहुवचनप्रसङ्गः स्यात्। तस्मात् विशेषणत्वादेकवचनम्)। अथवा षड्विंशतिप्रातिपदिकेन उक्तत्वात् बहुत्वस्य, बहुवचने निवृत्ते निर्देशार्थमेकवचनमिति। ननु द्वौ बहवः इत्यत्रापि प्रातिपदिकेन (द्वित्वबहुत्वयोः) उक्तत्वात् द्विबहुवचने न प्राप्नुतः। उच्यते। अन्यत्र (कपिञ्जलाधिकरणे भाष्येण) तत् वक्ष्यामः। नेहातिप्रसङ्गात् पठ्यते (प्रपञ्च्यते। तस्मात् समस्य वचनं कर्तव्यम्)।

**अनाम्नातवचनमवचनेन हि वङ्क्रीणां स्यान्निर्देशः। १४॥**

**भाष्यं**—न खल्वप्यस्मिन् पक्षे सर्वमेवाऽऽम्नातमुच्यते, अनाम्नातवचनमपि प्रतीयते इति, षड्विंशती षड्विंशतय इति। अथ द्विवचनं बहुवचनं वा अनार्षतया न क्रियते, नैव तासां वङ्क्रीणां कार्त्स्न्येनाभिधानं स्यात्।

**अभ्यासो वाऽविकारात् स्यात्। १५॥**

**भाष्यं**—वाशब्दः पक्षं व्यावर्तयति। न समासवचनं, अभ्यासः स्यात्, एवमविकारो भविष्यति, तत्राऽऽर्षचोदकौ अनुग्रहीष्येते, सर्वं समाम्नातं कृतं भविष्यति। केवलमस्यशब्दोऽभ्यसिष्यते, कृत्स्नाश्च वङ्क्रयोऽभिहिता भविष्यन्ति।

**पशुस्त्वेवं प्रधानं स्यादभ्यासस्य तन्निमित्तत्वात्, तस्मात् समासशब्दः स्यात्। १६॥**

**भाष्यं**—तुशब्देनावधार्यते। नैतदेवं समस्य वचनमेवेति। कथम्? एवं सति पशुः प्राधान्येनात्र निर्दिष्टः स्यात्। पशोःपशोः षड्विंशतिःषड्विंशतिर्वङ्क्रयो न कश्चिदषड्विंशतिवङ्क्रिः पशुरिति। पशोः संख्यासंबन्धे अभिधित्सिते एवं वचनं भवति। न च पशुसंख्यासंबन्धः प्रकृतौ विवक्षितः इत्युक्तम्। इयत्ता वङ्क्रीणां प्रकृतौ वक्तव्या। इहापि सैव चोदकेन प्रदिश्यते। तेन नाभ्यासः। स हि पशुनिमित्तकः। तस्मात् समस्य वचनं वङ्क्रीणां कर्तव्यमिति।

**शा**—सिद्धान्तस्तु 'वङ्क्रीयत्ता प्रकाश्येह पार्श्वसाकल्यसिद्धये। ता इति प्रतिनिर्देशादपि तासां प्रधानता॥' तस्मात् द्विपश्वाशादनयोर्वङ्क्रयः, अष्टसप्ततिरेषां वङ्क्रयः इत्येवं समस्ताभिधानमेव न्याय्यम्।

**सोम— ननु** इयमधिकरणप्रवृत्तिरेवानुपपन्ना, यत्र मन्त्रो विनियुक्तः, तस्यैव प्राधान्येन प्रतिपाद्यतया बहुप्रधाननिबन्धनपक्षभेदानामननुन्मेषात् **इति चेत्**। स्यादेवं यदि श्रुत्यादिविनियोज्यः स्यात्, न त्वेवं, किंतु लिङ्गप्रकरणविनियोज्यः, तयोश्च साधारण्यात् अनेकपक्षोन्मेषसंभवात्। **सूत्राथस्तु**— पशुगणे षड्विंशतिशब्दः अभ्यासेन प्रयुज्येत। प्रकृतौ एकस्य पशोः षड्विंशतिसंख्यवङ्क्रयभिधानात्, इह च षड्विंशतिसंख्यारूपगुणस्य प्रतिपशु विभक्तत्वात्। तत्र यदि यथाप्रकृत्येव अविकारेण प्रयोगः, तदा गणे वङ्क्रीणां कार्त्स्न्येनाभिधानं न स्यात्। न च समस्य वचनं संभवति, प्राकृतस्य सर्वथा बाधेनात्यन्तविकारापत्तेः। समासेऽपि एकस्य पशोः सर्वाभिर्वङ्क्रिभिः संयोगाभावाच्चेति।

**वि**— 'षड्विंशतिर्वङ्क्रयोऽस्येत्यनूहः स्यादुतोह्यते। ऊहेऽपि वचनान्यत्वमस्येत्यावर्ततेऽथवा॥ षड्विंशतेरुताभ्यासः समस्तोक्तिर्भवेदुत।, अनूहोऽकरणत्वेन दृष्टलाभात् तदूहनम्॥ संख्यायाश्च पशौ युक्तेर्वङ्क्रीणां मुख्यतावशात्। अमी पक्षा, युज्यतेऽन्यस्ता अनुष्टयेति शेषतः॥'

**भाट्ट**— तत्रैव (अध्रिगु-) प्रैषे 'षड्विंशतिरस्य वङ्क्रयः, ता अनुष्ठ्योच्च्यावयतात्' इति श्रुतम्। तत्र अस्य मन्त्रस्य करणमन्त्रत्वाभावेऽपि समवेतप्रकाशकत्वसंभवे असमवेतार्थत्वस्य अन्याय्यत्वात् अविकार एव पशुगणे इति तावत् अनाशङ्क्यम्। विकारोऽपि कीदृक् इति चिन्तायां, प्रकृतिदृष्टपदान्यथात्वे प्रमाणाभावात् अश्रुतपदान्तरकल्पनाऽनुपपत्तेः यावत्पशुगतसमस्त-

वह्क्रिप्रकाशनार्थं 'षड्विंशतिरस्य' इति पदद्वयावृत्तिरेव। अत एव प्राकृतपदबाधे प्रमाणाभावात् न क्व चिदपि एकवचनोहः, 'अदितिः पाशं' 'मेधपतये मेधं' इत्यादावपि अभ्यासेनैव सर्वपाशादिप्रकाशनोपपत्तेः, अश्रुतद्विवचनाद्यध्याहारापेक्षया श्रुतस्यैवाभ्यासकल्पने लाघवाच्च, अन्यथा द्विधा त्रिधा इत्येवं ऊहेनैव प्रकाशनोपपत्तौ एकधापदस्यापि अभ्यासानापत्तेः। **न च** एकत्वादीनां प्रकृतौ एकत्वत्वादिना अनुद्देश्यत्वात् अपूर्वसाधनीभूतसंख्यात्वेन प्रकाशने च विकृतावपि पशुबहुत्वादेः अपूर्वसाधनीभूतस्य प्रकाशनार्थं बहुवचनादिप्रक्षेपावश्यंभावः इति **वाच्यम्**। 'आग्नेयं कृष्णग्रीवं, सौम्यं बभ्रुं' इत्यादौ पश्वेकत्वस्यैव तत्तदपूर्वसाधनत्वेन बहुत्वस्याविहितत्वात्, 'प्राजापत्यान्' इत्यादावपि यागबहुत्वार्थमेव बहुवचनोपादानेन अतिदेशप्राप्तस्य पश्वेकत्वस्यैव तत्तदपूर्वसाधनत्वाच्च। अतश्च तत्प्रकाशनार्थं आवृत्तिरेव श्रुतपदस्य युक्ता, न तु सूर्यादिपदवत् पदान्तरप्रक्षेपः। **यत्तु मूले** एतत्पक्षसाधनार्थं षड्विंशतिसंख्यापशूभयसंबन्धप्रधानमिदं वाक्यं प्रतिपशु भेदेन तत्संबन्धं प्रकाशयितुं अभ्यसनीयं इति युक्तिरुपन्यस्ता, सा संबन्धस्य षष्ठ्यर्थस्य गुणत्वेन प्राधान्यशङ्काऽनुपपत्तेः, वाक्यार्थरूपस्य च अशाब्दत्वेन सुतरां तदनुपपत्तेः, प्राधान्येऽपि च तस्य प्रतिपशु ऊहेनापि प्रकाशनोपपत्तेः अभ्यासे प्रमाणाभावात् **उपेक्षिता**। अतः उक्तयुक्त्यैव पदद्वयाभ्यासः प्रसाध्यते इति **प्रथमः पक्षः**। **द्वितीयस्तु**, पशुगणे एकप्रयोगविधिपरिगृहीतानां अनेकेषां साङ्गानां यागानां यौगपद्यावगतेः अर्थप्रकाशनकार्यस्यापि यौगपद्यावगमात् तदनुरोधेन युगपदनेकप्रकाशकपदप्रक्षेपस्य आवश्यकत्वात् न क्व चित् श्रूयमाणस्यैवाभ्यासः। 'अदितिः पाशं' इत्यादौ तु गुणानुरोधेन प्रधानप्रातिपदिकस्य अभ्यासे प्रमाणाभावादपि नासौ, अपि तु बहुवचनाद्यूह एव। यद्यपि च बहुत्वं न कस्य चिदङ्गं, तथापि पाशप्रातिपदिकेन अनेकपाशोपादाने साधुत्वार्थं तत्प्रक्षेपस्यैव आवश्यकत्वात्। **न च एकवचनान्तपत्नीशब्दवत् प्रत्येकव्यक्त्यभिप्रायेण एकवचनप्रयोगः, तस्य पाशैकत्वानेकत्वसंदेहजनकतया निर्णायकत्वाभावात् प्रकृतिव**द्भावबाधप्रसङ्गेन अप्रयोजकत्वात्। अत एव 'द्विधा अनयोस्त्वचौ आच्छ्यतात्' इत्यादावूहाङ्गीकारेऽपि एकैकत्वादि प्रयत्नद्वयसाध्यच्छेदनकत्वशङ्काजनकतया निर्णायकत्वाभावादेव अगत्या एकत्वादेः अन्वयाङ्गीकरणम्। प्रकृते तु विवक्षितार्थविषये संशयजनकत्वाभावात् यौगपद्यसंपत्तये ऊहाङ्गीकरणमेव युक्तम्। तत्रापि षड्विंशतिप्रातिपदिके अन्यथात्वे प्रमाणाभावात् षड्विंशती षड्विंशतयः इत्येवं वचने एव ऊहः। संख्याप्रधानत्वाच्च अस्य वाक्यस्यायमर्थो निर्णीयते। तथाहि सर्वत्र द्वौ त्रयः इत्यादयः संख्याशब्दाः संख्येयप्रधाना एव। विंशत्याद्यास्तु संख्याप्रधानाः। दृष्टार्थता च तत्प्राधान्ये 'अन्यूनयोः पार्श्वयोरवद्यति' इति वचनात् साकल्यावगमेन तत्प्रकाशनस्य व्यङ्ग्यत्वात्। अतः प्रधानभूतषड्विंशतिप्रातिपदिके नान्यथाभावः। न चैवं 'विंशतिर्गावः' इतिवत् वङ्क्रीणां गुणत्वे वङ्क्रिशब्दस्य षष्ठ्यन्तत्वापत्तिः, संख्याप्राधान्येऽपि 'देवदत्तादयः षट्' 'पञ्चपञ्चाशतस्त्रिवृतः संवत्सराः' इत्यादौ लक्षणया संख्येयशब्दस्य संख्यासामानाधिकरण्यदर्शनेन वङ्क्रिमल्लक्षणया वङ्क्रिशब्दस्यापि सामानाधिकरण्योपपत्तेः। **न च** लक्षणाभियैव संख्येयवङ्क्रिप्राधान्यं 'विंशतिर्गावः' इतिवत् इति **वाच्यम्**। तथात्वेऽपि षड्विंशतिशब्दस्य संख्येयसामानाधिकरण्यसंपत्तये तल्लक्षणाङ्गीकारस्यावश्यकत्वात्। 'नामार्थयोः पार्ष्णिकान्वयवेलायामपि अभेदेनैवान्वयः' इति नियमानङ्गीकारे तु ममापि वङ्क्रीणां समवेतत्वसंबन्धेन संख्यायामन्वयोपपत्तेः न लक्षणा। न च वङ्क्रिशब्दस्य वङ्क्रिमल्लक्षणया संख्याविशेषणत्वे तस्या एकत्वेन एकवचनापत्तिः, बहुवचनस्य स्वशक्त्याश्रयसमवेतवृत्तित्वसंबन्धेन एकत्वलक्षणार्थत्वात्, तव मतेऽपि संख्येयप्राधान्ये षड्विंशतिः इत्येकवचनेन स्वशक्त्याश्रयसमवायिवृत्तित्वसंबन्धेन बहुत्वलक्षणाया आवश्यकत्वाच्च। **न चैवं विनिगमनाविरहः, वङ्क्रिपदे जघन्यत्वस्यैव नियामकत्वात्। अतश्च प्रधानभूतषड्विंशतिपदे अन्यथाभावानुपपत्तेः 'षड्विंशती अनयोर्वङ्क्रयः' इत्येवं वचनोह एव। इति प्राप्ते, 'ता अनुष्ठ्या उच्च्यावयतात्' इति वङ्क्रीणामेव परामर्शात्**

तासामेव प्राधान्यम् । संख्या तु तद्विशेषणत्वेन उपात्ताऽपि साकल्यसूचिका इति नादृष्टार्थताऽऽपत्तिः । एवं च षड्विंशतिपदगतैकवचनस्य बहुत्वलक्षणार्थत्वेन असमवेतार्थत्वात् नैव ऊहसंभावना । अपि तु षड्विंशतिप्रातिपदिके एव समवेतार्थत्वात् ऊहः । अतश्च द्विपञ्चाशदनयोर्वङ्क्रयः इति समस्य वचनमेव युक्तम् । किंच प्रकृतावपि एकैकस्मिन् पार्श्वे त्रयोदशत्रयोदश वङ्क्रयः समस्यैव षड्विंशतिपदेन उक्ताः इति इहापि समस्यैव सर्वाः प्रकाशयितव्याः इति गम्यते । **यद्यपि** च न्यायसिद्धमपि इदं समासवचनं 'एकधा षड्विंशतिरिति द्विबहूनां ( द्विर्द्विर्बहूनां इति सोम. । द्विर्द्विबहूनां इत्येत्र तु आश्वलायनः ३।४। ३ । द्विबहूनां पशूनां संबन्धिनौ एतौ शब्दौ द्विः ब्रूयात् इति गार्ग्यवृत्तिः) इत्याश्वलायनसूत्रमूलभूतश्रुत्या सुब्रह्मण्याऽनूहवत् आभासीकर्तुमुचितं, **तथापि** 'षड्विंशतिरिति समासेनैव' इति सांख्यायनसूत्रमूलभूतश्रुत्या सुब्रह्मण्यापक्षे समासस्यापि अभ्यनुज्ञानात् न विरोधः । (वस्तुतस्तु 'एकैकधा षड्विंशतिः षड्विंशतिरिति, समासेन वा ' इत्येव सांख्यायनश्रौतसूत्रे ६।१।१० पाठः । 'एष शोभनतरः पक्षोऽभिप्रेत आचार्यस्य ' इति तद्भाष्यं समासपक्षाभिप्रायेण–के. ) । अत एव पक्षे अभ्यासोऽपि द्विवारमेव, न तु यावत्पशु । एकधाशब्देऽप्येवं इति द्रष्टव्यम् । वीप्सयैव यावत्पशु एकप्रयत्नच्छेद्यत्वनिर्णयोपपत्तेः ।

**मण्डन**—' समस्य वङ्क्रयो वाच्याः ।'

**शंकर**—' समासोहश्च वङ्क्रिषु ।'

**अध्रिगौ सवनीयेषु तद्वत्, समानविधानाश्चेत् । ९।३।८।२३ ॥**

अग्नीषोमीये पशौ अध्रिगुप्रैषे ' प्रास्मा अग्निं भरत ' इत्येवमादि समाम्नायते । यदा च अग्नीषोमीयः पशुः सवनीयाश्च पशवः समानविधानाः इति पक्षः स्वीक्रियते तदा प्रास्मै इत्यादिपदं ऊहितव्यं न वेति विचारे सिद्धान्तमाह अतिदेशेन । समानविधानाश्चेत् अग्नीषोमीयेण पशुना सवनीयाः पशवः, तदा सवनीयेषु पशुषु अध्रिगौ अध्रिगुप्रैषे तद्वत् पूर्वाधिकरणोक्तपत्नीवत् ज्ञातव्यम् । पत्नीशब्दे यथा नोहः, तथा प्रास्मै इत्यादावपि नोहः इति । **के.**

* **अध्वरकल्पा नाम इष्टिः** । ' आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुं, बार्हस्पत्यं चरुम् । आग्नावैष्णवमेकादशकपालं माध्यंदिने, सारस्वतं चरुं, बार्हस्पत्यं चरुम् । आग्नावैष्णवं द्वादशकपालमपराह्णे, सारस्वतं चरुं, बार्हस्पत्यं चरुम् ' इति । ( सौम्ये अध्वरे यथा सवनत्रयं तथा अस्यामपीष्टौ सवनत्रये यागत्रिकत्रयं इति अध्वरसाम्यात् अध्वरकल्पा । ईषत् न्यूनः अध्वरः अध्वरकल्पा । ' ईषदसमाप्तौ कल्पप्-देश्य–देशीयरः ' इति पाणिनिसूत्रेण शब्दसिद्धिः । **के.** ) **भा.** ११।२।४।१९, * ' यज्ञमेवैतया प्राप्नोति ' **अध्वरकल्पाया** इष्टेः इदं फलम् । १२।२।४।१९, * 'यस्य भ्रातृव्यः सोऽनेन यजेत' । भा. ११।२।४।१९. अनेन **अध्वरकल्पायाः** शत्रुनाशः फलं इति ज्ञायते । ***अध्वरकल्पायां** आग्नावैष्णवे अग्नीषोमीयस्य विध्यन्तः । ८।३।१।१–२. * **अध्वरकल्पादौ** सामिधेनीसप्तदशत्वस्य सत्त्वेऽपि वर्णत्रयस्याधिकारः । **वि.**६।६।७. * पशु–मित्रविन्दाऽध्वरकल्पादौ साप्तदश्यं प्रकरणविहितं, तास्वेव तत् अतिदेशप्राप्तपाञ्चदश्यबाधेन निविशते । तथा च सामिधेनीसाप्तदश्यमत्र । **वा.** ३।६।२।९ पृ. १०३१. * 'सप्तदश सामिधेन्यो भवन्ति ' इति **अध्वरकल्पादिषु** वाक्यशेषः । **भा.** १०।७।९।३२, * त्रयाणां त्रिकाणां ' कालभेदात् अङ्गानां गृह्यते विशेषः । तस्माद्भेदः । ' तथा च अङ्गानां न तन्त्रम् । ११।२।४।२१. * ' पुरा वाचः प्रवदितोर्निर्वपेत् ' इति विहितो निर्वापः इति ' प्रथमस्य कालवचनम् ' । प्रथमस्य यागत्रिकस्यैव अयं निर्वापकालः । न माध्यंदिनीयापराह्णिकयोः । तयोस्तु स्वस्वकाले एव । **के.** ११।२।४।२२, * यद्यपि अत्र त्रयस्त्रिकाः, तथापि ' फलैकत्वात् ' 'सोऽनेन यजेत' इति इष्टिबोधकः एकवचनान्तः शब्दः युक्त एव । तस्मात् त्रिभिः त्रिकैः एको यागः । ११।४।२।२३.

* **अध्वरकल्पा नाम इष्टिः । ( इयमन्यैव )** ' आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः ' इति । **भा.** ५।१।१०।१७. * **अध्वरकल्पायां** आग्नावैष्णवद्वादशकपालस्य ऐन्द्राग्नविकारत्वात् आमावास्यतन्त्रेण सरस्वत्यां आज्यभागायां

प्राप्तं पौर्णमासतन्त्रं बाध्यते । **बाल. पृ. १४१.** ※ अध्वरकल्पायां सत्यपि यागत्रयविधाने 'एतयैव यजेताभिचर्यमाणः' इति वाक्यान्तरेण अभिचारनिरासाख्यफलोद्देशेन सहितानां विधानात् त्रयाणामपि एकप्रयोगविधिपरिग्रहः । **भाट्ट. ५।१।१०.** ※ अत्र पूर्वं बार्हस्पत्यस्य धर्माः, ततः आज्यस्य, चोदको हि प्रयोगवचनात् बलवत्तरः । **भा. ५।१।१०।१७–१८.** ※ 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वतीमाज्यस्य यजेत' इत्यत्र आज्यभागयोः पुरोऽनुवाक्ये वृधन्वत्यौ एव, न तु वार्त्रघ्न्यौ अविरोधे प्रथमस्य प्रबलत्वात् । **के.** ※ अग्नावैष्णवस्य प्रथमं निर्वापाद्यनुष्ठानं, ततो बार्हस्पत्यस्य चरोः वैकृतमुख्यक्रमानुरोधात्, ततः सारस्वतस्याज्यस्य । **के.**

**अध्वरकल्पान्यायः** । ( एकः ) औपदेशिकमुख्यक्रमापेक्षयाऽऽतिदेशिकपाठक्रमस्य बलवत्त्वम् ॥

**तद्वचनाद्विकृतौ यथाप्रधानं स्यात् । ५।१।१०।१७ ॥**

**भाष्यं—** अस्त्यध्वरकल्पा नामेष्टिः, 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः' इति । तत्र संदेहः किमाग्नेयविकारस्य बार्हस्पत्यस्य पूर्वं धर्माः कार्याः चोदको बलवत्तरः प्रयोगवचनात्, उतोपांशुयाजविकारस्य प्रयोगवचनो बलवत्तरश्चोदकादिति । किं प्राप्तम्? विकृतौ अस्यां यथाप्रधानं स्यात्, तद्वचनात् । तेषां साक्षाद्वचनक्रमो विकृतौ । तेन संनिहितानामङ्गानामुपसंहारकः प्रयोगवचनो हि प्रत्यक्षः, तद्धर्माणां चाऽऽनुमानिकः । चोदकेन हि स प्राप्तः । तस्मात् प्रत्यक्षः प्रयोगवचनो बलवत्तरः । तेन चोदक आनुमानिको बाध्यते ।

**टुप्—** तृतीयः ( बार्हस्पत्यः एकदेवत्यत्वात् औषधद्रव्यकत्वाच्च ) आग्नेयविकारः । द्वितीयः ( सारस्वतः आज्यहविष्ट्वात् ) उपांशुयाजविकारः । प्रथमः ( तु आग्नावैष्णवः द्विदेवत्यत्वात् औषधद्रव्यत्वाच्च ) अग्नीषोमीयं विकरोति । ( तत्र आग्नावैष्णवधर्माणां प्रथममनुष्ठानमसंदिग्धम् । इतरयोस्तु चिन्ता ) किं प्रथमं आग्नेयविकारस्य ( बार्हस्पत्यस्य ) धर्माः कार्याः चोदकसामर्थ्यात्, उत उपांशुयाजविकारस्य ( सारस्वतस्य धर्माः ) प्रयोगवचनस्य ( वैकृतस्य ) सामर्थ्यात् । किं मतं ? प्रधानानामनुप्रत्यक्षत्वात् मुख्यक्रमो बलीयान् । इतरः चोदकप्राप्तत्वात् आनुमानिकः । तस्मात् ( आनुमानिकत्वात् ) प्रत्यक्षेण प्रयोगवचनेन परिगृहीतः क्रमो बलीयान् ।

**विप्रतिपत्तौ वा प्रकृत्यन्वयाद्यथाप्रकृति । १८ ॥**

**भाष्यं—** मुख्याङ्गक्रमविप्रतिपत्तौ वा, यथा प्रकृतौ तथैव विकृतौ भवितुमर्हतीति । कुतः ? प्रकृत्यन्वयात् । यादृशाः प्रकृतौ धर्मास्तादृशा एव विकृतौ भवितुमर्हन्तीति मुख्यक्रमेण क्रियमाणा न प्रकृतिवत्कृताः स्युः । चोदको हि प्रयोगवचनाद्बलवत्तरः । स ह्युत्पादयति प्रापयति च । प्रापितानभिसमीक्ष्य प्रयोगवचनः उपसंहरति । स प्राप्तिपूर्वकः प्राप्तिनिमित्तक उत्तरकालः पूर्वप्राप्तं न बाधितुमर्हति चोदकं प्रत्यक्षोऽपि सन्, बहिरङ्गत्वात् । यथाप्राप्तानेवोपसंहरिष्यति । तस्मात् पूर्वं बार्हस्पत्यस्य धर्माः, तत आज्यस्येति ।

**टुप्—** मुख्यप्रावृत्तिकौ ( क्रमौ ) प्रयोगवचनाश्रितत्वात् दुर्बलौ, श्रुत्यर्थपाठकाण्डानां ( तु ) चोदकाश्रयत्वात् बलीयस्त्वम् । किं कारणं ? कथमित्याकाङ्क्षायां ( विकृतिभावनायां ) उत्पन्नायां ( सत्यां ) या ( प्राकृत- ) पदार्थालोचना अयं ( अग्न्यन्वाधानादिपदार्थः ) इति, सा उत्पत्तिरिव उत्पत्तिः ( प्रथमाऽवगतिः इत्युपचर्यते ), तादृशान् अवधृतान् (पदार्थान्) प्रापयति ( विकृतौ विनियुङ्क्ते )। तत उत्तरकालं प्रयोगवचनः ( उत्पन्नान् विनियुक्तांश्च ) समीक्ष्य ( प्राकृतान् ) कृत्स्नान् उपसंगृह्णाति ( अनुष्ठापयति । प्रकृते किमायातं तदाह— ) उपसंगृह्णन् ( च ) यादृशाश्चोदकेन प्रापिताः, तादृशानुपसंगृह्णाति ( नान्यादृशान् ) । तेन ( चोदकेन च यथाप्रकृति ) विशिष्टक्रमका एव प्राप्यन्ते । अतः प्रत्यक्षस्यापि ( प्रयोगवचनस्य आनुमानिकादपि ) चोदकादेव उत्तरकालं आत्मलाभात् दुर्बलत्वम् । ( कथं दुर्बलत्वं तदाह— ) यश्च यस्य सकाशात् आत्मानं लभते स तमसमर्थो बाधितुम् । ( तदधीनात्मलाभत्वमाह— ) यावदुत्पत्तिर्नास्ति, न तावत् प्राप्तिः । ( नहि अनुत्पन्नस्य विनियोगो घटते ) यावत्

( च ) प्राप्तिर्नास्ति, न तावदङ्गत्वम् । अङ्गत्वे चावधृते ( पश्चात् प्रयोगवचनेन ) समीपस्थस्य ( अङ्गस्य ) संग्रहः ( प्रयोगः ) । तस्मात् प्रयोगवचनस्य पश्चात्कालीनत्वात् तदाश्रयो यः क्रमः, स आश्रयस्य ( प्रयोगवचनस्य ) दौर्बल्यात् ( प्रबलचोदकाश्रितात् ) दुर्बलः । अत आह ( भाष्यकारः ) **उत्तरकालः** ( प्रयोगवचनः ) **पूर्वकालप्राप्तं** ( चोदकं ) **न बाधितुमर्हति प्रत्यक्षोऽपि सन् बहिरङ्गत्वात्** ( पाश्चात्यत्वात् ) ।

**शा**—‘ आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः ’ इति । तत्र उपांशुयाजाग्नेयविकृत्योः आज्यबार्हस्पत्ययोः कस्य धर्माः प्रथममनुष्ठेयाः । किं प्रयोगचोदिताङ्गप्रधानप्रत्यासत्त्यनुग्रहात् मुख्यक्रमेणाज्यधर्माणां प्रथममनुष्ठानं, उत चोदकवशादाज्यधर्मेभ्यः पूर्वं बार्हस्पत्यस्यौषधधर्माः कर्तव्या इति । ‘ तत्रौपदेशिकत्वेन प्रयोगवचनाश्रयः । मुख्यक्रमोऽतिदेशेन प्रापितं बाधते क्रमम् ॥ ’ नैवम् । ‘ प्राप्तानां हि पदार्थानां विकृतौ क्रमचिन्तनम् । ते च सक्रमका एव प्राप्यन्ते चोदकादिह ॥ नैराकाङ्क्ष्यात् क्रमस्तेषां, न भूयोऽन्यः प्रक्लृप्यते । शरवत् प्राप्तबाधोऽत्र कल्प्यत्वान्नोपपद्यते ॥ ’

**सोम**—औपदेशिकक्रमयोर्बलाबलविचारानन्तरं औपदेशिकातिदेशिकयोः तद्विचारात् **संगतिः** । ननु प्रयोगवचनश्चोदकापेक्षया दुर्बल इति द्वादशे ‘ जैमिनेः परतन्त्रत्वापत्तेः स्वतन्त्रप्रतिषेधः स्यात् । ’ ( १२।१।२।७ ) इत्यधिकरणे वक्ष्यते । तत् कथमिह प्रयोगवचनप्राबल्येन पूर्वपक्ष इति चेत्, सत्यं, अन्यत्र प्रयोगविधिर्दुर्बलः, क्रमविषये तु स एव प्रबलः, सर्वत्र क्रमक्लृप्तेः प्रयोगविध्यधीनत्वात् इति पूर्वपक्ष्याशयः । पदार्थप्राप्त्यधीनत्वात् प्रयोगविधेः, तत्प्राप्तेश्चोदकाधीनत्वात् चोदकोपजीवितया प्रयोगविधिर्दुर्बल इति सिद्धान्तपक्षाभिप्रायः । एवं च स्वयंकल्पनाऽशक्तस्यापि प्रयोगविधेः कल्पनामूलोच्छेदात् न क्रमान्तरकल्पकत्वं इति क्रमविषयेऽपि प्रयोगविधिर्दुर्बलः । **सूत्रार्थस्तु**—विकृतौ यथाप्रधानं क्रमः स्यात्, पदार्थानां यथाप्रधानक्रमवचनप्रयोगविधिबलात् इति ।

**वि**—‘सारस्वताज्ये पूर्वत्वं बार्हस्पत्यचरावुत ।, धर्माणामाज्यनिष्ठानां प्राथम्यमुपदेशतः ॥, सक्रमाणां पदार्थानां चोदकप्रापितत्वतः । प्राथम्यमन्तरङ्गत्वादाग्नेयविकृतौ चरौ ॥ ’

**भाट्ट**— इदानीमातिदेशिकपाठक्रमापेक्षया विकृतौ मुख्यक्रमस्य बलाबलं चिन्त्यते । अध्वरकल्पायां ‘आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्याज्यभागा स्यात्, बार्हस्पत्यश्चरुः ’ इति श्रुतम् । अत्र सत्यपि वाक्यत्रयेण यागत्रयविधाने ‘ एतयैव यजेताभिचर्यमाणः ’ इति वाक्यान्तरेण अभिचारनिरासाख्यफलोद्देशेन सहितानां विधानात् त्रयाणामपि एकप्रयोगविधिपरिग्रहः । अत्र आद्यस्य यागस्य द्विदेवत्यत्व–औषधद्रव्यकत्वात् ऐन्द्राग्नाग्नीषोमीयान्यतरविध्यन्तः । के चित् समानाक्षरतद्धितान्तपदकत्वसादृश्यात् अग्नीषोमीयस्यैवेति वदन्ति । ( ११।२।३ इत्यत्र तु द्वितीयाध्वरकल्पागताग्नावैष्णवे आग्नेयविकारत्वमुक्तम् । ) द्वितीयस्य आज्यद्रव्यकत्वात् उपांशुयाजविध्यन्तः । तृतीये एकदेवताकत्वात् औषधद्रव्यकत्वात् आग्नेयविध्यन्तः । तत्र आज्यद्रव्यकयागधर्मापेक्षया आग्नावैष्णवस्य धर्माः आतिदेशिकपाठमुख्यक्रमयोरविरोधादेव प्रथमतः कार्याः । बार्हस्पत्यस्य तु मुख्यक्रमात् पश्चात् कार्याः, उत आतिदेशिकपाठक्रमात् पूर्वं इति चिन्तायां, मुख्यक्रमस्य औपदेशिकप्रयोगविध्युन्नीतत्वेन औपदेशिकत्वात् सत्यपि अतिदेशोत्तरकालकत्वे शरादिवत् बाधोपपत्तेर्मुख्यक्रमस्य बलवत्त्वम् । **इति प्राप्ते**, प्रयोगविधेः औपदेशिकत्वेऽपि स्वरूपेण मुख्यक्रमस्य कल्प्यत्वात् शरन्यायानुपपत्तेः, कल्पनायां चापेक्षामूलत्वेन प्रयोगविध्युपजीव्यप्राथमिकातिदेशप्रापितपाठक्रमेणैव आकाङ्क्षाया उच्छेदात् श्येनादौ आतिदेशिकनानाकर्तृकत्वादिवदेव आतिदेशिकपाठक्रमप्रापितक्रमस्यैव बलीयस्त्वम् । तदेतत् सिद्धमपि चोदकस्य प्रयोगविध्यपेक्षया बलवत्त्वस्पष्टीकरणार्थं क्रमलक्षणे पुनरुच्यते इति मन्तव्यम् । **न चैवं** आग्नावैष्णवबार्हस्पत्यधर्माणामपि प्राकृतक्लृप्तक्रमेणैव अनुष्ठानापत्तेः **याज्ञिकानां** वैकृतमुख्यक्रमानुरोधेन आग्नावैष्णवस्य प्रथमं निर्वापाद्यनुष्ठानं विरुध्येतेति **वाच्यम्** । प्रकृतौ

हि यत्र पाठादिप्रमाणकः क्रमः, तत्र 'तत्तत्पदार्थानन्तरं तत्पदार्थः कार्यः' इति विशिष्यैव वाक्यकल्पनं, मुख्यक्रमस्तु लाघवात् धर्मिग्राहकप्रमाणगम्यत्वाच्च 'आद्यप्रधानधर्मानन्तरं उत्तरप्रधानधर्मा अनुष्ठेयाः' इत्येव कल्पनं, न तु विशिष्य, न वा आग्नेयत्वादिप्रवेशः। अत एव विकृतौ अपूर्वाङ्गप्रवेशेऽपि न वाक्यान्तरकल्पनं इत्यपि लाघवम्। एवं प्रवृत्तिक्रमेऽपि 'क्लृप्तक्रमकाङ्गप्रवृत्तिक्रमेण इतरे पदार्थाः कर्तव्याः' इत्येकवाक्यकल्पनम्। अतश्च विकृतावपि 'आद्यप्रधानधर्मानुष्ठानोत्तरमेव द्वितीयप्रधानधर्मानुष्ठानं' इति आग्नावैष्णवस्य प्रथमं निर्वापः, पश्चात् बार्हस्पत्यस्य। एवं साद्यस्क्रे स्थानगम्यक्रमकोपाकरणस्य वाचनिकातिदेशवत्यां कस्यां चिद्विकृतौ वाचनिकोपाकरणव्यत्यये व्यत्यस्तोपाकरणप्रवृत्त्यैव नियोजनादिक्रमः। एवं च केषां चित् एतादृशविषयद्वयेऽपि याज्ञिकाचारे मूलं चिन्त्यं इति प्रकृतिक्लृप्तक्रमेणैव सिद्धान्तकरणं मूलस्योक्तत्वादुपेक्ष्यम्। अत आतिदेशिकपाठविरोधे एव मुख्यक्रमादेर्दौर्बल्यं इति स्थितम्।

**मण्डन**— 'बलवांश्चोदकक्रमः।' १२.

**शंकर**— 'क्रमान्मौख्याच्च चोदकः।' बली। मौख्यात् मुख्यत्वात्। १३.

* **अध्वरकल्पान्यायः**। अग्नीषोमीययूपच्छेदनस्यैव दीक्षाकालविधिः। विशेषतश्च अध्वरकल्पान्यायेन तस्यैवोपस्थितत्वात् तस्यैव दीक्षाकाले अपकर्षः। **भाट्ट ११।३।३.**

**अध्वरकल्पान्यायः, (द्वितीयः)। संघत्रये अङ्गानां भेदेनानुष्ठानम्॥**

**तथा स्यादध्वरकल्पायां, विशेषस्यैककालत्वात्। ११।२।४।२०॥**

**भाष्यं**— इदं श्रूयते (अध्वरकल्पेष्टौ) 'आग्नावैष्णवं प्रातरष्टाकपालं निर्वपेत्, सारस्वतं चरुं, बार्हस्पत्यं चरुम्। आग्नावैष्णवमेकादशकपालं माध्यंदिने, सारस्वतं चरुं, बार्हस्पत्यं चरुम्। आग्नावैष्णवं द्वादशकपालमपराह्णे, सारस्वतं चरुं, बार्हस्पत्यं चरुम्। यस्य भ्रातृव्यः, सोऽनेन यजेत' इति। तत्र चिन्त्यते किं त्रिषु कालेषु प्रयुज्यमानानामेतेषां कर्मसमुदायानां तन्त्रेण अङ्गानां क्रिया, उत भेदेनेति। किं प्राप्तं? तथा स्यादध्वरकल्पायां यथा पशौ तन्त्रमङ्गानां प्रयोगः। कुतः? विशेषस्य एककालत्वात्। अङ्गविशेषः कश्चिदेषां भिन्नकालानां समुदायानां एककालः श्रूयते 'पुरा वाचः प्रवदितोर्निर्वपेत्' इति। कथं पुनर्ज्ञायते सर्वेषां निर्वापाणां अयं कालविधिरिति। (उच्यते) सर्वेषां हि एषां एककल्पत्वादेकं प्रकरणम्। सैषा अध्वरकल्पेष्टिः, 'यज्ञेनैवैतया प्राप्नोति' इति च एकेन शब्देन युगपत् फलं प्रति विधानात्। तस्मिन्नेव काले क्रियमाणः उत्तरकालयोः समुदाययोः निर्वापः प्रतिकृष्येत। स प्रतिकृष्यमाणः ततः प्राग्भाविनामङ्गानां प्रतिकर्षं वर्तेत 'तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात्' (५।१।१२।२४) इति। तानि प्रतिकृष्टानि सर्वेषां तन्त्रं भवन्ति। तेषु तन्त्रेषु उत्तरेषामपि तन्त्रभावो युक्तः। कुतः? यदि सर्वाणि तन्त्रं क्रियन्ते, नास्ति तन्त्रभावे क्रमभेदः। अथ नु भेदः, ततः पूर्वस्य सर्वं गुणकाण्डं अपवृज्य उत्तरस्योपक्रमेण भवितव्यम्। तथा निर्वापान्तेषु प्रतिकृष्यमाणेषु क्रमभेदो भवति। न तावत् पूर्वस्य प्रोक्षणादीनि क्रियन्ते, यावदुत्तरस्य निर्वापान्तानि न कृतानि। अपि च सहोपक्रमे युगपच्चिकीर्षा। तस्यां च सत्यां यद्यत् आपतति, तत्तत् अगृह्यमाणविशेषत्वात् साधारणं भवति।

**इष्टिरिति चैकवच्छ्रुतिः। २१॥**

**भाष्यं**—सैषाऽध्वरकल्पेष्टिः इति चैकवत् श्रवणम्। तन्न तावदेकैवेष्टिः। बहव एते यागाः। यदि तु सह क्रियन्ते, ततः सर्वसमाप्तौ यतीभावः पर्यवसितो भवति इति एकवदुपचार उपपद्यते। तस्मात् तन्त्रम्।

**अपिवा कर्मपृथक्त्वात्, तेषां च तन्त्रविधानात्, साङ्गानामुपदेशः स्यात्। २२॥**

**भाष्यं**— नैतदेवं तन्त्रमङ्गानीति। किं तर्हि? भेदेन। कुतः? कर्माणि तावदेतानि आग्नावैष्णवादीनि पृथग्भूतानि। तेषां तन्त्रविधानं नानाकालेषु प्रातर्मध्यंदिनेऽपराह्णे इति। तत्रैषां साङ्गानामुपदेशः स्यात्। अतः कालभेदात् अङ्गानां गृह्यते विशेषः। तस्मात् भेदः।

**टुप्**— ( सिद्धान्तमाह– ) कालभेदात् एकैकस्य इतिकर्तव्यताया आवृत्तिः । किंच यस्यापराह्णे ( द्वादशकपालादिनिर्वापस्य ) करणं प्राप्तं ( प्रधानकालत्वात्, ) तस्य न प्रातःसामान्यं ( प्राप्तं, ) नापि प्रातर्विशेषः । यस्य तु पूर्वाह्णे करणं ( प्राप्तं ) तस्य प्रातर्विशेषमात्रं विधीयते, सामान्यं प्राप्तमेव । तस्मात् यत्रैको विधीयते, स ग्रहीतव्यः ।

**प्रथमस्य वा कालवचनम् । २३ ॥**

**भाष्यं**— यत्तु विशेषस्य एककालत्वात् इति, तत्र ब्रूमः । प्रथमस्य कर्मणो यो निर्वापः, तस्यैतत् कालवचनं 'पुरा वाचः प्रवदितोर्निर्वपेत्' इति । ननु प्रकरणात् सर्वेषां प्राप्नोति । न प्रकरणं धर्माणां विशेषकम् । किं तर्हि ? विनियोजकम् । 'इदमत्र भवति' इत्येतत् प्रकरणस्य सामर्थ्यम् । न 'अस्येदं तस्येदं' इति । त्रयाणां च निर्वापाणां क्रमप्राप्तस्य पूर्वस्यैव विज्ञायते । तस्मात् नास्ति विशेषस्य एककालत्वम् । कर्मणां च तन्त्रभेदः कालभेदात् इति ।

**फलैकत्वादिष्टिशब्दो, यथाऽन्यत्र । २४ ॥**

**भाष्यं**— यत्तु इष्टिरिति, भिन्नानामपि कर्मणामेकफलानां फलस्यैकत्वमपेक्ष्य एकवचनं भवति, फलान्तत्वादीहायाः । यथा सर्वपृष्ठेष्टिः, मृगारेष्टिः, सुमना नामेष्टिः इति ।

**शा**–– तत्र ( अध्वरकल्पायां) किमङ्गानि तन्त्रं, उत त्रयाणामपि त्रिकाणामर्थेन त्रिरङ्गानि आवर्तनीयानीति । तदर्थमिदं चिन्त्यते ' पुरा वाचः प्रवदितोर्निर्वपेत् ' इति किं सर्वनिर्वापस्यापकर्षः, उत प्रातःकालीनस्यैवेति । ( तत्र ) प्रकरणाविशेषात् सर्वनिर्वापापकर्षः । अतश्च नवापि यागाः तन्त्रेणोपक्रान्ताः भवन्ति । यथोपक्रमं च समापनं, इति उत्तरेषामपि अङ्गानां तन्त्रम् । ( इति प्राप्ते उच्यते ) ' स्यादेवं यदि निर्वापः सर्वेषामपकृष्यते । प्रातःकालिकमात्रस्य तद्विशेषोऽत्र चोद्यते ॥' तस्मात् प्रातर्मध्यंदिनापराह्णवर्तिनां प्रधानानां अङ्गान्यपि तत्र-तत्रावर्तनीयानि इति तन्त्रभेदः । ११।२।३.

**सोम**—' इन्द्रियं वै वीर्यं वृङ्क्ते भ्रातृव्यो यजमानः, यजमानस्य अध्वरकल्पं प्रति निर्वपेत् भ्रातृव्ये यजमाने, नास्येन्द्रियं वीर्यं वृङ्क्ते ' इति शत्रूणां क्रियमाणयागप्रतिविधानार्था अध्वरकल्पा । इह सत्यपि त्रिकत्रयस्य कालभेदे नाङ्गानुष्ठानावृत्तिः इत्युत्थितेः **संगतिः** । **सूत्रार्थस्तु**– अध्वरकल्पायां पशुवत् अङ्गानुष्ठानतन्त्रता स्यात् विशेषस्य निर्वापान्तकलापस्य एककालत्ववचनात् इति ।

**वि**— ' अङ्गान्यध्वरकल्पायां प्रातःकालादिवर्तिषु । त्रिषु सर्वेषु तन्त्रेण स्युर्भेदेनाथवा, ऽग्रिमः ॥ उपस्यशेषनिर्वापात् तद्–द्वाराऽङ्गापकर्षणात् ।, प्रातर्निर्वापवैशेष्यान्मुख्यकालाय भिन्नता ॥ '

**भाट्ट**—अध्वरकल्पायां ' आग्नावैष्णवं प्रातरष्टाकपालं॰ सोऽनेन यजेत ' इति श्रुतम् । अत्र च ' यस्य भ्रातृव्यः सोऽनेन ' इति वाक्येन नवानामपि यागानां फले विनियोगात् आख्यातभेदाच्च तत् तावत् पृथग्वाक्यम् । पूर्वं च यदि एकमेव वाक्यं स्यात्, तदा नवभिः द्रव्यदेवतासंबन्धैः नवसु यागेषु कल्पितेषु तत्तद्–द्रव्यदेवताविशिष्टतावद्याग-विधाने कृते पार्ष्ठिकान्वयवेलायां द्रव्यान्तरे देवतान्तर-संबन्धस्यापि आपत्तेः भिन्नान्येव एतानि उत्पत्तिवाक्यानि नव । प्रातरादिकालत्रयसंबन्धाच्च त्रयः प्रयोगविधयः । तत्तत्कालीनप्रयोगविधिश्च न आग्नावैष्णवमात्रस्य, तथात्वे सारस्वतबार्हस्पत्ययोः त्रिःपाठवैयर्थ्यापत्तेः । अपि तु त्रिहविष्क एकैकः । न च प्रातरादिपदानां त्रिष्वपि अनुषङ्गात् एकैकस्मिन् काले एकैकहविष्कप्रयोगत्रयशङ्का, उत्पत्तिविधेरेव प्रयोगावधितात्पर्यस्य अनुषङ्गस्य च कल्पनापेक्षया निर्वपेदितिपदानुषङ्गेण ' प्रातर्निर्वपेत् ' इत्यस्य वाक्यान्तरत्वकल्पनाया एवोचितत्वात् । अत एव तेन आनन्तर्यात् त्रिहविष्क एव प्रयोगो विधीयते । तदेवं स्थिते ' पुरा वाचः प्रवदितोर्निर्वपेत् ' इत्यतिदेशप्राप्ते निर्वापे कालविशेषः श्रुतः । स किं प्रातःकालीन-हविषामेव, उत सर्वेषां इति चिन्तायां, अविशेषात् सर्वेषामेव । **न च** प्रातःकालीनहविषां पक्षे तत्कालीन-निर्वापप्राप्तेः नियममात्रकरणे लाघवात् माध्याह्निकापराह्णिकहविर्निर्वापस्य च पक्षेऽपि एतत्कालप्रसक्त्यभावेन तत्र तद्विधाने अपूर्वविधित्वापत्तेः लाघवानुरोधेन प्रातःकालीनहविर्निर्वापस्यैव अयं कालविशेषविधिः इति **वाच्यम्** । प्रातःकालस्य उदयोत्तरकालीनत्वेन तत्कालीन-हविर्निर्वापस्यापि वाक्प्रवदनात् पूर्वं अप्रसक्तत्वात्,

अवत्स्ययागानां चतुरक्षरदेवताकत्वेन पौर्णमासीविकारत्वा उदयोत्तरमेव सर्वनिर्वापस्य अतिदेशप्राप्तत्वाच्च । अतश्च सर्वनिर्वापापकर्षे तदन्तापकर्षन्यायेन ( ५।१।१२।२८ ) 'निर्वापान्तपदार्थानां सर्वप्रयोगीयाणां तन्त्रेण करणं, यथोपक्रमं च समापनं' इति नियमाङ्गीकारे च उत्तराङ्गानामपि । इति प्राप्ते, देवतागतैकत्वसंख्यापेक्षया तदक्षरगतचतुष्ट्वसंख्याया अन्तरङ्गत्वाभावात् सारस्वतबार्हस्पत्ययोस्तावत् आग्नेयविकारत्वमेव । आग्नावैष्णवेऽपि अष्टाकपालत्वस्य त्यागगतद्रव्यतत्कपालतत्संख्यारूपस्य त्यागाङ्गभूतोद्देशतद्देवतातदाश्रयाक्षरतत्संख्यारूपाक्षरचतुष्ट्वापेक्षया अन्तरङ्गत्वात् आग्नेयविकारत्वमेव । अतश्च प्रातःकालीनयागत्रयस्य आग्नेयविकारत्वात् तस्य च पौर्णमास्यमावास्यासाधारणत्वेन 'उदित आदित्ये पौर्णमास्यास्तन्त्रं प्रक्रमयति, प्रागुदयादमावास्यायाः' इतिवचनविहितस्य उदयप्राक्कालीनत्वस्यापि निर्वापे पक्षप्राप्तत्वात् तत्रैव वाक्प्रवदनपूर्वकालीनत्वनियमोपपत्तेः अपूर्वविधिनियमविधित्वकृतवैरूप्यपरिहारार्थं प्रातःकालीनस्यैव निर्वापस्यापकर्षः । न च आतिदेशिकस्य उदयप्राक्कालीनत्वस्य औपदेशिकेन प्रातःकालेन बाधात् तत्रापि पक्षप्राप्त्यभावः, 'एवं प्रातरुपोदयं व्युषिते उदिते वा' इति आश्वलायनसूत्रव्यवहारेण ( आश्वश्रौ. २।४।२३–२४ ) उदयात् पूर्वमपि प्रातःकालसत्त्वात् । अतश्च माध्याह्निकापराह्णिकयोः निर्वापापकर्षाभावात् न तन्त्रेणाङ्गानि । यदाऽपि 'सरस्वत्याज्यभागा' इति शाखान्तरवचनात् मध्यमस्योपांशुयाजविकारत्वं, तदाऽपि उपांशुयाजस्य बह्वृचब्राह्मणे ( कौषीतकि. ) अमावास्यायामपि विधानेन साधारण्यमुपपाद्य सिद्धान्तः समर्थनीयः । ११।२।३.

**मण्डन**—'अङ्गाभ्यासोऽध्वराभिधे' ।

**शंकर**—'अध्वरकल्पाऽपि तद्विधा ।' अङ्गभेदवती ।

* **अध्वर्युः** उत्तरवेद्यां स्थित्वा प्रेष्यति, मैत्रावरुणस्तु सदसि स्थित्वा प्रेष्यति । **संकर्ष.** २।३।१३. * अध्वर्युः एतेन प्रकाशितमनुष्ठास्यामीति ( आज्यग्रहणादिमन्त्रान् पठेत् ), यजमानस्तु न प्रमदिष्यामीति । **भा.** ३।८।७।१७. * अध्वर्युः एव सत्यां शक्तौ चमसैर्जुहुयात् । ग्रहहोमव्यावृत्त्येन कद चित्रहानौ यजमानस्याध्वर्युः जुहुयुः । **वि.** ३।७।२२, * 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिदीक्षायज्ञे निर्दिष्टा अध्वर्युप्रमुखाः ऋत्विजः सेव्या, न तु यजमानस्यर्त्विज इति नियमो द्रष्टव्यः । ३.७.१३. * 'अध्वर्युर्गृहपतिं दीक्षयित्वा' इत्यादिना सत्रे तत्संस्कारकर्तृत्वेनान्तरकालत्वविधानात् कालानुवाद एव सत्रे । **भाट्ट.** ५।२।३. * 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इति न दीक्षा विधीयते । नासौ यजमानस्य, न चाऽध्वर्युः कर्ता, सर्वस्य चोदकेन प्राप्तत्वात् । किं तर्हि ? दीक्षाक्रमः अनियमेन प्राप्तः सन् नियम्यते । **वा.** ९।१।१।१ पृ. १६३६. * 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति तत उद्गातारं' इत्यादिना ब्रह्मोद्गात्रादिसमाख्यासंयोगदीक्षासंयोगयोः आर्त्विज्ययाजमानद्योतकयोः प्रतिभानात् सत्रे यजमाना एव ऋत्विजः । **वि.** १०।६।१५. * **अध्वर्युः** दर्शपूर्णमासादीनां कर्मणां साङ्गानां कर्ता । **भा.** ३।४।८।२२. * 'अध्वर्युः पुरो विभजते' इत्यत्र एकत्वश्रुतेः 'अध्वर्यु वृणीते' इत्यत्र एकत्वविवक्षोपपत्तिः । **भाट्ट.** ३।७।११. * अध्वर्यु. यजुर्वेदोक्तं करोति । तस्य पुरुषास्त्रयः प्रतिप्रस्थाता नेष्टा उन्नेता चेति । अयं प्रथमवर्गीयः । अयं पूर्णां दक्षिणां द्वादशगोरूपां लभते सोमे । **वि.** ३।७।१७. *'अष्टौ अध्वर्युरुत्तरे विहारे हवींष्यासादयति' **चातुर्मास्य**गतवरुणप्रघासेषु । **भा.** ११।२।९।३५, ४१, * 'आश्विनमध्वर्युः, सारस्वतं ब्रह्मा, ऐन्द्रं प्रतिप्रस्थाता' ग्रहं आदत्ते सौत्रामण्याम् । ३।५।३।१४, * कृष्णविषाणया वासांसि विस्रंसयति । ततोऽध्वर्युः परिधत्ते । १०।४।७।१५, * दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति ( ज्योतिष्टोमे ) । २।२।६।१७ पृ. ५११, * योऽध्वरं युनक्ति सोऽध्वर्युरिहाभिप्रेतः । १०।३।१७।६३, * **अध्वर्यु** प्रतिप्रस्थाता दीक्षयित्वा अर्धिनो दीक्षयति सत्रे । ३।७।१७।३७. * 'अध्वर्युं यजमानोऽन्वारभते, यजमानं पत्नी, पत्नीमितरे पुत्रभ्रातरः । तान् अहतेन वाससा संप्रच्छाद्य वाससोऽन्ते स्रुग्दण्डमुपनियम्य प्रचरण्या वैसर्जनानि जुहोति' इति कल्पसूत्रम् । 'वैसर्जनीयं वासोऽध्वर्युर्गृह्णाति' इति स्मृतिः लोभमूलकत्वसंभवात् न प्रमाणम् ।

वि. १।३।३. * **अध्वर्युणा** आध्वर्यवं कर्तव्यम् । भा. ३।७।१९।४०, * अध्वर्युणा क्रियमाणमर्थं क्रियमाणानुवादिनो मन्त्राः अनुवदन्ति । यथा– ' अञ्जन्ति त्वामध्वरे देवयन्तः ' इति । १२।३।१६।३७, * अध्वर्युणा जयादयः करिष्यन्ते, आध्वर्यवं इति समाख्याते वेदे समाम्नातत्वात् । ३।४।९।२७. * अध्वर्युणा पाठ्येषु करणमन्त्रेषु श्रुतमपि फलं याजमानमेव । वि. ३।८।१४. * अध्वर्युणा शामित्रमपि कर्तव्यं, आध्वर्यवे समाम्नानात् । तस्मात् शमनात् अध्वर्युः शमिता । भा. ३।७।१३।२९. * होत्रा प्रातरनुवाके अनूच्यमाने ' मनसा ते वाचं प्रतिगृह्णामि ' इत्यध्वर्युणा मनसा प्रतिगरं कुर्वता होतुः समीपे प्रातरनुवाकसमाप्तिपर्यन्तं आसितव्यम् । सोम. ५।१।१३. * **अध्वर्योः** उपगातृत्वं निषिद्धं ' नाध्वर्युरुपगायेत् ' इति । भा. ३।७।१४।३०. * अध्वर्योः उपास्तिः (होतुः समीपे स्थितिः प्रातरनुवाककाले ) पाक्षिकी । वा. २।१।१३।२५ पृ. १०४. * अध्वर्योः गो-त्रयदानं वाचनिकं स्वयमातृण्णोपधाने । ( अध्वर्युकर्तृकं दानम् ) वि. ३।८।२. * अध्वर्योः ज्योतिष्टोमे केशश्मश्रुवपनात्मके यजमानसंस्कारे क्षुरग्रहणापत्तिर्नास्ति । तस्य नित्यं नापितकर्मत्वात् । ' केशश्मश्रुवपनेऽपि नित्यं नापितकर्तृत्वं इति नाध्वर्योः क्षुरग्रहणापत्तिः ' । वा. ३।८।२।४. * अध्वर्योः तावत् ' करोमि ' इत्येतेन प्रत्ययेनार्थः । असति हि एतस्मिन् क्रियैव न प्रवर्तते । करणमन्त्राश्च करोमि इत्येवं प्रत्ययं कुर्वन्ति । भा. १२।३।१६।३७. * अध्वर्योः परिक्रीतस्य दक्षिणातिरिक्तफलसंबन्धः उत्सर्गतो न न्याय्यः । वि. ३।८।१४. * अध्वर्योः पृथक् प्रतिप्रस्थात्रा चातुर्मास्यगतवरुणप्रघासेषु दक्षिणविहारे मन्त्रोच्चारणं कार्यम् । भा. १२।१।९।१८, *अध्वर्योः यूपपरिव्याणे करणमन्त्रः ' परिवीरसि० ' इति । ३।८।१०।२१. * अध्वर्योः वरणवेलायामेव सर्वं यजमानेन यज्ञोपयोगि स्वयमनुज्ञातमेव इति निर्वापमन्त्रं प्रसवशब्देन तदानींतनयजमानानुज्ञाप्रकाशनं न क्रियते । वा. १।३।२।४ पृ. १९२. * अध्वर्योः वाजपेये श्रुतेन यजुर्युक्तरथेन दास्यादिभागान्तरस्य न निवृत्तिः । भा. १०।३।२१।७४–७५, *अध्वर्योः होतुश्चैकस्मिन् पात्रे भक्षणे कर्तव्ये होतुः प्रथमभक्षो नाध्वर्योः । ३।५।१३।३६–३९, * यजुर्युक्त (रथं) अध्वर्यवे ददाति, नान्यं, न चान्यस्मै । तस्मात् **अध्वर्योर्भागे** रथो नियम्यते, न तद्भागं निवर्तयति । १०।३।११।७५, * **अध्वर्युकर्तृकता** प्रैषस्य, प्रैषार्थस्य तु आग्नीध्रकर्तृकत्वम् । ३।८।१२।२४-२५.

**अध्वर्युगणस्थेनैव पशुसंज्ञपनं कार्यम् ॥**

हिंसारूपे संज्ञपने ' न हिंस्यात् ' इति निषेधेनान्यः सौनिक एव कर्ता स्यात् । इति प्राप्ते ' वातं प्राणमन्ववसृजतात् ' इत्यादिमन्त्रैस्तस्यापि शमनान्तर्भावात् तदंशे समाख्याबाधायोगात् तत्राप्यध्वर्युगणस्थ एव कर्ता, ' स्वधीते मैनं हिंसीः ' ' तस्माद्यज्ञे वधोऽवधः' इत्यादिलिङ्गदर्शनेनास्य पापजनकत्वाभावात् । भाष्ये तु चतुरधिकरणी इयमेकीकृत्य व्याख्याता । लिङ्गदर्शनाच्च इति चरमसूत्रं तु सर्वसाधारण्याय ' शृतं हविः शमितः ' इति प्रैषे सति 'शृतमिति त्रिः प्रत्याह' इति लिङ्गं शमनश्रपणयोः समानकर्तृकतां बोधयति इति व्याख्यातम् । श्रपणस्य प्रकृतौ अध्वर्युकर्तृकत्वादिनिश्चयादिति तदाशयः । परं त्वेष न्यायः सोमान्तर्गतपशुष्वेव । वपायागेऽध्वर्युप्रतिप्रस्थात्रोर्व्यापृतत्वेऽपि तृतीयस्याध्वर्योः सत्त्वात् । आ वपाहोमाद्वपोद्धरणबिलस्य पाणिना आच्छादनस्य शमितृकर्तृकत्वाम्नाननिर्वाहात् । निरूढादिषु त्वनायत्या अन्यः शूद्रादिः शमिता स्यात् । अत एव ' अर्धं च वैकर्तस्य क्लोमा च शमितुः तद् ब्राह्मणाय दद्याद्यद्यब्राह्मणः स्यात् ' इति लिङ्गात् संज्ञपनसूत्रे अन्यपदानुकर्षेण तावन्मात्रे त्वन्य एव कर्तेति सुव्याख्यं याज्ञिकाद्यविरोधाय । संकर्ष. १।१।१५.

* **अध्वर्युदीक्षायां** ' चित्पतिस्त्वा पुनातु ' इति मन्त्रलिङ्गविरोधात् उत्तरेषु च ' न पूतः पावयेत् ' इति निषेधात् अध्वर्योः कर्तृत्वासंभवात् प्रतिप्रस्थाता प्राप्तः सत्रे । भा. ५।१।१।१. * **अध्वर्युप्रतिप्रस्थात्रोः** एकेन मन्त्रेण द्विवचनान्तेन वरणं ऋतुप्रैषेषु । संकर्ष. ३।४।१२. * अध्वर्युप्रतिप्रस्थात्रोस्तु वचनात् भेदः । होत्राग्नीध्रब्रह्मणां तु तन्त्रं विहारद्वये वरुणप्रघासेषु । भा. ११।२।१०।४४-४८. * **अध्वर्युप्रभृतीनां** ऋत्विजां ये भागा,

तेषां कुण्डलचरौ ब्रह्मसंबन्धो विधीयते । तस्मात् अन्वेषं भक्षणं बाध्यते । वि. १०।२।५. *अध्वर्युप्रवरः पश्चात्, होतृप्रवरः पूर्वः दर्शादौ । संकर्ष. ४।२।३, * **अध्वर्युप्रवरेषु** 'ऊर्ध्वानध्वर्युवेच्छब्दात्' इत्यादिना तद्धितविनिर्मुक्तप्रातिपदिकानां वच्छब्दान्तानां प्रातिलोम्येन पाठो विहितः । ३।४।८, * **अध्वर्युप्रवरनिगदे** 'अग्निर्होता देवान् यक्षत्' इति आहवनीयवाद एव । ४।२।१८. * **अध्वर्युब्राह्मणे** 'यावज्जीवमग्निहोत्रं जुहोति' इति जीवनं निमित्तीकृत्य नित्योऽग्निहोत्रप्रयोगो विधीयते, न तु काम्ये कालरूपधर्मः । वि. २।४।१. * **अध्वर्युभागमात्रस्य** प्राकृतस्य अश्वमेधगतप्राकाशाभ्यां बाधः । भा. १०।३।१७।६३–६४. * **अध्वर्युयजमानो**भयगामि ज्योतिष्टोमे उपरवेषु 'भद्रं' इतिमन्त्रोक्तं फलम् । वि. ३।८।१६, * अध्वर्युयजमानोभयप्रयोज्यः 'वाजस्य मा०' इति मन्त्रः दर्शपूर्णमासयोः काण्डद्वयेऽपि पठितत्वात् । ३।८।८. **अध्वर्युविकारः** मैत्रावरुणः प्रैषेषु । भा. १०।७।६।१९. * **अध्वर्युव्यापारे** च 'अभ्यनक्ति' इति परस्मैपदेन निर्देशात् 'अभ्यङ्क्ते' इति आत्मनेपदयुक्तो विधिर्यजमानस्य इति गम्यते । वा. ३।८।२।५, * **अध्वर्युशाखासु** सर्वासु दर्शपूर्णमासज्योतिष्टोमादीनि समस्तद्रव्यदेवतादियुक्तत्वात् अन्योन्यनिरपेक्षाणि विधीयन्ते, इति भेदाशङ्कां सहन्ते । न त्वेवं वेदान्तरेऽपि । तत्र हि द्रव्यदेवतारहितं कर्ममात्रं प्रस्तुत्य स्तोत्र–शस्त्र–याज्यानुवाक्यादिमात्रं विधीयते । न च तावता अस्य नैराकाङ्क्ष्यं भवति । इष्टार्थानामेव द्रव्यदेवतातत्संस्कारागामभावात् । २।४।२।८ पृ. ६३१.

### अध्वर्युस्तु दर्शनात् ।३।८।१२।२४ ॥

दर्शपूर्णमासयोः 'प्रोक्षणीरासादय इध्माबर्हिरुपसादय' इत्यादिः प्रैषो वक्तव्यः । प्रैषार्थश्च केन चित् कर्तव्यः । 'तिर्यञ्चं स्फ्यं धारयेत्, यदन्वञ्चं धारयेत्, वज्रेणाध्वर्युं क्षिण्वीत' इति तिर्यग्धारणं विधाय तच्छेषोऽर्थवादः स्फ्यस्य धारणं तावत् अग्नीधः नियमेन, स च अध्वर्युं क्षिण्वीत हिंस्यात् इति वदन् अग्नीधं स्फ्यवन्तं प्रेषकं दर्शयति । अर्थात् प्रैषार्थकर्ता अध्वर्युः इति सिध्यति । ततश्च अग्नीधः प्रैषकर्तृत्वस्य दर्शनात् अध्वर्योश्च प्रैषार्थकर्तृत्वस्य दर्शनात् अध्वर्युः प्रैषार्थकर्ता प्रेष्यः इति पूर्वः पक्षः । तु–शब्दः संभावनायाम् । एवं संभवति इत्यर्थः ।

### गौणो वा, कर्मसामान्यात् । २५ ॥

सिद्धान्तयति । वा–शब्दः पूर्वपक्षव्यावृत्त्यर्थः । कर्मसामान्यात् यजुर्वेदविहितकर्मकारित्वसामान्यात् 'अध्वर्युं क्षिण्वीत' इति अध्वर्युशब्दः आग्नीध्रे गौणः स्यात् । आध्वर्यवसमाख्यया तु अध्वर्युरेव अध्वर्युशब्दस्य मुख्योऽर्थः । अध्वर्युवेदोक्तकतिपयकर्मकारित्वगुणेन च आग्नीध्रे गौणः अध्वर्युशब्दः । तस्मात् अध्वर्युरेव प्रेषकः प्रैषकर्ता । आग्नीध्रश्च प्रेष्यः प्रैषार्थकर्ता इति सिद्धान्तः ।

तैत्तिरीयके स्फ्यधारणं अध्वर्योरेव कर्म । तेन स्फ्यहस्तकर्तृकसंप्रैषोऽपि अध्वर्युकर्तृक एवेति आग्नीध्रस्यैव प्रेष्यत्वं सिध्यति । अधिकरणं तु द्वितीयान्ताध्वर्युपदघटितशाखान्तरीयवाक्यशेषपनपेक्ष्यैव बोध्यम् । के.

*अध्वर्युहोत्रादयो 'मध्यतः कारिणः' । वि. ३।७।१०, *अध्वर्यूद्गात्रादयो नानाविधाः कर्तारः प्रबलचोदकवशात् प्रकृताविव श्येनवाजपेयादिष्वपि स्वस्वधर्मेषु व्यवतिष्ठन्ते, न तु श्येनः उद्गात्रैव, वाजपेयोऽध्वर्युणैव इति संभवति । ३।७।२३. * **अध्वर्य्वादिभिः** ( विकल्पस्थले ) अन्यतरं पक्षं करिष्यामः इत्युक्त्वा न लाघवादिवशेन पुनर्विसंवदितव्यम् । ( नानृतं वदेत् इति निषेधात् ) वा. ३।४।४।१३ पृ. ९४३, * **अध्वर्य्वादीनां** दक्षिणा परिक्रयार्था, कर्मसंयोगात् । ३।१।६।१२ पृ. ६९७.

### अध्वर्य्वादीनां समाख्यया नियतपदार्थकर्तृत्वम् ॥

### ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् । ३।७।१९।३९ ॥

**भाष्यं**— स्वामिसप्तदशा ज्योतिष्टोमस्य ऋत्विजः समधिगताः । अत्रेदानीमयं संदेहः किं सर्वे पुरुषकार्यं तैः कार्यं, अग्निभिश्च गार्हपत्यादिभिरग्निकार्यं, उत का चिद्व्यवस्थेति । किं तावत्प्राप्तम् ? ते सर्वार्थाः प्रयुक्तत्वादग्नयश्च स्वकालत्वात् । ते वृताः सर्वस्मै पुरुषकार्याय स्युः । अग्नयश्चाग्निकार्याय । कुतः ? तैः कार्यैराकाङ्क्षितत्वात् । प्रतिस्वं ग्रहणमेषामनुवादः । स्वकालत्वादग्नयश्च सर्वार्था इति समधिगतमेतत् ।

**वा**—एवं कर्तृभेदं प्रतिपाद्येदानीं समाख्याविनियोगस्य पूर्वपक्षं रचयति स्म। तत्र 'ते सर्वार्थाः' इति न ज्ञायते किं क्रत्वर्थपुरुषार्थाभिप्रायं उत क्रत्वर्थसर्वार्थाभिप्रायं, तत्रापि किं वाक्यसंयुक्तसर्वार्थाः, उतासंयुक्तसर्वार्थाः। यदि तावत् पुरुषार्था अर्पात्यभिप्रायः, स वरणभरणयोः प्रकरणाम्नानेन क्रत्वर्थत्वादयुक्तः। उक्तं हि 'प्रकरणविशेषाद्वा तद्युक्तस्य संस्कारो द्रव्यवत्' (३।४।५।१५) इत्यादिषु। तथा द्वादशे वक्ष्यति 'निर्देशाद्वा वैदिकानां स्यात्' (१२।२।१।३) इति। तस्मादेवं तावन्न सर्वार्थत्वम्। नापि संयुक्तेषु 'तान् पुरोऽध्वर्युर्विभजति' इत्यादिश्रुतानामन्येषामवतरणमस्तीति। यानि त्वसंयुक्तानि कार्याणि, तानि यत्र तत्र वेदे पठितानि येन केन चित् कर्त्रा यथासामर्थ्यं कर्तव्यानीति सर्वार्थाः। प्रयुक्तत्वादिति-सर्वाणि हि कार्याणि शक्नुवन्ति तान् प्रयोक्तुम्। तथा तेऽपि कार्याणि (अनुष्ठातुं शक्नुवन्ति)। सर्वं पुरुषकार्यमिति यद्यत् कर्मणि पुरुषैः प्राग्वचनविशेषात् स्वसामर्थ्येन शक्यते तत्तत् इत्येवं युज्यते, न पुरुषार्थाभिप्रायेण।

**तत्संयोगात् कर्मणो व्यवस्था स्यात्, संयोगस्यार्थवत्त्वात्। ४०॥**

**भाष्यं**—तत्संयोगात् विशिष्टपुरुषसंयोगात् व्यवतिष्ठेत। ये येन पुरुषेण समाख्यायन्ते, ते तेन कर्तव्याः। एवं तेषां पुरुषसंयोगोऽर्थवान् भविष्यति। आध्वर्यवमध्वर्युणा, हौत्रं होत्रा, औद्गात्रमुद्गात्रेति।

**वा**— समाख्यासंयोगाद्व्यवस्था भवेत्। नहि हौत्रमकुर्वतो होतृसमाख्या अर्थवती भवति। नापि तेनाक्रियमाणस्य हौत्रव्यपदेशोऽवकल्पते। तस्मादन्यथाऽनुपपत्त्या कल्पितया श्रुत्या विनियोगः। तत्र **केचिदाहुः**। अन्योन्यनिरपेक्षयोरेव रूढिरूपेण कर्तृकर्मसमाख्ययोः प्रसिद्धयोः अक्षरसारूप्येणोपतिष्ठमानयोर्विनियोजकत्वमिति। कुतः? 'संयोगः पूर्वसिद्धो हि निमित्तत्वं प्रपद्यते। न चेह प्राक्समाख्यानात् किंचित् संयोगकारणम्॥' होतृशब्दस्तावन्न हौत्रनिमित्त इति राजशब्दवदेव प्रत्ययलोपप्रातिपदिकप्रत्यापत्त्योः अस्मरणादवगतमेतत्। न च राजशब्दादिव राज्यशब्दो होतृशब्दात् हौत्रशब्दः शक्यः कल्पयितुम्। नहि यथा तत्र मन्वादिभिः क्षत्रियस्य रक्षणं विहितं तत् राजकर्मत्वेन ज्ञायमानं प्रत्ययार्थत्वं प्रतिपद्यते, तथेह केन चित् सामिधेन्यनुवचनादेर्होतृकर्मत्वं प्रसिद्धं, यन्निमित्ता समाख्या स्यात्। न चैवं सति समाख्या विनियोक्त्रीत्यवसीयते। कथं तर्हि असत्यामवयवव्युत्पत्तौ विनियोगः? उक्तमेतच्छब्दसारूप्यमात्रादिति। **न त्वेतद्युक्तम्**। यदि होतुः कर्म हौत्रमित्येवं न व्युत्पाद्यते, ततः अन्तरेणैव कर्तृकर्मसंबन्धं रूढ्या सारूप्यसमाख्ययोरुपपन्नत्वात् नार्थापत्तिः श्रुतिं कल्पयेत्। नहि वर्णसामान्यमात्रेण शालामालयोः कश्चित् संबन्धः। तथा च वक्ष्यति (१०।४।२३।४६) नहि कण्वरथंतरे रथंतरसंबन्धः कश्चिदस्तीति। यदपि च कृते राज्ञः कर्मसंबन्धे राज्यशब्दः प्रवर्तते इति। तदयुक्तम्। संबन्धस्य आदिमत्त्वप्रसङ्गात्। तस्माद्यथैव तत्र नित्ययोरेव शब्दार्थयोर्नित्ये एव संबन्धे शास्त्रतः प्रतीयमाने साधुत्वप्रतिपत्तिवेलायां राजशब्दमन्वाख्याय राज्यशब्दोऽन्वाख्यायमानो यौगिकः तन्निमित्तश्चोच्यमानोऽपि नित्यनिमित्तत्वात् न आदिमत्त्वं प्रतिपद्यते, तथैवात्र हौत्रमिति वृद्धिदर्शनाद्धोतृशब्दात् 'तस्येदं कर्म' इत्येवमन्वाख्यानमिति गम्यते। केन तु तत्तस्य कर्मावगतमिति? समाख्यादर्शनात् तदेव तादृशं वचनमनुमास्यामहे। **ननु** इतरेतराश्रयं प्राप्नोति समाख्यातस्तद्वचनं, तेन क्लृप्ते संयोगे समाख्यासिद्धिरिति। **नैष दोषः**। समाख्या तावत् प्रतीतिरूपेण प्रत्यक्षा। सा तु केन निमित्तेन प्रवृत्तेति पूर्वप्रवृत्ततयैव निमित्तमपेक्षते। न च तदस्ति। तस्मान्नूनमीदृशी श्रुतिरस्ति, यथा होत्रा कर्तव्यमेतदिति। सर्वेषु एव लिङ्गादिषु एवमेतद्भवतीति व्याख्यातम् (बलाबलाधिकरणे)। अतो नेतरेतराश्रयत्वमिति। **ननु** चेदं 'आख्या चैवं तदर्थत्वात्' (३।३।६।१३) इत्यनेनैवाधिकरणेन सिद्धम्। **सत्यं** सिद्धं न तु तत्र विरोधाविरोधौ विचारितौ। इह तु योग्यत्वप्रकरणविशेषात् सर्वार्थत्वप्रसक्त्या विरोधमाशङ्क्य परिहरति, उत्तरविवक्षया वा अनुवदतीत्यपुनरुक्तम्।

**शा**—'नानाकर्तृषु सिद्धेषु सांप्रतं संप्रधार्यते। किमव्यवस्थितं तेषां कार्यं किंवा व्यवस्थितम्॥'

**सोम**—'शास्त्रफलं प्रयोक्तरि' ( ३।७।८।१८ ) इत्यादिना प्रवृत्तस्योपोद्घातस्य तत्प्रसक्तानुप्रसक्तस्य च समाप्त्या प्राप्तावसरोऽयं विचारः। ( तथा चावसरः **संगतिः** ) । **सूत्रे** प्रयुक्तत्वात् ऋत्विजां सर्वपदार्थकरणशक्त्या पदार्थैः सर्वेषां प्रयुक्तत्वात् इत्यर्थः।

**वि**—'न कार्यं नियतं तेषां नियतं वा, ऽग्निनो यतः। शक्ताः, केन किमित्यत्र नियतिः स्यात् समाख्यया ॥' तेषामृत्विजाम्।

**भाट्ट**— तत्तत्क्रतुषु प्रमितानां तेषांतेषां कर्तॄणां अव्यवस्थयैव असति विशेषविधौ लिङ्गप्रकरणाभ्यां तत्तत्पदार्थकर्तृत्वं, न तु तया दुर्बलया आध्वर्यवादिसमाख्यया संकोचः। ( स्थितं तावदपर्यवसितम्। स्थितादुत्तरं ) नात्र समाख्यया लिङ्गप्रकरणयोर्बाधः, किंतु ताभ्यामव्यवस्थया प्राप्तानां कर्तॄणां व्यवस्थानात्रनपेक्षितं क्रियते । अतश्च हौत्रसमाख्याताः पदार्थाः होत्रा कर्तव्याः, आध्वर्यवसमाख्याताश्च अध्वर्युणा, औद्गात्रसमाख्याता उद्गात्रा। सर्वेषु हि ऋग्वेदयजुर्वेदसामवेदेषु ये पदार्था विहिताः, तेषामेताः क्रमेण समाख्याः **याज्ञिकानां** प्रसिद्धाः। यौगिकाश्च एते शब्दाः न पदार्थानामध्वर्य्वादिसंबन्धव्यतिरेकेण संभवन्ति इति तेषु तेषां योग्यत्वात् कर्तृत्वसिद्धिः।

**मण्डन**—'तेषां समाख्यया कर्म।'

**शंकर**—'समाख्या पुंनियामिका।' २०.

* **अध्वर्य्वादिवत्** कर्मकरत्वेन परिक्रीतस्य स्वामित्वासंभवः। **सोम.** ६।१।४. * अध्वर्य्वादिवत्— पत्नी पुमांसं, यजमानश्च स्त्रियं अध्वर्य्वादिवत् स्वस्वयागे परिक्रेष्यतीति चेन्न। **रत्न.** ६।१।४. * अध्वर्य्वादिवत्—पत्न्या न प्राभाकरमत इव अनुमतिमात्रेण कर्तृत्वं, अनुमतेर्यजिधात्वर्थत्वाभावेन अनुमत्या तदनुकूलाचरणेऽपि अध्वर्य्वादिवत् यागकर्तृत्वानुपपत्तेः। अतो न केवलं यजमानेनैव देवतोद्देशेन द्रव्यत्यागः कर्तव्यः, किंतु पत्न्या अपि, इति व्यासक्तमेव तयोः कर्तृत्वम्। **सोम.** ६।१।४. * **अध्वर्य्वादिसमाख्यानुरोधेन** ज्योतिष्टोमे द्वादशशतदक्षिणाया विभागः। **भा.** १०।३।१३।५३–५५. * **अध्वर्य्वाध्वर्यवशब्दौ** प्रकृतिविकारत्वात् ( वस्तुतः ), अन्योन्यानपेक्षौ नित्यं च अर्थवन्तौ, तथापि एकस्य अर्थे प्रयोगाभावात् प्रकृतेः कृदन्तनियमाभावात्, नित्यस्य च नैमित्तिकत्वेऽपि अविरोधात् आध्वर्यवशब्दप्रकृतौ अन्वयेन अध्वर्युकर्तृकार्थत्वस्य निमित्तत्वात्, अध्वर्युकर्तृत्वस्य आध्वर्यवशब्दं प्रति निमित्ततानुसरणं प्रकृतिविकारत्वाख्यानम्। **सु.** वृ. १२०१.

* '**अनड्वाहौ** युनक्ति' अत्र द्वित्वस्य कारकद्वारा क्रियाऽन्वयः। तस्माच्च द्वित्वस्य कारकावच्छेदकत्वम्। तथा च द्वयोरेव योजनं, नैकस्य बहूनां वा। **वि.** ४।१।५, * 'अनड्वाहौ युनक्ति' इत्यत्र पशुं इतिवत् द्वित्वस्य विवक्षितत्वं द्रष्टव्यम्। ४।१।५.

* **अनतिदृश्यं** वेद्यादेः स्तरणं पुरुषार्थमेव। 'अनतिदृश्यं स्तृणाति' ( यथा केवला वेदिः न द्रष्टुं शक्येत तथा दर्भैराच्छादनं अनतिदृश्यं स्तरणम्। न अतिदृश्यं अनतिदृश्यम् )। **भा.** ४।१।२।२ वर्णकं २.

* **अनधिकृतक्रिया अनाचारः** ( यस्मिन् कर्मणि स्वस्याधिकारोऽस्ति तत् स्वापेक्षया अधिकृतं कर्म। न अधिकृतं अनधिकृतं स्वाधिकाराविषयभूतं कर्म अनधिकृतं, तस्य क्रिया करणम्। कर्तृपरं वा अनधिकृतपदम्। अनधिकृतेन क्रिया अनधिकृतक्रिया। यथा कश्चित् श्वा रात्रौ स्वामिगृहरक्षणं कुर्वन् चौरमागतं दृष्ट्वाऽपि न बभाषे। कुत एतदिति गर्दभेन पृष्टः कुक्कुरो बभाषे अहमत्राधिकृतः त्वया नात्र किं चिद्वक्तव्यमिति। तच्चायुक्तं मन्यमानो गर्दभः स्वामिनं जागरयामीति बुद्ध्या उच्चैः कर्णकटु रराट। स्वामिनः सकाशाच्च लगुडप्रहारान् लेभे इति। **के.** )। **वा.** १।३।३।७ पृ. २०४.

* **अनधिगतार्थकत्वं** स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवृत्तिज्ञानविषयविषयकत्वम्। ( न अधिगतो ज्ञातोऽर्थः यस्य, तत् अनधिगतार्थकं पदादिज्ञानम्। तस्य भावः अनधिगतार्थकत्वम्। स्वं ज्ञानं, स्वसमानाधिकरणं स्वाधिकरणं आत्मा, तदधिकरणकं, स्वाव्यवहितपूर्वक्षणवृत्ति स्वाधिकरणक्षणाव्यवहितपूर्वक्षणवृत्ति च यत् ज्ञानं तस्य विषयो न भवति यः, तादृशो

विषयो यस्य तादृशत्वम् । तादृशज्ञानजनकत्वमर्थः । के. ) मणि. पृ. ११.

* **अनधिगतार्थगन्तृत्वं** प्रमाणलक्षणम् । स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वं च तत् । अनुमितेरपि वह्निविशिष्टः पर्वतो विषयः इति अनधिगतार्थगन्तृत्वम् । एवमुपमितावपि अनधिगतार्थगन्तृत्वं बोध्यम् । लौकिकशब्दजन्यज्ञानं तु न प्रमा अनधितार्थगन्तृत्वाभावात् । **कु.** १।१।५।९ पृ. ६. * अनधिगतार्थगन्तृत्वमपि प्रामाण्यं मन्त्राणां भट्टसोमेश्वर आह । **बाल.** पृ. ७०.

**'अनधीते महाभाष्ये व्यर्था स्यात् पदमञ्जरी । अधीतेऽपि महाभाष्ये व्यर्था स्यात् पदमञ्जरी ॥' इति न्यायः** । यथैव ईश्वरमनाराध्य आराध्य चान्यदेवं अपवर्गेच्छा व्यर्था । आराध्य चान्यदेवमनाराध्य परमेश्वरं मुक्तीच्छा व्यर्था । ( स्यात् इत्यत्र सा इति पाठः उभयत्र, पदमञ्जरी नाम काशिकायाः टीका । ) **साहस्री.** ७३.

* **'अनधीयाना व्रात्या भवन्ति'** इति वचनेन अध्ययनाकरणे प्रत्यवायो बोधितः । **भाट्ट** १।१।१. इति निन्दोन्नीताकरणप्रत्यवायबलेन अध्ययनस्य नित्यत्वम् । ६।२।११.

* **अनध्यायः** ग्रहणे चाध्यापने च । तस्मात् क्रतौ अनध्यायेऽपि अस्ति मन्त्रप्रयोगः । **वि.** १२।३।७. * **अनध्यायफलम्** । 'पर्वणि नाध्येयं' इति विद्यार्थो यः प्रयोगः, तं प्रति एतद्धर्मविधानम् । स एष ग्रहणस्य धर्मः । तस्मात् ग्रहणं गुणवत् करोति । कः पुनर्ग्रहणस्य गुणः ? अविघ्नेन निर्वृत्तिः । **भा.** १२।३।७।१९.

**अनध्यायादावपि कर्मकालीनमन्त्रप्रयोगः ॥**

**मन्त्राणां कर्मसंयोगात् स्वधर्मेण प्रयोगः स्याद्, धर्मस्य तन्निमित्तत्वात् । १२।३।७।१८ ॥**

**भाष्यं**— कर्मणि प्रयुज्यमानानां मन्त्राणां स्वधर्मेण प्रयोगः स्यात्, ये एषां ग्रहणकाले धर्माः 'पर्वणि नाध्येयं, वाते नाध्येयं, स्तनयित्नौ नाध्येयं' इत्यादयः । कस्मात् ? धर्मस्य तन्निमित्तत्वात् । धर्मोऽयं मन्त्रप्रयोगनिमित्तः । अयमपि च मन्त्रप्रयोगः । तस्मादत्रापि तेन भवितव्यम् ।

**विद्यां प्रति विधानाद्वा सर्वकालं प्रयोगः स्यात्, कर्मार्थत्वात् प्रयोगस्य । १९ ॥**

**भाष्यं**—सर्वकालं प्रयोगः स्यात्, अध्यायेऽनध्यायेऽपि । कुतः । विद्यार्थो यः प्रयोगः, तं प्रति एतद्धर्मविधानम् । स एष ग्रहणस्य धर्मः । तस्मात् ग्रहणं गुणवत् करोति । कः पुनर्ग्रहणस्य गुणः । अविघ्नेन निर्वृत्तिः । कथं पुनर्ज्ञायते ग्रहणार्थोऽयं धर्म इति । ग्रहणकाले श्रूयते, न कर्मकाले । मा भूत् कर्मधर्मः, मन्त्रधर्मो भविष्यति । मन्त्रधर्मश्च सन् यत्र मन्त्रस्तत्र प्राप्नोति । उच्यते । न धर्मो मन्त्रेषु विधीयते । किं तर्हि ग्रहणे । ग्रहणमेवमभिनिर्वर्त्यते, नैवं मन्त्रो भवति । तस्मात् ग्रहणधर्मः । न च कर्मणि ग्रहणार्थः प्रयोगः, किं तर्हि कर्मार्थः । तस्मात्तत्र धर्मस्याप्राप्तिः । अपि च कर्म पर्वणि, पर्वणि चाध्ययनस्य प्रतिषेधः । यद्यमन्त्रकं कर्म क्रियते, प्रयासानर्थक्यम् । अथापर्वणि, तथापि स एव दोषः । श्रुत्यनुरोधेन प्रयोगः प्राप्नोति, स्मृत्यनुरोधेनाप्रयोगः, श्रुतिश्च स्मृतितो बलीयसी । तस्मान्नाहत्यः प्रयोगनियमः ।

**शा**— पूर्वपक्षे विधीयमानानां धर्माणां मन्त्रप्रयोगार्थत्वेन कर्मकालेऽपि प्राप्तेः तद्विधयः स्वाध्यायसमयवर्तिन एव प्रसङ्गात् कर्मकालेऽप्युपकुर्वन्ति, सिद्धान्ते तु न, इत्येवंविधप्रसङ्गाप्रसङ्गविचारात् **संगतिः** ।

**सोम**— पूर्वत्र समुच्चयेऽपि अत्र विकल्प इत्युत्थितेः **संगतिः** । **ननु** यद्यमी विधयो ग्रहणाध्ययनधर्मत्वेन स्वार्थं समर्पयन्ति, तदा कर्मकाले प्रसक्तेरेवाभावान्न प्रसङ्गसंभवः । अथ सामान्येन मन्त्रप्रयोगमात्रार्थत्वेन स्वार्थं समर्पयन्ति, तदा धर्मविधीनां ग्रहणाध्ययनकर्मकालप्रयोगसाधारण्यात् तन्त्रत्वमेव न प्रसङ्गः, **इति चेत्, सत्यम्** । तथापि एकप्रकरणवर्तिनां विधीनां अन्यत्राप्युपयोग इत्येतावता प्रसङ्गोक्तिः । **सूत्रार्थस्तु**—मन्त्राणां स्वधर्मेण कर्मसंयोगे प्रयोगः स्यात् धर्माणां मन्त्रप्रयोगनिमित्तत्वात् इति ।

**वि**— **' कर्मकाले मन्त्रपाठः क्रतौ नास्त्यस्ति वा, न सः । तत्पाठस्य निषिद्धत्वा, दस्ति तत्रानिषेधतः ॥'**

**भाट्ट**— अध्यायानध्यायपरिपालनादयः अध्ययनधर्माः कर्मकालीनमन्त्रप्रयोगाङ्गपाध्ययने एव स्युः, ग्रहणाध्ययनस्य धारणाध्ययनस्य वा दृष्टार्थत्वेन तत्र स्वरूपे कार्ये वा अदृष्टार्थधर्मविधिवैयर्थ्यात्। इति प्राप्ते, अध्ययनपदार्थस्य गुरुमुखोच्चारणानूच्चारणरूपस्य प्रयोगकाले अभावात्, उच्चारणमात्रस्यापि च प्रकरणाद्यभावेन क्रतुकालीनस्यैवानुपस्थितेः। प्रकरणात्, 'तपोविशेषैर्विविधैर्व्रतैश्च श्रुतिचोदितैः। वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥' इति स्मृतेश्च धर्माणां अध्ययनमात्राङ्गत्वावगतेः। यत्रादृष्टार्थके ब्रह्मयज्ञाध्ययनेऽपि ते न धर्माः, तत्र कः प्रसङ्गः कर्मप्रयोगमध्ये धर्माणाम्। न चाध्ययने तत्कार्ये एव वाऽर्थज्ञाने धर्माणामनुपयोगः, निर्विघ्नपरिसमाप्त्यर्थत्वेनोपयोगसंभवात्। विधिबलेन धर्माणामकरणे अध्ययने विघ्नकल्पनात्। न चैतावता प्रयाजादीनामपि निर्विघ्नयागप्रयोगसमाप्त्यर्थत्वकल्पनं, करणनिष्ठयोग्यताया जनकाकाङ्क्षायां क्रतूपकारजनकत्वस्यैव तत्र कल्पयितुं युक्तत्वात्, प्रयाजादीनां प्रयोगानङ्गत्वाच्च। न चात्रापि अध्ययननियमादृष्टे एव धर्माणामुपयोगः, अध्ययननियमादृष्टस्य क्वचिदप्यनुपयोगेन अकल्पनीयत्वात्, कल्पनायां प्रमाणाभावाच्च। इदं चाधिकरणं प्रसङ्गानुपयोग्यपि करिष्यमाणमन्त्रविचारोपस्थितमन्त्रप्रसङ्गादुक्तमिति द्रष्टव्यम्।

**मण्डन** — 'पाठ्योऽनध्यायेऽपि मन्त्रोऽध्वरादौ।'

**शंकर**— 'कर्मण्यधर्मका मन्त्राः।'

* **अनध्यायादिनियमानां** स्वरूपकार्ययोरनुपयोगात् अध्ययनाङ्गत्वानुपपत्तिः इति चेन्न। कार्योपयोगाभावेऽपि विघ्ननिवारणार्थत्वेन स्वरूपोपयोगित्वात् नियमापूर्वे उपयोगाच्च। **मणि.** पृ. २.

* **अननुषङ्गाधिकरणम्**। 'व्यवेताननुषङ्गाधिकरणं' इत्यत्र द्रष्टव्यम्। २।१।१७।४९.

* **अननुष्ठानलक्षणमप्रामाण्यं** श्रुतिविरुद्धानां स्मृतीनाम् ( वार्तिकमते )। १।३।३।४ वर्णकं २.

**'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायः**। ( परिभाषेन्दु. ६२ )। 'अपरे तु शुक्रमन्थिनोः पात्रे' प्रयुनक्ति इति सत्याषाढसूत्रं (८।३।२३), तत्र अव्यवहितस्य अविहितस्य अतः नवेत्यो प्रश्नः 'अनन्तरस्य' इति न्यायात् इति ज्योत्स्ना। * नयतेर्विधानवन्निषेधेऽपि परिभाषा। नवेऽनवाद्न्यायापेक्षया अनन्तरस्येति न्यायः प्रबलः इति कैयटः। प्रत्यासत्तिन्यायकोऽयम्। लक्ष्यानुरोधाच्च व्यवस्था इत्यपि पक्षान्तरम्। तत्रतत्र क्वचित् स्वरितत्वनिर्देशसामर्थ्येन वा बाध्यतेऽयं न्यायः। यथा टिड्ढेति सूत्रेण ङाना व्यवहितस्यापि ङीपो विधिः। 'न षट्' इत्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः। इदं च 'शि सर्वनामस्थानं' इत्यादौ भाष्ये स्पष्टम्। **प. शेखरः.** * हन्तेः अत्पूर्वस्यैव नस्य णत्वं नान्यस्य। प्रघ्नन्ति। योगविभागसामर्थ्यात् 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' ( विधिः प्रतिषेधो वा समीपस्थस्यैव भवति न दूरस्थस्य इत्यर्थः ) इति न्यायमपि बाधित्वा एकाजुत्तरपदे इति णत्वमपि निवर्त्यते। **सिद्धान्तकौमुदी** हन्तेः इति सूत्रे.

**'अनन्तरेण संबन्धः स्यात् परस्याप्यनन्तरः। तदारूढः पुनः पश्चात् तदानन्तर्यमश्नुते॥'** ( वा. २।१।१६।४८ पृ. ४५९ ) इत्यनु**षङ्गाधिकरणन्यायेन** अङ्गान्तरव्यवधायकत्वाभावात्। ('ततः पुनस्तदारूढः' इति वार्तिके तृतीयचरणे पाठः) **सु.** पृ. १०६९.

* **अनन्यथासिद्धत्वं** अन्यथासिद्धत्रैविध्यराहित्यम्। गृहीतस्वतन्त्रान्वयव्यतिरेकाननुविधानावच्छेदकधर्मत्वं आद्यम्। अन्यनिरूपितपूर्ववर्तित्वग्रहहेतुककार्यपूर्ववर्तित्वग्रहविषयत्वं द्वितीयम्। क्लृप्तान्वयव्यतिरेकानुविधानसाहित्यं तृतीयम्। अत्र अक्लृप्तान्वयव्यतिरेकानु( काननु )विधायिनः इति विवक्षणीयम्। तेन न कारणान्तरस्य अन्यथासिद्धिः, ईश्वरज्ञानादिसंग्रहश्च। तस्य उपादानप्रत्यक्षतया स्वतन्त्रान्वयव्यतिरेकानुविधानात्। **मणि.** पृ. ४५.

**अनन्यलभ्यः शब्दार्थः इति क्रत्वधिकरणन्यायः॥** ( ३।४।४ ) **बाल.** पृ. १३.

* अनन्यलभ्यः शब्दार्थः। **विधि.** पृ. २२, **मणि.** पृ. ११४. * स एव हि शब्दस्यार्थो यः प्रकारान्तरेण

न लभ्यते 'अनन्यलभ्यः शब्दार्थः' इति **न्यायात्**। अत एव गङ्गापदस्य तीरमर्थः। लक्षणयैव तत्प्रतिपत्तिसंभवादित्युक्तं मीमांसान्यायप्रकाशे। **साहस्री.** ७१२. * नियमतः शक्तिग्रहापेक्षे शब्दे अस्य **न्यायस्य** अप्रवृत्तिः। अन्यथा पङ्कजादिपदे पद्मस्य लक्षणया प्रतीतिसंभवात् अवाच्यता स्यात्। **बाल.** पृ. ९४. * **अनन्यलभ्यो हि** शब्दार्थो भवति। **शा.** ३।४।८.

**अनन्यलभ्यः शास्त्रार्थः इति न्यायः** ॥ शास्त्रस्वरूपमुक्तं **स्कान्दे**— 'ऋग्यजुः सामाथर्वा च भारतं पाञ्चरात्रकम्। मूलरामायणं चैव शास्त्रमित्यभिधीयते। यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्। अतोऽन्यः शास्त्रविस्तारो नैव शास्त्रं कुवर्त्म तत् ॥' इति। तदनेनाऽनन्यलभ्यः शास्त्रार्थ इति न्यायेन भेदस्य प्राप्तत्वेन तत्र न तात्पर्यं, किंत्वद्वैते एव वेदवाक्यानां तात्पर्यमिति पूर्णप्रज्ञीये उक्तमिति। **साहस्री.** ७११.

**अनन्यलभ्यो वाच्यः, अन्यलभ्यो गम्यः इति न्यायस्य** सामान्यविषयत्वात् कर्ता अन्यलभ्योऽपि वाच्यः इति विशेषविषयेण आगमेन बाधोपपत्तिमाशङ्क्य सामान्यविषयस्यापि न्यायस्य, न्यायापेक्षत्वेन मन्थरात् पौरुषेयागमात् शीघ्रं प्रवृत्तिः। **सु.** पृ. १४१८.

**'अनन्योऽप्यन्यशब्देन तथैको बहुरूपवान्' इति न्यायः**। अनन्योऽपि सन् आत्मा यथा अन्यशब्देनोच्यते, तथा एकः सन् बहुरूपवान् इत्युच्यते इत्यर्थः। **न्यायामृताद्वैतसिद्धी भूमिका** पृ. ४.

**अनपायश्च कालस्य लक्षणं हि पुरोडाशौ इति न्यायः** ( १०।८।१९।६९ )। अनपायश्च इति गुणसूत्रेण 'उपांशुयाजमन्तरा यजति' इत्यन्तरालोपलक्षणपुरोडाशद्वयकार्यान्वयाभावात् 'नासोमयाजिनो ब्राह्मणस्याग्नीषोमीयः पुरोडाशो विद्यते' इति असोमयाजिनो ब्राह्मणस्य एकपुरोडाशायामपि पौर्णमास्यां उपांशुयाजोऽस्ति इति व्यवस्थापयिष्यते। **कु.** ३।१।२६. * अनपायश्च इति न्यायेन एकपुरोडाशायां पुरोडाशद्वयोपलक्षितान्तरालकालवत् उक्थ्येषु उत्कृष्टेष्वपि उक्थ्योपलक्षितकालस्यानपायात् नात्र षोडशिनः अनुत्कर्षपक्षे कालबाधः इति शङ्का। **सोम.** ५।१।१८. * अनपायश्च कालस्य इति न्यायेन एकपुरोडाशायां पौर्णमास्यामिव अमावास्यायामपि उपांशुयाजोपपत्तिः पौर्णमासीविध्यभावे पौर्णमासीशब्देन सूचिता। **सु.** पृ. ७५७, * **अनपायो हि** इति न्यायेन कालेन होमलक्षणायां एककाललक्षितहोमस्य कालान्तरेऽपि अनपायात् अग्नीषोमलक्षितोपांशुयाजे विधीयमानस्य पौर्णमासीकालस्य देवतान्तरयुक्तेऽपि प्राप्तिः। पृ. ७८३.

* **अनपेक्षितविधिः** अपेक्षितविधिना बाध्यते। यथा सोमवमनेष्टिः वैदिकसोमस्य वमने, न तु लौकिकस्य इति। **बाल.** पृ. १४४.

* **अनभिहितत्वं** अभिहितत्वाभावः। तच्च अभिहितत्वं न तिङादिवाच्यत्वं तत्प्रतिपाद्यत्वमात्रं वा। तथात्वे 'पाचकेन गम्यते' 'चैत्रेण भुक्त्वा गम्यते' इत्यादौ तृतीयाद्यनापत्तेः कृत्प्रत्ययेन कर्तुरुपात्तत्वात् क्त्वाप्रत्ययेन समानकर्तृकत्वोक्त्या कर्तुरुपादानाच्च। नापि अभिहितसंख्याकत्वं, 'चैत्रेण पक्वः' इति वत् 'चैत्रेण पाचकः' इति प्रयोगापत्तेः, सूत्रे लक्षणाऽऽपत्तेश्च, 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतं' इति निपातेन 'युज्यते' इति क्रियाभिधायकेन संख्यानभिधानात् वृक्षमिति द्वितीयाऽऽपत्तेश्च। अपि तु यद्वृत्तिकारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वम्। अस्ति चेदं 'चैत्रः पचति, ओदनः पच्यते' इत्यादौ चैत्रादिवृत्तिकर्तृत्वकर्मत्वादेः निरुक्तपदेन प्रतिपादनात्। 'पाचकेन गम्यते' इत्यादौ च कृदुपात्तस्य पुरुषस्य गमनक्रियैव अन्वयिनी, न तु पाकक्रिया, तस्या एव तस्मिन्नन्वयात्। तद्वृत्ति च कारकत्वं न कर्माख्यातेन अभिहितं, इति युक्तैव तत्र तृतीया। एवं चैत्रेण इत्यस्य भुजिक्रियायामनन्वयात् गमनक्रियायामेवान्वयाङ्गीकारात् तृतीयोपपत्तिः। 'मयैव पक्त्वा मयैव भुज्यते' इत्यत्र तु पक्त्वा इत्यनेन कर्तुरुपात्तत्वात् न कर्तरि 'मया' इत्यादितृतीया, अपि तु 'आत्मानमात्मना वेत्सि' 'अनेनैव जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिवत् करणे, इति न का चिदनुपपत्तिः। 'पक्त्वा ओदनो भुज्यते' इत्यादौ तु पचधातोः कर्माकाङ्क्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम्। नहि प्रधानक्रियाया-

युक्तस्य कारकस्य गुणभूतक्रियायामपि उक्तिः इति नियमे प्रमाणमस्ति, येन अध्याहारं विनाऽपि वाक्यं समर्थ्येत । तथात्वे ' ओदनं भुक्त्वा शान्त्रं गच्छते ' ' श्रुत्वाऽप्यर्थं नानुमतस्तेन नोऽर्थः कुबुद्धिना ' इत्यादिद्वितीयाप्रयोगानुपपत्तेः । यदि तु उक्तप्रयोगेषु अनाश्वासः, 'मयैव पक्त्वा मयैव भुज्यते ' इत्यत्र च कर्तरि एव आद्या तृतीया, ' पक्त्वा ओदनो भुज्यते ' इत्यत्र नाध्याहाराङ्गीकरणं, तथा उक्तनियममङ्गीकृत्य क्त्वाप्रत्ययस्यापि च भावे एव शक्तिमङ्गीकृत्य तदर्थस्य भावस्य पूर्वकालत्वसमानकर्तृकत्वसंसर्गेण उत्तरक्रियायां अन्वयोऽङ्गीक्रियते, तदा अस्तु यद्–वृत्तिकारकत्वं स्वान्वयिप्रधानक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वं अभिहितत्वं, तदभावः अनभिहितत्वं, तत्र तृतीया इति संक्षेपः ।

अत्र वदन्ति । एवं सति 'लः' इति षष्ठ्यन्तं तिबाद्यन्वितं वाच्यं, प्रथमान्तस्य अनन्वयात् । अतश्च लस्य इतिसूत्रवैयर्थ्यापत्तिः, लादेशभूतशानजादेः कर्त्रादिवाचित्वानुपपत्तिश्च । न च ' कर्तरि कृत् ' इत्यनेन तद्वाचित्वं, तथात्वेऽपि कर्मणि भावे चाकर्मकेभ्यः तत्प्राप्तेः सूत्रान्तराविषयत्वात् । अत एवं परिहर्तव्यं, लः इति प्रथमान्तं कर्त्रादौ एवान्वेति । न तु एतावता तस्य वाच्यत्वम् । लाघवेन वृत्त्या तद्गम्यत्वस्यैव शास्त्रतात्पर्यविषयत्वेन शक्त्यंशे तद्व्यापाराकल्पनात् । सा तु प्राधान्यं विनैव सिध्यति इति सिद्धमाख्याते कर्त्रादेरवाच्यत्वं, शानजादौ च वाच्यत्वं इति । 'लस्य' इति सूत्रस्य च तिबादीनां लादेशत्वविधायकस्य न वैयर्थ्यम् । **भाट्ट.** ३।४।८ पृ. ३२२–२४. *** अनभिहितशब्दः एव** ( अनभिहिते इति पाणिनिसूत्रे २।३।१ ) लक्षणया विशेषात्मना अनवगतत्वे वर्तते । पचतिपच्यतेशब्दाभ्यां च संख्यासंबन्धादरात् विशेषरूपेण कर्तृकर्मणी गम्येते । तस्मात् तत्तद्विभक्तिर्नोत्पत्स्यते । कारकान्तराणि न कदा चिदेवं विशेषरूपेण प्रतीयन्ते इति विभक्तीरुत्पादयन्ति । कारकत्वाविशेषेऽपि च यथा कर्तृकर्मणोरेव विशेषप्रतीतिः संख्यासंबन्धश्च भवतीति तथोक्तम् । यत्तु भावोत्पन्नलकारपक्षेण व्यभिचारः ' नेह पच्यते, नेह भुज्यते ' इत्यादिषु पचिमात्रविवक्षायां कर्तृकर्मणोरश्रवणात् धात्वर्थमात्रगतेः गृह्यते तत्रश्चागमकत्विति । तत्रोच्यते ' तुल्योऽभिधानपक्षेऽपि स दोषः शब्दगोचरः । वाचकस्याप्यनैकान्त्यो गमकस्येव नेष्यते ॥ ' यथैवात्र क्रियया अर्थैः [illegible] अन्यत्रागमकत्वमापद्यते तथैव शब्दस्यापि कर्मानभिधानात्, ' ओदनः पच्यते ' इत्यत्रापि अनभिधानत्वप्रसङ्गः । अथ व्यभिचारयन्तौ केन चिदनुगृहीतः सन् अभिधास्यति, तथा ममापि तदर्थौ गमयिष्यतीति अविशेषः । तच्च सर्वत्र सकर्मकाकर्मकश्यन्विकरणेतरविकरणोपपदविशेषज्ञानात् अभिधातृत्ववत् गमकत्वं विविच्यते इत्यनुपालम्भः । इतरथा तेशब्दस्य भावकर्तृकर्मसु त्रिष्वपि दर्शनं यतेशब्दस्य श्यन्विकरणात्मनेपदीय–यक्–यङ्–क्यङ्प्रत्ययेषु च अविशेषः इति अत्यन्तसंशयहेतुत्वमेव अभिधानपक्षेऽपि स्यात् । तस्मात् तद्भूताधिकरणोक्तेनैव अन्वयव्यतिरेकभङ्गपरिहारेण पक्षद्वयमपि समर्थनीयम् । ततश्च विशेषहेतुभिः शक्यो गमकत्वपक्षो निर्णेतुम् । **वा.** ३।४।१३ पृ. ९३८–९३९.

**‘ अनभ्यासो वा प्रयोगवचनैकत्वात् ’ इति न्यायः** ( ११।१।७।३५ ) । प्रयाजाद्यङ्गानां एकस्मिन् प्रयोगे अभ्यासो न कर्तव्यः, प्रयोगवचनैकत्वात् अङ्गानां प्रधानानां च प्रयोगवचनस्य एकत्वात् इति न्यायाक्षरार्थः । ' अनभ्यासस्तु अङ्गानां यथोक्तेन न्यायेन ' । **भा.** ११।१।७।३७.

*** अनर्थः** । कोऽनर्थः ? यः प्रत्यवायाय श्येनः, वज्रः, इषुः इत्येवमादिः । कथं पुनरसौ अनर्थः ? हिंसा हि सा, हिंसा च प्रतिषिद्धेति । कथं पुनरनर्थः कर्तव्यतयोपदिश्यते ? उच्यते, नैव श्येनादयः कर्तव्यतया विज्ञायन्ते । यो हि हिंसितुमिच्छेत् तस्यायमभ्युपायः इति हि तेषामुपदेशः । 'श्येनेनाभिचरन् यजेत' इति हि समामनन्ति, न अभिचरितव्यमिति । **भा** ११।१।२।२ पृ. १८.

**अनर्थकं त्वनित्यं स्यात्** । ६।८।९।२९ ॥ ज्योतिष्टोमे ' मध्यंदिने अपररात्रे च व्रतं व्रतयति ' इति श्रूयते । विहितं पयआदि भक्ष्यं भक्षयति इति व्रतं व्रतयति इत्यस्यार्थः । यदि तु मन्येत न सम्यक्

जरिष्यतीति, तदा तद् व्रतं क्रियमाणमनर्थकं स्यात्। अजीर्णेन यजमानो रुग्णः स्यात्। तस्मात् तदा अनर्थकं व्रतं अनित्यं स्यात्। न भक्षयेत्। जरणक्षमतायां तु भक्षयेत्। पूर्वाधिकरणे भक्षादेर्नित्यत्वमुक्तं, अत्र अनित्यत्वमुच्यते इति पूर्ववैलक्षण्यार्थः तुशब्दः। **के.**

* **अनर्थकश्चोपदेशः** स्यादसंबन्धात् फलवता, नह्युपस्थानं फलवत्। ३।२।८।२३। आग्नीध्रसदोहविर्धानानां क्रत्वैकान्तिकत्वात् तत्स्वरूपान्वयमात्रविधानेऽपि अनुनिष्पादितत्वेन क्रत्वन्वयासिद्धेः वाक्यभेदपरिहारशङ्कानिरासार्थं सूत्रम्। क्रत्वैकान्तिकत्वेऽपि आग्नीध्रादीनां उपस्थानस्य तत्स्वरूपान्वयिधर्मत्वेन तद्द्वारकक्रत्वन्वयायोगात् आग्नीध्रादिशब्दानां च संस्कारनिमित्तत्वाभावेन आहवनीयादिवत् स्वरूपनिष्पत्त्यैव संस्कारानपेक्षणात् नैष्फल्यापत्तेः उपस्थानस्वरूपमन्त्रोपदेशः सन्मात्रस्य फलवदसंबन्धापत्तेः अनर्थकः स्यात् इति फलवता इत्यन्तस्य सूत्रावयवस्यार्थः। नहि इत्यादिसूत्रावयवः आग्नीध्रादिद्वारोपस्थानस्य क्रत्वन्वयायोगेऽपि प्रकरणात् फलवत्त्वं भविष्यति इत्याशङ्कानिरासार्थः। प्रकरणात् क्रत्वन्वयः प्रतीयमानोऽपि अविधीयमानः अननुष्ठानान्न निष्पद्यते इति सामान्यान्वयस्यापि विधेयत्वात्, गौरवे सति अपरिहार्यत्वापत्तेः क्रत्वन्वयशून्यं उपस्थानं न फलवत् इति सूत्रावयवेन शङ्कानिरासः। **सु.** पृ. ११३१.

* **अनवगतमपेक्षितं च** विध्युद्देशात् गृह्यते। **पराक्रम.** पृ. ३।२.

**अनवयवे शास्त्रार्थसंप्रत्ययः इति न्यायः।** सिद्धं तु धर्मोपदेशनेऽनवयविविज्ञानात्, यथा लौकिकवैदिकेष्विति। सिद्धमेतत्। कथम्? धर्मोपदेशनमिदं शास्त्रम्। धर्मोपदेशनेऽस्मिन् शास्त्रे अनवयवेन शास्त्रार्थः संप्रतीयते। यथा लौकिकवैदिकेषु च कृतान्तेषु। लोके तावत्, ब्राह्मणो न हन्तव्यः, सुरा न पेयेति, ब्राह्मणमात्रं न हन्यते, सुरामात्रं न पीयते। यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, एकं च ब्राह्मणमहत्वा एकां सुरामपीत्वा अन्यत्र कामचारः स्यात्। तथा 'पूर्ववया ब्राह्मणः प्रत्युत्थेयः' इति पूर्ववयोमात्रं प्रत्युत्थीयते यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, एकं पूर्ववयसं प्रत्युत्थायाऽन्यत्र कामचारः स्यात्। तथा वेदे खल्वपि 'वसन्ते ब्राह्मणोऽग्निष्टोमादिभिः क्रतुभिर्यजेत' इति अग्न्याधाननिमित्तं वसन्तेवसन्ते इज्यते। यदि चावयवेन शास्त्रार्थसंप्रत्ययः स्यात्, सकृदिष्ट्वा पुनरिज्यायां न प्रवर्तेत, एवं प्रकृतेऽपि। **साहस्री.** ६३१.

**अनवस्थान्यायः।** उपपाद्योपपादकयोरविश्रान्तिरिति मीमांसकाः। अनवस्थितपरंपरोपाधिना अनिष्टप्रसङ्गरूप इत्यन्ये। 'धातोः' (३।१।९१) इति सूत्रमहाभाष्ये तु 'आ कुतोऽयं धात्वधिकारः। किं प्राग् लादेशादाहो स्विदातृतीयाध्यायपरिसमाप्तेः' इति बहुधा संमीमांस्य 'ननु चोक्तमलुनन् अपुनन् इत्यत्रापि प्राप्नोति। नैष दोषः। लोपे कृते न भविष्यति। नात्र लोपः प्राप्नोति। किं कारणम्? ईत्वेन बाध्यते। नात्र ईत्वं प्राप्नोति। किं कारणम्? अन्तिभावेन बाध्यते। नात्रान्तिभावः प्राप्नोति। किं कारणम्? जुस्भावेन बाध्यते। नात्र जुस्भावः प्राप्नोति। किं कारणम्? लोपेन बाध्यते। लोप ईत्वेन। ईत्वमन्तिभावेन। अन्तिभावो जुस्भावेन। जुस्भावो लोपेनेति चक्रकमनवस्था च प्रसज्येत' इत्याद्युक्तमित्यन्यत्र विस्तरः। किंच पञ्चदशीग्रन्थस्य तत्त्वविवेकाख्यप्रथमविवेके– 'विकल्पो निर्विकल्पस्य सविकल्पस्य वा भवेत्। आद्ये व्याहतिरन्यत्राऽनवस्थाऽऽत्माश्रयादयः।' इत्यत्र आत्माश्रयाऽन्योन्याश्रयचक्रकाऽनवस्थाश्चत्वार एवोक्ताः। **साहस्री.** ६१२.

* **अनवस्था** यथा आरम्भणीयायां आरम्भणीया कर्तव्या इति पक्षे। ननु तस्या अप्यर्थे अन्या आरम्भणीया, तस्या अप्यर्थे अन्या आरम्भणीया, तस्या अप्यर्थे अन्या इत्येवं आरम्भणीया न व्यवतिष्ठेत। अनवस्थासु सर्वास्वेव सामर्थ्येन व्यवस्था भविष्यति। **भा.** १०।१।४।६.

* सर्वानवस्थानां सामर्थ्येन व्यवस्थानात्। यावत्यो हि अग्निकालं पौर्णमास्यमावास्यादिकं नातिक्रामन्ति तावत्यः करिष्यन्ते। **वा.** ३।६।६।१६.

* '**अनवानं यजति**' इति याज्यावषट्कारयोर्मध्ये श्वासनिषेधेन तयोरेककर्तृकत्वमवगम्यते। **वि.** ३।५।१८.

* **अनशनरूपं तपः** याजमानं ज्योतिष्टोमे । ' सर्वे ऋत्विज उपवसन्ति ' इत्यादिवचनात्तु क चित् ऋत्विजामपि । **भा.** ३।८।३।९–११.

**अनागतावेक्षणन्यायः** । यथा अनागतं न आगतं भविष्यत् कार्यं आदावेव अवेक्ष्यते विचार्यते तद्वत् । **के.** * तेन शब्दोत्कर्षसहितेन तच्छेषाणामपि निष्कृष्य प्रयोगः इति भाष्यावयवानुषङ्गेण परिहारार्थं ' तेन ' इत्यादि भाष्यं ( पृ. ८५३ पं. २८ ) ' क्लृप्तशेषैः ' ( क्लृप्तप्रयोगशेषैः **वा.** पृ. ८५४ पं. १० ) इति वार्तिकेन अनागतावेक्षण**न्यायेन** अर्थतो व्याख्यातम् । **सु.** पृ. १२६३. * नियमविधिप्रकारश्च सर्वोऽपि अनागतावेक्षणन्यायेन अत्र (४।२।९) कौस्तुभे च मन्त्राधिकरणे (१।२।४) एव प्रदर्शितः । **भाट्ट.** ४।२।९. * प्रसिद्धसंबन्धो हि शक्नोति लक्षयितुं इति अत्रत्यभाष्योक्ता उपपत्तिः अनागतावेक्षणन्यायेन 'विशेषणं हि प्रसिद्धं भवति, न च विधीयमानावस्थः क्रयः प्रसिद्धः ' इति अरुणाधिकरणवार्तिकेन उक्ता । **सु.** पृ. १०२७. * प्रामाण्यस्य स्वतस्त्वं अयथार्थताऽभावश्चेति उभयं ' अनपेक्षत्वात् ' ( १।१।५ ) इति सूत्रावयवोक्तत्वात् तद्-व्याख्यानावसरे वाच्यमपि अनागतावेक्षणेन वक्ष्यमाणतयैव चोदनासूत्रे एव वार्तिककृता उक्तम् । **बाल.** पृ.६. * यक्ष्यमाणः इति अद्यतनी विभक्तिः इत्ययमर्थः वक्ष्यमाणेन अनागतावेक्षणेन अत्रापि वाक्ये तुल्यः इति मत्वा भाष्यकारेण दर्शितः । **रत्न.** ५।४।३।५–९. * यद्यपि आनुमानिकवचनप्रामाण्यं विशेषातिदेशनिरूपणं विना न पर्यवस्यति इति तदनन्तरमेव बलाबलचिन्ता युक्ता, तथापि अनागतावेक्षणन्यायेन भाविपर्यवसानमाश्रित्य इह ( ७।४।२।२ ) क्रियते । **सोम.** ७।४।२. * यागविधिप्रकारश्च अस्माभिः अनागतावेक्षणन्यायेन आग्नेयाधिकरणे ( २।३।१४ ) एव प्रदर्शितः । **कौ.** २।३।५।१४. * यावतोऽश्वान् इत्यादिपूर्वपदानुकूल्यस्य प्रतिग्रहीतृविषयत्वेऽपि उपपत्तेः दातृविषयेष्टिविधिसामर्थ्ययोगशङ्कानिरासार्थं 'इदं श्रूयते' इत्यादि ( भा. पृ. ९६५ पं. ३) 'निर्वपेत्' इत्यन्तं भाष्यं ( पृ. ९६६ पं. १ ) ' अत इह यद्यपि ' इत्यादिना ( वा. पृ. ९६३ पं. २२ ) ' दातुरिष्टिर्विहिंस्यते ' ( दातुरिति विहन्यते ) इत्यन्तेन वार्तिकेन ( पृ. ९३४ पं. १० ) अनागतावेक्षणेन मंदेहोत्साहनवेलायां अवयवशो व्याख्यातम् । **सु.** पृ. १४९९. * सन्ति तावत् अनाम्नातगुणे । नन्वेतत् अपूर्वाधिकरणे एव अनागतावेक्षणेन प्रतिपादितम् । **शा.** ३।१।४. * मतनद्विर्वचनादे वचनागमस्यैव नीतिमात्रवाच्यत्वस्य ( मानशब्देन ) इह लक्षणमनर्थनाद अनागतावेक्षणन्यायेन भाष्यकृता उक्तत्वात् अपौनरुक्त्यम् । **सु.** पृ. ६३८.

* **अनाचाराः** । **अद्यत्वेऽपि** अहिच्छत्रमथुरानिवासिब्राह्मणीनां सुरापानम् । केसर्यश्वाश्वतरखरोष्ट्रोभयतोदद्दानप्रतिग्रहविक्रयव्यवहारभार्यापत्यमित्रसहभोजनादि उदीच्यानाम् । मातुलदुहितृविवाहासन्दीस्थभोजनादीनि दाक्षिणात्यानाम् । मित्रस्वजनोच्छिष्टस्पृष्टभोजनं सर्ववर्णपरस्परस्पृष्टताम्बूलादनतद्वसानानाचमननिर्णेजकधौतगर्दभारूढवस्त्रपरिधानब्रह्महत्यातिरिक्तमहापातककार्यपरिहरणादीनि उभयेषाम् । अतिस्थूलानि प्रतिपुरुषजातिकुलावस्थितसूक्ष्मस्वधर्मव्यतिक्रमणानि तु अनन्तभेदानि सर्वत्र विगानहेतुदर्शनानि च प्रायेणैव संभवन्ति इति नैवंजातीयकमिश्रसदाचारधर्मत्वाध्यवसानसंभवः । **वा.** १।३।३।७ पृ. २०४. यत्तु अद्यतनानां आहिच्छत्रकमाथुरब्राह्मणीनां सुरापानादि, दाक्षिणात्यानां मातुलदुहितृविवाहादि स्मृतिविरुद्धमुपन्यस्तम् । तत्र **के चित्** एवमाहुः । स्मृत्याचारयोः इतरेतरनिरपेक्षवेदमूलत्वेन तुल्यबलत्वात् विहितप्रतिषिद्धविकल्पानुष्ठानाश्रयणात् अदोष इति । तत्तु वक्ष्यमाणबलाबलविभागात् अयुक्तम् । **अन्ये तु** एवमाहुः ' **सर्वेषामेवमादीनां प्रतिदेशं व्यवस्थया । आपस्तम्बेन संहृत्य दुष्टादुष्टत्वमाश्रितम् ॥ येषां परंपराप्राप्ताः पूर्वजैरप्यनुष्ठिताः । त एव तैर्न दुष्येयुराचारैर्नेतरे जनाः ॥** ' तथा मनुनाऽप्युक्तं 'येनास्य पितरो याता येन याताः पितामहाः । तेन यायात् सतां मार्गं तेन गच्छन्न दुष्यति ॥ ' येषां तु यः पित्रादिभिरेव अर्थो नाचरितः स्मृत्यन्तरप्रतिषिद्धश्च, ते तं परिहरन्त्येव । अपरिहरन्तो वा स्वजनादिभिः परिह्रियन्ते । ननु **गौतमेन** आम्नायविरुद्धानां आचा-

राणां अप्रामाण्यमुक्तम् (गौध. १।३-४)। आह-'**यदि वेदविरोधः स्यादिष्येतैवाप्रमाणता। स्मृतिराम्नायशब्देन न तु वेदवदुच्यते॥' न त्वेतदपि** युक्तं, स्मृतिग्रन्थेऽपि आम्नायशब्दप्रयोगात्। स्मार्तधर्माधिकारे हि शङ्खलिखिताभ्यां उक्तम् 'आम्नायः स्मृतिधारकः' इति। ग्रन्थकारगतायाः स्मृतेस्तत्कृतग्रन्थाम्नायः स्मृतिग्रन्थाध्यायिनां स्मृतिधारणार्थत्वेनोक्तः। ततश्च मन्वादिवाक्यप्रतिषिद्धाचाराणां प्रामाण्यमशक्यमभ्युपगन्तुम्। **आपस्तम्बवचनं तु** (आध. २।१३।७-९) **बौधायनेन** स्मृतिविरुद्धदुष्टाचारोदाहरणान्येव प्रयच्छता निराकृतम्। स्पष्टकामादिहेत्वन्तरदर्शनात् न विरुद्धाचाराणामापस्तम्बवचनस्य वा श्रुतिमूलत्वोपपत्तिः। आह, केन वा ब्राह्मणीनां सुरापानं प्रतिषिद्धम्। उच्यते। 'तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिबेत्' इत्यनेन। **वा.** पृ. २१०-११. 'पञ्चधा विप्रतिपत्तिर्दक्षिणतः-- अनुपनीतेन भार्यया च सह भोजनं, पर्युषितभोजनं, उच्छिष्टभोजनं, पितृष्वसृमातुलदुहितृपरिणयनमिति। तथोत्तरतः पञ्चधा-ऊर्णाविक्रयः, सीधुपानं, उभयतोदद्भिर्व्यवहारः, आयुधीयकं, समुद्रयानमिति' (बौध. १।२।१-५) इति बौधायनेन स्मृतिविरुद्धदुष्टाचारोदाहरणानि दत्वा 'इतर इतरस्मिन् कुर्वन् दुष्यति नेतरस्मिन्' इति देशप्रामाण्यव्यवस्थया प्रामाण्यं उक्त्वा 'मिथ्यैतदिति गौतमः, उभयं त्वेतन्नाद्रियते, शिष्टस्मृतिविरोधात्' इति गौतममतस्य निराकृतत्वात् आपस्तम्बस्यापि मन्वादिवद्धर्मशास्त्रप्रवक्तृतया याज्ञवल्क्येन स्मरणात् तद्वचनस्य मिथ्यात्वायोगेऽपि गर्हानिराकरणमात्रपरतया तत् व्याख्येयं इत्याशयः। मनुवचनं तु 'तेन यायात् सतां मार्गं' इति विशेषणात् अविरुद्धकुलधर्मविषयत्वेन अविरुद्धम्। **सु.** पृ. १९७. *अनाचाराः = दुहितृगमनम्। अगम्यागमनम्। परदाराभियोगः। जलप्रवेशादिना आत्मत्यागः। चाण्डालयाजनम्। नैष्ठिकब्रह्मचारिणा अपत्योत्पादनम्। आश्रमधर्मव्यतिक्रमेणावस्थानम्। अपत्नीकस्य ऋतुप्रयोगः। अनधिकृतक्रिया। अन्धस्य धनवत्त्वम्। कनिष्ठार्जितधनोपजीवनं ज्येष्ठेन। कनीयोऽर्जितभ्रातृजायापरिणयनम्। आचार्यब्राह्मणवधार्थमनृतभाषणम्। मातुलदुहितृपरिणयनम्। सुरापानम्। केसरिणः, अश्वस्य, अश्वतरस्य, खरस्य, उष्ट्रस्य, उभयतोदतश्च दानं प्रतिग्रहो विक्रयश्च। भार्यापत्यमित्रैः सहभोजनं (एकपात्रे)। आसन्दीस्थभोजनम्। मित्रस्वजनानामुच्छिष्टभोजनम्। मित्रस्वजनानां स्पृष्टभोजनम्। सर्ववर्णपरस्परस्पृष्टताम्बूलादनम्। ताम्बूलभक्षणोत्तरमनाचमनम्। निर्णेजकधौतगर्दभारूढवस्त्रपरिधानम्। महापातककारिणः (ब्रह्महत्यातिरिक्तस्य) अपरिहरणं इत्यादयः। **वा.** १।३।३।७ पृ. २०३-२०४.

⌛ '**अनादाविह संसारे दुर्वारे मकरध्वजे। कुले च कामिनीमूले का जातिपरिकल्पना॥' इति न्यायः।** (संसारस्तावदनादिः अतिदीर्घकालिकः। मकरध्वजः कामः स्त्रीसमागमेच्छा दुर्वारा दुर्जया। कुलपरंपरा च सर्वथा कामिनीमूलैव। तेन संकर एव संभाव्यते। शुद्धजातिविशेषकल्पना तु व्यर्था इत्यर्थः)। **सनातन. प्रकाशः** पृ. ३५५.

* '**अनादिनिधनं ब्रह्म शब्दतत्त्वं** व्यवस्थितम्। विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः॥' (हरिः १।१. व्यवस्थितं इत्यत्र यदक्षरं इति मूले पाठः) इतिवदद्भिः शब्दब्रह्मवादिभिः शब्दव्यतिरिक्तार्थनिरासात्। **सु.** पृ. १०११.

* '**अनादिनिधना वेदवागुत्सृष्टा** स्वयंभुवा' इत्यादिस्मृतयः (वेदस्य) नित्यत्वे एवोपपद्यन्ते। **भाट्ट.** १।१।७. पृ. १४.

⌛ **अनादिन्यायः।** सत्यपि च स्त्र्यपराधे यदि मातुरेव क्षेत्रिणो वा पुत्रः स्यात्, ततस्तयोः प्रसिद्धजातित्वात् नैव दुर्ज्ञानता भवेत्, तयोरप्येवं, एवं तत्पूर्वजयोरपि इति अनादिन्यायेन जातिरवधार्यैतैव। **वा.** १।२।१।१३.

* **अनादेशे** आज्यं हविः। **संकर्ष.** ३।२।२०.

⌛ **अनादेशे प्रकृतिः प्रत्येतव्या इति न्यायात्** चित्रेष्टौ अनुक्तानि हवींषि सौम्य-सरस्वती-सिनीवालीवर्जे सर्वे पुरोडाशाः। **सत्याषाढश्रौतसूत्रं.** चन्द्रिका. २२।५।२५.

⌛ **अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः स्यात्॥ २।१।९।३४॥**

ऊहप्रवरनामधेयेषु संशयः । मन्त्रब्राह्मणात्मके वेदे निरूपिते ऊहप्रवरनामधेयान्यपि मन्त्रान्तर्गतत्वात् प्रसङ्गेन मन्त्रा नेति विचार्यते । अत्रायं पूर्वपक्षिणोऽभिसंधिः । विकृतौ अतिदिष्टे तु प्रकृतिसमवेतार्थाभिधायिपदोद्धारेण विकृतौ समवेतार्थाभिधायि पदमूह्यते । एवं 'प्रवरे यजमानादीन् कीर्तयेत्' इति वचनेन यजमानस्य प्रवरकीर्तनं नामधेयकीर्तनं च मन्त्रविहितमस्ति । तत्रोहितपदस्य प्रवरपदस्य नामधेयपदस्य च मन्त्रमध्यपतनात् तत्सहितस्यैव च मन्त्रस्य विहितार्थस्मारकत्वात् तेषामपि मन्त्रत्वमेवेति । **एवं प्राप्ते अभिधीयते** । भवेदेवं यदि मन्त्रमध्यपातो विहितार्थस्मारकत्वं वा मन्त्रलक्षणं ब्रूमः, किन्तु अध्ययनकाले अभियुक्तमन्त्रपदविषयत्वम् । न चोहप्रवरनामधेयेषु मन्त्रपदप्रयोगविषयत्वमस्ति । तदुक्तम्— 'स्वाध्याये पठ्यमानेषु येषु' इति ।

इदानीं भाष्यकारानभिहितमपि प्रकृतोपयोगितया विचारान्तरमारभ्यते । किमूहप्रवरनामधेयानां निक्षेपे सर्वस्यैवामन्त्रत्वं, उत निक्षिप्तस्यैवेति । अत्रायं पूर्वपक्षिणोऽभिसन्धिः । यथा अधीतस्वरवर्णक्रमप्रत्यभिज्ञाने मन्त्रत्वप्रत्यभिज्ञानं भवति, तदन्यत्वे तु मन्त्रत्वप्रत्यभिज्ञानाभावादमन्त्रत्वमेवेति । तदुक्तं '**स्वरवर्णानुपूर्व्यादिविशिष्टे हि प्रयुज्यते । मन्त्रशब्दस्ततोऽन्यत्वे न तस्यार्थः प्रतीयते ॥**' इति ( वा. पृ. ४३७ ) । तस्मादेकवर्णापायेऽपि अमन्त्रत्वमेवेति । **एवं प्राप्ते अभिधीयते** । भवेदेवं यद्यवयविनः समूहस्य वा एकदेशापायेऽपि प्रत्यभिज्ञायमानं ताद्रूप्यं विहन्येत । नहि गोर्गङ्गुनि जाते विषाणे वा भग्ने गोत्वप्रत्यभिज्ञाऽसिद्धिः । वने वा कतिपयवृक्षोपचयापचयाभ्यां प्रत्यभिज्ञासिद्धेः समूहे प्रत्ययो भवति । तद्वदिहापि एकावयवाभावेऽपि पदान्तरप्रक्षेपेऽपि प्रत्यक्षेण चाध्ययनकालावगतमन्त्ररूपप्रत्यभिज्ञानात् प्रक्षिप्तपदमात्रस्यैवामन्त्रत्वं, न तु सर्वस्यैवेति । तदुक्तं '**आकृतीनामभिव्यक्तिर्या कथं चिन्निरूपिता । नासाववयवाधिक्यविनाशेषु विनश्यति ॥**' इति ( वा. पृ. ४३८ ) । अत्र च पदत्ववाक्यत्वयोरनिष्टत्वादाकृतिग्रहणं गोत्वदृष्टान्तार्थमिति । **न च** 'न गिरागिरेति ब्रूयादैरं कृत्वोद्गेयम्' इत्यत्रापि गिरापदोद्धारेण इरापदस्यामन्त्रत्वप्रसङ्ग इति वाच्यम् । अध्ययनकाले ऊहस्योच्चारणाभावात्, यत् 'प्रकृतौ निरूपितत्वं मन्त्रः, विकृतौ निरूपितत्वात्' इति, तेन वेदप्रतिपादितत्वेन भवतु मन्त्रत्वम् । सूर्यादिपदानां तु न्यायमूलत्वमिति वैलक्षण्यम् । तदुक्तं '**यत्र वैदिकमन्यत्वं तत्र मन्त्रत्वमिष्यते । न्यायेन कल्प्यमाने तु न शक्यं तन्निरूपणम् ॥**' इति ( वा. पृ. ४३८ ) । **ननु** सर्वशब्दावगम्या चोदना इति न्यायादूहादिकमपि न्यायगम्यश्रुतार्थापत्तिकल्पितवेदगम्यत्वादिरापदतुल्यत्वेनेति । **मैवम्** । नियतस्वरक्रमोच्चारितमेव हि वाक्यं वेदः । तच्चाध्ययनाम्नातमेव परं तथा भवति । तेन यत् किं चित् श्रुतार्थापत्त्या वेदे कल्प्यते, तत् सर्वं वेदानुमतत्वाद्वेद इत्युच्यते । तेनोहादीनां वेदाप्रतिपादितत्वात् नैव इरापदतुल्यत्वम् । नन्वेवमपि 'प्रवरनामधेयानि कीर्तयेत्' इति प्रत्यक्षवेदोपदेशात् प्रवरनामधेययोर्मन्त्रत्वप्रसङ्गः, न चैतत् । इरापदस्येव वेदे प्रवरनामधेययोर्मन्त्रत्वप्रयोज्यविशेषरूपेणाम्नानाभावात् । अत्र हि प्रवरशब्देन असितदेवलशाण्डिल्यादिप्रवराभिधायिपदकीर्तनं, नामधेयशब्देन च यजमानाभिधायिविष्णुशर्मादिनामकीर्तनमभिमतम् । तेषां च वेदे अनाम्नातत्वान्न मन्त्रत्वमिति । एवं तर्हि यत्र मन्त्रे 'असावेष ते पिण्डः, ये चात्र त्वामनु याश्च त्वामनु तस्मै ते स्वधा' इति पठ्यते, तत्रापि सर्वनामस्थाने पितुर्नाम निक्षिप्यते, तस्य स्वरूपाम्नानाभावादमन्त्रत्वप्रसङ्गः । नैतत् । आम्नानसमर्पितस्य हि मन्त्रत्वम् । तद्यदि सर्वनाम्नां तत्स्थानशब्दान्तरसमर्पकत्वं तदा तेषां मन्त्रत्वम् । अथाम्नातस्य सर्वनाम्नस्तेषां प्रयोगे अप्रामाण्यं, ततो न मन्त्रत्वम् । तत्र तावत् सर्वनामपदं 'प्रवरनामधेयानि कीर्तयेत्' इतिवत् प्रमाणम् । किंतु पित्रादिविशेषनाम्नां आनन्त्यादाम्नातुमशक्यत्वात् पित्रादिविशेषार्थप्रतिपादनार्थम् । न चास्य स्वतस्तत्प्रतिपादनसामर्थ्यमस्तीति स्वयं प्रयोगानर्हं सत् विशेषशब्दानेव प्रयोगार्हानुपलक्षयति । अतः सर्वनामाम्नानमविवक्षितरूपं पित्राद्यर्थविशेषविषयान् प्रवरशब्दान् मन्त्रवाक्यनिवेशिनो दर्शयत्विति तदर्थमेव सर्वनामपदमध्ययनविधिना अध्यापितमिति निश्चीयते । तस्मात् पित्रादिनाम्नामपि आम्नानप्रायत्वात् मन्त्रत्वमेवेति । **प्रयोजनम्**—अमन्त्रत्वे मन्त्रभ्रंशप्रायश्चित्ताभावः,

'ह्यग्रहोर्भश्छन्दसि' इत्यादिच्छान्दसविकाराभावश्च। मन्त्रत्वे द्वयोरपि भाव इति। **सूत्रं तु**—अनाम्नातेषु ऊहप्रवरनामधेयेष्वमन्त्रत्वम्। आम्नातेषु 'मन्त्रोऽयमिदं ब्राह्मणम्' इत्येष विभाग इति। **तौता.**

**अनाम्नातेष्वमन्त्रत्वमाम्नातेषु हि विभागः। २।१।९।३४॥**

'सूर्याय जुष्टं निर्वपामि' इत्यादिः ऊहः। यत्र यजमानस्य आर्षेयं व्रियते स प्रवरः। यच्च यजमानतत्पुत्रादीनां नामग्रहणं तन्नामधेयम्। अनाम्नातेषु ऊहप्रवरनामधेयेषु अमन्त्रत्वं नास्ति। हि यस्मात् आम्नातेषु वाक्येषु विभागः मन्त्रत्वेन ब्राह्मणत्वेन च विभजनं भवति। ऊहादयस्तु न साक्षादाम्नाताः। तस्मान्न तेषु मन्त्रत्वं इति सिद्धान्तः। **के.**

**'अनारब्धे तु गोशब्दे गोशब्दत्वं कथं भवेत्' इति न्यायेन** गवादिपदस्य अनेकक्रमिकवर्णसमुदायात्मकत्वेन यौगपद्यासंभवात् पदत्वादिजातिवदेव साधुत्वादिजातिरपि गवादिपदनिष्ठा निराकर्तव्या। **कौ.** १।३।८।२४ पृ. १०९.

* **अनारभ्य** 'अंशुं गृह्णाति' 'अदाभ्यं गृह्णाति' इति विहितयोः अंश्वदाभ्ययोः सादनसंमार्गादयो ग्रहधर्माः सन्ति। **भा.** ३।६।११।३२–३४, * अनारभ्य अग्निं विहितं 'चित्रिणीरुपदधाति, वज्रिणीरुपदधाति, भूतेष्टका उपदधाति' इति। तास्वपि चयनप्रकरणे पठिता इष्टकाधर्माः कर्तव्याः, तासामपि अग्न्यर्थत्वात्। ३।६।१२।३५. * अनारभ्य आम्नायते 'वायव्यं श्वेतमालभेत' 'सौर्यं चरुं निर्वपेत्' इति। अत्र श्वेतपशुचरुद्रव्यवायुसूर्यदेवताविशिष्टयोर्यागयोर्विधिः, न गुणविधिः, न वा यावदुक्तकर्मविधिः। **वि.** २।३।५. * अनारभ्य कर्माणि वेदाध्ययनं श्रूयते 'तस्मात् स्वाध्यायोऽध्येतव्यः' इति। नेदं प्रयोगश्रुतिगृहीतं वेदाध्ययनम्। तस्मात् विद्वान् कर्मसु अधिक्रियते। **भा.** ३।८।८।१८. * अनारभ्य विहितः 'उपात्र वपन्ति' इति अग्नेरुपवापः चातुर्मास्यगतवरुणप्रघाससाकमेधयोरेव मध्यमयोः पर्वणोः। **वि.** ७।३।९, * अनारभ्य विहितः पिण्डपितृयज्ञः 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति' इति। नायं दर्शेष्ट्यङ्गं, किंतु स्वतन्त्रः पुरुषार्थः। अमावास्याशब्दस्तु कालवाचकः। ४।४।८, * अनारभ्य विहितः 'प्रजाकामं चतुर्होत्रा याजयेत्' इति विहितः चतुर्होतृहोमः 'एषा वा अनाहिताग्नेरिष्टिः यच्चतुर्होतारः' इति वचनात् लौकिकेऽग्नौ कर्तव्यः। ६।८।१, * अनारभ्य विहितं 'यदाङ्क्ते चक्षुरेव भ्रातृव्यस्य वृङ्क्ते' इति चक्षुरञ्जनं क्रत्वर्थं न पुरुषार्थम्। फलश्रवणं तु अर्थवादः। ४।३।१. * अनारभ्य विहितं 'सुवाससा भवितव्यं' इति शोभनवस्त्रधारणं पुरुषार्थमेव। **भा.** ३।४।८।२०–२४. * अनारभ्य श्रूयते 'आग्नेयमष्टाकपालं निर्वपेद् रुक्कामः' इति। इयं तेजस्कामेष्टिः कर्मान्तरं, न तु दर्शपूर्णमासयोः फलविधिः। **वि.** २।३।१२, * अनारभ्य श्रूयते 'जयान् जुहुयात्, राष्ट्रभृतो जुहोति, अभ्यातानान् जुहोति' इति। तत्र 'चित्तं च स्वाहा' इत्यादयो जयाः। 'ऋताषाट्' इत्यादयः राष्ट्रभृतः। 'अग्निर्भूतानां' इत्यादयः अभ्यातानाः। अयं जयादिहोमः वैदिकेष्वेव कर्मसु, न कृष्यादौ लौकिके। ३।४।१३, * अनारभ्य श्रूयते 'न कलञ्जं भक्षयेत्, न लशुनं, न गृञ्जनम्' इति। नरकात् भीतस्य अस्मिन्निषेधे अधिकारः, न स्वर्गकामस्य। ६।२।५, * अनारभ्य श्रूयते 'नेक्षेतोद्यन्तमादित्यं नास्तं यन्तं कदा चन' इति। इमानि अनीक्षणसंकल्पादीनि प्रजापतिव्रतानि पुरुषार्थानि। नायं क्रत्वर्थो निषेधः। नञोऽत्र पर्युदासोऽर्थः। ४।१।३, * अनारभ्य श्रूयते 'यस्य पर्णमयी जुहूर्भवति' 'यस्य खादिरः स्रुवो भवति' इत्यादि। अयं जुह्वादिषु पर्णतादिविधिः प्रकृतिमात्रगामी। ३।६।१, * अनारभ्य होमसामान्यमनूद्य विहितस्य आहवनीयस्य विशेषशास्त्रविहितेन पदेन वर्त्मना वा बाधः। 'यदाहवनीये जुहोति' 'पदे जुहोति' 'वर्त्मनि जुहोति'। १०।८।८, * **अनारभ्यवादः** श्रूयते 'आश्रावयेति चतुरक्षरं, अस्तु श्रौषडिति चतुरक्षरं' इत्यादि। तत्रोक्तं 'यजतिषु येयजामहं करोति, नानुयाजेषु' इति। अनयोरेकवाक्यतया अनुयाजव्यतिरिक्तेषु यजतिषु येयजामहः कर्तव्यः इति पर्युदासो नञर्थः। तस्मात् अनुयाजेषु येयजामहस्य न विकल्पः। १०।८।१०. * अनारभ्यवादः सर्वैः वाक्य-

संयोगेन अङ्गं विधत्ते, लिङ्गेन वा केन चिदव्यभि-चारिणा । वा. ३।४।८।२४, * **अनारभ्यवादा** अपि येषां क्रतुसंबन्ध एव प्रत्यक्षः, ते सर्वार्था एव । यथा 'एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः' इत्येवमा-दयः । ३।६।१।८, * **अनारभ्यवादेन** आहवनीयः सर्वहोमार्थः इति तद्रहितकर्मान्तराभावात् आहिताग्नेरधि-कारः ( कर्मसु ) । ३।२।१६।३९. * अनारभ्यवादेन यजतिषु येयजामहः प्राप्तः, अनुयाजेषु च 'नानुया-जेषु' इति निषेधः । तत्र अनुयाजवर्जितेषु यजतिषु इति पर्युदासः । **भा.** १०।८।१।१–४. * अनारभ्य-वादेनापि योऽर्थः न्यायादेव प्राप्यमाणः, स एव प्राप्यते । **वा.** ४।१।१७।४८, * **अनारभ्यवादस्य** प्रकृत्यर्थतायां सिद्धायां 'अग्निष्टोमे प्रवृणक्ति' इत्येतस्य अनन्यप्रयोजन-त्वात् प्रतिषिध्यप्रतिप्रसवार्थता गम्यते । ३।३।१२।२३ पृ. ८७९–८०. * अनारभ्यवादस्य यत्र आतिदेशिकपदार्था-नपेक्षत्वं तत्र प्रत्यक्षस्य तस्य शीघ्रप्रवृत्तेः प्रकृतिविकृतिसाधा-रण्यमेव यथा 'अग्निष्टोमे प्रवृणक्ति' इत्यादौ । **कु.** ३।६। १।८.* **अनारभ्यवादानां** यदिदं प्रकृत्यर्थत्वं अभिधास्यते नैतत् वाचनिकं, कथं तर्हि, द्वारान्यथाऽनुपपत्तिकारि-तम् । **वा.** २।३।५।१३, * **अनारभ्यवादन्यायेन** ( ३।६।१ ) आधानवदेव पूर्वोत्तरपक्षौ रचयितव्यौ किं आहवनीयादयः प्रकृत्यर्थाः आहोस्वित् सर्वार्थाः इति । ३।७।१९।३९ पृ. ११०३. * **अनारभ्य-विधिः** प्रकृतावेव निविशते । **वि.** ३।६।१. * अना-रभ्यविधिः यदि चोदकात् बलीयान् तत्र प्रयाजादीनां दर्शनं नैवोपपद्येत । दृश्यन्ते च प्रयाजादयः क्व चित् 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति । अथ चोदको बलीयान् तत एतद्दर्शनमुपपद्यते । **भा.** ३।६।१।४. * अनारभ्यविधिः सामान्यविधिः, मित्रविन्दादिप्रकरण-स्थस्तु विशेषविधिः । **मीन्या.** * **अनारभ्यविहित-पदार्थाश्रितगुणाः** यत्र सन्ति तत्र गुणकामानां विकृ-तिषु न प्रवृत्तिः । यस्य अनारभ्यवादस्यातिदेशिकपदार्था-नपेक्षित्वं तत्र प्रकृतिविकृतिसाधारण्यमेव । यथा— 'आश्रावयेति चतुरक्षरं०' इत्यादौ, तत्र विकृतिरूप-यज्ञातिदेशकत्वाभावात् । **सोम.** ३।६।१.

**अनारभ्याधिकरणम्** । अनारभ्यवादः, अनारभ्यवादन्यायः, अनारभ्यवादाधिकरणं, अनारभ्या-धीतन्यायः, इति च । स्रुवाधिकरणं, सर्वार्थन्यायः, सर्वा-नवीन्यायः, द्विरुक्तन्यायः इत्यपि ।

**सर्वार्थमप्रकरणात् । ३।६।१।१ ॥**

**भाष्यं**—अनारभ्य किं चिदुच्यते 'यस्य खादिरः स्रुवो भवति स च्छन्दसामेव रसेनावद्यति, सरसा अस्याहुतयो भवन्ति' 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादि । तत्र संदेहः किं खादिरता स्रुवे, पालाशता जुह्वां प्रकृतौ निविशते, उत प्रकृतौ विकृतौ चेति । किं प्राप्तं ? सर्वार्थं अप्रकरणात् । प्रकृतिविकृत्यर्थं एवंजातीयकम् । कुतः ? अप्रकरणात् । न कस्य चित् प्रकरणे श्रूयन्ते । तानि वाक्येन सर्वत्र भवेयुरिति ।

**वा**—इदानीमनारभ्याधीतानां प्रकृतिलिङ्गसंयुक्तानां प्रकरणसंबन्धे सति किं प्रकृतिप्रकरणसंबन्धः, उत सर्वा-र्थत्वं इति विचारः । तत्र श्रुत्यादिषट्काभावेऽपि अश्व-प्रतिग्रहेष्टिवत् क्रतुसंबन्धो योजयितव्यः । स्रुवाद्युद्देशेन हि अत्र खादिरत्वादीनि विधीयन्ते । ते च स्रुवादयः 'स्रुवेणावद्यति' 'स्रुवेणाघारमाघारयति' 'स्रुवेण पार्वणौ जुहोति' 'जुह्वा जुहोति' इत्यादिभिर्वाक्यैः कर्माङ्गत्वेन प्रतिपादिताः । तत्संबन्धित्वेन च उपनीत-मात्राण्येव खादिरत्वादीनि स्रुवसंस्पर्शिना क्रतुकर्थभावेन गृह्यन्ते । नहि तेषामन्यत् फलमस्ति इति चतुर्थे (४।३।१।१) वक्ष्यामः । न च निर्व्यापारान् जातिविशेषात् फलोत्पत्तिरवकल्पते । न च व्यापारसंबन्धजननार्था क्व चित् क्रिया प्रस्तुता दृश्यते । नापि वाक्योपात्ता । न चात्र स्रुवादिर्विधीयते, वाक्यभेदप्रसङ्गात् । अतः स्रुवाद्यनु-वादेन विधीयमानानां खादिरत्वादीनां स्वपादिस्वरूपे अन्यथाऽपि उपपद्यमाने अनर्थकं विधानं इति तदुप-प्रापितकर्मसंबन्धो विज्ञायते । तत्र अनारभ्यवादत्वादेव स्रुवादिसंबन्धस्य प्रकृतिविकृतिषु अविशेषात् सर्वार्थत्वं इति पूर्वः पक्षः ।

**प्रकृतौ वाऽद्विरुक्तत्वात् । २ ॥**

**भाष्यं**— प्रकृतौ वा निविशेरन् अनारभ्याधीतानि पात्राणि । कुतः ? अद्विरुक्तत्वात्, एवं अद्विरुक्तं भविष्यतीति । द्विरुक्ततायां को दोषः ? असंभव इति ब्रूमः । यद्धि प्रकृतौ विकृतौ च भवति अस्ति तत् प्रकृतौ । प्रकृतौ चेदस्ति, चोदकेनैव विकृतिं प्राप्नोति । ततो न अनारभ्यविधिमाकाङ्क्षति । तस्मात् अनाकाङ्क्षितत्वात् अनारभ्यविधिः न तत्र विदधाति । तेन ब्रूमः प्रकृत्यर्थः एवेति ।

**वा**— सर्वविधीनां अप्राप्तस्वविषयत्वात् यत्र प्रमाणान्तरेण प्राप्तिर्नास्ति, तत्र खादिरत्वाद्युपदेशः । प्रकृतौ च न कुतश्चित् प्राप्तिः । विकृतिषु अङ्गान्तरार्थं अवश्यकल्पनीयेन अतिदेशेन खादिरत्वाद्यपि प्राप्नोति, इति नोपदेशमपेक्षते । तेन द्विरुक्तस्य असंभव इत्याह । तव द्विरुक्तत्वात्, अद्विरुक्तत्वाद्वा मम इति सूत्रम् ।

**तद्वर्जं तु वचनप्राप्ते । ३ ॥**

**भाष्यं**—अप्रकरणात् प्रकृतिविकृत्यर्थमेव इत्युच्यते । यत्तु चोदकेन प्राप्नोतीति, अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति । तस्मात् अनारभ्यविधिवर्जं चोदकः प्रापयिष्यति । अनारभ्यविधिवाक्येन प्रत्यक्षेण स्रुवे खादिरता, चोदकवाक्येन आनुमानिकेन विकृतौ । आनुमानिकाच्च प्रत्यक्षं बलवत् । तस्मात् प्रकृतिविकृत्यर्थः अनारभ्यविधिः ।

**वा**—( तद्वर्जे तु वचनप्राप्ते ) प्राप्तेः इति वा पाठः । सत्यं द्विरुक्तत्वमन्याय्यं, तत्र कुत एतत्, अतिदेशप्राप्तत्वात् उपदेशो विहन्यते, न पुनः उपदेशसिद्धं अतिदेश एव प्रापयेदिति ? । युक्त च पदार्थविप्रकर्षात् अतिदेशो न स्यात्, संनिकर्षात्तु पूर्वतरप्रवृत्तोपदेशाश्रयणम् । अथोच्येत सामान्यविषयत्वात् उपदेशो दुर्बल इति, तत् अतिदेशेऽपि सर्वाङ्गविषयत्वात् अविशिष्टम् । तस्मात् सर्वार्थः अनारभ्यवाद इति ।

**दर्शनादिति चेत् । ४ ॥**

**भाष्यं**—यदि अनारभ्यविधिः चोदकात् बलीयान्, अनारभ्यविधिना प्राप्ते न चोदकमाकाङ्क्षति । निराकाङ्क्षे वैकृते कर्मणि चोदको नैव प्राप्नोति । तत्र प्रयाजादीनां दर्शनं नैव उपपद्येत । दृश्यन्ते च प्रयाजादयः क्वचित् 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति । अथ चोदको बलीयान् ततः एतद्दर्शनमुपपद्यते । तस्मात् प्रकृत्यर्थः अनारभ्यविधिः ।

**वा**—स्थितायां प्रतिज्ञायां चोदयति । यदि अतिदेशादुपदेशो बलवान्, एवं सति तेनैव उपदेशेन अवरुद्धत्वात् अतिदेशो नैव स्यात् । कुतः ? शक्नोति हि प्रकृतिविकृतिसाधारणं खादिरत्वं प्राकृतोपकारसाधने दृष्टशक्तित्वात् विकृतिं निराकाङ्क्षीकर्तुम् । ततश्च प्रयाजादिदर्शनं विरुध्यते । तस्मात् अतिदेशविनिर्मुक्तायां प्रकृतावेव निवेशो युक्तः इति ।

**न, चोदनैकार्थ्यात् । ५ ॥**

**भाष्यं**— न प्रकृत्यर्थः, सर्वार्थ इति ब्रूमः, अप्रकरणे समाम्नानात् । यदुक्तं अनारभ्यविधिना निराकाङ्क्षस्य न चोदक इति, तन्नोपपद्यते । नहि अनारभ्यविधिः चोदनां निराकाङ्क्षीकरोति । प्राप्ते हि चोदकेन स्रुवे, खादिरता अनारभ्यविधिना शक्या विधातुम् । असति चोदके अनारभ्यविधिरपि नास्ति । न च अनारभ्यविधिः स्रुवं प्रापयति, तस्य च खादिरताम् । कुतः ? चोदनैकार्थ्यात् । एकार्था हि चोदना 'यस्य खादिरः स्रुवो भवति' इति । न चात्र स्रुवः खादिरता च उभयं विधीयते । स्रुवस्य सतः खादिरतां एष शब्द आह, स च चोदकेन प्राप्तः । तस्मात् अस्ति चोदकः । स हि अनारभ्यविधिवाक्यस्य प्रत्यक्षत्वात् तं वर्जयित्वा अन्यं प्रापयति । तस्मात् प्रकृतिविकृत्यर्थः अनारभ्यविधिः ।

**वा**— नैतावता शक्यं सर्वार्थत्वं व्यावर्तयितुम् । नहि एकस्मिन्नंशे अतिदेशो बाधितः सर्वत्रैव बाधितो भवति । तद्यथा शरैः कुशेषु निवर्तितेष्वपि न प्रयाजादयो निवर्त्यन्ते । समानविषयमात्रे हि बाधो विज्ञायते । तेन खादिरत्वादिप्राप्त्यंशमात्रात् अतिदेशो निवर्तते । न च खादिरत्वं अक्रियात्मकत्वात् शक्नोति विकृतिं निराकाङ्क्षीकर्तुम् । युगपच्च प्रकृतिविकृत्योः प्रवर्तमानं अशक्यं क्लृप्तोपकारत्वेन निरूपयितुम् । साकाङ्क्षं तु तत् स्रुवप्राप्त्यभावात् । न च अतिदेशाभ्यनुज्ञामन्तरेण स्रुवप्राप्तिः संभवति । न चैतत् वाक्यं स्रुवस्यापि विधायकं,

प्रधानक्रियाऽनुपादाने सति विशिष्टविधाने अनुपपद्यमाने वाक्यभेदप्रसङ्गात्। तस्मात् अनारम्यवादविधिप्रापिते स्रुवस्य स्वादिरत्वे तदङ्गे अतिदेशः कल्पयितव्यः।

**उत्पत्तिरिति चेत्। ६॥**

**भाष्यं**—इति चेत् पश्यसि उत्पत्तिरेषां प्रकृतिविधिभिस्तुल्या। प्रकृतौ अङ्गानि संक्षेपेण विस्तरेण चोच्यन्ते। 'पञ्च प्रयाजान् यजति' इति संक्षेपेण 'समिधो यजति' इत्येवमादिना विस्तरेण। इहापि 'यस्य स्वादिरः स्रुवो भवति' इत्येवमादिर्विस्तरः, 'यस्यैवंरूपाः स्रुचः' इति संक्षेपः। एवंरूपः प्रकृतौ विधिर्दृष्टः, अयमपि एवंरूपः। तस्मात् प्राकृतः इति सामान्यतोदृष्टानुमानम्। तस्मात् प्रकृत्यर्थोऽनारम्यविधिरिति।

**वा**—अत्र तार्किकः कश्चिदाह, प्रकृत्यर्थः अनारम्यविधिः संक्षेपविस्ताराभ्यां विधीयमानत्वात् प्रयाजादिवत् इति।

**न, तुल्यत्वात्। ७॥**

**भाष्यं**—नैतदेवम्। नहि एवंजातीयकं सामान्यतोदृष्टं साधकं भवति। केवलमत्र प्राकृतविधिसारूप्यं, न तु प्रकृतौ एतद् भवति इति प्रमाणमस्ति। अपि च, विकृतावपि संक्षेपविस्तराभ्यां अङ्गानि विधीयन्ते 'तिस्र आहुतीर्जुहोति' इति संक्षेपः, 'आमनमस्यामनस्य देवाः' इति विस्तरः। अतो वैकृतैरपि अनारम्यविधयस्तुल्याः। तस्मादयमहेतुः प्रकृतिनिवेशस्य।

**वा**—न तावत् ईदृशेऽर्थे अनुमानस्य गतिः इत्युक्तम् (प्रत्यक्षसूत्रे श्लोकवार्तिके १९)। अपि च अनुमानमपि एतन्न भवति, अनैकान्तिकत्वात्। विकृतावपि संक्षेपविस्ताराभ्यां विधिरुपलभ्यते। तत्र एतत् स्यात्, एकेन विहितत्वात् संक्षेपविस्तारयोरन्यतरः नैव विधायक इति। तदपि प्रकृतौ तुल्यं इति हेतोरसिद्धता। तेनावश्यं विध्यनुवादनिरपेक्षं संक्षेपविस्ताराभिधानमात्रं हेतुर्वक्तव्यः। स चानैकान्तिक इत्युक्तम्। **एवं वा। स्वगोत्रेण ('स्वमतेनेत्यर्थः) सूत्रद्वयं गमयितव्यम्। इति चेत्, तत्सर्वार्थत्वं पश्यसि,** तदयुक्तम्। यत्र हि पात्राणां विनियोगोत्पत्तिः, तत्र तदङ्गं जातिर्विधातुं शक्यते। न च विकृतौ उत्पत्तिः। अतः तत्कृत्स्नायां तस्यां अशक्यं जातिर्विधातुं, तन्निवेशनात्। यदि हि प्रकृतिविकृत्योः तुल्यवत् प्राप्तिः न स्यात्, ततः सर्वार्थोद्देशेन जातिविधानमकरिष्यत्, न तु एवम्। तस्मात् प्रकृत्यर्थतैव युक्तेति। (६). एतेन 'न, तुल्यत्वात्' इति। सर्वथा अनारम्यवादः प्राप्तिनिमित्ते। तत्र या चोददेशेन प्राप्तिः, या चातिदेशेन प्राप्तिः, न सर्वाऽपि प्राप्तित्वेन तुल्या। यद्यपि उपदेशातिदेशयोः संनिकर्षविप्रकर्षौ विद्येते, तथापि तौ स्वविषये एव बलाबलं कुरुतः, न अनारम्यवादेन सह। अनारम्यवादो हि पात्रद्वारेण क्रतुगामित्वात् विप्रकृष्टतरः। तस्मात् सर्वार्थः। तदङ्गे चातिदेशः (७)।

**चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थः। ८॥**

**भाष्यं**—तुशब्दः पक्षं व्यावर्तयति। न सर्वार्थः अनारम्यविधिः। प्रकृत्यर्थः इति ब्रूमः। कुतः? चोदनार्थकार्त्स्न्यात्। कृत्स्नं चोदकः प्रापयति। न अनारम्यविधिना वैकृतमपूर्वं निराकाङ्क्षम्। पात्राणां हि तत् वाक्येन, न यागानाम्। यागाः चोदनालिङ्गसंयोगात् प्रकृतिमपेक्षन्ते, तया सह एकवाक्यतां यान्ति। प्राकृताश्च तान् शक्नुवन्ति निराकाङ्क्षीकर्तुं, न अनारम्यविधयः। तस्मात् अवश्यं चोदक उत्पादयितव्यः। स चेदुत्पाद्यते, नार्थः अनारम्यविधिना। न चासौ प्रकरणादीनामभावात् प्रवर्तमानोऽपि वैकृतेन यागेन संबध्येत। तस्मात् वैकृतेन कर्मणा न अनारम्यविधिः संबध्यते। न तस्य वैकृतस्य मुख्यस्य अनारम्यविधिर्वाक्यशेषः। 'प्रकृतौ वा' इति विप्रतिषेधे, चोदकसामर्थ्यात् प्राकृते वाक्यशेषे प्राप्ते अनारम्यविधिर्न भविष्यति। तस्मात् अनारम्यविधिः प्रकृत्यर्थः।

**वा**—प्रकृतौ वा द्विरुक्तत्वात् इत्येतदेव न्याय्यम्। यत्तु तदङ्गे प्रापयिष्यतीति, तदयुक्तम्। कुतः **'वर्तेत यदि भेदेन प्रकृत्यङ्गेषु चोदकः। तत एवं भवेदेषु युगपत्तु प्रवर्तते॥'** पदार्थातिदेशपक्षे शास्त्रातिदेशपक्षे वा तद्भेदात् कदाचित् भेदो भवेत्। यागगतस्तु व्यापारः अतिदिश्यते इति दशमे वक्ष्यामः (१०।१।१)। स च निरवयवत्वात् युगपदतिदिश्यते। अनेन च आत्म-

सिद्धयर्थं युगपदेव प्रयाजाद्यपूर्वाणि गृह्यन्ते । तैश्च प्रयाजादयः । प्रयाजादिभिरपि स्वशास्त्राणि । तेन प्रकृतिवत् इत्येवंरूपस्य अतिदेशस्य एकत्वात् सर्वाङ्गेषु अविशिष्टस्य सर्वत्र प्रवृत्तिः अप्रवृत्तिर्वा, नैकदेशेषु । शरैरपि कुशाः प्राप्ता एव बाध्यन्ते इत्युक्तं बलाबलाधिकरणे ( ३।३।७। १४ ) । तत् यदि तावत् अनारभ्यवादानुरोधेन खादिरत्वादिविषये अतिदेशः परित्यज्यते, तत एव अङ्गान्तरेष्वपि, इति सर्वनिवृत्तिप्रसङ्गः । तत्र चोक्तम् ( अत्रैव पञ्चमसूत्रे ) । अथ केषां चित् प्राकृतानामनुरोधेन तद्विषयः अतिदेशः प्रमाणं क्रियते, ततः खादिरत्वादिप्राप्तिरपि अविशिष्टा इति स्फुटं द्विरुक्तत्वं प्राप्नोति । यागगतव्यापारापेक्षित्वाच्च स्वप्रकरणाम्नानमपि अतिक्रम्य, विकृतयः प्राकृतं तावत् गृह्णन्ति इति सर्वत्र स्थापयिष्यामः । तेनापि अनारभ्यवादात् अतिदेशप्राप्तेः प्राथम्यम् । अवश्यं च प्रकृतिषु स्रुवादिप्राप्तिः अपेक्षितव्या । यावता च यत्र न स्रुवादयः प्राप्नुवन्ति, तावता खादिरत्वादयोऽपि, इति नोपदेशविषयत्वं घटते । न चैषां क्रतुसंबन्धो विस्पष्टः । सोऽपि अन्यथाऽनुपपत्त्या स्रुवादिद्वारेण कल्पयितव्यः । सर्वार्थत्ववादी च प्रकृतिसंबन्धं तावत् अभ्युपगच्छति । तेन च परिहृते आनर्थक्ये, विकृतिसंबन्धो निष्प्रमाणकः । प्रमाणवत्तरो हि अतिदेशेन क्रतुसंबन्धः । येषां तु क्रतुसंबन्ध एव प्रत्यक्षः, ते अनारभ्यवादा अपि सर्वार्था एव यथा ' एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः ' इत्येवमादयः । तस्मात् खादिरत्वादि प्रकृत्यर्थं इति सिद्धम् ।

**शा**— अनारभ्यवादविचारप्रस्तावागतशेषविषयं विचारं समाप्य इदानीं तमेव अनारभ्यवादं अनुसंधत्ते । **' जुह्वादिप्राप्तिमात्रं हि पर्णतादेरपेक्षितम् । या चौपदेशिकी प्राप्तिः प्राप्तिर्या चातिदेशिकी ॥ सवा सा प्राप्तिरूपेण तुल्या तदनुवादतः । विधीयमानं पर्णत्वं सर्वार्थमिति गम्यते ॥ ननु येनातिदेशेन विकृतौ प्राप्यते जुहूः । तेनैव पर्णताऽपीति व्यर्थं तदुपदेशनम् ॥ नैवं प्रत्यक्षसिद्धत्वात् पर्णत्वं नानुमानतः । चोदकात् प्राप्यते, तस्मात् सर्वार्थाः पर्णतादयः ॥ नैवं द्विरुक्तिदोषः स्यात् प्राप्तस्य हि पुनर्विधेः । पृथक्त्वेन पदार्थानां भवेच्चेच्चोदकस्ततः ॥ तद्वर्जं युज्यते प्राप्तिः प्रकारस्त्वतिदिश्यते । पदार्थानां खलु प्राप्तिस्तद्विशेषणभावतः ॥ समुच्चिताश्च ते सर्वे प्रकृतौ तद्विशेषणम् । तेन यावज्जुहूप्राप्तिर्विकृतौ तावतैव च ॥ प्राप्तैव पर्णताऽपीति व्यर्थस्तस्य पुनर्विधिः । अवश्यं च जुहूप्राप्तिः प्रतीक्ष्या पर्णताविधेः ॥ तया सहैव पर्णत्वं प्राप्तं, न तु विधीयते । प्रकृतावेव पर्णत्वविधिस्तेन व्यवस्थितः ॥ '**

**सोम**—यस्यानारभ्यवादस्य आतिदेशिकपदार्थानपेक्षत्वं, तत्र प्रत्यक्षस्य शीघ्रप्रवृत्तेः प्रकृतिविकृतिसाधारण्यमेव । यथा 'आश्रावयेति चतुरक्षरं, अस्तु श्रौषडिति चतुरक्षरं, यजेति द्व्यक्षरं, येयजामहे इति पञ्चाक्षरं, द्व्यक्षरो वषट्कारः, एष वै सप्तदशः प्रजापतिर्यज्ञमन्वायत्तः ' इत्यादौ, तत्र विकृतिरूपयज्ञस्य आतिदेशिकत्वाभावात् इति ध्येयम् । **प्रयोजनं** यत्रानारभ्यविहितपदार्थाश्रिता गुणाः सन्ति, तत्र गुणकामानां विकृतिषु प्रवृत्तिः पूर्वपक्षे, सिद्धान्ते तु आष्टमिकन्यायेन ( ८।१।१३।२० ) अप्रवृत्तिरिति । **सूत्रार्थस्तु**— पर्णतादिकं सर्वार्थं कस्य चित् प्रकरणे अनाम्नातत्वेन सर्वार्थत्वस्य न्याय्यत्वात् इति ।

**वि**— ' प्रकृतौ विकृतौ वा स्याद् यस्य पर्णेत्यसौ विधिः । प्रकृतावेव वा, तुल्याद्वचनादुभयोरसौ ॥, जुहूमाश्रित्य पर्णत्वविधिः प्रकृतिमात्रगः । चोदकेनोभयप्राप्तेर्विकृतौ विधिनाऽत्र किम् ॥ '

**भाट्ट**— अनारभ्य श्रुतेन ' यस्य पर्णमयी जुहूर्भवति ' इत्यादिना अव्यभिचरितक्रतुसंबन्धिजुहूद्देशेन विधीयमाना पर्णता तद्-द्वारेण जुहूसाध्यक्रत्वङ्गं, इति स्थिते सा किं प्रकृतिविकृतिसाधारणी, उत प्रकृतेरेव इति चिन्तायां, अविशेषात् सर्वेषामपि । न च विकृतौ अतिदेशेनापि प्राप्तेः द्विरुक्तत्वापत्तिः, उपदेशेनैव प्राप्तिसत्त्वे अतिदेशस्य कुशविषयत्वाकल्पनवत् पर्णताविषयत्वाकल्पनात् । न च विकृतौ जुहूप्राप्तेः अतिदेशायत्तत्वात् तस्य च प्रकृतेः सर्वाङ्गसंबन्धोत्तरकालिकत्वेन पर्णताविधेः प्रथमं प्रकृतिविषयशाब्दबोधजनकत्वावश्यंभावे पुनर्विकृतिविषये तज्जनकत्वायोगेन

प्रातिकालवैषम्यापत्तिः इति **वाच्यम्** । वैमृधादिवत् पर्णताव्यतिरिक्ताङ्गसंबन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य विकृतौ अतिदेशोपपत्तौ पर्णतायाः पश्चादेव विधानेन साधारण्योपपत्तेः । अन्यथा वैमृधेऽपि वैमृधव्यतिरिक्तप्रयाजाद्यतिदेशानापत्तेः । **इति प्राप्ते**, यत्किंचिदितिकर्तव्यताकवैमृधोपेतसकलाङ्गसंबन्धेनैव प्रकृतेः पूर्णत्वमङ्गीकृत्य वैमृधे अतिदेशकल्पनायामपि येषामङ्गानां स्वाङ्गसंबन्धेन निराकाङ्क्षता, तेषामेवातिदेशः, न वैमृधस्य, अङ्गविशेषानवगमेन तद्भावनाया अपरिपूर्णत्वात् । अतश्च पर्णतारूपाङ्गसंबन्धं विना प्रकृतेः पूर्णत्वाभावात् अतिदेशतो जुहूप्राप्त्यनन्तरं पुनः पर्णताविधौ प्रातिकालवैषम्यापत्तेः प्रकृत्यर्था एव पर्णता । यथा च एवं सति 'दीक्षासु यूपं छिनत्ति' इत्यत्र अग्नीषोमीयसवनीयानूबन्ध्यसंबन्ध्युपदिष्टातिदिष्टच्छेदनसाधारण्येन दीक्षाकालविधौ न प्रातिकालवैषम्यं, तथा तत्रैव ( ११।३।४ ) वक्ष्यामः । वस्तुतस्तु नैव तत्र साधारण्येन विधिः, प्रकृत्यर्थत्वेन विहितस्य अतिदेशतोऽपि प्राप्तिसंभवात् । तथापि यूपैकत्वं भिन्नकालिकत्वेन अगृह्यमाणविशेषत्वात् पात्रवदेव नानुपपन्नम् । **प्रयोजनं** पूर्वपक्षे पर्णतालोपे वेदान्तरीयविकृतौ याजुर्वेदिकत्वात् तद्भ्रेषप्रायश्चित्तम् । सिद्धान्ते अविज्ञातप्रायश्चित्तं, विकृतिवेदीयं वा । भूरादिप्रायश्चित्तानामपि उपक्रमानुसारेण उच्चैस्त्वादिवत् वेदधर्मत्वात् ।

**मण्डन**— 'न पर्णता स्याद्विकृतौ द्विरुक्तेः ।'

**शंकर**— 'प्रकृतौ पर्णतादि च ।'

***अनारभ्याधिकरणे** अनारभ्यविधिना विकृतिष्वपि खादिरत्वादिप्राप्तेः तद्वर्जं प्रकृतिविकृत्यर्थत्वे द्विरुक्तत्वप्रसङ्गस्य असिद्धत्वशङ्कार्थं उक्त्वा, चोदकस्य अनारभ्यविधितो दौर्बल्यं तेनैव विकृतिनैराकाङ्क्ष्यात् चोदकाभावापत्त्या तत्राप्यप्रयाजादि 'दर्शनादिति चेत्' ( ४ ) इति सूत्रेणाशङ्क्य 'न चोदनैकार्थ्यात्' ( ५ ) इत्यनेन अनारभ्यचोदनायाः खादिरत्वाद्येकार्थपरत्वेन स्रुवाद्यमिधानात् विकृतिनैराकाङ्क्ष्यकरणाशक्तेः चोदकस्य दौर्बल्येऽपि अनारभ्यविध्यप्राप्तप्रयाजादिप्राप्त्कत्वोपपत्तिमुक्त्वा, सिद्धान्तैकदेशिमतेन द्विरुक्तत्वप्रसङ्गस्य असिद्धत्वमभ्युपेत्य संक्षेपविस्तररूपत्वेन हेतुना प्रकृत्यादिविधिदृष्टान्तेन खादिरत्वादिविधेः प्रकृतिमात्रार्थत्वानुमानं 'उपपत्तिरिति चेत्' ( ६ ) इत्यनेनाशङ्क्य, 'न तुल्यत्वात्' ( ७ ) इत्यनेन आग्निहोत्रादिविधेर्विकृत्यर्थस्यापि संक्षेपविस्तररूपत्वदर्शनेन अनैकान्तिकत्वात् अनुमानायोगमुक्त्वा, 'चोदनार्थकार्त्स्न्यात्तु मुख्यविप्रतिषेधात् प्रकृत्यर्थम्' ( ८ ) इत्यनेन अनारभ्यविधेः स्वविषयखादिरत्वाविषयभूतस्रुवादिप्राप्त्यै चोदकापेक्षत्वेन चोदकस्यैव बलीयस्त्वात् अनारभ्यविधिविषयवर्जनानुपपत्तेः कृत्स्नस्य प्राकृताङ्गजातस्य चोदकचोदनार्थत्वावगमेन अनारभ्यविधेर्विकृत्यर्थत्वे मुख्यस्य विकृतिविधेः चोदकः शेषः अनारभ्यविधिर्वा इति विप्रतिषेधापत्तेः, तत्परिहाराय अनारभ्यविधानं प्रकृतिमात्रार्थं इति द्विरुक्तत्वप्रसङ्गस्य असिद्धत्वशङ्कानिरासेन सिद्धान्तं उपसंहरिष्यति । **सु.** पृ. १२७७, *अनारभ्याधिकरणसिद्धान्तसूत्रेण 'प्रकृतौ वा' (२) इत्यनेन खादिरत्वादेः प्रकृतिविकृत्यर्थत्वे द्विरुक्तत्वापत्तिलक्षणः न्यायः उक्तः । ३।७ पृ. ४१, * **अनारभ्याधीतः** प्रवर्ग्यः 'पुरस्तादुपसदां प्रवर्ग्यं प्रवृणक्ति' इति सोमाव्यभिचरितोपसदादिसंबन्धात् सोमं गच्छति, तत्रापि अनारभ्यन्यायेन प्रकृतिभूतं ज्योतिष्टोमं, तत्रापि प्रथमशब्दसंयोगात् तदीयाद्यप्रयोगम् । **कु.** ३।३।१७।२८. * **अनारभ्याधीतं** आधानं न कस्याप्यङ्गम् । **वि.** ३।६।४, *अनारभ्याधीतं 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति प्रत्यक्षं विध्यन्तरम् । तेन षोडशी सर्वेषु द्विरात्रेषु प्राप्तः सन् अङ्गिरसां द्विरात्रे एव, नान्येषु द्विरात्रेषु इति परिसंख्यायते इति वृत्तिकारमतम् । १०।५।१३, * अनारभ्याधीतं 'तस्मात् सुवर्णं हिरण्यं भार्यं, दुर्वर्णोऽस्य भ्रातृव्यो भवति' **इति सुवर्णधारणं** पुरुषार्थं, न क्रत्वर्थम् । ३।४।१२. * अनारभ्याधीतं प्रकरणाधीतेन बाध्यते । अप्राप्तबाधः । **वा.** ३।३।७।१४ पृ. ८६०. * अनारभ्याधीतं प्रकृतिगामि । अत्र प्रकृतिशब्देन '**चोदकात् यत्र अङ्गानामप्राप्तिः सा प्रकृतिः' इत्यर्थो ग्राह्यः**, न तु 'विकृतिः यतोऽङ्गानि गृह्णाति सा प्रकृतिः' इति, गृहमेधीये पर्णताया अभावप्रसङ्गात् । **मीन्या.** * अनारभ्याधीतं

प्राकरणिकेन बाध्यते । यथा अनारभ्याधीतं सासदश्यं पाञ्चदश्येन । **बाल.** पृ. १४१. * अनारभ्याधीतं 'यस्य पर्णमयी जुहूर्भवति' इतीदं पर्णमयत्वं क्रत्वर्थं, तस्य वाक्येन क्रतुसंबन्धः, फलश्रवणं तु अर्थवादः । **वि.** ४।३।१. * अनारभ्याधीतं 'सप्तदश सामिधेनीरनुब्रूयात्' इति सामिधेनीसाप्तदश्यं वैमृधाध्वरकल्पादौ उपसंह्रियते। **भा.** १०।८।९।१७–१९, * अनारभ्याधीतं सामिधेनीसाप्तदश्यं विकृत्यर्थम्। ३।६।२।९. * **अनारभ्याधीतानि** यज्ञपात्राणि आधानमारभ्यैव आमरणं धार्याणि, न केवलं पौर्णमासीमारभ्य। **वि.** ११।३।१४.* **अनारभ्याधीतयोः** अंश्वदाभ्ययोः न सर्वग्रहान्ते अनुष्ठानं, किंतु प्रातःसवने एव धाराग्रहेभ्यः पूर्वमेव, येषां प्राकरणिको विनियोगः तेषां विधिबलादेव अनुष्ठानसिद्धेः। **भाट्ट** ५।३।६. * अनारभ्याधीतयोः अंश्वदाभ्ययोः वाक्यात् फलवत्येव संबन्धात् सोमेन संबन्धः, न सवनेन इति प्रतिसवनं नावृत्तिः । **वि.** ५।३।६. * अनारभ्याधीतयोः 'वषट्कारेण वा स्वाहाकारेण वा देवेभ्योऽन्नाद्यं प्रदीयते' इति स्वाहाकारवषट्कारयोः 'पृथिव्यै स्वाहा' इत्यादौ दर्विहोमे नोपसंहारः। **भा.** १०।८।१०।२०-२२.* **अनारभ्याधीतानां** चित्रिण्यादीनामिष्टकानां अग्निना संबन्धः, न तु चित्या । तेन प्रत्येकं चितौ नावृत्तिः, किंतु मध्यमचितावेव। **वि.** ५।३।६. * 'अनारभ्याधीतानां प्रकृतिगामित्वं' **इति न्यायेन** ( प्रथमाध्यायगतमन्त्राणां द्वितीयतृतीयाध्यायगतविश्रुतीनां च अनारभ्याम्नातानां ) क्रत्वङ्गत्वावगमात् । **ताण्ड्यसा.** पृ. २. * अनारभ्याधीतानां यत्र चोदकाप्रवृत्तिः तत्र निवेशः, यथा पर्णता दर्शादौ गृहमेधीये च । साप्तदश्यं तु अनारभ्याधीतमपि विकृतिष्वेव प्रत्यक्षश्रुतसाप्तदश्यासु मित्रविन्दादिषु गच्छति उपसंहारात् । **मीन्या.** *अनारभ्याधीतानां हिरण्यभरण- ( ३।४।१२ ) जयादि- ( ३।४।१३ ) अश्वप्रतिग्रहेष्टि- (३।४।१४-१५) पानव्यापत्तीनां (३।४।१६ ) विचारे प्रस्तुते वमनस्य हविःशेषविषयत्वात् तत्प्रसङ्गागतहविःशेषविषयविचारसमाप्तौ पुनरनारभ्यविचार एव विषयः तृतीयस्य षष्ठे । **सोम.** ३।६।१. * **अनारभ्याधीते** प्रत्याम्नानेन प्राकृतं बाध्यते । **बाल.** पृ. १३१. * अनारभ्याधीते सर्वक्रतूनां अविशेषेण उपस्थितिः । **संकर्ष.** ३।३।१४. * **अनारभ्याधीतग्रहेष्टकानां क्रत्वग्निशेषता।** ग्रहेष्टकाधिकरणम्। **भा.** ५।३।६।१५-१६. * **अनारभ्याधीतत्वात्** 'ऐन्द्राग्नमेकादशकपालं निर्वपेत् प्रजाकामः' इत्यादि कर्मान्तरमिदम्। **वि.** २।३।१२. * अनारभ्याधीतत्वात् 'चतुर्गृहीतं जुहोति' इति चतुर्गृहीतत्वं सर्वहोमेषु स्यात् । **भा.** ४।१।१७।४८. * **अनारभ्याधीतन्यायः** ( ३।६।१।१-८ ) । ( स्वरूपं- ) 'कल्प्यक्रतुसंबन्धं अनारभ्याधीतं क्लृप्तक्रतुसंबन्धात् प्रकरणाधीतात् दुर्बलं क्रतुसंबन्धविप्रकर्षात्' इत्येवंरूपः क्रत्वङ्गविषयः । **सु.** पृ. १६१. * बहुभिर्निविन्मन्त्रैः व्यवधानात् प्रकरणविच्छेदोपपत्तेः उत्तराङ्गस्य **अनारभ्याधीतन्यायेन** सामिधेन्यङ्गत्वोपपत्तेः नोपवीतविधौ प्रकरणानुवृत्तिः । **कौ.** ३।१।११।२१ पृ. २०१, * यत्र तु बहून्यङ्गानि पठित्वा दूरे क्व चित् वाचनिकाङ्गाम्नानं, तत्र अल्पानुरोधेन बहूनि विच्छेदकानि अपनीय प्रकरणानुवृत्तिकल्पनाऽयोगात् अल्पस्यैव अनारभ्याधीतन्यायेन अन्वयः परिकल्प्यते । अत एव तत्पूर्वभाव्यसंयुक्तस्य विश्वजिदादेः स्वर्गफलकल्पनं, अन्यथा प्रकरणात् दर्शाङ्गत्वापत्तेः । ३।१।११।२१ पृ. २००. * आत्मज्ञानस्य न कर्मप्रकरणसंबन्धोऽस्ति, येन प्रयोगविधिना परिगृह्येत । नापि **अनारभ्याधीतन्यायावतारो**ऽस्ति । पर्णताया जुहूवत् आत्मज्ञानस्य इह द्वाराभावात् तस्य जुहूवत् क्रत्वभिचाराभावाच्च। **संक्षेपशारीरके** रामतीर्थः ४।११. * **अनारभ्याम्नातं** सामिधेनीसाप्तदश्यं प्रकृतौ पाञ्चदश्येन बाधितं सर्वविकृतीरनुप्राप्तं कासु चित् विकृतिषु पुनः श्रूयते । वाक्यशेषोऽयं वैमृधादिषु अनारभ्यविधानस्य वैमृधे, अध्वरकल्पायां, पशौ, चातुर्मास्येषु, मित्रविन्दायां, त्रैधातव्यायां, आग्रयणेष्ट्यां इत्येतासु विकृतिषु साप्तदश्यं इत्युपसंहारः। **भा** १०।८।९।१७–१९. * **अनारभ्योक्ताः** ( पर्णमयीत्वं-अञ्जनं-प्रयाजादिकर्म च ) क्रतुप्रयुक्ता एव, न फलप्रयुक्ता उभयप्रयुक्ता वा । इति फलकामनायामसत्यामपि अनुष्ठेयाः ।

तत्फलवाक्यानामर्थवादत्वं तु औदुम्बराधिकरणे साधितम् । भाट्ट. ४।३।१.

♖ 'अनार्यसंगमाद्वरं विरोधोऽपि समं महात्मभिः' इति न्यायः । भारविः ( १।८ )। अनार्याणां खलजनानां मित्रत्वात् सकाशात् महात्मभिः सह विरोधोऽपि श्रेयस्करः इति शब्दार्थः । साहस्री. ९६२.

* अनाशङ्किते आशङ्कितवचनं यथा–'शास्त्राणि चेत् प्रमाणं स्युर्गतास्ते परमां गतिम् ।' इति । भा. १०।८।१४।४२.

* अनाहिताग्नेः आहिताग्नेश्च पितृयज्ञः 'अप्यनाहिताग्निना कार्यः' इति वचनात् । भा. ६।८।१।८, * अनाहिताग्नेः इष्टयो न विद्यन्ते । न हि अनाहिताग्नेः क्रतवः सन्ति । ६।८।२।५, * अनाहिताग्नेरेव चतुर्होतृहोमाधिकारः । ६।८।१।१–१०. * अनाहिताग्नीनां सत्रे नाधिकारः । वि. ६।६।५. * अनाहितेऽग्नौ अवकीर्णिपशुः । ( लौकिकेऽग्नौ इत्यर्थः ) । भा. ६।८।४।२२, * अनाहितेऽग्नौ उपनयनहोमः । ६।८।२।११–१९, * अनाहितेऽग्नौ चतुर्होतृहोमाः । ६।८।१।१–१०, * अनाहितेऽग्नौ स्थपतीष्टिः । ६।८।३।२०–२१. * अनाहिताग्निता उपपातकत्वेन स्मर्यते । सु. पृ. ९१५.

* 'अनाहुतिर्वै जर्तिलाश्च' इति जर्तिलानां होमद्रव्यत्वेन निषेधः । भा. १०।८।४।७.

* अनिज्याशेषैः त्रिभिरङ्गैः स्विष्टकृद्यागानुष्ठानं अग्नीषोमीये पशौ ज्योतिष्टोमे । भा. १०।७।३।१०.

* अनित्यस्य नित्येन न संबन्धः– 'न चानित्यस्य कामस्य नित्यैरग्न्यादिकर्मभिः । कथं चिदपि संबन्धः साध्यसाधनरूपतः ॥' वा. २।३।१२।२५. * अनित्यप्रारब्धकर्मणः नित्यकर्मणश्च श्रुतद्रव्यापचारे प्रतिनिधिना समापनम् । वि. ६।३।४.

♖ अनित्यसंयोगपरिहारन्यायः । व्याकरणज्ञानं तु पौरुषेयं ग्रन्थाधीनत्वात्, मन्त्रार्थवादगतानित्यसंयोगपरिहारन्यायेन अनादिवेदविषयत्वेन नावधार्यते । वा. १।३।८।२४ पृ. २५७. मन्त्रार्थवादस्थानित्यसंयोगस्य परिहारे यो न्यायः 'नित्यानित्यसंयोगविरोधरूपः' तेनेत्यर्थः । सु. पृ. २६१. 'सुकार्यं न्यायस्य स्वरूपमुक्तं, वार्तिके तु विनियोग उक्तः । के.

* अनियतनिमित्तकः नैमित्तिकमुद्दिश्यार्थविकारविधिः 'यस्याहिताग्नेरग्निर्गृहान् दहेत्, अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' इति । बाल. पृ. ६४, * अनियतनिमित्तकं नैमित्तिकं वैदिकं कर्म द्विविधं दोषनिर्घातार्थं अदोषनिर्घातार्थं चेति । आद्यं यथा 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् अग्नये पथिकृतेऽष्टाकपालं निर्वपेत्' इति, 'योऽमावास्यां पौर्णमासीं वाऽतिपातयेत् वैश्वानरं द्वादशकपालं निर्वपेत्' इति च । दोषनिर्घातार्थत्वादेव एकार्थत्वादनयोर्विकल्पो द्वादशे ( १२।३।५।१६ ) 'प्रायश्चित्तेषु चैकार्थ्यात्' इत्यधिकरणे वक्ष्यते । द्वितीयं यथा 'भिन्ने जुहोति' इति द्वादशे एव 'समुच्चयस्त्वदोषनिर्घातार्थेषु' ( १२।३।६।१७ ) इति पूर्वापवादार्थेऽधिकरणे प्रतिपादितम् । पृ. ८५, * अनियतफलकं काम्यं वैदिकं कर्म यथा–'चित्रया यजेत पशुकामः' इत्यादि । पृ. ८६.

* अनियमः भेदस्य भिन्नकर्मसु देशकर्त्रोः । वा. ११।३।१२।३२.

♖ अनियमः स्यादिति चेत् । ११।४।२।४ ॥

राजसूयोपक्रमे ये ऋत्विजः, त एव समाप्तिपर्यन्तं इति अनियमः न नियमः स्यात् । उत्तरोत्तरं कर्मणि अन्येऽपि स्युः इति चेत् ।

नोपदिष्टत्वात् । ५ ॥

सिद्धान्तमाह । न अनियमः । किंतु ये एव उपक्रमे, ते एव आ समाप्तेः स्युः, उपदिष्टत्वात् । आदावेव वरणकाले यजमानेन ऋत्विजामुपदिष्टं 'अनेन मां राजसूयसंज्ञकेन कर्मसमुदायेन याजयत' इति । तस्मात् नियमः ।

लाघवापत्तिश्च । ६ ॥

कर्तृनियमे लाघवस्य आपत्तिः प्राप्तिः सिद्धिर्भवति । प्रतिकर्म भेदोपादाने तु गौरवं स्यात् । तस्मान्नियमः ।

प्रयोजनैकत्वात् । ७ ॥

आनतिरूपस्य दक्षिणानां प्रयोजनस्य एकत्वात् अवयवानत्या समुदायानतिः सिध्यति । तस्मात् त एव कर्तारः स्युः ।

**विशेषार्थो पुनःश्रुतिः । ८ ॥**

सकृद्वा प्रत्यवयवं वेति उभयथा परिक्रये प्राप्ते 'वामनो दक्षिणा' 'अयुतं ददाति' इत्यादिः तत्तदवयवे पुनःश्रुतिः परिक्रयविशेषार्था । अवयवे दक्षिणादानं अदृष्टार्थं इति भावः । तस्मात् राजसूयोपक्रमे वृतानामेव ऋत्विजां राजसूयसमाप्तिपर्यन्तं नियमः इति सिद्धान्तः । **के.**

* **अनियमेन** उपसंहार्यस्य उपसंहारविषये प्राप्तौ उपसंहाररूपः प्रतिषेधः यथा– 'यजुर्युक्तं रथमध्वर्यवे ददाति' इति । **बाल.** पृ. १७, * अनियमेन तत्र चान्यत्र च प्राप्तौ परिसंख्याविधिः । यथा स्मार्ते 'पञ्च पञ्चनखाः भक्ष्याः' इति । पृ. २६.

**अनियमन्यायः** । ( ३।३।१८।३१ ब्र. सू. ) अनियमन्यायस्य प्रतीकव्यतिरिक्तेष्वपि उपासनेषु उपपत्तेः । **शांभा.** ४।१।६।१५. 'अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्' इति सूत्रम् । देवयानगतिः यासु उपासनासु श्रूयते तत्रैव ज्ञातव्या, उत यासु शाण्डिल्यविद्यादिषु न श्रूयते तत्रापि ज्ञातव्या इति विचारे सर्वासां उपासनानां एषा गतिर्भवति इति ज्ञेयम् । एवं **अनियमो गतेः** । यास्वेव श्रूयते उपकोसलविद्यादिषु तास्वेवेति **न नियमः** । कुत एतत् ? 'तद्ये इत्थं विदुः ये चेमे अरण्ये श्रद्धा तप इत्युपासते' इति शब्देन श्रुत्या, अनुमानेन 'शुक्लकृष्णे गती' इति स्मृत्या च तथा अनियमः सिध्यति इति न्यायसूत्रार्थः । अनेन न्यायेन प्रतीकोपासनाभिन्नासु सर्वासु अहंग्रहोपासनासु देवयानगतिः अनियमेन ज्ञातव्येत्युक्तम् । **के.** * यत्तु **अनियमन्यायात्** अविशेषेण सर्वेषां विकारालम्बनानां एषा गतिरिति, तत् दूषयति (भाष्यकारः) । **न्यायनि.** ४।३।६।१५ ब्र. सू.,* सर्वेषु उपासनेषु अनियमन्यायात् विकारालम्बनेषु विशेषासिद्धिः पूर्वपक्षे । ४।३।६।१५ ब्र. सू., *प्रतीकालम्बनान् न नयति, विकारालम्बनांस्तु नयति इति उभयथोपगमे सति '**अनियमः सर्वेषां**' **इति न्यायस्य** न कश्चिद्दोषः । सर्वशब्दस्य प्रतीकालम्बनातिरिक्तविषयत्वसिद्धेः । ४।३।६।१५ ब्र. सू., * **अनियमाधिकरणन्यायं** गुणोपसंहारस्थं हेतुत्वेन सारयति ( भाष्यकारः ) । ४।३।६।१५ ब्र. सू. ( अयमेव अनियमन्यायः ब्रह्ममीमांसास्थः ) ।

**अनियमोऽन्यत्र** । ५।१।३।३ ॥

क्रमः क्व चिन्नियामकः । अन्यत्र तु क्व चित् क्रमस्य अनियमः न नियमः । यथा दर्शपूर्णमासयोः याजमानानां प्रयाजानुमन्त्रणादीनां नानाशाखासमाम्नातानां मन्त्राणाम् । सिद्धान्तसूत्रमेवेदम् । **के.**

**अनियमोऽविशेषात्** । ६।७।११।२३ ॥

आधाने दक्षिणा एका गौः, षट्, द्वादश, शतं, सहस्रं अपरिमितं वा गावः इत्युक्तम् । तत्र अपरिमितपदेन का चित् संख्यैव ग्राह्या इति पूर्वाधिकरणे साधितम् । सा तु संख्या सहस्रात् न्यूना अधिका वा का चित् ग्राह्या इति अनियमः स्यात् अविशेषात् विशेषस्य अनुक्तत्वात् । इति पूर्वः पक्षः ।

**अधिकं वा स्याद्, बह्वर्थत्वादितरैः संनिधानात् । २४ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह । 'सहस्रं देयं, अपरिमितं देयं' इत्यत्र अपरिमितशब्देन सहस्रात् न्यूनं समं वा न ग्राह्यं, किंतु अधिकमेव ग्राह्यं, बह्वर्थत्वात् अपरिमितशब्दस्य । अपरिमितशब्दस्तावत् बहुत्वार्थकः । बहुत्वं च सापेक्षं पूर्वापेक्षया ग्राह्यम् । तत्र इतरैः एकत्वादिभिः सहस्रान्तैः संख्याविशेषैः संनिधानात् सहस्रापेक्षं बहुत्वं ग्राह्यम् । तस्मात् 'अपरिमितं देयं' इत्यनेन सहस्रादधिकं देयं इत्यर्थो ग्राह्य इति सिद्धान्तः ।

**अर्थवादश्च तदर्थवत् । २५ ॥**

आधाने दक्षिणासु 'सहस्रं देयं अपरिमितं देयं' इति अपरिमितशब्दः सहस्राधिकत्ववाची इति सिद्धान्ते अर्थवादसाफल्यरूपहेत्वन्तरप्रतिपादनार्थं सूत्रम् । चशब्दः हेतुसमुच्चयवाची । अपरिमितशब्दस्य अत्र सहस्राधिकसंख्यावाचकत्वे सति इति तच्छब्दार्थः । 'उत्कृष्टं वै अपरिमितं' इति अपरिमितत्वस्य सहस्रात् उत्कृष्टतां ब्रुवन् अर्थवादः, 'क्षयिष्णु वै परिमितं' इति च सहस्रान्तस्य क्षयिष्णुत्वं ब्रुवन्नर्थवादः अर्थवत् सामान्ये नपुंसकं, अर्थवान् सफलः । तस्मात् अत्र

अपरिमितत्वं सहस्राधिकत्वं इति सिद्धान्तः । **के.**

* **अनियमोऽविशेषात्** । अपरिमितशब्दः किं अनियतबहुत्वार्थकः, उत सहस्राधिकबहुत्वार्थः इति संशये दक्षिणाकल्पान्तरपरसहस्रसंनिधानेन विशेषणासंभवात् अनियतबहुत्वार्थः । **इति प्राप्ते**, अपरिमितशब्दस्य प्रतियोगिसापेक्षस्वभावबहुत्वार्थकत्वात् तदाकाङ्क्षया अन्यार्थसंनिधानमपि विशेषकम् । अतः संनिहितसहस्राधिकबहुत्वार्थः इति 'अधिकं वा स्याद् बह्वर्थत्वादितरैः संनिधानात्' इति सूत्रेण सिद्धान्तितम् । **पराक्रमः** २७।२.

**अनियमोऽविशेषात्। १२।४।१२।३३ ॥**

अहीने यजमानगणे सति शुक्रान्वारम्भणं औदुम्बरीसंमानं इत्यादीनि परार्थानि कर्माणि **अनियमेन** यः कश्चित् यजमानः कुर्यात् । एवं यजमानस्य अनियमः स्यात्, अविशेषात्, नात्र शब्दकृतो वा अर्थकृतो वा विशेषो गृह्यते । तस्मात् अहीने अनियमः इति सिद्धान्तः । **के.**

* **अनिरुप्तेऽपि चन्द्राभ्युदये अभ्युदितेष्ट्यनुष्ठानम्** । **भा.** ६।५।३।१२–१५, * अनिरुप्तेऽपि अभ्युदये वैकृतीभ्य एव देवताभ्यो निर्वापः कर्तव्यः । ६।५।४।१६–१७.

**अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्याश्मरथ्यस्तण्डुलभूतेष्वपनयात् । ६।५।४।१६॥**

दर्शकल्पनया चतुर्दश्यामेव यागे प्रवृत्ते चन्द्रदर्शने च सति दर्शेष्टिरेव अभ्युदितेष्टित्वेन कर्तव्या । तत्र प्राकृतदेवतानामपनयः देवतान्तराणां च संयोगः कर्तव्यो भवति। तत्र अनिरुप्ते निर्वापे अकृते, निर्वापात् प्राक् अभ्युदिते चन्द्रे दृष्टे प्राकृतीभ्य एव देवताभ्यः निर्वपेत् प्राकृतदेवता एवोद्दिश्य निर्वापः कर्तव्यः । इति आश्मरथ्यः आचार्यो मन्यते स्म । कुतः ? तण्डुलभूतेषु व्रीहिषु देवतानां अपनयात् अपनयस्य कर्तव्यत्वात् । निर्वापोत्तरं अवघाते कृते तण्डुला निष्पद्यन्ते । एवं व्रीहिषु तण्डुलभूतेषु सत्सु देवतानां अपनय उक्तः । निर्वापात् प्राक् तु देवताऽपनयादि नोक्तम् । तस्मात् निर्वापात् प्राक् देवताऽपनयाभावात् प्राकृतीभ्य एव देवताभ्यो निर्वापः इति पूर्वः पक्षः ।

**व्यृद्धभाग्भ्यस्त्वालेखनस्तत्कारित्वाद् देवताऽपनयस्य । १७ ॥**

पूर्वोक्तं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । ऋद्धं ऋद्धियुक्तं विहितकाले कृतं कर्म । यत्तु अकाले कृतं कर्म, तत् वि–ऋद्धं व्यृद्धम् । व्यृद्धं कर्म या देवता भजन्ते ता व्यृद्धभाजः । ताभ्यः व्यृद्धभाग्भ्यः वैकृतीभ्यो देवताभ्यः 'अग्निर्दाता, इन्द्रः प्रदाता, विष्णुः शिपिविष्टः' इत्येताभ्यो निर्वपेत् इति आलेखनः आचार्यो मन्यते स्म । कुतः ? देवतापनयस्य तत्कारित्वात् व्यृद्धकारितत्वात् अकालप्रवृत्तकर्मकारितत्वात् । अकाले प्रवृत्तिरभूत् इति पूर्वदेवता अपनीयन्ते । तच्च निर्वापात् प्रागपि संजातमेव । इति निर्वापात् प्रागपि चन्द्रोदये जाते वैकृतीभ्य एव निर्वापः, न प्राकृतीभ्य इति सिद्धान्तः ।

अत्र व्यूर्ध्वभाग्भ्यः इति पाठः प्रायः सर्वत्र । 'व्यूर्ध्वभाग्भ्यः हविरशनभाग्भ्यो वैकृतीभ्यः इत्यर्थः' इति **सुबोधिनी** । तत्र व्यूर्ध्वशब्देन हविरशनं व्यूर्ध्वभाक्शब्देन वैकृतत्वं च कथमुच्यते इति न जानीमः । 'प्रवृद्धकालभाग्भ्यः' इति **कुतूहलसूत्रे** लिखितं, 'प्रवृद्धकालप्रवृत्तं हविः तद्भाग्भ्यः' इति कुतूहलमूले च लिखितम्। तत्र चन्द्रोदयोत्तरत्वात् कालस्य प्रवृद्धत्वं शक्यते वक्तुम्। तादृशकालिकं हविस्तु लक्षणयैव गृह्येत । यद्यपि भाष्येऽपि व्यूर्ध्वभाग्भ्य इत्येव पाठः । तत्कारित्वात् इति च 'अकाले तन्त्रप्रवृत्तिकारितत्वात्' इति व्याख्यातं, तेन व्यूर्ध्वशब्दस्य अकालतन्त्रप्रवृत्तत्वं इत्यर्थो ज्ञातुं शक्यते तथापि व्यृद्धभाग्भ्यः इति य–पाठमेव साधीयांसं मत्वा स्वीकृतवन्तो वयमिति । **के.**

**अनिर्दिष्टार्थाः प्रत्ययाः त्रिष्वपि कालेषु भवन्ति इति न्यायः ।**

'पुराणानां कर्ता सत्यवतीसुतः' इति मूलम् । तत्र टीका–कर्ता इति तृच्–प्रत्ययान्तं रूपम् । अतः 'अनिर्दिष्टार्थाः०' इति न्यायात् आसमाप्तेर्वर्तमानकालत्वाच्च अतीतवर्तमानभविष्यत्पुराणानां कर्तृत्वं अविरुद्धम्। **काशीखण्डे** रामानन्दः १।४.

* **अनिषिद्धसंभवे** च निषिद्धोपादानानाक्षेपः । **सु.** ३।७ पृ. ३४.

* **अनिष्टप्राप्तिः** प्रतिषिद्धकर्मणामनुष्ठाने सति भवति । **वि.** ६।२।५.

**अनिष्ट्वाग्रयणस्य ग्राम्यधान्यभक्षणनिषेधः ॥**

'तस्मान्नानिष्ट्वाऽऽग्रयणेन नवस्याशितव्यम्' इति निषेधः फाल्कृष्टारण्याशनस्यैव, न व्रीहियवाशनस्य 'याः फाल्कृष्टास्तासामितरेण' इति वाक्यशेषे फाल्कृष्टकीर्तनेन विशेषे व्यवस्थापनात् । तस्मात् फाल्कृष्टातिरिक्तानां ग्राम्याणां भक्षणं नियमः । **इति प्राप्ते,** अशनस्य द्रव्यसामान्येन करणासंभवेन प्रवृत्तेर्विशेषैकविषयकत्वेन सामान्यस्य विशेषे पर्यवसानाय वाक्यशेषावश्यकत्वेऽपि निवृत्तेर्नवधान्यसामान्याशनविषयकत्वानुपपत्तेरभावेन यवानाकाङ्क्षितस्य वाक्यशेषेणासमर्पणात् फाल्कृष्टार्थवादः छत्रिवत् लक्षणया स्तावकमात्रमिति सर्वग्राम्याणामेष भक्षणप्रतिषेधः । **संकर्ष.** ३।१।१०.

**अनिष्ट्वाग्रयणस्यापि शमीधान्यानां न निषेधः ॥**

मुद्गादिशमीधान्यानामपि पक्वौषधित्वाविशेषेण **निषेधे प्राप्ते,** तेषामयागयोग्यत्वादेव न निषेधः । **संकर्ष.** ३।१।१२.

**अनिष्ट्वाग्रयणस्यापि शाकापक्वौषधीनां भक्षणं यथाकामम् ॥**

'सस्यं नाश्नीयाद्' इति वचनान्तरेण शाकादीनामपि भक्षण**निषेधे प्राप्ते,** तेषां यागयोग्यत्वाभावेन 'देवा ओषधीषु पक्वास्वाजिमीयुस्तानिन्द्राग्नी प्रथममुदजयताम्' इत्युपक्रम्य नवाशननिषेधेन देवेभ्यो दातुं योग्यानां धान्यानां पक्वानामेव तैस्तेभ्योऽनिष्ट्वा भक्षणस्य निन्दया पक्वशाकानां हरितयवादीनां भक्षणे याथाकाम्यम् । **संकर्ष.** ३।१।११.

* **अनीकवती इष्टिः** चातुर्मास्यगतसाकमेधावयवभूता प्रातःकर्तव्या सद्यस्काला । 'अग्नयेऽनीकवते प्रातरष्टाकपालः' इति विहिता । **भा.** ५।१।११।१९–२२.

* **अनीक्षणसंकल्पादीनि** प्रजापतिव्रतानि पुरुषार्थानि । **भा.** ४।१।२।३–६.

* **अनीप्सितं कर्म** चतुर्विधम् । 'द्वितीया' इति बिन्दौ मणौ द्रष्टव्यम् । * अनीप्सितत्वस्य द्वितीयावाच्यत्वं सक्त्वधिकरणे ( २।१।४।११-१२ ) निषिद्धम् । **सु.** पृ. १०८७.

**'अनुकरणं हि शिष्टस्य साधु भवति' इति न्यायः ।** 'यथा लोके य एवमसौ ददाति, य एवमसौ यजते, य एवमसावधीते इति तस्याऽनुकुर्वन् दद्याच्च यजेत चाधीयीत च सोऽभ्युदयेन युज्यते' इति 'ऋलक्' सूत्रमहाभाष्ये सुविस्तरः इति । **साहस्री.** ९९७.

* **अनुकर्षः** परस्य पुरस्तात् भवति । **के.**

**अनुक्तमप्यूहति पण्डितो जनः, इति न्यायः ।** विचक्षणो जनः अकथितमपि विषयमनुभवतीति विषयेऽस्य प्रचारः । उक्तं च 'उदीरितोऽर्थः पशुनाऽपि गृह्यते हयाश्च नागाश्च वहन्ति चोदिताः । अनुक्तमप्यूहति पण्डितो जनः परेङ्गितज्ञानफला हि बुद्धयः ॥' इति । **साहस्री.** ६४९.

* **अनुक्रमेणापच्छेदे** उत्तरापच्छेदनिमित्तकं प्रायश्चित्तं कर्तव्यम् । **वि.** ६।५।१९.

* **अनुगमनं** इत्यादीनां 'गुरुरनुगन्तव्यः अभिवादयितव्यश्च' 'वृद्धवयाः प्रत्युत्थेयः संमन्तव्यश्च' इति विहितानां निमित्तावृत्तौ आवृत्तिः । **भा.** ९।२।१०।३०,

* **अनुज्ञा** च 'उपह्वयस्व' इति मन्त्रेण । 'उपहूतः' इति मन्त्रेण च अनुज्ञापनम् । **भा.** ३।५।१६।४२, * अनुज्ञा च सोमभक्षणे न्यूनाधिक्यदोषपरिहारार्थं एकपात्राणामेव । ३।५।१७।४३, * अनुज्ञा च सोमभक्षणे वैदिकमन्त्रेण न तु लौकिकोक्त्या । ३।५।१५।४१.

* **अनुज्ञातभक्षणम्** । अग्निष्टोमे चमसस्थं सोमं हुत्वा सदसि भक्षयन्ति । तत्र एकैकश्चमसः बहुभिर्ऋत्विग्भिर्भक्ष्यते । न च तेन उच्छिष्टा भवन्ति, तथा विधानात् । भक्षणकाले च स चमसो यस्य होत्रादेर्भवति तस्यानुज्ञा गृह्यते 'होतरुपह्वयस्व' इत्यादिमन्त्रेण, सोऽपि च 'उपहूतः' इति मन्त्रेण अनुज्ञां ददाति । तदिदं अनुज्ञातसोमभक्षणं नाम । **के.**

* **अनुज्ञापनम्** । एकपात्रे सोमे साधारणे संस्कर्तव्ये 'समं स्यादश्रुतत्वात्' ( १०।३।१३।५३ ) इतिन्यायेन समो विभागः प्राप्नोति । तत्र अविभज्य पीयमाने कदा चित् अन्येन पातव्यं अन्यः पिबेत् । तत्र अनुज्ञापनं संभवति 'त्वयार्धं पातव्यं मयार्धं, कदा चिदहं अभ्यधिकं न्यूनं वा पिबेयं तत् अनुज्ञातुमर्हसि' इति । 'एकपात्रेण त्वया सह आचरन् अहं तव चित्तप्रसादनं व्याहन्यां' इति संभवत्यनुज्ञा । **भा.** ३।५।१७।४३, * अनुज्ञापनस्य च एतद्रूपं, यत्र अन्येन कर्तव्यं अन्यश्चि-कीर्षेत् सः 'अनुमन्यस्व' इति ब्रूते । सहभोजनादि वा आचरितुकामः चित्तं अन्यस्य अनुकूलयति । ३।५। १७।४३.

* **अनुज्ञाप्यैव** एकपात्रे अनेकैः सोमो भक्षयितव्यः । **भा.** ३।५।१४।४०.

**⌛ अनुत्पत्तौ तु कालः स्यात्, प्रयोजनेन संबन्धात् । ४।३।१४।३६ ॥**

ज्योतिष्टोमे 'प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति पठितम् । अत्र परिधिप्रहरणं हारियोजनहोमाङ्गत्वेन विधीयते, किंवा परिधिप्रहरणोत्तरं हारियोजनहोमः इति होमकालो विधीयते इति चिन्तायां सिद्धान्तमाह । तत्र तावन्नेदमुत्पत्तिवाक्यं, अन्यतः सिद्धत्वात् । तथा च अनुत्पत्तौ उत्पत्तिवाक्यभिन्ने अस्मिन् वाक्ये कालः स्यात्, कालस्यैव विधानमेतत् । प्रहरणहोमयोः प्रयोजनेन ज्योतिष्टोमापूर्वेण फलेन सह संबन्धात् परस्परं संबन्धो नास्ति । तस्मात् काल एव तेन वाक्येन उच्यते । पूर्वसूत्रोक्तोत्पत्तिवैलक्षण्यार्थः तुशब्दः । **के.**

* **'अनुत्पाद्य सुतं** मोहान्मोक्षमिच्छन् पतत्यधः' इत्यविरक्तस्य प्रत्यवायश्रवणात् प्रजोत्पादनं नित्यम् । **भाट्ट.** ६।२।११. * 'अनुत्पाद्य सुतान् न लोकं गच्छति' इति प्रजोत्पादनं काम्यमिति चेत्, मैवम् । 'अनुत्पाद्य सुतं मोहान्मोक्षमिच्छन् पतत्यधः' इति स्मृतेः प्रजोत्पादनमपि सोमवत् विद्यावच्च नित्यम् । **वि.** ६।२।११.

* **अनुद्दिश्यापि** क्रियमाणानि प्रकृतिवत् कृतानि भवन्ति । **भा.** १२।१।१।३ पृ. २२१९.

* **अनुनिर्वाप्याः** आगन्तवः । **भा.** १२।३।२।४. * अनुनिर्वाप्याः कस्य चित् यागस्य समनन्तरं अन्ये के चित् तत्र विहिता भवन्ति । तयोश्च उपकार्योपकारकभावो भवति । नचापि तत्र पूर्वे एव न उपकारः । यथा 'अग्नीषोमीयस्य पशुपुरोडाश-मनु देवसुवां हवींषि निर्वपति' इति । यथा वा अनुबन्ध्यायां पशौ देविकाहवींषि अनुनिर्वाप्याणि । निर्वप्तुं निर्वापं कर्तुं योग्यानि कर्माणि निर्वाप्याणि । कं चित् यागमनु निर्वाप्याणि अनुनिर्वाप्याणि । तत्र 'अनु निर्वपेत्' 'अनु निर्वपति' इति विधानं स्यात् तानि अनुनिर्वाप्याणि । **के.**

**⌛ अनुनिर्वाप्याधिकरणम्** । अग्निचयने देवसुवां हविःषु पशुपुरोडाशतन्त्रस्य प्रसङ्गः ॥

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात् । १२।३।२।३ ॥**

**भाष्यं**—अग्नौ श्रूयते 'अग्नीषोमीयस्य पुरोडाशमनु देवसुवां हवींषि निर्वपति' इति । अनुबन्ध्यायामपि देविकाहवींषि । तत्र भूयस्त्वेन तन्त्रं नियम्यते, अनुनिर्वाप्याणां बहुत्वात् । तत्तन्त्रे पशुपुरोडाशे प्रसज्येत । किंच यत् स्विष्टकृच्छब्दकं स्विष्टकृतो वचनं दृश्यते पशुपुरोडाशस्य देविकाहविषां च 'अग्नये स्विष्टकृते समवद्यति' इति, तत् अनुनिर्वाप्याणां तन्त्रे उपपद्यते । यदा तु पशुपुरोडाशतन्त्रं, तदा अस्विष्टकृच्छब्दकं स्यात् । तस्मादनिरुक्तं स्यात् ।

**आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात् । ४ ॥**

**भाष्यं**— आगन्तवोऽनुनिर्वाप्याः श्रुतिविशेषात् । एवं हि श्रूयते 'पशुपुरोडाशमनु निर्वपति' इति । एवं श्रुते पूर्वं पशुपुरोडाशः, पश्चादनुनिर्वाप्या भवन्तीति स मुख्यः, इतरे तु जघन्याः । अतस्तेषामागन्तुकत्वात् इतरस्य च मुख्यत्वात् पशुपुरोडाशः स्वधर्मा स्यात् ।

**स्वस्थानत्वाच्च । ५ ॥**

**भाष्यं**—अपि च पशुपुरोडाशस्थानं यत् वपाप्रचारात् परतः, अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं प्रधानदेशत्वात् तेषाम् । यदि अनुनिर्वाप्याणां तन्त्रं स्यात्, ततः

तस्मिन् स्थाने तदङ्गानि क्रियेरन् पशुपुरोडाशाङ्गानि अन्यस्थानानि भवेयुः। तेषां स्वस्थानत्वाय पशुपुरोडाशस्य तन्त्रं कर्तव्यम्।

**स्विष्टकृच्छ्रवणान्नेति चेत्। ६॥**

**भाष्यं**—इति यदुक्तं तत् परिहर्तव्यम्।

**विकारः पवमानवत्। ७॥**

**भाष्यं**— अत्रोच्यते। एवं च पशुपुरोडाशस्य तन्त्रेण अनिरुक्ते स्विष्टकृति प्राप्ते विकारो वचनात् भविष्यति। 'अग्नये स्विष्टकृते समवद्यति' सस्विष्टकृच्छब्दकं वचनं कर्तव्यमिति। यथा 'अग्नये पवमानाय निर्वपति' इति वचनात् पवमानशब्दको निर्वापः क्रियते एवमिहापि।

**अविकारो वा, प्रकृतिवच्चोदनां प्रति भावाच्च। ८॥**

**भाष्यं**— अविकारः अस्विष्टकृच्छब्दकं वचनं कर्तव्यं प्रकृतिवत् अतिदेशात्। यत्तु वचनादिति, नात्र विकारो विधीयते। किं तर्हि समवदानं देविकाहविषां 'अग्नये स्विष्टकृते समवद्यति' इति। तत्र विकारे अन्यस्मिन् विधीयमाने वाक्यं भिद्यते (भिद्येत)। कथं तर्हि स्विष्टकृद्वचनं? चोदनां प्रति भावाच्च। दर्शपूर्णमासयोः या अस्ति स्विष्टकृच्चोदना, सा स्विष्टकृच्छब्दिका, तत् प्रति एतद्वचनं तदुपलक्षणाय। तस्मादग्नये योऽसौ शेषभाक् इति यावदुक्तं स्यात्, तावत् अग्नये स्विष्टकृते इति। यथा 'शरमयं बर्हिर्भवति' इति 'नवनीतमाज्यं' इति प्राकृतं कार्यं लक्ष्यते प्रकृतिलिङ्गेन द्रव्यशब्देन, एवमिहापि स्विष्टकृच्छब्देन प्राकृती लक्षणया देवता अनूद्यते।

**शा**—अनुनिर्वाप्याणां स्वाधर्म्ये पुरोडाशस्य प्रसङ्गित्वं विपरीतं वा इति संशये भूयस्त्वात् अनुनिर्वाप्याणाम्। **इति प्राप्ते** उच्यते। नहि तेषां सह चोदना, नापि सहोपक्रमः। किंतु पशुपुरोडाशतन्त्रे प्रक्रान्ते अनुनिर्वाप्याणां तन्त्रमध्ये विधानात् विस्पष्टं प्रसङ्गित्वं इतरस्य च तन्त्रित्वं, तन्त्रिधर्मश्च प्रसङ्गिना उपजीवनीयः इति पशुपुरोडाशस्य स्वाधर्म्यम्।

**सोम**—पूर्वत्र विरोधाभावात् भूयस्त्वस्य अकिंचित्करत्वेऽपि इह भूयस्त्वेन व्यवस्था इत्युत्थितेः **संगतिः**। अत्र अनुनिर्वाप्याणां तन्त्रित्वं, उत पुरोडाशस्य इत्येवं न विचार्यते। बहूनामपि तन्त्रमध्यपातेन प्रसङ्गित्वस्य अविचारितसिद्धत्वात्। किंतु पुरोडाशस्यैव तन्त्रित्वं अनुनिर्वाप्याणां प्रसङ्गित्वं इति सिद्धं कृत्वैव धर्मविप्रतिषेधे किं भूयसां प्रसङ्गिनां धर्मो ग्राह्यः, उत एकस्यापि तन्त्रिणो धर्मः इत्येवं विचार्यते इति ध्येयम्। प्रसङ्गविधेः तन्त्रविध्युपजीवनेन प्रवृत्त्या तन्त्रिणः प्राबल्यात् तद्धर्म एव ग्राह्य इति। पशोः पुरोडाशस्य अनुनिर्वाप्याणां च धर्मविप्रतिषेधे पशोः स्वाधर्म्यम्। पुरोडाशस्य अनुनिर्वाप्याणां च धर्मविप्रतिषेधे पुरोडाशस्य स्वाधर्म्यं इति बोध्यम्।

**वि**— 'स्वाधर्म्यमनुनिर्वाप्येष्वस्ति नो वा, बहुत्वतः। अस्ति, मैवं तन्त्रमध्ये विहितत्वात् प्रसङ्गिता॥'

**भाट्ट**— चयनादौ अग्नीषोमीयपुरोडाशानन्तरं 'अग्नीषोमीयस्य पुरोडाशमनु देवसुवां हवींषि निर्वपति' तथैव अनूबन्ध्यादौ 'देविकाहवींषि निर्वपति' इति च श्रुतम्। तदेषां अनुनिर्वाप्याणां हविषां बहुत्वात् तन्त्रित्वं पुरोडाशस्यैव तु पश्वपेक्षया क्लृप्तप्रसङ्गित्वस्य प्रसङ्गित्वम्। **यदि तु** अनुशब्दयोगात् 'वैमृधमनुनिर्वपति' इतिवत् उत्तरकालत्वप्रतीतेः तस्य च प्रयोगान्वयित्वात् पशुपुरोडाशप्रयोगविधिविहिताङ्गोपेतपशुपुरोडाशानन्तरं अनुनिर्वाप्याणां स्वाङ्गोपेतानां प्रयोगविधिः इति विभाव्यते, **तदा** अस्तु वैमृधवत् प्रयोगभेद एव इति नानयोर्मिथः तन्त्रप्रसङ्गिभावः। अतश्च **यथैव** वपायागोत्तरं पशुपुरोडाशप्रयोगविधानात् अन्यतः अलब्धोपकाराणां निर्वापस्विष्टकृदादीनां पशुपुरोडाशप्रयोगविधिविधेयानां वपायागोत्तरमेव करणं, **तथैव** देविकाहविषामपि स्वप्रयोगविधिविधेयनिर्वापस्विष्टकृदाद्यङ्गोपेतानां साङ्गपशुपुरोडाशोत्तरकालमेव करणं इति न मिथः प्रसङ्गः। उभयोरपि तु पशुतन्त्रमध्ये पाठात् पाताद्वा तदीयप्रयाजादिप्रसङ्गः। **इति प्राप्ते** नात्र पशुपुरोडाशवत् प्रयोगविधिः। तथात्वे तद्वदेव स्विष्टकृद्भेदापत्त्या शतपथे पशुपुरोडाशयागमभि-

धाय 'तस्य सोऽनिष्टः स्विष्टकृत् ' इत्यनेन अनिष्टस्विष्टकृत्त्वलक्षणं गुणं विधाय अनुनिर्वाप्यप्रधानकरणबोधकवाक्यसंदर्भानुपपत्तिः। तेनात्र अनुशब्देन अनुनिर्वाप्यपशुपुरोडाशयोः तत्तदङ्गप्रधानानां तत्तदङ्गप्रधानोत्तरत्वस्यैव विधानात् समानतन्त्रत्वस्यैव प्रतीतेः न तावत् द्वयोरपि प्रयोगभेदः। वपायागोत्तरकाले पुरोडाशयागप्रयोगविधौ तु न किं चिद् बाधकम्। प्रत्युत तदीयस्विष्टकृति अग्नेर्निर्गुणत्वविधिः प्रयोगभेदतात्पर्यग्राहक एव। ततश्च अनुनिर्वाप्येषु पशुपुरोडाशनिर्वापाद्येकपदार्थं कृत्वा तदीयनिर्वापाद्येकैकपदार्थकरणं, स्विष्टकृति तु क्रमेण सर्वोत्तरार्थानवदाय सकृत्करणं इति वस्तुस्थितिः। तदिह अविरुद्धाङ्गेषु तन्त्रतैव। विरुद्धेषु तु सत्यपि देविकाहविषां बहुत्वे अनुशब्देन पशुपुरोडाशानुगुणत्वप्रतीतेः तत्तन्त्रपातावगमात् तत्प्रयुक्ताङ्गोपजीवनावगमाद्वा प्रसङ्गित्वमेव। अत एव अनुनिर्वाप्यप्रधानकरणोत्तरं ' अग्नये स्विष्टकृते समवद्यति ' इति उक्त्वा ' अग्नये स्विष्टकृते प्रेष्य ' इति मैत्रावरुणं प्रति प्रैषाम्नानमपि **शतपथब्राह्मणे** संगच्छते। अनुनिर्वाप्यतन्त्रित्वे तु होतारं प्रत्येव ऐष्टिकातिदेशेन ' अग्निं स्विष्टकृतं यज ' इति प्रैषापत्तिः। अत एव पशुपुरोडाशतन्त्रित्वेन स्विष्टकृति निर्गुणस्यैवाग्नेः प्राप्तौ स्विष्टकृच्छब्दप्रतिप्रसवार्थत्वेन ' अग्नये स्विष्टकृते समवद्यति ' इत्यस्य सार्थक्यम्। यत्तु **सूत्रकारेण** एवंविधं सार्थक्यमुक्त्वा धात्वर्थ एवात्र विधीयते, स्विष्टकृच्छब्दस्तु अविवक्षितार्थः इति प्रकारान्तरमुक्तं तत् प्रौढिमात्रम्। तस्मात् पुरोडाशोऽपि स्विष्टकृदादिविषये तन्त्री, अनुनिर्वाप्याः प्रसङ्गिनः इति सिद्धम्। **वस्तुतस्तु काण्वशाखायां** ' अग्निं स्विष्टकृतं यज ' इति प्रैषाम्नानात् तेषामपि तन्त्रित्वावगतेः विकल्प एव युक्तः।

**मण्डन**— 'न स्वातन्त्र्यं देवसूनां परार्थम्। ' परार्थं पशुपुरोडाशार्थम्।

**शंकर**— ' देवसूषु प्रसङ्गिता। '

*** अनुनिर्वाप्याधिकरणम्। अग्निचयने ' अग्नीषोमीयस्य पशुपुरोडाशं अष्टौ देवसुवां हवींषि अनुनिर्वपति ' इत्यत्र किं अग्नीषोमीयपशुधर्माः एकादश**-प्रयाजादयः ग्राह्या उत अनुनिर्वाप्यधर्माः तद्धर्मा इडादयः इति संशय्य भूयोऽनुग्रहन्यायेन ( १२।२।३।२९ ) अनुनिर्वाप्यधर्मग्रहे प्राप्ते, यत्र सर्वेषां तन्त्रिता न गृह्यते विशेषः, तत्र मुख्यानुग्रहन्यायापवादः (१२।२।१६। ३५ ) भूयोऽनुग्रहः। यत्र तु एकः तन्त्री, इतरे प्रसङ्गिनः इति गृह्यते विशेषः, तत्र एकस्यापि तन्त्रिण एव धर्मा ग्राह्याः, बहूनामपि प्रसङ्गिनां तत्तन्त्रोपजीवित्वेन स्वधर्माप्रयोजकत्वात् इति निर्णीतम्। **पराक्रमः** ५६।१.

**अनुनिर्वाप्येषु भूयस्त्वेन तन्त्रनियमः स्यात्। १२।३।२।३ ॥**

**अग्निचयने** ' अग्नीषोमीयपुरोडाशमनु अष्टौ देवसुवां हवींषि निर्वपति ' इत्यनेन उक्तेषु अनुनिर्वाप्येषु पशुपुरोडाशतन्त्रमध्यपातित्वेऽपि तेषां भूयस्त्वेन अनुनिर्वाप्यतन्त्रस्य अनुष्ठानेन पशुपुरोडाशानां प्रसङ्गः इति अनुनिर्वाप्यतन्त्रस्य नियमः स्यात् इति पूर्वः पक्षः।

**आगन्तुकत्वाद्वा स्वधर्मा स्याच्छ्रुतिविशेषादितरस्य च मुख्यत्वात्। ४ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति। ' अनुनिर्वपेत् ' इति अनुशब्दरूपात् श्रुतिविशेषात् अनुनिर्वाप्याणां देवसुवां देविकाहविषां च आगन्तुकत्वात् अमुख्यत्वात्, इतरस्य पशुपुरोडाशस्य च मुख्यत्वात्, पशुपुरोडाशः स्वधर्मा स्यात्। स्वस्थाने एव तस्य धर्माः कर्तव्याः। स्वे स्वीयाः धर्माः यस्य स स्वधर्मा, अनिच् समासान्तः। तस्मात् पुरोडाशस्य तन्त्रं अनुनिर्वाप्यैः न नियम्यते, न प्रसङ्गः। अग्निचयने ' अग्नीषोमीयस्य पुरोडाशमनु देवसुवां हवींषि निर्वपति ' अनुबन्ध्यायां च **देविकाहवींषि**। तत्रेदं विचारितम्।

**स्वस्थानत्वाच्च। ५ ॥**

अग्निचयने अग्नीषोमीयपशुपुरोडाशमनु देवसुवां हवींषि अनुबन्ध्यां चानु देविकाहवींषि भवन्ति। तत्र कस्य क प्रसङ्ग इति विचारः। पशुपुरोडाशस्थानं वपाप्रचारात् परतः। अङ्गैरपि तस्य तत्स्थानैरेव भवितव्यं, प्रधानदेशत्वाच्चेषाम्। यदि अनुनिर्वाप्याणां तन्त्रं स्यात्, ततः तस्मिन् स्थाने तदङ्गानि क्रियेरन्,

पशुपुरोडाशाङ्गानि अन्यस्थानानि भवेयुः । स्वस्थानत्वाच्च प्राबल्यम् । तस्मात् तेषां स्वस्थानत्वलाभाय पशुपुरोडाशस्य तन्त्रं कर्तव्यं इति सिद्धान्तः ।

**स्विष्टकृच्छ्रवणान्नेति चेत् । ६ ॥**

पूर्वपक्षी शङ्कते । स्विष्टकृच्छब्दकं स्विष्टकृतो वचनं पशुपुरोडाशस्य देविकाहविषां च श्रूयते 'अग्नये स्विष्टकृते समवद्यति' इति । तत् अनुनिर्वाप्याणां तन्त्रे उपपद्यते । यदा तु पशुपुरोडाशतन्त्रं, तदा अस्विष्टकृच्छब्दकं स्यात् । तस्मात् अनुनिर्वाप्यतन्त्रस्य नियमः, न पशुपुरोडाशस्य । इति चेत् पूर्वपक्षी ब्रूयात् ।

**विकारः, पवमानवत् । ७ ॥**

उच्यते । पशुपुरोडाशस्य तन्त्रेण अनिरुक्ते स्विष्टकृति प्राप्ते 'अग्नये स्विष्टकृते समवद्यति' इति वचनात् विकारः स्यात् सस्विष्टकृच्छब्दकं वचनं स्यात् । पवमानवत् यथा 'अग्नये पवमानाय निर्वपति' इति वचनात् पवमानशब्दको निर्वापः क्रियते तद्वत् । अन्वारुह्य वचनमिदं, न तु सिद्धान्तः ।

**अविकारो वा प्रकृतिवच्चोदनां प्रति भावाच्च । ८ ॥**

अग्निचयने देविकाहविःषु 'अग्नये स्विष्टकृते समवद्यति' इति श्रूयते । तत्र विकारः कर्तव्यः सस्विष्टकृच्छब्दकं वचनं कर्तव्यं इति पूर्वपक्षिणा **उक्तम्** । तत्र सिद्धान्ती आह । अविकारः, न विकारः कर्तव्यः, अस्विष्टकृच्छब्दकं वचनं कर्तव्यं इति । वा—शब्दः पूर्वपक्षनिरासाय । कथं तर्हि अग्नये स्विष्टकृते इति श्रवणं ? तत्राह चोदनां प्रति भावाच्च इति । दर्शपूर्णमासयोर्या स्विष्टकृच्चोदना, सा स्विष्टकृच्छब्दिका, तां प्रति अग्नये स्विष्टकृते इति श्रवणस्य भावः तदुपलक्षयितुं श्रवणं भवति । दर्शपूर्णमासयोः स्विष्टकृच्छब्दो वर्तते इति दर्शयितुं एतच्छ्रवणम् । न तु देविकाहविःषु स्विष्टकृच्छब्दविधानार्थम् । चयने अनुनिर्वाप्येषु देविकाहविःषु पशुपुरोडाशतन्त्रं अस्विष्टकृच्छब्दकं च वचनं कर्तव्यं इति सिद्धान्तः । **के.**

**अनुपदिष्टं सत् कथं शक्यं विज्ञातुं, असच्च कथं शक्यं प्रतिपत्तुं इति न्यायः ।**

स्पष्टार्थोऽयं प्रत्याहाराह्निके । ( तत्र नेदं लभ्यते ) **साहस्री.** ८२९.

* **अनुपनीतस्य** 'प्राङ्मुखोऽन्नानि भुञ्जीत' इत्यादिस्मार्तेषु कर्मसु नाधिकारः किंतु उपनीतस्यैव । **भा.** ६।२।६।२१–२२.

* **अनुपपत्तिश्च** प्रमाणान्तरविरोधः । **ऋजु.** पृ. ८६. * अनुपपत्तिप्रमाणक अपूर्वम् । **वा.** २।१।१।१ पृ. ३७४.

* **अनुपलब्धिः** अभावग्राहकं मानान्तरम् । **न च** अभावस्य केवलाधिकरणात्मतया प्रत्यक्षेण ग्रहः इति **वाच्यम्** । तस्य अधिकरणात्मकत्वे भूतले घटाभावः इति आधाराधेयभावप्रतीत्यनुपपत्तेः । किंच 'घटो नास्ति, नायं पटः' इत्यादिव्यवहारस्य सघटे प्रसङ्गात् न भूतलमात्रं विषयः । घटविविक्तस्य विषयत्वे अभावातिरिक्तस्य विवेकस्य असंभवात् सिद्धमभावेन । तद्ग्राहकं च योग्यानुपलब्धिर्मानान्तरम् । तथाहि, अभावो नेन्द्रियग्राह्यः, संनिकर्षाभावात् । न च विशेषणत्वादिः संनिकर्षः, तस्य प्रत्येकवृत्तितया उभयनिष्ठत्वाभावेन संनिकर्षत्वायोगात् । न च तत्र अभावस्मरणं, पूर्वं तदनुभवाभावात् । एवं च तस्य अनुपलब्धिरूपप्रमाणान्तरवेद्यत्वम् । योग्यानुपलब्धिश्च दर्शनयोग्यस्य अदर्शनं दर्शनाभावः इति यावत् । तेन घटाभावादिज्ञानं दर्शनाभावेन प्रतियोगिसत्त्वप्रसञ्जनप्रसञ्जितप्रतियोगिकेन 'यदि घटः स्यात्तदा दृश्येत' इत्याकारेण घटाभावो ज्ञायते । योग्यता च योग्यप्रतियोगिकत्वयोग्याधिकरणकत्वादिरूपा तत्तदभावग्रहे नानैव । अतः सिद्धं अभावग्राहकं अनुपलब्धिरूपं मानान्तरम् । अत्र प्रतियोगिप्रत्यक्षाभावः करणं, अनुमितिः अवान्तरव्यापारः, अभावज्ञानं फलम् । अर्थापत्तौ तु ज्ञानं करणं, अनुपपत्तिज्ञानं अवान्तरव्यापारः, उपपादकज्ञानं फलं इत्यनयोर्भेदमाहुः । अतः षट् प्रमाणानि । वस्तुतस्तु अर्थापत्त्यनुपलब्ध्योः अन्योन्यभेदं अनुमानाच्च भेदं नाकलयामः । **मणि.** पृ. ६१–६२. * अनुपलब्धिः **अस्माकं** ( भाट्टानां ) प्रमाणान्तरं, सा च सत्तामात्रेण इन्द्रियवत् भावमभावं वा गमयति । **रत्नाकरः** अनुमानं, **श्लो.** १६८. ( अनुपलब्धिविषयकं किं चित् अभावबिन्दौ

ऽभ्यन् । के. ) * अनुपलब्धिः न प्रमाणं इति प्राभाकराः । तत्र चिरन्तनपरिहारग्रन्थे ' यदि पञ्चैव प्रमाणान्यभविष्यन् ' इति भाष्यम् । तच्च प्राभाकरमतविरुद्धं भाति । तत्रेयं चर्चा ( के. ) बृहती— किमिदं ' यदि पञ्चैव प्रमाणानि अभविष्यन् ' इति ? ( शब्दातिरिक्तप्रमाणपञ्चकोपन्यासो न युक्तः । प्रमाणपञ्चकाङ्गीकारात् । ) इदमेवेदम् । ननु उक्तं अभावोऽपि प्रमाणाभाव इति । किमतो यद्येवं ? एतदतो भवति, पञ्च प्रमाणानि इति नोपपद्यते । ( समाधाता आह— ) शक्यते वा चतुर्भिर्नास्तीति वक्तुम् ? ( न शक्यते इत्यर्थः । आक्षेप्ता आह— ) प्रमाणं तर्हि अभावः । ( समाधाता— ) प्रमाणं वा प्रमाणाभाव इति शक्यते वक्तुं ( न शक्यते इत्यर्थः )। अभावस्य च प्रामाण्ये प्रत्यक्षादिविषयापेक्षिता विषये । ( यदि अभावः प्रमाणं तदा प्रत्यक्षादिपरिच्छिन्नातिरिक्तविषयान्तरानुपपत्तेः सापेक्षता अभावस्य स्यात् । यच्च स्वातन्त्र्येण विषयं नोपस्थापयति न तत् प्रमाणान्तरम् ) अतः प्रमाणान्तरविषयपरिच्छेदकतयैव अस्य ( अभावस्य ) लक्षणाभिधानं ( न पुनः प्रमाणान्तरतया ) । व्यवहारान्यत्वं तु संप्रतिपन्नमेव (नास्तीति) । व्यवहारसिद्ध्यर्थश्चायमुपन्यासः । पृ. १६०. * अनुपलब्धिः प्रमाणम् । मणि. पृ. १३. * अनुपलब्धिः ' प्रमाणपञ्चकाभावोऽप्यभावोऽन्यप्रतीतिकृत् । सोऽपि न व्यभिचारीति चोदनाऽपि तथोच्यते ॥ ' मण्डन. १।१ श्लो. १२.

* **अनुपसंजातविरोधित्वात्** उपक्रमस्य प्राबल्यं इति, तत् न सर्वत्र । आपातजप्रत्ययस्यैव प्राबल्यप्रसङ्गेन विमर्शवैयर्थ्यापत्तेः, इति केचित् । **पराक्रमः** पृ. ७.

* **अनुपादेयं** न विधेयम् । **के.** * ' सर्वत्र च विच्छिन्नप्रकरणस्य कर्मणः संबन्धि द्विप्रकारं श्रूयते उपादेयमनुपादेयं च । तत्र यदुपादेयं यथा आहवनीयप्रतिपदादि ( प्रतिपत् स्तोत्रीया आद्या ऋक् ), तत् प्रदेशान्तरस्योद्देशेनापि शक्यं विधातुम् । यत्तु अनुपादेयं देशकालनिमित्तफलसंस्कार्यात्मकं, तस्य प्रदेशान्तरावस्थितस्य कर्म प्रति विध्यशक्तेः, एषा वचनव्यक्तिर्भवति तदेव कर्म कर्तव्यमिति । यदुद्देशेन च कर्म विधीयमानं यदि अन्येन तद्गुणेन वाक्येनोपस्थाप्यते, ततः तदेवेति अकर्मान्तरबुद्धिर्भवति । अथ तु ईषदपि तिरोधानाद्योपतिष्ठेत, ततः परं विधीयमानत्वेनैव विहितादन्यत्वबुद्धिः स्थिरता न शक्या अपनेतुं इति कर्मान्तरत्वं भवति । **वा.** २।३।११।२८ पृ. ६१५.

* **अनुपादेयानि** पञ्चैव इति प्रकरणान्तराधिकरण- ( २।३।११।२८ ) पर्यालोचनया प्रतिभाति । ' द्वित्वबहुत्वयुक्तं वाऽचोदनात्तस्य ' इत्यधिकरणे ( ३।३।९। १७–१९ ) तु यजमानस्य आत्मीयमेकत्वमपि अनुपादेयमित्युक्तं तत्र अशक्तिकृताङ्गत्यागन्यायाप्रवृत्त्यै । तदुक्तं **पार्थसारथिमिश्रैः** ' अनुपादेयमेकत्वं यजमानस्य कालवत् ' इति ( ३।३।९ पृ. २५१ ) । अत्र यजमानस्येति यागाद्येकत्वव्यावृत्त्यै । एकत्वमिति यजमानद्वित्वबहुत्वव्यावृत्त्यै । उभयस्थाने ' संख्या ' इत्यनुक्तिः उपसद्द्वादशत्वव्यावृत्त्यै । एवं ब्राह्मण्यादिजातिरपि अनुपादेयैव । तदुक्तं द्वितीये ( २।३।२।४ ) आधानाधिकरणे **सोमेश्वरेण** ( सु. पृ. ९१४ पं. २६–२७ ) ' स्वविधिप्रयुक्ते तु ब्राह्मणत्वादेः कर्तृविशेषणत्वेऽपि जातेरनुपादेयत्वात् ' इति ' जातेः अर्थात् अधिकारिविशेषणत्वावगतेः सिद्धत्वेन च काम्यतया अधिकारिविशेषणत्वायोगात्, आधानस्य च फलाश्रवणेन राजसूयवत् निमित्तान्वयविरोधात् निमित्तत्वप्रतीतेः ' इति च ( **सुधायां** तु ' स्वविधिप्रयुक्तत्वे तु ब्राह्मणत्वादेः कर्तृविशेषणत्वेऽपि जातेः अनुपादेयत्वात्, ब्राह्मणादिकर्तृकस्य प्रयोगस्य अब्राह्मणादिना कर्तुमशक्तेः, अशक्तस्य चानधिकारात् अर्थात् अधिकारविशेषणत्वावगतेः, सिद्धत्वेन च जातेः काम्यतया अधिकारविशेषणत्वायोगात्, आधानस्य च काम्यत्वाभावेन राजसूयवत् निमित्तान्वयविरोधाभावात् निमित्तत्वप्रतीतेः ' इति पाठः ) ननु किमिदं अनुपादेयत्वं ? उच्यते । कृतिव्याप्यत्वं उपादेयत्वं तदव्याप्यत्वं अनुपादेयत्वम् । यथा च देशादिपञ्चकं ( देशकालनिमित्तफलसंस्कार्याः ) कृत्यव्याप्यं भवति, एवं यजमानस्यात्मीयमेकत्वं ब्राह्मण्यादिजातिश्च स्वभावसिद्धत्वात् भवत्येव कृत्यव्याप्यम् । न

चैवं पशुत्वादिजातिः पश्वेकत्वाद्यपि च अनुपादेयं स्यात्। न। तस्य पशुव्यक्तिद्वारा कृतिव्याप्यत्वेन उपादेयत्वात्। यजमानव्यक्तेस्तु स्वकृत्यव्याप्यत्वात् तद्द्वाराऽपि न तदीयैकत्वजात्यादि तत्कृतिव्याप्यं इति अनुपादेयमेव। आहवनीयविग्रयोस्तु कृतिव्याप्यत्वेन उपादेययोरपि सतोः विध्यन्तरसिद्धयोरेव उपादानात् प्रयोगविध्यननुष्ठाप्यत्वमात्रेण यथाशक्तिन्यायाविषयत्वम्। अत एव 'यदाहवनीये जुहोति' इत्यस्य 'अनुपादेयसंबन्धसचिवः असंनिधिः प्रकरणान्तरं' इत्येतन्न्यायाविषयता इष्यते। **ननु** यजमानस्य आत्मीयमेकत्वं ब्राह्मण्यादिजातिश्च अनुपादेया चेत् तत्संबन्धसचिवेनापि असंनिधिना प्रकरणान्तरत्वात् भेदः स्यात्, तत्र आद्योदाहरणं 'यदाहवनीये जुहोति' इत्येव। जात्युदाहरणमपि मृग्यं इति **चेन् न**। रूपालाभात्। जुहोतिर्हि साधारणः, न कंचिद्धोमविशेषं नियमेनोपस्थापयति, यदीया इतिकर्तव्यता अतिदिश्येत। अत एव 'दर्विहोमा अपूर्वाः' इत्युक्तमष्टमे (८।४।१)। उपदेशस्तु नास्त्येव। अनारभ्याधीते तु 'ब्राह्मणो यजेत' इत्यादिश्रवणे 'विश्वजिता यजेत' इत्यादिवत् अव्यक्तचोदितत्वेन अतिदेशतो रूपलाभसंभवात् प्रकरणान्तरतः कर्मभेदः इष्ट एव। अतो न पञ्चैव अनुपादेयानि इति सिद्धम्। **बाल.** पृ. ९७–९८,

*** अनुपादेयेन** उपादेयं बाध्यते। यथा सांतपनीयोत्कर्षे अग्निप्रणयनं कालेन बाध्यते। पृ. १३२. *** अनुपादेयानां** कर्मभेदकत्वं न भवति। **भा.** २।३।१३।२६. * अनुपादेयानां पञ्चानामपि संनिधौ प्रत्युदाहरणानि (अत्र सूत्रं 'संनिधौ त्वविभागात् फलार्थेन पुनःश्रुतिः २।३।१३।२६') दर्शपूर्णमासप्रकरणे 'पौर्णमास्यां पौर्णमास्या यजेत' 'समे दर्शपूर्णमासाभ्यां यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति चतुर्णाम्। स्विष्टकृतं प्रकृत्य 'शेषात् स्विष्टकृतं यजति' इति शेषरूपसंस्कार्यस्य। अत्र सर्वत्र संनिधानात् स्वविषयवृत्तिविधेयत्वप्रतिबन्धात् प्राप्तस्यैव कर्मणः कालदेशविशिष्टप्रयोगमात्रं विधिलाघवाय अनुमन्यते, न तु कर्मोत्पत्तिमपि विधत्ते। यत्र तु प्रयोगोऽपि प्राप्तः 'य इष्ट्वा' इत्यादौ, तत्र प्राप्तप्रयोगानुवादेन कालादिमात्रविधिः संभवति। देशकालयोः उपादेयत्वासंभवेऽपि यागाङ्गत्वेन विनियोगविधिः। निमित्तस्थले तु मिथो निमित्तनैमित्तिकयोः अङ्गाङ्गित्वासंभवात् प्राप्तस्यापि कर्मणो निमित्तसंबन्धानुमितपापक्षयार्थत्वेन विनियोगविधिः इति वक्ष्यते। फलसंस्कार्ययोस्तु तदुद्देशेन प्राप्तकर्मविनियोगविधिः स्पष्ट एव। अतो न संनिधिसत्त्वेऽपि अनुपादेयगुणयोगेऽपि कर्मान्तरम्। **भाट्ट.** २।३।१३. *** अनुपादेयपञ्चकं** देश–काल–निमित्त–फल–संस्कार्यात्मकम्। **वा.** १।३।३।७ पृ. २१२, १।३।११।२४ पृ. ६१५.

*** अनुप्रसर्पिणः**। अनु प्र सर्पन्ति समीपं गच्छन्ति भक्षणार्थं इति अनुप्रसर्पिणः। राजसूयान्तर्गते दशपेये नाम सोमयागविशेषे शतं ब्राह्मणाः दश सोमचमसान् भक्षयन्ति। तत्र दशदश ब्राह्मणाः एकैकं चमसं अनुप्रसर्पेयुः इति अनुप्रसर्पिणां शतसंख्या उक्ता। तत्र राजन्यचमसोऽपि ब्राह्मणैरेव भक्ष्यते। भक्षणं नाम सोमपानम्। **के.**

**अनुप्रसर्पिषु सामान्यात्। ३।५।२०।५२॥**

पूर्वपक्षसूत्रम्। राजसूयान्तर्गते दशपेये सोमे 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' इत्युक्तम्। तत्र प्रतिचमसं दशदश इति शतम्। तत्र ऋत्विक्चमसेषु ब्राह्मणा एव स्युः। यजमानचमसे तु ये अनुप्रसर्पिणः चमसभक्षकाः, तेषु सामान्यात् सजातीयत्वात् क्षत्रिया एव स्युः। भूयस्त्वात्तु सृष्टिन्यायेन (१।४।१२।२३–५) ब्राह्मणपदम्। इति पूर्वः पक्षः।

**ब्राह्मणा वा, तुल्यशब्दत्वात्। ५३॥**

पूर्वपक्षनिरासार्थो वाशब्दः। राजन्यचमसमपि ब्राह्मणा एव अनुप्रसर्पेयुः न राजन्याः। तुल्यशब्दत्वात् 'शतं ब्राह्मणाः सोमान् भक्षयन्ति' इति वचने तुल्येन ब्राह्मणशब्देन सर्वचमसेषु ब्राह्मणानां प्रतिपादनात्। तुल्यः ब्राह्मणशब्दः येषां राजन्यचमससहितानां दशानामपि चमसानां ते तुल्यशब्दाः। तेषां भावस्तुल्यशब्दत्वं तस्मात् राजन्यचमसमपि ब्राह्मणा एव प्रसर्पेयुः इति सिद्धान्तः। **के.**

* **अनुबन्ध्यः** । ज्योतिष्टोमे पशवः अग्नीषोमीयसवनीयानुबन्ध्याः। तेषां यूपः तन्त्रम्। **भा.** ११।३।२।३-८. * अनुबन्ध्यः पशुः अवभृथादूर्ध्वमालभ्यते । साद्यस्के तु त्रयाणामपि पशूनां सहालभ्यत्वात् सवनीयानन्तरमेव अनुबन्ध्यः कर्तव्यः । **वि.** ५।१।६. * **अनुबन्ध्या गौः** ज्योतिष्टोमे । तत्र निगमेषु गोरभिधानं उस्राशब्देनैव कर्तव्यं, 'उस्रायै वपायै मेदसोऽनुब्रूहि' इति । **भा.** १०।४।१६।३२-३३. * **अनुबन्ध्यायाः** स्थाने विकल्पेन कर्तव्या मैत्रावरुण्यामिक्षा चातुर्मास्यवैश्वदेविकमैत्रावरुण्यामिक्षाविकारः इति तद्धर्मातिदेशः। **के.** * **अनुबन्ध्यायां** गोयागस्य विहितत्वात् । **भा.** २।२।६।२१. * अनूबन्ध्यायां सवनविभागतुल्यं साङ्गं प्रयोगं त्रेधा विभज्य मन्द्रमध्यमोत्तमोच्चारणं कार्यं अग्नीषोमीयवत् । ज्योतिष्टोमे। **वा.** ३।३।२।९ पृ. ८१२. * **अनुबन्ध्यातन्त्रस्य** अनुनिर्वाप्येषु देविकाहविःषु प्रसङ्गः न तु वैपरीत्यम् । **भा.** १२।३।२।३-८. * **अनुबन्ध्यादिसाम्नां** परिसानाख्यानां स्वरूपतः प्राप्तो यथावेदस्वरो युक्तः । **सु.** पृ. ११८३.

**⌛ अनुबन्ध्यावनस्पतियागयोर्निगमेषु विधिगतोस्रावनस्पतिशब्दाभ्यामेव द्रव्यदेवतयोरभिधानम् ॥**

**विधिनिगमभेदात् प्रकृतौ, तत्प्रकृतित्वाद् विकृतावपि भेदः स्यात्। १०।४।१६।३२ ॥**

**भाष्यं—** अस्ति ज्योतिष्टोमः । तत्र श्रूयते, 'गौरनुबन्ध्यः' 'अजोऽग्नीषोमीयः' इति । सन्ति तु गोरभिधानानि—उस्रा, उस्रिया, अही, मही, अदितिः, इला, इति । तत्र संशयः किं निगमेषु केन चिदेव शब्देन गोरभिधानं कर्तव्यं, अथवा विधिशब्देन कर्तव्यमिति । तथा, 'पृषदाज्येन वनस्पतिं यजति' इति । सन्ति वनस्पतेरभिधानानि, वृक्षः पादपो द्रुमो नग इति । तत्र संशयः किं निगमेषु केन चिदेव शब्देन वनस्पतेरभिधानं कर्तव्यं, अथवा विधिशब्देनेति । किं प्राप्तम् ? केन चिदेवेति। कुतः ? विधिनिगमभेदात्, प्रकृतौ विधिनिगमभेदः कृतः । 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति विधौ, मन्त्रे 'छागस्य वपाया मेदसोऽनुब्रूहि' इति । इह तु चोदकेन यत् प्राप्तं, तत् मन्त्रे । विधिनिगमभेदश्च प्रकृतावस्ति । तस्मात् स मन्त्रे । छागशब्दः प्रकृतौ कृतः, स न शक्यते यदि कर्तुम् । विधिनिगमभेदस्तु शक्यते । तस्मात्तुल्यार्थेनान्यवचनेन वाचितु वचनं कर्तव्यम् । तथा, 'अग्निं स्विष्टकृतं यजति' इति विधौ, निगमेऽपि 'पिप्रीहि देवाँ उशतो यविष्ठ विद्वाँ ऋतूँऋतुपते यजेह । ये दैव्या ऋत्विजस्तेभिरग्ने त्वं होतॄणामस्यायजिष्ठः' इति । विधिनिगमभेदः प्रकृतौ कृतः । स्विष्टकृद्विकारश्च वनस्पतिरिति **संकर्षे** वक्ष्यते । तस्मात्तत्रापि विधिनिगमभेदः कर्तव्यः । अतो येन केन चिद्वनस्पत्यभिधानेन निर्देशः कर्तव्यः, तत्प्रकृतित्वादिति ।

टुप्— ननु 'उस्रायै वपायै मेदसः' इति मन्त्राम्नानादनियमो नैव प्राप्नोति, विधिशब्दो वा । उच्यते । सत्यम् । समीपे मन्त्रः श्रूयते, न त्वनेन कर्तव्यमिति विधीयते । चोदकस्तु विधिशब्दादन्येन प्रकाशनं प्रापयति । तस्मान्न नियमः । नन्वनुबन्ध्यायां भवेदपि । वनस्पतौ तु विधिशब्द एव प्राप्नोति उक्तेन न्यायेन ( १०।४।१५।३१ ) । उच्यते । स्विष्टकृद्विकारो वनस्पतिः । स्विष्टकृति च विधिशब्दादन्येन प्रकाशनं, विकृतौ ( चोदकेन ) तथैव प्राप्नोति । न चेह गुणलोपः । निर्गुणत्वादाम्नानस्य । अन्यत्वं कर्तव्यं विधिशब्दात् । तत्र पर्यायशब्दप्रसङ्गः ।

**यथोक्तं वा, विप्रतिपत्तेर्न चोदना ॥ ३३ ॥**

**भाष्यं—** यथोक्तेन वा शब्देन वचनं कर्तव्यं, गोः उस्राशब्देन । स हि तत्राऽऽम्नातः उस्रायै वपायै मेदसोऽनुब्रूहीति । आह । मन्त्राम्नानमेतत्, न वचनमस्ति अनेन कर्तव्यमिति । वचनं पुनश्चोदको विधिभिन्नेन वक्तव्यमिति । नैतदेवम् । न विप्रतिपत्तिं चोदकः प्रापयति । नहि यत् प्रकृतावस्ति, तत् विकृतौ कर्तव्यमिति केन चिदाप्यते । किंतु यत् प्रकृतौ चिकीर्षितं शब्देनाभिहितं नार्थात् प्राप्तं, तच्चोदकः प्रापयति । न च प्रकृतौ विधिनिगमभेदो विवक्षितः । 'छागस्य वपायै मेदसोऽनुब्रूहि' इत्येतद्वक्तव्यमिति विधीयते । तत्रार्थात् विधिनिगमभेदो जातः । छागशब्दविधानं श्रुत्या गम्यते,

विधिनिगमभेदो लक्षणया । श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या, न लक्षणा । तस्मान्न येन केन चिदभिधानम् । आम्नानसामर्थ्यादुस्राशब्देन । तथा, पृषदाज्ये देवतायां यो विधिशब्द उक्तः, तेन वचनं कर्तव्यम् । विधिनिगमविप्रतिपत्तिर्न चोद्यते । तस्मात् वनस्पतिशब्देन निर्देशः कर्तव्य इति ।

टुप्— सिद्धान्तस्तु समान इति कृत्वा वनस्पतिरुदाहृतः ।

**सोम**— यदि चोदकानुग्रहाय मन्त्रविशेषणत्वाश्रयणं तदिहापि तदनुग्रहाय येन केन चिदभिधानं इत्युत्थितेः **संगतिः । आपस्तम्बाचार्यैस्तु** " मित्रावरुणाभ्यां गोर्वपाया मेदसोऽनुब्रूहि ' ' मित्रावरुणाभ्यां गोर्वपाया मेदसः प्रेष्य इति संप्रैषौ " इति गोशब्दनियम एवोक्तः । स च शाखान्तरे तथापाठपरिकल्पनया कथं चिदुपपादनीयः । अत्र विधिनिगमशब्दभेदस्यार्थिकत्वात् न चोदकप्राप्तिरित्येव सिद्धान्तः, तदार्थिकत्वेन चानियमे निरस्ते उस्राशब्दनियमो वनस्पतिशब्दनियमश्च पाठबलाद्विधिशब्दत्वाच्च न्यायान्तरादेव सिध्यति इति नैतदधिकरणव्युत्पाद्यम् । ततश्चोदाहरणद्वयेऽपि सिद्धान्तैकरूप्यात् अधिकरणैक्यमिति **तन्त्ररत्ने** । १०।४।१७.

**वि**— ' किं गोवनस्पती केनाप्युतोस्राविधिशब्दतः । वक्तव्यौ, निगमाद्भेदो विधेर्दृष्टस्तथाऽग्निमः ॥, स भेद आर्थिकस्तं तु प्रापयेच्चोदको नहि । उस्रा प्रकरणाम्नानाद्वैधत्वेन वनस्पतिः ॥ ' १०।४।१८.

**भाट्ट**—यत्र प्रकृतावेव द्रव्यवाचकपदं व्रीहिपश्वादिरूपं श्रुतं, तत्र तस्य कर्मणि द्रव्यविधायकत्वेन चरितार्थत्वात् न देवतापदवच्छब्दविधायकता । अत एव त्यागकाले चतुर्थ्यन्तदेवतापदशाब्दबोधपर्यवसानार्थं प्रत्यक्षनिर्दिष्टा सा व्यक्तिरिदंपदेनैव परामर्ष्टव्या, न तु विधिगतपुरोडाशादिपदेनेत्यपि व्यक्तं, पुरोडाशत्वावच्छिन्नस्य त्यागासंभवात् । निगमेषु तु यत्र यः पठितः, स एव तत्रेत्यपि निर्विवादमेव । यथा 'व्रीहीणां मेध ' छागस्य वपाया मेदसः' इत्यादौ । विकृतावपि व्रीहिछागादिसत्त्वे स एवेत्यपि तथा । यत्र तु 'गौरनुबन्ध्या' इत्यादौ प्राकृतद्रव्यबाधेन द्रव्यान्तरविधिः तत्र छागपदलोपेन पदान्तरप्रक्षेपे **प्राप्ते**, न तावद्गोपदमेवेति नियन्तुं शक्यं, गोपदस्य विधिस्थस्य द्रव्यविधानेन चरितार्थत्वात् । न चोपस्थितत्वात् विधिगतस्यैव पदस्य नियमः, अर्थोपस्थित्या तद्वाचकपदमात्रोपस्थितेः, विधिगतपदस्यैव प्रयोगे विध्यन्तरकल्पनागौरवाच्च । अतश्च गोशब्दोऽन्यो वा यः कश्चित्तद्वाची प्रयोक्तव्य इति प्राप्तम् । **न च** प्रकृतौ विधिगतपशुपदापेक्षया अन्यस्यैव छागशब्दस्य निगमेषु दर्शनात् विधिनिगमभेदप्रतीतेरिहापि तद्वशेन गोपदभिन्नमेव पदं प्रयोक्तव्यमिति **वाच्यं**, विधिनिगमभेदस्य प्रकृतौ आर्थिकत्वेन इहानतिदेशात् । नहि प्रकृतौ विधिगतपदभिन्नं पदं प्रयोक्तव्यमिति विवक्षा, अजादिपदप्रयोगे वैगुण्यानापत्तेः । अपि तु छागपदस्यैव, इति तद्विधौ विधिनिगमभेद आर्थिकः प्रकृतौ, इति विकृतौ तल्लोपे तस्यापि लोपः । एवं च यत्र पदविशेषप्रापकाभावः, तत्रानियम एव । यत्र तु तत्, यथा अनुबन्ध्यायामेव ' उस्रायै वपायै मेदसः ' इति मन्त्रपाठः, तत्र नैव पदान्तरप्रक्षेप इति सिद्धम् । एवं प्रकृतौ स्विष्टकृति अग्निः स्विष्टकृद्देवता, निगमेषु च केवलस्याग्नेरेव विधानं, न स्विष्टकृद्गुणस्य । पशौ च वनस्पतियागः समाम्नातः, स च स्विष्टकृद्यागविकार इति **संकर्षे** वक्ष्यते । तत्रापि विधिनिगमभेदस्य प्रकृतौ आर्थिकत्वान्नेहातिदेशः । वस्तुतस्तु तत्र गुणमात्रस्य निगमेष्वप्रकाशनं विशेष्यभूतोऽग्निस्तु विधिगतशब्दप्रतिपाद्य एवेति विकृतावपि वनस्पतिर्विधिगतशब्देनैव प्रकाशनीयः । १७.

**मण्डन**— ' उस्राशब्दोऽनुबन्ध्यायाम् । ' १९.

**शंकर**— ' उस्रेत्येवानुबन्ध्ये वा । ' १९.

* **अनुभयप्राप्तौ व्यवस्थाविधिः** यथा चतुर्होतृपञ्चहोतृमन्त्रयोः, तयोः प्रकरणे अनाम्नानात् । यथा वा ' यदग्नये च प्रजापतये च सायं जुहोति, सूर्याय च प्रजापतये च प्रातः ' इति ब्राह्मणेन देवताविधिपक्षे अग्निसूर्ययोरप्राप्तेः । **बाल.** पृ. १८.

* **अनुभवः** । न खलु अनुभवः दृष्टान्तमपेक्षते । मा भूत् भूम्यादौ असाधारणगन्धादिगुणाननुभवनम् । **कणिका.** पृ. २६४. * **अनुभवत्वं** ' अनुभवामि ' इति प्रतीतिसिद्धः साक्षात्कारानुमित्युपमितिशाब्दबोध-

साधारणः स्मृतिव्यावृत्तो जातिविशेषः । न तु अगृहीतग्राहित्वं, धारावाहिके अव्याप्तेः इति तार्किकाः । तदेतदयुक्तं, 'अनुभवामि' इति प्रतीतिसिद्धानुभवत्वस्य साक्षात्कारे एव सत्त्वेन अनुमित्यादौ अव्याप्तेः । 'स्वर्गमनुभवामि' 'पर्वते वह्निमनुभवामि' इति प्रतीत्यभावेन अनुमित्यादौ तत्सत्त्वे मानाभावात् । तस्मात् अनधिगतार्थगन्तृत्वमेव अनुभवत्वम् । न च धारावाहिके अव्याप्तिः, तत्तत्क्षणविशिष्टघटादेः पूर्वपूर्वज्ञानागृहीतस्यैव उत्तरोत्तरज्ञानविषयत्वात् । 'इदानीं स्पृशामि' 'इदानीं पश्यामि' इत्यादिप्रतीत्या कालस्यापि षडिन्द्रियवेद्यत्वात् । कालान्यद्रव्यचाक्षुषत्वस्यैव रूपकार्यताऽवच्छेदकत्वात्, अनुभवानुसारेण कार्यकारणभावकल्पनात् । अन्यथा लाघवात् चाक्षुषत्वस्यैव कार्यताऽवच्छेदकत्वापत्तेः । **न च** कालः अतिसूक्ष्मत्वात् कथं प्रत्यक्षग्राह्य इति **वाच्यम्** । ज्ञानधारायां हि उपरतायां 'किमत्र घटोऽवस्थितः' इति पृष्टः सन् कथयति 'अस्मिन् क्षणे मयोपलब्धः' इति 'प्रातरारभ्य एतावन्तं कालं मयोपलब्धः' इति च । कालभेदे तु अगृहीते कथमेवं भवेत् ? 'शतपत्रपत्रशतं मया सूच्या युगपत् भिन्नं' इति तु स्थूलकालविषयकम् । वस्तुतस्तु धारावाहिकस्थले तावत्कालव्यापिनी एकैव ज्ञानव्यक्तिः, कारणभेदाभावात् तद्भेदकल्पने मानाभावात्, योग्यविभुविशेषगुणानां त्रिक्षणावस्थायित्वस्य परिभाषामात्रत्वात् । वस्तुतस्तु स्वसमानविषयकज्ञानानपेक्षोत्पत्तिकज्ञानत्वमेव अनधिगतार्थगन्तृत्वम् । अतः कालभेदस्य इन्द्रियवेद्यत्वाभावेऽपि न क्षतिः । दिनान्तरे गृहीतस्य घटादेर्दिनान्तरे पुनर्ज्ञानमपि प्रमैव । **कु.** १।१।५।५. * अनुभवत्वं प्रत्यक्षमात्रवृत्ति इति वैयाकरणाः । **मणि.** पृ. ८१, * अनुभवत्वं स्मृतिभिन्नज्ञानत्वम् । स्मृतिजनकताऽवच्छेदकजातिविशेषो वा । **न च** स्मृतौ निश्चयत्वेन ज्ञानत्वेन वा जनकता इति **वाच्यम्** । **गौरवात्** । **न च** स्मृतितोऽपि स्मृतिजननात् नानुभवत्वेन स्मृतिहेतुता इति **वाच्यम्** । **प्रथमानुभवस्यैव संस्कारद्वारा तत्र हेतुत्वात्** । अतः अनुभवत्वेन स्मृतिजनकता । **संस्कारं प्रति तु उपेक्षान्यनिश्चयत्वेन । संशयात् संस्कारा**जननात् निश्चयैति । समानप्रकारकस्मृतेरेव संस्कारजनकत्वकल्पनात् स्मृत्युद्बोधकत्वादिनो न एकैकगोचरकानेकसंस्कारानुपपत्तिः, उद्बोधकसमवधानस्यैव तत्स्मृतिजनकत्वात् । अनुभवत्वं जातिः । वस्तुतः संस्कारं प्रति उपेक्षान्यसंशयान्यानुभवत्वेन स्मृतिं प्रति ज्ञानत्वेन जनकता । नातः पण्डसंस्कारकल्पनेति कुचान् । एवं च संस्कारजनकताऽवच्छेदकतया अनुभवत्वजातिसिद्धिः । त्रु. १२

* **अनुभवनं** यथा अनुगमनं इति न कल्प्यते, तथा वैदिकमपि वचनम् । **भा.** १।३।२।३ पृ. १७८.

* '**अनुमत्यै** पुरोडाशमष्टाकपालं निर्वपति' इत्यादय इष्टयः राजसूये श्रुताः । तासां फलवत्त्वादङ्गित्वम् । विदेवनादिकं तु अयागरूपं अङ्गम् । **वि.** ४।४।१, ***अनुमत्यादयः** दर्शपूर्णमासेष्टिविकृतयो राजसूये विहिताः । तासु आरम्भणीयाऽस्ति न वा इति संशयः । दीक्षणीयादिवत् अनुमत्यादीनां अन्याङ्गत्वाभावात् सोमयागवत् सर्वासामङ्गित्वेन उपक्रमासंभवात् तद्द्वारेण आरम्भणीया अस्ति इति पूर्वः पक्षः । यद्यपि अङ्गीभूता अनुमत्यादयः, तथापि एकैकस्या इष्टेः पृथगारम्भो नास्ति । न च संघः दर्शपूर्णमासविकृतिः । राजसूयात्मकसंघारम्भार्थश्च अग्निष्टोम एवाम्नातः । तस्मात् आरम्भद्वारस्य लोपात् ( अनुमत्याद्यर्थे ) आरम्भणीया न भवेत् । १०।१।३.

* **अनुमन्त्रणं** अभिमन्त्रणं उपस्थितिः जपश्च नाम— 'मन्त्रमुच्चारयन्नेव मन्त्रार्थत्वेन संस्मरेत् । शेषिणं तन्मना भूत्वा स्यादेतदनुमन्त्रणम् ॥ उद्देश्याभिमुखत्वे तु स्यात्तदेवाभिमन्त्रणम् । उपस्थितिस्तु बोधः स्याद् बोधान्तोच्चारणं जपः ॥' **कु.** १।२।४।४३ पृ. ४६. **अनुमन्त्रण**लक्षणमिदं यत्र मन्त्राणां लिङ्गात् **कर्मसमवेतार्थप्रका**शकता तद्विषयत्वात् **प्रायिकं, लिङ्गमूलत्वात् । यद्वा मन्त्रा**र्थत्वेन इति न **मन्त्रप्रतिपाद्यतया इत्यर्थः, करणमन्त्रेष्वति**प्रसङ्गात् । **किंतु प्रयोजनवचनोऽयमर्थशब्दः । ततश्च क चिदप्रतिपाद्यः, क चित् प्रतिपाद्यः शेषी मन्त्रप्रयोजनत्वेन यत्र स्मर्यते, तदनुमन्त्रणं इत्यर्थः । एवं च 'मन्त्रमुच्चारयन्' इति शतृप्रत्ययो वर्तमानार्थः समर्थितो भवति ।**

मन्त्रजन्यानुस्मृतिः मन्त्रपाठोत्तरकाला इति तत्र मन्त्रमुच्चारयन् स्मरेत् इत्यनुपपन्नम्। ऋजवस्तु 'करणत्वाभावे सति' इति (लक्षणश्लोके) विवक्षितत्वात् न करणेषु अतिप्रसङ्गः । उच्चारयन् इति च 'वर्तमानसामीप्ये वर्तमानवद्वा' इति शता। 'मन्त्रार्थत्वेन' इति मन्त्रप्रतिपाद्यत्वेन इत्येवार्थः इत्याहुः । **बाल. पृ. ११२–११३.** * अनुमन्त्रणं यजमानस्य दर्शपूर्णमासयोर्द्वादशानां कर्मणां मध्ये केषु चित् । **भा.** ३।८।९।२०. * **अनुमन्त्रणमन्त्राः** एकादशसु अनूयाजेषु बर्हिर्नराशंसयोः चत्वारश्चत्वारो विकाराः, अवशिष्टाः त्रयस्तु स्विष्टकृतो विकाराः इति तत्तदनुमन्त्रणमन्त्राणां तत्रतत्र अतिदेशः । दशमस्य तु प्रथमविकारत्वम् । देवतासामान्यस्य उत्पत्तिसमसमयावगतत्वात् । **संकर्ष.** २।३।४, ५. * **अनुमन्त्रणमन्त्राणां** कृताकृतप्रत्यवेक्षणाय अनुष्ठितार्थस्मृतिफलकत्वम् । **सु. पृ.** १०२. *दर्शपूर्णमासयोर्याजमानानां **प्रयाजानुमन्त्रणादीनां** नानाशाखान्तरसमाम्नातानां 'वसन्तमृतूनां प्रीणामि' इत्येवमादीनां क्रमस्य नियमो नास्ति । **भा.** ५।१।३।३.

* **अनुमानं** आगमबाधितं नोदीयते। **कणिका.** पृ. २०४. * अनुमानं कार्यकारणयोरेव इति के चित्, तत्तु अयुक्तं, अकार्यकारणभूतानामपि कृत्तिकादीनां अचिरोद्गतरोहिण्यादिप्रतिपत्तिहेतुत्वदर्शनात् । अतो गम्यगमकत्वमेव कार्यकारणभावं मन्यते। ननु सोऽपि अनुमानोत्तरकालीनत्वादनङ्गम्। सत्यम् । अन्यस्मिन्नेव तु संबन्धे सति पश्चात् प्रसिध्यन्तमेनं अनुमानव्यवहारोपलक्षणत्वेन उपन्यस्यति । यद्वा शक्त्यभिप्रायं, ययोरेव हि व्याप्तिग्रहणकाले गम्यगमकसामर्थ्यात्मना कार्यकारणभावित्वेन सा अवधृता, तत्रैव हेतुता। **वा.** १।२।३।२६ पृ. १३९. * अनुमानं च प्रत्यक्षविरोधात् (विरोधे सति) न प्रमाणम्। **भा.** ६।१।१।२ पृ. १३५१. * 'अनुमानं ज्ञातसंबन्धस्य एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टे अर्थे बुद्धिः ।' (भाष्यम्) अनुमानस्य धर्मविषयत्वं दर्शयितुं तल्लक्षणमुच्यते। ज्ञातसंबन्धस्य पुरुषस्य एकदेशदर्शनात् एकस्य संबन्धिनो दर्शनात्, एकदेशान्तरे संबन्ध्यन्तरे असंनिकृष्टे अर्थे बुद्धिः अनुमानम्। यथा ज्ञातवह्निधूमनियतसामानाधिकरण्यस्य पुरुषस्य धूमरूपैकदेशदर्शनात् असंनिकृष्टे एकदेशान्तरे वह्नौ बुद्धिः इति। एवं च धर्मसंबन्धिनो लिङ्गस्य अग्रहात् नानुमानसंभवः इति भावः । **न्यायबिन्दुः** १।१।५.

* **अनुमानं** ज्ञातसंबन्धस्य एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टे अर्थे बुद्धिः । तत्तु द्विविधं प्रत्यक्षतोदृष्टसंबन्धं सामान्यतोदृष्टसंबन्धं च । प्रत्यक्षतोदृष्टसंबन्धं यथा, धूमाकृतिदर्शनात् अग्न्याकृतिविज्ञानम् । सामान्यतोदृष्टसंबन्धं यथा देवदत्तस्य गतिपूर्विकां देशान्तरप्राप्तिमुपलभ्य आदित्यगतिस्मरणम्। **भाष्यं.** पृ. ३६–३७.

अत्र भाष्ये अनुमानशब्दः अनुमितिपरः । ज्ञातः संबन्धः लिङ्गलिङ्गिनोर्व्याप्त्याख्यः संबन्धो येन प्रमात्रा पुरुषेण तस्य। लिङ्गलिङ्गिसंबन्धाख्यव्याप्तिज्ञानवतः पुरुषस्येत्यर्थः। अनेन च व्याप्तिस्मृतिपक्षधर्मताज्ञानजन्यं ज्ञानं अनुमितिः इति लक्षणमुक्तं भवति । यत्र विशेषयोरेव प्रत्यक्षेण संबन्धो गृह्यते तद्विशेषविषयं प्रत्यक्षतोदृष्टसंबन्धं इत्युच्यते । यथा यस्मिन्नेव धर्मिणि गोमयेन्धनाग्निविशेषतज्जन्यधूमविशेषयोः संबन्धग्रहणं प्रत्यक्षेण जातं, तस्मिन्नेव धर्मिणि कालान्तरे तस्यैव धूमविशेषस्य दर्शनेन तस्यैव संदिह्यमानसद्भावस्य अग्निविशेषस्य यदनुमानं तत् प्रत्यक्षतोदृष्टसंबन्धात्मकमनुमानम् । आकृतिग्रहणं आकृत्योरेव इतरव्यवच्छेदकत्वेन हेतुसाध्यव्यवस्थापर्यवसानार्थम् । यत्र सामान्ययोरेव प्रत्यक्षेण संबन्धो गृह्यते तत् सामान्यतोदृष्टसंबन्धम् । 'आदित्यो गतिमान्, देशान्तरप्राप्तिमत्त्वात्; योयो देशान्तरप्राप्तिमान् सस गतिमान् यथा देवदत्तः' इति । अत्र गतिप्राप्त्योः सामान्ययोरेव प्रत्यक्षेण संबन्धो गृहीतः आदित्ये गत्यनुमानोपयोगी इतीदं सामान्यतोदृष्टसंबन्धजन्यमनुमानम्। **विद्यानाथः.** पृ. ३६–३७.

(भाष्यार्थः) '**प्रमाता ज्ञातसंबन्ध, एकदेशथ वोच्यते।, कर्मधारयपक्षो वा संबन्धिन्येकदेशता ॥**' (**श्लोवा.** अनुमानं २.) येन प्रमात्रा ज्ञातः संबन्धः, तस्य बुद्धिः इति तृतीयार्थे बहुव्रीहिः इत्याह प्रमातेति । यस्य ज्ञातधूमसंबन्धस्य सपक्षस्य महानसा-

धेकदेशिनः संबन्धो नियमाख्यो ज्ञातः, तस्य यो धूमाख्यः एकदेशः, तस्य दर्शनात् तस्यैव एकदेशान्तरे अग्निबुद्धिः इति वा षष्ठ्यर्थे बहुव्रीहिः इत्याह— एकदेशीति । अथवा कर्मधारयसमासोऽयम् । एकदेशशब्दाभ्यां च संबन्धिनोरभिधानम् । संबन्धः संबन्धिनोर्व्याप्तस्य दर्शनात् एकदेशी, एकदेशौ च संबन्धिनौ । ज्ञातश्चासौ संबन्धश्च, तस्य यः एकदेशः संबन्धी धूमः, तस्य दर्शनात् संबन्ध्यन्तरे बुद्धिः इत्याह— कर्मधारयेति । (रत्नाकरसंकेतः) । '**द्वयं वा ज्ञातसंबन्धमुपलब्धं परस्परम् । तस्यैकदेशशब्दाभ्यामुच्येते समुदायिनौ ॥ ३ ॥**' ज्ञातसंबन्धः लिङ्गलिङ्गिसमुदायः । तस्य एकदेशौ समुदायिनौ । तत्र एकस्य समुदायिनः दर्शनात् अन्यस्य समुदायिनो बुद्धिः इति बहुव्रीहौ एव अर्थान्तरमाह —द्वयमिति । '**संबन्धो व्याप्तिरिष्टाऽत्र लिङ्गधर्मस्य लिङ्गिना । व्याप्यस्य गमकत्वं च, व्यापकं गम्यमिष्यते ॥ ४ ॥ यो यस्य देशकालाभ्यां समो न्यूनोऽपि वा भवेत् । स व्याप्यो, व्यापकस्तस्य समो वाऽभ्यधिकोऽपि वा । ५ ॥ तेन व्याप्ये गृहीतेऽर्थे व्यापकस्तस्य गृह्यते । नह्यन्यथा भवत्येषा व्याप्यव्यापकता तयोः । ६ ॥ व्यापकत्वगृहीतस्तु व्याप्यो यद्यपि वस्तुतः । आधिक्येऽप्यविरुद्धत्वाद् व्याप्यं न प्रतिपादयेत् । ७ ॥ विस्पष्टं दृष्टमेतच्च गोविषाणित्वयोर्मितौ । व्याप्यत्वाद् गमिका गावो, व्यापिका न विषाणिता । ८ ॥ तेन यत्राप्युभौ धर्मौ व्याप्यव्यापकसंमतौ । तत्रापि व्याप्यतैव स्यादङ्गं, न व्यापिता, मितेः ( अनुमितेः ) । ९ ॥ तेन धर्म्यन्तरेष्वेषा यस्य येनैव यादृशी । देशे यावति काले वा व्याप्यता प्राङ् निरूपिता । १०॥ तस्य तावति तादृक् स दृष्टो धर्म्यन्तरे पुनः । व्याप्यांशो व्यापकांशस्य तथैव प्रतिपादकः ।११॥ 'भूयोदर्शनगम्या च व्याप्तिः सामान्यधर्मयोः ( व्यभिचारे अनवगते ) । ज्ञायते भेदहानेन,' 'क्वचिच्चापि विशेषयोः । १२॥ कृत्तिकोदयमालक्ष्य रोहिण्यासत्तिक्लृप्तिवत्** ' । '**व्याप्तेश्च दृश्यमानायाः कश्चिद्धर्मः प्रयोजकः । १३ ॥ अस्मिन् सत्यमुना भाव्यमिति शक्त्या निरूप्यते । अन्ये परप्रयुक्तानां व्याप्तीनामुपजीवकाः । १४ । तैर्दृष्टैरपि नैवेष्टा व्यापकांशावधारणा । १५ ॥** ' ननु हिंसात्वं अधर्मत्वावच्छिन्नहिंसात्वं अधर्मत्वमनुमापयेत्, अस्ति तस्य अधर्मत्वेन व्याप्तिः ब्रह्महत्यादौ अन्यत्र अदृष्टव्याप्तेरिति । सत्यं अस्ति हिंसात्वस्य व्याप्तिः, तथापि न अधर्मत्वव्याप्तेस्तत् प्रयोजकम् । यदेव निषिद्धत्वं अस्मिन् अधर्मत्वे सति अमुष्य निषिद्धत्वस्य भवितुं शक्तिः इति निरूप्यते, तदेव प्रयोजकम् । अन्ये तु हिंसात्वादयः परेण निषिद्धत्वेन प्रयुक्तां व्याप्तिं उपजीवन्ति । अतः सत्यामपि व्याप्तौ तैर्दृष्टैरपि व्यापकधर्मत्वं नावधारयितुं शक्यम् । कः पुनः प्रयोजकः ? यस्य धर्मान्तरविरहेणापि साध्यान्वयो दृष्टः, स प्रयोजकः । यस्य तु अन्यसहितस्यैव साध्यान्वयः, स तदभावे निश्चिते तद्रहितो न प्रयोजकः । निषिद्धत्वस्य च हिंसात्वविरहेणापि सुरापानादौ अधर्मान्वयो दृष्टः, इति तदेव अधर्मत्वव्याप्तेः प्रयोजकम् । हिंसात्वस्य तु निषिद्धत्वविरहेण न क्वचित् अधर्मान्वयो दृष्टः इति तत् अप्रयोजकम् । यत्र तु द्वयोः सहितयोरेव साध्यान्वयः, तत्र द्वयोरपि प्रत्येकं अप्रयोजकत्वात् सहिताभ्यामेवानुमानं, नैकेनेति । अप्रयोजकत्वं उदाहरणतो दर्शयति पञ्चभिः— '**निषिद्धत्वेन हिंसानामधर्मत्वं प्रयुज्यते । १७ ॥ तदभावे न तत्सिद्धिर्हिंसात्वादप्रयोजकात् । हेतुद्वये प्रयुक्ते च मिथ्यात्वे सर्वबुद्धिषु ।१८॥ ज्ञानत्वोत्पत्तिमत्त्वादिसाधको नाप्रयोजकः । त्रैवर्णिकप्रयुक्ता च यागादेः स्वर्गहेतुकाम् ( का ) । १९ ॥ न मनुष्यत्वमात्रेण शूद्रस्थेन प्रयुज्यते । कृतसावयवत्वादिप्रयुक्ता च विनाशिता । २० ॥ प्रयत्नानन्तरज्ञानसदृशैर्न प्रयुज्यते । जातिमत्त्वेन्द्रियत्वादि वस्तुसन्मात्रबन्धनम् । २१ ॥ शब्दानित्यत्वसिद्ध्यर्थं को वदेद्यो न तार्किकः । तस्माद्य एव यस्यार्थो दृष्टः साधनशक्तितः । २२ ॥ स एव गमकस्तस्य न प्रसङ्गान्वितोऽपि यः । २३ ॥** ' प्रमेयविषये आह— '**तस्मादर्थगृहीतत्वान्मतुबर्थस्य गम्यता । ३२ ॥ न स्वातन्त्र्येण मन्तव्या यथा दण्ड्यादिशब्दतः ।**

विशिष्टार्थप्रतीतौ स्यात् संबन्धो नान्तरीयकः । ३३ ॥ विशेषणविशेष्यत्वमापन्नौ ( धर्मधर्मिणौ ) द्वाविमावतः । गम्यौ... । ३४ ॥ तस्माद्धर्मविशिष्टस्य धर्मिणः स्यात् प्रमेयता । ४७ ॥ सा देशस्याग्नियुक्तस्य... । ४८ ॥' प्रमाणफले तयोश्च विषयैकत्वं दर्शयति— 'धूमतज्ज्ञानसंबन्धस्मृतिप्रामाण्यकल्पने । ५१ ॥ फलेन विषयैकत्वं तद्व्यापारात् पुरोदितम् । प्रमेयधीप्रमाणत्वं भाष्यकारस्तु मन्यते । ५२ ॥' धूमतज्ज्ञानादीनां प्रमाणत्वं, प्रमेयज्ञानं फलं, तत्प्रामाण्ये तु हानादिबुद्धिः फलं, व्यापारतः समानविषयत्वं प्रत्यक्षवत् इहापि वेदितव्यं सर्वेषां धूमादीनां प्रमेयज्ञाने व्यापारात् । स्वयमनुमितार्थे परस्यापि अनुमानबुद्धिः येन वाक्येन उत्पद्यते, तद्वाक्यं साधनं इत्युच्यते । तच्च वाक्यं प्रतिज्ञाहेतुदृष्टान्तैः सावयवमङ्गीकृत्य प्रतिज्ञां शोधयति । साध्यनिर्देशः प्रतिज्ञा । साध्यश्च पक्षः । स च धर्मविशिष्टो धर्मी । स स्वयं अनुमितस्यार्थस्य अनुमानेनैव प्रतिपादनं परस्मै वाञ्छता प्रथमं वक्तव्यः इत्याह— 'अनुमानगृहीतस्य तेनैव प्रतिपादनम् । ५३ ॥ परेभ्यो वाञ्छता वाच्यः पूर्वपक्षो (पूर्वमुक्तः पक्षः प्रतिज्ञा) यथोदितः । तत्र धर्मिणमुद्दिश्य साध्यधर्मो विधीयते । ५४ ॥ नियमस्तद्विपक्षाच्च कल्प्यते, नाविरोधिनः ॥' नियमः व्यावृत्तिः । अविरोधिनः धूमवत्त्वस्य ।

अतः परं प्रतिज्ञाऽऽभासा उच्यन्ते । भाष्योक्तलक्षणगतस्य असंनिकृष्टपदस्य व्यावर्त्यमाह— 'असंनिकृष्टवाचा च द्वयमत्र जिहासितम् । ५५ ॥ ताद्रूप्येण परिच्छित्तिस्तद्विपर्ययतोऽपि च ।' येन रूपेण अनुमातुमिष्यते, तेनैव रूपेण तद्विपरीतेन वा रूपान्तरेण शीघ्रप्रमाणेन परिच्छिन्नो यो धर्मी, स संनिकृष्टः । तस्य पक्षत्वं व्यावर्तयितुं असंनिकृष्टपदम् । 'प्रमितस्य प्रमाणे हि नापेक्षा जायते पुनः । ५६ ॥ ताद्रूप्येण परिछिन्ने प्रमाणं निष्फलं परम् । वैपरीत्यपरिच्छिन्ने नावकाशः परस्य तु । ५७ ॥ मूले तस्य ह्यनुत्पन्ने पूर्वेण विषयो हृतः ।' लिङ्गदर्शनव्याप्तिस्मरणादिकं अनुमानस्य मूलं, तद्यावत् नैव निष्पद्यते, तावदेव अनुमानविषयः अपहृतः । अनुमानावगम्यतद्विपरीतरूपेण परिच्छिन्ने तद्विपरीतरूपे न प्रमाणापेक्षा । न केवलमनुमानविषयमेवेदं मन्थरस्य बाधकत्वं, किंतु षण्णामपि प्रत्यक्षादीनां मध्ये येनैव शीघ्रप्रवृत्तिना प्रथमं अर्थः अवधारितो भवति, तेनैव उत्तरकालस्य मन्थरस्य उत्पत्तिनिरोधलक्षणो बाधो भवति इत्याह— 'प्रत्यक्षादेश्च षट्कस्य येनैवार्थोऽवधारितः । ५८ ॥ तेनैवोत्तरबाधः स्याद् विकल्पादेरसंभवात् ।' प्रत्यक्षविरोधोदाहरणमाह— 'अग्राह्यता तु शब्दादेः प्रत्यक्षेण विरुध्यते । ५९ ॥' अनुमानविरोधमाह— 'तेषामश्रावणत्वादि विरुद्धमनुमानतः । नहि श्रावणता नाम प्रत्यक्षेणावगम्यते । ६० ॥ साऽन्वयव्यतिरेकाभ्यां गम्यते बधिरादिषु ।' ततश्च 'शब्दः अश्रावणः गुणत्वात् रूपवत्' इत्यनुमानस्य अनुमानेनैव बाधः । शब्दविरोधमाह— 'त्रिधा शब्दविरोधः स्यात् प्रतिज्ञादिविभागतः । ६१ ॥ प्रतिज्ञा–पूर्वसंजल्प–सर्वलोकप्रसिद्धितः ।' उच्चारमात्रेण प्रतिज्ञाविरोधमाह— 'यावज्जीवमहं मौनीत्युक्तिमात्रेण बाध्यते । ६२ ॥' धर्मोक्त्या प्रतिज्ञाविरोधमाह— 'सर्ववाक्यमृषात्वे तु धर्मोक्त्यैवात्मबाधनम् ।' 'सर्वं वाक्यं मृषा वाक्यत्वात्' इत्यनुमानस्यापि वाक्यरूपत्वात् । 'धर्म्युक्त्याऽहं यतो जातः सा वन्ध्या जननी मम । ६३ ॥' जननी इति धर्म्युक्त्या प्रतिज्ञाविरोधोऽत्र । पूर्वसंजल्पविरोधमाह— 'बौद्धस्य शब्दनित्यत्वं पूर्वोपेतेन बाध्यते ।' सर्वलोकप्रसिद्धिविरोधमाह— 'चन्द्रशब्दाभिधेयत्वं शशिनो यो निषेधति । ६४ ॥ स सर्वलोकसिद्धेन चन्द्रज्ञानेन बाध्यते ।' उपमानविरोधमाह— 'ज्ञातगोगवयाकारं प्रति यः साधयेदिदम् । ६५ ॥ न गोर्गवयसादृश्यं तस्य बाधोपमानतः ।' उपमानतः बाधा । अर्थापत्तिविरोधे वक्तव्ये उदाहरणपञ्चकमाह, दृष्टार्थापत्तिविरोधे— 'गेहावगतनास्तित्वो जीवंश्चैत्रो यदा बहिः । ६६ ॥ नास्तीति साध्यते बाधस्तत्रार्थापत्तितो भवेत् । अग्नावदाहके साध्ये, शब्दे चानभि-

धावके, । ६७ ॥ श्रोत्रादिनास्तितायां च, शब्दा[illegible]साधने ॥ ' इत्यादर्शनावगतगृहाभावकल्पि-तस्य [illegible] अभावपूर्विकया अर्था-पत्त्या बाध्यते । २– प्रत्यक्षावगतदाहकल्पिततच्छक्तेः [illegible] प्रत्यक्षपूर्विकया, ३–चेष्टानुमित-[illegible]नुमानं अनुमानपूर्विकया, ४–[illegible] कर्णशष्कुल्यवच्छिन्नस्य दिग्[illegible]सामर्थ्ये कल्पिते तदभावा-[illegible] अनुमानपूर्विकया अर्थापत्त्या बाधः, ५– अर्था-पत्ति[illegible]अन्यथाऽनुपपत्तिकल्पितशब्दनित्यत्व-[illegible] अर्थापत्तिपूर्विकया । श्रुता-र्थापत्तिविरोधमाह— ' श्रुतार्थापत्तिबाधोऽत्र यदा-ऽऽप्तोक्तिनिवारिते । ६८ ॥ दिवाभुजौ निषिध्येत हेतुना रात्रिभोजनम् । ' अनुपलब्धिविरोधमाह— ' [illegible]विरोधोऽनुपलब्धितः ।६९॥ ' ' [illegible]संबन्धबाधस्तावदुदाहृतः । धर्मधर्म्यु-[illegible]स्वविशेषयोः । ७० ॥ श्रुत्यर्थाक्षिप्त-यो[illegible] बाध्यः सर्वप्रमाणकः । ' तत्र धर्मविशेष-बाधमाह— ' तृणादिविक्रियाहेतोरग्निमद्धिमसा-धने । ७१ ॥ प्रत्यक्षावगताच्छैत्यात् तद्विशेषोऽथ-बाधनम् । ' अग्निः उष्णत्वव्याप्तः स्वव्यापकमुष्णत्वमा-क्षिपेत् । तस्य च प्रत्यक्षावगतेन शैत्येन बाधात् तद्-व्याप्तः अग्निरपि बाधितो भवति । धर्मिस्वरूपतद्विशेष-बाधमुदाहरति— ' अधर्मो विहितो दुःखं करो-त्यल्पमितीह तु । ७२ ॥ विहितत्वादधर्मस्य स्वरूपस्यैव बाधनम् । तथा दुःखनिमित्तत्वं विशेष-स्तस्य बाध्यते । ७३ ॥ ' आगमेनात्र बाधः । उभय-स्वरूपतद्विशेषबाधमुदाहरति— ' अयथार्था धियः सर्वा इत्युक्ते द्वयबाधनम् । स्वरूपस्वविशेषाभ्यां, तद्धीमिथ्यात्वसाधनात् । ७४ ॥ क्षणिकात्यन्तमि-थ्यात्वे विशेषौ च द्वयोरिह । ' ज्ञानस्वरूपस्य तद्विशेषस्य च क्षणिकत्वस्य, अयथार्थत्वस्य तद्विशेषस्य च आत्यन्तिकत्वस्य बाधः, तद्ग्राहिणीनामपि धियां मिथ्या-त्वापातात् । एवं भाष्यस्थासंनिकृष्टग्रहणनिरस्ताः प्रतिज्ञा-भासाः प्रपञ्चिताः । संप्रति हेत्वाभासाः असिद्धानैका-न्तिकविरुद्धाः प्रपञ्च्यन्ते । तत्र एकदेशादर्शनात् इत्यनेन दर्शनशब्देन निश्चयवाचिना निरस्तं असिद्धं दर्शयति— ' दर्शनादेकदेशस्येत्यनेनैतद् व्युदस्यते । ७५ ॥ यत्रैकस्योभयोर्वाऽपि संशयार्थाविपर्ययाः । ' वादि-प्रतिवादिनोः एकस्य द्वयोर्वा संशयश्च, अर्थाः अज्ञानं च, विपर्ययश्च यस्मिन् सः अनिश्चितत्वात् असिद्धः । द्वयोर्वि-पर्ययासिद्धिमाह— ' शैत्यान्न दाहको वह्निः, श्राक्षु-षत्वादनित्यता । ७६ ॥ शब्दस्येत्येवमादौ तु द्वयोः सिद्धो विपर्ययः । ' अन्यतरस्य विपर्ययासिद्धिमाह— ' कृतकत्वगुणत्वादौ परोक्ते याज्ञिकं प्रति । ७७ ॥ स्वोक्ते चैवंप्रकारे स्यादसिद्धोऽन्यतरस्य तु । ' शब्दानित्यत्वे यदेव मीमांसकं प्रति वैशेषिकादिभिः कृत-कत्वगुणत्वादिकं हेतुत्वेनोच्यमानं प्रतिवादिनः असिद्धं, तदेव मीमांसकेनोच्यमानं वाद्यसिद्धमिति । संदिग्धासि-द्धमाह— ' बाष्पादिभावसंदिग्धो द्वयोरन्यतरस्य वा । ७८ ॥ धूमस्त्रिधाऽप्यसिद्धः स्यादेवं तावत् स्वरूपतः ( इयं स्वरूपासिद्धिरुक्ता ) । ' ' एत एव प्रकाराः स्युराश्रयासिद्धिकल्पने । ७९ ॥ ज्ञातेऽपि हि स्वरूपेण नाऽतद्धर्मेऽस्ति हेतुता । सर्वत्र दृष्ट-कार्यत्वादात्मा सर्वगतस्त्विति । ८० ॥ बौद्धं प्रत्या-श्रयासिद्धो लौकिकादेस्तु संशयः । ८१ ॥ ' बौद्धस्य आत्माभावनिश्चयात् विपर्ययासिद्धिः । पृथग्जनानां देहाति-रिक्ते पुंसि संशयात् संदिग्धाश्रयासिद्धिः । अनैकान्तिक-विरुद्धौ भाष्यस्थज्ञातसंबन्धपदव्यावर्तितौ संशयविपर्यय-हेतू दर्शयति— ' संदेहविपरीतत्वहेतू चात्र निरा-कृतौ । ८२ ॥ ज्ञातसंबन्धवचनात्, त्रयः संशय-हेतवः । सत्साध्ये तदभावे वा द्वाभ्यां व्यावृत्त एव च । ८४ ॥ द्वौ विरुद्धार्थसंबद्धौ यावेकत्रैक-देशिनि । ' साध्यतदभावयोः सपक्षविपक्षयोः वर्त-मानः साधारणानैकान्तिकः । ताभ्यां सपक्षविपक्षाभ्यां व्यावृत्तः केवलपक्षे एव वर्तमानः असाधारणः । धर्म्यन्त-रेषु विरुद्धार्थव्याप्तं हेतुद्वयं एकत्र एकदेशिनि दृश्यमानं विरुद्धाव्यभिचारि । साधारणमुदाहरति— ' प्रमेयानि-त्यताऽमूर्तिधर्माः साधारणा द्वयोः । ८५ ॥ नित्या-यत्नोऽथयत्नोत्थाऽनित्येषु द्विरनित्यतः । ' अनि-

त्यत्वं द्विः ग्राह्यं, तेन प्रमेयत्वं—अनित्यत्वं—अनित्यत्वं—अमूर्तत्वं इति चत्वारः यथाक्रमं नित्येषु अयत्नोत्थेषु यत्नोत्थेषु अनित्येषु च साधारणा भवन्ति । तत्र प्रमेयत्वं नित्येषु व्योमादिषु अनित्येषु च घटादिषु विद्यते । अनित्यत्वं यत्नोत्थेषु घटादिषु अयत्नोत्थेषु विद्युदादिषु विद्यमानं द्वयोरन्यतरस्यापि साधनत्वेन उच्यमानं उभयवर्तित्वात् साधारणम् । अमूर्तत्वमपि नित्येषु व्योमादिषु अनित्येषु कर्मादिषु भावात् साधारणम् । असाधारणमुदाहरति— '**नित्या भूर्गन्धवत्त्वेन स्यादसाधारणस्त्वयम् । ८६ ॥ निश्चयैकाङ्गवैकल्यादेष संशयकारणम् । ८७ ॥**' सपक्षान्वयो विपक्षव्यतिरेकश्च द्वयं निश्चयाङ्गम् । तत्र साधारणस्य सपक्षान्वयोऽस्ति, विपक्षव्यतिरेकस्तु नास्ति । तत्रापि (अ–) वृत्तेरसाधारणस्य विपक्षव्यतिरेकोऽस्ति, सपक्षान्वयस्तु नास्ति । तेन निश्चयैकाङ्गवैकल्यात् साधारणवत् असाधारणोऽपि संशये कारणम् । इदं असाधारणस्य संशयकारणत्वं शाक्यमतेनोक्तम् । स्वमते तु क्व चिदपि अदृष्टः धर्मिवदेव न क्व चिद्भावे अभावे वा स्मृतिं जनयति इति नास्य संशयहेतुत्वम् । विरुद्धाव्यभिचारिणमुदाहरति— '**यत्राप्रत्यक्षता वायोरूपत्वेन साध्यते । ९१ ॥ स्पर्शात् प्रत्यक्षता वाऽसौ विरुद्धाव्यभिचारिता । के चिज्जात्यन्तरं चैनां वर्णयन्त्यपरे पुनः । ९२ ॥ साधारणत्वमंशेन समस्तं वाऽप्यनन्वयम् ।**' स्वयं तु जात्यन्तरत्वमेव अत्राभिमतं, 'त्रयः संशयहेतवः' (८४) इत्युक्तत्वात् । कथं पुनः साधनद्वयनिमित्ते संशये निर्णयः ? अत आह— '**प्रतिज्ञा यत्र बाध्येत पूर्वोक्तैर्यस्य साधनैः । ९३ ॥ तत्पराजयतः कार्यो निर्णयो बाधवर्जनात् । क्व चित् संशयहेतू यौ प्रत्येकत्वेन लक्षितौ ।९४॥ संघाते निर्णयस्ताभ्यामूर्ध्वता काकवत्त्ववत् । प्रत्येकं संहतौ वाऽपि गमकावविरोधिनौ । ९५ ॥ तस्माद्भिन्नौ विरुद्धार्थौ हेतू चात्र निदर्शितौ ।**' नहि विरुद्धाव्यभिचारिणोः अनेकत्वात् अनिर्णायकत्वं, ऊर्ध्वत्व—काकनिलयनाभ्यां स्थाणुपुरुष—स्थाणुसाधारणाभ्यां प्रत्येकं स्थाणुत्वनिर्णयासमर्थाभ्यामपि सहिताभ्यां ताभ्यामेव स्थाणुत्वनिर्णयदर्शनात् । तथा प्रत्येकं अग्न्यनुमापकाभ्यां गन्धविशेषधूमाभ्यां सहिताभ्यामपि विरोधिभ्यां तदनुमानं दृश्यते । संशयहेतुस्त्रिधा प्रपञ्चितः [श्लो. ८३–९६] । अथ विपरीतहेतुं प्रपञ्चयति— '**षोढा विरुद्धतामाहुश्चतुर्धा वैकधाऽपि वा । ९६ ॥**' धर्मस्वरूपेण, धर्मविशेषेण, धर्मिस्वरूपेण, धर्मिविशेषेण, उभयस्वरूपेण, उभयविशेषेण इति षोढा । उभयस्य एकैकानतिरेकात् चतुर्विधत्वम् । अवान्तरभेदस्य अनुपयोगात् एकविधत्वमिति । कीदृशे विषये विरुद्धता, तामाह— '**श्रुत्यर्थोक्तस्य बाधायां प्रतिज्ञाऽर्थस्य हेतुना ।**' धर्मविशिष्टधर्मिवचनरूपप्रतिज्ञाऽर्थस्य श्रुत्युक्तस्य धर्मधर्मिस्वरूपस्य, अर्थाक्षिप्तस्य तद्विशेषस्य यत्र हेतुना बाधः तत्र विरुद्धता । धर्मस्वरूपबाधमुदाहरति— '**नित्यत्वे कृतकत्वस्य धर्मबाधाद्विरुद्धता । ९७ ॥**' धर्मविशेषबाधमुदाहरति— '**बाधो धर्मविशेषस्य यदा त्वेवं प्रयुज्यते । अर्थवच्छब्दरूपं स्यात् प्राक्संबन्धावधारणात् । ९८ ॥ विभक्तिमत्त्वात् पश्चाद्वत् स्वरूपेणेति चाश्रिते । अस्वरूपार्थयोगस्तु पश्चाच्छब्दस्य दृश्यते । ९९ ॥ तेन प्रागपि संबन्धादस्वरूपार्थता भवेत् ।**' यो हि स्वरूपमेव शब्दानां अभिधेयं इत्याश्रित्य तत्सिद्ध्यर्थमेवं प्रयुङ्क्ते 'शब्दः संबन्धग्रहणात् प्रागपि अर्थवान् अर्थं बोधयति विभक्तिमत्त्वात् पश्चाद्वत्' इति । सिद्धे चार्थबोधने अर्थान्तरबोधाभावात् स्वरूपार्थत्वं सिद्धं भवति इति, तं प्रति उच्यते, संबन्धग्रहणात् पश्चात् स्वरूपातिरिक्तार्थबोधेन विभक्तिमत्त्वस्य व्याप्तिदर्शनात् दृष्टान्तानुसारेण प्रागपि अस्वरूपार्थबोधनमेव साधयेत्, तच्च प्रमाणान्तरविरोधात् अशक्यं साधयितुम् । यत्तु शक्यं स्वरूपार्थं, तत् अनेनैव हेतुना बाध्यते । शक्यते हि प्रयोक्तुं, 'प्राक् संबन्धात् न स्वरूपार्थत्वं विभक्तिमत्त्वात् पश्चाद्वत्' इति । यदा च अर्थान्तरबोधनं दृश्यादर्शनेन स्वरूपार्थत्वं च हेतुनैव बाधितं, तदा प्रकारान्तरासंभवात् अर्थवत्त्वमेव प्रतिज्ञाऽर्थो बाधितो भवतीति । धर्मिस्वरूप–तद्विशेषबाधोदाहरणमाह—

' इहप्रत्ययहेतुत्वाद् द्रव्यादेर्व्यतिरिच्यते । १०० ॥ समवायो यथेहाऽयं घट इत्यादिसंगतिः । ' संगतिः संयोगः । तत्र स्वरूपबाधं दर्शयति— ' अत्राप्यसमवायत्वं संयोगस्येव सिध्यति । १०१ ॥ तेन धर्मिस्वरूपस्य वैपरीत्याद् विरुद्धता । ' अथ विशेषविरोधं दर्शयति— ' यच्च सत्तावदेकत्वं समवायस्य कल्पितम् । १०२ ॥ तत्र संयोगवद्भेदात् स्याद्विशेषविरुद्धता । ' संयोगे हि प्रतिद्रव्यं भेदेन व्याप्तं, इहप्रत्ययहेतुत्वं समवायस्यापि भेदमापादयत् तस्य विशेषसत्तावत् एकत्वं वैशेषिकाभिमतं बाधेत । उभयस्वरूपबाधमुदाहरति — ' नित्यमात्मास्तिता कैश्चिद्यदा सौत्रान्तिकं प्रति । १०३ ॥ साध्यतेऽवयवाभावाद् व्योमवद् द्वयबाधनम् । ' सौत्रान्तिकस्य आवरणाभावमात्रं व्योम, अभावस्य तुच्छत्वात् स्वरूपमेव नास्ति नतरां नित्यत्वम् । अतस्तेनैव दृष्टान्तेन आत्मनोऽपि स्वरूपं नित्यतां च अनवयवत्वं बाधेत । उभयविशेषबाधमुदाहरति— ' तदोभयविशेषस्य बाधोऽयं साध्यते यदा । १०४ ॥ पारार्थ्यं चक्षुरादीनां संघाताच्छयनादिवत् । ' यदा चक्षुरादीनां शयनादिवत् संघातात् पारार्थ्यं साध्यते, तदा अयं उभयविशेषस्य बाधः इत्यन्वयः । सांख्यानां प्रकृत्यतिरिक्तं पुमांसं साधयतां अयं प्रयोगः । सिद्धे पारार्थ्ये योऽसौ परः, स पुमान् इत्यभिप्रायः । संघातात् सत्त्वरजस्तमआत्मकात् । तत्र विशेषविरोधं दर्शयति— ' शयने संघपारार्थ्यं भौतिकव्याप्तहेतुके । १०५ ॥ आत्मानं प्रति पारार्थ्यमसिद्धमिति बाधनम् । असंहतपरार्थत्वे दृष्टे संहतताऽपि च । १०६ ॥ अनहंकारिकत्वं च चक्षुरादेः प्रसज्यते । ' शयनादिषु संघातात्मकशरीरपारार्थ्येन भौतिकत्वेन च व्याप्तः संहतत्वहेतुः दृष्टः, इति स चक्षुरादीनामपि संहतपारार्थ्यसाधनात् इष्टं असंहतरूपं प्राकृतैः सत्त्वरजस्तमोभिः असंपृक्तं चिन्मात्ररूपं आत्मानं प्रति पारार्थ्यं धर्मविशेषं धर्मिणामपि चक्षुरादीनां धर्मविशेषं आहंकारिकत्वं बाधेत । हेत्वाभासा दर्शिताः । इदानीं भाष्यस्थज्ञातसंबन्धपदव्यावर्तिताः दृष्टान्तदोषा दर्शयितव्याः । तत्रादौ दृष्टान्तवचनं प्रस्तौति— ' गमकस्यैकदेशस्य व्याप्तिर्गम्येति भाषितुम् । १०७ ॥ साध्यसाधर्म्यवैधर्म्ये- दृष्टान्तः प्रतिपाद्यते । तत्र हेत्वर्थमुद्दिश्य साध्योपादानमिष्यते । १०८ ॥ उद्देश्यो व्याप्यते धर्मो व्यापकश्चेतरो मतः । यद्वृत्तयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम् । १०९ ॥ तद्वृत्तमेवकारश्च स्यादुपादेयलक्षणम् । वदत्यर्थं स्वशक्त्या च शब्दो वक्त्रनपेक्षया । ११० ॥ साध्यहेतुत्वमर्थानां व्याप्तिशक्त्यनुरोधतः । ' तस्मादादिभ्यो वाक्ये रचनाविशेषः । रचनादोषमाह— ' तत्राज्ञानाद्यदा वक्ता सहचारविवक्षया । १११ ॥ विपर्ययेण वा हेतोर्न व्याप्तत्वं विवक्षति । विवक्षन्नपि वा शब्दं तद्योग्यं न वदेद्यदि । ११२ ॥ घटे कृतकनाशित्वे, नाशिव्याप्तं कृतेन वा । न तदेष्टस्य हेतुत्वं स्यादनिष्टस्य चैव तत् । ११३ ॥ तस्माद् व्याप्यत्वरूपेण वाच्यो हेतुत्वसंमतः । यदा सम्यक् प्रयुक्तेऽपि वाक्येऽर्थो न तथा भवेत् । ११४ ॥ साध्यहेतूभयव्याप्तिशून्यत्वात् परमार्थतः । नित्यो ध्वनिरमूर्तत्वात् कर्मवत् परमाणुवत् । ११५ ॥ घटवद् व्योमवच्चापि, तद्सद्वादिनं प्रति । धर्म्यसिद्धावपि ह्येवं दृष्टान्ताभासता भवेत् । ११६ ॥ ' व्योमवदिति च तद्भाववादिनं सौत्रान्तिकं प्रति धर्म्यसिद्ध्याऽपि तदाभासता स्यात् । साधर्म्यवैधर्म्यव्याप्तिविषये आह— ' व्याप्त्या साधर्म्य उक्ते च न वैधर्म्यमपेक्ष्यते । सहभावित्वदृष्ट्या तु यदा व्याप्तिं न लक्षयेत् । ११८ ॥ परः साधर्म्यदृष्टान्तात्, तं च नापेक्षते यदा । वक्ता वा सहभावित्वं शुद्धं तेन वदेद्यदा । ११९ ॥ विपरीतान्वयं वाऽपि तत्समाधित्सया तदा । पूर्वज्ञानोपमर्देन वैधर्म्येणेष्टसाधनम् । १२० ॥ व्याप्यव्यापकभावो हि भावयोर्यादृगिष्यते । १२१ ॥ तयोरभावयोस्तस्माद् विपरीतः प्रतीयते । १२२ ॥ तस्माद्धूमेन साध्यत्वमग्नेः प्रार्थयते यदा । १२५ ॥ तदाऽनग्निरधूमेन व्याप्तो वाच्यो न चान्यथा । १२६ ॥ केचित् साधर्म्यदृष्टान्ते व्याप्त्याऽपि कथिते

पुनः । वैधर्म्योक्तिमपीच्छन्ति व्यावृत्तिनियमेच्छया । १३४ ॥ **हेतौ साधर्म्यदृष्टान्तात् साध्येनैवावधारिते । व्यावृत्तिः सर्वतः प्राप्ता साध्याभावे नियम्यते । १३५ ॥** ' ' यो धूमवान् सोऽग्निमान् ' इति साधर्म्यवचनात् धूमः अग्निना नियम्यमानः अग्निव्यतिरिक्तात् सर्वस्मादेव व्यावृत्तः प्रसज्यमानः पुनर्वैधर्म्येण ' यत्राग्निर्नास्ति तत्र धूमो नास्ति ' इत्येवं अग्न्यभावात् व्यावृत्तिः क्रियते । केचिन्मतं दूषयति— '**तत्तु मन्दफलं, यस्मात् पक्षेऽप्येवं निरूपितम् । व्यापकाभावमात्रे हि व्याप्यात्रित्यं निवर्तते । १३६ ॥ तस्मादर्थैव शुक्लत्वे पटस्योक्ते, विरोधिनाम् । निवृत्तिर्न तु दैर्घ्यादेस्तथाऽत्रापि भविष्यति ।** १३७ ॥ ' ' तत्तु (अनुमानं) द्विविधं प्रत्यक्षतोदृष्टसंबन्धं, सामान्यतोदृष्टसंबन्धं च ' इत्यादिभाष्यम् । यत्र विशेषयोरेव प्रत्यक्षेण संबन्धो गृह्यते तत् प्रत्यक्षेण दृष्टसंबन्धं इत्युच्यते । यत्र सामान्ययोः प्रत्यक्षेण संबन्धो गृह्यते तत् सामान्यतोदृष्टं इत्युच्यते इति ।

**बृहती**— ' अनुमानं ज्ञातसंबन्धस्य एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टे अर्थे बुद्धिः ' इति ( भाष्यम् ) ज्ञातसंबन्धस्य इत्युच्यते । कस्य ज्ञातसंबन्धस्य ? ननु एकदेशस्य । नैतदुपपद्यते । दर्शनोपसर्जनत्वादेकदेशस्य । नहि उपसर्जनं पदं पदान्तरेण संबध्यते राजपुरुषवत् । नहि पुरुषसमुदाययोः अनुपादानादेव असंबन्धः । तस्मान्न विद्मः, कस्य ज्ञातसंबन्धस्येति । उच्यते । संबन्धापरिज्ञाननिबन्धनोऽयं व्यामोहः । कः पुनरसौ संबन्धः ? अयमसौ । अनुमानं एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टे अर्थे बुद्धिः । कस्य एकदेशस्य दर्शनात् ? ज्ञातसंबन्धस्य ( इति ) । ननु अस्मिन्नपि संबन्धे, एकदेशस्य उपसर्जनता तदवस्थैव । उपसर्जनमिति नायं संबन्धहेतुः । आकाङ्क्षितपूरणसमर्थं च संबन्धितामापद्यते । अत्र च एकदेशदर्शनात् इत्युक्ते कस्य एकदेशस्य इत्याकाङ्क्षा, दर्शनस्य च दृश्यप्रधानत्वात् तज्जन्यत्वाच्च अर्थान्तरबुद्धेः । अत एव चात्र उत्तरपदप्रधानता, अत्र पूर्वपदप्रधानता इति कचित् कचित् स्थापितम् । तस्मात् प्रयोगसिद्ध्यर्थैवेयं उपसर्जनसंज्ञा । अर्थसंबन्धे हि यस्मादर्थाकाङ्क्षा हेतुः, नोपसर्जनता अनुपसर्जनता वा ' कस्य गुरुकुलं ' इत्येवमादिषु दर्शनात् ।

( शङ्कते— ) उच्यते । व्याप्यं हि दृष्टं व्यापकं गमयति । ज्ञातसंबन्धस्येति च न व्याप्ये एषा षष्ठी । संबन्धिमात्रवचनाद्धि प्रातिपदिकात् षष्ठीं स्मरन्ति । ( उत्तरं— ) उच्यते । सत्यं संबन्धिनि षष्ठी । अव्याप्ये हि वस्तुनि व्याप्यविवक्षायामेव यथा षष्ठी भवति, तथा तत्रतत्र षष्ठ्यर्थे व्याख्यास्यामः । तथा च लौकिकाः ' ममायं, अयं पुनरन्यस्यापि ' इति व्यपदिशन्ति, **ऋजु**— लौकिकैः ममायमिति व्यपदिश्यते । असाधारणेन हि व्यपदेशो भवेत् इति षष्ठ्या संबन्धिव्याप्यता उच्यते । अयं पुनः अन्यस्यापीति प्रतिसंबन्धिव्यापकतैवोच्यते । तेन षष्ठ्यर्थे बहुव्रीहिसमासाश्रयणेन ज्ञातसंबन्धपदेन व्याप्य एवोच्यते, न व्यापक इति ।

कः पुनरिह संबन्धोऽभिमत इति । तत्र तावत् केचित् तादात्म्योत्पत्ती एव संबन्धौ अनुमानकारणत्वेन आहुः । तत्र तादात्म्यात् ' वृक्षोऽयं शिंशपात्वात् ' इति । तदुत्पत्तेरपि ' अग्निरत्र धूमवत्त्वात् ' इति । तदिदमनुपपन्नम् । एकार्थसमवायादिलक्षणादपि संबन्धात् रसात् रूपानुमानदर्शनात् । यच्चेदं कारणात् कार्यानुमानं, न तत् स्वभावहेतुकं, भिन्नत्वात् कार्यकारणयोः । नापि हेतोः, कारणस्य कार्यत्वासंभवात् । **येऽपि** समवाय–संयोग–एकार्थसमवाय –कार्यकारणभाव– विरोधाख्यान् पञ्च संबन्धान् अनुमानाङ्गमाहुः, **तेऽपि** निराकृताः । कृत्तिकोदयात् रोहिण्या ह्यनुमाने पञ्चानामसंभवात् । यत् पुनः नियमापरपर्यायां व्याप्तिमेव संबन्धान्तरभूतां अनुमानकारणं मन्यन्ते, तदपि न सुन्दरम् । नहि स्वस्वामिभावादिव्यतिरिक्ता व्याप्तिर्नाम अपरसंबन्धाऽस्ति । किंतु संबन्धः एव कार्यकारणभावादिः कस्यचित्तु व्यापकः, कस्यचित्तु न इति विशेषः । तत्र यस्य संबन्धेन व्याप्यता, यथा धूमस्य, तस्य गमकता । धूमो हि वह्निकार्यतया वह्निसंयोगितया व्याप्यः । अग्निस्तु न सर्वदा धूमसंबन्धी इति गमकः । तेन कार्यकारणभावादय एव संबन्धा इह अनुमानाङ्गत्वेन अभिमताः ।

(व्याप्तिग्राहकविचारः) ननु कथं व्याप्यता धूमादेरवसीयते ? न तावत् प्रत्यक्षस्य तत्र सामर्थ्यं, तस्य वर्तमानकालाऽऽकलितसंनिहितदेशावस्थितार्थमात्रविषयत्वात् । अव्यभिचारो हि व्याप्तिः । अव्यभिचारश्च सकलदेशव्यापित्वे सति इति । न चानुमानमत्र प्रमाणं, स्वयमसिद्धत्वात् । नापि शाब्दं, कार्यैकविषयत्वात् । नोपमानं, सादृश्यमात्रविषयत्वात् । अर्थापत्तिस्तु सिद्धाव्यभिचारोपजीविनी, इति न तत्र क्रमते । यदपि कोऽपि अपरिपक्वपदपक्त्रिमया भाषया भाषते 'मानसमिदं एवंविधं प्रत्यक्षमुदीयते' इति, तदपि न निरासादरमर्हति । यतः सर्वत्र मनसो बहिरर्थेषु सहकारिनिरपेक्षस्य न प्रवृत्तिः । सहकारिविशेषापेक्षायां च तस्यैव असाधारणत्वात् तेनैव व्यपदेशात् न प्रमाणान्तरापत्तिः । असाधारणकारणानुप्रवेशनिबन्धनं हि प्रमाणान्तरत्वम् । अन्यथा सर्वत्र मनसो व्यापारात् मानसमेकं प्रत्यक्षं स्यात् । अत्र **प्रमाणमाला**परिमलविमलमतयः प्रतीकारमारभन्ते । यद् वस्तु येन प्रमाणेन संबन्धविशिष्टं गृह्यते, यथा प्रत्यक्षेण धूमः अग्निसंबन्धविशिष्टः, तस्य तेनैव प्रमाणेन संबन्धे व्याप्यताऽपि गम्यते । तथाहि । स्वसंवेदनं तावत् इदं भवान् भावयतु, 'धूमोऽयं अग्निसंबद्धः' इति किमत्र देशकालाभ्यां धूम एव केवलमाकलितः प्रतीयते ? अथ संबन्धिताऽपि तस्य देशकालव्यवच्छिन्ना प्रतीयते इति । तत्र वयं तावत् इदंतया संनिहितवर्तमानात्मिकया लिङ्गिनो धर्मीभूतो धूमः अवभाति इति पश्यामः । न च धर्मभूतः अग्निसंबन्धोऽपि परविशेषणभावोपक्षीणस्वभावः । तत्र धूमसत्त्वैव केवलं कालान्तरदेशान्तरप्रवृत्तौ प्रमाणान्तरमपेक्षते । अग्निसंबन्धस्तु प्रमाणान्तरानुबन्धसिद्ध एव । तत एव च प्रतीतेऽपि विषये प्रमाणान्तरत्वे यत्नः करिष्यते । ननु एवं तर्हि वह्निरपि धूमसंबन्धी लिङ्गं स्यात् । न स्यात् । एतदसंबन्धोऽपि तस्यास्तीति धूमस्य च भविष्यति इति किमत्र प्रमाणम् । अतस्तत्संबन्धव्याप्तिको धूमोऽपि स्यात् । तत्र ते एव प्रमाणविचारपारदृश्वानः विशेषमभिदधति । यद्विधे हि यस्य दर्शनं, तथाभूते एव तदाशङ्का अवतरति । यस्य च कुतश्चित् उपाधेः संबन्धः यथा अग्नेः आर्द्रेन्धनसंबन्धात्, तस्य तदुपाधिविगमात् असंबन्धोऽपि । न च धूमस्य अग्निसंबन्धः औपाधिकः । कथमयं विभागो विवेचनीय इति चेत्, तदन्वयव्यतिरेकाभ्यां तु । यस्य हि यदौपाधिकं संभाव्यते तद्विगमेऽपि चेदुपलभ्यते, ज्ञायते, नायं तदुपाधिक इति । एतच्च असकृद्दर्शनप्रभवात् इत्युक्तं 'अव्यभिचारस्तु असकृद्दर्शनगम्यः' इति । तदियं दिगुपदर्शिता ।

तत्र ज्ञातसंबन्धशब्देन ( भाष्यस्थेन ) साधारणासाधारणविरुद्धाः हेतुदोषा निरस्ताः । अत्र **असाधारणः** 'गन्धवत्त्वात् नित्या पृथिवी' इति । अस्य हि भूतान्तरवैलक्षण्यात् तस्याश्च सिषाधयिषितनित्यताश्रयत्वेनासिद्धौ च संबन्धिना सह संबन्धावधारणानुपपत्तेः न ज्ञातसंबन्धत्वम् । **साधारणस्तु** 'नित्यः शब्दः प्रमेयत्वात्' इति । अस्य प्रमेयत्वलक्षणस्य धर्मस्य नित्यतया सह संबन्धोऽस्ति, व्याप्तिस्तु नास्ति । तेन ज्ञातः संबन्धो यस्य इति षष्ठ्यर्थाभावात् न ज्ञातसंबन्धत्वम् । **विरुद्धः** पुनः 'पटो नित्यः कृतकत्वात्' इति । अस्य संबन्ध एव नास्ति इत्यज्ञातसंबन्धता । 'एकदेशदर्शनात्' इति अपक्षधर्मस्य हेतुत्वं निरस्तम् । यथा 'प्रत्यक्षं कर्म रूपवत्त्वात्' इति । नहि कर्मणो रूपं धर्मः । कस्य तर्हि ? द्रव्यस्य । तथा **असिद्धस्य** हेतुत्वं दर्शनग्रहणेन निरस्तम् । तदेवं संबन्धे व्याप्तिपक्षधर्मत्वे हेतोः रूपे निश्चिते अनुमानाङ्गं इति स्थितिः ।

**बृहती**— तत्तु द्विविधं इति ( भाष्यं ) किमिदं द्वैविध्यम् ? लक्षणद्वैविध्यं तावन्नास्ति, एकदेशदर्शनात् इत्येकत्वात् लक्षणस्य । अथ प्रमेयद्वैविध्यमङ्गीकृत्य एतदुच्यते, एकस्य विशेषात् विशेषोऽवगम्यते, अन्यत्र सामान्यात् सामान्यावगतिरिति । एवं च हेतुभेदात् हेतोरपि भेद उक्तो भवति । किं पुनरनयोर्भेदकथनप्रयोजनं ( न किं चिदित्यर्थः ) । लक्षणाभिधानेन च अव्यभिचारिता उक्ता भवति । तदर्थश्चायं प्रयासः ( अव्यभिचारित्वार्थः लक्षणात्मकः ) । हेतुहेतुमतोः द्वैविध्यं भवतु वा, मा वा । अत्र **के चित्** नीतिज्ञंमन्याः अनवधृतस्वलक्षणमेव किं चिदनुमानेन सामान्यतो ( सामान्यरूपेण ) गृह्यते इति मन्यन्ते । तद्भ्रमापनोदनाय एतदुक्तं 'तत्तु द्विविधं' इति ( विप्रति-

पत्तिनिरासार्थमुक्तम् ) । अदृष्टस्वलक्षणविषयमनुमानमस्ति क्रियादिषु ( क्रियायां शक्तौ च )। कथं पुनः अदृष्टस्वलक्षणे ( णयोः ) संबन्धि( न्ध ) दर्शनम् ? । उत्पत्तिनतः ( स्व- )फलस्य दर्शनात् इत्युपपादितमधस्तात् अस्माभिः शून्यवादे । अतः सामान्यमात्रपर्यवसायि अनुमानमस्ति । दर्शितं च ( भाष्ये ) 'देवदत्तस्य गतिपूर्विका' इति ।

( लक्षणाभिधानप्रयोजनं पृच्छति ) कः पुनरनुमाने व्यभिचारः ? यथा प्रत्यक्षे शुक्तिकादिषु । ननु इदानीमेव द्विविधं शब्देन प्रदर्शितम् । ननु आनुमानिकेति आनुमानिकं निरस्तनीयं, न पुनः आनुमानिकस्य उद्धारो वक्तव्यः । कश्चात्र विशेषः ? येऽपि हि आनुमानिकं अनानुमानिकमिच्छन्ति तेऽपि अनुमानं व्यभिचारयन्त्येव । तस्मादत्रापि व्यभिचारनिवृत्तिरेव लक्षणाभिधानस्य प्रयोजनम् । किंच प्रमेयेऽपि संकरः ( अविवेकः अस्ति सोऽपि लक्षणेन निवर्त्यते ) न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षमः इति **के चित्** । विशेषा एवावगम्यन्ते इत्य**परे** । स्मृतिमात्रमि**त्यन्ये** । ( संबन्धिव्याप्तिग्रहणेन गृहीतत्वात् । यस्मादेवं संकरोऽस्ति — ) तस्मात् 'ज्ञातसंबन्धस्य एकदेशदर्शनात् एकदेशान्तरे ज्ञानं असंनिकृष्टे' इति विशिनष्टि । किमनेन निराकृतं ? स्मरणं तावन्निरस्तं संनिकृष्टे इति वचनात्। अप्रतिपत्तिरपि निरस्तैव बुद्ध्युत्पादवचनात् । संबन्धावगमात् इति विशेषावगतिरपि निरस्तैव । ननु च न बुद्ध्युत्पादवचनमात्रात् प्रमाणता शक्यते वक्तुं, शुक्तिकादिषु व्यभिचारात् । असंबन्धस्य तु दर्शनं संबन्धाभिधानादेव प्रत्युक्तम् । संबन्धावगमे च पूर्वानुभवो दुर्निवारः । अहो अयमविवेकिनो महान् प्रमादः । किं पूर्वदृष्टस्य अनुभवो न संभवति ? अनुभूतिश्च न प्रमाणम् ? अन्या च स्मृतिः, अन्योऽनुभवः । ( तदेवाह— ) सत्यं संबन्धस्य दर्शनादि स्मृतिः ( धूमेऽग्निसंबन्धितया ) संबध्यन्तरे तु ( अग्नौ ) अनुभव एव । ततश्च असंशयं पुनःपुनर्दृश्यमानं दृश्यते एव इति लौकिका व्यपदिशन्ति, न स्मर्यते इति । सिद्धं च अनुमानादिषु प्रमाणत्वमनुभूतेः । किं तर्हि असंनिकृष्टे इति ? स्मरणाभिमानशून्ये इत्यर्थः । संनिकृष्टावमर्शे हि स्मरणमेव मन्यते । ननु च स्मृतिप्रमोषतुल्यता एवं प्राप्नोति । न । कारणान्तरस्य विद्यमानत्वात् लिङ्गादेः । ( पूर्वानुभवोपजीवि विज्ञानं स्मरणम् । तच्च तदुपजीवित्वं प्रतिभासतो वा 'स घटः' इत्यादौ अनुभूतत्वस्य विद्यमानत्वात्, कार्यतो वा रजतादि प्रतीतेरन्यथाभावात् । अनुमानस्य लिङ्गाद्येव कारणमस्ति इति पूर्वानुभवोपजीवित्वं नास्ति । अतः प्रमाणमेवेदं, न स्मरणम् ) । नह्यत्र पूर्वानुभूतिरेव कारणम् । तत्र हि प्रमोषः स्मृतिविपर्यये हेतुः । इह तु लिङ्गादि प्रत्युत्पन्नं कारणमस्ति इति सिद्धं प्रामाण्यम् । तस्मादत्रापि यत् प्रमाणं न तत् व्यभिचरति इति वक्तव्यं, उक्तं च । इदं उपमानादिष्वपि योज्यम् । पृ. ६९-८१.

* अनुमानं ज्ञायमानं लिङ्गं इति **के चित्** । भूतभाविलिङ्गाभ्यां अनुमित्यजननापत्तेः तज्ज्ञानं इति युक्तम् । तच्चानुमानं द्विविधं स्वार्थं परार्थं च । परामर्शेन स्वस्यैव ( पुरुषस्य ज्ञातुः ) साध्यज्ञानजनकं स्वार्थम् । प्रतिज्ञाद्यवयवप्रयोगेण परस्य साध्यज्ञानजनकं परार्थम् । अवयवत्वं च अनुमानवाक्यैकदेशत्वम् । ते च प्रतिज्ञाहेतूदाहरणोपनयनिगमनरूपाः पञ्च । साध्यविशिष्टपक्षप्रतिपादकवाक्यत्वं प्रतिज्ञात्वं, यथा 'पर्वतो वह्निमान्' इति । तृतीयान्तपञ्चम्यन्तान्यतरानुमितिप्रयोजकवाक्यत्वं हेतुत्वं, यथा 'धूमवत्त्वात्' इति । सदृष्टान्तव्याप्तिप्रतिपादकवाक्यत्वं उदाहरणत्वं यथा 'यो धूमवान् सोऽग्निमान् यथा महानसः' इति। व्याप्तिविशिष्टवैशिष्ट्यावगाहिपक्षप्रतिपादकवाक्यत्वं उपनयत्वं, यथा 'तथा चायं' इति । व्याप्तिविशिष्टवैशिष्ट्यहेतुकसाध्यविशिष्टपक्षप्रतिपादकवाक्यत्वं निगमनत्वं, यथा 'वह्निव्याप्यधूमवत्त्वात् वह्निमान्' इति । उदाहरणं साधर्म्योदाहरणं वैधर्म्योदाहरणं चेति द्विविधम् । हेतुमदुद्देशेन साध्यवदुपादानं आद्यम् । साध्याभाववदुद्देशेन हेत्वभाववदुपादानं द्वितीयम् । तत्र एकेनैव गतार्थत्वात् न द्वयोरावश्यकतेति । एवं च अवयववाक्यैः अवान्तरवाक्यार्थज्ञाने जनिते 'धूमज्ञानज्ञाप्यवह्निमदभिन्नः पर्वतः धूमव्यापकवह्निमन्महानससदृशः वह्निव्याप्यधूमवत्त्वहेतुकवह्निमदभिन्नः' इति महावाक्यार्थज्ञानात् परः

साध्यं बुध्यते इति अक्षपादीयाः। प्रतिज्ञाहेतूदाहरणैरेव 'धूमवत्त्वाद्वह्निमानयं पर्वतः वह्निव्याप्यधूमवान्महानसवत्' इति वाक्यार्थज्ञानात् अनुमितिजननात् उपनयनिगमने व्यर्थे। न च पर्वते धूमवैशिष्ट्यज्ञानार्थमुपनयः, प्रतिज्ञाहेतुभ्यामेव सिद्धेः। निगमनप्रयोगस्तु सर्वथैव व्यर्थः। एवं च उपनयनिगमने नावयवौ इति। यद्वा उदाहरणप्रभृतिभिरेव साध्यसिद्धेः प्रतिज्ञाहेत्वोः न किंचित् प्रयोजनं इति दिक्। **मणि** पृ. ३९–४०, * अनुमानं तु 'ज्ञातसंबन्धस्य एकदेशदर्शनात् देशान्तरे असंनिकृष्टे बुद्धिः' इति सूत्रेणोक्तम्। सामान्यरूपेण ज्ञातव्याप्तिकस्य व्याप्तिविशेषदर्शनजन्यं संदिग्धसाध्यवदधिकरणकं असंनिकृष्टसाध्यविषयकं निश्चयरूपं ज्ञानं अनुमितिरित्यर्थः। व्याप्यताऽवच्छेदकप्रकारकपक्षधर्मतानिश्चयजन्यं ज्ञानं अनुमितिरित्यर्थः। **न चैवं** पदजन्यपदार्थस्मरणवत् व्याप्यज्ञानेन व्यापकस्मृतिः इति **वाच्यम्।** व्यापकवत्पक्षस्य अनुभवाभावेन व्यापकवत्पक्षस्मृतित्वासंभवात्। **न च** अंशे उपेक्षात्वानुपेक्षात्ववत् आंशिकं स्मृतित्वानुभवत्वमिति **वाच्यम्।** उपेक्षात्वानुपेक्षात्वयोः अविरुद्धयोर्धर्मयोः एकानुभववृत्तित्वेऽपि विरुद्धयोः एकज्ञानवृत्तित्वासंभवात्। अत एव चाक्षुषत्वमानसत्वयोर्विरोधेन वह्न्यंशे मानसत्वं अपास्तम्। वहिर्विषये तस्य अस्वातन्त्र्यात् पक्षचाक्षुषसामग्र्याः प्रतिबन्धकत्वाच्च। **न च** तथापि व्याप्यताऽवच्छेदकप्रकारकपक्षधर्मतानिश्चयजन्ये तदनुव्यवसाये तद्विशिष्टवैशिष्ट्यप्रत्यक्षे तत्सदृशज्ञानजन्यानुमितौ विशिष्टशाब्दबोधे तत्स्मरणे च अतिव्याप्तिः इति **वाच्यम्।** तादृशनिश्चयत्वेन हेतुत्वस्य विवक्षणात्। उक्तस्थलेषु अनुव्यवसाये विषयत्वेन विशिष्टवैशिष्ट्यप्रत्यक्षे विशेषणताऽवच्छेदकप्रकारकनिश्चयत्वेन, उपमितौ सादृश्यज्ञानत्वेन, शाब्दबोधे च अवान्तरवाक्यार्थज्ञानत्वेन, स्मृतौ अनुभवत्वेन हेतुत्वात्। एवं भ्रमसंशयोत्तरप्रत्यक्षे विशेषदर्शनस्य भ्रमादिविरोधित्वेन हेतुत्वात् भ्रमसंशयोत्तरैककोटिकप्रत्यक्षत्वस्य अर्थसमाजसिद्धतया विशेषदर्शनजन्यत्वानङ्गीकाराद्वा नातिव्याप्तिः। **न च** अन्वयव्यतिरेकव्याप्त्योः अननुगमेन एकोपादाने अपरत्राव्याप्तिः इति वाच्यम्। व्यभिचारज्ञानविरोधिज्ञानत्वेन व्याप्तिज्ञानस्य अनुमानत्वम्। तेन व्यभिचारज्ञानविरोधिज्ञानविषयतावच्छेदकधर्मप्रकारकपक्षधर्मताज्ञानजन्यं ज्ञानं अनुमितिः इति तु फलितम्। **नैयायिकास्तु** व्याप्यत्वव्यभिचारधीविरोधिधीविषयधर्मप्रकारकपक्षधर्मताज्ञानजन्यज्ञानं अनुमितिः इति वदन्ति। तत्परामर्शवादे निराकरिष्यते। यद्वा अनुमितित्वजातिमती अनुमितिः। अनुमितित्वजातिस्तु 'अनुमिनोमि' इति अनुभवसिद्धा। तत्करणमनुमानं, तच्च भूतभाविलिङ्गेन अनुमित्यनुत्पत्त्यापत्तेर्ज्ञानमेव, न तु ज्ञायमानो हेतुः। पृ. ३०–३१. * अनुमानं द्विविधं सामान्यतोदृष्टं विशेषतोदृष्टं च। द्विविधमपि पुनर्द्विविधं स्वार्थं परार्थं च। केवलान्वयि–केवलव्यतिरेकिभेदौ तु नेष्टौ। '**लिङ्गिज्ञानं च तद्वत् स्यात् त्रिरूपाल्लिङ्गतो न तत्**' इत्यनुमाने त्रैरूप्यवर्जितस्य लिङ्गत्वासंभवोक्तिः। (**श्लोवा.** अनुमानपरिच्छेदे १६७.) * अनुमानं न धर्मप्रमितिजनकं व्याप्याभावेन व्याप्यग्रहात् इति। **मणि.** पृ. ४२. * अनुमानम्। न महानसादिषु दृष्टो धूमः पर्वतस्थमग्निं प्रतिपादयितुं क्षम इति केचित् (अन्यस्य संबन्धे गृहीते अन्यस्य अगमकत्वात्)। विशेषा एवावगम्यन्ते इत्यपरे (सामान्यतोदृष्टस्य संबन्धग्रहणाभावेन अनुपपत्तेः) स्मृतिमात्रमेव इत्यन्ये। (संबन्धिव्याप्तिग्रहणेन गृहीतत्वात्)। **बृहती.** पृ. ३८–३९. *अनुमानं प्रत्यक्षेण वचनेन बाध्यते। **भा.** १०।१।१०।३७. * अनुमानं प्रत्यक्षदृष्टे न संभवति इति साहसमिदम्। **बृहती.** पृ. १६६. * अनुमानं प्रत्यक्षविरुद्धं नोदेति, स्वकार्यं वा साधयति। **भा.** १।१।६।२०. * '**अनुमानं प्रमाणं च तावदर्थेषु जायते। रुध्यते विषयो यावन्नास्य प्रत्यक्षजन्मना॥**' **वा.** १।३।२।३ पृ. १७४, * अनुमानं लोकेऽपि तृणधूमदर्शनात् तृणाग्निरेव अनुमीयते, नाग्निमात्रम्। यथा च गमनं गोशब्दस्युत्पत्तिनिमित्तत्वेन उपादीयमानं सास्नादिमत्सामान्यप्रत्ययोत्तरकालं तद्गतमेव निमित्तत्वं प्रतिपद्यते, न गन्तृमात्रविषयं इति गोशब्दव्यवस्था। १।२।३।३० पृ. १४३, * अनुमानं लोकेऽपि यं धर्मिणं प्रतिज्ञाय यो हेतुः उपदिश्यते, स

प्रथमं तावत् तद्गतविशेषात्मनैव प्रतीयते। तदात्मकस्य तु साध्यांशानुगमाभावात् सामान्यमात्रं विवक्षितमिति दृष्टान्तप्रयोगवेलायामेव अवधार्यते। १।२।३।३० पृ. १४२. * अनुमानं लोके व्याप्त्यविरोधेन सामान्यरूपस्यैव धूमादेः हेतुत्वावगमात्। वेदे तु हेत्वन्यथाऽनुपपत्तिकल्प्यस्य दृष्टान्तवाक्यस्य सामान्यव्याप्तिविषयत्वायोगात् न तदनुरोधेन हेतोः सामान्यरूपताऽऽपत्तिः। सु. पृ. ९१. * अनुमानं लौकिकं प्रमाणम्। मणि. पृ. १३. * अनुमानं 'संदिग्धं चेत् सामान्यतोदृष्टं न प्रमाणम्।' भा. ६।७।१३।३४. * अनुमानं सर्वत्र दृष्टानुसारि। सामान्यतोदृष्टमपि न दृष्टोपमर्देन क्व चित् वर्तते। ऋजु. पृ. १४४. * दृष्टानुगुणं चानुमानं न दृष्टविरोधि। बृहती. पृ. २०२. * न च अनुमानं प्रत्यक्षविरोधि प्रमाणं भवति। भा. १।१।२।२ पृ. १७, * न च प्रत्यक्षविरोधे अनुमानं संभवति। ३।३।७।१४ पृ. ८५३. * प्रत्यक्षेण अनुमानं बाध्यते मृगतृष्णादिप्रत्ययाश्च। वा. ३।३।७।१४ पृ. ८५९. * संभावितभ्रममिति प्रत्यक्षमेव दुर्बलं मन्यामहे। अनयैव प्रकटिताप्रकटितभ्रमकारणतया उक्तं न्यायविद्भिः 'भवति वै प्रत्यक्षादपि अनुमानं बलीयः' इति। बृहती. पृ. २०४. * सर्वत्रैव च वस्तुसत्ताबोधाय अनुमानं अपर्याप्तं इति उक्तं प्राक् (प्रत्यक्षसूत्रे श्लोकवार्तिके)। वा. २।१।५।२ पृ. ३९०. * अनुमानेन अनुमानाभासो बाध्यते। बाल. पृ. १३१. * अनुमानात् इतिकर्तव्यतासद्भाव उक्तः। स च आग्नेयात् प्रवर्तते इति नैतद्विषयमनुमानम्। अथोच्यते, येन एकदेवत्यस्य फलं साधयतः अग्न्यन्वाधानादि दृष्टं, अयमपि च एकदेवत्यः (सौर्यादिः) तस्मात् अस्य भवितव्यं अग्न्यन्वाधानादिभिरिति। तन्न। देवदत्तस्य प्रयोजनं साधयतः शुक्ले वाससी ज्ञाते, यदन्यस्यापि प्रयोजनं साधयतः ते एव प्राप्नुतः त्वदीयेन। किंच फलवतोऽङ्गं प्रयाजा दृष्टाः, अग्निहोत्रस्यापि फलवत्त्वात् तस्य स्युः। तस्मात् अनुमानेन इतिकर्तव्यतायां बहु असमञ्जसम्। अत उपमानेन धर्मप्राप्तिः। टुप्. ८।१।२।२ पृ. १५८५. * अनुमानात् प्रत्यक्षं कारणं बलवद्भवेत्। भा. ३।५।८।२३. * अनुमानात् प्रत्यक्षं बलीय इति नैयायिकाः। बृहती. पृ. २०४. * अनुमानात् प्रयोगो बलवान्। राज्यस्य कर्तारं 'राजा' इत्यनुमिमीमहे, क्षत्रिये तु प्रत्यक्षं (राजशब्दं) प्रयुञ्जानानुपलभामहे। भा. २।३।२।३ पृ. ५८५. * अनुमानात् वास्तवी कार्यापत्तिः। 'नखावपूतानां चरुः' इति। अवहननस्य तुषकणविमोकं फलं दृष्ट्वा अनुमानं भवति, नूनं उलूखलमुसलकार्ये नखा वर्तन्ते इति। टुप्. ९।२।१२।४० पृ. १७३०. * प्रत्यक्षं चानुमानात् बलीयः। दुर्बलस्य च बाधो न्याय्यो न च बलीयसः। भा. १२।१।२।७ पृ. २२२३. * संयोगिनोः अन्यतरो दृश्यमानः इतरं अदृश्यमानमपि अनुमानात् बुद्धौ संनिधापयति। भा. ८।१।२।२. * अनुमानस्य देशकालाधिक्यात् युक्तं अगृहीतग्राहित्वम्। रत्नाकरः. पृ. ३६३. अनुमानस्य प्रत्यक्षस्य च अविषयो धर्मः। वि. १।१।२. * अनुमानस्य प्रत्यक्षेण उत्पत्तिप्रतिबन्धलक्षणो बाधो भवति। सु. पृ. १३७. * अनुमानस्य मानसप्रत्यक्षबाधितविषयता। कणिका. पृ. ४६. * असकृत् दृष्टसंबन्धो हि अनुमानस्य हेतुः असजातीयव्यावृत्तिसव्यपेक्षश्च (असजातीयेभ्यः अनग्निभ्यः या धूमस्य व्यावृत्तिः तदपेक्षश्च)। बृहती. पृ. ८३. * परार्थानुमानस्य तार्किकाणामिव न पञ्चावयवाः, किंतु त्रय एव। तदुक्तं 'तत्तु पञ्चतयं के चिद् द्वयमन्ये वयं त्रयम्। उदाहरणपर्यन्तं यद्वोदाहरणादिकम्।' इति। बाल. पृ. ८. * अनुमानेऽपि भ्रान्तिरविशिष्टा। न ब्रूमः अनुमानेऽपि भ्रान्तिर्नास्तीति, किंतु अत्र भेदाग्रहणात् तद्बुद्धिः अतस्मिन्नपि भवति। बृहती. पृ. २०४. * अनुमाने निश्चितं गमकम्। शा. १।१।५ पृ. ७७. * 'यस्य खादिरः स्रुवो भवति' इत्येवमादिर्विस्तरः, 'यस्य एवंरूपाः स्रुचः' इति संक्षेपः। एवंरूपः प्रकृतौ विधिर्दृष्टः, अयमप्येवंरूपः, तस्मात् प्राकृतः इति सामान्यतोदृष्टानुमानम्। भा. ३।६।१।६. * वेदहेतूनां न सामान्यात्मना साध्यसंबन्धोऽवगतो न विशेषात्मना, सोऽधुनैव अर्थापत्त्या कल्पनीयः। तत्र विशेषस्योपादानात् सामान्याप्रसिद्धेश्च तत्परित्यागनिमित्तस्य असंभवात् उपात्तविशेषमात्रोपसंहृतान्यथाऽ-

नुपपत्तिः तद्गतमेव दृष्टान्तवचनं कल्पयति । तदेतत् **विशेषदृष्टमनुमानम्** । **वा.** १।२।३।३० पृ. १४२. * **अनुमानाङ्गम्** । येऽपि समवाय–संयोग–एकार्थसमवाय–कार्यकारणभाव– विरोधाख्यान् पञ्च संबन्धान् अनुमानाङ्गमाहुः ( इदं वैशेषिकमतम् ९।२।१ सूत्रे ) तेऽपि निराकृताः । कृत्तिकोदयात् रोहिण्या ह्यनुमाने पञ्चानामसंभवात् । **ऋजु.** पृ. ७३. * **अनुमानादीनां** निमित्तग्रहणपूर्वकं स्वार्थे प्रामाण्यम् । ( लिङ्गसादृश्यादीनां निमित्तानां ग्रहणे सति स्वार्थे अनुमेयादौ अनुमानादीनि प्रवर्तन्ते ) । **बृहती.** पृ. ३४. * यद्यपि चोदनालक्षणधर्माभ्युपगमात् **अनुमानादीनां** ईदृशेषु असामर्थ्यं स्थापितं, तथापि वेदार्थनिर्णये तेषां कारणत्वानिषेधात् तदर्थनिर्णयार्थं अनुमानोपन्यासः । **वा.** २।२।१।१।२५ पृ. ५४३. * वेदावगम्येऽर्थे **अनुमानादीनां** निषिद्धेऽपि कारणत्वे वेदार्थसंदेहे यः अनुमानाद्यविरुद्धः, सः अङ्गीकार्यः न विरुद्धः इत्येवं वेदार्थनिर्णये तेषां हेतुत्वं भविष्यति । **सु.** पृ. ८३९. * **अनुमानादिषु** सिद्धं प्रमाणत्वमनुभूतेः । **बृहती.** पृ. ८०, * **अनुमानगम्यस्य** स्वरूपं नोपलभ्यते इत्युक्तम् । पृ. २४३. * **अनुमाननिरूपणस्य** जगन्निर्मातृपुरुषधौरेयसिद्धिः प्रयोजनं इति नैयायिकाः । तथाहि, सिद्धसाधनभिया जन्यकृत्यजन्यं द्व्यणुकं पक्षीकृत्य सकर्तृकं कार्यत्वात् इत्यनुमानेन तत्सिद्धिरित्याहुः । तदापातरमणीयम् । धर्मवत् वेदमात्रगम्यत्वेन तदावेदकानुमानासंभवात् । तथाहि, उक्तानुमानस्य अकर्तृकत्वसाधकेन शरीराजन्यत्वेन सत्प्रतिपक्षितत्वात् । **यदि** चात्र शरीरविशेषणस्य स्वरूपासिद्धिवारकतया व्यर्थविशेषणत्वेन, नित्यत्वोपाधिकतया व्यभिचारित्वेन सत्प्रतिपक्षासंभवः इति विभाव्यते, **तदा** भवत्पक्षमेव पक्षीकृत्य शरीरमात्रकर्तृकत्वाभाववत् वस्तुत्वात् इति सत्प्रतिपक्षः । न च अत्रापि नित्यत्वमुपाधिः, देहाङ्कुरादावेव अशरीरमात्रकर्तृकत्वसंदेहेन घटादौ तदभावस्य असंदिग्धतया साध्यव्यापकत्वाभावात् । कार्यत्वहेतोश्च अशरीरमात्रकर्तृकत्वाभावसाधकतया साधारणानैकान्तिकत्वं च बोध्यम् । अतो वेद एव ईश्वरसिद्धौ प्रमाणं नान्यत् इति दिक् । **मणि.** पृ. ८९–९३. * लोकविरुद्धानुमानासंभवात् । **वा.** १।१।१।९ पृ. १०९.

* अनुमानपरिच्छेदः (पञ्जिका) ' **ज्ञातसंबन्धनियमस्यैकदेशस्य दर्शनात् । एकदेशान्तरे बुद्धिरनुमानमबाधिते** ।। ' ज्ञातः संबन्धनियमो यस्य तस्यैकदेशस्य दर्शनादेकदेशान्तरे बुद्धिः सा अनुमानमित्यर्थः । कः पुनरयं संबन्धः ? अविनाभावस्तादात्म्यं तदुत्पत्तिनिबन्धनः इति **केचित्** । द्विविधो ह्यर्थः स्वविषयबोधजनकश्च अतज्जनकश्च । तत्राद्ये प्रत्यक्षमेव प्रमाणं, इतरस्य तु सत्तानिश्चयो दुर्लभ एव । यज्जनितं हि यज्ज्ञानं, तत् तेन विना सत्तामलभमानं तस्य सत्तां निश्चाययितुमलम् । यस्य तु न स्वजनितं ज्ञानमस्ति, तस्य सत्ता कुतो निश्चीयते । न चार्थान्तरजनितं ज्ञानं तत्सत्तां निश्चाययितुमलं, अविसंवादनियमे कारणाभावात् । तस्य तु तदविनाभावित्वे युक्तः अविसंवादनियमः ; पारंपर्येणापि हि यत् यत्प्रतिबद्धं तत् तदविसंवादकं भवत्येव । धूमादिजन्यं हि पावकादिज्ञानं धूमाद्यविनाभावि, धूमादिकमपि पावकाद्यविनाभावीति तदविसंवादनियमोपपत्तिः । अविनाभावनियमश्च नाप्रतिबद्धस्योपपद्यते । प्रतिबद्धश्च तादात्म्येन तत्कार्यतया वा संभवेन्नान्यथा । तदुक्तम् । ' **कार्यकारणभावाद्वा स्वभावाद्वा नियामकात् । अविनाभावनियमोऽदर्शनान्न न दर्शनात्** ।। ' सपक्षे दर्शनमात्रान्नाविनाभावनियमः, नापि विपक्षे अदर्शनमात्रादित्यर्थः । कार्यं हि कारणायत्तात्मलाभं न कारणेन विना भवितुमलमित्यविनाभावनियमकारणम् । यदात्मा च यो भावः तद्विना स कथं भवेत्, इति तादात्म्येऽपि युक्त एवाविनाभावनियमः । कार्यकारणभावावगमस्तु प्रत्यक्षानुपलम्भदर्शने संभवति । सत्यग्नौ धूमः उपलभ्यते, असत्यग्नौ सत्स्वपि तदितरेषु कारणेषु नोपलभ्यते इति । एतावदेव च कार्यस्य कार्यत्वं, यत् तस्मिन् सत्येव भावः, असति च तस्मिन्नभावः इति । तन्मात्रानुबन्धसिद्ध्या च तादात्म्यसिद्धिः । तन्मात्रानुबन्धसिद्धिरपि विपक्षे बाधकप्रमाणप्रवृत्त्यायत्ता । बाधकं च प्रमाणमनुपलब्धिरूपमेव । सर्वप्रतिषेधानामनुपलब्धिनिबन्धनत्वात् । तदाह

 अनुमानपरिच्छेदः

'यावान् कश्चित् प्रतिषेधः स सर्वोऽनुपलब्धेः' इति । **तदिदमनुपपन्नम्** । तथाहि । अग्नौ सति धूमः इति तावत् प्रत्यक्षेणावगम्यताम्, असति त्वग्नौ धूमो नास्तीति किं प्रमाणम्? नन्वनुपलब्धिलिङ्गकमनुमानमेवेति । अनुपलब्धावपि तदविनाभावः पर्येषितव्यः । स तावन्न तादात्म्येन । तन्मात्रानुबन्धेन हि तादात्म्यं सिध्यति । तन्मात्रानुबन्धसिद्धिरपि विपक्षे बाधकप्रमाणप्रवृत्तेः । अनुपलब्धिरेव च बाधकं प्रमाणम् । सर्वप्रतिषेधानामनुपलब्धिसाधनत्वात् । बाधकप्रमाणभूतानुपलब्धावपि चोक्तेन न्यायेन अनुपलब्ध्यन्तरापेक्षायामनवस्थाप्रसङ्गात् । नापि तदुत्पत्त्या अविनाभावसिद्धिः । कार्यकारणभावविपक्षानुपलब्धिग्रहापेक्षत्वेन अनवस्थाप्रसङ्गादेव । तदेवं तदुत्पत्तेरविनाभावावसायो दुर्लभः । तादात्म्येनापि तादात्म्यस्यानुपलब्धिनिबन्धनतन्मात्रानुबन्धसिद्धयधीनत्वात् अनवस्थाप्रसङ्गादेव अविनाभावो दुरवसेयः । किंच यदपि यस्य कार्यं तदपि तेन विना किमिति न भवति? कारणाभावादिति चेत् । कारणाभावे कार्यं न भवतीत्येतदेव कुतः? अकारणस्य नित्यं सत्त्वमसत्त्वं वा स्यादिति कादाचित्कत्वात् कारणेन विना कार्यं न भवतीति निश्चीयते । तदुक्तं '**नित्यं सत्त्वमसत्त्वं का हेतोरन्यानपेक्षणात् । अपेक्षातो हि भावानां कादाचित्कत्वसंभवः ॥**' इति । अत एव च कारणान्तरादपि कार्यस्य संभवो निरस्तः । कारणान्तरजन्मनो हि कार्यस्य द्वयमपि कारणं न स्यात् । एकत्र भवतोऽन्याभावेऽपि भावात् । ततश्चाकारणत्वापत्तेः कादाचित्कत्वविरोधः इति चेत् । न अनपेक्षस्य नित्यं सत्त्वमसत्त्वमित्यस्यैव निश्चयस्य प्रमाणाभावेन अनवक्लृप्तेः । कादाचित्कत्वस्य सापेक्षत्वं व्यापकमुपलब्धम् । व्यापकाभावे च व्याप्यं न भवतीत्यनपेक्षस्य कादाचित्कत्वानुपपत्तेस्तस्य नित्यं सत्त्वमसत्त्वं वा स्यादिति निश्चीयते इति चेत् । न । व्यापकाभावे व्याप्यं नास्तीत्यस्यैव निश्चयस्यानवकल्पनात् । किंच अतदात्मनः अतत्कार्यभूताच्च रसात् रूपानुमानं न स्यात्, यदि तादात्म्यतदुत्पत्तिभ्यामेवाविनाभावनियमः । **अथोच्यते**, रसस्तावत् कार्यतया रसहेतुमनुमापयति, प्रवृत्तसामर्थ्यरूपोपादानकारणसहकारी च स रसहेतुः रसं जनयति तादृशरूपहेत्वनुमानेन रसाद्रूपहेतोः प्रवृत्तसामर्थ्यस्यानुमानम् । प्रवृत्तसामर्थ्याच्च कारणात् कार्यभूतस्य रूपस्यानुमानमिति । **तन्न** । लोकस्येत्थमप्रतीतेः । रूपमेव रसाल्लोकः प्रतिपद्यते । लौकिकी च प्रतीतिः परीक्षकैरप्यनुसरणीया । यत्र तु कारणात् कार्यानुमानं, न तत्र हेतोः कार्यत्वं, नापि तादात्म्यमिति नाविनाभावः स्यात् । अपि च चन्द्रोदयात् समुद्रवृद्ध्यनुमाने कृत्तिकोदयाच्च रोहिण्यासत्त्यनुमाने नैषाऽपि कल्पना संभवति । तादात्म्ये च यदनुमानं, तदपि न साधीयः । सिद्धं हि लिङ्गं, साध्यं लैङ्गिकम् । न सिद्धस्य साध्यस्य च तादात्म्यमुपपद्यते । परमार्थतो वृक्षत्वशिंशपात्वयोर्भेदो नास्तीति चेत् । न । वस्तुभूतसामान्यवादिनां भेदाभ्युपगमात् । काल्पनिकवादिनां त्वभेदो नास्ति, भेदाभेदयोर्वस्तुविषयत्वात् । अपि च काल्पनिकमेव धर्मधर्मिविभागमाश्रित्य अनुमानानुमेयव्यवहारः, तत्र कल्पनावशाद्भेद एव वृक्षशिंशपात्वयोः । अथ भेदेऽपि शिंशपामात्रानुबन्धित्वात् वृक्षस्य शिंशपात्व वृक्षत्वाविनाभावि । एवं तर्हि साधनधर्ममात्रानुबन्धित्वेनैवाविनाभावित्वम् । तच्चाकार्यस्य अतदात्मनोऽपि यदि संभवति, तदा तस्यापि गमकत्वमनुपपन्नम् । संभवति च अन्यस्यापि तत् इति इहैव वक्ष्यामः । एतेनैव न्यायेन येऽपि कार्यकारणभावसंयोगसमवायैकार्थसमवायविरोधाख्यान् पञ्च संबन्धान् 'अस्येदं कारणं कार्यं संबन्धि एकार्थसमवायि विरोधि चेति लौकिकं' ('अस्येदं कार्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्' इति तु मूले पाठः । **वैशे.** ९।२।१ ) इत्यनुमानकारणमाहुस्तेऽपि निराकृताः । समुद्रवृद्ध्यादौ यथोदितसंबन्धाभावेऽप्यनुमानदर्शनात् । संयोगसमवायैकार्थसमवायास्तु नानुमानोत्पत्तौ कारणम् । नहि कमण्डलुना छात्रानुमानं, नापि रूपादेः पृथिव्याद्यनुमानं, नापि रूपाद्रसानुमानमिति । **यच्च** विरुद्धस्यानुमानत्वोदाहरणं, भूतं वर्षणकर्म भूतस्य वाय्वभ्रसंयोगस्यानुमापकम् । तथा अभूतं वर्षणकर्म भूतस्य वाय्वभ्रसंयोगस्यानुमापकमिति । **तदनुपपन्नम्** । भावाभावयोर्ह्यत्र गम्यगमकता । न च तयोर्विरोधोऽस्ति । नियमानुगमव्याप्तिरूपास्तु संबन्धा एवानुपपन्नाः, क्रियागर्भत्वात्

संबन्धस्य। अग्न्यादीना च धूमादीन् प्रति अनुगमननियमनव्यापनक्रियाऽसंभवात् । तस्मात् कार्यकारणभावाद्य एव संबन्धा यस्य येन नियता अव्यभिचारिणः, स हेतुरिति दर्शयितु ज्ञातसंबन्धनियमस्येत्युच्यते । धूमस्य हि कार्यकारणसंबन्धो नियतः, अग्नेस्त्वनियतः । तथा रसस्य रूपेण सहैकार्थसमवायलक्षणः संबन्धो नियतः, न रूपस्य रसेन । गन्धस्य पृथिव्या सह समवायलक्षणः संबन्धो नियतः, न रसादीनामिति । अनया दिशा सर्वहेतुषु संबन्धे नियमोऽनुसरणीयः ।

किं पुनः संबन्धनियमावगमे प्रमाणं ? न तावत् प्रत्यक्षं, संनिहितदेशवर्तमानकालवस्तुविषयनियमात् । येन हि प्रमाणेन सर्वदेशेषु सर्वकालेषु च धूमादीनामग्न्यादिसंबन्धोऽवगम्यते, तेन तेषां संबन्धनियमोऽवगम्यते । न च प्रत्यक्षं तत्र समर्थम् । कतिपयदेशकालगतसंबन्धावगममात्रेण च नियमो नावगम्यते । अग्नेरपि संबन्धनियमप्रसङ्गात् । नाप्यनुमानेन संबन्धनियमावसायः, अनवस्थाप्रसङ्गात् । शास्त्रं त्वपूर्वकार्यार्थविषयनियतप्रामाण्यं, अत्र शङ्काऽपि नायाति । तथोपमानमपि सादृश्यमात्रविषयं नात्र प्रमाणम् । अर्थापत्तिरपि संबन्धनियमसापेक्षा अनवस्थाप्रसङ्गादेव नानुमानवत् प्रमाणम् । संबन्धनियमकल्पनया च विना कस्यानुपपत्तिः ? । धूमादीनामग्न्यादिकार्यत्वस्य इति चेत् । न । वह्निकार्यस्यापि धूमस्यान्यकार्यत्वसंभवात् । न दृश्यते तावदन्यकार्यता इति चेत् । सत्यम् । तथापि शङ्कानिराकरणमशक्यम् । कारणभेदे कार्यभेदात् एकस्यानेकस्मात् भवो नोपपद्यते इति चेत् । न । यद्यपि क्व चित् कारणभेदे कार्यभेदो दृश्यते, तथापि न सर्वत्रैव तथेति शक्यमवधारयितुम् । अतोऽग्निकार्यस्यापि धूमस्य देशान्तरे कालान्तरे वा कारणान्तरादपि संभवाशङ्कया न संबन्धनियमाध्यवसानं युक्तम् । शतशोऽग्नौ धूमदर्शनं शतशश्चानग्नौ धूमादर्शनं संबन्धनियममन्तरेण नोपपद्यते इति यद्युच्येत । तन्न । यत्र यदा च दर्शनमदर्शनं वा, तत्र तदा चैव संबन्धभावाभावाभ्यां तदुपपत्तेर्देशान्तरे कालान्तरे च भावाभावनिश्चयायोगादिति नार्थापत्त्या संबन्धनियमसिद्धिः ।

कश्चित्तु मानसं प्रत्यक्षमत्र प्रमाणमिच्छति । तदुक्तमवत् । ननु केश्चिद्द्वित्रैर्वा कालान्तरदेशेषु दर्शनैः, तदा सर्वैः सर्वत्र स्यादविशेषात् । अत्र भूयोदर्शनसंस्कारसचिवं बहिर्गतं प्रवर्तते इत्युच्यते । तत्र, संस्कारस्य स्मृतिमात्रहेतुत्वादधिकार्थपरिच्छेदासंभवात् । यद्यपि च सर्वप्रमाणसाधारणं मनः, तथापि न सर्वं मानसं प्रत्यक्षं, किं त्वसाधारणकारणानुप्रवेशेन प्रमाणान्तरव्यवहारः । एवं चेदसाधारणभूयोदर्शनसंस्कारानुप्रवेशात् प्रमाणान्तरमापद्येत । अपि च भूयोदर्शनापेक्षाविशेषात् अग्नावपि संबन्धनियमज्ञानं किं न स्यात् ? तथा तत्र न व्यभिचरति ततो नानुमानमिति चेत् । धूमोऽपि तर्हि न व्यभिचरिष्यतीति किं प्रमाणम् ? अपि च असत्यां गतौ मानसं प्रत्यक्षमित्याश्रीयते, अस्ति चान्या गतिरिति वक्ष्यामः । अत्रोच्यते । वह्निधूमादीनां तावत् संयोगादिसंबन्धः प्रत्यक्षादिभिरवसीयते । तत्रापि संयोगो विशेषणत्वेन, गुणादीनां द्रव्यपरतन्त्रत्वस्वभावत्वात्, विशेष्यतया च स्वतन्त्रभूतं द्रव्यं प्रकाशते । देशकालावपि विशेषणत्वेनैवावभासतः । संनिहितदेशवर्तमानकालता हीदन्ता, सा च विशेषणमेव । एवं च देशकालाभ्यां संयोगादिसंबन्धेन च विशिष्टौ द्रव्यभूतौ वह्निधूमौ अवगम्येते, न पुनर्देशकालाभ्यां संबन्धस्य विशिष्टस्यावगतिः । तथाहि, 'संयुक्ताविमौ' इति प्रतियन्ति, न पुनः 'अयमनयोः संयोगः' इति । देशकालानवच्छिन्नः प्रथममग्निधूमयोः संयोगलक्षणः संबन्धो द्वयोरवगम्यते । तत्रापि कदा चिदग्नेर्धूमासंयुक्तस्याप्यवगमात् संयोगासंयोगयोश्च परस्परविरोधात् कालभेदमाश्रित्याविरोधः कल्प्यते । तेनाग्नेः धूमसंबन्धस्य कालावच्छेदोऽनुप्रवेश्यते । धूमस्य तु कदा चिदप्यग्निसंयोगरहितस्यावगमो नास्ति । यद्यपि च घटादिवर्ती धूमो विनाऽप्यग्निसंयोगं वर्तते, तथापि यादृशस्यानवच्छिन्नोदयस्य गगनतलवर्तिनो लिङ्गत्वमिष्यते, तादृशस्य नास्त्येवाग्निसंयोगविरहिणो दर्शनमिति तस्याग्निसंयोगो देशकालानवच्छिन्नो धूममात्रानुबन्धी नियतः इति निश्चीयते । तथा च सति धूमसत्तैव देशान्तरे कालान्तरे वा प्रमाणमपेक्षते, न तु तस्यां सत्यामग्निसयोगः । तस्य धूममात्रानुबन्धित्वेनावगमात् । नन्वग्नौ असंयुक्तस्यापि

दर्शनाददृष्टोऽप्यग्न्यसंयोगो धूममपि प्रति आशङ्कामर्हति। उच्यते। वह्नेरार्द्रेन्धनोपाधिको धूमसंबन्धयोगः, तदभावे भवत्येव वह्नेर्धूमसंयोगाभावः। धूमस्य तु वह्निसंयोगो नौपाधिकः, कथमसौ न भविष्यतीत्याशङ्क्यते? कथमनौपाधिकावगमः? प्रयत्नेनाप्यन्विष्यमाणे औपाधिकत्वानवगमात्। तच्चैतत् भूयोदर्शनायत्तमिति मन्वाना आचार्या भूयोदर्शनं दृष्टवन्तः। नन्वेवं संबन्धनियमावसायसमये एव यावद्धूमादिभावितया वह्न्यादिसंबन्धस्यावगतत्वात् धूमादिसत्तानिश्चयादधिकं निश्चेतव्यं नावशिष्यते, इत्यनुमानमप्रमाणं स्यात्। सत्यम्। स्याद्यदि अनधिगतार्थगन्तृ प्रमाणमिति प्रमाणलक्षणं स्यात्। अनुभूतिस्तु प्रमाणमित्युक्तम्। धूमाच्च अग्निज्ञानमनुभवाकारप्रवृत्तं धारावाहिकवत्। न चात्र स्मृतिप्रमोपकल्पना, प्रत्युत्पन्नकारणसंभवात्। अनुभवकारणासंभवेन शुक्तिकारजतादिषु स्मृतिप्रमोषः प्रतीत्यनारूढोऽप्याश्रितः। इह तु संबन्धनियमस्मरणमेकदेशदर्शनं नानुभवकारणमस्तीति यथाप्रतीत्यनुभूतिरूपतैव आश्रयितुमुचिता, इति युक्तमेवानुमानस्य प्रामाण्यम्। **केचित्तु** देशकालातिरेकेण प्रत्यभिज्ञानरूपमनुमानमाहुः। **तदयुक्तम्।** लिङ्गस्य हि देशकालौ अतिरिच्येते। अशेषदेशकालवर्तिनस्तु लिङ्गस्य लैङ्गिकसंबन्धः संबन्धनियमावधारणसमये एवावधृतः। अन्यथा संबन्धनियमः एवानवगतः स्यात्। **एतेन** 'विशेषेऽनुगमाभावः, सामान्ये सिद्धसाध्यता।' इति प्रत्युक्तम्। धूमवत्ता ह्युपलक्षितानां देशकालविशेषाणां संबन्धनियमावधारणात् 'योयो धूमवान् ससो ऽग्निमान्' इति। **'यः कश्चिद्येन यस्येह संबन्धो निरुपाधिकः। प्रत्यक्षादिप्रमासिद्धः स तस्य गमको मतः॥'** इति संग्रहश्लोकः। ज्ञातसंबन्धनियमत्वं चैकदेशस्य स्मरणेनोपकारकम्। लैङ्गिकैकदेशविषयं संबन्धनियमं स्मरतः पुरुषस्य नियतसंबन्धैकदेशदर्शनात् या बुद्धिस्तदनुमानम्। एकदेशश्चाश्रित उच्यते। **'एकदेशान्तरे'** इत्यत्रैकदेशशब्दः आश्रितवचनः एव। न चाश्रितस्याश्रयमन्तरेण संभवोऽस्तीति आश्रयाक्षेपे नैकदेशाभ्यां भिन्नस्याश्रयस्याक्षेपः, एकाक्षेपेणैवोपपत्तेः। अपि चान्तरशब्दोऽपि समानाश्रये एव समर्थितो भवति। अतश्चैकाश्रयाश्रितयोरेव गम्यगमकतोक्ता। उदाहरणं तु महानसादौ ज्ञाताग्निसंयोगनियमस्य धूमस्य पर्वतोपरिवर्तिनो दर्शनात् पर्वतनितम्बगतेऽग्नौ ज्ञानम्। **ननु** नितम्बोपरिदेशयोर्भेदात् नैकाश्रयाश्रितत्वमग्निधूमयोरिति कथमनुमानम्; तस्मात् धूमाश्रितोऽग्निसंयोगः साध्यते। तदाश्रितं च धूमत्वं हेतुरिति युक्तम्। **उच्यते।** न तावदेवं सर्वत्र लोकस्य प्रतीतिः, किंतु पर्वतादिगतमप्यग्निं लोकोऽनुमिनोति। न चाश्रयभेदः, एकत्वात् पर्वतावयविनः तदाश्रितत्वादग्निधूमयोः। नितम्बोपरिभागौ तु तस्यैवावयवाविति न कश्चिद्दोषः। अत्र च **'ज्ञातसंबन्धनियमस्य** इत्यनेन ज्ञातशब्देनासाधारणस्याहेतुत्वमुक्तम्। यथा 'रसवती गन्धवत्त्वात्' इति। अस्त्येव हि गन्धाख्यस्यैकदेशस्य रसाख्येनैकदेशेन एकार्थसमवायलक्षणः संबन्धो नियतः। स तु संबन्धनियमो न प्रतीतपूर्वः। पृथिवीव्यतिरेकेणान्यत्र गन्धस्यावर्तमानत्वात्। पृथिव्याश्च जिज्ञासितधर्मत्वात्। स चायमसाधारणः संशयहेतुरिति चेत्। तदयुक्तम्। यो हि येन संबन्धो दृष्टः, स तमुपकल्पयितुमलम्। यश्चोभयधर्मसंबन्धी प्रतीतः, स उभयोः स्मृतिं जनयन् एकस्योभयात्मकत्वविरोधात् संदेहमापादयति। यस्य तु केन चिदपि सह संबन्धो नावधारितः, स क्व चिदपि स्मृतिं जनयितुमक्षमः, इति कथं संशयं प्रसुवीत। तस्माद्धर्मिस्वरूपवदसाधारणोऽपि धर्मो न संशयहेतुः। संबन्धग्रहणेन च बाधकस्य हेत्वाभासत्वमुक्तम्। यथा 'नित्यः शब्दः कृतकत्वात्' इति। कृतकत्वस्य हि नित्यत्वेन सह संबन्ध एव नास्ति, किंत्वनित्यत्वेनैव सह। अयं प्रतीतसंबन्धनियमः स्वसामर्थ्येनानित्यत्वमुपस्थापयन् नित्यत्वं बाधते इति सिषाधयिषितधर्मबाधात् बाधको हेत्वाभासः। नियमग्रहणेन च साधारणस्य निरासः यथा 'नित्यः शब्दः प्रमेयत्वात्' इति। प्रमेयत्वस्य नित्यत्वेन संबन्धोऽस्ति ज्ञातश्च, किं त्वनियतः, नित्येष्वपि प्रमेयत्वदर्शनात्। संशयहेतुश्चायं, नित्यत्वानित्यत्वोभयसंबन्धावगमात्। उभयत्र स्मृतिजनकत्वात्, एकस्य च धर्मिणो नित्यानित्यत्वविरोधात्। स चायमनैकान्तिक इति गीयते। तथा **'एकदेशदर्शनात्'** इत्यनेकदेशभूतस्य हेत्वा-

नासत्त्वमुक्तं यथा ‘ व्योम प्रत्यक्षं रूपवत्त्वात् ’ इति । रूपवत्त्वं व्योमैकदेशत्वेनासिद्धम् । उन्मीलिते हि चक्षुषि गृहोदरादिषु यद्रूपमुपलभ्यते तत्तैजसनौदकं वेत्युक्तं **तत्त्वालोके** । तथा यस्य पक्षं प्रति एकदेशत्वमनेकदेशत्वं च तस्याप्यत एव निरासः यथा ‘ वेदः कृतकः उपाख्यानात्मकत्वात् ’ इति । विविभागं ह्युपाख्यानात्मकता न व्याप्नोति । **ननु** धूमोऽपि न हेतुः स्यात्, कृत्स्नपर्वतव्यापकत्वाभावात् । **मैवम्** । तत्रावयवी पर्वत एकः तस्यैकदेश एव धूमः । इह तु न वेदावयवी एकः, इति युक्तं भागासिद्धत्वम् । दर्शनग्रहणेन स्वरूपासिद्धं हेत्वाभासं दर्शयति यथा ‘बुद्धो धर्माधर्मौ प्रत्यक्षमीक्षते सर्वज्ञत्वात् ’ इति । नहि बुद्धस्य सर्वज्ञत्वं केन चिदपि प्रमाणेनावगन्तुं शक्यते इत्युक्तम् । तथा विद्यमानस्याप्येकदेशस्य यावद्दर्शनं नास्ति तावदहेतुत्वं यथा अन्धकारे धूमस्य । ‘ **एकदेशान्तरे** ’ इति स्वतन्त्रस्य अग्न्यादेः गम्यत्वं निराकरोति । अन्तरग्रहणेन च भिन्नाधारयोर्गम्यगमकभावो निराकृतः । **ननु** चन्द्रोदयात् समुद्रवृद्ध्यनुमाने कृत्तिकोदयाच्च रोहिणीसंनिधानकल्पने कथं समानाश्रयत्वम् । **अत्रोच्यते** । एककालवर्तित्वं चन्द्रोदयसमुद्रवृद्ध्योः संबन्धः, तत्र कालः एवैक आश्रयः इति । तथा, कृत्तिकोदयरोहिण्यासत्त्योरपि एकाहोरात्रवर्तित्वेन संबन्धः, तेन कृत्तिकोदयादहोरात्रज एव आसन्नरोहिण्युदयोऽनुमीयते । एतेन मध्यगतनक्षत्रदर्शनाद् अष्टमनक्षत्रास्तमयोदयानुमानमुक्तम् । अधोनदीपूराच्चोपरिवर्षणानुमानमप्येवमेव वर्णयितव्यम् । एका हि नदी तत्राप्याश्रयः इति । पित्रोस्तु ब्राह्मणतया यत्पुत्रस्य ब्राह्मण्यानुमानं केचिदिच्छन्ति, तत् **प्राभाकरा** नानुमन्यन्ते । ब्राह्मणभूताभ्यां हि पितृभ्यामुत्पत्तिरेव ब्राह्मणता, नान्या । तेन ब्राह्मणशब्दवाच्यस्त्रीपुंसप्रसूतत्वादन्यत् ब्राह्मण्यं नास्तीति नास्त्यनुमानानुमेयभावः । ‘ **अबाधिते** ’ इत्यनेन प्रमाणान्तरबाधिते विषये नानुमानमुत्पद्यते इति दर्शयति यथा ‘वह्निरनुष्णो द्रव्यत्वात् ’ इति । **ननु** द्रव्यत्वस्यानुष्णत्वेन सह संबन्धः एव नास्ति, वह्नावेव असत्यनुष्णत्वे द्रव्यत्वस्य दर्शनात् । तेन संबन्धनियमाभावादेवानुमानानुदयः, न पुनर्बाधितत्वादिति । **उच्यते** । यदि बाधितविषयेऽप्यनुमानमुत्पद्यते, तदा द्रव्यत्वस्य संबन्धनियमाभाव एव न भवेत्, वह्नेरप्यनुष्णत्वेनैव अनुमानेन सिद्धत्वात् । सर्वत्रानुमाने अनुमितिविषयनिरपेक्षेणैव संबन्धावधारणमनुसंधेति । द्रव्यत्वस्य च वह्निनिरपेक्षं सर्वत्राऽनुष्णत्वेन सह संबन्धनियमावधारणं जातमिति तद्बलेनाऽनुमानोदये बाध्यत्वेऽपि संबन्धनियमभङ्गो नात्मानं लभते । तस्मात् बाधितविषयत्वादेवानुमानानुदयात् संबन्धनियमोऽपि भज्यते इत्यबाधितविषयत्वमनुमानस्य कारणम् । अतो द्रव्यत्वं वह्नौ प्रत्यक्षबाधितविषयं नानुमानमुत्पादयति । **अनुमानबाधोदाहरणम्** । ‘शब्दः श्रोत्रग्राह्यो न भवति गुणित्वात् ’ इत्यनुमानस्य विषयोऽनुमानेन बाधितः । यद्विषया हि यत्प्रतीतिः यत्करणिका, तदिन्द्रियं तस्य ग्राहकमुच्यते । शब्दविषयायाश्च प्रतीतेः अन्वयव्यतिरेकाभ्यां श्रोत्रकरणत्वमवगम्यते । अनुपहते हि श्रोत्रे शब्दप्रतीतिरुपजायते, उपहते च नोपजायते, इति श्रोत्रान्वयव्यतिरेकानुकारिणी शब्दप्रतीतिः श्रोत्रकरणिका । तदन्वयव्यतिरेकानुविधायित्वं हि तत्करणत्वे नियतसंबन्धत्वम् । अतः ‘ शब्दप्रतीतिः श्रोत्रकरणिका श्रोत्रान्वयव्यतिरेकानुविधायित्वात् ’ इत्यनुमानेन श्रोत्रग्राह्यत्वमवधृतं सत्, यो वादी नास्तीत्याह तस्यानुमानमनुमानेन बाध्यते । **ननु** संबन्धनियमग्रहणतत्स्मरणैकदेशदर्शनसापेक्षस्य अर्थान्तरावगमनिरपेक्षोत्पत्तिकं प्रत्यक्षं शीघ्रजन्मतया, अवश्यंभावितया च विषयहानादुत्पत्तिं प्रतिबध्नाति, अनुमानेन त्वनुमानस्य कथमुत्पत्तिप्रतिबन्धः इति वक्तव्यम् । **उच्यते** । येन नाम श्रोत्रग्राह्यत्वं शब्दस्य निराकर्तव्यं, तेनावश्यं ग्राह्यग्राहकसंबन्धः प्रथममवगन्तव्यः, अन्यथा निषेधानवकल्पनात् । अवगतमेव वस्तु विषयान्तरे प्रतिषिध्यते, न तु सर्वथा अनवगतमेव । तेनान्यत्र ग्राह्यग्राहकसंबन्धमभ्युपगच्छता अङ्गीकृता तावत् अन्वयव्यतिरेकानुविधायिलिङ्गकस्य अनुमानस्य प्रवृत्तिरिति शीघ्रभाव्यनुमानं अनुमानान्तरस्य विषयमपहरत् बाधकतां प्रतिपद्यते । यथा अनुमानपूर्वकानुमानात् प्रत्यक्षपूर्वकमनुमानं प्रथमभावि, तथा प्रसिद्धाङ्गकमनुमानं प्रसाध्याङ्गकादनुमानादाशुतरभावीति वेदितव्यम् । **शास्त्रेण चानुमानस्य विषयापहारः** यथा ‘ नास्ति ”

कर्मफलसंबन्धः' इति । अवश्यंभविता च प्रत्यक्षवदागमस्यानुसरणीया । **उपमानबाधस्तु** 'न गौर्गवयसदृशः' इति । **अर्थापत्त्या** चानुमानविषयापहारो यथा 'जीवन् देवदत्तो वेश्मन्यविद्यमानो बहिरपि नास्ति' इति । **केचित्तु** बाधितविषयत्वमिव असाधितविषयत्वमपि अनुमानकारणमाहुः । प्रमाणान्तरसिद्धेऽपि विषये, नानुमानं वर्तते यथा प्रत्यक्षावगते वह्नेरौष्ण्ये । तत् प्रभाकरमतानुसारिणो नानुमन्यन्ते । सिद्धविषयमेवानुमानमित्युक्तम् । तद्यथा संबन्धनियमावधारणसिद्धविषयं किमिति नोत्पद्यते ? प्रमातारस्तु निवृत्तप्रमित्साः तत्र संबन्धनियमानुसंधानं प्रति नाद्रियन्ते इति नानुमानमुदेति । यदि च अनुसंहितसंबन्धनियमैकदेशदर्शनेऽपि विषयसिद्धौ नानुमानमुत्पद्यते, ततो भवेदेव असाधितविषयत्वमपि अनुमानकारणम् । नैवमस्ति । तस्मात् पूर्णमिदं अनुमानकारणपरिगणनं नियतसंबन्धैकदेशदर्शनं, संबन्धनियमस्मरणं च, अबाधकं च, अबाधितविषयत्वं चेति । **यदि** अबाधितविषयत्वमपि अनुमानकारणं, **कथं तर्हि** ज्वालाभेदग्राहिणः अनुमानस्योदयः ? प्रत्यक्षेण हि सैवेयं ज्वालेत्यभेदे प्रतीतेऽपि गृहोदरादिवर्तिप्रभामण्डलदर्शनाद्भेदोऽनुमीयते । प्रभावितति र्हि तेजोवयवविसरणमन्तरेण नोपपद्यते । अवयवविसरणे चावयविनो नियतो विनाशः । दृष्टो हि तन्तुविभागात् पटविनाशः । तेन विनष्टायां ज्वालायां दृश्यमाना ज्वाला ततो भिन्नाऽनुमीयते । यथा पटे विनष्टे दृश्यमानस्तन्तुस्ततो भिद्यते । 'पूर्वज्वाला विनष्टा विशीर्णावयवत्वात् पटवत्, दृश्यमाना ज्वाला, विनष्टा या भिन्ना तस्यां विनष्टायामुपलभ्यमानत्वात्, पटविनाशे पटान्तरवत्' इति । **उच्यते** । बाधितविषयत्वं यत्र निश्चितं तत्रानुमानं नोत्पद्यते, यत्र तु विषयबाधा संदिग्धा तत्रानुमानमुत्पद्यते एव । इह तु सैवेयं ज्वालेति प्रतीतौ जातायामपि शङ्का अवतरत्येव । सादृश्येन शुक्तिकारजतयोर्भेदावसायात् एवंविधा प्रतीतिः भेदेऽपि दृष्टा । तेन किं भेदेऽपि सादृश्यवशेन भेदाग्रहणादेवंविधा प्रतीतिः उताभेदेनैवेति शङ्कोदयात् बाधितविषयत्वं संदिग्धमिति नानुमानोत्पत्तिप्रतिबन्धः । अत एव समानवर्तिकावर्तिनीषु बह्वीषु ज्वालासु ज्वालात्वं सामान्यं नाश्रीयते, भेदाग्रहणेनापि प्रतीतेरुपपन्नत्वात् । वह्नौ तु उष्णत्वप्रतीतिरन्यथा संभावयितुमशक्येति निश्चितं बाधितविषयत्वं, अतस्तत्र युक्त एवानुमानविरोधः । **अन्ये** पुनः असत्प्रतिपक्षत्वमपि अनुमानकारणमाहुः । यथोदितलक्षणोऽपि हेतुर्यथोदितहेत्वन्तरप्रतिबद्धो नानुमानं जनयति, किंतु संशयम् । यथा 'अप्रत्यक्षो वायुर्द्रव्यत्वे सति अरूपत्वात्' इत्यनेन हेत्वन्तरेण प्रतिबद्धः 'प्रत्यक्षो वायुर्महत्त्वे सति स्पर्शवत्त्वात्' इत्ययं हेतुर्वायौ प्रत्यक्षत्वाप्रत्यक्षत्वसंशयमापादयति, न त्वनुमानं जनयितुमलमिति । **तदनुपपन्नम्** । यथोदितलक्षणयोर्हेत्वोरेकत्र समवायाभावात्, भावे वा वस्तुनो नित्यसंशयितधर्मत्वापत्तेः । तथा हि, अरूपत्वादित्ययं हेतुः स्पर्शेन्द्रियान्वयव्यतिरेकानुविधायितया वायुप्रतीतेरनुमानबाधितविषयः । इदं च अनुमानं यथा शीघ्रभावि, तथोदितमेव प्राक् । प्रत्यक्षं हि निषेधता कचिदवश्यं प्रत्यक्षत्वमङ्गीकरणीयं, इन्द्रियान्वयव्यतिरेकानुविधायि प्रत्यक्षमित्यभ्युपेयम् । ननु न स्पर्शनेन वायुः प्रतीयते, किंतु स्पर्शमात्रमेव । नेत्युच्यते । स्पर्शान्तरप्रत्ययेऽपि द्रव्यप्रत्यभिज्ञानात् । यदि स्पर्शमात्रमेव स्पार्शनं भवेत्, तदा स्पर्शभेदेऽपि किं प्रत्यभिज्ञायेत । **ननु** वायोः स्पर्शभेदो न संभवति, अनुष्णाशीतैकस्पर्श एव वायुः । तस्य तु तोयसंपर्कात् तद्गतः शीतस्पर्शः प्रतिभाति । एवं तेजःसंयोगादुष्णस्पर्श इति । **उच्यते** । सत्यं वायोरनुष्णाशीत एव स्पर्शः, तोयतेजोगतौ च शीतोष्णस्पर्शौ, तथापि ताभ्यामभिभूते स्पर्शे शीतोष्णस्पर्शावपि प्रतीयतः अन्वयिनी प्रतिपत्तिः । सा च स्पर्शमात्रप्रत्यये नोपपद्यते इति वदामः । तस्मादनुमानबाधितविषयत्वाद् अरूपत्वादिति अप्रत्यक्षत्वं नोपस्थापयति । स्पर्शवत्त्वादित्येतदेव निष्प्रतिपक्षमनुमानं जनयति । तस्माद्यथोदितलक्षणः सर्व एव सत्प्रतिपक्ष इति नेदं पृथग्लक्षणम् ।

**'प्रमेयमनुमानस्य दृष्टादृष्टस्वलक्षणम् । प्रत्यक्षवच्च कर्तव्या प्रमाणफलवर्णना ॥'** द्विविधमनुमानस्य प्रमेयम् । किंचिद् दृष्टस्वलक्षणं यथा वह्न्यादिकम् । किंचिददृष्टस्वलक्षणं यथा कर्मादिकम् । **कथं** पुनर्यस्य स्वलक्षणं न प्रतीतं तदनुमातुं शक्यते । येन हि

सह हेतोः संबन्धः प्रतिपन्नः, स तस्माद्धेतोरनुमातुं शक्यते । न चादृष्टस्वलक्षणेन सह संबन्धनियमावधारणं कस्य चित् संभवतीति नादृष्टस्वलक्षणमनुमातुं शक्यते । उच्यते । सामान्यतोऽपि संबन्धनियमावगमो भवत्येवानुमानोत्पत्तौ निमित्तम् । यथा 'यत् कादाचित्कं तत् आगन्तुकाज्जायमानं, यथा तन्तुसंयोगेभ्यः पटः, कादाचित्कौ च द्रव्यस्य संयोगविभागौ, इति ताभ्यामागन्तुकं वस्तु प्रतीयते । न च द्रव्यमेवागन्तुकं, तस्य प्रत्यभिज्ञानेन स्थिरत्वावगमात् । न च शक्यते वक्तुं भिन्नान्येव द्रव्याणि अत्यन्तसादृश्येनाप्रतीयमानभेदानि तत्प्रत्ययविषयाणीव भासन्ते ज्वालादिवदिति, द्रव्यभेदे प्रमाणाभावात् । ज्वालादिप्रमाणमुपन्यस्तमेव । विभागसंयोगादिकार्योत्पत्तिस्तु यथा प्रतीते द्रव्यस्थैर्ये सत्यपि आगन्तुककर्माभ्युपगमेनाप्युपपद्यते, इति न द्रव्यभेदे प्रमाणमस्ति । **अत्र कश्चिदाह** । न कर्म अदृष्टस्वलक्षणं प्रत्यक्षत्वात् कर्मणः । तदाह भगवान् काश्यपः ( कणादः ) 'संख्याः परिमाणानि पृथक्त्वं संयोगविभागौ परत्वापरत्वे कर्म च रूपिद्रव्यसमवायाच्चाक्षुषाणि ' ( ४।१।११ ) इति । तथाहि । गच्छत्ययमिति प्रतीतिः इन्द्रियान्वयव्यतिरेकानुकारिणी । तदेव च प्रत्यक्षत्वे कारणम् । न च वाच्यं कर्मफलभूतविभागसंयोगविशेषबलेनैवेयं प्रतीतिरिति । तन्निबन्धनत्वे स्थाणावपि एकश्येनवियुक्ते श्येनान्तरसंयुक्ते चापत्तेः, चलित्वा स्थितेऽपि च चलतीति वर्तमानावभासप्रसक्तेः, विभागसंयोगयोर्वर्तमानत्वात् । अतीन्द्रियेण च व्योम्ना संयोगविभागयोरप्यतीन्द्रियत्वात् पतति पतत्रिणि चलतीति प्रत्ययानुत्पत्तिप्रसङ्गात् । न चानुमातुमपि कर्म शक्यते । तद्धि न नित्यं, विभागसंयोगयोः सदोदयप्रसक्तेः । अनित्यत्वे तस्यापि असमवायिकारणमवश्यमाश्रयणीयम् । तद्वरं विभागसंयोगयोरेवास्त्विति न कर्मानुमाने किंचिदपि लिङ्गं समर्थम् । तदुक्तं

**'नित्यत्वे च सदा जन्म स्यात् संयोगविभागयोः ।**
**अनित्यत्वेऽस्य यो हेतुस्तयोरेवास्तु तेन किम् ॥'**

**तदिदमसारम्** । प्रत्यक्षेण हि गच्छति द्रव्ये विभागसंयोगातिरिक्तविशेषानुपलब्धेः । यस्त्वयं गच्छतीति प्रत्ययः, स विभागसंयोगानुमितक्रियाऽऽलम्बनः । सा च क्रिया न स्थाणौ अनुमीयते । उत्पन्नः श्येनस्य यो देशान्तरसंयोगः, तस्य ततो निमित्तान्तरकल्पनात् । तद्गतकर्मान्तरानुमानप्रसङ्गात्, निवृत्तश्च श्येनान्तरस्य प्राग्देशविभागोत्पत्तये कर्मान्तराश्रयणात्तेश्च । श्येनयोस्तु कर्मणोरनुमितयोरुपपद्येते तयोर्देशान्तरसंयोगविभागौ । तस्मात् स्थाणौ चलतीति न युज्यते । चलित्वा स्थितस्यापि च देशान्तरसंयोगेन क्रियाविनाशात् वर्तमानक्रियाप्रत्ययानुत्पादः । अतीन्द्रियत्वेऽपि च व्योम्नो वियति विततालोकावयवसंयोगविभागनिबन्धना पतति पतत्रिणि विशिष्टबुद्धिः, तद्बलेन च क्रियाऽनुमानमपि सुकरमेव । न च कर्मान्तरकल्पनमपि दोषः, कर्महेतोः संयोगविभागोत्पत्त्यसंभवात् । तथाहि । शरीरे तावत् प्रयत्नापेक्षादात्मसंयोगात् कर्मोत्पत्तिरवकल्पते । संयोगो हि स्वाश्रये स्वाश्रयसमवेते वा द्रव्यान्तरे कार्यमारभते इति नियतम् । यथा तन्तुसंयोगास्तन्तुषु पटमारभन्ते, प्रचयाख्यश्च संयोगः अवयवेषु समवेतः स्वाश्रयसमवेते अवयविनि महत्त्वं जनयति । योऽपि संयोगः संयोगं जनयति, सोऽपि तस्य स्वाश्रयस्वाश्रयसमवेतयोर्जनकः । तन्तुतुरीसंयोगो हि पटतुरीसंयोगस्य जनयिता इष्यते । तस्य तुरी तावदाश्रय एव । पटोऽपि तन्त्वाश्रयत्वात् स्वाश्रयसमवेतः । आत्मशरीरसंयोगश्चात्मनि शरीरे च समवेतः, स कथं देशे कार्यमारभेत तत्रासमवायात्, तेन सह एकार्थसमवायाभावाच्च । कर्म तु स्वाश्रये शरीरे जनयितुं शक्नुयादेवेति कर्महेतोर्विभागसंयोगावनुत्पाद्यमानौ ततोऽन्यत् कारणं कल्पयन्तौ कर्म अनुमापयतः । **एतेन नोदनाभिघातात्मकौ कर्महेतू संयोगविभागौ व्याख्यातौ ।** नोदनाख्यो हि शरज्यासंयोगः तयोस्तत्समवेते वा कार्यमाविर्भावयितुमलमिति न ततः शरीराकाशगतौ संयोगविभागावुत्पत्तिं लभेयाताम् । तथा अभिघातात्मकोऽपि वेगवन्मुसलोद्खलसमवेतः कथमुत्पततः ऊर्ध्वं मुसलस्य चाकाशस्य च संयोगविभागौ आरभेत । यश्च वेगाख्यः संस्कारः कर्महेतुरिष्यते, ततोऽपि संयोगविभागौ अनुपपन्नौ । संस्कारस्य स्वाश्रये एव कार्यारम्भनियमात् । भावनाख्यो हि संस्कारः आत्मसमवेतः आत्मन्येव स्मरणलक्षणं कार्यं जनयन्

दृष्टः, इति कथं वेगात्मा संस्कारः शरवर्त्यावकाशेन तेजोऽवयवैः स्तिमितैश्च वायुभिः सह संयोगविभागौ आरभते, इति न शक्यमाश्रयितुम् । कर्मैहेत्वभिमतादेव विभागसंयोगौ उत्पद्येते इति युक्तमेव कर्मानुमानम् । न च कर्मणः प्रत्यासन्नद्रव्यवर्तिकार्यारम्भनियमोऽवधारितः, तस्य कार्यावगम्यत्वात् । यदि च तस्याप्ययं नियमः स्यात्, तदा कार्येनैव नोत्पद्येत । तच्च कर्म सर्वमेव विभागपूर्वकं संयोगमारभते, किंचित्तु वेगाख्यं संस्कारमपि । संयोगाच्च तस्योपरतिः, मूर्तद्रव्याणि च तस्य आश्रयभूतानीत्यादि प्रमेयपारायणे प्रपञ्चितम् ।

सर्वभावानां च शक्तिः अदृष्टस्वलक्षणाऽपि कार्येणानुमीयते । अग्नेर्यथा भूतादेव दाहो दृष्टः, तथा भूतादेव मन्त्रौषधिप्रणिधाने कार्यं न दृश्यते । न तत्र दृष्टमेव रूपं कारणम् । तस्याजनकावस्थातो विलक्षणत्वाभावात् कार्यानुदयप्रसङ्गात् । यच्च खलु अजनकदशातो निरतिशयं, ततः कार्यं नोत्पद्यते कुण्ठादिव कुठारात् । यदा तु तत एव कार्यं दृश्यते, तदा तदवस्थातोऽस्त्येव वैलक्षण्यं, तीक्ष्णत्वमिव । अग्नौ च कार्यानुदयदशातो विलक्षणं न कार्योदयसमये प्रत्यक्षदृश्यं रूपमुपलक्ष्यते । भवितव्यं च वैलक्षण्येन, अन्यथा कार्यानुत्पत्तिप्रसंगात् इति कार्योदयेऽतीन्द्रियं किं चिद्रूपं वह्नेरनुमीयते । तस्य मन्त्रौषधिप्रयोगेण विनाशात् कार्यं नोत्पद्यते । न च वाच्यं मन्त्रौषधादिभिरतीन्द्रियं रूपं न किं चिद्विनाश्यते, किंतु मन्त्रौषधिसंनिधानेनैव कार्यान्वयः इति, कारणावैगुण्ये कार्योदयविघातासंभवात् । **अथोच्येत** मन्त्राद्यप्रयोगोऽपि कार्योत्पत्तिनिमित्तं, संप्रयोगे चाप्रयोगो निवर्तते इत्यस्ति कारणवैगुण्यमिति । **तन्न** । अप्रयोगस्य प्रयोगाभावरूपत्वात् सर्वभावानां च भावकारणनियतत्वदर्शनात् । अभावस्य क चिदपि कार्ये जनकत्वाश्रयणानुपपत्तेः । यच्च अतीन्द्रियमग्नेः रूपं तच्छक्तिसामर्थ्यादिवाच्यतया लोके प्रतीतं, तस्य च कार्यानुत्पत्तौ द्वयी गतिः, अभिभवो वा विनाशो वा । यत्र कदा चिदपि पुनः कार्यं न दृश्यते, तत्र विनाश एव वस्तुनः । यत्र पुनः प्रतीकारवशेन कार्योदयः, तत्राभिभवमात्रम् । तस्य चैवं वह्न्यादिप्रसिद्धस्य सर्वभावेषु कार्योदयानुकूल्यं कार्योत्पादकमनुमानेन परिकल्पनीयम् । तस्य च नित्याश्रयाश्रितस्य नित्यत्वं, अनित्याश्रयाश्रितस्य तदुत्पत्तिकारणादेवोत्पत्तिः । संस्काराच्च अस्यायमेव विशेषः । संस्कारो हि नाम नित्येष्वनित्यः, अनित्येषु च कारणान्तरायत्तः इति । प्रत्यक्षवच्चास्यापि प्रमाणफलवर्णना कर्तव्या । यदा अनुमितिरनुमानमिति प्रमितिः प्रमाणमिति चावसीयते, तदा अग्न्यादिविषया लिङ्गदर्शनसापेक्षादात्मनः संनिकर्षादुत्पन्ना अधिगतिरेवानुमानं प्रमाणं, फलं चोपादानादिक्रिया । यदा च अनुमीयतेऽनेनेत्यनुमानं, प्रमीयते चानेनेति प्रमाणमिति करणाश्रयणं तदा आत्मनः संनिकर्षोऽनुमानं, संबन्धनियमस्मरणमेकदेशदर्शनं चेतिकर्तव्यता, फलं च लौकिकविषया अनुमितिः । साधकतमस्य वा करणाश्रयत्वात्, तमबर्थस्य चातिशयरूपत्वात्, व्यवहितापेक्षया च संनिहितस्यातिशययोगात्, लिङ्गदर्शनादीनां प्रमाणत्वम् ।

**‘ परप्रत्यायनेच्छूनामनुमोदयसाधनम् । वचनं दूषणैः सार्धमर्थादेतेन वर्णितम् ॥ ’** द्वेधाऽनुमानमुत्पद्यते । स्वयमनुसंहितया वा अनुमानोत्पादसामग्र्या परप्रयुक्तवाक्यात् बोधितया वा । तत्रानुमानोत्पत्तिसामग्रीप्रतिपादनेनैव तत्प्रतिपादकवाक्यस्वरूपमपि सूचितमेव । तत्र अबाधितः इति प्रतिज्ञा, ज्ञातसंबन्धनियमस्येत्यनेन दृष्टान्तवचनं, एकदेशदर्शनादिति हेत्वभिमिधानं, तदेवं त्र्यवयवसाधनम् । साध्यनिर्देशः प्रतिज्ञा यथा ‘ शब्दो नित्यः ’ इति । अनेन चानुमानस्य विषयो निर्दिश्यते । निर्दिष्टे च विषये तस्याबाधितत्वं शक्यतेऽवगन्तुमिति । तथा **‘ एकदेशान्तरे ’** इत्यनेनापि एकदेशान्तरभूतस्य अनुमानमित्युक्तम् । तदपि प्रतिज्ञावचनेन गम्यते । तेन साधनप्रयोगे प्रथमं साध्यनिर्देशाय प्रतिज्ञा कर्तव्या । एतेनैव प्रत्यक्षादिबाधितपक्षादिनिर्देशः प्रतिज्ञाभासः इत्युक्तं भवति । दर्शितानि प्रत्यक्षादिबाधोदाहरणानि । एकदेशस्य च साध्यत्वं दर्शयितुं सिद्धं धर्मिणमुद्दिश्य साध्यविधिर्दर्शयितव्य इत्यप्रसिद्धविशेष्यः पक्षाभासः ( यथा ) ‘ सर्वज्ञो वीतरागः ’ इति । प्रतिज्ञाऽऽभासस्तु ‘माता मे वन्ध्या’ इति । उद्दिश्य हि मातरं न वन्ध्यात्वं विधातुं शक्यते, तस्या अन्वयायोगत्वेन अन्वितमभिधानस्यासंभवात् । ‘ यावज्जीवमहं मौनी ’

इत्यत्रानुमानबाध एव, न स्ववचनबाधः। शब्दश्रवणाद्धि कार्याच्छब्दोच्चारयितृत्वमनुमीयते, शब्दानुच्चारकत्वं च मौनित्वं इत्यनुमानबाध एव। स्ववचनं तु मौनितामाह, न पुनरमौनितामिति न तेन बाधः। गम्यैकदेशान्तरसंबन्धनियमश्च गमकैकदेशस्य दर्शनीयः परस्येति तदर्थं दृष्टान्तवचनं प्रयोक्तव्यम्। यावद्धि कस्मिंश्चिद्धर्मिणि एकदेशस्यैकदेशान्तरेण प्रमाणसिद्धः संबन्धनियमो न प्रदर्श्यते, तावदनुमानमेवोत्पादयितुं न शक्यते। यत्र धर्मिणि संबन्धनियमो दृश्यते, स दृष्टान्तो महानसादिः। स चेत्थं दर्शयितव्यः 'पर्वतोऽग्निमानिति प्रतिज्ञाय योयो धूमवान् ससोऽग्निमान् यथा महानसादिः' इति। यस्तु साध्यविकलः, साधनविकलः, तदुभयविकलः, संबन्धनियमविकलश्च स दृष्टान्ताभासः। यथा 'शब्दः प्रयत्नोत्थः, तदनन्तरमुपलब्धेः, मनोमोदकादिवत्' इति। मनोमोदकादिषु प्रयत्नोत्थत्वं नास्तीति तत्संबन्धनियमो हेतोस्तत्र दर्शयितुमशक्यः। 'शब्दः नित्यः अमूर्तत्वाद् घटवत्' इति घटस्यामूर्तत्वं नास्तीति तस्य नित्यत्वेन संबन्धनियमो दर्शयितुं न शक्यते। तथा 'शब्दः अनित्यः कृतकत्वात् गगनवत्' इति, गगने अनित्यत्वं कृतकत्वं च नास्तीति न तत्र संबन्धनियमः शक्यो दर्शयितुम्। तथा 'शब्दः अनित्यः प्रमेयत्वात् द्रव्यवत्' इति, किंचिद् द्रव्यं नित्यं परमाण्वाकाशात्ममनोदिक्कालादिरूपं, किंचित् चानित्यं द्व्यणुकादि, तत्र प्रमेयत्वस्यानित्यत्वेन सह संबन्धनियमो नास्तीत्यशक्यमेव दर्शयितुम्। येन च वचनेन सन्नपि साध्यसाधनयोः संबन्धनियमो नाभिधीयते, तदप्याभासमेव। तत् द्विविधं अप्रदर्शितसंबन्धनियमं विपरीतसंबन्धनियमं च। यथा 'पर्वतः अग्निमान् धूमवत्त्वात् महानसवत्' इति, यद्यपि महानसे वह्निधूमौ स्तः, तथापि यावत् धूमस्याग्निना सह संबन्धो नोच्यते तावदगमक एव। तथा तस्मिन्नेव प्रयोगे यदैवमुच्यते 'योयोऽग्निमान् सस धूमवान्' इति, तदाऽपि गमकाभिमतस्य धूमस्य गम्याभिमतेनाग्निना सह संबन्धनियमस्य अदर्शितत्वात् धूमस्य न समर्थितं गमकत्वमिति साधनाभासत्वम्। संबन्धनियमं स्मरतः एकदेशदर्शनादनुमानमुत्पद्यते इत्येकदेशत्वं हेतुवचनं प्रयोक्तव्यम्। यथा अग्निमत्त्वे साध्ये धूमवांश्चायमिति। येन यत्रैकदेशत्वं नास्ति, तस्याभासत्वं युक्तमेव। येन वचनेन सदपि दर्शयितुं न शक्यते, तदप्याभासभूतमेव। यथा अवाचकशब्दप्रयोगादयः। असाधारणादयश्च हेत्वाभासाः सर्वे एवात्रापि योजयितव्याः। दृष्टान्तहेतुवचनयोश्च प्रयोगक्रमनियमो नादरणीयः। एकदेशदर्शनपूर्वकादपि संबन्धनियमस्मरणादनन्तरं शब्दसाध्यज्ञानं जायते। तथा संबन्धनियमस्मरणपूर्वकमपि एकदेशदर्शनं अनुमानमुत्पादयत्येव। तत्रैकदेशदर्शनपूर्वकसंबन्धनियमस्मरणं कुर्वतो प्रतिज्ञाऽनन्तरं हेतुवचनं प्रयोक्तव्यं पर्वतोऽग्निमान् धूमवत्त्वादिति। दृष्टान्तपुरःसरे तु प्रयोगे प्रतिज्ञामुपादाय योयो धूमवान् ससोऽग्निमान् महानसादिवदिति चाभिधाय धूमवांश्चायमिति हेतुवचनं वक्तव्यम्। **अन्ये** तु प्रतिज्ञानन्तरं धूमवत्त्वादिति हेतुमभिधाय दृष्टान्तवचनं ततोऽप्यनन्तरमुपनयं प्रयुञ्जते धूमवांश्चायमिति। तत्र हेतूपनययोरन्यतरप्रयोगेणापि साध्यसिद्धेरुभयोपादानमनर्थकमिति **मीमांसकाः**। तस्माद्धूमवत्त्वादयमग्निमानिति निगमनमप्यनर्थकमेव, यथोदितहेतुबलसिद्धत्वादर्थस्य। वैधर्म्यदृष्टान्तोपादानं च **केचित्** साधनवाक्ये कुर्वन्ति यथा 'अग्निर्नास्ति यत्र, तत्र धूमोऽपि नास्ति यथा जलह्रदे' इति। **तदनुपपन्नम्**। साध्यधर्मसंबन्धबलेन हेतोर्गमकत्वम्। तच्च साधर्म्यदृष्टान्तेनैव समर्थितम्। **अथोच्यते** साधर्म्यदृष्टान्तमात्रेण साध्यधर्मवति हेतोर्वृत्तिरवगम्यते, न तद्विरहिणो निवृत्तिः। न च तया विना हेतोः साध्यसंबन्धनियमोऽवकल्पते, अतस्तदर्थं वैधर्म्यदृष्टान्तोऽप्युपादेय इति। **तन्न**। नहि साध्यधर्मवति हेतोर्वृत्तिमात्रं साधर्म्यदृष्टान्तेनोच्यते, किंतु नियत एव साध्यधर्मे संबन्धो दृश्यते। तथाहि साधनधर्मोद्देशेन साध्यधर्मविधिः साधर्म्यदृष्टान्तेन क्रियते। तत्र धूमवत्तयोपलक्षणेन सर्वधूमवतामुद्दिष्टत्वात्, प्रत्युद्देश्यं वाक्यपरिसमाप्तेः, सर्वेषां धूमवतामग्निमत्ता विहितेति नास्ति संभावना विनाप्यग्निना धूमो भवेदिति। उद्देश्यता च प्रथमप्रयोगेणावगम्यते धूमवानयमग्निमानिति। क्वचिच्च यच्छब्दप्रयोगेण सोऽग्निमान् यो धूमवानिति। प्रत्युद्देश्यविधानबलेनैव सिद्धां व्याप्तिमन्यतो निवृत्तिं च

स्पष्टीकर्तुं वीप्साऽवधारणवचनयोः प्रयोगः क्रियते । योयो धूमवान् ससोऽग्निमानेवेति । तस्मात् सम्यक्साधर्म्यदृष्टान्तप्रयोगेणैव संबन्धनियमावगतेः अनर्थकं वैधर्म्यदृष्टान्तोपादानमिति । **अथोच्यते** । मा भूत् दृष्टान्तद्वयोपादानं किंतु विकल्पोऽस्तु । वैधर्म्यदृष्टान्तेनापि हि साध्यधर्मविरहिणमुद्दिश्य साधनधर्मविरहविधौ कृते सर्वसाध्यविरहिणां साधनधर्मविरहव्याप्त्यवगमादन्यत्र साधनधर्मोऽवकाशमलभमानः साध्यधर्मवत्स्वेव वर्तते इति साध्यधर्मसंबन्धनियमावगतेः वैधर्म्यदृष्टान्तेनापि हेतुत्वं समर्थितमेव भवतीति तुल्यकार्यतया साधर्म्यवैधर्म्यदृष्टान्तयोर्विकल्पो न्याय्य इति । **तदयुक्तम्** । ऋजुमार्गेणार्थसिद्धौ न वक्रमार्गमाश्रयते यतः, साधर्म्यदृष्टान्तश्च साध्यसंबन्धाव्यभिचारावगतौ ऋजुर्मार्गः, वैधर्म्यदृष्टान्तो वक्रः इति न विकल्पो युक्तः, अतुल्यत्वादुपायभावस्य । **स्यान्मतं**, यथा साध्यसंबन्धाविनाभावः अनुमानमार्गः, तथा तदभावात् व्यावृत्तत्वमपि । तच्च वैधर्म्यदृष्टान्तेनोच्यते, इति विकल्पाश्रयणमिति । **तन्न** । व्यावृत्तेरभावरूपायाः क्व चिदपि कारणत्वासंभवात् । सर्वकार्याणि भावसाधनानीत्युक्तम् । न च विपक्षव्यावृत्तिः शक्यतेऽवगन्तुम् । विपक्षाणामनन्तत्वात् साध्यधर्मसंबन्धाव्यभिचाररूपस्तु संबन्धनियमो यथाऽवगन्तुं सुकरस्तथोदितमेव । तस्मात् सर्वत्र साधर्म्यदृष्टान्त एव केवलः प्रयोक्तव्य इति स्थितम् । यत एवंविधं समानं, अतो दूषणमपि पक्षस्य प्रत्यक्षादिबाधितत्वं अप्रसिद्धविशेष्यता च । हेतोः स्वरूपासिद्धत्वमेकदेशासिद्धत्वं असाधारणत्वं साधारणत्वं बाधकत्वं चेति । दृष्टान्तस्य च साध्यविकलता, साधनविकलता, संबन्धनियमविकलता, नियमशून्यता, विपरीतनियमता । प्रतिज्ञादीनामवाचकता अप्रयोगश्चेति । प्रतिज्ञासामान्याच्च प्रतिज्ञाहानिरभिन्नैव । संन्यासोऽपि दूषणान्तरपूर्वकत्वाददूषणमेव । दूषितपक्षो हि वादी प्रतिज्ञामपह्नुते । अत एव च प्रतिज्ञान्तरमपि पृथग् दोषो न भवति, दूषितपूर्वप्रतिज्ञस्यैव प्रतिज्ञान्तरालम्बनत्वात् । हेतुप्रतिज्ञाविरोधोऽपि न दूषणान्तरम् । अप्रसिद्धत्वे हेतोरसिद्धतैव दोषः, सिद्धत्वे वा तद्ग्राहकप्रमाणबाधात् पक्षस्य दोषः । अप्रसिद्धविशेषणता तु अदृष्टस्वलक्षणस्याप्यनुमानान्न दोषः । इति प्रकरणपञ्जिकायां प्रमाणपारायणे अनुमानपरिच्छेदः ।

* **अनुमानवादः (शा.)** । प्रत्यक्षस्य सत्संप्रयोगजन्यत्वलक्षणेन लोकसिद्धेन अव्यभिचारमुक्त्वा इदानीं अनुमानादेरपि अव्यभिचारार्थं लोकसिद्धमेव लक्षणमाह– ( भाष्यकारः ) । ‘ अनुमानं ज्ञातसंबन्धस्य एकदेशदर्शनात् एकदेशान्तरे असंनिकृष्टे अर्थे बुद्धिः ’ ( इति ) । यस्य यादृशस्य, येन यादृशेन सह, साक्षाद्वा प्रणाड्या वा यादृशः संबन्धः संयोगः, समवायः, एकार्थसमवायः, कार्यकारणत्वं, अन्यो वा दृष्टान्तधर्मिषु नियतो ज्ञातः, तं तादृशं साध्यधर्मिषु दृष्टवतः तस्मिन् तादृशे तादृशसंबन्धसंबन्धिनि प्रबलेन प्रमाणेन ताद्रूप्यतद्विपर्ययाभ्यां अपरिच्छिन्ने या बुद्धिः, सा अनुमानम् । यथा धूमस्य अनुपरतोर्ध्वगमनस्य अग्निसाहित्यं महानसादिषु नियतमुपलब्धवतः पर्वते तद्दर्शनात् अग्निज्ञानम् । **ननु** नियमावधारणाधीनत्वे कथं ताद्रूप्येण अपरिच्छिन्ने प्रवृत्तिः ? । ईदृशो हि नियमः ‘ यत्रयत्र धूमः, तत्रतत्राग्निः ’ ‘ यद्यत् रसवत्, तत्तत् रूपवत् ’ इति । एवं चेत् यावद्धूमं अग्निसद्भावः अवगत एव इति नापरिच्छिन्नविषयत्वं अनुमानस्य संभवति **इति** । अत एव चोद्यात् बिभ्यतः के चित् असंनिकृष्टग्रहणं स्मरणाभिमाननिरासार्थं व्याचक्षते गृहीतग्राहित्वमेव अनुमानस्य स्वीकुर्वाणाः । तथापि नाप्रामाण्यं, नहि अगृहीतग्रहणं प्रमाणलक्षणं, अनुभूतिर्हि तल्लक्षणम् । अनुमानं च गृहीतग्राहित्वेऽपि प्रत्युत्पन्नलिङ्गकारणजन्यत्वेन संस्कारमात्रजन्यत्वाभावात् अनुभूतिरेव इति युक्तमस्य प्रामाण्यम् । अथ स्मृतिप्रमोषः कस्मान्नाश्रीयते ? प्रत्युत्पन्नकारणसद्भावात् । संस्कारातिरिक्तकारणासद्भावेन हि ‘ इदं रजतं ’ इत्यत्र अनुभवरूपस्यापि रजतज्ञानस्य बलात् स्मृतित्वमाश्रित्य प्रमोषः अङ्गीकृतः । अत्र तु लिङ्गस्य अनुभवकारणस्य सद्भावात् अयुक्तं प्रतीतिसिद्धस्य अनुभवरूपस्य अपह्नवेन स्मृतिप्रमोषाङ्गीकरणमिति । सोऽयमेषां अकारणकः त्रासः । तथाहि, यदि हि यावद्व्याप्यव्यापकसद्भावः अवगतः स्यात्, ततो गृहीतग्राहित्वं आशङ्क्येतापि, न तु एवमस्ति । महा-

नसादिष्वेव हि दृष्टान्तधर्मिषु प्रागनुमानात् धूमस्य अग्निसाहित्यमवगतं, न सर्वत्र, प्रमाणासंभवात् । यथा चासंभवः, तथा न्यायरत्नमालायामेव प्रपञ्चितम् । दृष्टान्तधर्मिष्वेव बहुशः अग्निसाहित्यमुपलब्धवतः, अनग्नौ च क चिदपि प्रयत्नेनान्विष्यमाणे धूमं अदृष्टवतः साध्यधर्मिणु अग्निमत्ताज्ञानं उत्पद्यते । आह च '**साहित्ये मितदेशत्वात् प्रसिद्धे वह्निधूमयोः । व्यतिरेकस्य चादृष्टेर्गमकत्वं प्रकल्प्यते ॥**' इति (श्लोवा. अर्थापत्तौ ४२) । '**मम त्वदृष्टिमात्रेण गमकः सहचारिणः ।**' इति च (४०) । ततश्च अनुमित्सता न सर्वेषां धूमवतां अग्निमत्ता अवगन्तव्या, नापि सर्वत्र अनग्नौ धूमस्याभावः । भूयोऽग्निसाहित्यं व्यभिचारादर्शनं इत्येतावदेव अनुमानार्थिभिः अभ्यर्थनीयं, नाधिकं किं चित् । यत्तु इदं 'यत्रयत्र धूमः, तत्रतत्राग्निः' इति ज्ञानं, तत् अनुमानमेव इति तत्रैवोक्तम् ( न्यायरत्नमालायाम् ) । **ननु** एवमपि अनेनैव सामान्यानुमानेन सर्वधूमवतां अग्निमत्ता अवगता इति यत् पुनः पर्वतादिदेशविशेषेषु धूमदर्शनात् अग्न्यनुमानं, तस्य गृहीतग्राहित्वं तदवस्थमेव स्यात् । **नैवम्** । सामान्यविशेषभेदात् । सामान्येन हि धूमवतां अग्निमत्ता अवगता, पर्वतादेस्तु देशविशेषस्य स्वरूपमपि प्रागनवगतं, नतरां अग्निमत्त्वम् । यस्तु अवगतमेवेति मन्यते, तेन पर्वतस्वरूपमेव तावदप्राप्तं पर्वतासमीपस्थैः केन प्रमाणेनावगतं इति वक्तव्यम् । न प्रत्यक्षेण, नान्येन प्रमाणेन । न च अनवगतपर्वतः तस्याग्निमत्तां अवधारयितुमलम् । यदि च इदानींतनं पर्वतस्याग्निमत्त्वं प्रागेवावगतं स्यात्, ततः अग्न्यर्थी विनैव धूमदर्शनेन अग्नये पर्वतमारोहेत् । नहि अग्न्यर्थिनः अवगतेऽग्नौ, धूमदर्शनेन अर्थः कश्चित् । किंच धूमोपलक्षितस्य पर्वतादिदेशविशेषस्य अग्निसंबन्धोऽवगतः इति वदता धूमसंबन्धोऽपि अवगत इति वक्तव्यम् । नहि अज्ञातसंबन्धमुपलक्षणं उपलक्ष्यमुपलक्षयितुं क्षमम् । अथ देशमात्रस्य धूमेनोपलक्षणं, न देशविशेषस्य, ततः अग्निमत्त्वमपि तन्मात्रस्यावगतं, न देशविशेषस्य, अतो लिङ्गलिङ्गिनोः अविशेषात् 'लिङ्गस्यैव देशकालातिरेकः, न लिङ्गिनः' इति प्रलापमात्रम् । अपि च 'यत्र अग्नीन्धनसंयोगः, तत्र धूमः' इत्यनेन धूमोऽपि अवगत एव, इति न किं चिदपि अवगन्तव्यमवशिष्यते धूमज्ञानेन, इत्यलं बालजल्पितेन । यदि च अवगतमेव अनुमानेनावगम्यते, ततः स्मरणमेव प्रमुषिततद्भावं अनुमानज्ञानं स्यात् । न च प्रत्युत्पन्नकारणजन्यात् अस्मृतित्वं, तदसिद्धेः । संबन्धिदर्शनं हि सदृशादर्शनवत् संस्कारमुद्बोधयेत्, क्लृप्तं हि तत्र तस्य कारणत्वम् । संस्कारश्च उद्बोधितः स्मृतिं जनयति इत्यविवादम् । स्मृतेश्च प्रमोषः शुक्तिकारजतादिवेदनेषु क्लृप्त एव । तदेवं क्लृप्तेनैव मार्गेण धूमादग्निज्ञानोत्पत्तौ को नाम अक्लृप्तं लिङ्गस्य लिङ्गिज्ञानहेतुत्वं कल्पयेत् । कल्पनायां वा शुक्तावपि रजतवेदनस्य अनुभवरूपत्वात् तदुपपत्तये दोषस्यैव अनुभवहेतुत्वं कल्पनीयम् । अकल्पने तु अत्रापि स्मृतिप्रमोषात् अप्रामाण्यमेव स्यात् । तस्मात् अवश्यं अगृहीतग्राहित्वं अङ्गीकर्तव्यम् । **ननु** अग्निविशेषस्य अगृहीतसंबन्धस्य अननुमेयत्वात् सामान्यमेव अनुमेयं, तच्च प्रागवगतमेव इति कथं अगृहीतग्राहित्वम् । यथा आहुः

'**विशेषेऽनुगमाभावः सामान्ये सिद्धसाध्यता ।**
**अनुमाभङ्गपङ्केऽस्मिन् निमग्ना वादिदन्तिनः ॥**'

इति । **नैष दोषः** । अवगतस्यापि सामान्यस्य देशान्तरकालान्तरसंबन्धस्य अगृहीतस्य ग्रहणात् उपपन्नं प्रमेयत्वम् । इदं चापरं एकदेशिना वक्तव्यं, केन प्रमाणेन धूमदर्शनस्य अग्निज्ञानहेतुत्वमवगम्यते इति । तदानन्तर्यात् इति चेन्न । तस्य संस्कारद्वारेणापि उपपत्तेः । अनुभवरूपत्वमनुपपन्नं इति चेन्न । स्मरणस्यापि तत्परामर्शप्रमोषेण अनुभवाभिमानोपपत्तेः । वस्तुतः अनुभवत्वं तु असिद्धमेव प्रमाणाभावात् । नहि अग्निज्ञानस्य अनुभवत्वे प्रत्यक्षमन्यद्वा प्रमाणमस्ति, अस्ति तु स्मृतिप्रमोषत्वे । अथ स्मृतिप्रमोषत्वे बाधकं स्यात्, न च अग्निज्ञानस्य तदस्ति, इत्यतो न स्मृतिप्रमोषः इति चेन्न । स्मृतिप्रमोषस्यापि अबाधदर्शनात् । मणिप्रभादर्शिनः मणिबुद्धिस्तावत् स्मृतिप्रमोष एव, अन्यथा विपरीतख्यातिप्रसङ्गात्, अथ च प्रवृत्तस्य मणिलाभात् न बाधकमस्ति । तस्मात् स्मृतिरेव अनुमानं इति अप्रामाण्यापत्तिः । कथं च गृहीतग्राहित्वमनुमानस्य, अत्यन्ता-

परिदृष्टे देशे काले च अग्निरनुमीयते, स केन प्रमाणेन प्रागवगतः ? न प्रत्यक्षेण, तस्य विद्यमानोपलम्भनत्वात् । न चान्येन केन चित् । **किंच** अग्निधूमयोः मिथः संबन्धो देशकालानवच्छिन्नः प्रत्यक्षेणावगतः इत्येतावदेव भवान् ब्रवीति, न चैतावता देशान्तरकालान्तरसंबन्धः अग्नेरवगतो भवति । तस्मात् अगृहीतग्राहि एव अनुमानम् । किमत्र अगृहीतं ? अग्निसामान्यं तावत् गृहीतमेव, पर्वतोऽपि प्रत्यक्षेणावगतः, अग्निविशिष्टस्तु पर्वतो न केनाप्यवगतः, इति सोऽनुमेयो भविष्यति । तत्र च प्राप्ताप्राप्तविवेकेन संबन्धमात्रं प्रमेयमवशिष्यते । यथा 'दध्ना जुहोति' इति विशिष्टविषयोऽपि विधिः विशेषणपरो भवति, तथा इहापि विशिष्टविषयमेवानुमानं विशेषणविशेष्ययोस्तु प्राप्तत्वात् 'यजुर्युक्तं रथमध्वर्यवे ददाति' इतिवत् संबन्धविषयं भवति इति ।

यस्तु प्रतिपन्नमर्थं परं (प्रति) अनुमानेन प्रतिपिपादयिषति, तेन साधनं प्रयोक्तव्यम् । येन वाक्येन यस्यानुमानबुद्धिरुत्पद्यते तत् साधनमित्युच्यते । **'तच्च पञ्चतयं के चित्, द्वयमन्ये वयं त्रयम् । उदाहरणपर्यन्तं, यद्वोदाहरणादिकम् ॥'** अक्षपादीयास्तावत् प्रतिज्ञाहेतूदाहरणोपनयनिगमनैः पञ्चावयवं साधनं मन्यन्ते । अनित्यः शब्दः इति प्रतिज्ञा, कृतकत्वात् इति हेतुः, यत् कृतकं तत् अनित्यं दृष्टं यथा घटादि इत्युदाहरणं, कृतकश्च शब्दः इति उपनयः, तस्मादनित्यः इति निगमनम् । अयं तु अतिविस्तरो गतार्थः इति मन्वानाः **सौगताः** द्व्यवयवं उदाहरणोपनयात्मकं मन्यन्ते । स्मर्यमाणनियमं हि लिङ्गं साध्यधर्मिणि अनुसंदधानस्य स्वयमेव लिङ्गिबुद्धिरुत्पद्यते, तेन 'यत् कृतकं, तत् अनित्यं' इति कृतकत्वस्य अनित्यत्वेन व्याप्तिनियमं स्मारयित्वा 'कृतकश्च शब्दः' इति उपनयमात्रे कृते शब्दस्य अनित्यत्वं अवगम्यते एव इति कृतमवयवान्तरैः । एवं तु अत्यन्तसाकाङ्क्षमेव वाक्यं क्लेशगम्यार्थं भवति इति त्र्यवयवमेव युक्तम् । 'अनित्यः शब्दः, कृतकत्वात्, यत् कृतकं तत् अनित्यं यथा घटादि' इत्येवं उदाहरणान्तं साधनं सर्वत्र **वार्तिककारः** प्रयुङ्क्ते । 'अथवा यत् कृतकं तत् अनित्यं यथा घटादि, कृतकश्च शब्दः, तस्मादनित्यः' इत्युदाहरणप्रभृति प्रयोक्तव्यम् । एवमपि अन्यूनाधिकमेव साधनम् । तथा च 'यत् कर्म तत् फलवत्, होमोऽपि कर्म, तेनापि फलवता भवितव्यं' इत्येव सर्वत्र **भाष्यकारः** प्रयुङ्क्ते ।

प्रतिज्ञादोषाः प्रत्यक्षविरोधादयः अप्रसिद्धविशेषणत्वादयश्च वार्तिके प्रपञ्चिताः । असिद्धिः, अनैकान्तिकत्वं, बाधकत्वं च इति त्रयो हेतुदोषाः । तत्र **असिद्धिः** पञ्चधा 'बुद्धो धर्माधर्मवेदी, सर्वज्ञत्वात्' इति स्वरूपासिद्धिः । नहि सर्वज्ञत्वस्वरूपं क्व चिदस्ति । 'वह्निः अदाहकः, शीतत्वात्' इति संबन्धासिद्धिः, शैत्यस्य वह्निसंबन्धाभावात् । ननु एवं समुद्रवृद्धौ चन्द्रोदयस्य हेतुत्वं न स्यात्, उदयस्य समुद्रसंबन्धाभावात् । एककालसंबन्धात् उभयोरदोषः । यदा तर्हि चन्द्रस्य नभोमध्ये स्थितिं दृष्ट्वा पञ्चदशनाडिकाऽतिक्रान्ता समुद्रवृद्धिरनुमीयते, तदा कथं ? तत्रापि परंपरासंबन्धात् उभयोरदोषः । नहि साक्षात्संबन्धः एव सर्वत्राश्रीयते । यद्धि येन साक्षात् प्रणाड्या वा केनापि संबन्धेन नियतं, तत् तस्य तथैव अनुमापकं भवति, इति दर्शितमेवैतत् । तेन यादृशः संबन्धो हेतोः वादिना दर्शितः, तदसिद्धौ दोषो भवति नान्यथा । '**गोशब्दः** सास्नादिमद्वचनः, गोशब्दत्वात्' इति **व्यतिरेकासिद्धिः** । नहि धर्मिव्यतिरेकेण **गोशब्दत्वं** नाम किं चिदस्ति । 'नित्यमाकाशं' अनवयवद्रव्यत्वात्, इति सौत्रान्तिकं आकाशाभाववादिनं प्रति आश्रयासिद्धिः । 'वायुः आकाशश्च अनित्यः, मूर्तत्वात्' इति व्याप्त्यसिद्धिः । मूर्तत्वस्य आकाशे व्याप्त्यभावात् इति । **अनैकान्तिकत्वं** द्विविधं सव्यभिचारं सप्रतिसाधनं च । 'नित्यः शब्दः, अमूर्तत्वात्' इति कर्मादिषु अनित्येष्वपि अमूर्तत्वस्य संभवात् व्यभिचारि अमूर्तत्वम् । 'अप्रत्यक्षो वायुः, द्रव्यत्वे सति अरूपत्वात्' 'प्रत्यक्षो वायुः, महत्त्वे सति स्पर्शवत्त्वात्' इति सप्रतिसाधनत्वात् उभयमपि अनिर्णायकं संशयहेतुः, अगृह्यमाणबलाबलत्वादुभयोः । **कश्चित्तु** आह न विरुद्धार्थं हेतुद्वयं तुल्यबलं एकत्र संभवति, तद्भावे वस्तुनि नित्यसंशयापत्तेः । द्रव्यत्वे सति अरूपत्वस्य अपरोक्षावभासाविरोधात् अप्रत्यक्षत्वं अनुमापयितुं असामर्थ्यात् दौर्बल्यम् ।

स्पार्शनानुमानं तु अविरुद्धं बलवत् इति न द्वयोस्तुल्यबलत्वं, अतो नास्ति सप्रतिसाधनो हेतुः इति । ( **दूषयति** – ) स वक्तव्यः, सव्यभिचारोऽपि तर्हि न संशयहेतुः स्यात् नित्यसंशयापत्तिप्रसङ्गादेव । सत्यपि तस्य संशयहेतुत्वे प्रमाणान्तरेण निर्णयसंभवात् न नित्यसंशयापत्तिः, इति चेत्, तर्हि इहापि प्रमाणान्तरेण निर्णयसंभवाददोषः । तथा सति यत् प्रमाणान्तरविरुद्धं, तस्य दुर्बलत्वात् इतरस्य बलीयस्त्वात् अतुल्यबलत्वं इति चेत्, केन चोक्तं उभयं तुल्यबलमिति, किंतु अगृह्यमाणबलाबलत्वमात्रम् । तथाहि, यः स्थाणुत्वं पुरुषत्वं वा नावधारयति तस्य ऊर्ध्वत्वं संशयहेतुर्भवति, निर्णीते तु अन्यतरस्मिन् रूपे संशयो निवर्तते । तथा यो वायोः अपरोक्षावभासं नावधारितवान्, तस्य पृथिव्यादिषु प्रत्यक्षत्वव्याप्तं स्पर्शवत्त्वं, व्योमादिषु अप्रत्यक्षत्वव्याप्तं अरूपत्वं वायौ उपलभमानस्य भवत्येव संशयः । स तु प्रमाणान्तरेण निर्णये सति निवर्तते । इत्यास्तां तावत् । तस्मात् सप्रतिसाधनमपि सव्यभिचारवत् संशयहेतुः । तथा च भाष्यकारः 'यत् कर्म तत् फलवत्, होमोऽपि कर्म, तेनापि फलवता भवितव्यं' इत्यस्य 'उपरते कर्मणि द्रव्याणां तत्संयोगानां च द्रव्यान्तरं फलं दृष्टं, इति द्रव्यमपि फलवत् स्यात्' इति प्रतिसाधनं ब्रुवन् सप्रतिसाधनत्वमपि दूषणं इति दर्शयति । तस्मात् सोऽपि संशयहेतुः । असाधारणं तु गन्धवत्त्वं पृथिव्यां दृष्टं न क्वचिदपि बुद्धिमादधाति, इति न संशयहेतुः । साधारणं हि द्वयोः साध्यतदभावयोर्दृष्टत्वात् उभयत्रापि अनवस्थया बुद्धिमादधत् संशयहेतुः इति युक्तम् । तथा विरुद्धार्थव्याप्तमपि हेतुद्वयं एकत्र दृश्यमानं स्वव्यापकं एकस्मिन् धर्मिणि उपसंहरत् एकस्य विरुद्धोभयरूपधर्मत्वासंभवात् संशयं जनयति । न च एवंभावः असाधारणस्य संभवति, इति नायं संशयहेतुः । तथा **बाधको** नाम हेत्वाभासः, यो विरुद्धः इति तार्किकैरभिधीयते । स च षड्विध इति **केचित्** धर्मधर्म्युभयेषां स्वरूपस्य विशेषस्य च बाधात् । चतुर्धा इति **केचित्**, उभयबाधस्य धर्मधर्मिबाधान्तर्गतत्वात् । एकधा इति **अपरे**, सर्वथा समीहितधर्मविपर्ययसाधनत्वात् । इदमेव युक्तं, अवान्तरभेदस्य अनुपयोगात् । यदि अवान्तरभेदो वक्तव्यः, तर्हि द्वैविध्यमेव वक्तव्यं धर्मिस्वरूपबाधनं, तद्विशेषबाधनं चेति । नहि धर्मितद्विशेषबाधकत्वं नाम हेतोर्द्वैरूप्यं संभवति इति स्वयमेव वार्तिककारेण '**धर्मिस्वरूपबाधेन विरुद्धो योऽभिधीयते**' इत्यादिना दर्शितम् ( भेदादिभेदाः श्लोकवार्तिके ९६ श्लोकमारभ्य दर्शिताः । 'धर्मिस्वरूपबाधेन' इत्यादि तु नोपलभ्यते वार्तिके ) । तथाहि 'द्रव्यातिरिक्तः समवायः इहप्रत्ययहेतुत्वात् संयोगवत्' इति । अत्र इहप्रत्ययहेतुत्वं अनवयत्वेन भेदेन च व्याप्तं संयोगे दृष्टं समवायस्य अनवयत्वं भेदं च आपादयत् समवायधर्मिस्वरूपं तद्विशेषणं च एकत्वं बाधते इत्युदाहृतम् । **तदयुक्तम्** । इहप्रत्ययहेतुत्वं हि समवाये धर्मिणि दृष्टं, न वा ? यदि अदृष्टं, ततः असिद्धत्वात् न कस्य चिदपि साधकं बाधकं वा भवति । यदि दृष्टं, तत् कथं तत्रैव दृश्यमानं, तस्यैव बाधनं कुर्यात् । विरोधे हि सति बाधेत । न च तद्धर्मतया दृश्यमानस्य कथंचिदपि तेन विरोधः संभवति । ननु समवायत्वं बाधते इत्युक्तम् । यदि समवायत्वं नाम समवायधर्मिणः अतिरिक्तं, तद्बाधेऽपि न धर्मिस्वरूपं बाधितं स्यात् । अथ धर्म्येव, तन्न तस्य बाधकं संभवतीत्युक्तम् । तस्मात् न धर्मिस्वरूपबाधनं नाम हेतुदोषः क्वचित् संभवति, सर्वत्र अदृश्यमानस्य असत्त्वात्, दृश्यमानस्य चाविरोधात् । धर्मिविशेषणस्यैकत्वस्य कामं संभवति बाधः, न तु एतत् दूषणम् । यदि खलु इहप्रत्ययहेतुत्वं समवायस्य एकत्वं विरुन्ध्यात्, ततो द्रव्यातिरेकं साधयतः किं हीयते ? नहि द्रव्यातिरेकसाधनकृतं एकत्वसाधनं, यतस्तस्य दूषणत्वेन संभाव्येत । तस्मात् धर्मस्वरूपस्य तद्विशेषस्य च बाधनात् द्विविधमेव बाधकम् । तत्र '**नित्यः** शब्दः, कृतकत्वात्' इति कृतकत्वं अनित्यत्वेन व्याप्तत्वात् नित्यस्वरूपमेव बाधते । **यस्तु स्वरूपमेव** शब्दानामभिधेयं, नार्थान्तरं, इत्येतमर्थं प्रतिपिपादयिषुः तत्सिद्ध्यर्थं एवं प्रयुङ्क्ते 'अगृहीतसंबन्धावस्थोऽपि शब्दः स्वाभिधेयमर्थं प्रतिपादयति, विभक्तिमत्त्वात्, गृहीतसंबन्धवत्' इति, **तस्य** धर्मविशेषविपर्ययसाधनो हेतुः । पश्चाद्धि संबन्धग्रहणात् अस्वरूपप्रतिपादनं दृष्टं इति तद्व-

देव प्राक् अस्वरूपार्थत्वं तेनैव हेतुना प्रसज्येत । स्वरूपप्रतिपादने च बाधिते अर्थप्रतिपादनमपि तद्धर्मस्वरूपं बाधितमेव । नहि प्राक् संबन्धग्रहात् अर्थान्तरप्रतिपत्तिः शक्यते वक्तुं, प्रतीतिविरोधादेव । सर्वत्र यो हेतुः यादृग्विशेषविशिष्टेन साध्येन दृष्टान्तधर्मिषु नियतः, स तादृग्विशेषविशिष्टस्य साध्यस्य धर्मिणि प्रमाणान्तरविरोधात् साधनासंभवेन विपरीतं विशेषं नियमबलात् स्वयमेव बाधमानो निर्विशेषस्य च साध्यस्य असंभवात् साध्यमेव न साधयति । यथा शरीरिचेतनकर्तृकत्वेन घटादिषु व्याप्तमुत्पत्तिमत्त्वं देहाङ्कुरादीनां चेतनकर्तृकत्वसाधनायोच्यमानं शरीरिणश्चेतनस्य अनुपलब्धिविरोधेन साधयितुमशक्यत्वात् अशरीरस्य तेनैव हेतुना घटादिवत् निवारणात् विधाद्वयशून्यस्य चेतनस्य असंभवात् चेतनकर्तृकत्वमेव अङ्कुरादीनां न साधयति, तेन धर्मविशेषविरोधो हेतोः साध्यसिद्धिमेव निरुणद्धि इति भवति दूषणम् । धर्मिविशेषविरोधस्तु साध्याविरोधित्वात् न दूषणं, प्रत्युत सिद्धान्तान्तरदूषणत्वात् प्रतिवादिन एव निग्रहस्थानत्वात् दूषणं तत् भवति, न वादिनः । **यस्तु** दृष्टान्तपरिदृष्टसाध्यविशेषविरोधसंभवेऽपि तद्रहितं साध्यमात्रं हेतुः साधयत्येव, तच्च विशेषान्तरमाक्षिप्य सिध्यति इति वदति, **तस्य** उष्णाग्निनियतः तृणादिविकारः हिमे दृश्यमानः शैत्यप्रत्यक्षविरोधात् औष्ण्यासंभवेऽपि अनुष्णमेवाग्निं साधयेत् । तस्मात् धर्मिविशेषविपर्ययसाधनत्वं हेतोः अदूषणमेव ।

उदाहरणं द्विविधं साधर्म्योदाहरणं वैधर्म्योदाहरणं च । साधर्म्ये लिङ्गमुद्दिश्य लिङ्गिनः उपादानं 'यो यो धूमवान् महानसादिः, स सर्वोऽग्निमान् दृष्टः' इति । सम्यगुक्ते च साधर्म्ये न वैधर्म्यं वक्तव्यं, गतार्थत्वात् । यदा वक्तव्यमापतति, तदा लिङ्ग्यभावमुद्दिश्य लिङ्गाभावोपादानं 'यत्राग्निर्नास्ति, तत्र धूमोऽपि नास्ति यथा तोयादिषु' इति । यत्र भावेन भावः साध्यते, तत्रैव विधिरूपं साधर्म्यं, तत्प्रतिषेधरूपं च वैधर्म्यम् । यत्र तु मेघाभावादिना वृष्ट्याद्यभावः साध्यते, तत्र साधर्म्यमेव प्रतिषेधरूपं यथा 'यदा यत्र मेघोत्पत्तिर्नास्ति, तदा तत्र वृष्टिर्नास्ति' इति । वैधर्म्ये तु विधिरूपं 'यत्र वृष्टिरस्ति, तत्र मेघोत्पत्तिरस्ति' इति । तेन यत् **भिक्षुणा** उक्तं 'प्रसज्यप्रतिषेधात्मकमेव वैधर्म्यं' इति तदनादरणीयम् । साधर्म्याभासाश्च साध्यविकलत्वादयः, वैधर्म्याभासाश्च साध्याभाववैकल्यादयः वार्तिके एव द्रष्टव्याः इति । 'तत्तु द्विविधं' इति (भाष्यं पृ. ३६) 'दृष्टस्वलक्षणविषयमेवानुमानं' इति मन्वानान् निराकर्तुं अदृष्टस्वलक्षणविषयमपि अनुमानं क्रियादिविषयमस्ति, इति दर्शयितुं द्वैविध्याभिधानम् । नहि क्रियास्वलक्षणं प्रत्यक्षेण कदा चित् गृह्यते, पूर्वोत्तरदेशसंयोगविभागमात्रस्य प्रत्यक्षेण ग्रहणम् । ताभ्यामेव आगन्तुकाभ्यां आगन्तुकं कारणमनुमीयते, तच्च क्रियेत्युच्यते । ननु द्रव्यमेव कारणं स्यात्, न, तस्य प्रागपि सद्भावात् । **ननु** क्षणान्तरे अन्यत् द्रव्यं सर्वसंस्काराणां क्षणिकत्वात्, सादृश्यात्तु प्रत्यभिज्ञानम् । तत् यदा समानदेशे पूर्वपूर्वं उत्तरोत्तरमारभते, तदा तिष्ठतीति लक्ष्यते । यदा तु अनन्तरदेशे पूर्वपूर्वं उत्तरोत्तरमारभते, तदा गच्छतीति लक्ष्यते । दीपगमनवत् छायागमनवच्च सदृशापरापरक्षणानां उत्तरोत्तरदेशप्रारब्धानां गमनावभासनिमित्तत्वात् कृतं क्रियया । **किंच** अनुत्पन्नस्य क्षणस्य क्रियाश्रयत्वायोगात्, उत्पन्नस्य च विनाशग्रस्तत्वात् कथं क्रियाऽऽरम्भकत्वं ? यथा आहुः '**क्षणिकाः सर्वसंस्कारा अस्थिराणां कुतः क्रिया**' इति । **तदिदं** शब्दाधिकरणे निराकरिष्यामः । ततः स्थिरत्वे सति तन्मात्रेण अनुपपत्तेः क्रियाऽनुमानं युक्तमिति । न युक्तम् । कार्यं हि कारणमात्रमपेक्षते, तच्चेह दृष्टमेवास्ति । प्रयत्नविशेषानन्तरं हि शरीरे देशसंयोगविभागाख्यं फलं उत्पद्यमानं उपलभ्यते, ततः स एव निमित्तम् । तद्वदात्मशरीरसंयोगश्च असमवायि, शरीरं च समवायि, इति किमत्र अदृष्टकारणानुमानेन । **ननु** असमवायिकारणभूतस्य संयोगस्य स्वाश्रये स्वाश्रयसमवेते वा कार्ये, नान्यत्र तन्तुसंयोगानामिव स्वाश्रयेषु तन्तुषु पटः, तन्तुतुरीसंयोगस्य वा पटतुरीसंयोगः । प्रयत्नवदात्मसंयोगस्तु अनेवंविधे व्योम्नि कथं संयोगमारभते ? अतः कारणान्तरं कल्पनीयं **इति चेत्, न** । तन्तुसंयोगः स्वाश्रये एव पटमारभते, पटस्य बहुतन्तुव्यापित्वात्, संयोगानां च द्वयोर्द्वयोरेव वृत्तेः । **किंच** शरज्यासंयोगात्

नोदनाख्यात् युगपदेव शरे शरावयवेषु च सर्वेषु अन्तर्बहिर्वर्तिषु बहूनि कर्माणि उत्पद्यन्ते, तत्र येषामवयवानां ज्यासंयोगो नास्ति तेषु अस्वाश्रयेषु स्वाश्रयासमवेतेषु च ज्यासंयोगः कर्म आरभते इति व्यभिचारः। नहि ते संयोगाश्रयीभूते शरे समवेताः, शरस्यैव तेषु समवायात्। **किंच** प्रयत्नवदात्मसंयोगानन्तरं युगपदेव हस्ते प्रयत्नवदात्मसंयुक्ते तत्संयुक्ते चाङ्गदे अङ्गुलीयके च तल्लग्ने मणौ च कर्म उत्पद्यते, अथ एवमादिषु न चोदनात् न प्रयत्नवदात्मसंयोगाद्वा कर्मोत्पत्तिः, किंतु संयुक्तसंयोगात् इत्युच्यते, ज्यासंयुक्तावयवसंयोगात् तदनन्तरावयवे तत्संयोगाच्च तदनन्तरे। तथा आत्मसंयोगात् हस्ते, तत्संयोगादङ्गदे, तत्संयोगात् मणावपि इति। एवं तर्हि अत्रापि शक्यते वक्तुं, प्रयत्नवदात्मसंयुक्तशरीराकाशसंयोगात् शरीराकाशदेशविभागः, तत्संयोगाच्च तदनन्तरदेशसंयोगः, इति दृष्टेनैव संयोगेन संयोगविभागसिद्धेः न कर्मकल्पना अवकल्पते। **किंच** न संयोगस्यैवायं धर्मः। सर्वाण्येव असमवायिकारणानि स्वाश्रये स्वाश्रयसमवेते वा कार्यमारभन्ते, नान्यत्र। ततश्च कर्मापि असमवायिकारणत्वेन अनुमीयमानं वियति विहंगमे च उभयत्रानुमीयेत। नहि विहगकर्मणा वियति कार्यं संभवति। ततश्च वियत्यपि ‘ चलति ’ इति बुद्धिः स्यात्। अतो नानुमेयं कर्म। किमिदानीं नास्त्येव क्रियातत्त्वम्? अस्ति प्रत्यक्षावगमात्। ननु संयोगविभागातिरिक्तं न किं चिदत्र। दृश्यते हि सर्पति सर्पे भूमेः सर्पस्य च द्वयोः मिथः संयोगविभागाविशेषेऽपि सर्पमेव चलतीति बुद्धिः आलम्बते, न भूमिम्। अतः अस्या बुद्धेः आलम्बनमस्ति सर्पे चलनं नाम तत्त्वम्। तद्भावाभावाभ्यां सर्पभूम्योः चलतीतिबुद्धेर्भावाभावौ इत्यङ्गीकार्यम्। न चेयं आनुमानिकी संभवति इत्युक्तम्। तस्मात् नैवमभिप्रायं इदं भाष्यं ( तत्तु द्विविधं इत्यादि ), किंतु विशेषविषयं सामान्यविषयं चानुमानं इत्यनुमानस्य विषयप्रपञ्चार्थम्। येऽपि मन्यन्ते ‘**विशेषेऽनुगमाभावः, सामान्ये सिद्धसाध्यता** ’ इति, ते अनेन निराक्रियन्ते, उभयोरपि विशेषत्वोपपत्तेः। यत्र विशेषस्यैवानुगमः, तत्र विशेषविषयत्वं, सामान्यानुगमे तु सामान्यविषयत्वम्। न च सिद्धसाध्यत्वं, देशान्तरकालान्तरसंबन्धस्य अदृष्टस्य ग्रहणात् इति प्रागेव वर्णितम्। **इत्यनुमानवादः**। शा. तर्कवादे वृ. ६८–७१.

**अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात्। १।३।७।१५ ॥**

अनुमानात् स्मृतेराचाराणां च प्रामाण्यमिष्यते। येनैव हेतुना ते प्रमाणं, तेनैव व्यवस्थिता एव प्रामाण्यमर्हन्ति। तस्मात् होलाकादयः प्राच्यैरेव कर्तव्याः, आह्नीनैबुकादयो दाक्षिणात्यैरेव, उद्वृषभयज्ञादय उदीच्यैरेवेति। अत्र **प्रभाकरेण** संगतिलाभात् इत्थमधिकरणमुपवर्णितम्। आचारस्य प्राच्यादिनिष्ठत्वात् प्राच्यादिपदवद्वेदानुमानमेव युक्तम्। प्राच्यादिपदानां चाऽर्थविशेषानवधारणेन अव्यवस्थितार्थत्वात् प्राच्यादिपदवती चोदना न व्यवसितार्था, न प्रमाणमिति पूर्वः पक्षः। सिद्धान्तस्तु—भवेदेवं, यदि प्राच्यादिपदवती चोदना अनुमीयते, किंतु सामान्येनैव होलाकादिकर्ममात्रविषयिणी। सा च व्यवस्थितार्थैवेति नाप्रामाण्यमिति। **तदिदमसंगतम्**। तत् किमव्यवस्थितार्थप्राच्यादिपदवती चोदना बुद्ध्युपसंहारासंभवात् मूलत्वेन कल्पयितुमेव न शक्यते इत्यप्रमाणम्? कल्पिता वा अप्रमाणम्? यद्यकल्पितैव न प्रमाणं, तदा को विरोधः? अथ कल्पिता सती न प्रमाणमित्युच्यते, तदसंबद्धम्। नहि बुद्ध्युपसंहारमन्तरेण आचारमूलतया चोदना कल्पयितुमेव शक्यते। तथा कल्पिता च न प्रमाणमिति बालजल्पितम्। इति यथावार्तिकमेवाऽधिकरणं प्रस्तूयते। पूर्वत्र स्मृतिगतं विशेषं निरूप्य इदानीमाचारगतो विशेषश्चिन्त्यते। अत्रायं पूर्वपक्षिणोऽभिसंधिः, होलाकाद्याचारस्य प्राच्यादिसंबन्धेनैवोपलम्भात् तद्वशेन श्रुतिरनुमीयमाना होलाकादयः प्राच्यादिभिरेव कर्तव्या इति विशेषश्रुतिरेवाऽनुमीयते। तदुक्तं ‘ **अन्यवेश्मस्थिताद्धूमान्न वेश्मान्तरमग्निमत्। प्रमीयते न चाऽदृष्टधूमैरिति हि निश्चितम्** ॥ ’ ( वा. १। ३।७ पृ. २४४ )। ननु प्राच्यादिशब्दप्रवृत्तिनिमित्तस्यैव अव्यवस्थितत्वान्न व्यवस्थितविशेषश्रुत्यनुमानं संभवति। तथाहि, न तावत् ब्राह्मणत्वादिजातिवत् प्राच्यत्वादिजातिरस्ति। न च प्राच्यादिदेशजन्यत्वं व्यवस्था-

कारणं, देशान्तरगतप्राच्यपितृजनितानामपि होलाकाद्याचारदर्शनात् । नापि प्राच्यादिदेशनिवासो व्यवस्थाकारणं, अन्यदेशीयानां तद्देशनिवासिनामपि तददर्शनात् । अत एव कृष्णमृत्तिकादेशीयत्वं लोहिताक्षत्वादिकं वा न व्यवस्थाकारणं, सर्वेषामेव व्यभिचारदर्शनात् । उच्यते । एकैकशः सर्वेषां व्यभिचारेऽपि, प्राच्यादिसमाख्या तावत् सकलानुष्ठातृसाधारणी समस्ति । सैव व्यवस्थाकारणं भविष्यति । तेन समाख्याया एव तावत् व्यवस्थितानुमानहेतुत्वात् समाख्यायुक्तपुरुषविशेषविषयमेव प्रमाणं स्यादिति । एवं प्राप्ते अभिधीयते ।

**अपिवा सर्वधर्मः स्यात्, तन्न्यायत्वाद्विधानस्य । १६ ॥**

अयमभिप्रायः । भवेदेवं, यदि प्राच्यादिसमाख्या अत्र व्यवस्थाकारणं भवेत् । सा हि प्रवर्तमाना पाणिनीय स्मृत्यनुसारेण चतुर्धा प्रवर्तते । तथाहि तत्स्मरणम्— 'सोऽस्य निवासः' (४।३।८९) 'तत्र भवः' (५३) 'तत्र जातः' (२५) 'तत आगतः' (७४) इति । तदयमर्थः, प्राचि वसति, प्राचि तिष्ठति, प्राचि जातः, प्राच आगतः प्राच्य इत्युच्यते । तदुक्तं— '**संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते । निवासभवजातत्वतदागमनहेतुभिः ॥' इति** । ( वा. १। ३।७ पृ. २४४ ) । न चैवंभूताऽपि समाख्या व्यवस्थाकारणं, प्राचि दाक्षिणात्यजनितस्य प्राग्देशनिवासिनोऽपि होलाकाद्यनुष्ठानादर्शनात् । तस्यैव दाक्षिणात्यसमाख्यानिमित्ताभावेऽपि आह्नीनैबुकाद्यनुष्ठानदर्शनात् । अथ न व्याकरणस्मृतिनिबन्धना समाख्या निमित्तं, किंतु उच्छृङ्खलैव लौकिकी समाख्या निमित्तमित्युच्यते, तथा सति दाक्षिणात्यस्यापि सांकेतिकप्राच्यादिनाम्नो होलाकाद्यनुष्ठानप्रसङ्गः । अतो व्यवस्थाकारणाभावात् प्राच्यादिपदयुक्तश्रुतिकल्पने गौरवप्रसङ्गाच्च अविशेषेणैव होलाकादिकर्तव्यताप्रतिपादिका श्रुतिरनुमीयते । यत्तु केषांचिदस्माकमेवैतदनुष्ठेयमिति कृत्वा अस्यानुष्ठानं अन्येषां चाननुष्ठानं, तत् भ्रान्तिनिबन्धनमेव । दृष्टं चैतत् सामान्येन प्रत्यक्ष श्रुतिस्मृतिविहितेऽपि कर्मणि केषांचिदनुष्ठानं अननुष्ठानं चान्येषाम् । यथा आग्रयणविधानेऽपि दुर्गोत्सवे एव वराटादौ नम्बाललीलानुष्ठानं, वङ्गपाश्चात्यानां तु चैत्रशुक्लचतुर्दश्यामेवेति न किंचिदनुपपन्नमिति । **प्रयोजनं**, पूर्वपक्षे प्राच्यादिभिरेव होलाकाद्यनुष्ठेयं, सिद्धान्ते तु सर्वैरेवेति । **सूत्रं तु**—होलाकादिकर्म सर्वेषामेव 'धर्मः' स्यात् । होलाकादिकर्मविधानस्य सर्वधर्मताप्रतिपादकन्यायवत्त्वादिति । **तौता.**

**अनुमानव्यवस्थानात् तत्संयुक्तं प्रमाणं स्यात् । १।३।७।१५ ॥**

देशाचाराः प्राच्यानां होलाकादयः, दाक्षिणात्यानां आह्नीनैबुकादयः, उदीच्यानां उद्वृषभयज्ञादयः । ते किं तेषांतेषामेव धर्माः उत सर्वेषां इति विचारे पूर्वपक्षमाह । अनुमानस्य श्रुत्यनुमितिकारणीभूतत्वेन लिङ्गभूतस्य आचारस्य व्यवस्थानात् देशभेदेन व्यवस्थितत्वात्, प्रमाणं आचारेणानुमिता श्रुतिः तत्संयुक्तं तत्तद्देशवाचकपदसंयुक्तमेव स्यात् । 'होलाकां प्राच्याः कुर्युः' 'आह्नीनैबुकं दाक्षिणात्याः कुर्युः' इत्यादिरूपैव श्रुतिरनुमेया इत्यर्थः ।

**अपिवा सर्वधर्मः स्यात्, तन्न्यायत्वाद् विधानस्य । १६ ॥**

पूर्वपक्षनिरासार्थः अपिवाशब्दः । होलाकादिः सर्वधर्मः सर्वदिक्स्थानां जनानां धर्मः स्यात् विधानस्य तन्न्यायत्वात् । विधीयते अनेन इति विधानं शब्दः । तस्य सर्वधर्मत्वस्य उपपादकः न्यायः 'विधेः सर्वविषयत्वं' यस्मिन् कल्पे विधाने विधायके वाक्येऽस्ति तत् तन्न्यायं, तस्य भावः तन्न्यायत्वम् । विधानस्य तन्न्यायत्वात् विधायकवाक्यस्य सर्वविषयत्वात् होलाकादिः सर्वधर्मः स्यात् इत्यर्थः ।

**दर्शनाद्विनियोगः स्यात् । १७ ॥**

ननु यथा शिखाकल्पो व्यवस्थितः केचित् त्रिशिखाः, केचित् पञ्चशिखाः, तथा होलाकादयोऽप्याचाराः तत्तद्दिक्स्थानामेव कुतो न स्युः इति चेन्न । **गोत्रप्रवरव्यवस्थया** शिखाव्यवस्थायाः गृह्यसूत्रकारैरेव उक्तत्वात् । तद्दर्शनात् शिखासंख्याया विनियोगः स्यात् विशेषेण व्यवस्थया नियोगः स्यात् । 'यत्र बाणाः संपतन्ति कुमारा विशिखा इव' इति शिखाऽर्थवादस्य 'यथर्षि

शिखा निदधाति ' इति स्मृतेश्च दर्शनात् विनियोगः । त्रिप्रवराः शिखात्रयं, पञ्चप्रवराश्च शिखापञ्चकं निदधति इति युक्तम् । होलाकादौ तु नास्ति तादृक् किं चित् प्रमाणं इति सर्वधर्मतैव ।

**लिङ्गाभावाच्च नित्यस्य । १८ ॥**

ननु बृहत्त्व-श्यामत्व-लोहिताक्षत्वादि तत्तद्देशस्थ-कर्तृलिङ्गं आचाराणां नियतदेशत्वं व्यवस्थापयिष्यति इति चेन्न । नित्यस्य देशभेदेन व्यवस्थितस्य कर्तृलिङ्गस्य अभावात् । बृहत्त्वश्यामत्वादीन्यपि न देशनियतानि । नित्यस्य लिङ्गस्य चाभावात् होलाकादयो न व्यवस्थिताः, किंतु सर्वधर्माः ।

**आख्या हि देशसंयोगात् । १९ ॥**

ननु दाक्षिणात्या उदीच्याः इत्यादिः समाख्या होलाकादीन् आचारान् देशभेदेन व्यवस्थापयिष्यति इति चेन्न । हि यस्मात् दाक्षिणात्यादिः आख्या समाख्या देशसंयोगात् भवति । पुनश्च कश्चित् दाक्षिणात्यः दक्षिण-देशान्निर्गतः प्राक्षु वा उदक्षु वा गत्वा स्थिरो भवति । स च आह्नीनैबुकं करोत्येव । तस्मान्न समाख्ययाऽपि आचारव्यवस्था । किंतु होलाकाद्या आचाराः सर्वधर्मा एवेति सिद्धान्तः ।

**न स्याद्देशान्तरेष्विति चेत् । २० ॥**

दाक्षिणात्यादिराख्या देशसंयोगाद्भवतीत्युक्तं सिद्धा-न्तिना तन्न युक्तमिव । यदि देशसंयोगात् आख्या स्यात् देशान्तरेषु तस्मिन् कर्तरि गते सा आख्या न स्यात् । भवति तु देशान्तरस्थस्यापि मथुरया असंबद्ध-स्यापि माथुर इति आख्या । तस्मान्न देशसंयोगादाख्या इति चेत् पूर्वपक्षी ब्रूयात् ।

**स्याद् योगाख्या हि माथुरवत् । २१ ॥**

उत्तरमाह सिद्धान्ती । हि यस्मात् प्राच्यादिसमाख्या योगाख्या योगमात्रापेक्षा स्यात्, न भूतवर्तमानभविष्यत्सं-बन्धापेक्षा । ' संबन्धैर्बहुभिर्देशसमाख्या हि प्रवर्तते । निवास-भव-जातत्व-तदागमनहेतुभिः ॥ ' ' सोऽस्य निवासः ' ' तत्र भवः ' ' तत्र जातः ' ' तत आगतः ' इत्येवंमादिपरित्यागेन न कदा चित् प्राच्यादिसमाख्या वर्तते । माथुरवत् यथा मथुरा निवासोऽस्य मथुरायां वा भवः, मथुरायां वा जातः, मथुरायाः सकाशादागतो वा माथुर उच्यते । तद्वत् । तस्मान्न समाख्यया व्यवस्था आचाराणाम् ।

**कर्मधर्मो वा, प्रवणवत् । २२ ॥**

आह पूर्वपक्षी । होलाकाद्याचारव्यवस्थायां कर्मधर्मः देशो निमित्तं स्यात् । यः कृष्णमृत्तिकाप्रायोदेशः स आह्नीनैबुकस्य इत्यादि । प्रवणवत् यथा ' प्राचीनप्रवणे वैश्वदेवेन यजेत ' इति प्राचीनप्रवणो देशः वैश्वदेव-कर्माङ्गं तद्वत् ।

**तुल्यं तु कर्तृधर्मेण । २३ ॥**

सिद्धान्ती आह । बृहत्त्वश्यामत्वादिना पूर्वोक्तेन कर्तृ-धर्मेण कर्तुर्धर्मेण तुल्यमेतत् देशस्य कर्मधर्मत्वं, न व्यव-स्थापकम् । तद्देशनिवासिभिः तदनाचरणात्, ततो निर्गतैश्च तदाचरणात् । तस्मात् होलाकाद्याचारः सर्वधर्मः इति सिद्धान्तः । तत्र होलाका प्रसिद्धा । आह्नीनैबुकं कुलाचारागतविशिष्टवृक्षपूजा । उद्वृषभयज्ञः वृषभाणां पूजाशृङ्गाराद्युत्सवः कृषीवलैः क्रियमाणः । ( पोळा, बेंदूर इति भाषा ) । **के.**

* **अनुमितवाक्ये** लक्षणाया अभावः । **संकर्ष.** ३।२।४, * अनुमितवाक्ये विशिष्टोद्देशस्य अदोषत्वात्, समासपदस्यैव अनुमेयत्वात् । ३।२।३. * अनुमित-शब्देन कार्यापत्तिर्यथा- ' न गिरागिरेति ब्रूयात् ऐरं कृत्वोद्गेयम् । ' अत्र प्रतिषिद्धे गिरापदे तत्कार्ये साधना-भिलाषि लक्ष्यते । तत्र च लक्षितैरपदस्य साध्याभिलाषिणो विधिः । **बाल.** पृ. १३०, * अनुमितानुमानलब्धशब्देन कार्यापत्तिर्यथा- 'जुहूया वा एतर्हि वाग्भवति यर्हि पृष्ठ्यः षडहः संतिष्ठते ' इति । अत्र संस्थया प्रतिषेधो लक्ष्यते, नहि संस्थितः कर्तव्यो भवतीति । प्रतिषेधेन च कार्ये लक्ष्यते, तस्मिन् लक्षिते मध्वशनघृताशने विधीयेते । एवमत्र लक्षितलक्षणया स्वशब्दः । पृ. १३०.

* **अनुमितिः** ज्ञानकरणिका । **मणि.** पृ. १९. * अनुमितिः व्याप्तिस्मृति-पक्षधर्मताज्ञानजन्यं ज्ञानम् । **वैद्यनाथः.** १।१।५।५ पृ. ३६. *अनुमितिः व्याप्यताऽव-च्छेदक-प्रकारकपक्षधर्मतानिश्चयजन्यं ज्ञानम् । व्याप्त्यनु-गमे तु व्यभिचारधीविरोधिधीविषयताऽवच्छेदकधर्मप्रका-

रकपक्षधर्मताज्ञानजन्यं ज्ञानम् । नैयायिकास्तु लाघवात् व्यभिचारवीविरोधिधीविषयधर्मप्रकारकपक्षधर्मताज्ञानजन्यज्ञानमनुमितिरिति वदन्ति । तत् परामर्शवादे निराकरिष्यते। **मणि.** पृ. ३०-३१, * अनुमितिः संशयाकारा न इति अक्षपादीयाः। संशयाकारा अनुमितिरस्ति इत्यन्ये (रत्नकोशकाराः)। पृ. ४२, *यदि पक्षविशेष्यकः परामर्शः तदा तद्विशेष्यिकैव **अनुमितिः** । हेतुविशेष्यके तु साध्यविशेष्यिका इति मणिकृत्। उभयविधेनापि पक्षविशेष्यिकैव इति नव्याः। पृ. ३७, * धूमलिङ्गकपर्वतपक्षकवह्निविधेयका**नुमितिं** प्रति धूमपरामर्शस्य हेतुत्वम् । पृ. ३७. * **अनुमिते**रपि वह्निविशिष्टः पर्वतो विषयः इति अनधिगतार्थगन्तृत्वरूपं प्रामाण्यम्। **कु.** १।१।५।५. * वह्न्या**द्यनुमितौ** वह्निव्याप्यालोकवान् पर्वतः इत्यादिविशिष्टपरामर्शस्यैव हेतुत्वं, न तु आलोको वह्निव्याप्यः आलोकवान् पर्वतः इति ज्ञानद्वयस्य, गौरवात्। यत्र च ज्ञानद्वयादनुमितिः तत्र विशिष्टज्ञानकल्पनात् न व्यभिचारः इति **गौतमीयाः । मीमांसकास्तु** वह्निव्याप्यधूमवान् पर्वतः इतिविशिष्टपरामर्शस्य हेतुत्ववादिनये व्याप्त्यंशे निश्चयत्वं निवेश्य धूमांशेऽपि निश्चयत्वं निवेशनीयम्। तथा च निश्चयत्वस्य तदभावाप्रकारकत्वरूपबहुतरपदार्थघटितत्वेन तेषां परस्परविशेषणविशेष्यभावे विनिगमनाविरहेण कार्यकारणभावबाहुल्यम् । ज्ञानद्वयवादिनये तु ज्ञानस्य भिन्नतया निश्चयत्वप्रवेशेऽपि न मिथो विनिगमनाविरहः, तत्र लाघवं इत्याहुः। **मणि.** पृ. ३८. ***अनुमितिसामग्र्याः** – प्रत्यक्षसामग्र्यपेक्षया बलवत्त्वम्। **भाट्ट.** ८।१।४.

* **'अनुमिनोमि'** इत्यनुव्यवसायभानं विधेयताऽऽख्यविषयताशालिन एवेति नियमः। **कु.** १।१।५।५ पृ. ६.

* **अनुमेयानां** कार्यगम्यत्वात् । **बृहती.** पृ. २४७.

* **अनुयाजः** दर्शपूर्णमासयोः तृतीयः स्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकः। **भा.** १०।४।१९।३८.

**अनुयाजः दशमः बर्हिर्विकारः ॥**

उक्तन्यायेन दशमानुयाजस्य स्विष्टकृद्विकारत्वे प्राप्ते, देवतासामान्यस्य उत्पत्तिसमाम्नायावगतस्य प्रयोगकालावगतक्रमात् बलवत्त्वेन प्रथमविकारत्वमेव । **संकर्ष.** २।३।५.

* **अनुयाजाः** अग्नीषोमीये पशौ एकादशैव, न तु प्रत्यनुयाजं एकादशत्वसंख्या। एवं प्रयाजा एकादशैव। एवं चातुर्मास्येषु प्रयाजा अनुयाजाश्च नवनवैव । **भा.** ५।३।१।१-२. * अनुयाजाः अग्नीषोमीये पशौ पृषदाज्येन यष्टव्याः 'पृषदाज्येनानुयाजान् यजति' इति तद्विधानात्। **वि.** ५।२।८. * अनुयाजाः आतिथ्यायां न सन्ति। 'इडान्ता आतिथ्या संतिष्ठते नानुयाजान् यजति'। **भा.** १०।७।१२।३८, * अनुयाजाः उपसत्सु न सन्ति। 'अननुयाजास्ताः' इति निषेधात्। १०।७।१४।४३. * अनुयाजा औपभृताज्यप्रयोजकाः दर्शपूर्णमासयोः। **वि.** ४।१।१५, * अनुयाजाः क्रत्वर्थाः । तत्र फलश्रवणं तु अर्थवादः। ४।३।१, * अनुयाजाः ज्योतिष्टोमे सवनीयपशुगताः पशवङ्गम्। ४।३।१५, * अनुयाजाः दर्शपूर्णमासयोः अङ्गं, न प्रधानम् । ४।४।११. * अनुयाजाः दर्शपूर्णमासयोः आज्यद्रव्यकाः। **भा.** १२।१।१।२. * अनुयाजाः दर्शपूर्णमासयोः त्रयः, चातुर्मास्येषु नव, पशौ एकादश, अवभृथे द्वौ एव बर्हिर्वर्जितौ । आतिथ्यायामुपसत्सु च नैकोऽपि। **के.** * अनुयाजाः दर्शपूर्णमासयोः प्राशित्रादिभक्षणोत्तरमिज्यन्ते । **के.** * अनुयाजाः पशौ एकादशसंख्याः त्रिभिरनुयाजैः पुरोडाशस्य कार्यम्। तथा पृषदाज्येनानुयाजाः पशोरिज्यन्ते, केवलेनाज्येन च पुरोडाशस्यार्थः। **भा.** १२।१।१।२. * अनुयाजाः पशौ 'देवं बर्हिः' इत्यादिभिः पाशुकहौत्रकाण्डपठितैः एकादशभिर्मन्त्रैः साध्या होमाः । ते च पशवङ्गं नाग्निमारुताङ्गम् । **वि.** ४।३।१५.

**अनुयाजाः पाशुकाः प्राकृतस्य साधारणस्य प्रथमस्य प्रैषस्य विकाराः ॥**

पशौ अनूयाजेष्वेकादश प्रैषाः मैत्रावरुणकर्तृकाः सन्ति। ते सर्वे प्राकृतयोः यजेत्युत्तरानूयाजप्रैषयोर्विकाराः,

तेषामध्वर्युप्रैषापेक्षया द्वितीयत्वात् प्राकृतयोरपि द्वितीयत्वात्। तेनाध्वर्युः देवान् यजेति प्रथमानूयाजे एव सकृत् ब्रूयात्। प्रशास्ता तु पञ्चमानुयाजनारभ्य प्रैषाननुब्रूयात्। अन्ये मन्त्रभूयस्त्वन्यायेन ( संकर्ष. १।२।४ ) विकल्पेरन्। इति प्राप्ते, मन्त्रवैयर्थ्यापत्तेरेव साधारणस्य प्रथमप्रैषस्य विकाराः। 'देवं बर्हिः' 'देवान् यज' इति देवताशब्दसामान्याच्च किञ्चित्साधर्म्यापेक्षया अस्य साम्यस्यान्तरङ्गत्वात्। ततश्च देवान् यजेत्यस्यैव निवृत्तिः। प्रत्यनूयाजमेकैकः प्रैषो मैत्रावरुणेन वाच्यः, पञ्चमादिषु तु यजेत्यपि अध्वर्युणा वाच्यम्। प्रकृतौ उत्तरयोर्द्विद्विप्रैषत्वात्। **संकर्ष.** २।३।७.

* अनुयाजाः यत्र न सन्ति, तत्र उपभृति चतुर्गृहीतमेव आज्यम्। यथा 'आतिथ्यायां चतुर्गृहीतान्याज्यानि भवन्ति, नह्यत्रानुयाजान् यक्ष्यन् भवति' इति। एवं चातुर्मास्येषु। **भा.** ४।१।१७।४८. * ज्योतिष्टोमे सवनीयपशोः **अनुयाजाः** 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति' इति विहितत्वात् उत्कृष्यन्ते। **वि.** ११।३।१६. * ज्योतिष्टोमे सवनीयपशौ आग्निमारुतादूर्ध्वं उत्कृष्यमाणा अनुयाजाः सूक्तवाकमपि उत्कर्षन्ति। तत्र च सवनीयपुरोडाशदेवतानामपि उत्कर्षः। **भा.** ११।३।१६। ५३–५४, * ज्योतिष्टोमे अवभृथे 'अपबर्हिषौ **अनुयाजौ** यजति' इति बर्हिर्नाम अनुयाजः निषिद्धः। १०।७।१५।४७, * **अनुयाजैः** आग्निमारुतादूर्ध्वमुत्कृष्टैः सह दाक्षिणाग्निकौ होमौ ( पिष्टलेपफलीकरणहोमौ ) नोत्कृष्येयाताम्। ५।१।१५।२८. **अनूयाजस्य उत्तमस्य लोपः,** यत्रैककपालमात्रहविष्केष्टौ आवापिकस्विष्टकृल्लोपः। **भाट्ट.** १०।४।२०.

**⧗ अनुयाजस्य तृतीयस्याग्निस्विष्टकृद्देवत्यस्य शेषसंस्कारार्थावापिकस्विष्टकृद्देवतासंस्कारकतया संनिपत्योपकारकत्वं दर्शपूर्णमासयोः ॥**

**स्विष्टकृदावापिकोऽनुयाजे स्यात्, प्रयोजनवदङ्गानामर्थसंयोगात्। १०।४।१९।३८ ॥**

**भाष्यं** — स्तो दर्शपूर्णमासौ, तत्र स्विष्टकृत् अनुयाजेषु 'अग्निं स्विष्टकृतं यजति' इति। तत्र संदेहः किं स्विष्टकृद्यागः अनुयाजेषु आरादुपकारकः, उत संस्कारकः इति। किं प्राप्तं ? आरादुपकारक इति। कुतः ? एतद्धि कर्मणां प्रसिद्धं कार्यं यदारादुपक्रिया। तथाहि भूतस्य भव्यार्थता भविष्यति, श्रुत्या च विधानम्। इतरथा भव्यस्य भूतार्थता स्यात्, वाक्येन च विधानम् ॥ तस्मादारादुपक्रियेति। **एवं प्राप्ते ब्रूमः।** स्विष्टकृदावापिकः स्यात्, न बाध्यः। किमिदमावापिक इति ? आज्यभाग-स्विष्टकृतौ अन्तरा आवापस्थानं, तत्र भव आवापिकः। बहिरावापादनुयाजस्तान्त्रिकः। या तु स्विष्टकृद्देवता, तत्र सैवासौ प्रधानदेवता आवापिकी। तस्मात् आवापिकः इत्युच्यते। यदा चैवं, तदा संस्कारकर्म स्यात्। तथा प्रयोजनवत् भवति, प्रयोजनवतोऽग्नेरुपकरोति इति। अपि च द्विविधान्यङ्गानि आरादुपकारकाणि सामवायिकानि च। आरादुपकारकेभ्यः सामवायिकानि गरीयांसि। तत्र हि साक्षात् वाक्यम्। आरादुपकारकेषु प्राकृतेन परोक्षेण एकवाक्यता स्यात्। तस्मात् संस्कारकर्मेति।

**शा** — दर्शपूर्णमासयोः त्रयोऽनुयाजाः। तृतीयः स्विष्टकृद्देवत्यः। स किं आवापिकस्य स्विष्टकृतः संस्कारार्थः, उत आरादुपकारकः इति। तत्र '**उभयोर्दृष्टशेषत्वात् विशेषानवधारणात्। न मिथोऽङ्गाङ्गिभावः स्यात् तस्मादारादुपक्रिया ॥**' उच्यते '**देवतास्मरणं तत्र दृष्टमेव प्रयोजनम्। अनूयाजस्य तेनेह न युक्ताऽदृष्टकल्पना ॥**' न चागृह्यमाणविशेषत्वम्। आवापिकस्य द्रव्यप्रतिपत्त्या इष्टदेवतास्मरणेन च कृतार्थत्वात् नानूयाजिकस्विष्टकृद्देवतासंस्कारार्थत्वम्। अनूयाजस्य तु दृष्टप्रयोजनान्तराभावात् अदृष्टकल्पनापरिहाराय आवापिकस्विष्टकृत्संस्कारार्थत्वं अध्यवसीयते इति। १०।४।२०.

**सोम** — पुरोडाशस्विष्टकृति प्रधानव्यतिरिक्तनिगमेषु स्विष्टकृच्छब्दबाधेऽपि यत्र विकृतौ आवापिकस्विष्टकृतौ देवतान्तरं, तत्र तृतीयस्यानूयाजस्य न बाधः आरादुपकारकत्वात् इत्युत्थितेः **संगतिः। सूत्रार्थस्तु**— आवापिकः स्विष्टकृदनूयाजः संस्कार्यः स्यात्, तथा सति संस्कारकर्म प्रयोजनवद्भवति दृष्टार्थत्वात्। किंच अङ्गानां संनिपातिनामर्थसंयोगात् वाक्येन विनियोज्यत्वादिति

यावत्। तथा च प्रकरणविनियोज्यादाराडुपकारकात् तस्य ज्यायस्त्वादिति।

**वि—** 'अनुयाजोऽन्तिमो योऽसौ किमारादुपकारकः। स्विष्टकृत्संस्कृतिर्वा, ऽऽद्योऽनुयाजान्तरसाम्यतः॥, स्विष्टकृत्त्वगुणस्याग्नेः प्रत्यभिज्ञाऽर्थवत्त्वतः। दृष्टार्थत्वाच्च संस्कारो भवेदन्त्यप्रयाजवत्॥'

**भाट्ट—** दर्शपूर्णमासयोरनूयाजेषु तृतीयोऽनूयाजः अग्निस्विष्टकृद्देवत्यः। स किं शेषप्रतिपत्त्यर्थस्य आवापिकस्विष्टकृद्यागस्य देवतासंस्कारार्थः, उत अनूयाजान्तरवत् आराडुपकारक इति चिन्तायां, उभयोः प्रकरणेन दर्शाङ्गत्वावगमात् न परस्पराङ्गत्वे प्रमाणमस्ति इति आराडुपकारक एव। **इति प्राप्ते,** दृष्टे संभवति अदृष्टस्यान्याय्यत्वात् तदीयदेवतासंस्कारार्थत्वमेव। न च विनिगमनाविरहः, प्रक्षेपस्य वाक्यादेव शेषप्रतिपत्त्यर्थत्वेन कृतार्थत्वात्, त्यागांशस्यापि प्रधानप्रयुक्तद्रव्योपजीवित्वेन प्रधानाङ्गत्वस्य प्रकरणं विनैव अवगमसंभवाच्च। यत्तु **शास्त्रदीपिकायां** तस्य इष्टदेवताप्रकाशनेन कृतार्थत्वमुक्तं, **तन्न** मन्त्रस्य इष्टदेवताप्रकाशकत्वेऽपि यागे अपूर्वाया एव अग्निस्विष्टकृद्देवताया विधानात्, उद्देशांशस्य इष्टदेवतास्मरणार्थत्वाभावात् उपेक्षितम्। **न च** एवमपि उत्तमानुयाजे मान्त्रवर्णिकस्य देवस्यापि देवतात्वप्रतीतेः, तस्य च आवापिकस्विष्टकृति देवतात्वाभावात् कथं तदीयदेवतासंस्कारार्थत्वमिति **वाच्यम्।** भाष्यकारलिखितेन 'अग्निं स्विष्टकृतं यजति' इति वचनेन 'विष्णुं यजति' इतिवत् देवताविधानेन मान्त्रवर्णिकस्य देवस्य देवतात्वाकल्पनात्। **याज्ञिकाचारस्तु** एतद्वचनादर्शनमूलकः। उक्तं ह्येतत् देवताप्रमाणेषु न द्वितीयायाः मन्त्रवर्णापेक्षया दौर्बल्यं कौस्तुभे। तस्मात् उत्तमानुयाजस्य आवापिकस्विष्टकृद्देवतासंस्कारार्थत्वात् यत्रैककपालमात्रहविष्केष्टौ आवापिकस्विष्टकृल्लोपः, तत्र उत्तमानूयाजस्यापि लोपः। यत्र वा पित्र्यादौ अग्निः कव्यवाहनः स्विष्टकृद्देवता आवापिकस्विष्टकृति, तत्र उत्तमानूयाजेऽपि 'देवो अग्निः कव्यवाहनः स्विष्टकृत् सुद्रविणो मन्द्रः कविः' इत्यादिः मन्त्रे ऊहः, त्यागे च तद्देवतोल्लेखः। याज्ञिकास्तु एवं न कुर्वन्ति, तत्र मूलं चिन्त्यम्। १०।४।२०.

**मण्डन—** 'अनुयाजः स्विष्टकृद्गुणः।' २२.

**शंकर—** 'अनुयाजोऽन्त्यस्तु संस्क्रिया।' २२.

**अनुयाजानां 'आग्निमारुतादूर्ध्वं कर्तव्याः' इति कालो विधीयते॥**

**अनुत्पत्तौ तु कालः स्यात्, प्रयोजनेन संबन्धात्॥ ४।३।१४।३६॥**

**भाष्यं—** ज्योतिष्टोमे श्रूयते 'आग्निमारुतादूर्ध्वमनुयाजैश्चरन्ति, प्रहृत्य परिधीन् जुहोति हारियोजनम्' इति। तत्र संदेहः किमङ्गं विधीयते, उत काल इति। अङ्गविधाने श्रुतिः, कालविधाने लक्षणा। तस्मादङ्गविधानम्। **इति प्राप्ते, ब्रूमः।** अनुत्पत्तिवाक्ये कालः स्यात्। आग्निमारुतं सोमाङ्गं, अनुयाजाः पश्वङ्गम्। तत्र न तयोः परस्परेण संबन्धः। तथा परिधयः पश्वङ्गं, हारियोजनमन्यदेव प्रधानम्। अनुयाजा आग्निमारुतं च प्राप्तं, आनन्तर्यमेव तयोर्न प्राप्तं, तद्विधीयते, तथा हारियोजनस्य परिधिप्रहरणस्य च। एवं च सति न हारियोजनस्य परिधिप्रहरणेन कश्चिदुपकारः क्रियते, हारियोजनेन वा परिधिप्रहरणस्य। ननु परिधिप्रहरणस्य उपरिष्टाद्भावेन तस्योपक्रियेतेति। उच्यते। नहि उपरिभावार्थं परिधिप्रहरणमनुष्ठेयम्। विद्यते एवैतत् पश्वर्थम्। तस्मिंश्च सति तस्योपरिभावो विद्यते एवेति। तस्मात् कालार्थः संबन्ध इति।

**सोम—** पूर्ववत् इहापि अङ्गाङ्गित्वपरता इति प्रत्यवस्थानात् **संगतिः।** **प्रयोजनं** प्रथमपूर्वपक्षे (कर्मान्तरविधिरूपे) आग्निमारुतार्थानामनूयाजानां अन्यत्वात् सवनीयपश्वर्थानूयाजाः स्वकाले कर्तव्याः। द्वितीयपूर्वपक्षे (अङ्गप्रयोजनसंबन्धविधिरूपे) सवनीयपश्वर्थतया चोदकप्राप्तानामनूयाजानां तत आच्छिद्य आग्निमारुतशास्त्राङ्गतया विधानात् सवनीयपशौ अनूयाजाभावात् विकृतिषु अनूयाजाभावः। सिद्धान्ते तु (कालार्थसंयोगविधिरूपे) सवनीयपश्वर्थानामेव आग्निमारुतोत्तरकालविधानात् न स्वकाले पृथगनूयाजानामनुष्ठानं, न वा सवनीयविकृतिषु अनुयाजाभावः, किंतु कालार्थः संयोग इति। **सूत्रार्थस्तु—** कर्मानुत्पत्तिपरे आग्निमारुतादिवाक्ये काल

एव स्यात्, अनूयाजानां प्रयोजनान्तरसंबन्धिनामाग्निमारुतार्थतया विध्ययोगादिति ।

**वि**—'किमाग्निमारुतादूर्ध्वमनुयाजैश्चरेदिति । अङ्गं कालोऽथवा, ऽङ्गं स्यादतिपारार्थ्यमन्यथा ॥, पुराऽऽग्निमारुतस्यास्य ज्ञाता सोमार्थता तथा । अनुयाजाश्च पश्वर्थाः संयोगः कालसिद्धये ॥'

**के**— ज्योतिष्टोमे सवनीयपश्वर्थानामनूयाजानां आग्निमारुतशस्त्रोत्तरत्वं विहितं, तत्रायं विचारः ।

**भाट्ट**—सोमे 'प्रहृत्य परिधीन् हारियोजनं जुहोति' 'आग्निमारुतादूर्ध्वमनूयाजैश्चरन्ति' इति श्रुतम् । तत्र प्रहरणं तावत् द्वितीयया परिधिसंस्कारकं, परिधयश्च यद्यपि न सोमयागाङ्गं, तथापि तदङ्गसवनीयाद्यङ्गत्वेन प्राप्ता एवेति तेषां फलवत्त्वम् । अतश्च हारियोजनस्यापि यद्यपि नेदमुत्पत्तिवाक्यं, तथापि तदुत्पत्तिवाक्ये फलाश्रवणात् तस्य परिधिप्रहरणाङ्गत्वम् । यद्यपि चायं सोमयागाभ्यास एव, तथापि एतदभ्यासस्य परिधिप्रहरणाङ्गत्वं अभ्यासान्तराणां स्वर्गाद्यर्थत्वेऽपि उद्गात्रपच्छेदनिमित्तपुनःप्रयोगस्येव न विरुध्यते । एवं द्वितीयवाक्ये अनूयाजा यद्यपि न सोमयागे प्रकृताः, तथापि तदङ्गसवनीयाद्यङ्गत्वेन सन्त्येव फलवन्तः । आग्निमारुतशस्त्रस्य तु यावत् प्रकरणात् क्रत्वङ्गत्वं कल्प्यते, तावत् वाक्येनैवानूयाजाङ्गत्वम् । न चात्र वैमृधवत् पदान्तरकल्पनाऽपि, अङ्गभूतकालविशेषणत्वेनैवाङ्गत्वोपपत्तेः । **न च** वैमृधवदस्यानुत्पत्तिवाक्यत्वात्, उत्पत्तिवाक्ये च फलापेक्षायां प्रकरणात् क्रत्वङ्गत्वकल्पनेति मूलोक्तं **युक्तं**, उत्पत्तिवाक्ये तदपेक्षायामपि इष्टसामान्यस्य भाव्यत्वमङ्गीकृत्य वाक्यान्तरेण विनियोगोपपत्तौ दुर्बलप्रमाणेन अङ्गत्वकल्पनाऽनुपपत्तेः । **इति प्राप्ते**, हारियोजनस्य तावत् ज्योतिष्टोमत्वेनैव स्वर्गादिरूपस्य फलस्य क्लृप्तत्वात् न वैमृधन्यायेन पदान्तरकल्पनया प्रहरणाङ्गत्वे प्रमाणमस्ति । आग्निमारुतस्य तु यद्यपि न विशिष्य वाक्येन क्रत्वङ्गत्वं, तथापि 'द्वादशशस्त्रोऽग्निष्टोमः' इत्याद्यनन्यथासिद्धलिङ्गोपष्टब्धप्रकरणवशेनैव क्रत्वङ्गत्वसंभवे वाक्येनाङ्गत्वकल्पनाऽयोगः । वस्तुतस्तु प्राप्तानूयाजोद्देशेन ऊर्ध्वत्वस्य आग्निमारुतस्य च विधौ वाक्यभेदापत्तेः, परस्परान्वयित्ववादिनां प्राचामपि विशेषणविधिकल्पनागौरवापत्तेः नानेन वाक्येन आग्निमारुतस्यानूयाजाङ्गत्वेन विधानम् । अत एव 'आग्निमारुतादूर्ध्वं' इत्यत्र पदद्वयेन लक्षणया तत्प्रतियोगिकोर्ध्वकालः एवानूयाजोद्देशेन विधीयते । 'दर्वीपूर्णेनाभ्यानिहूय' इत्यादौ तु तृतीयान्तस्य हुत्वा इत्यत्रैवान्वयान्न लक्षणेति वदन् वस्तुतस्तु न प्रकृतेऽपि लक्षणा, 'तां चतुर्भिः' इतिवत् विशिष्टभावनाबोधेऽपि ऊर्ध्वत्वमात्रविधिफलकतया विधेयानेकत्वाभावात् । **प्रयोजनं** पूर्वपक्षे सवनीयविकारे सोमयागानङ्गे हारियोजनाग्निमारुतयोः करणम् । सिद्धान्ते नेति । ४।३।१२.

**मण्डन**—' परिध्युक्तिः स्वकालार्था । ' १५.

**शंकर**—' कालः स्यादाग्निमारुते । ' १५.

* अनुयाजानां आतिदेशिकानां सांग्रहणेष्टौ उपदिष्टैः आमनहोमैः समुच्चयः । **भा.** १०।४।४७, * अनुयाजानां उत्कर्षे अनुयाजादिकाण्डस्य उत्कर्षः । ५।१।१२। २३–२४. * अनूयाजानां सवनीयपश्वर्थानामेव आग्निमारुतशस्त्रोत्तरकालविधानात् न स्वकाले पृथगनुष्ठानं, न वा सवनीयविकृतिषु अनूयाजाभावः । **सोम.** ४।३।१५. * **अनूयाजेषु** अनवानत्वविधानं उत्तमेऽनूयाजे नोत्संहर्तव्यं त्रितयसाधारणत्वात् । **संकर्ष.** ४।३।१५.

**अनुयाजेषु एकादशसु चत्वारो बर्हिषो विकाराः, चत्वारो नराशंसस्य, नवम एकादशश्च स्विष्टकृतः ॥**

' एकादशानूयाजान् यजति ' इति प्रयोगगामिनी संख्येत्युक्तम् । तेष्वेकादशसु प्रत्येकं प्राकृतत्रितयधर्माणां विकल्पेन प्राप्तिः, आग्नेयविकारे तथा दर्शनात् । **इति प्राप्ते**, ' सम स्याद् ' इतिन्यायेन ( १०।३।१३। ५३ ) विभज्य प्रकृतिविकारभावः । **गणितशास्त्रे** हि समविभागाभावे सैकीकृत्य निरेकीकृत्य वा यथोपपत्ति विभाग उक्तः, तद्वदत्र निरेकपक्षेऽपि समं त्रेधा विभागासंभवात् सैकीकरणेन चतुश्चतुर्धा विभागे चत्वारश्चत्वारो बर्हिर्नराशंसयोर्विकाराः, अवशिष्टाः स्विष्टकृतः इति तत्तदनुमन्त्रणमन्त्राणामेव तत्रतत्रातिदेशः । **संकर्ष.** २।३।४.

**अनुयाजेषु 'देवान् यज' इति प्रैषः त्रितयसाधारण एव ॥**

अनुयाजेषु 'देवान् यज' इति प्रैष आम्नातः, स च बर्हिर्यागविषयक एव । नराशंसस्विष्टकृतोः 'यज यज' इति प्रैषान्तराम्नानात् । बहुवचनं त्वविवक्षितार्थम् । उपरवमन्त्रेषु तथा दर्शनात् । सर्वार्थत्वे संनिपातिनोः प्रैषयोः समुच्चयायोगेन विकल्पापत्तेः । इति प्राप्ते, त्रितयसाधारण एवायं प्रैषः । उपरवमन्त्राणां करणत्वेन प्रत्युपरवमावृत्तेः एकैकस्मिन्नुपरवे बहुत्वासंभवेन अविवक्षितार्थकत्वेऽपि प्रकृते संभवतो बहुवचनस्य तदयोगाल्लिङ्गेन क्रमबाधात् । तृणारणिमणिन्यायेन संनिपातिनामपि समुच्चयस्याविरोधात् । 'आवह देवान् यजमानाय' इति सामान्येनाभिधाय 'अग्निमग्न आवह' इत्यादिविशेषाभिधानमित्यस्य षोडशे वक्ष्यमाणत्वात् । अत एव श्रुत्यन्तरं 'देवान् यजेत्युक्त्वाऽऽह, छन्दांसि वै देवाः, छन्दांस्येव तद्यजति, यद्बर्हिर्यजति गायत्रीं तद्यजति, यन्नराशंसं त्रिष्टुभं तत्, यदग्निं स्विष्टकृतं जगतीं तत्' इत्युपपद्यते । तेन 'अपबर्हिषावनूयाजौ यजति' इत्यवभृथेष्टौ बर्हिरनूयाजाभावेन 'देवौ यजयज' इत्यूहसमुच्चयाभ्यां नराशंसे प्रैषः फलति । **संकर्ष.** २।३।३.

* अनुयाजेषु येयजामहस्य निषेधः पर्युदासेन । 'नानुयाजेषु येयजामहं करोति' 'यजतिषु येयजामहं करोति' इत्युभयोरेकवाक्यतया 'अनुयाजव्यतिरिक्तेषु यजतिषु येयजामहः कर्तव्यः' इति पर्युदासेनानुष्ठानमिति । **वि.** १०।८।१.

**अनुयाजेषु सर्वेष्वेवानवानत्वं, नोत्तमे एव ॥**

अनुयाजान् प्रकृत्य 'अनवानं यजति' इति श्रुतम् । शाखान्तरे च 'उत्तमेनावान्यात्' इति श्रूयते । तत्र अनुयाजक्रमसामान्येन प्राप्तस्य अनवानस्य उत्तमे उपसंहारः । इति प्राप्ते, उत्तमेनेतिवाक्यस्य अनुवादकत्वेन विशेषविधित्वाभावात् नोपसंहारकत्वम् । सूत्रेऽपि अनुवादपदं अनुवर्तयितव्यं इति **भाष्यकारः** । बर्हिर्नराशसयाज्ययोः अल्पाक्षरत्वेन तावत् मध्ये अवाननस्य कादाचित्कत्वेन प्राप्तौ अनवानोच्चारणं नियम्यते । स्विष्टकृदनुयाजयाज्यायास्तु अतिदीर्घत्वात् मध्ये अवाननं नित्यमेव प्रसक्तं, अतस्तस्य प्रतिषेधः । तेन अनयोर्भिन्नविषयत्वात् विधिप्रतिषेधरूपत्वाच्च नैकेन अन्यस्योपसंहारः । एवं सत्यपि प्राणाभ्यासशालिनः दीर्घयाज्यायामपि कदाचित् अवाननस्य अप्राप्तिरप्यस्ति इत्येतावन्मात्रेण पाक्षिकीं प्राप्तिमादाय 'परिधौ पशुं नियुञ्जीत' इति विधेरिव नियमविधित्वं तृतीयानूयाजांशेऽपि संभवत् न निरसितुं शक्यम् । अत एव 'सकृदवान्यात् एवमप्यनवानं' इति न्यायसिद्धस्यैव गौणानवानस्य कण्ठतः अनुवादेन 'अनवानं यजति' इति विधिगतानवानपदं गौणमुख्यसाधारण्येन व्याचक्षाणा श्रुतिः अनूयाजत्रयविषयकत्वं विधेरनुमन्यते । अतः तेनैव सिद्धौ, प्रतिषेधः अनुवादत्वात् नोपसंहारक्षमः इत्याशयः । **संकर्ष.** ४।३।१५.

* अनुयाजदेवताप्रकाशनार्थं चातुर्मास्येषु प्राकृतावाहनमन्त्रस्य अविकारेणैव प्रयोगः । **भा.** १०।४।२५। ५०-५९.

* **अनुयाजन्यायेन** ( संकर्ष. २।३।४ ) दशमानूयाजस्य स्विष्टकृद्विकारत्वे प्राप्ते, देवतासामान्यस्य उत्पत्तिसमसमयावगतस्य प्रयोगकालावगतक्रमात् बलवत्त्वेन प्रथमविकारत्वमेव । **संकर्ष.** २।३।५. * अनुयाजहवीरूपपृषदाज्यधारणार्थं, प्रयाजहवीरूपाज्यधारणार्थं च पात्रभेदः कर्तव्यः अग्नीषोमीये पशौ । **भा.** ५।२।८।१६. *दर्शपूर्णमासयोः उत्तमया वाचा **अनुयाजादि** । (अनुयाजानारभ्य उच्चैः स्वरेण अनुष्ठानम् ) । **वा.** ३।३।२।९ पृ. ८११. * **अनुयाजानुत्कर्षप्रयाजान्तापकर्षाधिकरणम्** । तदादितदन्तन्यायः इति बिन्दौ द्रष्टव्यम् । **भा.** ५।१।१२।२३-२४, ***अनुयाजोत्कर्षेण** उत्कृष्टे सूक्तवाके सवनीयदेवतानां उत्कर्ष एव न्याय्यः । ११।३।१६।५३-५४, *चातुर्मास्येषु 'पृषदाज्येनानुयाजान् यजति' इति पृषत्तागुणो विधीयमानः **प्रत्यनुयाजं** भिद्यते । १०।६।१७।६४, * पशौ 'पृषदाज्येनानुयाजान् यजति' इति विधीयमानः पृषत्तागुणः प्रत्यनुयाजं भिद्यते । १०।६।१७।६४. * पशौ **प्रयाजानुयाजाः** कालगुणविकृताः । **टुप्.** १२।१।१।२. * दर्शपूर्णमासयोः औपभृताज्यस्य **प्रयाजानुयाजार्थता** । **भा.** ४।१।१६।४२-४५.

* **अनुरञ्जकभेदः** अनुरञ्ज्यभेदमाक्षिपति, भावनाया धात्वर्थावच्छेदं विना भावनाऽन्तरात् व्यावृत्त्यप्रतीतेः एकभावनाऽवच्छेदकत्वविरोधप्रसङ्गेन एकस्यां भावनायां अनेकानुरञ्जकसमावेशायोगात् । **सु.** पृ. ७०८.

* **अनुरूपो नाम तृचो** ज्योतिष्टोमे बहिष्पवमाने ' दविद्युतत्या रुचा० ' इत्यादिर्द्वितीयस्तृचः । प्रथमस्तु प्रतिपद् नाम तृतीयस्तु तृचः पर्यासो नाम । **वि.** ५।३।४.

* **'अनुवचनानि** हौत्राणि' इति याज्ञिकसमाख्या । तत्र व्यस्तानि अनुवचनानि हौत्राणि, समस्तं प्रैषानुवचनं तु मैत्रावरुणम् । **वि.** ३।७।२१. ***अनुवचनानां** सर्वेषां हौत्रसमाख्यानम् । **वा.** ३।७।२१।४३. * **अनुवचनेषु** प्रैषान्तेष्वेव मैत्रावरुणस्य कर्तृता । **भा.** ३।७। २१।४३–४५, * अनुवचनेषु मैत्रावरुणो होतुर्विकारः । १०।७।६।१९, * **अनुवचनार्थः** दक्षिणहविर्धानदेशः । ३।७।७।१५–१७.

* **अनुवषट्कारः** । सोमस्य होमं यदा अध्वर्युः करोति तदा होता याज्यां पठति याज्यान्ते वषट्कार उच्यते । ततः सद्य एव होता ' सोमस्याग्ने वीहि ' इति मन्त्रं पठति अध्वर्युश्च तदा पुनरपि अवशिष्टं सोमं यजति । सोऽयं मन्त्रः अनुवषट्कारो नाम । **के.** * **अनुवषट्कारस्य** देवः अग्निः । **वि.** ३।२।१६.

**अनुवषट्कारस्य द्रव्यं पूर्वेष्टशेष एव ॥**

सोऽयमनुवषट्कारो द्रोणकलशस्थद्रव्येण यष्टव्यः, तस्य ध्रौवाज्यवत् सर्वार्थत्वात् द्रोणकलशं प्रकृत्य ' एषा वा एतेषां योनिः ' इति श्रुतेः, ' न सर्वं जुहोति ' इति वचनलब्धस्य सोमयागद्रव्यशेषस्य भक्षणार्थतयाऽप्युपपत्तेः । **इति प्राप्ते,** भक्षवदनुवषट्कारस्यापि पूर्वेष्टशेष एव द्रव्यम् । ' संस्था वा एषा यदनुवषट्कारः संस्था भक्षः ' इति पूर्वद्रव्यसमापकत्वश्रुत्यविशेषात् 'स उ एव सोमस्य स्विष्टकृद्भागः ' इति श्रुत्या अनुयागस्य स्विष्टकृद्भागत्वेन प्रतिपत्तित्वावश्यंभावाच्च । एतेन सावित्रे ' नानुवषट्करोति न भक्षयति ' इत्यपि लिङ्गमुपपन्नम् । **संकर्ष.** १।१।२.

* अनुवषट्कारस्य द्विदेवत्यग्रहणादिषु निषेधः । **संकर्ष.** १।१।३.

**अनुवषट्कारस्य प्रतिशेषमावृत्तिः न तु पूर्वयागेन तन्त्रम् ॥** तस्य पूर्ववदेकद्रव्यकत्वेनानन्तरानि-ताग्निस्विष्टकृद्देवताकतया दार्शपौर्णमासिकस्विष्टकृद्देव तन्त्रेणानुष्ठानम् इति । **प्राप्ते,** अनुशब्देन तत्तदनन्तरोत्तर-कालविधानेन तस्य चाव्यवहितस्यैव स्वरसतः प्रतीतेरावृत्तिः । न च पृषदाज्यवत् पात्रान्तरे स्थापनं, एकदेश-द्रव्यकत्वेनाप्रयोजकत्वात् । एतेन द्विदेवत्यग्रहणादिषु अनुवषट्कारनिषेधोऽप्युपपन्नः । एवमेव भक्षणानन्त्यावृत्तिरुपपादनीया । **संकर्ष.** १।१।३.

**अनुवषट्कारे आश्रावणादीनां प्रतिषेधः ॥**

अनुवषट्कारयागेऽपि ' यज्ञेयज्ञेऽन्यायत्तः ' इति वीप्सया आश्रावणादयो भवेयुः । यस्तु शाखान्तरे ' नाश्रावयति ' इति प्रतिषेधः, सोऽपि च प्राप्तिपूर्वक एव । **इति प्राप्ते,** अनुशब्दश्रुत्यैव विप्रकर्षाभावोक्तेर्निवृत्तानामाश्रावणादीनामनुवाद एव प्रतिषेधः । **संकर्ष.** २।३।१५.

* अनुवषट्कारे ' सोमस्याग्ने वीहि ' इति याज्यामन्त्रः । **वि.** ३।२।१६. * ' वाजिनस्य अग्ने वीहि ' **इत्यनुवषट्करोति** । **भा.** ८।२।१।२, * ' सुरायाः वीहि ' इत्यनुवषट्करोति सौत्रामण्याम् । ८।२।१।२.

**अनुवषट्कारयागः पूर्ववत्तशेषादेव कार्यः, सकृदवदानादि न कार्यम् ॥** अनुवषट्कारस्य सौमिकानुवषट्कारवत् स्विष्टकृद्विकारत्वात् प्रकृतितः प्राप्तं सकृदवदानादि कर्तव्यम् । **इति प्राप्ते,** अनुपदेन अव्यवहितपूर्वत्वस्य प्रतीतेः वषट्कारं अनु अन्यो वषट्कारः इत्यर्थस्य अवदानादिना विप्रकर्षे बाधापत्तेः, अवदानादिविशिष्टक्रमिकयागद्वये द्वितीयस्य अनुवषट्कारः इतिव्यवहाराभावात् पूर्ववत्तशेषादेव यागः कार्यः । अत एव ' त्रयाणां हविषां स्विष्टकृते न समवद्यति ' इति न्यायप्राप्तानुवादः । त्रयाणां इत्यस्य सोम–वाजिन–घर्माणामित्यर्थः, तेषामेवोपक्रमात् । **संकर्ष.** १।४।३.

* अनुवषट्कारयागः ' सोमस्याग्ने वीहीत्यनुयजति ' इति वाक्यान्तरविहितत्वात् कर्मान्तरं सोमयागाङ्गत्वा

विधीयते इति संकर्षकाण्डे प्रथमाधिकरणे वक्ष्यते । **कु.** ३।२।१६।३५.

**अनुवषट्कारयागविधिः ॥**

ज्योतिष्टोमे 'सोमस्याग्ने वीहीत्यनुयजति' इति श्रुते वाक्ये सोमयागोद्देशेन मन्त्रविधिः । इतिशब्देन करणत्वस्य अनुशब्देन पश्चाद्भाविनः कार्यस्य चोक्तिः । यागोत्तरमनुमन्त्रणं वा विधीयते। **इति प्राप्ते,** यजिश्रुत्योपस्थितस्य यागान्तरस्यैव सोमयागोत्तरकालविशिष्टस्य विधिः । 'तस्मादनुवषट्कृत्यं देवतानां तृप्त्यै' इति तृप्त्यर्थतावादस्यान्यथाऽनुपपत्तेः । **संकर्ष.** १।१।१.

**अनुवषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥**

'सोमयागे सोमस्याग्ने वीहि इति अनुवषट्कृते जुहोति' इति विहितम् । तस्मात् सोमभक्षमन्त्रे अनुवषट्कारदेवतायाः अग्नेरुपलक्षणं कर्तव्यं इति उत्सूत्रे प्राप्ते सिद्धान्तमाह । 'अतुल्यत्वात्तु नैवं स्यात्' इति सूत्रात् 'न' इत्यनुवर्तते । अनुवषट्कारश्च अनुवषट्कारदेवता अग्निरपि सोमभक्षमन्त्रे नोपलक्षणीयः । वैकृतदेवतायाः प्राकृतप्रधानकार्यापत्त्यभावात् । कर्तृवत् यथा अध्वर्युणा पाने क्रियमाणे पूर्वं होत्रा पीतोऽपि न होतृपीतस्य इति पूर्वपानकर्ता उपलक्ष्यते तद्वत् । **के.**

**अनुवषट्काराधिकरणम्** । अनुवषट्कारदेवताया अनुपलक्षणं सोमभक्षमन्त्रे ॥

**वषट्कारश्च कर्तृवत् । ३।२।१६।३८ ॥**

**भाष्यं** — अस्त्यनुवषट्कारदेवता 'सोमस्याग्ने वीहीत्यनुवषट् करोति' इति । तत्र संदेहः किमनुवषट्कारदेवतोपलक्षयितव्या न वेति । किं प्राप्तम् ? उपलक्षयितव्येति । न तत्र पारार्थ्ये किंचित् पूर्ववदुपलक्ष्यते । तस्मादुपलक्षयितव्येति । **एवं प्राप्ते ब्रूमः** । अनुवषट्कारदेवता नोपलक्षयितव्या । कर्तृवत् । यथा कर्ता नोपलक्ष्यते होतृपीतस्याध्वर्युपीतस्येति, एवमेवानुवषट्कारदेवताऽपि । नहि सा प्रकृतौ उपलक्षिता । यच्च नाम प्रकृतौ कृतं, तदिह करणीयम् । तस्मान्नोपलक्षयितव्येति ।

**वा**—अनुवषट्कारदेवतायाश्चोदनया मन्त्रवर्णेन च देवतात्वमैकान्तिकम् । तस्मादुपलक्षणीया इति । **एवं प्राप्तेऽभिधीयते । 'यथा प्रयाजानः पाता पूर्वपात्रु**पलक्षणम् । **अप्राकृतं न कुर्वीत तथैनामपि देवताम् ॥'** नह्येषा प्रकृतावुपलक्षिता । न चेह प्राकृतकार्यापन्ना । तस्मान्नोपलक्षयितव्येति ।

**सोम** — पूर्ववैपरीत्येण **संगतिः** । 'सोमस्याग्ने वीहीत्यनुयजति' इत्यनेन विहितस्यानुवषट्कारयागस्य देवताऽपेक्षायां मन्त्रवर्णतः अग्नेर्देवतात्वम् । अत्र **केचित्** अनुवषट्कारे अग्नेर्देवतात्वेनोपलक्षणयोग्यतामात्रेण पूर्वपक्षकरणं मन्दमिति मन्वाना अनुवषट्कारयागः किमर्थकर्म, उत गुणकर्म इति तदर्थचिन्तां कल्पयित्वा अर्थकर्मत्वात् प्रकृतिकार्यापत्तिः इति पूर्वपक्षं कृत्वा गुणकर्मत्वेन प्राकृतकार्यापत्त्यभावं सिद्धान्तयन्ति । **तन्न** । अर्थकर्मत्वेऽपि अङ्गत्वाविशेषेण तद्देवतायाः प्रधानदेवताकार्यापत्त्यसंभवात् । **न च** अर्थकर्मत्वपक्षे प्रधानयागनिर्वृत्तिलक्षणकार्यापत्त्यभावेऽपि प्रधानदेवतावत् अनुवषट्कारदेवताया अपि अनुवषट्कारयागे गुणत्वेन निर्वर्तकत्वमस्ति इति तन्मात्रेण कार्यापत्तिः संभवति, प्रतिपत्तित्वपक्षे तु प्रतिपाद्यस्य प्राधान्येन प्रधानदेवतावैलक्षण्यान्न कार्यापत्तिरिति **वाच्यम्** । प्रतिपाद्यस्य प्रधानत्वेऽपि वस्तुतो निर्वर्तकत्वमस्ति इति तन्मात्रेण तत्रापि कार्यापत्तिसंभवात् । वक्ष्यते च नवमे अभ्युदयेष्टौ दधिशृतयोरार्थिकप्रणीताकार्यापत्तिमात्रेण प्रणीताधर्माणामूहेन प्राप्तिः। तस्मादर्थकर्मत्वं पूर्वपक्षे, गुणकर्मत्वं सिद्धान्ते च प्रयोजकमिति वृथा तदर्थचिन्तान्तरकल्पनाक्लेशः । **सूत्रार्थस्तु**— अनुवषट्—कारदेवताऽपि नोपलक्षणीया होत्रध्वर्य्वादिकर्तृवदिति ।

**वि**— 'सोमस्याग्न इति प्रोक्ताऽनुवषट्कारदेवता । लक्ष्या न वा, देवतात्वाल्लक्ष्या त्रिंशद्विलक्षणा ॥, प्रकृतौ विद्यमानोऽग्निरनुद्देशादलक्षितः । उद्देश्येन्द्रो लक्षितोऽतो विकृतावपि तत्तथा ॥' तस्मादग्निर्नोपलक्ष्यः ।

**भाट्ट**— अनुवषट्कारयागदेवताया अग्नेर्देवतात्वस्य निःसंदिग्धत्वादुपलक्षणत्वं मन्यन्ते । प्रकृतौ तु असौ विद्यमानाऽपि नोपलक्षिता अनुवषट्कारयागस्य सोमयागात् कर्मान्तररूपस्य पूर्वयागीयसोमप्रतिपत्तिभूतस्य कृत्स्नविधानत्वेनातिदेशाकल्पकत्वात्, उपदेशेन कथंचिद्भक्षणप्राप्तावपि 'व्रीहीणां मेध' इत्यादिवदैन्द्रमन्त्रस्य

प्राप्त्यनुपपत्तेश्च । अतश्च विकृतावपि प्रधानदेवतैव तत्कार्यापन्ना उपलक्षणीया, नानुवषट्कारदेवता ।

**मण्डन**— ' सा नोपलक्ष्या तु वषट्कृतेज्या । '

**शंकर**— ' देवश्चानुवषट्कारे । ' नोह्येत.

* **अनुवाकवत्**— यो ह्युच्यते ' त्रिरनुवाकः पठ्यतां ' इति, स आदितः आरभ्य परिसमाप्य पुनरादितः आरभते इति दण्डकलितवत् आवृत्तिः । **भा.** ५।३।२।३.

* **अनुवाक्या** पुरोऽनुवाक्या अनुवचनं इति पर्यायाः । अध्वर्युर्यदा हविर्जुह्वां गृह्णाति तदा ' अनुब्रूहि ' इति प्रैषं ददाति, तदा होता कश्चिन्मैत्रावरुणो वा मन्त्रं मन्त्रौ वा पठति, स तौ वा मन्त्रौ अनुवाक्या नाम. । **के.** * अनुवाक्या उपादेयत्वेन चोद्यते तत्र एकत्वं विवक्षितम् । **भा.** ३।१।१३।२३ पृ. ७४०, * अनुवाक्या दर्शपूर्णमासयोः आग्नेये पुरोडाशे ' अग्निर्मूर्धा दिवः' इति । ८।१।१६।३१, * अनुवाक्या देवतोपलक्षणार्था । ५।१।२।२, * अनुवाक्या सौर्ये चरौ ' उदु त्यं जातवेदसं ' इति । ८।१।१६।३१. ' द्वे तावन्नानुवाक्ये स्तः कर्मैकत्वे कथं चन ।' **वा.** ३।१।१३।२३ पृ.७३९, * 'वार्त्रघ्नी पौर्णमास्यामनूच्येते वृधन्वती अमावास्यायां' आज्यभागयोर्याज्यानुवाक्ये । २।२।३।३ पृ. ४७७, वार्त्रघ्नी पौर्णमासीस्थयोराज्यभागयोः, वृधन्वती अमावास्यास्थयोः । पृ. ४७८, ('अग्निर्वृत्राणि जङ्घनत् ' इति वार्त्रघ्नी । 'अग्निः प्रत्नेन जन्मना ' इति वृधन्वती । ) * नहि एकस्य कर्मणः अनेकया देवतया अनेकया (च) **अनुवाक्यया** कार्यमस्ति । २।२।३।३ पृ. ४७९. * **अनुवाक्याभ्यां** मिथः सह द्वाभ्यां न प्रधानस्य कार्यमस्ति । नैकस्य यागस्य द्वाभ्यामनुवाक्याभ्यां प्रयोजनम् । **भा.** ३।१।१३।२३. * **अनुवाक्यायाः** याज्यायाश्च चोदितदेवतास्मरणसंस्कारः दृष्टं प्रयोजनम् । **वि.** १०।४।२२, * काम्ययाज्यानुवाक्यानां काम्ययागाङ्गता । ३।२।७.

**अनुवाक्यासु याज्यासु च गायत्रीत्वपुरस्ताल्लक्ष्मत्वादिधर्माणां विकृतौ यथायथं समुच्चयः॥**

दर्शपूर्णमासप्रकरणे ' गायत्री पुरोनुवाक्या भवति, त्रिष्टुप् याज्या', 'त्रिपदा पुरोऽनुवाक्या भवति, चतुष्पदा याज्या ' ' पुरस्ताल्लक्ष्मा पुरोनुवाक्या भवति, उपरिष्टाल्लक्ष्मा याज्या । ' 'मूर्धन्वती पुरोनुवाक्या भवति, नियुत्वती याज्या ' इत्येवंजातीयकानि बहूनि वाक्यानि श्रूयन्ते । ' अग्निर्मूर्धा ' इत्येषा ऋक् त्रिपदा गायत्री । प्रथमपादे एव देवतापदवती मूर्धपदवती च । ' भुवो यज्ञस्य ' इति तु चतुष्पदा त्रिष्टुप् उत्तरार्धे देवतापदवती नियुत्पदवती च । एवमन्या अपि ऋचः यथासंभवं वर्तन्ते । तेन एनयोरेव क्रमप्रकरणाभ्यां प्राप्ताङ्गताकयोर्ऋचोः स्तावकानि नित्यानुवादरूपाणि वाक्यानि इमानि । **इति प्राप्ते**, क्रमादिना तत्तद्व्यक्तित्वस्याङ्गताऽवच्छेदकत्वेन बोधितस्य बाधेन गायत्रीत्वादिधर्माणां अङ्गताऽवच्छेदकत्वबोधनेन सार्थक्यसंभवे न केवलं नित्यानुवादः । तेन भावनासंस्पर्शेन विवक्षिततया आर्थिकत्वाभावेन चोदकतः तेषामपि अतिदेशे यस्यां विकृतौ एतद्विरुद्धा ऋच आम्नाताः, तत्र उपदेशेनैव अतिदेशबाधः । यास्तु अनाम्नातयाज्यानुवाक्याका विकृतयः, तत्र सति संभवे आनीयमाना ऋचः चोदकातिदिष्टधर्मका एव आनेयाः इति सिध्यति, तेन धर्माणां विकृतौ संभवत्समुच्चयो यथायथं बोध्यः । **संकर्ष.** ४।३।११.

**अनुवाक्यातः पूर्वं वाग्व्यवहारवादः अनुवाक्योत्तरं वाग्यमनस्थैर्यार्थः ॥**

' याज्यां चानुवाक्यां चान्तरा न व्यववदेत् यद्व्यववदेत् यज्ञं विच्छिन्द्यात् पुरोऽनूच्यं यज्ञस्य संतत्यै ' इति श्रुतौ पुरोऽनुवाक्यातः पूर्वं वाग्व्यवहारो यज्ञसंततिफलको नियम्यते । **इति प्राप्ते**, उत्तरकाले वाग्यमनस्य विहितत्वात् तत्प्रागभावस्य तत्स्थैर्यार्थोऽयं वादः । **संकर्ष.** ४।३।८.

* **अनुवाक्याद्वयं** पित्र्येष्टौ ' द्वेद्वे अनुवाक्ये ' इति विधिबलात् । **सु.** पृ. १०६४. * **अनुवाक्याद्वित्वस्य** आज्यभागयोर्निवेशः, न प्रधाने । आज्यभागयोरपि एकैकस्मिन् एकैकैव । ' वार्त्रघ्नी पौर्णमास्यामनूच्येते, वृधन्वती अमावास्यायाम् ' । **भा.** ३।१।१३।२३. * **अनुवाक्यापाठः** आसीनेन कार्यः, याज्यापाठस्तु तिष्ठता कार्यः । ' तिष्ठन् याज्यामन्वाह, आसीनः पुरोऽनुवाक्यां'

इति स्थानासनगुणौ विधीयेयाताम् । वि. १०।४।२२. * याज्यानुवाक्यायुगलद्वयस्य ऐन्द्राबार्हस्पत्ये कर्मणि विकल्पः । 'इदं वामास्ये हविः–प्रियमिन्द्राबृहस्पती इत्येकं' 'अयं वां परिपिच्यते—सोम इन्द्राबृहस्पती इत्यपरम्' । भा. १२।४।२।३–४. * अनुवाक्याधिकरणम् । ३।१।१३।२३. वारणाधिकरणापोदितस्य अङ्गावतारस्य अनुवाक्याधिकरणेन उज्जीवनात् वाक्यविरोधः क्रमस्य परिहृतः । ('वार्त्रघ्नी–अधिकरणं' इत्यत्र द्रष्टव्यम् । ) सु. पृ. १०७२. * अनुवाक्योत्तरं याज्यापर्यन्तं होतुर्वाग्यमनम् । 'याज्यां चानुवाक्यां चान्तरा न व्यप( व )वदेत्' । संकर्ष. ४।३।९.

* अनुवातं दूरादुपलभ्यते शब्दः । भा. १।१। ६।१३ पृ. ८०.

* अनुवादः अप्रवृत्तिविशेषकरः अनर्थकः स्यात् । भा. ७।३।३।७, ८।४।५।२२, १२।२।१५।६४. * अनुवादः असत्यां गतौ आश्रीयते । वा. ११।२।१५।६४. * अनुवादः ज्ञातस्य कथनं शब्दोपाधिको धर्मः । वि. १।४।६. * अनुवादः ज्ञानपूर्वकः पश्चात् वादः । कणिका. पृ. २७२. * अनुवादः दर्शपूर्णमासयोः असोमयाजिनः पुरोडाशद्वयश्रवणम् । भा. १०।८।१४।३५–४६, * अनुवादः नित्यप्राप्तस्य यथा 'नान्तरिक्षे न दिव्यग्निश्चेतव्यः' इति । न सत्यां गतौ नित्यानुवादः । १०।७। १२।३९, ४०, * अनुवादः यज्ञायुधवाक्यं दर्शपूर्णमासयोः । ४।१।४।७–१०. * अनुवादः यथाविज्ञातस्य भवति । वा. १।२।३।२९ पृ. १४१. * अनुवादः 'ये पुरोदञ्चो दर्भास्तान् दक्षिणाग्रांस्तृणीयात्' इति तच्छब्दोपेक्षितोद्देश्यविशेषसमर्पकः प्रेताग्निहोत्रे । भाट्ट. ३।४।४–१. * अनुवादः लक्षणया उपपद्यते । विदितस्य स भवति । भा. ११।१।१०।६४, * अनुवादः 'सत्रादुदवसाय पृष्ठशमनीयेन यजेरन्' इति बहुवचनम् । 'अनुवाद एव बहुत्वस्य भवितुमर्हति' । १०।२।१४।४३. * 'अनुवादोऽवधारिते' इत्यस्योदाहरणं 'अग्निर्हिमस्य भेषजं' इति नृसिंहाश्रमैरुक्तं, तन्न । 'वायुर्वै क्षेपिष्ठा देवता' इत्यादेव 'अनुवादोऽवधारिते' इत्यत्रोदाहरणम् । बाल. पृ. ४८, * अनुवादेन विधित्वं बाध्यते । यथा अवभृथे 'अग्नीवरुणौ स्विष्टकृतौ यजति' इत्यत्र यजतिना प्राकृतस्विष्टकृद्यागमेव उद्दिश्य अग्नीवरुणयोर्विधौ एकविशेष्यकस्थानापत्तिरेव, द्वयोः इति विशेषणं प्राप्तमेव अनूद्यते इत्युक्तं दशमे । पृ. १४३. * अनुवादस्य सति संभवे संनिहितगामित्वनियमात् । भाट्ट. ७।१।१ पृ. ३३९. * अनुवादे गौणीवृत्तिर्न दोषाय । संकर्ष. १।४।१८. * अनुवादे प्रमाणान्तरानुसारित्वात् प्रसज्यमानाऽपि लक्षणा न दोषः । सु. पृ. ४१३. * अनुवादे हि लक्षणा न्याय्या, न विधौ । भा. ४।४। ८।१९. * अनुवादकं न 'उपांशुयाजमन्तरा यजति' इति यजतिपदं, किंतु विधायकम् । के. * अनुवादकं विद्वद्वाक्यं 'य एवं विद्वान् पौर्णमासीं यजते' इत्यादि दर्शपूर्णमासयोः । बिन्दु. २।२।३. * अनुवादत्वे संभवति, विशिष्टविधानानुपपत्तेः । वा. ३।५।१०।३१. * अनुवादपक्षे न लक्षणायां दोषः । भा. १।४।१२। २३–५, * अनुवादमात्रमनर्थकम् । ४।२।९।२४, * अनुवादमात्रस्य वक्तारो भवन्ति लोके । यथा–अस्मिन् गृहे ये ब्राह्मणास्ते आनीयन्तां, देवदत्तो यज्ञदत्तो विष्णुमित्र इति । १०।७।८।२४, * अनुवादरूपत्वं सति संभवे न बाधितव्यम् । ( परिभाषा ) १२।४।३।७, * अनुवादवचनं धर्मापेक्षं भविष्यति । यथा–'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा' इति । १०।८।१४।३६. * अनुवादवाक्यानां स्वसमानाधिकरणस्वाव्यवहितपूर्वक्षणवर्तिज्ञानाविषयविषयकत्वरूपागृहीतग्राहित्वेन प्रामाण्यम् । मणि. पृ. ९३. * अनुवादसारूप्यं वै–शब्दसंयोगात् । 'एतानि वै दश यज्ञायुधानि' । वा. ३।१।५।११ पृ. ६७२. * अप्राप्तस्य अनुवादायोगः । सु. पृ. १३८०. * 'तं ( सोमं ) वै दशभिः क्रीणाति' क्रीणात्यनुवादोऽयम् । अनेनार्थवादेन विधिः कस्मान्न विज्ञायेत ? तथापि अनुवादरूपं बोध्यते । तच्च सति संभवे न बाधितव्यम् । भा. १२।४।३।७. * तन्नाम अन्यतः प्राप्तमनूद्यते यत् ताद्रूप्येण प्राप्तं प्रत्यभिज्ञायते । वा. ३।६।७।२१ पृ. १०४६.

* न च यौगपद्येन विध्य**नुवादौ** संभवतः। **भा.** २।१।१।४ पृ. ३८९. * नहि अवश्यं यदेव सर्वत्र प्राप्तं तदेवानुवदितव्यं, सर्वा**नुवादानां** यथासंभवं प्राप्त्यपेक्षत्वात्। **वा.** ३।५।१०।३१ पृ. १००६, * नहि विधिसंभवे समस्तवाक्या**नुवादत्वं** युक्तम्। ३।५।२०।५३ पृ. १०२४. * नित्या**नुवादमात्रं** अनर्थकम्। यथा 'इन्द्रेण देवेन वृष्टं' 'इडान्ता आतिथ्या संतिष्ठते नानुयाजान् यजति' इति। **भा.** ११।१।१।३ पृ. २१०२. * **पुरोवादानुवादयोः** पुरोवादस्य प्राशस्त्यम्। **पराक्रम.** पृ. ४३. * पूर्ववान् **अनुवादो** भवति। **भा.** ३।४।१।३, ७।१।१।२. * 'प्रकृतप्रत्यभिज्ञानं वाक्ये यत्रोपलक्ष्यते। तत्र स्यादनुवादत्वं'। **वा.** २।२।६।१७ पृ. ५१२. * प्रतिषेधः नित्या**नुवादः** असति प्रसङ्गे। **भा.** १।२।१।१८, * प्रयोजनस्याभावात् **नानुवादः**। ३।७।९।२४, * प्राप्ते वचनं न विधिरिति गम्यते। प्राप्तस्या**नुवादो** भवितुमर्हति। ६।३।१३।३१, * यदि अज्ञातः, ततो विधिः। यदि ज्ञातः, ततः **अनुवादः**। १।४।५।८, * वादमात्रं ह्यनर्थकम्। तत्र विधिर्न्याय्यः अपूर्वत्वात्। १०।६।२।३ पृ. १९८५, * विध्य**नुवादयोः** विधिर्ज्यायान्। यत्र तु पदान्तरात् अर्थाद्वा प्राप्तिरवगम्यते अर्थस्य, तत्र प्रमाणान्तरप्रतीतत्वात् शब्द उच्चरन् अनुवादः इत्यवगम्यते। स्वार्थप्रवृत्त्या पुरुषस्य दर्शनमस्ति। नापश्यन् पुरुषः क्रियासु व्यापारं उपगन्तुमुत्सहते इति अर्थप्राप्ते विधिप्रत्ययोऽपि अनुवादः इत्यवगम्यते। १०।६।२।३ पृ. १९८६-८७. * विशिष्टा**नुवादो** न वाक्यं भिनत्ति। **वा.** २।२।१२।२७ पृ. ५५७, * संनिकृष्टा**नुवादा**संभवे च विप्रकृष्टानुवादोऽपि आश्रीयते। यथाप्राप्त्यपेक्षो हि स भवति। ३।४।११९-२, * स नामा**नुवादो** भवति यः अत्यन्तसमानार्थत्वेन अवधार्यते। ३।४।४।१३ पृ. ९११, * 'सर्वत्राख्यातसंबद्धे श्रूयमाणे पदान्तरे। विधिशक्त्युपसंक्रान्ते स्याद्धातोर**नुवादता**॥' यावद्यावत् विधेयान्तरमुपादीयते तावत्तावत् पूर्वत्र अनेकशक्तिकल्पनाभयात् अनुवादत्वाकाङ्क्षा भवति। १।४।२।३ पृ. ३२८. * सर्वदा यत् प्राप्नोति तदनूद्यते। **टुप्.** ४।२।३।२४.

* **अनुवृत्तिः** दवीयःस्थानान्तरस्थस्य अनुसंधानम्। सा च सिंहावलोकित-मण्डूकप्लुति-गङ्गास्रोतोवत् इति त्रिधा। आवृत्त्यनुषङ्गानुवृत्तिसाधारणं लक्षणं श्रुतपदस्यानुसंधानम्। **मणि.** पृ. ७१.

**अनुवृत्तिन्यायः**। अनुवृत्तिः सेवा, अभ्यास इति यावत्। यत्राभ्यासप्राबल्यविवक्षा तत्राऽयं प्रवर्तते। तद्यथा-- 'सिंहो बली द्विरदशूकरमांसभोक्ता संवत्सरेण कुरुते रतिमेकवारम्। पारावतः खरशिलाकणभोजनोऽपि कामीति नित्यमनुवृत्तिरिहापि हेतुः॥' इति। **साहस्री.** ५५३.

* **अनुव्यवसाये** ज्ञानस्य विषयत्वेन हेतुत्वम्। **मणि.** पृ. ३०.

* **अनुश्लोकेन साम्ना** पश्चात् सदसः स्तुवते महाव्रते। १०।८।८।१६.

* **अनुषङ्गः** अच्छिद्रेणेत्यादेः ज्योतिष्टोमदीक्षाप्रकरणे 'चित्पतिस्त्वा पुनातु' इत्यादौ, शेषस्य आकाङ्क्षासत्त्वात्। **वि.** २।१।१७, * अनुषङ्गः अध्याहारात् वरम्। २।१।१६. * अनुषङ्गः अर्थवादः 'यद्धस्तेन कण्डूयेत पामनंभावुकाः प्रजाः स्युः, यत् स्मयेत नग्नंभावुकाः, कृष्णविषाणया कण्डूयते, अपिगृह्य स्मयते' इत्यत्र 'प्रजाः स्युः' इत्यनुषङ्गः। **बाल.** पृ. ५०. * अनुषङ्गः। 'उपसद्भिश्चरित्वा मासमग्निहोत्रं जुहोति, मासं दर्शपूर्णमासाभ्यां यजते' इति। तत्रैतत् स्यात्, इहापि उपसद्भिश्चरित्वा इत्यनुषङ्गात् अग्निहोत्रतुल्यत्वं (दर्शपूर्णमासवाक्येऽपि) तदयुक्तम्। कुतः? '**विना यत्रानुषङ्गेण भवेच्छ्रुतिरनर्थिका। तत्रैव ह्यकृतार्थानामनुषङ्गो न चेह सः॥**' तत्रानुषङ्गो युक्तो यत्र तेन विना न किंचिदुक्तं भवति। यथा अत्रैव 'मासं वैश्वदेवेन' इत्यादिषु यावत् 'यजते' इति नानुषज्यते, तावत् न किंचिदुक्तं इत्यवश्यमनुषक्तव्यम्। इह पुनः दर्शपूर्णमासादिवाक्यानि तावत् स्वपदैरेव निराकाङ्क्षीभूतानि। 'उपसद्भिश्चरित्वा' इत्ययमपि पूर्वत्रैव चरितार्थत्वात् न किंचिदपेक्षते। तत्र न कश्चिदपि हेतुरस्ति,

येन अनुषज्येत । यस्तु वाक्यभेदप्रसक्त्यर्थमेव अनुषङ्गमिच्छेत् कुर्यादपि सः । तत्र तु पुनःपुनः 'चरित्वा' इत्येतस्य विधानात् यावदनुषङ्गं उपसदामनुष्ठानं प्राप्नोति । अनिष्टं चैतत् वेदाभ्यनुज्ञाऽभावात् । अथ अग्निहोत्रस्यैव पुरस्तात् कृताभिः सर्वानुषङ्गार्थसंपादनं इत्युच्येत, तथा सति शब्दोच्चारणमपि एवमेवावस्थितं अग्निहोत्रादीनां पाठक्रमानुरोधेन उपकरिष्यति इति नार्थोऽनुषङ्गेण । **वा.** २।३।११।२४ पृ. ६१४–१५. * अनुषङ्गः ऋङ्मन्त्रेऽप्युक्तो मन्त्राधिकरणे । 'अस्यक् सा त इन्द्र' इत्यृचि उपरितन्यामृचि 'त्वं तू न इन्द्रं' 'तं रयिं दाः' इति श्रूयते तदेवानुषङ्गेण द्रष्टव्यं इति पुरस्तादनुषङ्गोऽयम् । **बाल.** पृ. ६०. * अनुषङ्गः द्विविधः अनुषङ्गः अनुकर्षश्चेति । पूर्वस्य परस्तादनुषङ्गः, परस्य पुरस्तादनुकर्षः । **के.** * **अनुषङ्गः** नेदीयःस्थानान्तरस्थस्य अनुसंधानम् । **मणि** पृ. ७१. *अनुषङ्गः व्यवेतस्य नास्ति । 'सं ते प्राणो वातेन गच्छतां, समङ्गानि यजत्रैः, सं यज्ञपतिराशिषा' अत्र मध्यममन्त्रे बहुवचनान्तेन 'अङ्गानि' इत्यनेन अन्वेतुमयोग्यत्वात् तद्व्यवायेन बुद्धिसांनिध्याभावात् नास्त्यनुषङ्गः । **वि.** २।१।१८. * अनुषङ्गः शेष्याकाङ्क्षया शेषाकाङ्क्षया चेति प्रकारान्तरेण द्विविधः । 'अयाशया रजाशया हराशया' इत्यत्राद्यः । 'चित्पतिस्त्वा पुनात्वच्छिद्रेण पवित्रेण' इत्यादौ द्वितीयः । **के.** * अनुषङ्गः सकृत्पठितस्यापि व्याख्यानवेलायां उच्चारणानुकृतिः । **सु.** पृ. १७९, * अनेकेषु साकाङ्क्षेषु एकस्मिन् शेषान्वयेन निराकाङ्क्षीकृतेऽपि इतरनैराकाङ्क्ष्याय **अनुषङ्गो** युक्तः । पृ. ६९५. ***अनुषङ्गेण** अध्याहारो बाध्यते । यथा 'या ते अग्ने रजाशया' इत्यादौ । **बाल.** पृ. १४४, * अनुषङ्गेण विधिर्द्विविधः । पुरस्तादनुषङ्गः, परस्तादनुषङ्गश्च । तत्र आद्यो यथा 'यदि ब्राह्मणो यजेत बार्हस्पत्यं मध्ये निधाय आहुतिमाहुतिं हुत्वा तमभिघारयेत्, यदि राजन्य ऐन्द्रं, यदि वैश्यो वैश्वदेवम्' इति । अत्र ऐन्द्रं वैश्वदेवं इत्यतः परं 'मध्ये निधाय' इत्यादि अनुषज्यते । द्वितीयो यथा, 'अथैष ज्योतिः' 'अथैष विश्वज्योतिः' 'अथैष सर्वज्योतिः' 'एतेन सहस्रदक्षिणेन यजेत' इति । अत्र 'एतेन' इत्यादि पूर्ववाक्यत्रये अनुषज्यते । पृ. २७. * **अनुषङ्गस्य** सत्यां गतौ अन्याय्यत्वात् । **वा.** १०।३।१५।५७.

**अनुषङ्गाधिकरणम्** । अध्याहारन्यायः । अध्याहारानुषङ्गन्यायः ॥

**अनुषङ्गो वाक्यसमाप्तिः, सर्वेषु तुल्ययोगित्वात् । २।१।१६।४८ ॥**

**भाष्यं**— 'या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीं त्वेषं वचो अपावधीं स्वाहा, या ते अग्ने रजाशया, या ते अग्ने हराशया' इति । अत्र संदेहः तनूर्वर्षिष्ठा इति किं सर्वेषु अनुषक्तव्यं, आहोस्वित् लौकिको वाक्यशेषः कर्तव्य इति । किं प्राप्तं ? 'या ते अग्ने रजाशया' इत्येतस्य तनूर्वर्षिष्ठा इति न वाक्यशेषः । नहि अयं अस्मात् परः प्रयुज्यते । **एवं प्राप्ते ब्रूमः** । अनुषङ्गो वाक्यसमाप्तिः स्यात् तनूर्वर्षिष्ठा इति । यथैव हि अयं 'या ते अग्नेऽयाशया' इत्येतस्यानन्तरं, एवं 'या ते अग्ने रजाशया, या ते अग्ने हराशया' इत्येतयोरपि । हराशया इत्येतस्य व्यवहित इति चेत्, तन्न, समुदायस्य अव्यवधानात् । अव्यवहितो रजाशया इति समुदायः । समुदायेन च वाक्यशेषस्य संबन्धाभावात् समुदायिभ्यां संबन्धः । समुदायिसंबन्धे च न गम्यते विशेषः । तस्मात् सर्वत्रानुषङ्गः । अपि च साकाङ्क्षस्य संनिधौ परस्तात् पुरस्ताद्वा परिपूरणसमर्थः श्रूयमाणो वाक्यशेषो भवति । कियांस्तु कालः संनिधिः इति ? उच्यते । यावति शक्नोति उभौ अपि अपेक्षितुम् । कश्चासौ ? आनन्तर्यं संबन्धिपदव्यवायो वा । तावति हि शक्नोति उभावपि अपेक्षितुम् । संबन्धिपदव्यवाये हि संबन्धादेव पूर्वसंस्कारो नापैति । यत्रापि अपरेण साकाङ्क्षेण व्यवायः, तत्रापि अस्ति संबन्धः । द्वयोरपि हि कार्यं वक्तव्यं इति परः पूर्वमपेक्षते । अनपेक्षमाणे अन्यतरः प्रमादपाठः स्यात् । शक्यते चासौ अपेक्षितुम् । तस्मात् यथैवायं एकस्य संनिधौ, एवमपरस्य । द्वयोरपि असंबद्धैः पदैः अव्यवहितत्वात्, द्वयोरपि आकाङ्क्षावत्त्वात् । एतावच्च वाक्यशेषसंबन्धे कारणं,

नानन्तर्यम् । अव्यवधाने विच्छेदेऽपि भवति संबन्धः । तस्मादनुषङ्गः ।

अथेह कथं भवितव्यं, यत्र निराकाङ्क्षाणां संनिधौ परिपूरणसमर्थः श्रूयते, यथा 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति । अत्र हि पुनात्वन्तानि परिपूर्णानि, न किंचिदाकाङ्क्षन्ति । ननु अच्छिद्रेण इत्येतदाकाङ्क्षति । सत्यमाकाङ्क्षति, आकाङ्क्षदपि एतत् एकमाकाङ्क्षेत्, एकेनैव तत् निराकाङ्क्षं संपद्यते इति । एकेन हि निराकाङ्क्षीकृतो नेतरौ आकाङ्क्षिष्यति । अनर्थकत्वादाकाङ्क्षति, एकेन च संबद्धो नानर्थको भवति । तस्मात् नेतरौ आकाङ्क्षति । इतरावपि परिपूर्णत्वात् न तमाकाङ्क्षतः । ननु एतस्य वाक्यशेषस्य एकमपि आकाङ्क्षतो न गम्यते विशेषः, केन निराकाङ्क्षीक्रियते केन वा नेति, तेन अनवगम्यमाने विशेषे सर्वैः सह संभन्त्स्यते । आह, नैतदेवम् । येन अस्य प्रत्यक्षमानन्तर्यमुपलभामहे, तेन सह संभन्त्स्यते इति गम्यते विशेषः, तस्मात् तेन अनन्तरेण सह संभन्त्स्यते इति नास्ति सर्वत्रानुषङ्ग इति । आह, नैतदेवम् । पुनातु-शब्देन अस्य प्रत्यक्षमानन्तर्यं उपलभामहे, पुनातु-शब्दस्यापि चित्पतिस्त्वा इत्येवमादिभिः । एकश्चासौ पुनातु-शब्दः पुनःपुनरुच्चरितः । तेनावगच्छामो यत्र पुनातु-शब्दः प्रयुक्तः, तत्र तेन एकवाक्यत्वात् अच्छिद्रेण इत्ययमपि प्रयोक्तव्यः । तथा च सति चित्पतिस्त्वा इत्येवमादयो विना पुनातु-शब्देन साकाङ्क्षाः । ते च पुनातु-शब्दं आकाङ्क्षन्ति, स च पुनातु-शब्दः अच्छिद्रेण इत्यनेन विशिष्टः । तेन पुनातु-शब्देन सानुषङ्गेण नियोगतः सर्वे निराकाङ्क्षीकर्तव्याः । तस्मात् सर्वेषु तुल्यप्रयोगाः इति वाक्यपरिसमाप्तिरनुषज्यते ।

**वा**—ज्योतिष्टोमे तिसृणामपि उपसदां आदौ आग्नेयी विहिता 'अग्निमनीकं' इति । तत्र प्रथमायाः क्रमे 'या ते अग्नेऽयाशया' इति निराकाङ्क्षो मन्त्र आम्नायते । उत्तरयोस्तु साकाङ्क्षौ 'या ते अग्ने रजाशया' 'या ते अग्ने हराशया' इति । तत्र स्त्रीलिङ्गयच्छब्दनिर्देशस्य स्त्रीपदार्थेन केन चिद्विना परिपूर्णता नास्ति । न च अपरिपूर्णेन व्यवहारोऽवकल्पते । तत्र तदन्यथाऽनुपपत्त्या अवश्यं परिपूरणसमर्थो वाक्यशेषः कल्पनीयः । कुतः ? '**न्यूनवाक्यप्रयोगो हि वेदे नैव समाश्रितः । कश्चित् क्वापि स्थितः शेषः सोऽन्वेष्टव्यः प्रयत्नतः ॥**' नहि वैदिकवाक्यानां प्रत्यक्षमेव एकं प्रमाणम् । तद्वदेव हि अनुमानादीन्यपि प्रमाणानि । सर्वप्रमाणप्रत्यस्तमये च षष्ठेन अभावः परिच्छिद्यते । तदिह प्रत्यक्षानुपलब्धे वाक्यशेषे न तावत्येव उपरन्तव्यम् । यदि अनुमानादीन्यपि निवर्तिष्यन्ते, तत एतावानेवायं मन्त्रः इति कल्पयिष्यामः । अथ तु तैः कश्चिदवगम्यते, ततः तत्सहितोऽयं मन्त्रः सकलः, प्राक् तस्मादूनः, इत्यध्यवस्यामः । तदिह अर्थापत्त्या तावत् सामान्यतः कश्चित् अस्ति शेषः इत्यध्यवसेयम् । ततश्च अभावस्य अनवसरात्, ऊनमिदं वाक्यं न प्रयोगार्हं, तत्र विशेषाकाङ्क्षायां लौकिकः कल्पनीयः, उत वैदिक एव पूर्वमन्त्रस्थः तनूर्वर्षिष्ठा इत्यादिरनुषक्तव्यः इति संशये लौकिक इत्याह । तथाहि, '**नान्यत्रोत्सहते गन्तुं वैदिकं संनिबन्धनम् । यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकम् ॥**' यथैव आहवनीयादयो वैदिकाः तन्निर्दिष्टकार्यव्यतिरेकेण न प्रवर्तन्ते, तथैव वैदिकः शेषः, यत्र वाक्ये समाम्नायेन विनियुक्तः, स तन्निबन्धनत्वात् नान्यत्र प्रयोगं क्षमते । लौकिकः पुनः अनिबद्धत्वात् सर्वार्थः सर्वाकाङ्क्षापूरणायापि नियुज्यमानो न विरुध्यते । तस्मात् लौकिकः । तत्र यदि वैदिकमपि रचितत्वात् लघुतरप्रयोगं रचयितव्यात् अवैदिकात् लौकिकात्मना मन्वानः प्रयुङ्क्ते, न केन चित् वार्यते, वैदिकत्वबुद्धिस्तु तत्र न कर्तव्या । तथाहि, '**तानेव वैदिकान् वर्णान् भारतादिनिवेशितान् । स्वाध्यायनियमं हित्वा लोकबुद्ध्या प्रयुञ्जते ॥**' यदि तु आनन्तर्याविशेषात् रजाशया इत्यनेनापि संबन्धोऽभ्युपगम्येत ततो यथानिवेशं प्रयोगात् पुरस्तादेवास्य प्रयोगः प्राप्नोति । तस्मादपि न वैदिकः शेषः । इति प्राप्ते उच्यते । '**विमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः ।**

तद्-व्यापारविमोकश्च सकलान्वेषणक्षये ॥' वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणक्षमो न लौकिकः, चोदनालक्षणधर्मनियमनात् । यदा तु वेदः सर्वात्मना अन्विष्यमाणोऽपि त्यक्तव्यापारो दृश्यते, तदा लौकिकमपि अनुजानाति । सा चान्वेषणा यथासंनिकर्षं प्रवर्तते । तत्र '**अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते पुनः । पदे स्वस्मिन्नलब्धस्तु प्रार्थनीयः पदान्तरे ॥ स्वस्मिन् वाक्येऽपि न स्याच्चेन्मृग्यो वाक्यान्तरे ततः । वाक्यान्तरेऽपि न स्याच्चेन्मृग्यः प्रकरणान्तरे** ॥' एकस्मिन्नर्थे साकाङ्क्षे अभिहिते प्रकृत्या प्रत्ययेन वा, तत्संबन्धसमर्थे अर्थान्तरं यदि वा तत्रैव दृश्यते ततो रमणीयम् । अथ न दृश्यते, ततः प्रमादालस्ये परित्यज्य प्रकृतौ प्रत्यये चान्वेष्टव्यः । तयोरपि चेन्न दृश्यते, ततः परस्तात् पुरस्तात् वा अनन्तरोच्चरिते पदान्तरे । न चेदनन्तरे लभ्येत एकान्तरद्व्यन्तरादिव्यवहिते । यदि तु स्ववाक्ये न लभ्येत, ततस्तेनैव क्रमेण प्रकृते वाक्यान्तरे । वाक्यान्तरेऽपि तु अलभ्यमानो यथोपस्थाप्यमानानुसारेण प्रकरणान्तरे । यदा तु तत्रापि न लभ्यते, तदा लोके । लोकेऽपि चेन्नोपलभ्येत ततो नास्तीत्येवमवधार्य आकाङ्क्षाबुद्धिं भ्रान्तित्वेन परिकल्प्य निराकाङ्क्षीकर्तव्यम् । सर्वत्र च '**संनिकृष्टो न लब्धश्चेद् विप्रकृष्टोऽपि वैदिकः । स एवावैदिकस्तु स्यात् प्राप्तः संनिहितो यदा** ॥' तदिह रजाशयाहराशयावाक्ययोः शेषः स्वपदस्ववाक्ययोः अलभ्यमानत्वात् वाक्यान्तरे नूनं इत्युपसंह्रियते । स च यादृशाकाङ्क्षितः तादृगेव एकानन्तरं पुरस्तादुपलभ्यते, अन्यस्य व्यवहितः । यद्यपि चासौ प्रथममन्त्रे कृतार्थत्वात् न तौ आकाङ्क्षति, तौ तु तेन विना अनुपपद्यमानौ आत्मसमीपे अन्यस्य अनाम्नानात् एवं पुरुषं प्रयुञ्जाते, 'सर्वसमीपे सकृत् पठितुमशक्यः प्रमाणान्तरलभ्यत्वाच्च पुनःपुनरश्रावितोऽयं आवयोरपि अर्थेन आम्नातः शेषः, नैकस्यैव संनिधिविशेषनिमित्तभ्रान्त्या कल्पयितव्यः' इति । यद्यपि च पुरस्तादाम्नायते, तथापि यत्प्रदेशवर्तित्वेन ताभ्यां काङ्क्षितः, तत्रैव विनियुज्यते । कुतः ? '**प्रतीतिमात्रसाम्यार्थं तत्प्रदेशे स पठ्यते । योग्यत्वात् संनिवेशस्तु पूर्वमन्त्रवदिष्यते** ॥' स हि सकृदाम्नायमानः सर्वेषामीप्सिते प्रदेशे न शक्य आम्नातुं इत्येकस्य यथाक्रममाम्नातः, इतरयोश्च यावता बुद्धिविषयतामापद्यते, ततश्च गृहीतः सन् स्वयमपि प्रदेशान्तरे स्थातुमसमर्थः, ताभ्यामपि च अन्यवृत्तित्वेन आकाङ्क्षितः, पूर्वत्र च परस्ताद्भावितया दृष्टसामर्थ्यः परस्तादेव निवेक्ष्यते । **भाष्यकारेण** तु प्रथमद्वितीययोर्मध्ये पाठात् अगृह्यमाणविशेषः शेषः उभयोरपि आनन्तर्येणैव संबन्धी इत्युक्त्वा तृतीयस्य व्यवधानात् असंबन्धमाशङ्क्य अर्थित्वाविशेषात् उभयोः समुदायापादनेन अव्यवधाने साधिते, समुदायशेषत्वमेव तर्हि प्राप्नोति इत्याशङ्क्य तस्य अप्रयोगार्हत्वात् प्रयोगार्हसमुदायिसंबन्धः, तत्रापि तयोः प्राधान्यात्, अन्यथा च नैराकाङ्क्ष्यानुपपत्तेः, प्रत्येकं सकलशेषसंबन्धसिद्धिः इत्यभिधाय पुनर्व्याख्यान्तरमारब्धम् । **अपि च साकाङ्क्षस्य संनिधौ** इति ( सर्वेषु तुल्ययोगित्वात् इति सूत्रावयवस्य सर्वेषु शेषिषु तुल्यशेषानन्तर्ययोगित्वात् इति पूर्वव्याख्यानं, तुल्याकाङ्क्षासंनिधियोग्यतायोगित्वात् इत्येवं व्याख्यान्तरम् इति । सुधा. पृ. ६९३ ) । तत्र कैश्चित् व्याख्यानविकल्प एव इत्याश्रितम् । ( स्वमतमाह– ) अपरे तु वदन्ति, पूर्वत्र अपरितोषात् उत्तरं कृतम् । किं कारणं '**न तावत् समुदायत्वं केन चिन्निर्मितं तयोः । पुनः प्रत्येकनिर्माणे न च हेतुः प्रतीयते** ॥' समुदायत्वं हि एककार्यत्वेन एकशब्दोपादानेन वा भवेत् , न चात्र एकमप्यस्ति । ननु इदं एककार्यत्वं एकवाक्यशेषग्रहणं नाम । अहो नु खलु मन्त्राणां कार्यं ( क्रत्वङ्गप्रकाशनं ) विज्ञातम् । अपेक्षा हि तत्र उभयोः स्यात् । कथं तत् कार्यमिति, उच्यते । शेषश्चासौ तयोः, न तद्वशेन समुदायत्वापत्तिर्युक्ता । पश्चादपि वा समुदायिभ्यामेव तस्य संगतिरिष्टा इति आदित एव समुदायत्वं न लभ्यते । यदि च समुदायत्वमापन्नौ ततः पुनः प्रत्येकं संबन्धः, इति राजैकपुत्रक्रीडा आपद्यते ( एकपुत्रस्य अत्यन्तं प्रियत्वेन पितृभ्यामनिवारणात्, राजकीयत्वेन च अन्यैरनिवारणात् अत्यन्ता अन्याय्या यथा क्रीडा तथा इयं इति सुधा. पृ. ६९३ ) पुरस्तादेव च

प्रयोगः प्राप्नोति, तथाभूतेन समुदायानन्तर्यात् । न वा अगृह्यमाणविशेषत्वं देशभेदनिमित्ततन्त्रभेदात् । प्रथमस्य हि असौ यथाऽऽकाङ्क्षिते देशे स्थितो नोत्तरयोः । तस्मादिदमेव व्याख्यानम् । ( किं तत् इति, आह– ) '**आकाङ्क्षा संनिधानं च योग्यता चेति च त्रयम् । संबन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः ॥** ' यो हि बहूनां संबन्धित्वेन सकृदाम्नायते तस्य अवश्यंभावि एकेनानन्तर्यं इति न तदेव तदा संबन्धकारणत्वेन आश्रीयते, तत्रापि अस्मादेव कारणत्रयात् संबन्धसिद्धेः । संनिधिविशेषात्तु तदाश्रयप्रतिपत्त्या भवति भ्रान्तिः । सा तु साकाङ्क्षयोग्यसंनिहितसंबन्ध्यन्तरदर्शनात् निवर्तते । यथा धात्वर्थादिषु विधिबुद्धिः गुणाद्युपादानसामर्थ्यात् । एवं हि तत्र ज्ञायते, सर्वार्थोऽयं आम्नायमानः सर्वसाधारणानन्तर्यासंभवात् वाक्यैकत्वाच्च कस्य चित् एकस्य समीपे पठ्यते । तस्मादकारणं आनन्तर्यमिति । संनिधिरिति ( भाष्यपदं ) बुद्धौ विपरिवृत्तिः ( इति तदर्थः । विशेषणविशेष्येषु बुद्ध्यनुवृत्तिं विना सर्वविशेषणविशिष्टैकबुद्ध्युत्पत्त्यसंभवात् विशिष्टबुद्ध्युत्पत्तिं यावत् विशेषणविशेष्यबुद्धीनां अनुवृत्तिरिष्यते विशेषणविशेष्यान्वयस्य अपेक्षाऽधीनत्वात् इति सुधा. पृ. ६९४ ) । सा च आनन्तर्ये संबद्धपदव्यवाये च भवति । संबद्धपदव्यवधिरपि आनन्तर्यप्रकार एव । कथं ? '**अनन्तरेण संबद्धः स्यात् परस्याप्यनन्तरः । ततः पुनस्तदारूढः परानन्तर्यमश्नुते ॥** ' 'या ते अग्ने रजाशया' इत्यनेन अपेक्षितः शेषः परस्तादलभ्यमानः पुरस्तात् परावृत्य आलोच्यमानः लभ्यते तनूर्वर्षिष्ठा इति । यदा च तत्रारूढः, तदा हराशया इत्यस्य अनन्तरीभूतः पुनरेवमेव तृतीयेनापि सह संबध्यते । ततः परं तु अन्यस्य अनाम्नानात् तावत्येव उपक्षीयते । सर्वत्रैवमपेक्षा पुरस्तात् परस्ताच्च प्रसृता एकत्र आरुह्य इतरेषां अनन्तरीभवन्ती तावदपेक्ष्यमाणा निगृह्णाति, यावत् किंचित् न योग्यमस्ति अयोग्यं चोपलब्धम् । ततः सर्वमालोचितं उपसंहृत्य निवर्तते । यद्यपि च क्रमेणोच्चारणात् संनिकर्षविप्रकर्षौ प्रतीयेते, तथापि नित्यत्वाद्वेदस्य अनन्तरे दूरस्थे च युगपदपेक्षा संबन्धश्च इति तस्यादर्शनात् न क्रमान्ते कश्चिद्विशेषः । एवं वाक्ये पदानां, प्रकरणे च वाक्यानां संबन्धो यावत् साकाङ्क्षेण तत्संबन्धार्हेण परस्यापि अनन्तरीकर्तुं समर्थेन व्यवधानम् । 'अव्यवधाने विच्छेदेऽपि' ( इति भाष्यं ) विरोधिना पदेन अव्यवधाने विप्रकृष्टत्वे भवति संबन्ध इत्यर्थः । तस्मादनुषङ्गः समाप्तिः । अनुषज्यते इत्यनुषङ्गः । स एव समाप्यते तेन इति समाप्तिः ।

यत्र तावत् शेषिणः साकाङ्क्षाः तत्रैवम् । यत्र नैराकाङ्क्ष्यं, सर्वेषु शेषिषु एकः शेषः साकाङ्क्षः पठ्यते, यथा 'चित्पतिस्त्वा पुनातु' इत्येतेषामन्ते 'अच्छिद्रेण' इत्यादिः, तत्र कथमिति । किं प्राप्तं ? '**अनन्तरेण संबध्य शेषस्येष्टा कृतार्थता । शेषिणश्च निराकाङ्क्षाः किंनिमित्ताऽनुषङ्गधीः ॥** ' उच्यते । '**अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम् । तत एवं भवेदेष त्वाख्यातार्थेन सर्वभाक् ॥** ' ( ततः एवं भवेत्, एष तु ) आनन्तर्यविशेषेण हि अयं 'पुनातु' इत्येतेन संबध्यते । स च एक एव त्रिष्वपि वाक्येषु । तदेकत्वाच्च अर्थस्याप्येकत्वम् । न च कारकभेदात् तस्य भेदो भवति, येन चित्पत्यादिसंबद्धात् अस्य अनन्यत्वं विज्ञायते । न च अच्छिद्रेण इत्येवमर्था क्रिया, येन सकृत्संबन्धेन संतुष्येत् । '**तस्मादस्य क्रियार्थत्वाद् यावदेषा प्रयुज्यते । तावदेव प्रयोगित्वं काष्ठानां पचने यथा ॥** ' **अथोच्यते** एकत्वेऽपि अस्याः यत्कर्तृविशिष्टाभ्यासात् यः करणसंबन्धः श्रूयते, तद्विशिष्टैव तेन योजयितव्या । यथा एकस्यापि ज्योतिष्टोमस्य मैत्रावरुणग्रहाभ्यासविशिष्टस्य पयसा श्रयणं चोदितं नातिप्रसज्यते, यथा च अत्रैव चित्पत्यादयो न सर्वे सर्वत्र भवन्ति । **उच्यते** । '**श्रयणानां व्यवस्था हि भिन्नाऽपूर्वप्रयुक्तितः । कर्त्रन्तरावरोधाच्च चित्पत्यादेरसंकरः ॥** ' ऐन्द्रवायवादिग्रहाभ्यासानां अदृष्टार्थत्वात् तद्भेदेन श्रयणव्यवस्था युक्ता । नहि तथा किंचित् कारणमस्ति, करणस्य क्रियां प्रति उपयुक्तत्वात् । करणप्रकाशनद्वारेण सैव क्रिया पुनः प्रकाश्यते । सा च सर्वत्र अविशिष्टत्वात् प्रकाशनमपेक्षते । यथा च

वाक्यप्रत्युपादानात् तत्समानव्यापारः चित्पतिर्निवर्तते, नैवं अच्छिद्रपवित्रप्रतियोगिकरणान्तरश्रवणमस्ति, येन एतन्निवर्तेत । न च कर्तृप्रयुक्तं करणं, यतः तद्भेदात् व्यवतिष्ठेत । कारकाणां क्रियाक्षिप्तत्वेन परस्परसंबन्धाभावात् । ननु एवमपि मन्त्रान्तरगतेनापि पुनातु-शब्देन अस्य संबन्धः स्यात् । नैष दोषः । दर्शपूर्णमासबर्हिर्धर्मवत् व्यवस्थासिद्धिः । ( यथा बर्हिर्धर्माणां प्रकरणात् दर्शपूर्णमासबर्हिरर्थत्वावगतेः न पिण्डपितृयज्ञबर्हिषि प्रसक्तिः, तथा अस्यापि शेषस्य प्रकरणपठितपुनातु-शब्दैकवाक्यतया तादर्थ्यावगतेः न मन्त्रान्तरगतपुनातु-शब्दान्वयप्रसक्तिः । सुधा. पृ. ६९६ ) इह प्रक्रम्य पुनातु-शब्दस्य यत् कार्यं तत्प्रयुक्तं अच्छिद्रादिविशेषणं मन्त्रद्वयेऽपि तदेकं, इति प्रत्यक्षमवगच्छामः, न मन्त्रान्तरे, कर्मान्तरगतद्रव्यान्तरसंस्कारार्थत्वात् । ननु एवं सति एककार्यत्वात् मन्त्रविकल्पः प्रसज्येत, ( विभागमन्त्रवत् युक्त एव अत्रापि विकल्पः इति परिहरति–) कुतो वा एवमादीनां संख्यायुक्ताविधानात् अन्ते समुच्चयः ? । (असंबद्धपदव्यवायादपि न मन्त्रान्तरेषु प्रसक्तिः इत्याह– ) सर्वेषु विपरिवृत्तिभङ्गसंनिधिः संभाव्येत, न मन्त्रान्तरेषु इति विशेषः । '**तस्मात् पुनातुशब्दोऽयं सर्वमन्त्रगतोऽपि सन् । अच्छिद्रापहृतः सर्वैः पुनस्तद्वानपेक्षते** ॥' सर्वाभ्यासान्ताभिहितेन अच्छिद्रेणेत्यादिना अनन्यगतिकत्वात् यदा पुनातुशब्दः स्वीकृतः, तदा 'पुनात्वच्छिद्रेण' इत्येवं कल्पिते संबन्धे य एव अनन्तरः पुनातुशब्दः, स एव पूर्वयोरपि इति करणसंबन्धप्रदर्शनवेलायां अन्वेति । क्रियाः पदार्थाः सन्तः तामपेक्षमाणाः सकरणिकामेव आसादयन्ति इति सर्वत्रानुषङ्गः । एवं वा अनुषङ्गेण प्रयोक्तव्ये ये तन्त्रेण प्रयुञ्जते, तेषां तदालस्यमात्रम् । पुरस्तात् परस्ताद्वा वाक्यशेषस्य अनुषङ्गत्वाविशेषे सति यत् पुरस्तादनुषङ्गे अन्वीयते इति कैश्चिदुच्यते तत् विशेषप्रसिद्धिमात्रं इति द्रष्टव्यम् ।

**शा** — अत्रापि यजुःपरिमाणमेव चिन्त्यते ( इति **एकविषयत्वं संगतिः** ) । '**एकत्रैव निबद्धो हि समाम्नायेन वैदिकः । शेषोऽन्यत्र न नेतव्यो लौकिकस्त्वनिबन्धनः** ॥' इति प्राप्ते, '**यथापेक्षितरूपे हि वाक्यशेषे समर्पिते । वेदेन, लौकिकः शेषो न मृग्यो निष्प्रमाणकः** ॥'

**सोम** — **प्रयोजनं** पूर्वपक्षे मन्त्रभ्रेषप्रायश्चित्ताभावः । सिद्धान्ते तु तत्सद्भावः । यद्वा अध्याहृतस्य लौकिकस्य शेषस्य अमन्त्रत्वात् पूर्वपक्षे प्रयोगकाले उच्चारणं नानुष्ठेयं, बुद्धौ प्रतिसंधानमात्रेणापि अर्थप्रत्यायकत्वसंभवात् । अत एव इषे त्वा इत्यादौ छिनद्मि इत्यादिकं पदं प्रयोगकाले याज्ञिकैर्नानुष्ठीयते । अनुषङ्गे तु मन्त्रत्वात् प्रयोगकाले उच्चारणमपि कर्तव्यं इति । **केचित्तु** अध्याहृतस्यापि उच्चारणमस्त्येव, याज्ञिकानां तु तदननुष्ठानं अनास्थया इत्याहुः । **सूत्रार्थस्तु**– अनुषज्यते इत्यनुषङ्गः, सः वाक्यपरिसमाप्तिः वाक्यपरिसमापकः सर्वेषु शेषिषु वाक्यशेषस्य यौगपद्येनान्वयात् इति ।

**वि** — 'या ते अग्ने रजेत्यध्याहारो यद्वाऽनुषञ्जनम् ।, तनूरित्यन्यशेषत्वादध्याहारोऽत्र लौकिकः ॥, वेदाकाङ्क्षा पूरणीया वेदेनेत्यनुषञ्जनम् । अन्यशेषोऽपि बुद्धिस्थो लौकिकस्तु न तादृशः ॥' २।१।१६।४८. 'नानुषङ्गोऽनुषङ्गो वाऽच्छिद्रेणेत्यस्य, शेषिणौ । चित्पतिस्त्वेत्यनाकाङ्क्षावतो ( काङ्क्षौ अतो ) नात्रानुषज्यते ॥, करणत्वं क्रियाऽऽपेक्षं क्रिया चैका पुनात्विति । मन्त्रद्वयेऽतस्तद्द्वारा सर्वशेषोऽनुषज्यते ॥' २।१।१७।४८.

**भाट्ट** —यत्र बहूनां शेषापेक्षिणां आद्यस्य अनन्तरं शेषः समाम्नातः यथा 'या ते अग्ने अयाशया' इत्यस्यानन्तरं 'तनूर्वर्षिष्ठा' इत्यादिः शेषः । उत्तरौ मन्त्रौ 'या ते अग्ने रजाशया, या ते अग्ने हराशया' इति । तत्र उत्तरयोः शेषापेक्षिणोः अयमेव शेषः अनुषज्यते, न तु लौकिकः अध्याह्रियते अक्लृप्तत्वात् । न चासौ एकत्र निबद्धः अन्यत्र नेतुं न शक्यः, सर्वार्थत्वेन आम्नानात् । न च आद्यस्य अनन्तरं अपेक्षितदेशे पठितत्वात् तदर्थमाम्नानं शङ्क्यम् । आकाङ्क्षायोग्यतयोः अविशिष्टत्वात् । आसत्तेरपि असंबन्धिपदाव्यवधानरूपायाः सर्वत्र अविशिष्टत्वाच्च । नहि आनन्तर्यमेव संबन्धकारणं, तदभावेऽपि शाब्दबोधस्य

असंबन्धिपदव्यवधानाभावे आनुभविकत्वात् । सर्वान्व्यवधानस्य सकृत्पाठे अशक्यतया आकाङ्क्षादित्रयेणैव च सर्वार्थत्वज्ञानोपपत्तेः, आवृत्तिपाठस्य सर्वान्तपाठस्य च आपादयितुमशक्यत्वात् । अपेक्षितदेशपाठस्य च लिङ्गेनैव ज्ञातुं शक्यत्वात् आम्नानस्य सर्वार्थत्वावगतेः अनुषङ्ग एव । न चैवं अव्यवधानस्य अकारणत्वे पद्श्रुत्या यागस्यैव करणत्वानापत्तिः, तस्य अकारणत्वेऽपि संदेहे नियामकत्वमात्राङ्गीकारात् । प्रकृते तु आकाङ्क्षादिवशेन सर्वार्थत्वस्यैव प्रतीतेः नियामकाकाङ्क्षाऽभावेन अनुषङ्ग एव युक्तः । अतश्च तद्-भ्रेषेऽपि यजुर्भ्रेष-प्रायश्चित्तमेव ।

यत्र निराकाङ्क्षाणामेव शेषिणां बहूनां अन्ते सापेक्षः शेषः समाम्नातः यथा ‘ चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु ’ इत्येतेषामन्ते ‘ अच्छिद्रेण पवित्रेण ’ इति, तत्रापि संनिधियोग्यत्वयोः अविशेषात् सर्वत्रानुषङ्गः । न च उत्थाप्याकाङ्क्षाया एकसंबन्धेनैव चरितार्थत्वात् आनन्तर्यस्य नियामकत्वोपपत्तिः, शेषाकाङ्क्षया आकाङ्क्षोत्थापनेऽपि प्रधानत्वात् शेषिणां विनिगमनाविरहेण सर्वेषामेव शेषग्राहकत्वावगतेः, आनन्तर्यस्य अनियामकत्वात् । अत एव अनेकहविष्कविकृतिसंनिधिपठितोपहोमानां सर्वार्थत्वमेव । अतश्च मुखनाभिगुल्फप्रदेशपावनार्थेषु एतेषु मन्त्रेषु शेषोऽपि अनुषज्यते, प्रतिप्रधानावृत्तिन्यायात् ।

**मण्डन**—‘ रजाशयादिष्वनुषज्य पूर्तिः । ’

**शंकर**—‘ अनुषङ्गोऽथ वर्णितः । ’

* अनुषङ्गाधिकरणन्यायस्वरूपं तु ‘ **अनन्तरेण संबद्धः स्यात् परस्याप्यनन्तरः । तदारूढः पुनः पश्चात् तदानन्तर्यमश्नुते ॥** ’ इति । **सु.** पृ. १०६९। २।१।१६।४८ सूत्रवार्तिके तु ‘ ततः पुनस्तदारूढः ’ इति तृतीयपादः पठ्यते । **के.**

( *** अनुषङ्गाधिकरणे** ) अनुषङ्गपक्षे आम्नानस्य सर्वार्थत्वेनैव साधयिष्यमाणत्वात् अनुषक्तस्य आम्नातत्वेन मन्त्रत्ववत् यजुष्ट्वस्यापि उपपत्तेः पूर्ववत् यजुःपरिमाणचिन्तात्मकत्वम् । ... वैदिकस्यैव सर्वत्रानुषङ्गः । आकाङ्क्षायोग्यतासंनिधयश्च कारणम् । प्रयोजनं अनुषक्तभ्रेषे यजुर्भ्रेषनिमित्तकप्रायश्चित्तप्राप्तिः । .... एवं तावत् अनेकेषां उत्थिताकाङ्क्षाणां संनिधौ आम्नायमानः शेषः सर्वत्रानुषज्यते इत्युक्तं ( प्रथमवर्णके ) । उत्थाप्याकाङ्क्षाणां अनेकेषां संनिधौ आम्नायमानः शेषः सर्वत्रानुषज्यते ( इत्युक्तं द्वितीयवर्णके ) । अत्र असंबन्धिपदाव्यवधानेऽपि अनुषङ्गः साधितः । अस्य प्रत्युदाहरणं तु व्यवायाधिकरणम् । **कौ.** २।१।१८।४९–५०. * प्रधानकर्थंभावस्तु अभितः अन्यसंबन्धमात्रं उक्त्वा यावदन्तं गच्छति इति अनुषङ्गाधिकरणे व्याख्यातम् । **वा.** ३।१।१४।३४ पृ. ७४१. * वृद्धिनिवृत्तेः ( वृद्धिवृत्तेः ) संनिधित्वेन अनुषङ्गाधिकरणे अभिहितत्वात् । **सु.** पृ. ११११, * मन्त्रशेषार्थः एकमन्त्रावयवान्वितशेषप्रकाशितत्वेन निराकाङ्क्षीकृतोऽपि मन्त्रान्तरावयवानां साकाङ्क्षत्वात् पुनरुत्पन्नाकाङ्क्षः सन् पुनरुच्चारितपूर्वमन्त्रशेषप्रकाशकत्वं प्रतिपद्यते इति अनुषङ्गाधिकरणे साधितम् । पृ. १२२४. * यावन्ति पदानि संनिकर्षविप्रकर्षस्थानि, तानि सर्वाणि **अनुषङ्गाधिकरणोक्तेन** मार्गेण अनादृत्य संनिकर्षविप्रकर्षौ युगपत् संनिपतन्ति । ततः सर्वविशेषणविशिष्टां अनुष्ठानयोग्यां भावनामासाद्य विधिः समाप्यते । स च एकेनैव प्रयत्नेन तां विशिष्टां विदधाति इति न अनेकशक्तिकल्पना दोषः । **वा.** २।२।३।६ पृ. ४८५. *** अनुषङ्गाधिकरणप्रत्युदाहरणं** व्यवायाधिकरणम् । व्यवेताननुषङ्गाधिकरणं इत्यत्र द्रष्टव्यम् । **भा.** २।१।१७।४९.

**अनुषङ्गो वाक्यसमाप्तिः, सर्वेषु तुल्ययोगित्वात् । २।१।४८ ॥**

‘ या ते अग्नेऽयाशया तनूर्वर्षिष्ठा गह्वरेष्ठोग्रं वचो अपावधीत्त्वेषं वचो अपावधीत्स्वाहा । या ते अग्ने रजाशया, या ते अग्ने हराशया ’ इति । तत्र संदेहः । किं ‘ तनूर्वर्षिष्ठा ’ इति सर्वत्रानुषक्तव्यः, आहोस्वित् लौकिको वाक्यशेषः कर्तव्य इति । अत्रैषा विषयशुद्धिः, ज्योतिष्टोमे ‘ तिस्र एव साह्नस्योपसदः कार्याः ’ इत्युपसन्नामानि त्रीणि कर्माणि श्रूयन्ते । तेषां चाङ्गभूतास्तिस्र इष्टयोऽग्निदैवत्याः ‘ अग्निमनीकम् ’ इत्येवमादिवाक्यविहिताः सन्ति । आसां क्रमे त्रयो मन्त्राः समाम्नाताः ।

तत्र प्रथमाया इष्टेः 'या ते अग्नेऽयाशया' इत्ययं मन्त्रः संपूर्णत्वान्निराकाङ्क्षः। द्वितीयायास्तृतीयायाश्चेष्टेः 'या ते अग्ने रजाशया, या ते अग्ने हराशया' इत्येतावदसंपूर्णत्वात् साकाङ्क्षौ। तत्रायं संदेहः, किं प्रथममन्त्रसमाम्नातस्य 'तनूर्वर्षिष्ठाः' इत्यादिवाक्यशेषस्य द्वितीयतृतीयमन्त्रयोरनुषङ्गः, अथवा लौकिकस्याध्याहार इति। पूर्वमनुप्रसङ्गेन यजुःपरिमाणे निरूपिते सति इदानीमनुप्रसङ्गेनैव असंपूर्णस्य यजुषः किमध्याहारेण पूरणं, उतानुषङ्गेणेति। अत्रायं पूर्वपक्षिणोऽभिसंधिः— न तावत् 'या ते अग्नेऽयाशया' इत्येतच्छेषभूतस्य 'तनूर्वर्षिष्ठाः' इत्यादेः 'या ते अग्नेऽयाशया या ते अग्ने हराशया' इत्येतच्छेषभावः संभवति, पूर्ववाक्यशेषत्वेनैवाध्ययनविधिना अध्यापितत्वात्। यथा आहवनीयस्य होमशेषत्वात् वेदावगतस्य 'अग्निमुपनिधाय स्तुवीत' इत्यत्र न स्तोत्रशेषत्वेनोपनिधानं, किं तर्हि? लौकिकस्यैवाग्नेः सर्वार्थस्य, तथा लौकिकस्यैव वाक्यशेषस्योत्तरमन्त्रयोरध्याहार इति। तदुक्तं '**नान्यत्रोत्सहते गन्तुं वैदिकं संनिबन्धनम्। यथेष्टविनियोगं तु सर्वार्थं वस्तु लौकिकम्॥**' इति (वा. पृ. ४५३)। तस्मान्न वैदिकः शेषः, किंतु लौकिक एवेति। **एवं प्राप्ते अभिधीयते**। भवेदेवं, यदि वाक्यगता आकाङ्क्षा सति संभवे अवैदिकेनापि पूर्येत। तथाहि— वैदिकस्य वाक्यस्य वैदिक एव शेषः पूरणक्षमः। तत्र वेदगतैवान्वेषणोचिता। तदुक्तं '**अदृष्टः प्रकृतावर्थः प्रत्ययेऽन्विष्यते पुनः। पदे स्वस्मिन्नलब्धश्चेत् प्रार्थनीयः पदान्तरे॥ स्वस्मिन् वाक्येऽपि न स्याच्चेन्मृग्यः प्रकरणे ततः। यदि प्रकरणे न स्यान्मृग्यः प्रकरणान्तरे॥**' इति। (वा. पृ. ४५३)। चोदनालक्षणधर्मनियमात् इह तु वैदिकस्यैव तनूर्वर्षिष्ठेत्यादेः सर्वार्थत्वसंभवान्न लौकिकावसरः स्थितः। तदुक्तं '**विमुक्तव्यापृतौ वेदे लौकिकावसरस्थितिः। तद्व्यापारविमोकश्च सकलान्वेषणक्षये॥**' इति (वा. पृ. ४५३.)। यत्तु वाक्यान्तरशेषत्वेनाध्ययनविधिना अध्यापितस्य न वाक्यान्तरशेषत्वं संभवतीत्युक्तं, तदयुक्तं सर्वशेषत्वेनैकस्यैव वाक्यशेषस्याध्ययनविधिना अध्यापितत्वात्। न च आनन्तर्यविशेषाध्ययनवशेनापि पूर्ववाक्यशेषत्वमेवास्योन्नेतुमुचितं, न तु सर्वशेषत्वमिति **वाच्यम्**। यत आकाङ्क्षायोग्यतासंनिधयो हि संबन्धादिकारणम्। संनिधिश्च बुद्धिविपरिवृत्तिर्नार्थान्तरम्। ते चाकाङ्क्षादयस्त्रिष्वेव मन्त्रेष्वविशिष्टा इति सर्वार्थत्वमेवाम्नानस्य। सर्वथाऽऽम्नानस्य आवश्यकेनाप्यानन्तर्येण भवितव्यमिति नान्तरीयकमानन्तर्यविशेषोपादानम्। तदुक्तं '**आकाङ्क्षा संनिधानं च योग्यता चेति तत् त्रयम्। संबन्धकारणत्वेन क्लृप्तं नानन्तरश्रुतिः॥**' इति (वा. पृ. ४५५)। न च रजाशयेत्यनेन व्यवधानात् हराशयेत्यनेन सह न संबन्धः, संबन्धिपदव्यवहितस्याप्यनन्तरितत्वादेव। '**अनन्तरेण संबन्धः स्यात् परस्याप्यनन्तरः। ततः पुनस्तदारूढः परानन्तर्यमश्नुते॥**' इति। (वा. पृ. ४५५)। **प्रयोजनं**—पूर्वपक्षे लौकिकाध्याहृतपदस्यामन्त्रत्वान्न मन्त्रनाशनिमित्तं प्रायश्चितम्। सिद्धान्ते त्वनुषक्तपदानां मन्त्रत्वात् मन्त्रनाशनिमित्तं प्रायश्चित्तमिति। **सूत्रं तु**— अनुषज्यते इत्यनुषङ्गो वाक्यशेषः वाक्यपरिसमाप्तिरनेनेति सैव वाक्यपरिसमाप्तिः। सर्वेषु तुल्ययोगित्वात्तुल्यसंबन्धादित्यर्थः। **अथेह** कथं भवितव्यम्? यत्र निराकाङ्क्षाणां संनिधौ परिपूर्णसंबन्धः श्रूयते। यथा 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनात्वच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इति। पूर्वं साकाङ्क्षेषु शेषिषु प्रतीयमानाकाङ्क्षस्य शेषस्यानुषङ्गं प्रतिपाद्य, इदानीमप्रतीयमानाकाङ्क्षेषु शेषिषु साकाङ्क्षस्य शेषस्यानेनैव सूत्रेणानुषङ्गः प्रतिपाद्यते। अत्रायं पूर्वपक्षिणोऽभिसंधिः—शेषिणस्तावन्निराकाङ्क्षानन्तरशेषिसंबन्धेनैव पूरिताः। अतो नात्रानुषङ्गकारणमस्ति। तदुक्तं '**अनन्तरेण संबध्य शेषस्य च कृतार्थता। शेषिणश्च निराकाङ्क्षाः किंनिमित्ताऽनुषङ्गधीः॥**' (वा. पृ. ४५७)। तेन 'देवस्त्वा सविता पुनातु' इत्यनेनैवानन्तरितेन सह 'अच्छिद्रेण पवित्रेण' इत्यस्य वाक्यशेषस्य संबन्धः, न तु 'चित्पतिस्त्वा पुनातु' इत्येताभ्यामपीति। **एवं प्राप्ते अभिधीयते**। भवेदेवं,

यदि 'देवस्त्वा सविता पुनातु' इत्येतस्यैव वाक्यस्य अच्छिद्रेण इत्ययं शेषो भवेत् । किंतु करणत्वेन क्रियासाकाङ्क्षमनन्तरपठितया पुनातिक्रियया संबध्यते । सा च त्रिष्वपि वाक्येषु एकैवेति युगपदेवास्य मन्त्रत्रय-शेषत्वम् । **न च** एकत्वेऽपि क्रियायाः कर्तृभेदेन भिन्नत्वादनन्तरितसवितृकर्तृकपुनातिक्रियासंबन्ध एवास्योचित इति । स्यादेवं, यदि सवित्रादिकर्तृभेदोऽस्य वास्तवो भवेत् । किंतु दर्भयुगलेन पूर्वाग्रतया आज्योत्पवने एकेनाध्वर्युणा क्रियमाणे मन्त्रोऽयं पठ्यते । तत्र चैक एवाध्वर्युः परमार्थतः कर्ता, चित्पत्याद्युपन्यासः स्तुत्यर्थ एवेति न कर्तृभेदात् पुनात्वर्थभेदः । तदुक्तं '**अनन्तरस्य वाक्यस्य यदि शेषो भवेदयम् । तत एवं भवेदेष त्वाख्यातार्थेन सर्वभाक्**॥' इति ( वा. पृ. ४५७ ) । न चैवं सति प्रकरणान्तरीयपुनात्वर्थेनास्य संबन्धः शङ्कनीयः, प्रकृतापूर्वगृहीतत्वेन अस्य दर्शपूर्णमासबर्हिर्धर्मवत् अन्यसंबन्धासंभवात् । **न** च अभेदेऽपि ज्योतिष्टोमस्य यथा 'मैत्रावरुणं श्रीणाति' इत्यभ्यासापूर्वभेदादेव श्रयणव्यवस्था, तथा अत्रापि पुनात्वर्थस्यैकत्वेऽपि भिन्नापूर्वाभ्यासवशेनैव व्यवस्थेति **वाच्यम्** । तत्र भिन्नाभ्यासापूर्वप्रयुक्तत्वेन धर्मव्यवस्थोपपत्तेः । न चात्र तथेति वैषम्यम् । नाप्येकक्रियान्वयित्वेन चित्पत्यादिकर्तृणामपि सर्वशेषत्वं, कर्त्रन्तरावरुद्धत्वेन कर्त्रन्तरप्रवेशासंभवात् । तदुक्तं '**करणानां व्यवस्था हि भिन्नापूर्वाप्रयुक्तितः । कर्त्रन्तरावरोधाच्च चित्पत्यादेरसंकरः** ॥' इति ( वा. पृ. ४५८ ) । अतः सर्वशेषत्वमेव वाक्यस्येति सिद्धम् । **प्रयोजनं** पूर्वाधिकरणवदेव । **सूत्रं तु** व्याख्यातमेव । **तौता.**

**अनुषङ्गो वाक्यसमाप्तिः, सर्वेषु तुल्ययोगित्वात् । २।१।१६।४८ ॥**

'या ते अग्नेऽयाशया, या ते अग्ने रजाशया, या ते अग्ने हराशया' इत्यत्र प्रत्येकं 'तनूर्वर्षिष्ठा गह्वरेष्ठाः' इत्यादिवाक्यस्य अनुषङ्गः कर्तव्यः । तेनैवानुषङ्गेण तत्तद्वाक्यस्य समाप्तिः स्यात् । वाक्यस्य समाप्तिः येन स वाक्यसमाप्तिः । अनुषङ्गः वाक्यसमाप्तिः वाक्यसमापकः । कुतः ? तनूर्वर्षिष्ठाः इत्यादेः सर्वेषु पूर्ववाक्येषु तुल्ययोगित्वात् तुल्यं युज्यते इति तुल्ययोगि, तत्त्वात् तुल्यसंबन्धात् । तस्मात् स्वपक्षे विवक्षितार्थानिष्पत्तौ पूर्वतः परतो वा अनुषङ्गः कर्तव्यः तेन तन्त्रैकत्वं सेत्स्यति । एवं 'चित्पतिस्त्वा पुनातु, वाक्पतिस्त्वा पुनातु, देवस्त्वा सविता पुनातु' इत्यत्र प्रत्येकं 'अच्छिद्रेण पवित्रेण वसोः सूर्यस्य रश्मिभिः' इत्यस्यानुषङ्गो ज्ञातव्यः । पूर्वस्य निराकाङ्क्षत्वेऽपि उत्तरस्य साकाङ्क्षत्वात् । **के.**

* **अनुष्टुप्** । यस्मिन् मन्त्रे अष्टाक्षराः चत्वारः पादा भवन्ति, तस्य मन्त्रस्य छन्दः अनुष्टुप् नाम । 'रामो हरिः करी भूभृत्', 'यस्य ज्ञानदयासिन्धोः', 'चरितं रघुनाथस्य' इत्यादयः श्लोका अनुष्टुप्छन्दस्का एव । **के.** * अनुष्टुब्गायत्रीद्वयप्रग्रथनेन संपादिते आनुष्टुभे तृचे श्यावाश्वान्धीगवसाम्नोर्गानम् । **भा.** ९।२।६। २५-२८ वर्णकं ३, * गायत्रीबृहत्य**नुष्टुप्सु** एव आगम्यमानानां साम्नां निवेशः त्रिवृद्धस्तोमकेषु क्रतुषु माध्यंदिनार्भवपवमानयोः । ५।३।५।१३-१४.

* **अनुष्ठानं** इष्टमर्थं प्रति भवति । **भा.** ६।१।१।३ पृ. १३५४, * अनुष्ठानं अवघातस्य धानासु महापितृयज्ञे । १०।२।३४।७४, * अनुष्ठानं ऋतुयाज्यावरणहिरण्यदानयोः अदृष्टार्थयोः द्वादशाहादौ सत्रे । १०।२।२६।६२, *क्रत्वर्थानां अस्थियज्ञे मृतकर्तृकत्वपक्षे । १०।२।१९।२०, * निर्वापस्य अग्निहोत्रहवर्णालोपेऽपि आधाने पवमानेष्टिषु । १०।२।२७।६३, * पर्यूहणसेचनादीनां साद्यस्के खलेवाल्याम् । १०।२।३३।७३, * पाकस्य शतकृष्णलचरौ । १०।२।१।१-२, * प्रतिहोमानां सायमग्निहोत्रप्रभृति । ६।५।१३।४३, * प्राकृतान्वाहार्यधर्माणां आग्रयणगतवासोवत्सयोः । १०।३।७।३५, * **अनुष्ठानं** यथाशक्ति यः करोति, तस्य नित्येऽधिकारः । ६।३।१। १-७, * सूक्तवाकान्तर्गत-आयुराशासनादेः सर्वस्वारे जीवद्दशायां क्रियमाणप्रायणीयादौ । १०।२।२५।६०-६१, * हिरण्यप्रदानस्य अदृष्टार्थस्य आत्रेयाय सत्रे । १०।२। २६।६२, * अनुष्ठानं न भवति गुणकामानां अस्थियज्ञस्य मृतकर्तृकत्वपक्षे । १०।२।२०।५१, * अनुष्ठानं न भवति प्रतिहोमानां उदवसानीयोत्कर्षेऽपि । ६।५।१२।४२, * अनुष्ठानं नास्ति होतृकामानां अस्थियज्ञस्य मृतकर्तृकत्वपक्षे ।

१०।२।२२।५५-५६. * **अनुष्ठानस्य** विध्यधीनत्वात् विधिं विना अनुपपत्तिः। **सु.** पृ. ७७४. * '**अनुष्ठाने पदार्थानामवश्यंभाविनी स्मृतिः । अनन्यसाधनानन्यकार्यैर्मन्त्रैः प्रसाध्यते ॥**' न तावत् अनुष्ठानवेलायां अस्मृतः कश्चित्पदार्थः शक्यः कर्तुं इत्यवश्यंभाविन्या स्मृत्या योग्यसाधनमात्रापेक्षणात् यत्किंचित् ब्राह्मणपदार्थानुसंधानं वा पूर्वपदार्थप्रत्यवेक्षणं वा सूत्रग्रन्थो वा आत्मीयग्रहणवाक्यानि वा उपद्रष्ट्रादि वा साधनं ग्रहीतुमारभ्यते । तत्र अनन्यप्रयोजनान् मन्त्रान् प्रकरणे पठ्यमानान् सामान्येन 'किमपि एभिः कर्तव्यं' इत्येवं प्रयोगवचनेन गृह्यमाणानुपलभ्य यादृशेन वाक्येन स्मृतिः कर्तुमाकाङ्क्ष्यते तद्रूपा एते इति विदित्वा लिङ्गप्रकरणानुमितया श्रुत्या विनियोगे सति अभिधानार्थता विज्ञायते। ततश्च उपायान्तराणि अप्रमाणकत्वात् निवर्तन्ते । नियमादृष्टसिद्धिश्च 'मन्त्रैरेव स्मृत्वा कृतं कर्म अभ्युदयकारि भवति' इत्यवधार्यते। **वा.** २।१।६।३१ पृ. ४३३, * **अनुष्ठानकाले** विधिश्रुत्यधीनः पुरुषः । स हि तत्र तया प्रवर्त्यते, तत्र अभिहिते अनभिहिते वा विनियुक्ते अविनियुक्ते वा तुल्यवत् प्रवर्तते। ३।१।७।१३ पृ. ७००. * **अनुष्ठानक्रमो** नियतः। **वि.** ५।१।१ वर्णकं १. * **अनुष्ठानदेशक्रमोऽपि** पशुधर्माणां अग्नीषोमीयार्थत्वेन भविष्यति। **वा.** ३।३।५।१२ पृ. ८२०. * अनुष्ठानदेशलक्षणोऽपि क्रमः विनियोगहेतुः पशुधर्माधिकरणे (३।६।७) क्रमस्य प्रकरणविरोधपरिहारेण पशुधर्माणां दैक्षार्थत्वे वक्ष्यते। **सु.** पृ. १२००. * **अनुष्ठानसादेश्यात्** पशुधर्माणामग्नीषोमीयार्थत्वं, औपवसथ्येऽहनि अग्नीषोमीयः पशुरनुष्ठीयते तस्मिन्नेव च दिने ते धर्माः पठयन्ते इति । अतस्तेषां कैमर्थ्याकाङ्क्षायां अनुष्ठेयत्वेनोपस्थितं पश्वपूर्वमेव भाव्यत्वेन संबध्यते। **मीन्या.** २००-२०१. * **अनुष्ठानसादेश्यलक्षणस्य** च क्रमस्य प्रकरणादिकल्पनद्वारा विनियोजकत्वम्। **सु.** पृ. १०६७. * **अनुष्ठानसाधारण्यविधिर्यथा**– उपदेशेन अग्नीषोमीये, अतिदेशेन च सवनीयानुबन्ध्ययोः अङ्गभूतस्य यूपस्य अनुष्ठानसाधारण्यार्थः 'दीक्षासु यूपं छिनत्ति' इत्यपकर्षविधिः। **बाल.** पृ. २१.

* **अनुष्ठेयस्वरूपं** द्वितीयादित्रिभिरध्यायैर्निश्चितम्। पञ्चमे तु अनुष्ठानक्रमश्चिन्त्यते। **वि.** ५।१।१ उपोद्घाते. * **अनुष्ठेयार्थस्मारका मन्त्राः**। **भा.** १।२।४।३१-५३.

* **अनुसमयः** अञ्जनादिपरिव्याणान्तेन यूपगणे । (सत्रातिरिक्ते इति भाट्ट.) **भा.** ५।२।५।७-१०, * अधिश्रयणाद्यभिवासनान्तेन काण्डेन वारुणचतुष्कपालपुरोडाशेषु । ५।२।२।३. * अवदानादिप्रदानान्तेन आग्नेयादौ दर्शपूर्णमासयोः। **भाट्ट.** ५।२।४. * एकविंशतिदर्भपिञ्जूलसमुदायेन पावने। **भा.** ५।२।३।४-५, * कपालाष्टकादिसमुदायेन कपालोपधाने। ५।२।३।४-५, * कृष्णाजिनास्तरणादितण्डुलप्रक्षालननिनयनान्तेन नानाबीजेषु। ५।२।७।१३-१५, * केशश्मश्रुसमुदायेन वपने। ५।२।३।४-५, * त्रिस्त्रेन अञ्जने अभ्यञ्जने च । ५।२।३। ४-५. * दैवतावदानादिप्रदानान्तेन, विभिन्नदेवताकस्थले असंबन्धिपदार्थान्तरव्यवधानेऽपि पञ्चावत्तहोमसंपादकत्वेन, दैवतावदानस्यापि प्रदानावयवत्वोपपत्तेः। एकदेवताके तु पदार्थावयवानामेव अनुसमयः। **भाट्ट.** ५।२।६, * द्विरवदानेन सांनाय्ये । ५।२।३, * नेत्रद्वयाञ्जनेन साङ्गेन अञ्जने अहीने। ५।२।३. * मध्यपूर्वार्धसमुदायेन द्व्यवदानेन अवदाने। **भा.** ५।२।३। ४-५, * मुष्टिचतुष्टयसमुदायेन निर्वापे। ५।२।३। ४-५. * **काण्डानुसमयः** अनेकाश्वप्रतिग्रहस्थले वारुणचतुष्कपालेषु एकैकस्य एकदा सर्वधर्मानुष्ठाने । **वि.** ५।२।२, * **पदार्थानुसमयः** अग्नीषोमीये पशौ दैवताद्यवदानेषु। ५।२।६, * पदार्थानुसमयः वाजपेयपशूनां सर्वेषां एकदा उपाकरणादिधर्माणामनुष्ठाने। ५।१।१.

* किं नाम **अनुसमेयपदार्थानां** पदार्थत्वम् ? अत्र 'कृष्णाजिनास्तरणन्यायः' इति भाष्यीयाधिकरणे 'भाट्ट' प्रघट्टके द्रष्टव्यम्।

* '**अनूचानः** (–प्रवचने साङ्गेऽधीती गुरोस्तु यः' इत्यमरः)। 'कामं तु योऽनूचानः श्रोत्रियः स्यात्, तस्य प्रवृञ्ज्यात्' इत्यनूचानग्रहणं ब्राह्मणस्य अनुवचनसंबन्धात् क्षत्रियवैश्यनिवृत्त्यर्थं भविष्यति। (विस्तरस्तु प्रवर्ग्याधिकरणे द्रष्टव्यः)। **वा.** ३।३।१२।३३ पृ. ८८०. * अनूचानव्यतिरिक्तकर्तृके अग्निष्टोमप्रयोगे एवायं

' न प्रथमयज्ञे प्रवृञ्ज्यात्' इति निषेधः । वि. ३।३।१७.

* **अनूद्यमानस्य** न श्रुतमपि विशेषणं भवति इति ग्रहाधिकरणे ( ३।१।७ ) साधितम् । **वा.** ३।४।४।१३ पृ. ९४३.

* **अनृक्काणि सामानि** पञ्चविंशत् । अर्कग्रीवं एकम् । पञ्चानुगानमध्ये सामत्रयम् । हाउहोवा साम एकम् । हाउवाक् सामानि त्रीणि । वाचोव्रते द्वे । सत्रस्पर्धि एकम् । परमेष्ठिसाम एकम् । आङ्गिरसव्रतं एकम् । इलान्दं एकम् । सधस्थं एकम् । देवव्रतानि त्रीणि । कत्पयग्रीवं एकम् । प्रजापतेर्हृदयं एकम् । अनडुद्व्रतं एकम् । महादिवाकीर्त्यानि नव । सत्त्वाभूतं एकम् । आदित्यात्म एकम् । इन्द्ररोचनं एकम् । इडानां संक्षारः एकम् । इति । **बाल.** पृ. ७२-७३.

* **अनृतम्** । ' दयेत त्वेतेन ' इति शास्त्रेण अनृतस्य दयार्थे प्राप्तिः । **सु.** पृ. १३९३, * **अनृते** प्रायश्चित्तं ' गायत्रीमनृते जपेत् ' इति यज्ञाङ्गत्वानपेक्षस्य निषेधातिक्रमस्य प्रायश्चित्तम् । पृ. १४६२, * **अनृतनिषेधस्य** क्रतुगतपुरुषधर्मत्वे यजमानेनैव अनृतं वर्जनीयं, क्रतुधर्मत्वे तु यजमानेन ऋत्विग्भिश्च इति प्रयोजनविशेषः । पृ. १३९५. * **अनृतभाषणं** आचार्यब्राह्मणवधार्थे अनाचारः । **वा.** १।३।३।७ पृ. २०४, * **अनृतवदनात्** नरकप्राप्तिर्भवति । ३।४।४।१३ पृ. ९११. * **अनृतवदननिषेधः** स्मार्तः पुरुषार्थः । तत्र स्मार्तं प्रायश्चित्तम् । यागाङ्गानृतवदनप्रतिषेधस्तु ततो भिन्नः, तत्र क्रतुगामि प्रायश्चित्तम् । **वि.** ३।४।८, * **अनृतवदननिषेधस्य** क्रतुधर्मता, दर्शपूर्णमासयोः । ३।४।८.

**अनृतवदननिषेधैदमर्थ्यावधारणन्यायः** । अनृतवदनन्यायः । अनृतवदनप्रतिषेधन्यायः । अनृतवदनवर्जनन्यायः । अनृतवदननिषेधो दर्शपूर्णमासगतः क्रत्वर्थः ।

**अकर्म क्रतुसंयुक्तं संयोगान्नित्यानुवादः स्यात् । ३।४।४।१२ ॥**

**भाष्यं**—दर्शपूर्णमासयोराम्नायते ' नानृतं वदेत् ' इति । तत्र संदेहः किमयं प्रतिषेधो दार्शपौर्णमासिकस्य पदार्थस्य, प्रकरणे एव निवेशः, अथ प्रायेण प्राप्तस्य कर्मणः पुरुषं प्रति प्रतिषेधः, पुरुषधर्मोऽयमिति । किं प्राप्तम् ? पुरुषधर्मः स्यात् । पुरुषस्यायमुपदिश्यते, न दर्शपूर्णमासयोः । कुतः ? पुरुषवचनस्य श्रवणात् वदेदिति । वदनमनुतिष्ठेदिति श्रुत्या गम्यते, तस्य पुरुषसंबन्धः श्रुत्यैव, कर्मसंबन्धः प्रकरणात्, श्रुतिश्च प्रकरणाद्बलीयसी । इतरथा वदनं भवतीत्येतावति अर्थे वदनमनुतिष्ठेदित्यविवक्षितस्वार्थः परार्थो विध्यर्थो भवेत् । पुरुषस्योपदेशे पुनर्विवक्षितस्वार्थः एव शब्दः । तस्मात् पुरुषस्योपदेशः । यस्य चोपदेशस्तस्यायं प्रतिषेधः । स चायमर्थ उपनयनकाले एव पुरुषस्य प्रतिषिद्धः, तेन संयोगेनायं नित्यानुवादः । नन्वेषा श्रुतिस्तस्याः स्मृतेर्मूलम् । नैषा तस्या मूलं भवितुमर्हति । यदि इयं तन्मूलिका भवेत्, दर्शपूर्णमासयोरिति स्मर्येत । उपनयनकाले एव चास्योपदेष्टारो भवन्ति । अपि च पुरुषधर्म इत्युपदिशन्ति । तस्मान्नैषा स्मृतिरतः श्रुतेरिति ।

**वा**—तेनैव श्रुत्यादित्रयस्य प्रकरणेन सह विरोधाविरोधविचारप्रस्तावेन दर्शपूर्णमासादिप्रकरणगताः पूर्वमनवधारितक्रत्वर्थपुरुषार्थपदार्थविषयाः 'नानृतं वदेत् ' इत्येवमादयः प्रतिषेधाः सामर्थ्यप्राप्तानृतवदनादीनि प्रतिषेधन्तः उदाहरणम् । तेषु संदेहः किं क्रत्वर्थाः, पुरुषार्था इति । ततः सर्वप्रतिषेधानां प्रवृत्तिविषयत्वात् तदवधारणाधीनो निर्णयः, इति सैव ( प्रवृत्तिः ) प्रथमं विचारयितव्या किमर्था सती प्रतिषिध्यते इति । यदर्था चासौ निर्धारयिष्यते, तदर्थः प्रतिषेधो विज्ञास्यते । नहि अन्यार्थायाः प्रतिषेधः अन्यार्थो भवति, अनाकाङ्क्षितत्वात् । सर्व एव यो यदर्थप्रवृत्तः सन् निवार्यते, स तदर्थमेव प्रतिषिद्धो भवति इत्यवधार्यते । तस्मात् प्रवृत्तिकैमर्थ्यचिन्ता । प्रवृत्तीनामपि अभिधायकाख्यातवशेन ऐदमर्थ्यं निरूप्यते, इति आख्यातशब्दाश्चिन्तयितव्याः ' किमर्थाः पुनः प्रवृत्तीरुपादातुं शक्नुवन्ति ' इति । तावच्च प्रतिषेधैरुदासितव्यं, यावत् आख्यातनिर्णयो न जातः । तेन एतदुक्तं भवति, ' ये पुरुषार्थपदान्तरेणासंबद्धाः प्रकरणगता विषयः, ते किमर्थां भावनामभिदधति ' इति । ततश्च एतस्मिन्नेव काले 'समिधो यजति' ' तनूनपातं यजति ' इत्येवमादयोऽपि सर्वे उदाहरणं किं

क्रत्वर्थं समिधो यजति, उत पुरुषार्थं इति। तथा किं क्रत्वर्थं ( अनृतं ) वदेत्, उत पुरुषार्थमिति। वदर्थं च वदनं तदर्थस्यैव अनृतपदं विशेषणम्। प्रतिषेधवेलायां च तत्परो विधिः, इति शेषं अवधारितैदमर्थ्यं अनुवदितव्यम्। ततश्च एकत्र ( लिङो निषेधपरत्वे ) एवं वचनं व्यज्यते 'यत् पुरुषार्थमनृतवदनं, तन्न कुर्यात्' ( इति )। अपरत्र ( नञो निषेधपरत्वे ) तु एवं 'यत् क्रत्वर्थमनृतं वदेत्, तन्न' इति। ततश्च एतस्य सर्वस्य आख्यातनिरूपणायत्तत्वात् तद्गतोऽयं विचारो भविष्यति किमाख्यातेन कर्ता अभिधीयते, नेति। ( इत आरभ्य 'अभिधानानभिधानविचारः' इत्यन्तो वार्तिकग्रन्थः ( पृ. ९०८ पं. ७) प्रच्छिद्य कर्त्रधिकरणे निवेशितः)। किं प्राप्तं ? प्रायेण वाचः अनृतवादिनीत्वात् यत् पुरुषस्य आत्मार्थे वदने अनृतं प्रसक्तं, तस्यैव प्रतिषेधः पुरुषाणां प्रत्यवायपरिहारार्थो विधीयते इति। कुतः ? **'वदेदिति श्रुतेरत्र पुरुषः संप्रतीयते। विधिरप्यर्थवानेवं, क्रत्वर्थेऽनर्थको भवेत् ॥'** समानपदोपात्तेन हि कर्त्रा संबन्धः श्रौतत्वात् प्रकरणं बाधते। योऽपि विधिव्यापारः, सोऽपि पुरुषार्थधर्मपक्षे अत्यन्ताप्राप्तो, विधीयमानः अर्थवान्। क्रत्वर्थपक्षे तु प्रयोगवचनेनैव उपनीतमात्रधात्वर्थविधानात् प्राप्तात्मिको विधिः अनर्थकः स्यात्। तत् दर्शयति ( भाष्यं– ) 'इतरथा वदनं भवति इत्येतावत्यर्थे' सकर्तृकं सविधिकं च पदं 'वदनमनुतिष्ठेत्' इत्येवंरूपं अनर्थकं स्यात्। तस्मात् विधयस्तावत् पुरुषार्थाः। ततश्च प्रतिषेधानामपि तदनुसारित्वात् पुरुषार्थत्वसिद्धिः। ततः आत्मोपकाराय 'पुरुषो नानृतं वदेत्' इति शास्त्रार्थोऽवधार्यते। सूत्रमिदानीं योजयति ( भाष्यकारः ) स चायमर्थः पुरुषस्य प्रागेव दर्शपूर्णमासाधिकारात् उपनयनसमकालमेव स्मृतितः प्राप्तः, तेन पुरुषस्य संयोगात् क्रतुसंयुक्तवदनं नित्यानुवादः। कथं पुनः पुरुषार्थतायां क्रतुसंयुक्तग्रहणं ? उच्यते। **'सिद्धान्ते क्रतुसंयुक्तं समाम्नायेन वोच्यते। यद्वा प्रकरणप्राप्त्या संयुक्तं बाधगोचरः ॥'** यदेतत् क्रतुसंयुक्तमभिप्रेतं, क्रतुसंयुक्तं वा समाम्नातं, प्रकरणाद्वा यत्क्रतुसंयुक्तं प्राप्तं, तत् पुरुषार्थभूतत्वात् नित्यानुवादः स्यादिति। 'ननु एषा श्रुतिः तस्याः स्मृतेर्मूलं' इति ( भाष्यम् )। **'सर्वा तावत् स्मृतिर्नित्यं श्रुतिमूलप्रमाणिका। तेन स्मृत्यर्थवाचित्वान्नानुवादो भवेदसौ ॥'** यदि तु स्मृतेः स्वातन्त्र्येण प्रामाण्यं भवेत्, ततः तद्दर्शनेन श्रुतिः नित्यानुवादो भवेदपि। तस्यास्तु मूलभूता श्रुतिः अवश्यं कल्पनीया। तत् किमन्यां कां चित् कल्पयित्वा इयं अनुवादीक्रियतां, उत इयमेव मूलं भवतु इति, अस्यां प्रत्यक्षेणोपलभ्यमानायां नान्यस्याः कल्पनायां प्रमाणमस्ति। द्वयं हि तथा निष्प्रमाणकमाश्रीयेत, श्रुतपरित्यागाश्रुतकल्पनाऽभ्युपगमात्। तस्मात् नित्यानुवादो नेति।

यत्तु अत्रोत्तरं ( भाष्ये उक्तं ) 'दर्शपूर्णमासयोरिति हि स्मर्यते, उपनयनकाले एव चास्योपदेष्टारो भवन्ति। अपि च पुरुषधर्मं इत्युपदिशन्ति। तस्मान्नैषा स्मृतिः, अतः श्रुतेः इति।' नैवैतत् पौर्वापर्येण संबद्धं दृश्यते। तथाहि। **'यदि प्रकरणं त्यक्त्वा पुरुषार्थेयमिष्यते। ततः स्मृतिसमानार्था नेष्टा मूलं कथं श्रुतिः ॥'** यदि हि क्रत्वर्था सती श्रुतिः मूलत्वेनाभ्युपगम्यते, तत उभयोर्मूलमूलिनोः ऐकरूप्यस्वाभाव्यात्, अस्याश्च अतद्रूपत्वात् मूलत्वं न स्यात्। इयं तु यतः प्रकरणं बाधित्वा पुरुषार्थधर्मत्वेन स्थापिता, तेन उपनयनसमकालमेव प्राप्नुवती किमिति श्रुतिः स्मृतेर्मूलं न भविष्यति, किमिति वा दर्शपूर्णमासयोरिति स्मर्यते, का च उपनयनकालपुरुषार्थत्वोपदेशयोर्विरुद्धता। तेन अयुक्तं मूलत्वनिराकरणमिति। ( आक्षेपं निरस्यति– ) नैष दोषः। कथं ? **'पूर्वपक्षास्त्रयो ह्यत्र भाष्यकारस्य संमताः। पूर्वस्मिन् मूलमूलित्वं, परयोस्त्वनुवादता ॥'** यदि अत्र केवलपुरुषधर्मत्वमेव पूर्वपक्षः स्यात्, ततोऽयं असंबद्धो ग्रन्थो भवेत्। इह तु एतद्ग्रन्थान्यथाऽनुपपत्त्यैव त्रयः पक्षाः क्रमवन्तो हृदये वृत्तिकारस्य विपरिवर्तमाना गम्यन्ते। तत्र प्रथमं तावत् सूत्रनिरपेक्षः केवलपुरुषार्थत्वपक्षः। तस्मिंश्च नैव स्मृतिरुपन्यस्यते। यदि तु अवश्यमुपन्यसितव्या, ततो मूलमूलिभावाभ्युपगमेनैव नेतव्या। तस्मिंस्तु विध्यनुवादविकल्परहिते परिगृहीते

सूत्रपदागमितं पश्यन् अनुवादत्वसमर्थनार्थं क्रतुयुक्तपुरुषधर्मपक्षं हृदि कृत्वा 'स चायमर्थ उपनयनकाले एव प्रतिषिद्धः' इति ब्रवीति । तत्र परः तमेव केवलपुरुषार्थत्वपक्षमङ्गीकृत्य मूलत्वप्रतिपत्त्या अनुवादत्वमाक्षिपति । सिद्धान्तवादी तु 'नैषा तस्या मूलं' इति ब्रुवन् इमं पक्षं परिगृह्णाति । नैव केवलपुरुषार्थत्वं मया अङ्गीकृतं, किं तर्हि 'प्रकरणविशेषाद्वा तद्युक्तस्य तत्संस्कारो द्रव्यवत्' (३।४।५।१५) इत्यनेन क्रतुयुक्तपुरुषधर्मः अभिक्रमणवत् विज्ञायते, न सार्वत्रिकः । एवं श्रुतिः प्रकरणं च उभयमपि अनुग्रहीष्यते । ततश्च स्मृतिः अविशेषेण प्रवृत्ता न विशेषस्थया श्रुत्या मूलतो निराकाङ्क्षीकर्तुं शक्यते. इत्यवश्यं आत्मानुरूपश्रुत्यन्तरं मूलं कल्पयति । तस्मिंश्च कल्पिते तदर्थैकदेशान्तर्गतत्वात् दर्शपूर्णमासयजिस्थः प्रतिषेधः अनुवादी भवति । यो हि उपनयनादारभ्य अनृतं वर्जयति, वर्जयतितरामसौ दर्शपूर्णमासस्थः । तस्मात् उपनयनमरणान्तरालवर्तित्वात् दर्शपूर्णमासयोः नित्यप्राप्त एव पुरुषस्य अनृतवदनप्रतिषेधः अनूद्यते, न मूलत्वम् । 'अपि च पुरुषधर्मः इत्युपदिशन्ति' इत्येतदपि (भाष्यं) केवलपुरुषधर्मोपदेशित्वेन स्मृतेः पूर्वेणैव (क्रतुयुक्तपुरुषधर्मत्वपक्षेणैव) योजयितव्यम् ।

अथवा अनेनैव पक्षान्तरं (शुद्धपुरुषधर्मक्रतुयुक्तपुरुषधर्मपक्षाभ्यां अन्यत्) परिगृह्यते । नैवात्र क्रत्वर्थपुरुषार्थोपन्यासः क्रियते, किं तर्हि ? दर्शपूर्णमासयोः अनृतवदनप्रतिषेधः श्रूयते, स किं अप्राप्तविधिः, उत प्राप्तानुवाद इति । किं प्राप्तं ? स्मृतिकृतात् संयोगात् नित्यानुवाद इति । **ननु** च अन्य एव स्मार्तः संयोगः पुरुषार्थः, अन्यश्चैष क्रत्वर्थ इति । **सत्यमेवं**, तथापि नित्यानुवादः । कुतः ?

**'पुरुषं हि परित्यज्य नानृतं प्राप्यते क्रतौ ।**
**पुरुषे तन्निषिद्धं चेन्निषिद्धं तत् क्रतावपि ॥'**

**यद्यपि** पुरुषार्थात् प्रतिषेधात् क्रत्वर्थः प्रतिषेधो विषयान्तरं भवति, तथापि प्रसङ्गोपनतार्थत्वात् न विधित्वं प्रतिपद्यते । नहि पुरुषः स्वार्थे चानृतं वर्जयिष्यति, क्रत्वर्थे च वक्ष्यति, इति संभवति । **तस्मात्** पुरुषार्थप्रतिषेधान्तरालपातित्वात् क्रतोरपि अस्त्येव प्रतिषेधः इति नित्यानुवादता । न च एतस्मिन् पक्षे मूलान्तरकल्पनाशङ्का, स्मृतौ पुरुषधर्मत्वोपदेशात् ।

अथवा आदित एवारभ्य ('नैषा तस्या मूलं' इत्यादि समस्तमेव भाष्यं) 'दर्शपूर्णमासयोः इति हि स्मर्येत' इत्यादि समस्तमेवोत्तरम् । (क्रतुयुक्तपुरुषधर्मत्वाशयेन अनुवादत्वे 'स चायं' इति भाष्येणोक्ते तदाशयाज्ञानात् 'ननु' इति भाष्योक्तायाः शङ्कायाः पूर्वपक्षाशयविवरणेन परिहारार्थं 'नैषा' इति भाष्ये क्रत्वर्थत्वाशयायोगमाशङ्क्य योऽर्थो 'नानृतं वदेत्' इत्यनेन श्रुतिबलात् प्रकरणं बाधित्वा पुंसो निषेध्यः, स स्मृत्यैव निषिद्धः, तेन पुरुषार्थेन निषेधसंयोगेन क्रतावपि प्रसङ्गात् निषेधसंयोगासिद्धेः नानुवादोऽयमिति– सुधा. पृ. १३८७) । अतो मूलान्तरप्रभवस्मृत्यर्थानुवादमात्रमेव क्रतुप्रशंसार्थम् । अन्यार्थप्रसक्तैरपि एवमादिभिः क्रतुर्युज्यमानो बह्वङ्गत्वेन प्रशस्तः प्रतिभाति, इत्यर्थवादता ।

**विधिर्वा, संयोगान्तरात् । १३ ॥**

**भाष्यं**—विधिर्वा अयं दर्शपूर्णमासयोः 'नानृतं वदेत्' इति, नानुवादः । कुतः ? संयोगान्तरात् । नियमानुष्ठानेन पुरुषस्य संबन्धः स्मर्यते, पदार्थप्रतिषेधेन इह संयोगः पुरुषस्य । कथमन्यत् श्रूयमाणं अन्यस्यानुवादो भविष्यति ? तस्मात् विधिः प्रतिषेधस्यायम् । आह– गृह्णीम एतत् विधिरिति, पुरुषधर्मः इति तु गृह्णीमः, पुरुषप्रयत्नस्य श्रुतत्वात् । अत्र ब्रूमः । (इतः परं कर्त्रधिकरणं पृथक् कृत्वा 'कर्त्रधिकरणं' इति बिन्दौ निवेशितम् । तत् तत्रैव द्रष्टव्यम् । तत्र भा. पृ. ९१३ आरभ्य भाष्यम् ।)

**वा**—केवलपुरुषार्थत्वपक्षे तावत् भाष्यकारः संयोगान्तरं वर्णयति । स्मृतौ हि 'सत्यं ब्रूयात्' इति धर्माय सत्यनियमः श्रूयते । 'नानृतं वदेत्' इति तु अनृतप्रतिषेधः । भिन्नौ चैतौ अर्थौ । न चान्यत् श्रूयमाणं अन्यस्य श्रूयमाणस्यानुवादो भवति । तस्मात् विधिः । **ननु** द्वयी एव पुरुषस्य वाक्यप्रवृत्तिः सत्यवचनं अनृतवदनं च । तत्र यदा सत्यं नियतं, तदा अर्थादेव अनृतं प्रतिषिद्धं भवति, इत्यनुवादत्वं प्राप्नोत्येव । **नैतदेवम्** ।

कुतः ? संयोगान्तरादेव । स नामानुवादो भवति, यः अत्यन्तसमानार्थत्वेनावधार्यते । अस्ति च विधिप्रतिषेधयोः फलभेदादर्थभेदः । कथम् ? **'विधिः प्रवर्तमानो हि श्रेयःसिद्ध्यै प्रवर्तते । प्रतिषेधः पुनः पापान्निवर्तयति भेदतः ॥'** 'सत्यं ब्रूयात्' इत्यस्यां हि भावनायां प्रयोजनाकाङ्क्षा सर्वविधीनां पुरुषार्थफलत्वात् स्वर्गादिना निवर्त्यते । तेन एषोऽर्थः 'सति वचनद्वयेन व्यवहारे सत्यवचनेन व्यवहरन् अभ्युदयेन संबध्यते' इति । तत्र सत्यं ब्रुवाणस्य स्वर्गो भवति । अनृतवादिनस्तु न गुणः, न दोषः । तथा 'नानृतं वदेत्' इत्यनेनापि प्रतिषेधेन अनृतवदनात् नरकप्राप्तिर्भवति, सत्यवदनात्तु न दोषः, न गुणः । तस्मात् अर्थभेदात् उभयोरपि अपुनरुक्ततया विधित्वम् । आह, भवेदेतत् संयोगान्तरं, यदि स्मृतौ 'सत्यं ब्रूयात्' इत्येतावन्मात्रमेव उच्येत । तस्यां तु सत्यवचनविधिवत् अनृतप्रतिषेधोऽपि भेदेन स्मर्यते । तस्मात् न संयोगान्तरमिति । **उच्यते** । **'प्रजापतिव्रतस्थत्वात् तत्रानीक्षणयुक्तितः । पर्युदासेन सत्यस्य विधिरित्यवगम्यते ॥'** 'अननृतं हि वदेत्' इत्येवं हि तत्रापि नियम्यते । ततश्च अस्त्येव संयोगान्तरम् । नहि दार्शपौर्णमासिके कश्चित् पर्युदासहेतुरस्ति व्रतशब्दप्रयोगः, विकल्पप्रसक्तिर्वा । शास्त्रप्राप्तप्रतिषेधेषु हि विकल्पो नार्थप्राप्तिपूर्वकेषु इति वक्ष्यति ( १०।८।१।१ ) । तस्मात् विधिरिति । ( केवलपुरुषार्थत्वपक्षे भाष्यकारीयसंयोगान्तरव्याख्यादूषणपूर्वकं स्वयं क्रतुयुक्तपुरुषार्थत्वपक्षे संयोगान्तरव्याख्यां प्रतिजानीते— ) यदा तु एवं प्रत्यवस्थीयते 'यथा प्रजापतिव्रतव्यतिरेकेणापि एवमादयः प्रतिषेधाः स्मृतिषु सन्तीति' तदा एवं संयोगान्तरं व्याख्यातव्यं **'स्मार्तः पुरुषमात्रस्य संयोगः स्वार्थसिद्धये । अयं तु क्रतुसंयुक्तपुरुषार्थः फलान्तरे ॥'** ननु एतेनैव हेतुना सामान्यप्राप्त्यपेक्षया विशेषस्यानुवादत्वं युक्तम् । नैतदस्ति । पूर्ववदेव फलभेदात् । यो हि स्मार्तः अनृतप्रतिषेधः, तेन एतावदवगतं 'आत्मदोषपरिहाराय पुरुषेण नानृतं वदितव्यं' इति । तत्र यदा दर्शपूर्णमासस्थोऽपि तदतिक्रमं करोति, तदा बाह्यातिक्रमवत् अस्य स्वयं प्रत्यवायमात्रं स्यात्, न कर्मफलप्रतिबन्धः । नहि शुद्धपुरुषधर्मातिक्रमैः क्रतवः प्रत्यवयन्ति । तथाहि **'यो नाम क्रतुमध्यस्थः कलञ्जादीनि भक्षयेत् । न क्रतोस्तत्र वैगुण्यं यथाचोदितसिद्धितः ॥'** क्रतवो हि स्वसंबन्धिनौ विधिप्रतिषेधौ अपेक्षमाणाः तदतिक्रमे सति विगुणा भवन्ति । ये पुरुषगता विधिप्रतिषेधाः, ते क्रत्वन्तरगता इव अस्य सदसद्भावयोः अविशिष्टाः । नहि तेषु गुणबुद्धिरुत्पन्ना, येन अतिक्रमे वैगुण्यबुद्धिः स्यात् । तेन दर्शपूर्णमासयोः अनृतं वदन् नरकं च प्राप्नुयात्, दर्शपूर्णमासफलं चाविकलमेव आप्नुयात् इति च स्मृत्यर्थः । श्रौतः पुनः प्रकरणयुक्तपुरुषधर्मः इति (कृत्वा) अत्र (श्रौते निषेधे) एषोऽर्थो विज्ञायते 'वर्जितानृतवचनकेन पुरुषेण क्रतौ दर्शपूर्णमासौ फलं साधयतः' इति । प्रकरणसामर्थ्याद्धि पुरुषगतं अपूर्वसाधनत्वं लक्षयित्वा अनृतं प्रतिषिद्धं, अतः तदतिक्रमे दर्शपूर्णमासापूर्वमेव वैगुण्यात् न स्यात्, न तु पुरुषस्यैव कश्चित् प्रत्यवायः । नहि तदानीं प्रत्यवायः कल्प्यमानः स्वतन्त्रपुरुषसंबन्धित्वेन कल्पयितुं शक्यते । तस्मादस्ति ( क्रतुयुक्तपुरुषधर्मत्वपक्षे ) संयोगान्तरम् । इति विधिः । एवं शुद्धक्रतुधर्मपक्षेऽपि क्रतुपुरुषप्रत्यवायविशेषात् संयोगान्तरं व्याख्येयम् । ( क्रत्वर्थत्वपक्षेऽपि क्रत्वर्थनिषेधातिक्रमे क्रतोर्वैगुण्याख्यप्रत्यवायपरिहारः फलं संभवतीति ) । तेन नित्यानुवादस्तावत् न भवति । यस्तु क्रतुधर्मत्वतद्गतपुरुषधर्मत्वयोर्विशेषः ( फलविशेषः ) तमुपरिष्टात् वक्ष्यामः । ( अधिकरणान्ते 'विधयोऽपि हि' पृ. ९४३ इति वार्तिके ) । उभयथाऽपि विधिसिद्धेः इदानीं नोपयुज्यते इति नोच्यते । परस्त्वाह 'गृह्णीम एतत् विधिरिति' । पूर्वोक्तेनैव कारणेन पुरुषधर्म इति वदामः । उभाविदानीं पूर्वपक्षौ आसाते यश्च पुरुषमात्रधर्म एव सत्यविधेः संयोगान्तरत्वेन, यश्च क्रतुयुक्तपुरुषधर्म इति । तत्राप्युत्तरम् । ( इतः परं 'सर्वाख्यातेषु कर्तृणां' इत्यादिवार्तिकं पृ. ९१३ आरभ्य 'तस्मान्नाभिधेयः कर्ता' पृ. ९४० इत्यन्तं कर्त्रधिकरणे द्रष्टव्यम् ) ।

**भाष्यं**— ( पृ. ९४० ) तस्मान्न श्रौतः ( कारकव्यापारः ) । न चेत् श्रौतः, न प्रकरणं बाधिष्यते ।

यत्तु पुरुषप्रयत्नः अनर्थको भवति, कर्मधर्मपक्षे प्रयोगवचनेन कर्तव्यतावचनादिति, **तदुच्यते** । अङ्गं सत् प्रकरणेन गृह्येत । न च अविहितमङ्गं भवति । तस्मादङ्गत्वाय विधातव्यं अस्मिन्नपि पक्षे । अतो मन्यामहे प्राकरणिकस्यायं निषेध इति । तस्मात् अङ्गं यदनृतं, तत् न वाच्यमिति । तेन यत् संकल्पितं, तदङ्गं, तदेव कर्तव्यम् । व्रीहिमयं संकल्प्य, न यवमयः ( पुरोडाशः ) प्रदेयः । **आह–** यदा उभयोरपि पक्षयोः नानृतं वदितव्यं, तदा को विचारणार्थ इति । **उच्यते** । पूर्वस्मिन् पक्षे पुरुषधर्मः, तत्र भ्रंशे स्मार्तं प्रायश्चित्तम् । सिद्धान्ते दर्शपूर्णमासधर्मः, तत्र भ्रंशे याजुर्वेदिकं प्रायश्चित्तम् ।

**वा**—ततश्च ( पृ. ९४० । कर्तुः आख्याताभिधेयत्वाभावात्, कारकव्यापारस्य– ) श्रौतत्वाभावात् न प्रकरणं बाध्यते । **यत्तु** कर्मधर्मपक्षे दर्शपूर्णमासविधिनैव विहितत्वात् प्रात्यात्मिको विधिरनर्थकः स्यात्, तस्मात् पुरुषार्थतेति, **तत्र ब्रूमः ‘ यावन्न विधिसंस्पर्शस्तावन्नास्य प्रयोजनम् । विना च तेन धात्वर्थो न क्रत्वङ्गं प्रतीयते ॥ ’** विधिरहितो हि धात्वर्थः स्वयमेव साध्यतां प्रतिपद्यमानः अनपेक्षितप्रयोजनत्वात् न शक्यते दर्शपूर्णमासकथंभावेन ग्रहीतुम् । न च तेनागृहीतः प्रयोगवचनेन विधातुं शक्यते । तस्मादवश्यं प्रात्यात्मिकेन विधिना साक्षात् पारंपर्येण वा पुरुषोपकारित्वं बोधयित्वा धात्वर्थं करणीकृत्य तदतिरिक्तप्रयोजनसाध्यापेक्षायां सत्यां संनिहितदर्शपूर्णमासोपकारसंबन्धे तया अङ्गत्वं कल्पयितव्यं, अन्यथा च इतरेतराश्रयं स्यात्, अङ्गत्वात् विधिः विधेश्चाङ्गत्वमिति । तस्मादर्थवान् अङ्गविधिः । अतश्च ‘ वदेत् ’ इत्यनेन एतावदवगतं ‘ दर्शपूर्णमासोपकारं वदनेन साधयेत् ’ इति । ततः अनृतपदसामर्थ्यात् एवं भवति ‘ यत् वदनेन कुर्यात्, तत् अनृतेन ’ इति। पुनश्च नञ्संबन्धात् ‘ यत् अनृतवदनेनोपकुर्यात्, तन्न ’ इति वचनं व्यज्यते । तस्मात् दर्शपूर्णमासोपकाराय वदतो यत् अनृतं प्रसज्यते, तत्प्रतिषेधो विधीयते । ततश्च यावत् ( यावान् ) कर्मार्थः संवादः, तत्र सर्वत्र अनृतं वर्जनीयम् । तेन ‘ यवमयः पुरोडाशः कर्तव्यः ’ इत्येवं आदौ अध्वर्युमुक्त्वा ‘ सक्तव्यं मे यवा सविष्यन्ति, तस्मात् व्रीहिमयः क्रियतां ’ इत्येवं न विसंवदितव्यम् । ‘ संकल्प्य ’ इति च तत्पूर्वत्वात् वदनमेव प्रतिलक्षयति । अथवा स्वेन वचनेन अध्वर्युमेव संकल्पं कारयित्वा इति द्विणिजन्तस्य रूपं द्रष्टव्यम् । **आह—** यदा स्मृतिप्राप्तनित्यानुवादे, संयोगान्तराच्च विधौ ‘ नानृतं वदितव्यं ’ इत्ययमंशस्तुल्यः, किं तदा चिन्तायाः प्रयोजनमिति । **तदुच्यते ‘ स्मृतिप्राप्तानुवादे हि स्मार्तं नैमित्तिकं भवेत् । विधिपक्षे यजुर्वेदविधेस्तद्भ्रेषजक्रिया ॥ ’** स्मृतौ च यत् अनृतवदननिमित्तं प्रायश्चित्तं तदेव ( गायत्रीमनृते जपेत् इति ) कर्तव्यं, यदि अनुवादः । विधौ पुनः अस्य याजुर्वेदिकत्वात् भ्रेषस्य, यजुर्वेदतो यज्ञो विनष्टः इति अन्वाहार्यपचने ‘भुवः स्वाहा’ इति होतव्यम् । स्मृतेस्तु अन्यतरमूलत्वानवधारणात् न वेदभ्रेषनिमित्तप्रायश्चित्तावधारणं स्यात् । एवं मूलमूलिभावाभ्युपगमेऽपि स्मृत्यैव (नानृतं ब्रूयात् इत्यनया) तदर्थः (निषेधार्थः) तदतिक्रमश्च अनुमृतः इति तदीयमेव प्रायश्चित्तम् । ननु तत्रापि याजुर्वेदिकत्वज्ञानात् तद्वेदप्रायश्चित्तमेव भवेत् । नैतदस्ति । एतद्धि आहवनीयादिविषयत्वात् आहिताग्न्यधिकारमवलम्बते, अनृतप्रतिषेधश्च पुरुषमात्रधर्मत्वात् अनाहिताग्नेरपि अवस्थितः, तेन अस्य तावत् अवश्यं स्मार्तं प्रायश्चित्तमपेक्षणीयम् । तच्चेदपेक्षितं, एकत्वान्निमित्तस्य आहिताग्नेरपि तदेव युक्तं, इति वैदिकप्रायश्चित्ताभावः । किंच **‘ यज्ञेऽन्यतमवेदाङ्गे भ्रष्टे नैमित्तिकं श्रुतम् । अयज्ञाङ्गविनाशे तु न तस्यावसरो भवेत् ॥ ’** ‘यदि ऋक्तो यज्ञ आर्तिमियात् ’ इति हि सर्वे भ्रेषाः यज्ञसंबन्धिनो निमित्तत्वेन श्रूयन्ते । ज्योतिष्टोमसंबन्धिनश्च प्रकरणादासन् । तत्र ‘वेदसंयोगान्न प्रकरणेन बाध्येत ’ ( ३।३।१८ ) इत्यनेन न्यायेन वाक्यबलीयस्त्वात् प्रकरणं तावदतिक्रम्येत, न तु यज्ञसंबन्धपरित्यागे हेतुरस्ति । तस्मात् अवगतवेदविशेषमूलेष्वपि पुरुषधर्मेषु न तन्निमित्तं प्रायश्चित्तं कर्तव्यम् । यदा तु फलकल्पनाभयात् प्रकरणाच्च क्रतुयुक्तपुरुषधर्मा भवन्ति एवंजातीयका इति पूर्वः पक्षः, शुद्धक्रतुधर्मत्वं च सिद्धान्तः, तदा उभयत्रापि याजुर्वेदिकयज्ञभ्रेषनिमित्तमेव प्रायश्चित्तं इति प्रयोजनान्तरं

वक्तव्यम्। तदुच्यते। '**विधयोऽपि हि पूर्वस्मिन् पक्षे संस्कारतां गताः। ते सर्वे याजमानाः स्युर्दीक्षासंस्कारवर्गवत्॥**' सर्वे हि समिदादयः क्रत्वन्तरगताः स्तोत्रशस्त्रजपादयश्च पूर्वपक्षवादिनः पुरुषसंस्काराः। ते च 'याजमानास्तत्प्रधानत्वात् कर्मवत्' (३।८।२।४) इत्यनेनाधिकरणेन याजमानाः स्युः। तत्र समिदादीनां यागात्मकत्वात् द्रव्यत्यागव्यापारेण दीक्षणीयादिवत् उभयथाऽपि याजमानत्वात् तद्वदेव च यजमानविवृद्धावपि तन्त्रेण प्रयोग इति न कश्चित् विशेषो दृश्यते। ये तु स्तोत्रशस्त्रजपादयः, ते गुणभूतकर्तृकर्मनियमसमर्थाः प्रधाननियमानधिकृतां प्रधानौद्गात्रादिसमाख्यां बाधित्वा दन्तधावनादिवत् यजमानकर्तृका भवेयुः। यजमानविवृद्धौ च साधारणद्रव्यस्यागन्यायेन तन्त्रत्वं न संभवति इति प्रतियजमानं भिद्येरन्। प्रतिषेधेष्वपि च यदा विध्यंश एवमवधारितः 'क्रतुयुक्तपुरुषोपकारि अनृतवदनं' इति, तदा अस्यैव अनृतविशिष्टप्रतिषेधात् अयमर्थो भवति 'यजमानेन आत्मसंस्कारार्थं आशीःप्रयोगादिषु यदुच्यते, तत्र वैकल्पिकावधारणे स्वरूपोच्चारणे वा मृषात्वं न कर्तव्यं, अन्यत्र तु अन्येषां च यथेष्टवादित्वं' इति। शुद्धक्रतुधर्मप्रतिषेधे तु 'यावत्क्रतौ किं चिद्वदनं (तत्र) यजमानस्य ऋत्विजां वा अनृतं प्रसज्यते तत् सर्वं न कर्तव्यं' (इत्यर्थः) क्रतुसंबन्धित्वाविशेषात्। अतश्च यथैव यजमानेन व्रीहिमयं संकल्प्य न यवमयो दातव्यः, तथैव अध्वर्य्वादिभिरपि 'अन्यतरं पक्षं करिष्यामः' इत्युक्त्वा न लाघवादिवशेन पुनर्विसंवदितव्यम्। यदपि च पुनः संस्कारार्थं किं चित्, तदपि क्रत्वर्थांशेनैव वर्जयितव्यम्। **ननु** च प्रतिषेधार्थे गुणभूतः पुरुषः, तत आध्वर्यवसमाख्या नियामिका, इति प्रणीताप्रणयनादिवत् अध्वर्युरेकः अनृतप्रतिषेधमवलम्बेत, सत्यमवलम्बेत, यदि प्रतिषेधार्थः अनुष्ठेयो भवेत्। अयं तु अनुष्ठानाभावात्मकत्वात् न कर्तृविशेषमपेक्षते। श्रुत्यैव (निषेध्यपदसाहचर्यलक्षणया) च प्रतिषेधः प्राप्त्या (निषेध्यप्राप्त्या) संबद्धः। सः (निषेधः) यत्र प्राप्तः, तत्र स्वसामर्थ्येन गच्छन् न शक्यते समाख्यया बाधयितुम्। **ननु** 'वदेत्' इत्येतावत् विध्यंशमात्रमालोच्यमानं समाख्या नियंस्यति, ततश्च प्रतिषेधोऽपि तदनुसारित्वात् नियतो भविष्यति। **नैतदेवम्**। पर्यवसिते हि शास्त्रार्थे तत्कर्तुरपेक्षायां सत्यां समाख्या अवतरति। न च 'वदेत्' इत्येतावतः शास्त्रार्थत्वं विज्ञायते। प्रतिषेधसंबन्धात् हि तत् अनुवादत्वेन स्थितम्। न च अनूद्यमानस्य श्रुतमपि विशेषणं भवति इति ग्रहाधिकरणे (३।१।७) साधितम्। किमुत समाख्यया विधीयमानपदार्थकर्तृविशेषसंबन्धमात्रे एव व्याप्रियते। '**तस्मादनूद्यमानत्वात् वदनं न विशेष्यते। प्रतिषेधोऽपि तद्गामी विशेष्टुं नैव शक्यते॥**' तस्मादस्ति सर्वत्र प्रयोजनं, अतः सम्यक् विचारितं इति सिद्धम्।

**शा**— क्रतौ पुरुषे च अर्थतः प्रसक्तं पदार्थं प्रतिषेधन्तः क्रतुप्रकरणगताः प्रतिषेधाः इहोदाहरणम्। दर्शपूर्णमासयोर्हि 'नानृतं वदेत्' इति श्रूयते। तत्र संशयः किमयं पुरुषधर्मः विधिः, उत क्रतुयुक्तपुरुषधर्मः अनुवादः, किंवा क्रतुयुक्तपुरुषधर्मः विधिः, उत शुद्धक्रतुधर्मः अनुवादः, अथवा शुद्धक्रतुधर्मः विधिः इति (**सोम**—किमयं विधिः, उत अनुवादः। विधिपक्षे किं शुद्धपुरुषधर्मः किंवा क्रतुयुक्तपुरुषधर्मः उत शुद्धक्रतुधर्मः। तथा अनुवादपक्षेऽपि किं क्रतुयुक्तपुरुषधर्मः उत शुद्धक्रतुधर्मः इति संशयनिष्कर्षः) तदर्थं च प्रतिषिध्यमाना क्रिया विचारयितव्या किमर्था सर्वा प्रतिषिध्यते, किं क्रत्वर्था किंवा पुरुषार्था इति। ततोऽपि पुनर्विचारयितव्यं किमाख्यातं कर्तारमभिधत्ते, न वेति। तत्र '**प्रतीतेः, स्मरणात्, कर्तृविशेषैरपृथक्श्रुतेः। कर्तृवाचित्वमाख्यातप्रत्ययस्यावसीयते॥**' वदेत् इत्याख्यातात् कर्तुः प्रतीतेः। 'कर्तरि कृत्,' 'लः कर्मणि च' इति स्मरणात्। पचति देवदत्तः इत्यादिकर्तृविशेषवचनैः देवदत्तादिपदैः अपृथक् श्रुतेः सहप्रयोगात् सामानाधिकरण्यात्। तदयमर्थः, यत् पुरुषोपकारितया प्रसक्तं वदनं तन्न तथा, किंतु अपकारमेवास्य साधयति। तेन श्रुत्या प्रकरणं बाधित्वा पुरुषार्थः प्रतिषेधः। यस्तु स्मार्तः प्रतिषेधः, तस्याप्येतदेव मूलं इत्येकः पक्षः। श्रुति-

प्रकरणयोरविरोधात् क्रतुयुक्तपुरुषधर्मोऽयं, 'कर्म कुर्वाणस्य अनृतं वर्जयितव्यं' इति । सोऽयं स्मृतिप्राप्तानुवादः इति **द्वितीयः पक्षः** । क्रत्वर्थ एव आरादुपकारकः प्रतिषेधः, सोऽपि तु अनुवाद एव इति **तृतीयः पक्षः । अत्राभिधीयते 'क्रत्वर्थत्वेऽपि यत् तावदनुवादत्वमीरितम् । तत्र संयोगभेदेन विधिरेव हि गम्यते ॥'** इदानीं क्रतुयुक्तस्य पुरुषस्य वा धर्मः, उत शुद्धक्रतुधर्मः इत्येतावदवशिष्यते । अत्रोच्यते '**आख्यातप्रत्ययाः सर्वे क्रियाया अभिधायकाः । तत एव प्रतीतस्य न कर्तुरभिधेयता ॥ न स्मृतिः कर्तृवाचित्वे संख्यावाचित्वगोचरा । सामानाधिकरण्यं च लक्षणातो गवादिवत् ॥**' तथा च श्रुतिविरोधाभावात् क्रत्वर्थः एवायं प्रतिषेधः । स च संयोगान्तरत्वात् नानुवादः ( क्रत्वर्थः संयोगः एकः, पुरुषार्थश्च संयोगः भिन्नः ) इति । ३।४।८.

**सोम**— पूर्वोक्तानुवादापवादात् **संगतिः । सूत्रार्थस्तु**— क्रतुप्रकरणाधीतं अकर्म अनृतवदनाद्यकरणं नित्यानुवादः स्यात्, तस्य स्मृत्या उपनयनप्रभृति पुरुषसंयोगात् इति ।

**वि**— 'अनृतं न वदेत् वैधः पुंधर्मो वाऽनुवादगीः । सक्रतौ पुंसि शुद्धे वा क्रतौ यद्वा विधिः क्रतौ ॥, अनृतोक्तेः पुमर्थत्वात् तन्निषेधस्तथाविधः । स्मार्तानुवादः पुंस्क्रत्वोः श्रुतिप्रक्रिययोर्वशात् ॥ नाख्याते पुरुषानुक्तिः क्रतावेव प्रयाजवत् ।, सत्योक्तिनियमादन्यः संयोगोऽतः क्रतौ विधिः ॥' वैधः विहितः प्रतिषेधः पुंधर्मः पुरुषार्थः इत्येकः पक्षः । सक्रतौ पुंसि क्रतुयुक्तपुरुषधर्मः प्रतिषेधः वाक्यं तु अनुवादगीः इति द्वितीयः । शुद्धे क्रतौ शुद्धक्रतुधर्मः, वाक्यं तु अनुवादः इति तृतीयः पक्षः सिद्धान्तः । ३।४।८.

**भाट्ट**— तत्तत्क्रतुप्रकरणस्थाः विधिप्रतिषेधविशेषाः 'समिधो यजति' 'नानृतं वदेत्' इत्यादयः किं शुद्धपुरुषधर्माः, उत क्रतुयुक्तपुरुषधर्माः, उत शुद्धक्रतुधर्माः इति विचारः । **यद्यपि** च प्रतिषेधस्य फलोद्देशप्रवृत्तकृतिकारकत्वेन विधेयत्वरूपं अङ्गत्वमेव दुर्वचम् । प्रतिषेधपदार्थस्य निवर्तनायाः वदनानुकूलकृत्यभावस्य वा संबन्धान्तरेण क्रत्वन्वयित्वेऽपि निमित्तादिवत् कृतिकारकत्वाभावात्, उपकारकत्वव्याप्यस्य अङ्गत्वस्य व्यापकाभावे असंभवाच्च । प्रतिषेध्यवदनादेस्तु क्रत्वङ्गत्वपुरुषाङ्गत्वे अविहितत्वादेव कृष्यादिवत् दूरापास्ते । अतः अङ्गत्वासंभवादेव तद्विशेषविचारासंभवः, **तथापि** प्रतिषेधस्य पुरुषार्थत्वं नाम पुरुषनिष्ठप्रत्यवायजनकक्रियाविषयत्वम् । क्रतुयुक्तपुरुषधर्मत्वं च क्रतुसंबन्धिपुरुषगतायोग्यतासंपादकक्रियाविषयत्वम् । शुद्धक्रतुधर्मत्वं तु क्रतुगतवैगुण्यापादकक्रियाविषयत्वम् । इदं च यत्र न प्रतिषेध्यक्रिया विशिष्य शास्त्रेण विहिता यथा प्रकृतोदाहरणे । यत्र तु सा विशिष्य विहिता यथा षोडशिग्रहणादौ, तत्र प्रतिषेध्यषोडशिग्रहणाभावेऽपि क्रतोः फलजनकत्वं इत्यस्यैव निषेधेन आक्षेपात् उक्तविधार्थानुमापकत्वेनैव प्रतिषेधस्य क्रत्वङ्गता इति ध्येयम् । अत एव गौणमुख्यसाधारण्येन अङ्गत्वमेव अध्यायार्थः इति न लक्षणासंगतिः ।

तत्र सत्यपि भावार्थाधिकरणोक्तन्यायेन भावनावाचित्वे आख्यातस्य कर्ताऽपि वाच्यः एकत्वादिवत् ततस्तस्यापि प्रतीतेः । 'कर्तरि कृत्' ( पा० ३।४।६७ ) इत्येतत्सूत्रस्थकर्तरीत्येतदनुकर्षणार्थचकारयुक्तेन 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( पा० ३।४।६९ ) इत्यनेन कर्तृकर्मभावानामपि आख्यातार्थत्वस्मृतेश्च । '**चैत्रः** पचति' इति **चैत्रादिपदसामानाधिकरण्याच्च** एवम् । स च 'भावप्रधानमाख्यातं' इति स्मृत्या एकत्वादिवदेव यद्यपि भावनां प्रति विशेषणत्वेनान्वीयते, तथापि उपस्थितत्वात् तद्वाचकपदान्तरमात्रकल्पनया तदुपकारस्यैव भावनायां भाव्यत्वेन अन्वयः न तु **कर्मणः**, विलम्बितप्रतीतिकत्वात् । इष्यते च गुणत्वेन प्रतीतस्यापि प्रयोजनाकाङ्क्षायां प्राधान्यं यथा पशुपुरोडाशादौ देवतादेः ( १०।१।९ ) । **विधिनिषेधाभ्यामपि स्वविषये** तद्गतेष्टानिष्टसाधनत्वाक्षेपाच्च एवमेव युक्तम् ।, **अतश्च विधिस्थले स्वर्गः, निषेधस्थले च प्रत्यवाय एव क्रियाफलं समानाभिधानविधिश्रुतिभ्यां, न तु क्रतूपकारः प्रकरणात् । एवं च यद्यपि आख्यातेन कर्ता नाभिधीयते,**

तथापि भावनया आक्षितस्य आख्यातेन लक्षितस्य च तस्यैवोपस्थितत्वात् तदर्थत्वकल्पनं न दोषः । अतश्च वैमृधवत् ( ४।३।११ ) प्रकरणबाधेन शुद्धपुरुषधर्मत्वावगतिः । तदा च अनृतवदनप्रतिषेधस्य उपनयनप्रभृति प्रवृत्तेः स्मार्तानृतवदनप्रतिषेधस्यापि इदमेव मूलं इति **प्रथमः पक्षः** । **द्वितीयस्तु**, सत्यपि पुरुषप्राधान्यावगमे स्वर्गप्रत्यवायादिकल्पनापेक्षया क्रतुगतफलाधानयोग्यत्वायोग्यत्वरूपसंस्कारस्यैव प्रकरणावगतस्य श्रुत्यपेक्षितस्य कल्पनं युक्तम् । अतश्च जञ्जभ्यमानमन्त्रवत् ( ३।४।५ ) एषां क्रतुयुक्तपुरुषधर्मत्वम् । तदा च ' प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ' इति स्मृतेः सनातनग्रहणेन सार्वकालिकविषयत्वावगतेरेतन्मूलकत्वासंभवेन मूलान्तरस्य आवश्यकत्वात् सर्वदा च अनृतं वर्जयतः क्रतौ अनृतप्रसक्त्यभावात् अनुवाद एवायम् । ( **तृतीयस्तु** ) अस्तु वा पुरुषार्थप्रतिषेधेन पुरुषस्यानृतवदने प्रत्यवायबोधनेऽपि क्रतुवैगुण्याद्यापत्तौ प्रमाणाभावात् यः प्रत्यवायं सोढ्वाऽपि क्रतुं सगुणं कर्तुमिच्छेत्, तस्य 'व्रीहिभिर्यक्ष्ये' इत्युक्त्वा संभवत्येव यवैर्यागे अनृतप्रसक्तिः इति क्रतुप्रकरणगतस्यापि निषेधस्य विधायकत्वम् । अतश्च एतदतिक्रमे श्रौतप्रायश्चित्तप्राप्तिश्च फलम् । **इति प्राप्ते,** सत्यं नानुवादः, क्रतुयुक्तपुरुषधर्मत्वे तु न किंचित् प्रमाणमस्ति । यद्यपि तावत् कर्ता वाच्यः स्यात्, तथापि तस्य वक्ष्यमाणरीत्या गुणत्वेनैवोपादानात् न तावत् शब्दत एव प्राधान्यम् । नापि पदान्तरकल्पनया वैमृधादिवत् कर्तुः प्रयोजनवत्त्वसिद्धयर्थं अवश्यं प्रकरणालोचने क्रियमाणे क्रतोरुपस्थितत्वेन तत्साद्गुण्यवैगुण्यपरिहारयोरेव प्रवर्ग्यन्यायेन ( ३।३।१२ ) कल्पयितुं युक्तत्वात् । अत एव यत्र पशुपुरोडाशादौ उद्देशांशस्य दृष्टविधया देवतासंस्कारकत्वात् नादृष्टोपकारकल्पना, तत्र संनिपत्योपकारकत्वलाभाय परंपराङ्गीकरणमप्यदोषः । जञ्जभ्यमानमन्त्रे तु वक्ष्यते ( ३।४।९ ) । प्रकृते तु समिदादेः प्रकृतापूर्वसाधनीभूतपुरुषोद्देशेन प्रकृतक्रतुफलाधानयोग्यतासंपादकतया विधाने गौरवापत्तेः लाघवात् प्रकृतापूर्वसाधनक्रतुगतसाद्गुण्यसंपादकत्वमेव समिदादीनाम् । अनृतवचनस्य च तद्गतवैगुण्यसंपादकत्वम् । अतः शुद्धक्रतुधर्मत्वमेव कर्तुर्वाच्यत्वपक्षेऽपि युक्तम् । **वस्तुतस्तु** न तस्य वाच्यत्वं, प्रतीतेरन्यथाऽपि उपपत्तेः । तथाहि, आख्यातात् तावत् कर्ता कृतिः एकत्वादिकं च प्रतीयते इत्यविवादम् । तत्र अनेकार्थबोधकपदे सर्वत्रैव एकत्र शक्तिः, अपरत्र आक्षेपादि इत्यपि तथैव । इतरथा अनेकशक्तिकल्पनाऽऽपत्तेः । तत्र च नियामकापेक्षायां प्रधानेन गुणभूतस्य लोके आक्षेपदर्शनात् प्राधान्यं तावन्नियामकम् । तच्च यथा ' सत्त्वप्रधानानि नामानि ' इत्यनया स्मृत्या कृदन्तादिनामसु सत्त्वरूपस्य कर्तुरेव प्राधान्यावगमात् वाच्यत्वं न कृतेः, लक्षणादिनाऽपि तत्प्रतीत्युपपत्तेः । एवं आख्याते ' भावप्रधानमाख्यातं ' इति स्मृत्या भावनाया एव प्राधान्यात् वाच्यत्वं नाश्रयस्य कर्तृकर्मादेः, लक्षणयाऽपि तत्प्रतीतेः । अत एव यत्र न किं चित् प्राधान्यनियामकं तत्रैव घटत्वादौ नागृहीतविशेषणान्यायः इत्यादि कौस्तुभे स्पष्टम् । यत्र तु न एकत्वादौ व्यभिचारादाक्षेपः, तत्र अतिरिक्तैव शक्तिः न तु कर्त्रादौ । या तु स्मृतिः, तत्र **प्राञ्चः** । ' द्व्येकयोर्द्विवचनैकवचने ' ' बहुषु बहुवचनं ' इति संख्याशास्त्रेण ' लः कर्मणि० ' इत्यादेरेकवाक्यता । अत्र हि द्व्येकयोः इत्यत्र भावप्रधानो निर्देशः, द्वित्वैकत्वयोरित्यर्थः । अन्यथा द्व्येकेषु इति बहुवचनापत्तेः । तथा च कर्त्रादौ वर्तमानेषु एकत्वादिषु लकारादेशभूततिबाद्येकवचनादीनि भवन्ति इति सूत्रद्वयार्थः, न तु कर्त्रादौ लकारः शक्त इति । न चैवं कर्त्रादेरनभिहितत्वात् तत्र तृतीयाद्यापत्तिः । शक्त्या अनभिधानेऽपि लक्षणया अभिधानादिति । ( ' अत्रानभिहितत्वं ' इत्यादिः ' न वैयर्थ्यं ' इत्यन्तो ग्रन्थः ' अनभिहितत्वं ' इति बिन्दौ प्रच्छिद्य गृहीतः । एवं च ) कर्तुरवाच्यत्वात् वाच्यत्वेऽपि वा प्राधान्यस्य दूरभ्रष्टत्वात् न क्रतुयुक्तपुरुषधर्मत्वम् । एतेन लक्षणया तस्योपस्थितत्वादेव तत्कल्पना इति निरस्तम् । **प्रयोजनं** तु आद्यपक्षे स्मार्तं प्रायश्चित्तम् । क्रतुपुरुषधर्मत्वे फलिसंस्कारकत्वात् यजमानेनैव विधिप्रतिषेधार्थसंपादनं, न तु समाख्यया अध्वर्युनियमः । शुद्ध-

क्रतुधर्मत्वे तु विधिषु सति संभवे तथा नियमः। निषेधेषु तु तस्याः नियमकत्वासंभवात् कर्तृमात्रेण वर्जयितव्यं इति। ३।४।८.

**मण्डन**—' क्रत्वङ्गभावोऽनृतवारणस्य। '

**शंकर**—' विधिर्नानृतमित्ययम्। १० '

* **अनृतवदननिषेधैदमर्थ्यावधारणन्यायः** ॥ उदक्यासंवादनिषेधस्य साक्षात् क्रतुयुक्तपुरुषार्थत्वप्रमाणाभावेऽपि प्रियासंवादस्य आनन्दजननसामर्थ्यात्मकेन लिङ्गेन क्रतु–अक्रतुयुक्तसर्वपुरुषार्थत्वावगतिसंभवात् सर्वप्रतिषेधानां प्रवृत्तिविषयत्वात् तदवधारणाधीनो निर्णयः इत्यादिकर्त्रधिकरणवार्तिकाभिहितेन अनृतवदनैदमर्थ्यावधारणाधीनतन्निषेधैदमर्थ्यावधारणन्यायेन उदक्यासंवादनिषेधस्यापि क्रतुयुक्तसर्वपुरुषार्थत्वावगत्युपपत्तिः। **सु.** पृ. १४७४. * **अनृतवदनन्यायः**। ' मलवद्वाससा न संवदेत ' इति प्रतिषेधः अनृतवदनन्यायेन क्रत्वर्थ एव इति पूर्वः पक्षः। **कु.** ३।४।११।२४. * **अनृतवदनप्रतिषेधन्यायेन** क्रत्वर्थस्य अवगोरणस्य प्रसज्यमानस्य प्रतिषेधः (इदं पूर्वपक्षे उक्तम्)। **वा.** ३।४।६।१७ पृ. ९४९, * मलवद्वासःसंवादस्य क्रतौ पुरुषे च अविशेषप्रसक्तेः अभिहितेन अनृतवदनप्रतिषेधन्यायेन ' पत्नि पत्न्येष ते लोकः ' इत्यादेः क्रत्वर्थस्य संवादस्य प्रतिषेधः इति प्राप्ते। ३।४।७।१८. * **अनृतवदनवर्जनन्यायः**। युज्यते च क्रत्वर्थतया प्रसक्तस्य अवगोरणादेः प्रतिषेधोऽपि अनृतवदनवर्जनन्यायेन क्रत्वर्थ इति वक्तुं पूर्वपक्षे। **कु.** ३।४।१०।२३.

* **अनेककर्तृकाख्यानरूप**पुराकल्पकल्प्यः उपाख्यानार्थवादकल्प्यः अर्थवादकल्पः विधिः यथा ' तावब्रूतामग्नीषोमौ आज्यस्यैव नौ उपांशु पौर्णमास्यां यजन् ' इति। **बाल.** पृ. १२.

* **अनेकगुणविधानं** अगुणविधिपरे वाक्ये भवति इत्युक्तं ' तद्गुणास्तु विधीयेरन्० ' ( १।४।६।९ ) इत्यत्र। **भा.** २।३।३।४ पृ. ५९३, * अनेकगुणविधानं समासेन विदधतो न दुष्करम्। प्रथमभक्षः इत्यत्र। ३।५।१३।३८. * अनेकगुणविधानं ' सर्वहुतः ' इति समासेन विदधतो नानेकगुणविधानं दुष्करम्। **टुप्.** ३।३।३।७. * **अनेकगुणविधानात्** वाक्यं भिद्येत। **भा.** ३।३।७।२१.

**अनेकदेहादानन्यायः**। केचित् मृते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थित एव तस्मिन् ऐश्वर्यवशात् अनेकदेहादानन्यायेन ( देहान्तरमाददते )। **शां. भा.** ३।३।१०।३२. ब्रसू.। एकस्यैव मायाविनो युगपदनेकदेहादानदृष्टान्तः अनेकदेहादानन्यायः। **न्यायनिर्णयः**। अनेकेषां देहानां युगपत् आदानं, तत्र या योगशास्त्रीया पद्धतिः प्रकल्पापूरादिका, अत्रापि चतुर्थे वक्ष्यमाणा च, सा पद्धतिः अनेकदेहादानन्यायः। **के.**

* **अनेकनिमित्तसंनिपाते** नैमित्तिकसाहित्यं युक्तम्। यथा युगपदनेकचण्डालादिस्पर्शादौ नैमित्तिकस्य तन्त्रेण सकृदनुष्ठानम्। यथा वा अनेकगृहदाहादौ। **भाट्ट.** ५।२।२.

**अनेकपितृकाणां तु पितृतो भागकल्पना** ( याज्ञ. स्मृ. २।१२० ) इति **न्यायः**। यदा अग्रे पुत्रा मृताः, पौत्रा एव च वर्तन्ते, तदा अग्रे पौत्रा एव स्वांशान् लभन्ते ' अनेक० ' इत्यनेन न्यायेन, ' भूर्या पितामहोपात्ता ' ( १२१ ) इत्यनेन च न्यायेन। **धर्मकोशे** व्यवहारकाण्डे मदनपरिजातः पृ. ६६०–६६२.

* **अनेकप्रधानेषु** संनिपातिनां पदार्थानुसमयः। **भा.** ५।२।१।१–२.

* **अनेकप्राप्तौ** नियमविधिर्लाघवात्। **वि.** ६।३।१३.

* **अनेकयजमानक**प्रतिपदः ज्योतिष्टोमादुत्कर्षः। ' युवं हि स्थः स्वर्पती इति द्वयोर्यजमानयोः प्रतिपदं कुर्यात्। एते असृग्रमिन्दव इति बहुभ्यो यजमानेभ्यः '। कुलाययज्ञे यजमानद्वित्वमाम्नातं सत्रेषु च **यजमानबहुत्वम्**। स्तोत्रोपक्रमे पठनीया **ऋक् प्रतिपत्**। **वि.** ३।३।१४.

* **अनेकलक्षणा** एकलक्षणया बाध्यते। यथा, दशमे ( १०।४।१।१ वर्णकं२ ) रथघोषेण इत्यत्र समाहारद्वन्द्वः इति पूर्वपक्षे पदद्वयलक्षणा स्यात्, तत्पुरुषे तु पूर्वपदे एवेति स एव युक्तः इति सिद्धान्तितम्। **बाल.** पृ. १४३.

* **अनेकविधौ** च वाक्यभेदात्। **वा.** ३।३।९।१७.

* **अनेकशब्दत्वं** एकशब्दत्वेन बाध्यते। यथा व्याकरणाधिकरणे (१।३।८)। **बाल. पृ.** १४०.

* **अनेकशब्दार्थत्वं** एकशब्दार्थत्वेन बाध्यते। अप्राप्तबाधः। **वा.** ३।३।७।१४ **पृ.** ८६०.

* **अनेकस्तोमकानां** एकस्तोमकानां वा सर्वेषामेव अग्निष्टोमविकाराणां अग्निष्टोमोत्तरकालता। **भा.** ५।३। १५।४३–४४.

* **अनेकार्थता** तर्हि दोषो भवति। नासौ अपूर्वकर्मचोदनायां दोषः। यथा– 'एतस्यैव रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो ह्येतेन यजेत' इति। **भा.** ११।२।१५।६४, * **अनेकार्थत्वं** (शब्दस्य) अन्यायः। अन्यायश्च अनेकार्थत्वम्। ३।२।१।१ **पृ.** ७४८. * अनेकार्थत्वं एकार्थत्वेन बाध्यते। यथा– आकृत्यधिकरणे द्वितीयवर्णके (१।३।९)। **बाल. पृ.** १४०, * **अनेकार्थविधानं** अल्पार्थविधानेन बाध्यते। यथा 'दध्ना जुहोति' इत्यादौ विशिष्टविधिः गुणविधिना। **पृ.** १४०. * अनेकार्थविधानं एकार्थविधानेन बाध्यते। अप्राप्तबाधः। **वा.** ३।३।७।१४ **पृ.** ८६०, * अनेकार्थविधानं प्रधानकर्मविधाने सति उपपद्यते। १।४। ३।३ **पृ.** ३२९, * **अनेकार्थविधानात्** वैरूप्यलक्षणो वाक्यभेदः स्यात्। यदि जाघन्युद्देशेन च कर्म विधीयते, पत्न्यश्चास्य विधीयन्ते ततः। ३।३।१०।२१ **पृ.** ८७०. * **अनेकार्थविधाने** वाक्यभेदः। पुंपशौ प्राप्ते स्त्रीपशुः, पशवः फलं, चित्रो गुणः इति न शक्यमेकेन वाक्येन विधातुम्। **भा.** १।४।२।३ **पृ.** ३२९. एकगुणविधानं गुणान्तरानाक्षेपात् अर्थापत्त्यभावे श्रौतानेकविधिव्यापारकल्पनायां पुनःपुनरुच्चारणं प्रत्ययस्य कर्तव्यं इति वाक्यभेदः स्यात्। आह च– 'अर्थादनेकमप्यर्थं विधापयति भावना। विशेषणविधिस्त्वन्यन्न गृह्णाति विशेषणम्॥' इति। **वा.**

**⧗ 'अनेकाश्रितत्वेऽपि योगस्य (द्व्याश्रयत्वेऽपि) भवत्यन्यतराश्रयो व्यपदेशः' इति न्यायः॥** दधिहोमसंबन्धस्य द्व्याश्रितत्वेन द्रव्यमात्राश्रितत्वाभावात् द्रव्यसंबन्ध(न्धि)त्वस्य असिद्धत्वमाशङ्क्य 'अनेका०' इत्यनेन न्यायेन एकाश्रितत्वाविरोधसूचनार्थः तच्छब्दः। **सु. पृ.** ७४२.

* '**अनेन जीवेनात्मनाऽनुप्रविश्य** नामरूपे व्याकरवाणि' इत्यत्र करणे तृतीया। **भाट्ट.** ३।४।८.

* **अनेन** (एतेन इत्यपि पाठः) '**राजपुरोहितौ यजेयाताम्**' इति कुलाययज्ञं प्रकृत्योक्तम्। तत्र राज्ञः पुरोहितौ इति समासं के चित् वदन्ति। राजपुरोहितश्च राजपुरोहितश्च इत्यस्मिन्नर्थे कृतैकशेषत्वात् उभयोः राज्ञोः पुरोहितौ इत्यन्ये। राजानौ च तौ पुरोहितौ च इति कर्मधारयमपरे। राजत्वपुरोहितत्वधर्मौ भिन्नजातिवर्तिनौ एकस्मिन् व्याहतौ। तस्मात् राजा च पुरोहितश्च इति द्वंद्वसमास एवात्र। तत्र वचनबलात् भिन्नकल्पयोरपि सहाधिकारः। उभयोः समप्रधानत्वात् नाराशंसतनूनपातौ विकल्प्येते। **वि.** ६।६।२.

* **अनैकान्तिकः** साध्यसंदेहजनको हेतुः। संदेहजनकत्वं च साध्यतदभावसंबन्धित्वज्ञानेन सत्प्रतिपक्षितत्वेन च। यथा नित्यः शब्दः, अमूर्तत्वात् इति। अत्र अमूर्तत्वं अनित्यक्रियादिसाधारणत्वात् साध्यसंदेहं जनयति। **मणि. पृ.** ४१.

* **अनैन्द्राणां** ग्रहाणां विकृतित्वात् तद्भक्षमन्त्रे इन्द्रः उपलक्षणीय इति चेन्न, अनैन्द्रेषु अमन्त्रकमेव भक्षणम्। नास्ति च प्रकृतिविकृतिभावः। क्त्वाचिन्ता। **वि.** ३।२।१७.

* **अनैन्द्राधिकरणम्**। ३।२।११।२८–२९, ३९, ४४। वसुमद्गणादिशब्दानां प्रातःसवनादिशब्दसामानाधिकरण्यं अनैन्द्राधिकरणे व्युत्पादयिष्यते। इदमेव इन्द्रपीताधिकरणम्। **सु. पृ.** ११३४.

* '**अनो ददाति**'। जातिशब्दोऽयम्। नायं तक्षणादिक्रियामतिदिशति। सिद्धमेव अनो देयम्। **वि.** ७।३।११. * **अनोबहुत्वं** दृश्यते 'अनांसि प्रवर्तयन्ति' इति। तस्मादपि अनोऽन्तरं उपादेयं ज्योतिष्टोमे पशुपुरोडाशादिनिर्वापार्थम्। **भा.** १२।१।७।१४–१६.

* **अनोवासःप्रभृतिशब्दानां** आकृतिनिमित्तता। **भा.** ७।३।११।२८–२९.

अनोवासोन्यायः । अनोवासःप्रभृतिशब्दानां आकृतिनिमित्तता ॥

**कर्मजे कर्म यूपवत् । ७।३।११।२८ ॥**

**भाष्यं**—क्व चित् श्रूयते 'वासो ददाति, अनो ददाति' इति । तत्र विचार्यते किं वाससः अनसश्च क्रिया प्राप्यते, उत नेति । तत्राह । एवं तावन्नः परीक्ष्यं किं कर्मनिमित्तौ एतौ शब्दौ, उत आकृतिनिमित्तौ इति । यदि कर्मनिमित्तौ ततः (क्रिया) प्राप्यते, अथ आकृतिनिमित्तौ ततो नेति । किं तावत् प्राप्तं ? कर्मनिमित्तौ इति । कुतः ? कर्मागमे तद्दर्शनात् । यदा यस्मिन् द्रव्ये दारुणि सूत्रे वा दारुकारेण तन्तुवायेन वा कर्म कृतं भवति, तदा एतौ शब्दौ प्रवर्तेते न प्राक् । अतो विज्ञायते कर्मनिमित्तौ इति । यदा कर्मनिमित्तौ, तदैतदारभ्यते कर्मजे कर्म यूपवत् । कर्मजे एतस्मिन् वासआदौ द्रव्ये श्रूयमाणे कर्म प्राप्यते । कथं ? यूपवत् । यथा यूपशब्दो जोषणादिक्रियानिमित्तः, स यत्र श्रूयते, तत्र जोषणाद्याः क्रियाः प्राप्यन्ते, एवमिहापीति ।

**सिद्धरूपं वाऽशेषभूतत्वात् । २९ ॥**

**भाष्यं**—अथोच्यते, नैतौ कर्मनिमित्तौ । किं कारणं ? ये नैमित्तिकाः शब्दाः, ते निमित्तमुपलभ्य प्रयुज्यन्ते, यथा दण्डी, छत्री इति । इमौ तु अनुपलभ्य क्रियां आकृतिमात्रे प्रयुज्येते । तस्मात् नैतौ क्रियानिमित्तौ इति । अथोच्येत, आकृत्या क्रियामनुमाय ततः शब्दं प्रयुङ्क्ते इति । अत्र ब्रूमः । प्रत्यक्षां आकृतिनिमित्ततां गम्यमानां उत्सृज्य अदृष्टायां क्रियायां निमित्तत्वकल्पनायां हेतुर्नास्तीति । यत्तूक्तं क्रियोत्तरकालं प्रवृत्तिदर्शनादिति, अत्र ब्रूमः । प्राक् क्रियाया आकृतिरनभिव्यक्ता, सा क्रियया अभिव्यज्यते । यतः क्रियोत्तरकालं शब्दप्रयोगः । तस्मादाकृतिनिमित्तौ । यदैवं, तदा सिद्धं रूपं देयम् । कुतः ? अशेषभूतत्वात् । नात्र क्रिया शेषभूता, क्रियावाचिनः शब्दस्याभावात् । यूपे तु प्रत्यक्षविहिता जोषणाद्याः क्रियाः । तस्मात् यूपवदिति अतुल्योपन्यासः ।

**टुप्**—आकृतिवचना एवैते । न क्रियामनुच्चरन्ति यथा लावकः पाचकः इति । अनेन शब्देन आकृतिर्बोध्यते, क्रिया लक्षणया, श्रुतिश्च लक्षणाया ज्यायसी ।

**शा**—इदानीं वासःप्रभृतीनां (शब्दानां) संस्कारनिमित्तत्वमेव अस्ति नास्तीति चिन्त्यते । (सिद्धान्तस्तु–) न क्रियाऽतिदेशकत्वं अनोवासःशब्दयोः इति ।

**सोम**—प्रासङ्गिकी संगतिः । 'वासो ददाति' इत्युपलक्षणम् । पुरुषव्यानारसाध्यानामेवार्थानां वैदिके कर्मणि विनियोगात् तद्वाचकाः सर्वे एव रूढशब्दा उदाहरणं, पूर्वोत्तरपक्षन्यायसाम्यात् । अत एव सूत्रेऽपि 'कर्मजे कर्म' इति सामान्येनैवोक्तम् । अत एव पूर्वं वासःप्रभृतीनामित्युक्तम् । एवं च बर्हिराज्यादीनामत्र लौकिकक्रियानिमित्तत्वाभावसाधनेऽपि लवनादिवैदिकसंस्कारपरत्वनिराकरणेन जात्यर्थत्वं बर्हिराज्यनयादिव्युत्पाद्यं (१।४।८।१०) इति बोध्यम् । **सूत्रार्थस्तु**—कर्मजे कर्म क्रिया ग्राह्या यूपवदिति ।

**वि**— 'वासोऽनसी वानतक्षणातिदेशकरे न वा ।, आद्यः क्रियानिमित्तत्वात्, जातिवाचित्वतोऽन्तिमः ॥'

**भाट्ट**— अनोवासःप्रभृतीनां पदानां किं तत्तदुत्पादकक्रियानिमित्तत्वं, उत जातिनिमित्तता इति अतिदेशसिद्ध्यर्थं विचार्यते । तत्र तक्षणादिक्रियाऽभावे तच्छब्दप्रयोगाभावात् तत्र क्रियानिमित्तका एवैते शब्दाः निर्मन्थ्ययूपादिशब्दवत् । अतश्च तद्वदेव 'अनो ददाति,' 'वासो ददाति' इत्यादौ तक्षणवानरूपक्रियाविशिष्टद्रव्यस्यैव दानाङ्गतया विधानात् तक्षणं वानं वा प्रयोगमध्ये कृत्वा अनो वासश्च देयम् । अत्र च तक्षणक्रियाया वस्तुत उपदेशोऽपि अन्यत्र लोकादौ क्लृप्ताया एव विधानात् अतिदेशत्वव्यवहारो भाक्त इति ध्येयम् । सर्वथा तक्षणादि प्रयोगमध्ये अनुष्ठेयम् । **इति प्राप्ते,** क्रियानाशोत्तरमपि जातिदशायां प्रयोगात् लाघवात्, यौगिकत्वाभावाच्च जातावेव शक्तिः । जातिस्तु परं क्रियाभिव्यङ्ग्या, तज्जनितसंयोगविशेषादिरूपफलाभिव्यङ्ग्या वा, इति तदुत्तरमेव शब्दप्रयोगः । न तु एतावता शब्दः क्रियावाची, इति तस्याः अविधेयत्वेन अनङ्गत्वात् लौकिकमेव सिद्धं

अनो वासश्च देयम् । निर्मन्थ्यशब्दस्तु यौगिक इति युक्तं तस्य मथनक्रियाविधायकत्वम् । यूपशब्दे तु क्रियानाशोत्तरं प्रयोगेऽपि तज्जन्यादृष्टविशिष्टकाष्ठवाचित्वात् न शुद्धजातिवाचित्वं, इति युक्त एव तत्र संस्कारातिदेशः । वस्तुतस्तु यूपकार्ये खलेवालीविधानात् यूपशब्दस्य न संस्कारादिशक्तत्वम् । संस्कारातिदेशस्तु स्थानापत्त्या, इति सूत्रोक्तयूपपदद्दष्टान्तोऽपि असंगत एव ।

**मण्डन**— ' नोत्पादयेद् वस्त्रमनश्च यज्ञे । '

**शंकर**— ' वासोऽनसोर्न क्रियाऽङ्गम् । '

* **अनोवासोऽधिकरणन्यायेन** पशुपुरोडाशे लोकसिद्धैकादशकपालस्यैव ग्रहणात् न प्रयोगमध्ये तत्करणावश्यकता इति पूर्वपक्षः । **भाट्ट.** १२।१।२, * **अनोवासोन्यायेन** प्रकृतौ पुरोडाशमात्रविधिपर्यालोचने चित्रेष्टौ लौकिकस्यैव पुरोडाशस्य ग्रहणप्राप्तौ । १०।२। ३०. * यत्र तु पिष्टतण्डुलादौ प्रदेयत्वेन श्रपणप्राप्तिः, पुरोडाशादिपदवाच्यपक्वपिण्डादिघटकपाकप्रयोजनकस्य तदभावे पेषणवत् लोपौचित्यात्, तत्र **अनोवासोन्यायेन** सिद्धस्यैव पिष्टस्य उपादानम् । **कौ.** ३।१।४–१० पृ. १५१. * 'यथाकथंचित्' –शब्देन विशसनाद्युत्पत्तिप्रकारनियमाभावं ' येनकेनचित् ' इत्यनेन च क्रयाद्युपादानप्रकारनियमाभावमुक्तं अनोवासोन्यायेन उपपादयितुं 'रूपं वा' इति सप्तमाधिकरणसिद्धान्तसूत्रं पठितम् । **सु.** पृ. १३०१.

* **अन्तरङ्गत्वाच्च** बार्हस्पत्यचरुनिर्वापादयः पूर्वभाविनः, पश्चात् सारस्वताज्यधर्माः, अध्वरकल्पायाम् । प्रथमभाविनः आग्नेयस्य हि विकृतिर्बार्हस्पत्यचरुः, पश्चाद्भाविनश्च उपांशुयाजाज्यस्य विकृतिः सारस्वतमाज्यं इति । **वि.** ५।१।१०.

**अन्तरङ्गबहिरङ्गयोश्च अन्तरङ्गं बलीयः इति न्यायः** ॥ तत् कस्य हेतोः ? अत्र हि पूर्वः प्रत्ययो भवेत् । ये धर्मा अपूर्वार्थाः, ते साक्षात् अपूर्वेण असंबध्यमानाः तदङ्गेषु विज्ञायन्ते । अतस्तत्र बुद्धिः अपूर्वासंभवेन निवर्तमाना अङ्गेषु प्रवर्तमाना अन्तरङ्गे तावदापतति । ततो व्यवहिते बहिरङ्गे । यत्र च पूर्वमापतति तत्रैव तिष्ठति, तदतिक्रमे कारणाभावात् । **भा.** १२।२।११।२७.

**अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति न्यायः** ॥ ( पृ. २००, ५२ परि. ) अत्र च ' प्रत्ययोत्तरपदयोश्च ' इति सूत्रं ज्ञापकम् । त्वकृतं इत्यादौ लुगपेक्षया अन्तरङ्गत्वात् विभक्तिनिमित्तकेन ' त्वमावेकवचने ' इत्यनेन सिद्धे इदं व्यर्थं सत् तज्ज्ञापकम् । इयं ' सुपो धातु० ' इति लुग्विषयैव इति केचित् । 'एङ्ह्रस्वात् संबुद्धेः' ' न यासयोः ' इति सूत्रस्थाकरप्रामाण्येन लुङ्मात्रविषया । अनेन न्यायेन अन्तरङ्गनिमित्तविनाशकलुकः तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यते । अन्तरङ्गानपि विधीन् इत्यादेरपि अस्यामेव ( अकृतव्यूहपरिभाषायां ) अन्तर्भावः । **शेखर.**

अन्तरङ्गेभ्यः नित्येभ्यः परेभ्यश्च कार्येभ्यः लुक् बलीयान् इति न्यायार्थः । ' ननु संज्ञाविषये यथोद्देशस्यैव ( पक्षस्य ) स्वीकारे ' राजन्+अस्, पुरुष+स्' इत्यवस्थायां पूर्वं भसंज्ञायां अल्लोपापत्तिः । **न च** अन्तरङ्गानपि इति न्यायेन अल्लोपो नेति **वाच्यम्** । यथोद्देशपक्षे ' अल्लोपोऽनः ' इत्यत्र ' यचि भं ' इत्यस्य अनुपस्थित्या ( सुपो धातुप्रातिपदिकयोः इति ) लुगुत्तरमपि भसंज्ञायाः सत्त्वेन लोपप्राप्तेः लुकः अन्तरङ्गनिमित्तविनाशकत्वाभावात् ' इत्युक्तं भूतौ । शङ्कान्तरे च ' अन्तरङ्गानपि इति न्यायेन भसंज्ञायाः पूर्वमप्रवृत्त्या दोषाभावात् ' इत्युक्तम् । पुनश्च " **न च** संज्ञाविषये अन्तरङ्गानपीतिन्यायाप्रवृत्तिः । अत एव ' ञ्नित्स्वरे प्रत्ययलक्षणप्रतिषेधः ' इति वार्तिकं संगच्छते । अन्यथा गर्गाः इत्यादौ इत्संज्ञायाः प्रागेव उक्तन्यायेन लुकि स्वराप्राप्त्या वार्तिकासंगतिः इति **वाच्यम्** । इत्संज्ञायां उक्तन्यायाप्रवृत्तिस्वीकारेऽपि संज्ञामात्रे अप्रवृत्तिस्वीकारे प्रमाणाभावात् " इत्युक्तम् । **भूतिः.** * वृषलपत्नीपुत्रः इत्यत्र अन्तरङ्गानपि इति न्यायेन विभक्तिलुकि प्रत्ययपरत्वाभावेन नादेशापत्तेः । **तत्त्वप्रकाशिका** पृ. ७७.

**अन्तरागर्भिणीन्यायः** । ' देशसंबद्धं ' (९।१।६।२०) इति सूत्रमारभ्य ' तद्देशानां ' ( ९।१। ६।२५ ) इति सूत्रपर्यन्तं एकमधिकरणम् । तत्र ' प्रणी-

तादि तथेति चेत्' (२३), 'न यज्ञस्याश्रुतित्वात्' (२४) इति सूत्रद्वयात्मकं अधिकरणान्तरं उक्ताधिकरणस्य अन्तरा वर्तते, तत्राह शास्त्रदीपिका— 'अथवा अनेन सूत्रद्वयेन अधिकरणान्तरं प्रस्तुताधिकरणसिद्धान्तस्य दृष्टान्तसिद्ध्यर्थं तदीयपूर्वपक्षन्यायेन च पूर्वपक्षं वक्तुं अन्तरागर्भिणीन्यायेन विचार्यते' इति। गर्भिणीशरीरमध्ये यथा गर्भशरीरं तथा एकाधिकरणमध्ये अपरमधिकरणम्। एकं शरीरं, अन्तरा अपरं शरीरम्। **के.** * तत्र एवं अन्तरागर्भिणीन्यायो भवति इति अन्यथा सूत्रं वर्ण्यते। **भा.** १०।३।१६।६०-६१. (मीमांसायां अन्तरागर्भिणीरूपाणि अधिकरणानि बहूनि वर्तन्ते। **के.**)

**'अन्तराऽनूच्यं' इति मध्यमस्य स्वरस्य विधिः ॥**

'अन्तराऽनूच्यं सदेवत्वाय' इति श्रुतौ अन्तरेत्यनेन दशहोतृव्याहृतिमध्यभागे सामिधेनीपाठविधानेन पाठक्रमादिबाधः। न च अन्तराशब्दः मध्यस्वरवाचकत्वेन कोशादिषु प्रसिद्धः, 'उच्चैर्ऋचा क्रियते' इत्यादिना स्वरस्य प्राप्तत्वेन तदनपेक्षणात्। **इति प्राप्ते,** 'यत् क्रौञ्चमन्वाह आसुरं तत्, यन्मन्द्रं मानुषं तत्, यदन्तरा तत् सदेवं' इति श्रुत्यन्तरगतान्तरापदेन तारमन्द्रोभयमध्यमभूमिकात्वेन स्वरविशेषं निर्दिश्य अन्तराऽनूच्यमिति विधाने तस्यैवोपस्थितेर्न तस्य क्रमविधायकत्वम्। **संकर्ष.** ४।१।२.

* 'अन्तराऽनूच्यं' इत्यादीनां वस्तुतस्तु न सामिधेनीमात्रोद्देशेन विधानं, प्रमाणाभावात्। अपि तु अनुवचनसामान्योद्देशेन। **भाट्ट.** ३।१।११, * 'अन्तराऽनूच्यं सदेवत्वाय' इत्यत्र सामिधेनीगुणा उक्ताः। ३।१।११.

* '**अन्तरिक्षे** च बहवः प्राणिनो वातनिर्मितैः। भ्रमन्ति लघुभिः सूक्ष्मैर्देहैर्भूम्याद्यनुग्रहात् ॥' **वा.** ३।१।७।१३ पृ. ७०२.

* '**अन्तरीयोत्तरीये** हि योषितामिव वाससी।' **वा.** १।३।२।४ पृ. १८८.

**अन्तरेणापि निमित्तशब्दं निमित्तार्थो गम्यते इति न्यायः ॥** अयं न्यायः 'द्विर्वचनेऽचि' (पा० १।१।५६) इति सूत्रे महाभाष्ये अभिहितः। **साहस्री.** १९०. 'तद्यथा दधित्रपुसं प्रत्यक्षो ज्वरः, ज्वरनिमित्तं इति गम्यते। नड्वलोदकं पादरोगः, पादरोगनिमित्तं इति गम्यते। आयुर्घृतं, आयुषो निमित्तमिति गम्यते' इति **भाष्यम्**। दधित्रपुसं इति समाहारद्वंद्वः कर्मधारयो वा। दध्येव विशिष्टावस्थायुक्तं त्रपुसं इत्युच्यते इति **कैयटः**।

* '**अन्तर्दशाहात्** स्यातां चेत् पुनर्मरणजन्मनी। तावत् स्यादशुचिर्विप्रो यावत् तत् स्यादनिर्दशम् ॥' इति पूर्वाशौचासमाप्तौ अशौचान्तरनिमित्तसंनिपाते पूर्वाशौचकालशेषेण मनुना शुद्धिमुक्त्वा 'निमित्तावृत्तौ नैमित्तिकाशौचानावृत्तिः अन्याय्या' इत्याशङ्कानिराकरणार्थं पूर्वाशौचपरिच्छेदार्थप्रवृत्तेन दशाहादिना प्रसङ्गेन अन्तःपतितस्य अशौचान्तरस्यापि परिच्छेत्तुं शक्यत्वात् अशौचानावृत्तेः न्याय्यत्वं 'न वर्धयेदघाहानि' इत्यनेनोक्तम्। **सु.** पृ. १६३.

**अन्तर्दीपिकान्यायः ॥** अयं मुण्डकोपनिषदीयशांकरभाष्ये। तथाहि 'सत्येन लभ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम्' इति। नित्यं सदा, नित्यं सत्येन, नित्यं तपसा, नित्यं सम्यग्ज्ञानेनेति सर्वत्र नित्यशब्दोऽन्तर्दीपिकान्यायेनानुषक्तव्य इति। **साहस्री.** ६५९.

* **अन्तर्यामग्रहः द्वितीयो मन्त्रकाण्डविधिकाण्डयोः।** **वि.** १०।५।१७. * अन्तर्यामग्रहः प्रातःसवने द्वितीयः। उपांश्वन्तर्यामयोस्तु न वषट्कारहोमत्वम्। **सोम.** २।२।६.

* '**अन्तर्वेदि** तिष्ठन् सावित्राणि जुहोति' इति वेदिदर्शनं न नारिष्ठहोमविकारत्वसाधकं, किंतु देशोपलक्षणतयाऽपि उपपन्नम्। **भाट्ट.** ८।४।२. * 'अन्तर्वेदि प्रणीता विनयति' द्वितीयया संस्कार्यत्वावगमात् निनयनं प्रतिपत्तिरूपः संस्कारः इति न प्रणयनस्य प्रयोजकम्। **वि.** ४।२।५. * अन्तर्वेदिबहिर्वेदिपदलक्षितदेशविशेषस्य यूपमानाङ्गता 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इति। **भा.** ३।७।६।१३-१४. * अन्तर्वेदिबहिर्वेदि-

शब्दाभ्यां उभाभ्यां मध्यदेशो लक्ष्यते, न अङ्गाङ्गिभावो विधीयते । वा. ३।७।६।१४.

**अन्तर्वेद्यन्यः इति लक्षणया देशविधिः ॥**

सामिधेनीरेव प्रकृत्य 'अन्तर्वेद्यन्यः पादो भवति बहिर्वेद्यन्यः' इति श्रुतं, तत्र 'अर्धमन्तर्वेदि' इत्यादाविव न स्थानविशेषलक्षणा वाक्यद्वयेन संभवति । तादृशस्थानस्यैकत्वेन तत्रैकः पादोऽन्यत्रान्यः पाद इति कथनस्वारस्यविरोधापत्तेः । तस्माद्वेदेरन्तरुपविश्य 'प्र वो वाजा अभिद्यवः' इति पादो वक्तव्यः, तद्बहिरुपविश्य 'हविष्मन्तो घृताच्या' इति, पुनस्तदन्तरुपविश्य 'देवान् जिगाति सुम्नयुः' इत्यादिरीत्या सामिधेनीरनुब्रूयादित्यनेनैकवाक्यतया सिध्यति । **इति प्राप्ते,** 'तिष्ठन्नन्वाह' इति विधेः स्थानविशेषसाकाङ्क्षत्वेन तत्समर्पकतयैकवाक्यत्वे संभवति वाक्यभेदायोगात्, तादृशस्थाने स्थितवतोऽर्थात्तदवयवभेदेन होतुः पादद्वयस्यावस्थानेनान्यः पाद इत्यस्यानुवादत्वसंभवात्, अन्यपादमाहेत्युच्चारणकर्मत्वेनानिर्देशात्, पादशब्दस्य ऋक्पादपरत्वायोगाच्च, स्थानविशेषलक्षणया तत्र होता स्थित्वाऽनुब्रूयादित्यर्थः। **संकर्ष.** ४।१३.

* 'अन्तर्वेद्यन्यः पादो भवति, बहिर्वेद्यन्यः' इति देशविशेषलक्षणया गार्हपत्यपुरोभागस्यैव विधानम् । **भाट्ट.** ११।२।९. * 'अन्तर्वेद्यन्यः पादो होतुर्भवति बहिर्वेद्यन्यः' अत्र न होतुः पादो वेदेरुपकारार्थत्वेन उपदिश्यते । किं तर्हि ? देशमात्रमेतत् विधीयते । तस्मिन् देशे होत्रा स्थातव्यं, यत्रास्य एकः पादः अन्तर्वेदि भवति, बहिर्वेदि अन्यः इति । नात्र उभयोर्विधिः एकवाक्यत्वात् । **भा.** ११।२।१०।४८. * 'अन्तर्वेद्येकः पादो भवति बहिर्वेद्येकः' इति दर्शपूर्णमासयोः श्रुतम् । तत्र हविरासादनार्थायाः दार्विक्याः वेदेः एकपादोद्देशेन विधौ एकत्वस्य उद्देश्यविशेषणस्य अविवक्षाऽऽपत्तेः, बहिर्वेद्येकः इत्यस्य अनुवादायोगात् विधाने वाक्यभेदापत्तेः, अगत्या देशविशेष एव लक्षणया हौत्रस्थानोद्देशेन विधीयते । **भाट्ट.** ३।७।६.

**अन्ताल्लोपो वृद्धिर्वा इति न्यायेन** अष्टाचत्वारिंशस्य आवृत्त्या त्रयोदशरात्रे छन्दोमानां चतुःसंख्या पूरणीया । **वैसंसा.** ७।३।३.

**अन्ते तु बादरायणः** इति वा, अन्तेनिवेशः इति वा, आगन्तुन्यायः इति वा, आगन्तुकानामन्ते निवेशः इति वा, आगन्तूनां न्यायः इति वा, आगन्तूनामन्ते निवेशः इति वा, **न्यायः** । अत्र तु आद्ययोर्द्वयोरेव निवेशः क्रियते । * अन्ते तु बादरायणः इति न्यायस्य निष्कृष्टं स्वरूपं तु 'आगन्तूनां अन्ते निवेशः' इति । भाष्याद्यधिकरणं तु (५।२।९।१७-२०) 'नारिष्ठन्यायः' इत्यत्र द्रष्टव्यम् । * अन्ते तु बादरायणः इत्यस्य अपवादः, दशमं एकादशं च इत्यधिकरणद्वयम् । **रत्न.** ५।२।१०-११. * साम्नां आगम्यमानानां उत्तरयोः पवमानयोः अन्ते निवेशः, 'उक्तोऽत्र **न्यायः** अन्ते तु बादरायणः' इति पूर्वः पक्षः । **भा.** ५।३।५।१३, * सामिधेनीनां काम्यविवृद्धौ आगन्तूनामन्ते निवेशः अन्ते तु बादरायणः इत्यनेन **न्यायेन** इति प्राप्ते । ५।३।३।४. * अरवदाभ्ययोः औपानुवाक्यकाण्डे एव क्लृप्तक्रमकग्रहाणां परत एव निवेशे अन्ते तु बादरायणः इति **न्यायात्** प्राप्ते । **संकर्ष.** ३।३। १४. * राजसूये अभिषेचनीयमध्ये माहेन्द्रस्तोत्रकाले अभिषेकस्यैवापकर्षः अन्ये तु विदेवनादयः 'अन्ते तु बादरायणः' इति न्यायात् अभिषेचनीयसकलप्राकृताङ्गोत्तरकाले कर्तव्याः इति प्राप्ते । **शा.** ५।२।९. * विवृद्धस्तोमकेषु क्रतुषु आगन्तवः स्तोमाः अन्ते एव निवेश्याः अन्ते तु बादरायणः इति न्यायात् । **रत्न.** ५।३।४।९. * सावित्रहोमादीनां वैकृतानामन्ते प्रयोगः अन्ते तु बादरायणः इति न्यायात् । **भा.** ५।२।११।२२. * दीक्षणीयादीनामिह प्रत्यक्षपाठेन केवलानुमानिकत्वाभावात् नात्र 'अन्ते तु बादरायणः' इति **न्यायप्रवृत्तिः** इत्यत आह पूर्वपक्षी । **सोम.** ५।२।१०. * लोकंपृणायाः छिद्रपूरकत्वस्य चित्यन्तरेऽपि सावकाशत्वात् न चित्रिण्यादीनां **अन्तेनिवेशन्यायस्य** निरवकाशस्य बाधः पूर्वपक्षे । **भाट्ट.** ५।३।८.

**अन्ते तूत्तरयोर्दध्यात्** । ५।३।५।१३ ॥

विवृद्धस्तोमकेषु क्रतुषु आगम्यमानानि सामानि उत्तरयोः पवमानयोः माध्यंदिनार्भवयोः अन्ते दध्यात् इति पूर्वः पक्षः । तु-शब्दः विरुद्धशङ्कानिवृत्त्यर्थः ।

**अपिवा गायत्रीबृहत्यनुष्टुप्सु वचनात् । १४ ॥**

सिद्धान्तकथनार्थं सूत्रम् । अपिवा इति पूर्वपक्षनिरासः । 'अत्र ह्येवावपन्ति अत एवोद्वपन्ति' इति वचनात् आगम्यमानानां साम्नां गायत्री-बृहती-अनुष्टुप्सु एव निवेशः, न अन्ते इति । तत्रापि गायत्रीछन्दस्के तृचे एव निवेशः । **के.**

**अन्ते निवेशन्यायः** । उपहोमन्यायः इति विन्दौ द्रष्टव्यम् । ५।२।९।१७–२०.

**अन्ते मतिः सा गतिः इति न्यायः** । यथा– 'यं यं वाऽपि स्मरन् भावं त्यजत्यन्ते कलेवरम् । तंतमेवैति कौन्तेय सदा तद्भावभावितः ॥' इति श्रीभगवद्वाक्यानुकूलोऽयं न्याय इति । **साहस्री. १६६.**

**अन्ते यूपाहुतिस्तद्वत्** । ११।२।७।२७ ॥

अन्ते यूपस्यान्तिके या यूपाहुतिः, सा यूपैकादशिन्यां भेदेन स्यात् । तद्वत् यथा भिन्नदेवतेषु पशुषु वसाहोमः स्वस्वयाज्याधर्चान्तेषु भेदेन क्रियते, तद्वत् प्रतियूपं यूपाहुतिः पृथक् कार्या, न तन्त्रं इति पूर्वः पक्षः ।

**इतरप्रतिषेधो वा । २८ ॥**

सिद्धान्तमाह । यूपैकादशिन्यां यूपाहुतिः नैव भेदेन कर्तव्या इति वाशब्दार्थः । किं तर्हि ? तन्त्रं स्यात् । इतरस्य मथिताग्नेरन्यस्य आहवनीयस्य प्रतिषेधोऽयं 'यूपस्यान्तिकेऽग्निं मथित्वा यूपाहुतिं जुहोति' इति । तस्मात् मन्थनं विधीयते नान्तिकम् । तस्मात् एकस्मिन् मथितेऽग्नौ यूपाहुतिः तन्त्रेण यूपैकादशिन्यां इति सिद्धान्तः ।

**अनुवादमात्रमन्तिकस्य । २९ ॥**

सौकर्यन्यायप्राप्तस्य अन्तिकस्य 'यूपस्यान्तिके जुहोति' इत्यनुवादमात्रम् । सहाग्निना यूपान्वेषणं दुष्करं, यूपान्तिके तु अग्निं मथित्वा सुकरो होमः इति न्यायप्राप्तमन्तिकम् । एवं सति अनन्तिके होमेऽपि न दोषः । तस्मात् यूपैकादशिन्यां तन्त्रं यूपाहुतिः ।

**अशास्त्रत्वाच्च देशानाम् । ३० ॥**

अविद्यमानं शास्त्रं शासनं येषां ते देशाः अशास्त्राः, तेषां भावः अशास्त्रत्वम् । 'यूपस्यान्तिके' इत्युक्तमन्तिकत्वं सापेक्षम् । देशानां अन्तिकदेशानां अशास्त्रत्वात् अशासनीयत्वात्, अव्यवस्थितस्य अन्तिकत्वस्य शासनं न शक्यते कर्तुम् । तस्मात् अन्तिकत्वमविवक्षितम् । यावति अन्तरे मथितुं शक्यं, यत्र च अग्नौ प्रदीप्ते सति यूपवृक्षस्य उपदाहो न स्यात्, तत्र मथित्वा तन्त्रेण यूपाहुतिः कर्तव्या । इति सिद्धान्तः । **के.**

**अन्ते रण्डाविवाहश्चेदादावेव कुतो न सः इति न्यायः** । ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनं व्यर्थम् । **संग्रहः.**

**अन्ते स्युरव्यवायात्** । ५।३।७।१७ ॥

अग्निचयने चित्रिण्यः वज्रिण्यः इत्यादयः इष्टकाः अन्ते पञ्चम्यां चितौ उपधेयाः स्युः । वज्रिणीनां इतरासामिष्टकानां अव्यवायात् व्यवायाभावात् व्यवधानाभावात् । मध्यमायां उपधाने तु व्यवधानं स्यात् । तस्मादन्ते स्युः । इति पूर्वः पक्षः ।

**लिङ्गदर्शनाच्च । १८ ॥**

पूर्वपक्षे हेत्वन्तरपरं सूत्रम् । चकारः समुच्चये । 'आवपनं वा उत्तमा चितिः, अन्याअन्या इष्टका उपदधाति' इति लिङ्गस्य दर्शनात् चित्रिण्यादीनां उत्तमायां पञ्चम्यां चितौ उपधानं सिध्यति ।

**मध्यमायां तु वचनाद् ब्राह्मणवत्यः । १९ ॥**

चित्रिण्यादय इष्टकाः पञ्चम्यां चितौ उपधेया इति पूर्वपक्षं सूत्राभ्यां प्राप्तं तुशब्देन निरस्य सिद्धान्तमाह । चित्रिण्यादय इष्टकाः न पञ्चम्यां चितौ उपधेयाः, किंतु मध्यमायां चितौ । यतः ता ब्राह्मणवत्यः तासां विधायकं ब्राह्मणमस्ति । ब्राह्मणवत्त्वात् ताः मध्यमायामेवोपधातव्याः । 'यां वै कां चिद् ब्राह्मणवतीमिष्टकामभिजानीयात् तां मध्यमायां चितावुपदध्यात्' इति ब्राह्मणम् । यास्तु लिङ्गक्रमवत्यः समाख्यावत्यश्च, ता न मध्यमायामेव । **के.**

* **अन्त्यदिने** एव अहर्गणे कृष्णविषाणायाः प्रासनम् । **भा.** ११।३।६।१३–१४.

***अन्त्यवीजसंबन्धिहविष्कृदाह्वानकाले एव वाग्विसर्गो राजसूये नानाबीजेष्टौ । भा. ११।२।७।१५.**

* **अन्त्यलोपः** आदितो ग्रहणं यावत्संख्यं विकृतौ एकदेशग्रहणे लोपोपादानप्रसङ्गे । **भा.** १०।५।१। १–६, * **अन्त्यलोपे** न्यायेन प्राप्ते यत्र क्वचन भवति, तत्र अपनीय मध्यममपि विधिर्भवति । यथा– 'अपबर्हिषः प्रयाजान् यजति' 'अपबर्हिषावनूयाजौ

यजति ' इति। विना वचनेन अन्त्यलोप एव न्याय्यः। १०।५।१।६.

**अन्त्यलोपाधिकरणम्**। एकत्रिके क्रतौ माध्यंदिनपवमानस्तोत्रे, आद्ये एव तृचे गानम् ॥

**एकत्रिके तृचादिषु माध्यंदिने छन्दसां श्रुतिभूतत्वात्। १०।५।२।७ ॥**

**भाष्यं**— अस्त्येकत्रिकः क्रतुः, ' अथैष एकत्रिकः, तस्यैकस्यां बहिष्पवमानं, तिसृषु होतुराज्यं, एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमानः ' इति। तदत्र माध्यंदिने पवमाने संशयः किं तृचाद्यासु गानं कर्तव्यं, उताऽऽद्ये तृचे इति। किं प्राप्तम्? एकत्रिके क्रतौ माध्यंदिने पवमाने तृचाद्यासु स्तोत्रियासु गानं स्यात्। कुतः? छन्दसां श्रुतिभूतत्वात्। श्रुतिभूतानि हि त्रीणि छन्दांसि प्रकृतौ, ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः पञ्चसामा ' इति। तानीह चोदकेनैव प्राप्तानि। तान्येवमुपसंहर्तुं शक्यन्ते, यदि तृचाद्यासु गानम्। तस्मात्तृचाद्यास्विति।

**आदितो वा तन्न्यायत्वादितरस्यानुमानिकत्वात्। ८ ॥**

**भाष्यं**—वाशब्दः पक्षं व्यावर्तयति। आद्ये तृचे गानं कर्तव्यम्। एष हि न्यायः, क्रम एवमनुगृहीतो भवति। इतरस्य छन्दोऽनुग्रहस्य प्राकृतत्वादिहानुमानिकत्वं भवति। आह। ननु क्रमोऽपि प्राकृतत्वादानुमानिकः। उच्यते। उभयोरानुमानिकयोः क्रमानुग्रहो ज्यायान् भवति। कथम्? तत्र हि प्रथमे गायत्रे छन्दस्यभिनिर्वृत्ते द्वितीया स्तोत्रीया प्रारब्धा। प्रथमारम्भेण हि पदार्थः क्रियमाण उत्तरं पदार्थमभिनियच्छति। अप्रवृत्ते कस्मिंश्चित् पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्ते। प्रवृत्ते हि ततोऽन्यदशक्तत्वादप्राप्तम्। प्रारब्धस्य च क्रिया प्राप्ता। तस्यामवस्थायामुभयप्राप्त्यभावादविकल्पः। अत्र किं तदेव प्रारब्धं परिसमाप्यतामथान्यदप्राप्तमारभ्यतामिति। तत् परिसमापयन् श्रुतं करोति, परित्यजन् श्रुतं जहातीति प्रारब्धं परिसमापनीयं गम्यते। अथेदानीं तस्मिन्निर्वृत्ते वैकल्पिकं कृतार्थत्वादप्राप्तम्। तस्मात् क्रमानुग्रहो न्याय्यो, न छन्दोनुग्रह इति। तत्राऽऽह। ननु गायत्रेण छन्दसा पूर्वे क्रियमाणे, नोत्तरकालं त्रैष्टुभमप्युपक्रान्तं भवति। उच्यते। सत्यमुपक्रान्तं भवति, न तु द्वितीयां तृतीयामकृत्वा। अथ तयोः कृतयोः पूर्णे तृचे नैव छन्दसा प्रयोजनम्। तस्मात् प्रत्यक्षत्वात् पूर्वया स्तोत्रीययोत्तरयोः स्तोत्रीययोः क्रमस्य, क्रमानुग्रहो ज्यायान्, न छन्दोऽनुग्रह इति।

**टुप्**—ननु प्रकृतौ क्रम आनुमानिकः। त्रिच्छन्दस्त्वं तु (' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः ' इति) वचनेन प्रतीयते। चोदकेन प्राप्नोति। तस्मात् (आनुमानिकत्वात्) क्रमस्य बाधश्छन्दसामनुग्रह इति। उच्यते। युक्तं प्रकृतौ बलाबलम्। तत्र प्रत्यक्षाणि शास्त्राणि। इह पुनरुपकारा अतिदिश्यन्ते, न शास्त्राणि। तेन विकृतौ श्रुतिप्राप्तस्य समाख्याप्राप्तस्य च बलाबलशङ्कैव नास्ति, अनाम्नानात्। असत्यां बलाबलशङ्कायामुभयं कर्तव्यं, यदि विरोधो नास्ति। इह तु विरोधः। तत्र च्छन्दसामनुग्रहः किमुत क्रमस्येति। क्रमस्येति ब्रूमः। अत्र (भाष्य-)ग्रन्थः ' अप्रवृत्ते कस्मिंश्चित् पदार्थे सर्वं वैकल्पिकं प्राप्नोति, न प्रवृत्ते '। वैकल्पिकानां (हि) सर्वेषां युगपत् प्राप्तिः। यावदन्यताऽध्यवसायो न भवति, तावत् (सर्वेषां) तुल्या (प्राप्तिः), कृते (अध्यवसाने) तदेवानुष्ठेयं (इतरेषां निवृत्तिः। तदुक्तं ' निर्देशात्तु विकल्पे यत् प्रवृत्तम् '। ६।३।१२।२८ इति) प्रवृत्ते च ततोऽन्यन्न भवति अशक्तत्वात्। अत्र च (तावत् स्तोत्रारम्भात्) पूर्वेण मन्त्रान्तरेण (उच्चा ते जातं इत्यादिना स्तोत्रादिभूता प्रथमा) गायत्री प्राप्यते (प्रारभ्यते इत्यर्थः) इत्युभयसिद्धम्। सा च गायत्रीमेव (द्वितीयां) पर्युपस्थापयति (इति सैव कर्तव्या) न (तु) द्वितीयं छन्दः (प्रारब्धव्यं, प्रत्युपस्थापकाभावात्)। तस्मात् क्रमानुग्रहः इति (आद्ये तृचे गानमिति)।

**यथानिवेशं च प्रकृतिवत्, संख्यामात्रविकारत्वात्। ९ ॥**

**भाष्यं**— इतश्चाऽऽद्ये तृचे गेयमिति। कुतः? यथानिवेशं प्रकृतिवच्छब्देन प्राप्तासु स्तोत्रीयासु, 'तिसृषु

माध्यंदिनः ' इति संख्यामात्रस्य प्रत्याम्नायो न क्रमस्य। आह। ननु यथा क्रमस्य न प्रत्याम्नाय एवं छन्दसामपि। उच्यते। सत्यमेवमेतत्। मुख्यस्तु क्रमानुग्रहः, जघन्यश्छन्दसाम्। तस्मादप्याद्ये तृचे गातव्यमिति।

**शा**— प्रकृतौ इयं श्रुतिः, अयं पाठः इति बलाबलं चिन्त्यम्। विकृतौ तु सर्वस्य प्रकृतितो लब्धात्मकस्य प्राप्तस्य न तत्कृतः कश्चित् बलाबलविशेषः। किंतु यत् विकृतावेव शीघ्रमुपतिष्ठते, तदुपादेयं, अतः क्रम एवात्र बलीयान्। प्रथमा हि गायत्री समाप्यमानैव द्वितीयां गायत्रीमुपस्थापयति, सोपस्थिता उपक्रान्तैव भवति इति नान्यस्यावसरः। तस्मादाद्ये तृचे माध्यंदिनः पवमानः स्तोतव्यः।

**सोम**—आद्योपादाने व्युत्पादिते कीदृशमाद्यमुपादेयं इति विचारणात् **संगतिः**। **सूत्रार्थस्तु**— एकत्रिके क्रतौ माध्यंदिनः पवमानः त्रयाणां त्रिकाणामाद्यासु ( ऋक्षु ) गेयः स्यात् ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः ' इति त्रयाणामपि च्छन्दसां श्रुतत्वादिति।

**वि**—' तृचाद्यासु तृचे वाऽऽद्ये, तिसृष्वित्युच्यतेऽग्रिमः।, त्रिच्छन्दस्त्वात् प्राकृतं तत् क्रमादत्र तृचोऽखिलः॥ ' प्रकृतौ माध्यंदिनस्य पवमानस्य त्रयस्तृचाः ' उच्चा ते जातं ' इत्ययं प्रथमो गायत्रीच्छन्दस्कः। ' पुनानः सोम ' इत्ययं द्वितीयो बृहतीछन्दस्कः। ' प्र तु द्रव ' इत्ययं तृतीयः त्रिष्टुप्छन्दस्कः।

**भाट्ट**— अस्त्येकत्रिको नाम क्रतुः ' तस्यैकस्यां ( स्तोत्रीयायां ) बहिष्पवमानेन स्तुवीत तिसृषु होतुराज्यं, एकस्यां मैत्रावरुणस्य, तिसृषु ब्राह्मणाच्छंसिनः, एकस्यामच्छावाकस्य, तिसृषु माध्यंदिनः पवमानः ' इत्येवं आ अन्तादेका तिस्रश्च स्तोत्रीया व्यतिषङ्गेण श्रूयन्ते। अतश्च तत्रान्त्यस्तोत्रीयाणामन्त्यस्तोत्रेषु बाधः पूर्वाधिकरणवन्निःसंदिग्ध एव। माध्यंदिनपवमाने तु प्रकृतौ त्रयस्तृचाः समाम्नाताः गायत्रः प्रथमो बार्हतो द्वितीयस्त्रैष्टुभस्तृतीयः। तदिह एकत्रिके त्रिसृषु गीयमाने किं त्रयाणां तृचानामाद्या ऋच उपादातव्याः, उत आद्यस्तृचः सकलो ग्राह्य इति **संदेहे**, नात्र पूर्वाधिकरणन्यायेन आद्यस्य सकलस्य तृचस्य ग्रहणं, तथात्वे ' त्रिच्छन्दा आवापो माध्यंदिनः पवमानः ' इति श्रुतिविहितत्रिच्छन्दस्त्वबाधापत्तेः, तदनुरोधेन पाठकल्प्यस्य क्रमस्यैव बाधौचित्याच्च। **न च** प्रकृतौ कल्पककल्प्यत्वरूपबलाबलभावेऽपि विरोधाभावेन बाधाभावाद्विकृतौ चातिदेशेन उपस्थापितयोर्विरोधेऽपि कल्पककल्प्यत्वरूपबलाबलाभावात् कथं त्रिच्छन्दस्त्वेन क्रमबाध इति **वाच्यं**, तथात्वेऽपि शिष्टाकोपाधिकरणन्यायेन ( १।३।३ ) पदार्थभूतेन त्रिच्छन्दस्त्वेन तद्धर्मस्य क्रमस्य बाधोपपत्तेः। **न च** क्रमप्रकरणपाठादेव ऋक्प्राप्त्या त्रिच्छन्दस्त्वस्यार्थसिद्धत्वात् अविधेयेन तेन कथं क्रमबाध इति **वाच्यं**, नवानामृचां पाठेऽपि पञ्चदशस्तोमकत्वानुरोधेन अन्यासामागम्यमानानामृचां अन्यच्छन्दस्कत्वप्रसक्तौ त्रिच्छन्दस्त्वविध्युपपत्तेः। अत एवागम्यमाना ऋचोऽपि गायत्रीबृहतीत्रिष्टुबन्यतमच्छन्दस्का एवेति त्रिच्छन्दस्त्वस्यापि विधेयत्वेन पदार्थत्वात् तद्धर्मक्रमबाधो युक्त एव। **इति प्राप्ते**, त्रिच्छन्दस्त्वस्य मन्त्रगतच्छन्दस्त्रित्वात्मकस्य अङ्गाङ्गत्वेन मन्त्राङ्गभूतक्रमबाधकत्वानुपपत्तिः। वस्तुतस्तु त्रिच्छन्दस्त्वमपि प्रकृतौ नैव विधेयं, त्रिच्छन्दस्कतृचत्रयाम्नानादेव प्राप्तत्वात्। न च स्तोमसंपत्त्यर्थमागम्यमानर्चो अन्यच्छन्दस्कत्वप्रसक्त्या विधेयत्वावश्यकता, ' पराक् बहिष्पवमानेन स्तुवते ' इत्यनभ्यासवचनेन पराक्शब्देन सर्वत्र स्तोममात्रे न्यायप्राप्तस्य ऋगागमस्य स्तोत्रान्तरे इव माध्यंदिनपवमानेऽपि परिसंख्यातत्वात्। अत एव बहिष्पवमानातिरिक्तस्तोत्रे अभ्यासेनैव ऋक्संख्यापूरणं वक्ष्यते। अभ्यासोऽपि च माध्यंदिनपवमाने आद्ययोस्तृचयोरेव, ' गायत्रामहीयवे गायत्रे तृचे भवतः ' इत्यादिना तयोरेव समुचितसामद्वयविधानात्। अतश्च त्रिच्छन्दस्त्वस्य पाठादेव प्राप्तेः अविधेयत्वेन पदार्थत्वाभावान्न क्रमबाधः। **अतः आद्ये** एव तृचे गानम्। १०।५।१२.

**मण्डन**— ' एकत्रिके स्यात् तृचमाद्यमेव। '

**शंकर**— ' एकत्रिकतृचेऽन्त्ययोः। ' अन्त्ययोः पवमानयोः। अन्यत्र तु सर्वत्रग्रन्थे माध्यंदिने एवोक्तम्।

## अन्त्यलोपापवादाधिकरणम्॥

**अपूर्वासु तु संख्यासु विकल्पः स्यात्, सर्वासामर्थवत्त्वात्। १०।५।५।१४॥**

**भाष्यं**—अग्नौ तु आधूननार्था मन्त्राः 'वेशीनां त्वा पत्मन्नाधूनोमि' इत्येवमादयः। तान् प्रकृत्य श्रूयते 'सप्तभिराधूनोति' इति। तथा अग्नौ (बीज-) वपनार्था मन्त्राः 'या ओषधीः' इत्येवमादयः। तानपि प्रकृत्य श्रूयते 'चतुर्दशभिर्वपति' इति। तत्र संशयः किं आद्योपादानं, उत अनियम इति। किं प्राप्तं? आद्योपादानम्। 'आदितो वा तन्न्यायत्वात्' (११।५।२।८) इति। **एवं प्राप्ते ब्रूमः**। अपूर्वासु तु संख्यासु अप्रकृतिपूर्विकासु श्रूयमाणासु ब्रूमः। विकल्पः स्यात्। एवं सर्वासां संख्यानां अर्थवत्त्वं भविष्यति। आद्योपादाने हि केषां चिन्मन्त्राणां उत्पत्तिरनर्थिकैव स्यात्। गम्यते च ताभिर्वपनं प्रकरणात्। या हि प्रकृतिपूर्विका भवन्ति, तासां प्राकृतप्रयोगेण अर्थवत्ता। आनर्थक्येन च कारणेन मुख्यातिक्रमः संख्यायाः।

**टुप्**— (सिद्धान्तमाह-) प्रकरणे मन्त्रा आम्नायन्ते, ते च (प्रकरणात्) सर्वे प्रयोक्तव्याः। श्रुत्या (च) चतुर्दशानां प्रयोग उच्यते। स च (प्रयोगः) अनियमेनापि घटते। क्रमो नियतक्रमानेव प्रापयति, प्रकरणेन तु सर्वे प्रयोक्तव्याः। ननु क्रमोऽपि नैव प्रकरणं बाधते, प्रकृतग्रहणात्। उच्यते। सर्वविषयतां प्रकरणेनावगतां (क्रमो) बाधते। सा च (सर्वविषयता) क्रमानुग्रहे न घटते। तस्मात् प्रकरणानुग्रहः। अतो विकल्पः।

**शा**—प्राकृतानां बहूनामेकदेशग्रहणे सति आद्योपादानं अन्त्यलोपः इति स्थितम् (१०।५।१।१-६)। यत्र तु प्रकरणपठितानां मन्त्राणामेकदेशग्रहणं तत्रापि किं आद्योपादानं, उतानियम इति संशये क्रमानुग्रहात् आद्योपादाने **प्राप्ते**, बलीयसा प्रकरणेन सर्वेषामङ्गत्वावगमात् संख्याश्रुतेश्च अनियमेन तत्संख्योपादानेऽपि अविरोधात् क्रमबाधेन आदितो मध्यतोऽन्ततो वा सप्तानां चतुर्दशानां चोपादानम्।

**सोम**—द्विरात्रादौ द्वादशाहिकानामह्नां आद्योपादानाभावेऽपि इह आद्योपादानं इत्युत्थितेः **संगतिः**। **पूर्वन्यायेनात्र** आद्योपादाननियमः इति सिद्धान्तसौकर्याय अतिदिष्टविषयः पूर्वन्यायः। अयं तु विचारः उपदिष्टविषयः इति विषयभेदः। उखास्थापने यदाधूननं, तदर्था मन्त्रा आधूननार्थाः। (वस्तुतस्तु अदाभ्यग्रहग्रहणे सोमांशूनां जले यत् परिप्लावनं तत् आधूननं नाम, तदर्था एते मन्त्राः। द्रष्टव्यमेतत् सत्याषाढीये श्रौतसूत्रे ८।६।३७-३९ सूत्रेषु। **के.**) कृष्टे अग्निक्षेत्रे नानाबीजानामावपनार्था मन्त्राः आवपनार्थाः। **ननु** प्रबलेन प्रकरणेन सर्वेषामङ्गत्वावगमात् कथं दुर्बलेन क्रमेण आद्योपादानं इति पूर्वपक्षः इति **चेत्** नात्र सर्वेषामङ्गत्वसंभवः 'सप्तभिराधूनोति' इति श्रुत्या ताभ्यामपि बलीयस्या सप्तानामेव विनियोगात्। अत्र 'के सप्त' इत्यपेक्षायां त्रिकपालादिवत् क्रमाद्ध्यवस्थितिः, क्रमस्य श्रुत्यपेक्षितविशेषसमर्पकत्वमात्रेण आद्योपादाननियामकत्वमुच्यते इति पूर्वपक्षः, न तु विनियोजकत्वमाश्रित्य, येनोक्तदोषः स्यात्। सप्तभिः इति वाक्यं न मन्त्रविनियोजकं किंतु लिङ्गप्रकरणाभ्यां अङ्गत्वेनावगतेषु मन्त्रेषु लाघवात् केवलं संख्यामात्रविधायकम्! ततश्च श्रौतविनियोगाभावे आद्योपादानमिच्छता क्रमस्य विनियोजकत्वमाश्रित्य तदुपपादनीयं, क्रमस्य च नात्र विनियोजकत्वसंभवो दुर्बलत्वात्। लिङ्गप्रकरणाभ्यां सर्वेषामङ्गत्वे निश्चिते संख्याश्रुतिः अनियमेन यत्किंचिन्मन्त्रोपादानेऽपि उपपन्ना विकल्पमेवापादयति, न तु प्रागवगतं सर्वेषामङ्गत्वमपि विहन्ति, इति सिद्धान्तः। **सूत्रार्थस्तु**—अपूर्वासु संख्यासु सतीषु विकल्पः स्यात् आदितो मध्यतोऽन्ततो वा याः सप्तचतुर्दशत्वादिसंख्याः, तासां सर्वासामर्थवत्त्वात् इति।

**वि**—'धूनने वपने चाग्नौ सप्त चोक्ताश्चतुर्दश।
किमाद्यारम्भनियमः किं वाऽऽरम्भो निजेच्छया॥,
कपालवत् क्रमः प्राप्तः, केचित् प्रकरणोदिताः।
व्यर्थाः स्युस्तेन मन्त्राणामारम्भोऽत्र विकल्पितः॥'

**भाट्ट**—प्राकृतानामेकदेशग्रहणे आद्योपादानमन्त्यलोपश्चेति स्थितम्। यत्र तु औपदेशिका बहवो मन्त्राः क्रतुप्रकरणे समाम्नाताः, एकदेशेन च विनियुक्ताः, यथा अग्न्यादौ आधूननार्था वपनार्थाश्च मन्त्राः 'सप्तभिराधूनोति' 'चतुर्दशभिर्वपति' इति न्यूनसंख्यायुक्ताः, तत्र नियमेन आद्योपादाने अवशिष्टानां वैयर्थ्यापत्तेः अनियम एव। न च वाचःस्तोमादौ तेषां

सार्थक्यं, एतत्क्रतुप्रकरणपाठस्य तथापि वैयर्थ्यात् । न च पूषानुमन्त्रणवत् तद्बाधेऽपि अदोषः, तत्र लिङ्गेन तद्बाधेऽपि प्रकृते क्रमानुरोधेन बाधानुपपत्तेः ।

**मण्डन**—‘ नाद्यादरः स्याद् वपनादिमन्त्रे । ’

**शंकर**—‘ विकल्पोऽपूर्वसंख्यासु । ’

* **अन्धस्य धनवत्त्वं अनाचारः** । **वा.** १।३।७। १४ पृ. २०४. * **अन्धस्य निरंशत्वेन** धर्माभावात् यागासंभवः । **सु.** पृ. १८५.

**अन्धस्येवान्धलग्नस्य विनिपातः पदेपदे इति न्यायः** । यथा अन्धानुयायिनोऽन्धस्य प्रतिपदं विनिपातो भवति, तथा मूर्खानुयायिमूर्खस्य नाभीष्टसिद्धिः, किन्त्वनर्थप्राप्तिरेव भवतीति भावः । **साहस्री.** ३४१.

**अन्धगजन्यायः** । यत्र तत्त्वानभिज्ञमूर्खाणां परस्परकलहस्तत्रायमवतरति । अन्धैर्निर्धारितो गजोऽन्धगजस्तस्य न्याय इति मध्यमपदलोपगर्भः षष्ठीतत्पुरुषः । यथा हि लोके श्रूयते— जन्मान्धा बहवः कं चिदनन्धं पुरुषमूचुरस्मान् गजं दर्शयेति, स च गजशालायां तान्नीत्वा तंतं गजावयवं तेनतेन ग्राहयित्वा चोवाच अयं गज इति, ते च तंतमवयवमेव गजत्वेन निश्चित्य स्वस्थानमागताः परस्परं कलहं चक्रुः । शूर्पसदृशो गज इति कर्णस्पर्शी, महासर्पसदृश इति शुण्डाग्राही, स्तम्भतुल्य इति जङ्घाग्रहीता, पुच्छग्राहकस्तु स्थूलरज्जुसमो गज इत्युवाचेति । तथा वेदशास्त्राभिप्रायानभिज्ञा आर्याभासवादिनोऽपि कानि चित् दुरूहश्रुतिप्रभृतिवाक्यानि स्वस्वाभीष्टप्रदानीव पश्यन्तः इतराणि तु पश्यन्तोऽप्यपश्यन्त इव तत्त्वमजानन्तोऽन्योन्यं विवदन्ते इत्यर्थः । **साहस्री.** ७६.

**अन्धकवर्तकीयन्यायः** । अन्ध एव अन्धकः । स्वार्थे कः । नेत्रविहीन इत्यर्थः । वर्तिका पक्षिविशेषः वनचटका इति प्रसिद्धा । देशभाषायां तु ‘बटेरा’ इति प्रसिद्धा । अन्धकश्च वर्तिका चाऽनयोः समाहारः अन्धकवर्तकम् । ‘ स नपुंसकम् ’ ( पा० २।४।१७ ) इति नपुंसकत्वम् । अन्धकवर्तकमिवान्धकवर्तकीयम् ‘ समासाच्च तद्विषयात्’ ( पा० ५।३।१० ) इति सूत्रेण छप्रत्ययः । छस्य ईयः । अयं न्यायः काकतालीयन्यायवदवितर्कितेष्टलाभे अनिष्टलाभे चावतरति । यथा कश्चिदन्धकः पुमान् करतलेन करं ताडयन् वर्तते, तस्य हस्तद्वयमध्ये वर्तिका पक्षिविशेषो दैवात् समायाति, स तु दुर्लभः । तथा मानुषजन्मनि सतां सङ्गोऽतिदुर्लभः । अत एवोक्तं ‘संसारसागरनिमं भ्रमता नितान्तं जीवेन मानवभवः समवापि दैवात् । तत्रापि यद् भुवनमान्यकुले प्रसूतिः सत्सङ्गतिश्च तदिहान्धकवर्तकीयम् ॥ ’ इति । किंच यथाऽन्धकस्य पुंसः पादन्यासोऽतर्कितो वर्तिकाख्यविहगोपरि पतेत् तथा तत्सदृशमन्धकवर्तकीयमिति । **साहस्री.** ६५५.

* **अन्धकारो द्रव्यं** इति मीमांसकाः । तेजःसामान्याभाव इति नैयायिकाः । ‘ द्रव्याणि ’ इत्यत्र द्रष्टव्यम् । **मणि.** पृ. २१.

**अन्धकूपपतनन्यायः** ॥ अनेन पथा गन्तव्यमिति सत्पुरुषेणोपदिष्टस्तं पन्थानं मुञ्चन्नन्धो यथा कूपे पतति, एवं वेदाद्युपदिष्टमार्गं परित्यजन्नज्ञो नरकादिदुःखेषु पततीत्यस्य न्यायस्य तत्र प्रवृत्तिरिति । **साहस्री.** ४९३.

**अन्धगोलाङ्गूलन्यायः** ॥ कश्चित् किल दुष्टात्मा महारण्यमार्गे पतितमन्धं स्वबन्धुपुरे जिगमिषुमुवाच किमत्र त्वया दुःखितेन स्थीयते इति । स चान्धः कर्णामृतं वचनमाकर्ण्य तमाप्तं मत्वा बभाषे ‘ अहो मद्भागधेयं यदत्र मां दीनं स्वाभीष्टं पुरं प्राप्तुमसमर्थं ब्रूषे ’ इति । स च विप्रलिप्सुर्दुष्टं गोयुवानमानीय तदीयलाङ्गूलमन्धं ग्राहयामास उपदिदेश च एष गोयुवा त्वां स्वपुरं नेष्यति मा त्यज एतस्य लाङ्गूलमिति । स चान्धः श्रद्धानतया तदत्यजन् स्वाभीष्टं पुरमप्राप्य अनर्थपरंपरां प्राप्तवान् इति । तथा अज्ञस्य मुमुक्षोः यदि अहंकारादिरूपमनात्मानं आत्मेत्युपदिशेत् शास्त्रं, स च श्रद्धानतया अन्धगोलाङ्गूलन्यायेन तदात्मदृष्टिं न परित्यजेत् तद्-व्यतिरिक्तं चात्मानं न प्रतिपद्येत, तथा सति पुरुषार्थात् विहन्येत अनर्थं च प्राप्नुयात् । **संग्रहः.**

**अन्धचटकन्यायः** ॥ यथा ह्यकस्मादन्धस्य हस्ते पतितश्चटकोऽन्धेन गृहीत इति लोके प्रसिद्धिमगात्तथा दैवाल्लब्धं स्वाभीष्टं स्वेष्टदेवत्वेनाभिमतेश्वरदत्तं मन्यन्ते इत्यर्थः । घुणाक्षरन्यायविषये एवास्य प्रवृत्तिरिति । **साहस्री.** ८३.

**अन्धदर्पणन्यायः** ॥ अन्धस्य दर्पणे दर्शनं व्यर्थम् । **साहस्री.** ३०२.

**अन्धन्यायः** ॥ 'इमामगृभ्णन्' इति मन्त्रस्य अदृष्टार्थत्वे तु अन्धन्यायेन यत्रैव नीयेत तत्रैव वर्तिष्यते । **वा.** १।२।४।३१-१ पृ. १४६.

**अन्धपङ्गुन्यायः** ॥ यथा कश्चित् चक्षुष्मान् पुमान् पङ्गुः अन्यमन्धं नरमाश्रित्य प्रवर्तयति किंचित् फलमुद्दिश्य, तथा चेतनः पुरुषः स्वयमप्रवर्तमानः प्रवृत्तिशक्तिमदचेतनं प्रधानं प्रवर्तयति इति सांख्याः । उक्तं च 'पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य । पङ्ग्वन्धवदुभयोरपि संयोगस्तत्कृतः सर्गः ॥' इति । **साहस्री.** १७९.

**अन्धपरंपरा** । अन्धपरंपरादोषः । अन्धपरंपरान्यायः । अन्धपरंपरावचनन्यायः । जात्यन्धपरंपरा । जात्यन्धवाक्यवत् । * **अन्धपरंपरा** अतीन्द्रियेऽर्थे स्यात् । **सु.** पृ. ११३७. * सर्वत्रानुपपत्तिसाम्यात् **अन्धपरंपरा** । **कल्पतरुः.** २।२।७।३७ ब्र. सू. * यथा केन चिदन्धेन 'स पटो रक्तः' इत्युक्ते 'कुतः इदं श्रुतं' इति परस्याकाङ्क्षायां स यदि अन्यमन्धं तदुपदेष्टारं ब्रूयात्, सोऽपि अनुयुक्तः अन्यमन्धं, सोऽपि अपरमन्धं, न कं चिदपि स्वोपदेष्टारं चक्षुष्मन्तं ब्रूयात् । अनया **अन्धपरंपरया** प्राप्तः पटरक्तिमा यथैवाप्रामाणिकः, एवं इयमपि कर्मेश्वरयोः प्रवर्त्यप्रवर्तकभावपरंपरा । **परिमलः.** २।२।७।२७ ब्र. सू. * पूर्वं कर्म कथं ईश्वराप्रवर्तितं ईश्वरप्रवर्तनलक्षणं कार्यं करोति ? तत्रापि प्रवर्तितं ईश्वरेण पूर्वतनप्रवर्तितेन इत्येवं **अन्धपरंपरादोषः** । **भामती.** २।२।७।३७ ब्र. सू. * **अन्धपरंपरान्यायः** । यथा अन्धेन नीयमाना अन्धाः पतन्ति तथा प्रकृतेऽपि । अयं अनवस्थास्थले एवोदाह्रियते । **साहस्री.** २४. * न चात्र भक्षानुवाकशब्दे **अन्धपरंपरान्यायः**, अभिधानाभिधेययोः सर्वप्रत्यक्षत्वात् । नहि अग्निहोत्रस्वर्गादिसाध्यसाधनभाववत् भक्षानुवाकस्य अप्रत्यक्षत्वम् । अतो भक्षानुवाकशब्दवाच्योऽयं इत्येतत् तावत् प्रमाणम् । **वा.** ३।२।१०।२५, * नतु ( व्याकरणस्य ) पुंवाक्यमूलत्वे अन्धपरंपरान्यायः स्यात् इत्याशङ्क्याह । १।३।८।२७ पृ. २८६, * यतस्तु इह ( अष्टकासु ) स्वर्गादिसाध्यसाधनसंबन्धः स्मर्यते नासौ पुरुषान्तरेषु उत्पद्यमानः कैश्चित् दृश्यते इति **अन्धपरंपरान्यायेन** अप्रमाणता । 'योयो ग्रहीता जात्यन्धः स स्वयं नोपलब्धवान् । स्वातन्त्र्येणागृहीते च प्रामाण्यं नावतिष्ठते ॥' १।३।१।१ पृ. १६२, * यदि हि अक्षरानुपात्तोऽपि अर्थः अस्मदादिभिरेव कल्प्यते, तथा सति आत्मचेष्टितवशेन प्रामाण्यमभ्युपगतं स्यात् । अथ पुरुषान्तरधारणमुच्येत, एवमपि तद्वशेन तैरप्येवं अन्यवशेन इति अनादित्वे सति अन्धपरंपरान्यायेन सर्वेषां परप्रत्ययात् न क चित् प्रामाण्यावस्थानम् । १।२।१।७ पृ. ११३, * 'यथैव हि ग्रन्थः संप्रदायादविच्छिन्नः अस्तित्वं भजते, तत्तु अयुक्तं' **अन्धपरंपरान्यायादेव** । या हि चोदना न कदा चिदुच्चार्यते तस्याः सर्वपुरुषप्रत्यक्षादिप्रसराभावात् दुर्लभतरमस्तित्वम् । १।३।१।२ पृ. १६४, * समानदेशाम्नानं प्रकरणपाठं पदानां परस्परसंनिधिं संबन्धं वा न वेदो वदति । किं तर्हि ? पुरुषेषु आमनन्तु तथा दृश्यते । तैरप्येवमन्येभ्यो दृष्टं इत्यनादित्वेऽपि सर्वेषां दर्शनसंभवात् **अन्धपरंपरान्याये** निवृत्ते भवति प्रामाण्यम् । ३।३।७।१४ पृ. ८५८. * ननु व्याकरणानुगतसाधुत्वानन्तरं प्रत्यक्षेण असंकीर्णसाधुत्वदर्शने मा भूत् **अन्धपरंपरान्यायापत्तिः** । संकीर्णस्य तु साधुत्वस्य पूर्वदृष्टस्य व्याकरणमात्रात् विवेकज्ञाने तदापत्तिः अपरिहार्या इत्याशङ्क्य आह-यावानिति । अयमाशयः, न तावत् अदृष्टसाधनत्वलक्षणसाधुत्वविवेके अन्धपरंपरान्यायापत्तिः, विधिनिषेधमूलत्वात् । अविनष्टरूपसाधुत्वविवेकेऽपि न तदापत्तिः, वेदादिविद्यास्थानप्रयोगमूलत्वात् । **सु.** पृ. ३१७, * **ननु** विधिनिषेधरूपश्रुतिमूलानपेक्षपरंपरामात्रेण साध्वसाधुविवेकसिद्धेः विधिनिषेधनिराकरणं अनर्थकं, मूलश्रुत्यपेक्षायामपि वा साध्वनुशासनात्मकत्वेन व्याकरणस्य साधुविधिमात्रापेक्षत्वात् असाधुनिषेधनिराकरणं अनर्थकं इति **चेन्न,** निर्मूलत्वे **अन्धपरंपरान्यायापत्तेः** न साध्वसाधुविवेकसिद्धिः इति । पृ. २६४. * **पौरुषेयव्याकरणागमपरंपरायामपि** तदनुगतसाधुत्वान्तरदर्शनात्, **पूर्वदृष्ट-**

विवेकज्ञानमात्रपरत्वात् वा न **अन्धपरंपरावचनन्याय-**प्रसङ्गः । **वा.** १।३।८।२७ पृ. २८२. * तद्यथा कश्चित् जात्यन्धो वदेत् 'स्मराम्यहं अस्य रूपविशेषस्य' इति । कुतस्ते पूर्वविज्ञानं इति च पर्यनुयुक्तो जात्यन्धमेव अपरं निर्दिशेत् । तस्य कुतः ? जात्यन्धान्तरात् । एवं **जात्यन्धपरंपरायामपि** सत्यां नैव जातु चित् संप्रतीयुर्विद्वांसः सम्यग्दर्शनमेतदिति । **भा.** १।३।१।१ पृ. १६२. * 'असंभावितमूलं हि पौरुषेयं यदुच्यते । मूले तस्याप्रतिष्ठत्वं रूपे **जात्यन्धवाक्यवत्** ॥' इह तु समूलत्वात् ( व्याकरणे ) एकान्तरितप्रामाण्यसिद्धिः । **वा.** १।३।८।२७ पृ. २८६.

* **अन्धबधिरमूकपङ्ग्वादीनां** आज्यावेक्षणाद्यङ्गानुष्ठानाशक्तत्वात् न यागाद्यधिकारः । **भा.** ६।१।२४–५.

⌛**अन्धसंध्यान्यायः** ॥ अन्धस्य संध्याकालज्ञानं नास्ति तद्वत् । प्रज्ञाहीनस्य प्रधानस्य अन्धसंध्यान्यायवत् कालज्ञानायोगात् न कदा चिदपि जगत्कारणत्वं उपपद्यते । **श्रीकरः.** २।२।२ ब्रसू.

⌛ **अन्धाऽनन्धन्यायः** ॥ यत्राऽन्धः सन्ननन्धो भवति, तत्रास्य प्रवृत्तिः । यथा यदा 'अहं ब्रह्मास्मि' इति वाक्योत्थया धिया आत्मानं योगी पश्यति, तदान्धोऽप्यनन्धो भवति । तथा च श्रुतिः 'तं वा एतं सेतुं तीर्त्वाऽन्धः सन्ननन्धो भवति' इति । सेतुं मर्यादाविधारकं परमेश्वरं तीर्त्वा प्राप्येति श्रुतिपदयोरर्थ इति भीष्मपर्वणि नीलकण्ठः । **साहस्री.** ९१२.

* **अन्नकामस्य** एकविंशतिमनुब्रूयात् सामिधेनीः दर्शपूर्णमासयोः । **भा.** १०।५।८।२७.

* '**अन्नमेव** तद्दक्षिणतो दधाति, तस्माद्दक्षिणेन हस्तेन पुरुषोऽन्नमत्ति' । **वा.** १।३।४।९ पृ. २२१, * 'अन्नमेवोभयतो दधाति, तस्मादुभाभ्यां हस्ताभ्यां परिगृह्य पुरुषोऽन्नमत्ति' । १।३।४।९ पृ. २२१, * **अन्नविकारसुरामात्रस्य** त्रैवर्णिकानां प्रतिषेधः । १।३।३।७ पृ. २०९. * **अन्नाद्यकामः** ज्योतिष्टोमे उक्थ्यानां ब्रह्मसाम्नि सौभरे ऊर्क् इति निधनं कुर्यात् । 'ऊर्गित्यन्नाद्यकामाय' । **भा.** २।२।११।२८, * 'मैत्रं श्वेतमालभेत वारुणं कृष्णं अपां चौषधीनां च संधौ अन्नाद्यकामः' । ८।१।८।१५, * 'संक्रमयज्ञेन यजेतान्नाद्यकामः' । २।३।४।५, * **अन्नाद्यकामं** दिशानवेष्टया याजयेत् । 'एतयैवान्नाद्यकामं याजयेत्' । ११।४।३।८, * **अन्नाद्यकामस्य** बैल्वो यूपः इति फलविधिः । 'बैल्वमन्नाद्यकामस्य' । ४।३।१।३. * अन्नाद्यकामस्य सप्तदशातिरात्रः । ( कातीये ) **बाल.** पृ. ३४. * भ्राष्ट्रात् आहृत्यावदध्यात् उख्यमग्निं चयने । 'भ्राष्ट्रादन्नाद्यकामस्य' । **भा.** १२।४।७।१७.

* **अन्यगामिफले कर्मणि** अन्यस्य प्रेरणाऽनुपपत्तेः । **पराक्रमः.** पृ. १२.

⌛ **अन्यगेहस्थिताद्धूमान्न गेहान्तरमग्निमदिति न्यायः** ॥ यत्र साधनीयोऽर्थः संदेहविषयीभूतो भवति, स पक्षः । यथा–पर्वतो वह्निमान् इत्यग्नौ साध्ये पर्वतः । तत्र चेद्धेतुर्न वर्तेतेति, किन्तु अन्यत्रैवासौ स्यात्, तेन च यदि साध्योऽर्थः साधयितुमिष्येत तदा 'अन्यगेहस्थिताद् धूमान्न गेहान्तरमग्निमत्' इत्येष न्यायः प्रोक्तः । यथा विद्वत्तमो देवदत्तो भूयिष्ठं ह्यध्ययनं विष्णुदत्तस्येति । अत्र विद्वत्तमत्वसाधनमध्ययनभूयिष्ठत्वं देवदत्तपक्षभिन्ने विष्णुदत्ते एव वर्तते इति । **साहस्री.** ८८०.

⌛ '**अन्यतः प्राप्तान्यङ्गानि समीक्ष्य प्रयोगविधिर्विधत्ते' इति न्यायेन** प्रयोगविधेः यथाप्राप्त्यैव अङ्गानां प्रधानप्रत्यासत्तिविधायकत्वात् । **कु.** ५।१।८।१५.

⌛ '**अन्यतः प्राप्ते कर्तृकर्मणोरवाच्यता' इति लौकिकन्यायानुसारी** 'द्व्येकयोः' इत्यादिसूत्रार्थो भवति । **सु.** पृ. १४२६.

* **अन्यतरकोटिव्यवस्थया** कोट्यन्तरस्य आर्थिकी व्यवस्था भवति । सा पुनः भावविषया अभावविषया च । तत्र आद्या यथा 'आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः, तत्तर्हि अनुनिर्वपेत्, तर्हि स उभयदेवतो भवति' इति अग्नीषोमीयपुरोडाशे कृतसोमयागपुंविषयत्वेन व्यवस्थापिते अर्थात् तदभावः अकृतसोमयागपुंविषयत्वेन व्यवस्थितो भवति । 'पूर्वेद्युरमावास्यायां वेदिं करोति'

इति अमावास्यायां पूर्वेद्युर्वेदिकरणे व्यवस्थापिते अर्थात् हविरभिवासनोत्तरं वेदिकरणं पौर्णमास्यां व्यवस्थितं भवति । बाल. पृ. १९.

**अन्यतरतोऽतिरात्रत्वात् पञ्चदशरात्रस्याहीनत्वं कुण्डपायिनामयनस्य च तद्भूतेष्वहीनत्वस्य दर्शनात् । ८।२।६।३० ॥**

पञ्चदशरात्रः कुण्डपायिनामयनं च एतौ अहीनभूतौ सत्रभूतौ वेति विप्रतिपत्तेर्विचारे पूर्वपक्षमाह । पञ्चदशरात्रस्य पञ्चदशभिरहोरात्रैः साध्यस्य यागविशेषस्य, कुण्डपायिनामयनस्य एतन्नामकस्य च यागविशेषस्य अहीनत्वं स्यात्, न सत्रत्वम् । अन्यतरतोऽतिरात्रत्वात् । अन्यतरतः आदौ वा अन्ते वा यस्य अतिरात्रयागो भवति तादृशत्वात् । अन्यतरतोऽतिरात्रत्वं च अहीनस्य लक्षणम् । तच्चानयोर्भवति इति अहीनत्वम् । 'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति श्रुतौ तद्भूतेषु अन्यतरतोऽतिरात्रभूतेषु अहीनत्वस्य दर्शनात् ।

**अहीनवचनाच्च । ३१ ॥**

पञ्चदशरात्रः अहीनः अहःसमूहसाध्यक्रतुविशेषः, न तु सत्रं इति पूर्वपक्षे हेत्वन्तरमाह । चकारः समुच्चयार्थः । 'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति वचनेन प्रत्यक्षमेव पञ्चदशरात्रस्य अहीनत्वमुक्तम् । एवं अहीनवचनात् पञ्चदशरात्रः अहीनः इति पूर्वः पक्षः ।

**सत्रे वोपायिचोदनात् । ३२ ॥**

सिद्धान्तमाह । वाशब्दः पूर्वपक्षं व्यावर्तयति । पञ्चदशरात्रः कुण्डपायिनामयनं च इमे द्वे अपि सत्रे स्यातां, न अहीनौ । उपायिचोदनात् । 'य एव भूतिकार्यमिच्छन्तस्त एनं पञ्चदशरात्रमुपेयुः' इति, कुण्डपायिनामयने च 'भूतिकामा उपेयुः' इति, उपोपसृष्टेन इण् गतौ इति धातुना चोदिते एते । तस्मात् ते उभे सत्रे एव । 'यदन्यतरतोऽतिरात्रस्तेनाहीनः' इति नैतद्वचनं विधायकं, किंतु अनुवादोऽयं स्तुत्यर्थः । स्तुतिश्च नित्येन अहीनलिङ्गेन अन्यतरतोऽतिरात्रत्वेन अहीनस्य नोपपद्यते । यतः सर्व एवाहीनः अन्यतरतोऽतिरात्रः । सत्रस्य तु उपपद्यते । अन्यतरतोऽतिरात्रत्वादयं अहीनः, स्वरूपेण तु सत्रं, इति उभयात्मकत्वात् श्रेष्ठोऽयं इति । तस्मात् पञ्चदशरात्रः सत्रमेव ।

**सत्रलिङ्गं च दर्शयति । ३३ ॥**

कुण्डपायिनामयने 'गृहपतिर्गृहपतिः, सुब्रह्मण्यः सुब्रह्मण्यः' इति सत्रस्य लिङ्गं दर्शयति । गृहपतिर्हि सत्रे आम्नातः क्रत्वर्थान् याजमानान् कर्तुम् । तस्मात् कुण्डपायिनामयनं सत्रम् । एवं पञ्चदशरात्रोऽपि सत्रम् । उभयोः सत्रत्वमेव नाहीनत्वं इति सिद्धान्तः । **के.**

* **अन्यतरप्राप्तौ** व्यवस्थाविधिर्यथा– 'वासिष्ठानां नाराशंसो द्वितीयः प्रयाजः, तनूनपात् अन्येषां' इति । अत्र हि विधिपाठक्रमात् तनूनपादेव द्वितीयो ग्राह्यो न नराशंसः । यथा वा– 'यदि रथन्तरसामा सोमः स्यात् ऐन्द्रवायवाग्रान् ग्रहान् गृह्णीयात्, यदि बृहत्सामा शुक्राग्रान्' इति । अत्रापि पाठतः ऐन्द्रवायवाग्रतैव प्राप्ता, न शुक्राग्रता इति । **बाल.** पृ. १८.

* **अन्यतराकाङ्क्षातः** उभयाकाङ्क्षा बलीयसी । **मीन्या.** पृ. १७१.

**अन्यत्र कृतार्थं अन्यत्र प्रतिपाद्यते इत्येष हि न्यायः ॥** ( सोमलिप्तानां द्रव्याणां अवभृथे नयनं प्रतिपत्तिः इत्यादिविषये ) । **भा.** ४।२।८।२२.

**'अन्यत् साध्यमदृष्ट्वैव यागादीननुतिष्ठतः । धार्मिकत्वसमाख्यानं तद्योगादिति गम्यते ॥'** ( **श्लोवा.** चोदनासूत्रे १९२ ) **इत्यनेन न्यायेन** यागादिस्वरूपस्यैव धर्मत्वं इत्यापन्नम् । **सनातनधर्मप्रदीपे** प्रामाण्यप्रकाशे पृ. ७१.

* **अन्यत् सामान्यं** अन्यो विशेषः । 'यजेत' इति सामान्यं, 'दर्शपूर्णमासाभ्यां' इति विशेषः । **भा.** ७।१।१।३.

* **अन्यथाकरणं सूत्रे** यथा– 'पशुसामान्यविध्यादौ सूत्रमेवान्यथाकृतम्' ( **श्लोवा.** १।१।१।५६ ) ज्योतिष्टोमे पशुधर्मविधिः किं त्रयाणामपि पशूनां साधारणः, अथवा सवनीयस्यैव, अथवा अग्नीषोमीयसवनीययोः, उत अग्नीषोमीयस्यैव इति संशये 'तुल्यः सर्वेषां पशुविधिः प्रकरणाविशेषात्' ( ३।६।७।१८ ) इति सूत्रम् । तदिदं सर्वपशूनां समानो विधिः इति आक

पक्षस्य प्रतिपादकं सत् 'स्थानाच्च पूर्वस्य' (३।६।७।१९) इत्यादिसूत्रासंगतिप्रसङ्गात् तत्संगतिसिद्धयर्थं आद्यपक्षं उत्सूत्रं कृत्वा सवनीयस्य इत्येतस्मिन् पक्षे अन्यथा कृत्वा योजितं, तुल्यः सर्वेषां पशुविधिः स्यात् यदि प्रकरण-विशेषो न भवेत्, अस्ति तु प्रकरणविशेष इति ।

**अन्यथाकरणे चास्य बहुभ्यः स्यान्निवारणं इति न्यायः** ॥ आयुर्वेदे वैदिकशान्तिकपौष्टिकप्रायश्चित्त-तपोजपदानहोमाद्युपदेशपरो भागः अप्रमाणं इति चेत् (बौद्धशङ्केयम्) न, तुल्ययोगक्षेमत्वात् । (चिकित्सा-भागोऽपि अप्रमाणं स्यादित्यर्थः) एतदेवासिद्धं प्रक्षेप-स्यापि संभवात् इति चेन्न । अध्येत्रध्यापयितृसंप्रदाया-विच्छेदात् अन्यथाकरणे० इति न्यायात् । **सनातनधर्म-प्रदीपे** प्रमाणप्रकाशे पृ. २४६.

***अन्यथाख्यातिः** । स्वप्ने दिवसानुभूतदेशकालान्तर-गताः शिरश्छेदादयो विषयाः अदृष्टोद्बोधितसंस्कारवशात् स्मर्यमाणा निद्रारूपदोषवशेन आत्मनिष्ठतया भासन्ते । एवं च अन्यसंबन्धित्वेन अवगतानां अन्यसंबन्धित्वेन भानं शुक्तिरजतज्ञानवत् । इयमेव च अन्यथाख्यातिः । **न च** बाह्यविषयेषु मनसः तदानीमसंबन्धात् कथं भान-मिति **वाच्यम्** । ज्ञानलक्षणायाः प्रत्यासत्तेरङ्गीकारात् प्रमुष्टतत्ताकस्मरणाङ्गीकाराद्वा न दोषः । **मणि.** पृ. २६, * **अन्यथाख्यातिरूपरजतत्वविशिष्टज्ञानस्यैव ग्रहे प्रवृ-**त्त्यादिहेतुता युक्ता । पृ. २७.

* **अन्यथात्वकल्पने** विपरिणामदोषः, व्यवहित-कल्पनादोषः, व्यवधारणकल्पनादोषश्च । तत्र प्रथमोदाहरणं आग्नेयवाक्यम् । द्वितीये, प्रतितिष्ठन्ति इत्यत्र प्रतितिष्ठा-सन्ति, रात्रीरुपेयुः इत्यन्यथात्वे कल्पिते ये इत्यत्र रात्रिसम-भिव्याहृतस्य ये प्रतितिष्ठासन्ति इति व्यवहितकल्पना । तृतीये तु 'यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणान् चतुष्कपालान् निर्वपेत्' इति । **बाल.** पृ. ४.

* **अन्यथाऽनुपपत्तिः** । नहि अन्यथाऽनुपपत्तिः प्रत्यक्षसमधिगम्या । कार्याव्यभिचारसमधिगम्या हि सा । अव्यभिचारश्च असकृद्दर्शनपूर्वकः । **बृहती.** पृ. ८९. * अन्यथाऽनुपपत्तिः प्रमाणम् । सा च यावत्येव हेतुत्व-मुपपन्नं, ततः अधिककल्पनायै न प्रभवति । **वा.** १।२।४।३० पृ. १८२, * अन्यथाऽनुपपत्तिः सर्वेत्र गमयन्त-नये भवति । १।२।१।७ पृ. ११०, * अन्यथाऽनुप-पत्त्या विश्वजिति फलकल्पना । ७।२।१।१२ पृ. १२२६, * तच्च (अपूर्वं) अनुपपत्तिप्रमाणकम् । तत्र एकापूर्व-कल्पनया उपपत्तौ नादृष्टान्तरकल्पनाप्रमाणमस्ति । यो हि अनेकान्यपूर्वाणि कल्पयति, कल्पयत्यसावेकम् । तच्चेत् कल्पितं, अर्थवत्त्वात् वाक्यस्य क्षीणा अन्यथाऽनुपपत्तिः नापूर्वान्तरस्य प्रमाणं भवति । २।१।१।१ पृ. ३७८.

* **अन्यथासिद्धत्वं** त्रिविधम् । गृहीतस्वतन्त्रान्वयव्यति-रेकाननुविधानावच्छेदकधर्मत्वं आद्यम् । अन्यनिरूपित-पूर्ववर्तित्वग्रहहेतुककार्यपूर्ववर्तित्वग्रहविषयत्वं द्वितीयम् । क्लृप्तान्वयव्यतिरेकानुविधानसाहित्यं तृतीयम् । अत्र अक्लृप्तान्वयव्यतिरेकानु (काननु ?) विधायिनः इति विवक्षणीयं, तेन न कारणान्तरस्यान्यथासिद्धिः, ईश्वर-ज्ञानादिसंग्रहश्च । तस्योपादानप्रत्यक्षतया स्वतन्त्रान्वय-व्यतिरेकानुविधानात् । **मणि.** पृ. ४२.

**अन्यद् भुक्तमन्यद्वान्तमिति न्यायः** ॥ यथा विघ्नविघाताय कृतं मङ्गलं शिष्यशिक्षायै निबध्नातीत्यत्र विघ्नध्वंसं प्रति मङ्गलस्य कारणता अभिहिता सिद्धा-न्तिना । तत्र वादिना तु, ननु मङ्गलं न विघ्नध्वंसं प्रति न वा समाप्तिं प्रति कारणं, विनाऽपि मङ्गलं नास्तिका-दीनां ग्रन्थे निर्विघ्नपरिसमाप्तिदर्शनादित्युक्तम् । अत्र वादिमते अभुक्तवान्तापत्तिर्दोषः प्रकृतन्यायतः आयाति, न वा समाप्तिं प्रतीत्युक्तेरिति । **साहस्री.** २७१.

* **अन्यपूर्वकं अभीप्सितं कर्म** यथा विषमनु क्रुध्यति, अग्निमनु यजति इति । **मणि.** पृ. १३०.

**अन्यलभ्यत्वं** 'एककपालानां वैश्वदेविकः प्रकृतिः' (७।१।५।२३) इत्यधिकरणन्यायः । '**एतद-**धिकरणन्यायस्य अन्यलभ्यत्वस्य' । **भाट्ट.** ७।१।५.

**अन्यविधानादारण्यभोजनं न स्यादुभयं हि वृत्त्यर्थम्** । १२।१।१४।३० ॥

सोमे अन्यस्य भोजनद्रव्यस्य 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इतिवचनेन विधानात्, दार्शपौर्णमासिकं चोदकप्राप्तं आरण्यस्य श्यामाकादेः भोजनं न स्यात् । उभयं हि यस्मात् दुग्धादिकं

श्यामाकादिकं च वृत्त्यर्थमेव । एकेनापि वृत्तिर्जीवनं स्यादेव । न तत्र उभयसमुच्चयापेक्षा । तस्मात् प्राकृतस्य आरण्याशनस्य निवृत्तिः इति सिद्धान्तः । **के.**

* '**अन्याअन्या ऋचो भवन्ति**' । **न च** एकं तृचं पठित्वा अन्त्यामृचं पुनरुपादाय अग्रिमऋग्द्वयपाठः इत्येवं ऋक्प्रग्रथनमेव किं न स्यादिति **वाच्यम्** । अन्या-अन्या इतिवचनेन तन्निरासात् । अतः पादप्रग्रथनमेव प्रगाथेषु । **भाट्ट.** ९।२।६ वर्णकं ४ पृ. १११.

**अन्यायश्चानेकशब्दत्वम् ( इति न्यायः ) ॥** कुतः ? आह— यस्यां अभिधानक्रियायां गोशब्दः करणं तस्यां सास्नादिमान् कर्म, यस्यां चासौ कर्म तस्यां गोशब्दः करणम् । एवं नियमे अवगते यदि प्रमाणान्तरेण एकस्यैव शब्दस्य अर्थान्तरमभिधेयं, अर्थस्य वा शब्दान्तरं अभिधायकं गम्यते, तत्र अवगतोऽपि नियमो बाध्यते । एवं अवगतनियमबाधप्रसङ्ग इति । **रत्नाकरः.** संबन्धाक्षेपवादे श्लो. १३ पृ. ५०१. * '**अन्यायश्चानेक-शब्दत्वम्**' ( १।३।८।२६ ) न चैष न्यायः यत् सदृशाः शब्दाः एकमर्थमभिनिविशमानाः सर्वे अविच्छिन्नपारंपर्या एवेति । तस्मादमीषां एकः अनादिः, अन्येऽपभ्रंशाः । हस्तः करः पाणिः इत्येवमादिषु तु अभियुक्तोपदेशात् अनादिः अमीषां अर्थेन संबन्धः इति । **भा.** १।३।८।२६. * यथा अनेकार्थत्वं एकस्य शब्दस्य अन्यायः, एवं एकस्य अर्थस्य अन्याय्यं अनेकशब्दत्वं इत्यपि न्यायः । ततो ज्योतिष्टोमज्योतिःशब्दौ नैकस्य कर्मणो वाचकौ । **कल्पतरुः.** ३।३।१।१ ब्रसू. अन्यायश्चानेक-शब्दत्वं इति न्यायः प्रकृते उदाहर्तव्यः । **परिमलः.**

**अन्यायश्चानेकार्थत्वम् (इति न्यायः) ॥ भा.** पृ. ३०१, ४१०, ७४८, १३४०, १३६६, १५५०. * अन्यायश्चानेकशब्दत्वं इति सूत्रे भाष्यकृता अन्याय-श्चानेकार्थत्वं इति ऊहित्वा पठितम् । **सु.** पृ. ३५६. * अन्यायश्चानेकार्थत्वं इत्यस्य बीजं अनवस्थितसंबन्ध-प्रसङ्गः, अनेकादृष्टवाचकशक्तिकल्पनाप्रसङ्गः, विकल्पदोष-प्रसङ्गश्चेति त्रितयम् । तदुक्तं वार्तिके '**न्यायेन हि स्थितं एकस्य शब्दस्यार्थैक्यं अनवस्थितसंबन्धानेकादृष्टवाचक-शक्तिकल्पनविकल्पदोषप्रसङ्गात्**' इति । **वा.** १।३।९। ३० पृ. ३०१. * अन्यायश्चानेकार्थत्वं इति एकत्रैव मुख्यत्वं, नोभयत्र । **सोम.** ७।३।२. * एकः शब्दः अनेकार्थः स्यात्, तत्र को दोषः ? शब्दे उच्चरिते संशयः स्यात्, नार्थनिश्चयः । तत्र व्यवहारो न सिध्येत् । व्यवहारार्थश्च शब्दप्रयोगः । कारणान्तरं वा प्रकरणादि अपेक्ष्यम् । एकार्थत्वे तु निरपेक्षोऽर्थप्रत्ययः । तस्मात् अनेकार्थत्वं अन्याय्यम् । **भा.** ७।३।१४।३५ पृ. १५३३–३७, * कर्मान्तरस्य एतत् ( पौर्णमासं इति पदं ) वाचकं इति प्रमाणाभावः । प्रकृतस्य कर्मणो वाचकं इति प्रत्यक्षम् । यच्च सप्रमाणकं तत् ग्राह्यम् । अन्यायश्चानेकार्थत्वम् । ५।४।४।१४ पृ. ३४०, * माणवको नाग्निशब्दात् प्रतीयते । कथमवगम्यते ? उक्तं अन्यायश्चानेकार्थत्वं इति । ३।२।१।१ पृ. ७४८. * यत्रार्थभेदेन पृथक् शक्तिकल्पनं तत्रैव अन्यायश्चानेकार्थत्वं इति न्यायः, नैकशक्तिविषयार्थ-भेदमात्रेण । **सोम.** ७।३।२. * सत्यां गतौ साधारण-शब्दताऽपि अयुक्ता । अन्यायश्चानेकार्थत्वमिति । **वा.** ५।४।४।१४, * अन्यायो ह्यनेकार्थत्वं इत्यनेन **न्यायेन** ( काठकादिनामधेयानां ) ग्रन्थनामत्वे सति कर्मणि लक्षणयैव प्रयोगोपपत्तेः । २।४।२।१०. * संनिधावपि पूर्वा-संबद्धार्थे संज्ञान्तरं प्रतीयमानं अन्यायश्चानेकार्थत्वं इति **न्यायात्** उत्सर्गतः अर्थान्तरार्थत्वात् पूर्वबुद्धिं व्यवच्छिनत्ति अपूर्वबुद्धिं च प्रसूते इति लोकसिद्धम् । **भामती.** ३।३।१।१ ब्र. सू. * अन्यायो ह्यनेकार्थत्वम् । **भा.** ७।३।४।१४, * अन्यायो ह्यनेकार्थभावः । १०।१।१०। ३७, * **अन्याय्यमेव द्व्यर्थत्वम्** । १०।१।१०।४२. * '**न च एकस्य शब्दस्य द्वावर्थौ**' । **टुप्.** ७।१।३।१६ पृ. १५३६.

**अन्यायस्त्वविकारेणादृष्टप्रतिघातित्वादविशेषाच्च तेनास्य । ९।३।४।१० ॥**

अग्नीषोमीये पशौ पाशमन्त्रः तैत्तिरीयके एकवचनान्तपाशपदघटितः पठितः '**अदितिः पाशं प्रमुमोक्त्वेतं**' इति, मैत्रायणीये काठके च बहुवचनान्तपाश-पदघटितः पठितः '**अदितिः पाशान् प्रमुमोक्त्वेतान्**' इति । द्विपशुके तु यागे बहुवचनान्तपाशपदघटितस्य मन्त्रस्य अविकारेण द्विवचनान्तोहरूपविकारं विना प्रयोगः

अन्यायः न्यायशून्यः। एवं एकवचनान्तपाशपदघटितस्यापि मन्त्रस्य ज्ञेयम्। तत्र एकवचनान्तस्य प्रकृतौ एकपशुकायां अदृष्टप्रतिघातित्वम्। नास्य एकस्मिन् पाशे प्रवर्तमानस्य मन्त्रस्य दृष्टः प्रतिघातः विरोधः। अत्र अदृष्टप्रतिघात-शब्दात् मत्वर्थीयो ज्ञेयः। अदृष्टप्रतिघातत्वात् इति वा पाठः स्वीकार्यः, तदा च बहुव्रीहिः। अथ काठके मैत्रायणीये च एकपशुके एव एकपाशके अग्नीषोमीये पशौ बहुवचनान्तपाशपदघटितो मन्त्रो विहितः। स च यद्यपि अन्यायसंबन्धः एकस्मिन् पाशे बहुवचनस्य न्यायशून्यत्वात्, तथापि विधिबलात् पाशस्य अवयविनः एकत्वेऽपि तदवयवानां बहुत्वं अभिप्रेत्य, बहुवचनस्योपपत्तिर्वक्तव्या। तथा च तत्रापि अदृष्टप्रतिघातित्वं ज्ञातुं शक्यते। एवं प्रकृतौ एकपशुकायां एकपाशिकायां स्थिते, द्विपशुके यागे विचारः कस्य प्रवृत्तिः कस्य निवृत्तिः, कस्मिन्नूहः कस्मिन्नोहः इति। तत्र पाशैकत्वाभिधायी मन्त्रः द्विपशुके द्विपाशके प्रयोगे दृष्टप्रतिघातित्वात् न प्रवर्तते। अन्यस्तु मन्त्रः यथा एकपाशके अविकारेण प्रयुज्यते, तथा द्विपाशकेऽपि प्रयोक्तुं शक्यत्वात् स प्रवर्तते अनूहेन इति प्रथमः पक्षः।

**विकारो वा, तदर्थत्वात्। ११॥**

यदुक्तं प्रथमपक्षे, तत् व्यावर्तयति वाशब्दः। विकारो नेति यदुक्तं तन्न, विकारः कर्तव्यः, मन्त्रस्य तदर्थत्वात् पाशोन्मोचनप्रयोगार्थत्वात्। स तु विकारः पाशैकत्वाभिधायिमन्त्रे एव 'अदितिः पाशौ प्रमुमोक्त्वेतौ' इति कर्तव्यः। अन्यस्तु मन्त्रः सकलाभिधानसंभवे विकलाभिधानमन्याय्यं इति अविवक्षितसंख्याकपाशमात्रप्रकाशनेन असमग्राभिधानत्वात् न प्रवर्तते इति द्वितीयः पक्षः।

**अपित्वन्यायसंबन्धात् प्रकृतिवत् परेष्वपि यथार्थं स्यात्। १२॥**

द्वितीयं पक्षं 'अपितु' इति पदं व्यावर्तयति। अन्यायसंबन्धात् अन्यायस्य पाशबहुत्वाभिधायिनो मन्त्रस्य संबन्धात् सः अविकारेण प्रवर्तते प्रकृतिवत्। प्रकृतौ यथा अवयवबहुत्वं अवयविनि उपचर्य प्रवर्तते, तथा परेष्वपि प्रकृतिभिन्नेष्वपि विकृतिपशुयागेष्वपि यथार्थं प्रातिपदिकार्थमनतिक्रम्य पाशबहुत्वाभिधायी मन्त्रः अनूहेन स्यात्। पाशैकत्वाभिधायी तु ऊहेन प्रवर्तेत इति तृतीयः पक्षः।

**यथार्थं तु, अन्यायस्याचोदितत्वात्। १३॥**

सिद्धान्तमाह। तुशब्देन पूर्वसूत्रोक्ततृतीयपक्षनिरासः। यथार्थं अर्थमनतिक्रम्य पाशैकत्वपाशबहुत्वाभिधायिनोर्मन्त्रयोर्द्वयोरपि द्विवचनोहः कर्तव्यः। अन्यायस्य प्रकृतिवदनूहितपाठस्य अचोदितत्वात् तस्मादुभयोरूहेन प्रयोगः इति सिद्धान्तः।

**छन्दसि तु यथादृष्टम्। १४॥**

ननु यथा प्रकृतौ एकस्मिन्नपि पाशे पाशबहुत्वाभिधायी मन्त्रः प्रवर्तते अन्यायसंबन्धोऽपि, तथा द्विपशुकायां विकृतावपि प्रवर्ततां इति। तत्राह सिद्धान्ती। बहुवचनान्तपाशपदघटितो मन्त्रः प्रकृतौ पाशैकत्वेऽपि वचनेनैव विहितः इति छन्दसि दृष्टमनतिक्रम्य यथादृष्टं स्वीकर्तव्यम्। पाशोन्मोचनं तत्र कर्तव्यम्। नैकत्वेन बहुत्वेन वा तत्र प्रयोजनम्। द्विपशुकायां तु विकृतौ न तथा साक्षात् विधानम्। तत्र न्यायानुसारेणैव कर्तव्यम्। तस्मात् विकृतौ ऊहः कर्तव्यः। के.

**अन्यार्थं प्रकृतमन्यार्थं भवतीति न्यायः॥** तद्यथा—शाल्यर्थं कुल्याः प्रणीयन्ते, ताभ्यश्च पानीयं पीयते, उपस्पृश्यते च, शालयश्च भाव्यन्ते, तथा प्रकृतेऽपि। 'कुल्याऽल्पा कृत्रिमा सरित्' इत्यमरः। 'बहुगणवतुडति संख्या' (पा० १।१।२३) इति सूत्रमहाभाष्ये। **साहस्री. ४२७.**

*** अन्यार्थेनापि** भिन्नस्योपकारो भवति यथा पश्वर्थैः प्रयाजादिभिः पशुपुरोडाशस्य। **वि. १२।१।१.**

*** अन्यार्थदर्शनं** अन्यत् विधातुं प्रवृत्तेषु वाक्येषु अन्यस्मिन्नर्थे लिङ्गदर्शनम्। **कु. २।४।२।८ पृ. २३३** *** अन्यार्थदर्शनम्।** किं चित् वाक्यं प्रकृतात् अर्थात् अन्यमेव अर्थं प्रतिपादयति, परंतु तेनैव **अन्यार्थेन वाक्येन दृष्टेन प्रकृते वाक्यार्थेऽपि कश्चिदुपयोगो भवति। अन्यार्थेन प्रकृते किंचिदनुमीयते। तादृशस्य वाक्यस्य यद्दर्शनं तत् अन्यार्थदर्शनं नाम। यथा 'चतुर्दश पौर्णमास्यां आहुतयो हूयन्ते, त्रयोदश अमावास्यायां' इति वाक्यं दर्शे पौर्णमासे च कति आहुतयः इति प्रतिपादयति। तेन च ज्ञायते दर्शादौ आग्नेयादीनि प्रधानानि प्रयाजादयश्च**

अङ्गानि इति । तदिदं प्रयाजादीनामङ्गत्वे अन्यार्थदर्शनम् । एवमन्यत्रापि । के. * **अन्यार्थदर्शनानि** यानि अनन्यगतीनि, तेषामपि लिङ्गत्वमभिधास्यते । **वा.** ३।३।७।१४ पृ. ८४१. * **अन्यार्थदर्शनरूपं** लिङ्गं साहचर्येण संबन्धेन कस्य चिदर्थस्य ज्ञापकम् । तच्च सत्येव मूलभूते प्रमाणान्तरे तत्सहकारि भवति, न तु स्वयमेव कस्य चिदर्थस्य निश्चयमादधाति । **आभरणं.** ३।३।२९।४५ ब्रसू. * **अन्यार्थदर्शनरूपस्य** लिङ्गस्य स्वतो निश्चायकत्वं तान्त्रिकाणां असंप्रतिपन्नम् । **सोम.** ७।३।१०.

**⌛ अन्यार्थसंनिधानस्य आकाङ्क्षावशात् विशेषकत्वं इति न्यायः** अपरिमिताधिकरणप्रतिपादितः ( ६।७।१० ) । **पराक्रमः.** पत्रं २७/२.

* **' अन्यूनयोः पार्श्वयोरवद्यति '** इति वचनात् पशोः साकल्यावगमः । **भाट्ट.** ९।४।१.

**⌛ अन्येन चाऽन्यस्य विधिर्भवतीति न्यायः** ॥ तद्यथा देवदत्तसमाशं शरावैरोदनेन च यज्ञदत्तः प्रतिविधत्ते, तथा संग्रामं हस्त्यश्वरथपदातिभिः इति । 'येन विधिस्तदन्तस्य' (पा० १।१।७२ ) इति सूत्रभाष्ये उक्तः । समाशो भोजनम् । **साहस्री.** ६०५.

**⌛ अन्ये स्युर्ऋत्विजः प्रकृतिवत्** । १०।६।१५।५१ ॥

सत्रे सप्तदशभ्यो यजमानेभ्यः अन्ये ऋत्विजः स्युः । प्रकृतिवत् । यथा प्रकृतौ ज्योतिष्टोमे यजमानादन्ये ऋत्विजो भवन्ति तद्वत् इति पूर्वः पक्षः ।

**अपिवा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात् तेषां स्याद्यजमानत्वम्** । ५२ ॥

न यजमानेभ्योऽन्ये सत्रे ऋत्विजः इति अपिवाशब्दस्यार्थः । किंतु यजमाना एव ऋत्विजः स्युः । ऋत्विजां अभिधानसंयोगात् ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इत्यादौ दीक्षावाक्ये ऋत्विजां यानि अभिधानानि तेषां यजमानेषु संयोगात् संबन्धात् संबन्धदर्शनात् । तस्मात् तेषां ऋत्विजामेव यजमानत्वं स्यात् यजमानत्वेन च आर्त्विज्यं स्यात् ।

**कर्तृसंस्कारो वचनादाधातृवदिति चेत्** । ५३ ॥

सत्रे न यजमाना एव ऋत्विजः । ' अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इति वचनात् कर्तृसंस्कारः कर्तॄणां ऋत्विजामेव दीक्षारूपः संस्कारः स्यात् । कर्तॄन् आत्मीयाभिः संज्ञाभिः उपलक्ष्य वचनसामर्थ्यात् तेषां दीक्षासंस्कारो विधीयते । आधातृवत् । यथा आधाने ' यस्तं श्वोऽग्निमाधास्यन् स्यात् स एतां रात्रिं व्रतं चरेत् ' ' न मांसमश्नीयात्, न स्त्रियमुपेयात् ' इति वचनात् आधातुः अध्वर्योः नियमो विधीयते, यथा वा ज्योतिष्टोमे ' सर्वर्त्विज उपवसन्ति ' इति ऋत्विजामुपवासो विधीयते, तद्वत् । इति चेत् पूर्वपक्षी ब्रूयात् ।

**स्याद्विशये तन्न्यायत्वात्, प्रकृतिवत्** । ५४ ॥

आधातृवत् इति पूर्वपक्षिणा उक्तं दृष्टान्तं वैधर्म्येण परिहरति । स्यात् आधातुः व्रतं, वचनेन अपूर्वविधानात् । परंतु विशये सत्रे यजमाना एव ऋत्विजो न वा इति संशये तन्न्यायत्वात् ' अपिवा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात् ' ( १०।६।१५।५२ ) इति न्यायात् यजमाना एव ऋत्विजः इति युक्तम् । स न्यायो येषां ते तन्न्याया यजमानाः, तेषां भावः तन्न्यायत्वं, तादृशत्वात् इति विग्रहः । प्रकृतिवत् यथा प्रकृतौ ज्योतिष्टोमे दीक्षाकार्यं यजमानसंस्कारः, तद्वत् सत्रेऽपि ' गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति ' इति यजमानानामेव दीक्षासंस्कार उक्तः स्यात् । यत्तु ऋत्विजामुपवासविधानं आधातुर्व्रतविधानं च, तत् वचनात् भविष्यति इति विषमो दृष्टान्तः । तस्मात् सत्रे यजमाना एव ऋत्विजः इति सिद्धान्तः ।

**स्वाम्याख्याः स्युर्गृहपतिवदिति चेत्** । ५५ ॥

' अध्वर्युर्गृहपतिं दीक्षयित्वा ' इति दीक्षावाक्ये अध्वर्युः ब्रह्मा इत्याद्या आख्याः स्वाम्याख्याः स्वामिनामाख्याः स्युः । स्वामिन एव ते सर्वे, ऋत्विजस्तु अन्ये एव स्युः । गृहपतिवत् यथा गृहपतिः इति आख्या स्वामिन एव न ऋत्विजः तद्वत् । इति चेत् पूर्वपक्षी ब्रूयात् ।

**न, प्रसिद्धग्रहणत्वादसंयुक्तस्य तद्धर्मेण** । ५६ ॥

दीक्षावाक्ये अध्वर्युब्रह्मादिशब्दाः स्वाम्याख्याः इति

पूर्वपक्षिणा यदुक्तं तन्न, प्रसिद्धग्रहणत्वात् आध्वर्यवादि कर्म कुर्वाणानां ऋत्विजां कर्मनिमित्तेन प्रसिद्धानां आख्यानां ग्रहणत्वात् ग्रहणात् । त्वप्रत्ययः स्वार्थिकः । तस्मान्न ताः स्वाम्याख्याः । गृहपतिः इति आख्या तु तद्धर्मेण ऋत्विग्धर्मेण असंयुक्तस्य स्वामिन एव इति यजमानाभिधेयता उपपद्यते । प्रकृतावपि अयं गृहपतिशब्दः 'गृहपतिर्यजेत' इति स्वामिनि प्रयुक्तः । तस्मात् सत्रे यजमाना एव ऋत्विजः, ऋत्विज एव च यजमाना इति सिद्धान्तः ।

**बहूनामिति च तुल्येषु विशेषवचनं नोपपद्यते । ५७ ॥**

सत्रे ऋत्विक्षु ऋत्विक्त्वशून्येन केवलेन यजमानत्वेन तुल्येषु सत्सु 'यो वै बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता, स हि भूयिष्ठामृद्धिमाप्नोति' इति बहूनां इति विशेषवचनं नोपपद्यते । एकस्मिन् गृहपतिरिति विशेषवचनं सप्तदशानां गृहपतिना अतुल्यत्वे सति उपपद्यते, न तुल्यत्वे । यदि सर्वे ऋत्विक्त्वशून्याः गृहपतिकर्म कुर्युः न कर्मान्तरं, ततो विशेषाभावात् गृहपतौ विशेषवचनानुपपत्तिः । अस्मात् विशेषवचनात् सत्रे ऋत्विज एव यजमाना इति गम्यते ।

**दीक्षितादीक्षितव्यपदेशश्च नोपपद्यतेऽर्थयोर्नित्यभावित्वात् । ५८ ॥**

'दीक्षिताः सत्त्रैर्यजन्ते, अदीक्षिता अहीनैर्यजन्ति' इति दीक्षिताश्च अदीक्षिताश्च इति व्यपदेशः निर्देशः सत्राणां स्वयंकर्तृकत्वाभावे नोपपद्यते । अर्थयोः स्वार्थयजनपरार्थयजनरूपयोः यजमाने ऋत्विजि च नित्यभावित्वात् । यजमाने स्वार्थयजनस्य, ऋत्विजि परार्थयजनस्य च नित्यं वर्तमानत्वात् । तस्मात् दीक्षितादीक्षितव्यपदेशात् सत्रे स्वयंकर्तृकत्वं इति सिद्धान्तः ।

**अदक्षिणत्वाच्च । ५९ ॥**

'अदक्षिणानि सत्राणीत्याहुः, नह्यत्र गौर्दीयते न वासो न हिरण्यं' इति सत्रस्य अदक्षिणत्वात् अविद्यमानदक्षिणाकत्वात् दक्षिणाशून्यत्वात् सत्राणि स्वयंकर्तृकाणि । ऋत्विजां भिन्नत्वे तु अदक्षिणात्वं न संभवति । तस्मात् सत्रे ये यजमानास्ते ऋत्विजः इति सिद्धान्तः । **के.**

* **अन्योन्यानपेक्षबुद्धिजन्मविषयत्वं** 'पौर्वापर्ये पूर्वदौर्बल्यं' इति न्यायस्य ( ६।५।[illegible] ) । **सु.** पृ. १२२०.

* **अन्योन्याभावः** 'यत्र योऽन्यस्याप्यभावस्तु सोऽन्योन्याभाव इष्यते ।' **श्लोवा.** अभावपरिच्छेदे ३.

* **अन्योन्याभावस्य** व्याप्यवृत्तित्वं इति जीर्णाः । तस्यापि अव्याप्यवृत्तित्वं इति नव्याः । **मणि.** पृ. ३४, * **अन्योन्याभावत्वं** तादात्म्यसंसर्गावच्छिन्नप्रतियोगिताकाभावत्वं, तादात्म्यारोपजन्यप्रतीतिविषयाभावत्वं, प्रतियोग्यवच्छेदकदेशकालावच्छेदेन प्रतियोगिसमानाधिकरणाभावत्वं वा । पृ. १५६, * अन्योन्याभावत्वं समानविभक्तिकप्रतियोग्यनुयोगिवाचकसमभिव्याहृतनञ्पदजन्यबुद्धिविषयत्वम् । इत्याहुः । पृ. १५८, * **अन्योन्याभावबोधः** । नञ्समभिव्याहाराभावे यादृशप्रतियोग्यनुयोगिवाचकपदयोः विरुद्धविभक्त्यर्थानवरुद्धयोः अभेदान्वयव्युत्पत्तिः, तत्समभिव्याहृतनञा अन्योन्याभावबोधः । पृ. १५८.

**अन्योन्याश्रयन्यायः** ॥ स्वग्रहसापेक्षग्रहसापेक्षग्राहकरूप इति तार्किकाः । परस्परज्ञानसापेक्षज्ञानाश्रयरूप इति स्मार्ताः । यथा अन्योन्याश्रयाणि कार्याणि शास्त्रे न प्रथन्ते, यथा नौर्नावि बद्धा नेतरत्राणाय भवतीति महाभाष्ये वृद्धिरादैजादिबहुसूत्रव्याख्यानावसरेऽभिहितम् । तथा चाऽन्यत्रोक्तम्— 'हलन्त्यम्' 'आदिरन्त्येन सहेता' इत्येतयोर्मिथो हलिच्छब्दावबोधाय ह्यन्योन्याश्रय आगत इति । इति संक्षेपः । **साहस्री.** ६१०.

**अन्योपसर्जनं अन्येन नान्वेति इति न्यायः** ॥ एकस्य यत् उपसर्जनं विशेषणं, तत् अन्येन साकं अन्वयं नानुभवति इत्यर्थः । **के.**

**यत्तु न्यायसुधाग्रन्थस्वारस्यात् प्रातिपदिकेन अर्थवाचिनाऽपि उद्देश्यत्वान्वयार्थे पदविशिष्टार्थलक्षणां अङ्गीकृत्य तत्र तद्धितवाच्यदेवतान्वयाङ्गीकारात् शब्दोपहितार्थो देवता इति प्रतीयते, तत् पदविशिष्टे अर्थे उच्चार्यत्वाख्योद्देश्यत्वस्य बाधात् विशेषणीभूतपदान्वयस्य च अन्योप० इति न्यायेन अव्युत्पन्नत्वात् उपेक्षणीयम् । कौ.** २।१।६।१६.

* **अन्यो वा स्यात् परिक्रयाम्नानात्**। ३।७।८।२०॥ समाख्याऽपवादत्वेन एतदपि विचार्यते, किं परिक्रयः आध्वर्यवादिषु आम्नानात् तत्समाख्यातैः पुरुषैः कर्तव्यः, उत स्वामिना इति । सिद्धे तु एतस्मिन् 'अन्यो वा०' इत्येतत् द्रष्टव्यम् । **वा.** ३।८।१।१. * 'अन्यो वा स्यात् परिक्रयाम्नानात्०' इत्यत्र अङ्गानां ऋत्विक्कर्तृकत्वं वक्ष्यते । **सु.** पृ. १४९८.

* **अन्वयः** गुणप्रधानभावमन्तरेण न संभवति, द्वयोर्गुणयोः परस्पराकाङ्क्षारहितत्वेन अन्वययोग्यत्वाभावात् । एवं द्वयोः प्रधानयोरपि । अतो व्युत्पत्तिसंभवात् क्रियाकारकतदन्वया यथा शाब्दाः, तथा तदन्तर्गतः शेषशेषिभावोऽपि शाब्दः । **वि.** ३।१।१. * **अन्वयस्य** एकविषयत्वनिबन्धनत्वात् एकविभक्त्यन्तत्वं विना एकविषयत्वाप्रतीतिः । **सु.** पृ. ८३२.

**अन्वयव्यतिरेकन्यायः** ॥ यत्सत्त्वे यत्सत्त्वमन्वयः, यदभावे यदभावो व्यतिरेकः । अन्वयव्यतिरेकौ स्तोऽस्मिन्, इनिः । अन्वयेन व्यतिरेकेण च व्याप्तिमति हेतावयं प्रवर्तते । यथा वह्नौ साध्ये धूमवत्त्वम् । यत्र-यत्र धूमस्तत्रतत्राग्निरित्यन्वयव्याप्तिः, यत्र वह्निर्नास्ति तत्र धूमोऽपि नास्तीति व्यतिरेकव्याप्तिः यथा महानसादौ । **साहस्री.** ४१९. * आकृत्यधिकरणोक्तेन ( १।३।१० ) **अन्वयव्यतिरेकन्यायेन** प्रीतेरेव (स्वर्गशब्द-) वाच्यत्वं, न तद्वत् स्वर्गशब्दस्य द्रव्यवाचिता युक्ता । **रत्न.** ६।१।१।१.

* **अन्वयव्यतिरेकाभ्यां**, आकृतिज्ञानसत्त्वे व्यक्तिज्ञानं, आकृतिज्ञानाभावे व्यक्तिज्ञानाभावः इति आकृतिरेव शब्दार्थः, न व्यक्तिः, एवं प्रीतिसत्त्वे स्वर्गशब्दप्रयोगः, प्रीत्यभावे न, इति प्रीतिरेव स्वर्गशब्दवाच्या । **के.** * अन्वयव्यतिरेकाभ्यां वाच्यवाचकसंबन्धो विज्ञायते । **वा.** २।३।२।३ पृ. ५८६. * अन्वयव्यतिरेकाभ्यां शब्दार्थस्य विभागोऽवगम्यते । **भा.** ३।२।१।१पृ. ७४७.

* **अन्वयानुपपत्तिर्लक्षणाबीजम्** । न तु तात्पर्यानुपपत्तिः, वेदे तदसंभवात् । **मणि.** पृ. ७६.

* '**अन्वहं** द्वादशशतं ददाति' इति अहीनात्मके द्वादशाहे तत्तदहरङ्गत्वेन द्वादशशतविधानान्न नात्र दक्षिणायाः कृत्स्नप्रयोगाङ्गत्वम् । अयं विधिः न प्रधानार्थत्वबोधकः, किंतु द्वादशशतातिरिक्ताश्वादिपरिसंख्यार्थ एव । अन्वहं इति तु अतिदेशप्राप्तप्रधानार्थत्वानुवादः इति पूर्वपक्षः । प्राप्ताया दक्षिणायाः पुनस्तदङ्गत्वेन विधौ वैयर्थ्यापत्तेः सकृत्क्रियमाणत्वेन प्रसक्तायाः अन्वहं इत्यनेन आवृत्तिविधिः । अश्वादिपरिसंख्यार्थत्वे अन्वहं इत्यस्य आनर्थक्यापत्तिः । इति सिद्धान्तः । **भाट्ट.** १०।६।१७, * 'अन्वहं०' इत्यनेन द्वादशाहे आवृत्तिफलकोऽन्वहकालो विधीयते, द्वादशाहस्यापि विधाने वाक्यभेदापत्तेः । ६।७।८, * 'अन्वहं' इत्यनेन प्रत्यहं विभज्य दानेऽपि न तत्र दक्षिणाभेदः इत्युक्तम् । ११।४।१, * 'अन्वहं विहृतानि सहस्राणि ददाति चतुष्टोमे अश्वसहस्रं' इति **मानवसूत्रे** अश्वसहस्रस्य दशमेऽहनि विधानम् । न तु पार्थसारथिरीत्या 'प्रत्यहं गवां सहस्रं, अश्वसहस्रं तु एकादशेऽहनि' इत्येवंरूपो विभागः । अतः पौण्डरीके दशमेऽहनि अश्वसहस्रं दत्त्वा अवशिष्टेषु गवां सहस्राणि इति विभागः । १०।६।१७. * 'अन्वहं स्वाध्यायोऽध्येतव्यः' इति नियमः । **भा.** ७।२।१।१.* 'अन्वहमेकैकमालभेत द्वादशे आग्नं' इति वचनेन द्वादशाहे विहारपक्षो विहितः । **भाट्ट.** १०।६।४.

* **अन्वाधानम्** । अग्न्यन्वाधानम् । अध्वर्युः यजमानो वा गार्हपत्यस्य पश्चात् पद्मासनेनोपविश्य त्रिभिः स्वाहाकारान्तैर्ऋङ्मन्त्रैस्तिस्रः स्थूलाः समिधः अभ्यादधाति । ततो दक्षिणाग्नौ ऊर्ध्वजानुरुपविश्य तथैवाभ्याधाय गार्हपत्यस्य पश्चान्मार्गेण आगत्य आहवनीयात् वायव्यदेशे प्रह्वोऽवस्थाय तथैव तिस्रः समिधोऽभ्यादधाति । ततस्तत्रैव तिष्ठन् दशमेन ऋङ्मन्त्रेण उपस्थानं करोति । तदेतत् सकलं कर्म अनुकूलं करिष्यमाणस्य कर्मणः समिधामाधानं इति व्युत्पत्त्या अन्वाधानमित्युच्यते । **के.** * अन्वाधानं अग्निधारणार्थम् । तच्च धारणं दीक्षणीयादिभ्यः प्राचीनेन सौमिकेनैव विहरणेन सिद्धम् । तस्मात् दीक्षणीयादिषु नान्वाधानम् । **वि.** १२।१।१०. * अन्वाधानं यजनीयेऽहनि पूर्वस्मिन् वा इति विकल्पः । न तु नित्यं कालभेदः । **संकर्ष.** ३।१।५. * **अन्वाधानकरणमन्त्रे** ( आहवनीयादेः ) श्रुतं फलं याजमानं

दर्शपूर्णमासयोः । वि. ३।८।१४. * अन्वाधानप्रधानयोर्मध्ये इष्ट्यन्तरनिषेधः नैमित्तिकासु इष्टिषु क्षामेष्ट्यादिषु, न तु क्रत्वङ्गभूतासु । संकर्ष. ३।१।७. * अन्वाधानमन्त्रस्य (श्वो यज्ञाय इतिपदघटितत्वात्) सद्यस्कालप्रकृतौ लोपः । सद्यस्कालविकृतौ तु 'अद्य यज्ञाय' इत्यूहेन प्रयुज्यते एव । बाल. पृ. १२७. * अन्वाधानमन्त्रादीनां यजुर्वेदे विधानम् । सु. पृ. ११७८.

* **अन्वारम्भणीया** । 'आग्नावैष्णवमेकादशकपालं निर्वपेत्, सरस्वत्यै चरुं, सरस्वते द्वादशकपालं, अग्नये भगिनेऽष्टाकपालं निर्वपेत् यः कामयेतान्नादः स्यामिति । नित्यवदेके भगिनमामनन्ति' इति विहिता । भा. ९।१।१०।३४, * (अन्वारम्भणीया आरम्भणीया इष्टिश्च एकैव) अन्वारम्भणीयार्थं अन्वारम्भणीया न कर्तव्या । १०।१।४।६-८, दर्शपूर्णमासावृत्तावपि तदर्था अन्वारम्भणीया आदौ सकृदेव कार्या । ९।१।११।३४-३५, इयं ज्योतिष्टोमाङ्गभूतदीक्षणीयाद्यर्थे न कार्या । १०।१।२।४, इयं दर्शपूर्णमासविकृतिषु सौर्यादिषु कर्तव्या । १२।२।६। १९-२१. * अन्वारम्भणीया कर्तृसंस्कारद्वारा दर्शपूर्णमासाङ्गं इति स्थितम् ( ९।१।१०।३४-३५ ) । भाट्ट. १०।१।२. * अन्वारम्भणीया दर्शपूर्णमासारम्भे सकृत् कार्या, न प्रतिप्रयोगम् । भा. ९।१।१०।३४-३५ वर्णकं १. * आरम्भश्च सर्वप्रयोगसाधारणः इति प्रकृतौ प्रतिप्रयोगं आरम्भणीयाऽभावेऽपि प्रकृतिविकृत्योरारम्भभेदात् विकृतिषु आरम्भणीया कर्तव्या इति द्वादशे ( १२।२। ६।१९-२१ ) वक्ष्यते । सोम. १०।१।२, * अन्वारम्भणीयायाः पुरुषसंस्कारकत्वं न साक्षात्, किंतु 'आग्नावैष्णवमेकादशकपालं निर्वपेत् दर्शपूर्णमासावारप्स्यमानः' इत्यारम्भसंयोगात् आरम्भद्वारा इत्युक्तं नवमे ( ९।१। १०।३४-३५ ) । १०।१।२. * अन्वारम्भणीयायाः बाधः राजसूये अनुमत्यादीष्टौ । भा. १०।१।३।५.

* **अन्वारोहाः नाम** अग्निचयने स्थलारोहणमन्त्राः । के. * अन्वारोहेषु मैत्रायणीयानामग्निः परिसमाप्यते, न सर्वेषाम् । भा. २।४।२।२०.

* **अन्वारोहणे** तु पुत्रः स्वगृह्येव मातुः सपिण्डनं कुर्यात् । आसुरादिविवाहोत्पन्नः पुत्रिकापुत्रश्च मातामहेनैव । ब्राह्मादिविवाहोत्पन्नः पित्रा मातामहेन पितामह्या वा विकल्पेन कुर्यात् । बाल. पृ. १३८.

* **अन्वाहार्यः** । दर्शपूर्णमासयोः कर्मानुष्ठानानन्तरं यः आहार्यते दीयते ऋत्विग्भ्यः दक्षिणात्वेन, सः चरुः अन्वाहार्यः । के. * अन्वाहार्यं चरुं दक्षिणाग्नौ पचन्ति । वि. १२।२।१. अन्वाहार्यस्य महापिठरपरिमितस्यापि सकुटुम्बर्त्विक्चतुष्टयापर्याप्तत्वात् आनत्यशक्तिः । सु. पृ. १४७२. * अन्वाहार्ये ओदने अभिघारणं स्वादिम्ने क्रियते । स्वादिमा हि ओदनस्य परिक्रये उपकरोति । भा. १०।३।१०।३८. * अन्वाहार्यचरुरूपा दक्षिणा यजुर्वेदे समाम्नाता । वि. ३।८।१. * अन्वाहार्यदक्षिणायाः दार्शिक्याः सोमाङ्गदीक्षणीयादिषु सौमिकदक्षिणया प्रसङ्गसिद्धिः । भा. १२।१।१६।३२, * अन्वाहार्यदक्षिणायाः प्राकृतायाः आग्रयणोपदिष्टवासोवत्सदक्षिणया बाधः । १०।३।६।३४, * अन्वाहार्यदक्षिणायां दार्शपूर्णमासिक्यां ब्राह्मणा एव इज्यन्ते, 'त एते वै देवा अहुतादो यद् ब्राह्मणा यदन्वाहार्यमाहरन्ति तानेव तेन प्रीणाति' इति । १२। ४।१५।४७. * **अन्वाहार्यदानाभावाधिकरणं** 'सौमिकदक्षिणान्यायः' इत्यत्र द्रष्टव्यम् । १२।१।१६।३२. * **अन्वाहार्यद्वादशशतादिदानं** कर्मसंयुक्तेभ्यः अभिधानात् 'परिक्रयार्थं वा कर्मसंयोगात्' ( १०।२।८।२३ ) इति दशमे वक्ष्यति । वा. ३।७।८।२०. * **अन्वाहार्यधर्माः** । "दक्षिणसद्भ्य उपहर्तवै' इति संप्रेष्यति । ये ब्राह्मणा उत्तरतस्तान् यजमान आह 'दक्षिणत एत' इति । तेभ्योऽन्वाहार्यं ददाति । 'ब्राह्मणा अयं व ओदनः । प्रतिगृह्णीत । उत्तरतः परीत' इति संप्रेष्यति" ( कल्पसूत्रमिदम् ) प्रतिग्रहमन्त्रं पठित्वा ऋत्विजस्तं स्वीकुर्वन्ति । पाकोऽपि अन्वाहार्यधर्मः । वि. १०।३।७. * **अन्वाहार्यधर्मानुष्ठानं** आग्रयणस्थवासोवत्सयोः कर्तव्यम् । भा. १०।३।७।३५, * **अन्वाहार्यस्थानापन्नेऽपि** वत्से पाकानुष्ठानं न कर्तव्यम् । १०।३। ८।३६, * अन्वाहार्यस्थानापन्नेऽपि वाससि पाकानुष्ठानं

न कार्यमाग्रयणे । १०।३।९।३७, * अन्वाहार्यस्थानापन्नयोः वासोवत्सयोः अभिघारणस्य बाधः आग्रयणे । १०।३।१०।३८.

**अन्वाहेति च शस्त्रवत् कर्म स्यात्, चोदनान्तरात्। १०।४।२०।३९ ॥**

दर्शपूर्णमासयोः ' पुरोनुवाक्यामन्वाह ' ' याज्यामन्वाह ' इति 'अन्वाह'शब्देन उक्तं अनुवचनं कर्म प्रधानकर्म स्यात्। याज्यानुवाक्ययोः समाख्ययैव प्राप्तयोरपि अन्वाह इति चोदनान्तरात् पुनर्विधानात्। शस्त्रवत्। सोमे यथा शस्त्रानुवचनं प्रधानं कर्म तद्वत्। इति पूर्वः पक्षः ।

**संस्कारो वा, चोदितस्य शब्दस्य वचनार्थत्वात्। ४० ॥**

वाशब्देन पूर्वपक्षं व्यावर्तयन् सिद्धान्तमाह । अन्वाहेति शब्दोक्तं अनुवचनं संस्कारः स्यात्, न प्रधानम्। चोदितस्य समाख्याप्राप्तस्यार्थस्य वाचको यः शब्दः 'अन्वाह' इति, तस्य वचनार्थत्वात् अनुपठनार्थकत्वात्। तथा च समाख्यया यदुक्तं, तस्यैवायं अन्वाह इति शब्देन अनुवादः । अथवा चोदितस्य समाख्याप्राप्तस्य शब्दवचनार्थकत्वात् मन्त्रशब्दस्य यत् वचनं तदर्थकत्वात् अन्वाहशब्दस्यापि च स एवार्थः इत्यनुवादः। तस्मात् याज्याऽनुवाक्याऽनुवचनं देवतासंस्कारः, इति सिद्धान्तः ।

**अवाच्यत्वान्नेति चेत्। ४१ ॥**

पूर्वपक्षी शङ्कते । न अनुवादो युक्तो निरर्थकत्वात्। समाख्यया प्राप्तत्वात् पुनः अन्वाह इत्यस्य अवाच्यत्वात्। पुनर्न वक्तव्यं निरर्थकत्वात्। इति चेत् पूर्वपक्षी ब्रूयात्।

**स्याद्, गुणार्थत्वात्। ४२ ॥**

समाख्याप्राप्तस्यापि याज्याऽनुवाक्याऽनुवचनस्य 'पुरोऽनुवाक्यामन्वाह' 'याज्यामन्वाह' इति पुनर्वचनं स्यात् सफलम्। गुणार्थत्वात् 'तिष्ठन् याज्यामन्वाह' 'आसीनः पुरोऽनुवाक्यामन्वाह' इति स्थानासनरूपगुणविधानार्थं उपपन्नत्वात्। तस्मात् याज्यापुरोऽनुवाक्यावचनं देवतासंस्कारः, न प्रधानकर्म इति सिद्धान्तः। के.

* **अन्विताभिधानम्** । आकाङ्क्षायोग्यतासंनिधानानि ग्राहकग्रहणाख्ये अन्विताभिधाने प्रयोजकानि, न तु शब्दोपात्तत्वमपि । तथात्वे शब्दानभिहितस्य प्राकृतोपकारस्य वैकृतविधिना अन्विताभिधानाभावप्रसङ्गात्। उक्तं च **शालिकनाथेन** ' प्राकृतेनोपकारेण पदार्थश्चैव वैकृतः। प्रयोगविधिनाऽन्वेति विधिरन्वित उच्यते ॥ यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते । तेनतेनान्वितः स्वार्थः स्वशब्देनैव भण्यते ॥ साध्यरूपश्च विध्यर्थं उपकारमपेक्षते । वाक्यादिभिः प्राकृतश्च स योग्यः संनिधाप्यते ॥ ' इति। 'अन्वितस्याभिधानं च न शब्दोपस्थितैः परम्। दर्शनात् पितृयज्ञादौ कल्प्येनाप्यधिकारिणा ॥' इति च । यदि च क्रमस्य अनुष्ठीयमानपदार्थावस्थारूपत्वेन प्रयत्नसाध्यत्वाभावात् न विधेयत्वं, तदा तदङ्गीकृतं तार्तीयक्रमस्य विधेयत्वं विहन्येत। तस्य पौर्वापर्यलक्षणस्य शब्दाभिधानमस्ति । पाञ्चमिकस्य तु वितातिलक्षणक्रमस्य नास्ति शब्दाभिधानं इति वैरूप्यं च उक्तरीत्या अन्विताभिधाने शब्दाभिधानस्य अप्रयोजकत्वात् अकिंचित्करम्। इदं च न्यायरत्नमालायां प्रपञ्चितम्। **सोम.** पृ. ४०६. * अन्विताभिधानमपि अपवादत्वेन तन्त्ररत्ने पश्वेकत्वाधिकरणे, न्यायरत्नमालायां अङ्गनिर्णये चोक्तम्। **बाल.** पृ. ४२. * **अन्विताभिधानस्य** शब्दे प्रकृतिप्रत्यययोरपि निरस्तत्वात् कृतानुबन्धमेव स्वार्थं प्रत्ययो वदति। **सु.** पृ. ७०८. * **अन्विताभिधानवादखण्डनं** वाक्यार्थनिर्णयद्वारा। तत्र चाभिहितान्वयोऽपि साधितः। **वाक्यार्थसंविदो मूलं बहुधा वादिनो विदुः । तत्र वार्तिककारीयैर्न्याय्यो मार्गः प्रदर्श्यते । १ ॥** तत्र **के** चित्ताबदविभागमेव वाक्यं व्यञ्जकध्वनिभेदात् तेनतेन वर्णपदविपर्यासात्मना अवगम्यमानं तस्यतस्य वाक्यार्थस्य प्रतिपादकमिति मन्यन्ते । **अन्ये** त्वेवंविधमेव ज्ञानं वाक्यं, तदनन्तरं चानेकजातिगुणद्रव्यक्रियावभासं विज्ञानमेव वाक्यार्थः, कार्यकारणभाव एव च वाक्यवाक्यार्थयोः संबन्ध इति प्रतिजानते । उभयस्मिन्नपि पक्षे काल्पनिकपदपदार्थसंबन्धव्युत्पत्तिरभ्युपायः। **अपरे** तु पदवत् वाक्यमपि पूर्वपूर्ववर्णसंस्कारसचिवः अन्त्यो वर्णो

वाचक इत्यादिना मार्गेण सावयवमेव प्रतिलब्धसंबन्धावयवभूतपदजनितपदार्थसंविदुपायं वाक्यार्थस्य वाचकं संगिरन्ते । पदान्येव पदार्थान्तरान्वितं स्वार्थमभिदधतीति **टीकाकारपादाः** । पदैरभिहिताः पदार्था एव वाक्यार्थं प्रतिपादयन्त्याचार्याः । तत्र ज्ञानात्मकवाक्यवाक्यार्थवादस्तावत् स्वात्मनि क्रियाविरोधाद्बहिरवभासाच्च **शून्यवादे** एव निरस्तः । पदपदार्थव्यतिरेकविकल्पस्यापि अनेकान्तवादाश्रयणेन परिहारः । वाक्यं हि नाम एकविशिष्टार्थप्रतिपादनपराणि पदान्येव । वाक्यार्थोऽपि पदार्थ एवैकार्थान्तरव्यतिषक्तात्मा इति यद्यपि नात्यन्ताभेदो भेदो वा शक्यतेऽभिधातुं, तथापि अवान्तरस्थित्युपपत्तेर्न बहिर्भूतौ तौ शक्येते अपह्नोतुम् । निर्भागवाक्यवादोऽपि भागावगमादेवापास्तः पदवदिति चेन्न, असिद्धत्वात् । तत्रैतत्स्यात्, यथैव वर्णात्मकभागावगमे सत्येऽपि एकपदावभासादर्थप्रतिपत्तेश्च वर्णेभ्यः अनुपपत्तेर्भागावगमस्य मिथ्यात्वान्निरवयवमेव पदं पदार्थस्य वाचकमाश्रितम् । तथा वाक्यमपि, तत्रापि हि एकमिदं वाक्यमिति परामर्शोऽस्तीति स एव नानात्वं प्रतिक्षिपति, नानात्वैकत्वयोर्विरोधात् । वाक्यार्थप्रतिपत्तिश्चानन्योपाया वाक्यमेव निर्भागं कल्पयतीति, तन्नैवं दृष्टान्तासिद्धेः । नहि नो वर्णातिरेकेणानवयवः पदात्मा विद्यते । यस्त्वेकपदमिति परामर्शः, स बहूनामप्येकार्थप्रतिपत्तिनिमित्तः । भवति हि बहूनामपि एककार्यनिबन्धनमेकत्वं, यथा सेनेति, यथा वा राजसूय इति । अत एव अर्थैकत्वमजानतां नास्त्येकपदावमर्शः । प्रत्यक्षेण तु पदस्वरूपमेकं अनौपाधिकं संहितापाठमात्रेण व्युत्पन्नानामितरेषां च अनुपहतेन्द्रियाणामविशेषेण प्रकाशेत, तन्न तावदेकपदावभासात् वर्णातिरिक्तपदसिद्धिः, प्रत्युतासत्त्वमेव तस्य योग्यानुपलब्ध्या निश्चीयते । **न चार्थप्रतिपत्त्याऽपि पदमन्यत् प्रसिध्यति । वर्णानन्तरजाता हि सा तत्कारणिकैव नः । २ ॥** यदा वर्णा एवाक्षधीगोचरा नान्यदिति स्थितं, तदा वर्णानन्तरजायमाना अर्थप्रतिपत्तिः तन्निमित्तैव विज्ञायते । तत्त्वान्तरस्य तु प्रत्यक्षानुपलम्भनिरस्तसद्भावस्य दूरापास्तमेव वाचकत्वं, नान्यथाऽनुपपत्त्याऽपि कल्पयितुं शक्यते । तेन वर्णानामेव एकवक्तुच्चारणादितनैरन्तर्याणां स्वरविशेषभाजां संहतानामानुपूर्वीविशेषशालिनां अनन्तरमर्थावगमदर्शनात् तादृशानामेवार्थाभिधायकत्वं निश्चीयते । कथं पुनः क्रमवर्तिनां साहित्यम्? अवान्तरव्यापारवशादिति ब्रूमः । पूर्वपूर्वो हि वर्ण उपलभ्यमानः संस्कारापरनामधेयं अवान्तरव्यापारं जनयति । तत्सहितश्चान्त्यो वर्णः अर्थप्रतिपत्तिं जनयति । एवं तर्हि प्रतिवर्णं संस्कारा बहवः कल्पनीयाः स्युः, तद्वरमेकमेव शब्दतत्त्वं कल्पितम् । नेत्याह । न खलु प्रत्यक्षानुपलम्भनिरस्तसत्त्वस्य तस्य सद्भावस्त्वयाऽभ्युपेयः, संस्कारस्तु दृष्टोपपत्तये कल्प्यमानो नातीव लज्जामावहति, अनेकमपि दृष्टोपकारकं कल्पनीयं, दृष्टविरुद्धं तु न किंचिदपि । यद्वा नात्राक्लृप्तसंस्कारान्तरपरिकल्पना, क्लृप्ता एव स्मृतिहेतवः संस्काराः, त एव चैतेऽपि । यदनुभवभाविताः तत्रैव स्मृतिं जनयन्ति, न त्वर्थान्तरप्रतिपत्तिमिति चेत्, नैव तेषां स्मृतिभ्योऽन्यत्र व्यापारोऽभ्युपेयते, तामेव तु स्मृतिं जनयन्तः अर्थप्रतिपत्तौ अपि उपायीभवन्ति स्मृतानामेव वर्णानां वाचकत्वात् । नन्वनुभववत् स्मृतयोऽपि वर्णेषु क्रमेण जायमाना न संभवन्ति अर्थप्रतिपत्तौ । अथ क्रमेणानुभूतानामपि युगपदेव स्मरणं, ततो व्युत्क्रमेणापि उच्चारिता वाचकाः स्युः, तत्रापि स्मृतिहेतुसंस्कारजननात् । भ्रममनादृत्य स्मरणस्य च सर्वेषु युगपदुत्पत्तेः । अथ तूच्चारणक्रमोऽपि अङ्गमिष्यते, तथा सति सैवादृष्टकल्पना । संस्कारोऽपि हि स्मृतिहेतुः क्रमान्तरेऽपि जायते एव, तन्निमित्तं च स्मरणम् । तत्र किमपरं क्रमविशेषेण कार्यमदृष्टकल्पनात् । न चादृष्टमपि कल्पयितुं शक्यते, अन्तरेणाप्युच्चारणं तत्क्रमं च स्मृत्यारूढाभ्यां जराराजशब्दाभ्यां नामाख्यातरूपाभ्यां अर्थविशेषावगमात् । यदि वर्णा एव पदं, ततो राजजराशब्दयोर्वर्णभेदाभावात् अनुच्चारितावस्थायां चोच्चारणतज्जन्यानुभवक्रमयोः अविद्यमानत्वात्, स्मरणस्य चैकस्यैव युगपदनेकवर्णगोचरस्योत्पद्यमानस्य अक्रमत्वात् कुतः पदभेदावसायः, कुतस्तरां चार्थभेदावगमः । न च वर्णाः स्वरूपेण नित्या विभवो देशकालोपाधिकं क्रमं भजन्ते, यद्भेदात्पदभेदः स्यात् । तदन्यदेव

पदतत्त्वं यत् विलक्षणपदावभासं बोधयतीति शब्दतत्त्वविदः प्रतिपन्नाः ।

अत्रोच्यते । **व्यञ्जकध्वनिधर्मस्य वर्णेष्वारोपितस्य च । क्रमस्यार्थाभिधाऽङ्गत्वं दैर्घ्यादेरिव संमतम् ।३।।** तेषु यत्तावत्क्रमेण स्मरणेषु युगपदनुभववत् संभूयकारित्वासंभव इति मतं, तदस्तु, युगपदेव तु सर्वेषु स्मरणमर्थान्तरेष्विव घटपटादिषु क्रमादनुभूतेष्वपि भवति। यत्त्वेवं व्युत्क्रमेऽपि अर्थावगतिः स्यादिति, तदयुक्तं क्रमस्याप्यङ्गत्वात् । यद्यपि स्मरणस्यापि युगपज्जन्मनः क्रमो नास्ति, वर्णेषु विभुषु नित्येषु वस्तुगत्या क्रमो नास्ति, तथापि व्यञ्जकानां ध्वनीनां क्रमवर्तित्वात् तैर्वर्णेष्वभिव्यज्यमानेषु तदीयक्रमो व्यङ्ग्येषु वर्णेषु दीर्घत्वादिवत् आदर्शाल्पत्वमहत्त्वे इव मुखे समारोपितः प्रतीयते, ततश्च स्मरणमपि पश्चाज्जायमानं विशिष्टानुपूर्वीसमालिङ्गितशरीरानेव वर्णान् गोचरयतीति क्रमभेदात् पदभेदः। एवमनुच्चारितावस्थायामपि स्मृत्यारूढेनैव क्रमविशेषेण जराराजशब्दयोः भिन्नपदत्वसिद्धिः । तेन ध्वनिधर्माणामेव दीर्घोदात्तक्रमादीनां वर्णेषु समारोपितानां स्मृत्यारूढानामर्थाभिधानाङ्गत्वात् न किंचिदनुपपन्नम् । आह च— **तद्भेदेन च वर्णानां व्यापित्वेऽपि क्रमग्रहः । एवं ध्वनिगुणान् सर्वान् नित्यत्वेन व्यवस्थिताः ॥ वर्णा अनुपतन्तः स्युरर्थभेदावबोधकाः ॥** इति । तत्सिद्धं न वर्णातिरिक्तमनवयवं पदमस्तीति ।

भागावगमादेव वाक्यमपि नानवयवं सिध्यति । कथं तर्हि वाक्यार्थावगतिः ? पदार्थवदिति ब्रूमः । यथा वर्णेभ्य एव संहितेभ्यः पदार्थोऽवगम्यते, तथा तेभ्य एव वाक्यार्थोऽपि । तत्प्रतीत्येककार्यकरणाच्च बहवोऽपि वर्णा एवैकं वाक्यमित्युच्यते। आह—**अपेक्षते न वा वाक्यं स्वार्थसंगतिसंविदम्। परस्मिन् सर्वसंवित्तिः पूर्वस्मिन्न तु कस्य चित् ॥** इति । यदि तावदगृहीतसंबन्धमेव वाक्यं वाक्यार्थमभिदध्यात् , ततः सर्वेषामपि वाक्यश्राविणां वाक्यार्थसंवित्तिः स्यात् । न चाव्युत्पन्नपदपदार्थसंगतीनां जायते । अथ तु पदवत् वाक्यमपि स्वार्थेन संबद्धसंविदमपेक्षते, ततः अपूर्ववाक्यश्रवणे न कस्य चिदपि वाक्यार्थावगतिः स्यात् । अथ पदपदार्थव्युत्पत्तिरङ्गं वाक्याद्वाक्यार्थप्रतीतावपि इत्युच्यते, तदयुक्तं, यदि हि वाक्यान्त्यवर्णः पूर्वपूर्ववर्णजनितसंस्कारसहितः स्मृत्यारूढा वा वर्णाः पदार्थेभ्यः अर्थान्तरमभिदधति, तर्हि पदपदार्थसंवित् तत्र कथमिवोपकारं कुर्यात् । पदार्थज्ञानमिति चेन्न , तेनाप्युपकारादर्शनात् । नहि वाक्याद्वाक्यार्थप्रतीतौ पदजनितपदार्थज्ञानेन कश्चिदुपकारः।कोऽपि नाम कल्प्यते इति चेत् तर्हि अदृष्टकल्पनैव दोषः । किंच अल्पैरेव पदैरावापोद्वापभेदेन बहूनि वाक्यानीह रच्यन्ते, तत्र सर्वेषामेव शक्तिं कल्पयतो महान् क्लेशः । न च वाक्यार्थप्रतिपत्तेरनुपपत्तिः, यत इमां वेदनामनुभवेम, लोकसिद्धार्थाभिधायिभिः पदैरेव तदुपपत्तेः। कथं पुनस्तैरपूर्ववाक्यार्थावगतिः। तत्र टीकाकारस्तावदाह—**पदार्था एव वाक्यार्थे मिथः संगतिशालिनः । आचक्षतेऽभिधीयन्ते पदैस्ते च तथाविधाः ॥** पदार्था एव तावत् परस्परान्विता वाक्यार्थ इत्युच्यते, ते च तथाभूता एव स्वपदैरभिधीयन्ते। तेन पदमेव वाक्यार्थस्य प्रमाणमिति । न चार्थस्वरूपमेव पदाभिधेयं नान्वितमिति वाच्यम् । **पदानन्तरजाता हि संविदन्वितगोचरा । अन्वितार्थाभिधायित्वं पदानामुपकल्पयेत् ॥ ४ ॥** विशिष्टार्थविषयदर्शनेन हि व्यवहरमाणस्य विशिष्टविषयैव व्युत्पित्सुना संविदनुमीयते, सा च पदश्रवणानन्तरं जायमाना तत्कारणिकैव निश्चीयते। यद्यपि च पदसंघातश्रवणानन्तरं विशिष्टज्ञानं जायते, तथापि **न संघातात्मना वाक्यं वाक्यार्थस्याभिधायकम् । अन्वयव्यतिरेकाभ्यां भागशस्तत्तु वाचकम् ।५।।** गामानयाश्वमानय इत्यादौ गवादिपदावापे गवादिपदार्थावापात् तदुद्वापे चोद्वापात् वाक्यभागानामेव वाक्यार्थभागवाचकत्वावगमात् न संघातस्य वाचकत्वं वाच्यत्वं वा संभवति , व्यभिचारात् संबन्धग्रहणासंभवाच्च । आनन्त्याद्वाक्यवाक्यार्थानां न संगत्यवगमः संभवति । भवत्पक्षे वा कथमनन्तानामेकपदाभिधेयत्वं ? अन्विताभिधायि हि पदं, अन्यच्च गवान्वितादानयनात् अश्वान्वितमानयनं, तत्कथमत्र संबन्धग्रहणमव्यभिचारो वा । तदुच्यते— **संनिध्यपेक्षायोग्यत्वैरुपलक्षणलाभतः । आनन्त्येऽप्यन्वितानां स्यात् संबन्धग्रहणं मम ॥**

६ ॥ आकाङ्क्षितं संनिहितं योग्यं च पदार्थान्तरं तेनान्वितं स्वार्थमभिदधति पदानीति एकेनैवोपलक्षणेन अनन्तानामपि वाच्यत्वं सुज्ञानमेव। अव्यभिचार एवान्यादृशे प्रयोगप्रतिपत्त्योरसंभवात्। संघातस्यैव तद्वेनैव प्रकारेण संबन्धग्रहणं संभवति। येषां पदानां यदन्विताभिधायित्वं भवतेष्यते, तत्पदसंघातस्तदर्थसंघातस्याभिधायक इति शक्यते एव संगतिरस्माभिरवगन्तुं, इति न कश्चिद्विशेषः। सत्यमेतत्, शक्तिकल्पनागौरवात्तु नैतदुपपद्यते इत्युक्तम्। अन्विताभिधानमपि तर्हि अनुपपन्नं गौरवादेव, स्वरूपमात्रमेव तु लाघवात् पदानामभिधेयं वरमाश्रितं, तन्न अन्वितप्रतिपत्तेर्निर्मूलत्वप्रसङ्गात्। नहि तस्याः मूलान्तरमुपलभ्यते। स्वरूपेणैव पदैरभिहिताः पदार्थाः परस्परव्यतिषक्तमात्मानं प्रतिपादयन्तीति चेत् न, अदर्शनात्। **प्रमाणान्तरविज्ञातैः पदार्थैर्नहि दृश्यते। वाक्यार्थवेदनं शब्दप्रतीतेः कारणं त्वथ। ७॥ शक्तित्रयं प्रकल्प्यं स्यात् पदानामर्थगोचरा। अर्थानामन्विते शक्तिस्तदाधायकता पदे। ८॥** नहि प्रमाणान्तरावगतानां प्रतिलब्धाकाङ्क्षादित्रयसहायानामपि व्यतिषङ्गप्रतिपादकत्वं दृश्यते, नहि देवदत्तमुपलभ्य कोऽस्य पितेत्यपेक्षमाणः संनिहितमपि यज्ञदत्तं योग्यमपि सहसैवाध्यवस्यति पितरम्। **अथ** अन्यत्राविदितमपि शब्दप्रतीतानामेवार्थानां अन्वितप्रतिपत्तिकारणत्वं कल्प्यते इति ते मतम्। एवं तर्हि शक्तित्रयमदृष्टं कल्पितं स्यात्। पदानां तावत् पदार्थाभिधानशक्तिः अर्थानां चान्वितप्रतिपादनशक्तिः पदानां च पुनस्तच्छक्त्याधायकत्वशक्तिरिति कल्पनागौरवात्, वरमेकैव पदानामन्वितगोचरा शक्तिरभ्युपगता। न त्वया अन्वितगोचरं शक्तिद्वयं कल्पितव्यम्। तत्कथमेका शक्तिरित्युच्यते। **सत्यमेतत्**, तथापि शक्तित्रयकल्पनाल्लाघवमस्त्येव। किंच, न पृथगन्वये शक्तिः कल्पितव्या, एकैव तु शक्तिरन्वितपर्यन्ता कल्प्यते, अतः कल्पनालाघवादन्विताभिधायित्वमेव वरम्। यद्यपि कथंचित् शक्तिकल्पना समाना भवेत्, तथापि प्रथमावगतानामभ्युपेततात्पर्याणां च पदानामेव अन्विताभिधायकत्वं युक्तमेवाङ्गीकर्तुम्। एवं च शाब्दत्वमपि वाक्यार्थस्य समञ्जसं भविष्यति, इतरथा क्लिष्टं स्यात्। **ननु** सामान्यं पदार्थः, तच्च नान्तरेण विशेषमात्मानं लभते, इति तद्विशेषमाक्षिपति, विशेष एव च वाक्यार्थ इत्युच्यते। पदार्थस्वरूपं हि सर्वावस्थानां सामान्यम्। अन्वितता चान्यावस्थाविशेष इति पदार्थ एव वाक्यार्थे प्रमाणमिति। **नैतद्युक्तम्**। यद्यपि सामान्यं विशेषमाक्षिपति, तथापि अस्ति कश्चिद्विशेष इत्येतावन्मात्रमाक्षिप्येत, नियतैकविशेषविषयाक्षेपस्तु दुर्लभ एव प्रमाणाभावात्, तेन गामानयेति गवैवान्वितमानयनं न प्रतीयेत। मत्पक्षे तु आकाङ्क्षाद्युपलक्षणशालिनैवार्थान्तरेण अन्वितं पदस्याभिधेयमिति युक्तं यद्गवान्वितमानयनं प्रतीयते। गौर्हि स्वपदेन संनिहितो नार्थान्तरमिति नियतावगतिसिद्धिः। **न च संनिध्यपेक्षत्वे भवेदन्योन्यसंश्रयः। न केवलाभिधानेन स्मृत्याऽपि हि भवेदसौ। ९॥** न चैवं वाच्यं, यदि संनिहितेनार्थान्तरेणान्वितं स्वार्थमभिधत्ते, ततो गामानयेत्यत्र गोशब्देन तावत्स्वार्थो नाभिधातव्यः यावदानयतिना न स्वार्थोऽभिहितः, तेनापि हि स्वार्थे गोशब्देनानभिहितेन स्वार्थोऽभिधेयः स्यादिति व्यक्तमेवेतरेतराश्रयमिति। नह्यवश्यमभिधानसंनिहितेनैवार्थेनान्वितं शब्देनाभिधेयं, यतोऽयं दोषः स्यात्, संनिधिमात्रस्य तदुपलक्षणत्वात्। संनिधेश्चान्तरेणाऽप्यभिधानं स्मृत्याऽपि संभवात्। सर्वाणि हि पदानि प्राक्प्रतियोगिसंनिधेर्निमित्तभूतमर्थस्वरूपं स्मारयन्ति, ततो न्यायावधारितवचनव्यक्तीनि स्वार्थमभिदधतीति न कश्चिद्दोषः। ननु असंहितेनापि नियोज्येनान्विताभिधानं विश्वजिदादौ दृष्टं, न, तत्राप्यध्याहारेण संनिधिलाभात्। नह्यवश्यं शाब्द एव संनिधिस्तदुपलक्षणं, द्वारं द्वारमित्यादौ अशाब्दैरेव संवरणादिभिरन्विताभिधानस्य लोकदृष्टत्वात्। **एवं तर्हि** प्रत्यक्षेणाश्वे संनिहिते गौरानीयतामित्यत्र आनयतिर्गवाश्वयोरुभयोरपि शब्दप्रत्यक्षाभ्यां संनिहितत्वात् न गवैव केवलमन्वितमानयनमभिदध्यात्, संनिध्यपेक्षायोग्यत्वानामुभयत्राविशेषात्। **नैष दोषः**। गवान्वयेनैवानयतेराकाङ्क्षोपरमात्, अश्वान्वये प्रमाणाभावात्। **कथमुभयोः** संनिधाने सति गवैव नैराकाङ्क्ष्यं, नाश्वेन, नन्वेवं सति विपर्ययः कस्मान्न भवति, अश्वेन नैराकाङ्क्ष्याद्य गवान्वयः संभवतीति। **न संभवति**

विपर्ययः, अश्वान्वये गोपदस्याकाङ्क्षाऽनुपरमात् । **ननु** तस्यापि प्रत्यक्षाद्यवगताभिः स्थित्यादिभिरेव क्रियाभिराकाङ्क्षा विरमेत्, तेन प्रमाणान्तरेण स्थितौ अश्वे च संनिहिते, गौरानीयतामित्युक्ते 'गौस्तिष्ठति, आनीयतामश्वः' इति वाक्यद्वयं प्रतीयेत, **तन्न**, एकवाक्यत्वावगमात् । यावन्ति हि पदानि संहत्य प्रयुज्यन्ते, तावतां सति संभवे संहत्यैकविशिष्टार्थप्रतिपत्तिपरत्वं लोके दृष्टम् । तच्च श्रुतयोरेवान्वये निर्वहति, अन्यथा बाध्येत । किंच एकेनैवान्वयेनोभयोराकाङ्क्षोपरमसंभवे अनेकान्वयकल्पनमयुक्तं गौरवात् । तस्मात्पदान्येवान्विताभिधायीनि वाक्यार्थस्य प्रमाणमिति ।

**अत्राभिधीयते, नैतन्मतमप्युपपत्तिमत् । अदृष्टकल्पनैतस्मिन् मते हि स्याद्गरीयसी ।१०॥ दृष्टबाधप्रसङ्गश्च तस्मादभिहितान्वयः । दृष्टानुगुण्यं तत्र स्यात् कल्पना च लघीयसी ।११॥** अन्विताभिधायित्वे हि पदानामवश्यमेव विशेषणभूतोऽप्यन्वयोऽभिधातव्यः । अन्यथा अन्वितप्रतीतेः उत्पत्त्ययोगात् । ततश्च अन्वयान्वितशक्तिद्वयकल्पनाददृष्टकल्पना गुरुतरा स्यात् । ननूक्तं न पृथगन्वये शक्तिः कल्प्यते, एकैव हि सा अन्वितपर्यन्ते कल्प्यते इति । तदयुक्तम् । **शक्त्यैकया कथं हि स्यादुभयोरभिधेयता । एक एव विशिष्टोऽर्थः सत्यमन्यद्विशेषणम् ।१२॥** यद्यपि हि विशिष्टरूपोऽर्थ एक एव, तथापि विशिष्टाद्विशेषणमन्यदेव, तस्मिन् अगृहीते न तद्विशिष्टं विशेष्यं ग्रहीतुं शक्यते । न च तस्य प्रमाणान्तरं ग्राहकमस्तीति शब्देनैव तदभिधानपुरःसरं विशिष्टमभिधातव्यमिति शक्तिद्वयकल्पनाद्गौरवं स्यात् । तस्मात्स्वरूपमात्रमभिधातव्यमिति युक्तम् । न चैवं वाक्यार्थप्रत्ययस्यानुपपत्तिः, यतः **स्यात् स्वरूपाभिधानेऽपि धीर्विशिष्टार्थगोचरा । विशेषधीर्हि सामान्यादनायासेन सिध्यति ।१३॥** सर्वावस्थासामान्यात्मनि पदार्थस्वरूपे पदेनाभिहिते तत एव अन्वितरूपावस्थाविशेषप्रतीतिसिद्धेर्न तावदभिधाशक्तिरूपकल्पयितुं शक्यते ।

**यच्चैवं सति गौरानीयतामित्यत्र कारकेण क्रियया च क्रियाकारकमात्राक्षेपान्न नियमेन गौः आनयनेन, आनयनं** गवाऽन्वयं लभेतेत्युक्तं, तत्रोच्यते— **तुल्योऽभिधानपक्षेऽपि स दोषः शब्दगोचरः । यत्तु तत्रैकवाक्यत्वं पदार्थेष्वपि तत् समम् ।१४॥** योऽप्याभिधानिकमन्वयमिच्छति, तस्यापि तुल्योऽयं दोषः । प्रमाणान्तरेण क्रियान्तरे स्थित्यादिके कारकान्तरे चाश्वादिके संनिहिते सति गौरानीयतामित्येतत् पदद्वयमुच्चारितं संनिध्यपेक्षायोग्यत्वानामविशेषात् स्थित्यन्वितां गां, आनयनं चाश्वान्वितमभिदध्यात्, न नियमेन गवानयनान्वयसिद्धिरिति, तत्र यदुत्तरं तथा सत्येकवाक्यत्वं बाध्येतेति, तत्पदार्थेष्वपि समानम् । यद्यपि गोपदार्थेन क्रियामात्रान्वय आक्षिप्यते, आनयेत्यर्थेनापि कारकमात्रान्वयः, तथापि तत्प्रतिपादकयोः पदयोरेकविशिष्टार्थप्रतीतिपरत्वैकलक्षणैकवाक्यत्वावगमात् तन्मा बाधीति श्रुतयोरेव परस्परनियमः । यत एव चायं नियमः पदान्तरसमभिव्याहारात्मकाद्वाक्यादेव सिध्यति न पदार्थसामर्थ्यमात्रात्, अत एव शब्दस्य प्रमाणान्तरत्वं, अन्यथा अनुमानं स्यात् । तेन पदार्थसामर्थ्यादनियमेनानेकवाक्यार्थपरिप्लवे सत्यपि, असत्यामपि वाक्यार्थविशेषव्याप्तौ परस्परसमभिव्याहारादेव विशिष्टवाक्यार्थावगतिसिद्धिः । **आह च— तत्रानैकान्तिकानेकवाक्यार्थोपप्लवे सति । अन्योऽन्यात्मव्यवच्छेदादेकत्र स्थाप्यते मतिः ॥ अतोऽन्वयातिरेकाभ्यामनुमाने यदिष्यते । एकार्थैकान्तिकत्वं तदन्यथैवात्र लभ्यते ॥** इति । यदनुमाने व्याप्तेः फलमेकार्थनिर्णयलक्षणं, तदत्रान्यत एव पदान्तरसमभिव्याहारलक्षणाद्वाक्यात् सिध्यतीत्यर्थः । तेनैतदुक्तं भवति, उभयोरपि वादिनोरनेकसाधारणान्वितप्रतिपादकशक्तिः एकवाक्यतया मिथो नियम्यते इत्येतावदवश्यं कल्पनीयम् । **तव** प्रमाणान्तरेण क्रियान्तरे संनिहिते पदान्तरेण चानयने गोपदमाकाङ्क्षाद्यविशेषादुभयान्वितगोप्रतिपादनसमर्थमपि आनयत्येकवाक्यतया तदन्वितमेव स्वार्थमभिधत्ते इति कल्प्यं, **मम** तु गोपदार्थः स्वभावादेव येन केन चिदन्वितं स्वमात्मानं प्रतिपादयितुं समर्थः पदान्तरैकवाक्यतया तदर्थान्वितमेवात्मानं प्रतिपादयतीति कल्प्यं, इत्येतावदावयोस्तुल्यत्वम् । पदस्य तु भवान् विशिष्टे शक्तिं कल्पयति, वयं

तु स्वरूपमात्रे, इति महान् विशेषः। अपेक्षाभावाददोष इति चेन्न। सत्यामपि अदर्शनात्। **स्यादेतत्**, न वयं साधारणी पदशक्तिरेकवाक्यतया नियम्यते इति कल्पयामः। कथं तर्हि अर्थान्तरेणान्विताभिधानं न भवति, अपेक्षाऽभावात्। सा ह्यन्विताभिधानोपलक्षणम्। न च प्रमाणान्तरप्रतीतयोः क्रियाकारकयोरपेक्षा विद्यते, श्रुतयोस्त्वपेक्षा, सा च परस्परसंबन्धादपि निवर्तते, इति नार्थान्तरान्वयप्रसङ्ग इति। **तन्नैवम्**। सत्यामप्यपेक्षायामन्वयाऽदर्शनात्। भवति हि कदा चिदियमवस्था, यदैकस्मिन् देशे ह्रेषादिशब्देनाश्वमनुमाय तस्य क्रियाविशेषं जिज्ञासते, किमश्वो गच्छति तिष्ठति वेति। प्रदेशान्तरे च पदनिक्षेपशब्देन गतिमनुमाय कारकविशेषं जिज्ञासते, किमत्र गौरश्वो वा गच्छतीति, तस्यामवस्थायां गौस्तिष्ठतीति पदद्वयं कश्चिदुच्चारयति, तत्र यद्येकवाक्यत्वं नियामकं नेष्यते, ततो ह्रेषादिशब्दानुमितस्याश्वस्य क्रियाविशेषापेक्षत्वात् तिष्ठतीति पदावगतायाः क्रियायाः कारकविशेषापेक्षत्वात् परस्परान्वयः स्यात् तिष्ठत्यश्व इति। तथा पदविक्षेपशब्दानुमितस्य गमनस्य कारकापेक्षत्वात् गोपदावगतायाश्च गोः क्रियापेक्षत्वादन्योन्यान्वयः स्यात् गौर्गच्छतीति। न नियमेन गौस्तिष्ठतीत्यन्वयः सिध्येत्, संनिध्यपेक्षायोग्यत्वानामविशेषात्। न चैवं दृश्यते। **न च** पदसामर्थ्यमेव पदान्तरस्मारितान्वितस्वार्थविषयावबोधनाय व्यवस्थापकमिति **वक्तव्यम्**। अशाब्दैरपि अन्विताभिधानस्येष्टत्वात्। तस्मान्न पदसामर्थ्यान्नियमसिद्धिः। अत एकवाक्यतैव शरणमर्थनीया नियतैकान्वयबोधनाय पदैरप्यन्विताभिधायिभिः, सा च पदार्थैरपि स्वभावसिद्धान्वयबोधनसामर्थ्यैस्तन्नियमायापेक्षितुं क्षम्यते इति कृतमन्विताभिधानपरिकल्पनव्यसनेन। किंच धवखदिरौ इत्यादिषु 'युगपदधिकरणे द्वंद्वः' इत्यभ्युपगमात् वाचकत्वानभ्युपगमाच्च अवश्यं खदिरो द्विवचनान्वयाय सद्वितीयमात्मानं लक्षयति नाभिधत्ते, येन केनापि सद्वितीयस्य तदन्वयोपपत्तौ किमिति धवसद्वितीयमेवात्मानं लक्षयति? तदेकवाक्यत्वादिति चेत्, तर्हि तदेव सर्वत्र पदार्थानामन्यान्वितात्मलक्षणायां कारणं भवतीति न कदा चिदक्लृप्तकल्पनम्। तुल्यैव शक्तिकल्पना स्यात् तथापि पदार्था एव वाक्यार्थे प्रमाणं युक्तमङ्गीकर्तुं, न पदानि आनन्तर्यसंनिधानाभ्याम्। अन्विताभिधानवादेऽपि हि पदैः पदार्थेष्ववगतेषु पश्चाद्वाक्यार्थज्ञानं जायते, अन्यथा संनिधेर्दुर्लभत्वात्। ते तु तैरभिहिताः स्मारिता वेत्यत्र विवादः। सर्वथा तावत् पदग्रहणानन्तरं पदार्थेषु प्रतीतेषु वाक्यार्थावगतिरित्यविवादम्। ततश्च अनन्तरानुभूतपदार्थातिक्रमेण व्यवहितानि पदानि न युक्तं यद्वाक्यार्थावगतेः कारणं भवन्तीति कल्पयितुम्। न च पुनः पदानुसंधानमस्तीति किं चन प्रमाणमस्ति। किंच दीर्घतमेषु वाक्येष्वशक्यमेवानुसंधानम्। असत्यपि च तस्मिन् पदार्थानुसन्धानमात्रेण वाक्यार्थः प्रतीयते इति सर्वजनीनमेतत्। तेन दृष्टानुगुण्यादपि पदार्थनिमित्तक एव वाक्यार्थः, न पदनिमित्तो दृष्टबाधप्रसङ्गात्। तदाह–**पदार्थानां च सामर्थ्यं गम्यमानमपह्नवम्। आनन्तर्याद्धि वाक्यार्थस्तद्धेतुत्वं न मुञ्चति॥** इति। एतेन यत्पदानामेवान्विते सामर्थ्यमित्यत्र कारणमुक्तं प्राथम्यादिति, तद्विपर्ययसाधनमिति वेदितव्यम्। यत्तु तात्पर्यात् पदानामेव साक्षादन्वितप्रतिपादकत्वं युक्तमित्युक्तं, तत् काष्ठानामनपेक्षितज्वालानां पाकसाधनत्वं आग्नेयादीनां चातन्त्रितावान्तरव्यापाराणां परमकार्यसाधनत्वमापादयेत्। अथ तत्राग्नेयादिस्वरूपेषु तिरोहितेषु जायमानं परमापूर्वं न तैः साक्षाज्जनयितुं शक्यते, तात्पर्यं चावान्तरव्यापारद्वारेणापि साधयतामविरुद्धमित्युच्यते, तदत्रापि समानम्। अत्रापि हि तिरोहितेष्वेव पदेषु पदार्थानुसन्धानानन्तरमवगम्यमानस्य वाक्यार्थस्य पदार्था एव साक्षात्साधनं, पदानि तु तद्द्वारेणैव साधनं न साक्षादिति। नन्वेवमभिधायकत्वं पदानां न स्यात्, पदार्थस्वरूपावगतेः स्मरणादविशिष्टत्वात् स्मारकत्वमेवास्तु नाभिधायकत्वम्। भवत्वेवमिति **केचित्**। तथा च–**भावनावचनस्तावत् तां स्मारयति लोकवत्। पदमप्यधिकाभावात् स्मारकान्न विशिष्यते॥ तेऽपि नैवास्मृता यस्माद्वाक्यार्थं गमयन्ति नः। तस्मात्तत्स्मरणेष्वेव संगतेषु प्रमाणता॥** इत्याहुः। **अन्ये** त्वाहुः। प्रत्यासत्तिनिमित्तं स्मारकत्वं, न च पदपदार्थयोः संयोगसमवायादिलक्षणा प्रत्यासत्तिरस्ति, यतः स्मारकत्वं स्यात्। वाचकत्ववदिति चेन्न,

तस्य स्वाभाविकत्वात् । स्यादेतत्, यथा संबन्धान्तराभावेऽपि वाचकत्वं, एवं स्मारकत्वमपि भविष्यति । तन्नैवं, स्वाभाविकत्वाद्वाचकत्वस्य । प्रत्यायकत्वं हि वाचकत्वं, तच्च स्वभावशक्त्याऽप्युपपन्नं चक्षुरादीनामिव रूपादिषु । **ननु** तत्रापि संयोगसंयुक्तसमवायतत्समवायलक्षणः संबन्धो विद्यते एव । **सत्यम्** । स तु रसादिसाधारणः । शक्तिरेव तु असाधारणं प्रत्यायकत्वे निमित्तम् । तद्वच्छब्दस्यापि स्वाभाविक्यैव शक्त्या प्रतिपादकत्वं भविष्यति, स्मारकत्वं तु संस्कारोद्बोधेन । न च संबन्ध्यर्थान्तरादर्शनेन असौ उद्बोधयितुं शक्यते, क्व चिदप्यदर्शनात् । **ननु** प्रत्यायकत्वमपि असंबन्धिनो नैव दृष्टं स्वाभाविकशक्तिशालिनामपि चक्षुरादीनां संबध्यैव प्रतिपादकत्वात्, अन्यथा दविष्ठानामपि ग्रहणप्रसङ्गात् । शब्दस्य तु न कश्चिदर्थेन संबन्धोऽस्ति । तत्कथमस्य प्रत्यायकत्वम् ? अथान्यत्राऽदृष्टमपि तदिहैव कल्प्यते, तर्हि स्मारकत्वमेव किमिति न कल्प्यते ? वक्तव्यो वा विशेषः । **स उच्यते** । सर्वथा तावदन्यत्रासंबन्धिनः अदृष्टमपि स्मारकत्वं प्रत्यायकत्वं वा शब्दस्य कल्प्यम् । तत्र प्रत्यायकत्वकल्पनमेव ज्यायः । शब्दानन्तरमर्थप्रत्ययदर्शनात् तस्यैव तत्र कारणत्वं कल्पयितुं युक्तं, न तु शब्दात् संस्कारोद्बोधः, ततश्चार्थप्रतीतिरिति युक्तं, प्रणाल्यां प्रमाणाभावात् । तस्मादभिधायकमेव पदं न स्मारकमिति । गृहीतग्राहित्वात् स्मरणमेव पदजनितं विज्ञानमिति चेत्, तदसत्, अतल्लक्षणत्वात् । न गृहीतग्राहित्वं लक्षणं स्मरणस्य, किंतु संस्कारमात्रजन्यत्वम् । प्रत्युत्पन्नकारणजनितं तु यत् गृहीतग्राहि ज्ञानं, तदनुवाद इत्युच्यते, न स्मृतिरिति । कथं तर्हि वार्तिकघटना, सत्यं घटते एव, अनुवादस्यापि गृहीतग्राहितया स्मरणादविशिष्टत्वात् । 'भावनावचनस्तावत्तां स्मारयति लोकवत्' ( श्लोवा. वाक्याधिकरणे २४८ ) इत्यादिष्वौपचारिकः स्मरणव्यवहारः । तथा च 'पदमप्यधिकाभावात्स्मारकान्न विशिष्यते' इत्याह ( श्लोवा. शब्दपरिच्छेदे १०७ ), न तु स्मारकमिति दर्शयति । तेनार्थस्वरूपमात्रेऽपि वाच्ये अभिधायकत्वं पदस्य युक्तमिति । **प्राथम्यं कारणं यत्तु तद्विपर्ययसाधनम् । ये तात्पर्योऽभिधातृत्वे तेऽप्यनैकान्तिकीकृते । १५ ॥** इति संग्रहश्लोकः । किंच यद्यभिधानत एवान्वितप्रतीतिः कथं तर्हि [ गङ्गायां घोष इत्यादिषु लाक्षणिकस्य तीरादेर्घोषान्वितस्य प्रतिपत्तिः । नहि तत्स्वरूपमपि गङ्गाशब्दस्याभिधेयं प्रागेवान्वितम् । अथोच्येत ] ( अयं ग्रन्थः क्वचिन्नास्ति, आवश्यकस्तु ) गङ्गाशब्देन निमित्तभूतेऽर्थस्वरूपे स्मारिते सति तेन यत्संबन्धात् स्मारितं तीरस्वरूपं, तेनान्वितं स्वार्थं घोषशब्दोऽभिधत्ते, गङ्गाशब्दस्तु तीरस्मरणमात्रोपयोगीति । यत्र तर्हि सर्वपदानामेव लाक्षणिकार्थत्वं न कस्य चिदपि मुख्योऽर्थो विद्यते, तत्र कथमन्वितप्रतिपत्तिः । **अस्ति वा तादृशं वाक्यं सत्यं यत्र न विद्यते । कार्यं तदन्वितं वाऽपि यथा गच्छति भूमिपः । १६ ॥** सर्वेषामेव पदानां कार्यं तदन्वितं वा अभिधेयम् । लिङ्गादीनां कार्यमन्येषां तु तदन्वितम् । यस्तु लोके कुतूहलप्रश्नप्रतिवचनरूपः सिद्धार्थविषयः शब्दप्रयोगः कार्यशून्यो दृश्यते यथा 'कोऽयं गच्छति, भूमिपो गच्छति' इत्यादिः कवीनां वाऽर्थविशेषवर्णनारूपः यथा— **नीलोत्पलवनेष्वद्य चरन्तश्चारुसंरवाः । रामाः कौशेयसंवीताः कादम्बा इव शोभनाः ॥** इत्यादिः, स लाक्षणिक इति हि भवतां समयः । तत्रापि चान्वितसंविदस्त्येव । न चासौ पदैरुदेतुमर्हति, तेषामतदभिधायकत्वात् । नहि भूमिपशब्दस्य कार्यान्वितस्वार्थानभिधायित्वात् आकाङ्क्षादित्रयशालिनाऽपि गच्छत्यर्थेनान्वितः स्वार्थोऽभिधेयः, तथा गच्छतेरपि तदन्वितः अनभिधेय एवेति न पदनिमित्तान्वयप्रतीतिर्भवेत् । तेनावश्यं पदस्मारितनिमित्तभूतार्थस्वरूपाभ्यामेव आकाङ्क्षायोग्यत्वैकवाक्यत्वसनाथाभ्यां इयमन्वितसंविदुदयमासादयति इत्यकामेनाप्यनुज्ञातव्यम् । ततश्च सर्वत्रैव तथाऽस्तु किमन्विताभिधानकल्पनया । **अथ तत्रानुमानेन संविदन्वितगोचरा । जायते, न पदैर्नापि पदार्थैरिति मन्यसे । १७ ॥** यथा सिद्धार्थेषु न पदनिमित्ता वाक्यार्थसंवित्, तथा पदार्थनिमित्ताऽपि न भवति, किन्त्वनुमाननिमित्ता । वाक्यरचना हि पौरुषेयी विशिष्टार्थविवक्षापूर्विका तामनुमापयति । सा च स्वकारणभूतं विशिष्टविज्ञानं, तेन च विषयभूतार्थानुमानसिद्धौ न सर्वपदार्थानामन्वितत्वप्रतिपादनसामर्थ्य-

मुपकल्पयितुं शक्यते इति । **यद्येवम्– यत्रापि कार्यसंवित्तिस्तत्राप्येवं प्रसज्यते । पदानामपि सामर्थ्यमन्वितेऽतो न सिध्यति ।१८॥** गामानयेत्यादिष्वपि वृद्धुक्त्यैव नीत्या अनुमानपरंपरया विशिष्टकार्यावगतिसिद्धेर्न पदानामपि अन्विताभिधायित्वं सुकल्प्यम् । **अत्रोच्यते । यदर्थविषयं वाक्यं तेनासावनुमीयते । नान्यस्तेनान्विते सिध्येत् पदानां शक्तिनिर्णयः ।१९॥** विशिष्टार्थविषयव्यवहारदर्शनेन हि व्यवहरमाणस्य तद्विषयमेव विज्ञानमुत्पन्नमित्यवश्यमङ्गीकर्तव्यम् । न च तद्वाक्यमात्रात् सिध्यति, किंतु विशिष्टवाक्यावगमात् । तस्य चार्थाभिधायित्वमेव विशेषः । विशिष्टवाक्यार्थप्रतिपादकेन हि वाक्येन तद्विषयविवक्षां वक्तुरनुमाय ततो विशिष्टार्थविषयविज्ञानानुमानद्वारमर्थविशेषमनुमाय प्रयोज्यवृद्धो विशिष्टार्थव्यवहाराय घटते नान्यथा । तेनावश्यं विशिष्टार्थप्रतिपादकत्वं वाक्यस्याभ्युपगन्तव्यम् । तच्चान्वयव्यतिरेकाभ्यामवयवशक्तावेवेति सिद्धं पदानामन्विताभिधायित्वमिति । **यद्येवं--सिद्धार्थेभ्योऽपि वाक्येभ्यो विशिष्टार्थावबोधनात् । पदानां चासमर्थत्वात् पदार्थानां निमित्तता ।२०॥** सिद्धार्थेभ्योऽपि हि वाक्येभ्यः पार्थिवो गच्छतीत्यादिभ्यो राजगमनादिरूपविशिष्टार्थविषयमेव विज्ञानमुपजायते, तच्च वक्तुर्विशिष्टज्ञानानुमानात् । विशिष्टवाक्यरचनया च तादृशज्ञानानुमानम् । वाक्यस्य च विशेषस्तदर्थप्रतिपादकतया स्यात् नान्यथा । तेन विशिष्टार्थप्रतिपादकत्वं वाक्यस्याभ्युपगन्तव्यम् । तत्र च पदानां कार्यान्वितस्वार्थाभिधायिनामतादृशे सामर्थ्याभावात् पदार्थद्वारेणैव विशिष्टार्थप्रतिपादकत्वमभ्युपेतव्यम् । **यत्तुच्येत** नावश्यमन्वितप्रतिपादकेनैव वाक्येन तद्विषयविज्ञानानुमानं, अर्थविशेषस्मारकपदसंघातविशेषादेव विशिष्टानुमानलाभात् । तथाहि ईदृशी व्याप्तिसंवित् ' यो येषां पदार्थानामितरेतरान्वययोग्यानां प्रतिपादकानि पदान्याप्तः समुच्चारयति, तस्य तेषामन्वये ज्ञानमस्ति' इति । एवं च अन्तरेणापि पदार्थानामन्वितप्रतिपादकत्वं पदविशेषरचनयैव ज्ञानानुमानद्वारेण सिद्धार्थेषु विशिष्टवाक्यार्थानुमानसंभवात् न पदार्थनिमित्तत्वं वाक्यार्थस्य सिध्यतीति । **एवं तर्हि–कार्यार्थेभ्योऽपि वाक्येभ्य एवमेव प्रसिध्यति । वाक्यार्थवेदनं तेन न सिध्येदन्वितार्थता ।२१॥** गामानयेत्यादिवाक्येष्वपि पदानां पदार्थस्वरूपाभिधायकत्वमात्रेणापि विशिष्टज्ञानानुमानपुरःसरं विशिष्टवाक्यार्थानुमानसंभवादन्विताभिधायित्वं सिध्येत् । विनाऽप्यन्विताभिधायित्वं स्वरूपाभिधायकत्वमात्रेणापि 'येयं पदार्थस्वरूपाणामन्वययोग्यानामभिधायकानि पदानि येनामेनोच्चारितानि, स तदन्वयवित्' इतीदृश्यैव व्याप्त्या विशिष्टज्ञानानुमानसंभवात् । किंच स्वरूपमात्रमपि नाभिधेयं, पदविशेषस्यैव वाचकत्ववत् विशिष्टार्थविषयेणैव विज्ञानेन व्याप्तिग्रहणसंभवात् । यथा हि वाचकत्वं प्रतिपदमर्थविशेषं प्रति गृह्यते गोपदं सास्नादिमतो वाचकं अश्वपदं वाजिवाचकमिति, तथा तदन्वितार्थविषयविज्ञानव्याप्तिः तस्यतस्य पदस्य ग्रहीतुं शक्यते ' आप्तस्य गोपदरचना आकाङ्क्षितसंनिहितयोग्यार्थान्तरान्वितसास्नादिमद्विज्ञानपूर्विका ' इति । ततश्च पदानां **अर्थस्वरूपवाचित्वमपि नैव प्रसिध्यति । प्रागेवान्वितवाचित्वमतो वेदाप्रमाणता । २२ ॥** नञ्चपौरुषेयस्य वक्तृज्ञानानुमानद्वारं वाक्यार्थप्रतिपादकत्वं वेदवाक्यस्य संभवतीत्यप्रामाण्यं स्यात् ।

**स्यादेतत्**, शब्दश्रवणसमनन्तरभाविनीं प्रयोज्यवृद्धस्य चेष्टामुपलभ्य विशिष्टार्थविषया प्रतीतिस्तस्य कल्प्यते । सा च शब्दानन्तर्यात् तत्कारणिकैवेति शब्दस्य तद्वाचकताशक्तिः कल्प्यते, पश्चात्तु कस्य चित् अयथार्थपदरचनामुपलभ्य कथं व्यभिचारिणो वाक्यात् प्रयोज्यवृद्धस्यार्थनिश्चयः संजात इति विचिकित्स्य एवमवधारयति, ' नूनमनेनैवायं वक्तैवमवधारितः, नायमनन्वितार्थानि पदानि प्रयुङ्क्ते, तेन नूनमेतेनैषामन्वयो ज्ञातः इति ज्ञानानुमानपुरःसरमर्थं निश्चितवान् ' इति कल्पयति । पूर्वावगतं तु वाचकत्वं न मिथ्या मन्यते, तस्मादस्ति वाचकत्वमिति । **नैतत्सारम् । नहि कार्योदतज्जन्याच्छक्तिः शब्दस्य कल्प्यते । स्यात्तु तज्जन्यताभ्रान्तेर्भ्रान्तिः सा च निवर्त्स्यति । २३ ॥** नहि प्रयोज्यवृद्धस्य शब्दानन्तरभाविनी प्रतिपत्तिः शब्दजन्या यत्तस्य शक्तिं कल्पयेत्, शब्दानुमितवक्तृज्ञानलिङ्गजन्यत्वात् । न चान्यतो निष्पन्नं कार्यमन्यस्य शक्तिं

कल्पयति, अतिप्रसङ्गात्। यद्यपि च तस्यामवस्थाया-मजन्यत्वानवधारणाच्छब्दानन्तर्याच्छब्दजन्यत्वं भ्रान्त्या अवगम्य शब्दस्य शक्तिर्भ्रान्त्या अवगम्यते, तथापि पश्चा-दतज्जन्यत्वमवगत्य तज्जन्यत्वभ्रान्तौ निवृत्तायां तन्नि-मित्ता शक्तिभ्रान्तिरपि निवर्तिष्यते एवेति धूमायमान-धूममहिपजनितधूमध्वजविज्ञानवत्। तद्धि स्वरूपेणाबाधि-तमपि लिङ्गबाधादेव निवर्तते। तथा शब्दस्यापि वाच-कत्वकल्पना कार्यस्यातज्जन्यत्वावधारणात् निवर्तितुमर्हति। नन्वनुमितमप्यर्थं पश्चादनुवदद्वाक्यं वाचकं शक्तं स्यात्। तन्न, अनुवादकत्वे प्रमाणाभावात्। नह्यनुवादकत्वमन्तरेण किं चिदनुपपन्नं, यतस्तत्कल्प्येत। शक्तत्वादनुवाद-कत्वमिति चेत्, तदितरेतराश्रयं शक्तेरनुवादस्ततश्च शक्तिरिति। तस्मान्न वाचकत्वं सिध्यति। यदि परमर्थ-विशेषविषयज्ञानानुमानसिद्ध्यर्थं पुनर्वाचकत्वमवस्थाप्येत, तच्चान्तरेणापि वाचकत्वं शब्दविशेषस्य ज्ञानविशेषेणैव व्याप्तिग्रहणसंभवादनुपपन्नं, तस्माल्लोकवचसामनुमानत्वेन प्रामाण्याङ्गीकरणे पदानां वाचकत्वायोगादप्रतिपादकत्वेना-प्रामाण्यं वेदस्य स्यादिति तत्प्रामाण्यसिद्ध्यर्थं लोकेऽपि शब्दानां शब्दतयैव प्रामाण्यमभ्युप-गन्तव्यम्। ननु मा भूत्तस्य प्रामाण्यं, न तु तावता प्रमाणमन्तरेण वाचकत्वं कल्प्येत, नहि किं चित् प्रमाणमस्ति यतः शब्दस्य वाचकत्वं कल्प्येत। तद-भावेऽपि यथोक्तेन न्यायेनानुमानत एव लोके शब्दानन्त-रमर्थावगमसंभवात्। स्यादेतदेवं, यद्याप्तवाक्यश्रवणादे-वार्थबुद्धेर्जन्म स्यात्। **जन्म तुल्यं तु बुद्धीनामाप्तानाप्त-गिरां श्रुतौ। न चानाप्तोक्तिजाता धीर्लिङ्गादुत्पत्तु-मर्हति। २४॥ शब्दशक्तिरतः कल्प्या तदुत्पत्ति-प्रसिद्धये। ये त्वनाप्तोक्तितो बुद्धेरनुत्पत्तिं प्रचक्षते। २५॥ लिङ्गत्वं चाप्तवाक्यस्य तेषामेव तु दूषणम्। एतावानेव भेदः स्यादाप्तानाप्तगिरां मम। २६॥ यत्रानाप्तोक्तिजातायाः प्रामाण्यं स्थाप्यते धियः। वक्तृदोषेण दुष्टत्वादाप्तोक्तेर्या तु जायते। २७॥ प्रामाण्यं स्थाप्यते तस्या वक्तृधीहेतुसंभवात्। बुद्धिजन्मोभयत्रापि विद्यतेऽतो न दूषणम्। २८॥** अनन्यमनस्कानां स्तिमितान्तरात्मनां वक्तुर्धीविशेषं, तस्य चाप्तानाप्तत्वमनाकलयतामेव यतः कुतश्चिदुच्चरितानि पदानि सहसैव संविदमर्थगोचरामुत्पादयन्तीति सर्वजनीनमेतत्। न च तत्रानुमानं संभवतीति शब्दानामेव वाचकत्वशक्तिरवश्यं कल्पनीया, तेन नास्माकं किं चित् दूषणम्। ये तु सर्वजनसिद्धमप्येतदपह्नुत्य अनुमानत्वमेव लौकिकवचसां संगिरन्ते, तेषामेव वेदाप्रामाण्यमापद्यते। नह्यतदुत्पन्नाद्वाक्यार्थविज्ञानात् शब्दस्याभिधायकत्वं कल्प-यितुं शक्यते प्रागेवान्विताभिधायित्वं, असिद्धत्वादन्वित-प्रतीतेः। नहि शब्दश्रवणानन्तरं प्रयोज्यवृद्धस्यान्वितसंवि-दुदये किं चन प्रमाणमस्ति, यदन्वितार्थविषयता शब्दस्य सिध्येत्। **प्रमाणमनुमानं चेन्न, तद्धेतोरदर्शनात्। अथ प्रवृत्तिलिङ्गत्वं तत्रानैकान्तिका हि सा। २९॥** स्यादेतद् अनुमानेन प्रयोज्यवृद्धस्यान्वितप्रतीतिरवगम्यते इति। तन्न, अनुमानस्य लिङ्गादर्शनात्। ननु प्रवृत्तिरेव लिङ्गं, सा हि विशिष्टावगतिपूर्विका तामनुमापयतीति। तन्न, अनैकान्तिकत्वात् प्रवृत्तेः। सा हि भवन्मते शुक्तिकायामिव रजतार्थिनो विवेकाग्रहणादपि सिध्यति। तेन गामानये-त्यत्र गोप्रातिपदिकेन, द्वितीयया, धातुना, विधिप्रत्ययेन च चतुर्ष्वर्थेषु स्वरूपमात्रेणाभिहितेषु अनभिहितेऽप्यन्वये अनन्वयाग्रहादेव प्रवृत्तिसिद्धेर्नान्वितप्रतीतिः कल्पयितुं शक्यते। यो हि रजतमिदमिति पुरःस्थितवस्तुगोचरां संविदमुदीयमानां साक्षात्कुर्वाणोऽपि क्लृप्तकारणानुपलब्ध्या अपह्नुत्य अन्यत्राहष्टमपि भेदाग्रहणस्य प्रवृत्तिहेतुत्वं अदृष्टकल्पनाऽविशेषेऽपि दोषसहितेन्द्रियादेरयथार्थज्ञान-जनकत्वमवगत्यनुसारि अकल्पयित्वा कल्पयति, **स कथं** क्लृप्तप्रवृत्तिहेतुभावभेदाग्रहणादपि सिध्यन्त्या प्रवृत्त्या अनै-कान्तिक्या अन्वितसंविदं परस्यानुमाय तत्कारणत्वेन चान्यत्राक्लृप्तमपि शब्दस्य सामर्थ्यं कल्पयन्न लज्जते। यद्युच्यते भेदाग्रहणनिबन्धनस्य व्यवहारस्य विसंवादो भवति, यथा तस्यैव शुक्तिकायां रजतव्यवहारस्य, न च गामानयेत्यादिषु विसंवादः समस्ति, तस्मान्नाग्रहणनिब-न्धन इति। तदयुक्तं, अग्रहणनिबन्धनस्यापि ज्वालैकत्व-व्यवहारस्य उष्णजलव्यवहारस्य चाविसंवाददर्शनात्। तथा, **विधूमपावकादेशादूर्ध्वं बाष्पं विलोकयन्। अग्निसत्ताऽभिमानेन प्रवृत्तो न विहन्यते। ३०॥**

इदमपरमुदाहरणं, **यदा** एकस्मिन् देशे विधूमोऽग्निरवस्थितः, तस्य चोपरि बाष्पोद्गमो भवति, तं च कश्चिद्धूमं मत्वा अस्याधस्तादग्निरस्तीत्यभिमन्यमानः अग्न्यर्थी तदाजिहीर्षया यतमानः अग्निप्रतिलम्भान्न विसंवादमृच्छति, **तदा** तत्राग्रहणनिबन्धनस्यापि व्यवहारस्याविसंवाददर्शनादनैकान्तिको व्यवहाराविसंवादो नान्वितज्ञानोत्पत्तिकल्पनायां कारणं ( प्रमाणं ) भवितुमर्हति। तदपरिकल्पनाच्च नान्वितार्थत्वं शब्दस्य सिध्यतीत्यप्रामाण्यं वेदस्य वाक्यार्थे प्रति स्यात्। तदेवमन्वितज्ञानस्यासिद्धत्वात्, सिद्धत्वेऽपि तस्य शब्दशक्तिमन्तरेणैव वक्तृज्ञानानुमानद्वारेणात्मलाभसंभवात्, वाक्यजन्यत्वेऽपि सिद्धार्थपरेष्विव वाक्येषु पदावगतपदार्थसामर्थ्यप्रभावितत्वसंभवात् भवन्मते तावदप्रमाणकं पदानामन्विताभिधायित्वमिति सिद्धम्। **अस्मन्मते** तु यद्यपि अग्रहणाधीनव्यवहारासंभवात्, अनुमानत्वेन प्रामाण्यानङ्गीकारात्, सिद्धार्थेष्वपि वाक्येषु शब्दानां श्रुतिवृत्तत्वादित्यादिभिर्हेतुभिरन्विताभिधायित्वं निराकर्तुं न शक्यते, तथापि दृष्टबाधात् कल्पनागौरवाच्च निरासः। कथं पुनः कल्पनागौरवम्? एतावती हि शक्तिर्भवतोऽन्विताभिधानमङ्गीकुर्वतः कल्पनीया पदानां 'आकाङ्क्षितयोग्यात्मकवाक्यभूतपदप्रतीतं च यदर्थान्तरं, तेनान्वितं स्वार्थमभिदधति पदानि' इति। न चैवमध्याहृतैः संवरणादिभिर्द्वारादेरनन्वयप्रसङ्गः, तत्रापि भवन्मते संव्रियतामित्यादिकस्य पदस्यैव एकवाक्यभूतस्याध्याहारात् तत्प्रतिपादितैः संवरणादिभिरन्वयसंभवात्। एतावती च पदार्थानामपि कल्पनीयैवेति न शब्दशक्तिकल्पनागौरवमस्माकमिति चेत्, उच्यते—**क्लृप्तमन्वितसामर्थ्यं पदार्थानां स्वभावतः। एकवाक्यतया तत्र कल्प्यं नियममात्रकम्॥ ३१॥ अक्लृप्तमेव सामर्थ्यं पदानामन्वितेऽर्थवत्। कल्प्यं स्वरूपक्लृप्तिश्च गुर्वी नियमकल्पनात्॥ ३२॥** पदानां तावदर्थस्वरूपे शक्तिकल्पनमुभयोरपि पक्षयोरविशिष्टम्। अभिहितान्वयपक्षे पदार्थानामन्वितप्रतिपादकत्वसामर्थ्यं क्लृप्तमेव, नियममात्रमेकवाक्यतया कल्पयितव्यम्। तच्च लघीयः, पदानां तु अत्यन्ताक्लृप्तमेवान्वितप्रत्यायकत्वं कल्प्यं, तच्च गरीयः। दृष्टानुगुण्यं च प्रागेव समर्थितम्।

**यत्तु** संनिध्यपेक्षायोग्यत्वाविशेषेऽपि प्रमाणान्तरावगतानामर्थानां नियतान्वयनिमित्तत्वं न दृष्टं, शब्दावगतानां च तत्कल्पने शक्तित्रयकल्पनमित्युक्तं, **तन्न** संनिधिनाऽस्याङ्गताऽनङ्गीकारात् परिहृतम्। स्वाभिधायकनैकवाक्यभूतपदान्तराधीनो हि संनिधिः पदार्थानां नियतैकान्वितबोधने अङ्गं, न चासौ प्रमाणान्तरावगतेष्वस्तीति न तत्र नियतैकवाक्यार्थावगतिः। **यत एव** चैकवाक्यभूतपदान्तराधीन एव असंनिधिः पदार्थानामन्वितबोधने अङ्गं न संनिधिमात्रं, **अत एवा**परिपूर्णेषु विश्वजिदादिवाक्येष्वाकाङ्क्षितस्यार्थस्य शाब्दसंनिध्यर्थं शब्दस्यैव कल्पनाच्छ्रुतार्थापत्तेः शब्दगोचरत्वसिद्धिः। तथा चातिदिष्टेषु मन्त्रादिषु प्राकृते अग्न्यादिपदे अर्थलोपान्निवृत्ते निर्वापादिषु सूर्यादिपदाध्याहारात् ऊहसिद्धिः, अन्यथाऽसौ न स्यादित्यास्तां तावत्। **यद्यपि** पदानां पदार्थानां चोभयेषामपि सामर्थ्यमपूर्वमेव कल्पयितव्यं **तथापि** पदार्थानामेव कल्पयितुं युक्तं न पदानाम्। तथाहि, यत्र तावदेकं पदमनेकश्च पदार्थः, तत्रान्विताभिधानपक्षे पदस्य द्वे शक्ती कल्प्ये, अभिहितान्वयपक्षेऽपि पदस्यैका पदार्थस्य चैकेति द्वे एवेति तुल्यम्। यत्राप्येकशब्दस्यानेकेऽर्था वाच्याः यथाऽक्षशब्दस्य विदेवनादित्रयं, तत्राप्यन्विताभिधायित्वं प्रत्यर्थं शब्दस्य शक्तिद्वयकल्पनात् षट् शक्तयः, अभिहितान्वयेऽपि शब्दस्य प्रत्यर्थमेकैकशक्तिकल्पनात्तिस्रः पदार्थानां च त्रयाणां तिस्र इति षडेवेति तुल्यमेव। यत्र तु **बहवः शब्दा एकस्यार्थस्य वाचका यथा पाणिकरहस्तशब्दाः,** तत्रान्विताभिधानपक्षे प्रतिशब्दं शक्तिद्वयकल्पनात् षट् शक्तयः स्युः, अभिहितान्वयपक्षे तु त्रयाणां शब्दानामर्थस्य चैकैकशक्तिकल्पनाच्चतस्र इति लाघवम्। एवं चतुष्पञ्चषडादिषु शक्त्युपचयो दर्शयितव्यः। **चतुर्षु त्र्या**धिक्यं, पञ्चसु चतुष्काधिक्यं, **षट्सु पञ्चकाधिक्यं** इत्यूहनीयम्। शक्तिकल्पनातुल्यत्वेऽपि चानन्तर्यात् **पदार्थानामेव वाक्यार्थनिमित्तत्वं युक्तं न पदानामित्युक्तम्। तस्मा**दभिहितान्वय **एव ज्यायान्। तथा च सूत्रकारः 'अर्थस्य तन्निमित्तत्वात्' ( १।१।७।२५ ) इति व्यक्तमेव पदार्थनिमित्तत्वं वाक्यार्थस्य दर्शयति। भाष्यकारोऽपि हि (पृ.९६) 'अमूनि पदानि स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि,**

 अन्विताभिधानवादखण्डनं

अथेदानीं पदार्था अभिहिताः सन्तो वाक्यार्थमवबोधयन्ति' इत्याह। **यत्त्वस्य** व्याख्यानं क्रियते 'व्यतिषक्ताभिधायि पदं, न व्यतिषङ्गाभिधायि, व्यतिषक्ततः अवगतेर्व्यतिषङ्गस्य' इति। **तस्य** तावदयमर्थः, यथैव आकृत्या शब्देनाभिधीयमानया सह प्रतीयमाना व्यक्तिः शब्दजप्रतीतिगोचराऽपि आकृतिगम्येत्युच्यते, तत्र आकृतिप्रत्ययो हि व्यक्तिप्रत्ययस्य निमित्तमिति, नहि तत्राकृतिमात्रं शब्देनावगम्यते, तथा व्यक्तिरपीति युक्तं, केवलाया जातेः प्रत्येतुमशक्यत्वात्। स्वभावः खल्वसौ आकृतेर्यदसौ नान्तरेण व्यक्तिं प्रतीतिमारोढुं क्षमते, रूपं हि सा व्यक्तेः। न च रूपिशून्या रूपे बुद्धिरस्ति, यदि स्यात् रूपितैव न स्यात्। तस्मात् सह व्यक्त्यैव जातिः प्रतीयते, अथ चाकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्यते। तत्कस्य हेतोः? शब्दो हि स्वशक्त्या जातिमेवाभिधत्ते, तस्यास्तु व्यक्तिमन्तरेण प्रत्याययितुमशक्यत्वात् व्यक्तिमपि प्रत्याययति। तेन स्वाभाविकं शब्दस्याकृतिप्रत्यायकत्वं, तन्निमित्तं तु व्यक्तिप्रत्यायकत्वमिति आकृतिप्रत्ययो व्यक्तिप्रत्ययस्य निमित्तमित्युच्यते, न तु शब्देन प्रथममवगता आकृतिः पश्चाद्व्यक्तिमवबोधयतीति। तथा अन्विताभिधायिना शब्देन अन्वयमन्तरेणान्वितस्य बोधयितुमशक्यत्वात् अन्वयोऽवबोध्यमानः पदार्थनिमित्तक इत्युच्यते, भाष्ये च पदार्थशब्देनान्वित इत्युच्यते, वाक्यार्थशब्देनान्वयः, पदार्था वाक्यार्थमवबोधयन्ति अन्विता अन्वयमवबोधयन्तीत्यर्थः। अन्वितप्रतिपादकत्वनिमित्तमन्वयप्रतिपादकत्वमिति यावदिति। **सेयं क्लिष्टेन मार्गेण ग्रन्थव्याख्या न शोभते। पदार्थानां हि वाक्यार्थे स्पष्टोक्ताऽत्र निमित्तता। ३३॥ यद्यन्विताभिधायित्वं पदानां युक्तिभिर्दृढम्। क्लिष्टेनापि प्रकारेण ग्रन्थव्याख्या ततो भवेत्। ३४॥ पदैरभिहिताः स्वार्थाः वाक्यार्थस्यावबोधकाः। प्रसाधिता यदा युक्त्या तदा नैषोपपद्यते। ३५॥ अन्वितप्रतिपत्तेश्च निमित्तं पूर्वपक्षिणा। आक्षिप्तं तेन तन्मूलं भाष्येणानेन कथ्यते। ३६॥ अभ्युपेत्यान्विते मूलं यदि स्यात्पूर्वपक्षिणा। आक्षिप्तमन्वये मूलं समाधीयेत तत्त्वतः। ३७॥ न त्वेतदस्ति तेनेदं व्याख्यानं नोपपद्यते। यत्तु व्यक्तिवदित्युक्तं तदयुक्तं न शब्दतः। ३८॥ व्यक्तिप्रतीतिरस्माकं जातिरेव तु शब्दतः। प्रथमावगता पश्चाद्व्यक्तिं यां कांचिदाक्षिपेत्। ३९॥** जात्यभिधायी हि शब्दः तामेव बोधयति न व्यक्तिं, तत्रासमर्थत्वात्। असमर्थाच्च कार्योत्पत्तौ अतिप्रसङ्गात्। जात्यवगतेरपि असमर्थादेवोत्पत्तिसंभवात्। अथ व्यक्तावपि शब्दस्य सामर्थ्यमस्तीत्युच्यते तर्हि साऽप्यभिधेया स्यात्। **यदि तु** यत्र स्वाभाविकी शक्तिस्तदभिधेयं, जातिश्च तथा, तदभिधायकत्वनिमित्ता च व्यक्तौ शक्तिरस्ति, ततो नासावभिधेयेत्युच्यते, **तदयुक्तं**, प्रमाणाभावात्। यदि तस्यार्थद्वयेऽपि शक्तिद्वयं शब्दस्य कल्पितं, ततः केन प्रमाणेनायमवान्तरविभागः अवगम्यते स्वाभाविक्यामाकृतौ शक्तिः, व्यक्तौ तु तन्निबन्धनेति। **अथ** न व्यक्तौ शब्दस्य शक्तिः किंतु जातावेव, सा तु शब्देनैव प्रतीयमाना वस्तुस्वभावात् व्यक्त्या सह प्रतीयते इत्युच्यते **तन्न**, व्यक्तिप्रतीतेः कारणाभावात्। अप्रतीयमानया च तया सह जातेः प्रत्येतुमशक्यत्वात्। कथं व्यक्तिप्रतीतेः कारणं नास्तीति? उच्यते, शब्दस्याशक्तत्वेनाकारणत्वात्, जातिप्रतीतेश्च ततः पूर्वमनिष्पन्नत्वेन तत्कारणत्वायोगात्। तेन पूर्वावगतिर्जातेरङ्गीकर्तव्या। नन्वसौ न केवला प्रत्येतुं शक्यते, एवं तर्हि अस्या अप्रतीतिः प्रसज्ज्येत। व्यक्तिस्तावत्प्रत्यायकाभावान्न प्रतीयते, तस्यां चाप्रतीयमानायां न तया सह जातिः प्रत्येतुं शक्यते, केवला च न प्रतीयते इत्यप्रतीतिरेव जातेः स्यादिति। तस्माज्जातिरेव शब्दात् प्रतीयते इत्यङ्गीकर्तव्यम्। **रूपिशून्या च रूपेषु बुद्धिरस्त्येव तद्यथा। हिमवर्तिनि हेमन्ते शैत्यसंवित्त्वगिन्द्रियात्। ४०॥ तथा गन्धवति द्रव्ये नासाऽग्रमधिरोहति। न द्रव्ये जायते संविद् गन्ध एव तु जायते। ४१॥ तस्माज्जात्यभिधायित्वाच्छब्दस्तामेव बोधयेत्। सा तु शब्देन विज्ञाता पश्चाद् व्यक्तिं प्रबोधयेत्। ४२॥** भवतु वा जातिमात्राभिधानशक्तेनापि शब्देनापर्यवसानादेव अवगम्यमाना व्यक्तिर्न पृथक् शब्दशक्तिं प्रकल्पयतीति। न त्विह तथा, पृथक्शक्तिमन्तरेणान्वयप्रतीत्यसंभवात्। जातिर्हि

व्यक्तेरर्थान्तररूपा, युक्तं यत्तस्यामभिधीयमानायामपि न व्यक्तिरभिधामनुप्रविशतीति। नहि व्यक्तिमत्त्वैव जातेः रूपं, येनाभिधेयानुप्रवेशात् व्यक्तेरप्यभिधेयत्वं स्यात्। अन्वितस्य चान्वयवत्त्वैव रूपमिति तस्मिन्नभिधीयमाने अन्वयस्याभिधानानुप्रवेशः स्यादेव। ततस्तत्रापि शक्तिः कल्पनीया। अथान्वितशब्देन पदार्थानां स्वरूपमुपलक्ष्यते, तच्चानभिधाय अन्वयमभिधातुं शक्यते इत्युच्यते, न तर्हि शब्देनान्वयप्रतीतिसिद्धिः। नहि जातिवत् व्यक्तिं अन्वयमन्तरेण पदार्थस्वरूपमनिरूप्यं, येन तदपर्यवसानाच्छब्देन प्रत्याय्येत। **ननु** यथा जातिर्न क चिदपि व्यक्तिविकला अवगता, तथा पदार्था अपि न व्यतिषङ्गविकलाः क चिदप्युपलभ्यन्ते, अन्ततः अस्त्यर्थेनापि सर्वत्र सर्वपदार्थानामन्वितत्वम्। तस्यापि अपर्यवसानादेव सिद्धेर्नाभिधेयत्वमिति। **सत्यं**, अन्वयमात्रमपर्यवसानात् गम्यते, तद्विशेषस्तु नान्तरेणाभिधानं शाब्दीं प्रतीतिमारोहति, तस्मादन्विताभिधायित्वे शब्दस्य शक्तिकल्पनागौरवात् स्वरूपमात्रमभिधेयम्। कथं तर्हि भाष्यकारेण 'प्रातिपदिकादुच्चरन्ती द्वितीयाविभक्तिः प्रातिपदिकार्थो विशेषकः इत्याह' (१।१।७।२५ पृ. ९९) इति प्रत्ययस्यान्विताभिधायित्वं उच्यते? भवन्मते वा कथं सर्वशब्दानामन्विताभिधायित्वे सति विशेषेण तत्प्रत्ययस्य कथ्यते? तेन ग्रन्थानुगुण्याच्छब्दान्तराणां स्वरूपमात्राभिधायित्वं, प्रत्ययस्य त्वन्विताभिधायित्वमिति व्यवस्थाप्यम्। यद्वा अनेनापि अन्विताभिधायित्वं प्रत्ययस्य नोच्यते, किं तर्हि? प्रत्ययेन स्वार्थोऽभिधीयमानः प्रथमावगतप्रकृत्यर्थानुरक्त एवावगम्यते इति तत्रान्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च स्वेस्वेऽर्थे, अनुरागांशे च प्रकृतिप्रत्ययसमभिव्याहारस्यैव पदार्थान्तरानुरागनिमित्तत्वं विविच्यते। यथा ग्रहणस्मरणात्मनि प्रत्यभिज्ञाने ग्रहणांशस्येन्द्रियनिमित्तत्वं, स्मरणांशस्य च संस्कारनिमित्तत्वं, यथा च वस्त्वन्तराभावविशिष्टे वस्त्वन्तरे गृह्यमाणे विशेष्यस्य भावांशस्य प्रत्यक्षादिविषयत्वं, विशेषणस्य चाभावांशस्याभावविषयत्वं विविच्यते, तथा अत्राप्यनुरागांशस्य प्रकृतिप्रत्ययसमभिव्याहारादेव प्रतीतिसिद्धेर्न प्रत्ययस्य तदभिधायकत्वं, न तु स्वार्थेनैवाभिधत्ते। आह च (हरिः) 'प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत्। भेदेनैवाभिधानेऽपि प्राधान्येन तदुच्यते॥ पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽन्यकः। पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्य चित्॥' इति। मत्वर्थीयास्तु विशिष्टमेवाभिदधति। नहि तेषां वाच्यान्तरं निरूप्यते। 'हिरण्यमालिन ऋत्विजः' इत्यत्र विशेषणभूता हिरण्यमाला तावत् प्रकृत्यैवाभिहिता, ऋत्विजोऽपि हि विशेष्याः स्वपदेनैव, मत्वर्थीयः किमभिदध्यादन्यद्विशिष्टात्, तदसौ विशिष्टाभिधाय्येव। अन्येषामपि तु येषां युगपदनेकार्थाभिधायित्वं विभक्तेरिव लिङ्गसंख्याकारकाणां, तेषामप्यन्विताभिधायित्वम्। एतच्च सर्वं **अङ्गनिर्णये** एव वक्ष्याम इति। इतरेषां तु शब्दानां स्वार्थरूपमेवाभिधेयं अन्वितरूपस्तु वाक्यार्थः पदार्थगम्य इति। अत एव 'वाक्यार्थो लाक्षणिकः' इति मीमांसकाः, अभिहितार्थसंबन्धादभिगम्यमानत्वात्। नन्वविनाभावनिमित्ता लक्षणा, न च पदार्था वाक्यार्थविशेषेणाविनाभूता इति स कथं लक्ष्यते? नावश्यमविनाभावनिमित्तैव लक्षणा, एकवाक्यताऽपि तत्र निमित्तम्। अत एव असत्यप्यविनाभावे व्रीहीनवहन्तीत्यत्र दर्शपूर्णमासैकवाक्यतया तत्साधनत्वलक्षणोपपत्तिः। एकवाक्यता च क चित् प्रत्यक्षा यथा सोमेन यजेतेति, क चित् प्रकरणाद्यनुमेया यथा दर्शपूर्णमासाभ्यां यजेत समिधो यजतीत्यनयोः समिदुपेता दर्शपूर्णमासभावना कर्तव्या इत्येवंरूपैकवाक्यता कल्प्यते, एवमन्यत्रापि द्रष्टव्यम्।

**तस्मान्न वाक्यं न पदानि साक्षाद् वाक्यार्थबुद्धिं जनयन्ति, किंतु। पदस्वरूपाभिहितैः पदार्थैः संलक्ष्यतेऽसाविति सिद्धमेतत्॥ ४३॥ पार्थसारथिमिश्रेण निर्णयोऽभिहितान्वये। यथागमं यथाप्रज्ञं वार्तिकोक्तः प्रदर्शितः॥ ४४॥**

**इति न्यायरत्नमालायां वाक्यार्थनिर्णयः पृ. ७३–१०२.**

*** अन्विताभिधानवादसमर्थनम्।** (वाक्यार्थमातृका इति तु ग्रन्थकर्तृकृतमभिधानम्। एतदुत्तरप्रकरणे च 'उपोद्घातभूतं अन्विताभिधानं प्रसाध्य' इत्युक्तमादावेव। तेन न विरोधः। के.) **'गम्भीरविततमर्थं वाचा संक्षिप्तया**

**निबद्धमपि। न विदन्ति ये समग्रं कृपया तदनुग्रहः क्रियते ॥** ' तत्र कार्यार्थवादिनः एव भावं भावनामपूर्वं च वाक्यार्थान् प्रतिजानीते । तत्रापूर्वमेव वाक्यार्थः इति साधनीयम् । तस्य मूलं पदानामपि तथाविधायितेति तामेव तावदादौ परिशोधयति । अत्र ये प्रत्यस्तमितपदविभागं वाक्यमेव वाक्यार्थस्य वाचकमित्याचक्षते, ये च वाक्यान्त्यवर्णः एवेति, ये च पदैरभिहिताः पदार्थाः परस्परान्वयं आत्मनोऽवगमयन्ति इति, तन्निरासाय प्रतिजानीते–' **पदेभ्य एव वाक्यार्थप्रत्ययो जायते यथा । तथा वयं निबध्नीमः प्रभाकरगुरोर्मतम् ॥**' पदेभ्य एव न वाक्यात्, नाप्यन्त्यवर्णात्, नापि पदार्थेभ्यः इत्यर्थः । तं प्रकारं वक्तुमुपक्रमते– ' **पदैरेवान्वितस्वार्थमात्रोपक्षीणशक्तिभिः । स्वार्थाश्चेद् बोधिता बुद्धौ वाक्यार्थोऽपि तथा सति ॥**' वाक्यार्थप्रतिपत्तौ हि पदानामनुपायत्वे तदन्यथाऽनुपपत्त्या वाक्यमेकं तदुपायभूतं कल्प्यते । यद्यपि व्युत्पत्त्यनपेक्षात् शब्दार्थौ नावगम्यते, यद्यपि चानन्त्यात् वाक्यानां तदर्थानां च वैदिकस्य चार्थस्य नित्योपायत्वात् व्युत्पत्तिरशक्या, तथापि काल्पनिकपदपदार्थव्युत्पत्तिसंस्कृतात् वाक्यात् वाक्यमवगच्छतीत्याश्रीयते । यदि वा काल्पनिकत्वे पदपदार्थानां प्रमाणमावादेकैकवर्णोच्चारणे अर्थानवबोधात् क्रमोच्चारितानां च युगपच्छ्रवणासंभवात् पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः । तस्य च पारमार्थिकपदपदार्थव्युत्पत्तिः सहकारिणीति पक्षः स्वीक्रियते, यदि वा पदैः सुकरव्युत्पत्तयः अनन्विताः एव स्वार्था अभिहिता वाक्यार्थमवबोधयन्तीत्यङ्गीक्रियते । यदि तु पदान्येव अन्वितान् स्वार्थानभिदधतीति शक्यते साधयितुं, तदा वाक्यार्थस्यावबुद्धत्वात् नैताः कल्पना आत्मानं लभन्ते । कथं पुनः पदानामन्वितस्वार्थमात्रबोधकत्वे वाक्यार्थावगतिः सिध्यतीत्यत्राह–'**प्रधानगुणभावेन लब्धान्योन्यसमन्वयान् । पदार्थानेव वाक्यार्थं संगिरन्ते विपश्चितः ॥** ' ननु तेषां भूयस्त्वात् भूयांसो वाक्यार्था वाक्यानि च स्युरित्यत्राह– '**भूयांसो यद्यपि स्वार्थाः पदानां ते पृथक्पृथक् । प्रयोजनतया त्वेकवाक्यार्थं संप्रचक्षते ॥ [illegible]ककार्यत्वाद्वाक्यमप्येकमुच्यते ।**' कथं पुनरेकस्य प्रयोजनत्वमित्यत्राह– ' **प्रतिपत्तिर्गुणानां हि प्रधानैकप्रयोजना ॥** ' यद्धि प्रधानभूतं तदेव कथं नाम विशिष्टं प्रतीयते इत्येवमर्थं गुणानां प्रतिपादनम् । तेन तत्रैव तात्पर्यम् । तदेव प्रमेयम् । तात्पर्यविषये एव शब्दस्य प्रामाण्याभ्युपगमात्, तस्य तथाभूतस्य प्रतिपत्तिर्नैकपदनिबन्धनेति वाक्यमेव तत्र प्रमाणम् । अत एव च षष्ठाद्ये 'न पदं नाम किं चन वाक्ये, न पदार्था नाम के चन वाक्यार्थे' इत्युक्तम् । पृथग्भूतं पदं नाम न किं चन प्रमाणमस्ति, पृथग्भूताश्च पदार्थाः न प्रमेयाः सन्तीत्यर्थः । एतच्च तत्रैव स्पष्टमुक्तम् । संप्रति वाक्यमेव वाचकं वाक्यार्थस्येति ये ब्रुवते, ये च वाक्यान्त्यवर्ण एवेति, तन्निराकरणायाह–'**व्यवहारेषु वृद्धानां वाक्यश्रवणभाविषु । आवापोद्धारभेदेन पदानां शक्तिनिश्चयः ॥** ' यद्यपि वृद्धव्यवहारपूर्विकैव सर्वा व्युत्पत्तिः, वाक्यैरेव च व्यवहारः, तथापि यत्पदावापे यस्यार्थभागस्यावापः यदुद्धारे चोद्धारः, तस्मिन्नेवार्थे तस्यैव वाचकशक्तिरवसीयते । न च तथा वाक्यार्थप्रतिपत्तिर्नोपपद्यते, वक्ष्यमाणत्वात् न्यायस्य। येन कार्यबलेन वाक्यमेकं प्रत्यक्षपरिदृश्यमानवर्णभेदापह्नवेन कल्प्येत। किंच 'शिशो गामानय' 'शिशो गां बधान' 'बालक गामानय' 'बालक गां बधान' 'अर्भक गामानय' 'अर्भक गां बधान' 'डिम्भ गामानय' 'डिम्भ गां बधान' इत्यष्टानां वाक्यानामष्टौ वाचकशक्तयः कल्प्याः । पदवादिनस्तु सप्तानां वाक्यानां सप्त शक्तयः इति । अनयैव दिशा शुक्लामितिपदप्रक्षेपे वाक्यवादिनः अष्टावपराः कल्प्याः । पदवादिनस्तु एकैव । अपारमार्थिके च पदविभागे किमाश्रिता व्युत्पत्तिरभ्युपायमुपैतीति चिन्तनीयम्। ये पुनर्वाक्यान्त्यवर्णस्य वाचकतामाहुः, तन्मतेऽपि यावत्पदपदार्थविभागस्य पारमार्थिकत्वात् घटेतैव व्युत्पत्तिः । **ननु** वाच्यवाचकसंबन्धग्रहणमेव व्युत्पत्तिरित्युच्यते । न च वाक्यान्त्यवर्णवाचकत्ववादिनां पदं पदार्थस्य वाचकम् । अतस्तन्मतेऽपि निर्विषयैव व्युत्पत्तिः । **उच्यते** । न निर्विषया, निमित्तनैमित्तिकभावस्याभ्युपगतत्वात् । केयमबाधकस्य निमित्तता । नैष दोषः । वाक्याद्धि यत्पदप्रयोगे अन्विते सति यत्पदार्थान्वितो वाक्यार्थः

प्रतीयते, तत् पदं तस्यार्थस्यावाचकमपि भवति निमित्तम् । किंतु तन्मतेऽपि शक्तिकल्पनागौरवं पूर्वोक्तन्यायेन तुल्यमेव । येऽप्याहुः वाक्यमेव स्मृत्यारूढं वाक्यार्थं प्रतिपादयतीति, तेषामपि प्राच्यकल्पनागौरवदूषणमशक्यपरिहारम् । **भाष्यकारवचनं** च ' पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायकः ' ( १।१।५ पृ. ४६ ) इति निर्विषयम् । अशक्यं च महावाक्यस्य सकृत् स्मरणम् । तस्मात् पदानामेव वाचकशक्तिराश्रयणीया ।

**अत्र केचिच्चोदयन्ति**–ननु वृद्धव्यवहारप्रयुक्ते वाक्ये पदानां वाचकशक्त्यवधारणमेव नोपपद्यते, पुरुषवाक्यानामर्थं प्रति लिङ्गाभावेन प्रमाणत्वाभ्युपगमात् । वाक्याद्धि कार्यभूतात् प्रत्ययितस्य वक्तुस्तदर्थविषयं पूर्वविज्ञानं कारणभूतमनुमीयते । तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वात् ज्ञेयभूतार्थनिश्चयः, इति न वाचकशक्त्यवगमः । उच्यते । न नूनं भवान् नीतिपथोक्तमर्थं ( नीतिपथाख्यप्रकरणोक्तं ) सम्यगाकलयति । परिहृतं हि तत्रेदम् । बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धस्य शब्दश्रवणसमनन्तरभाविनीं विशिष्टचेष्टानुमितामर्थप्रतीतिं शब्दकारणिकामवगच्छति । स तथा व्युत्पन्नः कदा चित् कस्य चिदन्वितार्थपदरचनं वाक्यमुपलभते । तथोपलभमानस्य चैष विमर्शो जायते, ' संभाव्यमानानन्वितार्थपदरचनमिदं वाक्यं कथं वृद्धस्याऽर्थनिश्चयं कृतवत् । वृद्धस्यापि पुरुषायत्ते वाक्ये अनन्वितार्थपदरचनशङ्का ममेव संभवति ' इति । तस्यैवं विचिकित्सोदये पुनरेष निश्चयो जायते ' नूनमनेनायं प्रयोक्ता इत्थमवधारितः अन्वितार्थान्येव पदान्ययं प्रयुङ्क्ते इति तथाविधपदप्रयोगनियमश्चास्यानुपलब्धेऽन्वये नोपपद्यते ' इत्येवमन्वयोपलम्भं अनुमिमानेनान्वयो निश्चीयते, निश्चिते चान्वये वाक्यमेतदनुवादभूतमर्थस्येति । एवं चेदनुवादकतया तस्यार्थस्य तद्वाक्यं बाधकमेवेति पूर्ववाचकशक्तिज्ञानं, नायथार्थमिति मन्यते, यदि परं मया प्रागनुमानपुरःसरोऽर्थनिश्चयोऽस्येति नावगतं, याऽपि चेयमस्यानिश्चिते अन्वये विशिष्टवक्तृज्ञानानुमा, साऽपि पदानां स्वरूपमात्रावगमादेव नोपपद्यते, किंतु विशेषावगमात् । न च शक्तेरन्यः पदानां विशेषोऽवगम्यते । ततो नैव अनेनापि अमीषां पदानां वाचकशक्तिरवधारिता, तेन विशिष्टान्वयवाचकपदप्रयोगात् तद्विषयं वक्तुः पूर्वज्ञानमनुमितवान् । इति गम्भीरोऽयं नीतिमहाह्रदः ।

**अत्र केचिदाचक्षते**— भवतु पदानां पदार्थेषु शक्तिज्ञानं, तथाप्यन्विताभिधानं न सिध्यतीति । तथाहि, प्रतियोगिनामनन्ततया अन्वयानन्त्यात्, तदानन्त्ये चान्वितानामप्यानन्त्यात् संबन्धग्रहणं दुष्करम् । अगृहीतसंबन्धस्य च पदस्य न वाचकत्वं, एकस्माच्छब्दात् सर्वार्थप्रतीतिप्रसङ्गात् । सामान्यान्वयाभिधानं च नाशङ्कनीयमेव, वाक्येभ्यो विशेषान्वयावगमात् । स्वरूपमात्राभिधानेनापि च वाक्यार्थप्रतिपत्तौ अन्विताभिधानाश्रयणे शक्तिकल्पनागौरवात् । तथा पदेन अन्वितस्वार्थोऽभिधीयमानः किमभिहितेन पदार्थान्तरेण अन्वितोऽभिधीयते ? उतानभिहितेनेति विकल्पनीयम् । अनभिहितेन चेत् पदार्थान्तरप्रयोगवैयर्थ्यं, एकस्मात् पदार्थाच्च सर्वार्थप्रतीतिप्रसङ्गः । अभिहितेन चेत्, तदपि तर्हि पदं अन्विताभिधायितया पदार्थान्तरोत्थमर्थाभिधानमपेक्षते, इतीतरेतराश्रयं प्राप्नोति । तस्मात् पदान्तराभिधानानपेक्षस्वरूपमात्राभिधानमेवार्थानां पदैः क्रियते । ते च तथाभूताः पदैरर्था अभिहिता आकाङ्क्षासंनिधियोग्यतावन्तो वाक्यार्थमवगमयन्ति । न तेषां संबन्धग्रहणापेक्षा शङ्कनीया । यतः पदधर्मोऽयं, नायमर्थधर्मः । तदाह **भाष्यकारः**– ' पदानि हि स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि, अथेदानीं पदार्था अभिहिताः सन्तो वाक्यार्थमवगमयन्ति ' ( १।१।७।२५ पृ. ९६ ) इति, तदेतन्निराकर्तुमुपक्रमते—' **ओप्यन्ते चोद्ध्रियन्ते च स्वार्था अन्वयशालिनः । अन्वितेष्वेव सामर्थ्यं पदानां तेन गद्यते** ॥ ' **अत्राह**, सत्यमन्वितपदार्थविषयावेव आवापोद्धारौ, तथाप्यन्विताभिधानमशक्यम् । पारंपर्येणापि तदुत्पत्तेः । तथाहि, पदैरनन्वितोऽभिहितोऽर्थः अन्वितप्रतिपत्तेर्निमित्तं भवतीति पदानां पारंपर्येणान्वितेष्वपि हेतुत्वम् । तदाहुर्वार्तिककारपादाः— ' न विमुञ्चति सामर्थ्यं वाक्यार्थोऽपि पदानि नः । तन्मात्रावस्थितेष्वेषु पदार्थेभ्यः स गम्यते ॥ ' इति ( वाक्या-

षिकरणे श्लोवा. २२९ ) पदार्थप्रतिपादनं च वाक्यार्थप्रतिपत्तये प्रयुक्तानां पदानामवान्तरव्यापारः, इति च तेषामेव व्यवहारः 'वाक्यार्थमितये तेषां प्रयुक्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदानां प्रतिपादनम् '॥ ( ३४३ ) इति ।

एतामाशङ्कामुपेक्ष्यैव तावत् दोषान्तरं परिहरति– '**आकाङ्क्षासंनिधिप्राप्तयोग्यार्थान्तरसंगतान् । स्वार्थानाहुः पदानीति व्युत्पत्तिः संश्रिता मया ॥ आनन्त्यव्यभिचाराभ्यां तथा दोषो न कश्चन ॥** ' यत्तावदुक्तं, आनन्त्याच्छब्दशक्त्यवधारणानुपपत्तिः, अगृहीतशक्तेश्च वाचकत्वे व्यभिचारप्रसङ्ग इति । तदनुपपन्नम् । उपलक्षणाश्रयणेनाऽपि संबन्धबोधसौकर्यात् । आकाङ्क्षितेन योग्येन संनिहितेन चान्वितं स्वार्थं पदं वक्ति इति व्युत्पत्तिराश्रीयते । तेन '**यद्यदाकाङ्क्षितं योग्यं संनिधानं प्रपद्यते । तदन्वितः पदेनार्थः स्वकीयः प्रतिपाद्यते ॥** ' उक्तार्थः श्लोकः । का पुनरियमाकाङ्क्षा ? प्रतिपत्तुर्जिज्ञासा । किंनिबन्धना पुनरसौ ? अविनाभावनिबन्धनेति **केचित्** । क्रिया हि कारकाविनाभाविनीति तां प्रतीत्य कारकं जिज्ञासते । एवं कारकमपि बुद्ध्वा क्रियामिति । तदयुक्तमिति मन्यन्ते । जिज्ञासा तथा । तदीयजनकतत्क्रियातत्कारकान्तरादिजिज्ञासाऽप्यापाद्यते । अथ प्रयोजनाभावात् कारकातिरिक्तमन्यन्न जिज्ञास्यते, तर्हि क्रियामात्रावगमेऽपि यत्र कारकज्ञानेन प्रयोजनं नास्ति, तत्र जिज्ञासा न स्यात् । अनुष्ठेयतया हि क्रियायामवगतायां कारकमन्तरेण तदनुष्ठानानुपपत्तेः कारकज्ञानं प्रयोजनवत् । वर्तमानापदेशादौ त्वननुष्ठेयतया नास्ति कारकज्ञानेन प्रयोजनम् । अथ च तत्रापि वाक्यमपरिपूर्णं मन्यन्ते, साकाङ्क्षार्थाभिधायितया चापरिपूर्णता, अत एव च तत्राध्याहारमपि कुर्वन्ति । यत्रापि चानुष्ठेयक्रियाऽवगमः, तत्रापि न निःशेषकारकजिज्ञासा स्यात् । तथा, देवदत्त गामानयेति करणाननुवादान्नापरिपूर्णता स्यात् । अथैककारकज्ञानेनापि तावदनुष्ठानोपपत्तेर्न कारकान्तरजिज्ञासा, तर्हि 'देवदत्त गामानय दण्डेन' इति प्रयुक्तेऽपि दण्डशब्दे तदाकाङ्क्षा न स्यात् । ततश्चानाकाङ्क्षितत्वात् तस्य तदन्वयो न स्यात् वाक्यार्थे । अथ दण्डपदोच्चारणात् तत्राकाङ्क्षा परिकल्प्यते, अपदार्थस्यानन्वये तत्पदोच्चारणमनर्थकं स्यादिति, **एवमपि** 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इत्यनन्वयप्रसङ्गः । नहि वेदपदोच्चारणेनानर्थकेन भवितव्यमिति किं चन प्रमाणमस्ति । अतो न तत्राकाङ्क्षोदये किं चित् कारणमस्तीति सोमं क्रीणातीत्यतोऽधिकस्यानन्वितता स्यात् । अपि च लौकिकत्वात् क्रियाकारकयोर्यत्किंचित्क्रियाकारकोपादानेऽपि तत्सिद्धेरपि विघातान्नातीव विशेषजिज्ञासा घटते । अज्ञाते हि ज्ञानेच्छा घटते, न पुनर्ज्ञातेऽपि । **अत्रोच्यते,** अभिधानापर्यवसानमभिधेयापर्यवसानं च जिज्ञासोदयनिबन्धनम् । एकपदप्रयोगे हि द्वारमित्यभिधानमेव न पर्यवस्यति । नह्यनुच्चरिते प्रतियोगिसंनिधायिनि पदे अन्विताभिधानं शक्यते । वृद्धव्यवहारवशेन अन्वितार्थप्रतिपादनपरता पदानामवधारितेति तदर्थं युक्तैव प्रतियोगिजिज्ञासा । यस्याप्यभिहितान्वयः इति राद्धान्तः, तन्मतेऽपि पदार्थस्य पदार्थान्तरेणान्वयासामर्थ्यात् तदुपपत्तये युक्तैव प्रतिज्ञा सा । तस्यां च सत्यामपरिपूर्णवाक्यपरिपूरकतया लोके व्यवहारस्य विहितत्वात् प्रकरणादिवशेन योग्यप्रतियोग्यध्याहारः क्रियते । 'अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्ति ' इत्यादिषु अनेकपदप्रयोगात् अन्विताभिधानेऽप्यभिहितस्य कार्यस्यापूर्वात्मनः अनुष्ठानं विना कार्यत्वानुपपत्तेः । कर्त्रा च विना तदसंभवात्, अधिकाराहते च तदयोगात्, नियोज्यमन्तरेण च तस्यानवकल्पनात्, तदुपपत्तये युक्तैव नियोज्यजिज्ञासा । तस्यां सत्यामपरिपूर्णत्वावगमात् लोकवदध्याहारे कर्तव्ये अन्तरङ्गत्वे परिधेरनुष्ठानाक्षेपो मा कल्पिष्यतेति तत्परित्यागेन काम्यनियोज्यविशेषणे स्थिते सर्वकामिपुरुषव्यापिस्वर्गस्यैव नियोज्यविशेषणत्वयोग्यत्वात् स्वर्गकामो नियोज्योऽध्याह्रियते । तथा चाध्ययनविधौ अन्यप्रयुक्तानुष्ठाननिर्वाहिकार्यभावे नियोज्यो नाध्याह्रियते । अयौगिकत्वाच्चापूर्वे कार्ये नियोज्यत्वस्याध्याहारमन्तरेणाकाङ्क्षा निवर्तते। अलौकिकत्वादेव च, 'सौर्यं चरुं निर्वपेद् ब्रह्मवर्चसकामः' इत्यादौ करणोपकारमन्तरेण विधेः सिद्ध्यसंभवात् तज्जिज्ञासा, तज्जनकपदार्थजिज्ञासा च । अत एव तदभावे भाष्यकारो वाक्यानां न्यूनतामाशङ्क्य परिहृतवान् ।

**ननु** एवं तर्हि यत्र पदत्रयं प्रयुज्यते, 'गामानय शुक्लां' इति लोके, तत्र हि कारकद्वयस्यासंभवान्नाकाङ्क्षा-ऽस्तीति कथमन्विताभिधानं, गामानयेत्येतावतैव परि-पूर्णत्वाद्वाक्यस्य । **सत्यम्** । पदान्तरानुच्चारणे एवम् । उच्चरिते तु तस्मिन् तस्याप्यानयतिसंनिधानादेकवाक्यस्या-वगमात् आनयत्यन्वितस्वार्थाभिधायित्वात् आकाङ्क्षां विना च तदसंभवादानयतेराकाङ्क्षा परिकल्प्यते । तथा चोक्तं भाष्यकारेण ' भवति च रक्तं प्रति आकाङ्क्षा ' इति । तेनात्रान्विताभिधानसिद्ध्यर्थमेवाकाङ्क्षा । यदि परमयं विशेषो, द्वारमित्यादौ तस्यैव पदस्यान्विताभिधा-नायाकाङ्क्षा, ' गामानय शुक्लां ' इति तु पदार्थान्तर-स्येति । **' अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा । प्रतियोगिनि जिज्ञासा या साऽऽकाङ्क्षेति गीयते ॥ '** इति संग्रहश्लोकः ।

सा चेयमाकाङ्क्षा भवन्ती व्युत्पत्तौ उपलक्षणमाश्रीयते । किमिति पुनः संनिधियोग्यत्वे एव नाश्रीयते ? साकाङ्क्षे-णान्विताभिधानादर्शनात् । ' अयमेति पुत्रो राज्ञः पुरुषोऽ-यमपनीयतां ' इति पुत्रपदसंबन्धनिराकाङ्क्षो राजा, न पुरु-षेणान्वीयते । **कस्मात्** पुनरनयोः पुत्रपुरुषयोः संनिधि-योग्यत्वाविशेषेऽपि पुत्रेणैव राज्ञः संबन्धो, न पुरुषेण । **उच्यते** । न्यायसापेक्षत्वात् वाक्यस्यार्थप्रतिपत्तेः नित्यसापे-क्षेण पुत्रेणैव राजा संबध्यते, तत्संबन्धिनिराकाङ्क्षश्च न पुरुषसंबन्धमनुभवतीति । आकाङ्क्षाऽपि व्युत्पत्त्युपलक्षण-माश्रीयते **' परिपूर्णेन योग्यस्य समीपस्थाप्यनन्वयः । व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाऽप्युपलक्षणम् ॥'** इति संग्रहः ।

सा चेयमाकाङ्क्षा प्रतियोगिषु सर्वेषु न सहसैवोप-जायते, किंतु कारणोपनिपातक्रमेण । तथाहि, विषयमन्त-रेणापूर्वं कार्यं प्रत्येतुमेव न शक्यते, इति प्रतिपत्त्यनु-बन्धभूतविषयापेक्षा प्रथमं विधेः । अथ प्रतिपन्ने विषय-संबन्धिनि विध्यर्थे नियोज्यमन्तरेण तसिद्ध्यसंभवान्नि-योज्याकाङ्क्षा । तथा विषयीभूते च भावार्थे करणलब्धे वैकृतापूर्वाणां करणोपकाराकाङ्क्षा । लब्धे च तस्मिंस्तज्जनकपदार्थकाङ्क्षेति । तथा चाहुः– 'प्रतियो-गिषु सर्वेषु नाकाङ्क्षोदेति तत्क्षणात् । कारणोपरिपातानु-पूर्व्येण तु यथायथम् ॥' तत्क्रमेणान्विताभिधानमपि क्रमेणैव । श्लोकश्च भवति– ' जिज्ञासा जायते येषु, संनिधिस्तु यथायथा । तथात्वैव शब्दानामन्वितार्था-भिधायिता ॥' अथ यथा संनिधिकथनं, तथा बुद्धौ विपरिवृत्तिः । सा च न शब्दनिबन्धनैव केवलान्विताभि-धानव्युत्पत्तौ उपलक्षणं, अध्याहृतेनापि लोके अन्विताभि-धानदर्शनात् । न च वाच्यं शब्द एवाध्याह्रियते स चार्थमुपकल्पयतीति, अनुपयोगादप्रमाणकत्वाच्च । यद्यप्य-र्थापत्तिप्रमाणकोऽध्याहारः, तथापि शब्दकल्पनमनुप-पन्नम् । येन हि विनाऽनुपपत्तिः, तदेवार्थापत्तिप्रमे-यम् । न चार्थानां शब्दमन्तरेणानुपपत्तिः । **स्यान्मतम्** । अर्थकल्पनायैवार्थापत्तिः प्रवर्तमाना तस्यार्थस्य सविकल्प-कज्ञानवेद्यत्वात्, सविकल्पकज्ञानानां च शब्दपुरःसर-त्वात्, पुरोवर्तिनि शब्दे एव पर्यवस्यतीति । **तदसत्** । यथैव शब्दपुरःसरेऽपि सविकल्पकज्ञाने लिङ्गस्येन्द्रि-याणां च निर्विकल्पकदशायामर्थे एवावधारितशक्तित्वान्न शब्दमात्रे पर्यवसानं, तथा दृष्टार्थापत्तौ साक्षादनुपपादके-ऽर्थे एवार्थापत्तेः प्रामाण्याभ्युपगमात्, श्रुतार्थापत्तावपि तत्रैव तस्याः प्रामाण्यं युक्तं, न शब्दे, तस्य साक्षादनु-पपत्तिशमनासमर्थत्वात् । किंच सर्वत्र सविकल्पकज्ञाने शब्दस्मरणविपरिवर्ति न प्रमेयतां प्रतिपत्तुमर्हति । सवि-कल्पकज्ञानेषु पूर्वप्रतीयमानता च शब्दस्य नातीव प्रमाण-वती, किंत्वर्थप्रतीतावेव । समानकालं शब्दस्मरणमिति प्रतीत्यारूढं, तेन श्रुतार्थापत्तिः शब्दविषया । न च शब्दानुपपत्त्या शब्दकल्पनैवोचिता, तस्य स्वतोऽनुप-पत्त्यभावात् । अन्विताभिधानानुपपत्त्या तु कल्पना प्रसरन्ती योग्यप्रतियोग्यर्थविषयैवावतिष्ठते, तस्यैवाकाङ्क्षितत्वात् दशमाद्यन्यायेन पदार्थवत् पूर्वप्रतीतस्यापि शब्दस्योपे-क्षणीयत्वात् । न च द्वारमिति यत्राध्याहारः, तत्राप्या-व्रियतां संव्रियतामिति वा कल्पयितुमर्थापत्तेः प्रभविष्णुता, सामान्यकल्पनामात्रहेतुत्वात् । तस्मादपरिपूर्णपरिपूरक-तया लोकतः एवाध्याहारस्याऽप्युपपत्तिः । तत्र योग्य-तया प्रकरणादिवशेन च विशेषावधारणादर्थः एव च परिपूरकः इत्यनुपयोगी शब्दस्याध्याहारः । अतो विश्व-जिदादौ नियोज्येन च, सर्वत्र च करणोपकारेण, विकृतिषु

च प्रकृतपदार्थैः अशब्दोपस्थापितैरपि सिद्धमन्विताभिधानम्। आकाङ्क्षावच्च संनिधावपि संनिधापकक्रमेणैव क्रमो वेदितव्यः। तदनुसारेण चान्विताभिधानमपि तथैवेति। '**संनिधिः शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम्। अध्याहृतेनाप्यर्थेन लोके संबन्धदर्शनात्॥ सहसैव न सर्वेषां संनिधिप्रतियोगिनाम्। संनिधापकसामग्रीक्रमेण क्रमवानसौ॥ यथायथा संनिधानं जायते प्रतियोगिनाम्। तथातथा क्रमेणैव शब्दैरन्वितबोधनम्॥**' इति संग्रहश्लोकाः। तौ यथोक्तौ आकाङ्क्षासंनिधी प्राप्तमाकाङ्क्षितं संनिहितं योग्यं च यत् पदार्थान्तरं, तेन संगतमित्यर्थः।

किं पुनरिदं योग्यत्वं नाम? यत् संबन्धार्हत्वम्। संबन्धार्हमिति कथमवगम्यते? संबन्धित्वेन दृष्टत्वात्। नन्वेवं तर्हि कथमपूर्वे कार्येऽन्विताभिधानं वेदे, तेन सह कस्य चित् संबन्धादर्शनात्। उच्यते। सामान्यतो योग्यताऽवधारणं विशेषप्रतिपत्तौ उपाय इत्यदोषः। यदपि तदपूर्वं, तदपि कार्यमेवेति दृष्टचरकार्यसंबन्धं यत्, तत् योग्यमित्यवसीयते। '**सामान्येनैव योग्यत्वं लोके यदवधारितम्। तदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम्॥' अन्ये तु** यदयोग्यतया नावधारितं तत् योग्यं, तेन प्रमाणान्तराप्रतीतेनापि विध्यर्थेनान्विताभिधानं सिध्यतीत्याहुः। **तदिदमसारम्**। यथा प्रमाणान्तरावेद्ये वस्तुनि कस्य चित् योग्यताऽवधारयितुं न शक्यते, तथैवायोग्यताऽपीति सर्वस्य सर्वेण प्रकारेण तस्मिन्नन्वयः स्यात्। भावार्थस्यैव विषयत्वेनान्वयोऽनुपादेयविशेषणविशिष्टस्यैव नियोज्यतया अन्वयः इति नियमो नोपपद्यते इत्यलमतिप्रसङ्गेन। नन्वन्विताभिधानपक्षे व्युत्पत्तौ उपलक्षणाश्रयणमेव गौरवमित्यत्राह— '**पदार्थेष्वपि चैवैषा सामग्र्यन्वयबोधिनी॥**' यस्यापि मते पदार्था एवाऽन्योन्यान्वयमवगमयन्ति, तेनापि प्रतिनियतान्वयबोधसिद्ध्यर्थमिदमाश्रयणीयमेव 'आकाङ्क्षासंनिधियोग्यतावन्तः एव पदार्था अन्वयं बोधयन्ति, नान्ये' इति। एतदेव **कथमिति पर्यनुयुक्तेन वृद्धव्यवहारे तथा दर्शनादिति परिहारो वाच्यः। तस्मादुभयपक्षसाधारणत्वान्नेदं दूषणम्।**

नन्वेवमपि केन विशेषेणाभिहितान्वयं परित्यज्यान्विताभिधानमाश्रितमिति। अत्राहुः— '**किंतु तेषामदृष्टैषा शक्तिर्मानान्तरोद्गतौ। कल्प्या विशिष्टार्थपरपदसंस्पर्शभाविता॥**' पदार्थानां हि शब्दादन्यतः प्रमाणात् प्रतीयमानानां अन्योन्यान्वयबोधकत्वं न प्रतीतमिति शब्दाभिधेयानां तदवगमशक्तिः कल्पयितव्या। तस्याश्चोत्पत्तौ शब्दसंस्पर्श एव हेतुरित्याश्रयणीयम्। शब्दो हि विशिष्टार्थप्रतिपत्तिपरतया लोकव्यवहारेषु प्रयुज्यमानो दृष्टः। न चासौ साक्षाद्वाक्यार्थप्रतिपादने समर्थः, इति पदार्थान् अवान्तरव्यापारीकरोति। ते च यदि अन्योन्यान्वयबोधने समर्थाः स्युः, तदा तेषामवान्तरव्यापारता स्यात् नान्यथा, इति विशिष्टार्थावबोधपरशब्दसंस्पर्शादेव तेषामेषा शक्तिराविर्भवतीति शब्दस्यापि पदार्थशक्त्याधानशक्तिराश्रयणीया। **स्यादेवं**, यदि मानान्तरावसेयानां पदार्थानामन्योन्यान्वयावगमे सामर्थ्यं न स्यादिति। अस्ति तु श्वैत्यस्यानवधारिताश्रयविशेषस्य प्रत्यक्षदृष्टस्याश्वस्य अप्रतिपन्नगुणविशेषस्य च प्रत्यक्षह्रेषाशब्दानुमितस्य पदनिक्षेपशब्दानुमितस्य चाज्ञातकर्तृभेदस्य धावनस्य श्वेतोऽश्वो धावतीत्यन्वयबोधकत्वदर्शनात्। तदाहुर्वार्तिककारपादाः '**पश्यतः** श्वेतमारूपं ह्रेषाशब्दं च शृण्वतः। खुरनिष्पेषशब्दं च श्वेतोऽश्वो धावतीति धीः॥ दृष्टा वाक्यविनिर्मुक्ता' इति (श्लोवा. वाक्याधिकरणे ३५८–५९)। आरूपं अव्यक्तरूपमित्यर्थः। तेन गुणिविशेषो न प्रत्यक्षमवसीयते इत्यर्थः। **अत्रोच्यते**— किं येनैव पुरुषेण श्वैत्यसमानाश्रयौ ह्रेषाध्वनिपदनिक्षेपशब्दौ अवगतौ, तस्यैवेयं श्वेतोऽश्वो धावतीति धीः, उत यस्यापादानानध्यवसायः, तस्यापीति? किमतः। यदि तावदप्रत्याकलितह्रेषाध्वनिपदविहारनिर्घोषाः न स्युरित्युच्यते, तदा प्रतीतिविरोधः। स ह्येवं प्रतिपाद्यते, भवितव्यमस्मिन् देशे नूनमश्वेन, भवितव्यं च केन चिद्धावतेति। अथाश्वसंबन्धिनमेव खुरपुटटङ्काररवमभ्यासवशादवैति, तदाऽसौ अश्ववर्तिनीमेव वेगवतीं गतिमनुमिनोतीति। न पुनः केवलामेवावगम्य तस्याश्चान्वयः पदार्थसामर्थ्येन अवबुध्यते। योऽपि तस्मिन्देशे नास्त्यन्योऽश्वादिति निश्चित्य पारिशेष्यादपादानाध्यवसायेऽपि ह्रेषाध्वनेः श्वैत्यसमाना-

धिकरणमश्वत्वमप्यध्यवस्यति, तस्यापि गृहाभावे इव बहिर्भावावगतौ अर्थापत्तिः 'योऽयं श्वेतः, स एषोऽश्वः' इत्यत्र प्रमाणम् । यस्तु श्वैत्यसमानाधिकरणौ हेषाध्वनिखुरपुटटङ्कारौ अध्यवस्यति, तस्याप्यश्वत्वे वेगवति च गमने श्वेतवर्तिन्येवानुमानं, न स्वतन्त्रयोरिति प्रमाणान्तरेणासंबद्धावभातानां पदार्थानां क्व चिदन्योन्यसंबन्धबोधकत्वमनुमानार्थापत्तिव्यतिरेकेण प्रतीतम् । अपि च यदि पदार्थावगतिमात्रादेवान्वयावगमः, तदा कस्मिन् प्रमाणे कस्यान्तर्भावः इति वाच्यम् । न तावच्छाब्दे, शब्दाभावात् । पदार्थाभिधानावान्तरव्यापारेण हि यच्छब्दादन्यज्ज्ञानं तत् शाब्दमित्येष वो राद्धान्तः । कस्मान्नास्य शाब्देऽन्तर्भावः । प्रमाणान्तराभ्युपगमे तु शाब्दस्योच्छेदः । शब्दावगतपदार्थविषयेऽपि तस्यैव प्रामाण्यप्रसङ्गात् । तस्माच्छब्दाभिहितानां पदार्थानामन्यत्रादृष्टार्थे वाक्यार्थबोधनसामर्थ्यं कल्पयितव्यम् । तदाधानशक्तिश्च शब्दानामपीति कल्पनालाघवाच्छब्दानामेवान्वितस्वार्थाववोधनशक्तिमात्रं कल्पयितुं न्याय्यम् । तेन पारंपर्येण पदानामन्वितेषु सामर्थ्यमिति निरस्तम् ।

**ननु** अनन्तप्रतियोग्यन्वितस्वार्थबोधनविषया अनन्ता एव शब्दस्य शक्तयः कल्पयितव्याः स्युः । अभिहितान्वयवादे त्वेकस्मिन् अर्थे एकस्य शब्दस्यैकैव शक्तिरिति । **तन्न** । एकयैव आकाङ्क्षितसंनिहितयोग्यान्वितस्वार्थाभिधानशक्त्या प्रतियोगिभेदेन कार्यभेदोपपत्तेश्चक्षुरादीनामिव । यथैव एकया दर्शनशक्त्या चक्षुर्घटादिप्रतियोगिसहायभेदात् ज्ञानानि भिन्नानि जनयति, तथा शब्दोऽपि प्रतियोगिभेदादिति मन्तव्यम् । किंच पदार्थेष्वपि तुल्यमेतदिति न किंचिदेतत् । **अन्ये** त्वाहुः—आकाङ्क्षासंनिधियोग्यतावन्तः पदार्था वाक्यार्थीभवन्ति, न पुनर्वाक्यार्थमेव बोधयन्तीति, **तदिदमतिमन्दम्** । वाक्यार्थावगतेः कारणाभावप्रसङ्गात् । अनुपायत्वे हि पदानामन्वयप्रतीतौ पदार्था अपि चेन्न कारणं, अकारणिकैवापद्यते । **स्यान्मतम्** । क्रियापदेन कारकपदेन वा साकाङ्क्षेऽर्थेऽभिहिते यदेव पदान्तरेण योग्यप्रतियोगिपदार्थान्तरं संनिधाप्यते, तदेव तस्य संबन्धित्वेनावतिष्ठते इति । **सत्यमेवम्** । अवगतिस्तु तत्संबन्धस्य किंनिबन्धनेति वाच्यम् । अथ पूर्वपदार्थे साकाङ्क्षे यत् पदान्तरमुच्चारितं, तत् संबन्धितयैव स्वार्थमुपनयति प्रत्ययवत् । यथा प्रकृत्यर्थे पूर्ववर्तिनि प्रत्ययः उच्चार्यमाणः स्वार्थं तद्विशिष्टमेवाभिधत्ते, तथा पदान्तरमपि । तदुक्तं, 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति । प्रकृतिः स्वार्थं प्रत्ययार्थविशेषणत्वेनोपनयतीति प्रत्ययेन सह तदर्थमाहेत्यर्थः । स चोक्तसिद्ध्यर्थे विशिष्टे एवार्थे प्रत्ययो यत् प्रयुज्यते तत् पूर्वतरविज्ञातप्रकृत्यर्थविशेषणादिति, अङ्गीकृतं तर्हि द्वितीयस्य पदस्यान्विताभिधानम् । प्रथमस्य तथापि नास्तीति चेन्न, वाक्ये पदानां प्रयोगक्रमनियमाभावात् । यदेव कदा चित् प्रथमं, तदेव कदा चित् द्वितीयमिति सर्वपदानामेवान्विताभिधानमापतितम् । अभिहितान्वयवादी च प्रकृतिप्रत्यययोरपि अन्वयव्यतिरेकावधारितव्यतिरिक्तशक्तिकयोरभिहितान्वयमेव पदवदिच्छति । तथा च 'प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत् । भेदेनैवाभिधानेऽपि प्राधान्येन तथोच्यते ॥ पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्य चित् ॥' इत्याह । किंच प्रत्ययश्चेदन्विताभिधायी, तद्वा तद्विशेषात् पदानामप्यन्विताभिधायिता किमिति नाभ्युपेयते । किमर्धवैशसेन । **यदि** प्रकृतिप्रत्यययोरप्यन्विताभिधानमस्ति, न तर्हि द्वारमित्यत्रान्विताभिधानानुपपत्तिनिबन्धनाकाङ्क्षया विव्रियतां संव्रियतां वेत्यध्याहारः । **उच्यते** । द्वारमिति प्रथमेयं प्रातिपदिकादतिरिक्तार्थाभिधायिनी । तेनात्र केन सहेत्यस्यान्वितस्याभिधानम् । व्यतिरिक्तार्थे प्रत्यये प्रविशेत्यादौ योऽध्याहारः, सोऽभिहितार्थानुपपत्त्यैव विश्वजिदादिवदिति न दोषः । वार्तिककारपादास्तु **लाक्षणिकत्वं** सर्ववाक्यार्थानिच्छन्तः पदार्थानामन्वयावबोधशक्तिकल्पनां निराकुर्वन्तः अनन्वितावस्थो हि पदार्थोऽभिहितः अन्वितावस्थां स्वसंबन्धिनीं लक्षयति । अवस्थावतो हि संबन्धादवस्थावत्यभिहिते भवत्येवावस्थाऽङ्गेऽपि बुद्धिस्था । सर्वत्र च संबन्धिनि दृष्टे संबन्ध्यन्तरे बुद्धिर्भवतीति **लक्षणैव** । तेन नास्ति पदार्थानामन्वितबोधने **शक्तिकल्पनेति** । तदाहुः 'वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैव हि लक्ष्यते'

इति । **अत्रापरे ब्रुवते** । नेयं लक्षणा, स्वार्थापरित्यागात् । स्वार्थपरित्यागेन हि गङ्गाऽऽदिषु लक्षणा दृष्टेति । ते तु मीमांसातन्त्रान्तःपातवैकल्येनैवमाहुः । लक्षणीयवशेन हि क चित् स्वार्थस्य त्यागः संग्रहो वा । 'सृष्टीरुपदधाति' इति लक्षणस्यापि स्वीकारः गुणिनां लक्ष्यमाणत्वात् तदन्तर्गतत्वाच्च सृष्ट्यर्थस्य । तथा 'पौर्णमासीं यजते' इत्येकवचनानुपपत्त्या पौर्णमासीशब्दो यागवचनो यागसमुदायलक्षणार्थः । न च समुदायपरिग्रहे समुदायित्यागः, तदाश्रयत्वात् तस्य । तथेतरेतरद्वन्द्वे द्विवचनबहुवचनानुपपत्तेरर्थान्तरसहितावस्थालक्षणा आश्रीयते । न चावस्थावत्परित्यागः । तथा निषादस्थपत्यधिकरणपूर्वपक्षे षष्ठ्यर्थलक्षणा स्यादित्युच्यते, न तत्र प्रकृत्यर्थस्य त्यागोऽप्यापद्यते । तथा रथघोषेणेत्यत्र रथस्यापरित्यागः । तथा मेधमित्येकवचनान्तस्य गणलक्षणया मन्त्रस्य प्रकृतौ निवेशः । न च गणिनोरग्नीषोमयोस्तत्र हानमिति सर्वार्थापरित्यागेऽपि युक्तैव लक्षणा । **अत्रोच्यते** । कथं पुनरियं लक्षणा । '**वाच्यस्यार्थस्य वाक्यार्थे संबन्धानुपपत्तितः । तत्संबन्धवशप्राप्तस्यान्वयाल्लक्षणोच्यते** ॥' इत्युत्तरश्लोकः । 'गङ्गायां घोषः' इत्यादिषु श्रौतस्य गङ्गाऽर्थस्य वाक्यार्थेऽन्वयासंभवात् तं परित्यज्य तत्संबन्धात् लब्धबुद्धिसंनिधेः कूलस्य वाक्यार्थान्वयिता अध्यवसीयते । अत एवाहुः— 'अनुपपत्त्या संबन्धेन च लक्षणा भवति' इति । इह च गामानयेत्यादौ न श्रौतस्यार्थस्यान्वयायोग्यत्वं, नापि अन्वितावस्थस्यानयनसंबन्धाङ्गता, अन्वितार्थस्यान्वयान्तरासंभवात् । अथ मा भूदेषा लक्षणा, किंतु क्रिया अवगता कारकान्वयिनीमात्मनो दशामवगमयति अविनाभावादिति । उच्यते । शाब्दत्वं तावदित्थमपह्नुतमन्वयावगमस्य, किंतु सामान्यतोदृष्टानुमानगोचरता अभ्युपगता भवति । तथा विशिष्टान्वयावगतिः अनुपपद्यमाना निर्मूलमापद्यते । अथ विशेषान्वयं विना व्यवहारानवकल्पनादनर्थकं शब्दोच्चारणमिति तदाश्रयणं, एवमपि प्रेक्षापूर्वकारिणां स्वार्थकवाक्यमात्रप्रयोगिणां वचनात् विशेषान्वयावगमः । वेदे त्वानर्थक्येन न भवितव्यमिति प्रमाणाभावान्न शक्यते विशेषोऽवगन्तुम् । न च लोकेऽप्यानर्थक्यमापद्यते इत्येतावता कारणेन उपायाद्विनापि विशेषान्वयाध्यवसानं युक्तम् । नहि दग्धुकामस्य उदकोपादानमनर्थकमिति जलस्य दाहशक्तिराविर्भवति । काममानर्थक्यं, न पुनः सामान्यतोदृष्टस्य विशेषावसायिता । अथ आकाङ्क्षितसंनिहितयोग्यान्वयपरता वृद्धव्यवहारे पदानामवगतेति व्युत्पत्त्यनुसारेण विशेषान्वयावगमः । **तन्न** । तत्र वृद्धव्यवहारे एव तत्परता पदानां वा पदार्थानां वा उपायभावेन कथं नाम निर्वहति । चिन्ता सा हि पदानां वा पदार्थानां वा शक्तिकल्पनां विना अर्थान्तरव्यापारीकरोति । सा च पदानामेवेत्याह— '**प्राथम्यादभिधातृत्वात् तात्पर्यावगमादपि । पदानामेव सा शक्तिर्वरमभ्युपगम्यताम्** ॥' प्रथमभावीनि पदान्यतिलङ्घ्य नार्थेषु वाक्यार्थबोधनशक्तिराश्रयितुं युक्ता । किंच, पदानि तावदभिधायकानीति निर्विवादम् । तेन तेषामभिधानशक्तिः संप्रतिपन्नैवेति तस्या एवान्वयपर्यन्तता कल्पयितुं सुकरा । पदार्थानां तु बोधनशक्तिरेव कल्प्या । तेन धर्मिकल्पनातो वरं धर्मकल्पना इत्यन्विताभिधानशक्तिः पदानामेव कल्पयितुमुचिता । किंच पदानि अभिधायकानीष्यन्ते, तत्र यदि स्वरूपमात्रविषयामेव पदार्थबुद्धिमादध्युः, तदाऽप्यभिधायकता हीयेत, तस्या बुद्धेः संबन्धग्रहणसमयजातपदार्थबोधकसंस्कारोन्मेषप्रभवत्वात् । अवश्यं हि संबन्धस्मरणसिद्ध्यर्थं संबन्धिभूतार्थस्मरणसंस्कारोद्बोधोऽङ्गीकरणीयः । तस्मात् संबन्धग्रहणसमयानधिगतान्वितार्थप्रतिपादनाभ्युपगमे एव शब्दानामभिधायकतेति तामङ्गीकुर्वता पदानामन्विताभिधायकता आश्रयणीया । **यस्तु** 'पदमभ्यधिकाभावात् स्मारकान्न विशिष्यते इति, तदा भावनावचनस्तद्वत् तां स्मारयति । लोकवदिति च आचार्यवचनदर्शनात् स्मारकतामेव पदानामभिधाकयत्वमाह' तं प्रत्याह । **तात्पर्यावगमादपीति** । येनापि वादिना पदानां स्मारकत्वमेव पदार्थेष्वङ्गीकरणीयं, सोऽपि वाक्यार्थप्रतिपत्तिपरतां पदानामभ्युपैत्येव, अन्यथा वाक्यार्थस्याशाब्दत्वप्रसङ्गः । एवं चेत् पदानामेव साक्षाद्वाक्यार्थबोधनशक्तिरस्तु, किं परस्पराश्रयप्रपञ्चात् । तेन पदार्थेषु पदानां स्मारकत्वातिरिक्तं येऽभिधायकत्वमाहुः, तेषां शक्तित्रयकल्पना । एका तावत्

पदानामभिधायकशक्तिः, अपरा च पदार्थगता अन्वयबोधनशक्त्याधानशक्तिः, पदार्थानां चान्वयज्ञापनशक्तिरिति। स्मारकत्ववादिनस्त्वभिधानशक्तिं हित्वा शक्तिकल्पनालाघवादुक्तेनैव न्यायेन पदानामेव शक्तिकल्पना न्याय्या।

उचितत्वादन्विताभिधायीनि पदानीति स्थापितम्। संप्रति पूर्वोक्तमितरेतराश्रयदोषं परिहर्तुं यथा पदेभ्यो वाक्यार्थप्रतिपत्तिस्तथा दर्शयति– **'पदजातं श्रुतं सर्वं स्मारितानन्विवितार्थकम्। न्यायसंपादितव्यक्ति पश्चाद्वाक्यार्थबोधकम्॥'** यस्तावदगृहीतसंबन्धः, यस्य च संबन्धग्रहणसंस्कारो नोत्पन्नः प्रध्वस्तो वा, स वाक्यार्थप्रतिपत्तौ नाधिक्रियते। यस्त्वनवभ्रष्टसंबन्धग्रहणसंस्कारः, स पदं श्रुत्वा नूनं तावदिदं स्मरति, इदमिदमस्याकाङ्क्षितसंनिहितयोग्यप्रतियोग्यन्वितस्य वाचकमिति। एवं च स्मरता स्मृतमेव अनन्वितमपि स्वरूपमन्वयभाजम्। न चैकपदश्रवणे वाक्यार्थावगतिरिति कश्चिन्मन्यते। अभिहितान्वयवादिनोऽपि हि यावत् पदान्तरमर्थान्तरं नोपस्थापयति, तावदन्वयावगमो नास्ति, पदार्थस्यान्वयावबोधिनः पदार्थान्तरापेक्षत्वात्, प्रतियोगिसापेक्षत्वादन्वयस्य। अतस्तन्मतेऽपि सर्वपदैरन्वितस्वार्था अभिधीयमानाः पश्चात् तेभ्यः सर्वेभ्यः स्मृत्यारूढेभ्यो वाक्यार्थप्रतिपत्तिरङ्गीकरणीया। तदाहुर्वार्तिककारपादाः– 'तेऽपि नैवास्मृता यस्माद् वाक्यार्थं गमयन्ति नः। तस्मात् तत्स्मरणेष्वेव संहतेषु प्रमाणता॥' इति। अत एव तत्रभवत आचार्यस्य वाक्यलक्षणं 'संहत्य अर्थमभिदधति पदानि वाक्यं' इति। **ननु** अन्विताभिधानवादिना कथं वाक्यार्थप्रतिपत्तिः। श्रूयमाणेन हि पदेन योऽर्थो नावबोधितः, स कथमन्तर्हितेन तस्मिन्नवभासेत। **उच्यते।** अभिहितान्वयवादिनोऽपि नायं नियमः, श्रूयमाण एव पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः पदार्थप्रतिपादक इति, बाल्यदशाऽधीतत्वात् प्रागनवधृतार्थात् अङ्गपरिज्ञानसंस्कारात् पश्चात् स्मृतादपि वेदार्थावगमदर्शनात्। तेन स्मृत्यारूढस्य अवगमकत्वमदोषः। श्रूयमाणेन हि पदेन प्रतियोगिसापेक्षत्वादन्विताभिधानस्य प्राक् सहकारिविरहादर्थो नाभिहितः। पश्चादभिधीयते इति किमनुपपन्नम्। **येऽपि** वादिनः एवमाहुः— एकमेव पदमन्विताभिधायकमस्तु, इतराणि च पदानि प्रतियोगिसंनिधापनमात्र एव व्याप्रियन्तां, न वा सूक्ष्मभागविशेषता, प्राथम्येन प्रधानपदत्वेन वा विशेषग्रहणात्। अत एवमाहुः, 'प्रधानं पदं वाक्यं' 'आद्यं पदं वाक्यं' इति, **तान्** प्रत्याह। **सर्वमिति।** प्रथमस्यैव स्यात् वाक्यता, यदि सर्वपदार्थानां प्रथमपदार्थान्विता स्यात्। न चायं नियमः, 'अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति क्रयणाद्यान्वयित्वादारुण्यस्य। किंच वाक्ये पदानामानुपूर्व्यनियमाभावात् कदा चित् तदेव प्रथमं तदन्विताभिधायकं, अन्यदा नेति न युक्तम्। तथा प्रधानपदस्यापि वाक्यत्वमयुक्तम्। सोमपदेन सह सर्वेषामनन्वयात्। यद्यप्यरुणादीनां सर्वेषां सोमं प्रति ऐदमर्थ्यमस्ति, तथाप्यस्मिन् वाक्ये क्रये एवारुण्यादीनामैदमर्थ्येन क्रियाकारकभावेन चान्वयः, क्रयद्वारेण तु सोमं प्रति ऐदमर्थ्यमात्रम्। **अथ** यत्प्रतिपादनपरं वाक्यं, तत् प्रधानमित्युच्यते, इह तु क्रयः एव सर्वकर्मकरणावच्छिन्नः प्रतिपाद्यते। तेन क्रीणातीत्येव प्रधानं पदं, तदन्वयिता च सर्वेषामरुणादीनामिति। **अत्रोच्यते।** वाक्यस्य यत् तावत् तात्पर्यं, तन्न व्यवस्थितम्। क चिदाख्यातपरत्वमेव 'अग्निहोत्रं जुहोति' इति, क चित् गुणविधिपरत्वं 'दध्ना जुहोति' इति। तेन प्रधानपदत्वस्यापि सर्वेषां पदानां संभवात् सर्वेषामेव पदानामन्विताभिधानशक्तिराश्रयणीया। तथा च सति **यत्रापि** गुणपरत्वं, तत्रापि क्लृप्तशक्तिकतया **अन्विताभिधायकत्वमविरुद्धम्।** पदार्थेष्वपि चैतत् तुल्यमेव। **नन्वेवं** 'गामानय' इत्यादौ परस्परपर्यायता सर्वशब्दानां स्यात्। यथा गामित्यनेनान्विताभिधानं, तथा आनयेत्यनेनापि। **उच्यते।** द्वौ एतावर्थौ, यदानयनान्वितं गोत्वं, गवान्वितं चानयनमिति। तेन एकैकेन **एकैकस्यार्थस्याभिधानात्** कुतः पर्यायत्वप्रसङ्गः। **पदार्थेष्वपि चैतत् समानम्।** **ननु** क्रीणात्यर्थस्यारुण्याद्यनेकान्विताभिधानादावृत्तिलक्षणो वाक्यभेदः स्यात्। **न।** तन्त्रोच्चारणात्। वैरूप्ये च तन्त्रताऽनुपपत्तेर्वाक्यभेदः स्यात्। **न्यायसंपादितव्यक्ति** इति किमिदं, यावन्न्यायेन वचनव्यक्तिः संपाद्यते, तावत् पदजातं वाक्यार्थस्याऽवबोधकं न भवति। लोक-

व्यवहारानुपपत्तिभिर्न्यायैर्यावत् ' इदं विधेयमिदमनूद्यं, इदं प्रधानमिदं गुणभूतं, इदं विवक्षितमिदमविवक्षितं ' इत्यादि न संप्रधार्यते, तावन्न क चिद्वेदवाक्यार्थमवबुध्यते । तदुक्तं वार्तिककारपादैः ' तावदेव हि संदेहो वेदवाक्ये श्रुते भवेत् । यावन्न वचनव्यक्तिस्तस्य स्पष्टाऽवधार्यते ॥ ज्ञात्वा च वचनव्यक्तिं मीमांसान्यायकातराः । प्रलीयन्ते समस्ताश्च वेदवाक्यार्थसंशयाः ॥' इति । अत एव मीमांसाया वेदवाक्यप्रतिपत्तौ इतिकर्तव्यतात्वम् । तदुक्तं तैरेव ' धर्मे प्रमीयमाणे हि वेदेन करणात्मना । इतिकर्तव्यताभागं मीमांसा पूरयिष्यति ॥' ननु लोके द्रागेव वाक्यार्थावगतिर्नैयतीं सामग्रीमपेक्षते । उच्यते । अत्यन्ताभ्यस्तेषु वाक्येषु स्यादेवम् । अदृष्टपूर्वेषु स्मृत्यादिवाक्येषु लोकेऽपि नानाविधविवादोत्थानात् कुतो द्रागेवार्थनिश्चयः । अपि च कारणाभावेनापि लोकस्यायं विवेको नास्ति । तदुक्तं– ' बहुजातिगुणद्रव्यकर्मभेदावलम्बिनः । प्रत्ययात् सहसा ज्ञाता ज्ञेयलाक्षणिकात्मकान् । न लोकः कारणाभावान्निर्धारयितुमिच्छति । बलाबलादिसिद्धयर्थं वाक्यशास्त्रु विविच्यते ॥ ' इति ।

यच्चेदं सर्वपदानामन्विताभिधायित्वमुच्यते, तत् सर्वेषु श्रौतार्थेषु पदेषु । लाक्षणिकगौणार्थपदप्रयोगे तु यदेव श्रौतार्थं पदं तदेवाऽन्विताभिधायकम् । इतरत्तु पदं प्रतियोगिसंनिधापनपरमेव । तत्र वाचकत्वानवधारणात् स्वार्थस्यापि तत् तदानीमवाचकं, अन्वयाऽयोग्यत्वात् । किंतु तदर्थेन स्मृतेन यत् स्वसंबन्धि सदृशं वा स्वयमन्वययोग्यमुपस्थाप्यते, तेनान्वितं श्रौतार्थमेव पदं स्वार्थमभिधत्ते इति दर्शनरहस्यमिदम् । न च सर्वपदान्येव लाक्षणिकानि गौणानि वा वाक्ये संभवन्तीति निरवद्यम् । क चिदभिधानं निमित्तं क चिदभिहितोऽर्थः इति च यदुक्तं तच्छब्दोपस्थापिततां दर्शयितुं गौणमभिहितत्वग्रहणम् ।

कथं पुनरन्विताभिधायिना पदेन स्वरूपमात्रेण स्मारयितुं शक्यमित्याह— ' **अन्वितस्याभिधानेऽपि स्वरूपं विद्यते सदा । तेन स्वरूपमात्रेऽपि शब्दो जनयति स्मृतिम्** ॥ ' एवं संबन्धग्रहणान्तर्गतं स्वरूपस्मरणमुक्तम् । संप्रति स्वरूपमात्रस्मरणमपि पदादेव नानुपपन्नमित्याह ' **यथाऽर्थेनाप्रमाणेन स्वपदं स्मार्यते क चित् । पदेनाप्यप्रमाणेन तथाऽर्थः स्मारयिष्यते** ॥ ' नहि यत् प्रमाणं तत् स्मरणकारणमेव, प्रमाणं तत् । यस्य तु येन सह कदा चित् प्रत्यासत्तिः प्रतीतपूर्वा, सा तत्र संस्कारोद्बोधद्वारेण शक्नोत्येव स्मृतिं जनयितुम् । अस्ति च स्वरूपस्यापि तदभिधेयान्तर्गतया शब्देन प्रत्यासत्तिरिति शक्नोति तत्रापि शब्दस्मृतिं जनयितुमर्थवत् । यथा निर्विकल्पकदशाप्रतीतमर्थस्वरूपमात्रं अनभिधेयमपि शब्दं स्मारयति, तथा शब्दोऽप्यर्थमिति किमनुपपन्नं, एतेन पदोच्चारणानन्तरा पदार्थस्वरूपप्रतीतिः प्रदर्शिता । अभिहितान्वयवादिनोऽपि सा न प्रमाणं, अभ्यधिकार्थपरिच्छेदाभावात्, अनधिगतार्थगन्तृ प्रमाणमिति सिद्धान्ताभ्युपगमात् । तदुक्तम्– ' सर्वस्याऽनुपलब्धेऽर्थे प्रामाण्यं स्मृतिरन्यथा ' ( श्लो. वा. प्रत्यक्षसूत्रे ११ ) इति । यदि पुनः स्मृतिरेषा नाभ्युपेयेत, तदा प्रमाणस्मृतिसंशयविपर्ययेभ्यः प्रतिपत्त्यन्तरानभ्युपगमात् पदात् स्वपदार्थप्रतीतिः क्वान्तर्भाव्यतामिति वाच्यम् । अत एवाभिहितान्वयवादेऽपि स्मारकत्वमेवास्मभ्यं रोचते । इतरेतराश्रयमिदानीं परिहरति–' **स्मृतिसंनिहितैरेवमर्थैरन्वितमात्मना । अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयम्** ॥ ' स्वार्थस्वरूपमात्रस्मरणे हि न पदं पदान्तरमपेक्षते । स्मृतिसंनिहितमपीदं भवत्येव संनिहितम् । नास्ति तेनेतरेतराश्रयत्वम् । **ननु** वृद्धव्यवहारेण व्युत्पत्तिः । अन्वितप्रतिपत्तिनिबन्धनश्च व्यवहारः । अतस्तद्दर्शनादन्वितप्रतिपत्तिरेवानुमातुं शक्या । न त्वनन्वितपदार्थमात्रस्मरणम् । **उच्यते** । व्यवहारानुमितान्वितप्रतिपत्त्यन्यथाऽनुपपत्तिरेव अनन्वितस्वार्थस्मरणसंभवे प्रमाणम् । दर्शितं ह्येतत् । 'नानन्वितप्रतिपत्तिमन्तरेणान्वितप्रतिपत्तिरुपपद्यते' इति । **अत्र कश्चिदाह**—यदि स्मृतिसंनिहितमाश्रित्य अन्विताभिधानं पदैः क्रियते, तदा स्मरणस्य प्रत्यासत्तिनिबन्धनत्वादनेकेषां चार्थानां प्रत्यासत्तिसंभवात् तेषु स्मृतिसंनिहितेषु अगृह्यमाणविशेषत्वात् ' उखायां पचति ' इति नोखा पचत्यर्थान्वितैव केवलाऽभिधीयेत । सा च हि निर्वापाद्यन्विताऽपि प्रतिपन्नैवेति स्मरणात् तदन्विताऽप्युखा अभिधीयेत । तथा पचत्यर्थोऽपि

पाकादिमुखोऽवगत इति तत्स्मरणाद्यौदनान्वितोऽभिधीयेत। अभिहितान्वयवादे तु नायं दोषः। एकैकस्यार्थस्याभिधेयत्वादिति। **अत्रोच्यते**। पदात् तावत् पदार्थप्रतीतिः स्मरणात् भिन्ना वदितुं न शक्यते, तेन स्मृतानामेवान्वयबोधकत्वमित्याश्रयणीयम्। तथा च तुल्यो दोषः। अथ शब्दैः स्मारितानामन्वयबोधकत्वात् वृद्धव्यवहारे तथा दर्शनाददोषः, मतान्तरेऽपि तुल्यमेतत्। न चायमेकान्तः, वृद्धव्यवहारे अध्याहृतेनाप्यर्थेन अन्विताभिधानदर्शनादित्युक्तम्। **अथ** शब्दैर्बहवोऽर्थाः स्मार्यन्ते, किंतु तेषां कतमेनान्वयावबोधकत्वमिति, अभिहितान्वयवादे तु अभिहितेनान्वयबोधकत्वं युक्तमेवेति। **तदसत्**। स्मारकत्वातिरेकिणी का अन्या अभिधायकता, या व्यवस्थानिबन्धनम्। **अथोच्येत**। स्मारकत्वं नाम प्रत्यासत्तिनिबन्धनम्। तेन तदतिरेकिणी अभिधेयाभिधायकतालक्षणा प्रत्यासत्तिरङ्गीकरणीयेति। **नैतदेवम्**। स्मारकत्वेनैव वृद्धव्यवहारे दर्शनात् स्मारकत्वोपपत्तेः। प्रत्यायकता हि वाच्यवाचकता, सा च यद्यपि अग्निधूमादीनां संबन्धान्तरापूरिका दृष्टा, तथापि शब्दे तथा नाश्रीयते। किंतु वाचकत्वावगमादेव वाचकत्वम्। एवं स्मारकत्वावगमादेव स्मारकत्वमिति, किं प्रत्यासत्त्यन्तराश्रयणेन। अपि च अन्वितार्थवादिन एवेदं प्रतिनियतान्वयत्वमुपपद्यते, यत् पदार्थान्तरान्विताभिधायकतया स्मार्यते। तदन्वितस्यैव वृद्धव्यवहारावधार्यत्वदर्शनात्। यत्राप्यध्याहारः, तत्रापि संनिधापकवशेन विशेषान्विताभिधानलाभ इति लोकत एव ज्ञातमिति न कश्चिद् दोषः। ज्ञातं तावदेतद्, यदनेन पदेनान्वितो वाक्यार्थः इति। यद्यन्येनापि अन्विताभिधानं स्यात्, तदा वाक्यभेदो भवेत्। न चासौ एकवाक्यत्वसंभवे न्याय्यः। तदुक्तम्— **'संभवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते' इति**। अत एव यथाकथंचिदेकवाक्यत्वोपपत्तौ वाक्यभेदस्यान्याय्यत्वात् लोके लक्षणा गौणी च वृत्तिर्वाक्यभेदादेव। अन्यथा वाक्यं भित्वा किमित्यध्याहृत्य योग्यमर्थान्तरं सर्वपदान्येव मुख्यार्थानि नाश्रीयन्ते। वेदेऽपि एकवाक्यत्वबलादेवार्थवादेषु गुणवादाश्रयणं विभक्तिव्यत्ययवर्णनं, औदुम्बराधिकरणे वा कथं चित् पशुवाचकत्वं, चित्राऽधिकरणे रूढिपरित्यागेन 'पञ्चदशान्याज्यानि भवन्ति' इत्यत्र कथं चिन्नवत्वाश्रयणं, वाजपेयाधिकरणे च वाक्यभेदभयादेव नानैकत्वाश्रयणं, पौर्णमास्यधिकरणे चानेककर्मविधाने वाक्यभेदापत्तेः समुदायानुवादकत्वसिद्धिः, प्रकरणान्तराधिकरणे च वाक्यभेददोषादेवाग्निहोत्रपदस्य गौणत्ववर्णनं, ग्रहाधिकरणे चैकत्वस्याविवक्षितत्वं, 'अर्धमन्तर्वेदि मिनोत्यर्धं बहिर्वेदि' इत्यत्र देशलक्षणावत्त्वं, क्षौमाधिकरणे च पुंद्वयविधानहानं, आर्त्यधिकरणे चोभयपदस्याविवक्षा, वारुण्या निष्कासेन तुषैश्चेत्यत्र निरपेक्षत्वत्यागः, पर्युदासाधिकरणे च नञर्थस्य लाक्षणिकत्वं इत्यादि बहुतरं दृश्यते। तत्र यदि अध्याह्रियमाणस्य पदस्याभिधेयं परित्यज्यान्येन सहान्वयो लक्ष्यते, तदाप्येकवाक्यता हीयेत। तदर्थमेवेदमुक्तं, **न्यायसंवादितव्यक्ति** इति। एकवाक्यत्वं हि नाम महान्वयः। तदनुसारेण योऽर्थः, सोऽत्र वाक्यस्याश्रयणीयः। वृद्धव्यवहारव्युत्पत्तियन्त्रितायां शब्दार्थावगतौ ये न्याया वृद्धव्यवहारे वाक्यार्थावगतिहेतुतया विदिताः, तानपरिजहता वाक्यार्था बोद्धव्याः इति सर्वासामेवानुपपत्तीनामनवकाशः। **भवतु** तर्हि पदार्थान्तरेण तावदन्विताभिधानं एकवाक्यत्वबलात्। तत्स्मारितेन स्वयं स्मारितेन च तदेकवाक्यत्वानुगुणेनार्थान्तरेणापि किमित्यन्विताभिधानं न भवति। **उच्यते**। पदद्वयेनैवान्विताभिधानसिद्धेराकाङ्क्षोपशान्तेः। अथ नोपशान्ता आकाङ्क्षा, तर्हि को नाम तत्रान्विताभिधानं वारयेत्। **अत** एवैकपदोच्चारणे तदर्थसंबन्धमुखेन बहुष्वपि स्मृतिसंनिहितेषु यस्यार्थस्य केन चित् प्रकारेण विशेषो गृह्यते, तेनैवान्विताभिधानम्। अगृह्यमाणे तु विशेषे अनध्यवसायादप्रतीतिरेव। अत एव विकृतिषु तत्सादृश्येन यदपूर्वं स्मर्यमाणं स्वोपकारकं स्मारयति, तदीयेनैवोपकारेण परिपूरणम्। अतो यत्र बहुतरधर्मसाधारण्यनिबन्धनं सादृश्यमन्यस्योद्दतं, तत्रैव शीघ्रं स्मृत्युपपत्तेः तदीयोपकारकपरिग्रहः एव। दर्विहोमेषु तु सर्वापूर्वाणामविशेषात् विशेषो ग्रहीतुमशक्यः इत्यनध्यवसाय एव प्राकृतस्योपकारस्येति तत्रैवोपकारकताऽपि। यथावृद्धव्यवहारावगमं वाक्यार्थावबोधः, तत्र यदेव पदेन अनवभ्रष्टसंबन्धग्रहणसंस्कारस्य पुरुषस्य नियमेन स्मार्यते, तेनैवान्विताभिधानं पदान्तरस्य दृश्यते, नान्येन।

स्वार्थं हि सर्वं पदं नियमेन संबन्धस्मर्तॄणां स्मारयति, नार्थान्तरम् । ततश्च तेनैव पदान्तरस्यान्वितस्वार्थबोधकतेति न कश्चिद्दोषः । किंच यदि अभिहितैनैवान्वितस्वार्थबोधनाभ्युपगमे प्रतिनियतान्वयबोधो घटते नान्यथा, तर्हि कल्प्यतां पदानामन्विताभिधानशक्तिरपि । द्विरभिधानमेवापद्यते इति चेदापद्यतां, न कश्चिद्दोषः । पूर्वं केवलं पदमनन्वितस्वार्थमभिधत्ते, प्रतियोगिपदान्तराभिहितवस्त्वन्तरसहायप्राप्त्या तु तत्तदन्वितमर्थमाह, इति न कश्चिद्दोषः । इत्थमपि चास्मन्मते शक्तिकल्पनालाघवमस्ति पदार्थगतान्वयबोधनशक्त्याधानशक्तिकल्पनात्यागः । तुल्यायामपि शक्तिकल्पनायां पदानामेवान्वितबोधनशक्तिराश्रयितुमुचितं, न पदार्थानां प्रथमावगतत्वात् वाक्यार्थे च तात्पर्यस्यावगतत्वादिति ।

कथं तर्हीदं भाष्यं, पदानि हीत्यादि ( पृ. ९६।८ )। तत्राह '**अन्वितेषु पदैरेव बोध्यमानेषु शक्तिभिः । अन्वयार्थगृहीतत्वान्नान्यां शक्तिमपेक्षते ॥**' आशङ्कितोत्तरमिदं भाष्यम् । किमाशङ्कितम् । यद्यन्विताभिधायीनि पदानि, तर्हि नान्वयाभिधायीनि । तत्सिद्ध्यर्थं पदानां शक्त्यन्तरं कल्प्यमिति । अत्रेदमुत्तरम् । यत्पदमन्विताभिधायकं, अन्यथाऽन्वितः एवासौ नाभिहितः स्यादित्यन्वितरूपेणार्थेनान्वयः स्वीकृतः, तं विना तदसंभवादिति नापरा तद्विषया पदानां शक्तिः कल्पनीया । कथं पुनरसावर्थगृहीतः इत्याह— '**प्रतीयन्नन्वयं यस्मात् प्रतीयादन्वितं पुमान् । व्यक्तिर्जातिमिवार्थोऽसाविति संपरिकीर्त्यते ॥**' अन्वयवानेव ह्यन्वितः । सोऽन्वयाप्रतीतौ न प्रतीत एव स्यात्, किंतु स्वरूपमात्रमेव । न च तदन्वितमुच्यते । तस्मात् तदन्वयं प्रतिपद्यमानोऽन्वितं तं प्रतिपद्यते । यथा व्यक्तिं प्रतिपद्यमानो जातिम् । अयं तु विशेषः, अन्वयवानेवान्वित उच्यते, इत्यन्वयोऽप्यभिधानानुप्रविष्टः । व्यक्तिसत्त्वैव जातिस्वरूपं न भवति, किंतु व्यक्तेराकारभूता जातिस्ततो भिन्ना, सा चेदाकृतिः शब्दाभिधेया, न व्यक्तिशक्तिरभिधानानुप्रवेशिनी , किंतु आकारभूता जातिव्यतिरिक्ताऽपि वस्तुस्वभावेन व्यक्तिमन्तरेण प्रतीतिमनुभवति । एतावता च साम्येन, दृष्टान्तो न सर्वात्मना । **ननु** एकविज्ञानारूढा कथं व्यक्तिरनभिधेया, शब्दोत्थापितविज्ञानविषयता ह्यभिधेयता, अस्ति च व्यक्तेरपि तथा भावः इति कथमनभिधेयतेति । **श्रूयतामवधानेन सर्वस्वं प्राभाकराणाम्** । सत्यमेकसंवित्तिविषयता जातिव्यक्त्योः, तथापि चिन्तनीयमिदं, कथमेषा संवित्तिरुभयविषया जायते इति । किमस्योभयविषयत्वे शब्दमात्रस्यैव व्यापारः, उत जातिमात्रविषयत्वे शब्दस्वरूपमात्रेण व्याप्रियते । व्यक्तिविषयत्वे जात्यभिधायकतया जातेरन्यथा बोधयितुमशक्यत्वादिति तावत् अनन्तासु व्यक्तिषु संबन्धग्रहणाशक्तेः, आकृत्युपलक्षितासु च यद्यपि संबन्धग्रहणं सुकरं, तथापि तद्रूपत्वेनैव शब्दशक्त्यवगमात्, उपलक्षणत्वे कारणाभावात्, चिह्नभावेन च क्रियाऽन्वयासंभवादाकृतिविषयत्वं तावच्छब्दस्वरूपनिबन्धनम् । एवं चेत् तदभिधायकतयैव व्यक्तिविषयत्वे शब्दव्यापार इति निश्चीयते । तेनाकृतिर्न व्यक्तिं गमयति, किंतु शब्दः एव तदभिधायकतयेति आकृतितो व्यक्तिरुच्यते । अतोऽन्विताभिधानायान्वयस्यार्थगृहीतत्वात् असावन्वयो नाभिधीयते । तेन व्यतिषक्ताभिधानं वदन् अव्यतिषङ्गाभिधानं, निष्कृताभिधानं न भवति । व्यतिषक्ततोऽवगते व्यतिषङ्गस्य व्यतिषङ्गं विना अभिधानानुपपत्तेः । भाष्याक्षराणामयमर्थः, पदानि अन्वितमभिधाय निवृत्तव्यापाराणि नान्वयं पृथगभिदधति । अथेदानीमन्विताः प्रतिपन्ना अन्वयमपि प्रतीतं संपादयन्तीति । लोके च पदार्थानां संबन्धग्रहणसमये एव विदितत्वात्, वाक्यान्तरे चान्वयान्तरस्यैव प्रतिपन्नत्वात्, तत्परतैव वाक्यस्येति । वाक्यार्थशब्देन भाष्यकारोऽन्वयमाह । वेदे त्वपूर्वत्वात् वाक्यार्थ इति वक्ष्यामः । तस्य च स्वरूपमप्यनवगतं, इति अन्वयस्यैव वाक्यार्थत्वात् । एवमुक्तेन न्यायेन विशेषेणैवान्विताभिधानं समर्थितम् । **ये अन्विताभिधाने** एवमाहुः—वृद्धव्यवहारे प्रसिद्धसंबन्धः शब्दोऽर्थस्य वाचकः । अन्वयव्यतिरेकाभ्यां च संबन्धावधारणम् । न च विशेषान्वयविषयौ तौ संभवतः । क्रियापदं हि कारकसामान्यव्यभिचारिण्या क्रियया सह अन्वयव्यतिरेकौ भजते, विशेषान्तरान्वयव्यभिचारात् । एवं कारकपदेऽपि योज्यमिति । **तन्निराकरणायाह**— '**सामान्येनान्वितं**

**वाच्यं पदानां ये प्रचक्षते । नियतेन विशेषेण तेषां स्यादन्वयः कथम् ॥**' दर्शितमिदं विशेषान्वयेऽपि आकाङ्क्षासंनिधियोग्यतोपाधिवशेन संबन्धग्रहणं सुकरमिति, तदभिधायकतैव युक्ता पदानाम्। यदि चासौ नेष्यते, तदा वाक्यार्थप्रतिपत्तिरेव नोपपद्यते विशेषान्वयरूपत्वाद्वाक्यार्थस्य। **ननु** च सामान्यान्वयोऽभिहितो विशेषान्वयमाक्षेप्स्यतीति निर्विशेषस्य सामान्यस्य प्रत्येतुमशक्तेरिति विशेषान्वयप्रतिपत्तिरुपपन्नैवेति, **अत्राह**— '**यद्यप्याक्षिप्यते नाम विशेषो व्यक्तिजातिवत् । निर्धारितविशेषस्तु तद्वदेव न गम्यते ॥**' यथा जातिर्व्यक्तिमाक्षिपत्यपि न प्रतिनियतं विशेषमाक्षिपति, तथाऽत्रापि प्रतिनियतविशेषाभावात् नियतविशेषात्मकवाक्यार्थप्रतिपत्तिरनुपहस्या। अथ विशेषमात्राक्षेपेऽपि आकाङ्क्षितसंनिहितयोग्यश्च विशेषः पदान्तरेण समर्प्यते, स एव गृह्यते, तदतिरिक्ते प्रमाणाभावादित्याह— '**यद्यप्याकाङ्क्षितो योग्यो विशेषः संनिधौ श्रुतः। संबन्धबोधकाभावो गृह्यते न तथाप्यसौ ॥**' सामान्यान्विताभिधानवादिनो मते पदानि तावत् तन्मात्रे एव पर्यवसितशक्तीनि, पदार्थानामपि अन्वयबोधनशक्तिर्नाङ्गीक्रियते। न च सामान्याक्षेपोऽपि नियतविशेषमास्कन्दति। तेनाकाङ्क्षितेऽपि योग्ये च विशेषे पदार्थान्तरेण संनिधापितेऽपि तदन्वयबोधकप्रमाणाभावात् तदन्वयो न प्रतीयेतैव। अत आकाङ्क्षासंनिधियोग्यत्वादीनि अनुपयोगीन्येव। विशेषान्वयवादिनस्तु मते संबन्धग्रहणं प्रति उपाधित्वेन प्रविष्टानि वाक्यार्थप्रतिपत्तौ उपयुज्यन्ते। तदाह— '**संबन्धबोधव्युत्पत्तावुपाधित्वे समाविशेत्। विशेषान्वयवादे तु योग्यत्वादुपकारकम् ॥**' 'पदानां पदार्थान्तरसंबन्धः स्वार्थो बोध्यः' इत्यस्यां व्युत्पत्तौ उपाधित्वेन योग्यत्वादिकमनुप्रविशेत्। विशेषान्विताभिधानवादिपक्षे उपकारकं, न सामान्यान्विताभिधाने इति दर्शितं प्राक्। दूषणान्तरं चाह— '**किंच वस्तुबलेनैव सिद्धे सामान्यसंगमे। तस्या वाच्यत्वमिच्छद्भिर्वृथा शब्दः प्रवेशितः ॥**' क्रियाकारकस्वभावालोचनयाऽपि कारकमात्रेण क्रियामात्रेण चान्वयावगमसिद्धेर्वृथा सामान्यान्वयाभिधायकता शब्दस्याङ्गीक्रियते इति। 'वाक्यमेकं न निर्भागं वाक्यान्योऽवयवोऽपि वा। पदवृन्दं स्मृतिस्थं वा प्रथमं पदमेव वा ॥ आख्यातपदमात्रं वा पदार्था वाऽप्यनन्विताः। सामान्यान्वयबोधे यो हेतुर्वाक्यार्थबोधने ॥ पदान्येव समर्थानि वाक्यार्थस्यावबोधने। विशेषान्वयवादीनि भागशो भागशालिनः ॥' इति संग्रहश्लोकाः। तथा चोक्तम्। अस्ति वा पदस्यार्थः ? बाढमस्ति। कथं तर्हि वाक्यवाक्यार्थयोरौत्पत्तिकत्वम् ? वृद्धव्यवहारात्। सत्यम्। स व्यवस्था इत्युक्तम्।

इत्यन्विताभिधानवादः शालिकनाथीयः।

* **अन्विताभिधानविचारः** । कर्त्रेकत्वादिसंख्या भावनायां विनियुज्यते श्रुत्या। अत्र च **तौतातिकमते** अभिहितान्वय उत्सर्गः। तदपवादस्तु अनेकार्थकप्रत्यये कर्त्रेकत्वविधिभ्यां अन्विताया भावनायाः तिङि सुपि च 'पशुना' इत्यादौ एकत्वलिङ्गाभ्यां अन्वितस्य करणादिकारकस्य, देवतातद्धिते च देवतया अन्वितस्य द्रव्यस्य अभिधानाङ्गीकारात्। तदुक्तं **तन्त्ररत्ने** पश्वेकत्वाधिकरणे (४।१।७।११–१६) 'किंच एकेनाभिधानेन युगपदभिधीयमाने संख्याकारके मिथः अन्विते एवाभिधीयेते, अन्यथा युगपदभिधानायोगात् अक्षादिशब्देष्वदर्शनात्। अतः अभिधानादेव कारकतया प्रतीयमानस्यैकत्वस्य क्रियार्थत्वं श्रौतमेवेति। **न्यायरत्नमालायां च** अङ्गनिर्णये उक्तं 'तद्यत्र अनेकार्थाभिधानं एकेन शब्देन युगपद्भवति विभक्त्येव लिङ्गसंख्याकारकाणां, तत्र तेषां अन्वितानामेवाभिधानम्। अनन्वितानां अनेकेषामर्थानां एकेन शब्देन युगपदभिधानस्य एकशेषमन्तरेणासंभवात् अक्षशब्देनेव विदेवनादीनाम्। अन्यथा 'गामानय' इतिवत् 'यां कां चित् व्यक्तिमक्षमानय' इति नियुक्तो विदेवनादीनामन्यतमं आनयेत् न संदिहीत, संदिग्धे च 'किंपरोऽयं प्रयुक्तः' इति। तस्मात् अन्विताभिधानम्। तत्रापि प्रतीतिबलेन कारकं प्रधानं, लिङ्गसंख्ये गुणतः सुपि। तिङि अपि भावना प्रधानं, कर्तृसंख्यादि गुणभूतम्। देवतातद्धिते द्रव्यं प्रधानं, देवता गुणभूता इत्यादि। तथा चोक्तमभियुक्तैः 'यदा कर्मादयो विभक्त्यर्थाः, तदा एकत्वादयो विशेषणत्वेन'

इति, तथा 'भावप्रधानमाख्यातं' इति । अन्विताभिधानवादान्ते तु मत्वर्थीयान्तेष्वपि अन्विताभिधानमुक्तम् । "मत्वर्थीया अपि विशिष्टमेवाभिदधति, नहि तेषां वाच्यान्तरं निरूप्यते 'हिरण्यमालिन ऋत्विजः' इत्यत्र विशेषणीभूता हिरण्यमाला तावत् प्रकृत्यैवोक्ता, ऋत्विजोऽपि विशेष्याः स्वशब्देन, मतुप् तु किमभिदध्यात् अन्यत् विशिष्टात्" इति । तत्रैव पदेऽपि अन्विताभिधानं न वा इति मतद्वयमुक्तम् । तत्र हि कथं तर्हि भाष्यकारेण (१।१।७।२५ पृ. ९९) प्रातिपदिकादुच्चरन्ती द्वितीया विभक्तिः, 'प्रातिपदिकार्थो विशेषक इत्याह' इति प्रत्ययस्य अन्विताभिधायित्वमुच्यते इति गुरुमतेन शङ्कित्वा द्वेधा समाहितम् । 'भवत्पक्षे वा कथं सर्वशब्दानां अन्विताभिधायित्वे सति विशेषेण प्रत्ययस्य तत् कथ्येत, तेन ग्रन्थानुगुण्यात् शब्दान्तराणां स्वरूपमात्राभिधायित्वं, प्रत्ययस्य तु अन्विताभिधायित्वं इति व्यवस्थाप्यम् । यद्वा अनेनापि अन्विताभिधायित्वं प्रत्ययस्य नोच्यते, किं तर्हि प्रत्ययेन स्वार्थोऽभिधीयमानः प्रथमावगतप्रकृत्यर्थानुरक्त एवावगम्यते इति तत्रान्वयव्यतिरेकाभ्यां प्रकृतेः प्रत्ययस्य च स्वस्वार्थे अनुरागांशे च प्रकृतिप्रत्ययसमभिव्याहारस्यैव पदान्तरसमभिव्याहारस्येव पदार्थानुरागे निमित्तत्वं विविच्यते । अतः अनुरागांशस्य समभिव्याहारादेव प्रतीतिसिद्धेः न प्रत्ययस्य तत्र शक्तिः । स तु स्वार्थमात्रमेवाभिधत्ते । तदुक्तं शाब्दे '**प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति यत् । भेदेनैवाभिधानेऽपि प्राधान्येनैतदुच्यते ।। नान्यावयवशक्तिभ्यां शक्तिः का चित् पदाश्रया । विद्यते यत एकस्माद् विशिष्टार्थगतिर्भवेत् ।। नित्यं विशिष्ट एवार्थे प्रत्ययो यत् प्रवर्तते । तत् पूर्वतरविज्ञातप्रकृत्यर्थविशेषणात् ।।**' इति । अत्र द्वितीयपक्ष एव पारमार्थिकः इत्येवंपरतया शब्दान्तराधिकरण-(२।२।१।१)-सिद्धान्तवार्तिकं **भट्टसोमेश्वरेण** व्याख्यातम् । यस्मात्तु प्रकृतिप्रत्यययोः स्वार्थाभिधाने स्मृतेराचाराच्च नित्यं विवक्षितक्रमत्वेन पूर्वप्रयुक्तप्रकृत्यर्थव्यापृतेषु प्रतिपत्तृषु प्रत्ययाः संनिपतन्तः तत्कृतानुबन्धमेव स्वार्थं वदन्ति, तस्मात् न कदा चित् प्रत्ययार्थः शुद्धो लभ्यते । यथोक्तं 'प्रातिपदिकादुच्चरन्ती द्वितीया विभक्तिः प्रातिपदिकार्थो विशेषक इत्याह' इति । इति सोऽयं सुबन्ततिङन्तपदयोः उक्तः प्रकारः पाचकादिकृदन्तेऽप्युक्तः । '**पाकं तु पचिरेवाह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनः कर्ता वाच्यो नैकस्य कस्य चित् ।।**' (केनांशेनाभिधीयते इति चतुर्थचरणपाठः वाक्यपदीये) । अयमेव प्रकारो देवतातद्धिते मत्वर्थीयादावपि च संभवति । अतः '**पदश्रुतेर्बलीयस्या विधिश्रुत्या हि भावना । अवरुद्धा न यागादिभाव्यमालम्बितुं क्षमा ।।**' इत्यादिः (शा.) स्वर्गकामाधिकरणादौ मिश्रादीनां पदे श्रुतित्वव्यवहारो नान्विताभिधाननिबन्धनः । **न च** विशेषणाभिधानं विना कथं विशिष्टाभिधानं इति **वाच्यम्** । '**विशिष्टग्रहणं नेष्टमगृहीतविशेषणम् । अभिधाऽनभिधाने तु न केन चिदिहाश्रिते ।।**' इति कर्त्रधिकरण-(पृ.११५) वार्तिकोक्तरीत्या तदुपपत्तेः । **ननु** 'यजेत पशुना' इत्यादिपदं विशिष्टाभिधानमात्रात् चेत् श्रुतिः, ततः समाख्याया अपि तत्तौल्यात् श्रुतित्वापत्तिः, तेन तदधिकरणे तस्याः श्रुतित्वमाशङ्क्य 'पाकं तु पचिरेवाह' इति हरिकारिकोपन्यासेन अन्वयानभिधानात् श्रुतित्वाभावोक्तिरयुक्ता । **सत्यम्** । अभ्युच्चययुक्तिरेवैषा तत्रोक्ता । या तु इतः परं तत्र युक्तिरुक्ता, 'अथापि समाख्या संबन्धमभिदध्यात् तथापि न सा तत्र प्रमाणं' इति, सैव श्रुतित्वनिरासहेतुर्मुख्यः । किंच पारार्थ्यसूत्रे अभिहितं 'न श्रुत्यादयः पारार्थ्यमभिदधति इति ब्रूमः, किं तर्हि विधिसहिताः पारार्थ्यं बोधयन्ति' (शा. ३।१।२) इत्यादि । तेन विध्यभावादपि न समाख्यायाः श्रुतित्वं इति समञ्जसं सर्वम् । **बाल. पृ. ४२-४४.**

* **अन्वेतवै**—अयं तवै-प्रत्ययः कृत्यार्थः विधौ । अन्वेतव्यं इत्यर्थः । **बाल. पृ. ४०**

* '**अन्वेनं माता मन्यतां**' इत्यध्रिगुप्रैषे मात्रादिशब्दोहप्रतिषेधोऽपि 'न माता वर्धते न पिता' इत्यादिरूपः । **भाट्ट. ९।३।१.**

* **अन्वेषणमन्त्रः**—'कोऽसि कतमोऽसि कस्यासि

को नामासि यस्य ते नामामन्महि यं त्वा सोमेनातीतृपाम ' इति । **बाल.** पृ. ५९.

* **अन्वेषणरूपः अर्थवादः**—' इह वा स इह सः ' इति । **बाल.** पृ. ५०.

* **' अपः प्रणयति '** इति प्रकृत्य श्रूयते ' मृन्मयेन प्रतिष्ठाकामस्य ' इति । इदं मृन्मयत्वं काम्यं नित्यप्रयोगे नान्वेति, किंतु ' अपः प्रणयति ' इति विधानात् अन्यत् किं चित् पात्रं ग्राह्यम् । कृत्वाचिन्तेयं ' चमसेनापः प्रणयेत् ' इत्यनेन नित्यत्वेन विहितश्चमस एव नित्यप्रयोगे ग्राह्यः । **वि.** ४।३।२, * ' अपः प्रणयति ' 'प्रणीताभिर्हवींषि संयौति' 'अन्तर्वेदि प्रणीता निनयति ' अत्र प्रणीतानामपां हविःसंयवनमेव प्रयोजनं, अन्तर्वेदि निनयनं तु प्रतिपत्तिः । प्रणीतानां संयवनमेव प्रयोजकं, निनयनं न प्रयोजकम् । ४।२।५, * **अपां प्रणयनं** ' चमसेनापः प्रणयेत् ' इति विहितमाश्रित्य गोदोहनं विधीयते । तस्य पशवः फलम् । १।४।२. * अपां प्रणयनं पशुकामस्य गोदोहनेन दर्शपूर्णमासयोः । **भा.** ३।६।३।१०. * **अपां प्रणयने** मृन्मयादेः काम्यात् नित्यार्थमन्यत् उपादेयम् । न तु तदेव काम्यं सत् नित्यार्थेऽपि । **शा.** ४।३।२.

* **अपां यागः** पशुकामेष्टौ सप्तयागगतः उपांशुयाजस्य विकृतिः । **वि.** १२।२।७ वर्णकं २.

* **अपां व्युत्सेकस्य** दर्शपूर्णमाससंबन्धः प्रकरणान्निर्ज्ञातो नावभृथत्वम् । कथं तर्हि ( अवभृथ ) शब्दप्रयोगः ? सादृश्यात् । किं सादृश्यं ? अप्सु संबन्धः । स एष भक्त्या प्रशंसावादः अपां व्युत्सेकस्य अवभृथ इवायमिति । **भा.** ७।३।५।१४.

* **अपकर्षः** अग्नीषोमीये पशौ प्रयाजानां जीवत्येव पशौ श्रुतः । स च प्रयाजान्तस्याङ्गसमूहस्य । **वि.** ५।१।१२, * अपकर्षः अग्नीषोमीयपशुयूपच्छेदस्य 'दीक्षासु यूपं छिनत्ति ' इतिवचनात् दिनत्रयात् पूर्वस्मिन् दीक्षाकाले । ५।१।१४. * अपकर्षः अभिषेकेण सह विदेवनादीनां राजसूये । **टुप्.** ५।२।१०।२१, * अपकर्षः अभिषेकस्य राजसूये अभिषेचनीयाङ्गभूतमाहेन्द्रस्तोत्रकाले । ५।२।१०।२१. * अपकर्षः द्वादशोपसत्तादः । ' अपकृष्येत द्वादशोपसत्ता असंयोगात् ज्योतिष्टोमेन, अहीनेनैकवाक्यत्वस्य प्रत्यक्षत्वात् ' । **भा.** ३।३।८।१६, * अपकर्षः भक्षमन्त्रस्थानां केषां चिद्वाक्यानां भक्षणवाक्यात् प्राक् ' रूपोपदेशाभ्यानकर्षो भवेत् केषां चिदत्र ' । ३।२।९।२६.

* **अपकर्षः न** अग्नीषोमप्रणयनादेः सौत्तिकस्य, दीक्षासु यूपकर्मापकर्षेऽपि । **शा.** ५।१।१८. * अपकर्षः न अमावास्यायां पूर्वेद्युर्वेदेरपकर्षेऽपि हविरभिवासनान्तस्य समूहस्य प्रमाणाभावात् । वेदिविषये तु सामान्यावबोधस्य 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति विशेषवचनेन बाधः । ' वेदिरपकृष्यमाणा हविरभिवासनं नापकर्षति । सामान्यावबोधो विशेषेण बाध्यते । ' **वा.** ५।१।१६।२९. * अपकर्षः न प्रदानस्य, आश्विनादिग्रहग्रहणस्य आमयाव्याद्यर्थे अपकर्षेऽपि । **भा.** १०।२।२२।७५-७६.

* **अपकर्षविधिः** उपदेशेन अग्नीषोमीये, अतिदेशेन च सवनीयानुबन्ध्ययोः अङ्गभूतस्य यूपस्य अनुष्ठानसाधारण्यार्थः ' दीक्षासु यूपं छिनत्ति ' इति । **बाल.** पृ. २१.

* **अपचयः** इदानीं ( षष्ठेऽधिकरणे ) चिन्त्यते । उपचयः पूर्वाधिकरणे चिन्तितः । **भा.** ८।३।६।१२.

* **अपचारेऽपि देवता–अग्नि–शब्द–क्रियाणां न** प्रतिनिधिः । ( अपचारः विनाशः अलाभो वा ) । **भा.** ६।३।५।१८–१९, * अपचारे प्रतिनिधेः, श्रुतद्रव्यसदृशमेव अन्यत् ग्राह्यं, न तु प्रतिनिधेः प्रतिनिधिः । ६।३।१४।३२, * अपचारे मुख्यस्य, पुनर्मुख्यप्राप्तौ मुख्यस्यैव उपादानम् । ६।३।१६।३५, * **अपचारे व्रीह्यादेः श्रुतद्रव्यस्य, वैकल्पिकं यवादिद्रव्यं प्रतिनिधित्वेन नोपादेयम् ।** ६।३।१२।२८–३०, * **अपचारे श्रुतद्रव्यस्य, तत्सदृश एव प्रतिनिधिर्ग्राह्यः ।** ६।३।११।२७, * **अपचारे श्रुतद्रव्यस्य, नित्यकर्मणः प्रारब्धकाम्यकर्मणश्च प्रतिनिधिना समापनम् ।** ६।३।४।१३–१७, * **अपचारे श्रुतप्रतिनिधेः, मुख्यद्रव्यसदृशस्यैव प्रतिनिधित्वं, न तु प्रतिनिधिसदृशस्य ।** ६।३।१५।३३–३४.

*** अपचितौ** ( नाम यागे ) उभे बृहद्रथंतरे कुर्यात् । तत्र ब्रह्मिध्यवमाने प्रतिपत् न उपवती, न अग्नियवती, किंतु अन्यैव । ( उपास्मै गायत इत्युपवती, प्रयुजो वाचो अग्रियः इत्यग्रियवती ) । **भा.** १०।५।१६। ५९–६१, * अपचितौ एकाहे बृहद्रथंतरयोः होतुः पृष्ठे एव समुच्चित्य निवेशः । १०।६।८।२४–२६, * अपचितौ एकाहे रथंतरादिधर्माणां प्रकृतिवत् व्यवस्था । ९।२।१७।४९–५०, * अपचितौ एकाहे श्रूयते 'उभे बृहद्रथंतरे कुर्यात्' इति । तत् समुच्चये सति न स्यात् । तस्मादपि विकल्पः । १२।६।४।१३, * अपचितौ बृहद्रथंतरे कुर्यात् । एकाहत्वात् विभागासंभवात् समस्ते सामनी । १०।६।८।२४–२६.

*** अपच्छेदः** । यत्र आद्ये प्रयोगे केवलमुद्गाता अपच्छिन्नः तन्निमित्ते तु द्वितीये प्रयोगे केवलं प्रतिहर्ता अपच्छिन्नः, तत्र आद्यप्रयोगगता द्वादशशतदक्षिणा उद्गात्रपच्छेदात् द्वितीयप्रयोगे प्राप्ता 'यत् पूर्वस्मिन् दास्यन् स्यात्' इति । सा द्वितीयप्रयोगगतप्रतिहर्त्रपच्छेदनिमित्तेन सर्ववेदसेन बाध्यते । **ननु** द्वितीयः प्रायश्चित्तरूपत्वेन आद्यप्रयोगाङ्गम् । 'यद्युद्गाता जघन्यः स्यात्' इत्यत्र चेदमुक्तं पूर्वप्रयोगाङ्गभूतैव दक्षिणा उत्तरप्रयोगे उत्कृष्यते, न तु आद्यप्रयोगे अदाक्षिण्यं विधीयते इति । ततश्च द्वादशशतदक्षिणा आद्यप्रयोगाङ्गत्वात् नैमित्तिकतदीयाङ्गद्वितीयप्रयोगाङ्गभूतं प्रतिहर्त्रपच्छेदनिमित्तं सर्ववेदसमेव बाधेत अङ्गगुणविरोधन्यायात् इति **चेन्न** । एवमुत्कर्षविधेः अदृष्टार्थत्वं प्रसज्येत । नहि उत्तरप्रयोगगतया दक्षिणया पूर्वप्रयोगौपयिकी आनतिः क्रियते । किंच पूर्वप्रयोगाङ्गत्वेनैव अवगता दक्षिणा तत आच्छिद्य उत्तरप्रयोगाङ्गत्वेन इह विधीयते अदाक्षिण्यवाक्यशेषत्वात् । न गिरागिरेतिवाक्यशेषेणेव गिरापदस्थानापत्तिः इरापदस्य । ननु आच्छिद्यविधानं चतुर्थे निरस्तं 'यदातिथ्यायां बर्हिः' इत्यादौ । न । तत्र हि आतिथ्याप्रकरणे प्रसूनं बर्हिर्विहितं तत्प्रकरणपाठे वैयर्थ्यापत्तेः आतिथ्याङ्गमेवावश्यम् । ततश्च तस्य निर्विषयताऽऽपत्तेः सार्वदिकमाच्छिद्यविधानं न युक्तमित्युक्तम् । इह तु आच्छिद्यविधानं पठ्यते एव नैमित्तिकत्वात् । निमित्ताभावे च तस्याः दक्षिणायाः पूर्वप्रयोगाङ्गत्वोपपत्तेरिति । किंच द्वितीयप्रयोगाङ्गकर्त्रानतिसिद्ध्यर्था इयं दक्षिणा तत्प्रयोगाङ्गभूतैव इत्युचितं नाद्यप्रयोगाङ्गभूतेति । आद्यप्रयोगाङ्गकर्त्रानतिसिद्ध्यर्थत्वाभावात् । अन्यप्रयोगस्य हि ऋत्विजः ( द्वितीयेयं ) संस्करोति ( दक्षिणा, कर्ता ) अन्यप्रयोगस्य चाङ्गं इत्यपूर्वा युक्तिः । ततश्च तद्दक्षिणालोपे प्रायश्चित्तमपि द्वितीयप्रयोगाङ्गमेव, नाद्यप्रयोगाङ्गमिति । तस्मात् आद्यप्रयोगगतोद्गात्रपच्छेदनिमित्तके द्वितीयप्रयोगे उत्कृष्टा द्वादशशतदक्षिणा द्वितीयप्रयोगगतप्रतिहर्त्रपच्छेदनिमित्तकसर्ववेदसदक्षिणावत् द्वितीयप्रयोगाङ्गमेव नाद्यप्रयोगाङ्गं, इति अङ्गगुणन्यायाविषयत्वात् न पूर्वया उत्तरा बाध्यते, किंतु अनपोदितेन पौर्वापर्यन्यायेन पूर्वैव उत्तरया बाध्यते इति सुस्थम् । इति आद्यप्रयोगे केवलोद्गात्रपच्छेदे, द्वितीयप्रयोगे च केवलप्रतिहर्त्रपच्छेदे पौर्वापर्यन्यायप्रवृत्तिनिरूपणम् । **बाल.** पृ. ११६–११७. *** अपच्छेदेन** उद्गातृकर्तृकेण विशिष्टस्यैवाह्नः आवृत्तिरहर्गणे, न तु सर्वस्याहर्गणस्य । **भा.** ६।५।२१। ५६, *** अपच्छेदस्य** उद्गातृकर्तृकस्य परत्वे तन्निमित्तकपुनःप्रयोगे सर्वस्वदानम् । ६।५।२०।५५. *** अपच्छेदे** उद्गातृजघन्यत्वे विचारः । 'यद्युद्गाता जघन्यः स्यात् पुनर्यज्ञे सर्ववेदसं दद्यात् यथेतरस्मिन्' (६।५।२०।५५) इत्यधिकरणे उक्तं, पौर्वापर्ये पूर्वदौर्बल्ये स्थिते चिन्त्यते, यदि प्रतिहर्त्रपच्छेदे जाते पश्चात् उद्गाता अपच्छिद्यते तदा पुनर्यज्ञे सर्ववेदसं देयं, उत द्वादशशतमिति । तदर्थं 'यद्युद्गाताऽपच्छिद्येत अदक्षिणो यज्ञः परिसमाप्यते' इति अदक्षिणता विधीयते, अनूद्यते वेति (चिन्तनीयम् ।) तत्र 'यत् पूर्वस्मिन् दास्यन्' इति क्रतुस्वाभाव्यात् द्वादशशतमेव देयं प्रतीयते । **न च** तस्य प्रतिहर्त्रपच्छेदनिमित्तकसर्ववेदसेन बाधात् सर्ववेदसमेव दास्यन् आसीत् इति उद्गात्रपच्छेदे तदेव पुनःप्रयोगे देयं इति **वाच्यम्** । तस्यापि उद्गात्रपच्छेदे विहितेन अदाक्षिण्येन बाधात् इति प्राप्तम् । **सिद्धान्तस्तु** । नात्र अदाक्षिण्यं विधीयते वाक्यभेदात् । किंतु पूर्वस्मिन् प्रयोगे दातव्या सती दक्षिणा तत उत्कृष्य उत्तरप्रयोगे निक्षिप्यते, तेन 'अदक्षिणो यज्ञः' इत्यनुवादः । पूर्वप्रयोगे च उद्गात्र-

पच्छेदे सति द्वादशशतं बाधित्वा सर्ववेदसमेव दातव्यमासीत्, अतस्तदेव पुनःप्रयोगे देयमिति। यत्र विशिष्टं नैमित्तिकं, तत्र विशेषबाधे विशिष्टमेव बाध्यम्। अतः प्रकृतेऽपि सर्वस्वदानेन पुनःप्रयोगविशेषणे पूर्वप्रयोगदेयदक्षिणादाने बाधिते पूर्वमुत्पन्नं नैमित्तिकं दानं विशिष्टपुनःप्रयोगविषयं कृत्स्नमेव बाध्यते इत्येव न्याय्यम्। बाल. पृ. ११५, * अपच्छेदे प्रतिहर्तृजघन्यत्वे विचार्यते यदि प्रतिहर्ता जघन्यः स्यात् किं भवतीति। प्रतिहर्त्रपच्छेदवति प्रयोगे विहितेन सर्ववेदसेन पूर्वजातोद्गात्रपच्छेदे निमित्ते प्राप्तं नैमित्तिकं बाध्यं इति पौर्वापर्यन्यायेन स्थिते, किं पुनःप्रयोगोऽपि बाध्यते, उत उत्कर्षविध्यर्थसिद्धं अदाक्षिण्यमात्रमिति। तत्र विरोधनिमित्तको बाधः, न च पुनःप्रयोगांशेन सह विरोधोऽस्ति सर्वस्वदानस्य, किंतु दक्षिणोत्कर्षेणैव पूर्वप्रयोगादाक्षिण्यद्वारा इति तावदेव बाध्यते। **उच्यते**। यत्र विशिष्टं नैमित्तिकं तत्र विशेषणबाधे विशिष्टमेव बाध्यमित्यतः प्रकृतेऽपि सर्वस्वदानेन पुनःप्रयोगविशेषणे पूर्वप्रयोगदेयदक्षिणादाने बाधिते पूर्वमुत्पन्नं नैमित्तिकं दानं विशिष्टपुनःप्रयोगविषयं कृत्स्नमेव बाध्यते इत्येव न्याय्यम्। तेन अयमत्र वाक्यार्थः, प्रस्तोतृप्रतिहर्त्रपच्छेदे दानविकारमात्रं, उद्गात्रपच्छेदे तु पुनःप्रयोगोऽपि इति। ततश्च नेतरयोः पुनःप्रयोग इति गम्यते। अन्यथा यौगपद्येऽपि 'तत्र विप्रतिषेधात् विकल्पः' (६।५।१८) इत्यधिकरणोक्तो विकल्पोऽपि उच्छिद्येत, पूर्वपक्षे एव तु समुच्चयः स्थिरः स्यात्। तत्रापि हि विशेषणेनैव सह सर्ववेदसस्य विरोधात् विकल्पः स्यात् पुनःप्रयोगश्च स्यादेव। पूर्वप्रयोगे च उभयत्र सर्ववेदसं दीयते इति यौगपद्येऽपि समुच्चय एव स्यात्, न विकल्पः इति तदधिकरणोच्छेदापत्तिः। तस्मात् विशेषणमात्रबाधं सर्ववेदसेन वदन् उपेक्षणीयः एव इत्युपरम्यते। पृ. ११६, ११७

**अपच्छेदन्यायः**। परप्राबल्यन्यायः। पूर्वदौर्बल्यन्यायः। पौर्वापर्यन्यायः। पौर्वापर्यबलीयस्त्वन्यायः। ज्योतिष्टोमे क्रमेणापच्छेदे उत्तरकालीनापच्छेदनिमित्तकं प्रायश्चित्तं कर्तव्यम्॥

**पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्**। ६।५।१९।५४॥

**भाष्यं**— यत्र आनुपूर्व्येण भवति अपच्छेदः तत्र किं पूर्वनिमित्तं प्रायश्चित्तं, उत उत्तरनिमित्तं इति भवति संशयः। किं प्राप्तं? पूर्वस्य बलीयस्त्वम्। पूर्वापच्छेदे यत् नैमित्तिकं प्राप्तं, तस्मिन् सति तद्विरुद्धं न शक्यं कर्तुम्। न चाशक्यमुपदेशार्हं भवति। पूर्वविज्ञानं प्राप्तमिति न संशयः। तस्मात् तदविरोधेन अन्यत् कार्यं, न विरुद्धम्। क तर्हि तत् स्यात्? यत्र केवलं निमित्तम्। तस्मात् पूर्वविज्ञानं बलवत्। **एवं प्राप्ते ब्रूमः**। पौर्वापर्ये पूर्वदौर्बल्यं स्यात्। कुतः? आख्यातेन हि योऽर्थः कर्तव्य इत्युच्यते, तत्र एतदनुबद्धं 'यथा शक्यते तथा' इति। तत् पूर्वविज्ञानबाधेन शक्यते, नान्यथा। तेन पूर्वविज्ञानं बाधित्वा इदं कर्तव्यं इति भवति शब्दार्थः। ननु पूर्वविज्ञाने इदमुपपद्यते, यदन्यत् विरोधकं विज्ञानं भविष्यति तन्मिथ्येति। अभूतं हि तत् न शक्यमाश्रयितुं इदं नाम तदिति। न च अप्रतिषिद्धे तस्मिन् न पूर्वविज्ञानं संभवति। तस्मात् अप्रतिषिद्धं भविष्यति। यदा तु तत् भवति, तदा पूर्वविज्ञानं बाधमानमेव उत्पद्यते। तदिदानीं बाधितं न शक्नोति उत्तरं बाधितुमिति। प्रकृतिवत्। यद्धि प्राकृतं वैकृतेन बाध्यते, तत्रापि एतदेव कारणम्। न अबाधित्वा पूर्वविज्ञानं वैकृतं संभवति इति। प्राकृतं च पूर्वम्। यतो विकृतौ तदपेक्षा। प्रत्यक्षत्वात् वैकृतं, आनुमानिकं प्राकृतं बाधते इति चेत्। प्रत्यक्षत्वेऽपि सति नैव बाधेत, यदि यथावर्णितोऽयमाख्यातार्थो न भवेत्। सति पूर्वविज्ञाने अशक्यत्वात् प्रत्यक्षं प्राकृतं बाधेतैव। तस्मात् परबलीयस्त्वं न्याय्यमेवेति।

**टुप्**—पौर्वापर्योत्पत्तावपि निमित्तयोः तन्नैमित्तिकप्राप्तौ पूर्वेण न्यायेन विकल्पः इति पूर्वः पक्षः। अत्र पूर्वबलीयस्त्वेन पक्षान्तरम्। ततः तद्दौर्बल्यात् परबलीयस्त्वं इति सिद्धान्तः। यद्वत् पूर्वं नित्यं परेण नैमित्तिकेन बाध्यते, तद्वत् नैमित्तिकविज्ञानं पूर्वं परेण नैमित्तिकविज्ञानेन बाध्यते। अतः इह उत्पन्नस्य पूर्वविज्ञानस्य विद्यमानशब्दस्य उत्तरेण विज्ञानेन स्मृत्या प्रत्यक्मृष्टस्य विरुध्यमानस्य चतुर्थे क्षणे बाधो भवति यथाशक्त्यनुबन्धादाख्याते। परंतु अनुत्पन्नत्वेन असत्त्वात् अपर्यालोच्य-

त्वात् अविरुद्धत्वात् अबाध्यम् । इह एवंलक्षणः श्रुतिलिङ्गादिविरोधे प्रमाणानुत्पत्तिलक्षणो बाधः । उपक्रमवशेन उपसंहारशब्दार्थकल्पनायां लक्षणापरिग्रहेण शब्दार्थविज्ञानस्य धर्मबाधः । नित्यनैमित्तिकयोः नित्यकाम्ययोः प्राकृतवैकृतयोश्च पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाधः । सामान्यविशेषेषु सामान्याश्रयस्य विशेषलक्षणया कार्यप्राप्तिः । विशेषाश्रयस्य तु श्रुत्या । श्रुत्या च लक्षणाप्राप्तं बाध्यते, तत्र वाच्यसंबन्धविज्ञानबाधः । वैकल्पिकयोस्तु एकनिमित्ताश्रयणात् । अपूर्वं हि धर्माणां प्रयोजकं निमित्तं च इति पौर्वापर्याभावात् इतरेतरबाधनम् । इह तु पूर्वदौर्बल्यमिति ।

**सोम**— पूर्ववदिहापि विकल्प इति प्रत्यवस्थानात् संगतिः । **प्राभाकरास्तु**— स्यादेतदेवं यदि कर्मज्ञापकशास्त्रवत् इदं सकृदेव बोधकं स्यात् । नैवं, किंतु नैमित्तिकशास्त्रं निमित्तोपजनने प्रवर्तमानं निमित्तस्याधिकारिविशेषणत्वात् अधिकारिद्वारकं सत् प्रयोगशास्त्रमिति प्रतिप्रयोगमावृत्त्यैव बोधकमिति प्रयोगभेदाश्रितेन पौर्वापर्येण संभवति बाधः इत्याहुः । तत्र प्रतिप्रयोगं शास्त्रप्रवृत्तौ प्रतिप्रयोगं एकैकशास्त्रव्यक्तिः संपन्ना इति तत्तत्प्रयोगप्रवृत्तशास्त्रव्यक्तेर्निरवकाशतया सुतरां बाधासंभव इति दूषणम् । **सूत्रे** प्रकृतिवत् यथा प्राकृतस्य कुशादेः वैकृतशराद्यपेक्षया दौर्बल्यं तद्वदित्यर्थः ।

**वि**— ' अपच्छेदक्रमे पूर्वः प्रबलः स्यादुतोत्तरः । , असंजातविरोधेन पूर्वेणोत्तरबाधनम् ॥ , निरपेक्षोत्तरज्ञानं जायते पूर्वबाधया । न बाधकान्तरं तस्य तेन प्रबलमुत्तरम् ॥'

**भाट्ट**— यदा क्रमेण निमित्तद्वयसंनिपातः, तत्र असंजातविरोधित्वात् आद्यनिमित्तकमेव नैमित्तिकम् । अथवा नात्र शास्त्रद्वयस्य सामान्यविशेषादिरूपतया बलाबलम् । नापि प्रमाणतदाभासरूपतया, उभयोरपि समतयैव प्रमाणत्वात् । अनुष्ठानवेलायां पौर्वापर्यं तु न शास्त्रार्थावधारणाय अलम् । अतो विकल्प एव । **इति प्राप्ते,** यथैव नित्यं द्वादशशतं नैमित्तिकेन सर्वस्वेन बाध्यते परत्वात्, तद्बलेन च द्वादशशतविधेः निमित्तरहितप्रयोगविषयत्वकल्पनं, तथैव परेणापि नैमित्तिकेन पूर्वस्य नैमित्तिकस्यापि परत्वाविशेषादेव बाधः । पूर्वनैमित्तिकविधेश्च परनिमित्तरहितप्रयोगविषयत्वकल्पना, तद्वदेव च अनुष्ठानकालीनमेव पौर्वापर्यं शास्त्रार्थावधारणवेलायां पूर्वमेव आलोच्य व्यवस्थितविषयत्वकल्पना, इति न कश्चित् विरोधः । न च संजातविरोधित्वेन, इह परविज्ञानस्य अनुत्पत्तिः, ज्ञापकस्य प्रमाणस्य क्लृप्तत्वेन तदयोगात् । नहि अत्र उत्तरं प्रमाणं पूर्वप्रमाणेन एकवाक्यतया स्वार्थबोधजनकं, येन तदुपजीवित्वेन तदानुगुण्येन वर्तेत । अतः उत्तरमेव निरपेक्षतया उत्पद्यमानं पूर्वप्रमाणस्य परनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वं कल्पयति । **न च** पूर्वमेव विज्ञानं परप्रमाणस्य पूर्वनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वं किमिति न कल्पयेत् । नहि अत्र नित्यापेक्षया नैमित्तिके इव निरवकाशत्वमस्ति, उभयोरपि एकैकनिमित्तकप्रयोगे सावकाशत्वात् इति **वाच्यम्** । पूर्वनिमित्तोपनिपातवेलायां परप्रमाणजन्यज्ञानस्य नियमेन उपस्थित्यभावेन धर्मिज्ञानाभावात् तद्गतस्य पूर्वनिमित्तवत्प्रयोगविषयत्वांशे मिथ्यात्वस्य कल्पयितुमशक्यत्वात् । परनिमित्तोपनिपातवेलायां तु पूर्वविज्ञानस्य चिकीर्षितविषयत्वेन पुरःस्फूर्तिकत्वात् धर्मिज्ञानसत्त्वेन तद्गतमिथ्यात्वकल्पने न किंचित् बाधकम् । **यदि तु** परनिमित्तोपनिपातोत्तरमेव पूर्वेण मिथ्यात्वकल्पनमित्याशङ्क्येत, **तथापि** यदा परनिमित्तोपनिपातोत्तरं पूर्वप्रमाणविस्मरणं तदा तेन उत्तरस्य मिथ्यात्वकल्पनाऽनुपपत्तेः अवश्यं भवन्मते पूर्वप्रमाणस्मरणं कल्प्यम् । मन्मते तु यदा दैववशात् पूर्वप्रमाणस्मरणं, तदा तस्य मिथ्यात्वकल्पनेऽपि विस्मरणे परनैमित्तिकस्यैव अनुष्ठानात् न किंचित् कल्प्यम् । तथा च अयमत्र क्रमः । परनिमित्तोपनिपाते तन्नैमित्तिकवाक्यार्थज्ञानं पूर्वविज्ञानस्मरणं च, ततः परज्ञानस्य तेन सह विरोधज्ञानं, ततः तेन अपेक्षाबुद्ध्यात्मकेन विनश्यदवस्थेन चतुर्थक्षणे पूर्वविज्ञानस्य भ्रान्तित्वकल्पना, विरोधज्ञानदशायां तदुत्तरं वा परनैमित्तिकवाक्यार्थस्मरणात् सा इति न विरोधः । अतः सिद्धं परेण पूर्वस्य बाध इति ।

**मण्डन**— ' परं पूर्वस्य बाधकम् । ' २०.

**शंकर**— ' क्रमे पूर्वं तु बाध्यते । ' २१.

* **अपच्छेदन्यायस्य स्वरूपं**— 'परस्यानन्यथोत्पादान्नाद्याबाधेन संभवः' इति । 'परनैमित्तिके सति तन्निमित्तशास्त्रस्य दुर्निवारप्रवृत्तित्वात् तस्य च पूर्वाबाधेन अनुत्पत्तेः पूर्वोपमर्देनैव उत्पत्तिनियमात् परनिमित्तकमेवानुष्ठेयं' इति च । **पराक्रमः.** ७।१–२. * एकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां तत्तन्नैमित्तिककर्तव्यतयोः बदरफले श्यामरक्तरूपयोरिव क्रमेण उत्पादात् रूपज्ञानद्वयवत् कर्तव्यताज्ञानद्वयमपि प्रमाणमेव, इति न परेण पूर्वज्ञानबाधे **अपच्छेदन्यायः** उदाहरणं इति यत्तु, तन्न । **परिमलः.** १।१।१ पृ. १०–११ ब्रसू. * प्रयोगविधेः विनियोगः उत्पत्तिसापेक्षत्वात् तयोः पूर्वभावित्वेन तन्निबन्धनस्वरस्य शीघ्रोपस्थितिकत्वेन असंजातविरोधित्वात् बलवत्त्वम् । अत एव प्रयोगविधेस्तत्सापेक्षत्वान्नापच्छेदन्यायोऽपि । **कौ.** ३।३।२।९ पृ. ३२०. * **अपच्छेदन्यायेन** पूर्वस्य परेण बाधमाशङ्क्य । **परिमलः.** १।१।१ पृ. ९ ब्रसू. * 'असद्वा इदमग्र आसीत्' इत्यत्र असच्छब्दस्य अनभिव्यक्तपरत्वेन अनिषेधात् न **अपच्छेदन्यायेन** प्राबल्यम् । **अद्वैत.** २।४।३५७. * नापच्छेदन्यायेन विधिस्थपदानां प्राबल्यं पूर्वापरमानयोः एकविशिष्टार्थप्रमापकत्वे सति उक्तन्यायाप्रवृत्तेः । **अद्वै. चंद्रिका.** ३५६. * निर्गुणवाक्यस्य सगुणवाक्यात् अपच्छेदन्यायेन प्राबल्यस्य प्रागेवोक्तेः । **अद्वैत.** २।४।३५२, ३५५. *'वेदा असृज्यन्त...उच्चैर्ऋचा क्रियते' इति नेहोपक्रमस्य प्राबल्यं, परत्वेन उपसंहारस्यैव अपछेदन्यायेन प्राबल्योपपत्तेः । न च तद्वदिह अर्थवादसापेक्षत्वेन पूर्वनिरपेक्षत्वाभावात् तन्न्यायाप्रवृत्तिः । विधेः स्तुत्यंशे तदपेक्षतायामपि वाच्यार्थपरत्वांशे तदपेक्षाऽभावात् । माऽस्तु वा इहापच्छेदन्यायप्रवृत्तिः । **कौ.** ३।३।१।१ पृ. ३१२. * विशिष्य नियमेन प्रतीतस्यापि पूर्वस्य परेण बाधे **अपच्छेदन्यायोदाहरणं** कृतम् । **परिमलः.** १।१।१ पृ. ९ ब्रसू. * 'त्रयो वेदा अजायन्त उच्चैर्ऋचा क्रियते'। **न च** उपक्रमगतस्यापि (वेदपदस्य) **अपच्छेदाधिकरणन्यायेन** परेण बाधः इति **वाच्यम्** । तस्य हि विधेयस्तुतिसापेक्षत्वेन अर्थवादैकवाक्यतायाः आवश्यकत्वात् पूर्वविरोधे परस्यानुत्पन्नत्वादेव अप्रवृत्तेः । **भाट्ट.** ३।३।१, * न चात्रापि (तेजो वै घृतं इत्यत्रापि) अपच्छेदाधिकरणन्यायेन उपसंहारप्राबल्यं शङ्क्यम् । तस्य भिन्नवाक्यविषयत्वस्य वक्ष्यमाणत्वात् । (इदं पूर्वपक्षे) । **कौ.** १।४।१९।२९ पृ. २९४. * विधिमन्त्रयोर्मध्ये उत्तरकालप्रवृत्तिकानां मन्त्राणामेव प्राबल्यं स्यात् अपच्छेदाधिकरणन्यायेन । 'पूर्वात् परबलीयस्त्वं तत्र नाम प्रतीयताम् । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' (६।५।१९।५४) इति वचनानुसारात् । **सनातनधर्मप्रदीपः.** विवाहप्रकाशे पृ. २९२. * उपक्रमगतस्य **अपच्छेदाधिकरणन्यायात्** परेण बाधः इत्यपि प्रत्युक्तम् । परस्य लब्धात्मकत्वे एव तन्न्यायप्रवृत्तेः । **कु.** ३।३।१।२. * अर्थवादानां पदैकवाक्यत्वात् अपच्छेदाधिकरण**न्यायाविषयत्वेन** उपक्रमस्थविधिप्राबल्यावसायात् उपसंहारस्थघृतादिपदस्यैव तदनुरोधेन वृत्तित्वं युक्तमाश्रयितुम् । **कौ.** १।४।१९।२९ पृ. २९३, * **न चैवं** तस्य (अङ्गाधिकारस्य) अप्रतिबद्धस्य तात्पर्यग्राहकत्वोपपत्तावपि प्रधानाधिकारस्यापि तथात्वेन तथाऽऽपत्तिरिति **वाच्यम्** । अप्रतिबद्धपरोत्पत्तौ तेन पूर्वबाधस्य **षाष्ठन्याय**नियतत्वात् । ३।१।१०।२० पृ. १९५.

## अपच्छेदयौगपद्ये अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्पः ॥

**तत्र विप्रतिषेधाद्विकल्पः स्यात् । ६।५।१८।५१ ॥**

**भाष्यं**— यदि उद्गातृप्रतिहर्त्रोर्युगपदपच्छेदो भवति, तत्र संदेहः किमदाक्षिण्यं सर्वस्वं वेति भवति विकल्पः, उत समुच्चय इति । किं प्राप्तं ? तत्र विप्रतिषेधात् विकल्पः स्यात् । विरुद्धौ ह्येतौ कल्पौ सर्वस्वमदाक्षिण्यं च । तस्माद्विकल्पो भवितुमर्हति ।

**प्रयोगान्तरे वोभयानुग्रहः स्यात् । ५२ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । न चैतदस्ति विकल्प इति, उभयोर्विधानात् । सर्वाङ्गोपसंहारी प्रयोगवचनः एवमुपपद्यते । विकल्पे हि पक्षे बाधः । तस्मात् समुच्चयः । अथ यदुक्तं विरोधात् विकल्प इति, उच्यते । प्रयोगान्तरे वा उभयानुग्रहः स्यात् । 'तेन पुनर्यजेत' इत्युच्यते । द्विस्तस्य प्रयोगः । तत्र एक-

स्मिन् प्रयोगे एकः कल्पः, अन्यस्मिन्नपरो भविष्यति। एवमविरोधः। तस्मादुभयं प्रायश्चित्तमिति।

**न चैकसंयोगात्। ५३॥**

**भाष्यं**— न चैतदेवम्। कुतः? एकसंयोगात्। स एव यागः पुनः क्रियेत। यदि अन्यतरेण विना वैगुण्यं इत्यवधार्येत, सर्वस्वे क्रियमाणे अदाक्षिण्याभावात् विगुणः स्यात्। न अन्यस्मिन् प्रयोगे क्रियमाणे अन्यः प्रयोगः अनुगृह्यते। न च अदाक्षिण्यस्य सर्वस्वदानस्य च प्राधान्यम्। गुणवता प्रयोगेण कर्म संबन्धयितव्यम्। तस्माद्विकल्पः।

**शा**— एकस्मिन्नेव प्रयोगे द्वयमापतति तदशक्यं समुच्चेतुं इति विकल्पः।

**सोम**— पूर्वोपजीवनात् **संगतिः**।

**वि**— ' समुच्चयो विकल्पो वा प्रायश्चित्तद्वये,-ऽग्रिमः। अदक्षिणात्वं पूर्वस्मिन् प्रयोगेऽन्यत्तु पश्चिमे॥, प्रयोगे पश्चिमे नास्ति निमित्तं तेन तद् द्वयम्। प्राप्तमेकप्रयोगेऽतो विरुद्धत्वाद् विकल्प्यते॥ '

**भाट्ट**— यौगपद्ये प्रायश्चित्तद्वयं अविरोधात् समुच्चयेनैव। प्रतिहर्त्रपच्छेदनिमित्तं सर्वस्वदानं उद्गात्रपच्छेदनिमित्ते पुनःप्रयोगेऽपि शक्यते एव कर्तुम्। अथवा दक्षिणोत्कर्षविशिष्टपुनःप्रयोगमात्रं तन्नैमित्तिकं पुनः अदाक्षिण्यमपि, तस्य अर्थप्राप्तत्वेन अनुवाद्यत्वात्। अतः पूर्वप्रयोगेऽपि सर्वस्वदाने न कश्चित् विरोधः। इति **प्राप्ते**, न तावत् पूर्वप्रयोगे एव सर्वस्वदानं, असत्यपि अदाक्षिण्यस्य नैमित्तिकत्वे दक्षिणोत्कर्षस्यैव पूर्वप्रयोगे सर्वस्वदाने अनुपपत्तेः। नापि पुनःप्रयोगे सर्वस्वदानं, प्रतिहर्त्रपच्छेदवति प्रयोगे एव तद्विधानात्। अन्यथा एकस्मिन् प्रयोगे प्रतिहर्त्रपच्छेदे क्रतोः तद्वत्त्वाविशेषात् तदुत्तरसर्वप्रयोगेषु सर्वस्वदानापत्तिः। निमित्तवति प्रयोगे नैमित्तिकस्य दैवादकरणे प्रयोगान्तरेऽपि तदापत्तिः। अतो विरोधात् अदाक्षिण्यसर्वस्वदाक्षिण्ययोर्विकल्प एव। पुनःप्रयोगमात्रं परं अविरोधात् भवत्येव। तेनापि विकल्पं केचिदिच्छन्ति।

**मण्डन**— ' नैमित्तिकविकल्पोऽत्र। अपच्छेदयौगपद्ये। '

**शंकर**— ' यौगपद्ये विकल्पः स्यात्। '

**अपच्छेदयौगपद्येऽपि प्रायश्चित्तम्॥**

**विभागश्रुतेः प्रायश्चित्तं यौगपद्ये न विद्यते।** ६।५।१७।४९॥

**भाष्यं**— ज्योतिष्टोमे प्रस्तोत्रुद्गात्रोः उद्गातृप्रतिहर्त्रोर्वा यत्र युगपदपच्छेदः किं तत्र प्रायश्चित्तं स्यान्नेति भवति संशयः। किं तावत् प्राप्तं? प्रायश्चित्तं यौगपद्ये न विद्यते। कुतः? विभागश्रुतेः। विभक्ते अपच्छेदे प्रायश्चित्तमामनन्ति। अपच्छेदश्चायं विभागः। स उभाभ्यां साध्यते। इह चैकेन साध्यमाने श्रूयते प्रायश्चित्तं उद्गात्रा प्रतिहर्त्रा वा। न च यदपरेण सह क्रियते, तत् केवलेन कृतं भवति। यदि हि केवलेन कृतं स्यात्, तेन कृते अपरः किं कुर्यात्? तस्मात् न युगपदपच्छिन्नयोः प्रायश्चित्तमिति।

**स्याद्वा प्राप्तनिमित्तत्वात् कालमात्रमेकम्। ५०॥**

**भाष्यं**— स्याद्वा प्रायश्चित्तं यौगपद्येऽपि। प्राप्तं हि निमित्तं अपच्छेद उद्गातुः प्रतिहर्तुश्च। यत्र हि द्वयोरपच्छेदः तत्र द्वावपि अपच्छिन्नौ, एकोऽपि, अपरोऽपि। संयुक्तस्य हि पृथग्भावः अपच्छेदः। स च उभयस्थोऽपि। एकेनापि तत्र च्छेदः क्रियते अनपेक्ष्य अपरं, अपरेणापि। कालमात्रं तु तत्रैकम्। न च कालैक्यात् अपच्छेदयोरैक्यं भवति। तस्मात् प्रायश्चित्तं युगपदपच्छेदेऽपि।

**शा**— ( सिद्धान्तः ) ' **स्यादेवं यदि कर्तृत्वं सापेक्षमुभयोर्भवेत्। एकैकस्य तु यत्नेन निरपेक्षेण जायते॥ विच्छेदस्तेन कर्तृत्वं द्वयोः प्रत्येकमस्ति नः। कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत्॥** '

**सोम**— पूर्वस्य शब्दार्थनिरूपणमात्रत्वात् न तेन संगतिः। पूर्वतरेण तु यथा ' भिन्ने जुहोति ' इति प्रायश्चित्तं न सर्वत्र, एवं अपच्छेदनिमित्तमपि न यौगपद्ये, इति प्रत्यवस्थानात् **संगतिः**। ' अध्वर्युं प्रस्तोता संतनुयात्, प्रस्तोतारमुद्गाता, उद्गातारं प्रतिहर्ता, प्रतिहर्तारं ब्रह्मा, ब्रह्माणं यजमानः, यजमानं प्रशास्ता ' एवंक्रमेण परस्परमन्वारभ्य बहिष्पवमानार्थं गच्छन्ति। **सूत्रार्थस्तु**— विभागश्रुतेः विभक्ते प्रत्येककर्तृकेऽपच्छेदे प्रायश्चित्तश्रुतेरित्यर्थः।

**वि**— ‘ उद्गातुः प्रतिहर्तुश्च सहापच्छेदनेऽस्ति न। प्रायश्चित्तमुतास्त्यत्र, न निमित्तविघाततः ॥, एकैकस्यैव विच्छेदकर्तृत्वान्न विहन्यते । कालमात्रं तु तत्रैकं प्रायश्चित्तमतो भवेत् ॥ ’

**भाट्ट**— ज्योतिष्टोमे दक्षिणादानात् प्राक् बहिष्पवमानार्थे तद्देशं कच्छं धृत्वा प्रसर्पतां उद्गातृप्रतिहर्तृप्रस्तोतॄणां मध्ये ‘यद्युद्गाताऽपच्छिन्द्यात् अदक्षिणं तं यज्ञमिष्ट्वा तेन पुनर्यजेत, तत्र तद्दद्यात् यत् पूर्वस्मिन् दास्यन् स्यात्, यदि प्रतिहर्ता सर्ववेदसं दद्यात्, यदि प्रस्तोता ब्रह्मणे वरं दद्यात्’ इत्यादिना तत्तत्कर्तृकापच्छेदे निमित्ते प्रायश्चित्तं श्रुतम् । तत्र अपच्छेदो नाम विभागरूपं फलमेव, यदि वा तज्जनिका क्रिया, सर्वथा तज्जनकक्रियाकर्तृत्वादेवात्र तत्कर्तृत्वव्यवहारः । तस्यां च अन्यतरक्रियाजन्ये उभयक्रियाजन्ये च विभागे एकैकस्यापि प्रत्येकमस्त्येव कर्तृत्वं इति उद्गातृमात्रनिष्ठक्रियाजन्यविभागे इव उभयनिष्ठक्रियाजन्यविभागेऽपि उद्गातृकर्तृकत्वव्यपदेशोपपत्तेः भवत्येव तत्रापि प्रायश्चित्तं इति उत्तरविवक्षया प्राप्यते ।

**मण्डन**— ‘ द्व्यपच्छेदेऽपि तद्विधिः । ’ १८. प्रायश्चित्तविधिः ।

**शंकर**— ‘ सर्वच्छेदे निमित्तता । ’ १९.

*** अपत्यानाम्** । अपराधनिमित्तस्तु तासां (स्त्रीणां) अशुभफलोपभोगो भवेत् , न तु अपत्यानां वर्णसंकरः । **वा.** १।२।१।२ पृ. १०९.

*** अपदेशो वा** ( अर्थस्य विद्यमानत्वात् । ३।४। १।२ ) इति सौकर्यात् प्रातिरभिधीयते । पूर्वाह्णे हि पृष्ठतः आदित्यं कृत्वा सुखं व्याप्रियन्ते इति प्रतीचीप्रातिः। **वा.** ३।४।३।११ पृ. ८९९.

**अपनयस्त्वेकदेशस्य विद्यमानसंयोगात् । ३।८।१८।३४ ॥**

सिद्धान्तसूत्रम् । ‘पुरोडाशशकलं ऐन्द्रवायवस्य पात्रे निदधाति, धाना आश्विनपात्रे, पयस्यां मैत्रावरुणपात्रे’ इति वचनात् पुरोडाशधानापयस्यानां सवनीयपुरोडाशगतानामेव एकदेशस्य अंशस्य अपनयः छित्वा अपनीय पात्रे निधानं कार्यम् । न तु पुरोडाशान्तरादीनां भागस्य । सवनीयपुरोडाशेषु विद्यमानाभिः पुरोडाशधानापयस्याभिः संयोगात् संस्कारस्य संबन्धात् । पात्रनिधानरूपः संस्कारः प्रकृतपुरोडाशादीनामेव, न ऐन्द्रवायवादेः । तुशब्दः पक्षान्तरनिरासार्थः । **के.**

**अपनयो वाऽर्थान्तरे विधानाच्चरुपयोवत् । ९।४।११।४३ ॥**

‘ यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्’ इत्यादिना उक्तायां पशुकामेष्टौ ‘विष्णवे शिपिविष्टाय शृते चरुं, इन्द्राय प्रदात्रे दधंश्चरुं’ इत्युक्तयोः दधिशृतयोः प्रदेयधर्माणां अपनयः कर्तव्यः । प्रदेयधर्मा न कर्तव्या इत्यर्थः । सधर्मकं ततं पयः शृतं नाम । प्रदानात् अर्थान्तरे चरुश्रपणे विधानात् । चरुश्रपणार्थं हि पयो दधि च, न प्रदानार्थम् । चरुपयोवत्, चरोः श्रपणार्थे पयः चरुपयः । यथा प्रायणीयायां चरोः श्रपणार्थे पयसि प्रदानधर्मा न क्रियन्ते तद्वत् । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । तस्मात् पशुकामेष्टौ दधिशृतयोः इज्याधर्मा न कर्तव्याः इति सिद्धान्तः ।

**लक्षणार्था शृतश्रुतिः । ४४ ॥**

पशुकामेष्टौ शृते दधनि च इज्याधर्मा न कर्तव्या इति सिद्धान्ते हेत्वन्तरमाह । सिद्धवत् शृतोपदेशात् इज्याधर्माः कर्तव्या इति यत् पूर्वपक्षी ब्रूते तन्न । यतः शृतश्रुतिः लक्षणार्था। श्रपणेन द्रव्यं लक्षयिष्यति । अर्थप्राप्तं हि चरौ श्रपणं, तत् पयसि संबद्धं लक्ष्यते। तस्मात् दधिशृतयोः प्रदानधर्मा भवेयुः इति सिद्धान्तः। **के.**

**अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति इति न्यायः** ॥ यथा ‘ महाजनो येन गतः स पन्थाः’ इत्युक्तेर्विपरीतं पन्थानमित्यर्थः । एवं च श्रुतिस्मृतिसदाचारबहिर्मुखजनो बन्धुभिस्त्याज्य एव। उक्तं च मनुना ‘ स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः ’ इति । उक्तं चाऽनर्घराघवे ‘ यान्ति न्यायप्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥ ’ इति । **साहस्री.** १३२.

*** ‘ अपबर्हिषः प्रयाजान् यजति ’** ‘ अपबर्हिषावनुयाजौ यजति ’ इति बर्हिर्यागद्वयमात्रवर्जनाक्रमात् ज्योतिष्टोमगते अवभृथे बर्हिर्यागौ वर्जयित्वा त्रिष्ठं

चोदकप्राप्तं सर्वमनुष्ठेयम्। **इति प्राप्ते ब्रूमः**। 'अग्नुमन्तावाज्यभागौ यजति' इति परिसंख्यानात् यावदुक्तमेवानुष्ठेयं, न सर्वम्। **वि. १०।७।१५.** * 'अपबर्हिषश्चतुरः प्रयाजान् यजति' 'अपबर्हिषौ द्वावनूयाजौ' इत्यनेन सौमिके अवभृथे प्रयाजचतुष्टयस्य अनुयाजद्वयस्य च वस्तुतो बर्हिःप्रयाजानूयाजव्यतिरिक्तस्य विधानं, विशिष्टविधिन्यायेन वा पर्युदासविशिष्टप्रयाजानूयाजविधिः, न तु बर्हिःप्रयाजानूयाजपर्युदासमात्रम्। **भाट्ट. १०।७।१३.**

* **अपभ्रंशः**— अविनष्टैः शब्दैर्भाषमाणस्य स्वर्गयज्ञोपकारौ भवतः। याज्ञे च कर्मणि अपशब्दैर्भाषमाणस्य अनृतमिव वदतः प्रतिषिद्धाचरणनिमित्तक्रतुवैगुण्यप्रसङ्गः। यथोक्तम्— 'वाग्योगविद् दुष्यति चापशब्दैः।' इति। **वा.** १।३।८।२७ पृ. २८१, * असाधुशब्दभूयिष्ठाः शाक्यजैनागमादयः। असन्निबन्धनत्वाच्च शास्त्रत्वं न प्रतीयते॥' मागधदाक्षिणात्यतदपभ्रंशप्रायासाधुशब्दनिबन्धना हि ते। 'मम वि हि भिक्खवे कम्मं वच्चइसी सवे।' तथा 'उक्खित्ते लोडम्मि उब्वे अत्थि कारणं, पडणे नत्थि कारणम्'। 'अणुभवे कारणं इमे सक्कडा धम्मा संभवन्ति सकारणा, अकारणा विणस्सन्ति।' 'अणुप्पत्तिकारणम्' इत्येवमादयः। ('मम अपि हि भिक्षवे कर्म वर्तते सर्वम्'। 'उत्क्षिप्ते लोष्टे ऊर्ध्वे अस्ति कारणम्। पतने नास्ति कारणम्' 'अनुभवे कारणं इमे संस्कृता धर्माः संभवन्ति सकारणाः, अकारणा विनश्यन्ति'। 'अनुत्पत्तिकारणम्' इति संस्कृतम्)। 'ततश्चासत्यशब्देषु कुतस्तेष्वर्थसत्यता। **दृष्टापभ्रष्टरूपेषु** कथं वा स्यादनादिता॥' १।३।६।१२ पृ. २३७, * अपभ्रंशः। एक एवायं शब्दः (गौः इत्यादिः) पुरुषाशक्तिप्रमादकारणादिभेदात् तांतां वर्णन्यूनातिरेकक्रमान्यत्वाद्यवस्थां अनुपतंस्तेनतेन अपभ्रंशरूपेण गृह्यमाणः तमेवार्थं प्रतिपादयति, इति न पर्यायकल्पनया वाचकशब्दान्तरत्वैकान्तसिद्धिः। किंच— '**देवदत्तादिनामानि निःसंदिग्धानि यानि च। बालैस्तत्तादिरूपेण नाश्यन्ते नैव संशयः॥**' तत्तादिशब्दादपि हि बालप्रयुक्तात् तदनुकारिकठोरबुद्धिप्रयुक्ताद्वा देवदत्ताद्यर्थप्रत्ययमुपलभमानः कथमिव प्रयोगप्रत्ययदर्शकाभ्यामेव वाचकत्वमध्यवस्येत्। '**अपभ्रंशाश्च ये के चिद्रूढा गाव्यादयो जने। तेऽपि गाव्यादिरूपेण नाश्यन्ते व्यभिचारिताः॥**' कतिषु चिदेव गाव्यादिषु चिरापभ्रष्टत्वात् रूढ्याशङ्कायां साधुत्वभ्रान्तिर्भवेत्। ये तु संप्रत्येव जडप्रायज्ञानकरणैः अभिनवगाव्यादिरूपेण विनाश्यशब्दाः प्रयुज्यमानाः प्रकृत्यनुसरणद्वारेण वा अर्थं प्रत्यापयन्तः उपलभ्यन्ते, तेष्वपि प्रयोगप्रत्ययदर्शनमस्ति इति अनैकान्तिकता। '**ततश्च त्वत्प्रयुक्तोऽयं हेतुरप्यपराधभाक्। अनैकान्तिकतादोषात् न ह्यसौ साधनक्षमः॥ अन्यथोच्चार्यमाणश्च शब्दोऽपभ्रश्यते यथा॥**' १।३।८।२५ पृ. २७६–७७. * **अपभ्रंशाः** गाव्यादयः सास्नादिमति अर्थे न प्रमाणम्। एकः शब्दः अविच्छिन्नपारंपर्यः अर्थाभिधायी इतरे अपभ्रंशाः। **भा.** १।३।८।२४, * एकमर्थमभिनिविशमानानां शब्दानाममीषां एकोऽनादिः अन्ये **अपभ्रंशाः**। १।३।८।२६, * गोशब्दमुच्चारयितुकामेन केन चित् अशक्त्या गावी इति उच्चारितम्। अपरेण ज्ञातं सास्नादिमान् अस्य विवक्षितः, तदर्थं गौः इति उच्चारयितुकामः गावी इत्युच्चारयति। ततः शिक्षित्वा अपरेऽपि सास्नादिमति विवक्षिते गावी इति उच्चारयन्ति। तेन गाव्यादिभ्यः सास्नादिमान् अवगम्यते। अनुरूपो हि गाव्यादिः गोशब्दस्य। १।३।८।२८. * गोशब्दस्य गाव्यादयः अपभ्रंशाः इति एवंविदः तत्त्वविदः। तेषां नैव गाव्यादिभ्योऽपि अर्थज्ञानमुत्पद्यते गोशब्दादेव अर्थं प्रतिपद्यन्ते इत्युक्तं व्याख्यातृभिः। **बृहती.** पृ. २३७. सर्वेऽप्येते अपभ्रंशा आदिमन्तः। तत्र केन चित् वृद्धेन गोशब्दमुच्चारयितुकामेन प्रमादात् गावी इत्युच्चारितम्। तत्रापरो वृद्धः अर्थप्रकरणादिवशेन तदीयां विवक्षामवगम्य 'गोशब्दमुच्चारयितुकामः गावी इत्युच्चारितवान्' इति उच्चिचारयिषितात् गोशब्दादेव गवार्थं प्रतिपद्यते, न पुनः गावीशब्दात्। **ऋजु.** पृ. २३८. * **देशभाषापभ्रंशपदानि** हि विप्लुतिभूयिष्ठानि न शक्यन्ते विवेक्तुम्। **वा.** १।३।५।१० पृ. २२६, * **शब्दापभ्रंशः, अर्थापभ्रंशः, प्रमादजः, अशक्तिजः।**

'यथा साध्वनुरूपत्वात् प्रमादाशक्तिजेष्वपि । जायते वाचकभ्रान्तिस्तथैव म्लेच्छभाषिते ॥' शब्दापभ्रंशवदेव गौणभ्रान्त्यादिप्रयोगनिमित्ता अर्थापभ्रंशा भवन्ति । ते शास्त्रस्थैरेव अविप्लुतार्थक्रियानिमित्तपुण्यार्थिभिः शक्यन्ते परीक्षिभिर्विवेक्तुम् । १।३।४।९ पृ. २१९–२०,

* **अपभ्रंशेन** कश्चित् विशेषः प्रतिदेशं अभिधीयते । यथा— रौहिणिका गौः इति । ३।४।४।१३ पृ. ९१९.

* **अपभ्रंशानां** साधुशब्दस्मारकत्वेन उपयोगः । **मणि.** पृ. १५१.

* **अपभ्रष्टाः** शब्दाः साधुशब्दस्मरणात् अर्थबोधकाः । 'गाव्यादिदर्शनात् गोशब्दस्मरणम् । ततः सास्नादिमान् अवगम्यते ।' **भा.** १।३।८।२९, * शाक्यादिग्रन्थेषु पुनः यदपि किंचित्साधुशब्दाभिप्रायेण अविनष्टबुद्ध्या प्रयुक्तं, तत्रापि प्रज्ञप्तिविज्ञप्तिपश्यतातिष्ठतादिप्रायप्रयोगात् किं चिदेव अविप्लुतं लभ्यते । किमुत यानि **प्रसिद्धापभ्रष्ट**देशभाषाभ्योऽपि अपभ्रष्टतराणि 'भिक्खवे' इत्येवमादीनि । द्वितीयाबहुवचनस्थाने हि एकारान्तं प्राकृतं पदं दृष्टं, न प्रथमाबहुवचने संबोधनेऽपि । संस्कृत–शब्दस्थाने च ( संस्कृत = सक्कत = संकड = सक्कड ) ककारद्वयसंयोगः अनुस्वारलोपः ऋवर्णाकारापत्तिमात्रमेव प्राकृतापभ्रंशेषु दृष्टं, न डकारापत्तिरपि । **वा.** १।३।६।१२ पृ. २३८–३९.

* **अपरपक्षादि**कालनियमः पित्र्यकर्मणाम् । **भा.** ६।८।६।२५.

* **अपररात्रे** व्रतं न नित्यं ज्योतिष्टोमे । **भा.** ६।८।९।२९.

* **अपराह्णे** 'आग्नावैष्णवं द्वादशकपालं निर्वपेत् सारस्वतं चरुं बार्हस्पत्यं चरुं' अध्वरकल्पायाम् । **भा.** ११।२।४।१९.

⌛ **अपराह्णच्छायान्यायः** । यथा दिनपरार्धच्छाया प्रथमं लघ्वी पश्चान्महती, तथा सज्जनमैत्री । उक्तं च— 'आरम्भगुर्वी क्षयिणी क्रमेण लघ्वी पुरा वृद्धिमती च पश्चात् । दिनस्य पूर्वार्धपरार्धभिन्ना छायेव मैत्री खलसज्जनानाम् ॥' इति । **साहस्री.** ३३२.

⌛ **अपरिग्रहं च प्रधानगामि इति न्यायः** ॥ ( यस्मिन् मन्त्रादौ कस्य चिद्देवताविशेषस्य परिग्रहः स्वीकारः निर्देशो नास्ति तत् अपरिग्रहं, तच्च यत् प्रधानं तस्मिन् गच्छति तत्प्रतिपादकं इत्यर्थः ) । **दुर्गाचार्यः** निरुक्तं ७।४ पृ. ६२१.

⌛ **'अपरिग्रहं च श्रेष्ठगामि' इति न्यायः** ॥ यस्मिन्नपि पक्षे नराशंसो यज्ञः, तस्मिन्नपि पक्षे यज्ञप्रभवत्वादस्य जगतो यज्ञस्य श्रैष्ठ्यम् । अपरि० गामि इति न्यायः । **दुर्गाचार्यः** निरुक्तं ७।४ पृ. ६२३.

* **अपरिमाणे च शिष्टस्य** ( अपरिमिते शिष्टस्य इति पाठः ) ६।७।१०।२१. इत्यधिकरणे, आधाने 'एका देया, षड् देयाः, चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयं, अपरिमितं देयं' इति आधानदक्षिणाकल्पभेदश्रुतौ अपरिमितशब्दः बहुत्वार्थकतया एकादिशब्दवत् दक्षिणाकल्पभेदपरः इति निर्णीतम् । **पराक्रमः**. २७।२.

* **'अपरिमितं देयम्'** अयं गुणप्रतिषेधः प्रत्यक्षः क्रत्वर्थः आधाने ( पूर्वपक्षे ) । **बाल.** पृ. ३२. * **अपरिमितत्वं** नाम आधाने दक्षिणायाः सहस्राधिकत्वम् । **भा.** ६।७।११।२३–२५., * अपरिमितत्वं नाम दानस्य उक्तसंख्याभ्यः संख्यान्तरवत्त्वं आधाने । ६।७।१०।२१–२२,

* **अपरिमितशब्दः** अनेकस्मिन् अशक्यपरिमाणे सति बहुषु रूढः । अपरिमितं अस्य धनं बहु इति गम्यते यथा कुशलः प्रवीणः इति । **अश्वकर्णशब्द**वत् समुदायप्रसिद्ध्या अपरिमितशब्दे **अवयवप्रसिद्धिः** बाध्यते । ६।७।१०।२२.

⌛ **अपरिमिताधिकरणम्** । आधाने अपरिमितवाक्येन संख्यान्तरसाधनकदानविधानम् ॥

**अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात्** । ६।७।१०।२१ ॥

**भाष्यं**— आधाने श्रूयते 'एका देया, षड् देयाः, द्वादश देयाश्चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयं, अपरिमितं देयं' इति । तत्र संदेहः किं यत्परिमितमेका देयेत्येवमादि, तत्र दातव्यमिति प्रतिषेधो विधीयते, उतापरिमितं नाम किंचित्, तस्य दानं विधीयते इति । किं प्राप्तम् ? अपरिमिते श्रूयमाणे ब्रूमः । शिष्टस्यैकादेः संख्ये-

यस्य या संख्या, सा प्रतिषिध्यते। कुतः? तच्छ्रुतित्वात्। परिमितशब्दश्रवणाद्गणितमवगम्यते। तच्चैकादिकम्। तस्य नशब्देन प्रतिषेधः क्रियते। तत्र श्रुतोऽर्थः कृतो भवति। इतरथा अपरिमितशब्दे प्रसिद्धिस्त्यज्येत। लक्षणया बहुत्वमस्यार्थः कल्प्येत। तस्मात् परिमितस्य प्रतिषेधः इति।

**कल्पान्तरं वा, तुल्यवत्प्रसंख्यानात्। २२॥**

**भाष्यं**— कल्पान्तरं वा स्यात्। अपरो दानकल्पो विधीयते। यथा एका देयेति दानविधिविकल्पः, एवमेषोऽपि दानविधिविकल्प एव स्यात्। तुल्यवत्प्रसंख्यानात्। तेन हि पूर्वेण तुल्यमेवेदं प्रसंख्यायते। काऽस्य पूर्वेण तुल्यता? प्रतिज्ञातस्यार्थस्यावगमिका श्रुतिरस्तीति। पूर्वत्र हि देयशब्दश्रुत्या दानं विधीयते इति, इहापि देयशब्दश्रुतिः। सा श्रूयमाणा शक्नोति दानं विधातुम्। प्रतिषेधे हि विधीयमाने वाक्यस्य व्यापारः। तच्च दुर्बलं श्रुतिं प्रति। तस्मात् कल्पान्तरम्। यच्चापरिमितशब्दे प्रसिद्धिर्बाध्यते इति, समुदायप्रसिद्धिरवयवप्रसिद्धेर्बाधिकैव समधिगता। **ननु** नात्र प्रसिद्धिः, लक्षणेयम्। यद्बहु, तन्न शक्यं परिमातुम्। तस्मादपरिमितत्वेन लक्ष्यते बहुत्वमिति। **तच्च न**, अनेकस्मिन् अशक्यपरिमाणे सति बहुषु रूढः। अपरिमितमस्य धनं, बह्विति गम्यते यथा कुशलः प्रवीण इति। बहुषु कुशानां लातुर्गुणेषु सत्सु निपुणतायामेव कुशलशब्दप्रयोगाद्रूढिशब्द एव भवति। बहुषु च वीणावादस्य गुणेषु सत्सु, निपुण एव प्रवीणशब्दो वर्तमानो रूढ इत्युच्यते। तस्मात् सत्यपि लक्षणात्वे श्रुतिसामर्थ्यात् रोहति शब्दः। (कलिकातापुस्तकेऽपि 'रोहतिशब्दः' इत्येव पाठः। परंतु 'रोहति शब्दः' इति भित्त्वा मुद्रितम्।) तेन श्रुतिसामर्थ्यात् अपरिमितशब्दः पूर्वस्मात् कल्पात् कल्पान्तरं रोहति आरोहति प्रतिपादयति इत्यर्थो ग्राह्यः)। तस्मात् समुदायप्रसिद्ध्या अपरिमितशब्दे अवयवप्रसिद्धिर्बाध्यते अश्वकर्णशब्दवत्। अतः कल्पान्तरमिति।

**शा**— निर्ज्ञातपरिमाणेष्वपि बहुत्वमात्रेणापरिमितशब्दप्रयोगः। तस्मादयमपि संख्यान्तरविशिष्टो दानविधिः।

**सोम**—यथा सर्वस्वं ददाति इति नापूर्वविधिः, एवमिह न संख्यान्तरविधिः इति प्रत्यवस्थानात् **संगतिः**। **सूत्रार्थस्तु**— अपरिमाणे श्रूयमाणे शिष्टस्यैकादेः या संख्या एकत्वादिका, तत्प्रतिषेधः स्यादिति।

**वि**— 'देयैका षट् शतं वाऽपरिमितं त्विति वार्येत्। एकादिकां पूर्वसंख्यां यद्वा संख्यान्तरे विधिः॥, नञ्–प्रयोगान्निषेधः स्याद् व्युत्पत्त्या मानशून्यता।, रूढ्या बहुत्वं नैकादिनिषेधोऽन्यविधिस्ततः॥'

**भाट्ट**—आधाने 'एका देया, षड् देयाः, द्वादश देयाश्चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयमपरिमितं देयम्' इति श्रुतम्। तत्र अपरिमितशब्दः परिमाणशून्यं अवयवव्युत्पत्त्या अभिधत्ते। न च परिमाणशून्यस्य दानं संभवति। इत्यतः प्रकृतपरिमाणशून्यत्वमर्थः। तेन प्रकृतपरिमाणप्रतिषेध एवायम्। **इति प्राप्ते**, ज्ञातपरिमाणेऽपि बाहुल्यमात्रेण लोके अपरिमितशब्दप्रयोगात् बाहुल्ये शक्तिः। ततश्च अश्वकर्णादिवत् रूढ्या योगबाधात् नायं पूर्वपरिमाणप्रतिषेधः, अपरिमितशब्दस्य नञ्समासत्वेन तदन्तर्गतस्य नञः क्रियान्वयव्युत्पत्त्यभावेन निषेधायोगाच्च, प्रकृतपरिमाणानां अनेकत्वबलेनैव विकल्पप्राप्तेः निषेधवैयर्थ्याच्च। प्रकृतपरिमाणातिरिक्तानियतपरिमाणकदानान्तरविध्यङ्गीकारे च लक्षणाद्यापत्तेः वरं बहुत्वावच्छिन्नद्रव्यकदानान्तरविधिरेवायम्। बहुत्वस्य च आपेक्षिकत्वेन पूर्वप्रकृतसहस्रावधिकत्वनिश्चयात् तदपेक्षया अधिकमेव अपरिमितम्।

**मण्डन**— 'देयं कल्पान्तरं बहु।'

**शंकर**— 'संख्याऽऽन्या चापरिमितम्।' १२

* **अपरिमिताधिकरणप्रतिपादितः न्यायः** 'अन्यार्थसंनिधानस्य आकाङ्क्षावशात् विशेषकत्वं' इति। **पराक्रमः**. २७।२, * श्रुतिलिङ्गादिष्वपि यस्य स्वयमेव आकाङ्क्षितः संकोचः, न तस्य तत्कृतो बाधः, यथा **अपरिमिताधिकरणे** स्थानानुसारेण श्रुतिसंकोचः। २९।१.

**अपरिमिते शिष्टस्य संख्याप्रतिषेधस्तच्छ्रुतित्वात्। ६।७।१०।२१॥**

आधाने 'एका देया, षड् देयाः, द्वादश देयाः, चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयं' इति विधाय 'अपरिमितं देयं' इत्युक्तम्। तत्र अपरिमिते अपरिमितशब्दे, पूर्ववाक्येषु शिष्टस्य विहितस्य गोद्रव्यस्य संख्येयस्य या एकत्वादिका सहस्रपर्यन्ता संख्या उक्ता, तस्याः प्रतिषेधः उक्तः स्यात्। न परिमितं अपरिमितं इति नञ्– समासे परिमितशब्देन पूर्वोक्तां एकत्वादिकामनूद्य नञ्शब्देन सर्वस्यास्तस्याः निषेधः कृत इति। तच्छ्रुतित्वात् तस्याः पूर्वोक्तसंख्यायाः परिमितशब्देन श्रवणात्। एवं च 'अपरिमितं देय' इत्यस्य परिमितं न देयं इत्यर्थः। न तु अपरिमितशब्देन का चित् नवीना संख्या उक्ता। इति पूर्वः पक्षः। अपरिमाणे इति पाठेऽपि स एवार्थः।

**कल्पान्तरं वा, तुल्यवत् प्रसंख्यानात्। २२॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्यन् सिद्धान्तमाह। अपरिमितशब्दे पूर्वविहितसंख्याप्रतिषेधो न कृतः किंतु कल्पान्तरं उक्तम्। यथा शतं इति एकः कल्पः, सहस्रं इत्यपरः कल्पः, तथा अपरिमितं इति अन्यः कल्पः। एकं, षट्, द्वादश, चतुर्विंशतिः, शतं, सहस्रं, अपरिमितं, इति तुल्यवत् प्रसंख्यानमिदं तुल्या गणना एषा। न तु केन चित् कस्य चित् प्रतिषेधः। अनेके दक्षिणापक्षा अत्रोक्ताः। तत्र अपरिमितं नाम अन्यतमो दक्षिणापक्षः इति। तस्मात् संख्यान्तरमेवेदं परिगणनारहितं इति सिद्धान्तः। पूर्वेषु पक्षेषु परिगणनं, अत्र पक्षे तु परिगणनं नास्ति इति विशेषः। **के.**

* 'अपरिमिते च शिष्टस्य' (६।७।१०।२१) इत्यधिकरणे अन्यार्थसंनिधानस्य आकाङ्क्षावशात् विशेषकत्वं षष्ठे वर्णितम्। तत्र हि– 'एका देया, षट् देयाः, चतुर्विंशतिर्देयाः, शतं देयं, सहस्रं देयं, अपरिमितं देयं' इति आधानदक्षिणाकल्पभेदश्रुतौ अपरिमितशब्दः बहुत्वार्थकतया एकादिशब्दवत् दक्षिणाकल्पभेदपरः इति निर्णयः। **पराक्रमः. पृ. २७.**

* **अपवादस्य** विषयं, उत्सर्गस्य अविषयं ज्ञात्वा बाधः। **सु. पृ. १३८.**

✠ **अपवादे निषिद्धे उत्सर्गोऽपि न प्रवर्तते। इत्ययं न्यायः** 'नहि देवदत्तस्य हन्तरि हते देवदत्तस्य पुनरुन्मज्जनं भवति' इति न्यायेन समानार्थकः। **नचैवं** अपवादाभावे पुनरुत्सर्गस्य स्थितिः इति निर्विषयं स्यात्। वृद्धौ इत्यादौ 'नादिचि' (पा. ६।१।१०४) इति पूर्वसवर्णे निषिद्धे वृद्धिश्च न प्रवर्तेत इति **वाच्यम्**। 'मिथोद्भवौ नदे' 'तौ सत्' इत्यादिलिङ्गेन 'अपवादे निषिद्धे उत्सर्गोऽपि न प्रवर्तते' इत्यस्य असार्वत्रिकत्वाभ्युपगमात्। तदेतत् तत्रतत्रोच्यते '**नो**त्सहते प्रतिषिद्धा सती बाधितुं' इति। **शब्दकौस्तुभः** इकोगुणसूत्रे. * **अपवादचिन्ताऽपि** प्रकृताऽव्यवधायिका प्रासङ्गिकचिन्तावत्। **सु. पृ. ९५०.**

✠ **अपवादन्यायः**। अधिष्ठाने भ्रान्त्या तदतिरेकेणाभावनिश्चयोऽपवादः। यथा– स्थाण्वादौ प्रतीतस्य पुरुषादेः स्थाण्वाद्यतिरेकेणाभावनिश्चय इति। **साहस्री. ४१९.**

* **अपवादाधिकरणे** प्रयोजनं न वक्तव्यम्। (अपवादेषु उत्सर्गस्यैव प्रयोजनम्।) **भा. २।१।७।३२.**

✠ **अपवादाभावादुत्सर्गस्थितिः इति न्यायः**। 'दृष्टसर्वनिषेधे तदेकदेशवस्तुधीरूपापवादाभावादुत्सर्गस्थितिः' इतिन्यायात् पूर्वदृष्टस्य वस्तुत्वप्रसङ्गात् अनवधिकनिषेधायोगात्। **न्यायनिर्णयः. ३।२।६।२२ ब्रसू.** * **अपवादाभावे पुनरुत्सर्गस्थितिः** इति न्यायमनुसरन्नाह। **सं. शारीरके** रामतीर्थः ३।३३६. * अपवादाभावे पुनरुत्सर्गस्थितिः इति न्यायेन पूर्वविद्धैव ग्राह्या इति निर्णयसिन्धुः चिन्त्यः। **पुरुषार्थचिन्तामणिः** चतुर्दशी.

✠ **'अपवादो यद्यन्यत्र चरितार्थः तर्ह्यन्तरङ्गेण बाध्यते'** (६६ परिभाषा पृ. २५२) **निरवकाशत्व**रूपस्य बाधकत्वबीजस्याभावात्। इति न्यायेन अन्तरङ्गस्य अपवादबाधकत्वात्। **भूति. पृ. १८८.** * इति न्यायेन प्रकृतिघटकवृत्तिधर्मस्य अनुकरणैकदेशेऽपि अतिदेशकत्वात्। पृ. १८८.

* **अपवाद्यचिन्ता** — यदपवादेन यच्चिन्ता क्रियते, तत्समासौ अपवाद्यचिन्ता बुद्धिस्थीभवति। **सु. पृ. ८०७.**

* अपशब्दाः । ' **कल्पसूत्रस्मृतिग्रन्थमीमांसागृह्यकारिणः । शिष्टा दृष्टाः प्रयुञ्जाना अपशब्दाननेकशः ॥** ' ' समानमितरच्छ्येनेन ' इत्यादि तकारान्तप्रथमान्तनपुंसकप्रयोगेषु **मशकेन** ( नाम प्राचीनसामकल्पसूत्रकारेण ) तत्रतत्र प्रयुक्तं ' समानमितरं ज्योतिष्टोमेन ' ' समानमितरं गवा ऐकाहिकेन ' इति । ( छन्दोग- ) सूत्रकारेणापि अभिहितं ' अहीने बहिष्पवमानैः सदसि स्तुवीरन् ' ( लाट्या. २।१।१ ) इति कर्त्रभिप्रायक्रियाफलवर्जितेऽपि ऋत्विक्कर्तृके स्तवने ' यजन्ति याजकाः ' इतिवत् परस्मैपदे प्रयोक्तव्ये व्याकरणमनपेक्ष्य आत्मनेपदं प्रयुक्तम् । तथा आश्वलायनेन ' प्रत्यसित्वा प्रायश्चित्तं जुहुयुः ' ( ८।१२।१४ ) इति समासेऽपि ल्यप् न प्रयुक्तः, ' आज्येनाक्षिणी आज्य ' ( ५।१९।६ ) इति असमासेऽपि प्रयुक्तः । तथा शिक्षायां नारदेन ( द्वितीयाध्याये २ कण्डिकायां श्लो.१ ) ' प्रत्यूषे ब्रह्म चिन्तयेत् ' इति गाव्यादिशब्दतुल्यः एव प्रयुक्तः । ( वाराणसीमुद्रणे तु ' जीर्णाहारः प्रबुद्धः सन् उषसि ब्रह्म चिन्तयेत् ' इत्येव पाठः । वार्तिकमतेन तु ' प्रत्यूषे ' इत्येव पाठः स्यात् । ' प्रत्यूषोऽहर्मुखं कल्यं ' इत्यमरात् प्रत्यूषशब्दो न गाव्यादितुल्य इति तु वक्तव्यम् । परंतु पिकतामरसशब्दयोः अमरे पाठेऽपि, नेमशब्दस्य च सर्वादिगणे पाणिनिना पाठेऽपि पिकनेमाधिकरणे तेषां म्लेच्छप्रसिद्धत्वमेवोक्तं, तद्वत् प्रत्यूषशब्दस्यापि मन्तव्यम् ) तथा मनुनाऽपि ' ज्ञातारः सन्ति मेत्युक्त्वा ' ( ८।५७ ) इत्यत्र ' सन्ति म इत्युक्त्वा ' इति वक्तव्ये व्याकरणमनपेक्ष्यैव संहिता कृता । तथा मीमांसायामपि ' गव्यस्य च तदादिषु ' ( ८।१।१८ ) इति गोर्विकारावयवविषयसाधुप्रयोगयोग्यः शब्दः अन्यत्रैव गवामयने प्रयुक्तः । तथा ' द्यावोस्तथेति चेत् ' ( ९।३।१९ ) इति द्यावापृथिव्योः इति वक्तव्ये लक्षणहीनमेव बहु प्रयुक्तम् । तथा गृह्यकारेण ' मूर्धन्यमिघ्राणं ' इति वक्तव्ये ' मूर्धन्यभिजिघ्राणं ' इति अविषये जिघ्रादेशः प्रयुक्तः । कार्त्स्न्येऽपि व्याकरणस्य निरुक्ते हीनलक्षणाः प्रयोगा बहवः, यद्वत् ' ब्राह्मणो ब्रवणात् ' इति ' संवत्सरं शशयानाः ' इत्येतन्मन्त्रगतमण्डूकविषयब्राह्मणशब्दनिर्वचने क्रियमाणे ( ९।६ ) वचनशीलत्वनिमित्ततां दर्शयता ' ब्रुवो वचिः ' ( पा० २।४।५३ ) इति वच्यादेशमकृत्वैव ब्रवणात् इति प्रयुक्तम् । ( ' संवत्सरं ' इति ऋग्व्याख्याने ' ब्राह्मणा व्रतचारिणो ब्रुवाणाः ' इति वाक्यं लभ्यते , ' ब्राह्मणो ब्रवणात् ' इति तु नोपलभ्यते ), ' **अन्तो नास्त्यपशब्दानामितिहासपुराणयोः । तथोभाभ्यादिरूपाणां हस्तिशिक्षादिकारिणाम्** ॥ ' युगपत् उभाभ्यां दन्ताभ्यां यः प्रहारः, स उभाभ्यः इति सर्वैः पालकार्य- ( काप्य ) राजपुत्रादिभिः व्याकरणानपेक्षमेव प्रयुक्तम् । ' **वेदेष्वपि प्रयोगास्ते भूयांसोऽध्येतृसंमताः । सामान्यं छान्दसं वाऽपि तेषां नास्त्येव लक्षणम्** ॥ ' **वा.** १।३।८।२४ पृ. २५९, * ' अपशब्दाश्च शब्देभ्यो भूयस्त्वेन व्यवस्थिताः ' । १।३।८।२४ पृ. २५३.

* ' **अपशवोऽन्ये गोअश्वेभ्यः** ' इत्यत्र पश्वन्तरनिषेधेन गोअश्वविधेः स्तुतिः । **वि.** १०।८।३. * ' अपशवो अन्ये गोअश्वेभ्यः पशवो गोअश्वाः ' इत्यत्र अजादीनां तत्रतत्र विहितत्वात् पशुकार्ये प्रतिषेधस्य पर्युदासस्य वा अनुपपत्तेः अर्थवादत्वम् । अपशुशब्दो घटादौ मुख्यः गवाश्वगतप्राशस्त्याभावरूपगुणयोगात् अजादौ गौणः सन् लक्षणया गवाश्वप्रशंसार्थः । **प्राचां** मते तु नञ्समासान्तर्गतपशुपदेन गवाश्वगतप्राशस्त्यं लक्षयित्वा नञा तदभावरूपो गुण उपस्थाप्यते इति विशेषः । सर्वथा प्रशंसा गौणीनिमित्तघटिका इति सिद्धम् । **भाट्ट.** १।४।१६. * ' **अपशवो वा अन्ये गोअश्वेभ्यः** ' इत्यादौ अपश्वादिशब्दाः गवादिस्तुत्यर्थाः । ' गोऽश्वान् प्रशंसितुं अन्येषां पशूनां निन्दा ' । **भा.** १।४।१२।२३-४.

**अपशूद्राधिकरणम्** । शूद्रस्य वैदिके कर्मणि नाधिकारः ॥

**चातुर्वर्ण्यमविशेषात्** । ६।१।७।२५ ॥

**भाष्यं**— अग्निहोत्रादीनि कर्माणि उदाहरणम् । तेषु संदेहः किं चतुर्णां वर्णानां तानि भवेयुः, उत अपशूद्राणां त्रयाणां वर्णानामिति । किं तावत् प्राप्तं ? चातुर्वर्ण्यमधिकृत्य यजेत जुहुयात् इत्येवमादिशब्दः उच्चरति

वेदः । कुतः ? अविशेषात् । नहि कश्चित् विशेष उपादीयते । तस्मात् शूद्रो न निवर्तते ।

**निर्देशाद्वा त्रयाणां स्यादग्न्याधेये ह्यसंबन्धः क्रतुषु ब्राह्मणश्रुतिरित्यात्रेयः । २६ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । त्रयाणामधिकारः स्यात् । कुतः ? अग्न्याधेये निर्देशात् । अग्न्याधेये त्रयाणां निर्देशो भवति, 'वसन्ते ब्राह्मणोऽग्नीनादधीत, ग्रीष्मे राजन्यः, शरदि वैश्यः' इति । शूद्रस्याधाने श्रुतिर्नास्ति इति अनग्निः शूद्रः असमर्थः अग्निहोत्रादि निर्वर्तयितुम्। तस्मात् 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्येवमादिषु शूद्रस्य प्रापिका श्रुतिर्नास्ति । ब्राह्मणादीनेवाधिकृत्य सा प्रवर्तते । ते हि समर्था अग्निमत्त्वात् । आहवनीयादयो न शूद्रस्य, अविधानात्, संस्कारशब्दत्वाच्च आहवनीयादीनाम् । तस्मात् अनधिकृतः अग्निहोत्रादिषु शूद्रः इति आत्रेयो मुनिर्मन्यते स्म ।

**टुप्**— वसन्तब्राह्मणकर्तृकत्वविशिष्टं आधानं अग्न्युत्पत्त्यर्थम् । स च ( अग्निः ) यज्ञाङ्गम् । न च शूद्रस्य अग्निरस्ति । विशिष्टेन कारणेन उत्पद्यमाना आहवनीयादयो भवन्ति अलौकिकत्वात् । न च यूपतुल्योऽयम् । तत्र ( हि ) बन्धनसमर्थं यत् तदवगतं, विशेषस्तु अनवगतः । स हि उपपदात् वाक्यान्तराद्वा अवधार्यते अयं यूप इति । इह तु होमेन आहवनीयस्य अनाक्षेपात् सामान्यावगतिर्नास्ति । तस्मात् अन्येन अनाक्षेपात् वेदात् योऽवगम्यते स आहवनीयः । स च वसन्तब्राह्मणकर्तृकः ( अवगम्यते ) । तेन अन्यकालकर्तृको न भवति आहवनीयः । तदभावे फलालाभात् शूद्रस्य अनधिकारः ।

**निमित्तार्थेन बादरिस्तस्मात् सर्वाधिकारं स्यात् । २७ ॥**

**भाष्यं**— यदुक्तं अनधिकारः शूद्रस्येति, तन्न । सर्वं हि अर्थिनमधिकृत्य यजेत इत्युच्यते । सः असति प्रतिषेधवचने शूद्रात् न व्यावर्तेत । यत्तु असमर्थः अग्न्यभावादिति, स्यादेव अस्याग्निः अर्थप्राप्तः, कामश्रुतिपरिगृहीतत्वात् । अत्राह, ननु अग्न्याधेयचोदना ब्राह्मणादिसंयुक्ता, न शूद्रस्येति । उच्यते । निमित्तार्थेन ताः श्रुतयः, न प्रापिकाः । कथं ? निमित्तत्वमेव [illegible] शब्दाः । ब्राह्मण आदधानो वसन्ते, राजन्यो ग्रीष्मे, वैश्यः शरदि इति ब्राह्मणादीनां वसन्तादिभिः संबन्धो गम्यते । तेन वसन्तादिसंबन्धार्थाः ब्राह्मणादयः इत्येव गम्यते । तथा च आदधानैः न वाक्येन शूद्रान् व्यावर्तितो भविष्यति । तस्मात् बादरिः सर्वाधिकारं शास्त्रं मन्यते स्मेति गम्यते ।

**टुप्**— आहवनीयादिभिः अर्थाक्षिप्तमाधानम् । नहि तेन विना आहवनीयादयः सन्ति । तस्मात् प्राप्तमाधानमनूद्य वसन्तादिर्गुणो विधीयते । तस्मानेन गुणेन सगुणं, शूद्रस्य ( तु ) गुणाभावादगुणमेव ।

**अपिवाऽन्यार्थदर्शनाद् यथाश्रुति प्रतीयेत । २८॥**

**भाष्यं**— अपिवेति पक्षो व्यावर्त्यते । यथाश्रुति एव प्रतीयेत, ब्राह्मणादयो हि आधाने श्रूयन्ते । तेन ब्राह्मणादिकर्तृकमाधानम् । वसन्तादिश्रवणाच्च वसन्तादिकालकम् । तथा चेदं शूद्रवर्जितानामेव अनुक्रमणं भवति । 'बार्हद्गिरं ब्राह्मणस्य ब्रह्मसाम कुर्यात्, पार्थुरश्मं राजन्यस्य, रायोवाजीयं वैश्यस्य' इति । शूद्रस्य साम नामनन्ति । तथा 'पयो व्रतं ब्राह्मणस्य, यवागू राजन्यस्य, आमिक्षा वैश्यस्य' इति । तथा आधाने 'अष्टसु प्रक्रमेषु ब्राह्मणोऽग्निमादधीत, एकादशसु राजन्यः, द्वादशसु वैश्यः' इति । एवं अब्रह्मसामकं अव्रतकं अप्रक्रमकं च शूद्रस्य प्रयुक्तमपि कर्म निष्फलं स्यात् । तस्मान्न शूद्रो जुहुयात् यजेत वा ।

**टुप्**—निमित्तार्थता न घटते । नहि अर्थादाधानं प्राप्नोति । नहीदं लोके विज्ञायते आधानेन आहवनीयो भवतीति । शास्त्रात् अवगम्यते । तच्च ( शास्त्रादवगम्यमानं ) विशिष्टकालकर्तृकं ( आधानं ) आहवनीयमुत्पादयति ( इति गम्यते ) । अन्यकालकर्तृकं कथमुत्पादयेत्, शास्त्रेण अचोदितत्वात् । ( किंच न निमित्तार्थानि ब्राह्मणादिश्रवणानि, किंतु प्रापकाण्येव इत्याह— ) आधानोत्तरकालाः कामश्रुतयः ( वसन्तादिविधिसिद्धमग्निमधिकृत्य प्रवर्तन्ते, न तु तदाक्षिप्तमाधानमधिकृत्य वसन्तादिविधिः । न च आक्षेपोऽपि ऐकान्तिकः इत्याह— ) न चाधानमेव केवलोऽभ्युपायोऽग्नीनाम् ( आहिताग्निभ्यः क्रीत्वाऽपि तत्संपादनसंभवात् । ब्राह्मणादिः

कर्ता, वसन्तादिः कालश्च इति– ) गुणद्वयविधानाच्च वाक्यभेदः स्थित एव । बार्हद्गिरं गवामयने समाम्नायते, अभीवर्तो ज्योतिष्टोमे, पार्थुरश्मं अश्वमेधे । विदेशपाठादनुदाहरणम् । ( तस्मात् एकत्रपाठात् 'पयो व्रतं' इत्याद्येवोदाहरणम् ) ।

**निर्देशात्तु पक्षे स्यात् । २९ ॥**

**भाष्यं**— नैतदेवं शूद्रस्य अग्न्यभावात् अनधिकारः अग्निहोत्रादिषु इति । अस्ति हि शूद्रस्य आधानं 'य एवं विद्वानग्निमाधत्ते' इति शास्त्रं सामान्येन । इदमपि निमित्तार्थं भविष्यति । तस्मात् सर्वाधिकारं शास्त्रं भवितुमर्हतीति ।

**वैगुण्यान्नेति चेत् । ३० ॥**

**भाष्यं**— अथ यदुक्तं अब्रह्मसामकं अव्रतकं अप्रक्रमकं च शूद्रस्य कर्म प्रयुक्तमपि फलं न साधयेत् विगुणमिति, तत् परिहर्तव्यम् ।

**न काम्यत्वात् । ३१ ॥**

**भाष्यं**— स एष परिहारः । काम्यत्वात् । कामयिष्यते शूद्रः अभीवर्तं नाम ब्रह्मसाम । तद्धि अनारभ्य किंचित् आम्नातमविशेषेण । 'चक्षुर्निमितमादध्यात्' इति अनियतप्रक्रमेषु शूद्रस्य नियम्यते । व्रतेऽपि 'मस्तु शूद्रस्य' इति संबन्धदर्शनात् अध्यवसीयते । मस्तु एव शूद्रस्य ( दधिभवो मण्डः मस्तु ) । तस्मात् चातुर्वर्ण्यमधिक्रियेत ।

**संस्कारे च तत्प्रधानत्वात् । ३२ ॥**

**भाष्यं**— व्रते च विशेषोऽवगम्यते तत्प्राधान्यम् । पुरुषप्राधान्यं हि व्रते । किमतो यत् पुरुषप्रधानता ? एतदतो भवति, पुरुषप्रधानः संस्कारो न शक्नोति अनुपसंह्रियमाणः तस्याधिकारं व्यावर्तयितुम् । तत् कथमिति ? यजेत इति हि स्वर्गकामे अभिधीयमाने तत्कामः शूद्रो नाभिहितः इति कथं गम्यते ? किं हि स यागस्य पुरुषनिर्वर्त्यं न निर्वर्तयति । व्रतमिति चेत्, न, सामर्थ्योपजननाय हि तत् । यस्यैवोच्येत, तस्यैव तेन विना न सामर्थ्यं, नान्यस्य । एवमेव हि व्रतस्याङ्गभावः, यत् कर्तारं समर्थं करोति । यस्य तु तेन न प्रयोजनं, स तदनपेक्ष्यैव यागमभिनिर्वर्तयति । तस्मादपि न शूद्रवर्जनम् ।

**अपिवा वेदनिर्देशादपशूद्राणां प्रतीयेत । ३३ ॥**

**भाष्यं**— एवं न प्रापकाणि श्रवणानीत्युक्तम् । शक्यते तु वक्तुं प्रापकाणीति । न च सूत्रकारेण तत् व्यपदिष्टम् । नैमित्तिकेष्वपि तेषु सत्सु शक्य एव शूद्रपर्युदासो वक्तुमिति न तदादृतम् । हेत्वन्तरं व्यपदिष्टम् । अपिवेति पक्षव्यावर्तनम् । एवमपि सति नैमित्तिकेऽपि ब्राह्मणादिश्रवणे सति अपशूद्राणामेवाधिकारः । कुतः ? वेदनिर्देशात् । वेदे हि त्रयाणां निर्देशो भवति 'वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं' इति । वेदाभावात् असमर्थः शूद्रो यष्टुम् । तस्मात् नाधिक्रियेत ।

**टुप्**— 'वसन्ते गर्भाष्टमे ब्राह्मणमुपनयीत' इति वसन्तो गर्भाष्टमत्वं अन्ये च नियमा अध्ययनाङ्गम् । पुरुषस्य च 'स्वाध्यायोऽध्येतव्यः' इत्यध्ययनं विधीयते, न क्रतोः ( श्रुत्याद्यभावात् ) । अत ईदृश्या विशिष्टेतिकर्तव्यतया वेदोपादानं पुरुषार्थम् । क्रतुना अर्थात् वेदोऽपेक्षितः आत्मनिर्वृत्त्यर्थम् । अतः स वेदाध्ययनं प्रयोजयन् प्रसङ्गात् निराकाङ्क्षीक्रियते । अतो यादृशमध्ययनं तादृशेन ( क्रतूनां ) निराकाङ्क्षत्वात्, शूद्रस्य अध्ययनाभावात् अनधिकारः इत्यन्तर्णीताभिप्रायः सिद्धान्तवादी आह अपशूद्रमधिकारः इति ।

**गुणार्थित्वान्नेति चेत् । ३४ ॥**

**भाष्यं**— ( ननु ) गुणेनाध्ययनेन अर्थी शूद्रः अनुपनीतः स्वयमुपेत्य अध्येष्यते । तथाऽस्य सामर्थ्यं जनिष्यते इति ।

**टुप्**— इतरस्तु अविदिताभिप्राय आह, गुणार्थित्वान्नेति चेत् । क्रत्वङ्गमध्ययनं ( तत् अनुपनीतस्यापि शूद्रस्य संभवति । तस्मादनुपनीतः पठिष्यति ) ।

**संस्कारस्य तदर्थत्वाद्विद्यायां पुरुषश्रुतिः । ३५ ॥**

**भाष्यं**— उच्यते । विद्यायामेव एषा पुरुषश्रुतिः । उपनयनस्य संस्कारस्य तदर्थत्वात् । विद्यार्थं उपाध्यायस्य समीपमानीयते, नादृष्टार्थं, नापि कटं कुड्यं वा कर्तुम् । दृष्टार्थमेव सैषा विद्यायां पुरुषश्रुतिः । कथमवगम्यते ?

आचार्यकरणमेतदभिधीयते । कुतः ? आत्मनेपददर्शनात् । कथं पुनः नयतिः आचार्यकरणे वर्तते ? तदर्थसंबन्धात् । उपनयनं आचार्यकरणप्रयुक्तम् । वेदाध्यापनेन च आचार्यो भवति । तस्मात् वेदाध्ययने ब्राह्मणादयः श्रुताः । शूद्रस्य न श्रुतं वेदाध्ययनम् । अतः अवेदत्वात् असमर्थः शूद्रो नाधिक्रियते इति ।

**टुप्**-- संस्कारो विद्यार्थः । विद्या च पुरुषार्था इत्यत्र पूर्व एव न्यायो द्रष्टव्यः । ( वर्णितं ह्येतत् यथा अर्थज्ञानपर्यन्तमध्ययनं स्वाध्यायाध्ययनविधिना विधीयते, न तु तद्द्वारेण क्रत्वपूर्वपर्यन्तं, तन्मात्रपर्यवसानेनापि प्रयोजनावाप्तेः, न तदतिलङ्घनेन दूरस्थं क्रत्वपूर्वं यावद्गन्तव्यम् । तस्मात् स्वाध्यायविधिविहिता विद्या कामश्रुतिभिर्विद्यार्थिनीभिरुपजीव्यते । शूद्रस्य तु स्वाध्यायविधिप्रयुक्तविद्याभावात् अनधिकार इति ) ।

**विद्यानिर्देशान्नेति चेत् । ३६ ॥**

**भाष्यं**-- इति चेत् पश्यसि अवैद्यत्वादसामर्थ्यात् अनधिकृतः शूद्र इति । नैष दोषः विद्यानिर्देशात् । विद्यां निर्देक्ष्यति । अनुक्तमपि अध्येष्यते इति । शक्यते हि अनुक्तामपि अध्येतुम् । तस्मात् चातुर्वर्ण्यस्यापि अधिकारः ।

**टुप्**-- यस्य उपनयनादयः संस्कारा विहितास्तस्य ते भवेयुः । इतरस्तु अनुपनीतः पठिष्यति । न च क्रतुवैगुण्यं, उपनयनादीनां पुरुषार्थत्वात् ।

**अवैद्यत्वादभावः कर्मणि स्यात् । ३७ ॥**

**भाष्यं**— न चैतदस्ति शूद्रोऽध्येष्यते इति । प्रतिषिद्धमस्याध्ययनं ' शूद्रेण नाध्येतव्यं ' इति । अधीयानस्यापि अध्ययनफलं न भवति, दोषश्च जायते । अतः अवैद्यः शूद्रः । अस्याभावः कर्मणि इति सिद्धम् । अथापि वैद्यत्वेन सिध्येत् तथापि अनग्नित्वादभावः कर्मणि स्यात् । अथ कथमनग्नितेति ? प्रापकाणि हि ब्राह्मणादीनामाधाने वाक्यानि । **ननु** ' य एवं विद्वानग्निमाधत्ते ' इति आधानस्य विधायकं, तत्र ' ब्राह्मणो वसन्ते अग्निमादधीत ' इति निमित्तार्थानि वचनानीति गम्यते । **अत्रोच्यते** । ' ब्राह्मणोऽग्निमादधीत ' इति श्रुत्या विधानं गम्यते । ' य एवं विद्वानग्निमाधत्ते ' इति स्तुत्या । तत् आनुमानिकं प्रत्यक्षश्रुतात् दुर्बलम् । तस्मात् प्रापकाणि वचनानि । अतः शूद्रस्य अनधिकारः ।

**टुप्**— अनुपनीताध्ययने क्रतोर्वैगुण्यम् । कथं ? ' स्वाध्यायोऽध्येतव्यः ' इति वचननियमादिभिः अध्ययनं पुरुषार्थत्वेन अवगतं तादृशमेव प्रसङ्गात् क्रतुर्गृह्णाति । न च अन्यथाऽनुपपत्त्या आक्षिपति, अन्यथाऽपि उपपद्यमानत्वात् । अतो विशिष्टेन अध्ययनेन निराकाङ्क्षीकृतत्वात् अन्यादृशमध्ययनं न गृह्यते । यथा गोदोहनं दर्शपूर्णमासाङ्गप्रणयनेन नैराकाङ्क्ष्यात् बर्हिःप्रणयनेन विगुणं भवति, एवमिहापि अनियताध्ययनेन विगुणो भवति ( क्रतुः ) । अत आह— ' अधीयानस्यापि अध्ययनफलं न भवति ' इति ( भाष्यम् ) । द्रव्यार्जनानाक्षेपेऽपि अयमेव न्यायः । ( यथा अग्निविद्ये विध्यन्तरसिद्धे, न क्रतुविधिभिः प्रयुज्येते, तथा द्रव्यमपि पुरुषार्थत्वेनैव अर्जितं क्रतुविधिभिः अङ्गीक्रियते, न तु तैराक्षिप्यते इति ) ।

**तथा चान्यार्थदर्शनम् । ३८ ॥**

**भाष्यं**— अन्यार्थदर्शनं च भवति यथा न शूद्रस्याध्ययनमिति । किं लिङ्गं भवति ? ' पद्यु वा एतत् श्मशानं यच्छूद्रः, तस्माच्छूद्रसमीपे नाध्येतव्यं ' इति अनध्ययनं शूद्रस्य दर्शयति । तस्मात् अपशूद्राणामधिकारः । **ननु** आहवनीयात् विनाऽपि यागो वचनप्रामाण्यात् शूद्रस्य विधीयते । **उच्यते** । **नात्र यागसद्भावो विधीयते स्वर्गकामस्य । किं तर्हि ? स्वर्गफलता विशिष्टस्य यागस्य ।** तस्मात् असंभवः शूद्रस्य अग्निहोत्रादिषु ।

**शा**--किं अग्निहोत्रादिषु चतुर्णामपि वर्णानामधिकारः, उत अपशूद्राणां त्रयाणां इति । तदर्थं इदं विचार्यते, किं कामश्रुतिप्रयुक्तं विद्याऽर्जनं, उत स्वाध्यायविधिसिद्धविद्योपजीविन्यः कामश्रुतय इति । **' सत्यमध्ययनं नाङ्गं तत्कृत्वा त्वङ्गमर्थधीः । तद्वतः क्रतवो लब्ध्वा न तुर्यस्याक्षिपन्ति ताम् ॥ '**

**सोम**--यजमानविद्यया अनुष्ठानसिद्धेः क्रिया विद्याऽनाक्षेपात् मन्त्रवत्कर्मकर्तृत्वासंभवेऽपि, शूद्रस्य विद्याऽऽक्षेपसंभवात् अस्तु अधिकारः इति प्रत्यवस्था-

नात् **संगतिः** । कामश्रुत्यविशेषात् चातुर्वर्ण्यमधिकृतं इति **सूत्रार्थः** ।

**वि**—‘ शूद्रोऽपि यष्टा नो वा, स्यादवैधाध्ययनेन वा । उपदेष्टृमुखाद्वाऽस्य क्रतुवित्त्वेन यष्टृता ।। , त्रिवर्णैर्वेदविद्भिः कृतार्था विधयः क्रतोः । नाक्षिपन्ति चतुर्थस्य विद्यां तद्यष्टृता कुतः ।। ’

**भाट्ट**— यद्यपि कामश्रुतयः अविशेषेण प्रवृत्ताः, तथापि तासां लाघवाय आधानाध्ययनविधिसिद्धाग्निविद्योपजीवकत्वस्य द्वितीये साधितत्वात् शूद्रस्य तदाक्षेपकल्पनाऽनुपपत्तेः तस्य वेदाक्षरश्रवणप्रतिषेधाच्च अपशूद्राणां त्रयाणामेवाधिकारः, न शूद्रस्य अग्निसाध्ये तदसाध्ये च वैदिके कर्मणि । द्वितीयसिद्धस्यैव प्रयोजनार्थमधिकरणं इति नातीवात्र पूर्वपक्षादरः । अत एव सर्वत्र वेदे त्रयाणामेव वर्णानामनुकीर्तनम् । यत्तु ‘ पयो व्रतं ब्राह्मणस्य ’ इत्यादि वर्णत्रयमनुकीर्त्य ‘ मस्तु शूद्रस्य ’ इति कीर्तनं तत् मस्तु शूद्रस्य अनधिकारिणो भक्ष्यमुचितं न तु ब्राह्मणादेः इति तन्निन्दया पयआदिस्तुतिः । ( वस्तुतस्तु रथकारस्य आधाने, निषादस्य रौद्रेष्टौ, अवैदिके शान्त्यादिकर्मणि च शूद्रसामान्यस्य अधिकारसत्त्वात् तत्रैव ‘ मस्तु शूद्रस्य ’ इति वाक्यं सार्थकं भविष्यति इति वक्तुं युक्तम् । **के.** )

**मण्डन**— ‘ शूद्रोऽधिकारी नेज्यादौ । ’

**शंकर**— ‘ अपशूद्रं च सा मता । ’ सा अधिक्रिया ।

* **अपशूद्राधिकरणं** कर्माधिकारनिषेधकवचनाभावेऽपि अग्निसाध्येषु कर्मसु अग्न्यभावेन अनधिकारप्रतिपादनार्थम् । **कौ.** २।४।२।१९.

* **अपशूद्राधिकरणे** उक्तं स्वाध्यायविधिः अनिर्दिष्टकर्तृकत्वेन कर्तारमपेक्षमाणः प्रकृतोपनयनसंस्कृतान् ‘ किमर्थं वयमाचार्यनिकटं नीताः ’ इत्येवं प्रयोजनमपेक्षमाणान् ब्राह्मणादीनेव कर्तृत्वेन स्वीकुर्वन् तेषामेवाध्ययनं विधत्ते, न शूद्रस्य इति । **रसायनं.** पृ. ६२.

* अग्निहोत्रादिविषयः त्रैवर्णिकानेव विदुषोऽधिकुर्वन्ति । सोऽयमधिकारिनियमः **अपशूद्राधिकरणे** वक्ष्यमाणः अध्ययनविधिप्रसादलभ्यः । ( अपशूद्राणां शूद्रभिन्नानां त्रैवर्णिकानामेव वैदिककर्माधिकारः अध्ययनाधिकारः वेदार्थज्ञानाधिकारश्च इत्यस्यार्थस्य प्रतिपादकं अधिकरणं अपशूद्राधिकरणम् । **के.** ) **शा.** १।१।१ पृ.६.

* अध्ययनं अक्षरावाप्तिफलकतया अपशूद्राधिकरणे प्रतिपादितम् । **आभरणं.** ३।४।१।१२ ब्रसू.

* न चैवं शूद्रस्याप्याधानं शङ्क्यम् । ‘ अध्वराणां जनयथः पुरोगां ’ ‘ दर्शमहं पूर्णमासं यज्ञं यथा यजै ’ इत्यादिमन्त्रवर्णात् आधानस्य यज्ञार्थत्वावगमात्, ‘ तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः ’ इति तस्य यज्ञप्रतिषेधात्, शूद्रस्य अध्ययनविध्यभावात्, ‘ न स्त्रीशूद्रौ वेदमधीयातां ’ इति तस्य विद्याप्रतिषेधाच्च इति षष्ठे अपशूद्राधिकरणे स्पष्टं भविष्यति । **कु.** २।३।३।४.

* अविदुषः कर्मकर्तृत्वेन अविधानाख्यापशूद्राधिकरणवक्ष्यमाणहेतूक्त्यर्थतया नहि इति सूत्रावयवं व्याख्याय । **सु.** ३।७ पृ. ६२.

⌛ **अपसारिताग्निभूतलन्यायः** । भूतलात् अपसारितेऽपि अग्नौ तत्र उष्णता उपलभ्यते तद्वत् । **साहस्री.** २८७. * अपसारिता० न्यायः । भूतले अनुभूयमान उष्णिमा भूतले अग्निमनुमापयति । **संग्रहः.**

* ‘ **अपहतपाप्मान ऋतवः**, असौ खलु वावादित्य उद्यन्नेषां पाप्मानमपहन्ति, तस्माद्यदहरेवैनं श्रद्धोपनमेत् अथादधीत अथ यजेत ’ इति वचने अथ यजेत इत्यनेन आधानानन्तर्यं सोमे विधीयते, यजेत इत्यनेन सोमस्यैव परामर्शात् । अत एव अथादधीत इत्यनेन आधाने एव कालबाध इति वक्ष्यते । **भाट्ट.** ५।४।३.

* **अपादाने** पञ्चमी कारकविभक्तिरूपा विनियोक्त्री श्रुतिः । यथा— ‘ अग्नेस्तृणान्यपचिनोति ’ । **बाल.** पृ. ४५. * **अपादानत्वं** क्रियानाश्रयत्वे सति क्रियाजन्यविभागाश्रयत्वम् । उदासीने घटे पर्णे च अतिप्रसङ्गवारणाय दलद्वयम् । **रहस्यं.** पृ. ११२. * अपादानत्वं पञ्चम्यर्थः । ‘ अपादाने पञ्चमी ’ इति सूत्रात् । अपादानत्वं च परसमवेतक्रियाजन्यविभागाश्रयत्वम् । विभागहेतुक्रियानाश्रयत्वे सति विभागाश्रयत्वं इति तदर्थः । तत्त्द्धात्वर्थताऽवच्छेदकफलजनकक्रियाऽनाश्रयत्वे सति

तादृशक्रियाजन्यफलनिरूपकत्वं तादृशक्रियानिरूपकत्वं च इति निष्कर्षः। **मणि** पृ. १४०.

※ **अपापश्लोकश्रवणादीनां** प्रशंसार्थत्वेन उपात्तानां फलत्वाभावः पर्णमय्यधिकरणे वक्ष्यते। **सु.** पृ. ३५.

※ **अपितु वाक्यशेषः स्यात्।** ( १०।८।१।४ ) अत्र पुनश्चोदयन्ति यद्येष प्रतिषेधः ( न प्रथमयज्ञे प्रवृ-ञ्ज्यात् इति ) तत एवं स्यात्। पर्युदासास्तु एवंविधाः इति दशमे वक्ष्यते ' अपि तु० ' इति । **वा.** ३।३। १२। ३३. पृ. ८७८.

⧗ **अपितु वाक्यशेषः स्यात्** ( अन्याय्यत्वाद् विकल्पस्य विधीनामेकदेशः स्यात् । १०।८।१।४ ) **इत्यनेन न्यायेन** ' न केसरिणो ददाति ' इत्ययं पर्यु-दासः। **शा.** ६।७।४. दशमाष्टमपादाद्यन्यायेन पर्युदास-त्वेन केसरिव्यतिरिक्तं सर्वस्वं ददाति इति तद्वाक्यशेष-त्वात् नियमेनैव अदानं केसरिणाम्। **सोम.** ( अपितु इति पूर्वपक्षव्यावृत्तिः । न येयजामहस्य अनुयाजेषु विकल्पः। नानुयाजेषु इति नशब्दः वाक्यस्य वाक्यैक-देशस्य अनुयाजशब्दस्य शेषः स्यात् । अन्याय्यत्वात् विकल्पस्य नानुयाजेषु इत्यादौ नञ्-सहितं अनुयाजादिपदं विधीनां ' यजतिषु येयजामहं करोति ' इत्यादीनां एकदेशः स्यात् ' नानुयाजेषु यजतिषु अनुयाजभिन्नेषु यजतिषु ' येयजामहं करोति इति न्यायसूत्रार्थः। **के.** )

※ **अपितु वाक्यशेषत्वादितरपर्युदासः स्यात्०** ( १०।८।७।१५ ) इति सिद्धान्तसूत्रेण पर्युदासत्वस्य वक्ष्यमाणत्वात्। **सु.** पृ. ९५०. **सूत्रार्थस्तु**–अपितु–शब्दः पूर्वपक्षव्यावृत्त्यर्थः। ' दीक्षितो न ददाति, न जुहोति, न पचते ' इति प्रतिषेधः ' अहरहर्दद्यात् ' ' अहरह-र्जुहुयात् ' ' अतिथिमाकाङ्क्षेत् ' इतिवाक्यस्य शेषः। एवं वाक्यशेषत्वात् इतरस्य दीक्षितादन्यस्य अदीक्षि-तस्य पर्युदासः स्यात्। दीक्षितो न ददाति इत्यादेः अदीक्षितो ददाति इत्यादिरर्थः। ' दीक्षितो न ददाति ' इत्यादौ प्रतिषेधे स्वीकृते तु विहितप्रतिषिद्धत्वात् विकल्पः स्यात्, स चान्याय्यः इति। **के.**

⧗ **' अपिवा कर्तृसामान्यात् प्रमाणमनुमानं स्यात्। '** ( १।३।१।२ ) अयमेव **स्मृतिन्यायः**। ' अपिवा कर्तृसामान्यादुक्तो न्यायश्च यः स्मृतेः। प्रमाणत्वे समानोऽसौ वेदाङ्गेष्वपि गम्यते ॥ ' **वा.** १।३।८।२७ पृ. २८६. न्यायसूत्रार्थस्तु –अपिवा-शब्दः स्मृत्यप्रामाण्यपूर्वपक्षं व्यावर्तयति। अनुमानं स्मृतिः श्रुतिमनुसृत्य मानत्वात् प्रमाणत्वात्। तथा च अनुमानं स्मृतिः धर्मे प्रमाणं स्यात्। कुतः? कर्तृसामान्यात् वैदिक-कर्मानुष्ठानस्मृत्योः कर्तॄणां समानत्वात् एकत्वात् इति। न तु ' श्रुतिस्मृत्योः कर्त्रैक्यात् इत्यर्थः ' अपसिद्धान्त-प्रसङ्गात्। वेदानामपौरुषेयत्वस्य साधितत्वात्। **के.**

⧗ **' अपिवा कर्मपृथक्त्वात्** तेषां तन्त्रविधानात् साङ्गानामुपदेशः स्यात् ' ( ११।२।३।१६ ) इत्येकादशे वक्ष्यमाण**प्रतिप्रधानावृत्तिन्याया**भावेऽपि । **सु.** पृ. ७३४. न्यायसूत्रार्थस्तु– अपिवा इति पूर्वपक्षव्यावृत्तिः। दर्शस्य पौर्णमासस्य च कर्मणोः कालभेदेन पृथक्त्वात् तयोरङ्गानां न तन्त्रं किंतु प्रतिप्रधानमावृत्तिः। प्रधान-त्रिकद्वये तु तेषां अङ्गानां तन्त्रेण विधानात् प्रधानानां साङ्गानां उपदेशः स्यात्। तस्मात् त्रिकद्वयस्य अङ्गानां न तन्त्रं, एकैकस्मिन् त्रिके तु अङ्गानां भवत्येव तन्त्रम्। इति। **के.**

⧗ **अपिवा कालमात्रं स्यात्** ( ४।४।३।६ )। नासोमयाजिनं कर्तारं प्रति पुरोडाशौ विधीयेयाताम्। कुतः? तन्न्यायत्वात्। स हि **न्यायः**, योऽस्माभुक्तः ' अपिवा कालमात्रं स्याददर्शनाद्विशेषस्य ' **इति**, इहापि स एव न्यायः ' **असोमयागकाले दर्शपूर्णमासयोः एतौ पुरोडाशौ भवतः**' इति। **भा.** १०।८।१४।४१. न्याय-सूत्रार्थस्तु– अपिवा इति पूर्वपक्षव्यावृत्तिः। 'पुरस्तादुपसदां सौम्येन प्रचरति ' इत्यादिना कालमात्रं विहितं स्यात्, अन्येभ्यः कालविधानेभ्यो विशेषस्य भेदस्य **अदर्शनात्** इति। **के.**

⧗ **अपिवा नामधेयं स्याद् यदुत्पत्तावपूर्वम-विधायकत्वात्। १।४।२।२॥**

**अत्र नैकस्यैवाधिकरणस्य उभयविचारात्मकत्वान्न पृथगायोजनमिति। विध्युद्देशान्तर्गतत्वेन साधनांशनिवेशे सति इदमिदानीं विचार्यते किं गुणविधित्वेनास्य साधनां-शनिवेशः, अथवा नामधेयत्वेन? इति। तत्रायं पूर्व-**

पक्षिणोऽभिसंधिः। प्रसिद्धेरर्थवत्त्वात् प्रवृत्तिविशेषकरत्वाच्च गुणविधित्वमेवास्य युक्तम्। तथाहि, यद्यपि लोके समुदायप्रसिद्धिर्नास्ति, तथापि 'ऊर्ध्वं भिनत्ति' इति व्युत्पत्त्या खनित्रादिद्रव्यमुद्भिदादिपदात् प्रतीयते एव। तथा सति च उद्भित्पदस्यार्थवत्त्वं भवति, यजिपदार्थातिरिक्तार्थप्रतिपादनात्। एवं भिन्नार्थत्वात् पुरुषप्रवृत्तावपि विशेषो भवति। तदुक्तं **'प्रसिद्धेर्बलवत्त्वेन प्रयोजनवशेन च। अधिकत्वात् प्रवृत्तेश्च गुणरूपं विधीयते॥'** इति। (वा. १।४।१ पृ. ३२१.) नामधेयत्वे तु अवगताऽपि अवयवप्रसिद्धिर्हातव्या। तथा यजिपदार्थानतिरिक्तार्थत्वादानर्थक्यम्। अनतिरिक्तार्थत्वादेव प्रवृत्तावपि न विशेषकरत्वम्। **ननु** गुणो विधीयमानः फले विधातव्यः, कर्मणि वा? तत्र न तावद्गोदोहनवत् फले, प्रणयनवत् प्रकृताश्रयाभावात्। नापि कर्मणि, प्रकृतकर्माभावादेव। **न च** दूरस्थज्योतिष्टोमानुवादेनैवायं गुणविधिः, दूरस्थहोमानुवादेन आहवनीयविधिवदिति **वक्तव्यम्**। उत्पत्तिशिष्टगुणावरोधेन निराकाङ्क्षे कर्मणि गुणान्तरविधानासंभवात्। आहवनीयविधाने तु अवरोधविरोधाभावादुपपन्नो विधिरिति। **न च** निष्कृष्टयागानुवादात् आकाङ्क्षाप्रवृत्तेर्गुणविधानोपपत्तिरिति **वक्तव्यम्**। यतोऽनुवादानां पूर्वावगतार्थविषयत्वात्, तदनुसंधाने च गुणान्तरावरोधात् आकाङ्क्षाविरहस्य तदवस्थत्वात्। एतच्च चित्राऽधिकरणे एवानन्तरं प्रतिपादनीयमिति। किंच ज्योतिष्टोमेऽपि 'सोमेन यजेत' इति सोमरूपगुणश्रवणात् उद्भित्तुल्यत्वमेव। अतः कथं तदनुवादेनापि गुणविधानम्। **न चैवं** सति गुणविशिष्टकर्मविधिरेवायमस्त्विति **वक्तव्यं**, विधिगौरवदोषात्, उद्भिद्वतेति मत्वर्थलक्षणाप्रसङ्गाच्च। तदुक्तं **'गुणो विधीयमानोऽपि फले कर्मणि वा भवेत्। विशिष्टविधिबुद्ध्या वा सर्वथा न च युज्यते॥'** इति। (वा. १।४।१ पृ. ३२३.)। **उच्यते**, — विशिष्टविधिरेवायम्। न चैवं विधिगौरवं मत्वर्थलक्षणा च दोषमावहति, सकलविशिष्टविध्युच्छेदप्रसङ्गात्। अथ अगत्या तत्र तथाऽऽश्रयणं, तदत्रापि समानम्। तेन यथा 'दशापवित्रेण ग्रहं संमार्ष्टि' इत्यादिष्वगत्याऽपि विशिष्टविधानं, तथेहापि उद्भेदनसमर्थखनित्रादिविशिष्टकर्मविधानमेवेति। **एवं प्राप्तेऽभिधीयते**। अयमभिप्रायः। भवेदेवमगत्या मत्वर्थलक्षणया विशिष्टविधिगौरवाश्रयणं, यदि नामधेयत्वेन न गतिर्भवेत्। तथाहि, 'उद्भिदा' इति करणवाचितृतीयान्तपदस्य करणीभूतयागसमभिव्याहृतस्य तत्सामानाधिकरण्यं प्रतीयते। तत्प्रतीतमपि हीयेत, यदि व्रीहिसोमादिवत् उद्भित्पदमर्थान्तरे निरूढं भवेत्। अवयवप्रसिद्धिस्तु 'ऊर्ध्वं भिनत्ति' इति व्युत्पत्त्या यथा खनित्रादिद्रव्ये, तथा पशूनामुद्भेदनमनेन क्रियते इति यागेऽपि। तेन यजिसामानाधिकरण्यात् उद्भिदादिपदानां यागनामधेयत्वमेव। तदुक्तं **'पदमज्ञातसंदिग्धं प्रसिद्धैरपृथक्श्रुति। निर्णीयते निरूढं तु न स्वार्थादपनीयते॥'** इति। अतोऽवयवप्रसिद्धेर्यागेऽपि समानत्वादप्रसिद्धार्थत्वं यदुक्तं, तत् तावत् परिहृतम्। यदपि यजिपदार्थानतिरिक्तार्थत्वादानर्थक्यमुक्तं, तदप्ययुक्तं, यजिविशेषप्रतीतिहेतुत्वेनैव नामधेयस्यार्थवत्त्वात्। अत एव अप्रवृत्तिविशेषकरत्वमपि प्रत्युक्तं, विधित्सितयागविशेषप्रतिपादनेनैव प्रवृत्तिविशेषकरत्वादिति। **ननु** अर्थविशेषप्रतिपादनेन हि पदान्तरस्य पदान्तरविशेषकत्वं भवति। यथा 'नीलमुत्पलं, शुक्लः पटः' इति। न च नामधेयस्य यजिपदार्थातिरिक्तमर्थान्तरमस्ति। अतः कथमस्य यागविशेषप्रतिपत्तिहेतुत्वम्। **न** च स्वात्मनैव नामधेयं यजिविशेषणमिति **वक्तव्यम्**। तस्य शब्दानभिधेयत्वात्। शाब्दाशाब्दयोश्चान्वयासंभवात्। **अथ** नामधेयं शब्दत्वसिद्ध्यर्थमात्मानं लक्षयतीत्युच्यते, **तदपि** पङ्कभिया पलायमानस्य नूनमशुचिपतनसमानम्। मत्वर्थलक्षणाभयेन हि गुणविधिपक्षमुपेक्ष्य नामधेयत्वमभ्युपगतम्। सा चेयं नामधेयत्वेऽपि स्वीकृता, किमपराद्धं गुणविधिना। किंच गुणविधौ मत्वर्थलक्षणायामपि औत्सर्गिकमत्वर्थपरत्वं न परिहीणं, इह तु आत्मलक्षणायां ततोऽपि जघन्यत्वमिति गुणविधित्वमेव ज्यायः। **उच्यते**—स्यादेवं यदि संज्ञा नीलादिपदमिव विशेषणीभूतस्वप्रतिपादितार्थोपश्लेषद्वारेणैव संज्ञिनं विशिनष्टीति ब्रूमः। किंतु यः खलु शब्दः सामान्यवाचिशब्दसम-

भिव्याहृतः तद्विशेषमभिदधाति, सा संज्ञेत्युच्यते । यथा 'देवदत्तो ब्राह्मणः' इति । स च विशेषो विशेषणस्य कस्य चित् संज्ञापदादनुपस्थितत्वात् एतच्छब्दवाच्यत्वेन संज्ञान्तरविषयव्यावृत्त्या उपलक्षितो विद्यमानविशेषणयोग्यः स्वमहिम्नैव संज्ञाशब्देनाभिधीयते । तेनैवंभूत एवायं यागविशेषः प्रतीयते, न तु विशेषणविशिष्टः । ततस्तथाभूतस्य विद्यमानविशेषणान्वयात् तद्विशेषणविशिष्टरूपसिद्धिः । अतो न किं चिदनुपपन्नमिति । **अत्र यद्यपि** उत्पत्तिवाक्यानां साध्यभूतधात्वर्थपरत्वेन न गुणविधौ मत्वर्थलक्षणादोषः, नापि नामधेयताहेतुः सामानाधिकरण्यं **तथापि** अधिकारवाक्यैकवाक्यतादशायामुद्भिदा यागेन स्वर्गमित्यन्वयसंभवादवश्यं मत्वर्थलक्षणादोषः, इत्यनेनैवाभिप्रायेण भाष्यकारेणात्र सकलोत्पत्तिवाक्यगतिप्रदर्शनार्थं फलपदं नोपन्यस्तमिति । **प्रयोजनं**—खनित्रादिद्रव्येणैव यागो यदि पूर्वः पक्षः । सिद्धान्ते तु—'अव्यक्तासु तु सोमस्य' ( जै. सू. ८।१।१६. ) इत्यादिषु सोमद्रव्येणैव । **सूत्रं तु**— 'उत्पत्तौ' प्रथमज्ञाने 'यदपूर्वं' न सोमादिपदवत् क्व चिदर्थे प्रसिद्धमुद्भिदादि, तत् 'नामधेयं स्यात्' । अन्यत्राप्रसिद्धत्वेन कस्य चित् गुणस्य 'अविधायकत्वात्' इति । **तौता.**

* **अपिवाऽन्यायपूर्वत्वाद्यत्र नित्यानुवादवचनानि स्युः** (७।४।२।५) । सौर्यादौ लौकिकी पार्वणस्थालीपाकेतिकर्तव्यता आग्रयणस्थालीपाकादौ दृष्टप्रवृत्तित्वेन अतिदेष्टव्या इति पूर्वपक्षिते बार्हस्पत्ये 'अर्धं बर्हिषो लुनाति' इति बर्हिषो लवनदर्शनं, सौर्ये च 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति प्रयाजदर्शनं वैदिकेतिकर्तव्यताऽनतिदेशेन युज्येत इत्याशङ्क्य 'अपिवा०' इति सूत्रेण यत्र बर्हिर्लवनं प्रत्यक्षविहितं, तत्र अर्धविधिः, होतृवरणनिषेधो नित्यानुवादः, प्रयाजवाक्यं कृष्णलविशिष्टप्रयाजविधानार्थं इति पूर्वपक्षी परिहरिष्यति । ( सूत्रे—सौर्यादौ वैदिकी इतिकर्तव्यता न सिध्यति अन्यायपूर्वत्वात् न्यायपूर्वकत्वाभावात् न्यायाभावात् । प्रयाजेप्रयाजे कृष्णलं इति लिङ्गं तु यत्र नित्यानुवादवचनानि स्युः तत्र बोधकम् । इति । ) **सु.** ७३७–३८.

* **अपिवा पौर्णमास्यां स्यात्** प्रकरणसंयोगात् गुणत्वान्मन्त्रो यथाप्रधानं स्यात् । ( १०।८।१३।५८ ) इति सूत्रेण प्रकरणस्य उपांशुयाजस्य 'उपांशु पौर्णमास्यां यजन्' इति शब्देन पौर्णमासीकालसंयोगात् पौर्णमास्यामेव उपांशुयाजः कार्यः । मन्त्रस्तु वैमृधयाज्यानुवाक्यावत् अमावास्याक्रमाम्नातोऽपि प्रधानानुसारात् पौर्णमास्यामेव स्यात् इत्युक्तम् । **सु.** पृ. ७५६.

* **अपिवाऽप्येकदेशे स्यात्** ( प्रधाने ह्यर्थनिर्वृत्तिर्गुणमात्रमितरत् तदर्थत्वात् ) ६।३।१।२. सत्यामपि विवक्षायां 'अपिवा०' इत्यनेन यथैव अशक्तः अन्यत् किं चिदङ्गं हाप्यते तथैव यजमानैकत्वमपि कदा चित् परिहाप्य द्वौ बहवो वा यजेरन् (इत्युक्तम्) । **सूत्रार्थस्तु**—अङ्गानां एकदेशे सत्यपि नित्यकर्मणः प्रयोगः स्यात् । हि यस्मात् प्रधाने कृते सति अर्थस्य फलस्य निर्वृत्तिर्भवति । इतरत् प्रधानादन्यत् अङ्गजातं तु गुणमात्रं, तदर्थत्वात् प्रधानार्थत्वात् । तस्मात् विगुणमपि नित्यं कर्म स्यात् । इति । **के.**

**अपिवा प्रयोगसामर्थ्यात्** ( मन्त्रोऽभिधानवाची स्यात् ) **इति द्वितीयमन्त्राधिकरणसूत्रन्यायेन** ( २।१।६।३१ ) सामर्थ्याधीनत्वात् श्रुतिकल्पनस्य, मुख्ये च निरपेक्षसामर्थ्यावगतेः, तस्यैव श्रुतेः प्रकल्पकत्वात् । **सु.** पृ. १०८४. न्यायसूत्रार्थस्तु—अपिवाशब्दः मन्त्रविधायकत्वपक्षव्यावर्तकः । आख्यातपदविशिष्टोऽपि मन्त्रः अभिधानवाची अभिधेयवाची स्यात्, न विधायकः । प्रयोगे प्रयोगगतार्थस्मारणे मन्त्राणां सामर्थ्यात् । इति । **के.** * अपिवा प्रयोगसामर्थ्यात् इत्यनेन हि न्यायेन अभिधेये तावत् विनियोगाय मन्त्राः श्रुतिं परिकल्पयन्ति । **वा.** ३।२।१।१ पृ. ७५०. * 'प्रकरणवतोऽर्थस्य संनिधाने ( मन्त्राः— ) यमर्थमामनन्ति स तस्य साधनभूतः इत्येव गम्यते' । **भा.** ३।३।७।१४ पृ. ८४३, तदेतत् '**अपिवा प्रयोग०**' **इत्यत्र वर्णितम् । वा.**

**अपिवा यजमानाः स्युर्ऋत्विजामभिधानसंयोगात्** ( तेषां स्यात् यजमानत्वम् । १०।६।१५।५२ ) **इति न्यायः** । सत्रे त एव वा यजमानाः ऋत्विजः, अन्ये वा भिन्नाः इति संशये, त एवेति न्याय्यम् । उक्तोऽत्र

न्यायः ' अपिवा यजमानाः ' इति । अनेन न्यायेन पश्यामः त एवेति । भा. १०।६।१५।५४. न्यायसूत्रार्थस्तु—अपिवाशब्दः ऋत्विजां यजमानान्यत्वं व्यावर्तयति । यजमाना एव ऋत्विजः स्युः, 'अध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयति' इत्यादौ ऋत्विजां अभिधानैः यजमानेषु संयोगात् संबन्धात् संबन्धदर्शनात् । तस्मात् तेषां ऋत्विजां यजमानत्वं स्यात्, यजमानानामेव च आर्त्विज्यं स्यात् इति । **के.**

* **अपिवाऽव्यतिरेकाद्** रूपशब्दाविभागाच्च गोत्ववदैककर्म्यं स्यान्नामधेयं च सत्त्ववत् । ( ६।३।३।१२ ) (सूत्रार्थस्तु—विहितद्रव्यापचारे प्रतिनिधिर्ग्राह्यः द्रव्यभेदेऽपि यागस्य अव्यतिरेकात् भेदाभावात्, रूपभेदाभावात् दर्शपूर्णमासादिशब्दभेदाभावाच्च । तस्मात् प्रतिनिधिना क्रियमाणेऽपि कर्मणि ऐककर्म्यं स्यात् । व्यक्तिभेदेऽपि गोत्वैक्यवत् । गोत्वादिसत्त्वस्याभेदात् यथा गौः इत्यादि नामधेयं न भिद्यते, तथा दर्शपूर्णमासादिनामधेयमपि न भिद्यते इति) । अत्र एकशब्दोक्तस्य प्रत्यभिज्ञानस्य सादृश्यनिमित्तकत्वाशङ्कानिवृत्त्यर्थं देवतोद्देशपूर्वकद्रव्यत्यागात्मकरूपाभेदात् तत्प्रतिपादकयज्यादिशब्दाभेदाच्च कर्मभेदे प्रमाणाभावात् न सादृश्यनिमित्तता युक्ता इत्युक्तम् । **सु. पृ. ३४३.** * नापि एकशेषेण तन्त्रोच्चरिताः सप्तदश प्राजापत्यशब्दाः संभवन्ति । शब्दैकत्वप्रत्यभिज्ञानात् । वक्ष्यति च एवंजातीयकानामेकत्वं ' अपिवाऽव्यति० ' इति । **वा.** २।३।१३।२६ पृ. ६२०. * अपिवाऽव्यतिरेकात् इति विहितद्रव्यापचारे द्रव्यान्तरेण कृतस्यापि यागस्याव्यतिरेकात् अष्टाकपालद्रव्यकत्व—अग्निदेवत्यत्वरूपाविभागाग्नेयशब्दाविभागाभ्यां प्रत्यभिज्ञानात् गोत्ववदैककर्म्यं इति वदन् सूत्रकृत् प्रत्यभिज्ञायमानानां अभेदं वक्ष्यति । **सु. पृ. ९६०.**

**अपिवा शेषभाजां स्याद्, विशिष्टकारणत्वात् । ६।४।२।३ ॥**

दर्शपूर्णमासादौ स्विष्टकृदर्थे अवत्तस्य नाशे किं पुनः शेषादवदेयं, किं वा नेति विचारे शेषादवदेयं इति उत्सूत्रे पूर्वपक्षे तन्निरासार्थः अपिवा—शब्दः । स्विष्टकृत् शेषकर्म । तदर्थमवत्तस्य नाशे स्विष्टकृदादीनां शेषभाजां कर्मणां लोपः स्यात् । हविर्द्रव्यस्य यः शेषः तं भजन्ति यानि कर्माणि, तानि शेषभाञ्जि । तेषां शेषभाजां लोपः स्यात् । विशिष्टकारणत्वात् । विशिष्टं प्रतिपत्तिरूपं कारणं येषां स्विष्टकृदादीनां तानि विशिष्टकारणानि । तेषां भावः विशिष्टकारणत्वं तस्मात् । नहि स्विष्टकृदादीनि अर्थकर्माणि, प्रतिपत्तिरूपाणि तु तानि । तेषां लोपेऽपि न का चिद्धानिः । अत्र लोपशब्दस्याध्याहारः । तदुक्तं श्लोकवार्तिके प्रतिज्ञासूत्रे ' शेषभाजां भवेल्लोप इत्यध्याहारकल्पना ' ( ५४ ) इति । **के.**

* **अपिवा शेषभाजां स्यात्** ( ६।४।२।३ ) **इति न्यायविरोधः** उपकारलक्षणं शेषत्वं इति मते । **वा.** ३।१।२।२ पृ. ६५७. * **अपिवा शेषभाजां स्यात्** इदमेव **नाशाधिकरणं** नाम । **के.**

**' अपिवा शेषभूतत्वात् तत्संस्कारः प्रतीयेत ' ( १०।१।६।११ ) । स एव न्यायः** इह (उत्तमप्रयाजे) यः स्थाण्वाहुतौ 'अपिवा शेष०' इति । शेषभूता आग्न्यादयः आज्यभागादिषु । **भा.** १०।१।८।१४ पृ. १८११. न्यायसूत्रार्थस्तु—साद्यस्क्रे स्थाण्वाहुतिर्न कर्तव्या इति अपिवाशब्दार्थः । स्थाणोः यूपशेषभूतत्वात् स्थाण्वाहुतिः तस्य यूपस्य संस्कारः प्रतीयेत । इति । **के.**

* **अपिवा श्रुतिसंयोगात्** । २।१।५।२४. अत्र प्रकृतदेवतालक्षणार्थत्वे सति अश्रुतिसंयोगदोषापत्तेः इति अकारप्रश्लेषेण सूत्रावयवो योजितः ( वार्तिके ) । भाष्यकृद्व्याख्यातपूर्वपक्षसूत्रपक्षे अकारप्रश्लेषं विना योजयति ' यत्तु ' इति ( **वा.** पृ. ४२७ ) । प्रक्रियते इति कर्मव्युत्पन्नं प्रकरणशब्दमङ्गीकृत्य प्रकृते माहेन्द्रयागाङ्गभूते पृष्ठाख्ये स्तोत्रे रथंतरचोदनोपस्थानात्मकेन संनिधिना क्लृप्तया श्रुत्या ऐन्द्रस्य प्रगाथस्याङ्गत्वेन संयोगात् इति सूत्रावयवो योजितः । **सु. पृ. ६५९.**

**अपिवा सत्रकर्मणि गुणार्थैषा श्रुतिः स्यात् । ७।३।२।५॥**

कर्मनामधेयं स्वदेशादन्यत्र क्वापि श्रूयमाणं धर्माणां ग्राहकं इति नियमस्य अपवादार्थं सूत्रम् । तदर्थं एव

अपिवाशब्दः । सत्रकर्मणि गवामयने 'वैश्वानरो ज्योतिष्टोमः प्रायणीयमहर्भवति' इति श्रूयमाणः प्रायणीयशब्दः द्वादशाहप्रायणीयधर्मान् न गृह्णाति । किंतु सत्रकर्मणि एषा प्रायणीयः इति श्रुतिः शब्दः गुणार्था स्यात् । प्रयन्ति आरभन्ते प्रवर्तन्ते अनेन सत्रे इत्यनया व्युत्पत्त्या प्रयाणक्रियारूपगुणबोधिका स्यात् प्रायणीयश्रुतिः । तस्मात् प्रायणीयशब्दो न धर्मातिदेशकः । इति सिद्धान्तः ।

**वाक्यशेषाच्च । ६ ॥**

प्रायणीयशब्दः धर्मान्नातिदिशति इत्यत्र ' ज्योतिरेव पुरस्ताद्दधाति ' इति वाक्यशेषो लिङ्गम् । येन ज्योतिः प्रायणीयं भवति, तेन ज्योतिः पुरस्तात् क्रियते इति वाक्यशेषार्थः । तस्मात् प्रायणीयशब्दो धर्मान् नातिदिशति इति सिद्धान्तः । इदं वाक्यशेषाच्चेति सूत्रं य–कु–पुस्तकयोरेवोपलभ्यते नान्यत्र । भाष्ये तु ' वाक्यशेषश्चास्य एतमेवार्थमाह ' इत्यादिना इदमेव सूत्रं व्याख्यातमिति स्पष्टम् । तस्मादस्माभिः संगृहीतं इति ज्ञेयम् । **के.**

**⌛ अपिवा सर्वधर्मः स्यात् तन्न्यायत्वाद् विधानस्य ( १।३।८।१६ ) इत्यनेन न्यायेन** वैदिके कर्मणि अनुमेयवेदस्य ' विहितं कर्म प्रक्रान्तं सत् नियमेन समापनीयं ' इत्येवंरूपस्य ' अपिवा सर्वधर्मः ' इति न्यायेन गृह्यादिसाधारण्यात् तदपि समापनीयम् ( पूर्वपक्षे ) । **सोम.** ६।२।४ पृ. ४८४. तन्न्यायत्वात्, तस्य सर्वधर्मत्वस्य उपपादको न्यायः ' विधेः सर्वविषयत्वं ' यस्मिन् कल्पे विधाने विधायके वाक्येऽस्ति तत् तन्न्यायम् । तस्य भावस्तन्न्यायत्वम् । ( विधानस्य अनुमितविधायकस्य शब्दस्य तन्न्यायत्वात् होलाकादिः सर्वधर्मः स्यात् । ) **सु.** पृ. २४५.

* **अपूपः** तण्डुलानां पेषणेन विना न निर्वर्तते । **भा.** १०।१।१२।५०.

* **अपूर्वं** अनुपपत्तिप्रमाणकम् । तत्र एकापूर्वकल्पनया उपपन्ने, न अदृष्टान्तरकल्पनायां प्रमाणमस्ति, यो हि अनेकान्यपूर्वाणि कल्पयति, कल्पयत्यसौ एकम् । तच्चेत् कल्पितं, अर्थवत्त्वाद्वाक्यस्य क्षीणा अन्यथाऽनुपपत्तिः नापूर्वान्तरस्य प्रमाणं भवति । तस्मात् एकमेव फलसंबन्धि, तस्माच्च अपूर्वमितरत् फलवदुपकारि इत्यध्यवसीयते । एवं स्थिते कतरदेकं संबध्यतां इति संदेहे अनेकादृष्टकल्पनापरिहारात् अनियमप्राप्तौ उच्यते । **'प्रधानं फलसंबन्धि तत्संबन्ध्यङ्गमिष्यते । प्रधानाङ्गत्वमेकस्य न चैकत्रावकल्पते ॥'** नहि एकस्मिन् वाक्ये तदेव कदा चित् फलसंबन्धात् प्रधानं, कदा चित् फलवदुपकाराङ्गं युज्यते, नियतरूपत्वात् अङ्गाङ्गिभावस्य । **वा.** २।१।१।१ पृ. ३७४. * अपूर्वं अवघातादिजन्यं नास्ति, तेषां दृष्टेनैव तण्डुलनिष्पत्त्यादि फलम् । अवघातनियमादृष्टं तु अपूर्वं विद्यते एव । **वि.** २।१।३, * अपूर्वं अस्ति । पूर्वाधिकरणे वर्णकाभ्यां यदिदमुक्तं ' अपूर्वस्य एकमेव पदं प्रत्यायकं ' ' तच्च यजेत इत्याख्यातान्तभावार्थपदं ' इति, तदनुपपन्नं अपूर्वसद्भावे मानाभावात्, यजेत इत्याभ्यां प्रकृतिप्रत्ययाभ्यां करणभावनयोरभिधानात् । अपूर्वाभावे कालान्तरभाविस्वर्गसाधनत्वं विनश्वरस्य यागस्यानुपपन्नमिति चेत् न, शास्त्रप्रामाण्येन तदुपपत्तेः । **इति प्राप्ते ब्रूमः** । दर्शपूर्णमासाभ्यां इति तृतीयाश्रुत्या तावत् यागस्य स्वर्गसाधनत्वं प्रमितम् । तत् यथोपपद्यते तथा अवश्यं भवताऽपि कल्पनीयम् । तत्र किं यावत्फलं यागस्यावस्थानं कल्प्यते, किंवा विनष्टस्यापि स्वर्गोत्पादकत्वम् ? नाद्यः, यागक्षणिकत्वस्य प्रत्यक्षसिद्धत्वात् । न द्वितीयः, मृतयोर्दम्पत्योः पुत्रोत्पत्त्यदर्शनात् । अतो मानान्तरविरुद्धात् भवदीयकल्पनात् अस्मदीयं अविरुद्धमपूर्वकल्पनं ज्यायः । **कल्पितेऽपि अपूर्वे तस्यैव स्वर्गसाधनत्वात् यागस्य स्वर्गसाधनत्वश्रुतिर्विरुध्येत इति चेत् न**, यागावान्तरव्यापारः अपूर्वं इत्यङ्गीकारात् । नहि उद्यमननिपातनयोः अवान्तरव्यापारयोः सत्त्वे कुठारस्य साधनत्वमपैति । यदि व्यापारवतो यागस्य नाशे व्यापारो न तिष्ठेत्, तर्हि यागजन्या काचिच्छक्तिः अपूर्वमस्तु । शक्तिव्यवधानेऽपि यागस्य साधनत्वमविरुद्धं, औष्ण्यव्यवहितेऽप्यग्नौ दाहकत्वाङ्गीकारात् । यथा अङ्गारजन्यमौष्ण्यं शान्तेष्वपि अङ्गारेषु जलेऽनुवर्तते, तथा यागजन्यमपूर्वं नष्टेऽपि यागे कर्तरि आत्मनि अनुवर्तताम् । तस्मादस्त्यपूर्वम् । २।१।२, * अपूर्वं एव फलप्रदम् । तदेव च धर्माणां प्रयोजकम् ।

विग्रहवत्यो देवतास्तु नैव सन्ति, अग्न्याद्यभावेऽपि अपूर्वसत्त्वादेव सौर्यादौ ऊहास्तित्वम् । ९।१।४. * अपूर्वं कर्मजन्या स्वर्गादिफलदा शक्तिः, स्वर्गादिफलस्य प्राक्तनी सूक्ष्मावस्था वा । इदमेव अदृष्टं नाम । **के.** * अपूर्वं नाम यागावान्तरव्यापारः किंवा यागजन्या का चिच्छक्तिः कर्तृसमवायिनी । **वि.** २।१।२. * अपूर्वं पुनरस्ति, यत आरभ्य शिष्यते— 'स्वर्गकामो यजेत' इति । इतरथा हि विधानं अनर्थकं स्यात्, भङ्गित्वात् यागस्य । **भा.** २।१।२।५ पृ. ३९०. * अपूर्वं फलसाधनस्य कर्मणः अवान्तरव्यापाररूपं अङ्गानां च फलवदुपकारसाधनानाम् । एषा अत्र प्रक्रिया— प्रथमं तावत् फलवाक्येन कर्मणः 'यागेन स्वर्गं कुर्यात्' इति । 'कथं विनश्वरेण फलं कर्तव्यं' इत्यपेक्षायां 'अपूर्वं कृत्वा' इत्युच्यते । 'कथमपूर्वं क्रियते' इत्यपेक्षायां 'अङ्गानुष्ठानप्रकारेण' इति । अतः पूर्वापरकालवर्तिभिः अङ्गव्यापारैः विषयीकृतस्य यागस्य अपूर्वसाधनत्वं न स्वरूपेण संभवति इति अपूर्वान्तरमपि परिकल्प्यते । दर्शपूर्णमासयोस्तु पक्षद्वयवृत्तिभ्यां समुदायाभ्यां युगपत् फलापूर्वारम्भायोगात् एकैकं प्रति समुदायापूर्वं कल्प्यते । तत्कथंभावापेक्षायां अग्न्यन्वाधानाद्यङ्गोपदेशः । ततः पूर्ववदेव पूर्वोत्तराङ्गसहितेभ्यस्तदुत्पत्तिः, न स्वरूपेण संभवति इति प्रतित्रिकं त्रीणित्रीणि उत्पत्त्यपूर्वाणि कल्प्यन्ते । यदि पुनः प्रथममेव षड्भ्यो यागेभ्यः षडपूर्वाणि कल्प्येरन्, ततः अपूर्वार्थत्वादङ्गानामङ्गोपकृतेभ्यो यागेभ्यः अपूर्वसिद्ध्यै पुनरपि षडपूर्वाणि कल्प्यानि स्युः इति गौरवं स्यात् । तस्मादेकमेव फलापूर्वम् । उत्पत्त्यपूर्वाणि तु प्रतिप्रधानं भिद्यन्ते । तथा अङ्गान्यपि क्रतूपकारकत्वेन स्वीकृतानि क्षणिकत्वात् न स्वरूपेण संहत्योपकर्तुं शक्नुवन्ति इति, अवान्तरव्यापाररूपाणि तावत् अपूर्वाण्यारभन्ते । ततः सर्वाणि संहत्य प्रधानस्य सामर्थ्योद्बोधनं फलारम्भौन्मुख्यरूपं अनुग्रहं परमोपकाराभिधानं जनयन्ति । तत्र तु अयं विभागः । संनिपत्योपकारकाणि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव शक्त्यतिशयं दधानानि तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते, तद्द्वारेण फलापूर्वे । आरादुपकारकाणि तु साक्षादेव उत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ । एवं प्रकारभेदे सत्यपि सर्वाण्यङ्गानि यागापूर्वनिष्पत्तौ अनुग्राहकाणि भवन्ति इत्येवं एकरूपेण इत्थंभावेन स्वीक्रियन्ते । तस्मादस्त्यपूर्वम् । **शा.** २।१।२.

**सोम— ननु** यथा आग्नेयादीनां प्रधानानां फलसाधनतानिर्वाहार्थं प्रथमं फलापूर्वमेकं सर्वप्रधानसाध्यं कल्प्यते, पश्चाच्च अङ्गसाहित्यसिद्ध्यर्थं प्रातिस्विकानि उत्पत्त्यपूर्वाणि कल्प्यन्ते, तथा अङ्गानामपि सर्वेषां क्रतूपकारजनकत्वनिर्वाहार्थं सर्वाङ्गजन्यमेकमपूर्वं कल्पनीयं, पश्चाच्च परस्परसाहित्यसिद्ध्यर्थं अवान्तरव्यापाररूपाणि उत्पत्त्यपूर्वाणि कल्पनीयानि इति कथं सर्वाङ्गजन्यं एकमपूर्वं ग्रन्थकारेण नोच्यते । अङ्गीकृतं च तथैव **न्यायसुधाकारैः । इति चेदुच्यते ।** यथा स्वर्गस्य कालान्तरभावित्वं एवं अङ्गजन्यस्य क्रतूपकारस्य न कालान्तरभावित्वं, ब्राह्मणसंतर्पणान्ताङ्गानुष्ठानानन्तरमेव तदुत्पत्तेः । ततश्च आग्नेयादिभिः कथं कालान्तरभावि स्वर्गरूपं फलं साधनीयं इति सर्वसाध्यैकफलापूर्वकल्पकजिज्ञासावत् इह कथं सर्वैरङ्गैः कालान्तरभाविक्रतूपकारः कर्तव्यः इति जिज्ञासाया अभावेन सर्वसाध्यमेकमपूर्वं न कल्प्यते, किंतु क्षणिकानामेषां कथं साहित्यं इत्येवात्र जिज्ञासा । सा च प्रातिस्विकापूर्वकल्पनामात्रेणापि शाम्यति । प्रधानेषु तु फलाकाङ्क्षाया उत्कटत्वात् तस्य च कालान्तरभावित्वात् तन्निर्वाहकजिज्ञासैव प्रथमसुदेति । सर्वेषां फलसाधनतानिर्वाहकं सर्वसाध्यमेव प्रथमं कल्प्यं इति वैषम्यम् । ...अङ्गजन्यः प्रधानस्यानुग्रहः फलजननसामर्थ्योद्बोधनात्मा नान्यः । स एव च परमोपकारः सर्वाङ्गापूर्वैरेव परस्परं संहतैर्जायते इत्येतावदङ्गार्थः । एवं च अवघातप्रयाजादिजन्यदृष्टादृष्टवत्तासंपादनमेव अवान्तरोपकारः इति ग्रन्थकाराशयः । २।१।२. * अपूर्वं भावशब्देभ्य एवावगम्यते, न द्रव्यगुणशब्देभ्यः । **भा.** २।१।१।१-४. * अपूर्वं यागसाधनद्वारेण धर्माभिलाषि । **टुप्.** ९।२।१५।४७ पृ. १७३५. * अपूर्वं विध्येकगम्यतया विधिभेदे भिद्यते । **वि.** १०।४।१. * अपूर्वं शब्दादेवावगम्यते अस्तीति । न प्राक् शब्दात् अन्येन प्रमाणेन उपसंख्यायते । **भा.** ९।१।२।३ वर्णकं २ पृ. १६४६. * अपूर्वं श्रुत्या

श्रुतार्थापत्त्या वा प्रतीयते । **वि.** ९।१।४. * अपूर्वं सावयवम् । **'आवृत्तिभिर्यथाऽध्याये संस्कारो भवति क्रमात् । वाक्यावयवरूपेण तथाऽपूर्वं भविष्यति ॥'** न चामूर्तस्य अवश्यं अवयवैर्न भवितव्यम् । अनयैव हि अर्थापत्त्या शक्यते वक्तुं सूक्ष्मावयवरूपेण तत् प्रतीयते इति । **वा.** २।१।२।५ पृ. ३९९. **सुधा**– आत्मादौ अमूर्ते निरवयवत्वदर्शनात् अपूर्वस्य अमूर्तत्वेन निरवयवत्वं वाच्यं, न चामूर्तत्वं निरवयवत्वे प्रयोजकं मूर्तेष्वपि परमाणुषु निरवयवत्वदर्शनात् अनेकप्रयोजककल्पनाऽऽपत्तेः। किंतु अवयवसंनिवेशानात्मकता इत्याशयः । ( प्रौढ्या सावयवत्वाभ्युपगमोऽयम् । ) पृ. ६११. * अपूर्वं हि धर्माणां प्रयोजकं निमित्तं च । **टुप्.** ६।५।१९।५४ पृ. १४७७. * 'कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा । योग्यता शास्त्रगम्या या परा साऽपूर्वमिष्यते ॥' पुरुषगता क्रतुगता वा योग्यता शास्त्रेऽस्मिन् अपूर्वमित्यपदिश्यते । ( शक्तिविशेषः ) । सा च श्रुतार्थापत्तिव्यतिरिक्तैः प्रमाणैः न गम्यते । **वा.** २।१।२।५ पृ. ३९४, * 'फलेन यस्य संबन्धस्ततोऽपूर्वं प्रकल्प्यते' । यदि हि फलसंबन्धमात्रपर्यवसाय्येव वाक्यं भवेत्, ततः कदा चिदपि सर्वाणि फलेन संबध्येरन् । इह तु तावन्मात्रेणासिद्धेः अपूर्वमन्यत् कल्पयितव्यम् । तच्च अनुपपत्तिप्रमाणकम् । २।१।१।१ पृ. ३७३–७४, * फलस्य हि सूक्ष्मसामर्थ्यरूपावस्था अङ्कुरस्थानीया पूर्वानुत्पन्ना उत्पत्तेः अपूर्वमित्युक्तम् । ( **वा.** पृ. ३९५ ) ३।१।४।८, * यच्च येषु धर्मेषु विधीयमानेषु अपूर्वमुपतिष्ठते, तत् तेषां प्रयोजकं भवति न यावत्किंचित् । ३।१।४।१० पृ. ६७०. * यत्र द्रव्यदेवते गुणभूते आख्यातस्य, तत्र अपूर्वम् । यत्र पुनः द्रव्यं देवता वा प्रधानं, तत्र तदर्थत्वात् आख्यातस्य नापूर्वम् । यद्देवतासंकीर्तनं मन्त्रेण, तत् दृष्टार्थाय । त्यागस्तु अदृष्टार्थाय । तस्माच्च अपूर्वम् । **टुप्.** ४।१।७।१९. * यदा तु सर्वाण्यङ्गानि कृतानि, तदा तज्जन्यापूर्वाणि संभूय प्रधानेषु उपकुर्वन्ति । **भा.** ११।१।१०।५७. * **अपूर्वेण** क्रियमाणं यागेनैव क्रियते, अपूर्वे वा कृते फलमेव कृतं भवति । **वा.** २।१।२।५ पृ. ३९७. * **अपूर्वस्य** अत्यन्तमदृष्टत्वात् एककल्पनया एव वाक्यस्योपपत्तौ अनेककल्पने गौरवं स्यात् । **वि.** २।१।१ वर्णकं १, * अपूर्वस्य अवघातादिनिमित्तत्वमस्ति । व्रीहिस्वरूपस्य च निमित्तत्वं नास्ति इति नीवारग्रहणे ऊहः कर्तव्यः । ९।१।१ वर्णकं ३. * अपूर्वस्य आश्रयः । सत्यपि चास्य ( आत्मनः ) चलनादिक्रियारहितत्वे कर्तृसंबन्धमात्रेण तद्देशान्तरप्रापणादिक्रियासंबन्धाभ्युपगमात् निष्क्रियताऽनुपालम्भः । **'आत्मैव चाश्रयस्तस्य क्रियाऽप्यत्रैव च स्थिता । आत्मवादे स्थितं ह्येतत् कर्तृत्वं सर्वकर्मसु ॥'** ह्यवदानप्रक्षेपादीनां हि सर्वेषां संकल्पादिद्वारेण आत्मैव कर्ता इत्यवधारितम् । अतश्च ते प्रलीयमानाः तत्र स्वर्गाद्युपभोगशक्तिमाधाय प्रलीयन्ते इत्यविरोधः । **वा.** २।१।२।५ पृ. ३९७–९८. * अपूर्वस्य इतिकर्तव्यताऽऽकाङ्क्षा भवति । द्रव्यस्वरूपस्य नेतिकर्तव्यताऽऽकाङ्क्षा । **वि.** ९।१।५, * 'अपूर्वस्य एव धर्मत्वात्' । २।१।१ वर्णकं १, * 'अपूर्वस्य एकमेव पदं प्रत्यायकम्' । इति प्रतिपदाधिकरणतात्पर्यम् । २।१।१. * अपूर्वस्य कर्मफलशक्त्यात्मकत्वम् । सर्वत्र शक्तिसामान्योपलम्भात् तद्विशेषमात्रत्वाच्च अपूर्वस्य । **वा.** २।१।२।५ पृ. ३९७. * अपूर्वस्य शाब्दं प्रयोजकत्वं सप्तमे वर्णितं इह ( नवमे ) आर्थिकी निमित्तता वर्ण्यते । **वि.** ९।१।१ वर्णकं ३. * भावशब्दाः **अपूर्वस्य** चोदकाः इति ब्रूमः । न तु कश्चिच्छब्दः साक्षात् अपूर्वस्य वाचकोऽस्ति । **भा.** २।१।१।१ पृ. ३७६. * वृत्त्यन्तरकारैः अपूर्वाभावेऽपि कर्मफलसंबन्धोपपत्तेः अपूर्वस्य निष्प्रमाणकत्वं इत्युक्तम् । **सु.** पृ. ५९३. * कृते कर्मणि अनन्तरं फलमनुपलभ्य कालान्तरफलोत्पादद्वारं **अपूर्वकल्पनम्** । **वा.** २।१।२।५ पृ. ३९२. * यजिनिमित्ता धर्मा **अपूर्वनिमित्ताः अपूर्वप्रयुक्ताश्च** । ( इति सिद्धान्तकोटिरुपन्यस्ता ) **भा.** ९।१।१।१ पृ. १६३८. * फलसंबन्धो हेतुः, **अपूर्वप्रतिपत्तेः** । संबन्धश्च आकाङ्क्षापूर्वकः । सा च भावशब्देभ्यः प्रसर्पन्ती दृश्यते न द्रव्यगुणशब्देभ्यः । तस्मात् आख्यातेभ्यः अपूर्वभावना गम्यते । तत्र च धात्वर्थस्य करणत्वप्रतिपत्तिः, प्रत्यासत्तेः । अतः तेनैव फलकरणभूतेन अन्यथाऽनुपपत्त्या अपूर्वं मान्यते इत्यव-

धार्यते । **वा.** २।१।१।१ पृ. ३७६. * **अपूर्वप्रयुक्तं** अभिमर्शनं चतुर्होतृपञ्चहोतृमन्त्राभ्यां न समुदायप्रयुक्तम्। **भा.** ९।१।५।११–१९, * अपूर्वप्रयुक्तं व्रीहिप्रोक्षणं दर्शपूर्णमासयोः, न तु व्रीहिस्वरूपप्रयुक्तम् । ९।१।५। ११–१९, * अग्निष्टोमे अग्नीषोमीयात् प्राचीनतत्तत्पदार्थ-जन्यापूर्वप्रयुक्तं उपांशुत्वं, न तु परमापूर्वप्रयुक्तम् । ९।१।६।२०–२२, २५, * **अपूर्वप्रयुक्तः** एवंजातीयको धर्मः उलूखलमुसलयोः प्रोक्षणं, न हन्तिपिषिप्रयुक्तम्। ९।१।२।२–३ वर्णकं १, * अपूर्वप्रयुक्तः दर्शपूर्णमासयोः 'त्रीन् परिधींस्त्रिसृ:०' इति मन्त्रः न तु परिधित्रित्व-प्रयुक्तः, इति सकृत् पठनीयः । ९।१।५।११–१९, * अपूर्वप्रयुक्तः शूर्पेण होमः, न शूर्परूपान्नहेतुप्रयुक्तः चातुर्मास्येषु वरुणप्रघासेषु । ९।१। ५।११-१९, * दर्शपूर्णमासयोः हविष्कृदाह्वानात् प्राचीना-वान्तरापूर्वप्रयुक्तः प्रणीतावाङ्नियमः । ९।१।७।२३–२४, * **अपूर्वप्रयुक्तौ** फलदेवताप्रकाशकौ मन्त्रौ। ९।१।३।४–५, * **अपूर्वप्रयुक्ताः** धर्माः अग्निहोत्र-दर्शपूर्णमासज्योतिष्टोमेषु । अपूर्वप्रयुक्तेषु सत्सु ऊहः सिध्यति । ९।१।१।१ पृ. १६३५, * **अपूर्वप्रयुक्तत्वं** वाक्यविनियुक्तेषु संनिपत्योपकारकेषु प्रोक्षणादिषु। ९।१। २।२-३, * अपूर्वप्रयुक्तत्वं श्रुतिविनियुक्तानां प्रोक्षणा-दिधर्माणाम्। ९।१।५।११–१९. * **अपूर्वप्रयुक्तत्वात्** आहवनीयादीनाम् । **टुप्.** ६।३।१।२ पृ. १४०९. * **अपूर्वप्रयुक्तत्वे** सत्यपि ( संस्काराणां औषधादि-धर्माणां ) दृष्टप्रयोजनद्वार एव संबन्धः अवकल्पते । **वा.** ३।१।४।७ पृ. ६६६.

* **अपूर्वभेदः** तत्र न प्रतिपत्तव्यः, यत्र द्रव्यचिकीर्षया गुणभावः । **वा.** २।१।४।१०. * अपूर्वभेदः द्वितीया-ध्यायार्थः । **के.**

* **अपूर्वविचारः** । ( कर्मणः आशुतरविनाशित्वात् ) प्रलीयमानकर्मलब्धोपजनः पूर्वापराङ्गोपपादितावस्थान्तरो देशकालप्रवासादितपरिणतिभेदः आनन्तर्यमपि कर्मणः अतिवर्तमानः कोऽपि ( कर्मणः ) अतिशयः कर्तरि ( क्रियात्मनि आश्रितः ), कर्मणः चिरभाविनः फलस्य साधनं कल्प्यते ( वृद्धैः ) । तदसौ न कर्मकाले वर्त-मानः । स्वकाले वर्तमानोऽपि कर्मणः अतिवृत्तत्वात् न कर्मसंबन्धितया अध्यक्षमीक्ष्यते । तदुक्तं '**फलसाधन-रूपेण तदानीं येन नास्त्यसौ**' इति । कर्मकाले तस्य भावित्वं, तत्काले च कर्मणः अभावः । ( चोदयति– ) कथं तर्हि कर्मणः साधनत्वं ( यतः– ) तत् ( अपूर्वं ) अन्यसमवायि ( कर्मणोऽन्यस्मिन् कर्तरि समवायि । परि-हरति– ) तदाहितत्वात् ( तेन कर्मणा कर्मकर्तरि आहित-त्वात् ) नहि स्वसमवाय्येव साधनं भवतीति कश्चिन्नि-यमः । कार्यानुमेयं तत् ( अपूर्वं ) यत्र कार्यालं तत्रैव युक्तम् । तदाहितत्वात् तस्य शक्तिः ( तेन कर्मणा आहितत्वात् तस्य कर्मणः शक्तिः, तदपूर्वम् ) । न चौपचारिकः कर्मणः साधनभावः, काष्ठादिषु तथैव सिद्धेः । ( न खलु काष्ठादीनामपि साक्षात् पक्तिसाधनता, किंतु औष्ण्यापेक्षस्य वह्निसंयोगप्रचयभेदस्य । अथ च 'काष्ठैः पचन्ति' इति मुख्यैव साधनता काष्ठानाम्। अग्नितण्डुलसमवाय्यपि वह्निसंयोगस्तत्पूर्वं इति । तथा यागादीनामपि ) । ननु न तत् ( अपूर्वं ) अस्तीति मन्यन्ते प्रमाणाभावात् । ननु च श्रुतार्थापत्तिः प्रमाणं, ( कर्मणः ) फलसंबन्धे चोदनाप्रामाण्यविघातात् । असिद्धो हि स तदा ( अपूर्वकल्पनायाः प्राक् कर्मफल-संबन्धः ) चोदनातः, अर्थापत्तितः सिद्धिं समासादयति इत्यर्थापत्तिकारणः स्यात् ( अर्थापत्तिप्रमाणकः स्यात् ) अन्यथा ( अनपेक्षाच्छब्दात् ) कर्मफलसंबन्धसिद्धेः अर्थापत्तिप्रसङ्गः । सिद्धे तस्मिन् किमन्यत् ( अपू-र्वात्, अनुपपद्यमानं ) अपेक्ष्य तत् ( अपूर्वं ) उप-कल्प्यते । नहि निरपेक्षा ( प्रतीतिः कल्पनायै प्रभवति ) अपेक्षायामपि यागफलसंबन्धप्रतीतौ अर्थान्तरं चेत् अपे-क्षेत, कथं तदप्रतिपत्तौ तत्प्रतिपत्तिः ( अर्थान्तरस्याप्रतीतौ कर्मफलसंबन्धसिद्धेः प्रतिपत्तिः ), नाप्रतिपन्नपदार्थो वाक्यार्थो यतः । प्रमाणान्तरं चेदपेक्षते, अनपेक्षत्वं व्याहन्येत । अपि च श्रुतं वाक्यमनुपपन्नं सापेक्षत्वात् 'विश्वजिता यजेत' इतिवत् अध्याहार्यनिर्देशात् ( अध्या-हारोऽस्यास्तीति अध्याहारि स्वर्गकामपदं, तस्य अनिर्दे-शात् सापेक्षत्वमिति । अथ अर्थानुपपत्तिश्चेत् इत्याह– ) अर्थो वाऽनुपपन्नः १ । पूर्वत्र ( वाक्यानुपपत्तिपक्षे )

वाक्यशेषकल्पना ( स्यात् । वस्तुतस्तु ) न चानुपपत्तिः ('दर्शपूर्णमासाभ्यां) स्वर्गकामो यजेत' इति (पदैः स्वार्थाभिधानद्वारेण वाक्यार्थप्रतीतेः ) परिसमाप्तेः । वाक्यशेषानुपपत्तेश्च ' अपूर्वं कृत्वा ' इति प्राग्यागात् अपूर्वोत्पत्तिप्रसङ्गः । यागेन अपूर्वं कृत्वा (यागेन फलं कुर्यात् ) इति द्विरुच्चारणं यजेः ( प्रसज्येत ), पूर्वश्च दोषः ( न तावत् येनैव यागेन अपूर्वं क्रियते तेनैव पश्चात् फलमपि, कर्मणो विरम्य व्यापारानुपपत्तेः । अर्थात् यागान्तरेण, तथा च प्राग्यागात् फलसाधनात् अपूर्वोत्पत्तिप्रसङ्गः इति पूर्वोक्तो दोषः ) उत्तरत्रापि श्रुततया चेदनुपपन्नः ( वाक्यार्थः ), पूर्व एव विकल्पः ( तेन सह तुल्यदोषत्वात् ) स्वभावान्तरेण अनुपपत्तौ श्रुतसिद्धयर्थं अपूर्वकल्पना इत्यसमीचीनं ( स्यात् ) । ( अस्मिन् अपूर्वविषयके पूर्वपक्षे कणिकायां एवमुपसंहृतं—" सोऽयं दूषणगणो **देवचूडामणिभिरेव** परिहरणीयः इति आचार्येण [ मण्डनेन ] नोदधारि, तत्र के वयं ते, 'तव मम' इति तत्रोपक्षीणमतिविभवाः इति) । **विवि**. पृ. २३०–३४. * **अपूर्वविशेषेण** तत्कारणभूतयजिविशेषेण वा अन्विताः प्रयाजादिधर्माः ये यस्मिन् प्रकरणे समाम्नाताः, ते तत्रैव व्यवतिष्ठन्ते एवं सति प्रकरणमर्थवद्भवति । **वि**. ७।१।१. * यागादिजनितं पुंसां फलप्राप्तिसामर्थ्यं **अपूर्वशब्दवाच्यम्** । यागानुष्ठानात् पूर्वं अभूतं अनुष्ठानोत्तरकालं जायते इति यौगिकत्वादेव अपूर्वशब्दाभिधानं सर्वत्र लभ्यते । **वा**. १।३।९।३० पृ. २९९. * सर्वातिशयानुवर्ति स्वर्गादिकार्योपादानसामर्थ्यसामान्यं अपूर्वशब्दवाच्यम् । **सु**. पृ. ३५२, * **अपूर्वसंयोगः** भेदापादकत्वाय कर्मविध्याक्षेपकः । पृ. ८२७. * **अपूर्वसद्भावचिन्तायाः** प्रयोजनं, यदि द्रव्यगुणशब्दा अपि अपूर्वं चोदयन्ति, द्रव्यगुणापचारे न प्रतिनिधिः उपादातव्यः यथा तर्हि पूर्वः पक्षः । यथा तर्हि सिद्धान्तः, द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य इति । **भा**. २।१।२।५. नामधेयसिद्धिरपि प्रयोजनमेव । **वा**. प्रयोजनं तु यावदिह शास्त्रे अपूर्वोपजीवि भवति अङ्गानामपूर्वार्थत्वातिदेशादि तत् सर्वं बोध्यम् । **सोम**. २।१।२. * **अपूर्वसाधनता** न वाक्यसामर्थ्येन प्रतीयते इति सा प्रकरणात् लब्धव्या । **वा**. ३।७।१।१ पृ. १०७८, * 'अपूर्वसाधनत्वांशलक्षणाऽवश्यमेव हि । सर्वत्रैवाश्रिता श्रुत्या विधिः स्यान्निष्प्रयोजनः ॥ ' ३।१।७।१४ पृ. ७११. * **अपूर्वसाधनत्वाकारः** ( व्रीहीणां अवघाते ) अवश्यं विवक्षितव्यः । **वि**. ९।१।१ वर्णकं २. * **अपूर्वसाधनलक्षणायाः** प्रकरणलभ्यत्वात् । **वा**. ३।४।८।२४ पृ. ९५४. * **अपूर्वाकाङ्क्षा** प्रधानविधावेव, न नित्यविधौ आग्नेयादिविधौ च । **मणि**. पृ. ८२. * **अपूर्वान्तरं** अपूर्वान्तरधर्मान् न गृह्णाति । **टुप्**. ९।१।२।३ वर्णकं २ पृ. १६४७. * प्राभाकरवत् कार्यनियोगापरपर्यायस्वतन्त्रा**पूर्वाभ्युपगमे** परोक्ता दोषाः स्युः, नास्मदभिमतशक्तिरूपाभ्युपगमे इति । **सु**. पृ. ५९८. * **अपूर्वार्था** धर्माः इति स्थितं संनिपत्योपकारका आरादुपकारकाश्च प्रकरणेन प्रमाणेन । **टुप्**. ९।१।१।१ वर्णकं ३ पृ. १६४०. * अपूर्वार्था धर्माः । तेषां चापूर्वाणां भेद उक्तः । अतस्तद्भेदात् यथाप्रकरणं व्यवतिष्ठन्ते धर्माः । **भा**. ७।१।१।३. * संनिपत्योपकारका ये धर्माः तेऽपि **अपूर्वार्था** इति नवमे प्रतिपाद्यते ऊहसिद्धये । **टुप्**. ९।१।१।१ पृ. १६३८. * 'सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते ।' सर्वमेव कार्यं दध्यादि क्षीरादेरुत्पद्यमानं न सहसैव स्थूलेनैवात्मना उत्पद्यते । किं तर्हि ? सूक्ष्माणि तावत् रूपान्तराण्यनुभवति । एवं स्वर्गादयोऽपि अङ्कुरादिस्थानीयां तावद**पूर्वावस्थां** प्रतिपद्यन्ते । तथा चोत्पद्यमानतया त एवोत्पन्ना भवन्तीति । **वा**. २।१।२।५ पृ. ३९५, * यत्रैव द्रव्यादीनि प्रति क्रियाणां प्रधानत्वं, तत्रैव तद्भेदनिमित्ता**पूर्वसिद्धिः** । २।१।१।१ पृ. ३७१.

* **अङ्गापूर्वाणामपि** आत्माश्रितानामेव एकार्थसमवायेन प्रधानैः संबद्धानामपि उपकुर्वतां आश्रयशेषत्वाभावात् आरादुपकारकत्वप्रसिद्धिः । **वा**. २।१।२।५ पृ. ३९८.

* आग्नेयादयः षड् यागाः भिन्नक्षणवर्तिनो विनश्वराः संभूय फलापूर्वं जनयितुं न शक्नुवन्ति, ततः तज्जननसमर्थानि आग्नेयादिजन्यानि षट् **अवान्तरापूर्वाणि** कल्प्यानि । इमान्येव उत्पत्त्यपूर्वाणि उच्यन्ते । **वि**. ३।१।४.

* आग्नेयाद्यवान्तरापूर्वाणि तु परमापूर्वसिद्ध्यङ्गत्वात् पारंपर्येण फलवन्ति । न च धर्मेभ्यः प्राक् सिद्धानि निर्ज्ञातोपायपरिमाणानि वा । **वा.** ३।१।४।१० पृ. ६६९.

* प्रधाना**पूर्वोत्पत्त्यपूर्वाणां** प्रधानानुष्ठानानन्तरमेव उत्पत्तिः । **सु.** पृ. १५१२.

* **नियमापूर्वं** क्रियाकृतं न भवति । **वा.** २।१।१।१ पृ. ३५१. * अवघातेनैव तुषविमोकः कर्तव्यः इति यो नियमः, सः अपूर्वहेतुत्वेन विधेयः । इदं **नियमापूर्व**मित्युच्यते । **वि.** २।१।३.

* यत् साक्षात् फलजनकं, तत् **फलापूर्वमिति** भण्यते । इदमेव परमापूर्वमित्युच्यते । **के.** * 'संनिपत्योपकारकाणि अवघातादीनि द्रव्यदेवतासंस्कारद्वारेण यागस्वरूपस्यैव अतिशयाधानेन तदुत्पत्त्यपूर्वनिष्पत्तौ व्याप्रियन्ते, तद्द्वारेण **फलापूर्वे** । आरादुपकारकाणि तु प्रयाजादीनि उत्पत्त्यपूर्वेभ्यः फलापूर्वनिष्पत्तौ साक्षादेव व्याप्रियन्ते । **वि.** २।१।२.

## ॥ अपूर्वाधिकरणम् ॥

**चोदना पुनरारम्भः । २।१।२।५ ॥**

**भाष्यं**—कथं पुनरिदमवगम्यते अस्ति तदपूर्वमिति ? उच्यते । चोदना पुनः आरम्भः । चोदना इति (अत्र) **अपूर्वे ब्रूमः । अपूर्वे पुनरस्ति** । यतः आरम्भः शिष्यते 'स्वर्गकामो यजेत' इति । इतरथा हि विधानमनर्थकं स्यात् भङ्गित्वाद्यागस्य । यदि अन्यदनुत्पाद्य यागो विनश्येत्, फलं असति निमित्ते न स्यात् । तस्मात् उत्पादयति इति । यदि पुनः फलवचनसामर्थ्यात् तदेव न विनश्यति इति कल्प्यते, नैवं शक्यम् । नहि कर्मणः अन्यद्रूपमुपलभामहे ।

यत् आश्रयं देशान्तरं प्रापयति तत् 'कर्म' इत्युच्यते । न तत् आत्मनि समवेतं, सर्वगतत्वादात्मनः । सर्वत्र कार्योपलम्भः सर्वत्र भावे लिङ्गम् । ननु तदेव देशान्तरादागमनस्य । (उत्तरं–) नहि असति आगमने किं चिद्विरुद्धं दृश्यते । यत्र समवेतमासीत् तद्विनष्टं द्रव्यम् । तस्य विनाशात् तदपि विनष्टमित्यवगम्यते । आश्रयोऽप्यविनष्ट इति चेन्न, भस्मोपलम्भनात् । सत्यपि भस्मनि अस्तीति चेन्न विद्यमानोपलम्भनेऽपि अदर्शनात् । फलक्रिया लिङ्गमिति चेत्, एवं सति अदर्शने समाधिर्वक्तव्यः । सौक्ष्म्यादीनामन्यतमत् (मं) भविष्यतीति यदि चिन्त्यते, कल्पितमेवं सति किं चिद्भवति, तत्रापूर्वं वा कल्प्येत तद्वा, इत्यविशेषकल्पनायामस्ति हेतुः, न विशिष्टकल्पनायाम् (विशेषकल्पनायां) । अनाश्रितं कर्म भविष्यतीति चेत्, तदपि तादृशमेव । स्वभावान्तरकल्पनेन देशान्तरं न प्रापयिष्यति, इति तादृशमेव । तस्मात् भङ्गी यजिः, तस्य भङ्गित्वात् अपूर्वमस्तीति । किं चिन्तायाः **प्रयोजनम्** ? यदि द्रव्यगुणशब्दा अपि अपूर्वं चोदयन्ति द्रव्यगुणापचारे न प्रतिनिधिरुपादातव्यो यथा तर्हि पूर्वः पक्षः । यथा तर्हि सिद्धान्तो द्रव्यं गुणं वा प्रतिनिधाय प्रयोगोऽनुष्ठातव्य इति ।

**वा**— सिद्धं कृत्वा अपूर्वं तत्प्रतिपत्त्युपायशब्दविशेषविचारः कृतः । तस्य सिद्धत्वमेवाप्रसिद्धं, अतस्तदेव तावत्प्रतिपादनीयमित्यत आह—'**फलाय विहितं कर्म क्षणिकं चिरभाविने । तत्सिद्धिर्नान्यथेत्येवमपूर्वं प्रति गम्यते** ॥' वेदवाक्योपात्तस्वर्गयागादिसंबन्धान्यथाऽनुपपत्त्या चोदनयैवापूर्वमपि चोदितं भविष्यतीति प्रमाणवत् । तस्मादस्त्यपूर्वमिति । **अत्रापरे** निपुणंमन्यास्तन्निराकरणमाहुः— '**प्रमाणपञ्चकाज्ञानादपूर्वं षष्ठगोचरः । तस्मादन्वर्थनामैतन्न वस्तुत्वेन गम्यते** ॥' वस्त्ववबोधनार्थानि प्रत्यक्षादीनि पञ्च प्रमाणानि । तद्यत्र तानि न प्रवर्तन्ते, तत् अभावेन अभावात्मनैवावगम्यते । न चापूर्वे तानि प्रवर्तन्ते । तस्मात् सर्वप्रमाणापूर्वत्वादन्वर्थनामैव असद्रूपमपूर्वं प्रतिपत्तव्यम् । तत्र प्रत्यक्षेण तावन्नावगम्यते, रूपाद्यनात्मकत्वेन चक्षुरादिभिरसंबन्धात् । नाप्यनुमानेन, केन चिल्लिङ्गेन सह अदृष्टसंगतित्वात् । नहि विशेषतः सामान्यतो वा अस्य केन चित्संबन्धोऽनुभूतपूर्वः । सर्वत्रैव च वस्तुसत्ताबोधायानुमानमपर्याप्तं इत्युक्तं प्राक् । '**पदवाक्ये न चैतस्य वाचके शृणुमः क्व चित् । शब्दगम्यत्वमप्यस्य तेन नैवोपपद्यते** ॥' आगमिकत्वमप्यस्य पदेन वोच्यमानस्य स्यात् वाक्यगम्यस्य वा । तत्र पदं न तावत् किं चित्साक्षादेतस्य वाचकमस्ति । यत्तु अपूर्वमिति, तदन्वर्थत्वात् सुतरामस्तित्वं बाधते । न च प्रमाणान्तरानवगते-

ऽर्थे पदं प्रवर्तते । न च स्वातन्त्र्येण प्रमाणमिति स्थितम् । तथा च वाक्यस्य अवाचकत्वादेवाप्रामाण्यम् । न च के चित्पदार्थाः श्रूयन्ते, येषां भेदः संसर्गो वा अपूर्वं भवेत् । येऽपि शब्दान्तरादयः श्रुतिलिङ्गादयश्च शब्दप्रकाराः, तेऽपि च स्वभावसिद्धे वस्तुनि भेदे विनियोगे वा कारणं, न सद्भावे कस्य चिदिति अपूर्वं प्रति अप्रमाणम् । उपदेशानवगते चातिदेशोऽपि न प्रवर्तते । विधिप्रतिषेधविषयत्वाच्च समस्तस्य वेदस्य, न क्व चिद्वस्तुस्वरूपप्रतिपादनार्थत्वं भवतीति नागमगम्यमपूर्वम् । न च अदृष्टपूर्वस्य अदृष्टसदृशस्य चोपमानविषयत्वम् । कामं वा अनुपलभ्यमानशशविषाणादिसारूप्यात् अभावात्मकत्वोपमानप्रसङ्गः । तस्मादसद्रूपेणोपमेयम् । **'अर्थापत्त्याऽपि नैवैतदस्तीत्येवं प्रतीयते । अन्यथाऽप्युपपन्नत्वात् फलयागादिसंगतेः ॥'** दृष्टार्थापत्तिस्तावत् धर्मास्तित्ववदेव अत्रापि निराकर्तव्या, स्वभावादिनाऽपि ईश्वरदरिद्रादिवैचित्र्योपपत्तेः । श्रुतार्थापत्तिरपि कीदृशी भवति, यत्र प्रत्यक्षेणैवानुपपत्तिर्दृश्यते । न च कल्प्यमानोऽर्थः केन चिद्विरुध्यते, तद्यथा 'स्रुवेणावद्यति' इत्युक्ते न च कथं चिदपि मांसपुरोडाशादीनि तेनावदातुं शक्यन्ते इति, प्रत्यक्षगम्यत्वात् । अपि च तत्रापि प्रसक्तेरेवं कल्प्यते द्रवाणामिति । न चैषा कल्पना केन चिद्विरुध्यते, श्रुतहान्यश्रुतपरिकल्पनाऽभावात् । अपूर्वं तु न कदा चित् फलसाधनत्वेन संभाव्यते, यतोऽन्यकारणनिषेधे सति तद्विषया परिशेषसिद्धिः स्यात् । **'यदि त्वन्यनिवृत्त्यैव परिशेषः प्रकल्प्यते । शशशृङ्गनिमित्तत्वं फलानां किं न गम्यते ॥'** नहि कारणान्तरप्रतिषेधमात्रेण अपूर्वनिमित्तता गम्यते, शशविषाणादिभिरनैकान्त्यात् । अपि च यदि तावदपूर्वं यागस्य साध्यमिष्यते, ततः श्रुतं स्वर्गं परित्यज्य अश्रुतं परिकल्पितं भवेत् । अथ फलं प्रति साधनभूतं, ततः श्रुतयागपरित्यागात् सैव गतिः । न च आकारान्तरेण तन्निरूपयितुं शक्यते । तेन आगमप्रामाण्यात् यागादेव फलेन भवितव्यम् । कथं नष्टः साधयतीति चेत् । यदि शास्त्रादेवं गम्यते, किं भवतो विरुध्यते । भ्रियमाणेन वा फलं साधनीयमित्यत्र किं प्रमाणम् । अपि च आकाशादीनि नित्यावस्थितानि कस्मात् फलं न साधयन्ति । यदि च श्रवणयागातिरेकेण अवस्थायित्वसंभवात् अपूर्वेण फलं साध्यते इति कल्प्यते, ततो वरमाकाशादेरेव कल्पितं, तस्य हि स्वानसद्भावौ अपि तावत् प्रसिद्धौ, केवलं फलनिमित्तत्वमाश्रयणीयम् । अपूर्वे तु सद्भावप्रभृति सर्वं निष्प्रमाणकं कल्पनीयम् । अथ यागसंबन्धिना केन चिदवस्थितेन फलं दातव्यमित्यभिप्रायः, तथा सत्यपि **'यष्टुरेवाऽऽत्मनो यागैः संगतस्य स्थितस्य च । निमित्तत्वं वरं क्लृप्तं लाघवं हि तथा सति ॥'** यदि यागस्य विनाशित्वादन्येन तत्संबन्धिना फलं साध्यमानं यागेन साधितं भवति, ततो लाघवादतिक्रान्तयागेन आत्मनैव वरं साधयितव्यम् । **'यद्वा कर्मविनाशोऽयं फलं नः साधयिष्यति । भङ्गियागविधानाद्धि तदयत्नेन कल्प्यते ॥'** विनाशिनि हि कर्मणि चोदिते किं दृश्यते, कर्म च विनष्टं, शास्त्रप्रत्ययाच्च कालान्तरे फलं भविष्यतीति निश्चीयते । यच्च यत् प्रतीत्य उपजायते, तत्र तस्य निमित्तत्वमित्यवधार्यते । तस्मादभावनिमित्तमेव फलमस्तु । **स्यादेतत्** । न क्व चिदवस्तुनः साधकत्वं दृष्टमिति । **तदुच्यते** । अपूर्वस्य वा क्व दृष्टं, येनात्राऽऽश्रीयते, तदवश्यकर्तव्ये लौकिकनिमित्तधर्मातिक्रमे किमपूर्वनिमित्तत्वं कल्प्यतां, उत अभावनिमित्तत्वमिति, क्लृप्ताभावनिमित्तत्वातिलङ्घनेन काल्पनिकापूर्वनिमित्तत्वपरिग्रहो न युज्यते । **किंच, 'यदि चैकान्ततो ब्रूयुः शब्दाः कालान्तरे फलम् । ततस्तेनैव कल्प्येत निमित्तं वस्तु किं चन ॥'** क्रियाफलसंबन्धप्रतिपत्तिमात्रचरितार्थासु चोदनासु अनुपात्ते कालान्तरे, कर्मस्वभावादानन्तर्ये गम्यमाने, कुत एतत् कालान्तरभावि फलं, तत्सिद्ध्यर्थं चापूर्वं कल्प्यते इति । **तत्रैतत्स्यात्** । कृते कर्मणि अनन्तरं फलमनुपलभ्य कालान्तरफलोत्पादद्वारमपूर्वकल्पनमिति । **तदयुक्तम्** । कुतः ? **'पूर्वं निश्चित्य शास्त्रार्थं प्रयोगे हि प्रवर्तते । प्रयोगोत्तरकालं तु न शास्त्रार्थोऽवधार्यते ॥' 'नाप्रविद्वान्विहितोऽस्ति'** (३।८।८।१८) इति तावदवश्यं यावच्छास्त्रगम्यं, तत्सर्वं प्रागनुष्ठानादवगन्तव्यम् । न च

तत्काले कर्मफलकालवियोगज्ञानकारणमस्ति । यच्च शास्त्रप्रवृत्तिवेलायां तदन्तर्गतत्वेन नावधारितं, तत् उत्तरकालमेवात्रधार्यते इति कुत एतत् । अपि च, **‘सर्वकर्तृष्वशक्तत्वाद्वैगुण्यं संप्रतीयते । तेन च प्रतिबद्धत्वान्नार्थापत्तिरपूर्वभाक् ॥’** दृश्यते एवानन्तरफलानुत्पत्तिकारणवैगुण्यं इति न कालान्तरफलसिद्ध्यर्थमपूर्वं कल्पनीयम् । अनैकान्तिकी हि तदा अर्थापत्तिर्वैगुण्यमेव वरमननुभूतमपि कल्पयेत् । न च जन्मान्तरफलोत्पत्त्यर्थमपूर्वकल्पना । कुतः, **‘सुखदुःखात्मकत्वेन समानेष्वेव जन्मसु । क्रियानन्तरमेवेह स्तः स्वर्गनरकावपि ॥’** नहि स्वर्गनरकौ नाम निरतिशयसुखदुःखस्वभावौ देशविशेषात्मकौ वा, यौ इहैव जन्मनि नानुभूयेयातां, अलौकिकानां जिहासोपादित्साऽनुपपत्तेः । ये तु लौकिके प्रकृष्टे सुखदुःखे, ते कर्मानन्तरमेव संभाव्येते इत्यविशेषः । किंच, **‘प्रतिषेधेषु चापूर्वं न शास्त्रार्थेन जन्यते । तदतिक्रमजन्यं तु न भवेच्छास्त्रपूर्वकम् ॥’** ‘ब्राह्मणो न हन्तव्यः’ इति हि निवृत्तिः शास्त्रार्थः । न च तया कालान्तरे किं चिज्जनयितव्यमिति नापूर्वकल्पनामपेक्षते । हननस्य तु नरकपातः फलं, तद्यदि तेनापूर्वं जन्येत, ततो हननस्य अचोदितत्वात् लौकिकक्रियाजन्यं तत् अपूर्वं न वेदमूलं स्यात् । कल्पितमपि च तत् निष्क्रियत्वान्नैव देशान्तरे शरीरादिप्रापणसमर्थं इत्यनर्थकम् । न चास्य आश्रयः संभवति, क्रियाऽऽश्रयस्य पुरोडाशादेर्विनष्टत्वात् तद्व्यतिरिक्ते चारम्भानुपपत्तेः ।

**एवमङ्गापूर्वाण्यपि** निराकर्तव्यानि । **किंच, ‘अङ्गानि यदि वाऽपूर्वं कुर्वन्त्यारादवस्थितम् । असंबन्धात् प्रधानानां न स्यात्तेनोपकार्यता ॥’** नहि कल्पितमपि अङ्गापूर्वं प्रधानैरसंबध्यमानमुपकर्तुं समर्थं, न चामूर्ते प्रधाने तदपूर्वं वा निपतितुं समर्थम् । यदपि च प्रोक्षणादिनिमित्तं द्रव्यसमवायि, तदपि तन्मात्रोपक्षीणत्वादन्यत्रासंचरत् नैव फलसाधनस्यापूर्वस्योपकुर्यात् । अथ तु अङ्गापूर्वाण्यपि यजमानात्मन्येवावतिष्ठेरन्, एवं सति पुरुषार्थत्वापत्तेः कर्माङ्गत्वहानिः स्यात् । **अपि च युगपत्प्रयोगवचनेन** ग्रहणात् अङ्गापूर्वैर्युगपदेवोपकर्तव्यम् । न च परस्परेणासंबद्धानां यौगपद्यं संभवति । न चैषां कश्चित् संबन्धे हेतुरस्ति । एतेन प्रधानापूर्वाणां फले यौगपद्यं प्रत्युक्तम् । **‘तस्मात्क्रतत्वमात्रेण प्रधानं पुरुषे फलम् । अङ्गानि च प्रधानेषु जनयन्तीति गम्यते ॥’** न चापूर्वस्योत्पत्तिरभिव्यक्तिर्वोपपद्यते । कुतः? **‘न तावद्युगपज्जन्यं कर्मभिः क्रमवर्तिभिः । न चानवयवत्वात् तत् क्रमशोऽपि प्रतीयते ॥’** एवं तावन्नोत्पद्यते । न चाभिव्यज्यते । कथम्? **‘इन्द्रियार्थोभयेषां नः संस्काराद्व्यक्तिरिष्यते । न च यागादिभिः किं चित् संस्कृतं संप्रतीयते ॥’** सर्वाभिव्यक्तीनां त्रयान्यतमसंस्कारद्वारत्वात् संस्कारान्तरमवश्यं कल्पनीयं, ततः पुनः स एव क्लेशः, इत्यप्रमाणता । यदि च क्रियाऽनन्तरमपूर्वमुपलभ्येत, ततोऽभिव्यज्यते इति ब्रूयाम, यदि चास्य प्रागस्तित्वे प्रमाणं भवेत्, न तु तदुभयमप्यस्तीति । सर्वथा नास्त्यपूर्वम् । न चैतत्सूत्रं तत्प्रतिपादने विस्पष्टमित्यव्याख्यानमेतत् ।

**अत्रोच्यते** । यदिदं स्वमतिपरिकल्पितं विग्रहवदिव अपूर्वं भवद्भिर्निराक्रियते, न तेनास्माकं किं चिद्धिरुध्यते । यतो नैतत्तादृशं कस्य चिदिष्टम् । किं तर्हि, **‘कर्मभ्यः प्रागयोग्यस्य कर्मणः पुरुषस्य वा । योग्यता शास्त्रगम्या या परा, साऽपूर्वमिष्यते ॥’** प्रधानकर्मणामङ्गकर्मणां वा प्राक्करणात् स्वर्गादिप्राप्त्ययोग्याः पुरुषाः क्रतवश्च स्वर्गकार्यायोग्याः । तामुभयीमप्ययोग्यतां व्युदस्य प्रधानैरङ्गैश्च योग्यतोपजन्यते, इत्यवश्यं सर्वेणाभ्युपगन्तव्यम् । असत्यां तस्यां अकृतसमत्वप्रसङ्गात् । सैव च पुरुषगता क्रतुगता वा योग्यता, शास्त्रेऽस्मिन् अपूर्वमित्यपदिश्यते । यत्तु प्रत्यक्षादिगम्यत्वमस्य नास्तीति, सत्यं, श्रुतार्थापत्तिव्यतिरिक्तैर्न गम्यते, स त्वदोषः । किं कारणम्? **‘श्रुतार्थापत्तिरेवैका प्रमाणं तस्य चेष्यते । शब्दैकदेशभावाच्च स्वार्थेष्वागम एव नः ॥’** येन वाक्येन यागात् स्वर्गो भवति प्रयाजादिभिश्च प्रधानोपकारो भवतीत्येतच्चोद्यते, तेनावश्यं विनष्टानामविनष्टानामपि चैषां काऽपि स्वकार्योत्पादनशक्तिरस्तीत्यभ्युपगन्तव्यं, **सर्वभावानामशक्तानां कार्यारम्भाभावात् । नियोगतश्चात्र अतीतानामेव शक्ति-**

रेष्टव्या । कुतः ? ‘ **क्षणिकत्वेन सर्वत्र नैकस्यापि हि कर्मणः । कथं चिद्युगपद्वृत्तिः फले किमुत भूयसाम् ॥**’ यदेव हि कर्म गृहीतं, तदेव हि क्षणिकसूक्ष्मावयवत्वात् फलं प्रति युगपद्भवितुमसमर्थं, किमुत यान्यनेकात्मकानि दर्शपूर्णमासप्रभृतीनि । यदा हि पूर्णमासो भवति, न तदा दर्शः, यदा दर्शस्तदा पूर्णमासश्चिरविनष्टः । तथैकस्मिन्नेव समुदाये यदा आग्नेयस्तदा अग्नीषोमीयोपांशुयाजौ न स्तः, यदा तयोरेकः तदेतरौ न विद्येते, इति यौगपद्यासंभवः । तद्यदा दर्शपूर्णमासस्तदवयवो वा कां चित् पुरुषे शक्तिमनाधायैव विनश्येत्, ततः प्रागवस्थातुल्यत्वात् उत्तरकर्मणां पूर्वैः सह रूपतः शक्तितो वा साहित्याभावान्न केवलकरणात् कश्चिद्विशेषः, इति सहितसाध्यत्वेन श्रुतं फलं साहित्यासंपत्त्या नोपपद्येत । नहि केवलो दर्शः तत्साधनत्वेन श्रूयते, तदन्यं वा कर्म । नियोगतश्च कर्मानन्तरफलोत्पत्तिवादिनाऽपि सर्वकर्मान्ते सा अभ्युपगन्तव्या । ततश्च यस्यैवानन्तर्यं, तदेवैकं साधनं प्राप्नोति नेतराणि, चिरविनष्टत्वात् । अथ तु सर्वेषामपूर्वाख्याः शक्तयस्तिष्ठन्ति, ततः स्वरूपाणामतन्त्रत्वात् तेष्वसत्स्वपि शक्तिगतमेव यौगपद्यं व्यवहाराङ्गत्वात् व्यापरिष्यते । तथा च **आह**—

‘ **शक्तिभिः सर्वभावानां व्यवहारानुपातिता ।
तेनान्यदेशकालेऽपि रूपे ताभिः स सिध्यति ॥
लौकिकं चापि यत्कर्म फले कालान्तरोद्भवौ ।
तत्रापि शक्तिरेवास्ते न त्वपूर्वमिहेष्यते ॥**’

यान्यपि च लौकिकानि कृषिघृतपानाध्ययनप्रभृतीनि कर्माणि कालान्तरफलत्वेन इष्यन्ते, तेषामपि स्वरूपावस्थानासंभवात् संस्कारैरेव तिष्ठद्भिर्व्यवहारसिद्धिः । ते तु अवैदिकत्वात् संस्कारा नापूर्वशब्दाभिधेयत्वेन प्रसिद्धाः । तेन प्रागेवानुष्ठानात् शास्त्रश्रवणवेलायामेव क्षणिकानेकाङ्गप्रधानप्रयोगसाध्यं फलं विदित्वा शास्त्रप्रत्ययादेषा बुद्धिर्भवति ‘ नूनं केनाप्यात्मना समस्तान्यङ्गप्रधानानि फलकालं यावत्तिष्ठन्ति ’ इति । प्रत्यक्षं च स्वरूपभङ्गदर्शनान्न शक्तिव्यतिरिक्तात्मावस्थानोपपत्तिः । यत्तु श्रुतहान्यश्रुतकल्पनाप्रसङ्ग इति, तन्न, ‘ **यागादेव फलं तद्धि शक्तिद्वारेण सिध्यति । सूक्ष्मशक्त्यात्मकं वा तत् फलमेवोपजायते ॥**’ यदि ह्यसंबन्धिना केन चित्फलं साध्येत, ततो दोषः स्यात् । तदाहितया तु शक्त्या साध्यमानं यागेनैव साधितं भवति । सर्वभावनानामिष्टफलप्रवृत्तौ आन्तरालिकव्यापारवत्त्वाविरोधात् । अथवा सर्वमेव कार्यं दध्यादि क्षीरादेरुत्पद्यमानं, न सहसैव स्थूलेनैवात्मना उत्पद्यते, किं तर्हि, सूक्ष्माणि तावत् रूपान्तराण्यनुभवति । एवं स्वर्गादयोऽपि अङ्कुरादिस्थानीयां तावदपूर्वावस्थां प्रतिपद्यन्ते, तया चोत्पद्यमानया ते एवोत्पन्ना भवन्तीति । एतावानेव चात्र वर्तमानः कालः, यदच्युतिः कर्मसंकल्पात् प्रभृति आ सर्वान्त्यफलावयवोपभोगात् । **आह च**— ‘ **काष्ठैः पक्ष्यमित्युक्ते निर्दिष्टा ज्वलनक्रिया । अङ्कुरे जायमाने च वृक्षोऽप्युत्पन्न इष्यते ॥** ’

यत्तु संभावनापदमपूर्वे नारूढमिति । तदयुक्तम् । कुतः— ‘ **विनाशित्वेन विज्ञातं साधनं लोकवेदयोः । असंभावितसामर्थ्यस्थायित्वं चोद्यते कथम् ॥** ’ ( न संभावितं सामर्थ्यरूपेण स्थायित्वं यस्य इति विग्रहः ) ‘ नूनं विनष्टस्याप्येतस्य सामर्थ्यं फलनिर्वृत्तिकालावधिं यावत् आस्ते ’ इति हि यावन्नावधार्यते, तावत् विनाशिनी क्रिया चोदयितुमेवाशक्या । तस्मात् संभावना अवधारणा च प्रथममेव सिद्धेति । ‘ **न वाऽतिक्रान्तयागेभ्यः पुरुषेभ्यः फलोद्गतिः । अतिक्रान्तानतिक्रान्तविशेषस्तव नास्ति हि ॥** ’ यदि हि अनाहितसंस्कारा एव यागा नश्येयुः, ततः प्रागवस्थातुल्यत्वात् अतिक्रान्तानतिक्रान्तयागयोः को विशेषः स्यात् । आत्मत्वं तावदविशिष्टमुभयोः । यागत्वमपि हि विनष्टाकृतयागयोस्तुल्यम् । न च क्रियारहितस्य अवस्थान्तरगतस्य वा कर्तृत्वमवतिष्ठते । कर्तृशक्तिस्तिष्ठतीति चेत् । न । तस्याः प्रागपि यागकरणात् विद्यमानत्वेनाकरणत्वात् । अपि च यदि पुरुषः फलसाधनं सर्वकर्मणां शुभाशुभानामविशिष्टः, इत्येकरूपफलप्रसङ्गः । तथैकेन यागेन बहुभिश्च तदतिक्रमलक्षणलक्षितत्वाविशेषात् बहुयाजिनः फलविशेषो न स्यात् । एतेनैव बहुप्रयोगानुष्ठायिनः प्रत्युक्ताः । कर्तृनभिधायिनि वा आख्याते कथमयमर्थो विज्ञायते ? यस्य त्वपूर्वाणि क्रियन्ते, तस्य प्रतिकर्म प्रतिप्रयोगं च तद्भेदात् उपपन्ने

फलनानात्ववैचित्र्ये । किंच । '**अङ्गमध्येऽपि कर्तैव भवेच्चेदुपकारकः । प्रसङ्गसिद्धेरङ्गानामप्राप्तिर्विकृतौ भवेत् ॥**' प्रयाजादीनामपि क्षणिकत्वात् स्वरूपसंनिध्यभावे भवत्पक्षे कर्त्रैव प्रधानोपकारः कर्तव्यः, इति सोऽपि चापूर्वाभावात् कर्त्रात्मन एवोपकारकः । तत्र येन प्रकृतौ प्रयाजादयः कृताः, तस्य विकृतिषु तद्गतोपकारसद्भावात् विनाऽपि तन्त्रमध्यविधानेन तत्फलावाप्तेः प्रसङ्गलक्षणमस्ति, इति न पुनरङ्गान्यनुष्ठातव्यानि । तत्र 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इत्यादीनि नोपपद्येरन् । नन्वत्यन्तकालभेदान्नैतत् प्रसज्यते । वक्ष्यत्यस्योत्तरं 'अर्थस्याविकृतत्वात्' (१२।१।१४) इति । यदेव हि प्रत्यासन्नानि प्रति कर्त्रात्मकं तदुपकाररूपमिष्यते, तदेव दूरस्थायामपि विकृतौ इत्यविशेषः । एते कर्मविनाशपक्षेऽपि दोषाः प्रसङ्क्तव्याः । यस्यापि च कर्मविनाशादेव फलं भविष्यतीत्यभिप्रायः तस्यापि शुभाशुभैकानेककर्मतत्प्रयोगविनाशानां प्रागभावप्रध्वंसाभावानां वा अवस्तुत्वेनाविशेषात् फलभेदवैचित्र्यानुपपत्तिः । तथाहि, '**एको रोगो हृतो यस्य, यस्य वाऽपहृता दश । अरोगित्वे तयोर्भेदो न कश्चिदपि दृश्यते ॥**' यदि तु प्रतिकर्म विनाशानां वैचित्र्यमिष्यते, तथा सति वस्तुत्वापत्तेः वस्त्वन्तराभावाच्च अपूर्ववस्त्वेव विनाशशब्देनाभिधीयेत । '**न च कर्मविनाशेभ्यः स्वर्गादि श्रूयते फलम् । विपर्ययाच्च नैतेभ्यो जातं यागस्य तद्भवेत् ॥**' 'यजेत स्वर्गकामः' इति हि श्रूयते, न यागाभावं प्रतिपद्येतेति । तत्र भावांशसाध्यसाधनसंबन्धनिष्ठे वाक्ये यस्तत्र अभावांशसाध्यसाधनसंबन्धं कल्पयति, तेन वेदस्तावदप्रमाणीकृतः । कुतः ? कर्मविनाशप्रभवं हि सत् एतत् न कथं चित् कर्मसंबन्धि इति शक्यं वदितुं, अत्यन्तविपरीतत्वात् । नह्यग्न्यातपप्रभवो दाहः शैत्यसंबन्धीत्युच्यते । अथवा यथैव यागाच्छ्रुतं तदभावात् कल्प्यते, तथैव स्वर्गे श्रुते तदभावः फलमित्यपि कल्प्येत । अपूर्वपक्षेऽपि तुल्यमिति चेत् । न । तस्य कर्मफलशक्त्यात्मकत्वेन अत्यन्ताभेदात् । उक्तं ह्येतत्पुरस्तात् 'अपूर्वेण क्रियमाणं यागेनैव क्रियते, अपूर्वे वा कृते फलमेव कृतं भवति' इति । न च लोकेऽपि कश्चिदभावः कारणत्वेन दृष्टः । यदि तु क्व चिदुदाह्रियेत, शक्यं तत्र भावान्तरं दर्शयितुं, न तु अत्र अपूर्वादृते तादृक्किंचिदस्ति । यत्तु अपूर्वस्यापि नैव कारणत्वं दृष्टमिति, तदयुक्तम् । सर्वत्र शक्तिसामान्योपलम्भात् तद्विशेषमात्रत्वाच्चापूर्वस्य । यत्तु शास्त्रेण कालान्तरफलं नाश्रितं, प्रयोगोत्तरकालकल्पना च शास्त्रेऽन्तर्भवति, तस्मादानन्तर्यमेव चोदितमिति । तत्र यथाश्रुतक्षणिकानेककर्मानन्तर्यं न संभवतीत्युक्तं प्राक् । स्वर्गनरकौ च निरतिशयसुखदुःखात्मकत्वात् देशान्तरजन्मान्तरानुभवनीयौ, न कर्मानन्तरं संभवतः, इति षष्ठाद्ये वक्ष्यामः । '**ऐहिकं चापि पुत्रादि क्रमजन्मस्वभावकम् । न कर्मानन्तरं कश्चित् फलं लब्धुं व्यवस्यति ॥ न च ग्रामादिसंप्राप्तिः केवला फलमिष्यते । उपयोगश्चिरेणैषां न निमित्ताद्विना भवेत् ॥**' चिरकालोपभोगफलात्मकत्वात् ग्रामादीनां, क्रियाऽनन्तरं तादात्म्यासंभवे सति, यत्रैवान्तराले निमित्तं क्षीणं, तत्रैवापहारः प्रसज्येतेत्यवश्यं समस्तोपभोगं यावत् अवस्थितेन केन चिद्भवितव्यम् । ततश्च प्रागेव प्रयोगादित्थमवधारणात् कर्तृवैगुण्याशङ्कया अर्थापत्तेरनैकान्तिकत्वमित्ययुक्तमेतत् । यत्तु प्रतिषेधेषु न शास्त्रगम्यमपूर्वमिति, उच्यते । '**विधेयेभ्यो यथाऽपूर्वं विधिशास्त्रेषु गम्यते । तथैव प्रतिषेध्येभ्यः प्रतिषेधैस्तदुच्यते ॥**' यथा हि लौकिकानामेव द्रव्यादीनां फलविध्युत्तरकालं वैदिकत्वात् वेदगम्यापूर्वसिद्धिः, एवं ब्रह्महत्यादीनामनवगतनरकफलानां प्रतिषेधोत्तरकालभाविनां वैदिकत्वेनैव नरकप्राप्तिसमर्थापूर्वकल्पनोपपत्तिः । (आत्मैव कर्तृत्वादपूर्वाश्रयः) सत्यपि चास्य चलनादिक्रियारहितत्वे कर्तृसंबन्धमात्रेण तद्देशान्तरप्रापणादिक्रियासंबन्धाभ्युपगमात् निष्क्रियताऽनुपालम्भः । '**आत्मैव चाऽऽश्रयस्तस्य क्रियाऽप्यत्रैव च स्थिता । आत्मवादे स्थितं ह्येतत् कर्तृत्वं सर्वकर्मसु ॥**' द्रव्यवदानप्रक्षेपादीनां हि सर्वेषां संकल्पादिद्वारेण आत्मैव कर्तेत्यवधारितम् । अतश्च ते प्रलीयमानाः तत्र स्वर्गाद्युपभोगशक्तिमाधाय प्रलीयन्ते इत्यविरोधः । कथं विनष्टस्य कर्मणः शक्तिस्तिष्ठतीति चेत् । अत्राभिधीयते— '**यदि स्वसमवेतैव शक्तिरिष्येत कर्मणाम् । तद्वि-**

**नाशे ततो न स्यात्, कर्तृस्था तु न नश्यति ॥'** कथमन्यशक्तिरन्यत्र समवैतीति चेत् । न । क्रियात्मनोरत्यन्तभेदाभावात् । अपि च, '**शक्तिः कार्यानुमेयत्वाद् यद्गतैवोपयुज्यते । तद्गतैवाभ्युपेतव्या स्वाश्रयाऽन्याश्रयाऽपि वा ॥**' यदा कर्मविनाशात् तद्गता शक्तिरपि निष्प्रयोजना भवति, अवश्यं चासौ कल्पयितव्या, तदा अस्याः स्वरूपवदेव आश्रयविशेषोऽपि कार्यक्षमः एव प्रमातव्यः । तथा अङ्गापूर्वाणामपि आत्माश्रितानामेव एकार्थसमवायेन प्रधानैः संबद्धानामप्युपकुर्वतां आश्रयशेषत्वाभावात् आरादुपकारकत्वप्रसिद्धिः । यत्तु पुरुषार्थत्वं प्रसज्यते इति । नैष दोषः, '**तादर्थ्येन हि शेषत्वं नाऽऽश्रयाश्रयिभावतः । राजार्थौपयिकं नित्यमुष्ट्रो वहति कुङ्कुमम् ॥**' न चामूर्तानामाश्रयाश्रयिभावेन न भवितव्यं, आत्मसुखादिवत्तदुपपत्तेः । यत्तु व्रीह्यादिसमवायिप्रोक्षणादिनिमित्तं तण्डुलादिद्रव्यावस्थासंचरणपरंपरया द्व्यवदानं यावत् गतं, तत्रापि प्रधानस्यापि केन चिदंशेन समवायात् तदीयापूर्वनिष्पत्तावेव व्यापृत्य निवर्तते । तेनैव चैषां नारादुपकारकवत् अशेषप्रधानार्थत्वमभ्युपगम्यते । यथैव एकार्थसमवायात् अङ्गप्रधानापूर्वाणां संबन्धः, एवमङ्गापूर्वाणामन्योन्यं प्रधानापूर्वाणां च वक्तव्यः । ततश्च युगपत् कार्यारम्भसिद्धिः ।

कथं पुनः क्रमोत्पत्तीनां प्रधानापूर्वाणां क्रमवर्तिभिरेवाङ्गापूर्वैः प्रागूर्ध्वं चोत्पद्यमानैः युगपदुपकर्तुं शक्यम् ? **केचित्तावदाहुः** । अङ्गमध्यवर्तिषु प्रधानेषु पूर्वाङ्गपूर्वैर्निष्पन्नैः, आगामिभिश्च प्रक्रमवशात् प्रचलितावस्थैरेकैकं प्रधानं स्वापूर्वं साधयति । आतिथ्याबर्हिर्वच्च साधारण्यात् नैकप्रधानापूर्वनिष्पत्तौ तानि अपवृज्यन्ते । कथं पुनरनागतानामुपकारकत्वं भवति ? एकान्तावधारणात् भोजनप्रत्यासत्तौ स्थालीपरिमार्जननिष्पत्तिवदिति द्रष्टव्यम् । ननु च यद्यनागतावस्थेष्वेतेषु प्रधानापूर्वाणि निष्पद्यन्ते, ततो नैवोत्तराङ्गाणि कर्तव्यानि । कथं न कर्तव्यानि, यदा तत्करिष्यमाणतासंभावनया तानि निष्पन्नान्यपि तदकरणान्नापवृज्यन्ते । **अन्ये पुनराहुः** । एकैकमङ्गं इतरेतरनिरपेक्षमात्मीयमात्मीयं तावदपूर्वं करोति, यथा प्रधानमपि आग्नेयादि यथाश्रुतसमस्ताङ्गापूर्वाभावान्निरपेक्षं तदा अनुत्पन्नप्रधानान्तरनिरपेक्षं च प्रथमकृतसमवायिकाङ्गापूर्वमात्रानुगृहीतं स्वापूर्वमेव तावत् साधयति । एवं यदा दर्शापूर्वाणि तदङ्गापूर्वाण्यपि समस्तानि निष्पन्नानि, तदा तदीयब्राह्मणतर्पणानन्तरं अपर्यायविधानात् युगपत्प्रयोगवचनोपसंहारकल्पितं अङ्गानि प्रधानानि च प्रति तन्त्रभूतं, समस्तान्यङ्गापूर्वाणि अपूर्वात्मकमेकं युगपत् निरवयवं प्रधानोपकारं कृत्वा निवर्तन्ते । ततश्च तद्वशेन प्रधानापूर्वाण्यपि एकफलोत्पत्तिशक्तिभूतं संहत्य सर्वाण्येकमपूर्वान्तरं जनयित्वा अपवृज्यन्ते । तत्तु आफललाभादजरं तिष्ठति । **यदि** पुनः प्रतिबन्धकरहितं तदानीं फलमेवोत्पद्यते, ततोऽपि किं कल्पनीयमेवापूर्वम् । **बाढम्** । नहि तस्मादृते समस्तफलोपभोगसिद्धिरित्युक्तम् । **अथ** कस्मात् प्रात्यात्मिकान्येवाङ्गापूर्वाणि प्रधानोपकारकत्वं, भिन्नानि च प्रधानापूर्वाणि फलबीजत्वं न प्रतिपद्यन्ते ? **सत्यं**, नहि कश्चिदत्र दोषः । किंतु '**अर्थापत्तेरिहापूर्वं पूर्वमेकं प्रतीयते । ततस्तत्सिद्धये भूयः स्यादपूर्वान्तरप्रमा ॥**' प्रधानानां फलं प्रति, अङ्गानां च प्रधानानि प्रति, युगपदुपादानात् अपेक्षावशेन एकापूर्वकल्पनया च तत्संबन्धोपपत्तेर्नेतरकल्पनाप्रमाणमस्तीत्येकमेव तावदवधार्यते । ततः पुनः क्रमवर्तिभिः कर्मभिस्तदशक्यं युगपत्कर्तुमिति तत्सिद्ध्यर्थं प्रात्यात्मिकापूर्वान्तरकल्पना भवति । सर्वत्र च, '**प्रमाणवन्त्यदृष्टानि कल्प्यन्ते सुबहून्यपि । अदृष्टशतभागोऽपि न कल्प्यो ह्यप्रमाणकः ॥**'

**केचित्त्वत्र** चोदयन्ति । यदि पौर्णमास्यां कृतान्यङ्गापूर्वाणि अमावास्यां यावत् तिष्ठेयुः, ततस्तैरेव कृतार्थत्वान्नैवाङ्गानि पुनः प्रसज्येरन् । एवं च सति 'त्रयोदशामावास्यायाम्' इत्याहुतिसंख्या बाध्येत । **अन्ये तु** परिहरन्ति । साङ्गयोः पौर्णमास्यमावास्ययोः कालान्तरसंबन्धात् सर्वैरङ्गैर्द्विः प्रयुक्तैः समुदायद्वयस्योपकर्तव्यमित्यवधारणात् पुनः प्रयोगः सेत्स्यतीति । अथवा एवं वक्तव्यं, साङ्गा पौर्णमासी अमावास्यासहिता स्वार्थं करोतीति करणविभक्तिश्रुतेरवगमात् पूर्वोक्तेनैव न्यायेन प्रधानापूर्वमर्थं स्वाङ्गपूर्वानुगृहीतमेकमपूर्वं कृत्वाऽपवृज्यते । तत्पुनरेवं निष्पन्नेनैवामावास्याऽपूर्वेण सहापरमपूर्वमारभेत । ततश्च

निवृत्तेष्वङ्गापूर्वेषु अनाचास्थायां क्रियमाणान्यङ्गानि न निराकरिष्यन्ते इत्यदोषः । एतयैव च दिशा उत्पत्तिविरोधः परिहर्तव्यः । आह च, '**आवृत्तिभिर्यथाऽध्याये संस्कारो भवति क्रमात् । वाक्यावयवरूपेण तथाऽपूर्वं भविष्यति ॥**' न चानुत्पन्नावयवत्वेन भवितव्यम् । अनयैव ह्यर्थापत्त्या शक्यते वक्तुं, सूक्ष्मावयवरूपेण तत् प्रतीयते इति । यदाऽपि अत्यन्तासतामनुत्पत्तेः प्रागवभूतास्तित्वमभिव्यज्यते, तदाऽपि प्रतिपुरुषं कर्मभिः स्वीकरणात् फलाभिमुखकरणं शब्दादिविलक्षणा अस्याभिव्यक्तिर्भविष्यति । तथाहि, '**नैकरूपैव भावानामभिव्यक्तिः प्रतीयते । आत्मस्थोन्मीलनं तेन व्यक्तिरस्य भविष्यति ॥ सर्वावाप्तिसमर्थो वा प्रकृत्यात्मा सदेष्यते । कश्चित्तु प्रतिबन्धोऽस्य कर्मभिः सोऽपनीयते ॥**' तस्मादस्त्यपूर्वम् । सूत्रस्यापि च न प्रकृतौपयिकमन्यमर्थं पश्यामः । तेन आरम्भचोदनैव अपूर्वस्यापि चोदनेत्ययमेवार्थः ।

( अथ भाष्यं व्याचष्टे– ) यदि पुनः फलवचनसामर्थ्यात्तदेव न विनष्टं, इति अपूर्वकल्पनानिष्प्रमाणकत्वं मन्वानो वरमेतदित्याह । 'नहि कर्मणां रूपमुपलभामहे' इत्ययुक्तं, 'रूपशब्दाविभागाच्च' ( ६।३।३।१२ ) इत्यत्र प्रत्यक्षोपलब्ध्यभिधानात् । यागप्रस्तावे च सति तस्याचलनात्मकत्वात्, 'यदाश्रयं देशान्तरं प्रापयति' इत्यसंबद्धम् । अत्रोच्यते, '**कालान्तरक्षमं रूपं कर्मणो नोपलभ्यते । भङ्गिरूपोपलब्धिस्तु न फलायोपयुज्यते ॥**' यद्यपि कर्मस्वरूपमुपलभ्यते, तथापि कालान्तरावस्थानाभावान्न तदुपयुज्यते इति नोपलभामहे इत्युच्यते । '**यागेऽपि प्रस्तुते चात्र चलनं यदुदाहृतम् । तत् प्रक्षेपांशरूपेण यागेऽप्यस्तीति निश्चयात् ॥**' नहि संकल्पमात्रेण फलनिष्पत्तिः, समस्तात् समस्तेतिकर्तव्यताकाच्च कर्मणः फलश्रवणात् । तत्र द्रव्यदानप्रक्षेपादीनां ग्रहणासादनादीनां च संयोगविभागफलत्वात् स्थायित्वे तदाश्रयेणावश्यं भवितव्यम् । न चासावस्ति । न चाभिव्यक्तं रूपमुपलभ्यते । संकल्पादीनामपि संकल्पान्तरादितिरोधानान्नात्र स्वरूपावस्थानोपपत्तिः । अवस्थानं च आत्मसमवेतस्य वा स्यात्, प्रदेयद्रव्यसमवेतस्य वा । ( प्रसङ्गात् आत्मानं निरूपयति– ) न तावदात्मनि चलनं समवैति, सर्वव्यापिनः संयुज्यमानविभुद्रव्यान्यदेशासंभवे चलितुमसामर्थ्यात् । कथं सर्वव्यापित्वमस्येति चेत् सर्वत्रोपलभ्यमानकार्यत्वात् । अहंप्रत्ययेन हि चैतन्यस्वभावस्य आत्मनः अस्तित्वमात्रमवगम्यते, न तु देशतः कालतो वा विशेष्यते । ततश्च, '**अनवच्छिन्नसद्भावं वस्तु यद्देशकालतः । तन्नित्यं विभु चेच्छन्तीत्यात्मनो विभुतेष्यते ॥**' 'सर्वत्र कार्योपलम्भः' इति, अहंप्रत्ययमेवाविशेषितं वदति, सुखदुःखाद्युपलब्धिर्वा । नहि क्वचिद्गतैस्ते नोपलभ्यन्ते । न चैते शरीरधर्मा इति स्थितमात्मवादे । तत्र यद्यसर्वगत आत्मा भवेत्ततो यदेव तद्गता देशेन शरीरं युज्येत, तदेव ( तत्रैव ) सुखाद्युपलब्धिः स्यान्नान्यत्र । शरीरमात्रान्तर्गतात्मवादी त्वाह —— **ननु** तदेव देशान्तरादागमनस्य लिङ्गम् । अतश्च विरुद्धहेतुत्वमस्येति । कुतः ? '**युगपद्यदि सर्वत्र कार्यमात्मगतं भवेत् । ततः सर्वगतत्वं स्यात् पर्याये तु शरीरवत् ॥**' यदि हि शरीराद्बहिरपि किं चिदात्मकार्यमुपलभेमहि शरीरान्तरे सुखदुःखादीन् वा, ततः सर्वगतत्वमध्यवस्येम । यतस्तु स्वशरीरान्तर्वर्त्येव कार्यं यत्रयत्र च तद्गतिस्तत्रतत्र पर्यायेणोपलभ्यते, तत् शरीरकार्यवदेव तत्सहितगतस्योपपत्स्यते, अन्यथा हि शरीरमपि सर्वगतं स्यात् । तस्माच्छरीरवदेवास्य तत्रतत्र गमनापत्तेः सुतरां सक्रियत्वप्रसङ्गः । संदेहो वाऽस्तु साधारणानैकान्तिकत्वात् । आह च– '**आत्मा शरीरसंमिश्रस्तेनैव सह संगमात् । तत्रतत्र सुखादीनि कार्याणि प्रतिपद्यते ॥**' तत्रोत्तरं 'नह्यसत्यागमने किं चिद्विरुद्धं' इति । येषां तु ( 'ननु तदेव' इत्यस्य स्थाने ) न तु तदेवेति पाठः, तेषां सिद्धान्तवाद्येव पर्यायेण सर्वत्र आत्मकार्योपलम्भनमागमनलिङ्गत्वेऽपि अविशिष्टमाशङ्क्योत्तरं वदतीति ग्रन्थयोजना । **कथं** पुनरिदमुत्तरं 'नह्यसत्यागमने' इति । तथाहि-- '**नैवाविरोधमात्रेण स्वपक्षः सिध्यति क्वचित् । परस्याप्यविरोधित्वमविशिष्टं हि दृश्यते ॥**' परेणापि हि शक्यं वदितुं '**नहि सति गमने किं चिद्विरुद्धं**' इति ।

अत्राभिधीयते । '**उभयत्राविरोधित्वं प्राप्तं नह्यसतीति यत् । पुनर्ब्रवीति तन्नूनं विरोध्यागमनं मतम् ॥**' परिसंख्यारूपेण असत्येवागमने न किं चिद्विरुद्धं, सति तु बहु विरुद्धमित्याह । तदुपवर्ण्यते, '**स्वतस्तावदमूर्तत्वान्न भूतैर्मिश्रताऽऽत्मनः । ततश्च तैरसंश्लिष्टो न नेतुं शक्यते क चित् ॥**' यदा मूर्तानामपि सूक्ष्माणां चन्द्रादित्यप्रकाशादीनां न मृत्पिण्डादिभिः सह मिश्रत्वमुपपद्यते, तन्नयनेन वा नयनं, तदा आत्मनः स्वभावेनात्यन्तामूर्तस्य ज्ञानसंतानस्य वा भूतैर्मिश्रत्वं भवेदिति कुत एतत् । योऽपि **स्याद्वादी** बद्धात्मनां शरीरादत्यन्तव्यतिरेकाभावादस्त्येव मूर्तत्वं जीवस्येति ब्रूयात्, तस्यापीतरेतराश्रयप्रसक्तिं, मिश्रत्वान्मूर्तत्वं मूर्तत्वाच्च मिश्रभावः इति । तस्मान्मुक्तावस्थानिदर्शनेन लक्षणतोऽस्य अमूर्तत्वान्न शरीरसंपर्कनिमित्तमूर्तत्वसिद्धिः । ततश्च शरीरादन्यः तेनासंपृक्तश्च । अस्पर्शत्वाच्च अनाकृष्यमाणः शरीरे गच्छति तद्गताकाशप्रदेशवदात्मा पश्चान्निःसृतस्तत्रैव तिष्ठेत् । नहि तस्य वायुना पृथिव्यादिभिर्वा प्रेरणं, येन स्वतन्त्रः परप्रेरितो वा गच्छेत् । ज्वालाप्रभृतीनां तु स्पर्शवत्त्वाद्वायुना प्रेर्यमाणानामुल्मुकादिना वा नीयमानानां युक्तं गमनम् । तेन केवलं शरीरं गच्छदचेतनं स्यात् । सर्वगतत्वे तु यत्रयत्र गम्यते, तत्रतत्र आत्मानुस्यूतिरस्तीति युक्ता चैतन्यानुवृत्तिः, यथा पूर्वाकाशप्रदेशत्यागे सर्वगतत्वादेव परेणावकाशदानसिद्धिः । किंच, '**असर्वगतपक्षे स्याज्जीवो देहादनिर्गतः । अणुः शरीरमात्रो वा, सर्वथाऽपि न युज्यते ॥**' ज्ञानसंततिपक्षस्तावन्निराकृतः । तत्र नित्यः सन्नात्मा शरीराभ्यन्तरवर्ती '**यद्यणुः कल्प्यते तत्र देहं न व्याप्नुयादसौ । ततश्च सर्वगात्रस्थसुखपुष्टयाद्यसंभवः ॥**' यदा ह्यणुमात्र आत्मा भवति तदा यावानेव प्रदेशविशेषस्तेनाधिष्ठितः, तन्मात्रगतानामेव सुखदुःखादीनामुपलब्धिः प्राप्नोति, ततश्चैकस्मिन्क्षणे शिरःपादवेदनाऽनुभवो न स्यात् । अथ लघुसंचारित्वात्तत्रतत्रोपलभ्यते इत्युच्यते, न तत्र प्रमाणमस्ति । न च कालभेदो लक्ष्यते, अनवस्थितस्योपलब्धिकालासंभवान्नैकत्राप्युपलभ्येत । तस्मादकल्पनेयम् । शरीरावयवानां चापरिशोषणं पुष्ट्यादि च आत्माधिष्ठितानां भवति, मृतावस्थायां विपर्ययदर्शनात् । तत्र यः एवावयवस्तेनोत्सृष्टः, स एव मृतवच्छुष्येत् । अथ शरीरपरिमित आर्हतपक्षेणाभ्युपगम्यते, तत्रापि बह्वदृष्टं कल्पनीयम् । '**सद्भावोऽवयवानां च तथा तेषामनन्तता । संश्लेषश्च विनाऽन्येन तद्भावेऽपि च नित्यता ॥ अतिसंकोचविस्तारौ पुत्तिकाहस्तिदेहयोः । अन्तराभवसंचारस्तद्भावाज्ञानकारणे ॥**' सर्वे ह्यवयवसद्भावादयः प्रत्यक्षाद्यविषयाः सन्तः उत्प्रेक्षामात्रेण कल्प्यन्ते, ते शब्दवच्चेहापि प्रत्याख्येयाः । शरीरमात्रावधिकानां चैषामुत्प्रेक्षितुमपि आनन्त्यादशक्यं, न चैषां द्रवत्वादिना विना कश्चित्संश्लेषहेतुर्विद्यते । न चासंश्लिष्टानामेकजीवारम्भसामर्थ्यम् । सर्वसंयोगानां च वियोगाविनाभूतत्वात् घटादितुल्यः कदा चिज्जीवस्य प्रध्वंसो भवेत् । गात्रच्छेदे च तद्वर्तिनां जीवावयवानां ततो निःसृत्य अवशिष्टे शरीरभागे पुनः प्रवेश इत्येतदप्रमाणकम् । यत्तु वियोजितमात्राणां हस्तादीनां स्फुरणं दृष्टं, तदभिघातप्रेरितवायुनिमित्तमिति न तावता जीवावयवानुगतिर्विज्ञायते । तथा सति 'संकोचविकासौ एतेषां भवतः' इत्यत्र न किं चित् प्रमाणं पश्यामः । दीपप्रभाप्रभृतीनां तु कथंचित् प्रत्यक्षत्वादुपपद्येते । न च प्रदीपप्रभायाः संकोचो भवति शरावादिच्छादने शेषप्रभाविनाशात् । अनावृता हि ज्वाला आत्मसमीपे प्रभामण्डलमारब्धुं समर्था, नाच्छादिता । एतेनैव च विकासोऽपि प्रत्युक्तः । अन्ये एव ह्यवयवास्तत्र प्रचीयमाना विस्तारं जनयन्ति, न तावतामेव विकासः । स्पर्शवतां च परस्परदेशप्रतिबन्धाद्देशान्तरव्याप्त्या विकासो घटते, जीवावयवानां तु अमूर्तत्वात् सर्वेषां समानदेशत्वाविघातात् नित्यमणुमात्रत्वप्रसङ्गः स्यात् । कथं चैकस्य जीवस्य पुत्तिकाहस्तिशरीरपरिमितौ संकोचविकासौ युज्येते । मरणकाले चान्तराभवशरीरसंचरणं केन चित् प्रतिबन्धेन सदपि न गृह्यते, तेन च शरीरान्तरे जीवनिक्षेप इत्यादि निष्प्रमाणकम् । तस्मात् सर्वगतत्वम् । यत्तु श्यामाकतण्डुलमात्रादिप्रदर्शनमुपनिषत्सु, तद्वाक्यान्तरप्रदर्शितविभुत्वस्यैव सतः सूक्ष्मग्रहणगोचरत्वात् । यदपि द्वैपा-

यनेनोक्तं ( भारते सावित्र्युपाख्याने ) ‘अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष बलाद्यमः’। इति, तदपि काव्यशोभार्थं विस्रष्टमृत्युव्यवहारप्रशंसनार्थं च पतिव्रताप्रशंसापरे वाक्ये प्रजापतिवपोत्खेदनादिवत् द्रष्टव्यम् । तथाहि तेनैव गीतादिष्वनेकप्रकारं सर्वगतत्वं वर्णितम् । ननु च सर्वगतत्वे व्योमवत् सर्वशरीरेष्वेक एवात्मा प्राप्नोति । नैष दोषः, शरीरभूयस्त्वात्, प्रतिशरीरं च सुखदुःखोपलब्धिव्यवस्थादर्शनात् । इतरथा ह्येकशरीरेणैव चरितार्थत्वात् अनेकशरीरवैयर्थ्यं स्यात् । जन्मान्तरशरीरवददोष इति चेत् । न । तत्र कर्मान्तरवशेनोपभोगान्तरार्थं पुनःपुनरारम्भात् । सर्वशरीरगतसुखाद्युपलब्धिश्च प्रतिशरीरं स्यात् । अन्यदीयैश्चेन्द्रियैः शरीरान्तरगतस्य आत्मीयत्वादुपलब्धेरन्धबधिरादीनामभावः स्यात् । वर्णविशेषव्यवस्थया च कर्मचोदनाभेदो न स्यात् । एकस्यैवाऽऽत्मनस्तेनतेन शरीरेण संबध्यमानस्य सर्ववर्णोपपत्तेः । आत्मनानात्वे त्वदोषः । सर्वेषामपि च सर्वगतत्वे मूर्तिरहितत्वात् समानदेशवृत्त्यविरोधः । तदपेक्षयैव च चैतन्यात्मकत्वाद्यविभागाच्च उपनिषत्सु ऐकात्म्यव्यवहारः ।

**कथं** पुनर्नानात्वेऽपि सर्वेषां सर्वशरीरैः संबन्धादन्यदीयसुखदुःखाद्यनुपलब्धिः ? **के** चित्तावदाहुः, ‘**यथा शरीरमात्रेऽपि मातृगर्भात्मवर्तिनाम् । सुखादीनां व्यवस्थैवं सर्वत्रैषा भविष्यति** ॥’ शरीरपरिमाणात्मवादिनोऽपि किलायं तुल्यो दोषः, तस्यापि गर्भात्मसमानदेशत्वात् मातृक्षेत्रज्ञः तद्गतानि सुखादीन्युपलभेत । तत्र यस्तस्य परिहारः, स सर्वात्मनां सर्वशरीरेषु भविष्यतीत्यविशेषः । यद्यत्रोपपत्तिरुच्येत, न तु परपक्षसाम्यापत्तिरेवोपपत्तिः, तस्य च तव चोभयोरप्यन्येन पर्यनुयोगात् । अपिच तस्य त्वगिन्द्रियपरिमाणत्वादन्तःशरीराकाशे बाह्यवदेव आत्मनोऽभ्युपगमान्नैव गर्भशरीरेण मातृक्षेत्रज्ञस्य प्राप्तिरस्ति, येन तुल्यदोषता स्यात् । तस्मादेवं परिहर्तव्यं, ‘**देशप्राप्त्या यदीष्येत सुखादेरुपभोग्यता । ततो दोषः प्रसज्येत योग्यभोगे त्वदुष्टता** ॥’ यदि ह्यात्मनः सुखादीनां च समानदेशलक्षण एव संबन्ध उपभोगकारणमिष्येत, ततोऽयं दोषः स्यात् । इह तु चक्षुरादीनामिव क्षेत्रज्ञयोग्यतालक्षणः संबन्धः । तत्र यथैव त्वगिन्द्रियेण स्पर्शसमानदेशानामपि रूपादीनामग्रहणं, एवमन्येनाऽऽत्मना अन्यदीयधर्माधर्मोपात्तसुखदुःखाद्यग्रहणम् । तस्मादात्मवादोक्तस्वस्वामिभावव्यवस्थानाददोषः । एवं सर्वगतत्वात् सिद्धमात्मनो निश्चलत्वम् । अथ ( अपूर्वं नात्मसमवेतं, किंतु ) द्रव्यवदानसमवेतमासीत्तत आह— ‘तद्विनष्टं’ इति । न च तस्याविनाशः, तद्विपरीतद्रव्यान्तरोपलम्भात् । न चास्य ग्रहणप्रतिबन्धहेतुः कश्चिदस्ति, येन न गृह्येत । अथार्थापत्त्या ग्रहणप्रतिबन्धादि कल्प्येत, तथापि सति अपूर्वाद्बहुतरमदृष्टं दृष्टविपरीतं च कल्पयितव्यं, तावदविनष्टमास्ते, तथा न दृश्यते, तथा प्रतिबन्धहेतुः, तस्याप्यदर्शननिमित्तं चेत्येवं तस्यतस्यान्यदित्यनवस्था, तथा क्षणिकस्य कर्मणः स्थानमनुपलब्धिकारणं च कल्प्यमित्यतिगौरवं, एवमनाश्रितकर्मावस्थानकल्पनायाम् । अथ आत्माश्रितमेव संयोगविभागौ अकुर्वदासीत्, तत्रापि दृष्टविपर्ययादृष्टकल्पने स्याताम् । तस्माद्वरमपूर्वकल्पनमेवेति सिद्धम् ।

मूलाधिकरणप्रयोजनं, द्रव्यादीनां फलसंबन्धे तेषामदृष्टार्थत्वात् कर्मणामिव प्रतिनिध्यभावः । कर्मफलसंबन्धे तु द्रव्यादेः कर्मोत्पत्त्या दृष्टार्थत्वात् समानकार्यत्वज्ञानादस्ति प्रतिनिधिः । कथं तर्हि पूर्वपक्षवादिनः प्रक्रान्तापरिसमाप्तिदोषाभावः । समापनीयमेव कर्म येन केन चित् द्रव्येण । सदृशोपादाने तु न यतितव्यं सदृशादपि फलाप्राप्तेः, कर्मणश्चाविहितसाधनविशेषस्यानपेक्षितसदृशत्वात् येन केन चित् सिद्धेः । न च तत् पूर्वद्रव्यस्य प्रतिनिधिरित्युच्यते, अन्यार्थत्वादसादृश्याच्च । पूर्वद्रव्यं हि फलाय प्रवृत्तमासीत्, इदानीमानीयमानं तु प्रत्यवायपरिहाराय नैमित्तिकफलाय वा प्रवृत्तस्य कर्मणः सिद्ध्यर्थमिति । नामधेयसिद्धिरपि प्रयोजनमेव । सा तु पूर्वोक्तत्वान्न प्रदर्शिता ।

**सु**— ( पृ. ६२१ ) धातोः फलभावनाकरणवाचित्वे श्येनादिशब्दानां तत्सामानाधिकरण्यात् नामधेयताऽपि सिद्धान्तप्रयोजनम् ।

**शा**— ‘**साध्यसाधनभावो हि श्रूयते स्वर्गयागयोः । वस्त्वन्तरस्य सद्भावे श्रुतिरेव विरुध्यते** ॥’ तस्मात् याग एव विनष्टोऽपि फलं साधयति, स एव

वा फलं यावदवतिष्ठते इति शास्त्रप्रामाण्यादवगन्तव्यं, नापूर्वम्। **इति प्राप्ते ब्रूमः। 'विनष्टस्यासतस्तावन्न कार्यारम्भसंभवः। क्षणिकत्वेन सिद्धस्य नावस्थानं च युक्तिमत्॥'** अतः अपूर्वमेव कल्पयितव्यम्।

**सोम**— पूर्वाक्षेपात् **संगतिः। प्रयोजनं** तु यावदिह शास्त्रे अपूर्वोपजीवि अङ्गानामपूर्वार्थत्वातिदेशोहादि, तत् सर्वं बोध्यम्। **सूत्रार्थस्तु**— चोदना अपूर्वं पुनरस्ति। यतः कर्मणां फलारम्भश्चोद्यते इति।

**वि**— 'अपूर्वसदसद्भावसंशये सति, नास्ति तत्। मानाभावात् फलं यागात् सिध्येच्छास्त्रप्रमाणतः॥, क्षणिकस्य विनष्टस्य स्वर्गहेतुत्वकल्पनम्। विरुद्धं माऽन्तरेणातः श्रेयोऽपूर्वस्य कल्पनम्॥ अवान्तरव्यापृतिर्वा शक्तिर्वा यागजोच्यते। अपूर्वमिति तद्भेदः प्रक्रियातोऽवगम्यताम्॥'

**भाट्ट**— धात्वर्थादेव अपूर्वमिति स्थिते, अपूर्वमेव अस्ति न वेति चिन्तायां, क्लृप्तयागध्वंसद्वारेणैव क्षणिकस्यापि यागस्य स्वर्गसाधनत्वोपपत्तौ नापूर्वकल्पनं, गौरवापत्तेः। न च नित्यत्वात् ध्वंसस्य 'धर्मः क्षरति कीर्तनात्' 'प्रायश्चित्तेन नश्यन्ति पापानि सुमहान्त्यपि' इति कीर्तनप्रायश्चित्तनाश्यत्वानुपपत्तिः, कीर्तनादेः फलोत्पत्तिप्रतिबन्धकत्वाङ्गीकारेण तदनाशकत्वात्, कीर्तनात्यन्ताभावविशिष्टज्योतिष्टोमव्यक्तित्वेन कारणत्वकल्पनाद्वा न कश्चिद्दोषः। अतो नापूर्वे किं चित् प्रमाणमस्ति। **इति प्राप्ते**, क्षरतिनश्यत्योर्नाशवाचिनोः भवन्मते लक्षणाऽऽपत्तेः नाशयोग्यमपूर्वमेव कल्प्यते, **गौरवस्य** फलमुखत्वेन अदोषत्वात्। अतश्च प्रधानेन स्वर्गादिफले जननीये अपूर्वमवान्तरव्यापारः। अङ्गेन च प्रधानादिनिष्ठफलाद्यनुकूलयोग्यतारूपे स्वफले जननीये तत् अवान्तरव्यापारः। स च फलवदात्मनिष्ठः। अवान्तरव्यापारत्वादेव च न यागादेरन्यथासिद्धिः। तदत्र यत्र एकमेव प्रधानं, तत्र पूर्वोत्तराङ्गसहितात् तस्मात् अपूर्वोत्पत्तेः प्रधानाव्यवहितं एकमुत्पत्त्यपूर्वं, तेन च सर्वाङ्गान्ते परमापूर्वमपरं, इति द्वे अपूर्वे। एवं प्रधानभेदेऽपि प्रतिप्रधानं उत्पत्त्यपूर्वभेदः, परमापूर्वं तु एकमिति ज्ञेयम्। दर्शपूर्णमासयोस्तु 'पौर्णमास्यां पौर्णमास्या यजेत' 'अमावास्यायाममावास्यया यजेत' इति वाक्यद्वयेन यागत्रयकरणतानां त्रिकान्तरनिरपेक्षाणां साहित्यावगतेः साहित्यस्य च एककार्यनिरूपितत्वं विना अनुपपत्तेः प्रतिसमुदायं समुदायापूर्वमपरं, तेन च परमापूर्वं, इति नवापूर्वसिद्धिः। एवमन्यत्रापि चातुर्मास्यद्वादशाहादिषु अपूर्वकल्पना ज्ञेया। अङ्गेषु तु संनिपत्योपकारकाङ्गजन्यापूर्वाणां प्रधाने एव उत्पत्त्यपूर्वजननानुकूलयोग्यताजनने उपयोगः। अन्तिमप्रधानगतयोग्यतया च नाशः। आराडुपकारकजन्यानां तु उत्पत्त्यपूर्वनिष्ठतदव्यवहितकार्यजननानुकूलयोग्यताजनने उपयोगः। अव्यवहितं च कार्यं समुदायापूर्वसत्त्वे तदेव। तदभावे परमापूर्वं स्वर्गाद्येव वा ज्ञेयम्। अन्तिमयोग्यतोत्पत्तौ च नाशः। यदि तु परमापूर्वे न तथा किं चित् प्रमाणमस्ति इत्याशङ्क्येत, ततो माऽस्तु तत्। अङ्गानां तु आराडुपकारकाणां उत्पत्त्यपूर्वे एव समुदायापूर्वाभावे फलानुकूलयोग्यताजननमेव कार्यमस्तु। सर्वथा सिद्धमपूर्वम्। २।१।३.

**मण्डन**— 'विधेर्बलात्तावदपूर्वसिद्धिः।' ३.

**शंकर**— 'अपूर्वं द्वारमस्ति नः।' ३.

* एवं तावत् सिद्धम**पूर्वं** तच्च धात्वर्थादेव इत्यपि, धात्वर्थस्य अपूर्वजनकत्वे द्रव्यादेः तदर्थत्वं इत्यपि च। तदपवादस्तु तानिद्वैधाद्याधिकरणेषु। **कौ.** २।१।४।७ पृ. ६३०, * **अपूर्वाधिकरणे** क्रियाजन्यादृष्टकल्पनाऽपेक्षया नियमादृष्टकल्पने लाघवमुपपादयिष्यामः। १।२।४।४२ पृ. ७१. * ननु कृष्णविषाणाऽकरणे **यागकार्यनाशकत्वकल्पनं, प्रयाजादावपि** अकरणस्य आग्नेयादिकार्यानुत्पादकत्वकल्पनाऽऽपत्तेः, अकरणत्वादेः कारणताऽवच्छेदकत्वकल्पने गौरवाच्च इत्यादि कौस्तुभे **अपूर्वाधिकरणे** क्षुण्णम्। **भाट्ट.** ४।२।७. * सिद्धे हि अस्मिन्नधिकरणे (स्वर्गकामाधिकरणे) कर्त्रतिरिक्तनियोज्ये तदन्वयवत्त्वादेव अपूर्वाधिकरणे क्रियातिरिक्तकार्यसिद्धिः। **रत्न.** ६।१।१।१ पृ. ६. * 'समिधो यजति' 'तनूनपातं यजति' इत्यादौ अर्थान्तरपरत्वात् उच्चारणभेदात् भावनाभेदसिद्धिः **अपूर्वाधिकरणन्यायेन** च अपूर्वभेदसिद्धिः। **कौ** २।२।२।२ पृ. १४३. * फलस्य कालान्तरभाविनः कारणत्वं यागादेः न संभवति इति अपूर्वकल्पनं, परंतु फलसिद्धौ **अपूर्वाधिकरणलोपः। बृ.** ६।१।१।१.

( इतः परं अपूर्वशब्दः प्रायः कर्मपरः )
* अपूर्वं एव गृहमेधीयं कर्म चातुर्मास्येषु । भा. १०।७।१।२८–३३.

**अपूर्वं च प्रकृतौ समानतन्त्रा चेदनित्यत्वादनर्थकं हि स्यात् । १२।२।१३।३३ ॥**

प्रकृतिः विकृत्या समानतन्त्रा चेत् स्यात्, तदा प्रकृतौ अपूर्वं वैकृतं तन्त्रं प्रसज्येत अनित्यत्वात् विकृतेः । कामे निमित्ते कस्मिंश्चित् उत्पन्ने सति विकृतिः प्राप्नोति । नैमित्तिकं च नित्यं बाधते । यदि न बाधेत अनर्थकं हि अनर्थकमेव स्यात् वैकृतं नैमित्तिकं वा काम्यं वा । तस्मात् वैकृताङ्गेन प्रकृतेः प्रसङ्गित्वम् । कृत्वाचिन्तेयम् । वस्तुतस्तु प्रकृतिः विकृत्या समानतन्त्रा नास्त्येव । **के.**

* नास्ति पूर्वं यस्य तत् कर्म **अपूर्वम्** । या स्वयमेव प्रकृतिः, यस्याः अन्या का चित् प्रकृतिः नास्त्येव, तादृशं कर्म अपूर्वं दर्शपूर्णमासरूपम् । **के.** * **अपूर्वं** अर्थं विदधतः अर्थवत्ता भविष्यति । भा. ३।५।६।२१, * अपूर्वं अर्थं विधास्यति, तथा प्रवृत्तिविशेषकरो भविष्यति (समानमितरत् श्येनेन इति विधिः ) । अनुवादः सन् अप्रवृत्तिविशेषकरः अनर्थकः स्यात् । ७।१।२।१६. * अपूर्वः उपांशुयाजः दर्शपूर्णमासयोः ‘ उपांशुयाजमन्तरा यजति ’ इति । वि. २।२।४. * अपूर्वः एव अवभृथः ज्योतिष्टोमे । यावदुक्तं कर्तव्यम् । भा. १०।७। १५।४७–५०. * अपूर्वः पदार्थः अपकृष्यमाणः न प्राचां अपकर्षाय कल्पते इति ‘ तथाऽपूर्वं ’ ( ५।१। १६।२९ शा. ) इत्यत्र अवस्थितम् । शा. ५।२।९. * अपूर्वौ पशुसोमौ ‘सोमेन यजेत’ ‘अग्नीषोमीयं पशुमालभेत ’ इति । वि. २।२।६, * अपूर्वाः एव आघारादयः ‘ आघारमाघारयति ’ ‘अग्निहोत्रं जुहोति ’ इति । २।२।५. * अपूर्वाः एव दर्विहोमाः । भा. ८। ४।५।१०–२८, * अपूर्वा एव उपसत् ज्योतिष्टोमे । यावदुक्तं कर्तव्यम् । १०।७।१४।४३–४६.

**अपूर्वासु तु संख्यासु विकल्पः स्यात् सर्वासामर्थवत्त्वात् । १०।५।५।१४ ॥**

अग्निचयने उखायाः आधूननार्थाः वीजवननार्थाश्च मन्त्रा बहवः पठिताः । तत्र च ‘ सप्तभिराधूनोति ’ ‘ चतुर्दशभिर्वपति ’ इत्युक्तम् । तत्र सप्तत्वं चतुर्दशत्वं च पाठक्रमेण आदित एव ग्राह्यमिति उत्सूत्रः पूर्वपक्षः । तन्निरासार्थः तुशब्दः । सप्तत्वादयः संख्याः अपूर्वाः प्रमाणान्तरेण अप्राप्ताः । तासु अपूर्वासु संख्यासु आदितो वा मध्यतो वा यतः कुतश्चिद्वा इत्यत्र विकल्पः स्यात् । न आदित एवेति अत्र नियमः । सर्वासां ऋचां सर्वेषां मन्त्राणां अर्थवत्त्वं एवं स्यात् । आदित एव ग्रहणे तु अधिकानामानर्थक्यं स्यात् । तस्मात् सर्वासामर्थवत्त्वार्थं विकल्पः स्यात् इति सिद्धान्तः । **के.**

**अपूर्वे चार्थवादः स्यात् । १०।८।२।५ ॥**

दर्शपूर्णमासयोः आज्यभागौ प्रकृत्य ‘न तौ पशौ करोति, न सोमे ’ इति श्रूयते । तत्र अपूर्वे प्रकृतिरहिते सोमे विषये श्रूयमाणं ‘ न सोमे ’ इति वाक्यं ‘न तौ पशौ करोति ’ इत्यस्य अर्थवादः स्यात् । यथा सोमे आज्यभागौ न क्रियेते, तद्वत् पशावपि न क्रियेते इति पशौ आज्यभागप्रतिषेधस्य स्तुतिः । अथवा अपूर्वे दार्शपौर्णमासिके कर्मणि ‘ न तौ पशौ करोति न सोमे ’ इति अर्थवादः स्यात् । सोमे आज्यभागौ न क्रियेते न पशावपि, दर्शपूर्णमासयोस्तु क्रियेते, इति दर्शपूर्णमासकर्म प्रशस्तं इति स्तुतिः । **के.**

**अपूर्वे त्वविकारोऽप्रदेशात् प्रतीयेत । ९।३। ६।२१ ॥**

दर्शपूर्णमासयोः ‘ प्रोक्षणीरासादय ’ इति निगदे ‘ पत्नीं संनह्य ’ इत्युक्तम् । तत्र द्विपत्नीके बहुपत्नीके वा प्रयोगे पत्नीशब्दे वचनोहः कर्तव्यो न वेति विचारे कर्तव्यः इति पूर्वः पक्षः । तन्निरासार्थस्तुशब्दः । अपूर्वे अन्यप्रकृतिशून्ये स्वयंप्रकृतिरूपे दर्शपूर्णमासकर्मणि पत्नीशब्दे अविकारः प्रतीयेत न विकारः ऊहः प्रतीयेत । अप्रदेशात् अन्यस्य प्रकृतिरूपस्य प्रदेशस्य अभावात् । चोदकेन अन्यतः प्राप्ते मन्त्रे अर्थानुसारेण ऊहः स्यात्, अत्र तु स्वयं प्रकृतित्वात् चोदकेन प्राप्तिरेव नास्ति । पत्नीशब्दस्य आकृतिवाचकत्वेन द्वयोः बह्वीनां वा पत्नीनां वाचकत्वात् ऊहस्य न प्रयोजनम् । **के.**

* **अपूर्वे** त्वपकृष्येत । ३।८।१।२१ ॥ पोत्रीयं नेष्ट्रीयं इत्यादौ अपूर्वे कर्मणि तु अध्वर्युः अपकृष्येत निवर्त्येत विशेषसमाख्यानात् । द्वादशानां द्वंद्वानां तु आध्वर्यवत्वमेव इति । अपूर्वत्वेऽपकृष्येत इति सुधायां पाठः ( ३।७ पृ. ६५ ) । असद्गृहीतस्तु य–पाठः । भाष्ये तु 'अपूर्वे त्वपकृष्येत' इति पठितम् । आनन्दाश्रमादौ तु नेदं सूत्रत्वेन मुद्रितं, किंतु भाष्यत्वेन । **के.** * **अपूर्वत्वात्** 'वषट्कर्तुः प्रथमभक्षः' इत्यत्र नानेकगुणविधानं दुष्करम् । **वा.** ३।५।१३।३८. * **अपूर्वविधिः** उत्पत्तिविधि– विनियोगविधि– अधिकारविधि– प्रयोगविधिभेदेन चतुर्धा । कर्मस्वरूपबोधको विधिः उत्पत्तिविधिः यथा 'अग्निहोत्रं जुहोति' इति । अङ्गताबोधको विधिः विनियोगविधिः यथा 'दध्ना जुहोति' इति । फलसंबन्धबोधको विधिः अधिकारविधिः यथा 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति । साङ्गानुष्ठानबोधको विधिः प्रयोगविधिः । स च नित्यकल्पो भिन्नः उत्पत्तिविनियोगविध्युपजीवकश्च । **न च** किमर्थं तत्कल्पनं इति **वाच्यम्** । समानदेशकालकर्तृताया अन्येन अलाभात् । तल्लाभाय तस्य आवश्यकत्वात् । अङ्गप्रधानविध्येकवाक्यताबोध एव प्रयोगविधिः इत्यन्ये । **मणि.** पृ. ९९. * अपूर्वविधिः चतुर्विधः । जातिविधिः, द्रव्यविधिः, गुणविधिः, क्रियाविधिश्च । तत्र **जातेः** अपूर्वविधिर्यथा 'खादिरं वीर्यकामस्य यूपं कुर्वीत' इति । **द्रव्यस्य** अपूर्वविधिर्यथा '**गोदोहनेन** पशुकामस्य प्रणयेत्' इति । **गोदोहनशब्दस्य यौगिकत्वेन** द्रव्यवाचित्वात् । **गुणस्य** अपूर्वविधिर्यथा 'यदि कामयेत वर्षुकः पर्जन्यः स्यात्, नीचैः सदो मिनुयात्' इति । **क्रियाया** अपूर्वविधिर्यथा 'अग्निहोत्रं जुहोति' इति । **देवताविधिरपि** अपूर्वविधौ एवान्तर्भूतः, देवतायाः यागसिद्ध्या अदृष्टार्थत्वेऽपि विध्येकप्रमाणत्वात् । आहवनीयादेः होमाधिकरणीभूतस्य विधिरपि अपूर्वविधावेव अन्तर्भूतः, आहवनीयादेरपि अधिकरणत्वेन दृष्टार्थत्वेऽपि होमविधिना अनाक्षिप्तत्वेन अदृष्टार्थत्वस्य अघाराग्निहोत्राधिकरणवार्तिके उक्तत्वात् । **देवताविधिरपि** तद्धित– चतुर्थी– मन्त्रवर्ण– द्वितीया– अर्थवादभेदात् पञ्चविधः । तत्र आर्थवादिकः अर्थवादभेदेषु वक्ष्यते । अध्ययनविधिरपि अपूर्वविधिः दृष्टार्थश्च । नहि अयं नियमविधिः । स हि अर्थज्ञानस्वरूपे वा स्यात् क्रत्वपूर्वे वा ? नाद्यः, नहि अध्ययनेनैव अर्थज्ञानं इति नियमः संभवी । उपायान्तरेणापि तद्दर्शनात् । ( इदं चिन्त्यं, उपायान्तरेणार्थज्ञाने सति तत्पूर्वकानुष्ठानेन अपूर्वजननायोगस्य सिद्धान्तितत्वात् । इति **के.** ) । न द्वितीयः, अनारभ्याधीतत्वेन क्रत्वपूर्वानुपस्थितेः । अव्यभिचारिद्वारेण हि क्रतूपस्थितिः स्यात् । न चात्र तदस्ति । भावे वा पर्णतादिवत् क्रत्वङ्गत्वापत्तिः । अत एव अध्ययने नियमापूर्वं नास्ति । शूद्रव्यावृत्त्या तु फलतो **नियमव्यवहारः** इत्येतत् सर्वं न्यायरत्नमालायामुक्तम् । **अपूर्वविधिः** पुनर्द्विविधः क्रत्वर्थः पुरुषार्थश्च । तत्र क्रत्वर्थः अपूर्वविधिर्यथा 'समिधो यजति' इत्यादिः । पुरुषार्थः अपूर्वविधिर्यथा 'अग्निहोत्रं जुहोति' इत्यादिः । **बाल.** पृ. २२, * अपूर्वविधिः नियमविधिना बाध्यते । यथा 'उपांशु यजुषा' इति निगदेषु अपूर्वविधित्वापत्तेः यजुरन्तरेषु नियमविधिरेव अङ्गीकृतः । पृ. १४३, अपूर्वविधिः प्रतिप्रसवविधिना बाध्यते, यथा 'पूषा प्रपिष्टभागः' इति पेषणस्य चरौ प्रतिप्रसवेन पशौ पुरोडाशे च अपूर्वविधिः । पृ. १४४. * अपूर्वविधिः । यस्य यदर्थत्वं प्रमाणान्तरेणाप्राप्तं, तस्य तदर्थत्वेन यो विधिः, सः अपूर्वविधिः 'यजेत स्वर्गकामः' इति । यागस्य हि स्वर्गार्थत्वं न प्रमाणान्तरेण ज्ञायते । किंत्वनेनैव विधिना । **मीन्या.** * अपूर्वविधिः 'विधिरत्यन्तमप्राप्ते' । तत्र यः अत्यन्तमप्राप्तः न च प्राप्स्यति प्राक् वचनादित्यवगम्यते, तत्र नियोगः शुद्ध एव विधिः । यथा 'व्रीहीन् प्रोक्षति' इति । **वा.** १।२।४।३४ पृ. १५२, * **अपूर्वविधौ** अनेकार्थविधानं शक्यं, नान्यत्र । २।२।१२।२७ पृ. ५६१, * **अपूर्वविनियोगः** । पूर्वक्लृप्तापूर्वविनियोगमात्रं संभवति, नापूर्वान्तरं कल्पयित्वा तत्साधनत्वाध्यवसानं युक्तम् । ३।६।१६।४२ पृ १०६४.

* **अपेक्षणेषु** च सर्वेषु पुरस्तादुच्चरितस्य ग्रन्थानुगुण्यात् पूर्वमालोचनं भवति । **वा.** ३।१।१४।२४ पृ. ७४०.

* **अपेक्षा** तावत् समानजातीयेषु भवति । यथा बलवान् देवदत्तः इति न हस्तिनं सिंहं वा अपेक्ष्य भवति । किं तर्हि, समानजातीयान् पुरुषानपेक्ष्य । **भा.** ११।१।८।३८ पृ. २१२१. * **अपेक्षासु** सर्वासु प्रकृतासंभवेन अप्रकृतग्रहणम् । **वा.** ३।६।१६।४२ पृ. १०६४. * **अपेक्षाऽऽक्षिप्तश्च** प्रतिनिधिः । **टुप्.** ६।३।४।१६ पृ. १४१६.

* **अपेक्षाबुद्धिः** द्वित्वसंख्यानिमित्तं उत्पादितद्वित्वा निवर्तमाना द्वित्वमपि निवर्तयति । अस्ति हि किंचिन्निमित्तकारणमपि यदुपजनितकार्यं निवर्तमानं कार्यमपि निवर्तयति । **कणिका.** पृ. ३३४.

**अपेक्षितविधानादिरूपः न्यायः** ॥ नहि समाख्यया क्रमस्य बाधः संकोचो वा, तस्य याज्यादिकार्ये निवेशेऽपि अविरोधात् । अपितु अपेक्षितविधानादिरूपस्य न्यायस्यैव (समाख्याया बाधः संकोचो वा) स तु नियमः समाख्यातो दुर्बल एव । **कौ.** ३।२।७।२० पृ. २५९.

* **अपेक्षितविधिना** अनपेक्षितविधिः बाध्यते । यथा सोमवमनेष्टिः वैदिकसोमस्य वमने, न तु लौकिकस्य । **बाल.** पृ. १४४.

**अपेक्षितविधेः** ( इयं पञ्चमी ) **अनपेक्षितविधानदौर्बल्यन्यायः** ॥ व्रीहियवाभ्यां वैतुष्यार्थे अवघातोऽपेक्षितः न आज्यसांनाय्याभ्यां, इति अपेक्षित० न्यायेन अवघातस्य औषधद्रव्यमात्रशेषत्वं तेषामर्थाधिकरणे ( ३।१।४ ) दर्शितम् । **पराक्रमः.** ४१।१.

**अपेक्षितानपेक्षितविधानयोः अपेक्षितविधानं बलवत् इति न्यायः** ॥ तस्मात् प्रथमापेक्षितकारणक्लृप्तिमेव अन्वयव्यतिरेकौ न्यायसहितौ कुर्वाते । कार्यस्य कारणापेक्षा हि प्रथममुत्पद्यते, न विरोधिसंसर्गाभावापेक्षा । इति **विवरणम्** । पृ. ९० । तत्रायं न्याय उक्तः । **तत्त्वदीपने** पृ. ९०.

* **अपोहवादः** । 'अगोनिवृत्तिः सामान्यं वाच्यं यैः परिकल्पितम् । गोत्वं वस्त्वेव तैरुक्तमगोऽपोहगिरा स्फुटम् ॥ १ ॥ भावान्तरमभावो हि पुरस्तात् प्रतिपादितः । तत्राश्वादिनिवृत्त्यात्मा भावः क इति कथ्यताम्' ॥ २ ॥ **श्लोवा.**

**रत्नाकरः**—सौगतसमयसिद्धमपोहरूपं सामान्यं निराकरोति– अगोनिवृत्तिरिति । ये तु आहुः–न तावत् व्यावृत्तरूपाणां अत्यन्तविलक्षणानां स्वलक्षणानां अनुवृत्तः कश्चिदात्मा संभवति । न च स्वलक्षणानि अविकल्पत्वात् आनन्त्यव्यभिचाराभ्यां शब्दाभिधानीयकं लभन्ते । अतः अतद्व्यावृत्तिरेव सर्वानुगता शब्दार्थ इति यथा शाबलेयस्य अगोव्यावृत्तिः एवं बाहुलेयस्यापि इति । यथा आहुः 'यद्रूपं शाबलेयस्य बाहुलेयस्य नास्ति तत् । अतद्रूपपरावृत्तिद्वयोरपि न भिद्यते ॥' इति । एष च प्रयोगः 'यदत्यन्तविलक्षणानां सादृश्यापादकं तदन्यव्यावृत्तिरूपं दृष्टं यथा गवाश्वकुञ्जराणां अनुष्ट्रत्वं, तथा गौरयं इति विकल्पाकारो विलक्षणानां शाबलेयादीनां सादृश्यमापादयति' इति स्वभावहेतुः । तस्मात् अगोनिवृत्तिरेव सामान्यं शब्दवाच्यमिति । तैः गोत्वं वस्त्वेव शब्दान्तरेणाभिहितं, नार्थान्तरम् । अयं च वक्ष्यमाणानेकयुक्तिसंक्षेपश्लोकः इति । कथमित्याह– भावान्तरमिति । न च अगोनिवृत्तिरूपस्य अभावस्य आश्रयभूतं भावान्तरं भवन्मते संभवति इत्याह– तत्रेति । १।१।१।५ ( श्लोकवार्तिकस्थस्य अपोहवादस्य विस्तृतत्वात्, शास्त्रदीपिकास्थस्य चापोहवादस्यात्र कोशे आकृतिवादे संगृहीतत्वात् नोद्धारोऽस्माभिः कृत इति ज्ञेयम् ) । * **अपोहवादेन** सौगताभिमत– अवस्तुरूपतुच्छान्यापोहरूपत्वे वेदाप्रामाण्यापत्तेः आकृतेः भावरूपता उपपादिता । **बाल.** पृ. ७.

**'अपोह्यमाने चाभावे भाव एवावशिष्यते' इति न्यायात्** अकरणनिवृत्तिः करणमेव नान्यत् । नाभावो भावमृच्छति । **रत्न.** ६।३।१।२ पृ. ७९।२.

* **अपौरुषेयः शब्दार्थसंबन्धः** । 'औत्पत्तिकस्तु शब्दस्यार्थेन संबन्धः' **सूत्रं** १।१।५.

* **अपौरुषेया** वेदाः, कर्तृस्मरणाभावात् । **विद्यानाथः.** १।१।८।२९. * **अपौरुषेये** नियोगविनियोगयोः अबुद्धिपूर्वकत्वात् अनपेक्षत्वं शब्दस्य । **कणिका.** पृ. २७३. * अपौरुषेये वेदे कार्याभिधायकत्वं तावत्

लिङ्गादेरवसीयते । ऋजु. पृ. ३५. * अपौरुषेयत्वं वेदानां दृश्यादर्शनादिना कर्तुरभावनिश्चयात्, समाख्यायाः प्रवचननिमित्ताया उपपत्तेश्च । सोम. १।२।१ पृ. ३.

**अपौरुषेयत्वाधिकरणम् ।** वेदापौरुषेयत्वाधिकरणम् । वेदाधिकरणम् ॥

**वेदांश्चैके संनिकर्षं पुरुषाख्याः । १।१।८।२७ ॥**

**भाष्यं—** उक्तं चोदनालक्षणोऽर्थो धर्म इति । यतो न पुरुषकृतः शब्दस्यार्थेन संबन्धः । तत्र पदवाक्याश्रयः आक्षेपः परिहृतः । इदानीं अन्यथा आक्षेप्स्यामः । पौरुषेयाश्चोदना इति वदामः । संनिकृष्टकालाः कृतका वेदा इदानींतनाः, ते च चोदनानां समूहाः । तत्र पौरुषेयाश्चेत् वेदाः, असंशयं पौरुषेयाश्चोदनाः । कथं पुनः कृतका वेदा इति ? केचित् मन्यन्ते, यतः पुरुषाख्याः । पुरुषेण हि समाख्यायन्ते वेदाः, काठकं कालापकं पैप्पलादकं इति । नहि संबन्धादृते समाख्यानम् । न च पुरुषस्य अन्यः शब्देन अस्ति संबन्धः, यदतः कर्ता पुरुषः, कार्यः शब्द इति । ननु प्रवचनलक्षणा समाख्या स्यात् । नेति ब्रूमः । असाधारणं हि विशेषणं भवति । एक एव हि कर्ता, बहवोऽपि प्रब्रूयुः । अतः अस्मर्यमाणोऽपि चोदनायाः कर्ता स्यात् । तस्मान्न प्रमाणं चोदनालक्षणोऽर्थो धर्म इति ।

**बृहती—** वेदांश्चैके संनिकर्षं पुरुषाख्याः । 'पदवाक्याश्रयः' इति (भाष्यं, तत्र–) विभागाभिधानात् अविभक्तकार्यत्वाच्च विवेकः । (विभागेन पदानामभिधायकत्वात् पदव्यवहारः, अविभक्तं च सर्वेषां पदानामेकं कार्यं विशिष्टैकार्थप्रतिपत्तिरिति, तन्निबन्धनस्तेष्वेव पदेषु वाक्यव्यवहारः, तेन कार्यवशेन पदव्यवहारो वर्णानां, कार्यवशेन च वाक्यभावः पदानामिति युक्तो वाक्यपदयोर्विवेकः) । यदुक्तं 'अस्मरणात्' (कर्तुः, अकृतको वेद इति) तत् विरुद्धं समाख्यया । किं कार्यनिबन्धनैवेयं समाख्या ? बाढं, असाधारणेन हि व्यपदेशो भवति, साधारणं च प्रवक्तृत्वम् । कथं तर्हि 'कृते ग्रन्थे' 'तेन प्रोक्तं' इति च सूत्रद्वयं भगवतः (पाणिनेः । उत्तरं–) प्रोक्तवचनमयुक्तं 'समर्थानां' इति विरोधात् ('समर्थानां प्रथमाद्वा' इति सामर्थ्ये सति तद्धितो भवति, न च कठेन प्रोक्तं इत्यस्य विग्रहवाक्यस्य योऽर्थः, स काठकशब्दादवगम्यते, तेन सामर्थ्याभावात् तस्मिन्नर्थे तद्धितो नोत्पद्यते एव, तेनेदं वचनमयुक्तम्) तस्मात् कार्यतैव वेदस्यावगम्यते ।

**अनित्यदर्शनाच्च । २८ ॥**

**भाष्यं—** जननमरणवन्तश्च वेदार्थाः श्रूयन्ते 'बबरः प्रावाहणिरकामयत' 'कुसुरुविन्द औद्दालकिरकामयत' इत्येवमादयः । उद्दालकस्यापत्यं गम्यते औद्दालकिः, यद्येवं प्राक् औद्दालकिजन्मनो नायं ग्रन्थो भूतपूर्वः । एवमपि अनित्यता ।

**बृहती—** केयं कार्यता नित्यत्वाच्छब्दानां, औत्पत्तिकत्वाच्च संबन्धस्य ? (उत्तरं–) प्रमाणान्तरापेक्षिता (प्रमाणान्तरेण अयमर्थोऽनेन प्रतिपन्नः इति येयं प्रमाणान्तरापेक्षिता सा कार्यता) तथा च तदनुरूपं वेदवचो दृश्यते 'बबरः प्रावाहणिः' इत्येवमादि ।

**उक्तं तु शब्दपूर्वत्वम् । २९ ॥**

**भाष्यं—** (सिद्धान्तयति–) उक्तमस्माभिः शब्दपूर्वत्वमध्येतॄणाम् । केवलमाक्षेपपरिहारो वक्तव्यः सोऽभिधीयते ।

**आख्याः प्रवचनात् । ३० ॥**

**भाष्यं—** यदुक्तं कर्तृलक्षणा समाख्या काठकाद्या इति । तदुच्यते, नेयमर्थापत्तिः । अकर्तृभिरपि हि एनामाचक्षीरन् । प्रकर्षेण वचनं अनन्यसाधारणं कठादिभिरनुष्ठितं स्यात्, तथापि हि समाख्यातारो भवन्ति । स्मर्यते च वैशंपायनः सर्वशाखाध्यायी, कठः पुनः इमां केवलां शाखां अध्यापयांबभूवेति । स बहुशाखाध्यायिनां संनिधौ एकशाखाध्यायी अन्यां शाखां अनधीयानः तस्यां प्रकृष्टत्वात् असाधारणं उपपद्यते विशेषणम् ।

**बृहती—** अत्रोच्यते स्यादेतदेवं यदि अन्यथा असाधारणव्यपदेशो नोपपद्यते । प्रकर्षादपि हि असाधारणव्यपदेशो दृष्टो लोके, यथा बादरायणेन वेदप्रामाण्यं समाख्यायते । अत एव सूत्रद्वयप्रणयनं भगवतः पाणिनेः ('कृते ग्रन्थे' 'तेन प्रोक्तं' इति च) 'समर्थानां'

इति चाविरोधः ( इत्यस्य चाविरोधः, वचनप्रकर्षेऽपि सामर्थ्यसंभवात् )।

**परं तु श्रुतिसामान्यमात्रम्। ३१॥**

**भाष्यं**— यच्च प्रावाहणिरिति, तन्न प्रवाहणस्य पुरुषस्य अप्रसिद्धत्वात् न प्रवाहणस्यापत्यं प्रावाहणिः। प्रशब्दः प्रकर्षे सिद्धः, वहतिश्च प्रापणे, न तु अस्य समुदायः क्वचित् सिद्धः। इकारस्तु यथैवापत्ये सिद्धः, तथा क्रियायामपि कर्तरि। तस्मात् यः प्रवाहयति स प्रावाहणिः। बबर इति शब्दानुकृतिः। तेन यो नित्योऽर्थः ( वायुः ) तमेव एतौ शब्दौ वदिष्यतः। अतः उक्तं 'परं तु श्रुतिसामान्यमात्रं' इति।

**कृते वा विनियोगः स्यात्, कर्मणः संबन्धात्। ३२॥**

**भाष्यं**— अथ कथमवगम्यते नायमुन्मत्तबालवाक्यसदृश इति। तथाहि पश्यामः 'वनस्पतयः सत्रमासत' 'सर्पाः सत्रमासत' इति। यथा 'जरद्गवो गायति मत्तकानि' कथं नाम जरद्गवो गायेत्? कथं वा वनस्पतयः सर्पा वा सत्रमासीरन् इति। उच्यते। विनियुक्तं हि दृश्यते परस्परेण संबन्धार्थम्। कथं? ज्योतिष्टोमः इत्यभिधाय कर्तव्यः इत्युच्यते। केन? इत्याकाङ्क्षिते सोमेन इति। किमर्थमिति? स्वर्गायेति। कथमिति? इत्थं अनया इतिकर्तव्यतया इति। एवमवगच्छन्तः पदार्थैरेभिः संस्कृतं पिण्डितं वाक्यार्थं कथमुन्मत्तबालवाक्यसदृशं इति वक्ष्यामः? ननु अनुपपन्नमिदं दृश्यते 'वनस्पतयः सत्रमासत' इत्येवमादि। नानुपपन्नम्। नानेन 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्येवमादयः अनुपपन्नाः स्युः। अपि च 'वनस्पतयः सत्रमासत' इत्येवमादयोऽपि नानुपपन्नाः, स्तुतयो ह्येताः सत्रस्य। वनस्पतयो नाम अचेतनाः इदं सत्रमुपासितवन्तः, किं पुनर्विद्वांसो ब्राह्मणाः। तद्यथा लोके संध्यायां मृगा अपि न चरन्ति, किं पुनर्विद्वांसो ब्राह्मणा इति। अपि च अविगीतः सुहृदुपदेशः सुप्रतिष्ठितः, कथमिव आशङ्क्येत उन्मत्त-बालवाक्यसदृश इति। तस्मात् चोदनालक्षणोऽर्थो धर्मः इति सिद्धम्।

**बृहती**— यदुक्तं 'बबरः प्रावाहणिः' इति, स्थिते प्रामाण्ये गुणवादं वक्ष्यति ( गुणवादस्तु १।२।१।१० इत्यत्र ), वक्ष्यमाणमेव च भाष्यकारेणात्र व्याख्यातम्। किमर्थं 'वक्ष्यामः' इति, नोक्तं च? ( उत्तरं– ) असंबद्धत्वोपन्यासार्थम्। ( असंबद्धतां परिहरति– ) न शक्यते ज्योतिष्टोमादिषु विध्युद्देशेषु कल्पयितुं, तदेकवाक्यत्वाच्च 'वनस्पतयः' इत्येवमादीनाम्। अपि च 'अविगीतः सुहृदुपदेशः' ( इति भाष्यं ) सार्वजनीनमविपर्ययं दर्शयति। तस्मात् चोदनैव प्रमाणं धर्मस्येति स्थितः प्रतिज्ञाऽर्थः।

**श्लोवा**— **वचनान्तरसाधर्म्यात् कर्तुः सामान्यसंप्लवे। समाख्यया विशेषोऽयं कठादिरवधार्यते॥ १॥** ( सामान्यसंप्लवः सामान्यप्राप्तिः। वचनान्तरेण भारतादिना ) **अनपेक्षत्वसूत्रे** ( ५ ) **या रूपात् कृतकतोदिता। वेदे सा दृश्यते स्पष्टा कृतकार्थाभिधायिनि। २॥** ( रूपात् 'बबरः प्रावाहणिः' इत्याद्यनित्याभिधायिवेदरूपात्। इति पूर्वः पक्षः। अथ सिद्धान्तः) **स्मृतिप्रयोजनाभावात् कर्तृमात्रेऽनपेक्षिते। सामान्यसिद्ध्यपेक्षत्वान्न समाख्या नियामिका।३॥ अन्यथाऽप्युपपन्नत्वादियं प्रवचनादिना। न शक्ता कर्तृमूलाय प्रोक्ते च स्मरणं स्थितम्।४॥** ('तेन प्रोक्तं' इति पाणिनीयं स्मरणम् (४।३।१०१)। **श्रुत्यादेर्दुर्बला चासौ न शक्ता तानि बाधितुम्। अङ्गभूयांसमेकेयं शब्दराशिं न बाधते। ५॥** ( अङ्गवत् वेदाङ्गवत् भूयांसं शब्दराशिं इति न्यायरत्नाकरः। अङ्ग इति पूर्वपक्षिणः संबोधनार्थो निपातः इति केवलः ) **कामं वा निर्निमित्तेयं शाखामेकां वदिष्यति। श्रुतिसामान्यमात्रं हि नात्र दण्डेन वार्यते। ६॥ सति साधारणत्वे वा संभवेन विशेषणम्। यथा वैरूपसामेति सत्तयैव प्रतीयते। ७॥** ( विशेषणं न व्यावर्तकमेव किंतु सत्तयाऽपि संभवदपि भवति। 'उक्थ्यो वैरूपसामा' 'एकविंशः षोडशी वैराजसामा' इत्यत्र सर्वप्राकृतसाम्नां निवृत्तिमाशङ्क्य पृष्ठस्तुतावेव रथंतरादिमात्रं निवर्त्यते, न सर्वाणि सामानि, सत्तामात्रेणैव वैरूपादेः क्रतुविशेषणत्वोपपत्तिः इति दशमे वक्ष्यते

'वैरूपसामा क्रतुसंयोगात् त्रिवृद्वदेकसामा स्यात्' इत्यत्र १०।६।६।१५ )। **अव्यासङ्गि च सर्वेषु प्रवक्तृत्वं कठादिषु। तेनैकव्यपदेश्यत्वं लक्ष्यते डित्थमातृवत्। ८॥** ( न व्यासङ्गि न व्यासज्यवृत्ति। डित्थडपित्थयोरपि माता यथा डित्थमाता इत्युच्यते तद्वत् )। **अन्यैस्तुल्येऽपि संबन्धे यत् तैर्न व्यपदिश्यते। न ह्येष कर्तृसंस्कारः पारार्थ्ये चैक इष्यते। ९॥ विद्यमानं निमित्तं च कथ्यते नासतः ( नास्य या इति पाठः ) क्रिया। साधारणं च तीर्थादि केन चिद् व्यपदिश्यते। १०॥** ( तीर्थं अगस्त्यतीर्थं कुमारिलतीर्थं इत्यादि )। **यदि चापौरुषेय्येषा नानित्यप्रतिपादिनी। पौरुषेय्यास्तु सत्यत्वं कथमध्यवसीयते। ११॥ नित्यमेव निमित्तं वा कठत्वं जातिरस्ति नः। काठकादिप्रवृत्त्यर्थं व्यावृत्तं चरणान्तरात्। १२॥** ( चरणान्तरात् शाखान्तरात्। ) **अनित्यार्थाभिधायित्वं स्वयमेवैष मुञ्चति। नित्यानित्यविकल्पेन वेदस्तादर्थ्यवर्जनात्। १३॥** ( एष वेदः मुञ्चति। तादर्थ्यस्य अनित्यार्थाभिधायित्वस्य वर्जनात् त्यागात्। ) **नित्यस्य नित्य एवार्थः कृतकस्याप्रमाणता। उन्मत्तवचनत्वं तु पूर्वमेव निराकृतम्। १४॥** ( तर्कपादार्थमुपसंहरन् अवशिष्टप्रथमाध्यायार्थं संबद्धार्थसूचनायाह— )। **इति प्रमाणत्वमिदं प्रसिद्धं युक्त्येह धर्म प्रति चोदनायाः। अतः परं तु प्रविभज्य वेदं त्रेधा ततो वक्ष्यति यस्य योऽर्थः। १५॥** ( त्रेधा विध्यर्थवादमन्त्रात्मना अर्थवादमन्त्रनामधेयात्मना वा प्रविभज्य तस्यतस्यार्थं वक्ष्यति भाष्यकारः )।

**शा**— '**वेदानां पौरुषेयत्वं वाक्यत्वाद् भारतादिवत्। काठकादिसमाख्याऽपि कृतकत्वे समर्थ्यते॥**' अत्राभिधीयते '**उक्तं तु शब्दपूर्वत्वमाख्या प्रवचनादिति। वाक्यत्वात् पौरुषेयत्वं दृश्यादर्शनबाधितम्। प्रतिहेतुविरुद्धश्च हेतुस्तस्मादकृत्रिमाः॥**' ( द्रष्टुं योग्यं सत् यन्न दृश्यते, तन्नास्ति इति योग्यानुपलब्ध्या पौरुषेयत्वं बाधितम्। प्रतिहेतुः वेदाध्ययनत्वम् )। '**तस्मादपौरुषेयत्वाच्चोदनानां प्रमाणता। चोदनेति प्रतिज्ञार्थः पादेनानेन साधितः॥**'

**वि**— 'पौरुषेयं न वा वेदवाक्यं, स्यात् पौरुषेयता। काठकादिसमाख्यानात् वाक्यत्वाच्चान्यवाक्यवत्॥, समाख्याऽध्यापकत्वेन ( समाख्यानं प्रवचनात् इति तैसं. मा–पाठः १।१।१ अन्ते ) वाक्यत्वं तु पराहतम्। तत्कर्त्रनुपलम्भेन स्यात् ततोऽपौरुषेयता॥'

**भाट्ट**—वेदानां भारतादिवाक्यवत् पौरुषेयत्वमेव वाक्यत्वात् युक्तम्। कर्तुः अस्मरणस्य चिरकालिककूपादिवत् अनादरेण उपपत्तेः। अन्यथा छन्दोगप्रसिद्धऊहग्रन्थस्यापि तथात्वापत्तेः। 'तेभ्यस्तेपानेभ्यः त्रयो वेदा अजायन्त' इति श्रुतावेव उत्पत्तिकथनाच्च। काठकादिसमाख्यावशादपि पौरुषेयत्वमेव। इति प्राप्ते, वाक्यत्वहेतुकानुमानस्य अप्रयोजकत्वेन, जन्यज्ञानमूलकत्वेन सोपाधिकत्वाच्च। कर्तुरस्मरणाच्च अपौरुषेयत्वम्। न च अनादरात् कर्तुः अस्मरणम्। अक्षरशो विस्मरणाभावाय शिक्षाछलाक्षरादीन् ( छलांरि इति भाषायाम् ) रचितवतां ऋषीणां तदधीनप्रामाण्यकस्मृतिकर्तृसामान्यमपि अविस्मरतां सर्वेषां वेदकर्त्रनादरोक्तेरतिसाहसत्वात्। ऊहग्रन्थस्य पौरुषेयत्वं तु नवमे वक्ष्यते। समाख्या तु प्रवचननिमित्तैव। 'तेभ्यस्तेपानेभ्यः' इति श्रुतिस्तु 'छन्दांसि जज्ञिरे तस्मात्' इति मन्त्रवर्णविरोधात् अन्यार्थिकैव। अत एव 'अनादिनिधना वेदवागुत्सृष्टा स्वयंभुवा' इत्यादिस्मृतय उपपद्यन्ते। सृष्टिप्रलयेश्वराद्यङ्गीकारे तु कल्पादौ प्रवचननिमित्ता श्रुतिः संभवति। इत्यपौरुषेया एव वेदा इति।

**मण्डन**— 'वेदप्रामाण्यसिद्ध्यैवं समाख्याबलतस्तु यत्। वेदानित्यत्वमेवाहुस्तन्निराक्रियते ततः॥'

**शंकर**। श्रीशंकरभट्टैः इदमधिकरणं वाक्याधिकरणे एवान्तर्भावितमिति गम्यते पृथगनुक्तत्वात्। **के.**

* **अप्तोर्यामः** काम्यः अग्निष्टोमस्य संस्थाविशेषः। अग्निष्टोमानुष्ठानात् प्राक् अयं नानुष्ठेयः। ( **गौतमधर्मसूत्रे** अप्तोर्यामस्य संस्कारेषु परिगणनात् नित्यत्वमपि। इति **के.** ) वि. ५।३।१३. * अप्तोर्यामः ज्योतिष्टोमस्य केवलविकार एव न तु गुणविकारः, ज्योतिष्टोमप्रकरणे विध्यभावात्। **कल्पसूत्रकारास्तु** अप्तोर्यामः अग्निष्टोमस्य गुणविकारः इत्याहुः, **कौषीतकिब्राह्मणे** ज्योतिष्टोमप्रक-

रणे अनुक्रमणात् । कु. ३।६।१६।४७. * अप्तोर्यामः । यत्र अतिरात्रे चतुर्थो रात्रिपर्यायः स्तोत्रत्रयात्मको वर्धते सा अतिरात्रसंस्थैव अप्तोर्यामपदवाच्या । ( अत्र त्रयस्त्रिंशत् स्तोत्राणि ) । भाट्ट. ३।६।१६.

* **अप्तोर्यामातिरात्रः** कातीये । अयं च त्रयोदशसु अतिरात्रेषु एकादशः । **बाल.** पृ. ३४.

* **' अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् अतिरात्रे ब्राह्मणस्य '** । अपि च न केवलं प्रकरणं अस्य ( षोडशिनः ) साधकं, किं तर्हि वाक्यमपि तथा ' अप्यग्नि० णस्य ' इति । तस्मात् प्राकृतः षोडशी । **भा.** १०।५।९।३७. * ' अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् अप्युक्थ्ये ' । अग्निष्टोमे षोडशी स्तुतशस्त्रविशिष्टो गृह्यते । तेनाग्निष्टोमसंस्थोपमर्दो भवति । तथा च राजन्यस्य केवलाग्निष्टोमनिवृत्तिरेव । **भाट्ट.** १०।५।१२, नित्यसंस्थायाः प्रकृतौ राजन्यस्य बाधः । १०।५।९, * ' अप्यग्निष्टोमे राजन्यस्य गृह्णीयात्, अप्युक्थ्ये ' ' अतिरात्रे ब्राह्मणस्य गृह्णीयात् ' इत्यादिवचनैः ज्योतिष्टोमाङ्गत्वस्याप्युपपत्तिः । नह्येतान्यर्थवादरूपाणि, लिङ्श्रवणात्, विनिगमनाविरहाच्च, राजन्यादिपदस्य स्तुतावनुपयुक्तत्वाच्च । षोडशी ग्रहः । १०।५।९, * ' अप्यग्निष्टोमे राजन्यस्य गृह्णीयात् ' ' अप्युक्थ्ये ' इति वाक्याभ्यां षोडशिसंस्थायाः प्रकृत्यङ्गत्वं उक्तम् । १०।५।१२.

**ॾ अप्रकरणे तु तद्धर्मस्ततो विशेषात् । ३।४।८।२० ॥**

अनारभ्य श्रूयते ' तस्मात् सुवर्णं हिरण्यं भार्यं ' इति । इदं हिरण्यभरणं किं प्रकरणधर्मः, उत पुरुषधर्मः । कर्मसु हिरण्यधारणमनूद्य किं सुवर्णता विधीयते, उत विशिष्टविधानरूपेण पुरुषधर्मो विधीयते इति विचारे सिद्धान्तमाह । अप्रकरणे न कस्य चित् प्रकरणे, अनारभ्य विहितं सुवर्णधारणमिदं, तद्धर्मः पुरुषधर्मः स्यात् । ततः प्रकरणपठितेभ्यः अस्य अनारभ्याधीतत्वरूपस्यैव विशेषात् । पूर्वाधिकरणसिद्धान्तवैलक्षण्यार्थस्तुशब्दः ।

अत्र कुतूहलं--अथ एतदेव सूत्रं पूर्वपक्षपरमपि योज्यम् । तुः अप्यर्थे । अप्रकरणे आम्नातमपि हिरण्यभरणं तद्धर्मः क्रतुधर्मः । ततः तस्मात् पुरुषार्थत्वात् क्रत्वर्थस्य विशेषात् विशिष्टत्वात् । पुरुषार्थत्वे वर्तमानापदेशार्थवादतः फलकल्पनाऽपेक्षया क्लृप्तफलक्रतूपकारार्थत्वाश्रयणस्य ज्यायस्त्वात् इत्यर्थः । ननु क्रतूपस्थापकशब्दाभावात् कथं क्रत्वर्थता हिरण्यभरणस्येति । अत्रापि एतदेव सूत्रं उत्तरम् । ततः अविशेषात् । षष्ठ्यर्थे तसिः । तस्य हिरण्यभरणस्य फलापेक्षस्य अविशेषात् वैदिकक्रियात्वेन साम्यात् प्रयाजादिवत् क्रतूपकारकत्वं युज्यते--इति ।

**अद्रव्यत्वात्तु शेषः स्यात् । २१ ॥**

पूर्वपक्षमाह । तुशब्दः पुरुषार्थत्वपक्षव्यावृत्त्यर्थः । सुवर्णभरणं क्रतोः शेषः स्यात् न पुरुषधर्मः । अद्रव्यत्वात् हविर्द्रव्येण देवतया च शून्यत्वात् नायं यागः कश्चित् । संस्कारस्तु अयं, स च क्रतुशेषः, क्रतुसंबद्धपुरुषस्य शेषो वा स्यात् । एवं ' सुवाससा भवितव्यं ' इत्याद्यपि ।

**वेदसंयोगात् । २२ ॥**

' तस्मात् सुवर्णं हिरण्यं भार्यं ' इति विहितं सुवर्णधारणं क्रतुशेषः क्रतुसंयुक्तपुरुषशेषो वा, वेदसंयोगात् ' आध्वर्यवं ' इति वेदसंयोगः क्रतुशेषभूतस्य युज्यते । कर्मणां साङ्गानामध्वर्युः कर्ता । तस्मात् सुवर्णधारणं कर्मधर्म इति पूर्वपक्षे हेत्वन्तरम् ।

**द्रव्यसंयोगाच्च । २३ ॥**

' सुवर्णं हिरण्यं भार्यं ' इति विहितं सुवर्णधारणं क्रत्वर्थं द्रव्यसंयोगात्, भार्यं इति कर्मणि विहितकृत्प्रत्ययेन भरणस्य हिरण्यलक्षणद्रव्यप्रधानकत्वावगमेनापि धारणस्य द्रव्यसंस्कारत्वावसायात् । इति पूर्वपक्षे हेत्वन्तरम् । चशब्दः समुच्चये ।

**स्याद् वाऽस्य संयोगवत् फलेन संबन्धस्तस्मात् कर्मैतिशायनः । २४ ॥**

पूर्वपक्षं सूत्रत्रयेण प्राप्तं वाशब्देन वारयन् प्रथमसूत्रेणोक्तं सिद्धान्तं उपसंहरति । संयोगवत् ' एतावता हैनसा वियुक्तो भवति ' इत्यार्थवादिकफलेन प्रजापतिव्रतानां

संबन्धवत् अस्य हिरण्यधारणादेरपि 'दुर्वर्णोऽस्य भ्रातृव्यो भवति, रूपं बिभर्ति' इत्यर्थवादिकेन फलेन संबन्धः स्यात्। तस्मात् सुवर्णधारणादिकं कर्म पुरुषार्थं कर्म इति ऐतिशायन आचार्यो मन्यते स्म। **के.**

*** अप्रकरणे तु तद्धर्मस्ततो विशेषात्** इति तृतीयाधिकरणे 'सुवर्णं हिरण्यं धार्यं' इत्येतत्तुल्यतया आलम्भनिर्वापयोरपि संस्कारत्वनिषेधेन असिद्धत्वं मत्वा... । **सु. पृ. ९२६.**

**⌛ अप्रकरणे तु यच्छास्त्रं विशेषे श्रूयमाणमविकृतमाज्यभागवत् प्राकृतप्रतिषेधार्थम्। १०।८। ९।१७॥**

अविशेषेण यच्छास्त्रं इति पूर्वसूत्रे उक्तं, तद्वैलक्षण्यार्थः तुशब्दः। अप्रकरणे न कस्य चित् प्रकरणे अनारभ्य पठितं यत् शास्त्रं, तत् अविकृतमेव यथापठितमेव विकारमप्राप्य विशेषे विकृतियागे श्रूयमाणं चेत् प्राकृतप्रतिषेधार्थं प्राकृतानां चोदकप्राप्तानां प्रतिषेधार्थं भवति। यथा अनारभ्य पठितं 'सप्तदश सामिधेनीरनुब्रूयात्' इति शास्त्रं विकृतिविशेषे वैमृधाध्वरकल्पादौ श्रूयते, तेन चोदकप्राप्तं सामिधेनीभ्यो भिन्नमङ्गजातं बाध्यते 'वैमृधादिषु सप्तदश सामिधेनीरनुब्रूयात्, नान्यत् प्राकृतं कुर्यात्' इति। आज्यभागवत् यथा गृहमेधीये उक्ताभ्यामाज्यभागाभ्यां इतराङ्गानि बाध्यन्ते तद्वत्। इति पूर्वः पक्षः।

**विकारे तु तदर्थं स्यात्। १८॥**

अनारभ्य पठितं शास्त्रं विशेषे अविकृतं चेत् श्रूयेत तदा तत् प्राकृतप्रतिषेधार्थं इत्युक्तम्। विकारे तु विकृतं चेत् विशेषे श्रूयेत इत्यर्थः। तदा तत् तदर्थं विशेषार्थमेव स्यात्। अन्यत्र तु प्राकृतप्रतिषेधार्थम्। तथाहि साप्तदश्ये अनारभ्याधीते सति कस्यां चिद्विकृतौ यदि पाञ्चदश्यं श्रूयेत, तदा तत् पाञ्चदश्यं तद्विकृत्यर्थमेव स्यात् नान्यस्यां विकृतौ इति। तादृशं तु उदाहरणं अस्ति नास्तीत्यन्यदेतत्। पूर्वपक्ष एवानुवर्तते।

**वाक्यशेषो वा क्रतुनाऽग्रहणात् स्यादनारभ्यविधानस्य। १९॥**

वाशब्देन पूर्वपक्षं व्यावर्त्य सिद्धान्तमाह। अनारभ्यविधानस्य क्रतुना अग्रहणात् वाक्यशेषः स्यात् इत्यन्वयः। 'सप्तदश सामिधेनीरनुब्रूयात्' इति यत् अनारभ्यविधानं, तस्य वैमृधादिभ्यः अन्येन विकृतिरूपेण क्रतुना अग्रहणात् साप्तदश्यवाक्यं वैमृधाध्वरकल्पादिविधेः वाक्यशेषः स्यात्। तस्मात् वैमृधाध्वरकल्पादिषु श्रूयमाणं सामिधेनीसाप्तदश्यं अनारभ्याधीतसाप्तदश्योपसंहारार्थम्। तथा च यासु विकृतिषु साप्तदश्यं पुनः पठ्यते, तास्वेव अनारभ्याधीतस्यापि साप्तदश्यस्योपसंहारः, नान्यासु विकृतिषु इति सिद्धान्तः। **के.**

*** अप्रकृतिविकृत्यात्मककर्मोपदिष्टयोः अभावयोर्विकल्पो** यथा आधाने वाजसनेयिनां 'ऋतु–नक्षत्र–संभार–चातुष्प्राश्य–जागर–इध्म– पूर्वाधान्वारम्भ–सार्पराज्ञीः न वा कुर्यात्' इति। **वाल. पृ.** १६२, * अप्रकृतिविकृत्यात्मककर्मोपदिष्टयोः भावयोर्विकल्पो यथा– आधाने पवमानेष्टीनां पूर्णाहुत्या सह विकल्पः। पृ. १६२.

**⌛ अप्रगाणाच्छब्दान्यत्वे तथाभूतोपदेशः स्यात्। ९।१।१९।५४॥**

अग्निष्टोमे यज्ञायज्ञीये स्तोत्रे 'गिरागिरा च दक्षसे' इत्यत्र गिरापदस्य स्थाने इरापदं प्रयोक्तव्यं इति पूर्वमवगतम्। तत् इरापदं किं प्रगीतं कर्तव्यं, उत अप्रगीतं इति विचारे पूर्वपक्षमाह। शब्दान्यत्वे गिराशब्दात् अन्यः शब्दः इराशब्दः, तस्य भावः शब्दान्यत्वं, तस्मिन् श्रूयमाणे अप्रगाणात् हेतोः तथाभूतोपदेशः स्यात्। प्रकृष्टं गानं प्रगाणं, तदभावः अप्रगाणम्। उपदिष्टे इरापदे प्रगाणं नोपदिष्टम्। प्रगाणोपदेशाभावात् तथाभूतस्य गीतिशून्यस्य इरापदस्य अयमुपदेशः स्यात् इति ज्ञायते। तस्मात् गिरापदस्थाने प्रयोक्तव्यं इरापदं अप्रगीतं स्यात्।

**यत्स्थाने वा तद्गीतिः स्यात्, पदान्यत्वप्रधानत्वात्। ५५॥**

पूर्वपक्षं प्राप्तं वाशब्दो व्यावर्तयति। आह सिद्धान्ती। यत्स्थाने यस्य गिरापदस्य स्थाने इरापदं प्रयोक्तव्यं, तद्गीतिः तस्य गिरापदस्य या गीतिः सैव इरापदस्य स्यात्। 'ऐरं कृत्वोद्गेयं' इति वाक्यस्य तु पदान्यत्व-

प्रधानत्वात्। पदस्य गिरापदस्य यत् अन्यत्वं अन्यरूपत्वं इरापदरूपत्वं तद्विधानार्थं इदं वाक्यं पदान्यत्वप्रधानम्। गानविषये तु नेदं वाक्यं किमपि ब्रूते, स्थानिनो या गीतिः, तां न निवर्तयति इदं वाक्यम्। तस्मात् इरापदं प्रगीतमेव प्रयोक्तव्यं इति सिद्धान्तः।

**गानसंयोगाच्च। ५६॥**

सिद्धान्ते हेत्वन्तरमाह। चशब्दः समुच्चये। 'उद्वेयं आईरा चा दाक्षासा' इति गानसंयोगात्, गानस्य संयोगात् संयोगस्य विधानात् प्रगीतमेव इरापदं प्रयोक्तव्यम्।

**वचनमिति चेत्। ५७॥**

पूर्वपक्षी आह—ननु तर्हि इदं गानस्यैव वचनं 'उद्वेयं आईरा' इत्यादि। अनेन च गिरापदे एव गानविशेषो निर्दिष्टः, न प्रगीतमिरापदम्। इति चेत् ब्रूयात्।

**न, तत्प्रधानत्वात्। ५८॥**

सिद्धान्ती आह—'उद्वेयं आईरा' इत्यादिवचनेन न गीतेर्विधानं, किंतु गीतिविशिष्टस्य इरापदस्यैव। अस्य वचनस्य तत्प्रधानत्वात् इरापदप्रधानत्वात्। इरापदमेव गिरापदस्थाने अनेन वाक्येनोपदिश्यते, गीतिस्तद्धर्मश्च स्थानिगतः अनूद्यते। आईरा इति निर्देशो हि इरापदस्यैव। अत एव इरापदस्यैवार्थवादो भवति, 'इरामहं यजमाने ददानि' इति। इरापदस्यायमर्थवादो, न गीतेः। इरा अन्नं तदहं उद्गाता यजमाने संपादयामि इरापदपठनेन इत्यर्थवादार्थः। तस्मात् प्रगीतं इरापदं गिरापदस्य स्थाने प्रयोक्तव्यं इति सिद्धान्तः। **के.**

* **अप्रतिग्राह्यात्** प्रतिगृह्णतः पापमस्ति वैदिकेऽपि प्रतिग्रहे। **भा.** ३।४।१०।२८ पृ. ९५९.

* **अप्रतिपत्तिरूपः** दृष्टार्थः गुणकर्मविधिः अर्थकर्मविधिः प्रत्यक्षविधिः यथा 'व्रीहीनवहन्ति'। **बाल.** पृ. १३, * अप्रतिपत्तिरूपः दृष्टादृष्टोभयार्थः गुणकर्मविधिः प्रत्यक्षविधिः यथा पशुपुरोडाशादि आश्रयिकर्म। पृ. १३.

**⌛ अप्रतिषिद्धमनुमतं भवति इत्यनेन न्यायेन अनिराकृतोंऽशः अङ्गीकृतः स्यात्। सु. पृ. ७२.**

*** जानीयादिति विधौ अभ्यासस्य ध्यानस्याश्रवणात्** तत्रोत्तराप्रदानात् 'अप्रति०' इति **न्यायात्** जानीयादित्यत्र ध्यायेदित्यर्थः। **नू. पू. भा.** १।२. * 'स्त्रियाः जीवति भर्तरि तदनुमतौ, प्रोषिते मृते वा तदनुज्ञां विनाऽपि पुत्रदानप्रतिग्रहयोरधिकारः। अनुमतिश्च अप्रतिषेधेऽपि भवति, 'अप्रतिषिद्ध०' इति न्यायात्। **दत्तकचन्द्रिका.** पृ. १०.

* **अप्रतिसमाधेयाङ्गवैकल्यस्य** कर्मानधिकारः। **भा.** ६।१।१०।४२.

* **अप्रतीतस्य** विशेषणत्वासंभवात्। **वा.** १।३।९।३३ पृ. ३१८, * **अप्रतीते** विशेषणे विशेष्याप्रतीतेः। १।३।९।३३ पृ. ३१८.

* **'अप्रयाजास्ता अननुयाजाः'** इति ज्योतिष्टोमे उपसत्सु पठ्यते। अपूर्वा एव उपसदः, न प्रकृतिर्न विकृतिः। प्रयाजादिनिषेधोऽयं नित्यानुवादः। यावदुक्तं उपसत्सु अनुष्ठेयम्। **वि.** १०।७।१४.

* **अप्रयोजकः** पुनर्द्विविधः। कश्चित् स्वाङ्गस्यापि अप्रयोजकः यथा तुषोपवापः कपालस्य स्वाङ्गभूतस्यापि अप्रयोजकः। कश्चित्तु पराङ्गस्य स्वोपकारिणोऽपि अप्रयोजकः यथा दध्यानयनस्य वाजिनयागः। यथा वा अक्षाभ्यञ्जनं एकहायनीनयनसाध्यमपि न तस्य प्रयोजकम्। यथा वा प्रतिपत्तिः। शकृल्लोहितनिरसन— स्विष्टकृद्याग— चात्वालप्रासनादिः प्रतिपाद्यस्य शकृल्लोहितस्य शेषस्य कृष्णविषाणादेश्च अप्रयोजकः। तथा प्रसङ्गी अपि पशुपुरोडाशादिः परवङ्गस्य प्रयाजादेः स्वोपकारिणोऽपि अप्रयोजकः। **बाल.** पृ. १०७, * अप्रयोजकः सप्तविधः। 'प्रयोजकः सप्तविधः' इत्यत्र द्रष्टव्यम्। पृ. १०६.

**⌛ अप्रयोजकत्वादेकस्मात् क्रियेरन्, शेषस्य गुणभूतत्वात्। ३।४।१५।४२॥**

दर्शपूर्णमासयोः स्विष्टकृत् इडा चतुर्धाकरणं प्राशित्रं इति शेषकार्याणि किं सर्वेभ्यो हविर्भ्यः कर्तव्यानि, उत एकस्मादेव हविषः इति विचारे पूर्वपक्षमाह। शेषकार्याणि हविषां अप्रयोजकानि न प्रयोजकानि। अप्रयोजकत्वात् प्रयोजकत्वाभावात् शेषकार्याणि एकस्मादेव हविषः क्रियेरन् कर्तव्यानि, न सर्वेभ्यः। शेषस्य हविःशेषस्य

स्विष्टकृदादि प्रति गुणभूतत्वात् च एकस्मादेव स्विष्टकृदादीनि कर्तव्यानि इति पूर्वः पक्षः ।

**संस्कृतत्वाच्च । ४३ ॥**

स्विष्टकृदादिना शेषकार्येण च प्रधानस्य सकृत् संस्कृतत्वात् पुनःसंस्कारानपेक्षत्वात् नापरस्मादपि कर्तव्यानि शेषकार्याणि । इति पूर्वपक्षे हेत्वन्तरमुक्तम् ।

**सर्वेभ्यो वा, कारणाविशेषात् संस्कारस्य तदर्थत्वात् । ४४ ॥**

पूर्वपक्षं सूत्राभ्यां प्राप्तं वाशब्देन परिहरन् सिद्धान्तमाह । सर्वेभ्यः प्रधानहविर्भ्यः स्विष्टकृदादिशेषकार्याणि कर्तव्यानि । कारणाविशेषात् । एकस्य हविषः शेषकार्यक्रियायां यत् कारणं प्रतिपत्तिर्नाम, तत् सर्वेषां अविशिष्टं समानम् । समानत्वे हेतुमाह संस्कारस्य प्रतिपादनरूपस्य तदर्थत्वात् हविरर्थत्वात् । तस्मात् प्रतिपत्तिसंस्कारस्य शेषकार्यक्रियाकारणस्य सर्वेषु समानत्वात् सर्वेभ्य एव शेषकार्याणि कर्तव्यानि नैकस्मादेवेति सिद्धान्तः ।

**लिङ्गदर्शनाच्च । ४५ ॥**

स्विष्टकृदादिशेषकार्ये लिङ्गदर्शनात्, 'देवा वै स्विष्टकृतमब्रुवन् हव्यं नो वहेति, सोऽब्रवीत् वरं वृणै, भागो मेऽस्त्विति, वृणीष्वेति तेऽब्रुवन् । सोऽब्रवीत्, उत्तरार्धादेव मह्यं सकृत्सकृदवद्यात्' । देवाः स्विष्टकृतं अग्निमब्रुवन् । नः अस्मभ्यम् । अत्रार्थवादे सकृत्सकृत् इति वीप्सारूपस्य लिङ्गस्य दर्शनात् च सर्वेभ्यः प्रधानहविर्भ्यः सकाशात् शेषकार्याणि कर्तव्यानि इति गम्यते । तस्मात् सर्वेभ्यः इति सिद्धान्तः । चकारः समुच्चये । **के.**

* **अप्रयोजकादिलक्षणं** भाष्ये 'साधारणं भवेत् तन्त्रं परार्थे त्वप्रयोजकः । एकमेव प्रसङ्गः स्याद्विद्यमाने स्वके विधौ ॥' ( भा. ११।१।१।१ पृ. २०९६ ) इति। अस्यार्थः, साधारणं अनेकेषां यत्र प्रयोजकत्वशक्तिरस्ति, तत् तन्त्रं, यथा प्रयाजादेः सकृदनुष्ठानम् । तद्विषया हि अनेकेषामाग्नेयादीनां प्रयोजकत्वशक्तिरस्ति । परार्थे त्वप्रयोजकः, अत्र परार्थे परमात्रार्थे इत्यर्थः, अन्यथा तन्त्रे अतिप्रसङ्गात् । एवमपि पुरोडाशकपाले कण्डूः 'कपालेषु श्रपयति' इति सप्तम्या परस्मिन् श्रपणे इव कपालानां 'पुरोडाशकपालेन' इति तृतीयया तुषोपवापेऽपि तादर्थ्यात् । अतः परार्थे इत्यस्य परमात्रप्रयुक्ते इत्यर्थः । 'एकमेव प्रसङ्गः स्यात्' इत्युक्ते कस्तर्हि अप्रयोजकप्रसङ्गयोर्भेदः, इत्यत उक्तं 'विद्यमाने स्वके विधौ' इति । यद्यपि भट्टनये, पशुपुरोडाशे प्रसङ्गोपकारिप्रयाजादेः अनङ्गत्वात् तदंशे पुरोडाशीयः अतिदेशः प्रयोगवचनश्च लुप्यते, तथापि पिष्टलेपफलीकरणाज्यभागादिसाधारण्येन तावत् प्रयाजादिप्रयुक्तिसमर्थो विधिरस्ति, वाजिनादिविधिस्तु वाजिनाद्येव विपर्यीकरोति, न च तस्य तत्र प्रयोजकशक्तिरस्ति, अन्यत्तु किं चित्रैवासौ विपयीकरोति इति वैषम्यमित्यर्थः । अत्रैवार्थे द्वादशाध्यायाद्यभाष्यगतस्य तच्छ्लोकव्याख्यानग्रन्थस्य तात्पर्यं वर्णनीयम् । **बाल. पृ. १०८.**

* **अप्रवृत्तस्यापि** सांनाय्ये, व्रतनियमः । **भा.** ६।४। १३।४१-४२.

* **अप्रसक्तस्य** प्रतिषेधायोगः । **वि.** ७।३।९.

**⌛ अप्राकृते तद्विकाराद् विरोधाद् व्यवतिष्ठेरन् । ९।२।१६।४७ ॥**

वैश्यस्तोमे नाम क्रतौ 'कण्वरथंतरं पृष्ठं भवति' इत्याम्नायते । तत्र कण्वरथंतरे पृष्ठे रथंतरस्य वा धर्माः कर्तव्या बृहतो वा, उत उभयोरपि इति विचारे सिद्धान्तमाह । कण्वरथंतरं प्रकृतौ ज्योतिष्टोमे नास्ति इति तत् अप्राकृतम् । तस्मिन् अप्राकृते कण्वरथंतरे तद्विकारात् तद्विकारत्वात् तयोः बृहद्रथंतरयोरुभयोरपि विकारत्वात् द्वयोरपि अविरुद्धा धर्माः कर्तव्याः । विरुद्धास्तु विरोधात् व्यवतिष्ठेरन् व्यवस्थया भवेयुः रथंतरकार्ये रथंतरधर्माः, बृहत्कार्ये च बृहद्धर्मा इति । तस्मात् अविरुद्धानां समुच्चयः, विरुद्धानां च व्यवस्था इति सिद्धान्तः । **के.**

**⌛ अप्राकृतत्वान्मैत्रावरुणस्याभक्षत्वम् । १०। ७।६।१८ ॥**

अग्नीषोमीये पशौ मैत्रावरुणस्य शेषभक्षोऽस्ति न वेति विचारे नास्तीति पूर्वपक्षसूत्रम् । अग्नीषोमीयस्य पशोः प्रकृतिर्दर्शपूर्णमासौ । तत्र च मैत्रावरुणो नास्त्येव, इति स न प्राकृतः । मैत्रावरुणस्य अप्राकृतत्वात् अतिदेशाभावात् अभक्षत्वं भक्षशून्यत्वम् ।

**स्याद्वा, होत्रध्वर्युविकारत्वात् तयोः कर्माभिसंबन्धात् । १९ ॥**

वाशब्दः पूर्वपक्षं व्यावर्तयति । स्यात् पशौ मैत्रावरुणस्य शेषभक्षः । तस्य होत्रध्वर्युविकारत्वात् । कथं ? तयोः होत्रध्वर्व्योः कर्माभिसंबन्धात् । 'तस्मान्मैत्रावरुणः प्रेष्यति च अनु चाह' ( प्रेष्यति प्रैषं च ब्रवीति अनु आह च अनुवाक्यां चाह ) इति वचनात् मैत्रावरुणः प्रैषेषु अध्वर्योर्विकारः । प्रैषाः अध्वर्योः कर्म, तेन अध्वर्योः कर्मणा मैत्रावरुणस्य अभिसंबन्धः । अनुवचनं च होतुः कर्म, तेन होतुः कर्मणा अनुवचनेषु मैत्रावरुणस्य अभिसंबन्धः। तथा च तयोः कर्माभिसंबन्धात् मैत्रावरुणः होतुः अध्वर्योश्च विकारः । तस्मात् तस्य शेषभक्षः स्यात् इति सिद्धान्तः । **के.**

* **अप्राणिनः षष्ठी** पञ्चम्यर्थे भवति । यथा शाकस्य देहि शाकात् देहि इति वा । तथा क्व चित् तृतीयार्थे, घृतस्य यजति घृतेन यजति । पञ्चम्यर्थे, घृतस्य यजति घृतात् यजति । द्वितीयार्थे वा, सोमस्य पिबति सोमं पिबति सोमात् पिबतीति । **भा.** ४।२।१।३.

**अप्राप्ते शास्त्रमर्थवत् इति न्यायः ।** अन्यतः प्राप्ते तु शास्त्रं अनर्थकं स्यात् । ( 'अशास्त्रानुपसंप्राप्तिः' इत्यादिसूत्रस्य ( ६।२।४।१९ ) 'अप्राप्ते वा शास्त्रमर्थवत्' इत्ययं अन्तिमः अवयवः वाशब्दं त्यक्त्वा ) अयं सर्वदर्शनसंग्रहे रामानुजीये । तथाहि 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतिः । अत्र श्रोतव्य इत्यनुवादः । अध्ययनविधिना साङ्गस्य स्वाध्यायस्य ग्रहणे अधीतवेदस्य पुरुषस्य प्रयोजनवदर्थदर्शनात् । तन्निर्णयाय स्वरसत एव श्रवणे प्रवर्तमानतया तस्य प्राप्तत्वात् । मन्तव्य इति चानुवादः श्रवणप्रतिष्ठाऽर्थत्वेन मननस्यापि प्राप्तत्वात् अप्राप्ते शास्त्रमर्थवदिति । **साहस्री.** ७०८. * अप्राप्ते शास्त्रमर्थवद् भवति **इति न्यायेन** याथार्थ्यरूपमेव प्रामाण्यं इति विवक्षितुमशक्यत्वेन अनुवादत्वेऽपि नैष्फल्यमात्रमेव, नाप्रामाण्यं इति वर्णनासंभवात् । **अद्वै.** चतुर्ग्रन्थी पृ. ४३८. * अप्राप्ते० इति न्यायात् कर्तृसाधनफलभेदस्वरूपस्य शास्त्रज्ञानशून्यानामपि प्रसिद्धेः तत्र वेदस्य अतात्पर्यात् यथाप्रसिद्धं भेदमादाय पुंसः पुरुषार्थसाधनमविज्ञातं बोधयतः शास्त्रस्य नाप्रामाण्यशङ्का । **उपदेशसाहस्री** गद्यं रामतीर्थः १।४२. * अप्राप्ते० इति न्यायात् प्रमाणान्तरसिद्धस्य न शास्त्रविषयत्वम् । **सिद्धान्तचन्द्रिका.** १।१।१ पृ. ७. * कालादर्शोक्तिः न्यायमूला वचोमूला वा ? नाद्यः, युगादिश्राद्धस्य अमाश्राद्धविकृतित्वेन न्यायतः अपराह्णप्राप्तावपि वचनेन बाधात् । नान्त्यः, अतिदेशादेव अपराह्णप्राप्तेः वचनवैयर्थ्यात् **अप्राप्ते शास्त्रमर्थवत् इति न्यायात् । निर्णयसिन्धुः** परि. २. * यत्तु दृष्टार्थत्वात् स्वसामर्थ्यप्राप्तत्वादेव अप्राप्ते शास्त्रमर्थवत् इति वाचकभापणविधानमनुपपन्नमिति, तत्राधिकरणेनैवोत्तरं दास्यते 'नियमार्था वा श्रुतिरुच्यते' ( ४।२।९।२४ ) इति । **वा.** १।३।६।२७ पृ. २८२.

* **अप्राप्तपरिसंख्याविधिर्यथा**— 'इमामगृभ्णन्०' इति । अत्र आर्थी परिसंख्या । **बाल.** पृ. २५, * **अप्राप्तबाधः** श्रुत्यादिषु । **वा.** ३।३।७।१४ पृ. ८६१. * दुर्बलेन प्रमाणेन यावत् विनियोगः कर्तुमारभ्यते, तावदेव प्रबलेन प्रमाणेन विनियोगः क्रियते, इति तद्बोधितेन इतरबाधः **अप्राप्तबाधः**, दुर्बलप्रमाणस्य अप्रवृत्तत्वात् । **मीन्या.** * यत्र लिङ्गादौ श्रुतिकल्पनाप्रतिबन्धात् ज्ञानोत्पत्तिरेव प्रतिबध्यते, सः अप्राप्तबाधः । स एव मूलोच्छेदलक्षणः इत्युच्यते । **बाल.** पृ. १३१, * **अप्राप्तबाधभेदाः** पुनः द्विपञ्चाशात्— १ स्मृत्या विधिप्रभवया अर्थवादप्रभवा स्मृतिर्बाध्यते । २ असंदिग्धेन संदिग्धम् । ३ दुर्बलाश्रयं बलवदाश्रयेण । ४ उपसंहारस्थं उपक्रमस्थेन । ५ अत्यन्तादृष्टार्थं नियमादृष्टार्थेन । ६ आरादुपकारित्वं संनिपातित्वेन । ७ अनेकार्थविधानं अल्पार्थविधानेन । ८ अनेकार्थत्वं एकार्थत्वेन । ९ अनेकशब्दत्वं एकशब्दत्वेन । १० बहुबाधः अल्पबाधेन । ११ वेदान्तरोत्पन्नं वेदान्तरविहितत्वेन । १२ परशाखाविहितं स्वशाखाविहितेन । १३ अनारभ्याधीतं प्राकरणिकेन । १४ प्रयोगवचनाश्रयं चोदकाश्रयेण । १५ देवताऽऽश्रयं द्रव्याश्रयेण । १६ पश्चादाम्नातं पूर्वाम्नातेन । १७ श्रुत्या ( अभिधया ) लक्षणा । १८ श्रुत्या ( अभिधया ) गौणी । १९ लक्षणया गौणी । २० लक्षणया

लक्षितलक्षणा । २१ अजहत्स्वार्थया जहत्स्वार्था । ( उभे अपि प्रकृतिगते ) । २२ अजहत्स्वार्थया जहत्स्वार्था । ( उभे अपि प्रकृतिप्रत्ययगते ) । २३ निरूढलक्षणया अनिरूढलक्षणा । २४ एकलक्षणया अनेकलक्षणा । २५ अल्पलक्षणया बहुलक्षणा । २६ क्लृप्तया लक्षणया अक्लृप्ता लक्षणा । २७ कार्यलक्षणया धर्मलक्षणा । २८ भूम–लिङ्गसमवायमूलगौण्या इतरा गौणी । २९ भूम-गौण्या लिङ्गसमवायगौणी । ३० नियमविधिना अपूर्व-विधिः । ३१ नियमविधिना परिसंख्याविधिः । ३२ मन्त्रक्रमेण ब्राह्मणक्रमः । ३३ उत्पत्तिशिष्टेन उत्पन्नशिष्टम् । ३४ अनुवादेन विधित्वम् । ३५ अर्थवादत्वेन विधि-त्वम् । ३६ प्रतिप्रसवविधिना नियमविधिः । ३७ प्रति-प्रसवविधिना अपूर्वविधिः । ३८ वैदिकत्वसामान्योपस्थि-तेन अवैदिकम् । ३९ अपेक्षितविधिना अनपेक्षित-विधिः । ४० तद्धितेन चतुर्थी देवताविधौ । ४१ तद्धितेन मन्त्रवर्णः देवताविधौ । ४२ तद्धितेन द्वितीया । ४३ चतुर्थ्या मन्त्रवर्णः । ४४ चतुर्थ्या द्वितीया । ४५ मन्त्रवर्णेन द्वितीया । ४६ प्रतिनिधिनियमेन द्रव्यनियम-विधिः । ४७ प्रतिनिधिनियमेन अभावविधिः । ४८ अनुषङ्गेण अध्याहारः । ४९ रूढ्या क्लृप्तया योगः । ५० योगेन अक्लृप्ता रूढिः । ५१ क्लृप्तयोगेन संस्कार-निमित्तत्वम् । ५२ नामधेयेन गुणविधित्वं यौगिकेषु । पृ. १४०– १४५.

* **अप्राप्तविधानाच्च** नियमविधानं बलीयः, लाघ-वात् । **पराक्रमः**. पृ. ४०.

* **अप्राप्तविध्यपेक्षया** प्रतिप्रसवविधिर्लबीयान् । **समयमयूखः**. पृ. ३८.

* **अप्राप्यकारिणी** चक्षुःश्रोत्रे केषांचिन्मतेन । **श्लोवा.** अर्थापत्तिः ८३.

* **अप्रामाण्यं** अननुष्ठानलक्षणं श्रुतिविरुद्धस्मृती-नाम् । **शा.** १।३।३ वर्णकं २. * अप्रामाण्यं अर्थान्य-थात्वं बाधकज्ञान–कारणदोषज्ञान–विसंवादज्ञानैर्गृह्यते इति परतः । **बाल.** पृ. ६, * 'अप्रामाण्यं त्रिधा भिन्नं मिथ्या-त्वाज्ञानसंशयैः । ' पृ. ५, * अप्रामाण्यं परतः उत्पद्यते । एवं ज्ञानान्तरेण गृह्यते । **मणि.** पृ. १४. * अप्रामाण्यं शाक्यादिस्मृतीनाम् । **शा.** १।३।३ वर्णकं २. * अप्रा-माण्यं स्मृतेः लोभादिदृष्टमूलिकायाः । **वि.** १।३।३.

* **अप्रामाण्यकारणं** अबोधकत्वं बाधितत्वं च । **वि.** १।१।६, * **अप्रामाण्यकारणयोः** अबोधकत्व-बाधितत्वयोरभावात् प्रामाण्यं स्वतःसिद्धमेव प्रमाणानाम् । १।१।६.

* **अप्राशस्त्यं** निन्दापदवाच्यं नाम बलवदनिष्टानु-बन्धित्वयोग्यता , अर्थवादेषु । **भाट्ट.** १।२।१.

* '**अप्सु** तृणं प्रास्य ( तस्मिन् ) आघारमाघार-यति ' अवभृथे । **भा.** १०।३।१।१. * ' अप्सु दीक्षा-तपसी प्रावेशयन् ' इत्यर्थवादे अप्सु दीक्षावत्त्वसंकीर्त-नात् दीक्षायाश्च यमनियमपरिग्रहरूपायाः पुरुषसंस्कार-कत्वस्य स्पष्टत्वात् स्नानस्य क्रतुयुक्तपुरुषधर्मत्वम् । अत एवास्य याजमानत्वम् । **भाट्ट.** ३।४।९. * अप्सु साङ्ग-प्रधानानुष्ठानं अवभृथे ज्योतिष्टोमे । **भा.** ११।२।८। ३०–३४.

* ' अप्स्ववभृथेन चरन्ति ' अग्निष्टोमे उत्तरवेद्या-माहवनीये प्रधानं, अङ्गमवभृथं तु अप्सु इति देशभेदः । **वि.** ११।३।१. * ' अप्स्ववभृथेन चरन्ति ' इत्यत्र अपां देशत्वात् साङ्गभावनाविषयत्वप्रतीतेः प्राकृतेषु प्रयाजादिषु अग्निबाधकत्वम् । **भाट्ट.** ३।७।२४. अपां देशत्वात् अङ्गप्रधानान्वयित्वम् । ६।३।१. साङ्गे समानकर्तृकत्वश्रवणेन अद्भिः आहवनीयादेर्बाधः । १०।२।१३. प्राकृतसर्वहोमेषु अग्निबाधः । १०।३।४.

* '**अप्सुमन्तावाज्यभागौ** यजति ' ज्योतिष्टोमे अवभृथे । अप्स्वग्ने सधिष्टव० अप्सु मे सोमो अब्रवीत्० इति अप्सुमन्तौ मन्त्रौ । **भाट्ट.** १०।७।१३.

* **अफलं फलवतोऽङ्गम्** । फलवत्संनिधौ अफलं तदङ्गम् । फलवदफलन्यायः । एतत् त्रयं एकार्थकमेव । **के.**'

* ' **अबद्धं मनो दरिद्रं चक्षुः** ' इति अमेध्य-दर्शने प्रतिमन्त्रणमन्त्रोऽपि युगपदनेकामेध्यदर्शने न भिद्यते । **भाट्ट.** ११।४।१७.

**¶ अबाधेन उपपत्तौ बाधो न न्याय्यः इति न्यायः ॥** अयं ज्योतिःशास्त्रे व्यवहृतः । तत्र हि ननु

संस्कारप्रकरणगृहप्रवेशप्रकरणादीनां पार्थक्योपनिबन्धात् पञ्चाङ्गदोषापवादकता कुतो नास्तीति चेदुच्यते । तत्र हि 'पञ्चाङ्गसंशुद्धदिनादिके च' इति वसिष्ठादिभिः, 'पर्वाख्यरिक्तोनतिथौ शुभेऽह्नि' इति ग्रन्थकृताऽप्यतिदेशोपनिबन्धस्य कृतत्वात् । अतः सर्वापवादिकेत्ययुक्तः पक्षः । तस्मादबाधेनोपपत्तौ बाधो न न्याय्य इति हेतोर्विषयस्य विवेक इत्येव युक्तः पक्षः इत्युक्तं ज्योतिर्विदा गोविन्दशर्मणा । **साहस्री. ५८६.** * **अबाधेन उपपत्तौ बाधायोगात् इति न्यायः** । यत् सिद्धान्तवार्तिके उक्तं तदपि परास्तं, अबाधेनो० इति न्यायेनैव तदुपपत्तेः । पूर्वपक्षे । **कौ.** २।२।१२।२६ पृ. २८३.

* **अबाधपक्षसंभवे** बाधपक्षस्य अनङ्गीकार्यत्वात् । **सु.** पृ. ६७८.

* **अबाधितविषयत्वमपि** पक्षधर्मतावत् अनुमानसामग्रीनिविष्टं इति तद्विदः । **कणिका.** पृ. ३०३.

⌛ **अब्धिफेनादिन्यायः** । अयं न्यायो दृग्दृश्यद्वयविवेकाऽपरनामवाक्यसुधाकरग्रन्थे व्यवहृतः । तथाहि, 'सृष्टिर्नाम ब्रह्मरूपे सच्चिदानन्दवस्तुनि । अब्धौ फेनादिवत् सर्वनामरूपप्रसारणम् ॥' इति । न्यायरूपदृष्टान्तमाह– अब्धौ फेनादिवदिति । अब्धौ अवस्थितायाः विक्षेपात्मिकाया मायायास्तत्रैव फेनतरङ्गबुद्बुदाकारेण विवर्तनं सृष्टिशब्देनोच्यते, तथाऽत्रापीति भावः । **साहस्री. ६३६.**

⌛ **अब्भक्षन्यायः** । यथा अब्भक्षोऽयं द्विज इत्युक्तिः अब्भक्षस्यान्नादिभक्षकेष्वपि सत्त्वादयं तदितरभक्षणनिषेधे पर्यवस्यतीति । **साहस्री. २००.**

* **अब्राह्मणस्य** सोमभक्षणं प्रतिषेधति । **वा.** ३।५।७।२२.

⌛ **अभक्ष्यप्रतिषेधेन वा भक्ष्यनियमः इति न्यायः** । तद्यथा 'अभक्ष्यो ग्रामकुक्कुटः, अभक्ष्यो ग्रामसूकरः' इत्युक्ते गम्यते 'एतदारण्यो भक्ष्यः' । इति पस्पशायाम् । ( पस्पशा महाभाष्यस्य प्रथममाह्निकं प्रस्तावरूपम् ) । **साहस्री. ८२६.**

⌛ **अभाण्डलाभ इति न्यायः** । यथा केन चिद्वापणिकेन स्वापेक्षितसाधनभूतभाण्डद्रव्यस्याऽभावे तज्जन्या प्राप्तिरेषितव्या, एवं यत्राभीष्टसिद्धौ साधनभूतस्यार्थस्य अभावेऽपि अभीष्टसिद्धिरिष्यते, तत्रायं न्यायोऽवतरतीति । यथा च स्वप्नेऽपि शुभकर्मणोऽभावे परमेश्वरदर्शनमिच्छस्यहो तेऽभाण्डलाभमीप्सेति । के चित्तु यत्र साधनस्याभावेऽपि साध्यस्य संसिद्धिस्तत्रायं प्रवर्तते इत्युभयत्र समीचीनमिति । भाण्डं मूलधनम् ( भांडवल इति भाषा ) । **साहस्री. ८७५.**

* **अभावः** अपि चोद्यमानः फलसाधनत्वेन न विरुध्यते । यथा 'अकुर्वन् विहितं कर्म' इत्यत्र अकरणस्य असतः प्रत्यवायहेतुत्वं वचनस्य अतिभाराभावात् इत्यन्ये आहुः । **वा.** ३।६।१६।४३ पृ. १०६७. * अभावः त्रिधा, ध्वंसः अत्यन्ताभावः भेदश्चेति । **मणि.** पृ. २२. * अभावः चतुर्विधः । **'क्षीरे दध्यादि यन्नास्ति प्रागभावः स उच्यते ।'** **श्लोवा.** अभावपरिच्छेदे **२. ' नास्तिता पयसो दध्नि प्रध्वंसाभाव इष्यते । गवि योऽश्वाद्यभावस्तु सोऽन्योन्याभाव उच्यते ॥३॥ शिरसोऽवयवा निम्ना वृद्धिकाठिन्यवर्जिताः । शशशृङ्गादिरूपेण सोऽत्यन्ताभाव उच्यते ॥४॥ '** ये निःस्वभावमभावं अवस्तुरूपं तुच्छं मन्यन्ते, तान् प्रत्याह– **' न च स्याद् व्यवहारोऽयं कारणादिविभागतः । प्रागभावादिभेदेन नाभावो विद्यते यदि । ७ ॥ न चावस्तुन एते स्युर्भेदास्तेनास्य वस्तुता । ८ ॥ यद्वाऽनुवृत्तिव्यावृत्तिबुद्धिग्राह्यो यतस्त्वयम् । तस्माद् गवादिवद् वस्तु, प्रमेयत्वाच्च गम्यते । ९ ॥'** * अभावः न कारणम् । 'न च लोकेऽपि कश्चिदभावः कारणत्वेन दृष्टः । यदि तु क्वचिदुदाह्रियेत, शक्यं तत्र भावान्तरं दर्शयितुम् । ' **वा.** २।१।२।५ पृ. ३९७.

अत्र **सुधा** ( पृ. ६०३ )– ननु विहिताकरणस्य अभावरूपस्यापि प्रत्यवायसाधनत्वस्मृतेः तत्कालान्यकरणापेक्षत्वे च तस्य औदासीन्यमात्रेणापि प्रत्यवायपरिहारसिद्धेः अनुष्ठानानर्थक्यप्रसङ्गात्, अवर्जनीयस्य निमिषितादेः प्रत्यवायसाधनत्वे विहितानुष्ठानेऽपि प्रत्यवायापत्तेः, विहिताकरणापेक्षत्वे च तस्य औदासीन्यमात्रस्य निमिषितादेः ( वा ) साधनत्वे अन्वयव्यतिरेकाभ्यां अकरणस्यैव साधनत्वापत्तेः भावनिरपेक्षस्याभावस्य साधनत्वं

दृष्टं इत्याशङ्क्याह—यदि तु इति । गुर्वाज्ञयाऽप्यननुष्ठानेन 'अहमवज्ञातोऽस्मि' इत्यवज्ञानिमित्तगुरुकोपदर्शनात् विहितावज्ञाऽऽख्यभावसहकृतस्यैव विहिताननुष्ठानस्य साधनत्वकल्पना युक्ता इत्याशयः । अत एवाचार्यैः '**स्वकाले यदकुर्वंस्तत् करोत्यन्यदचेतनः । प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ॥**' इति विहितमकुर्वन् यदन्यत् करोति इति वदद्भिः विहिताकरणनिमित्तस्य अन्यकरणस्य प्रत्यवायनिमित्तत्वाभिधानात् अवज्ञायामेव वा करणस्य निमित्तत्वोपपत्तेः विहितावज्ञानमेव प्रत्यवायहेतुत्वेनोक्तम् । नाभावेनैव जन्यते इत्येवशब्दोत्कर्षेण केवलस्य हेतुत्वं निरस्तम् । एवं च 'विहितस्याननुष्ठानान्नरः पतनमृच्छति' इति स्मृतिः अनुगृहीता भवति । निमिपितादेस्तु हेतुत्वे विहिताकरणस्य किंचित्करणत्वाभावात् स्मृतिबाधापत्तिः । 'एतां वाव स देवतामपरुणद्धि योऽलमग्निहोत्राय सन् नाग्निहोत्रं जुहोति' इति वा अपरोधशब्देन अवज्ञाऽभिधानात् सैव प्रत्यवायहेतुर्वेदादवसीयते । निमिपितादेस्तु हेतुत्वं निष्प्रमाणकमेव । तस्मात् अवज्ञाऽऽख्याशयविशेषरूपस्य भावान्तरस्य तत्र संभवात् न शुद्धस्य अभावस्य क्व चिद्धेतुता दृष्टा, इति ग्रन्थार्थः । * अभावः प्रत्यक्षे प्रत्यर्थिनि नोपपद्यते । **बृहती.** पृ. १२९. * **अभावेन** अभावाभासो बाध्यते । अयं लौकिको बाधः । **बाल.** पृ. १३१, * **अभावे** आर्थिकी व्यवस्था यथा— 'आग्नेयो वै ब्राह्मणो देवतया, स सोमेनेष्ट्वा अग्नीषोमीयो भवति, यदेवादः पौर्णमासं हविः तत्तर्ह्यनुनिर्वपेत्, तर्हि स उभयदेवतो भवति' इति । अग्नीषोमीयपुरोडाशे कृतसोमयागिपुंविषयत्वेन व्यवस्थापिते अर्थात्तदभावः अकृतसोमयागपुंविषयत्वेन व्यवस्थितो भवति । इदमुदाहरणं पञ्चमे सिद्धं 'तथाऽपूर्वं' इत्यत्र (५।१।१६।२९) । पृ. १९, * अभावे क्रत्वर्थो विधिर्यथा— स्विष्टकृदर्थावत्तनाशे आज्यविधिः 'यां वै कां चिद्देवतामन्तरितस्तस्या आवृश्च्यते आज्येनैता देवताः परिसंख्याय यजेत' इति । तथा 'अग्न्यभावे तु विप्रस्य पाणावेवोपपादयेत्' इति । पृ. २०. * अभावे विधानेन वा भवति (प्रकृतिलिङ्गसंयोगः) यथा 'जुहूषा वा एतर्हि वाग्भवति, यर्हि पृष्ठ्यः षडहः संतिष्ठते, न बहु वदेत्, नान्यं पृच्छेत्, नान्यस्मै प्रतिब्रूयात्, नच्चारयेत् वृत्तं क' इति । **भा.** १०।८।१।१ पृ. १९०७.

* **अभावविधिः** कार्यापत्तिप्रमाणत्वेन नवमाध्याये उक्तः । **बाल.** पृ. ८, अभावविधिः क्रिया–गुण–जाति–द्रव्य–विषयकत्वेन चतुर्विधः सन् प्रत्येकं उद्देश्यांशे विधेयांशे उद्देश्यविधेयोभयांशे चेति त्रिविध इति संहत्य द्वादशविधः । उदाहरणानि तु मृग्याणि । पृ. २१, * अभावविधिः द्विविधः क्रत्वर्थः पुरुषार्थश्च । पुनर्द्विविधः दृष्टार्थः अदृष्टार्थश्च । तत्र क्रत्वर्थो दृष्टार्थः । पुरुषार्थस्तु अदृष्टार्थः । पृ. २१, * अभावविधिः प्रतिनिधिनियमेन बाध्यते यथा पूतीकेषु । पृ. १४४.

* **अभावविषयः** अन्यतरकोटिव्यवस्थया कोट्यन्तरस्य आर्थिकव्यवस्थाविधिः प्रत्यक्षविधिः । अग्नीषोमीयपुरोडाशे कृतसोमयागपुंविषयत्वेन व्यवस्थापिते अर्थात् तदभावः अकृतसोमयागपुंविषयत्वेन व्यवस्थितो भवति । **बाल.** पृ. १९.

* **अभावाभावस्य** भावरूपत्वम् । **मणि.** पृ. ३७.

* **अभावावसायः** भावग्रहणपुरःसरः । **ऋजु.** पृ. ९१.

* **अभावः (अनुपलब्धिः)** । अस्ति चेयं प्रसिद्धिः मीमांसकानां षष्ठं किलेदं प्रमाणमिति । (इयं तु) प्रसिद्धिः वटयक्षप्रसिद्धिवत् । **बृहती.** पृ. ९३, ९४. * अभावः आत्यन्तिकप्रमाणप्रत्यस्तमये एव यतः । **ऋजु.** पृ. १२९. * अभावः प्रमाणं लौकिकमेव । **बाल.** पृ. ८. * सर्वप्रमाणप्रत्यस्तमये च षष्ठेन (प्रमाणेन) अभावः परिच्छिद्यते । **वा.** २।१।१६।४८ पृ. ४५२.

* **अभावस्यापि प्रमेयता** । अत्रेदमाकूतम् । **योऽयमभावव्यवहारो लौकिकानां घटो नास्तीति निवृत्तिलक्षणः, कण्टको नास्तीति प्रवृत्तिलक्षणः, स न तावत् दृश्ये घटकण्टकादौ भूभागग्रहनिबन्धनः, दृश्यमानेऽपि तद्गते घटादौ प्रसङ्गात् । नहि अदृश्यः, दृश्यमानत्वात् । केवलभूभागग्रहणनिबन्धनत्वादयमदोषः इति चेत् । किं पुनरस्य कैवल्यं? स्वरूपमिति चेत् । न । घटकण्टकादिग्रहेऽपि तत्सद्भावात् । तद्धर्म इति चेत्? स तर्हि**

घटादिभावविरोधी भूमिकान्तरेण तदभाव एवेति सिद्धं नः समीहितम्। **ननु** अभावप्रमेयवादिनामपि भूतलग्रहणसद्भावज्ञानकारणं एषितव्यम्। यदाह । '**गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम्**' इति। तत्र न तावत् संसृष्टभूतलग्रहस्तद्धेतुः विरोधात्। न खल्वस्ति संभवः, घटसंसृष्टभूतलग्रहश्च, तत्र घटाभावनिश्चयश्चेति। नापि घटाभाववद्भूतलग्रहः, आत्माश्रयप्रसङ्गात्। न खलु स एव तस्य हेतुरिति साम्प्रतम्। तस्माददृश्ये प्रतियोगिनि घटादौ भूतलमात्रग्रहणं घटाभावपरिच्छेदहेतुः इत्यकामेनापि घटाभावादन्यत् कैवल्यं भूतलस्य स्वीकरणीयम्। तदेव चाभावव्यवहारनिबन्धनमिति किं अन्तर्गड्डुना घटाभावेनेति। **तदेतदयुक्तम्**। वस्तुसद्भावग्रहणमात्रस्य अभावज्ञानहेतुत्वानभ्युपगमात्। अपि तु तुल्योपलम्भयोग्यस्य प्रतियोगिनोऽनुपलम्भने सति अस्य तत्कारणत्वमिष्यते। तदाह '**स्मृत्वा च प्रतियोगिनम्**' इति। अनेन अगृह्यमाणतां अस्य सूचयति, तत्त्वे स्मृत्यनुपपत्तेः। न चैकज्ञानसंसर्गिभूतलोपलम्भः एव घटानुपलम्भ इति साम्प्रतम्। नोपलब्धचरघटसंसृष्टभूतलोपलम्भेऽपि, घटानुपलम्भप्रसङ्गात्। तदाऽपि भूतलोपलम्भस्य भावात्, घटानुपलम्भस्य च तदव्यतिरेकात्। **ननु** अयं अनुपलम्भः प्रतीतो वा स्यादभावज्ञाने हेतुः, अप्रतीतो वा? न तावत् प्रतीतः, अनवस्थाऽऽपातात्। सोऽपि ह्युपलम्भाभावरूपत्वादनुपलम्भान्तरेण प्रमातव्यः, एवमनुपलम्भान्तरमपीत्यनवस्थानात्। अप्रतीतत्वे तु सत्तया हेतुः स्यात्। तथा च यदा अयं प्रमाणोपलम्भचरचत्वरभूतलप्रमित्साऽभावात् तस्मिन् अप्रतीतचरे चैत्राभावं तु अचिरप्रातचैत्रविशिष्टचत्वरतलोपलम्भवान् पृच्छ्यते '**मैत्र, प्राक् किमासीदिह चैत्रः**' इति, स तदा तत्प्रश्नसमुदितजिज्ञासः प्राक्तनीं दृश्यमानस्य चैत्रस्य असत्तां तदानीमेव अवधार्योत्तरमाह, '**आयुष्मन्नासीदिह चैत्रः संप्रातः**'-इति। **तत्रोपपद्यते**, तदानींतनेनोपलम्भेन तदनुपलम्भापवादात्। न च प्राक्तनोऽनुपलम्भः तस्य सम्प्रतितनीं अभावधियमाधातुमर्हति। न खलु निमीलितनयनयुगलः प्राच्या नयनसंपदा सम्प्रति रूपं पश्यति। तस्मादेकज्ञानसंसर्गिवस्त्वन्तरोपलम्भः एव अभावज्ञानकारणमेषितव्यम्। तथा च स्वसंवेदनसिद्धः स एवाभावव्यवहारसाधनाय पर्याप्तः, इति कृतमभावेन प्रमेयेनेति। **अत्रोच्यते**। न तावत् विना घटानुपलम्भं भूतलोपलम्भमात्रमभावव्यवहारसाधनम्। न च भूतलोपलम्भ एव तदनुपलम्भ इति चोक्तम्। अतोऽनुपलम्भो वरं प्रतियोगिन एषितव्यः। न चासौ अप्रतीतस्तदभावव्यवहारसाधनं, प्रेक्षावद्व्यवहारस्य अबुद्धिपूर्वकत्वानुपपत्तेः। तदभावज्ञानसाधनं तु भवेत्, अज्ञातस्यापि ज्ञानोपायत्वदर्शनाद् चक्षुरादिवत्। **नन्वेवं** सत्तामात्रेणोपायत्वमभ्युपेतं भवति, तच्चानुपपन्नं, असत्यनुपलम्भे तद्भावबुद्धिसमुत्पादप्रसङ्गादित्युक्तम्। **न**। अनुपलम्भाभावस्यासिद्धेः। **ननु** '**अत्र चत्वरतले किं अयमासीच्चैत्रः**' इतिप्रश्नसमये तदुपलभमानः स एव मैत्रः कथं तदनुपलम्भवान्? **सत्यं**, गृह्णाति चैत्रं, न तु स्मरत्यस्य प्राक्तनीं तत्र सत्तां, चत्वरतलस्येव। न च स्मृतिरनुपलम्भ इति तदभावोऽप्यनुपलम्भ एव। तेन यथा ग्रहणार्हस्याग्रहणं तदभाववीक्षासाधनं, एवं सत्यपि सम्प्रति तस्य ग्रहणे प्राक्तनी चैत्रस्य सत्ता चत्वरस्येव। तत्र मध्यंदिने स्मरणार्हो न स्मर्यते इति माध्यंदिनस्मरणाभावः सन्निति प्राक्तनाभावविषयं माध्यंदिनं प्रत्ययं शक्त एव जनयितुम्। न च प्रत्यक्षानुपलब्धिरेवाभावज्ञानसाधनमिति साम्प्रतम्। योग्यप्रमाणानुपलब्धेस्तत्साधनत्वात्। अतत्साधनत्वे तु अनुमानादिनिवृत्तेः। मकरगतस्य सवितुः मीनादिषु सत्तायाश्च चैत्यवन्दनादिधर्मतायाश्च दर्विहोमापूर्वत्वस्य च ध्वन्यागमनमात्रोपपन्नश्रवणशब्दस्य सजातीयपरंपराऽऽरम्भणस्य निवारणाभावात्। प्रमाणान्तराणामिव अप्रमाणस्यापि स्मरणस्य स्वविषये योग्यत्वोपपत्तेः। प्रत्ययान्तरसाकल्यलक्षणस्य च दृश्यत्वस्य विषयकारणके एव प्रत्यये उपपत्तेः। तदभावे चानुमानादिनिवृत्तेः अनुमेयाद्यभावसाधनत्वात्। नहि अनुमानाद्येकविषयाणां प्रमेयाणां क्वचित् अभावः तद्व्यवहारो वा विषयातिरिक्तप्रत्ययान्तरसाकल्ये संभवति, तस्मिन् सति तद्विरोधिभावप्रत्ययव्यवहारोपपत्तेः। न च विषयकारणेऽपि प्रत्ययान्तरसाकल्यसंभवः, इन्द्रियार्थसंनिकर्ष-

स्यैव असत्यर्थे अनुपपत्तेः । तस्मात् संस्काराभावेऽपि स्मरणार्हत्वमुपपन्नम् । न चोपलम्भानुपलम्भयोर्विरोधः, असमसमयवृत्तिभावाभावसाधनतया भिन्नविषयत्वात् । **स्यादेतत्** । सत्तामात्रेण अभावसाधने तु अनुपलम्भस्य दृश्यत्वमप्यस्य तथेति तज्ज्ञानसिद्ध्यर्थं सूक्ष्मकीटकण्टकादिजिज्ञासा न स्यात् । **मैवम्** । दृश्यत्वसिद्ध्यर्थं हि सा । अजिज्ञासितस्य तत्त्वानुपपत्तेः । न तु दृश्यत्वज्ञानार्थम् । भवतु वा दृश्यत्वज्ञानं हेतुः, भूतलज्ञानवत्, किमायातमनुपलम्भस्य ? नहि आलोको ज्ञायमानः कारणमिति चक्षुषाऽपि तथा भवितव्यम् । न च धूमोऽवगतः अनुमानज्ञानकारणमिति मनोऽपि तत्कारणं ज्ञातव्यम् । तस्मात् सत्तया अनुपलम्भः अभावज्ञानकारणमिति नानवस्था । नापि प्रमेयाभावातिरिक्तकैवल्याङ्गीकारः , चत्वरतलोपलम्भस्य चैत्रानुपलम्भे सति तत्कारणत्वात् । तदयमभावव्यवहारो वस्तुसद्भावग्रहणतत्प्रतियोगितत्स्मरणतद्बुभुत्साऽतिरिक्तनिमित्तजन्मा । यथा सत्सु अपि तन्तुषु कदा चित् पटः प्रादुर्भवन् तदतिरिक्ततत्संयोगभेदजन्मेति । **दृश्ये** प्रतियोगिनि स्मर्यमाणे वस्तुसद्भावग्रहणे सति अभावव्यवहारोऽवश्यंभावीति हेतुरसिद्धः इति **चेन्न** । गृह्यमाणेऽपि प्रतियोगिनि अस्मर्यमाणे किमासीदिति प्रश्नानन्तरं प्राक्तनतदभावव्यवहारप्रवृत्तेः । **भवतु** तर्हि बुभुत्सिते प्रतियोगिनि बोधार्हे वस्तुसद्भावज्ञानं अभावव्यवहारसाधनम् । अस्ति च गृह्यमाणे चैत्रे ' किमासीत् ' इति प्रश्नसमनन्तरं तत्र तदीयप्राचीनसद्भावसुस्मूर्षा । तदेतस्यां सत्यां प्राक्कालवर्तिचत्वरतलस्मृतिरेवावश्यं तदभावव्यवहारप्रवृत्तिनिमित्तमित्यसिद्धता हेतोः । **न** । एतस्यामपि अवश्यंभावनियमाभावात् । प्रतीतिस्मरणानुभवयोः सतोरपि नितान्तवल्लभतया सुस्मूर्षाऽनुबुभूषयोरविरामात् । तथा च प्रतियोगिनोऽनुभवे स्मरणे च तत्रतत्र तदभावव्यवहारप्रसक्तेः । असंस्मरणेऽननुभवे चेति विशेषणान्न दोष इति चेत् ? अङ्गीकृतं तर्हि तदतिरिक्तं निमित्तं अभावः । तथाप्युपलम्भाभावरूपत्वादस्य न प्रमेयाभावसिद्धिः इति चेत् । अत्रोत्तरमनन्तरमेव वक्ष्यति स्वयमेवाचार्यः । ननु अभावो नाम विग्रहवान्न कश्चिदनुभूयते इत्युक्तं, तत्किमयमभावव्यवहारो नास्ति, नास्तिनिमित्तो वा ? न तावन्नास्तिनिमित्तः, कादाचित्कत्वानुपपत्तेः । न च निमित्तान्तरमस्यास्तीत्युक्तम् । न च नास्ति, भावव्यवहारस्यापि अपह्नवप्रसङ्गात् इत्युक्तम् । निःस्वभावस्य कथमनुभूयमानता इति चेन्न । सद्व्यावृत्तिरूपस्य तस्य प्रतीयमानत्वात् स्वतोऽवान्तरविशेषानुपलब्धेः । निःस्वभावतेति चेत् ? न । ज्ञानशक्त्यादीनामपि तत्प्रसङ्गात् । तेषामपि हि न स्वतो भेदो निरूप्यते । ज्ञेयशक्यभेदाधीनं तद्भेदनिरूपणमिति चेत् न इहापि प्रतियोगिभेदेन तद्भेदनिरूपणादिति सर्वमवदातम् । **कणिका.** पृ. ६८–७२.

* **अभावस्यापि प्रमेयत्वम्** । (न खलु प्रमेयता सत्ता, तदनुवृत्तावपि सत्ताया अभावात् व्यावृत्तेः । चोदकः सोपहासमाह– ) अभावः प्रमेयः इति मुग्धाह्वतम् । नास्ति, प्रमीयते च इति कथं ? ( उपहासके कश्चित् शङ्कते– ) यदा नाभावः प्रमेयः कण्टकादीनां, इति निरटङ्कि, कथं तर्हि नास्तीति व्यवहारः ? ( उपहासक आह– ) विषयावच्छेदात् ( प्रमाणस्य भूतलग्राहिणः ) । अवच्छिन्नविषयं हि प्रमाणं ( एकाकिभूतलग्राहि, न घटकण्टकादिसद्वितीयभूतलग्राहि ) तदवबोधयत् , अन्यत् ( घटकण्टकादि ) अनवबोधयत् ' नास्ति ' इति व्यवहारयति । ( तदेतत् विशदीकर्तुं शङ्कते– ) कथं अन्यविषयो व्यवहारः अन्यविषयात् प्रमाणात् ? ( घटाद्यभावविषयो व्यवहारः, भूतलादिविषयात् प्रमाणात् कथम् । अभावव्यवहारस्तावदयं सर्वजनीनो न निह्नवमर्हति भावव्यवहारवत् । तदनेन अभावादेव उत्पत्तव्यं, अन्यव्यवहारस्य अन्यत उत्पत्तौ अतिप्रसङ्गात् । परिहासको निराकरोति– ) नायमन्यविषयः ( न व्यतिरिक्ताभावविषयः, तस्य भाववत् विग्रहवतः अप्रतीतेः ) तस्य प्रमाणविषयावच्छेदविषयत्वात् , तस्याः ( नास्तीतिप्रतीतेः ) विषयान्तरत्वात् । तथाहि ' नास्ति ' इति अयमर्थः, नेदं प्रतीयते, ' भूतलं प्रमीयते, न घटः ' इति । ( उपहासं उपसंहरति– ) अतस्तत्र 'अप्रमितिः, प्रमाणं' इत्यलौकिकमिति । ( नियोगवादी अभावस्य प्रमेयत्वं साधयन् उपहासवादिनं दूषयति– ) उच्यते , अनिरूपित-

व्यवहारं अत्रभवन्तं पश्यामः । इदं हि भवान् निरूपयतु, य एष लौकिकानां क्व चित् नास्तीति प्रवृत्तिनिवृत्तिलक्षणो व्यवहारः, किमयं अपरिच्छेदात्, उतान्यपरिच्छेदात्, उत तदभावपरिच्छेदात् ? । यदि अपरिच्छेदात् न इष्टस्याभावं जिज्ञासेरन्, अपरिच्छेदादेव निवर्तेरन्, अनिष्टस्यापरिच्छेदादेव प्रवर्तेरन् ( जिज्ञासमानोऽपि खलु अपरिच्छेदमेव प्राप्नुयात्, तदतिरिच्यमानदेहस्य प्रमेयाभावस्यानभ्युपगमात् । स च प्राप्त एव इति प्रेक्षावतां अभावजिज्ञासा न स्यात् । शङ्कते– ) प्रमाणविषयापरिच्छेदनिवन्धनः एव व्यवहारः ( नापरिच्छेदमात्रं अत्र विवक्षितं, अपि तु दृश्यस्य प्रतियोगिनः । निराकरोति– ) न विशेषाभावात् । नहि तदितरयोः अपरिच्छेदो विशिष्यते ( नहि दृश्यत्वे अदृश्यत्वे वा प्रतियोगिनोः अपरिच्छेदस्य प्रसज्यप्रतिषेधात्मनः सर्वोपाख्याविरहिणः कश्चित् विशेषः संभवति, तत्संभवे तु तुच्छत्वानुपपत्तेः । दूषणान्तरमाह– ) अप्रत्ययपूर्विके च प्रवृत्तिनिवृत्ती इत्यसमीचीनम् । ( ननु उभयी भूतलादौ संवित् सद्वितीयभूतलविषया च, एकाकिभूतलविषया चेति । उत्तराऽपि च द्वयी, दृश्ये प्रतियोगिनि, अदृश्ये च । दृश्यत्वं चास्योपलम्भाय प्रत्ययान्तरसाकल्यं स्वभावविशेषश्च । स च स्वभावविशेष उच्यते, यस्मिन् सति सत्सु अन्येषु उपलम्भप्रत्ययेषु सद्भावोऽनुभूयते । एवं च या दृश्ये प्रतियोगिनि भूतलप्रतीतिः, सैव अभावव्यवहारसाधनी । तस्याश्च अतुच्छत्वात् संभवति विशेषणयोगः । तत्सिद्धयर्थं च युज्यते सूक्ष्मकीटककण्टकादिजिज्ञासा । इत्यत आह– ) वस्त्वन्तरप्रत्ययात् प्रवर्तन्ते निवर्तन्ते चेति मिथ्या । भावेऽपि प्रतियोगिनः तत्प्रसङ्गात् ( घटो नास्तीति निवृत्तेः, कण्टको नास्तीति प्रवृत्तेः प्रसङ्गात् । शङ्कते– ) भावे घटकण्टकयोः ज्ञायमानयोः तन्निबन्धने एव प्रवृत्तिनिवृत्ती ( न भूतलज्ञाननिबन्धने । निराचष्टे– ) हन्त तर्हि तदभावाद्विपर्ययः ( घटकण्टकयोरभावात् इष्टानिष्टसाधनज्ञानस्य विपर्ययः ) न वस्त्वन्तरभावात् इष्टानिष्टसाधनज्ञानस्य तदाऽपि भावात् ( ज्ञानकालेऽपि भूतलस्य भावात् । यदि इष्टानिष्टसाधनज्ञानविरोधि भूतलस्याभविष्यत् ततस्तस्मात् तदनङ्क्ष्यत्, न तु अनयोर्विरोधः तज्ज्ञानसंतत्या सह तस्य चिरमवस्थितेः इत्यर्थः । ) पुरस्ताच्च ( इष्टानिष्टसाधनज्ञानस्य पुरस्तात् भूतलस्य भावाच्च । प्रकृतमुपसंहरति– ) तस्मात् नान्यप्रमितिनिबन्धने, नापि अप्रमितिनिबन्धने ' अनभिमतं अभिमतं नास्ति, अभिमतं नास्ति' इति प्रवृत्तिनिवृत्ती । अपितु अभावाधिगमनिबन्धने । ( पृच्छति– ) नास्तिज्ञानस्य को विषयो निरूपितः ? ( अपर आह– ) ननु उक्तं ( तत्र न तावत् अदृश्ये प्रतियोगिनि वस्तुसद्भावज्ञानं, प्रतियोगिनोऽपि अप्रमितिः संभवति इत्युक्तम् । अतः तद्व्यतिरिक्तानुपलम्भाभावो वक्तव्यः, तथा च ) किमपराद्धं भवतो विषयाभावेन, यत् तं ( प्रमीयमाणं ) अतिलङ्घ्य प्रमाणाभावो विषयः इत्युच्यते । ( शङ्कते– ) ज्ञेयाभावो न प्रमेयः ( प्रातिस्विकभेदानुपलब्धेः । निराचष्टे– ) भवतु, यदि अस्ति तद्विशेषो हेतुः ( तयोः ज्ञानज्ञेयाभावयोर्विशेषः । नहि ज्ञानाभावोऽपि आजानतो भेदवान्, तद्भेदस्यापि प्रतियोगिभेदाधीननिरूपणत्वात् । तथा च ' चैत्रो नास्ति ' इति प्रतीतिः तदभावावभासलक्षणकार्यसमधिगमनीया न कुकविकृतिरिव क्लेशेन कथं चित् प्रमाणाभावविषयतया व्याख्यातुमुचिता । अथापि वैयात्यादुच्यते, न च तत्त्वतो नास्तीतिबुद्धिव्यवहारौ स्तः, किंतु– ) ज्ञानाभावे ज्ञानभ्रमः ( चैत्रदर्शनाभावे चैत्रो नास्तीति ज्ञानं भ्रमः ), व्यवहाराभावे व्यवहारभ्रमः ( चैत्रोचितव्यवहाराभावे च व्यवहारभ्रमः ) आलोकादर्शने अन्धकारभ्रमवत् । ( तदेतन्निराकरोति– ) न, सुषुप्त्याद्यवस्थासु प्रसङ्गात् ( यदि हि ज्ञानव्यवहारयोरभावे तद्विभ्रमः, सुषुप्त्याद्यवस्थास्वपि तथा प्रसङ्गः [ उक्तभ्रमप्रसङ्गः ] । हेत्वन्तरमाह– ) अप्रमिते च भ्रमायोगात् सुषुप्त्यादिवत् । ( प्रमितस्य हि भावस्य प्रमिते एव भावे समारोपभ्रान्तिः, न पुनरसतः, नापि ज्ञानाकारस्य, नापि अग्रहे । अन्धकारदृष्टान्तस्तु साध्यविकलः इत्याह– ) तमोदर्शनं तु भूच्छायादर्शनं, आलोकाभावदर्शनं च इत्यसमानम् ( दार्ष्टान्तिकेन । तद्यदि प्रमाणग्राह्यता प्रमाणसंबन्धः, यदि वा तदर्हता, उभयी अप्यसौ अभावे सदा अस्ति, इति तस्यापि सत्त्वप्रसङ्गः । अथ स्वरूपवर्तमानता सत्त्वं, न सा अभावे

अस्ति इति चेन्न अतुच्छत्वोपपादनात् । वि. वि. कणिका च पृ. ६३-८०.

* **अभाव- ( अनुपलब्धि- ) परिच्छेदः ।**

अभावोऽपि प्रमाणाभावः नास्तीत्यस्यार्थस्य असंनिकृष्टस्य । भा. १।१।५।५ पृ. ३९. श्लोवा- '**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते । वस्तुसत्ताऽवबोधार्थं तत्राभावप्रमाणता । १ ॥ वस्त्वसंकरसिद्धिश्च तत्प्रामाण्यसमाश्रया । २ ॥**' प्रत्यक्षादिभिः सद्रूपेण अप्रतीयमानमपि घटादिकं असद्रूपेण अभावस्य प्रमेयम् । असंकरः असद्रूपं अभाव इति यावत् । '**क्षीरे दधि भवेदेवं, दध्नि क्षीरं, घटे पटः । शशे शृङ्गं, पृथिव्यादौ चैतन्यं, मूर्तिरात्मनि । ५ ॥ अप्सु गन्धो, रसश्चाग्नौ, वायौ रूपेण तौ सह । व्योम्नि संस्पर्शिता ते च, न चेदस्य प्रमाणता । ६ ॥**' सोऽयं वस्त्वसंकरः असति अभावप्रामाण्ये न सिध्यतीत्यभिप्रायः । '**न तावदिन्द्रियैरेषा नास्तीत्युत्पद्यते मतिः । भावांशेनैव संयोगो योग्यत्वादिन्द्रियस्य हि । १८ ॥ गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षणात् । २७ ॥ मानं कथमभावश्चेत् प्रमेयं चास्य कीदृशम् । मेयो यद्वदभावो हि मानमप्येवमिष्यताम् । ४५ ॥ भावात्मके यथा मेये नाभावस्य प्रमाणता । तथाऽभावप्रमेयेऽपि न भावस्य प्रमाणता । ४६ ॥ भावात्मकस्य मानत्वं न च राजाज्ञया स्थितम् । परिच्छेदफलत्वाद्धि प्रामाण्यं स्याद् द्वयोरपि । ४७ ॥ अभावशब्दवाच्यत्वात् प्रत्यक्षादेश्च भिद्यते । प्रमाणानामभावो हि प्रमेयाणामभाववत् । ५४ ॥ अभावो वा प्रमाणेन स्वानुरूपेण मीयते । प्रमेयत्वात् यथा भावस्तस्माद् भावात्मकात् पृथक् । ५५ ॥**' अनुपलब्धेः स्वतन्त्रोपयोगमाह- '**कर्माणि सर्वाणि फलैः समस्तैः सर्वैर्यथावच्च यदङ्गकाण्डैः । न संगतानीह परस्परं च नाङ्गं वदेतत्प्रभवं क्रतूनाम् । ५६ ॥**' सर्वप्रकारोऽपि वस्त्वसंकरः अभावप्रमाणक एव । नहि दर्शादेः श्रुत्यादिचोदिताङ्गातिरेकेण अङ्गान्तराभावे कालान्तराभावे च अन्यत् आगमाभावात् प्रमागमस्ति । श्लोवा. टी. ४७३-११. दृश्यादर्शनं अभावे प्रमाणं, नादर्शनमात्रम् । येन च आश्रयभूतं भूतलादिकं वस्तु गृहीतं तस्यैव घटो दृश्यो भवति, नान्यस्य, उन्मीलिताक्षस्यैव च तद्ग्रहणमिति तत्सिद्ध्ये अक्षापेक्षा नाभावग्रहणाय । गृहीते चाश्रये प्रतियोगिनि च स्मृते अक्षस्थानीयेन दृश्यादर्शनसहायेन मनसैव अभावज्ञानजन्मोपपत्तेः नेन्द्रियस्याभावे शक्तिः शक्या कल्पयितुम् । आपरोक्ष्यं तु भावांशे एव, नाभावांशे तदस्ति । विशिष्टबोधोऽपि कारणसमाहारादेव उपपद्यते, प्रत्यभिज्ञायामिव भूतवर्तमानकालसंबन्धः । दृश्यादर्शनं अक्षं च सहितं अभावविशिष्टं भावं बोधयति । तत्र भावांशे अक्षस्य व्यापारः, अभावांशतत्संबन्धयोस्तु अनुपलब्धिर्व्याप्रियते । यथा क्षीरादिद्रव्ये जिह्वागते द्रव्यस्वरूपं त्वचा, माधुर्यं अस्य च द्रव्यसंबन्धो रसनेन इत्युभाभ्यां माधुर्यविशिष्टक्षीरबुद्धिः । **रत्नाकरः** अभावप्रामाण्यवादे २७ श्लोके.

'भूतले घटो नास्ति' इत्येवं भूतलाधिकरणकतया भूतलव्यतिरेकेण प्रतीयमानस्य घटाभावस्य प्रत्यक्षाद्यविषयस्य बोधकः, प्रत्यक्षादिप्रमापञ्चकस्य उत्पत्तुं योग्यस्यापि योऽनुत्पादः, दृश्यादर्शन-योग्यानुपलम्भादिपर्यायः, प्रमाणाभावशब्दितः, स एव अनुपलब्ध्याख्यं प्रमाणम् । **वैद्यनाथः** पृ. ३९.

**बृहती**— अभावोऽपि प्रमाणाभाव इति किमिदं प्रमाणलक्षणं ? ( एकदेशी प्राह- ) ओमित्युच्यते ।

**ऋजुविमला**— भूतलादिषु घटादीनामभावस्तावत् प्रतीयते 'भूतले घटो नास्ति' इति । नहीयं प्रतीतिः भूतलमात्रालम्बना, सत्यपि घटे प्रसङ्गात् । न च निरालम्बना, स्वयमेव आलम्बनसाधनत्वात् । तेन इयं अभावमेव अवलम्बते । न चेयं अप्रमाणं, बाधकाभावात् निश्चयात्मकत्वाच्च । अत एव अस्यां प्रमाणात्मिकायां प्रतीतौ प्रतिभासमानत्वात् प्रमेयत्वमपि तस्य युक्तम् । यदि च अभावो न प्रतीयेत भूतलादिषु चरणन्यासादिव्यवहारं न स्यात् । नह्यसौ भूतलमात्रपरिच्छेदात् कण्टकादिमत्यपि भावात् । न च केवलभूतलग्रहणात्, अभावस्य अप्रमेयत्वे कैवल्यापरिच्छेदात् । कैवल्यं हि भूतले घ-

नाभावादन्यत् । न च अन्यासंदृष्टस्वरूपमात्रग्रहणात्, सूक्ष्मकण्टकादियोगिनि भूतले स्वरूपमात्रेण गृहीते प्रवृत्तिप्रसङ्गात्, प्रयत्नपूर्विकाया जिज्ञासाया अयोगात् । तथा अभावस्य अप्रमेयत्वे शशविषाणादीनामपि अनुमानं निर्बाधमासज्येत । तस्मात् अभावः प्रमेयः । न चेयमभावप्रतीतिः प्रत्यक्षा अनिन्द्रियसंप्रयोगजत्वात् । ननु च भावप्रतीतिवत् इन्द्रियसंप्रयोगानुविधायिनी कथं अनिन्द्रियजा ? । उच्यते । भावग्रहणपुरःसरोऽयं अभावावसायः । भावग्रहणं च इन्द्रियेण, इति तद्भावभावित्वं अन्यथासिद्धम् । किमत्र प्रमाणमिति चेत्, गृहीतभावस्वरूपमात्रस्य उपरतेन्द्रियव्यापारस्यापि देशान्तरगतकारणान्तरोपजातजिज्ञासस्य अभावप्रतिपत्तिदर्शनात् । न चेदमनुमानमपि, संबन्धग्रहणानुपपत्तेः । नहि अगृहीते संबन्धिनि संबन्धावगमः सुगमः । न चाभावस्य संबन्धिनो ग्रहणमस्ति । तदिदं अभावाख्यं प्रमाणान्तरं भाष्येणानेन लक्षितं इति ।

**बृहती**— ( आचार्य आह– ) किमनेन प्रतीयते ? ( प्रतिपक्षी– ) उक्तं 'नास्तीत्ययमर्थः' इति ( आचार्यो निराकरोति– ) किं च तन्नास्ति ? ( प्रतिपक्षी– ) प्रमीयमाणस्य प्रमेयता । ( आचार्यः– ) अतश्च अप्रमितेः प्रमाणता इत्यलौकिकमिव प्रतिभाति ।

**ऋजु**— ननु मा भूत् यन्न प्रमीयते तस्य प्रमेयत्वं, किंतु तस्य तु यन्नास्तित्वं अभावशब्दवाच्यं भूतलाद्यधिकरणं, तत् प्रमेयमस्तु इति । नेत्युच्यते । अप्रमीयमाणत्वमेव हि नास्तित्वं, नापरम् । योऽपि हि पृथग्भूतमभावमाह तेनापि भूतलस्यापि प्रमीयमाणताऽपि अङ्गीकरणीयैव । तयैव च नास्तित्वव्यवहारोपपत्तेः, किमर्थान्तराभ्युपगमेन ? । न च अप्रमीयमाणतैव प्रमेयं, यस्मात् तदर्था संसृष्टानुभवयुक्ततैव आत्मनः तस्यार्थस्य अप्रमीयमाणता । सा च अवस्था आत्मनः स्वसंविदितैव । नातः प्रमेयमवशिष्यते । किंच योऽपि अभावं प्रमाणमाह, तस्यापि तज्ज्ञानोत्पत्तौ तदसंभवानुभवयोग एव कारणम् । स च न चक्षुरादिवत् अज्ञात एव सत्तामात्रेण ज्ञानजनकः । यतः संप्रति दृश्यमानेष्वपि भूतलादिषु कस्मिंश्चिदर्थे असत्यपि तदनुपलम्भेन 'आसीदिदं प्रागिह' इति प्रतीतिर्दृश्यते । अतः संप्रति नास्तित्वबुद्धिः प्राक्तनादेव केवलोपलम्भात् अधुना स्मृतिसमारूढात् उपजायते इति बलादभ्युपगमनीयम् । ततश्च केवलोपलम्भलक्षणमेव नास्तित्वमस्तु । किमर्थान्तरपरिग्रहेण ? या च सा केवलोपलम्भयोगिता आत्मनः, सा च क चित् अर्थोपलम्भकसामग्रीवैकल्येन, क चिच्च साकल्येनैव । तत्र येयं अभावव्यवहारं प्रवर्तयति, तामेव हि तादृशीं दशां अनुसंदधतः 'क्षितितले घटो नास्ति' इति व्यवहारः प्रवर्तते । न चात्र अतिप्रसङ्गोऽस्ति संयुक्तेऽपि अभावव्यवहारः स्यादिति, संयुक्तोपलम्भात् केवलोपलम्भस्य अन्यत्वात् । प्रयत्नपूर्विकाऽपि च जिज्ञासा भूतलादिषु सूक्ष्मकण्टकादिषु विषयोपलम्भहेतुसाकल्येऽपि एषा अवस्था इति पर्येषितं, इति का अनुपपत्तिः ? अन्यथा हि 'सूक्ष्मत्वात् इयमवस्था आत्मनः' इति शङ्कया निःशङ्को नाभावव्यवहारः स्यात् । अस्यामेव च प्रतिपक्षभूतायां नास्तित्वात्मिकायां सिद्धायां अनुमानं शशादिसंबन्धिनां विषाणादीनां न प्रवर्तते इति अभावस्य प्रमेयान्तरत्वं नास्तीति सिद्धम् । ऋजु. पृ. ९२–९३.

**बृहती**— लक्षणमपि प्रमाणाभावः इति प्रमाणाभाव इत्येव लक्षयति । ( पूर्वपक्षी– ) अस्ति चेयं प्रसिद्धिः मीमांसकानां षष्ठं किलेदं प्रमाणमिति । न चास्य ग्रन्थतो लोकतश्च प्रमाणता अवसीयते । अतो न विद्मः, प्रसिद्धेः किं बीजमिति । ( सिद्धान्ती– ) किमत्र न ज्ञायते ? ग्रन्थतस्तावत् प्रमाणाभाव एव अवसीयते । नास्ति इत्युक्ते प्रमेयस्यैवाभावं लौकिकाः प्रतिपद्यन्ते । (पूर्वपक्षी–) किं तर्हि अनेन लक्षितेन ? प्रमाणावगत्यर्थः अयमारम्भः, तदनुसारी हि अर्थनिश्चयः कथं स्यादिति । ( सिद्धान्ती– ) अत एवेदमुच्यते, यस्मात् प्रमाणावगत्यर्थोऽयमारम्भः । ( पूर्वपक्षी– ) किमनेन पूर्वोक्तानां प्रमाणानां स्वरूपमवसीयते ? ( सिद्धान्ती– ) यत् पूर्वोक्तैरेव स्वलक्षणैर्नावसीयते ( –तदनेनावसीयते ) । सर्वलक्षणाभिधानवाक्यशेषोऽयं ग्रन्थः । नहि उत्पादमात्रात् ज्ञानस्य अर्थे तस्मिन् प्रमाणस्य प्रमाणता अवसीयते । अतः स्वलक्षणमात्राभिधानात् निश्चयः । स्वरूपेण प्रमाणस्य समधिगम्यमानत्वात् सर्वप्रमाणानाम् ।

तस्मात् कार्यप्रत्यक्षमयात् 'नास्ति' इत्यनेन पूर्वोक्तस्यैव लक्षणस्य साधुता उच्यते । केयं तर्हि प्रसिद्धिः ? प्रसिद्धिर्वैटयक्षप्रसिद्धिवत् । यदि पुनर्व्यवहारान्यत्वात् कारणान्यत्वं मन्यन्ते किं कुर्मः । ( यदि तावत् केचिन्मीमांसकाः [ भट्टपादाः ] प्रमाणान्यत्वं मन्यन्ते ततश्च वयं किं कुर्मः । नहि व्यामुग्धान् अलंकुरुते पुरुषप्रयत्नः इति तेषामुपेक्षा कार्या ) । नहि व्यवहारान्यत्वात् प्रमाणान्यत्वसिद्धिः । अतः स्वलक्षणमेवेदम् । इदमेव च तल्लक्षणम् । **बृहती.** पृ. ९१–९५.

*** अभाव–( अनुपलब्धि– ) परिच्छेदः** । (शा.) 'अभावोऽपि प्रमाणाभावो नास्तीत्यस्यार्थस्यासंनिकृष्टस्य' इति ( भाष्यम् ) । कथं पुनः प्रमाणाभावः प्रमाणलक्षणं, विपरीतत्वात् । पूर्वोक्तसदुपलम्भकप्रत्यक्षादिप्रमाणपञ्चकाभिप्रायोऽयं प्रमाणशब्दः । तदभावश्च षष्ठस्य लक्षणमिति नानुपपत्तिः । किमस्य प्रमेयम् ? उक्तं 'नास्तीत्यर्थस्य' इति । सर्वं हि वस्तु सदसदात्मना द्विविधं, तद्यदा यत्र सद्रूपेण वर्तते घटादि, तत्तदा तत्र प्रत्यक्षादिभिरस्तीति प्रतीयते । यत्र त्वसद्रूपेण वर्तते, तत्र सद्रूपेण बोधकानां प्रत्यक्षादीनां सद्रूपबोधनायोत्पत्तुं योग्यत्वे सत्यपि योऽनुत्पादो दृश्यादर्शनयोग्यानुपलम्भादिपर्यायो भाष्ये प्रमाणाभावशब्देनोक्तः, तेनैवेन्द्रियशब्दादिस्थानीयेन नास्तीति प्रतीयते, भूतलेऽत्र घटो नास्तीति । **यस्तु** नास्तित्वमपह्नुत्य प्रमेयाभावात् षष्ठं प्रमाणं नास्तीत्याह, **तस्य** दृश्यादर्शनानन्तरं 'नास्तीह भूतले घटः' इत्येवमुपजायमानस्य ज्ञानस्य किमालम्बनम् ? न भूतलम् । सत्यपि घटे प्रसङ्गात् । तथा गवि 'यः अश्वो न भवति' इति प्रत्ययो रूपे च 'रसो न भवति' इति, तस्य किमालम्बनम् । न गोरूपं, तस्य प्रतियोग्यनपेक्षप्रतीतिकत्वात्, 'अश्वो न भवति' इति ज्ञानस्य प्रतियोग्यपेक्षत्वात् । गोरूपालम्बनत्वे च सिंहादौ 'अश्वोऽयं न भवति' इति प्रत्ययो न स्यात्, गोरूपस्य तत्राभावात् । अथ योऽश्वाद्भेदो गवादिष्वनुस्यूतः, सोऽस्यालम्बनमित्युच्यते । कोऽयं भेदो नाम, यदीतरेतराभावः, समाश्रितस्तर्ह्यभावः । अथ पृथक्त्वं नाम गुणविशेषो भेद इत्युच्यते, ततस्तस्य द्रव्यगतत्वात् गुणेषु रूपादिषु 'रसो न भवति रूपं' 'रूपं न भवति रसः' इतीतरेतराभावप्रत्ययो न स्यात् । **यस्तु** वैयाख्यात् 'भूतलप्रतीतिव्यतिरेकेण घटो नास्तीत्येवंविधा प्रतीतिरेव नास्ति' इति वदति, स भूतलादिप्रतीतिमप्यपह्नुवीत, अविशेषात् । 'घटोऽत्र भूतले नास्ति' इति व्यवहारस्य किं कारणम् । दृश्ये घटे यत् भूतलमात्रविषयं ज्ञानं तदस्य कारणमिति चेत्, तथा सति पटवद्भूतलोपलम्भे घटो नास्तीति व्यवहारो न स्यात्, भूतलमात्रोपलम्भाभावात् । घटविविक्तभूतलोपलम्भ इति चेत्, कोऽयं घटविवेकः, यदि भूतलरूपमेव, घटवत्यपि प्रसङ्गः । घटसंयोगाभावश्चेत्, अङ्गीकृतस्तर्ह्यभावः । **स्यान्मतं,** यदभाववादिनः अभावज्ञानस्य कारणं तदेवास्माकं व्यवहारकारणं भवत्विति । **नैवं** वक्तुं शक्यम् । मम हि दृश्यादर्शनमभावज्ञानकारणं, अदर्शनं च दर्शनाभावः, न चासौ भवता अङ्गीकृतः, अभावाभ्युपगमप्रसङ्गात् । प्रमाणाभावाङ्गीकारे वा किमपराद्धं प्रमेयाभावेन । **ननु** प्रथमं प्रत्यक्षेण भूतलं गृहीत्वा पश्चादभावो बोद्धव्यः, तत्राभावज्ञानात् प्राक् यादृशं भूतलज्ञानं, तादृशादेव व्यवहारो भवतु । **तदिदमुक्तोत्तरम्** । तथाहि, यस्यामवस्थायां भूतलस्वरूपज्ञानं घटतदभावयोश्चाज्ञानं ज्ञानाभावः, तेन घटतदभावज्ञानशून्यं भूतलज्ञानं तस्यामवस्थायामस्माभिरुपेयते, तदेव च भूतलमात्रवेदनमित्युच्यते । 'स्वरूपमात्रं दृष्ट्वा च' इत्यादिषु मात्रशब्देन हि घटतदभाववेदनयोरभाव उच्यते, भूतलमात्रं ज्ञायते, न घटस्तदभावो वेत्यर्थः । तेन यदि भवानपि घटादिज्ञानाभावयुक्तं भूतलज्ञानमङ्गीकुर्यात्, ततो ज्ञानाभावाङ्गीकाराद्घटाभावोऽप्यङ्गीकर्तव्य इत्युक्तमेव । तेन नैवं भ्रमितव्यम् "अभाववादिनाऽपि 'स्वरूपमात्रं दृष्ट्वा च पश्चात्किं चित्स्मरन्नपि' ( **श्लोवा.** अभावपरिच्छेदे २८ ) **इति** वदता भावज्ञानातिरेकेण तन्मात्रवेदनमङ्गीकृतं, तदेव दृश्ये प्रतियोगिनि नास्तीति व्यवहारकारणत्वान्नास्तीति शब्दस्याभिधेयमिति " तस्य हि ज्ञानाभावाभिप्रायो मात्रशब्दः । न चासौ भवतोऽस्ति, अतो मात्रशब्दस्यार्थाभावात् भूतलवेदनमेव कारणमिति वक्तव्यम् । ततश्च घटवत्यपि प्रसङ्ग इति स्थितं दूषणम् । **अथ** 'भावे देशान्त-

रस्थे देशान्तरग्रहणं कारणं' इति मतं, ततः शाबलेयस्थितं गोत्वं धावलेये नास्तीति व्यवह्रियेत, स्थूणान्तरस्थितश्च वंशः स्थूणान्तरेऽनुस्यूतोऽपि तत्र नास्तीति व्यवहर्तव्यः स्यात्, अतोऽत्राभाव एव नास्तीति व्यवहारकारणं, नान्यत्र सद्भावः। **स्मर्यमाणे** घटे भूतलवेदनं नास्तीति व्यवहारकारणमितिचेत्। न। गृह्यमाणस्यापि पार्श्वदेशेष्वभावव्यवहारात्। संप्रत्यानीतस्य च घटस्य गृह्यमाणस्यैव 'प्रागयमिह नासीत्' इति प्राक्कालीनाभावव्यवहारात्। **ननु** भवन्मते प्रमीयमाणस्य घटस्य कथं प्राक्कालीनाभावज्ञानं, भावप्रमाणाभावो ह्यभावज्ञानकारणम्। न च प्रमीयमाणे प्रमाणाभावः संभवति। संप्रति प्रमीयमाणोऽपि घटः प्राक्कालसंबन्धितया न प्रमीयते, अतः प्राक्कालसंबन्धगोचरप्रमाणानुदयात् तत्कालीनाभावज्ञानं युक्तमेवेति **चेत्**। **न**। अयोग्यत्वात्। नहि प्राक्कालसंबन्धोऽधुना प्रमातुं योग्यः, योग्यप्रमाणाभावश्चाभावज्ञानकारणं, न प्रमाणाभावमात्रम्। प्राक्काले तु योग्यस्यैव प्रमाणस्यानुदयः आसीत्, नहि तदानीं घटाभावः सन्नपि प्रमितः, प्रतियोगिनो घटस्यापरामर्शात् तदपेक्षत्वाच्चाभावज्ञानस्य। अत एव घटाभावोऽधुना स्मर्यते इति न युक्तं, अप्रमितस्य स्मरणायोगात्। यश्चायं प्राक्कालीनः प्रमाणानुदयः, सोऽधुना प्रमाणोदयेन नष्टो नाभावज्ञानमुत्पादयितुमर्हति, उद्धृतमिव नेत्रं रूपबुद्धिम्। **अथ** नष्टोऽपि प्रमाणानुदयः संप्रति परामृश्यमानोऽभावज्ञानं जनयेत्, ह्यस्तनः इव धूमो विनष्टोऽपि संप्रति स्मर्यमाणो ह्यस्तनाग्निज्ञानम्। **स्यादेवं** यदि प्रमाणाभावो ज्ञायमानतया मेयाभावं बोधयेत् लिङ्गमिव लिङ्गिनम्। न च तथा संभवति अनवस्थाप्रसङ्गात्। प्रमेयाभावं हि ज्ञातुं प्रमाणाभावो ज्ञातव्यः। सोऽपि चाभावत्वात् अन्येनाभावज्ञानेन ज्ञातव्यः, सोऽप्यन्येनेति न जन्मसहस्रेणापि घटाभावोऽवधार्येत। तस्मात् सत्तामात्रेणैव प्रमाणाभावोऽभावज्ञानमुत्पादयति नेत्रादिवदित्यङ्गीकर्तव्यं, अतः प्रमीयमाणस्य घटस्य कथं प्राक्कालीनाभावप्रमितिरिति वक्तव्यम्। **उच्यते**—सत्तामात्रेण ज्ञानाभावो ज्ञेयाभावं बोधयतीति सम्यगुक्तं, अस्त्येव त्वधुना दृश्यमानस्यापि घटस्य प्राक्कालसंबन्धगोचरयोग्यज्ञानानुदयः, स हि प्राक्कालसंबन्धितया स्मर्तुं योग्यः सन्नपि न स्मर्यते। न चावश्यं प्रमाणाभाव एवाभावस्य बोधकः, स्मरणज्ञानस्यापि योग्यत्वे सति अनुदयः अभावं बोधयत्येव। तेन संप्रति दृश्यमानोऽपि घटो यदि प्रागप्यासीत् ततोऽवश्यं तत्र स्थितेन प्रमितः स्यात्, प्रमितश्चाधुना स्मर्तव्यः स्यात्, एवं सत्यपि न स्मर्यते, सोऽयं स्मर्तव्यविषयस्मरणानुदयः संप्रति विद्यमानः, संप्रतितनं प्राक्कालीनाभावविषयं विज्ञानं जनयतीति न किं चिदनुपपन्नम्। **भाष्ये** च प्रमाणाभावशब्दः स्मरणाभावस्याप्युपलक्षणार्थः। तथा **वार्तिके**ऽपि। यद्वा प्रमाणस्य स्मरणफलत्वात्तदभावोऽपि फलतः प्रमाणाभाव एवेति शक्यते वक्तुम्। **ननु** न सत्तामात्रेण योग्यानुपलब्धेरभावबोधकत्वं युक्तं, सत्यामपि तस्यां कदा चिद्भावबुद्ध्यनुदयात्, असत्यामपि कदा चिदुदयात्। तथाहि, योऽङ्गुलीयकबुभुत्सया ससन्तमसापवरकदेशं हस्ताभ्यां सर्वतः परामृष्टवान्, तस्य तावत् सर्वदेशपरामर्शात् वस्तुतो योग्यानुपलब्धिर्जातैव, अथ च किं सर्वो देशः परामृष्टः, किं वा कश्चिद्देशो न परामृष्टोऽपि स्यादिति संदिहानो योग्यानुपलब्धेरनिश्चयात् सत्यामपि तस्यां नाङ्गुलीयकस्याभावमवधारयति। कदा चित्तु सर्वतः अपरामृश्यापि सर्वतः परामृष्टमिति भ्रान्त्या योग्यानुपलब्धिं निश्चित्य असत्यामेव तस्यां भ्रान्त्या अङ्गुलीयकस्याभावमवधारयति। तस्माज्ज्ञाततयैव योग्यानुपलब्धिः अभावज्ञानकारणमित्यभ्युपगन्तव्यम्। तथा चानवस्थाप्रसङ्गः। तस्मात् स्वसंवेद्या तन्मात्रसंविदेव दृश्यस्य प्रतियोगिनः अभावो न तत्त्वान्तरम्। (**सिद्धान्ती** आह— ) **ननु** चाभावानङ्गीकारे तन्मात्रधीरपि न कदा चिन्निरूपयितुं शक्यते। न च भूतलधीरेव तन्मात्रधीः, संसृष्टधियोऽपि तन्मात्रताऽऽपातात्, तत्रापि भूतलावभासात्। अतो घट्यादिवेदनाभावे सति या भूतलधीः, सा तन्मात्रधीः। एवं च ज्ञानाभावाङ्गीकारादभावापह्नवोऽनर्थकः। कथं तर्ह्येतन्निरूपयितव्यं, तदभिधीयते। घटाद्यभावोऽस्ति प्रमेयम्। योग्यप्रमाणानुदयश्च तस्य सत्तामात्रेणैव नेत्रादिवद्बोधकः, न ज्ञाततया, यतोऽनवस्था स्यात्। यत्तु सत्यामपि योग्यानुपलब्धौ अभावानवधारणं, असत्यां चावधारणमिति, तत्तु योग्यत्वाज्ञानकृतम्। योग्यानुपलम्भो हि कारणं, तत्र

योग्यत्वं ज्ञाततयैव कारणं, न सत्तामात्रेण, ततः सदेव योग्यत्वं कदा चिदज्ञातं नाभावमवधारयति, कदा चित्तु अविद्यमानमेव योग्यत्वं भ्रान्त्या निश्चित्य अभावमवधारयति। उपलब्ध्यभावस्तु सन्मात्रतया कारणं न ज्ञाततया, तेन नानवस्थाऽऽपत्तिरिति सर्वमवदातम्। अतोऽस्त्यभावाख्यं प्रमेयम्। न च तदैन्द्रियकं, इन्द्रियव्यापाराभावेऽपि तज्ज्ञानोत्पत्तिदर्शनात्। योऽहनि प्रातःकाले गृहे अवस्थितो मध्यंदिनसमये पृच्छ्यते 'किमस्मिन् गृहे प्रातःकाले माथुरः कश्चित् पुरुषः शुक्लवासा दीर्घतमो लोहितवर्णः समागतः' इति, स तदानीमेव योग्यस्मरणानुदयात् तस्याभावं प्रातःकालीनमवधारयति विनैवेन्द्रियव्यापारेण। **न च** प्रातरवगतोऽभावस्तदा स्मर्यते इति **वाच्यम्**। प्रतियोगिनो माथुरस्य तदानीं कथं चिदपि बुद्धौ अनारोहात्, अबुद्धिस्थे च प्रतियोगिनि भावे तदभावज्ञानासंभवात्। एवं च यत्रापि इदानीमेवानुपरतेन्द्रियव्यापारेणैव संनिहितदेशकालवर्त्यभावः प्रतीयते, तत्रापि योग्यज्ञानानुदयस्यैव क्लृप्तसामर्थ्यस्य कारणत्वसंभवान्नेन्द्रियस्य कारणत्वं कल्पयितुं शक्यम्। तस्मान्न प्रत्यक्षः अभावः। नाप्यनुमेयः, अज्ञातेन तेन कस्य चिल्लिङ्गस्य संबन्धग्रहणासंभवात्। **यदत्र** कैश्चिदुच्यते 'दृश्यस्य सत्ता दर्शनव्याप्ता, तेन व्यापकीभूतदर्शननिवृत्त्या व्याप्यस्य दृश्यस्य निवृत्तिरवसीयते' इति, **तन्निरस्तम्**। व्यापकनिवृत्त्या व्याप्यनिवृत्तिमनुमिमानेन, अवश्यं दृष्टान्तधर्मिषु निवृत्तिद्वयमवगम्य तयोश्च नियममवधार्य साध्यधर्मिणि पक्षे च साधनभूतां दर्शननिवृत्तिं केन चित्प्रमाणेनावगतस्य ततो दृश्यनिवृत्तिरनुमातव्या, निवृत्तेश्च अभावात्मिकाया न प्रत्यक्षेण ग्रहणं संभवति, निवृत्त्यन्तरेण तदनुमाने, तदपि निवृत्तिरूपत्वान्निवृत्त्यन्तरेणानुमातव्यं, तदपि तथेत्यनवस्थाऽऽपत्तिः। अतोऽवश्यं क्व चित् प्रमाणान्तरभूतया अनुपलब्ध्या अभावः प्रत्येतव्यः। प्रमिते च तस्मिन् पश्चाद्भवत्वनुमानम्। सिद्धं तावदभावस्य प्रमाणान्तरत्वम्। शब्दोपमानार्थापत्तयस्तु नाशङ्कनीया एव। **अतः सिद्धं षष्ठं प्रमाणम्।** एतावन्त्येव च प्रमाणानि। यत्त्वधिकं संभवाख्यं प्रमाणं सहस्रादिसंख्यया अवयवभूतशतादिसंख्याऽवगतिः, आढकप्रमाणेन अवयवकुडवपरिमाणावगतिः कैश्चिदिष्यते, तदविनाभावनिमित्तत्वादनुमानमेव। 'वटेवटे वैश्रवणः' इत्यादिकं चैतिह्यं प्रमाणमेव न भवति, निर्णयाभावात्। प्रामाण्येऽपि वा आगमेऽन्तर्गतत्वान्न प्रमाणान्तरम्। प्रातिभाख्यमपि प्रमाणं कैश्चिदिष्टं 'श्वस्ते भ्राता आगन्ता' इत्यादिकं, तत्तु लिङ्गाद्याभासजं, अनिश्चायकत्वादेवाप्रमाणम्। अतो यत् **काश्यपीयैः** प्रतिभागम्यमृषीणां धर्माधर्मत्वमाश्रितं तदसारम्। लोकप्रसिद्धिरपि प्रत्यक्षाद्यन्तर्गतैवेति न प्रमाणान्तरम्। अतः षडेव प्रमाणानि। तथा च भगवद्रामायणे 'राम षड् युक्तयो लोके याभिः सर्वोऽनुदृश्यते' इति। **इत्यभाववादः।** १.१.२ पृ. ८३–८७.

* **अभावप्रमाणनिरासः** ( अनुपलब्धिनिरासः )। इदानीमभावाख्यं प्रमाणं निराक्रियते। 'नास्ति' इति व्याहारव्यवहारौ प्रमाणान्तरमन्तरेण नोपपद्येते इति चेन्न, भूतलादिविशेषादेवोपपत्तेः। **ननु** च नास्तिव्यवहारस्य अस्तिव्यवहारविषयभूतं भूतलं नालम्बनं, अस्तिनास्तिव्यवहारयोरेकविषयताप्रसङ्गात्। **नैवं,** अभावाख्यं प्रमेयमस्तीति वादिनाऽपि तदभावस्य अस्तिव्यवहारविषयत्वमङ्गीकृतं, इतरथा अभावाभावस्य नास्तित्वप्रसङ्गात्। ततश्चाभावोऽपि नास्तिव्यवहारे विषयो न स्यात्। **अथ** यद्यप्यभावस्य स्वापेक्षया अस्तिव्यवहारविषयत्वं, तथापि घटापेक्षया नास्तिव्यवहारविषय इति। **एवं तर्हि** भूतलमपि स्वापेक्षया अस्तिव्यवहारविषयः, घटापेक्षया नास्तिव्यवहारविषयः इति किं तत्त्वान्तराभ्युपगमेन ? भूतलमात्रस्य विषयत्वात्। **ननु** तर्हि कः केवलपदार्थः ? यदि भूतलमेव, तर्हि घटवत्यपि प्रसङ्गः। अथ ततोऽन्यत्, अङ्गीकृतं तर्हि तत्त्वान्तरम्। अथैकाकि भूतलमिति चेत्, एकाकि चासहायमिति सहायाभावाङ्गीकारप्रसङ्गः। **अथ** स्मर्यमाणेऽपि प्रतियोगिनि भूतलमेव आलम्बनं, गृह्यमाणे तु स्मरणाभावादेव न नास्तिव्यवहारः, **एवं तर्हि** देशान्तरस्थे गृह्यमाणे, देशान्तरे तदभावव्यवहारो न स्यात्। **अथ** तत्रापि देशान्तरसंबन्धिरूपस्य प्रतियोगित्वात् तत्संबन्धितया स्मरणासंभवात् नास्तिव्यवहारो न स्यात्। **अथ** जिज्ञासिते प्रतियोगिनि भूतलमालम्बनं,

सघटे तु प्रतियोगिनो ज्ञातत्वान्न जिज्ञासेति । **नैवं,** प्रिये पुत्रादौ ज्ञातेऽपि पुनर्ज्ञानेच्छासंभवात् व्यवहारप्रसङ्गात् । जिज्ञासायाश्च विलक्षणव्यवहारहेतुत्वं विलक्षणार्थज्ञानहेतुतया दृष्टं, अतो घटजिज्ञासायां नास्तिव्यवहारहेतुत्वं भूतलातिरिक्तघटाभावपरिच्छेदेनैव भवतीत्यङ्गीकृतं तत्त्वान्तरम् । **अथ** तदतिरिक्तसामग्रीविशिष्टं भूतलमालम्बनं, सघटे तु तदभावान्न प्रसङ्ग इति । **किमिदं** तदतिरिक्तत्वम् ? यदि ततोऽन्यत्वं, तर्हि संसृष्टावस्थायामपि तत्संभवात् नास्तिव्यवहारप्रसङ्गः । यदि तदभावः, स्वीकृतमेव तर्हि तत्त्वान्तरत्वम् । अतोऽपि एतत् भूतलमात्रविज्ञानं न कारणं, अपि तु भूतलबुद्धिविशेषः । स च संसृष्टबुद्धेर्विलक्षण एव । न चाप्यभावज्ञानं, अभाववादिभिरभावज्ञानकारणत्वेन विलक्षणबुद्धेरङ्गीकारात् , अतो यस्याभावज्ञानोत्पादकत्वमङ्गीकृतं, तेनैव व्यवहारोऽस्त्विति । **नैवं,** अभावज्ञानोत्पादकस्य ज्ञानस्य न भूतलातिरिक्तविषयत्वं, भूतलमात्रविषयत्वेऽपि न संसृष्टावस्थायामभावज्ञानजनकत्वं, सहकारिवैकल्यात् । घटानुपलब्धिस्तु सहकारिणी, तेन अनुपलब्धिविशिष्टं भूतलमात्रज्ञानमभावज्ञानोत्पादकम् । **एवं तर्हि** तदेव व्यवहारकारणमस्त्विति चेत्, **नैवं,** विषयवैलक्ष्ण्याभावात् । तथाहि , भूतलमात्रस्यैवानुपलब्धिसहकारिसमवधानात् ज्ञानान्तरोत्पादकत्वमुपपद्यते , यथैकस्यैव घटस्य चक्षुःस्पर्शनभेदात् ज्ञानभेदः । अतः संसृष्टबुद्धिविलक्षणबुद्ध्युत्पादात् अभावज्ञानहेतुत्वमुपपद्यते । तव तु भूतलमात्रज्ञानात् अनुपलब्धिसहकृतात् विलक्षणव्यवहारो नोपपद्यते, विलक्षणव्यवहारस्य विलक्षणविषयकृतत्वेन दृष्टत्वात्, यथा घटपटव्यवहारयोः । अतः अभावज्ञानकारणेनैवाभावव्यवहारः इति न प्रतिबन्दिसिद्धिः । **अत्रोच्यते** । नास्तिव्यवहारस्य नास्तिज्ञानकारणकत्वेऽपि नास्तिज्ञानस्य कारणत्वेन तन्मात्रबुद्धिः अभाववादिनाऽप्यङ्गीकृता, सा च संसृष्टज्ञानादभावविशिष्टज्ञानाच्च विलक्षणत्वेनाङ्गीकृता । तदुक्तं 'गृहीत्वा वस्तुसद्भावं स्मृत्वा च प्रतियोगिनम् । मानसं नास्तिताज्ञानं जायतेऽक्षानपेक्षया ॥' इति । अतो वस्तुसद्भावग्रहणरूपतन्मात्रबुद्धिस्वसंवेदनादेव विलक्षणव्यवहारोपपत्तिः, अतो न घटवत्यपि प्रसङ्गः, तत्र विलक्षणतन्मात्रबुद्धेरभावात् । **यद्यपि** कारणभेदान् भेदः तथापि विषयकृत एव भेदो व्यवहारहेतुरिति चेत्, **सत्यं** विलक्षणतन्मात्रबुद्ध्यङ्गीकारादेव तद्विषयस्यापि वैलक्षण्यं अवश्यमङ्गीकार्यं, विषयविषयिभावस्य भेदात् । अतो विलक्षणव्यवहारः उपपद्यते । यथा विलक्षणतन्मात्रबोधात् विलक्षणाभावज्ञानोत्पत्तिः, तथा विलक्षणव्यवहारोऽस्माकमिति न दोषः । **यत्तूक्तं,** कारणभेदमात्रेण ज्ञानभेदे न विलक्षणव्यवहारो दृष्टः, यथा चाक्षुषस्पार्शनयोरेकविषययोः इति । **तदतिमन्दं**, चाक्षुषपटज्ञानात् 'शुक्लः पटः' इत्यपि व्यवहर्तुं शक्यते, स्पार्शनात्तु 'मृदुः पटः' इति, अतस्तत्रापि विलक्षणव्यवहार इति । किंच विलक्षणव्यवहारो विलक्षणार्थपरिच्छेदादित्यपि मन्दं, 'घटाभावो नास्ति,' 'घटो नास्ति' इति विलक्षणव्यवहारयोरभावमात्रपरिच्छेदनिबन्धनत्वेन अनैकान्तिकत्वात् । अथ तत्रार्थैक्यात् व्यवहारवैलक्षण्यमेव नास्तीत्युच्यते, एवं तर्हि 'भूतलमस्ति' 'घटो नास्ति' इति व्यवहारयोरप्यर्थैक्यात् वैलक्षण्यं न स्यात् । **ननु** अस्माकं प्रतियोगिजिज्ञासायां तन्मात्रधियो विशेषः, जिज्ञासायाश्च विलक्षणव्यवहारहेतुत्वं विलक्षणार्थपरिच्छेदादेव, अतो विलक्षणाभावज्ञानाङ्गीकारप्रसङ्गः । **नैवं,** जिज्ञासाया न व्यवहारहेतुत्वं , किंतु तन्मात्रबुद्धिविशेषः एव व्यवहारहेतुः । केचित्तन्मात्रबुद्धिविशेषाः प्रतियोगिजिज्ञासाऽनन्तरभाविनः, केचिच्च नेति । ये च प्रतियोगिजिज्ञासानन्तरभाविनो विशेषाः, ते व्यवहारहेतवः । प्रतियोगिजिज्ञासा चात्रोपलक्षणकोटिनिविष्टा , न व्यवहारकारणम् । भवतामपि प्रतियोगिजिज्ञासायाः अभावज्ञानहेतुत्वं नास्ति, किंतु तत्कारणभूततन्मात्रबुद्धौ उपलक्षणत्वमेव, वस्तुसद्भावग्रहणं प्रतियोगिस्मरणं च कारणमित्युक्तत्वात् । **यत्तूक्तं,** 'प्रिये ज्ञातेऽपि पुनर्ज्ञानेच्छा संभवति, अत उपलक्षणत्वेऽपि व्यभिचारः' इति, तद्भवतामपि समानम् । तथाप्युच्यते । न प्रतियोगिजिज्ञासामात्रमुपलक्षणं, किंतु अन्यत्र ज्ञायमाने प्रतियोगिनि जिज्ञासेति विशेषितव्यं, अतो न कश्चिद्दोष इति । **ननु** भवतां तन्मात्रबुद्धेः किं कारणं ? न चैकं नियतमुपलभ्यते , क्व चित् मुद्गरप्रहारः, क्व चित् विभक्तो घटः , क्व चित् कपालमाला , क्व चित्

चूर्णीभूतोऽवयवः, क चिच्च देशान्तरस्थितिः, अतः अनियतहेतुकत्वादहेतुकमेव तन्मात्रज्ञानं, अस्मन्मते तु अभावः अभावज्ञानकारणमिति। **मैवं**, भवतामप्येकत्र प्रागभावः, अन्यत्र प्रध्वंसाभावः, अपरत्रेतरेतराभावः अभावज्ञानहेतुरित्यनियतहेतुत्वमपि सममेव। **अथ** घटप्रतियोगिकाभावत्वेनैकत्वेऽपि अवान्तरभेदं कल्पयित्वा कारणभेदः समर्थ्यते, **तर्हि** अस्माकमपि घटतन्मात्रबुद्धिरूपेणैकत्वेऽपि अवान्तरभेदः कल्प्यताम्। **अथ** न जातिभेदः, अभावानामेव कारणभूतानां भावविरोधित्वेनैकत्वमेव, **तर्हि** भावानामप्यनेकेषां अभावविरोधित्वेनैकत्वेन अभावविज्ञानं न संभवति। योग्यानुपलब्धिर्हि कारणत्वेनाभिमता, तस्याश्च सत्तया कारणत्वं, ज्ञायमानतया वा? न तावज्ज्ञायमानतया, तस्या अप्यभावत्वेन अनुपलब्ध्यन्तरग्रहणप्रसङ्गेन अनवस्थाप्रसङ्गात्। न च सत्तया हेतुत्वं, तदभावेऽप्यभावज्ञानदर्शनात्। उपलभ्यमानेऽपि देवदत्ते, 'प्राक् नासीदयमिह' इति दर्शनानुपलम्भादेवानुपलम्भो निरस्तः। **ननु** प्रत्यक्षोपलम्भात् प्रत्यक्षानुपलब्धिमात्रस्यैव निरासः नानुपलब्धिमात्रस्य, अतस्तत्र तत्स्मृत्यनुपलम्भस्य संभवादभावज्ञानमिति, **नैवं**, तस्याप्यभावेऽपि अभावज्ञानदर्शनात्। तथाहि, 'मध्यंदिने दृष्टो देवदत्तः प्रातर्नास्त्येवायमिह' इति सायं बुध्या तत्र तदा मध्यंदिनस्मृत्या स्मृत्यनुपलम्भो निरस्तः। सायं ग्रहणेनैव ग्रहणानुपलम्भोऽपि निरस्त एव। अतः अनुपलब्धिमात्रस्यैव व्यभिचारान्न सत्तया हेतुत्वम्। **अथ** उपलम्भात् तत्कालीनानुपलम्भबाधः, न प्रातरनुपलम्भस्य, अतः प्रातरनुपलब्ध्या प्राङ् नासीदिति नास्तित्वं गृह्यते। **तन्न**, उपलम्भकत्वेन तत्प्रागभावरूपानुपलम्भोऽप्येक एव, अत उपलम्भे जाते अनुपलम्भमात्रस्य नाशः। प्रातर्वर्तित्वोपाधिरपि प्रातर्नाशादेव नष्टः। अतो यावदुपलम्भक्षणं प्रसक्तः प्रागभावः उपलम्भादेव नश्यति। इतरथा प्रध्वंसेऽपि मुद्गरप्रहारकालीन एव घटो नष्ट इति पूर्वकालीनो घटोऽनुवर्तेत, न चैतद् दृष्टमिष्टं वा। **ननु** यद्यपि उपलम्भोदयादनुपलम्भनिरासः, तथापि प्रातरुत्पत्तियोग्योपलम्भस्यापि अनुत्पन्नत्वात् अनुपलम्भो वर्तते, ततः अभावग्रहणमस्त्विति। **नैवं**, नित्यतुच्छत्वात् तस्योपलम्भस्य तत्प्रतियोगिकोऽप्यनुपलम्भो नास्ति। तथाहि, न च तस्य प्रातरुत्पत्तिः, न च पूर्वं, न च पश्चात्, इत्युपलम्भजातीयत्वेनैव तस्य नास्ति। अतः अनुपलम्भस्य सत्तया कारणत्वमपि दूरोत्सारितमेव। अतः अभावाख्यं प्रमाणान्तरं नास्तीति सिद्धम्। **प्रवि. पृ. ५७–६१.**

**अभावादतिरात्रेषु गृह्यते। १०।५।१३।५३ ॥**

अङ्गिरसां द्विरात्रे 'वैखानसं पूर्वेद्युः साम भवति, षोडश्युत्तरे' इति श्रूयते। तत्र षोडशिनो विधानं, उत प्राप्तस्य परिसंख्यानं इति विचारे षोडशिनः चोदकेन प्राप्तेः अभावात् 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति वचनेन सर्वेषु अतिरात्रेषु षोडशी गृह्यते। तस्मात् अप्राप्तस्य विधानं इति पूर्वः पक्षः। **अथवा** यदेतत् प्राकृतं अतिरात्रेषु षोडशिग्रहणं वैकल्पिकं, तत् विकल्पेनैव सर्वद्विरात्रेषु प्राप्तं नियम्येत 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति। तस्य उपसंहारे कृते अन्यद्विरात्रेषु अभावात् अङ्गिरसां द्विरात्रे नियतो गृह्यते 'षोडश्युत्तरे' इति उक्तत्वात्। इति पूर्वः पक्षः।

**अन्वयो वाऽनारभ्यविधानात्। ५४ ॥**

वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः। सर्वद्विरात्रेषु उत्तरेषु अहःसु षोडशिग्रहस्य अन्वयः स्यात् 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इति अनारभ्यविधानात्। 'वैखानसं पूर्वेद्युः साम भवति, षोडश्युत्तरे' इति परिसंख्यार्थं वचनम्। 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनारभ्यविधानेन प्राप्ते उपसंहारः क्रियते। यदेतत् द्विरात्रस्य उत्तरे गृह्यते, एतत् अङ्गिरसां द्विरात्रस्य उत्तरे गृह्यते नान्यत्र इति। **अथवा**। सर्वद्विरात्रेषु उत्तरेषामह्नां षोडशिना अन्वयः 'उत्तरेऽहन् द्विरात्रस्य गृह्यते' इत्यनारभ्यविधानात्। 'षोडश्युत्तरे' इति नैवैतत् विधानं षोडशिनः। किं तर्हि? वैखानसं साम पूर्वेद्युर्भवति इति विधीयते, उत्तरे षोडशी इत्यनूद्यते अनारभ्यविधानेन प्राप्तत्वात्। तस्मात् प्राप्तस्य षोडशिनो ग्रहणम्। इति सिद्धान्तः।

**अत्र पूर्वापूर्वा व्याख्या वृत्तिकारमतेन, द्वितीयाद्वितीया तु भाष्यकारमतेन। के.**

* **अभिक्रमणं** नाम प्रयाजहोमकाले आहवनीयमभितः संचरणम् ( वस्तुतस्तु द्वितीयादिप्रयाजहोमकाले किं चित् किं चित् आहवनीयसमीपे स्पन्दनमभिक्रमणम् । **के.** ) **वि.** ३।१।१०. * अभिक्रमणं प्रयाजेष्वेव निविशते न सर्वस्मिन् दर्शपूर्णमासप्रकरणे । **भा.** ३।१।१० १९–२०.

**अभिक्रमणाधिकरणम्** । दर्शपूर्णमासयोः अभिक्रमणस्य प्रयाजेष्वेव निवेशः ।

**कर्तृगुणे तु कर्मासमवायाद् वाक्यभेदः स्यात् । ३।१।१०।१९॥**

**भाष्यं**— दर्शपूर्णमासयोः प्रयाजवाक्ये श्रूयते ' अभिक्रामं जुहोति अभिजित्यै ' इति । तत्र संदेहः किं अभिक्रमणं प्रयाजेष्वेव निविशते, उत कृत्स्ने प्रकरणे इति । किं तावत् प्राप्तं ? कर्तृगुणे अभिक्रमणे ब्रूमो वाक्यभेदः स्यादिति, कर्मणा कर्मणः असमवायात् । अभिक्रमणं कर्म अमूर्तम् । न तत् कर्म हवनं साधयितुं शक्नोति । तस्मान्न तेन एकवाक्यतां याति । अतः सर्वस्मिन् प्रकरणे निविशते । संयोगतोऽविशेषात् प्रकरणाविशेषाच्च ( ३।१।४।८ ) । ननु अनेनैव हेतुना अन्यस्मिन्नपि न निवेक्ष्यते । उच्यते । अन्यत्र पुरुषैः संभन्त्स्यते । ननु प्रयाजेष्वपि पुरुषैः संबध्येत । नैतदेवम् । जुहोति इति हवने एष शब्दः पुरुषप्रयत्नं विधातुं शक्नोति, न पुरुषाभिक्रमणसंबन्धम् । ननु अन्यत्रापि पुरुषाभिक्रमणसंबन्धस्य अविधानम् । नैष दोषः । अन्यत्र प्रकरणाम्नानात् अङ्गभावे निर्ज्ञाते प्रयोगवचनः अस्य कर्तव्यतां वक्ष्यति । तस्मात् सर्वस्मिन् प्रकरणे अभिक्रमणस्य निवेश इति ।

**वा**— एवं संस्कारद्रव्यगुणा विचारिताः । इदानीं यत् कर्मैव कर्मसंबन्धित्वेन श्रूयमाणं अर्थात् संस्कारत्वं प्रतिपत्स्यते तत् विचार्यते । तत्र अभिक्रामं इति णमुला वीप्सार्थोपादानात् अभिक्रम्याभिक्रम्य किमभिकरोति इत्यपेक्षिते परश्च जुहोतिः प्रकृतप्रयाजग्राही दृश्यते । तत् किं अभिक्रमणं तेनैव संबध्यते, उत प्रकृतमात्रेणेति । संबन्धश्रवणे च सति संशयाक्षेपपरिहारौ अरुणाऽधिकरणवत् ( ३।१।६।१२ ) द्रष्टव्यौ, कर्मणः अमूर्तत्वात् वाक्येन च स्वसंबन्धोपादानात् । अनेनैव विशेषेण पुनरारम्भः । यत्तत्र समानाधिकरणं द्रव्यमुपात्तं, तद्विषयनियमे च तत्साध्यक्रियासंबन्धस्य उपपत्तित्वम् । इह तु तस्यैव साध्यत्वम् । अपेक्षितश्च गुणः परिच्छेदकत्वेन विज्ञातक्रियासंबन्धप्रकारः । न तु अत्र अभिक्रिया । नानाभूतानि च तत्र क्रियान्तरद्रव्याणि, अत्र पुनः सर्वकर्मसु स एवाध्वर्युः कर्ता इत्यपुनरुक्तता । किं तावत् प्राप्तं ? सर्वार्थमिति । कुतः ? ' **कर्मणः कर्मसाध्यत्वं नामूर्तत्वात् प्रतीयते । तस्माज्जुहोतिसंबन्धं परित्यज्य विधीयते** ॥ ' न तावत् अभिक्रमणेन होमं करोति इति वक्तुं शक्यम् । अतो न प्रयाजैः संबध्यते । ततश्च अरुणाऽधिकरणपूर्वपक्षवत् वाक्यभेदः स्यात् । ' ननु अनेनैव हेतुना ' अन्यत्रापि अनभिनिवेशः इति भाष्येण अरुणाचोद्यमेव । ( ' ननु अनेनैव हेतुना अन्यस्मिन्नपि न निवेक्ष्यते ' पृ. ७३० इति भाष्येण ' अथ यदि क्रीणातिना न संबध्यते, तस्मिन्नेव वाक्ये एकहायनीशब्देन संभन्त्स्यते , न भविष्यति वाक्यभेदः इति ' अरुणाऽधिकरणस्थं–पृ. ६८५ पं. ४–५—चोद्यमेव निवेशितम् इत्यर्थः ) । परिहारश्च आख्याते कर्तृगुणभूतत्वात् बलात् ( अभिक्रमणस्य ) होमसंबन्धापत्तेः, न जुहोतिना गृहीतेन प्रयाजादीनां कर्त्रा संबन्धः । अन्यत्र तु प्रकरणगृहीतस्य प्रधानभूतस्य कर्तुः संबन्धो न विरोत्स्यते ।

**साकाङ्क्षं त्वेकवाक्यं स्यादसमाप्तं हि पूर्वेण । २० ॥**

**भाष्यं**— नैतदस्ति यदुक्तं अभिक्रमणं प्रकरणे निविशते इति, प्रयाजेष्वेव भवितुमर्हति । कुतः ? तैः सह अस्य एकवाक्यता । यतः साकाङ्क्षमेतत् पूर्वेण पदेन असमाप्तं वाक्यं 'अभिक्रामं जुहोति' इत्यत्र पर्यवस्यति । प्रकरणाच्च वाक्यं बलवत्, इति प्रयाजेष्वेव अभिक्रमणं निविशते । **ननु** अभिक्रमणं अमूर्तत्वात् होमनिर्वृत्तौ असमर्थं इत्युक्तम् । **उच्यते** । साक्षादसमर्थं, कर्त्रा संबध्यमानं शक्ष्यति निर्वर्तयितुम् । **कथं ?** अभिक्रमणेन समासीदति आहवनीयं कर्ता । द्वयं अभ्युपायभूतं होमस्य दूराद्वा अभिप्रसार्य हस्तं जुहुयात्, समासीदेद्वा

अभिक्रमणेन । तस्मात् अभिक्रमणमुपकरोति होमस्य इत्यवगम्यते । अतः प्रयाजेष्वेव निवेश इति ।

**वा**—सर्वथा तावत् अभिक्रामं इत्येतत् पदं न क्रियान्तरमन्तरेण निराकाङ्क्षी भवति ( णमुलो धातुसंबन्धाधिकारविहितत्वात् ) । नहि एतत् द्रव्यसंबन्धं कथं चिदपि ब्रवीति । तस्मात् प्रकृतप्रयाजग्राहिणा जुहोतिना एकवाक्यत्वात् तादर्थ्यं विज्ञायते । शक्नोति च कर्तृप्रत्यासत्तिकरणेन तदुपकर्तुम् । अपेक्षिता च आहवनीयप्रत्यासत्तिः अध्वर्योः प्रयाजैः । अरुणत्ववदेव वा अर्थात् द्रव्यसंबन्धः । इति कर्तुरुपसर्जनत्वेऽपि न कश्चित् दोषः । एवं च उपकाररूपेण कर्मापि कर्मसाध्यं भवति इत्येतदपि सिद्धम् ( एवं भाष्यमनुसृत्य व्याख्यातम् । अथ स्वमतेनाह ) । **यदा** तु अतिस्थूलत्वात् नैव अभिक्रामं इत्येतत् पदमात्रविच्छेदेन पूर्वपक्षः क्रियते । कथं तर्हि ? ‘ यत् जुहोति ’ इति समस्तप्रकरणजुहोत्यनुवादेन अभिक्रमणविधानात् अवान्तरप्रकरणस्य च अभावात् महाप्रकरणविनियोगाश्रयणेन पूर्वपक्षाश्रयणं, **तदा** ‘ कर्तृगुणे तु ’ अभिक्रमणे अवान्तरप्रकरणापर्युपस्थापितप्रयाज–‘ कर्मासमवायात् ’ तत्प्रकरणैकवाक्यत्वाभावमात्रमेव ‘ वाक्यभेदः स्यात् ’ इत्युक्त्वा ‘ साकाङ्क्षं तु ’ इति अवान्तरप्रकरणमेव प्रयाजचोदनाप्रस्तुतकथंभावाकाङ्क्षासंबन्धद्वारा तदेकवाक्यत्वेन सिद्धान्तोऽभिधीयते । यदपि ‘ असमाप्तं हि पूर्वेण ’ इति, तत्र वाक्यासमाप्त्यभिप्रायेण । किं तर्हि ? ‘ असमाप्तं हि ’ अवान्तरप्रकरणं ‘ पूर्वेण ’ प्रयाजस्वरूपगुणविधिना इत्यर्थः । **‘ येनाभिक्रमणादूर्ध्वं प्रयाजानां गुणोऽपरः । विधास्यते प्रयाजानां तस्मात् प्रकरणास्थिता ॥ ’** ( यस्मात् अभिक्रमणादूर्ध्वं प्रयाजशेषाभिघारणाख्यः प्रयाजानां गुणोऽभिधास्यते तस्मात् प्रयाजानां प्रकरणं अद्यापि नावसीयते इत्यर्थः ) ।

**सु**— पूर्वपक्षस्य अतितुच्छत्वेन भाष्योक्तविचारापरितोषात् स्वयं जुहोत्येकवाक्यतामभ्युपगम्यैव इतिकर्तव्यताऽऽकाङ्क्षालक्षणत्वात् प्रकरणस्य, अङ्गानां च अकरणत्वेन इतिकर्तव्यताऽनाकाङ्क्षत्वात् प्रयाजादीनां अवान्तरप्रकरणानुपपत्तेः महाप्रकरणेन अभिक्रमणस्य सर्वार्थत्वं पूर्वपक्षयित्वा अङ्गानामपि करणानुग्रहभावनायां करणत्वात् इतिकर्तव्यताऽऽकाङ्क्षोपपत्तेः अवान्तरप्रकरणसंभवात्; तस्य च महाप्रकरणात् बलीयस्त्वात् बलाबलाधिकरणे वक्ष्यमाणत्वात्, अवान्तरप्रकरणेन प्रयाजार्थत्वसिद्धान्तः अस्मिन्नधिकरणे वर्ण्यते ।

**शा**—पूर्वः पक्षः **‘ क्रियया कारकस्यैव नान्यस्यास्त्येकवाक्यता । न चाभिक्रमणं मूर्तिवर्जितं कारकं भवेत् ॥ ’** सिद्धान्तस्तु **‘ अनुपात्तोऽपि सद्भावमात्रेण द्वारतां व्रजेत् । कर्ताऽभिक्रमणं तेन भवेद्धोमस्य साधनम् ॥ ’** वार्तिकमतेन तु पूर्वः पक्षः **‘ फलवद्भावनोद्भूतकथंभावतिरोहिताः । नैवाङ्गानां कथंभावाः प्रादुःषन्ति तमन्तरा ॥ प्रादुःष्युर्यदि चाङ्गानां कथंभावास्ततो मिथः । तेषामङ्गाङ्गिताऽऽपत्तेरव्यवस्था प्रसज्यते ॥ ’** अत्राभिधीयते **‘ भवेदेवं प्रयाजानां नास्ति प्रकरणं यदि । तेषां वचनसंयुक्ता ये गुणा विहिताः पुरा ॥ पश्चाच्च ये विधास्यन्ते तैः संदष्टमिदं श्रुतम् । अभिक्रामं जुहोतीति न ततोऽन्यत्र गच्छति ॥ न विद्यते तु संदंशो यत्र वाचनिकैर्गुणैः । तत्राङ्गानां कथंभावः सन्नप्यविनियोजकः ॥ निष्फलत्वेन सर्वेषां न विशेषोऽवगम्यते । कः शेषः कस्य शेषित्वमतः सर्वं प्रधानगम् ॥ अव्यवस्थाप्रसक्तिश्च योक्ता सैवं निराकृता । संदंशे सति संदष्टं तदङ्गमितरत् पुनः ॥ सर्वं प्रधानगामीति नाव्यवस्था प्रसज्यते ॥ ’** ( अथ प्राभाकरमतनिरासार्थमाह– ) **‘ यस्त्वाह साधिकाराणामितिकर्तव्यता स्थिता । नान्येषामिति तस्यापि प्रतिज्ञामात्रमेव तत् । अविज्ञातप्रकारत्वादुभयेषां हि सा भवेत् ॥ ’** अभिक्रमणं तु संदंशपतितत्वात् अवान्तरप्रकरणोद्भूतेः प्रयाजाङ्गम् ।

**सोम**— अभिक्रमणक्रियायाः साक्षात् होमार्थत्वासंभवेन पूर्वन्यायेन कर्तृरूपाङ्गावतारे तद्विशेषविचारात् संगतिः । **सूत्रार्थस्तु**— अभिक्रमणे होमरूपकर्मसमवायानर्हत्वात् कर्तृगुणे सति वाक्यभेदः स्यात् जुहोतिविच्छेदः स्यात् । इति भाष्यकारपक्षे । आचार्यपक्षे तु, कर्तृगुणे अभिक्रमणे अङ्गानामितिकर्तव्यताऽऽकाङ्क्षा-

विरहेण प्रयाजकर्मासमवायात् वाक्यभेदः प्रयाजवाक्यानन्वयित्वं स्यात् इति ।

**सु**—आनर्थक्यापत्त्या श्रुतिक्रियाऽन्वयायोगेन तदङ्गावतारे स्थिते तद्विशेषचिन्तात्वेन उत्तराधिकरणद्वयस्य **अनन्तरसंगतिः** स्पष्टा । पृ. १०५१.

**वि**—'अभिक्रामं जुहोतीति युक्तं कर्त्राऽखिलस्य तत् । किंवा प्रयाजमात्रस्य, कृत्स्नकर्तृकृतं भवेत् ॥ प्रयाजाभिक्रमणयोः क्रियात्वादुभयोरपि । मिथः संबन्धराहित्या, न्मैवं तेऽपि समत्वतः ॥ कर्त्रयोगाददोषश्चेत् समानेयं समाहितिः । ततः प्रयाजसांनिध्यात् तत्कर्त्रैवास्य संयुतिः ॥' इदं भाष्यमतेन । अथ वार्तिककारमतेन, 'यद्वा बलित्वं सांनिध्यादस्ति प्रकरणे ततः । दर्शादिप्रक्रियाऽधीते क्रमणे स्यात्तदङ्गता ॥, अवान्तरप्रकरणं समिधो यजतीत्यतः । तन्मध्यपाठात् तस्याङ्गं तद्–द्वारा दर्शशेषता ॥' इति ।

**भाट्ट**— दर्शपूर्णमासयोः प्रयाजसमीपे श्रुतं 'अभिक्रामं जुहोति' इति । तत्र अभिक्रमणस्य अमूर्तत्वात् जुहोत्युपात्ते प्रयाजहोमे अन्वयानुपपत्तेः आरुण्यवच्च इह कर्तृरूपस्य द्रव्यस्य अनुपात्तत्वात् तद्–द्वाराऽपि अन्वयानुपपत्तेः ततो विच्छिन्नस्य प्राकरणिकसर्वहोमाङ्गत्वं तदीयकर्तुः आहवनीयप्रत्यासत्तिरूपदृष्टकार्यद्वारा । **इति प्राप्ते**, अनुपात्तस्यापि आख्यातगम्यस्य सद्भावात् तद्द्वारैव जुहोत्यन्वयोपपत्तेः प्रयाजहोमाङ्गत्वमेव इति **भाष्यकारेण** सिद्धान्तितम् । तत्तु णमुलन्तस्य अस्य पूर्वकालताऽऽदिसंबन्धेन जुहोत्यनन्वये नैराकाङ्क्ष्याभावात्, जुहोतेश्च प्रयाजहोममात्रवाचित्वे प्रमाणाभावात्, अरुणाऽधिकरणेन गतप्रायत्वाच्च **वार्तिककारेण** अन्यथा व्याख्यातम् । सत्यपि वाक्यीयहोमसंबन्धे संकोचे प्रमाणाभावात् 'वेद्यां हवींषि' इतिवत् प्राकरणिकसर्वहोमाङ्गत्वं, वाचनिकाङ्गसंदंशरूपावान्तराधिकारस्य वाक्यसंकोचकत्वानुपपत्तेः । यदि हि तादृशसंदंशमध्ये 'अभिक्रामति' इत्येव श्रूयेत, ततः अवान्तरप्रकरणेन स्यादपि प्रयाजाङ्गत्वम् । वस्तुतस्तु नाङ्गेषु इतिकर्तव्यताऽऽकाङ्क्षालक्षणं प्रकरणं फलाभावात् । अन्यथा प्रयाजाभिक्रमणादीनामपि अनूयाजाद्यङ्गत्वापत्तेः । वाचनिकाङ्गसंबन्धसिद्ध्यर्थं च कल्पिताया अकाङ्क्षायाः तन्मात्रग्राहकत्वेन अभिक्रमणग्राहकत्वानुपपत्तेः । **इति प्राप्ते,** भावनास्वाभाव्येन अङ्गभावनास्वपि क्रतूपकारभाव्यकासु इतिकर्तव्यताऽऽकाङ्क्षोपपत्तेः अङ्गानामपि अस्त्येव सा । सा परं प्रधानगतबलवत्त्वेन प्रतिबध्यते संनिध्याम्नानविषये । अतो न परस्पराङ्गत्वप्रसङ्गः । तदा तन्निवृत्तिः अतिदेशेन आक्षेपलभ्यस्वसंपादनेन साधारणैर्वा आचमनादिभिः । यत्र तु वाचनिकाङ्गसंदंशः, तत्र आद्येन आकाङ्क्षोज्जीवनं, अन्तिमेन च तन्नाशः, न तु मण्यादाविव वाचनिकाङ्गानां प्रत्येकमुत्तेजकता, तावदभावकूटप्रवेशे गौरवात्, तद्वदिह व्यभिचाराभावाच्च । अतो वाचनिकसंदंशे श्रुतानां अवान्तरप्रकरणेन बलवता अङ्गाङ्गत्वमेव । प्रकृते तु होमानुवादेन विहिते अभिक्रमणे होमस्वरूपे आनर्थक्यप्रसक्तौ अपूर्वसाधनत्वलक्षणातात्पर्यग्राहकतया वाचनिकाङ्गसंदंशरूपावान्तराधिकारः एव तत्त्वेनाश्रीयते । न तु प्रधानाधिकारः अङ्गप्रधानाधिकारो वा 'वेद्यां' इतिवत् । अस्ति चात्र 'समानयते जुह्वामौपभृतं' इत्याद्युपक्रम्य मध्ये अभिक्रमणं विधाय अन्ते 'प्रयाजशेषेण हवींष्यभिघारयति' इति श्रवणात् सः । अतः अभिक्रमणं प्रयाजहोमाङ्गमेव । न च प्रयाजेषु होमाभावः, प्रक्षेपाङ्गकस्यैव त्यागस्य वृद्धव्यवहारेण यजिपदार्थत्वावसायात् आक्षेपेण श्रूयमाणयजिमात्रे होमप्राप्त्युपपत्तेः ।

**मण्डन**— 'अभिक्रमः प्रयाजाङ्गम् ।' ९.

**शंकर**— 'प्रयाजाङ्गमभिक्रमः ।'

* **अभिक्रमणाधिकरणेन** अङ्गावतारविशेषः अभिहितः । **सु.** पृ. १०७२. * अङ्गभूतप्रयाजादिशब्दसंयुक्तमध्यपतितं तदसंयुक्तं अभिक्रमणादिकर्मापि उद्भूताकाङ्क्षाऽनुवृत्तौ विधानात् अवान्तरप्रकरणेन प्रयाजाङ्गं इति **अभिक्रमणाधिकरणे** स्थितम् । **कु.** ३।१।११। २१. * अवान्तरप्रकरणं संदंशोद्भूतिकमेव । तच्च प्रकृतेर्नास्त्येव । प्रकृत्यङ्गस्य तु प्रयाजानां अभिक्रमणाधिकरणे उक्तम् । **बाल.** पृ. ११. * वाक्यान्तरप्राप्तं च कर्म अनूद्य वाक्यान्तरेण रूपग्रहणसंभवे स्ववाक्याज्ञातरूपस्यापि कर्मणो वाक्यान्तरतो रूपलाभात् विधिनिर्वाहोपपत्तेः विध्ययोगाभिप्रायेण आघारप्रकरणनिरासायोगात् पर-

प्रकरणपाठमात्रेण तन्निरासो वाच्यः । स च अभिक्रमणाधिकरणे निराकरिष्यमाणत्वात् अयुक्तः । सु. पृ. ७७७, * **अभिक्रमणाधिकरणे** दर्शपूर्णमासपठितानामपि प्रयाजानां अवान्तरप्रकरणं व्युत्पादयिष्यते । पृ. ७६४.

* **अभिक्रामं जुहोति** अत्र जुहोतिपदोक्तं प्रयाजहोमाङ्गत्वं अभिक्रमणस्य । होमानुवादेन अभिक्रमणं विधीयते । **शा.** ३।१।१०. * 'अभिक्रामं जुहोति' अयं णमुल् विनियोक्त्री श्रुतिः सोमेश्वरमते । **बाल.** पृ. ४५. * 'अभिक्रामं जुहोति' इति यजतिचोदितानां प्रयाजादीनां जुहोतिना अनुवादः । इति पूर्वपक्षे । **भाट्ट.** ३।४। १८. * 'अभिक्रामं जुहोति' इति सामान्यशब्दोऽपि अधिकारात् प्रयाजविषयो भवति । **वा.** ३।३।१०।२१ पृ. ८७०.

* **अभिघारणं** अन्वाहार्ये स्वादिम्ने क्रियते । स्वादिमा हि परिक्रये उपकरोति । **भा.** १०।३।१०।३८, * अभिघारणं अवदानधर्मः । 'उपस्तृणाति, द्विर्हविषोऽवदाय, अभिघारयति, चतुरवत्तं जुहोति' । १०।८।१२। ३०-३१, * अभिघारणं आग्रयणदक्षिणारूपयोः वासोवत्सयोः न स्यात् । १०।३।१०।३८, * अभिघारणं उपस्तरणं च कृष्णलचरौ न कर्तव्यम् । संसर्गः स्रुचि पुरोडाशचूर्णानां सूक्ष्माणां मा भूत् इति उपस्तरणेन स्रुक् स्निग्धीक्रियते, अभिघारणेन हविः स्रुचि असंयुक्तं कृत्स्नं यथाऽग्नौ पतेदिति । न तु कृष्णलस्य स्रुचि संयोगो भवति । १०।२।२।१२, * अभिघारणं चातुर्मास्येषु त्र्यम्बकेषु एककपालेषु पुरोडाशेषु कर्तव्यमेव । 'अभिघार्या अनभिघार्या' इति मीमांसा तु स्तुत्यर्था । त्र्यम्बकहोमत्वेनापूर्वत्वात् अपूर्वमेवाभिघारणं विधीयते । १०। ८।५।८. * अभिघारणं जुह्वामाज्येनोपस्तरणं तदुपरि हविः तदुपरि पुनः आज्यम् । इदं अभिघारणं तृतीयं कर्म । **वि.** १०।८।१२. * अभिघारणं प्रदान-चिकीर्षयैव क्रियते । **भा.** ५।४।२।३, * अभिघारणं प्रयाजशेषेण आग्नेयपुरोडाशस्य पूर्वं कर्तव्यं ततः सांनाय्यस्य, प्रवृत्तिक्रमापेक्षया मुख्यक्रमस्य बलीयस्त्वात् । ५।४।२।२-४, * अभिघारणं प्रयाजशेषेण प्राजापत्यवपानां नास्ति वाजपेये । ४।१।१४।३३-३९. * अभिघारणं प्रयाजशेषेण हविषां हविःसंस्कारश्च प्रतिपत्तिश्च इति उभयुक्तो[illegible]माणोभयसंस्कारः । **के.** * **अभिघारणस्य** [illegible] च लोपेऽपि दर्शपूर्णमासयोरुपांशुयाजे हविष एव चतुरवत्तसंपत्तिः । **भा.** १०।८।१३।३३-३४.

**ॐ अभिघारणे विप्रकर्षादनुयाजवत् पात्रभेदः स्यात् । ४।१।१४।३३ ॥**

वाजपेये क्रतुपशवः प्राजापत्यपशवश्च प्रातःसवने सहैव प्रक्रम्यन्ते, दशमप्रयाजोत्तरं च प्राजापत्यपशूनामनुष्ठानं पर्यग्निकरणान्ते विरमय्य माध्यंदिने सवने ब्राह्मणाच्छंसिसामकाले पुनरुपक्रम्य आलम्भादि क्रियते । अङ्गहोमस्तु सर्वसोमोत्तरं क्रियते । क्रतुपशुभिः सहैव प्राजापत्यानामपि वपाहोमान्तमनुष्ठानमित्यपरः पक्षः । तत्र प्रथमपक्षाश्रयेण इदमधिकरणम् । प्रातःसवने तावत् पशुप्रयाजशेषेण क्रतुपशुवपानां अभिघारणं कृतम् । अथ माध्यंदिने प्राजापत्यपशुवपानामभिघारणं यदि कर्तव्यं, तदा प्रातःसवनिकप्रयाजशेषधारणं कर्तव्यं स्यात्, जुह्वाश्च अन्यत्र व्यापृतत्वात् तत्र प्रयाजशेषधारणस्य कर्तुमशक्यत्वात् पात्रान्तरं ग्राह्यं स्यात् । तत्र प्राजापत्यवपाऽभिघारणं कर्तव्यं न वा, कर्तव्यत्वे प्रयाजशेषधारणार्थं पात्रान्तरं कर्तव्यं न वा इति विचारे पूर्वपक्षमाह । प्रयाजशेषेण प्राजापत्यपशुवपानां अभिघारणे अभिघारणार्थं अभिघारणसाधनप्रयाजशेषस्य धारणार्थं पात्रभेदः स्यात् जुह्वाः प्रातःसवने एव आज्यभागाद्यर्थे रिक्तत्वात् तद्भिन्नपात्रं विना प्रयाजशेषधारणासंभवात् । तस्मात् पृथक् पात्रं ग्राह्यम् । अनुयाजवत्, चातुर्मास्येषु अनुयाजाः पृषदाज्येन यष्टव्या भवन्ति, तत्र अनुयाजीयपृषदाज्यधारणार्थं पृषदाज्यधानी यथा आज्यधान्याः सकाशात् पृथक् क्रियते तद्वत् । अनुयाजेषु इव अनुयाजवत् इति सप्तम्यन्तात् वतिः । अनुयाजशब्दश्च लक्षणया तदीयपृषदाज्यपरः पृषदाज्यधारणपर एव वा ।

**न वाऽपात्रत्वादपात्रत्वं त्वेकदेशत्वात् । ३४ ॥**

सिद्धान्तयति । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । न पात्रभेदः स्यात् । कुतः ? अपात्रत्वात् । अविद्यमानं पात्रं यस्य प्राजापत्यवपाऽभिघारणस्य तदीयप्रयाजशेषस्य च, तदपात्रम् । पात्रशून्यत्वात् न पात्रभेदः । अपात्रत्वं तु

एकदेशत्वात् अनुमीयते। प्रयाजार्थं विनियुक्तस्य जुहूस्थस्य आज्यस्य एकदेशोऽयं शेषः। स च क्रतुपशुवपानामभिघारणेन चरितार्थः। तथा च तदुत्तरं शेषस्यैवाभावात् कस्य धारणार्थं पात्रान्तरं स्यात्? अतो न पात्रभेदः कर्तव्यः।

**हेतुत्वाच्च सहप्रयोगस्य। ३५॥**

उक्तस्य अपात्रत्वस्य हेत्वन्तरमाह। चकारः सहप्रयोगहेतुत्वरूपहेतोः पूर्वोक्तैकदेशत्वहेतुना समुच्चयार्थः। इतश्च अपात्रत्वम्। सहप्रयोगस्य क्रतुपशूनां प्राजापत्यपशूनां च सहानुष्ठानस्य अभिघारणाभावहेतुत्वात्। 'तीर्थे वै प्रातःसवनं, यत् प्रातःसवने पशव आलभ्यन्ते तीर्थे एवैतानालभन्ते सयोनित्वाय, अथो वपानामभिघृतत्वाय' इति अर्थवादः प्रातःसवनसंबन्धेनैव वपाऽभिघारणमनुगृह्णन् वाजपेये प्राजापत्यवपाऽभिघारणं प्रयाजशेषेण नास्तीति दर्शयति। अतश्च शेषापेक्षैव नास्ति इति किमर्थं पात्रम्।

**अभावदर्शनाच्च। ३६॥**

तत्रैव हेत्वन्तरमाह। 'सव्या वा एतर्हि वपाः, यर्हि अनभिघृताः। ब्रह्म वै ब्रह्मसाम, यत् ब्रह्मसाम्नि आलभते, तेन असव्याः, तेनाभिघृताः'। सव्या रूक्षाः। असव्याः स्निग्धाः। अनेन वचनेन ब्रह्मसाम्नैव अभिघृतत्वात् प्रयाजशेषेणाभिघारणस्याभावः सूच्यते। एवं प्रयाजशेषाभिघारणाभावस्य दर्शनात् न पात्रभेदः।

**सति सव्यवचनम्। ३७॥**

**न तस्येति चेत्। ३८॥**

'सति सव्यवचनं इति चेत्, न तस्य' इति सूत्रयोः पदानामन्वयः। तत्र चेदन्तो भागः शङ्का, न तस्येत्युत्तरम्। पूर्वपक्षी आह। ननु सत्येव अभिघारणे 'सव्या वा एतर्हि वपा' इति सव्यवचनं भवेत्। अस्ति हि वपाया अन्यदभिघारणम्। 'उपस्तृणाति आज्यं, हिरण्यशकलं, वपा, हिरण्यशकलं, ततोऽभिघारयति' इति वपाऽवदानकाले यत्पञ्चावत्तत्वमुक्तं, तत्रास्ति अभिघारणम्। अस्मिन्नभिघारणे सत्येव पुनः 'सव्या वा एतर्हि वपा' इति सव्यता रूक्षता उक्ता। तथा च तादृशसव्यतानिरासार्थं प्रयाजशेषेण अभिघारणं कर्तव्यं, कर्तव्यं च शेषधारणार्थं पात्रान्तरं इति चेत् पूर्वपक्षी ब्रूयात्।

तत्राह सिद्धान्ती न तस्येति। तस्य पूर्वपक्षिणा उक्ताभिघारणस्य न सव्यतानिराकरणसामर्थ्यं, विहितस्य वपापञ्चावत्तत्वसाधकत्वात्।

**स्यात् तस्य मुख्यत्वात्। ३९॥**

ननु वपारूक्षत्वनिराकरणसामर्थ्यं यदि अवदानगताभिघारणस्य न स्यात्, तदा प्रयाजशेषाभिघारणस्यापि न स्यात्। मैवम्। तस्य प्रयाजशेषेणाभिघारणस्य रूक्षत्वनिराकरणसामर्थ्यं स्यादेव तस्य हविःसंस्कारत्वात्, अवदानगताभिघारणस्य रूक्षत्वनिराकरणे मुख्यत्वाभावात्, प्रयाजशेषाभिघारणस्य च तत्र मुख्यत्वात्। प्रकृते तु यद्यपि प्राजापत्यवपानां रूक्षतानिरासार्थं प्रयाजशेषेणाभिघारणं कर्तव्यं, तथापि ब्रह्मसामसंबन्धेनैव रूक्षत्वनिरासस्योक्तत्वात् प्रयाजशेषेणाभिघारणं न कर्तव्यं, तदर्थं च पृथक् पात्रमपि न ग्रहीतव्यमिति। सर्वथाऽपि न पात्रभेद इति सिद्धान्तः।

अत्र 'सति सव्यवचनं' इत्यादि सूत्रत्रयं कथं योजनीयं इति दुर्ज्ञेयमेव। भाष्यं च सुबोधिनी च न मनः समाधापयति। सूत्ररचनैव तावत् उद्वेजयति। सूत्रकार एव समाधास्यति।

कुतूहलवृत्तौ तु 'सति सव्यवचनं' इति सूत्रं नास्त्येव। 'न तस्येति चेत्' इत्यस्य च चेदन्तत्वात् उत्तरसूत्रेण एकीकरणम्। तदर्थस्तु, तस्य सिद्धान्तिना उक्तस्य प्रयाजशेषाभिघारणाभावदर्शनस्य न लिङ्गत्वम्। इति चेत्। तस्य प्रयाजशेषाभिघारणस्यैव स्नेहने मुख्यत्वात् इति। के.

* **अभिघारणे विप्रकर्षादनूयाजवत् पात्रभेदः स्यात्।** इत्यधिकरणे अभिघारणं प्रयाजद्रव्यप्रतिपत्तिरूपं प्रयाजार्थं इति व्यवस्थापयिष्यते। कु. ३।१।१०।२०.

* '**अभिघार्या अनभिघार्या** इति मीमांसन्ते ब्रह्मवादिनः' इति चातुर्मास्येषु त्र्यम्बकमन्त्रसंयोगेन त्र्यम्बकनामकाः एककपालाः पुरोडाशाः बहवो विहिताः, तान् प्रकृत्य श्रूयते। अत्र इतिशब्देन मीमांसाप्रकारवाचिना विधिनिषेधयोः मीमांस्यत्वं प्रतीयते,

ततो विधिनिषेधविशिष्टा मीमांसा विधित्सितार्थस्तुत्यै । तस्मात् एकवाक्यत्वादर्थवादः । **वि.** १०।८।५. * 'द्विषन्तं भ्रातृव्यं निपत्यादत्ते **यमभिचरति** श्येनेन' । **भा.** १।४।४।५, * 'गवाऽ**भिचरन्** यजेत' । १।४।४।५, * 'श्येनेनाभिचरन् यजेत' । १।४।४।५, * 'संदंशेनाभिचरन् यजेत' । १।४।४।५, * '**सौमारौद्रं** चरुं निर्वपेत् कृष्णानां व्रीहीणां अभिचरन्' । १०।७।१९।६४, * 'शुक्राग्रान् (ग्रहान्) गृह्णीयाद**भिचरतः**' । १०।५।१९।६७.

* **अभिचर्यमाणः** । ( यज्ञाद्यार्थं केन चिदभिचारः कृतः सोऽभिचर्यमाणः ) 'मन्थ्यग्रान् ( ग्रहान् ) गृह्णीयादभिचर्यमाणस्य' । **भा.** १०।५।१९।६७.

* **अभिचारः** अदृष्टद्वारकमरणानुकूलव्यापारः । अभिचारः स्मृत्या निषिद्धः । **मणि.** पृ. ९. * अभिचारः तावत् अधिकारिविशेषणतया अधिकारे कारणम् । यश्चोपादाने हेतुः, नासौ उपादेयः । तेनाभिचारे नौपादानिकी प्रवृत्तिरिति सिद्धम् । **ऋजु.** पृ. ३०-३१. * अभिचारः वैरिमरणानुकूलो व्यापारः । वैरिमरणानुकूलः श्येनादिकर्तृनिष्ठः विषदानादिरूपो व्यापारः । **के.**

* **अभिचारकर्मणः** अनर्थफलत्वेन अनर्थरूपत्वान्न धर्मत्वम् । **वि.** १।१।२.

* **अभिचारपदस्य** मरणानुकूलश्येनादिकर्तृनिष्ठविषदानादिरूपव्यापारवाचित्वम् । तस्यैव श्येनादिफलत्वम् । वैरिनिष्ठो मरणानुकूलव्यापार एव अभिचारपदार्थः इति कश्चित् । तन्न । वैरिमरणं अभिचारः इत्यपि न । **भाट्ट.** ४।१।२ वर्णकं २.

* **अभिचारविशेषे** शरमयबर्हिषा कौशबर्हिषो बाधः । **भाट्ट.** १०।४।२.

* **अभिचारार्थं** कर्म पापं, तस्य तामसधर्मत्वस्मरणात् । **भाट्ट.** ४।१।२ वर्णकं २.

* **अभिजनसंस्तवेन** अभिजातः स्तुतो भवति यथा अश्मकाभिजनो देवदत्तः अश्मकेषु स्तूयमानेषु स्तुतमात्मानं मन्यते । **भा.** १।२।१।१०.

* **अभिजित्** नाम क्रतुः ज्योतिष्टोमविकारः अष्टरात्रादौ। **वि.** ६।७।८. * अभिजित् यागः । 'आभिमुख्येन जयात् अभिजित्' । **भा.** १।४।१।२ पृ. ३९५, * '**अभिजिता** यजेत' अत्र सौमिको विध्यन्तः अव्यक्तचोदनत्वात् । ८।१।१।१६. * 'अभिजिता यजेत' अभिजिन्नामकेन यागेन इष्टं भावयेत् । अभिजित् सोमविकृतिः । **वि.** ८।१।९. * अभिजिता यजेत इति अभिजित्शब्दः कर्मनामधेयम् । **भा.** १।४।१।१-२.

* **अभिज्ञस्यैव** वाचनं क्लृप्तीनां वाजपेयादौ । 'क्लृप्तीर्वाचयति' । 'आयुर्यज्ञेन कल्पतां' इत्यादयो मन्त्राः क्लृप्तयो नाम । **भा.** ३।८।८।१८.

* '**अभितो दिवाकीर्त्यं** त्रयः स्वरसामानः' इति गवामयने श्रूयते । तेषु च ग्रहसातत्यसप्तदशस्तोमादयो धर्मा विहिताः । दिवाकीर्त्यस्य विषुवतः अभितः पुरस्तात् परस्ताच्च त्रयस्त्रयः स्वरसामानः नाम यागा भवन्ति इति श्रुतिवाक्यार्थः । यदीया मन्त्रा दिवैव कीर्तनीया भवन्ति, न रात्रौ । यथा उपनिषदो रात्रौ न पठनीयास्तद्वत् । **के.**

* '**अभि त्वा शूर**' इतीयमृक् छन्दोगग्रन्थे रथंतरस्य योनित्वेन पठिता । **वि.** ९।२।५, * 'अभि त्वा शूर' इत्यादिमन्त्रान् स्तोत्रसाधनभूतान् 'पृष्ठैरुपतिष्ठते' इति पृष्ठशब्दो लक्षयति । ७।३।१४, * 'अभि त्वा शूर' इत्येषा बृहती प्रथमा स्तोत्रीया । ९।२।६ वर्णकं १, * 'अभि त्वा शूर' ज्योतिष्टोमे माध्यंदिने पृष्ठस्तोत्रेषु इदं प्रगाथरूपं प्रथमं सूक्तम् । तत्र पूर्वा बृहती, उत्तरा सतोबृहती । तत्र रथंतरं गातव्यम् । ९।२।६ वर्णकं २, * 'अभि त्वा शूर नोनुमः' इति सूक्ते सप्तदशस्तोमतामापाद्य रथंतरं स्तोत्रं गीयते । ७।३।३.

* **अभिधात्मिका** भावना विधिरित्युच्यते । **वा.** २।१।१।१ पृ. ३७८.

* '**अभिधात्री श्रुतिः** का चित्' प्रकृतिप्रत्ययश्रुत्योः स्वस्वार्थाभिधातृत्वम् । **वा.** ३।१।७।१३ पृ. ७००. * अभिधात्री श्रुतिः पञ्चविधा धातुः, प्रातिपदिकं, कृदादिप्रत्ययः, उपसर्गः, निपातश्चेति । धातुरपि द्विविधः 'भूवादयो धातवः' इतिविहितधातुसंज्ञः, 'सनाद्यन्ता धातवः' इति च । प्रातिपदिकमपि द्विविधं 'अर्थवदधातुरप्रत्ययः प्रातिपदिकं' इति 'कृत्तद्धितसमासाश्च'

इति च । प्रत्ययस्तु चतुर्विधः सुप्–तिङ्–कृत्–तद्धितभेदात् । उपसर्गनिपातयोस्तु द्योतकत्वं वाचकत्वं इति पक्षद्वयम् । बाल. पृ. ४१. * अभिधात्री श्रुतिः व्रीह्यादिश्रुतिः । मीन्या.

* **अभिधानं** गुणविशिष्टतया गुणिप्रकाशनम् । मन्त्रः अभिधत्ते, अभिधानार्थो मन्त्रः । रत्न. १२।४।१. * अभिधानम् । विधि–विनियोगाभिधानात्मिका श्रुतिः । वा. ३।३।४।११ पृ. ८१७. * अभिधानं हि प्रातिस्विकेनैव रूपेण व्यक्तिगतं, तद्यथा अक्षत्रयं एकापवरकस्थं एकापवरकस्थित्यैव उपलक्ष्य कश्चित् कं चिदाह, 'ये एतस्मिन्नपवरके स्थिताः, ते अक्षशब्दाभिधेयाः' इति । तत्र यद्यपि व्युत्पत्तिसमये अपवरकस्थितिर्नाम एकमुपलक्षणं लभ्यते, तथापि शब्दः तदनादरेण व्यक्तिमात्रमेव स्वरूपेणाभिधत्ते, इति भवति शक्तित्रयम् । शा. १।३।१० पृ. ५१.

* **अभिधानशक्तिः**— अन्यैव च तेन (मन्त्रेण) प्रथमं तदभिधानशक्तिः कल्प्यते । अन्या च तद्बलेन विनियोगशक्तिः । 'यो हि यस्याभिधानाय शक्त इत्यवगम्यते । विनियोगेऽप्यसौ शक्तो नह्यशक्तो नियुज्यते ॥' ततश्च द्वितीयसामर्थ्यात् विनियोगः कल्पयिष्यते न प्रथमात् । वा. ३।२।७।१४ पृ. ८२५–२६. * **अभिधानशक्तिनियमस्यापि** 'अन्वयव्यतिरेकाभ्यां निष्कृष्टेऽर्थे नियम्यते' इति अन्वयव्यतिरेकाधीनत्वं अभ्युपगम्यते । सु. पृ. १४५८, * **अभिधानश्रुत्या** अस्तित्वमात्रपरिच्छेदात् कार्यत्वबुद्ध्यनुत्पादः । पृ. १००५. * **अभिधानार्था मन्त्राः** 'एषोऽसि, त्वेषोऽसि' इति । भा. १२।४।१।१, * **अभिधानार्थस्य** जपस्य च मन्त्रस्य को विशेषः ? जपे वचनमात्रं मन्त्रस्य क्रियते न स्तूयते । अभिधानेन तु परः सता असता वा गुणेन आदिश्यते 'एषोऽसि' 'त्वेषोऽसि' इति । १२।४।१।१, * अभिधानार्थस्य मन्त्रस्य आम्नानसामर्थ्यात् अभिहितमभ्युदयकरं भवति । १२।३।१४।३०.

* **अभिधानोपदेशाद्वा** विप्रतिषेधाद् द्रव्येषु पृष्ठशब्दः स्यात् (७।३।१४।३६) इति सूत्रेण 'अभि त्वा शूर' इत्याद्यानामृचां पृष्ठशब्दो वाचकः इति सिद्धान्तयिष्यते । 'उपान्मन्त्रकरणे' (पा० १।३।२५) इति उपपूर्वकात् तिष्ठतेर्मन्त्रकरणेऽर्थे वर्तमानात् आत्मनेपदस्मृतेः समीपस्थाने च मन्त्रस्य करणत्वायोगात् अभिधानार्थोपस्थानवाचित्वं धातोः कल्पयित्वा उपस्थानकार्यं अभिधानं कुर्वतो मन्त्रस्य उपस्थानेऽपि यागस्य कार्यफलं प्रति ग्रहणयोग्यत्वं कुर्वतां यजमानसंस्काराणां यागे इव करणत्वोपपत्तेः, अभिधानार्थं अग्निसमीपे तिष्ठेत् इत्याख्यातपदार्थावगमात्, समभिव्याहृतस्य पृष्ठशब्दस्य स्तोत्रक्रियावाचित्वे सति आत्मनेपदविप्रतिषेधापत्तेः, तत्परिहारार्थं पृष्ठाख्यस्तोत्रसाधनत्वेन अन्यत्र विनियुक्तासु ऋक्षु लक्षणया प्रवृत्त्युपपत्तेः, 'कुशा दर्व्यादयो मन्त्रा ब्राह्मणाश्च बहुश्रुताः । न ते निर्माल्यतां यान्ति विनियोज्याः पुनःपुनः ॥' इति स्मृतेश्च मन्त्राणां विनियुक्तविनियोगाविरोधात्, ऋग्वाची अयं पृष्ठशब्दः इति सूत्रार्थः । ... रथंतरादिगीतिविशिष्टानामेव ऋचां पृष्ठसाधनतया पृष्ठशब्देन लक्षयितुं शक्यत्वात् अन्यथा च अभित्वाद्यृग्विशेषप्रतीतावपि करणाभावात् विशेषणे च पूर्वसंप्रत्ययात् 'रथंतरं पृष्ठं भवति' इत्यादौ च रथंतरादिषु पृष्ठशब्दप्रयोगात् साम्नोऽपि च अभिधायकाक्षराभिव्यक्तिद्वारा अभिधानेऽपि स्तुतौ करणत्वोपपत्तेः न ऋग्वाचित्वाभिधानात् रथंतरादिवाचित्वं पृष्ठशब्दस्य प्रसिद्धं, किंतु अनुज्ञातमेव । सु. पृ. ४२७–२८.

* **'अभिधाभावनामाहुरन्यामेव लिङादयः'** (वा. २।१।१।१ पृ. ३७८) । शब्दश्रवणानन्तरभाविप्रवृत्तिहेतुप्रेषणाध्येषणादिव्यापारानुवृत्तप्रवर्तनासामान्याभिधानेन तद्विशेषापेक्षायां अपौरुषेये वेदे पुरुषधर्मस्य प्रेषणादेरसंभवात् तद्व्यतिरिक्तविध्याख्यस्य विशेषस्य पारिशेष्यात् लक्षणया गम्यमानस्य संबन्धग्रहणानपेक्षत्वेन प्राक्सिद्ध्यनपेक्षणात् अविरुद्धा शब्दव्यापारता इति सूचनाय अभिधाशब्दः । कर्तृव्युत्पत्त्या करणव्युत्पत्त्या वा अभिधाशब्दस्य शब्दपरत्वमङ्गीकृत्य अभिधायाः शब्दस्य आत्मनः भावनां व्यापारं प्रवर्तनासामान्यव्यक्तिभूतं लिङादयः प्रवर्तनासामान्यं अभिदधानाः निर्विशेषसामान्यायोगात्, प्रैषादौ च लोकदृष्ट्या विशेषस्य पुरुषधर्मत्वेन

अपौरुषेये वेदे असंभवात्, प्रवर्तनासामान्यस्य च प्रैषादिप्रवर्तकव्यापारवर्तित्वदर्शनात् लिङादेरेव च प्रवर्तकत्वावधारणात् लक्षणया गमयन्तीत्यर्थः। अन्यां इति अपरत्ववाचिना अन्यशब्देन शब्दभावनायाः पाश्चात्यमभिदधता अर्थभावनाविषयत्वेन तदपेक्षत्व-सूचनात् विध्यभिधायित्वं नार्थभावनाऽभिधायित्वस्य बाधकं, प्रत्युत साधकं इति सूचितम्। **सु.** पृ. ५५९.

* **अभिधायकं** आख्यातं 'बर्हिर्देवसदनं दामि' इत्यादिमन्त्रगतम्। **वि.** २।१।६. * अभिधायकं लिङ्गं यत् गमकत्वादेव गमयति। **के.** * **अभिधायका** मन्त्राः। अस्ति तृतीयः प्रकारः यत् अभिधायकत्वं नाम। **'येषामाख्यातशब्दानां यच्छब्दाद्युपबन्धनात्। विधिशक्तिः प्रणश्येत्तु ते सर्वत्राभिधायकाः॥'** मन्त्रगतानां ब्राह्मणगतानां च आख्यातशब्दानां येषां शब्दान्तरेण विधिशक्तिः अपगच्छति, तेषामभिधायकत्वम्। तत्र 'न ता नशन्ति' इत्यत्र तावत् यच्छब्दोपहितो विधायकः अनुवादत्वं प्रार्थयते। तथा 'अहे बुध्निय मन्त्रं मे गोपाय' इत्यामन्त्रणविभक्त्या। 'दामि' 'गृह्णामि' इत्युत्तमपुरुषेण। 'यदि सोममपहरेयुः' इति यदिशब्देन। **वा.** २।१।६।३१.

* **अभिधा-लक्षणावादार्थः** 'अरुणान्यायः' इति भाष्यीयाधिकरणे द्रष्टव्यः। **के.**

* **अभिधेय**गम्यमानद्योत्यविषयरूपमर्थचतुष्टयम्। (अभिधेयो गोत्वादिः। गम्यमानोऽर्थः व्यक्तिः। द्योत्यः उपसर्गाणां गमनादिः तिष्ठत्यादिधात्वर्थः। विषयः योगरूढानां पङ्कजादिशब्दानां पद्मत्वादिः)। **वा.** ३।४।४।१३ पृ. ९३३, * **अभिधेयनानात्वेन** अनेकार्थत्वं न भवतीत्युक्तम्। २।२।१२।२७ पृ. ५५९.

* **अभिप्लवः** षडहः ज्योतिर्गौरायुः गौरायुर्ज्योतिः इति षड् यागाः। **रत्न.** १०।५।२५।८५. * **अभिप्लवे** च (ज्योतिर्गौरायुः इत्यादिना) नामधेयेन ऐकाहिको विध्यन्तः प्राप्नोति। **टुप्.** १०।५।२५।८५. * **अभिप्लवव्यवधानेन** पृष्ठ्यषडहावृत्तौ गवामयने मध्वशनादेरप्यावृत्तिः। **भा.** १०।६।११।३१.

**'अभिभूतिभयादसूनतः सुखमुज्झन्ति, न धाम मानिनः'** इति न्यायः। भारविः (२।२०)। मानिनो जनाः अन्यतः पराभवभयात् हेतोः असून् स्वप्राणानपि सुखं यथा तथा उज्झन्ति, धाम स्वतेजस्तु नोज्झन्ति इत्यर्थः। **साहस्री.** २६१.

* **अभिमन्त्रणं** 'अनुमन्त्रणं' इति विन्दौ द्रष्टव्यम्।

* **अभिमर्शनं** चतुर्होत्रादिमन्त्रेण अङ्गप्रधानहविरर्थं, न प्रधानार्थमेव। **भा.** ३।७।४।८-१०. * अभिमर्शनं आग्नीध्रसदोहविर्धानमण्डपानां प्रकृताभिरेव आग्नेय्या, ऐन्द्र्या वैष्णव्या च ज्योतिष्टोमे। **वि.** ३।२।८।२०-२३. * अभिमर्शनं चतुर्होतृपञ्चहोतृमन्त्राभ्यां न समुदायप्रयुक्तं, किंतु अपूर्वप्रयुक्तं दर्शपूर्णमासयोः। **भा.** ९।१।५।११-१३. * अभिमर्शनं 'चतुर्होत्रा पौर्णमासीमभिमृशेत्, पञ्चहोत्रा अमावास्याम्' 'पृथिवी होता चतुर्होतॄणाम्'। 'अग्निर्होता पञ्चहोतॄणाम्'। **वि.** ३।७।४.

* **अभिमर्शनद्वयं** सौर्ये चरौ विकल्पेन प्रवर्तते। अभिमर्शनं हि न समुदाययोः किंतु समुदायिनाम्। समुदायिषु आग्नेयोऽन्यतमः, आग्नेयविकारश्च सौर्यः। आग्नेयश्च पौर्णमास्यां चामावास्यायां चाच्युतः। **भा.** ८।१।१५।२६.

* **अभिमर्शनमन्त्रः** अध्वर्युप्रतिप्रस्थातृभ्यां भेदेन प्रयोक्तव्यः, न तन्त्रं वरुणप्रघासेषु विहारपृथक्त्वे। **भा.** १२।१।९।१८, * **अभिमर्शनमन्त्रस्य** आग्नेयविकारेषु विकल्पः ऐकार्थ्यात्। ८।१।१५।२६.

**अभिमर्शनाधिकरणम्**। दर्शपूर्णमासयोः हविरभिमर्शनं अङ्गप्रधानोभयार्थम्॥

**तथाऽभिधानेन**। ३।७।४।८॥

**भाष्यं**—स्तो दर्शपूर्णमासौ। तत्र श्रूयते 'चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्रा अमावास्यां' इति। तत्र संदेहः किं अङ्गप्रधानार्थमभिमर्शनं, उत प्रधानार्थमिति। किं तावत् प्राप्तं? प्रधानार्थमिति। प्रधाननामधेयं च तत् पौर्णमासी अमावास्या इति च। तस्मात् प्रधानस्याभिमर्शनमिति।

**वा**— संयोगात् इति वर्तते। पौर्णमास्यमावास्याशब्दयोः प्रधानमात्रवचनत्वात् 'आनर्थक्यात् तदङ्गेषु'

( ३।१।९।८ ) इत्येवमन्तरतोः प्रधानहविःष्वेव केवलेषु प्रवृत्तिः । तस्मात् चतुर्होत्रा मन्त्रेण, पञ्चहोत्रा च प्रधानहविर्मात्रमभिमृष्टव्यम् ।

## गुणाभिधानात् सर्वार्थमभिधानम् । १० ॥

**भाष्यं**—यदुक्तं प्रधाननामत्वात् पौर्णमासीशब्दस्य अमावास्याशब्दस्य च, प्रधानहविषामभिमर्शनमिति, नैतदेवम्। अङ्गहविषामपि अभिमर्शनं स्यात् । कुतः ? गुणाभिधानात् । गुणः अभिमर्शनमिति अभिधानं भवति । कतमत् तदभिधानं, यद्गुणः अभिमर्शनमिति ब्रूते ? पौर्णमासीं अमावास्यां इति च द्वितीयान्तं पौर्णमास्यर्थमभिमर्शनं कर्तव्यं, अमावास्यार्थमभिमर्शनं कर्तव्यमिति । अतो यत्रयत्र क्रियमाणं पौर्णमास्याममावास्यायां वा उपकरोति, तत्रतत्र कर्तव्यम् । यद्यत् पौर्णमास्याममावास्यायां वा अभिसंबध्यते साक्षात् प्रणाड्या वा, तत्रतत्र क्रियमाणं तयोरुपकरोति । तस्मात् प्रधानहविषां अङ्गहविषां च कर्तव्यमिति ।

**वा**— द्वितीयया यस्मात् गुणभूतमभिमर्शनं विज्ञायते, तस्मात् सर्वार्थे इत्यसंबद्धम् । स्थिते एव गुणत्वे तद्विशेषचिन्तेयं प्रस्तुता । सुतरां च प्रातिपदिकार्थानुसारिणा द्वितीयार्थेन प्रधानहविर्मात्रगुणत्वं प्राप्नोति । तस्मादनुपपत्तिरेव । यच्च पौर्णमास्यर्थे अमावास्यार्थे , इति चोक्तं ( भाष्ये ) तदपि पूर्वपक्षमेव साधयति । तेन एवं वक्तव्यम्– ' पौर्णमासीमभिमृशेत् ' इत्यत्र कालकर्मतत्समुदायानां अनभिमृष्टव्यत्वात् पौर्णमासीं इति गौणेन भवितव्यम् । तत्र प्रकृतिप्रत्ययार्थयोः यद्यपि प्रत्ययार्थस्य प्राधान्यात् प्रातिपादिकं गौणं इत्यापद्यते, तथापि अत्र तावताऽपि अभिमृष्टव्यविशेषानवगमात् समस्तस्रुवादिविषयसंशयोपप्लवे सति विशेषः अन्यत एव लब्धव्यः, इति साकाङ्क्षत्वात् असंदिग्धपरिग्रहार्थं प्रथमप्रतीतत्वेन च प्रातिपदिकार्थे मुख्यमाश्रित्य विभक्तिः सप्तम्यर्थे अवकल्पते पौर्णमास्यामिति । तदेव चात्र आकाङ्क्षितं, आसन्नहविरधिकारविधिना अभिमृष्टव्यविशेषस्य अवधारितत्वात् । अतः कालद्वारेण प्रयोगद्वारेण वा व्यवस्थार्थमेवेदं श्रवणं, इति हविर्मात्राभिमर्शनम् । अथापि पौर्णमास्यादिशब्देन हविर्लक्ष्यते, तथापि तदुपकारनात्रलक्षणात् सर्वार्थत्वसिद्धिः ।

**सुधा**— यथाविधेन प्रधानवाचिना अभिधानेन प्रधानार्थत्वं भवति , तथाविधेन मन्त्रयोः संयोगात् प्रधानस्याङ्गं मन्त्रौ इत्येवं पूर्वपक्षसूत्रव्याख्या । ' पृथिवी होता । द्यौरध्वर्युः । रुद्रोऽग्नीत् । बृहस्पतिरुपवक्ता ' इति चतुर्होता । ' अग्निर्होता । अश्विनाऽध्वर्यू । त्वष्टाऽग्नीत् । मित्र उपवक्ता । ' इति पञ्चहोता । यत् पौर्णमासीं अमावास्यां इति चाभिधानं, तत् सर्वेषामङ्गप्रधानहविषां मन्त्रविशिष्टाभिमर्शनविध्यर्थं , द्वितीयया अभिमर्शनस्य पौर्णमास्यमावास्ये प्रति गुणत्वाभिधानात् इति **भाष्यानुसारिणी** सिद्धान्तसूत्रव्याख्या । **वार्तिकानुसारेण** तु कर्मत्ववाचिन्या द्वितीयया कारकत्वगुणयोगेन सप्तम्यर्थाधिकरणत्वाभिधानात् अनेनाभिमर्शनस्य ऐदमर्थ्यानवगतेः ' सन्नानि हवींष्यभिमृशति ' इति विध्यन्तरात् सर्वार्थस्याभिमर्शनस्य व्यवस्थितमन्त्रविध्यर्थं पौर्णमास्यमावास्याभिधानं इति । ३।७ पृ. ८–९.

**सोम**— नात्र वार्त्रघ्नवाक्ये इव मन्त्रव्यवस्थामात्रविधिः, दर्शपूर्णमासप्रकरणे मन्त्रयोरनाम्नातत्वेन तद्वदिह मन्त्रयोः क्रमप्रमाणेन प्राप्त्यभावात्, किंतु अप्राप्तमन्त्रविधिरेव । सिद्धान्ते **प्रयोजनं** अङ्गप्रधानार्था वेदिः इति अग्नीषोमीयविकारे निरूढपशौ प्रवर्तते इति । **सूत्रे** अभिधानशब्दः प्रधानाभिधायकपौर्णमास्यादिशब्दपरः ।

**वि**— ' चतुर्होत्रा पौर्णमासीं मृशेदाज्याभिमर्शने । मन्त्रो मुख्य उताङ्गेऽपि, मुख्ये तद्वाचिशब्दतः ॥ , शब्दस्य कर्मवाचित्वात् तत्र मर्शनवर्जनात् । विभक्तिव्यत्यये मन्त्रो मुख्याङ्गहविषोर्द्वयोः ॥ '

**भाट्ट**— दर्शपूर्णमासयोः ' चतुर्होत्रा पौर्णमासीमभिमृशेत् पञ्चहोत्राऽमावास्याम् ' इति श्रुतम् । तत्रापि एतौ मन्त्रौ पौर्णमास्यमावास्यापदवाच्यप्रधानमात्रसंयोगात् तद्धविरभिमर्शनार्थावेव । नह्यत्र पौर्णमास्यादिशब्दौ कालपरौ, तथात्वे द्वितीयया सप्तम्यर्थलक्षणाऽऽपत्तेः, ' आसन्नानि हवींष्यभिमृशति ' इति प्राप्ताभिमर्शनानुवादेन मन्त्रकालोभयविधौ वाक्यभेदापत्तेश्च, काले निमित्ते

अभिमर्शनोद्देशेन मन्त्रविधौ प्रतिपदादिकालीनाभिमर्शने मन्त्रानापत्तेश्च । पौर्णमास्यमावास्यापदाभ्यां पौर्णमास्यादिप्रयोगस्य अधिकरणत्वविधौ च उभयत्र प्रातिपदिके प्रत्यये च लक्षणाप्रसङ्गो वाक्यभेदश्च तदवस्थ एव । प्रयोगस्य निमित्तत्वाङ्गीकारे च लक्षणाद्वयप्रसङ्गो विकृतौ अप्राप्त्यापत्तिश्च । अतो लाघवात् प्रातिपदिकेनैव पौर्णमास्यादिप्रधानमात्रसंबन्धिहविर्लक्षणात् तदुद्देशेनैव मन्त्रविशिष्टमभिमर्शनं विनियुज्यते , मन्त्रमात्रं वा तदुद्देशेन विधीयते, अभिमर्शनं तु प्रकरणप्राप्तानुवादः । उत्पत्तिवाक्ये च हविःशब्देन प्रधानमात्रहविरुपादानं उपसंहारविधया न विरुध्यते, अतः प्रधानमात्रार्थौ मन्त्रौ । सत्यं पौर्णमास्यादिशब्दाभ्यां प्रधानसंबन्धिहविर्लक्षणा, तथापि संबन्धो नाङ्गत्वाख्यः, तथात्वे वाक्यसंकोचापत्तेः, अपि तु उपकारकत्वाख्यः इत्यङ्गप्रधानार्थावेव मन्त्रौ ।

**मण्डन** — 'साङ्गार्थमभिमर्शनम् ।'

**शंकर**— 'अभिमर्शमनू तथा ।' मनू मन्त्रौ । तथा साङ्गार्थौ ।

* **अभियुक्ताः** एवमुपदिशन्ति सत्रमहीनश्च **द्वादशाह** इति । **भा.** ८।२।५।२४, * अभियुक्ताः प्रगीते मन्त्रवाक्ये सामशब्दमुपदिशन्ति, 'सामानि अधीमहे' 'सामानि अध्यापयामः' 'सामानि वर्तन्ते' इति । २।१।११।३६, * अभियुक्ताः यं शब्दमुपदिशन्ति एष एव साधुः, अन्यः असाधुः इत्यवगन्तव्यम् । १।३।८।२७, * अभियुक्ताः राज्ञः कर्म राज्यं इत्युपदिशन्ति । २।३।२।३ पृ. ५८०, * अभियुक्ताः हि आर्थिनो भवन्ति । दृश्यते चाभियुक्तानां गुणयतामविस्मरणं, उपपन्नं प्रत्यक्षं चैतत् गुण्यमानं न भ्रश्यते इति । १।३।८।२७, * नह्येते ( पौरोडाशिककाण्डादयः ) अनिन्द्रियविषया अर्थाः । उपपद्यते एषु **अभियुक्तानां** प्रामाण्यम् । ये तु अनिन्द्रियविषयाः, तेषु अभियुक्ताः न प्रमाणम् । ३।३।७।१४ पृ. ८५७.

* **अभियुक्ततराचारेण** अभियुक्ताचारो बाध्यते । **वा.** ३।३।७।१४ पृ. ८६०.

* **अभियुक्तानभियुक्तज्ञानयोः** अभियुक्तज्ञानं बलवत् । इतरस्य सुलभापवादत्वात् । '**अतः साक्षा**भियुक्तत्वादार्यावर्तनिवासिनाम् । या मतिः, सैव धर्माङ्गशब्दार्थत्वप्रमा मता ॥' वा. १।३।४।९ पृ. २२०.

* **अभियुक्तोपदेशः** शब्दार्थाविगमे प्रमाणम् । **भा.** ८।२।५।२४, * अभियुक्तोपदेशश्च नः प्रमाणम् । २।१।११।३६, * **अभियुक्तोपदेशात्** हस्तः करः पाणिः इत्येवमादिषु अनादिरर्थेन संबन्धः । १।३।८।२६.

* **अभिवर्षणे** । दीक्षितस्य शरीरे एककाले अनेकवारं पर्जन्याभिवर्षणेऽपि सकृदेव मन्त्रपाठः , न प्रत्यभिवर्षणमावृत्तिः । मन्त्रस्तु 'उन्दतीर्बलं धत्त' इति । **वि.** ११।४।१८.

* **अभिवासनं** कपालेषु श्रपितस्य पुरोडाशस्याच्छादनं 'भस्मनाऽभिवासयति' इति आम्नातम् । **वि.** ५।१।१६, * **अभिवासनान्तेन** अधिश्रयणादिना काण्डेन अनुसमयः वारुणचतुष्कपालपुरोडाशेषु । ५।२।२, * **अभिवासनान्ताङ्गसमूहस्य** दर्शे वेद्या सह पूर्वेद्युर्नापकर्षः । ५।१।१६.

'**अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः । शास्त्रार्थस्तेषु कर्तव्यः, शब्देषु न तदुक्तिषु ॥' इति न्यायः । साहस्री.** ३०. अभिव्यक्तपदार्था ये इत्यनेन गौणलाक्षणिकव्यावृत्तिः । 'लोकविश्रुताः' इत्यनेन अप्रसिद्धस्य व्यावृत्तिः । 'स्वतन्त्राः' इत्यनेन अप्रधानस्य व्यावृत्तिः । 'शब्देषु न तदुक्तिषु' अनभिव्यक्तपदार्थकेषु शब्देषु शास्त्रं न प्रवर्तते इत्यर्थः । अयं श्लोकः 'गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः' इतिन्यायमूलकः । **तत्त्वप्रकाशिका.** पृ. ९०. * 'अग्नी इत्याह' इत्यादौ प्रगृह्यत्वमतिदेशात् । अतिदेशे ज्ञापकं तु 'यत्तदेतेभ्यः परिमाणे' (पा० ५।२।३९) इति सौत्रनिर्देशः । नहि अत्र अतिदेशः विना त्यदाद्यत्वं लभ्यते । '**अभिव्यक्तपदार्था ये' इतिन्यायेन** लोकप्रसिद्धार्थपरतायामेव तत्प्रवृत्तेः (अतिदेशप्रवृत्तेः) । तथा च प्रयुज्यते 'यत्तदोर्नित्यसंबन्धः' । इति । **शब्दकौस्तुभे ऋलक्-सूत्रे.**

* **अभिव्यञ्जकानां** अनेकविषया शक्तिः, यथा दीपस्य । **ऋजु.** पृ. २०९.

* **अभिव्यापकं** अधिकरणत्वं अवच्छेदकावच्छेदेन वृत्तिमत् । यथा 'सर्वस्मिन् आत्माऽस्ति, तिलेषु तैलमस्ति ' इति । **रहस्य.** पृ. १५२.

* **अभिशस्यमानः** । उपहव्योऽनिरुक्तस्तेन अभिशस्यमानं याजयेत् 'अग्निष्टोमो यज्ञः पञ्चदशस्तोमो रथंतरसामा, अश्वः श्वेतो दक्षिणा' । **भा.** १०।३।१८।६५. यस्मिन् पुरुषे प्रायश्चित्तार्हो दोषः कर्णोपकर्णिकया आरोपितः नाद्यापि निर्णीतः, सः अभिशस्यमानः । **के.**

* **अभिषवः** उत्तरवेद्याः प्रतीचीने, सदसः प्राचीने मण्डपे भवति । **वि.** ३।५।११, * अभिषवः सोमस्य हविर्धानमण्डपगतहविर्धानशकटयोर्मध्ये दक्षिणशकटसमीपे भवति ( शकटस्याधस्तात् ) । ३।७।७. * अभिषवः सोमनाडीनां दशमुष्टिपरिमितानां दृषदि ग्रावभिरभिघातः, तेन च रसनिष्पादनम् ( ६।४।७।२४ ) । **के.** * अभिषवः होमश्च भक्षे एकं निमित्तम् । 'अपरमपि कारणं होमाभिषवौ ' ' ये अभिषुण्वन्ति जुह्वति च ते भक्षयन्ति ' । **भा.** ३।५।११।३२, * **अभिषवस्य** होमार्थत्वं होमस्य च फलार्थत्वम् । ३।५।११।३२.

**अभिषवे एव ' तिस्रो यह्वस्य ' इति मन्त्रः प्रयोज्यः ॥**

'तिस्रो यह्वस्य समिध इत्येतया सोमं करोति' इति सोमग्रहसंनिधौ श्रूयते । इह करोतेरेव भावनार्थकतया तत्र सोमस्य भाव्यतया ऋचः करणत्वेन चान्वयो भासमानोऽपि न युक्तः । सिद्धद्रव्यस्य साधनानाकाङ्क्षत्वेनासावितमिति न्यायेन यागक्रिययेव तेन स्वभाव्यकभावनाऽन्तरानाक्षेपात् । अतो विनियोगभङ्गेन सोमकरणकभावनायामेव मन्त्रविधानाश्रयणात् प्राकृतमन्त्रबाधाय यागे मन्त्रविधिः । यत्तु भाष्यकारैः असत्कार्यवादनिरासेन संस्कारात्मनः सतः स्वरूपात्मना सत्कार्यवादं समर्थ्य सोमस्य स्वरूपतोऽपि सत्त्वेन तत्र मन्त्रस्य करणत्वेन विधानायोगात् सोमग्रहात् अयं मन्त्र उत्कृष्येतेत्युक्तं, तत् सोमोत्पादने यागान्तरेऽपि विनियोगासंभवेन ' सागरं तरेत् ' इत्यादिविधेरिव अप्रामाण्यापादकत्वादुपेक्षितम् । अतः सक्तुन्यायेन तृतीयान्तत्वकल्पनायागे विनियोगः, नोत्कर्षः । इति प्राप्ते, उत्पाद्यविकार्यादिभेदेन भाव्यस्य अनेकविधताया हिरण्यकारः इत्यादिव्यवहारसमर्थनार्थमावश्यकतया पूर्वाधिकरणन्यायेनोत्पत्तिविधौ सोमपदस्य रसात्मकविकारपरत्वेन तदनुवादेन मन्त्रविध्युपपत्तेः अभिषवे एवायं मन्त्रः करणम् । **संकर्ष.** ३।३।१३.

* **अभिषवक्रयादिविधिः** सोमपूतीकयोस्तुल्यः । **वि.** ३।६।१५.

* **अभिषुतशब्दः** 'यानि चैवाभिषूयन्ते पुष्पमूलफलैः शुभैः' इति मिश्रीकरणे अभिषुणोतिप्रयोगदर्शनात् मिश्रीकृतवाची । **सु.** पृ. ८०५.

* **'अभिषुत्य** हुत्वा भक्षयन्ति' इत्यत्र समुदाये वाक्यपरिसमाप्तिः । **भा.** ३।१।६।१२ पृ. ६१७. क्रियाप्राधान्ये तु तद्वशीकृतविशेषणसमुदाये वाक्यपरिसमाप्तिः गर्गशतदण्डनहोमाभिषवभक्षवत् । **वा.**

* **अभिषेकः** यजमानस्य राजसूयाङ्गम् । **वि.** ५।२।१०, * अभिषेकः राजसूयगताभिषेचनीयाख्यसोमयागे माध्यंदिने सवने माहेन्द्रस्तोत्रकाले भवति । ४।४।२. * **अभिषेकात्** पूर्वं विदेवनादीनां प्रयोगः राजसूये । **भा.** ५।२।१०।२१. * **अभिषेकस्य** राजसूयगताभिषेचनीये अपकृष्टत्वात् विदेवनादीनामपि ततः प्रागपकर्षः । **वि.** ५।२।१०.

* **'अभिषेकोऽपि** ( राज्याभिषेकः ) धर्मज्ञैः क्षत्रियस्यैव पठ्यते । स ह्यसौ राजशब्देन तेन नाक्षत्रिये मतः ॥ ' **वा.** २।३।२।३ पृ. ५८२.

* **अभिषेचनीयः** ज्योतिष्टोमस्य विकृतिः । **वि.** ३।३।१०, * अभिषेचनीयः सोमयागः राजसूयान्तर्गतः । ४।४।१. * **अभिषेचनीयस्य** द्वात्रिंशाः पवमानाः तत्र नव राजसामानि, एकादश राजसामानि, बलौषश्रवसे, वशिष्ठस्य जनिजनित्रे च साकं प्रवेदनान्याहुः । शुद्धाशुद्धीये च संश्रवोपपदे चोभे । **के.** * अभिषेचनीयस्य संनिधौ पठितानामपि विदेवनादीनां प्रकरणबलेन सर्वराजसूयाङ्गत्वम् । न तु अभिषेचनीयाङ्गत्वम् । अनुष्ठानदेशस्तु अभिषेचनीयः । **वि.** ३।३।१०, * अभिषेचनीयस्य सोमक्रयोपसंवादेन दशपेययागीयक्रयोपसंवादस्य साहित्यं ' सह सोमौ क्रीणाति ' इत्युक्तम् । अभिषेचनीयः संसृपाभ्यः प्रागेव क्रियते, दशपेयस्तु

संसृपोत्तरमिति विशेषः । ११।२।१४, * **अभिषेचनीये** माहेन्द्रस्तोत्रे अभिषेकात् प्राक् निवेदनादयः अपकर्षेण कर्तव्याः । ३।३।१०. * ' अयुत**मभिषेचनीये** ददाति ' गवाम् । **भा.** ११।४।२।७, * **अभिषेचनीयदशपेयौ** राजसूये । तत्र अभिषेचनीयस्य दशमेऽहनि दशपेयः संपद्यते । ११।२।१४।६१, एकस्मिन् क्रतौ एतौ सोमौ वर्तेते । ६२, सोमक्रयः शब्दकृतः उभयोरेकदैव । अर्थकृतस्तु भिन्नकाले । ५९, आदौ अभिषेचनीयः ततो दशपेयः नानयोस्तन्त्रम् । ५७.

**अभिषेचनीयदशपेययोर्भिन्नं तन्त्रम् ॥**

**दशपेये क्रयप्रतिकर्षात् प्रतिकर्षस्ततः प्राचां, तत् समानं तन्त्रं स्यात् । ११।२।१४।५७ ॥**

**भाष्यं**--राजसूये अभिषेचनीयदशपेयौ एकाहौ । तत्र चिन्त्यते किं तयोः तन्त्रप्रयोगः, अथवा भेदेनेति । किं प्राप्तं ? समानं तन्त्रमनयोः । कुतः ? दशपेयस्य क्रयः प्रतिकृष्यते ' सह सोमं क्रीणाति अभिषेचनीयदशपेययोः ' इति । अभिषेचनीयस्य पूर्वकालीनत्वात् तत्क्रयकाले दशपेयक्रयस्य प्रतिकर्षः । स प्रतिकृष्यमाणः, ततः प्राग्भाविनः पदार्थान् प्रतिकर्षति ' तदादि वाऽभिसंबन्धात् तदन्तमपकर्षे स्यात् ' इति ( ५।३। १२।२४ ) । अतस्तयोरेकाहयोः तन्त्रं प्रक्रमः । तन्त्रप्रक्रान्तयोः प्रवृत्तितः तन्त्रमेव समाप्तिर्युक्ता । तस्मात् समानतन्त्रौ ।

**समानवचनं तद्वत् । ५८ ॥**

**भाष्यं**-- ' समानो वा एष यज्ञो यद् दशपेयश्चाभिषेचनीयश्च ' इति तन्त्रस्य समानत्वात् यज्ञयोः समानत्वं, आत्मना भिन्नत्वात् ।

**अप्रतिकर्षो वाऽर्थहेतुत्वात्, सहत्वं विधीयते । ५९ ॥**

**भाष्यं**--न वा प्रतिकर्षः क्रयस्य । कुतः ? अर्थहेतुत्वात् । **द्वौ इमौ क्रयौ** । एकः अर्थहेतुकः, अन्यः शब्दकृतः । यत् प्राक् क्रतुप्रवृत्तेः यज्ञसाधनोपार्जनकाले **सोमविक्रयिणा सह संवादः सोमस्य** परिक्रयणं मूल्यपरिच्छेदः, स: अर्थादवश्यं करणीयः । तस्मिन् अकृते **क्रतोरेव प्रवृत्तिर्न युक्ता । कुतः ?** क्रतुकाले कदा चित् सोमो न स्यात् विक्रेता वा अस्य ( न स्यात् ), नार्घेण वा दद्यात्, तथा क्रतुरेव न संवर्तेत । तस्य एतत् सहत्वमुच्यते । किं कारणं ? मुख्यत्वात् । तत्रैव च क्रयो निर्वृत्तकल्पः, मूल्यार्पणमात्रं अवशिष्टम् । यदन्यत् तत्र ' कल्या ते क्रीणानि ' इत्येवमादि तत् वर्णनमात्रं, परतन्त्रत्वादेव विक्रेतुः । एवं च सति भिन्नकालयोः यथाकालमेव अङ्गानि भविष्यन्ति । **दृष्टश्च** तस्मिन्नुपसंवादे क्रयार्थे क्रीणातेः प्रयोगः ' देवदत्तेन सह अस्माभिर्धान्यं क्रीतं उपज्ञा संवृत्ता ' इति । अतस्तस्य संवादः । स च बहिः क्रतोर्वर्तते । तस्मान्नास्ति प्रतिकर्षः । कालभेदात् यथोक्त एव तन्त्रभेदः ।

**पूर्वस्मिंश्चावभृथस्य दर्शनात् । ६० ॥**

**भाष्यं**--पूर्वस्मिंश्च अभिषेचनीये अवभृथदर्शनं भवति । कथं ? ' समानं वा एतद् यज्ञं विच्छिन्दन्ति, यदभिषेचनीयस्य अवभृथमभ्यवयन्ति ' इति । तदेवं अवभृथदर्शनं पूर्वस्मिन् उपपद्येत, यदि भेदेन तन्त्रप्रवृत्तिः । इतरथा दशपेयान्ते अवभृथः स्यात् ।

**दीक्षाणां चोत्तरस्य । ६१ ॥**

**भाष्यं**--दशपेयस्य च पृथक् दीक्षाणां दर्शनं ' तथा अभिषेचनीयस्य दीक्षा वर्धयेयुः, यथा दशमेऽहनि दशपेयः संपद्यते, सद्यो दीक्षयति, सद्यः सोमं क्रीणाति ' इति । इतरथा अभिषेचनीये एव दशपेयस्यापि दीक्षाः स्युः, तत्र एतत् दर्शनं नोपपद्येत ।

**समानः कालसामान्यात् । ६२ ॥**

**भाष्यं**--यत्तु 'समानवचनं तद्वत्' इति, तत्र ब्रूमः । एकस्मिन् क्रतौ एतौ सोमौ वर्तेते, तत उत्तरे संवत्सरादूर्ध्वम् । एतत्कालसामान्यमपेक्ष्य तत् समानवचनं अन्यथा उपपद्यते इति । तस्मात् तन्त्रभेदः ।

**सोम**-- पूर्वत्र आलम्भोत्कर्षविध्यसंभवात् प्रति**संवत्सरं पर्यग्निकरणान्ताङ्गकलापावृत्तावपि इहाभिषेचनीयदशपेययोः समानतन्त्रत्वाद्यावृत्तिः इत्युत्थितेः संगतिः ।** अत्र ( **सोमविक्रयिणा सह संवादः इति यदुक्तं तत्** ) **संवादशब्देन ' कल्या ते क्रीणानि ' ' भूयो वा अतः सोमो राजाऽर्हति ' इत्येवंरूपः क्रेतृविक्रेत्रोर्यः संवादः सोमक्रयकाले कर्तव्यतया विहितः, स न विवक्षितः,**

तथा सति तस्याङ्गत्वादेव तदपकर्षे सहोपक्रमत्वस्यावर्जनीयत्वापत्तेः, किंतु क्रतुकाले यदि सोमविक्रयी न लभ्येत लब्धोऽपि वा अधिकमर्थं याचेत, तदा क्रतुरेव न संवर्तेत इति बुद्ध्या क्रतुप्रयोगाद्बहिरेव साधनान्तरसंपादनवत् विक्रेत्रा सह लौकिको यो मूल्यनिश्चयः, स विवक्षितः, तस्य चानङ्गत्वात् न सहप्रयोगापादकत्वमिति ।

**वि**— 'दशपेये चाभिषेचनीये तन्त्रं भिदाऽथवा ।, क्रयराहित्यतस्तन्त्रं, कालभेदेन भिन्नता ॥ '

**भाट्ट—** राजसूये इष्टिपशुसोमयागाः सर्वे भिन्नतन्त्राः, क चित् कालभेदात् क चिद्देशभेदात् क चिद्दक्षिणाभेदात् इति वक्ष्यते । तत्राभिषेचनीयो नाम सोमयागः, ततः, 'संसृपां हवींषि,' ततश्च पुनर्दशपेयः सोमयागः श्रुतः । ताविमौ अभिषेचनीयदशपेयौ समानतन्त्रौ भिन्नतन्त्रौ वेति चिन्तायां 'सह सोमं क्रीणात्यभिषेचनीयस्य दशपेयस्य च ' इति वचनेन अभिषेचनीयसोमक्रयकाले दशपेयसोमक्रयः प्रतिकृष्यते । स च प्रतिकृष्यमाणस्तदन्तापकर्षन्यायात् (५।१।१२) ततः प्राचोऽपि पदार्थानपकर्षतीति आरम्भस्तावत् समानतन्त्रः । यथोपक्रमं च समापने तदुत्तराङ्गानामपि तन्त्रता । **यदि** तु अभिषेचनीये 'यदभिषेचनीयस्यावभृथमभ्यवयन्ति' इत्यवभृथदर्शनात् नोत्तराङ्गानां तन्त्रता, **तदा** अस्तु पूर्वाङ्गानामेव सा । **न च** दशपेये 'सद्यो दीक्षयन्ति, सद्यः सोमं क्रिणन्ति ' इति पुनःसोमक्रयदर्शनादुपसंवादमात्रे 'सह सोमं क्रीणाति ' इत्यनेन साहित्यं विधीयते । उपसंवादश्च मूल्यप्रतिश्रावणार्थम् । तस्य क्रतोः पूर्वमकरणे कदा चित् सोमविक्रय्यलाभेन क्रतुकरणानुपपत्त्या आवश्यकत्वादिति **वाच्यं,** तथात्वे क्रीणातेरुपसंवादे लक्षणाऽऽपत्तेः । तद्वरं सद्यःपदस्यैव एकर्तुकालीनत्वे लक्षणा, अभिषेचनीयदशपेयौ हि एकक्रतुकालीनौ, सोमयागान्तराणि तु संवत्सरादूर्ध्वं क्रत्वन्तरे इति तदभिप्रायेण सद्यःपदम् । **इति प्राप्ते,** तथात्वे 'सद्यो दीक्षयन्ति' इत्यादिवाक्ययोर्नैयर्थ्यापत्तेः 'सह सोमं क्रीणाति' क्रयणोपसंवादे लक्षणामपि अङ्गीकृत्य सहत्वमात्रविधिः । अतो भिन्नतन्त्रावेतौ । यत्तु 'समानो वा एष यज्ञो यद्दशपेयश्चाभिषेचनीयश्च' इति समानत्ववचनं, तत् एकर्तुकालत्वाभिप्रायेणेति न कश्चिद्विरोधः ।

**मण्डन**— 'दशपेयक्रयः पृथक् । '

**शंकर**— 'सहसोमक्रयेऽङ्गभित् । '

* **अभिसारिणी** त्रिष्टुप् । पादेषु अक्षराणि १०।१०।१२।१२ उदा० 'यो वाचा विवाचो' ( ऋसं. १०।२३।५ ) । **के.**

* **अभिहितत्वं** 'अनभिहितत्वं' इति बिन्दौ द्रष्टव्यम् ।

* **अभिहितान्वयः** औत्सर्गिको भाट्टमतं, अन्विताभिधानं प्राभाकरमतम् । अभिधावृत्त्या शक्त्या पदानि स्वस्वार्थे स्वरूपेण अभिदधति । पदाभिहिताश्चार्थाः आकाङ्क्षायोग्यतासंनिधितात्पर्यानुसारेण पश्चात् अनुयन्ति । अभिहितानां अर्थानामन्वयः अभिहितान्वयः । अत्र मते पदार्थानामन्वयः न अभिधाविषयः । अन्विताभिधानमते तु अर्थान्तरान्विते क्रियान्विते वा अर्थे एव पदस्य शक्तिः, न शुद्धे अर्थे । अत्र अन्वयोऽपि शक्तिविषयः । अर्थान्तरेण क्रियया वा अन्वितस्य अर्थस्य पदेन अभिधानं इति अन्विताभिधानमित्युच्यते । तत्रापि सामान्यान्वितत्वं विशेषान्वितत्वं इति पक्षद्वयम् । **के.** * अभिहितान्वयः तौतातिकमते उत्सर्गः । तदपवादस्तु अनेकार्थकप्रत्यये कर्त्रैकत्वविधिभ्यामन्विताया भावनायाः तिङि, सुपि च पशुना इत्यादौ एकत्वलिङ्गाभ्यामन्वितस्य करणादिकारकस्य, देवतातद्धिते च देवतया अन्वितस्य द्रव्यस्य अभिधानाङ्गीकारात् । **बाल.** पृ. ४२.

* '**अभीन्धत एव दीक्षाभिः**' इति द्वादशाहे दीक्षाबहुत्वं विहितम् । **भाट्ट.** ६।५।९. * 'अभीन्धते एव दीक्षाभिः' इति श्रुतस्य दीक्षाबहुत्वस्य वाक्यशेषेण द्वादशसंख्यायां पर्यवसानम् । **वि.** ६।५।९.

* **अभीवर्तं** नाम ब्रह्मसाम, तद्धि अनारभ्य किं चिदाम्नातमविशेषेण । **भा.** ६।१।७।३१. । ( अत्र ब्रह्मशब्देन ब्राह्मणाच्छंसी गृह्यते । ब्रह्मणः ब्राह्मणाच्छंसिनः साम ब्रह्मसाम इति ) । * अभीवर्तं साम प्रगाथे बार्हते पादप्रग्रथनेन च तृचात्मके गीयते गवामयने, न तु

ऋचामेव प्रग्रथनम् । **वि.** ९।२।६ वर्णकं ४. * **अभीवर्तः** ज्योतिष्टोमे समाम्नायते साम । **टुप्.** ६।१। ७।२८. * 'अभीवर्तो ब्रह्मसाम भवति' इति गवामयने ब्राह्मणाच्छंसिनः साम विहितम् । **वि.** ९।२।६ वर्णकं ४. * '**अभीवर्तादन्यत्रस्थानाः**' इन्द्रक्रतुप्रगाथस्य ब्रह्मसामस्तोत्रस्थत्वेऽपि तत्र अभीवर्तसामाभावात् वचनार्थो न विरुध्यते । **भाट्ट.** ९।२।६.

* '**अभी षु णः** सखीनामविता जरितॄणां' अत्र आदितः चतुर्थाक्षरे न आयीभावः णायी इति । किंतु जरितॄणां इत्यत्रैव जरायी इति । **वि.** ९।२।९.

* '**अभीषू वा** एतद्यज्ञस्य यदाघारौ, वर्म प्रयाजाः'। इति यज्ञाङ्गत्वश्रुतेः आघारयोः प्रयाजाङ्गत्वानङ्गीकारः। **भाट्ट.** १०।१।६. * 'अभीषू वा एतौ यज्ञस्य यदाघारौ' इति आघारयोः फलश्रुतिः फलार्थवादः, न तु फलविधिः दर्शपूर्णमासयोः । **भा.** ४।३।१।१-२.

**अभीष्टस्त्रीवियोगार्त्या सविवेकोऽपि बाध्यते इति न्यायः** ॥ यथा—वासवदत्तादिविरहपीडया वत्सराजादयो दृष्टान्तभूताः। स्पष्टाभिप्रायोऽयमिति । **साहस्री.** ७३१.

* '**अभूदुषाः**' इति ऋक् प्रातरनुवाके परिधानीया। ( अन्ते अनूच्यमाना ऋक् परिधानीया । सेयं त्रिरावर्त्यते ) । **भाट्ट.** ५।१।१३.

* **अभेदस्य** सामानाधिकरण्यबुद्धिहेतुकत्वम् । (पदयोः सामानाधिकरण्ये पदार्थयोरभेदो भासते इत्यर्थः।) **सु.** पृ. ८७९. * **अभेदातिरिक्तसंबन्धेन** नामार्थप्रकारकबोधे विभक्तिजन्योपस्थितेः हेतुत्वम् । ( तेन समस्यमानपदार्थयोः विभक्तिजन्योपस्थित्यभावेन परस्परान्वयो न स्यात् ) । **मणि.** पृ. १४७.

**अभेदोपचारलक्षणाहेतुतुल्यत्वन्यायः** ॥ यद्यपि अभेदोपचारलक्षणाहेतुः द्विविधेऽपि सामानाधिकरण्ये तुल्यः, तथापि गुणिशब्दस्य गुणशब्दानुरोधेन सामानाधिकरण्यप्रयोगस्य अप्राचुर्यात् नैतत्सामानाधिकरण्यं गुणशब्दस्य गुणिशब्दानुरोधेन सामानाधिकरण्यवत् शीघ्रं प्रतिभाति । अर्थप्रकरणवशात्तु कथं चित् आपद्यमानोऽयं प्रयोगः अभेदोपचारलक्षणाहेतुतुल्यत्वन्यायेन अनुसर्तव्यतया उक्तः । **सु.** पृ. १४८३. अत्र सुधायां मूलभूतं वार्तिकमित्थं 'कदा चित्तु यथैव गुणवचनः शब्दो गुणोपसर्जनद्रव्यप्रतिपादयिषया तच्छब्दसमानाधिकरणो भवति, एवमेव गुण्युपसर्जनगुणविवक्षायां गुणशब्दानुरोधेन सामानाधिकरण्यं भवति । तुल्यो हि हेतुः अभेदोपचारलक्षणयोः । तथापि तु एष प्रयोगो न प्रचुरः, इति न शीघ्रं इतरवत् प्रतिभाति । यदा तु नाम कथं चिदापतति, तदा एतेन न्यायेन अनुसर्तव्यः इति कथ्यते । तस्मात् अस्ति अन्तरेणापि भावप्रत्ययं, प्रत्ययवाच्यवस्तुप्रधानो निर्देशः ।' इति ( ३।४।४।१३ पृ. ९२८ ) ।

**अभेदका गुणा इति न्यायः** ॥ तद्यथा देवदत्तो मुण्ड्यपि शिख्यपि स्वामाख्यां न जहाति, तथा बालो युवा वृद्धो वत्सो दम्यो बलीवर्द इति, एवं प्रकृतेऽपीति । 'वृद्धिरादैच्' सूत्रभाष्ये । ( गुणभेदेऽपि गुणी न भिद्यते इत्यर्थः ) । **साहस्री.** ८३२.

* '**अभोजनविधिर्नूनमत्यन्योऽप्यान्तरालिकः**' । **वा.** १।३।२।४ पृ. १९२.

* **अभ्यङ्गो ज्योतिष्टोमे** दीक्षार्थः । तत्र नवनीतं ग्राह्यम् । तत्स्तुतये च 'घृतं देवानां, मस्तु पितॄणां, निष्पक्वं मनुष्याणां' इत्यनुवादः । **वि.** ३।४।७.

* **अभ्यञ्जनं** अञ्जनाभ्यञ्जनाख्ये सत्रे गौग्गुलवेन ( तैलेन ) प्रातःसवने, पैतुदारवेण माध्यंदिने सवने, सौगन्धिकेन तृतीयसवने । **भा.** १०।४।६।१०, इदं सुत्याकाले विरूक्षीकरणार्थम् । १२, * अभ्यञ्जनं ज्योतिष्टोमे यजमानसंस्कारः । ३।८।२।५, * अभ्यञ्जनं नवनीतेन दीक्षाकाले सुखप्रचाराय स्नेहनार्थम् । १०।४। ६।१२, * अभ्यञ्जनं शकटाक्षस्य न एकहायनीनयनप्रयोजकं ज्योतिष्टोमे । ४।१।१०।२५, * **अभ्यञ्जने** 'त्रिरभ्यङ्क्ते' इति त्रित्वं एकः पदार्थः । ततः अनेकयजमानके क्रतौ समुदायेनानुसमयः । ५।२।३।४–५.

* **अभ्यञ्जनशब्दपर्यायस्य** प्रक्षणशब्दस्य मैथुने प्रयोगदर्शनात् अभ्यञ्जनशब्दस्यापि मैथुनवाचित्वं गम्यते । ( इदं क चित् ) **सु.** पृ. १४७६.

* **अभ्यनुज्ञारूपः** प्रतिषेधः यथा 'एष पन्था एतत् कर्म' इत्यैतरेयद्वितीयारण्यके 'तस्मात् काले

एव दद्यात्, काले न दद्यात्' इति। अत्र काले दारिद्र्याद्यवस्थाल्पे न दद्यात् इति अभ्यनुज्ञैव, अददतः ईषद्दोषात्। बाल. पृ. ३३.

* **अभ्यनुज्ञाविधिभेदाः** विधिशब्दे बालग्रन्थे द्रष्टव्याः।

**अभ्यन्तराश्च समुदायेऽवयवा इति न्यायः॥** यथा वृक्षः प्रचलन् सहावयवैः प्रचलति, तथा प्रकृतेऽपि बोध्यम्। प्रत्याहाराह्निके महाभाष्ये इति। **साहस्री.** ८२८.

**अभ्यन्तरो हि समुदायेऽवयव इति न्यायः॥** तद्यथा वृक्षः प्रचलन्सहावयवैः प्रचलतीति 'एकाचो द्वे प्रथमस्य' (पा०६।१।१) इति सूत्रमहाभाष्येऽभिहितः। तथा 'लक्ष्यलक्षणे व्याकरणम्' इति वार्तिकस्थमहाभाष्ये प्रकारान्तरेण ध्वनितः। तद्यथा 'समुदायेषु हि शब्दाः प्रवृत्ता अवयवेष्वपि वर्तन्ते। तद्यथा पूर्वे पञ्चालाः, उत्तरे पञ्चालाः, तैलं भुक्तं, घृतं भुक्तं, शुक्लः, नीलः, कृष्ण इति। एवमयं समुदाये व्याकरणशब्दः प्रवृत्तोऽवयवेऽपि प्रवर्तते'। एवं प्रकृतेऽपि। **साहस्री.** ४४५.

**अभ्यर्हितं पूर्वं इति न्यायः॥** अल्पाच्तरं इति पाणिनिसूत्रे (२।२।३४) वार्तिकमिदम्। अभ्यर्हितं पूज्यं प्रधानं वा। तत् द्वंद्वसमासे पूर्वं प्रयोज्यं यथा कृष्णार्जुनौ इत्यादि। **के.** * अभ्यर्हितं पूर्वं इति **न्यायं** आश्रित्य तन्त्रप्रसङ्गप्रतिपादकयोः एकादशद्वादशाध्याययोः पूर्वोत्तरभाव उपपादितः। **वि.** द्वादशाध्यायस्य उपक्रमे. * यद्यपि सामिधेन्यः पूर्वमुक्ता अनुष्ठेयाश्च, तथापि 'अभ्यर्हितं पूर्वं' इति वैयाकरणोक्त**न्यायेन** प्रयाजयाज्यानां प्रीतिहेतूनां अभ्यर्हितत्वात् ता एव आप्रीः प्रथमं विधत्ते। **तैसंसा.** ५।१।८.

**अभ्यर्हितं पूर्वं निपतति इति न्यायः** उत्पत्तिशिष्टगुणावरुद्धे तद्विरोधित्वगुणान्तरविध्यसंभवो वैश्वदेवाधिकरणे (१।४।११।१७-२२) व्युत्पादयिष्यमाणः अत्र हेत्वन्तरसमुच्चयार्थं उक्तः। वाक्यभेदप्रसङ्ग एव तु अत्र गुणोपदेशशब्दोक्तः प्रधानहेतुः इति 'अभ्यर्हितं पूर्वं निपतति' इति न्यायेन सूचनीयः। **सु.** पृ. ४१९, * आघाराग्निहोत्रयोः अङ्गाङ्गिसंबन्धाभावेन '**अभ्यर्हितं पूर्वं निपतति' इत्यस्य** अविषयत्वात् अल्पाच्तरत्वेन आघारशब्दस्य पूर्वनिपातो युक्त आघाराग्निहोत्रं (२।२।५।१३) इत्यत्र सूत्रे। पृ. ७८८, * पशुसोमयोः (२।२।१७ सू.) इत्यत्र पशुशब्दस्य घ्यन्तत्वे 'लक्षणहेत्वोः क्रियायाः' (पा० ३।२।२६) इत्यादौ घ्यन्तस्य पूर्वनिपातव्यभिचारात् सोमस्य प्राधान्येन अभ्यर्हितत्वात् पशोः पूर्वतराभिधानमयुक्तं इत्याशङ्क्य न्यायनिष्ठे शास्त्रे न्यायव्युत्पादनादरविषयस्य अभ्यर्हितत्वात् पशोः पूर्वनिपातो युक्तः इत्याह। पृ. ७८८.

* **अभ्यातानाः** नाम होमाः दर्विहोमाः अपूर्वाः। **वि.** ८।४।४, * **अभ्यातानहोमाः** 'अग्निर्भूतानामधिपति०' इत्यादिभिर्मन्त्रैः क्रियमाणा होमाः। ३।४।१३. * **अभ्यातानहोमाः** वैदिककर्मणां शेषभूताः, न लौकिकानां कृष्यादीनाम्। **भा.** ३।४।९।२५-२७.

* **अभ्याश्रावणं** परिधिधर्मः परिधिप्रहरणकाले श्रावय श्रौषट् इत्यादिमन्त्रैः कर्तव्यम्। **भा.** १२।२।१०।२६.

* **अभ्यासः** अविशेषे पुनः श्रुतिः। **वि.** २।४।१. * पुनर्विधानम्। **सु.** पृ. ८२०. * अभ्यासः कर्मभेदकं प्रमाणम्। **बाल.** पृ. ८. * अभ्यासः धर्मभेदे प्रमाणम्। **मणि.** पृ. १३. * अभ्यासः **अवघातादीनां** दृष्टार्थानां प्रयोजननिष्पत्तिपर्यन्तम्। **भा.** ११।१।५।२७, * अभ्यासः **अवहननस्य** आ तण्डुलनिर्वृत्तेः। ११।१।५।२७. * अभ्यासः उपसंहारादपि प्रबलः बहुबाधस्य अन्याय्यत्वात्। **पराक्रमः.** ८. * अभ्यासः **एकधाशब्दस्य** अध्रिगुप्रैषगतस्य पशुगणे। **भा.** ९।३।११।२९-३१, * अभ्यासः **काम्यस्य कर्मणः** फलभूमेच्छया। ११।१।४।२०-२६, * अभ्यासः **गीत्युपायः** अन्यतमः। ९।२।७।२९, * अभ्यासः चयने **न सर्वौषधावघातस्यादृष्टार्थस्य**। ११।१।६।२८, * अभ्यासः त्रिः सामिधेन्यां प्रथमोत्तमस्थानधर्मो न ऋग्धर्मः। ९।१।९।३३, * अभ्यासः **पेषणस्य** आ पिष्टनिर्वृत्तेः। ११।१।५।२७.

**अभ्यासः सामिधेनीनां प्राथम्यात् स्थान-धर्मः स्यात्। ९।१।१०।३३ ॥**

दर्शपूर्णमासयोः सामिधेनीः प्रकृत्य 'त्रिः प्रथमामन्वाह त्रिरुत्तमां' इति श्रूयते। तत्र किं त्रिर्वचनं ऋग्धर्मः, 'प्र वो वाजा' इति ऋक् यत्रतत्र वर्तमानाऽपि त्रिरभ्यसितव्या इति, किंवा स्थानधर्मः या अन्याऽपि प्रथममुच्यते सा त्रिर्वक्तव्या इति विचारे सिद्धान्तमाह। सामिधेनीनां प्रथमायाः योऽयमभ्यास उक्तः, स स्थान-धर्मः स्थानस्य धर्मः स्यात्। प्रथमस्थाने या ऋक् उच्येत, सा त्रिर्वक्तव्या इति। प्राथम्यात् 'त्रिः प्रथमामन्वाह' इति अभ्यसनीयाया ऋचः प्राथम्यस्योक्तत्वात्। तस्मान्नायं ऋचो धर्मः, किंतु प्रथमस्य स्थानस्येति। तेन यत्र एकैव सामिधेनी स्यात्, साऽपि प्रवोवाजीयायाः भिन्ना, साऽपि त्रिर्वक्तव्या। **के.**

* अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्मः स्यात्। 'त्रिः प्रथमामन्वाह त्रिरुत्तमां' इति प्रथमोत्तम-शब्दयोः प्रथमावगताद्यन्तस्थानपरत्वातिक्रमहेत्वभावात् न तदुपलक्षितप्रवोवाजा– आजुहोतेतिऋक्परता इति। **सु. पृ. ४६९.** * अभ्यासः **साम्नां** विवृद्धस्तोमकक्रतौ बहिष्पवमाने। **भा. १०।५।७।२६,** * अभ्यासः स्वस्थानवि-वृद्ध्या **गवामयने त्र्यनीकासु।** १०।५।२५।८३–८७.

**अभ्यासेन तु संख्यापूरणं सामिधेनीष्व-भ्यासप्रकृतित्वात्। १०।५।८।२७ ॥**

'एकविंशतिमनुब्रूयात् प्रतिष्ठाकामस्य' 'चतुर्विं-शतिमनुब्रूयात् ब्रह्मवर्चसकामस्य' इत्यादयः काम्याः सामिधेनीकल्पाः दर्शपूर्णमासयोः श्रूयन्ते। तत्र एका-दशभ्यः अधिका संख्या ऋगागमेन पूरयितव्या, उत प्रथमोत्तमयोस्तावत्कृत्वः अभ्यासेन, अथवा याव-दुक्तमभ्यस्य शेषाणां षडादीनामागमः इति विचारः। अत्र मूलतः एकादशसंख्या, तत्र दशादीनामागमेन संख्यापूरणं इति प्रथमः पूर्वपक्षः। तन्निरासार्थस्तुशब्दः। सामिधेनीषु काम्यासु, अभ्यासेन प्रथमोत्तमयोरेव याव-त्संख्यापूरणं अभ्यासेन, संख्यापूरणं स्यात्। अभ्यास-प्रकृतित्वात्। अभ्यासः प्रकृतौ यासां ता अभ्यासप्रकृतयः इति व्यधिकरणो बहुव्रीहिः। तासां भावः अभ्यासप्रकृतित्वं, तस्मात्। प्रकृतौ तावत् एकादशैव सामिधेनीरन्वाः। तत्र प्रथमोत्तमयोः त्रिस्त्रिरभ्यासेन पञ्चदशत्वं संपद्यते। तथा सति सामिधेनीनां अभ्यासप्रकृतिकत्वात् एकविंश-त्यादिकल्पेष्वपि संख्यापूरणं प्रथमोत्तमयोरभ्यासेनैव स्यात्। एकादशानां प्रथमोत्तमयोः त्रिस्त्रिरभ्यासेन पञ्च-दशत्वं, षड्वारंषड्वारमभ्यासेन एकविंशतित्वं, प्रथ-मायाः षड्वारं उत्तमायाश्च नववारं अभ्यासेन चतुर्विं-शतित्वं इत्यादि। इति द्वितीयः पूर्वपक्षः।

**अविशेषान्नेति चेत्। २८ ॥**

दर्शपूर्णमासयोः एकविंशत्यादिषु काम्येषु सामिधेनी-कल्पेषु संख्यापूरणं अभ्यासेन कर्तव्यं इति पूर्वपक्षिणा उक्ते, अविशेषात् प्रकृतौ विकृतौ च अविशेषप्रसङ्गात् नाभ्यासेन संख्यापूरणं इति चेत् कश्चित् ब्रूयात्।

**स्यात्तद्धर्मत्वात् प्रकृतिवदभ्यस्येताऽऽसंख्यापूर-णात्। २९ ॥**

पूर्वपक्षी उत्तरमाह। स्यात् अभ्यासः तद्धर्मत्वात् प्रकृतिधर्मकत्वात् विकृतेः। तस्मात् आ संख्यापूरणात् अभ्यस्येत, प्रथमोत्तमयोः तावत्कृत्वः अभ्यासः कर्तव्यः। प्रकृतिवत् यथा प्रकृतौ आ पञ्चदशसंख्यापूरणात् अभ्य-स्यते तद्वत्।

**यावदुक्तं वा, कृतपरिमाणत्वात्। ३० ॥**

द्वितीयं पूर्वपक्षं वाशब्देन व्यावर्त्य सिद्धान्तमाह। यावदुक्तं अभ्यस्य एकादशानां ऋचां 'त्रिः प्रथमा-मन्वाह त्रिरुत्तमाम्' इति उक्तया रीत्या पञ्चदशत्वं संपाद्य ततोऽधिका संख्या ऋगागमेन पूरयितव्या। 'त्रिः प्रथमामन्वाह त्रिरुत्तमां' इति कृतं परिमाणं अभ्या-सस्य। ततोऽधिकवारमभ्यासः कर्तुं न शक्यः। तस्मात् यावदुक्तमभ्यस्य अवशिष्टानामागमः।

**अधिकानां च दर्शनात्। ३१ ॥**

सिद्धान्ते युक्त्यन्तरमाह। सप्तदशसामिधेनीके अग्नी-षोमीये पशौ 'पृथुपाजा० तं सबाधः०' इति ऋचोः अधिकयोः आगमितयोः दर्शनात् अन्यत्रापि अधिक-संख्यापूरणं ऋगागमेनेति गम्यते। अधिकानां इति बहुवचनमुपलक्षणम्।

**कर्मस्वपीति चेत्** । ३२ ॥

काम्येषु एकविंशत्यादिषु सामिधेनीकल्पेषु यदि आगमेन संख्यापूरणं स्यात्, तदा गायत्रविशेषरूपेषु धुरिसामकर्मस्वपि अभ्यासो मा भूत् । इति चेत् कश्चित् ब्रूयात् ।

**न, चोदितत्वात्** । ३३ ॥

सिद्धान्ती उत्तरमाह । नैतदेवम् । धुरिसामकर्मसु 'आवृत्तं धूर्षु स्तुवते' इति अभ्यासस्य चोदितत्वात् युक्तोऽभ्यासः । तस्मात् एकविंशत्यादिषु काम्येषु सामिधेनीकल्पेषु 'त्रिः प्रथमामन्वाह त्रिरुत्तमां' इति यावदुक्तं अभ्यस्य ततोऽधिका संख्या ऋगागमेनैव पूरयितव्या इति सिद्धान्तः । **के.**

* **अभ्यासेन** सामिधेनीनां नित्या पञ्चदशसंख्या (आद्यन्तयोरभ्यासेन) विहिता 'त्रिः प्रथमामन्वाह त्रिरुत्तमां' इति, दर्शपूर्णमासयोः । **भा.** १०।५।८।२७. * **अभ्यासात्** भावनाभेदः तेन च कर्मभेदः । **वि.** २।२।२. * अभ्यासात् भेदः आग्रयणानां त्रयाणाम् । **संकर्ष.** ३।१।१६. * **अभ्यासस्य** पुनर्विधानलक्षणस्य भेदकत्वं युक्तं विधेः अप्रवृत्तप्रवर्तनस्वभावत्वात् अन्यतः प्राप्तेः विधित्वव्याघातापत्तेः । **सु. पृ.** ८२०.

**अभ्यासे च तदभ्यासः कर्मणः पुनःप्रयोगात्** । १०।६।१०।२९ ॥

गवामयने 'आवृत्तं पृष्ठ्यं षडहमुपयन्ति' इति श्रूयते । द्वादशाहे श्रुतं 'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति, तत् चोदकेन प्राप्तम् । तत्र षडहस्य अभ्यासे प्रतिषडहान्तं तदभ्यासः मधुभोजनाभ्यासः स्यात् । कर्मणः षडहकर्मण एव पुनःप्रयोगात् पुनःपुनःप्रयोगात् । षडहान्ते च मधुभोजनं विहितम् । तस्मात् षडहावृत्तौ प्रतिषडहान्तं मधुभोजनं इति पूर्वः पक्षः ।

**अन्ते वा, कृतकालत्वात्** । ३० ॥

'संस्थिते पृष्ठ्ये षडहे मध्वाशयेत् घृतं वा' इति द्वादशाहे विहितं भोजनं चोदकेन गवामयने प्राप्तं आनन्तर्येण कृतानां षडहानां अन्ते सकृदेव कार्यं, न तु प्रतिषडहान्ते । कृतकालत्वात् । कृतो हि भोजनस्य कालो निश्चितः 'संस्थिते षडहे' इति । संस्थानं समाप्तिः षडहगतस्य व्यापारस्य उपरमः । न च पुनःषडहं कुर्वाणः षडहगतात् व्यापारात् उपरत इत्युच्यते । न च कर्तुरनुपरतौ षडहः संतिष्ठते । तस्मात् आनन्तर्येण कृतानां षडहानां सर्वेषामन्ते सकृदेव मध्वाद्यशनं, न प्रतिषडहान्ते इति सिद्धान्तः । वाशब्दः पूर्वपक्षव्यावृत्त्यर्थः । **के.**

**अभ्यासाधिकरणम्** । अभ्यासन्यायः । अभ्यासाधिकरणन्यायः । अभ्यासात् कर्मभेदः ॥

**एकस्यैवं पुनःश्रुतिरविशेषादनर्थकं हि स्यात्** । २।२।२।२ ॥

**भाष्यं**— 'समिधो यजति' 'तनूनपातं यजति' इत्येवमादिः पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः किमेकमपूर्वं चोदयति, किं प्रत्यभ्यासमपूर्वभेद इति । शब्दान्तरे कर्मभेद उक्तः । इह स एव शब्दः पुनःपुनरुच्चार्यते । तस्मादेकमेवात्रापूर्वम् । नन्वपूर्वान्तरमविदधत् अनर्थको भवति । सत्यमेव अप्रयोजनो भवति, बहुकृत्वोऽपि चोच्चार्यमाणो नान्यार्थो भवति । यत् प्रथमे उच्चारणे गम्यते, शततमेऽपि तदेव गम्यते । तस्मात् पञ्चकृत्वोऽभ्यस्तो यजतिशब्दः एकमपूर्वं चोदयति । न चाभ्यासः अनर्थको भविष्यति, तनूनपादादीर्देवता विधास्यति । तस्मादेकमपूर्वम् । **एवं प्राप्ते ब्रूमः** । एकस्यैवं पुनःश्रुतिः स्यात् । कर्मभेदं कुर्यादित्यर्थः । तावत्येव विधीयमाने, असति कस्मिंश्चिद्विशेषे, पुनःश्रुतिरनार्थिका भवेत् । ननूक्तं न शक्नोत्यर्थान्तरं विधातुमिति । उच्यते । 'समिधो यजति' इत्यपि प्रथमः अनुवाद एव, 'दर्शपूर्णमासाभ्यां यजेत' इति यागः प्राप्त एव । तत्र देवता न शक्या विधातुम् । श्रुतिप्राप्ता हि तत्र देवता । इयं वाक्यात् प्रकरणाद्वा, तयोर्विकल्पो न न्याय्यः । स एष देवतायागसंबन्धो विधीयमानः अक्रियमाणे यागे न शक्यः कर्तुमित्यनर्थकः स्यात् । क्रियमाणे तु शक्यते । तस्मादभ्यसितव्यो यागः । प्रत्यभ्यासं चादृष्टभेद इति । न च यत् समित्संबन्धेन क्रियते, तत् तनूनपात्संबन्धेन, भिन्नत्वात्तयोः । अतो न विकल्पः । **प्रयोजनं** पूर्वपक्षे सकृत् प्रयोग इति, सिद्धान्ते पुनःपुनः प्रयोग इति ।

**वा**-- शब्दान्तराधिकरणप्रत्युदाहरणरूपेण अभ्यासस्य पूर्वपक्षः सुखमभिधीयते, इति तदनन्तरमारम्भः । तत्र 'समिधो यजति, तनूनपातं यजति' इत्यादिषु समिदादिशब्दान् अपोद्धृत्य 'यजति' इत्येतत् पञ्चकृत्वोऽभिहितं किमेकस्य कर्मणो वाचकं, अथानेकस्य इत्युदाहृतम् । तदाक्षिप्यते । '**गुणो वा नामधेयं वा समिदादिपदं भवेत् । ताभ्यामेव च भेदोऽत्र किमभ्यासः करिष्यति ॥**' षडपि भेदहेतवः पृथग्भूताः स्वसामर्थ्यमात्रव्यापारफलाः दर्शयितव्याः, तत् यावदत्र गुणनामधेययोर्भेदकत्वं नापनीयते, न तावदभ्यासस्य परभागलाभः अस्ति, इत्यन्यदुदाहर्तव्यम् । न च तत् संभवति । कुतः ? '**प्रयुज्यते हि वेदेषु नाख्यातं केवलं क चित् । नाम किं चित् प्रयुक्तं चेत् तस्य चोक्तं गतिद्वयम् ॥**' 'ऐन्द्रवायवं गृह्णाति' इत्येवमादीनि हि सर्वाणि परस्परासंगत्या औत्पत्तिकगुणयोगात् भिद्यन्ते । 'भिन्ने जुहोति' 'स्कन्ने जुहोति' इत्यादीन्यपि 'फलं चाकर्मसंनिधौ' इत्यनेन न्यायेन ( २।३।१२। २५ ) निमित्तं प्रति उपादीयमानत्वात् भिद्यन्ते । निमित्तसंबन्धपरत्वाच्च नाभ्यासानर्थक्यं इत्यभेदकत्वम् । **ये तु** पञ्चशारदीयेषु 'तान् पर्यग्निकृतान्, तान् पर्यग्निकृतान्' इत्येवं अभ्यासमुदाहरन्ति, **तेषां** प्राकृतपर्यग्निकरणानुवादप्रसरणसामर्थ्यं तत् । न वा अत्र यजतिः श्रूयते, यस्याभ्यासात् भेदः स्यात्, इति न किं चिदुदाहरणम् । यथोदाहृतेष्वेव तु समाधिः । '**प्रायेणाख्यातसंबन्धि नामेष्टं पारतन्त्र्यभाक् । तस्यैव प्रथमं तेन भेदाभेदनिमित्तता ॥**' यानि उपादेयार्थानि नामपदानि, तानि तावत् आख्यातपरतन्त्रत्वात् तदनुसारीणि सन्ति तद्वृत्तिं प्रतीक्षन्ते । तच्चेत् प्रकृते निविष्टं, नामपदमपि तस्यैव गुणविधिर्नामधेयं वा । अथ तेन अपूर्वं परिकल्पितं अतस्तद्गामि नामपदं, इत्येवं भेदाभेदयोरवगतयोः पश्चात् आगच्छत् समिदादिपदं अकिंचित्करत्वादुदास्ते, तेन तत् अपोद्धृत्य आख्यातमात्रं विचार्यते । ननु एवं सति संज्ञागुणयोः अभेदकत्वप्रसङ्गः । तत्र **तौ भेदकौ**, यत्र आख्यातपदं न व्याप्रियते । तथा चोदाहरिष्यति 'अथैष ज्योतिः' 'वाजिभ्यो वाजिनं' इति । वाजिने तावत् नैवाख्यातपदं श्रूयते । ज्योतिरादौ अपि आख्यातस्य गुणफलसंबन्धव्यापारेण प्रकृतनिवेशसंभवे सति ततः पूर्वप्रवृत्तया संज्ञयैव भेदो भविष्यति । यत्रापि आख्यातस्य स्वरूपेण प्रकृतकर्मनिवेशोपपत्ते सति तत्रासंभवन् गुणो विधीयते, तत्राप्यसौ भेदकः यथाऽत्रैव अभ्युपेत्यवादे वक्ष्यति 'स एष देवतायागसंबन्धो विधीयमानः' इत्यादि । तच्च आख्यातस्य भेदशक्तौ विहतायां भवति, इति तदेव तावत् प्रथमं परीक्ष्यते । 'किमेकमपूर्वं' इति ( भाष्ये ) फलतः कर्मभेदाभेदोपन्यासः । यद्वा किमेकं कर्म अपूर्वं चोदयति, उत पञ्चापि कर्माणि अपूर्वाणि इति । किं प्राप्तं ? एकमपूर्वमिति । कुतः ? '**प्रत्ययार्थः समानोऽपि धातुभेदेन भिद्यते । धातोरपि समानत्वे केन भेदोऽवधार्यते ॥**' अपिच '**पूर्वं तेनैव शब्देन बुद्धौ कर्म निवेशितम् । न भेदं प्रत्यभिज्ञानात् पुनःश्रुत्या प्रपद्यते ॥**' यथैव यजतिशब्दः सकृत्प्रत्यक्षेणावगतः, पुनरुच्चारणे स एवेति प्रत्यभिज्ञानात् न भिद्यते, तथा तदर्थोऽपि । यथा चात्रैव वृद्धबोधनकृत् प्रत्यक्षं अनर्थकमपि भवत् न शक्नोति शब्दान्तरत्वं कर्तुं, एवं पुनःश्रुतिः अर्थान्तरत्वम् । नहि आनर्थक्यं नाम क चित् प्रमाणवर्गे अन्तर्भवति । यच्च वेदः अवबोधयति, तन्मात्रमेव तत्प्रमाणवादिभिरभ्युपगन्तव्यम् । तदिह एकशब्देन अभेदे वेदेनावगमिते योऽन्यत्वं कल्पयति, तेन वेद एव अप्रामाणीकृतः स्यात् । न च प्रमाणावगतमानर्थक्यं दोषाय । अस्ति चेयमपि गतिः, प्रयोगवचनसंस्पृष्टः शब्दः अर्थमवदधत् स्वयं प्रयोगित्वेन गृह्यते इति । **अथवा** आभीक्ष्ण्यादिद्योतनार्थः अभ्यासो भविष्यति । अस्ति हि लोके द्विर्वचनात् अतिरेकेणापि यावत्कृत्वः अभ्यस्ते विवक्षितार्थप्रकाशनं भवति, तावत्कृत्वः अभ्यासः । तथा च पञ्चेन्द्रोपाख्याने वृद्धकुमारीवरप्रार्थने 'पतिं मे देहि' इति पञ्चकृत्वः अभ्यासः श्रूयते । न च यथा तत्र देवतायाः छलग्राहित्वं, एवमिह कस्य चित्, येन पतिपञ्चकवत् ( युधिष्ठिरादिपञ्चकवत् ) पञ्चयागकल्पना स्यात् । **अथवा सर्वेष्वपि उच्चारणेषु विधौ आश्रीयमाणे कर्मैकत्वं विज्ञायते यथा शाखान्तरीयेषु**

ज्योतिष्टोमादिवाक्येषु । तेन तुल्यार्थानां वैकल्पिकत्वात् तदेव कर्म कदा चित् समिद्वाक्येनाभिधास्यते, कदा चित् तनूनपाद्वाक्येन । नहि समानकार्यत्वेन व्रीहियवयोः एकस्यानर्थक्यात् अर्थान्तरसाधकत्वं विज्ञायते । **अथवा** तनूनपादादिदेवताविधानार्थत्वात् नानर्थक्यम् । कर्मविधाने हि सति नामधेयत्वं भवेत्, अनुवादे तु नामधेयविधिर्न संभवति इति गुणविधित्वम् । तस्मादपि अकर्मान्तरम् । यत्रापि च प्रदेशान्तरे तावेव शब्दार्थौ प्रत्यभिज्ञायेते, तत्रापि हि गृहान्निर्गतस्य पुनर्गृहजनप्रत्यभिज्ञायामिव अर्थान्तरत्वमशक्यं वक्तुं, किमुत इह अनन्तरविपरिवृत्त्या वलीयस्या अवरुद्धायां बुद्धौ । यदि च प्रत्युच्चारणमर्थान्यत्वं भवेत्, तदा अनित्यव्यक्तिशब्दार्थत्वप्रसङ्गः । किंच '**गत्वादिवन्न चैतेषु यागत्वं व्यतिरिच्यते । व्यक्त्यैकत्वे निरूढे च कथं कर्मान्तरं भवेत्** ॥' यद्यपि च पुनःश्रुत्यर्थवत्त्वाय पञ्चकृत्वः यागोऽभ्यस्येत, तथापि ज्योतिष्टोमवदेव अकर्मान्तरत्वं स्यात् । न चात्र अभ्यासहेतुरस्ति, वाक्यसंयोगेन देवतानां वैकल्पिकत्वात् । तस्मादेको याग इति ।

**एवं प्राप्ते ब्रूमः** । एकस्यापि पुनःश्रुतिः एवं स्यात् यथा शब्दान्तरं भेदकं, तथेत्यर्थः । कथं ? '**आख्यातप्रत्ययः पूर्वं विधत्ते कर्म शक्तितः । अन्येनाक्षिप्तशक्तिस्तु तदाकाङ्क्षत्यनूदितम्** ॥' यदि हि विपरिवृत्तिः अनुवादकारणं स्यात्, ततो न कर्मान्तरमध्यवसीयेत । न तु विपरिवृत्तिकृतमनुवादकत्वं, किं तर्हि ? '**अनुवादविशेषत्वं प्रकृतप्रत्ययाद् भवेत् । तत्सामान्यप्रसिद्धिस्तु स्ववाक्यादेव लभ्यते** ॥' यदा हि विधायकस्य विधिशक्तिः धात्वर्थादुत्तार्यते, तदा अनेकविध्यशक्तेः धात्वर्थानुवादः प्रार्थ्यते । तां च प्रार्थनां विपरिवृत्तिः पूरयति । धात्वर्थोच्चारणं च विधिशक्तेः विधेयान्तरोपादाननिमित्तं, यथा 'व्रीहिभिर्यजेत' 'दध्ना जुहोति' इति । सर्वत्रैव अनेकार्थोपादाने विधिशक्त्यनेकत्वासंभवात् एकं किं चिदनूद्यतां, इत्यपेक्षायां सत्यां 'यत् विपरिवर्तते तत्' इत्यवधारणं भवति । ततश्च दध्यादेरप्राप्तत्वात् धात्वर्थोऽनूद्यते । यदा तु खलु नैव अनेकं विधेयमुपादीयते, तदा नैव तस्मिन् वाक्ये 'अनूद्यतां किं चित्' इत्यपेक्ष्यते । ततश्च अप्राप्ते सामान्यानुवादे तत्सिद्ध्यपेक्षिणी विशेषानुवादकारणभूता किं विपरिवृत्तिः करिष्यति । तस्मात् न 'यत् प्राप्तं तदनूद्यते' इति लक्षणं, किं तर्हि ? 'यत् अनूद्यतां इत्यपेक्षितं, तत् प्राप्तौ सत्यां अनूद्यते' न एकाङ्गविकलं अनुवादत्वापेक्षणेन, प्राप्तिबुद्धिमात्रेण वा । तत्र **यथैव** अनुवादापेक्षणे सत्यपि प्राप्त्यभावात् विशिष्टविधानरूपेण विधिर्भवति, **एवं** प्राप्तिबुद्धौ सत्यामपि अनुवादत्वानपेक्षणात् विधेः कर्मान्तरत्वं सत्यपि धातुप्रत्ययैकत्वप्रत्यभिज्ञाने ।

यत्तु बलीयस्या विपरिवृत्त्या शतकृत्वोऽपि उक्ते तद्बुद्धिर्नापैति इति, प्रमाणबलाबलज्ञानात् सर्वं संभाव्यमेव तत् । तथाहि '**श्रुतेः कर्मान्तरज्ञानं संनिधेरेककर्मधीः । तत्र श्रुतिबलीयस्त्वं जानतां कथमेकता** ॥' विधायिका हि श्रुतिः अन्यानाक्षिता धात्वर्थभावनयोरेव संनिरुद्धा तत्रैव अप्राप्तविषयस्वभावं विधित्वं प्रसुवाना पञ्चमस्थानाख्यप्रमाणकृतां प्राप्तबुद्धिमुपमृद्य विधेयत्वक्षमं कर्मान्तरं कल्पयति । स चेत् विधिः श्रुतिमनुरुध्येत, कर्मान्तरमध्यवस्यति । अथ संनिधिं ( अनुरुध्येत ), ततो न कर्मान्तरत्वम् । यत्र पुनः विधिश्रुतिः अन्यत्र व्याप्रियते, तत्र अविरोधात् संनिधिकृतं कर्मैकत्वज्ञानं भवति । तस्मादिह विधेययागव्यक्तिफलत्वोपात्तसामान्यैकत्वनिमित्तैव प्रत्यभिज्ञानभ्रान्तिः । नहि व्यक्तिप्रत्यभिज्ञाने किं चित् कारणमस्ति ; यदत्र परमार्थेन प्रत्यभिज्ञायते, तदेकत्वे न कश्चित् विवादः । तथाहि, '**स्थिते यागत्वसामान्ये पशुसोमेष्टिकर्मणाम् । विशेषव्यक्तिरूपेण भेदः सर्वत्र चिन्त्यते** ॥' **ननु** चात्र यजिश्रुत्यैव एककर्मविज्ञानात् न वक्तव्यं संनिधिकृतमेव एकत्वमिति । **नैतदेवम्** । '**यागोऽयमिति विज्ञानं यजिश्रुत्योपजन्यते । स एवेत्यन्य एवेति व्यापारोऽस्या न विद्यते** ॥' नहि यः पूर्वविहितो यागः, स एवायमिति यजतिशब्दो वदति । औदासीन्येनैव तु अभिदधाने शब्दे संनिधिकृतां अभेदबुद्धिं अनभिजानतां श्रुतिनिमित्ता प्रत्यभिज्ञानभ्रान्तिः । ननु तव व्यक्तेः अशब्दार्थत्वात् अभिन्नं सामान्यं श्रुत्या विज्ञायते ।

( परिहरति– ) येनैव व्यक्तिः अशब्दार्थः, तेनैव अनेककर्मतां श्रुतिर्बोधयति इति । कथं ? '**व्यक्तयो हि विधीयन्ते सामान्येनोपलक्षिताः । तस्मात् तद्गतमेवात्र भेदाभेदनिरूपणम् ॥**' यत्सामान्यं शब्दार्थभूतं, तस्य अननुष्ठेयत्वेन अविधेयत्वात् सर्वत्र व्यक्तय एव विधीयन्ते । तत्र 'समिधो यजति' इत्येका व्यक्तिः असाधारणा चोद्यते, 'तनूनपातं यजति' इत्यपरा । तस्मात् पञ्च व्यक्तयः इति सिद्धम् ।

यत्तु अत्र गकारादिवत् व्यक्त्याकृतिभेदो नास्तीति । सत्यं नास्ति, किंतु '**यन्मात्रमेकं कर्मेति स्वरूपेणावधार्यते । ततः परं न भेदोऽस्ति, प्राक् तस्माद्भेदनिश्चयः ॥**' यथैव गकारादीनां वर्णत्वशब्दत्वगुणत्वेषु सत्सु द्रुतादिभेदस्य परोपाधित्वात् गकारादिरूपैकत्वसिद्धेः गत्वादिमात्रं न कल्पितं, तथा अत्र सत्ताकर्मयागत्वेषु समिद्यागादिपर्यन्तेषु सत्सु देशकालयजमानादिभेदात् द्रुतादिवृत्तिस्थानीयात् न भेदः । तथाहि '**पौर्णमासीसमिद्यागादामावास्यो न भिद्यते । यजमानान्तरेष्वेवं देशभेदेष्ववस्थितम् ॥**' न च यत्र प्रत्यक्षेण केवलेन भेदः अवगम्यते, तदेवैकं भिद्यते, शब्दस्यापि प्रामाण्याविशेषात् । अतोऽत्र शब्दान्तरादिषट्कावधिरेव भेदः अवधारयितव्यः । नहि इष्टिपशुसोमैकाहाहीनसत्रेषु परोपाधिर्भेदप्रत्ययो विपर्येति वा कदा चित् । तेन तासु विधेयरूपासु व्यक्तिष्वेव नित्यासु अभिव्यञ्जकानि भिद्यन्ते । तेभ्यश्च फलस्वरूपसिद्धिः यागत्वमेव वा एवैकं अवान्तरसामान्यं, नान्यत् किं चित् । ननु एकाहत्वादीन्यपि अवान्तरसामान्यानि इष्यन्ते, न, कालविशेषयोगादेव दण्डयादिवत् अभिन्नशब्दप्रत्ययप्रवृत्तिसिद्धेः । एकेन हि अह्ना योगात् एकाहत्वं, द्व्यादिभिरहीनत्वं प्राक् द्वादशाहात्, स तु कथमपि उभयात्मा, तदवधिकमेव च आसहस्रसंवत्सरं सततकालयोगनिमित्तं सत्रत्वं, हविर्विशेषयोगात् इष्ट्यादित्वमिति सिद्धम् । अथापि अवान्तरसामान्यानि पुनः कल्प्यन्ते, तथापि अस्मत्पक्षाविरोधः । एवं यदि ज्योतिष्टोमत्वादीनि देशकालादिभेदाच्च तद्व्यक्तयः अत्यन्तातिरेकिण्यो भवन्ति, तथाप्यदोषः । तथा यद्यपि देवतोद्देशद्रव्यत्यागात्मकत्वात् सर्व एवैको यागः कल्प्यते तेष्वपि भेदवत्तैः तदनुष्ठाननानात्वावगमात् व्यवहारसिद्धिः । **ननु** एवं सति ज्योतिष्टोमशब्दाभ्यासवत् समिदादियागाभ्यासेषु अकर्मान्तरत्वप्रसङ्गः, ( परिहरति– ) **सर्वथा** तावत् अपूर्वभेदात् धर्मव्यवस्थाऽऽदीनि सिध्यन्ति । तथापि तु येह कर्मभेदबुद्धिः, ग्रहयागेषु च अभ्यासभेदप्रसिद्धिः, तत्र एतन्निमित्तं इह सकलयागरूपानुष्ठानभेदचोदनात्, तत्र पुनः समस्ताभ्यासात्मकस्य ज्योतिष्टोमसंज्ञत्वात् यद्यपि प्रत्यभ्यासं यागत्वमस्ति न तु ज्योतिष्टोमत्वं, इति अभ्यासे अवयवबुद्धिः, नेतरत्र अवयव्यन्तररूपानुपादानात् इति विशेषः । एतज्ज्ञानस्य च प्रयोजनं पशुसोमाधिकरणे ( २।२।६ ) वक्ष्यामः । 'तस्मादभ्यसितव्यो यागः' इति च **भाष्यं** एतत्पक्षाश्रयणेनैव । अथवा भिन्नास्वेव व्यक्तिषु सामान्यापेक्षं अभ्यासवचनम् । 'ननूक्तं न शक्नोत्यर्थान्तरं विधातुमिति' ( इति भाष्यं ) विधिशक्तेः तनूनपादादिदेवताविधानाक्षेपे सति विपरिवृत्तेः अविरोधः इति मन्यते । तत्र 'तत्प्रख्यं चान्यशास्त्रं' ( १।४।३।४ ) इत्येवं समिदादिपदानां क्रमविनियुक्तैर्वलिङ्गमन्त्रवर्णकल्पितदेवतासंबन्धद्वारेण नामधेयत्वे सति अविधेयत्वात् नास्ति विधिशक्त्याक्षेपः इति वक्तव्ये देवतायागसंबन्धविभ्रान्तोपन्यासः अभ्युपेत्यवादेन । यत्तावत् भवान् अप्राप्तत्वात् प्रथमस्य यागविधित्वं मन्यते तदयुक्तं, **तस्यापि प्रधानयागानुवादत्वात्** । तत्र समिदादिशब्दैः द्रव्यं देवता वा विधीयते, उभयमपि च 'आग्नेयोऽष्टाकपालः' इत्यादिभिः उत्पत्तिवाक्यैर्विहितेन द्रव्यदेवतेन विरुध्यते । अवश्यं च एतद्वाक्यकृतो देवतायागसंबन्धः कर्तव्यः, स च यागान्तरादृते न संभवति इति प्रतिपादिते गुणविधित्वे कर्मान्तरत्वमापद्यते । एवं पूर्वत्र कर्मणि उत्तरोत्तरगुणविध्यसंभवात् सर्वेषां कर्मान्तरत्वं, इति व्यर्थो गुणविध्युपन्यासश्रमः । गुणविधित्वमपि न तावत् द्रव्यं ईदृशेन शब्देन संभवति इति व्याख्यातं सक्त्वधिकरणे ( २।१।४ ) । विशेषेण च यजतेः कर्मभूतद्रव्यसंबन्धो न घटते । न वा अयं देवताविधिः इति नवमे वक्ष्यते । तस्मात् कर्मविधिभिरेव भेदसिद्धिः ।

**शा**— ' प्रत्यक्षप्रत्यभिज्ञानाच्छब्दैकत्वं प्रतिष्ठितम् । तदेकत्वात् तदर्थोऽपि न भेदं प्रतिपद्यते ॥ ' तस्मादेको यागः, तदेकत्वाच्च भावनाऽपूर्वयोरपि एकत्वम् । इति प्राप्तेऽभिधीयते, ' विधेस्तावत् स्वभावोऽयमप्रवृत्तप्रवर्तनम् । धात्वर्थभावयोरेव तच्च श्रुत्याऽवगम्यते ॥ ' तस्मात् यागभेदात् भावनाभेदः, तद्भेदाच्च अपूर्वभेदः ।

**सु**—धात्वर्थाभेदात् भावनाया अप्यभेदः इति प्रत्युदाहरणरूपेण पूर्वपक्षसौकर्यात् **अनन्तरसंगतिः** ।

**सोम**—**सूत्रार्थस्तु**,एकस्य पुनः श्रुतिरपि एवं शब्दान्तरवत् भेदिका, अविशेषात् दध्यादिवत् विधेयविशेषाभावात् । अन्यथा हि वाक्यमेव अनर्थकं स्यादिति ।

**वि**—' समिधो यजतीत्यादावेकत्वमुत भिन्नता ।, धातुप्रत्यययोरैक्यादेकत्वं भिन्नता कुतः ॥, अभ्यासात् कर्मभेदोऽत्र नामत्वान्न विधिर्गुणे । विधित्वं श्रुतितो भाति संनिधेरनुवादता (भाति, सा च श्रुतितो दुर्बला)॥'

**भाट्ट**—दर्शपूर्णमासप्रकरणस्थे 'समिधो यजति । तनूनपातं यजति । इडो यजति । बर्हिर्यजति । स्वाहाकारं यजति' इत्यादौ यागस्यापि प्रत्यभिज्ञायमानत्वेन अभेदान्न भावनाभेदः । न चाभ्यासात् भेदो यागस्य । अभ्यासस्यैकत्वसाधकत्वेन विरुद्धत्वात् । न च विधिपुनःश्रवणरूपस्याभ्यासस्य विधेययागादिभेदकत्वं , ' दध्ना जुहोति ' इतिवत् विधेर्देवतारूपगुणसंक्रान्तशक्तिकत्वेन यागविषयत्वाभावात् । न च यागोत्पत्तिवाक्यस्यगुणावरोधात् नोत्पन्नवाक्येन गुणविधिः, अगत्या प्राथमिकवाक्यस्थसमित्पदस्य तत्प्रख्यन्यायेन नामधेयत्वाङ्गीकारात् । वस्तुतस्तु, यदि याज्यामन्त्रवर्णात् समित्प्राप्तिः, तदा सा तनूनपादादीनामप्यविशिष्टा । अतः उपांशुयाजानुवादेन विद्वद्वाक्यविहितकर्मानुवादेन वा पञ्चस्वपि देवताविधिः । न च संभवत्प्राप्तिकता, याज्यामन्त्रवत् अनुमन्त्रणमन्त्रेभ्योऽपि विकल्पेन वसन्तादिदेवताप्राप्तिसंभवेन एतेषां नियमविधित्वोपपत्तेः । अतश्चानन्यपरविधिपुनःश्रवणाभावान्न कर्मभेदः । इति प्राप्ते, उभयाकाङ्क्षाकललभ्ययाज्यामन्त्राणामेव देवताकल्पकत्वस्य पुरःस्फूर्तिकत्वेन अन्यतराकाङ्क्षाकललभ्यानुमन्त्रणमन्त्रेभ्यो देवताकल्पकत्वानुपपत्तेः न समिदादिपदानां देवतानियामकत्वम् । अतश्चोत्पन्नदार्थस्य संभवत्प्राप्तिकत्वात् पदश्रुत्यादिना विधेर्धात्वर्थभावनाविषयत्वप्रतीतेर्विहितविधानायोगात् विधेयताऽवच्छेदकतया वैजात्यसिद्धिः । न चैवं तत्प्रख्यन्यायेन समिदादिपदानां नामधेयत्वात् संज्ञयैव भेदसिद्धिः, तत्प्रख्यन्यायेन गुणविधित्वनिराकरणे नामधेयकार्यस्यैकेनैव एकस्मिन् कर्मणि सिद्धे अनेकेषां नामधेयानां वैयर्थ्यप्रसङ्गेन समिदादिपदानां गुणानुवादकत्वेनैव उपपत्तेर्नामत्वानिर्णयात् । सिद्धे त्वभ्यासेन कर्मभेदे एकैककर्मणः एकैकं नामधेयं सार्थकमिति नामत्वनिर्णयः । **प्रयोजनं** उत्तराधिकरणप्रयोजनम् । प्रयोजनान्तराणि कौस्तुभे स्पष्टानि ।

**कौ**—देवताविधिपूर्वपक्षे तासां दृष्टार्थत्वेन विकल्पात् सकृदेव कर्मानुष्ठानम् । आवृत्तिविधिपूर्वपक्षे तु यत्र विकृतिविशेषे अपूर्वार्थे समिद्यागपुनःश्रवणं, तत्रापि तनूनपादादिसंज्ञिकायाः आवृत्तेः समिद्यागाङ्गत्वेन प्राप्तेः पञ्चकृत्वोऽनुष्ठानं,तथा समिद्यागाश्रितस्य फलार्थस्य गुणस्य पञ्चवारमावृत्तिः । सिद्धान्ते तु प्रकृतौ प्रयाजानामदृष्टार्थत्वात् पञ्चानामप्यनुष्ठानम् । विकृतिविशेषे च पुनःश्रुतस्य समिद्यागमात्रस्यैवानुष्ठानं , काम्यश्च गुणस्तत्रैवानुष्ठेयः इति । पृ. १५२.

**मण्डन**—' भूयःश्रुतिश्च समिदादियजीन् भिनत्ति । '

**शंकर**— ' अभ्यासादपि कर्म भित् ।' भित् भिन्नम् ।

* संज्ञान्तरस्यापि गुणोपबन्धात् फलोपबन्धाद्वा विधायकस्य गुणे फलेच्छाव्यापृतत्वेन यज्यर्थे व्यापाराभावात् **अभ्यासन्यायेन** अर्थान्तरे वृत्त्ययोगात् कथं तद्विषयभूतो यागः संज्ञान्तरस्य संज्ञी स्यात् इत्याशङ्क्य । **सु. पृ. ८२२-८२३.** * संज्ञायाः विधेयविशेषप्रतिपत्त्यर्थत्वात् भावनानिरपेक्षस्य च धात्वर्थस्य विधेयत्वायोगात् विधेयभावनाभेदं विना आनर्थक्यापत्तेः अभ्यासन्यायेन भावनाभेदकत्वं भविष्यति इत्याशङ्क्य उक्तं , विधेः अप्रवृत्तप्रवर्तनस्वभावत्वात् अन्यतः प्राप्तेर्विधित्वव्याघातापत्तेः पुनर्विधानलक्षणस्याभ्यासस्य भेदकत्वं युक्तम् । संज्ञायास्तु अप्रवृत्तप्रवर्तनस्वभावत्वाभावात् नाभ्यासन्यायविषयताऽस्ति इत्याशयः । **सु. पृ. ८२०.** * ऐन्द्राग्नविध्येक-

वाक्यतया तत्प्रशंसार्थं केवलामावास्यावाक्यमेवानुवादः इति विशेषग्रहणात् विधिपुनःश्रवणाभावाच्च **नाभ्यासन्यायावतारः** । **कु.** २।३।२९. ॥ **अभ्यासाधिकरणस्य** प्रत्युदाहरणं संख्याधिकरणम् (२।२।७।२०) । **कौ.** २।२। ७।२० पृ. २३२. ॥ **अभ्यासाधिकरणे** यजिसमभिव्याहृता संज्ञा न भेदिका इति चेत् । उच्यते, अनन्यपराख्यातसमभिव्याहृता हि संज्ञा सत्यं न भेदिका । **तौता.** २।३।४।५ पूर्वपक्षे. ॥ **अभ्यासाधिकरणन्यायः** । अनन्यपरपुनःश्रवणस्य भेदकत्वमावश्यकं इति न्यायस्वरूपम् । अत्र 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति यजतिपदस्य अभ्यासात् कार्यभेदोऽभिधीयते । यद्यपि अभ्यासात् यागभेदवत् भावनाभेदोऽपि शक्यते वक्तुं, तथापि शब्दान्तरेणापि तत्संभवात् असाधारण्याभावेन नोपन्यस्तः । **कौं.** २।२।२।२ पृ. १२३, अत्र अभ्यासमात्रप्रमाणकः धात्वर्थभेदः सिद्धः । भेदश्चात्र न व्यक्तिमात्रस्य, अपि तु तद्गतजातेरपि, विधेयभेदे विधेयतावच्छेदकभेदस्य औत्सर्गिकत्वात् । पृ. १५१, ॥ **अभ्यासाधिकरणन्यायेन** अनेकादृष्टकल्पनानुविद्धकर्मान्तरत्वकल्पनायां अत्यन्तगौरवापत्तिः । १।३।६।१२ पृ. ९०. ॥ 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां भवति' इत्यत्र किं कालद्वययुक्तविहिताग्नेययागात् यागान्तरं विधीयते, उत स एव यागो विधीयते इति संशये **अभ्यासाधिकरणन्यायेन** कर्मभेदः सिध्यति इति पूर्वः पक्षः । **कु.** २।३।२७. ॥ सत्यपि उपधेयसंकरे, न्यायस्वरूपे असांकर्यात् । अभ्यासे हि उपादेयतां अतन्त्रीकृत्य पारिशेष्येण धात्वर्थे विधेयत्वापादनमेव व्यापारः । अत एव तत्र संनिधिः प्रतिबध्यः, न तु प्रकरणान्तरे इव प्रतिबन्धकः । प्रकरणान्तरस्थले तु न पारिशेष्येण विधेयत्वापादनं व्यापारः । **कौ.** २।३। ११।२४. पृ ७९.

**॥ अभ्यासोऽकर्मशेषत्वात् पुरुषार्थो विधीयते । ६।२।७।२४॥**

अग्निहोत्रस्य यावज्जीविकस्य यावज्जीवं इति पदेन योऽभ्यास उक्तः, स पुरुषार्थो विधीयते । तस्य अकर्मशेषत्वात् अन्यस्य कस्य चित् कर्मणः शेषत्वं अस्य नास्ति । तस्मात् सातत्येन होमः कर्तव्यः, न केवलं सायंप्रातरेव इति पूर्वः पक्षः ।

कुतूहले तु अभ्यासो वा, कर्मशेषत्वात् अकर्मशेषत्वात् इत्यपि च्छेदः, सायंप्रातःकालयोः काम्यप्रयोगविषयत्वात्, नैमित्तिकप्रयोगविषयत्वाभावात् च इति व्याख्यातम् । वाशब्दो निषेधे, नायमभ्यासः अकर्मशेषत्वात्, किंतु नियमः पुरुषार्थः ततश्च सातत्येनानुष्ठानं इति **सोमनाथेन** व्याख्यातम् ।

**तस्मिन्नसंभवन्नर्थात् । २५ ॥**

यावज्जीविकमग्निहोत्रं सातत्येनैव होतव्यम् । परंतु तस्मिन् सतते काले निद्रास्नानाहारादिप्राप्त्या सततं होतुं न शक्यते । एवं असंभवन् प्रयोगः अर्थात्, ल्यब्लोपे पञ्चमी निद्रास्नानाहारादिरूपं अर्थं परित्यज्य अवशिष्टे सतते काले होतव्यम् । अर्थात् अर्थापत्त्या निद्रादिकालव्यतिरिक्ते काले सततं होतव्यम् । इति पूर्वपक्ष एव ।

**न कालेभ्य उपदिश्यन्ते । २६ ॥**

यावज्जीवमग्निहोत्रं निद्रादिकालं परित्यज्य सततं होतव्यं इति सूत्राभ्यां प्राप्तं पूर्वपक्षं निषिध्य सिद्धान्तं सूचयति । न निद्रास्नानाहारादीनां कालेभ्यः अन्यत्र सततं होतव्यम् । अथवा निद्रास्नानादिकालान् परित्यज्य इतरस्मिन् काले सततं न होतव्यम् । कुतः ? यतः 'प्रदोषमग्निहोत्रं होतव्यं व्युष्टायां प्रातः' इति कालविशेषा उपदिश्यन्ते । किंच यथा अग्निहोत्रकाला उपदिश्यन्ते तथा 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायां अमावास्यया यजेत' 'यावज्जीवं दर्शपूर्णमासाभ्यां यजेत' इत्यपि काला उपदिश्यन्ते । न च एकस्मिन् काले भिन्नकर्मणामनुष्ठानं संभवति । तस्मात् सायंप्रातःकालयोः यावज्जीवं प्रयोगः अग्निहोत्रस्य, पूर्णिमाऽमावास्ययोः यावज्जीवं प्रयोगः दर्शपूर्णमासयोः । इति सिद्धान्तः ।

'काले ह्युपदिश्यते' इति सूत्रं **कुतूहले** पठितम् । हि यस्मात् कालः कालविशेषः उपदिश्यते तस्मात् न सततं होमः । इति तदर्थः ।

**दर्शनात् काललिङ्गानां कालविधानम् । २७ ॥** सिद्धान्ते लिङ्गप्रदर्शनार्थं सूत्रम् । काललिङ्गानां कालविशेषबोधकलिङ्गानां दर्शनात् कालविधानं सायंप्रातरादिकालस्यैव होमाद्यर्थं विधानमिति ज्ञेयम् । ' अप वा एष स्वर्गाल्लोकाच्छिद्यते यो दर्शपूर्णमासयाजी सन् पौर्णमासीममावास्यां वाऽतिपातयेत् ' इति । यदि सतते काले होमः स्यात्, तदा कस्यातिपत्तिः स्यात् ? तस्मादपि न सततमभ्यासः किंतु विहिते काले ।

कालविधानं इति पदं य-कुपुस्तकयोर्नास्ति । न च तस्यावश्यकता । **के.**

* **अभ्यासो वा प्रयाजवदेकदेशोऽन्यदेवत्यः** । १०। १।६।३५ ॥ सौत्रामण्यां आश्विनसारस्वतैन्द्रेषु पशुषु ऐन्द्रसावित्रवारुणानां पशुदेवतानां संस्कारकत्वायोगमाशङ्क्य तन्निरासार्थे अभ्यासो० इति सूत्रे ' तद्यथा पशौ पञ्चानां प्रयाजानां चोदकेन प्राप्तानां एकादशसंख्या विधीयते, सा च अन्तरेणाभ्यासं नावकल्पते, इति अभ्यस्यन्ते प्रयाजाः ' इत्यभ्यासेन संख्यापूरणं भाष्यकृत् वक्ष्यति । **सु.** पृ. ८०८.

* **अभ्युच्चयः** नाम ( अत्र ) न किं चित् वस्तुस्वरूपं विद्यते, किंतु उपहोमैः अनूयाजा न बाध्यन्ते इति बाधाभावमात्रं अभ्युच्चयः इत्युच्यते । **टुप्** ११। १।१।१ पृ. २०९६. * अभ्युच्चयः नाम यत् ' इदमिह भवति इति विज्ञाते अपरमपि भवति ' इति विज्ञानम् । ( यथा काष्ठान्याहर शाकमपि आहर इति । शाकलाभे तु शाकोऽप्याहर्तव्यः न तु शाकार्थं पृथक् कालयापनमभिप्रेयते इति ) । **भा.** १०।१।१।१. * अभ्युच्चयः । बाधाभ्युच्चयानुनिष्पादिनी शेषेयत्ताचिन्ता दशमे । **टुप्.** ७।१।१।१ पृ. १५२३.

**अभ्युदये कालापराधादिज्याचोदना स्याद् यथा पञ्चशरावे । ६।५।१।१ ॥**

चन्द्राभ्युदितेष्टौ विचारः किं कालापराधनिमित्तं यागान्तरं चोद्यते, किंवा दर्शकर्मण्येव नैमित्तिकः प्राकृतदेवताऽपनयः इति । तत्र पूर्वपक्षसूत्रमिदम् । अद्यैव यागकाल इति मत्वा दर्शेष्टेः आरम्भः कृतः, तदुत्तरं च चन्द्रस्य अभ्युदये सति कालस्य अपराधो भवति । कालापराधात् हेतोः ' स त्रेधा तण्डुलान् विभजेत्, ये मध्यमाः स्युः तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं ' इत्यनेन इज्याचोदना इज्यायाः दर्शात् यागान्तरस्य चोदना विधिः स्यात् । यथा हविरार्तौ ऐन्द्रे पञ्चशरावे ओदने द्रव्यदेवतासंबन्धेन इज्याचोदना कर्मान्तरं विहितं तद्वत् ।

**अपनयो वा, विद्यमानत्वात् । २ ॥**

पूर्वपक्षं सूत्रेण प्राप्तं वाशब्देन निरस्य सिद्धान्तमाह । नात्र कर्मान्तरविधिः प्राकृतदेवताऽवरुद्धेषु हविःषु देवताऽन्तरविधानासंभवात् । तस्मात् अत्र प्राकृतीनां देवतानां अपनयः क्रियते । अपनयं च कृत्वा तेष्वेव हविःषु देवताऽन्तराणि विधीयन्ते प्राकृतानां हविषां विद्यमानत्वात् ।

**तद्रूपत्वाच्च शब्दानाम् । ३ ॥**

सिद्धान्ते हेत्वन्तरमाह । ' ये मध्यमाः स्युस्तानग्नये दात्रेऽष्टाकपालं निर्वपेत् ' इत्यादीनां शब्दानां तद्रूपत्वात् पूर्वदेवताऽपनयपूर्वकदेवताऽन्तरविधिरूपत्वात् । चकारः हेत्वन्तरसमुच्चयार्थः । अपनयः अग्रहणं त्यागः ।

**आतञ्चनाभ्यासस्य च दर्शनात् । ४ ॥**

सिद्धान्तसाधकहेत्वन्तरपरं सूत्रम् । दधिभावार्थं पयसि पूर्वसिद्धस्य दध्नः प्रक्षेपः आतञ्चनम् । तस्य योऽभ्यासः आवृत्तिः, तस्य दर्शनात् अभ्युदितेष्टिवाक्यैः कर्मान्तरं न विधीयते, किंतु तेष्वेव हविःषु देवताऽन्तरं विधीयते । ' यदि बिभीयात् अभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत् । फलीकृतैस्तण्डुलैरुपासीत, अर्धं दधि हविरातञ्चनार्थं निदध्यात् अर्धं न, यदि अभ्युदियात् तेन आतच्य प्रचरेत् । यदि न, प्रातरेतेन ब्राह्मणान् भोजयेत् ' इत्यनेन आतञ्चनस्य आवृत्तिरुक्ता । यदि नैमित्तिकः प्राकृतदेवताऽपनयः, ततस्तस्मिन् प्राकृते दधनि चरुः कृतः, इति पुनः आमावास्ये दोहे आतञ्चनेन कार्यम् । एवं आतञ्चनाभ्यासस्य दर्शनं देवताविधाने युज्यते, न कर्मान्तरविधाने । चकारो हेत्वन्तरसमुच्चयार्थः । श्रुत्यर्थस्तु **सोमनाथेनोक्तः**— यजमानो यदि किं चतुर्दश्यामेव मया दर्शयागः प्रक्रान्तः, ततः चन्द्रमाः मां अभि मामभिलक्ष्य उदेष्यति इति बिभि-

यात्, तदा महारात्रे त्रिभागावशिष्टायां रात्रौ बुद्ध्वा प्रयोगं प्रक्रम्य फलीकरणपर्यन्तं कृत्वा चन्द्रोदयतदभावौ प्रतीक्षमाण आसीत। तदा सायंदोहनिष्पन्नं यद्दधि, तत् द्वेधा विभज्य अर्धं प्रतिपदि स्वकाले कर्तव्यदर्शार्थे यद्धविः तदातञ्चनार्थं निदध्यात्, अर्धान्तरं च नातञ्चनार्थं निदध्यात्, किंतु तूर्ष्णीं परिपालयेत्। तदेवं सति यदि चन्द्रमा अभ्युदियात्, तदा आतञ्चनार्थं निहितेन दध्ना प्रातर्दोहमातच्य तन्निष्पन्नेन नवीनदध्ना प्रचरेत् यागं कुर्यात्। यदि चन्द्रो नाभ्युदियात्, तदा आतञ्चनार्थं निहितेनार्धेन दध्ना ब्राह्मणान् भोजयेत् इति। **भाट्टदीपिकायामपि**— 'बिभीयात् शङ्केत। महारात्रे चन्द्रोदयात् पूर्वम्। उपासीत प्रतीक्षेत। आतञ्चनार्थे स्वकाले क्रियमाणदर्शार्थदध्यातञ्चनार्थम्। अर्धं न, किंतु तत् अभ्युदितेष्टावेव विनियुञ्जीत, न च तत् सांनाय्ययागे एव। तेन आतञ्चनार्थं निहितेन। एतेन आतञ्चनार्थं स्थापितेनैव इति व्याख्यातम्।

**अपूर्वत्वाद्विधानं स्यात्। ५॥**

**ननु, यथा** 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं कुर्यात्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं, येऽणिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुम्' इति कर्मान्तरं विधीयते **तथा** प्रकृतेऽपि कर्मान्तरमेव स्यादिति। **तत्राह**— पशुकामेष्ट्यां अपूर्वत्वात् अपूर्वयागविधानात् कर्मान्तरस्य विधानं स्यात्। प्रकृते तु दर्शयागः प्रकृत एव भवति, तत्र च सिद्धस्यैव द्रव्यस्य प्रकृतभिन्नदेवतासंबन्धमात्रं विधीयते इति न कर्मान्तरत्वम्।

**पयोदोषात् पञ्चशरावेऽदुष्टं हीतरत्। ६॥**

पूर्वपक्षोक्तं पञ्चशरावदृष्टान्तं विघटयति। पयोदोषात् पयसो दध्नो वा दोषात् नाशादिरूपस्य दोषस्योत्पन्नत्वात् पञ्चशरावे कर्मान्तरविधानं युक्तम्। इतरत् प्रकृतं तु चन्द्राभ्युदितेष्टिस्थं प्राकृतं दधि शृतं च अदुष्टं न दुष्टम्। हि यस्मात् अदुष्टं, तस्मात् दृष्टान्तवैषम्यात् नात्र कर्मान्तरविधिः। अथवा तुशब्दस्थाने हिशब्दः, अदुष्टं हि अदुष्टं तु इतरत् इति।

**सांनाय्येऽपि तथेति चेत्। ७॥**

पूर्वपक्षी पुनः शङ्कते। यदि हविर्दोषात् पञ्चशरावे कर्मान्तरविधिः संभवति, तर्हि प्रकृतेऽपि कर्मान्तरं स्यात्। कथं? सांनाय्येऽपि तथा पञ्चशरावनिमित्तवत् दुष्टत्वमुत्पन्नम्। दधनि शृते च चन्द्रोदयदोषात् दुष्टत्वमुत्पन्नम्। तस्मादत्रापि कर्मान्तरं स्यात्, इति चेत् पूर्वपक्षी ब्रूयात्।

**न, तस्यादुष्टत्वादविशिष्टं हि कारणम्। ८॥**

दधिशृतरूपसांनाय्यमपि पञ्चशरावोदाहरणस्थमिव, चन्द्रोदयरूपेण दोषेण दुष्टं इति यदुक्तं पूर्वपक्षिणा, तन्न। तस्य सांनाय्यस्य अदुष्टत्वात् दोषरहितत्वात्। पञ्चशरावे तु द्रव्यं स्वरूपेण दुष्टमेव भवति, इह तु न तथा। ननु कालापभ्रंशेन दुष्टं, न दुष्यति। अविशिष्टं तुल्यं हि यस्मात् कारणम्। अभ्युदये प्रायश्चित्तविधानं दुष्टेऽपि उपपद्यते, कालापराधेन अदुष्टेऽपि तदुपपद्यते। नहि कालापराधो दध्यादेः स्वरूपे दोषः। परंतु अकाले प्रवृत्तस्य शक्यते देवताविधानं, न तु पञ्चशरावे विनष्टस्य। तस्मात् न कर्मान्तरविधानम्।

**लक्षणार्था शृतश्रुतिः। ९॥**

चन्द्राभ्युदितेष्टौ प्राकृतद्रव्योद्देशेन देवताऽन्तरविधिः इति सिद्धान्तिना यदुक्तं तदयुक्तम्। अभ्युदयकाले श्रपणस्य अकृतत्वेन प्राकृतस्य शृतत्वाभावात् उद्देश्यत्वासंभवात् इति चेन्न। श्रपणसहचरितवत्सापाकरणादिधर्मविशिष्टपयसः लक्षणार्था शृतश्रुतिः इति नानुपपत्तिः शृतशब्दस्य। सर्वथाऽपि अभ्युदितेष्टिः न कर्मान्तरं, किंतु प्राकृतदेवताऽपनयपूर्वकं अन्यदेवतासंबन्धविधानमात्रम्। **के.**

**अभ्युदये दोहापनयः स्वधर्मा स्यात् प्रवृत्तत्वात्। ९।४।१०।४१॥**

**'वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्तात् चन्द्रमा अभ्युदेति, स त्रेधा तण्डुलान् विभजेत्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुम्' इति चन्द्राभ्युदितेष्टिरुक्ता। श्रुतौ वि इत्युपसर्गः**

अर्धयति इत्यनेन संयुज्यते । यस्य यजमानस्य हविः दार्शिकं निरुप्तं तदा च पुरस्तात् पूर्वस्यां दिशि चन्द्रमा अभि निरुप्तं हविरभिलक्ष्य उदेति, निर्वापोत्तरं च उदितश्चन्द्रो दृष्टः इत्यर्थः । तादृशश्चन्द्रमाः एनं यजमानं प्रजया पशुभिश्च व्यर्धयति वियुक्तं करोति । किंच अस्य भ्रातृव्यं शत्रुं वर्धयति प्रजया पशुभिश्च । तथा सति यजमानस्य अकालकरणजन्यदोषनिरासार्थं प्रायश्चित्तमिदं कर्तव्यम् । तदाह—स यजमानः अवहननादिना संपादितान् तण्डुलान् त्रेधा स्थविष्ठ-मध्यम-अणिष्ठ-रूपेण विभजेत् वक्ष्यमाणरीत्या देवताऽन्तरेभ्यो विभक्तान् कुर्यात् । तद्यथा ये तण्डुला मध्यमपरिमाणाः स्युः तान् दातृत्वगुणाय अग्नये अष्टसु कपालेषु संस्कृतं पुरोडाशं निर्वपेत् कुर्यात् । मध्यमतण्डुलानां पुरोडाशः कर्तव्यः, स च अग्नये दात्रे । एवं स्थविष्ठानां स्थूलतमानां तण्डुलानां चरुं प्रदातृगुणवते इन्द्राय निर्वपेत् । अयं चरुश्च दधन् दधनि श्रपणीयः । एवं अणिष्ठानां अणुतमानां तण्डुलानां चरुं विष्णवे शिपिविष्टगुणकाय निर्वपेत् । अयं च चरुः शृते संस्कृते पयसि श्रपणीयः इति श्रुत्यर्थः । तत्र शृते दधन् इति दधिपयसोः प्रदानधर्माः कर्तव्या न वेति विचारे सिद्धान्तेनोपक्रमते । चन्द्रस्य अभ्युदये निमित्ते सति सोऽयं श्रुत्युक्तो दोहापनयः दर्शदेवताभ्यः सकाशात् अपनयो विभागो दोहस्य, सोऽयं अपनीतो दोहः दधिपयोरूपः स्वधर्मा स्वस्य दोहस्य धर्माः यस्मिन्, तादृशः स्यात् । 'धर्मादनिच् केवलात्' ( पा० ५।४। १२४ ) इति अनिच् समासान्तः । कुतः स्वधर्मत्वं ? प्रवृत्तत्वात् इज्यार्थमेव दधिशृतयोः प्रवृत्तत्वात् । तस्मात् अभ्युदयेष्टौ दधिशृतयोः प्रदानधर्माः इति सिद्धान्तः ।

**शृतोपदेशाच्च । ४२ ॥**

चन्द्राभ्युदितेष्टौ शृते दधनि च प्रदानधर्मा वत्सापाकरणादयः कर्तव्या इति सिद्धान्ते हेत्वन्तरमाह । 'शृते चरुं' इति शृतस्य सिद्धवत् उपदेशात् दधिपयसोः इज्यार्था धर्माः कर्तव्या इति ज्ञायते । श्रपणेन सिद्धे पयसि शृतशब्दः प्रयुज्यते । यद्यपि ( ४१-४२ ) इदं सूत्रद्वयं तुशब्दवाशब्दशून्यत्वात् पूर्वपक्षप्रतिपादकं, उत्तरं च सूत्रद्वयं वाशब्दयुक्तत्वात् सिद्धान्तप्रतिपादकं इति चतुःसूत्रकमेकमधिकरणमिति भाति, तथापि भाष्यकारैः अधिकरणभेदमालम्ब्य सूत्रचतुष्टयं व्याख्यातम् । यद्यपि च श्लोकवार्तिके चोदनासूत्रे तत् दूषितं, तथापि अत्र पाठ्याधिकरणाविरोधाय तदेव टुप्टीकायां साधितमिति ध्येयम् । **के.**

* **अभ्युदितेष्टिः** दर्शश्चेति द्वयोः कर्मणोर्भेदावश्यंभावात् द्वे एव यजेत न केवलां अभ्युदितेष्टिं इति पक्ष एव आश्रयणीयः । **संकर्ष.** १।२।९. * अभ्युदितेष्टिः दर्शस्यैव चन्द्रोदयनैमित्तिकः प्रयोगः, न तु दर्शलोपप्रायश्चित्तम् । अतो नैमित्तिकं दर्शप्रयोगमभ्युदयेष्टिरूपमनुष्ठाय पश्चात् स्वकाले नित्यो दर्शप्रयोगोऽनुष्ठातव्यः । **वि.** ६।५।१, * अभ्युदितेष्टिः दर्शकर्मणि प्रवृत्ते चन्द्रोदयं निमित्तीकृत्य तदेव दर्शकर्म अभ्युदयेष्टित्वेन नैमित्तिकत्वेन कर्तव्यं भवति , न तु तत् कर्मान्तरम् । ६।५।१, * अभ्युदितेष्टिः दर्शोपक्रमे सति निर्वापात् प्रागपि चन्द्रोदये सति कर्तव्या अविहितकाले कर्मोपक्रमात् । ६।५।३.

**⧗ अभ्युदितेष्टौ अर्धनिर्वापोत्तरं चन्द्राभ्युदये अवशिष्टनिर्वापस्तूष्णीं कर्तव्यः ॥**

**विनिरुप्ते न मुष्टीनामपनयस्तद्गुणत्वात् । ६।५।५।१८ ॥**

**भाष्यं—** अथ प्रारब्धे चतुर्मुष्टिनिर्वापे अपरिसमाप्ते भवति संशयः । यन्निरुप्तं तन्निरुप्तमेव, अवशिष्टं किं प्राकृतीभ्यो निर्वप्तव्यं, किं वैकृतीभ्यः, उत तूष्णीमेवेति । किं प्राप्तं ? विनिरुप्ते सामि निरुप्ते इत्यर्थः । न तत्र देवताऽपनयः स्यात् । कुतः ? तद्गुणत्वात् । निर्वापस्य गुणो देवता , न मुष्टीनाम् । स च निर्वापस्तद्देवताकः । कुतः ? चतुःसंख्यापूरणार्थत्वात् । अभ्यासमात्रं कर्तव्यं , तच्च अभ्यासमात्रं पुनः क्रियते । पूर्वमेव कृते तस्मिन्निर्वापे न देवता अपनीता । स एवायं पुनः क्रियते पुनरपि क्रियमाणस्य अनपनीतैव देवता भवितुमर्हति इति प्राकृतीभ्य एव निर्वप्तव्यम् । न चोत्तरो मुष्टिः पृथक् पदार्थः, येन देवताऽपनयो भवेत् । कृतस्य निर्वापस्य संख्यापूरणं एतत् क्रियते । तस्मादनपनय इति ।

**अप्राकृतेन हि संयोगस्तत्स्थानीयत्वात् । १९ ॥**

**भाष्यं**—न प्राकृतीभ्यो निर्वस्तव्यम् । कस्यस्तर्हि ? वैकृतीभ्यः । कुतः ? अप्राकृतेन देवताविशेषेण संयोगः श्रूयते, नाधिकृतेन । त्रेधा तण्डुलान् विभजेत् इति प्राकृतीभ्य आच्छिद्य वकृतीभ्यो निर्वस्तव्यो विधीयते । ता इदानीं तत्स्थानीयाः । तस्मात् विनिरुप्ते निवृत्ता देवताः, अन्या अन्याश्चोपजाताः । तस्मात् वैकृतीनां संयोगेन निर्वापशेषः कर्तव्य इति ।

**अभावाच्चेतरस्य स्यात् । २० ॥**

**भाष्यं**— अभावादितरस्य अर्धस्य देवतासंयुक्तस्य, न निर्वापो भवति देवतासंयुक्तः । यदि निर्वापे अर्धः अन्यदेवत्यः, अर्धोऽपि अन्यस्यै देवतायै, नैव निर्वापः इतरदेवताकः प्राकृतः, इतरदेवताको वा ( वैकृतः ) । तस्मात् तूष्णीमेव निर्वस्तव्यम् । अवश्यं अन्यतरत्र संकल्पभेदो भवति ।

**टुप्**—तु-शब्दार्थे च-शब्दः । इतरथा (च-शब्दः) समुच्चयं वदेत् । स चायुक्तः । नहि पूर्वोक्ते कस्यचिदभावो हेतुत्वेन ( संभवति ) । अपिच प्राकृतीभ्यो निर्वापपदार्थमाश्रित्य प्रथमे मुष्टौ संयोगो निर्वृत्तः । तस्याभ्युदयेन निमित्तेन विभजेत् इति विभाग उच्यते । पदार्थ इति कृत्वा संयुक्तः पूर्वं ( प्राकृतीभिर्देवताभिः निर्वापः ), इदानीं एकदेशो वियोज्यते । शक्यते च वियोक्तुं वियोगस्य संयुक्तमात्राश्रयत्वात् । न च अन्यया देवतया संयोगः शक्यते कर्तुं, पदार्थाश्रयत्वात् तस्य । मुष्टिशेषश्च पदार्थैकदेशः । तस्मात् प्राकृतनिवृत्तेः वैकृतासंयोगाच्च तूष्णीं निर्वापः । अन्यत्रापि बह्ववयवे पदार्थे अयमेव न्यायः । यथा प्रदाने, तस्यापि अनुवचनप्रैषयाज्यादयोऽवयवाः ।

**शा**—प्राकृतीभ्योऽपनीतः वैकृतीभिश्च असंयुक्तः अवशिष्टो निर्वापांशः, तूष्णीं कर्तव्यः ।

**सोम**—इह प्रवृत्तेऽपि हविषि अभ्युदयेन पूर्वदेवताऽपनयः देवताऽन्तरसंयोगो वा इति प्रत्यवस्थानात् **संगतिः** । **सूत्रार्थस्तु**—विनिरुप्ते सामिनिरुप्ते चतुर्मुष्टीनामेकदेशस्य न पूर्वदेवताऽपनयः, कृतनिर्वापस्य देवतागुणत्वादेकदेशापनयासंभवादिति ।

**वि**—'प्राकृतीभ्योऽवशिष्टेऽभ्युदये शिष्टतन्दुलान् । प्राकृतीभ्यो वैकृतीभ्यस्तूष्णीं वा निर्वपेदिह ॥ प्राकृतीभ्यः प्रवृत्तत्वात् वैकृतीभ्यो निमित्ततः । शिष्टांशस्यापदार्थत्वादसंयोगाद्विहन्तितः ॥'

**भाट्ट**— अर्धनिरुप्ते चन्द्राभ्युदये ज्ञाते अवशिष्टमुष्टयः न तावत् प्राकृतीभ्यो निर्वप्तव्याः, निमित्तसत्त्वेन नैमित्तिकन्यायनयस्य प्रवृत्तौ बाधकाभावात् । नापि वैकृतीभ्यः पदार्थैकदेशस्य अविहितत्वेन तत्र देवताऽन्तरसंयोगाप्रवृत्तेः । यथैव हि 'फलं न भक्षयेत्' इत्यादिनिषेधाः अवयवावयविसाधारण्येन प्रवर्तन्ते, एवं अपनयात्मको निषेधोऽपि । यथैव च 'फलं दद्यात्' इत्यादिविधयो अवयविन्येव प्रवर्तन्ते एवं देवताऽन्तरसंयोगोऽपि । अतश्च तूष्णीमेव अवशिष्टो निर्वापः । **याज्ञिकास्तु** पदार्थैकदेशस्यापि आर्थिकविधिविहितत्वमङ्गीकृत्य वैकृतीभ्य एवानुतिष्ठन्ति ।

**मण्डन**— ' अर्धेनेऽर्धग्रहस्तूष्णीम् । '

**शंकर**—' तूष्णीनर्धनिरुप्तके । '

**अभ्युदितेष्टौ उपांशुयाजेऽपि देवताऽपनयः ॥**

**उपांशुयाजेऽवचनाद् यथाप्रकृति । ६।५।२।१० ॥**

**भाष्यं**— तस्मिन्नेव ( चन्द्रस्य ) अभ्युदये संशयः, किं उपांशुयाजेऽपि देवताऽपनयः भवेत्, नेति । किं प्राप्तं ? उपांशुयाजे यथाप्रकृति स्यात् । कस्मात् ? अवचनात् । यथा अमीषु वचनं, मध्यमानां अग्नये दात्रे पुरोडाशः, स्थविष्ठानामिन्द्राय प्रदात्रे दधनि चरुः, क्षोदिष्ठानां विष्णवे शिपिविष्टाय शृते चरुः इति, नैतदुपांशुयाजे अस्ति । तस्मात् स यथादेवतं स्यात् ।

**टुप्**— उपांशुयाजः पौर्णमास्यामेव नामावास्यायां इति वक्ष्यति ( १०।८।१७।५४ ) न चेयं कृत्वाचिन्ता इति वृत्तिकारोऽभिलषति । अधिकरणारम्भो न युज्यते । युक्तो वा, बह्वृचब्राह्मणे ( कौषीतकिब्राह्मणे ३।६ ) स्पष्टेन वाक्येन विहितत्वादुपांशुयाजस्य । कथं तर्हि दाशमिकमनपेक्ष्य वचनं ? न्यायमात्रमेतत् ।

**अनपयो वा प्रवृत्त्या, यथेतरेषाम् । ११ ॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति । उपांशुयाजस्यापि अपनयः । केन कारणेन ? प्रवृत्त्या । अकाले तन्त्रप्रवृत्तिर्देवताऽपनयस्य कारणम् । कुतः ? नहि अत्र अभ्युदये सति तण्डुला विभागार्थमुपादीयन्ते । किं तर्हि ? अभ्युदितस्य हविषो विभाग उच्यते अभ्युदयेन अपराद्धस्येति । कथमवगम्यते ? ' यस्य अभ्युदियात् ' इत्यविशेषश्रवणात् । सर्वस्यैव हि अपराधेन अभ्युदेति । अपराधश्च अकाले तन्त्रप्रवृत्तिः । एवं च सति न तद्धविः तण्डुलैः शक्यं विशेद्धुम् । तस्मात् उपांशुयाजस्यापि विभागः । ' त्रेधा तण्डुलान् विभजेत् ' इति हि अनेन वाक्येन देवताऽपनयः क्रियते । विधिर्हि अत्र विभजेदिति विभागं कुर्यादित्यर्थः । कथमिति विभागविशेषपराणि उत्तराणि वाक्यानि, इदमिदं च द्रव्यं अस्यै देवतायै, इदमिदं चास्यै इति । यस्य द्रव्यस्य विशेषविभागो नास्ति, तस्यापि विभजेत् इति सामान्यविभागः । तस्मात् यथैव इतरेषां विभागः, एवं उपांशुयाजस्यापीति । अथवा उपांशुयाजद्रव्यात् पूर्वेण वाक्येन अपनीता देवता । न तत् अपरेण वाक्येन देवताऽन्तरेण संयोजितम् । तस्मात् प्रहीणमेव तत् ।

**टुप्**— अकाले तन्त्रप्रवृत्तौ नैमित्तिकं विधीयते । विभजेत् इत्यत्र वि-उपसर्गः कर्मव्यतिहारार्थीयः । अन्योन्यं देवताविशेषं प्रति द्रव्यस्य भजनं कर्तव्यं इत्यर्थः । एवं वि-शब्दः श्रुत्यर्थवृत्तो भविष्यति । धातुना च प्रत्ययस्य अविप्रकर्षः । एवं अन्योन्यसंबन्धभजनं कुर्यात् इति सामान्यवचनेन विभागः उपांशुयाजद्रव्यस्य ( अपि विहितः ), मध्यमादिवत् विशेषवचनाभावात् । अस्मिन् पक्षे चतुर्गृहीतं त्रिष्वपि यागेषु विभागेन प्रक्षेप्तव्यम् । सोऽस्य सामान्यविभागः । अथवेति ( भाष्यं ), अस्मिन् पक्षे विभजेत् इति विभागार्थीयो वि-शब्दः श्रुतिवृत्तः । व्यतिहारपक्षे तु संयुक्तस्य कारकस्य विभागेन उत्तरसंयोगं लक्षयेत् । लक्षणा च ( लौकिकी ) सत्यां गतौ अयुक्ता । **ननु** वियोगो भजनं च विरुद्धौ अर्थौ न शक्यौ परस्परेण विशिष्टौ विधातुम् । **उच्यते** । वि-शब्दार्थं केवलं विधास्यामः ( केवलभजत्यर्थानुवादेन, प्राकृतीनां देवतानां यत् भजनं तस्य वियोगं कुर्यात् इति ) । ननु वाक्यार्थः स्यात् ( विधेयः ), सत्यमेतत्, विशिष्टविधानात्तु लघुतरोऽसौ, यो धात्वर्थे वियोगविधिः । अनपराद्धस्य ( पुरुषस्य ) यथाप्रकृति द्रव्यदेवताभजने प्राप्ते अपराधे ( कालस्य ) निमित्ते नैमित्तिको भजनवियोगः शिष्यते । तत्र देवताभ्यः अपनीतेषु ( सर्वद्रव्येषु ), कृते नैमित्तिके, यस्य द्रव्यस्य पुनः संयोगवचनमस्ति, देवताऽन्तरेण युक्तं तत् । यस्य तु नास्ति, प्रहीणं तत् । न च चतुर्गृहीतसंयोगोऽस्ति ( पुनः ) । तस्मात् प्रहीणं उपांशुयाजकर्मेति ।

**शा**—कृत्वाचिन्तेयम् । **उपवर्षस्तु** वृत्तिकारो बह्वृचब्राह्मणे अमावास्यायामपि उपांशुयाजो विहित इति तदभिप्रायेणेयं चिन्ता इत्याह । उपांशुयाजाज्यं ताभ्योऽपनीतं, देवताऽन्तरेण वचनाभावात् असंयुक्तं, प्रहीणं भवति । न च देवताऽभावे यागः संभवति, इत्युपांशुयाजो लुप्यते ।

**सोम**—पूर्वोक्तदेवताऽपनयः हविर्विशेषे आक्षिप्य समाधीयते इति **संगतिः** ।

**वि**— ' देवत्यागस्तथोपांशावश्रुते देवताऽन्तरे । यागलोपोऽप्रसक्तत्वात् कृत्वाचिन्तेयमिष्यताम् ॥ '

**भाट्ट**— तत्रैव उपांशुयाजद्रव्यस्य आज्यस्य अपनयोऽस्ति न वा इति चिन्तायां, तण्डुलग्रहणस्य उपलक्षणत्वे प्रमाणाभावात् देवताऽन्तरसंयोगाभावाच्च नापनयः । **इति प्राप्ते,** तण्डुलग्रहणस्य विवक्षितत्वे दधिशृतयोः हविष्ट्वानुपपत्त्या अधिकरणत्वापत्तेः ' सह श्रपयति ' इति वाक्यवैयर्थ्यापत्तेरेव तण्डुलग्रहणस्य हविःपरत्वावसायात् आज्यस्यापि अपनयः । देवताऽन्तरसंयोगाभावात्तु उपांशुयाजो लुप्यते । प्रजापतिविधिः अपचारविषयत्वात् नेह प्रवर्तते ।

**यत्तु** अत्र **भाष्यकारेण** पक्षान्तरमुक्तं, ' विभजेत् इत्यनेन नापनयविधिः किंतु पूर्वयागीयं हविः वैकृतीभ्यो देवताभ्यो दद्यात् इति सामान्यतो विभागरूपं दानं उपांशुयाजीयाज्यसाधारण्येन विधीयते । अपनयस्तु पूर्वदेवतानां अर्थात् । तत्र विशेषवचनात् द्रव्यान्तराणां व्यवस्थायामपि आज्यस्य सामान्यवाक्यादेव त्रिभ्योऽपि दानं' इति,

**तत्** अपनयविध्यभावे प्रकृतहविर्ग्रहणे प्रमाणाभावात् सामान्यवाक्यस्यापि कर्मान्तरविषयकसामान्यविधित्वापत्तेः उपेक्षितम् । अस्तु वा कर्मान्तरे सामान्यविधिवैयर्थ्यापत्तेरेव तथा । सर्वथा आज्यस्यापि पूर्वदेवताऽपनयः । न चैवं प्रयाजादिद्रव्यस्यापि तदापत्तिः, चन्द्राभ्युदयकालीनकर्मप्रारम्भस्यैव निमित्तत्वेन वक्ष्यमाणत्वात् तादृशकर्मसंबन्धिहविष एव देवताऽपनयात् प्रयाजादीनां च दीक्षणीयादिवत् पृथगारम्भाभावात् तदीयद्रव्यस्य अपनयानुपपत्तेः ।

इदं च उपांशुयाजद्रव्यस्य अपनयाभिधानं **शाङ्खायनानां** ' अथ यत् संनयत्सांनाय्यस्य अन्तरेण उपांशु आज्यस्य यजति तस्योक्तं ब्राह्मणं ' ( ३।६ ) इति वचनेन अमावास्यायामपि उपांशुयाजविधानात् अवगन्तव्यम् । दाशमिकं तु पौर्णमास्यामेव उपांशुयाजः इत्यधिकरणं कृत्वाचिन्तया । त्रयोदशामावास्यायां इति च अवयुत्यानुवादः । एतद्बलादेव च अमावास्यायां विकल्पः इत्यपि **गुरवः** ।

**मण्डन**— ' उपांशुस्तत्र हीयते । '

**शंकर**— ' देवताऽपनयस्त्वाज्ये । '

**अभ्युदितेष्टौ दधिपयसोः प्रणीताधर्मानुष्ठानम् ॥**

**परार्थे, न त्वर्थसामान्यं, संस्कारस्य तदर्थत्वात् । ९।२।१४।४३ ॥**

**भाष्यं**—' वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति, स त्रेधा तण्डुलान् विभजेत् ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं ' ( इत्यत्र ) शृते चरुं दधंश्चरुं इत्येतदुदाहरणम् । तत्रायमर्थः सांशयिकः किं शृते दध्नि ( च ) प्रणीताधर्माः कर्तव्याः, उत न कर्तव्या इति । किं प्राप्तं ? न कर्तव्या इति । परार्थमेतत् प्रदानार्थमिति, न प्रणीतार्थम् । दधि च तण्डुलविभागश्च एको भाग इन्द्राय प्रदात्रे दातव्यः, शृतं च तण्डुलविभागश्च विष्णवे शिपिविष्टाय । न श्रपणार्थं दधि पयो वा विधीयते । तत्र हि सप्तमीसंयोगः अनुवाद एव । न च प्रणीताकार्ये विधीयते दधि पयो वा । तस्मात् प्रणीतानां धर्मैर्न संयुज्येते । नहि प्रणीतानां दध्नश्च अर्थसामान्यं किंचिदस्ति । तदर्थश्चायं संस्कारः अन्यद्वारकः । तस्मान्न प्रणीताधर्माः पयसि दधनि वा भवेयुरिति ।

**क्रियेरन् वाऽर्थनिर्वृत्तेः । ४४ ॥**

**भाष्यं**— न चैतदस्ति प्रणीताधर्मा दधिपयसोर्न कर्तव्या इति । श्रपणसाधने हि ते ( धर्माः ) विधीयन्ते, न श्रपणार्थे उत्पन्ने द्रव्ये, येनार्थो निवर्तेत । तत्र ते अपूर्वप्रयुक्तत्वात् क्रियन्ते । क्रियते च दधिपयोभ्यां श्रपणम् । तस्मात् तद्धर्मैः संयोगः स्यात् ।

**सोम**—युक्तं परिवेर्यूपकार्ये नियोजने वचनेन विनियोगात् यूपधर्मकरणम् । इह तु 'शृते चरुं' 'दधनि चरुं ' इति सप्तमीश्रवणेऽपि न प्रणीताकार्ये विधानं शृतदध्नोः प्रदेयत्वात्, सप्तमी च ' सह श्रपयति ' इति विहितसहश्रपणलब्धार्थिकाधारत्वानुवादः, इत्युक्तं षष्ठे । तस्मादिह न प्रणीताधर्माः । **न च** शेषत्वाभावेऽपि साधनत्वमादाय पूर्वाधिकरणोक्तरीत्या साधननिवेशिनो धर्मा भवेयुरिति **वाच्यम्** । पूर्ववदत्र साधनत्वबोधकवचनाभावात् इति शङ्कयोत्थानात् **संगतिः** । साधनत्वमात्रं धर्मप्राप्तौ तन्त्रं, न तु वाचनिकत्वं इत्याशयेन सिद्धान्तः । **सूत्रार्थस्तु**—परार्थे प्रधानार्थे दध्नि शृते च प्रणीताभिः सह अर्थसामान्याभावात् प्रणीताकार्यकरत्वाभावात् प्रणीतासंस्कारस्योत्पवनादेः तदर्थत्वात् कार्यार्थत्वादिति ।

**वि**— ' शृतदध्नोः प्रणीतानां न धर्माः सन्ति वा, नहि । अपाकार्थत्वतः, सन्ति पाकहेतुत्वसाम्यतः ॥ '

अन्यार्थमुत्पन्नयोरपि दधिपयसोः अत्र चन्द्रोदयं निमित्तीकृत्य चरुश्रपणहेतुत्वं वाचनिकम् । ततः समानत्वात् तद्धर्माः सन्ति ।

**भाट्ट**—अभ्युदितेष्टौ दधिशृतयोः प्रदानार्थत्वात् प्रदेयधर्माः सायंदोहादयः भवन्त्येव । तण्डुलश्रपणसाधनत्वस्यापि तु ' सह श्रपयति ' इति विधिबलेन अर्थसिद्धत्वात् असत्यपि तत्प्रयुक्तत्वे तच्छेषत्वे वा साधनत्वसंबन्धेन अपूर्वसंबन्धिश्रपणसंबन्धित्वस्य सत्त्वात् दधिशृतयोः प्रणीताधर्मा अपि उत्पवनप्रणयनादयो भवन्ति । नहि

धर्मसंबन्धे उद्देश्यस्य अपूर्वशेषत्वमपि प्रयोजकं, गौरवात्, अपि तु शास्त्रस्य महाविषयत्वसिद्ध्यै अपूर्वसंबन्धित्वमेव। अत एव 'अगन्म' इत्यादिमन्त्रस्यापि अपूर्वसाध्यफलार्थत्वम्। स च संबन्धः प्रकृते श्रपणसाधनत्वाख्यः समस्त्येव। **ननु** दधिशृतयोः तण्डुलश्रपणसाधनत्वेऽपि न प्रणीताधर्मप्राप्तिः, प्रणीतानां हि संयवनार्थत्वेन विनियोगात्, प्रकृते च संयवनाभावेन तदनुपपत्तेः। अत एव सौर्यादिचरुष्वपि वह्निरूष्मणा पाकाभावात् कपालतद्धर्मनिवृत्तिवत् संयवनाभावात् प्रणीतातद्धर्मनिवृत्तिरेव। **इति चेत्**, प्रणीतानां वाक्येन पिण्डसंयवनसाधनत्वावगमेऽपि आनुषङ्गिकपाकसाधनत्वस्यापि सत्त्वात् सौर्यादिचरौ प्रकृते च प्रणीताधर्मोपपत्तेः। क्त्वाचिन्तया वा अयं विचारः। इयं च प्रणीताधर्मप्राप्तिः सत्यपि अकर्मान्तरत्वे दधिशृतयोः आग्नेयहविःश्रपणसाधनत्वस्य नैमित्तिकतुल्यत्वात् फलचमसन्यायेन (३।५।१५) स्थानापत्त्यैव, न तु व्रीहियवन्यायेनेति (१२।३।४।१०) ध्येयम्। १३.

**मण्डन**—'दध्नः प्रणीताधर्माः स्युः।' २१.

**शंकर**—'प्रणीताधर्मवच्छृतम्।' २५.

## अभ्युदितेष्टौ दधिशृतयोः प्रदेयधर्मानुष्ठानम्॥

**अभ्युदये दोहापनयः स्वधर्मा स्यात्, प्रवृत्तत्वात्। ९।४।१०।४१॥**

**भाष्यं**—इदं समाम्नायते 'वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति, स त्रेधा तण्डुलान् विभजेत्, ये मध्यमास्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं' इति। शृते चरुं दधंश्चरुं इत्येतदुदाहरणम्। तत्र एषोऽर्थः सांशयिकः किं शृते दधनि च इज्यार्थाः पयोधर्माः कर्तव्याः, उत नेति। किं प्राप्तं? न कर्तव्या इति। कुतः? अप्रदानार्थत्वात् प्रणीतार्थे विधानात् अतुल्यत्वाच्च चरुणा न संसर्गः इति। **एवं प्राप्ते ब्रूमः।** अभ्युदये निमित्ते योऽयं दोहः देवताया अपनीतः स स्वधर्मा स्यात्। इज्यार्थाश्च तत्र पयोदधिधर्माः कर्तव्याः। कुतः? इज्यार्थमेव हि तत् पयो दधि च प्रवृत्तम्। यतश्च इज्यार्थे, अतोऽस्य इज्यार्थाः प्रवृत्ता एव धर्माः। तद्धर्माणां प्रवृत्तौ अस्ति कारणं, निवृत्तौ नास्ति। ननु प्रणीतार्थे दधिपयसी विधीयेते, नेत्याह। वाक्यं हि तदा भिद्येत चरौ देवतार्थे चर्वर्थयोश्च दधिपयसोः। **आह**, ननु चरोरपि देवतासंबन्धो दधिपयसोरपि तथा, न भविष्यति वाक्यभेदः इति। **नैवं** शक्यम्। विभागः कर्तव्य इति पूर्ववाक्यं वृत्तं 'त्रेधा तण्डुलान् विभजेत्' इति। तदनन्तरं विभागविशेषपरं इदं भवति वाक्यं, 'ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, येऽणिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं' इति। अत्र अविशेषात् दधिपयसोरपि विभागो वक्तव्यः। यदि च दधिपयसी विभक्तव्ये सती प्रणीतार्थे अपि उच्येयातां, ततो भिद्येत वाक्यम्। अतो नैतयोः प्रणीतार्थे विधानम्। अविधीयमाने च सप्तम्यर्थे प्रातिपदिकार्थौ देवतया संभन्स्यते, वाक्यसामर्थ्यात् उभे च दधिपयसी देवतया संभन्स्येते चरुणा सह। दधनि चरुः एको भागः इन्द्राय प्रदात्रे भवति इति। यथा विभज्यमानेषु नानाद्रव्येषु उच्येत, 'रुक्मपात्र्यां समाहार्या मणयः एको भागो देवदत्तस्य। रजतपात्र्यां सुवर्णं निहितं अपरो भागो विष्णुमित्रस्य' इति सह पात्रीभ्यां द्वौ भागौ गम्येते विभागविशेषपरत्वात् वाक्यस्य। पात्र्योश्च विभक्तत्वात् अनुवादश्च सप्तम्यर्थो गम्यते। एवमिहापि विभागपरत्वादेव वाक्यस्य विभक्तत्वाच्च दधिपयसोः एको भाग इति गम्यते। अर्थप्राप्तत्वाच्च सप्तम्यर्थोऽनुवादो भविष्यति। तस्मात् प्रदानार्थे दधिपयसी। प्रदानार्थाश्च दधिपयसोर्धर्माः कर्तव्याः।

**शृतोपदेशाच्च। ४२॥**

**भाष्यं**—इतश्च प्रदानार्थे दध्नि पयसि च इज्यार्था धर्माः कर्तव्या इति। कुतः? सिद्धवत् शृतोपदेशो भवति 'शृते चरुं' 'दधंश्चरुं' इति, स सत्सु धर्मेषु उपपद्यते। इतरथा श्रपणं न क्रियेत, इति तत्र सिद्धवत् शृतोपदेशो नावकल्पेत। तस्मादपि पश्यामः, इज्यार्था दधिपयसोर्धर्माः कर्तव्या इति।

टुप्— ( ऐकाधिकरण्यं सूत्रस्वरसप्राप्तं विहाय किमिति अधिकरणभेदो भाष्यकारेण आश्रितः ? अत आह, सत्यं– ) एते द्वे सूत्रे ( अभ्युदये० शृतो० ) तुशब्द–वाशब्दरहिते ( सती स्वरसतः ) पूर्वपक्षे ( पूर्वपक्षतया ) धर्मवती दधिपयसी प्रतिपादयतः । उत्तरे ( तु अपनयो वा० लक्षणार्था० इति ) द्वे सूत्रे वाशब्देन एतं पक्षं व्यावर्त्य न प्रदानधर्मैः युज्येते दधिपयसी इति ( सिद्धान्तं ) स्थापयतः (स्वरसेन)। एवं ( तु ) सूत्रकारप्रस्थानमपास्य ( ततः प्रतिपन्नमैकाधिकरण्यमपास्य षष्ठविरुद्धम् ) वृत्तिकारः ( भाष्यकार एव ) षष्ठाविरोधिनीं व्याख्यां चकार । तत्र हि उक्तं तदेवेदं आमावास्यं कर्म, केवलं तु द्रव्यं ( पूर्व– ) देवतातः अपनीतं देवताऽन्तरेण युज्यते नापनीततयागार्थत्वमेव सत् । तस्य कथं यागधर्मा न स्युः । ( श्रुत्यैव च सूत्रकारेण चरुसंस्कारार्थतां दोहयोर्निरस्य प्रदानार्थतैव निर्णीता 'नातत्संस्कारत्वात्' ६।५।६।२४ इति )। अतः पूर्वाधिकरणसिद्धान्तेन ( सप्तमीश्रुत्या श्रपणार्थे दधिपयसी इति– ) पूर्वपक्षस्य कृतस्य ( द्वे ) एते सिद्धान्तसूत्रे। ( तथा ) उत्तरे अपि ( सूत्रे ) एवमेव (अनेन सिद्धान्तेन कृतस्य पूर्वपक्षस्य सिद्धान्तसूत्रे)। एवं पूर्वस्यपूर्वस्य न्यायस्य अपवादतया उत्तरोत्तरमधिकरणं इति (संगतत्वात्) युक्ततर आरम्भः। ( अथ कस्मात् आदावेव पशुकामेष्टिवाक्यं नोदाह्रियते, तथा सति पाठोऽपि न्यायो न विरुध्यते सूत्राणि च एकवाक्यतया यथाश्रुति व्याख्यातानि भवन्ति । अत आह– ) इतरथा ( अधिकरणभेदानाश्रयणे ) अभ्युदयोदाहरणं ( सौत्रं ) हेयमेव स्यात् । (प्रकृताधिकरणसिद्धान्तमाह–) न्यायस्तु स एवेति ( यः षष्ठे )।

**सोम**— ( दृष्टान्तरूपा **अवान्तरसंगतिः** ) **न च** अस्यार्थस्य षष्ठे एव व्युत्पादनेनास्याधिकरणस्य वैयर्थ्यमिति **वाच्यम्**। तथापि पूर्वाधिकरणरीत्या सप्तमीश्रवणात् प्रणीतार्थत्वमिति कस्य चित् व्यामोहः स्यादिति तन्निराकरणार्थत्वेन अवैयर्थ्यात् । **सूत्रार्थस्तु**— अभ्युदये दोहापनयः अपनीतदेवताको दोहः प्रदेयधर्मः स्यात् प्रदेयत्वेन दोहप्रवृत्तेः इति ।

वि— 'दध्नोऽपनयोऽभ्युदिते न ते स्युर्दध्नि, दुग्धे नो', सद्व्यत्वाद् देवतायोगत्वोक्तेः सन्ति तेऽन्यवत् ॥ ' अन्यवत् तण्डुलवत् । ११.

**भाट्ट**— अभ्युदितेष्टावपि तर्हि ( पयोगादिवत् ) सप्तमीनिर्देशात् दधिशृतयोः अधिकरणत्वावगतेः प्रदेयधर्मा भवेयुः, 'सह श्रपयति' इत्यस्यापि पूर्ववदेव नित्यानुवादत्वोपपत्तेः। **न च** क्षोदिष्टादिद्रव्योद्देशेन तत्र देवतान्तरविधानात् दध्याद्यधिकरणत्वस्यापि विधौ वाक्यभेदापत्तेः तस्य प्रदेयत्वं इति **वाच्यम्**। द्रव्यद्वयोद्देशेऽपि वाक्यभेदतादवस्थ्यात्। तत् वरं सप्तमीश्रुत्या विवेयानेकत्वनिमित्तवाक्यभेदस्यैव अङ्गीकारः। वस्तुतस्तु भावनाऽन्तरस्यैव तत्र षष्ठे अङ्गीकारात् अधिकरणत्वस्यापि विधौ न वाक्यभेदः। **इति प्राप्ते**, 'यदि गृहीतं हविः अभि उदियात् अथो तर्हि एतानेव तण्डुलान् सुफलीकृतान् दधि पयश्च' इत्यादिलिङ्गवत् अपनयविधेश्च प्रकृतयागीययोरेव दधिपयसोः भावनाऽन्तरेऽपि प्रदेयत्वेनैव उपादेयत्वस्य षष्ठे व्यवस्थापितत्वात् अधिकरणत्वविवक्षाऽनुपपत्तेः भवन्त्येव प्रदेयधर्माः। ९.

**मण्डन**— 'ते स्युरभ्युदये पुनः।' ते प्रदेयधर्माः।

**शंकर**— 'अभ्युदयेष्टौ प्रदेयता।' ११. दधिशृतयोः।

**अभ्युदितेष्टौ दर्शप्रवृत्त्युत्तरं निर्वापात् प्रागपि चन्द्राभ्युदये वैकृतीभ्य एव देवताभ्यो निर्वापः॥**

**अनिरुप्तेऽभ्युदिते प्राकृतीभ्यो निर्वपेदित्यारमरथ्यस्तण्डुलभूतेष्वपनयात्। ६।५।४।१६॥**

**भाष्यं**— प्रवृत्तमात्रं निमित्तं इति स्थितम्। **नैमित्तिकस्तु** देवताऽपनयो देवताऽन्तरसंयोगश्च **किं** निर्वापोत्तरकालं तण्डुलावस्थे हविषि **कर्तव्यः** निर्वापस्तु प्राकृतीभ्य एव स्यात् ज्ञाते अभ्युदये, उत वैकृतीभ्य एव इति संशयः। **किं तावत् प्राप्तं ? अनिरुप्ते अभ्युदिते प्राकृतीभ्यो निर्वपेत् इत्यारमरथ्य आचार्यो मन्यते स्म।** कुतः ? तण्डुलभूतेष्वपनयात् तण्डुलभूतेषु अपनयः श्रूयते। 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदेति

त्रेधा तण्डुलान् विभजेत्' इति अभ्युदयावगमादनन्तरं तण्डुलविभागमाह। सः अतण्डुलभूतेषु नावकल्पते। तस्मात् अनिरुप्ते तण्डुलाभावात् अनपनीता देवताः प्राकृत्यः इति प्राकृतीभ्य एव निर्वपेदिति।

**व्यूर्ध्व( व्यृद्ध )भाग्भ्यस्त्वालेखनस्तत्कारित्वाद् देवताऽपनयस्य। १७॥**

**भाष्यं**— तुशब्दः पक्षं व्यावर्तयति। व्यूर्ध्वं ( चन्द्रोदयादूर्ध्वं ) या भजन्ते कर्म, ताभ्यो निर्वपेत् इति आलेखन आचार्यो मन्यते स्म। कुतः? तत्कारित्वात् देवताऽपनयस्य। यस्मात् अकाले तन्त्रप्रवृत्तिकारितो देवताऽपनयः, तस्मात् अपनीता देवता इति व्यूर्ध्वभाग्भ्यो निर्वप्तव्याः। ( अस्मिन् सूत्रे व्यूर्ध्वभाग्भ्यः इत्येव पाठः सर्वत्र दृश्यते। भाष्ये च अयमेव स्पष्टः। य-पुस्तके कुतूहलवृत्तौ च व्यृद्धभाग्भ्यः इति पाठः स्पष्टः। आपस्तम्बश्रौतसूत्रटीकायां रुद्रदत्तीयायां च व्यृद्धभाग्भ्यः इत्येव पाठः स्वीकृतः। स एव चास्माभिः मीमांसादर्शने स्वीकृतः, स एव चार्थतः साधीयान्। भाष्याक्षरप्रामाण्यात्तु व्यूर्ध्वभाग्भ्यः इति पाठः स्वीकार्यः इत्यवधेयम्। **के.** )

**शा**— प्राङ्निर्वापादभ्युदये वैकृतीभ्य एव निर्वापः।

**सोम**— निमित्तगतनिरुप्तपदस्य प्रवृत्तिक्रियोपलक्षकत्वोक्त्यनन्तरं नैमित्तिकगततण्डुलस्यापि उपलक्षकत्वकल्पनात् **संगतिः**। प्रवृत्तमात्रे हविषि देवताऽपनये सति अपेक्षितत्वात् तदानीमेव देवताऽन्तरसंयोगात् तण्डुलावस्थायां देवताऽन्तरसंयोगेऽपि प्रवृत्तिमात्रेण पूर्वदेवताऽपनयात् अपनीताभ्यो निर्वापासंभवात्, अग्रे यद्देवताभ्यो हविरुत्यज्यते तद्देवताभ्य एव निर्वापस्य न्याय्यत्वाच्च वैकृतीभ्य एव निर्वाप इति।

**वि**— 'प्राक् प्राकृतीभ्यो निर्वापो वैकृतीभ्योऽपि वा, ऽग्रिमः। तण्डुलोक्ते, वैकृतीभ्यो हविर्मात्रोपलक्षणात्॥'

**भाट्ट**— कर्मप्रवृत्तिमात्रस्य निमित्तत्वेऽपि नैमित्तिको देवताऽपनयः, तण्डुलग्रहणात् तण्डुलावस्थायामेव च कर्तव्यः। पूर्वं तु प्राकृतीभ्य एव निर्वापादि कार्यम्। इति प्राप्ते, तण्डुलग्रहणस्य विवक्षितत्वे दधिपयसोः अपनयाभावेन देवताऽन्तरसंबन्धानापत्तौ 'सह श्रपयति' इतिवाक्यवैयर्थ्यापत्तेः तस्य हविर्मात्रोपलक्षणत्वात् पूर्वमपि अभ्युदये वैकृतीभ्य एव निर्वापादि।

**मण्डन**— 'तत्रोद्वापो हविर्ग्रहे।' उद्वापोऽत्र निर्वापः।

**शंकर**— 'अविवक्षा तण्डुलानाम्।'

* **अभ्युदितेष्टौ निमित्ते सति** विभागो विधीयते। यागस्तु विद्यते एव। **वा.** १०।१।९।३३. * अभ्युदितेष्टौ निर्वापात् प्राक् यदा चन्द्रोदयः, तदा वैकृतीभ्यो दातृत्वादिगुणयुक्ताभ्यः अग्न्यादिदेवताभ्यो निर्वापः कर्तव्यः। न प्राकृतीभ्यः। **वि.** ६।५।४. * अभ्युदितेष्टौ नैमित्तिकः प्राकृतदेवताऽपनयः दर्शे। **भा.** ६।५।१।१-९. * अभ्युदितेष्टौ प्रदेयत्वेन प्रवृत्तयोः दधिशृतयोः प्रदेयधर्माः वत्सापाकरणादयः कर्तव्याः। **वि.** ९।४।११. * अभ्युदितेष्टौ मध्यमादितण्डुला उपादीयमानत्वेऽपि प्रकृता गृह्यन्ते। तत्र प्रकृतगामिविभजतिवाक्यविहितानां देवतासंयोगवाक्यानां तद्विषयत्वात् यच्छब्दोपबद्धमध्यमादिविभागस्य च प्रकृतप्रत्ययानतिरेकात् अन्येषां न ग्रहणम्। **के.** * अभ्युदितेष्टौ विनाऽपि तादर्थ्येन दधिपयसोः तदुपकारमात्रदर्शनात् प्रणीताधर्मप्राप्तिर्भवति इति वक्ष्यति 'परार्थे त्वर्थसामान्यं' इत्यत्र ( ९।२।१४।४४ )। **वा.** ३।७।१।४. * अभ्युदितेष्टौ सांनाय्यार्थमुत्पन्नयोर्दधिपयसोः श्रपणहेतुत्वात् प्रणीताधर्माः उत्पवनादयः कर्तव्याः। **वि.** ९।२।१४.

**⌛ अभ्युदितेष्टिप्राप्तौ तां कृत्वा केवलदर्शोऽपि पुनः कार्यः॥**

दर्शप्रकरणे अभ्युदितेष्टौ श्रूयते 'न द्वे यजेत, यत् पूर्वया संप्रति यजेत उत्तरया छम्बट् ( नाशं ) कुर्यात्, यदुत्तरया संप्रति यजेत पूर्वया छम्बट् कुर्यात्, नेष्टिर्भवति न यज्ञः, तदनु ह्रीतमुखी अप्रगल्भो जायते, एकामेव यजेत, प्रगल्भोऽस्य जायते। नादृत्यं तत्, द्वे एव यजेत' इति। यद्यपि यागद्वयपक्षे पौर्वापर्यानवधारणादिदोषसद्भावादेकयागपक्षस्यैव प्रगल्भता, तथापि तं पक्षं प्रगल्भतरत्वाभावादनादृत्य यागद्वयमेव कुर्यादित्यर्थः। तदिदं यागद्वयमभ्युदितेष्टिर्दर्शेष्टिश्च, संख्यायाः संनिहित-

परामर्शित्वात्, दर्शस्य प्रकरणात्, संनिधिनाऽभ्युदितेष्टेश्चोपस्थिततत्वात् । वस्तुतस्तु अस्मिन्नेव प्रकरणे शाखान्तरे ' द्वे पौर्णमास्यौ द्वे अमावास्ये यजेत, यः कामयेत ऋध्नुयामिति ' इति श्रुतस्य द्विरभ्यासस्य विधायकमेतद्वचनम् । अन्यथा विकृतिप्रकृत्योरकालोपक्रान्तपर्वविच्छिन्नजीवननिमित्तयोर्विहितत्वेन निमित्तानन्तरमेव कर्तव्यताया ज्ञातत्वेन, संप्रति कतरत् कर्तव्यमित्यार्थवादिकः संशयोपन्यासो न समञ्जसः स्यात् । अभ्यासपक्षे अमावास्यापौर्णमास्योर्मध्ये कतरा प्रथममभ्यसनीयेति संदेग्धुं युज्यते । तस्मात् द्विरिज्यावादः । इति प्राप्ते, ऋद्धिकामपदाश्रवणात् दर्शाभ्युदितेष्ट्योरेवायं वादः । ' अर्धं हविरातञ्चनाय निदध्यात् ' इति विधानाल्लिङ्गादेव दर्शेष्टिरपि प्राप्तैवेति चेत्, कृतमेवेति पुनर्न किमपि कार्यमित्यातञ्चनार्थमर्धहविःस्थापनं व्यर्थमित्याशङ्काऽपनिनीषया तच्छेषोऽयं वादः । ' एकामेव यजेत न द्वे ' इत्याशङ्कितुः पक्षं स्तुत्वाऽनूद्य दूषयति । यत्पूर्वयेति । संप्रति कृतेयमिष्टिर्यदि पूर्वा दर्शेष्टिरेव, तदा अस्या अकालोपक्रान्तत्वात् प्रायश्चित्तेष्टिलोपः । यदि चेयमुत्तरा प्रायश्चित्तेष्टिरेव, तदा परदिने पर्वणि कर्तव्याया अप्यकरणाच्छम्बट्कारः । अतो द्वयोः कर्मणोर्भेदावश्यंभावादेकामेव न द्वे इति पक्षमनादृत्य द्वे एव यजेत, न केवलामभ्युदितेष्टिमिति पक्षस्यैवाश्रयणीयत्वात् । अर्धमातञ्चनाय निदध्यादित्यर्थवादार्थः । **सकर्ष. १।२।८.**

## अभ्युदितेष्टिरूपं चन्द्राभ्युदयनिमित्तकं प्रायश्चित्तं असंनयतोऽपि भवति ॥

**सांनाय्यसंयोगान्नासंनयतः स्यात् । ६।५।६।२१॥**

**भाष्यं**—अभ्युदितेष्टिरेव उदाहरणम् । तत्र श्रूयते ' दधनि चरुं ' ' शृते चरुं ' इति । तत्र संदेहः किं संनयतो भवति अभ्युदये प्रायश्चित्तं, उत अविशेषेणेति ( संनयतः असंनयतश्चेति ) । किं प्राप्तं ? संनयतः अभ्युदये प्रायश्चित्तम् । कुतः ? सांनाय्यसंयोगात् । सांनाय्यसंयोगो हि भवति ' शृते चरुं ' ' दधनि चरुं ' इति । शृताद्यभावात् न असंनयतो भवितुमर्हति । वैगुण्यं हि तथा स्यात् ।

**औषधसंयोगाद्वोभयोः । २२ ॥**

**भाष्यं**--वाशब्दः पक्षं व्यावर्तयति । उभयोरपि स्यात्, न केवलस्य संनयतः । कुतः ? औषधसंयोगात् । ये मध्यमाः, ये स्थविष्ठाः, ये क्षोदिष्ठाः इति भवति औषधसंयोगः । न च शक्यः असंनयतोऽपि इति । तस्मान्नास्ति कारणं असंनयतो निवर्तेत । अतः उभयोरपि पक्षयोः प्रायश्चित्तमिति ।

**वैगुण्यान्नेति चेत् । २३ ॥**

**भाष्यं**— इति यदुक्तं, असंनयतो दध्नः शृतस्य चाभावात् तदधिकरणता नास्ति, तस्मात् वैगुण्यं तस्मिन् पक्षे इति, तत् परिहर्तव्यमिति ।

**नातत्संस्कारत्वात् । २४ ॥**

**भाष्यं**--नैतदेवम् । नहि दधि अधिकरणं चरोः श्रपणे श्रूयते । किंतु यथा स्थविष्ठा इन्द्राय प्रदात्रे, एवं दधि अपि देवतासंबन्धार्थं विधीयते, न चरुसंबन्धार्थमिति । मिद्येत हि तथा वाक्यं स्थविष्ठाः देवतायै, दधनि च ते कर्तव्याः इति । सप्तमीसंयोगस्तु प्राप्तेऽर्थे अनुवादः । तस्मात् अविवक्षितं तेषां साहित्यम् । लक्षणत्वेन हि ते श्रूयन्ते इति । नहि पयो दधि च नाम्नीति स्थविष्ठादीनां न देवताऽपनयो भवति । असंनयतोऽपि अर्थादप्सु श्रपयिष्यते इति ।

टुप्--' भिद्येत हि तथा वाक्यं ' इति ( भाष्यं ) स्वार्थपरार्थवद्भावापेक्षमेतदुच्यते । देवतासंबन्धे अस्य स्वार्थता, चरुसंबन्धे परार्थतेति । ' सप्तम्यर्थः अनुवादः ' इति, ( भाष्ये तु ' सप्तमीसंयोगस्तु प्राप्तेऽर्थे अनुवादः ' इत्येव पङ्क्तिः । टुप्टीकातन्त्ररत्नयोस्तु अर्थतोऽनुवादः स्यात्, तन्मतेन भाष्येऽपि तथैव वा पाठः स्यात् ) कथमेतत् ? एतत्तावत् दर्शकर्मैव निमित्ते अन्यथाकारम् ( अन्यथाभूते इत्यर्थः । ' अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत् ' पा० ३।४।२७ एषु कृञो णमुल् ) तत्र पयः स्वैर्धर्मैर्धर्मवत् । औषधस्यापि श्रपणं स्वैरेव धर्मैः प्रणीतादिभिर्धर्मवत् । तयोः प्रत्यक्षेण चोदनावाक्येन भिन्नमेव श्रपणमुपदिश्यते ( औषधस्य कपालेषु, पयसस्तु उखायाम् ) कुतः साहित्यं, येन अर्थप्राप्तः सप्तम्यर्थो भवेत् ? । दध्नस्तु श्रपणमेव नास्ति । तस्य

दूरत एव नष्टः सहभावः । अथोच्येत, पयसः पूर्वमवदाय तत्र चर्वंवदानं निक्षिप्यते, एवं पयसि दधनि च (चरुः) भविष्यति । तदपि न । नहि एतदवदाने श्रूयते अभ्युदयेन निमित्तेन । किं तर्हि ? विभागोऽभ्युदये विधीयते । न च वचनमन्तरेण दधि पयो वा चरोः शक्यं पूर्वमवदातुम् । तस्मादेवमेतत् विज्ञेयं, अभ्युदितेष्टिप्रकरणे सहश्रपणविधातृ वाक्यमस्ति 'सह श्रपयति' इति । अतः साहित्ये क्रियमाणे अर्थप्राप्तः सतम्यर्थोऽनुवादः । विशिष्टविधानं तु निःसरणोपायत्वेन भवति । 'स्वविष्ठान्, इन्द्राय, प्रदात्रे, दधनि, चरुं' इति पञ्चपदविशिष्टा भावना विधीयते । यागस्तु धात्वर्थः संनिहित एव । यदि संनिहितो न स्यात्, कर्मान्तरं भवेत् । अस्ति तु सः । एवं भाष्यकारेण नाङ्गीकृतं, बह्वर्थत्वात् वाक्यभेदसरूपमेव इति कृत्वा ।

( अत्र तन्त्ररत्नं– यत्तु भाष्यकारेणोक्तं 'असंनयतोऽपि अर्थादप्सु श्रपयिष्यते' इति, न तत् चरुश्रपणाभिप्रायं, चरुत्वस्याविवक्षितत्वात् । किंतु प्रणीताभिः पुरोडाशश्रपणं संपादयिष्यतीत्यर्थः ) ।

शा––असंनयतः दधिशृताभावेऽपि तण्डुलानां देवताऽन्तरसंयोगः कर्तव्यः ।

**सोम**––सामिकृते वैकृतीनां पदार्थसंयोगासंभवात् निर्वापनिवृत्तिवत् असंनयतो दधिशृतयोरसंभवात् नैमित्तिकनिवृत्तिः इति प्रत्यवस्थानात् **संगतिः** ।

**वि**––'सेष्टिः सांनाय्यिनो वा स्यादन्यस्यापि, दधिश्रुतेः । नान्यस्येत्यग्रिमो, ऽन्त्यः स्याद् दैवमात्रविधानतः ॥' उदके चरुश्रपणसंभवाच्च सांनाय्यिवत् अन्यस्यापि सेष्टिः ।

**भाट्ट**––किमियं अभ्युदितेष्टिः संनयत एव, उत असंनयतोऽपि इति चिन्तायां द्रव्योद्देशेन देवतामात्रविधिपक्षे यद्यपि द्रव्यस्य साहित्यं अविवक्षितं, तथापि उद्देश्यानेकत्वादेव एतत्पक्षापरितोषात्, भावनाऽन्तरविधिपक्षे च तद्विशेषणयोः दधिस्वविष्ठयोः शृताणिष्ठयोश्च साहित्यस्य विवक्षितत्वात्, विधेयसामर्थ्यानुरोधेन संनयन्मात्रविषयत्वम् । **इति प्राप्ते**, 'न चेदन्येन शिष्टाः' इति न्यायेन (१।४।६।१९) अप्राप्तविशेषणस्यैव कल्प्यविशेषणविधिविधेयत्वेन द्रव्यसाहित्यस्य तत्तद्यागसाहित्यवशेनैव च प्राप्ततया विशेषणविध्यकल्पनात् अविवक्षितत्वेन असंनयतोऽपि अभ्युदितेष्टौ अधिकारः । अतश्च ऐन्द्राग्नस्यापि औषधद्रव्यकत्वात् मध्यमादिभेदेन आग्नेयवत् आवृत्तिः । तत्रापि 'सह श्रपयति' इति वचनेन आग्नेय–ऐन्द्राग्नहविषोः सहश्रपणे विहिते अष्टाकपालत्वद्वादशकपालत्वयोः विरोधे मुख्यत्वात् अष्टाकपालत्वस्यैव अनुग्रहेण त्रयोऽपि अष्टाकपाला एव कार्याः । अथवा आद्य एव अष्टाकपालः इतरौ तु जले एव चरू ।

**मण्डन**—'असांनाय्येऽप्ययं यजिः ।'

**शंकर**—'असांनाय्येऽपीयमिष्टिः ।'

**८ अभ्युदितेष्ट्यधिकरणम्** । चन्द्राभ्युदितेष्टौ नैमित्तिकः प्राकृतदेवताऽपनयः ॥

## अभ्युदये कालापराधादिज्याचोदना स्याद् यथा पञ्चशरावे । ६।५।१।१ ॥

**भाष्यं**— इदमामनन्ति 'वि वा एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात् स त्रेधा तण्डुलान् विभजेत्, ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाशमष्टाकपालं निर्वपेत्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं, ये क्षोदिष्ठास्तान् विष्णवे शिपिविष्टाय शृते चरुं' इति । तत्र संदेहः किं कालापराधे यागान्तरमिदं चोद्यते, उत तेष्वेव प्रकृतेषु कर्मसु निमित्ते देवताऽपनय इति । किं प्राप्तम् ? अभ्युदये यः कालापराधः, तत्रेज्याचोदना स्यात् । कथम् ? पुरोडाशमग्नये दात्रे मध्यमान् कुर्यात्, ये स्थविष्ठास्तानिन्द्राय प्रदात्रे दधनि चरुं कुर्यात्, क्षोदिष्ठान् विष्णवे शिपिविष्टाय शृते चरुमिति । 'यजतिस्तु द्रव्यफलभोक्तृसंयोगात्' ( २।३।५।१४ ) इति यागविधानं गम्यते । यथा पञ्चशरावे द्रव्यदेवतासंबन्धेन कर्मान्तरं गम्यते । यथा पशुकामेष्ट्यां 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्, ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं निर्वपेत्, ये मध्यमास्तान् विष्णवे शिपिविष्टाय शृते चरुं, येऽणिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं' इति । एवमिहापीति । अपि च न प्रकृते द्रव्ये देवता

श्रूयते । शृते चरुमिति हि तत्र भवति वचनम् । न चाभ्युदयकाले श्रपणं कृतमस्ति । तस्मात् कर्मान्तरम् ।

टुप्— 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्' ( इति ) 'ये मध्यमास्तानग्नये दात्रेऽष्टाकपालं' इति च द्वे वाक्ये । कुतः ? अर्थभेदात् ( उभयत्रापि आख्यातश्रवणात् । अतः ) न तयोः ( निमित्तनैमित्तिकत्वं ) संबन्धः इति के चित् । तन्न । अर्थैकत्वात् ( प्रयोजनैकत्वात् ) एकं वाक्यमित्युक्तम् ( २।१।१४। ४६ ) निमित्तनैमित्तिकत्वेन ( च ) एकोऽर्थः । न च अभ्युदयो विधीयते । इदानीं किं यत् निमित्तमिति ( चिन्त्यते ) । यस्य, हविः, निरुप्तं, ( पुरस्तात्, चन्द्रमाः, ) इति पञ्चपदविशिष्टं निमित्तं ( अभ्युदयाख्यं प्रतीयते ) न च तावत्परिमाणं ( पञ्चपदविशिष्टं ) निमित्तं ( नैमित्तिकेन ) संगच्छते । किंतु यावानेव तस्याश्रयः, तावानपेक्ष्यते ( यावता विशेषणेन विना अभ्युदयस्य निमित्तता न घटते, तावदेव गृह्यते यथा हविष आर्तिः ) । उच्यते । सर्वमपेक्षितम् । ( कथं ? ) अभ्युदयस्य तावत् कर्ता ( चन्द्रमाः ) विवक्षितः ( एव ) । नियतदिक्त्वाच्चाभ्युदयस्य 'पुरस्तात्' इत्यनुवादः । ( ननु शुक्लादौ पश्चादपि चन्द्रमसोऽभ्युदयः । तत्राह— ) यत्तु पश्चात् दर्शनं, न सोऽभ्युदयः । न च कदा चिदपि चन्द्रमा नोदेतीति हविःप्रक्रमेण विशेष्यते । अतः सर्वमीप्सितं नैमित्तिकस्य ( अतः सर्वं विवक्षितम् ) । एवं निमित्तं विशोध्य नैमित्तिकं विचार्यते किं कर्मान्तरं, किंवा प्रक्रान्तस्य ( दर्शस्य ) विशेषमात्रमिति । ( पूर्वपक्षमाह— ) यागे विधीयमाने नानेकविधानं दोषः । प्रकृते तु गुणे विधीयमाने वाक्यभेदः ( स्यात् ) । प्रकृतं तु ( कर्म अकाले प्रवृत्तं ) लुप्यते इति ।

**अपनयो वा, विद्यमानत्वात् । २ ॥**

**भाष्यं**— देवताऽपनयो वा । कुतः ? विद्यमानत्वात् । विद्यन्ते हि कर्माणि प्रकृतानि । तेषु विद्यमानेषु पुनर्देवतासंबन्धो हविषो नोपपद्यते, यस्यानुपपत्त्या यागः कल्प्येत । तस्मान्न यागान्तरम् । तेष्वेव हविःषु देवताऽन्तराणि विधीयन्ते ।

टुप्— विद्यन्ते हि कर्माणि प्रकृतानि ( तेषु देवताऽन्तरमात्रं विधातुं शक्यते ) कतमानि तानि ? उच्यते । श्रूयते ( अत्र ) 'त्रेधा तण्डुलान् विभजेत्' इति । तत्र 'त्रेधा' इत्यनुवादः, त्रित्वात् दर्शयागानाम् । ( तण्डुलान् इत्यपि संयुक्तमात्रप्रदर्शनार्थम् । विभागमपि न विधत्ते मध्यमादिविनियोगवशेनैव अर्थसिद्धत्वात् । न च तण्डुलविशिष्टविभागवचनं युक्तं, कल्पनागौरवभयात् । अतोऽयं वाक्यार्थः 'विभजेत् । किं ? संयुक्तान् । केन संयुक्तं ? दर्शद्रव्यदेवताकेन यागेन इति )' । अतो विभागोत्तरकालं शुद्धा यागा विद्यन्ते ( प्रकृताः ) । इदानीं निर्वपेत् इति भावना द्रव्यदेवतागुणविशिष्टा ( विहिता ) यागमन्तरेण अनुपपद्यमाना यागं कल्पयति, प्रकृतं वा उपादत्ते । तत्र कल्पनात् क्लृप्तप्रत्ययो बलीयान् । प्रकृतसंबन्धविधानाच्च (यथाक्रमं) प्रथमभावनायाः प्रथमः ( यागः ), उत्तरौ तु उत्तरयोः ।

**तद्रूपत्वाच्च शब्दानाम् । ३ ॥**

**भाष्यं**— देवताऽपनयस्वरूपाश्चामी शब्दा भवन्ति । ये मध्यमास्तेषां देवताऽन्तरं विधीयते । तत्र द्रव्यं प्राप्तम् । अप्राप्ता देवता विधीयते । कथं पुनर्देवताविधानार्थे नानेकगुणविधानदोषो जायेतेति । उच्यते । नैवात्रानेको गुणो विधीयते कस्मिंश्चिद्वाक्ये । त्रेधा तण्डुलान् विभजेदित्यत्र तावत् विभागमात्रं विधीयते, अन्यत् सर्वमनूद्यते । तस्माददोषः । ये मध्यमास्तेषामग्निर्देवता विधीयते, अन्यत् पुरोडाशादि अनूद्यते । ये स्थविष्ठाः तेषां दधिसहितानामिन्द्रो देवता अस्मिन् वाक्ये विधीयते । तत्रार्थप्राप्ता श्रपणे सति चरुता सह सतम्यर्थेनार्थप्राप्तेनैवास्मिन् वाक्ये अनूद्यते । ये क्षोदिष्ठास्तेषां शृतसहितानां विष्णुः शिपिविष्टो देवता विधीयते, अन्यत् सर्वमनूद्यते । तस्माददोषः ।

टुप्— नैवात्र अनेको गुणो विधीयते (कर्मोद्देशेन), किंतु विद्यमानहविर्विभागाग्निदातृत्वविशिष्टा ( विद्यमानस्य हविषः तण्डुलरूपस्य यो विभागः तेन, अग्निना देवतया दातृत्वेन च विशेषणेन विशिष्टा ) भावना प्रकृतयागसंबद्धा विधीयते । तथा उत्तरे दधिस्थविष्ठचर्वाधारेन्द्रप्रदातृत्वविशिष्टा ( दध्ना, स्थविष्ठेन तण्डुल-

विभागेन निष्पन्नेन चरुणा, इन्द्रेण, प्रदातृत्वेन च विशिष्टा भावना), पयःक्षोदिष्ठविष्ण्वादिविशिष्टा (पयसा च क्षोदिष्ठतण्डुलभागसिद्धचरुणा च विष्णुना च आदिशब्दोक्तशिपिविष्टत्वेन च विशिष्टा भावना विधीयते), मध्यमादिश्रवणात् (मध्यमादिवाक्यैरित्यर्थः)। एवं च (भावनाविधानात् बहूनां) अर्थानां अविभागः (एकेनैव विधिना विधानं सिध्यति इति)।

भाष्यव्याचिख्यासया (भाष्यानुसारेण अधिकरणं) वर्ण्यते। अत्र (भाष्यमते) प्रकृतेषु यागेषु द्रव्ये चाविभक्ते (विभजेत् इति–) देवताविभागमात्रं विधीयते (देवताभ्यः द्रव्यं तण्डुलादि विभजेदिति। ननु एवं सति चरुता सप्तम्यर्थश्च कथमन्वीयते, अत आह भाष्यकारः–) तत्र अर्थप्राप्ता श्रपणे सति चरुता (सह सप्तम्यर्थेन अर्थप्राप्तेनैव अस्मिन् वाक्ये अनूद्यते इति। चोदयति–) सत्यमेतत् (श्रपणे सति चरुता प्राप्तैवेति। किंतु) दध्नः श्रपणमेव नास्ति। उच्यते, वचनात् श्रपणं (भविष्यति) सह श्रपयति इति। ननु (अनेन) श्रपणमनूद्य सहत्वं विधीयते। (परिहरति–) लाघवात् सहत्वं (प्राप्तं) एव। अनेन तु (वचनेन) दध्नः एव श्रपणं (अन्यतः अप्राप्तं) विधीयते। अर्थप्राप्ता चरुता सप्तम्यर्थश्च (तस्मान्न कर्मान्तरम्)।

**आतञ्चनाभ्यासस्य दर्शनात्। ४॥**

**भाष्यं**— आतञ्चनाभ्यासं च दर्शयति। कथम्? एवं श्रूयते 'यदि बिभीयादभि मोदेष्यतीति महारात्रे हवींषि निर्वपेत्। फलीकृतैस्तण्डुलैरुपासीत। अर्धं दधि हविरातञ्चनार्थं निदध्यात्, अर्धं न। यद्यभ्युदियात्तेनातच्य प्रचरेत्। यदि न, प्रातरेतेन ब्राह्मणान् भोजयेत्' इति। यदि कर्मान्तरमुपादेयत्वेन, तदा तण्डुला दधि शृतं च। तस्मात् लौकिकान्युपादेयानि। नह्येष तदा प्रकृतानां व्यापारः। तत्राविनष्टे दधनि, अपरेद्युरामावास्ये क्रियमाणे विद्यते दधीति नातञ्चनमावर्तेत। तस्यामेवाभ्युदितेष्टौ दधि विद्यते, इति नातञ्चनं स्यात्। अथ निमित्ते देवताऽपनयः, ततस्तस्मिन् दधनि चरुः कृत इति, पुनरामावास्ये दोहे आतञ्चनेन कार्यम्। एवमातञ्चनाभ्यासस्य दर्शनं देवताविधाने युज्यते इति।

**अपूर्वत्वाद्विधानं स्यात्। ५॥**

**भाष्यं**— अथ यदुक्तं, यथा पशुकामेष्ट्यां कर्मान्तरं 'यः पशुकामः स्यात् सोऽमावास्यामिष्ट्वा वत्सानपाकुर्यात्' इति। तत्परिहर्तव्यम्। तत्रोच्यते। युक्तं यत्तत्र कर्मान्तरविधानम्। कुतः? अपूर्वत्वात्। न तत्र कश्चित् पूर्वप्राप्तो यागो विद्यते। सोऽमावास्यामिष्ट्वेति हि परिसमाप्ते तस्मिन् इदमारभ्यते। तत्र द्रव्यदेवतासंयुक्तो निर्वपतिशब्दो नान्तरेणोत्सर्गं, द्रव्यदेवतयोः संबन्धो घटते इति यजतिं गमयति। न त्विहैवम्। इह हि यागः प्रकृतो गम्यते। तस्मिन्नेव विद्यमानस्य द्रव्यस्य देवतासंबन्धमात्रं विधीयते इति न दोषो भवति।

**पयोदोषात् पञ्चशरावेऽदुष्टं हीतरत्। ६॥**

**भाष्यं**—अथ यदुपवर्णितं, यथा पञ्चशरावे कर्मान्तरं विधीयते, एवमिहापीति। तत्परिहर्तव्यमिति। अत्रोच्यते। युक्तं पञ्चशरावे कर्मान्तरम्। दुष्टं हि तत्र द्रव्यं, यस्य देवता विधीयते तत्रावश्यं द्रव्यमुपादेयत्वेन चोदयितव्यम्। तस्मिन्नुपादीयमाने देवताऽन्तरे चापूर्वः संबन्धो विधीयते, तद्यागान्तरं भवतीति। इतरदिह द्रव्यमदुष्टम्। तदनूद्य प्रकृते यागे देवता विधीयते इत्युक्तम्। तस्माददोष इति।

**सांनाय्येऽपि तथेति चेत्। ७॥**

**भाष्यं**— एवं चेत्पश्यसि, सांनाय्येऽपि दोषः। तदपि ह्यभ्युदये तत्कालापभ्रंशात् दुष्टमिति।

**न, तस्यादुष्टत्वादविशिष्टं हि कारणम्। ८॥**

**भाष्यं**— नैतदेवम्। पञ्चशरावे हि दुष्टं द्रव्यम्। इह तादृशमेवावतिष्ठते। ननु कालापभ्रंशेन दुष्टम्? न दुष्यति। अविशिष्टं हि कारणम्। अभ्युदये प्रायश्चित्तविधानं दुष्टेऽप्युपपद्यते कालापराधेन, अदुष्टेऽपि। तत् अकाले ह्यभिप्रवृत्तस्य शक्यते देवताविधानं, न तु विनष्टस्य।

**लक्षणार्था शृतश्रुतिः। ९॥**

**भाष्यं**— अथ यदुक्तं, न प्रकृते द्रव्ये देवता श्रूयते, शृते चरुमिति तत्र भवति वचनं, न चाभ्युदयकाले श्रपणं कृतमस्तीति। तत्परिहर्तव्यम्। अत्रोच्यते। लक्षणार्थेयं

शृतश्रुतिः धर्मलक्षणार्था, शृते शृतसहचरितधर्मके इति।

**टुप्—** धर्माधिकं पयः शृतमित्युच्यते। श्रपणेन च सहचरिता धर्मा यस्मिन् वत्सापाकरणादयः तदिदं शृतसहचरितधर्मकं पयः।

**शा—** **'अनेकार्थविधायित्वात् कर्मान्तरविधिर्भवेत्। प्राप्तकर्मानुवादेन नानेकार्थविधिः क्षमः॥'** उच्यते। **'प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना। प्राकृतीभ्यस्तदाच्छिद्य द्रव्यमन्याभ्य उच्यते॥'**

**सोम— प्रयोजनं** पूर्वपक्षे अकालेपक्रान्तदर्शप्रयोगं त्यक्त्वा संकल्पप्रभृति कर्मान्तरं कर्तव्यम्। सिद्धान्ते तु अकालेपक्रान्तदर्शप्रयोगः एव देवताऽन्तरसंयोजनरूपविकारयुक्तः समापनीयः। तथा पूर्वपक्षे चरुत्वस्य विधेयत्वात् असांनाय्ययाजिनोऽपि इन्द्राय प्रदात्रे विष्णवे शिपिविष्टाय च चरुर्भवति। सिद्धान्ते तु पुरोडाश एवेति।

**वि—** 'इष्टिरभ्युदये दर्शात् कर्मान्यद्रुत देवताः। पूर्वास्त्याज्या, विशिष्टस्य विधानादन्यकर्म तत्॥, प्रकृतप्रत्यभिज्ञानान्न कर्मान्तरचोदना। देवताः प्रकृतास्त्यक्त्वा द्रव्यमन्याभ्य उच्यते॥'

**भाट्ट—** दर्शपूर्णमासयोः 'यस्य हविर्निरुप्तं०' इति श्रुतम्। तत्र निमित्तं तावत् चन्द्राभ्युदयावच्छिन्नदिने प्रारम्भ इति वक्ष्यते। स च निमित्तस्वाभाव्येनैव दर्शस्य इत्यपि सिद्धमेव। नैमित्तिकं पुनरत्र किं कर्मान्तरं, उत गुणान्तरयुक्तं तदेव इति चिन्तायां वाक्यभेदापादकगुणात् कर्मान्तराण्येव अत्र त्रीणि तत्तद्वाक्यैर्विधीयन्ते। नहि अग्न्यादयो देवताः, दातृत्वादयस्तद्गुणाः, मध्यमादीनि द्रव्याणि, अष्टाकपालत्वादयः तद्धर्माः, दधिशृतयोः अधिकरणत्वं, चरुत्वं च, इति अनेकार्थविधानं प्राप्ते कर्मणि संभवति। न च अष्टाकपालकत्वस्य आग्नेये प्राप्तत्वेन अविधानं, तत्र प्राप्तत्वेऽपि ऐन्द्राग्ने अप्राप्ततया विधेयत्वावश्यकत्वात्। न च दात्रादिपदानां यौगिकत्वात् सामानाधिकरण्यादेव अग्न्यादिपदार्थेषु अन्वयोपपत्तेः दातृत्वादिगुणविशिष्टाग्न्यादिविधानं, 'आग्नेयोऽष्टाकपालः' 'पञ्चदशानि आज्यानि' इत्यादिवत् इह असमस्तपदानां क्रियाव्यतिरेकेण परस्परान्वयस्य अप्युपपन्नत्वात्। अत एव 'प्रकृतमध्यमादिद्रव्योद्देशेन देवतान्तरमात्रविधिः' इत्यपास्तं, देवतातद्गुणरूपानेकविधौ वाक्यभेदतादवस्थ्यात्। किंच 'एवं त्र्यविशादिवाक्ययोः द्रव्यद्वयोद्देशात् वाक्यभेदः, न चासौ स्वीक्रियते' इति तन्त्ररत्नोक्तं युक्तं प्रमाणाभावात्, तत्रैव तदापत्तेश्च। किंच, मध्यमादिषु यच्छब्दप्रयोगेण प्रकृतग्रहणेऽपि दधिशृतयोः तदभावात् प्रकृतग्रहणे प्रमाणाभावेन उद्देश्यत्वानुपपत्तिः। **न च** तथापि प्रयोगान्तरमात्रस्यैव स्वीकारेण कर्मान्तरत्वे प्रमाणाभाव इति **वाच्यम्।** निमित्तस्य विनियोगान्वयित्वस्यैव यावज्जीवाधिकरणे (२।४।१) स्थापितत्वेन अत्र प्रयोगान्वयिगुणाभावेन वाजिनवदेव तद्भेदानुपपत्तेः। अत एव उत्पत्त्यन्वयिनो गुणस्य कर्मभेदकत्वादेव न वाजिनवदेव भावनामात्रभेदकत्वम्। अतः पञ्चशरावदेव कर्मान्तराण्येव तत्तद्-द्रव्यदेवताविशिष्टानि तत्तद्वाक्यैर्विधीयन्ते। तत्प्रकृतिभूततण्डुलानां च 'त्रेधा तण्डुलान् विभजेत्' इत्यनेन मध्यमादिभावेन त्रिधा विभागः प्रयोगान्तःपातितया विधीयते, न तु देवताऽपनयादि, तथात्वे लक्षणाऽऽपत्तेः, देवताऽन्तरविधिविरलेनैव तत्सिद्धौ अपनयविधिवैयर्थ्याच्च। अत एव संस्कारविधिबलादेव प्रसिद्धत्वात् 'ये मध्यमाः' इति यच्छब्दोऽप्यनुवादः। दधिशृतयोश्च न मन्मतेऽपि अधिकरणत्वेन विधिः। तथात्वे प्रणीताकार्यापन्नत्वेन सहश्रपणस्य अर्थसिद्धत्वात् अभ्युदितेष्टिप्रकरणस्थसहश्रपयतीत्येतद्वाक्यवैयर्थ्यापत्तेः। अनेन हि न सर्वेषां भिन्नदेवताकानामपि हविषां एककालावच्छेदेन सहश्रपणं विधीयते, एकप्रयोगविधिवशेनैव तत्प्राप्तेः। अतस्तेन संप्रतिपन्नदेवताकानां सहश्रपणं विधीयते। अत एव एतद्वैयर्थ्यमियैव उत्पत्तिवाक्ये दधिशृतयोः नाधिकरणत्वेन विधिः, किंतु करणत्वेनैव। लक्षणाऽपि सिद्धान्तवत् न दोषः अतः चरुत्वाधिकरणत्वयोः अर्थप्राप्तत्वादेव अविधानम्। एतेषां च नैमित्तिकानां कर्मणां स्वकाले क्रियमाणदर्शाङ्गत्वं प्रकरणात्। तच्च अकालोपक्रमनिमित्तदोषनिर्घातार्थत्वाच्च द्वादशाधिकरणन्यायेन (१२।३।५) विकल्प्येत। यदि तु अकाले अनुष्ठितस्य अविहित-

त्वेन वृथाचेष्टारूपत्वात् विहितानुष्ठाननिषिद्धानुष्ठान-प्रयुक्तदोषाभावेन तन्निर्घातार्थत्वानुपपत्तेः अदृष्टार्थत्वमेव एतेषां नैमित्तिकानां इति विभाव्यते, तदा अस्तु समुच्चयः। वस्तु अग्नेः आयतनात् वहिर्नयनप्रयुक्तः प्रणयनपक्षे दोषः, नासौ दर्शवैगुण्यापादकः इति न तमादायापि अस्य दोषनिर्घातार्थत्वम् । **इति प्राप्ते,** भेदकप्रमाणाभावात् न कर्मान्तरम्। न च वाक्यभेदा-पादको गुणः, द्रव्योद्देशेन देवतामात्रविधानेन तस्य वाक्य-भेदानापादकत्वात् । देवतायाश्च उपपादकीभूतयागा-पेक्षायां ऐन्द्रवायवादिवत् प्रकृतानामेव उपपादकत्वोपपत्तेः भवदुक्तरीत्यैव चरुत्वाधिकरणत्वयोः अर्थप्राप्तत्वात् अनु-वादः। यच्छब्दप्रयोगात् उद्देश्यत्वाच्च मध्यमादेर्दध्यादेश्च प्रकृतस्यैव ग्रहणम्। देवताकारकस्य एकत्वाच्च परस्पर-विशेष्यविशेषणभावेन अग्निपदस्य तात्पर्यग्राहकत्वमङ्गी-कृत्य एकपदोपादानेन वा विशिष्टस्य व्युत्पन्नत्वात् न विधेयानेकता। यथा च अष्टाकपालत्वस्य प्राप्तिः, तथा असंनयतोऽधिकारप्रस्तावे वक्ष्यते (६।५।६)। अन्त्ययोः उद्देश्यानेकत्वनिमित्तो वाक्यभेदः परं अगत्या स्वीक्रियते इति **मूलानुयायिनः** । वस्तुतस्तु स्वीकारे प्रमाणा-भावात्, पञ्चशरावत्राक्येऽपि च इन्द्रदेवतोद्देशेन त्वत्पक्षे नैमित्तिकपञ्चशरावौदनरूपैककारकविधानापत्तेः, प्रकृते उद्देश्यानेकत्वाङ्गीकारे च तत्र विधेयानेकत्वस्वीकारस्य वारयितुमशक्यत्वात् द्रव्योद्देशेन देवतामात्रविधिपक्षा-नुपपत्तेः, द्रव्यदेवताविशिष्टभावनाऽन्तरविधिपक्षेणैव सिद्धान्तोपपत्तिः। **न च** अस्मिन्नपि पक्षे उत्पत्त्यन्वयिनो गुणस्य वाजिनवत् यागभेदकत्वापत्तिः, भावनामात्रभेदकत्वे-ऽपि वा पञ्चशराववाक्येऽपि तदापत्तिरिति **वाच्यम्** । यच्छब्देन पूर्वपरामर्शकेन पूर्वयागीयत्वोपस्थित्या यागा-न्तरप्रमापकत्वानुपपत्तेः। अत एव वाक्यभेदपरिहारार्थं परं भावनाभेदमात्रं अभ्युपगम्यते। वाजिनपञ्चशरावादौ तु तदभावात् यागान्तरत्वं इति विशेषः। अत एव धर्मि-ग्राहकप्रमाणेन यागैकत्वे अवधारिते पूर्वद्रव्यावरुद्धे तस्मिन् द्रव्यान्तरयोर्दधिपयसोर्विकल्पेन समुच्चयेन वा निवेशायोगात् तयोरपि तत्सयागीयत्वयोरेव विधेयभावना-विशेषणत्वम्। अतश्च द्रव्यदेवताविशिष्टभावनाऽन्तर-विधानेऽपि पूर्वयागीयद्रव्याणां मध्यमादीनां एतद्भावनां प्रति उपादेयत्वात् न लौकिकमध्यमादिग्रहणप्रसक्तिः, न वा लौकिकदध्यादिग्रहणम् । भवदुक्तरीत्यैव चरुत्वाधि-करणत्वयोः अनुवादत्वेन ममापि अविधेयत्वात्। वस्तु-तस्तु स्वविष्ठादिप्रकृतिकपुरोडाशेन दध्यादेः सहश्रपणा-पत्तेः न चरुत्वप्राप्तिः, इति तद्विधिरावश्यक एव। दध्यादिना च सह श्रपणविधानात् तदधिकरणत्वं परम-नुवादः। सर्वथा न लौकिकग्रहणम्। किंच 'त्रेधा तण्डुलान् विभजेत्' इत्यस्य अपनयविधित्वादपि अय-मर्थो निर्णीयते। तथाहि, न तावदत्र तण्डुलानां मध्य-मादिभावेन त्रेधा विभागो विधीयते, तस्य मध्यमादि-वाक्यैरेव प्राप्तत्वात्। **न च** अस्मन्मते चित्रेष्टितण्डुलवत् पुरोडाशादिप्रकृतित्वेनापि लोकसिद्धानामेव मध्यमादीनां तण्डुलानां ग्राह्यत्वापत्तेः प्रयोगान्तःपातिविभागसिद्ध्यर्थं विधिरर्थवान् इति **वाच्यम्**। लोकसिद्धमध्यमादिग्रहणे तण्डुलप्रकृतिभूतव्रीहिसंस्कारकनिर्वापप्राप्त्यभावेन महारात्रे एव हवींषि निर्वपेत् इत्यनुवादानुपपत्तेः व्रीहीणामेव अवश्योपादेयतया विभागस्यापि अर्थप्राप्तत्वात्, श्रपण-सत्त्वेन चित्रेष्टिन्यायाभावाच्च (१।४।२)। अतः 'त्रेधा तण्डुलान्' इति पदद्वयं आनर्थक्यभिया प्रकृतहविःपरं अङ्गीकृत्य तस्य अपरित्यक्तयागान्वयस्यैव प्रकृतदेवताभ्यः अपनयो विधीयते। आनर्थक्यभिया च लक्षणाऽपि अदोषः। तदपनये च प्रकृतदेवतानां यागसंबन्धोऽपि अपनीतो भवति । न च अयमपनयोऽपि नैमित्तिक-देवताऽन्तरविधिबलादेव सिद्ध इति विधिवैयर्थ्यं, एत-द्विध्यभावे पूर्वयागस्य पूर्वदेवताऽवरुद्धतया देवताऽन्तरा-नपेक्षत्वेन तत्र नैमित्तिकदेवताऽन्तरस्य तद्विशिष्टभावना-ऽन्तरस्य वा विधानानुपपत्तेः । नैमित्तिकस्य हि निरवकाशतया नित्यबाधकत्वं वक्ष्यते। यागान्तरविधाने-नैव सावकाशत्वोपपत्तेः न निरवकाशता। अत एव यत्र यागान्तरविध्यसंभवः प्रमाणान्तरप्रमितः, तत्र फलचम-सादौ निरवकाशेन नैमित्तिकेन नित्यापनयाभावेऽपि नित्यस्य बाधः। अत एव अपनयविध्यभावादेव पञ्च-शराववाक्ये कर्मान्तरम्। 'यः पशुकामः स्यात् सोऽमा-वास्यामिष्ट्वा वत्सानपाकुर्यात्, ये मध्यमास्तान् विष्णवे

शिपिविष्टाय शृते चरुं, ये स्थविष्ठास्तानग्नये सनिमतेऽष्टाकपालं, येऽणिष्ठास्तानिन्द्राय प्रदात्रे दधंश्चरुं ' इतिवचनविहितायां पशुकामेष्टावपि च अपनयविध्यभावादेव कर्मान्तरम् । यच्छब्दस्तु लोकप्रसिद्ध्यनुवादकतयैव कथंचित् तत्र व्याख्येयः । अतश्च अपनयविधिरेव पूर्वदेवतासंबन्धं पूर्वयागानामपनयन् तेषां देवताऽन्तराकाङ्क्षोद्भावनद्वारा तत्र देवताऽन्तरसंबन्धं उपपादयन् क्रियाऽन्तरत्वं प्रतिबध्नाति, प्रकृतानामेव च मध्यमादीनां दधिपयसोश्च भावनाऽन्तरे उपादेयत्वमापादयति । ' यदि अगृहीतं हविरभ्युदियात् एषैव व्रतचर्या, यदि गृहीतं हविरभ्युदियात् अथो तर्हि एतानेव तण्डुलान् सुफलीकृतान् दधि पयश्च ' इत्यादिलिङ्गाच्च अयमर्थो विज्ञायते। तेन मध्यमादिभेदेन आग्नेयस्य वारत्रयमावृत्तिः, दधिपयोयागयोस्तु स्थविष्ठाणिष्ठसाध्याग्नेयाभ्यासेन सह तन्त्रेण करणं, ' सह श्रपयति ' इति वाक्याच्च श्रपणमपि तेषां संप्रतिपन्नदेवताकानां सहैव । अत एव दधिशृतयोः श्रपणाप्राप्तावपि साहित्यविध्यन्यथाऽनुपपत्त्यैव श्रपणं शाखासाहित्यवशेन तत्प्रहरणवत् । साहित्यं हि केनचिदावश्यकं, तत्र संप्रतिपन्नदेवताकत्वात् प्रदानवेलायां तेन तदावश्यकत्वे श्रपणवेलायामपि तस्यैव साहित्यप्रतियोगित्वकल्पनात् । अतश्च अभ्युदितेष्टिः न कर्मान्तरं, अपितु निमित्ते नैमित्तिकं, तद्यागानामेव भावनाऽन्तरं स्वकाले क्रियमाणदर्शप्रयोगाङ्गं, तस्यैव अकाले प्रारम्भनिमित्तदोषपरिहारार्थं प्रायश्चित्तं, अकाले प्रारम्भस्य दोषजनकत्वं सामान्यमुखेन, अत्रैव वा ' एनं प्रजया पशुभिरर्धयति, वर्धयत्यस्य भ्रातृव्यं, यस्य हविर्निरुप्तं ' इत्यादिवाक्यशेषात् अवगन्तव्यम् । एवं आतञ्चनाभ्यासदर्शनं ' यदि बिभीयात् अभि मोदेष्यतीति, महारात्र एव हवींषि निर्वपेत्, फलीकृतैस्तण्डुलैरुपासीत, अर्धं दधि हविरातञ्चनार्थं निदध्यात्, अर्धं न, यदि अभ्युदियात् तेनातच्य प्रचरेत्, यदि न, प्रातरेतेन ब्राह्मणान् भोजयेत् ' इति अकर्मान्तरत्वे उपपद्यते । बिभीयात् शङ्केत । महारात्रे चन्द्रोदयात् पूर्वम् । उपासीत प्रतीक्षेत । आतञ्चनार्थं स्वकाले क्रियमाणदर्शार्थदध्यातञ्चनार्थम् । अर्धं न किंतु तत् अभ्युदितेष्टावेव विनियुञ्जीत, न च तत् सांनाय्यवत्सं एव । तेन आतञ्चनार्थं निहितेन । एतेन आतञ्चनार्थं स्थापितेनैव । इति हि तस्यार्थः । यद्यदि कर्मान्तरं स्यात्, तदा तेन अकालप्रारम्भनिमित्तदोषपरिहाराय दर्शार्थमुत्पादितेन दध्ना कर्मान्तरकरणानुपपत्तेः स्वकालक्रियमाणदर्शस्यैव तेन करणापत्तेः, तत्र हविरन्तरोत्पादप्रसक्तौ तत्र आतञ्चनप्रसक्तेः, अर्धविध्यनुपपत्तिः । कर्मान्तरे च दध्यन्तरस्यैव संस्कारविशिष्टस्य उत्पादनापत्तेः, दर्शार्थोत्पादितस्य दध्नः प्रसक्त्यभावात् अर्धविधानानुपपत्तिः ।

यत्तु मूले क्रियान्तरत्वपक्षे अधिकरणत्वेन दधिपयसोर्विधानात् लौकिकस्यैव असंस्कृतस्य दध्नो ग्रहणापत्तेः दर्शार्थोत्पादितस्य प्रसक्त्यभावः इत्युक्तं, तत् ' सह श्रपयति ' इत्यस्य वैयर्थ्यापत्तेः तुल्यत्वेन हविष्ट्वेनैव विधानस्य आवश्यकत्वादुपेक्षितम् । सिद्धान्ते तु प्रायश्चित्तस्य दर्शत्वानपायात् अत्रैव सर्वस्य दध्नः प्रसक्तौ स्वकाले क्रियमाणदर्शे च दध्यन्तरोत्पादनार्थं आतञ्चनप्रसक्तौ अभ्युदयशङ्कायां निमित्ते आतञ्चनसाधनत्वेन अर्धमात्रविधिरुपपद्यते। अर्धान्तरस्य अर्थादेव अभ्युदितेष्टौ प्राप्तत्वात् अनुवादो विधिर्वेत्यन्यदेतत् ।

**मण्डन**— ' देवताऽभ्युदयेऽन्या स्यात् । '

**शंकर**— ' अभ्युदये च न कर्मभित् । '

* **अभ्युदितेष्ट्यधिकरणे**, नैवात्र अनेकगुणा विधीयन्ते, किं तर्हि विद्यमानस्यैव हविषो मध्यमभागाग्निदातृत्वविशिष्टा भावना प्रकृतयागसंबद्धा विधीयते इत्यादिवार्तिकेन प्रकृतदर्शयागाभेदेऽपि तदवच्छिन्नभावनाऽन्तराभ्युपगमेन वाक्यभेदः परिहरिष्यते । सु. पृ. ७७३.

### * अभ्युदितेष्ट्यधिकरणसमर्थनम् ।

**बाल**—षष्ठाध्याये ' यस्य हविर्निरुप्तं० शृते चरुं ' इत्यत्र प्रक्रान्ते दर्शकर्मणि देवतातद्गुणचरुत्वविधौ वाक्यभेदात् कर्मान्तरं इति पूर्वपक्षयित्वा सिद्धान्तितं मन्त्रार्थवादादौ ' शिपिविष्टो विष्णुः ' इत्यादिसामानाधिकरण्यात् विशिष्टा अवगता देवता अस्ति । दातृ—प्रदातृ—शिपिविष्टशब्दानां च यौगिकत्वेन श्रुत्यैव अम्न्यादिपदसामानाधिकरण्यात् पदद्वयप्रतिपादितं विशिष्टं देवता-

कारकमेकमेव विधेयम्। अभ्युदयेष्टिप्रकरणे च 'सह श्रपयति' इति वचनमस्ति। तत् देवतैक्यात् दधिस्विष्ठयोः, शृताणिष्ठयोश्च सहपाकं विधत्ते। ततश्च अर्थतः प्राप्तं चरुत्वं दधिशृतयोश्च अधिकरणत्वं अनूद्यते। केवलं तु देवताकारकं विशिष्टं विधीयते प्रकृते दर्शे, इति वाक्यभेदाभावात् न कर्मान्तरविधिः इति। (६।५।१)। **तदेतदाक्षिपन्ति (अप्पय्य) दीक्षिताः।** दधिवाक्ये शृतवाक्ये च प्रतिद्रव्यं देवतासंबन्धबोधनात् वाक्यभेदो दुष्परिहरः इति कर्मान्तरत्वपूर्वपक्षो दुष्परिहरः। अङ्गीकृतं च षष्ठे एव (६।४।६।२२–२३) वाक्यभेदप्रसङ्गपरिहाराय प्रकृतयागहानेन कर्मान्तरविधिपरत्वम्। यथा 'यस्योभयं हविरार्तिमार्छेत् ऐन्द्रं पञ्चशरावमोदनं निर्वपेत्' इत्यत्र ओदनद्रव्यविधानात्, पञ्चशरावपरिमाणविधानात्, महेन्द्रेण च सह विकल्पतः प्राप्तस्य इन्द्रस्य नित्यवद्विधानात्, वाक्यभेदभियैव प्रकृतकर्महानेन कर्मान्तरस्य दोहार्तिनिमित्तकस्य विधिः सिद्धान्तितः। अन्यथा अभ्युदये वाक्यभेदं सोढ्वा देवताऽन्तरमात्रविधिवत् यस्योभयं इत्यत्रापि आर्तदोहप्रतिनिधिविधिः इति पूर्वपक्ष एव परावर्तेत इति। **तदेतत्** अनतिक्षुण्णमीमांसान्यायानां बिभीषिकामात्रमेव। तथाहि। वाक्यभेदादपि बलवत् आनर्थक्यं, अप्रामाण्यापत्तेः। अत एव श्रुत्यादीनामपि 'आनर्थक्यप्रतिहतानां विपरीतं बलाबलं' इत्युक्तम्। तदिह विध्यन्तरैकवाक्यत्वाभावात् 'सह श्रपयति' इति सहपाकविधिः, अभ्युदयवाक्यस्य कर्मान्तरविधित्वे 'दधंश्चरुं' 'शृते चरुं' इत्यत एव सहपाकप्राप्तेः अनर्थकः स्यात्। **न च** 'प्राजापत्यं घृते चरुं निर्वपेत् शतकृष्णलमायुष्कामः' इति प्रधानविधौ 'घृते श्रपयति' इति गुणविधिप्राप्तघृतानुवादवत् कर्मान्तरत्वेऽपि अभ्युदयवाक्ये सहश्रपणविधिसिद्धचरुत्वानुवादः स्यात् इति **वाच्यम्**। उभयप्राप्तौ अनुभयप्राप्तौ वा संबन्धविधिः इति हि जाघन्यधिकरणे (३।३।१०) उक्तम्। चर्वनुवादे च तद्देवतासंबन्धाविधानात् योगविध्यसिद्धिः। अतः सहपाकविध्यानर्थक्यपरिहाराय तद्बलेनैव तात्पर्यग्रहात् निर्वपेत् इत्यस्यानुषङ्गेण स्विष्टक्षोदिष्टदधिशृतरूपद्रव्यचतुष्टयेऽपि देवताऽन्वयविधानार्थत्वात् प्रतिद्रव्यं वाक्यभेदमेव अभ्युपेत्य न प्रकृतकर्महानं अप्रकृतकर्मान्तरविधानं च युक्तम्। तदुक्तं '**गौणं लाक्षणिकं वाऽपि वाक्यभेदेन वा स्वयम्। वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत्॥**' इति। (वा. पृ. २२३)। वाक्यभेदाभ्युपगमस्य हि एतद्वार्तिकोक्तस्य ईदृग्विधमेवोदाहरणं नान्यत्। गौणत्वोदाहरणं तु 'यथा वै श्येनो निपत्यादत्ते' इति। लक्षणोदाहरणं तु मत्वर्थलक्षणैव। आर्तिवाक्ये तु सहपाकविधिवत् आनर्थक्येन तात्पर्यग्राहकस्य अभावात् वाक्यभेदपरिजिहीर्षया कर्मान्तरविधिरेव न्याय्यः इति वैषम्यम्। पृ ११३–११५.

**अभ्युदितेष्ट्यनुष्ठानं दर्शप्रवृत्त्युत्तरं निर्वापात् प्रागपि चन्द्रोदये॥**

**निरुप्ते स्यात् तत्संयोगात्। ६।५।३।१२॥**

**भाष्यं**— अस्मिन्नेव उदाहरणे संशयः किं यदि निरुप्ते अभ्युदयोऽवगम्यते तदा अभ्युदितेष्टिः, उत अनिरुप्तेऽपीति। किं प्राप्तं? निरुप्ते, अवगते (चन्द्रोदये), अभ्युदितेष्टिः स्यात्। कुतः? तत्संयोगात्। निर्वापसंयोगो हि भवति। 'यस्य हविर्निरुप्तं' इति। तस्मात् अनिरुप्ते नैतद्विधानमिति।

**टुप्**— आर्त्यां पदान्तरगतो गुणो विचारितः। इह पदान्तरगता क्रिया विचार्यते। एतावान् भेदः।

**प्रवृत्ते वा, प्रापणान्निमित्तस्य। १३॥**

**भाष्यं**— वाशब्दः पक्षं व्यावर्तयति। अकाले तन्त्रप्रवृत्तिमात्रे स्यादेतत् विधानम्। प्राप्तं हि तावत्येव निमित्तं, यस्य हविरभ्युदेति इति हविर्ग्रहणं लक्षणत्वेन। यस्य हविः अभि उदेति इति हविर्लक्षितः उदयः निमित्तं, प्रवृत्तं हविर्लक्षयति, नोदासीनम्। तस्मात् हविरभ्युदेति इत्युच्यमाने प्रवृत्तं हविः अभ्युदेति इति गम्यते। नहि तत् निरुप्तं इत्येतेन शक्यं विशेषयितुम्। भिद्येत हि तदा वाक्यम्। यस्य हविः निरुप्तं इत्येवं अनपेक्ष्यमाणे, हविः अभि उदेति इति शक्यते विधातुम्। **तस्मात् अनिरुप्तेऽपि इष्टिः इति।**

लक्षणमात्रमितरत् । १४ ॥

**भाष्यं**— अथ यदुक्तं, निरुप्तसंयोगो भवति 'यस्य हविर्निरुप्तं' इति, लक्षणमात्रं एतत् निरुप्तमिति । कस्मिंश्चित् पदार्थे तस्य प्रवृत्ते इत्यर्थः ।

**तथा चान्यार्थदर्शनम् । १५ ॥**

**भाष्यं**— अन्यार्थोऽपि चैतमर्थं दर्शयति 'स यदि अगृहीतं हविरभ्युदियात् प्रज्ञातमेव, तदैषा व्रतचर्या, यत् पूर्वेद्युर्दुग्धं दधि हविरातञ्चनं तत् कुर्वन्ति, प्रतिमुञ्चन्ति वत्सान्, तानेव तत् पुनरपाकुर्वन्ति, तानपराह्णे पर्णशाखया अपाकरोति, यद्यथैवादः प्रज्ञातमामावास्यं हविः एवमेव तत्, यद्यु व्रतचर्या वा नोदाशंसेत गृहीतं वा हविरभ्युदियात् इतरथा तर्हि कुर्यात्, एतानेव तण्डुलान् सुफलीकृतान्' इति अगृहीते हविषि अन्यं विधिं ब्रुवन् गृहीतेऽपि अनिरुप्ते वा अभ्युदये प्रायश्चित्तं दर्शयति ।

**शा**— अकालप्रवृत्तिमात्रं निमित्तं इति प्रागपि निर्वापात् अभ्युदये ज्ञाते कर्तव्यमेव नैमित्तिकम् ।

**सोम**— उपांशुयाजस्येव इहापि अक्रिया इति प्रत्यवस्थानात् **संगतिः**। 'अभिरभागे' (पा० १।४।९१) इति लक्षणे अभिः कर्मप्रवचनीयत्वेन तद्योगनिमित्तद्वितीयान्तपदप्रतिपाद्यं हविः लक्षणत्वेन चन्द्राभ्युदयस्य विशेषणं भवति ।

**वि**— 'ऊर्ध्वं चन्द्रोदये सेष्टिर्निर्वापात् पूर्वमप्युत ।, उक्तेराद्यो, ऽन्तिमः पक्षो निरुप्तेरविवक्षया ॥'

**भाट्ट**— 'यस्य हविर्निरुप्तं' इति श्रवणात् निर्वापोत्तरकालीनचन्द्राभ्युदयस्यैव निमित्तत्वात् अमावास्यायां च सूर्योदयात् प्रागेव इष्ट्यारम्भविधानात् निर्वापात् प्राक् चन्द्राभ्युदयज्ञाने नेदं प्रायश्चित्तम् । **इति प्राप्ते**, 'हविरभ्युदियात्' इत्येतावतैव निमित्तत्वपर्यवसानेन निर्वापग्रहणस्य अविवक्षितत्वात् अभ्युदयावच्छिन्नदिनप्रारम्भस्यैव निमित्तत्वं लाघवात् । पौर्णमास्यां च नित्यत्वादेव निमित्तत्वानुपपत्तेः परिशेषादेव दर्शविषयत्वम् । अतश्च निर्वापात् प्रागपि प्रक्रममात्रेण प्रायश्चित्तम् । अत एव 'यद्यगृहीतं हविरभ्युदियात्' इति लिङ्गमपि उपपद्यते ।

**मण्डन**— 'अनिरुक्तेऽप्येषा ।'

**शंकर** — 'निर्वापश्चाविवक्षितः ।'

* **अभ्युन्नीतसोमभक्षणे** इन्द्रस्याप्युपलक्षणम् । **वि.** ३।२।१२.

* **अभ्युपगममात्रात्** नहि हेतोरदुष्टस्यापि दुष्टता शक्यते वक्तुम् । **बृहती.** पृ. १३०.

**अभ्यूहश्चोपरिपाकार्थत्वात्** । १०।१।१८।५९।

दर्शपूर्णमासयोः 'वेदेन भस्मना अङ्गारानभ्यूहति' इति श्रुतम् । सौर्ये चरौ तत् चोदकेन प्राप्तं कर्तव्यं न वेति विचारे कर्तव्यं इति पूर्वपक्षे सिद्धान्तसूत्रम् : 'न वाऽर्थान्तरसंयोगात्' इतिसूत्रात् न-शब्दोऽनुवर्तते । चकारः पूर्वोक्तपृथुत्वश्लक्ष्णत्वाभ्यां समुच्चयार्थः । **सौर्ये चरौ** अभ्यूहः 'वेदेन सह भस्मना अङ्गारान् अभ्यूहति' इत्यनेन उक्तः न कर्तव्यः । उपरिपाकार्थत्वात् अभ्यूहस्य । पाकसामीचीन्याय पुरोडाशस्य उपरि भस्मसहितानामङ्गाराणां स्थापनं क्रियते सः अभ्यूहो नाम । स च चरौ नावश्यकः, इति न कार्यः । **के.**

* **अभ्रान्ते** च भ्रान्त्यभिधानं भ्रमादपि पापीयः । **बृहती.** पृ. २२७.

* **अभ्र्यादाने** चतुर्णां मन्त्राणां समुच्चयः अग्निचयने । ('अभ्रिः स्त्री काष्ठकुद्दालः' इत्यमरः) । **वि.** १२। ३।१४. * **अभ्र्यादानमन्त्राणां** समुच्चयान्ते कर्मसंनिपातः, न प्रतिमन्त्रं विकल्पः प्रथममन्त्रान्ते वा । तत्र प्रथममन्त्राणां करणत्वं संस्कारद्वारा, अन्त्यस्य साक्षात् । मन्त्रास्तु देवस्य त्वा०, अभ्रिरसि० नभ्रिरसि०, हस्त आदाय० इति चत्वारः । **के.** * **अभ्र्यादानसमर्थाः** मन्त्राः मन्त्राधिकरणोदाहरणम् । **भा.** १।२।४।३१ पृ.१४५.

* '**अमा** षोडशभागेन देवि प्रोक्ता महाकला । संस्थिता परमा माया देहिनां देहधारिणी ॥ अमादिपौर्णमास्यन्ता या एव शशिनः कलाः । तिथयस्ताः समाख्याताः षोडशैव वरानने ॥ तत्र पक्षावुभौ मासः शुक्लकृष्णौ क्रमेण हि । चन्द्रवृद्धिकरः शुक्लः कृष्णश्चन्द्रक्षयात्मकः ॥ पक्षत्याद्यास्तु तिथयः क्रमात् पञ्चदशैव ताः । दर्शान्ताः कृष्णपक्षे तु पूर्णिमान्ताश्च शुक्लगाः ॥' इत्यादिवचनात् तिथिर्नाम अमासंज्ञकचन्द्र-

कलाव्यतिरिक्तचन्द्रकलानां मध्ये एकैकस्याः कलायाः सूर्यमण्डलेन आद्यावयवविप्रकर्षादारभ्य अन्त्यावयवविप्रकर्षः, आद्यावयवसंनिकर्षादारभ्य अन्त्यावयवसंनिकर्षो वा यावता कालेन जायते, तावान् कालो यथाक्रमं शुक्लकृष्णपक्षगतः प्रतिपद्द्वितीयादिशब्दप्रतिपाद्यः। अत एव तिथिशब्दः प्रतिपदादिशब्दाश्च कलास्वेव शक्ताः। काले तु निरूढलक्षणयेति ध्येयम्। **भाट्ट.** ५।४।७. * **अमावास्या उत्तरेद्युः**, वेदिः पूर्वेद्युः इत्यङ्गप्रधानयोः कालभेदो वचनात्। 'पूर्वेद्युरमावास्यायां वेदिं करोति'। **भा.** ११।३।१।१. * 'अमावास्या गुरुं हन्ति शिष्यं हन्ति चतुर्दशी। ब्रह्माष्टमीपौर्णमास्यौ तस्मात्ताः परिवर्जयेत्॥' इत्यादिना धर्मजातस्य अध्ययनाङ्गभूतस्य अविघ्नार्थत्वस्मरणात्। **सु.** पृ. ५३. * **अमावास्या**। चन्द्रादर्शनस्य ज्योतिःशास्त्रात् नियतपरिमाणेन अमावास्याकालेन अविनाभावः। पृ. ९७८, * अमावास्या प्राक् सोमात् सांनाय्यरहिता। पृ. ७३०. * 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना' अमावास्यायां पार्वणहोममन्त्रोऽयम्। **वि.** ९।२।१८.

⌛ **'अमावास्यां' इति समुदायविधिः**॥

'अग्नीषोमीयेण यजेत पौर्णमासीं, अमावास्याममिचरन्' इति प्राकरणिकं वाक्यद्वयम्। तत्र द्वितीये यजेतान्तानुषङ्गेण वैरिमरणोद्देशेन अग्नीषोमीयपुरोडाशविशिष्टधात्वर्थकरणकभावनाविधिः। तच्च प्रकरणिभ्यो भिन्नं स्वतन्त्रं, वाक्येन प्रकरणबाधात् (इत्येकः पक्षः)। वाक्यप्रकरणयोः अविरोधाद्वा वैमृधवत् अङ्गं, फलपदं तु सर्वकामवाक्यलब्धानुवादः। विधाने षष्ठप्रकारापत्तेः वाक्यभेदाच्च (इति द्वितीयः)। अमावास्यासमुदायप्रत्याम्नायत्वेन वा समवायफलोद्देशेन प्रकरणिन एव पुनर्विधिः (इति तृतीयः)। समुदायतत्फलयोः अन्यतरोद्देशेन इतरवैयर्थ्यं इति चेत्, तर्हि दार्शिकाग्नेयदेवतोद्देशेन भ्रातृव्यवत्प्रयोगे सोमसाहित्यविधिः, प्राप्ताप्राप्तविवेकेन तथा पर्यवसानात् (इति चतुर्थः)। **इति प्राप्ते**, एकप्रसरताभङ्गात् नायमपि पक्षो युक्तः। इन्द्रियकामवाक्ये इव फलोद्देशेन अग्नीषोमीयं हविर्विधीयते प्रकरणप्राप्तस्याश्रयस्य यजिरनुवादः। स च दार्शिके समुदायमात्रे लाक्षणिकः। अमावास्यापदस्य तात्पर्यग्राहकत्वात्। चतुर्थप्रकाराश्रयणात् (विधेः) लाघवं च वाक्यगतेश्चित्रत्वात्। भाष्यमपि एवंपरमुन्नेयम्। **संकर्ष.** १।२।१६.

* **'अमावास्यायामपराह्णे** पिण्डपितृयज्ञेन चरन्ति' अमावास्याशब्दोऽयं कालवाची। **वि.** ४।४।८. * **अमावास्यायामपि** उपांशुयाजसत्त्वं शाङ्खायनशाखानुरोधेन। (कौब्रा. ३।६) **के.** * **'अमावास्यायाम**मावास्यया यजेत' इति कालस्य नियमविधिर्नानुवादः। **भा.** ४।२।९।२३-२४. * 'अमावास्यायाममावास्यया यजेत' इत्यस्य कालविधायकत्वासंभवेऽपि एकस्य त्रिकस्य सहप्रयोगविधायकत्वम्। **वि.** २।२।३. नियमविधिरयम्। ४।२।९. नायं उत्पत्तिविधिशेषः, किंतु प्रयोगशेषः। ११।२।१. * अमावास्यायां आग्नेयस्य पुनःश्रुतिः ऐन्द्राग्नस्तुत्यर्था, न कर्मान्तरविधायिका। **भा.** २।३।१४। २७-२९, * अमावास्यायां आग्नेयसांनाय्ये प्रधानम्। ६।३।१।५. * अमावास्यायां आज्यभागयोर्याज्यानुवाक्ये वृधन्वत्यौ। 'अग्निः प्रत्नेन जन्मना० सोम गीर्भिष्ट्वा वयं०' इति। **वा.** २।२।३।३ पृ. ४७५. * अमावास्यायां उपांशुयाजः स्यात् इति केचित्। नेति सिद्धान्तः। **भा.** १०।८।१७।५३-५४, * अमावास्यायां ऐन्द्रं दधि ऐन्द्रं पयः इत्युभयं साङ्गं चोद्यते। एष सायंदोहः, अर्थात् पूर्वेद्युरनुष्ठीयते। स्वभाव एष दध्नो यत् पूर्वेद्युरुपक्रान्तं अपरेद्युरभिनिर्वर्तते। ३।६। ८।२९, * अमावास्यायां औपवसथ्येऽहनि वेदिकर्म निर्दिष्टं 'पूर्वेद्युरमावास्यायां वेदिं करोति' इति। सत्यं, पूर्वेद्युरमावास्यायां वेदिकरणं श्रुतं, न परिग्रहणं, यथाकालमेव (उत्तरेद्युः) वृते ब्रह्मणि परिग्रहः करिष्यते। **अथवा** अमावास्यायां वेदिकरणं पूर्वेद्युर्वचनेनोपदिष्टम्। तस्मिन्नपकृष्यमाणे परिग्रहोऽपि अपकृष्टः, प्रसवोऽपि, ब्रह्मवरणमपि। प्रधानदेशकालत्वात् गुणानाम्। १२।१। १८।३८-३९. * अमावास्यायां त्रयोदश आहुतयः। पञ्च प्रयाजाः, द्वौ आज्यभागौ, आग्नेयाहुतिरेका, दधिपयसोः संप्रतिपन्नदेवताकत्वात् एका, स्विष्टकृत्, त्रयोऽनूयाजाः इति। **सोम.** १०।८।१८. * अमावास्यायां नित्यं

स्विष्टकृदिडं सांनाय्यादवदीयते । वा. ३।२।२।१३. * 'अमावास्यायां निशि यजेत' अत्र रात्रौ्ष्टीरिति विहिता। सा च दर्शकर्मतन्त्रमध्यपातिनी, परंतु न दर्शाङ्गम् । वि. १२।२।५, * अमावास्यायां 'पञ्चहोत्राऽमावास्यायां' इति पञ्चहोत्रा हविरभिमर्शनम् । 'अग्निर्होता पञ्चहोतृणाम्' । ३।७।४. * अमावास्यायां पूर्वेद्युरग्रकृता वेदिः हविरभिवासनान्तान् धर्मान् नापकर्षति, प्रमाणाभावात् । विशेषवचनस्य सामान्यावबोधनस्य बाधात् वेदेरपकर्षः । भा. ५।१।१६।२९, * अमावास्यायां पौर्णमास्यां वा ऐन्द्राग्नादयो विकृतयः कर्तव्याः 'य इष्ट्या पशुना वा०' इत्यादिवचनात् । ताश्च सद्यस्कालाः । ५।८।७।२४.

**अमावास्यायां प्रागुदयात् यागस्योपक्रमः ॥**

अन्वाधानमात्रस्य वचनादन्यकालत्वेऽपि तदितरतन्त्रप्रक्रमस्य कालभेदे मानाभावात् अङ्गानां प्रधानसमानदेशकालत्वनियमात् अहन्येव प्रक्रमः । इति प्राप्ते, 'यस्य हविर्निरुप्तं पुरस्ताच्चन्द्रमा अभ्युदियात्' इत्यभ्युदितेष्टेर्निमित्तत्वेन कीर्तनान्यथाऽनुपपत्त्या दर्शेष्टेर्निश्यपि प्रक्रमस्य कल्पनाऽवश्यंभावात् पौर्णमास्यां च कल्पकाभावात् उदिते आदित्ये तन्त्रप्रक्रमः, प्रागुदयादमावास्यायाः । संकर्ष. ३।१।४.

* **अमावास्यातन्त्रं** प्रतिपदि अहनि ( समापनीयम् ) । भा. १२।२।५।१५, * **अमावास्यातन्त्रस्य** निशियज्ञे प्रसङ्गः, परंतु इध्माबर्हिः पृथक् कार्ये अग्न्यन्वाधानं च देवतार्थम् । १२।२।५।१४–१८.

* **अमावास्याविकारे** साकंप्रस्थायीये आग्नेयादनन्तरं सांनाय्यं दर्शयति, नोपांशुयाजम् । भा. १०।८।१७।६१, * अमावास्याविकारे साकंप्रस्थायीये उपांशुयाजो न श्रूयते । १०।८।१७।६१.

* **अमावास्याशब्दः** कालवाचकः । कर्मणि तु लाक्षणिकः । वि. ४।४।८. * अमावास्याशब्दः त्रिषु आग्नेयादिषु यः समुदायस्तत्र ( वर्तते ) । भा. ४।४।११।३४.

* **अमाषमांसं** बहुसर्पिष्कं ( असर्पिष्कं इति भाट्टे ) व्रतयति दर्शपूर्णमासयोः उपवसथदिने । वि. ६।४।१२.

* 'अमुमेवादित्यं' इति मैत्रे विहितमन्त्रे एकवचनेन देवतैकत्वमवगतम् । अतः सूर्यः देवता अमुम् इत्येकवचनान्तेन विग्रहः । अतो देवतैकत्वम् औषधद्रव्यकत्वाच्च मैत्रे अमेयस्यैव विधानतः । वि. ८।१।१६.

* **अमूर्तः** अर्थः क्रियायाः साधनं भवितुं नार्हति । भा. ३।१।३।१२ पृ. ६६२, ६८१. * **अमूर्तस्य अपि** द्रव्याश्रितत्वेन द्रव्यद्वारा कारकत्वोपपत्तिः । सु. पृ. ७३८. * **अमूर्तस्य** संस्कर्तुमशक्यत्वात् । वा. ३।१।३।१४ पृ. ७१५.

* **अमृतार्थत्वम्** । 'यथाऽमृतार्थत्वम्' ( १०।८।१८।७० सूत्रांकः ) । "यथा उपस्तरणाभिघारणयोः अमृतार्थत्वं 'अमृतं वा आज्यं, मर्त्यं हविः. यदुपस्तृणाति अभिघारयति अमृताहुतिमेवैनां करोति' इति ।" यथा अमृतार्थत्वं तथा अजामिकरणं उपांशुयाजस्य प्रशंसार्थम् । ( जामिः उत्साहशून्यता । अजामिकरणं उत्साहजननम् ) । भा. १०।८।१८।३०.

* **अमेध्यदर्शने मन्त्रो** दीक्षितस्य 'अब्दं मनः०' इति । देशभेदेऽपि अमेध्यत्वावच्छिन्नस्यैकत्वात् न मन्त्रावृत्तिः । वि. ११।४।१८.

* '**अम्बष्ठानां** दार्विहोमिको ब्राह्मणः' इति स्मार्तहोमे, 'दर्विहोमं कुर्यात्' इति श्रुत्युक्ते च प्रयोगात् 'दर्विहोमः' इति श्रौतस्मार्तयोरुभयोरपि नामधेयं, न स्मार्तस्यैव । वि. ८।४।२.

* '**अम्यक् सा त** इन्द्र ऋष्टिरस्मे सनेम्यभ्वं मरुतो जुनन्ति । अग्निश्चिद्धि ष्मातसे शुशुक्वानापो न द्वीपं दधति प्रयांसि ॥' ( ऋसं. १।१६९।३ ) इति अगस्त्यार्षम् । तेन किल इन्द्रः अमरत्वं धनं च प्रार्थितः । तथा च उपरितन्यां ऋचि 'त्वं तू न इन्द्र तं रयिं दाः' इति श्रूयते । तदेव अस्यामृचि अनुषङ्गेण द्रष्टव्यम् । इयं च छन्दोमद्वितीयेऽहनि मरुत्वतीये शस्त्रे विनियुक्ता । तत्र अम्यक् इति अमाशब्दः अव्ययं साहित्यवाची, यतः अमात्यः इति भवति । अमा सह अञ्चति इति अम्यक् । सा ते इन्द्र ऋष्टिः आयुधविशेषः पाणिक्षेप्यः । अस्मे इति अस्माकम् । सनेमि पुराणम् । अभ्वं तोयम् । मरुतो जुनन्ति क्षिपन्ति । अग्निश्चित् इति उपमार्थः ।

हि स्म । अतने शुष्कतृणे । शुष्कान् दीप्तवान् । आप इव द्वीपं, दधति प्रयांसि अन्नाद्यानि । वाक्यार्थे तु प्रथन-तृतीययोर्द्वितीयचतुर्थयोश्च पदानां संबन्धः । तत्र साइत्येत-दाक्षिप्तः ( सा इति तच्छब्देन आक्षिप्तः ) यच्छब्दः तृतीयपादे कल्प्यते । शुष्कतृणे दीप्तोऽग्निरिव या लक्ष्यते तव सहचारिणी नित्यं ऋष्टिः तव वल्लभा, सा तावत् त्वत्प्रसादेन अस्माकमेव । येऽपि अमी ( मरुतः ) पुराणं जलं वृष्टिरूपेण विक्षिपन्तः आप इव द्वीपं अन्ना-द्यानि धारयन्ति तव प्रियसखाः ( राजाहःसखिभ्यः टच् ) तेऽपि अस्माकमेव । स त्वमेवं साधारणद्रव्यः सन् अमरत्वं न केवलं देहि ( किंतु धनमपि देहि ) । वा. १।२।४।४१ पृ. १५७–१५८.

* ' **अयं यजमानः** ' इति पाठस्य सवनीयपशौ चोदकप्राप्ते मैत्रावरुणप्रैषमन्त्रे ' अयं सुतासुती यज-मानः ' इति पाठविकारः प्रत्यक्षमाम्नायते । **वि.** १२। २।१९.

**अयं सहस्रमानवः इति ऋचा प्रगीतयैव द्वादशाहस्य दशमेऽहनि आहवनीयोपस्थानं कर्त-व्यम् ॥**

**अर्थैकत्वाद् विकल्पः स्यादृक्सामयोस्तदर्थ-त्वात् । ९।२।८।२९ वर्णकं २ ॥**

**भाष्यं**— एवं वा । ( द्वादशाहे दशमेऽहनि पत्नी-संयाजोत्तरं मानसस्तोत्रात् प्राक् आहवनीयोपस्थाने । ' पत्नीः संयाज्य प्राञ्च उदेत्य अयं सहस्रमानव इत्यति-च्छन्दसा आहवनीयमुपतिष्ठते ' ताण्ड्य. ४।९।१ ) क्व चित् कर्मविशेषे श्रूयते ' अयं सहस्रमानव इत्येतया आहवनीयमुपतिष्ठते ' इति । अत्रायमर्थः सांशयिकः किं अप्रगीतया उपस्थातव्यं, उत प्रगीतयेति । किं प्राप्तं ? प्रगीतया अप्रगीतया वा । कुतः ? अविशेषोप-देशात् । प्रगीताऽप्यसौ इयमेव ऋक्, अप्रगीताऽपि इय-मेव । उभयथा हि तां समामनन्ति । तस्मान्न विशेष आदर्तव्य इति । न चेद्विशेषः स्तुतिपरत्वात् ऋक्सामयो-र्विकल्प इति ।

**टुप्**—' अयं सहस्रमानवः इत्येतया आहवनीय-मुपतिष्ठते ' इति प्रगीतायामपि संप्रत्ययः अप्रगीताया-मपि । उपस्थानं स्तुतिं वा प्रगीताऽपि निर्वर्तयेत् अप्र-गीताऽपि । तस्मात् विकल्पः ।

**वचनाद् विनियोगः स्यात् । ३० ॥**

**भाष्यं—एवं प्राप्ते ब्रूमः** । प्रगीतैव विनियुज्येत, नाप्रगीता । कुतः ? वचनात् । किं वचनं ? ' अयं सहस्रमानव इत्येतया ' इति प्रकृतवचनः शब्दः । प्रगीता च सामवेदे प्रकृता । सा एतयेति संबध्यते । ननु अप्र-गीताऽपि तत्र पठ्यते । सत्यं, प्रगाणसंबन्धार्था तु सा । नहि अपठितायां प्रगाणं शक्यते कर्तुं इति । ऋक् सामार्थे, ऋचोऽध्ययनं सामार्थं गम्यते । नहि अन्तरेण ऋचं, सामनिर्वृत्तिर्भवति । अन्तरेणाऽपि तु साम, ऋक् निर्वर्त्यते । न ऋक्, साम आकाङ्क्षते इति । तस्मादेव सामवेदे उपतिष्ठते वा स्तौति वा इत्युक्ते प्रगीतायामेव ऋचि संप्रत्ययो भवति, नाप्रगीतायाम् । **आह,** यदि प्रगीतायां संप्रत्ययः प्रकरणात्, वचनादप्रगीतायाम् । अप्रगीताऽपि हि शाखाऽन्तरे समाम्नायते । सा प्रकरणं बाधित्वा वाक्येन गृह्येतेति । **उच्यते** । न वाक्येन ऋक् गृह्यते । प्रतीकग्रहणं ह्येतत् । ' अयं सहस्रमानव इत्येतया' इति पुनः प्रकृताया ऋचो वाचको मुख्यः ऋक्शब्दः । त्वत्पक्षे प्रतीकग्रहणस्य लक्षणा स्यात् । श्रुतिलक्षणा-विशये च श्रुतिर्न्याय्या न लक्षणा । तस्मात् प्रगीतया उपस्थातव्यमिति ।

**टुप्**— एवं प्राप्ते ब्रूमः । एतया इति संनिहित-वचनः । प्रगीता च संनिहिता । यद्यपि अप्रगीताऽपि संनिहिता, तथापि प्रगीतैव ग्राह्या । कुतः ? यस्मात् अप्रगीतायाः परार्थः पाठः । नहि अपठितायां साम शक्यं निर्वर्तयितुम् । **ननु** अप्रगीताऽपि शाखासु पठ्यते, सा वाक्येन ग्रहीष्यते । **उच्यते** । तस्याः प्रकरणेन संबन्धः कल्प्यः । इतरत्र तु क्लृप्तः । एतया इत्यपि नैव संनिहितवचनः ( शब्दः ) बाध्यते ।

**सोम**— पूर्वत्र विकल्पाभावेऽपि इह विकल्पः इत्युत्थितेः **संगतिः** । अप्रगीतायाः संहिताग्रन्थे ( साम. ४५८ ) पठितत्वेन प्रगाणार्थे एव पाठः, संहिता-ग्रन्थस्य ऋक्स्वरूपावधारणद्वारा प्रगाणार्थत्वात् ।

**वि**— ' गानस्य नियमो नोत, विद्यते वहन्तुर-स्थितौ । नाम्नानद्यतोऽस्येव प्रकृतत्वाच्छ्रुतेरपि ॥ ' तस्मात् प्रगीतया उपस्थानम् ।

**भाट्ट**— क चित् कर्मविशेषे ( गवामयनगते द्वादशाहे दशमेऽहनि ) ' अयं सहस्रमानवः ' इतीयं ऋक् प्रगीता अप्रगीता च पठिता । पुनश्च ( पत्नीः संयाज्य प्राञ्च उदेत्य- ) ' अयं सहस्रमानव इत्येतया ( द्विपति-च्छन्दसा ) आहवनीयमुपतिष्ठते ' ( ताण्ड्य. ४।९।१ ) इत्यनेन विनियुक्ता । सा द्विविधया ( द्वया विधया ) पठितत्वात् द्विविधाऽपि विकल्पेन विनियुज्यते । **इति प्राप्ते,** अप्रगीतायाः प्रगाणार्थ एव पाठः । नहि अनवधारित-स्वरूपायां सुखं गानं अर्थाववोधो वा संभवति । प्रगीता तु अनन्यार्था प्रयोजनमपेक्षमाणा उपस्थाने विनियुज्यते इति सैव ग्राह्या । यः प्रगीताया एव शाखाऽन्तरे पाठः, सोऽपि तत्पुरुषान् प्रति ऋक्स्वरूपज्ञानार्थ एव, इति न शाखा-ऽन्तरीयप्रगाणाख्यसंस्कारविरोधः । ७.

**मण्डन** — ' उपस्थानं प्रगीतया । '

**शंकर**— ' प्रगीतोऽयं सहस्रेति । ' अयं मन्त्रः ।

* ' **अयजुषा वत्सानपाकरोति** ' ' अपवित्रवति गां दोग्धि ' इति प्राप्तवत्सापाकरणाद्यनुवादेन यजुरादि-पर्युदासविधिरेव इति पूर्वपक्षे उक्तम् । **भाट्ट.** ९।४।८.

* ' **अयज्ञिया वै माषाः वरकाः कोद्रवाः** ' इत्यत्र अयज्ञियाः इति अनर्हार्थप्रत्ययेन साधनत्वमात्रनिषेधात् विशेषविहितातिरिक्तस्थले सर्वत्रैव माषादिप्रतिषेधप्रतीतेः न प्रतिनिधेयाः । द्रव्यसामान्याभावे तु ग्राह्या एवेति ध्येयम् । **भाट्ट.** ६।३।६. * ' अयज्ञिया वै माषाश्चणकाः कोद्रवाः ' ' मौद्गं चरुं निर्वपेत् श्रीकामः ' इत्यत्र मुद्गा-भावे माषाद्याः प्रतिनिधित्वमर्हन्ति मुद्गकार्ये चरुनिष्पा-दने समर्थत्वात् । निवारकस्य प्रतिषेधवचनस्याभावाच्च । इति चेन्मैवम् । ' अयज्ञिया वै० ' इति माषादिधान्यत्रया-यज्ञियत्ववचनस्य तन्निषेधे पर्यवसानात् । तस्मान्नार्हा माषाद्याः । **वि.** ६।३।६.

**अयनेषु चोदनाऽन्तरं संज्ञोपबन्धात् । २।३। ४।५ ॥**

दर्शपूर्णमासौ प्रकृत्यामनन्ति— ' दाक्षायणयज्ञेन यजेत प्रजाकामः ' ' साकंप्रस्थायीयेन यजेत पशुकामः ' ' संक्रमयज्ञेन यजेतान्नाद्यकामः ' इति । तत्र संदेहः किं दर्शपूर्णमासयोरेव गुणात् फलं, उत कर्मान्तरमेवं-जातीयकं इति । कर्मभेदाभावादभूता गुणस्य निमित्तत्वेन कुत्रापि कुत्र नास्तीति निरस्य इदानीं फलार्थेऽपि गुणस्य कर्मभेदाभावादभूतदध्नेन्द्रियवत् विकल्पमतिरिक्तेऽपि अधिकाराक्रान्तिनिरासार्थं पुनः प्रतिपाद्यते । अत्रायं पूर्वपक्षि-णोऽभिसंधिः ' गुणाकृष्टो हि विधिः कर्मान्तरत्वेन गुण-मेव फले विधत्ते । यथा— ' दध्नेन्द्रियकामस्य जुहुयात् ' इत्यादौ । न चेह दध्यादिवत् पृथक्सिद्धो गुणः कश्चित् प्रतीयते, दाक्षायणयज्ञसाकंप्रस्थायीयसंक्रमयज्ञशब्दानां क चित् गुणविशेषे प्रसिद्ध्यभावात् । तेन ' प्रसिद्धेना-प्रसिद्धस्य निर्वचनीयं विशेषणम् ' इत्यनेन न्यायेन विश्व-जिदादिवत् यागनामधेयत्वेनावगमात् । तथा च सति अविधेयत्वान्नाम्नः तदवच्छिन्नं कर्मैव फले विधीयते इति संज्ञातः एव कर्मभेदः । **ननु** संज्ञाऽधिकरणे पृथक् श्रुता हि संज्ञा ' अथैष ज्योतिः ' इत्यादिः, पश्चात् यजतिना संबध्यमाना भेदिकेत्युक्तम् । यजिनाऽभिव्याहृता तु संज्ञा न भेदिकेत्यभ्यासाधिकरणे एव निरूपितम् । अतः कथ-मत्र ' दाक्षायणयज्ञेन यजेत ' इत्यादिका यजिसमभि-व्याहृता संज्ञा भेदिकेति । **उच्यते**, अनन्यपराख्यात-समभिव्याहृता हि संज्ञा सती न भेदिका, आख्यातस्यै-वानन्यपरत्वेन तत्र भेदकत्वात् । इह तु आख्यातस्य फलसंबन्धपरत्वेन प्रकृतकर्मप्रवेशसंभवात् संज्ञैव संज्ञाऽन्तरावरुद्धे कर्मणि प्रवेशमलभमाना कर्मभेदिकेति । एतच्च एतदधिकरणपूर्वपक्षसिद्धमेव तत्र प्रतिपादितमित्य-वधातव्यम् । तेनायनेषु दाक्षायणयज्ञादिषु चोदनाऽन्तरं कर्मान्तरमेव ज्योतिष्टोमविकारभूतं फले विधीयते, न तु गुणात् फलमिति । **एवं प्राप्तेऽभिधीयते** ,

**विकारो वा, प्रकरणात् । ८ ॥**

अयमभिप्रायः । भवेदेवं, यदि दध्नेन्द्रियवत् गुण-संक्रान्तो विधिर्न भवेत् । तथाहि, प्रत्येकं तावदग्नि-होत्रवत् दर्शपूर्णमासाख्यं कर्म प्रत्यभिज्ञायते । गुणश्च यद्यपि दध्यादिवल्लोकप्रसिद्धो न प्रतीयते, तथापि वाक्या-

न्तरेण अनुष्ठानावृत्तिविशेषसांनाय्यपात्रसहितप्रस्थानहोमदेशसंक्रमणलक्षणगुणाः दर्शपूर्णमाससंनिधौ विहिताः सन्ति। शक्यते च यौगिकत्वादेतैः शब्दैस्तेषामुपादानम्। तथाहि, पौनःपुन्यानुष्ठानोत्साहशाली यजमानो दक्षः, तस्यर्त्विजो दाक्षाः, तेषामयनमनुष्ठानमावृत्तिरूपं दाक्षायणमुच्यते। एवं सह सांनाय्यकुम्भीभ्यां प्रस्थानं साकंप्रस्थानमुच्यते। तथा आहवनीयदेशे संक्रमणं संक्रम उच्यते। तेन यथा वाक्यान्तरेण उक्थ्यशब्दवाच्ये संस्थाविशेषे दर्शिते तत्संनिधौ 'पशुकाम उक्थ्यं गृह्णीयात्' इति लोकाप्रसिद्धस्यापि उक्थ्यपदार्थस्य फले विधानं, एवमत्रापीति नानुपपन्नम्। **ननु** नात्र दध्नेतिवत् दाक्षायणेनेति श्रूयते। किं तर्हि? दाक्षायणयज्ञेनेति। तेन कर्मण एव साधनत्वावगमात् कथं गुणस्य फले साधनत्वम्? **उच्यते**। यद्यप्येवं, तथापि विशेष्यस्य विनियोगायोग्यत्वात् लोहितोष्णीषादिवत् विशेषणप्रधानान्येव तानि वचनानि तेषामेव फलसंबन्धं प्रतिपादयन्ति। तथाहि, न तावत् प्रकृतं कर्म फले विनियुज्यते, 'सर्वेभ्यो वै दर्शपूर्णमासौ' इत्यनेनैव तत्तत्फलान्वयस्य प्राप्तत्वात्, संज्ञाऽन्तरवैयर्थ्याच्च। नापि कर्मान्तरं, प्रकृतप्रत्यभिज्ञानविरोधात्, विशिष्टविधिगौरवप्रसङ्गाच्च। तेन कर्मणो विनियोगासंभवात् विशेषणमेव गुणः फले विधीयते। न चैषामसाधनत्वात् प्रकृतकर्माश्रयत्वानुपपत्तिः, यतः सहप्रस्थानसंक्रमणयोस्तावत् कर्मसाधनत्वं व्यक्तमेव। अनुष्ठानावृत्तेरपि पुरुषप्रयत्नधर्मत्वात् आवृत्तस्य च प्रयत्नस्यावृत्तकर्मसाधनत्वात् युक्तं कर्मणो गुणाश्रयत्वम्। **ननु** लोके तावदेते गुणा दध्यादिवन्न प्रतीयन्ते। नापि वेदे दाक्षायणादिगुणप्रतिपादकानि वचनानि श्रूयन्ते। अतः कुत्र प्रसिद्धस्य फले विधानमिति। **उच्यते**। साकंप्रस्थाय्ये तावत् 'आज्यभागाभ्यां प्रचर्याग्नेयेन च पुरोडाशेनाग्नीधे स्रुचौ प्रदाय सह कुम्भीभिरभिक्रामन्नाह' इति वचनं सहप्रस्थानलक्षणगुणबोधकं भाष्यकारेणोदाहृतम्। तद्गोचरत्वेनैव न्यायव्युत्पत्तौ सत्यां उदाहरणान्तरेऽपि यदि दृश्यते, तदा कल्पनीयम्। अतो गुणफलसंबन्धः एवायमिति न किंचिदनुपपन्नम्। **प्रयोजनं** पूर्वपक्षे दर्शपूर्णमासपृथग्भूतं ज्योतिष्टोमधर्मकं कर्मान्तरमेवानुष्ठेयम्। सिद्धान्ते तु नेति। **सूत्रं तु**—विकारो वा दर्शपूर्णमासयोरेव आवृत्ताद्यवस्थाभेदः फले विधीयते। प्रकरणात् प्रकरणानुग्रहादित्यर्थः। तौता.

**अयनेषु चोदनाऽन्तरं संज्ञोपबन्धात्। २।३। ४।५॥**

दर्शपूर्णमासौ प्रक्रम्य आमनन्ति 'दाक्षायणयज्ञेन यजेत प्रजाकामः' 'साकंप्रस्थायीयेन यजेत पशुकामः' 'संक्रमयज्ञेन यजेतान्नाद्यकामः' इति। एषु किं दर्शपूर्णमासयोरेव गुणात् फलं, उत कर्मान्तरविधिः इति विचारे पूर्वपक्षमाह। अयनेषु दाक्षायणयज्ञादिरूपेषु चोदनाऽन्तरं कर्मान्तरं, न तु दर्शपूर्णमासविकारत्वम्। कुतः? संज्ञोपबन्धात् दाक्षायणयज्ञादिरूपया अपूर्वया संज्ञया उपबन्धात् उपबन्धनात्। अपूर्वया हि संज्ञया एतानि अयनानि उपबद्धानि। तस्मात् कर्मान्तरं इति पूर्वः पक्षः।

**अगुणा च कर्मचोदना। ६॥**

पूर्वपक्षे हेत्वन्तरमाह। चकारः गुणोपबन्धेऽपि इति अभ्युपेत्यवादमाह। 'दाक्षायणयज्ञेन यजेत' इत्यादिः कर्मचोदनैव यागविधिरेव। सा च चोदना अगुणा गुणविधिरहितैव। गुणसंबन्धे स्वीकृतेऽपि यागचोदना अस्त्येवेत्यर्थः।

**समाप्तं च फले वाक्यम्। ७॥**

पूर्वपक्षे हेत्वन्तरमाह। दाक्षायणयज्ञादिवाक्यं प्रजाऽऽदिफले समाप्तम्। प्रजाऽऽदिफलार्थं दाक्षायणादियज्ञं विधाय कृतार्थं वाक्यम्। तस्मात् कर्मान्तरविधानमिदम्।

**विकारो वा, प्रकरणात्। ८॥**

पूर्वपक्षं वाशब्दो व्यावर्तयति। न कर्मान्तरमिदं, किंतु दर्शपूर्णमासयोरेव विकारोऽयम्। तयोः प्रकरणात्। दर्शपूर्णमासप्रकरणे हि एतानि अयनान्युक्तानि। अतो विकारः।

**लिङ्गदर्शनाच्च। ९॥**

सिद्धान्ते हेत्वन्तरमाह। 'त्रिंशतं वर्षाणि दर्शपूर्णमासाभ्यां यजेत, यदि दाक्षायणयाजी स्यात्। अथो अपि पञ्चदशैव वर्षाणि यजेत, अत्र ह्येव सा संपद्यते, द्वे हि पौर्णमास्यौ यजेत, द्वे अमावास्ये। अत्र ह्येव खलु सा

संपद्यते ’ इति लिङ्गस्य दर्शनात् दाक्षायणयज्ञादीनां विकारत्वं सिद्धं भवति । कर्मान्तरत्वे तु तद्धर्मानतिदेशात् क्रियासंख्यासंपत्तिर्नोपपद्येत । तस्मान्न कर्मान्तरम् । श्रुतिस्तु स्पष्टार्था ।

**गुणात् संज्ञोपबन्धः । १० ॥**

यत्तु पूर्वपक्षिणा संज्ञोपबन्धात् कर्मान्तरं इत्युक्तं ( २।३।४।५ ) तत्रोत्तरमाह सिद्धान्ती । संज्ञोपबन्धस्तु न कर्मान्तरत्वात्, किंतु गुणात् । अयनं इति आवृत्तिरुच्यते । दक्षस्य यजमानस्य इमे ऋत्विजः दाक्षाः । दाक्षाणामयनं दाक्षायणम् । कः पुनर्दक्षः ? य उत्साही । दक्षो दक्षतेरुत्साहकर्मणः । साकंप्रस्थाय्ये च दधिपयःकुम्भीनां सहप्रस्थापनं गुणः । एवं आहवनीयसमीपे संक्रमणं संक्रमः गुणः संक्रमयज्ञे । एवं गुणात् दाक्षायणादिसंज्ञानामुपबन्धः ।

**समाप्तिरविशिष्टा । ११ ॥**

यदुक्तं पूर्वपक्षिणा ‘ समाप्तं च फले वाक्यं’ ( २।३।४।७ ) इति, तत्रोत्तरमाह । समाप्तिः वाक्यपर्यवसानं अविशिष्टम् । यानि अन्यानि वाक्यानि निःसंशयानि गुणात् फलस्य विधायकानि पर्यवसितानि ‘ दध्नेन्द्रियकामस्य जुहुयात् ’ इत्येवमादीनि, तैरविशिष्टानि न विशिष्टानि विलक्षणानि, किंतु तुल्यान्येव तैस्तानि दाक्षायणादिवाक्यानि । अत्रापि गुणात् फलमुच्यते । तस्मात् दाक्षायणयज्ञादीनि अयनानि दर्शपूर्णमासयोः विकारः । न कर्मान्तराणि इति सिद्धान्तः । **के.**

* अयनेषु चोदनाऽन्तरं संज्ञोपबन्धात् ( २।३।४।५ ) इत्यधिकरणे दाक्षायणयज्ञस्य दर्शपूर्णमासानन्यत्ववर्णनात् । **कु.** ३।४।२।१०.

**अयमपरो गण्डस्योपरि स्फोटः । वि. वि. पृ.** १०४ । इति आभाणकः । यत्र एकस्मिन् संकटे प्राप्ते एव, अपरं संकटं निपतति तत्रायं प्रयुज्यते । गण्डः गडुलः शरीरे रोगात्मको मांसपिण्डो य उत्पद्यते बहिर्गुल्मः स उच्यते । स एव तावत् दुःखदः । तदुपरि च पुनः स्फोटः । इति दुःखपरंपरैवेति आभाणकाक्षरार्थः । **के.**

**अयस्कान्तन्यायः ।** [illegible] । यथा [illegible] अयस्कान्तः स्वयं न चलन् [illegible], तथा [illegible] । **साहस्री.** २१२.

**अयस्कान्तसूचीन्यायः ।** निर्विकारस्य परमेश्वरस्य जगज्जन्मादिहेतुत्वाभावात् अयस्कान्तसूचीदृष्टान्तेन तत्र अलौकिकत्वस्यैव तत्सत्तामात्रात् जगत्कारणत्वं संभवति । **श्रीकर.** १।१।२ ब्रसू. । लोहस्य चलनात् प्रेरकत्वाभावेऽपि यथा केवलसंनिधानात् तत् अयस्कान्तस्य सूचीं चालयति तद्वत् । **के.** * **अयस्कान्तसूचीन्यायेन** दहरादिविद्योपासकानां निरन्तरविच्छिन्नज्ञाननिष्ठागरिष्ठानुष्ठानविशिष्टानां चरमशरीरिणां परशिवज्योतिर्लिङ्गैक्यमनुभवितुम् । **श्रीकर.** ३।३।१८ ब्रसू.; * अयस्कान्तसूचीन्यायेन निर्गुणस्य ब्रह्मणः सत्तावशात् प्रकृतिजगत्कारणत्वप्रतिपादकाद्वैतपक्षे दोषात् ... । केवलस्य जडस्य प्रधानस्य अयस्कान्तसूचीदृष्टान्तेन जगत्कारणत्वाङ्गीकारेऽपि ब्रह्मणः निर्विशेषत्वभङ्गः । २।१।२९ ब्रसू.; * अयस्कान्तसूचीन्यायेन निर्गतद्वासनानां संततशिवाकाराकारितचित्तानां चतुर्विधकर्मनाशो भवतीति निश्चीयते । ४।१।१३ ब्रसू.

**अयाचितमण्डनन्यायः ।** अजगरप्रवर्तनवत् याच्ञां विनैव लब्धं वस्तु विशेषणयाचितमित्युच्यते । मण्डनं भूषणम् । अयाचितं च तन्मण्डनं चेति समासः । यथा ईश्वरसुहृदः स्वयं निर्धना अपि तदीयेन धनेन फलभाजः । तद्वत् यत्र व्यवहारस्तत्रास्य प्रवृत्तिरिति । **साहस्री.** ४६२.

**अयाड् देवानामाज्यपानां इति प्रयाजानुयाजोभयदेवतावादः ॥**

स्विष्टकृन्निगदे अयाड् देवानामाज्यपानां प्रिया धामानि इत्यंशेन प्रयाजदेवता एवाभिधीयन्ते तासामेवेष्टत्वात् । ‘ यदनिष्टाभ्यः ’ इत्यस्यार्थवादत्वेनाविवक्षितार्थत्वेऽपि मन्त्रस्य तथात्वायोगात् । अयाडिति भूतार्थकल्कारश्रवणात् वाक्यगम्यार्थस्य लिङ्गेन बाधात् । **इति प्राप्ते,** सर्वकालेष्वपि ‘ छन्दसि लुङ्लङ्लिटः ’ इति विधानदर्शनात् इष्टानामनिष्टानामपि स्मरणसंस्कार्यत्वस्याविशेषात्

प्रयाजानूयाजदेवतानामुभयासां अभिधानम् । अत एव 'यदयाड् देवानामाज्यपानामिति, तन् प्रयाजानूयाजानाम्' इति शाखान्तरीयं वचनं न्यायसिद्धानुवादकमुपपद्यते । तस्मादप्रयाजे उदयनीयेऽपि न तल्लोपः । **संकर्ष.** ४।३।१३.

* **अयाश्चाग्नेरिति** सर्वप्रायश्चित्तं जुहोति । **भा.** १२।१।१।४.

* '**अयुग्वा युग्वा मुष्टीर्लुनाति**' इत्यनेन दर्शपूर्णमासयोः बर्हिर्लवनमुक्तम् । तत्र प्रतिमुष्टि 'बर्हिर्देवसदनं दामि' इति लवनमन्त्रावृत्तिः, न तु सकृत् पठनम् । ( अयुक् विषमसंख्याकान्, युक् समसंख्याकान् दर्भमुष्टीन् ) । **वि.** ११।४।१५.

* **अयुतं** गवां अभिषेचनीये ( राजसूयगते सोमयागविशेषे ) ददाति । **भा.** ११।४।२।७, * अयुतं गवां अश्वसहस्रं च पौण्डरीके यागे सकृद्देयम् । १०।६।१७। ६२-६४.

* '**अयोमुखं** पिण्डच्छेदनं' इत्युक्ते न सर्वायसं प्रतीयते ( किंतु मुखं अग्रमेव कृष्णायसमयं यस्य, तादृशं पिण्डस्य छेदकं प्रतीयते ) । **भा.** ८।३।२।५.

* **अरणी** ब्राह्मौदनिके अग्नौ निष्टप्य मथित्वा सर्वेण मथितेन गार्हपत्यः एवाधेयः, न तु सर्वे । **संकर्ष.** ३।२।१, * **अरणिभेदः** अग्निभेदेन न भवति । अजस्रपक्षे तु अरणित्रयम् । ३।२।३२, * **अरणिसमारोपणोत्तरं** परिदृश्यमानस्य ज्वलनस्य लौकिकत्वमेव, न वैदिकत्वम् । ३।२।९.

⌛ **अरण्यचन्द्रिकान्यायः** । अरण्ये चन्द्रिका व्यर्था उपभोक्तुरभावात् । रमणाभावे यत्र रमणीशृङ्गाररचना, तत्रास्य संचारः । अत एव 'स्त्रीणां प्रियालोकफलो हि वेषः' इत्युक्तिः संगच्छते इति । **साहस्री.** ९५९.

⌛ **अरण्यरोदनन्यायः** । अरण्ये कृतं रोदनं यथा व्यर्थं भवति तद्वत् । **साहस्री.** ३०६.

* **अरण्यस्थदण्डवत्** । अरण्यदण्डस्य फलोपधाननैयत्याभावेऽपि स्वरूपयोग्यत्वं ( कारणताऽवच्छेदकधर्मवत्त्वरूपं ) अस्त्येव तथा विधेः प्रवृत्तिजनकत्वोपपत्तेः । **भाट्ट.** ६।१।१ पृ. २१८.

* **अरुणपराशरा** नाम शाखिनः । तेषां परिचरेषु स्मृतिरूपं ब्राह्मणं भवति 'ये दर्शपूर्णमासयोर्धर्मास्ते सर्वेष्टीनां अग्नीषोमीयस्य च' इत्यारभ्य यावत् सर्वाः प्रकृतिविकृतयोऽनुक्रान्ताः इति । ( परिचराः नाम ग्रन्थविशेषाः) । **भा.** ७।१।१।८. * **अरुणपराशरशाखाब्राह्मणस्य** कल्परूपत्वात् । **वा.** १।३।६।११ पृ. २३१. * '**अरुणया**' इति गुणस्य नियमविधिः । **बाल.** पृ. २४. * अरुणया इति शब्दः यस्मात् करणवाचिन्या विभक्त्या संयुज्य अरुणिमानं निर्दिशति, तस्मात् अरुणिमा करणम् । **सु.** पृ. १४२९. * अरुणया इत्यत्र द्रव्यपरिच्छेदद्वारा क्रयसंबन्धो लब्धः । **वा.** ३।२।२।३ पृ. ७५२. * 'अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति' इति ज्योतिष्टोमे श्रुतम् । तत्र अरुणाशब्दो अरुणगुणवचनः अरुणत्वजातिवचनो वा, न तु विशिष्टव्यक्तिवचनः । तृतीयया च शक्यस्यैव करणत्वमुच्यते, न तु तदर्थं द्रव्यलक्षणा । **भाट्ट.** ३।१।६, * 'अरुणया क्रीणाति' इत्यत्र आरुण्यस्यापूर्वसाधनीभूतक्रयार्थत्वे प्रमाणत्रयं ( श्रुतिवाक्यप्रकरणानि ), तत्रापि श्रुतेरेव विनियोजकत्वं, न त्वन्यस्य । ३।३।७ पृ. २५५, * 'अरुणया पिङ्गाक्ष्या क्रीणाति' इत्यादौ व्यक्तिः नैव पदात् भासते, जातिगुणयोरेव व्यक्तिपरिच्छेदद्वारा करणत्वोपपत्तेः । लिङ्गसंख्ययोरपि सामानाधिकरण्येन पार्ष्ठिको जातिगुणसंबन्धः, अतः संबन्धविषयैव तत्र व्यक्तिबोधः । १।३।१०. * 'अरुणया पिङ्गाक्ष्यैकहायन्या' इति परस्परेण असंबद्धानामपि क्रीणातिना अभिसंबन्धात् एकवाक्यत्वम् । **वा.** ३।२।६।१९ पृ. ७६९, * 'अरुणया पिङ्गाक्ष्यैकहायन्या' पिङ्गत्वाक्षित्वाभ्यां स्वव्यक्तयो गुणावयवात्मिका लक्ष्यन्ते । ताभिरवयविद्रव्यमुपलक्ष्यते । तच्च समासार्थो भवति । ३।१।६।१२ पृ. ६७८. * 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रिणाति' इति अरुणिमा क्रये एव एकहायन्यां निविशते, न तु कृत्स्नप्रकरणे । **भा.** ३।१।६।१२ पृ. ६७३. * 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति ज्योतिष्टोमे

श्रूयते । तत्र अरुणाशब्दः अरुणिमानं गुणमाचष्टे । तस्य तृतीयाश्रुत्या सोमक्रयसाधनत्वं प्रतीयते । यद्यपि अमूर्तो गुणः, तथापि गुणस्यैवात्र तृतीयाश्रुत्या साधनत्वमुच्यते । तच्च द्रव्यमन्तरेण न संभवति, इत्यर्थापत्त्या द्रव्यावच्छेदकत्वं कल्प्यते । क्रयेण साक्षादन्वितयोर्द्रव्यगुणयोः पश्चात् अर्थापत्त्या परस्परावच्छेदकत्वेन अन्वयः । तथा सति आरुण्यविशिष्टैकहायन्या क्रीणातीत्यर्थः पर्यवस्यति । **वि.** ३।१।६.

* **अरुणादिः शेषः** श्रुत्या सामान्यक्रियासंबन्धी, वाक्येन तद्विशेषस्य क्रयस्य, प्रकरणेन ज्यौतिष्टोमिकस्य । सत्यपि वाचनिकप्रकरणसमवाये परस्परानुग्रहनिमित्तत्वात् अविरोधः इति बलाबलविचारो न भवति । **वा.** ३।३।७।१४ पृ. ८२२.

**अरुणादिन्यायः** । अरुणाधिकरणं, अरुणाधिकरणन्यायः, अरुणान्यायः, अरुणाशब्दन्यायः, अरुणैकहायनीन्यायः इति शब्दैः एकमेवाधिकरणं ( ३।१।६।१२ ) बोध्यते । **के. अरुणादिन्यायेन** ( ३।१।६।१२ ) अनेकेषां पदानां एकवाक्योपादानात् संहतानां फलं अपूर्वम् । **वा.** २।१।१।१ पृ. ३७३.

* **अरुणाऽधिकरणम्** । 'अरुणया' इत्यत्र स्त्रीप्रत्ययान्तया प्रकृत्या तावत् लक्षणया तद्गुणविशिष्टं द्रव्यं गम्यते । तत्र गम्यमानमपि द्रव्यांशं लाक्षणिकत्वादुपेक्ष्य तृतीया श्रौतं गुणमेव क्रयं प्रति करणतया अभिधत्ते । वस्तुतस्तु अरुणशब्दो द्रव्यमलक्षयन् केवलगुणे वर्तते, मुख्ये संभवति लक्षणाऽऽश्रयणस्यासंभवात् । **न च** एवं सति 'गुणवचनानामाश्रयतो लिङ्गवचनानि' इति गुणोपसर्जनद्रव्यप्रतिपादकानामेव शुक्लादिशब्दानां आश्रयलिङ्गत्वाभिधानात् 'अरुणया' इति स्त्रीलिङ्गनिर्देशोऽनुपपन्नः इति **वाच्यम्** । 'गुणोपसर्जनद्रव्यप्रतिपादनयोग्यानां परिच्छेद्यमुखेन क्रियाऽन्वयिनां परिच्छेद्यद्रव्यलिङ्गसंबन्धः' इति हि तदर्थः । भवति च 'अरुणाक्षः' इत्यादौ अरुणशब्दः अवश्यं तद्गुणकद्रव्यवचनः, इति तस्येह केवलगुणवचनत्वेऽपि परिच्छेद्यैकहायनीद्वारा लिङ्गान्वयः । रूपादिशब्दानां तु मतुबादि विना कदाऽपि द्रव्ये प्रयोगाभावात् न परिच्छेद्यलिङ्गत्वं इति 'घटो रूपः' इत्यादिप्रयोगस्यादर्शनात् । 'रूपे शुक्लेऽस्मिन्' इत्यत्र परिच्छेद्यमुखेन क्रियाऽन्वयिनः शुक्लशब्दस्य न गुणिलिङ्गकः । परिच्छेद्यमुखेन क्रियाऽन्वयित्वम् गुणिलिङ्गकः यथा 'शुक्लं गामानय' इत्यादौ इत्यर्थः । तत् सिद्धं अरुणाशब्दस्य स्त्रीलिङ्गत्वेऽपि केवलगुणवचनत्वम् । तृतीया च तत् आरुण्यं करणत्वेनाभिधत्ते । सा चाभिदधाना अरुणगुणस्यामूर्तत्वात् साक्षात् क्रियासाधनताशक्तिमनवाप्नुवन्ती गुणस्य स्वाश्रयं द्रव्यपरिच्छेदकतयाऽऽक्षिप्य तदीयपरिच्छेद्यमुखेनैव क्रियासाधनत्वे विश्राम्यति । शक्नोति च अरुणगुणः एकहायनीं परिच्छेत्तुम् । इतरव्यावृत्ततया द्रव्यस्य प्रतीतिविशेषो हि परिच्छेदः । तथा च अरुणगुणपरिच्छिन्नपिङ्गाक्ष्येकहायनीद्रव्यकरणकक्रयभावना वाक्यार्थः । तदेवं एकवाक्यत्वे सति तृतीयया गम्यमानं करणत्वं श्रौतप्रकृत्यर्थारुण्यगतं विवेचनया आश्रितं भवति । वाक्यभेदे तु 'अरुणया' इति तृतीया लाक्षणिकप्रकृत्यर्थद्रव्यगतकरणत्वानुवादिनी स्यात् । वाक्यभेदश्च संभवत्येकवाक्यत्वे युज्यते नाश्रयितुम् । **न च** एकहायनीपरिच्छेदकतयैव आरुण्यस्य कुतः क्रये निवेशः ; यत्किंचिद्द्रव्यद्वाराऽपि क्रयसाधनत्वोपपत्तेः इति **वाच्यम्**। परिच्छेदकापेक्षाया एकहायन्याः एकवाक्यगतेन गुणेन, परिच्छेद्यापेक्षस्य च गुणस्य स्ववाक्यगतया एकहायन्या आकाङ्क्षाशान्तिसंभवे गुणान्तरेण द्रव्यान्तरेण च तच्छान्तिवर्णनस्यायुक्तत्वेन आरुण्यैकहायन्योः परस्परान्वयनियमस्यावश्यकत्वात् । एतदभिप्रायेणैव सूत्रे ( ३।१।१२।१२ ) नियमपदमुपात्तम् ( ऐककर्म्यान्नियमः स्यात् इति ) । अन्यथा 'ऐककर्म्यादन्वयः स्यात्' इत्येवावक्ष्यत् । **न च** एकार्थत्वात् द्रव्यगुणयोः व्रीहियववत् विकल्पः स्यात् इति **वाच्यम्** । नहि एकार्थत्वमात्रं विकल्पे बीजं, द्वारैक्ये सत्येव तस्य तत्प्रयोजकत्वात् । अन्यथा पुरोडाशे कार्ये कपाल–शूर्प–उलूखल–मुसलादीनामपि विकल्पापत्तेः । अस्ति हि व्रीहीणां यवानां च यागे कार्ये द्वारमेकं पुरोडाशनिष्पादनरूपम् । प्रकृते च द्रव्यस्य विक्रेतुः आनतिसंपादनद्वारा, गुणस्य च द्रव्यपरिच्छेदद्वारा क्रयसाधनत्वात् उभयोर्भिन्नद्वार-

त्वात्र विकल्पः। **ननु** एवमपि 'अरुणया क्रीणाति' 'अरुणयैकहायन्या' इत्येवं न युगपदुभयत्र अरुणापदस्यान्वयसंभवः, सकृच्छ्रुतस्यैकस्य पदस्य युगपदुभयान्वयायोगात्। नापि पर्यायेणोभयत्रान्वयः, एकस्माद्वाक्यात् सकृच्छ्रुतात् क्रमिकार्थद्वयबोधासंभवात्। **इति चेत्, नैष दोषः।** नहि आरुण्यस्य एकहायन्यां निवेशः शाब्दः, किंतु आर्थिकः। प्रथमं हि तावत् आरुण्यगुणैकहायनीद्रव्योभयकरणिकायां क्रयभावनायां शब्दमर्यादया अवगतायां आरुण्यस्य साक्षात् क्रयसाधनत्वशक्त्यभावं पर्यालोच्य एकहायनीद्रव्यपरिच्छेदमुखेन क्रियासाधनत्वमर्थान्निवेशयति। तथा च आरुण्यस्य एकहायन्यां पार्ष्ठिकान्वयस्यार्थिकत्वात् न विरुद्धत्रिकद्वयदोषोऽपि। **न च** एवमपि आरुण्यस्य कथमेकहायन्यामेव निवेशः? 'अजया क्रीणाति' 'हिरण्येन क्रीणाति' 'धेन्वा क्रीणाति' 'ऋषभेण क्रीणाति' 'अनडुहा क्रीणाति' 'मिथुनाभ्यां क्रीणाति' 'वाससा क्रीणाति' इत्यजाऽऽदीनामपि क्रयसाधनत्वेन तेष्वपि आरुण्यस्य निवेशसंभवात् इति **वाच्यम्।** आरुण्यस्य स्ववाक्योपात्तक्रयं प्रति साधनभूतायामेकहायन्यामेव निवेशसंभवे सति क्रयान्तरसाधनेषु अजाऽऽदिषु निवेशायोगात्। **न च** अजाऽऽदिवाक्यानां न क्रयान्तरविधायकत्वं, किंतु वाक्यान्तरविहितक्रयानुवादेन अजाऽऽदिसाधनविधायकत्वमेव इति **वाच्यम्।** नहि क्रयविधायकं वाक्यान्तरमस्ति, येन तदनुवादेन अजाऽऽदिसाधनं विधीयेत। **न च** अरुणाऽजाहिरण्यादिवाक्येषु एकमेव क्रयविधायकं, अन्यानि तु वाक्यानि तत्र गुणविधयः इति **वाच्यम्।** तथा सति क्रयस्य उत्पत्तिशिष्टद्रव्यावरुद्धत्वेन तत्र वाक्यान्तरेण द्रव्यान्तरविधानायोगात्। तस्मात् विनिगमनाविरहेण प्रतिवाक्यं तत्तद्द्रव्यविशिष्टक्रयविधयः, इति विहितस्य पुनर्विधानात् सिद्धः क्रयभेदः। ततश्च आरुण्यस्य स्ववाक्योपात्तक्रयसाधनैकहायन्यामेव निवेशः, न तु क्रयान्तरसाधनाजाऽऽदिद्रव्येषु। **इति भट्टमतानुयायी पन्थाः।**

**अत्रेदं वक्तव्यम्।** **वाजसनेयशाखायां** 'तस्मात् सोमं क्रीणाति' इति द्रव्यसंयोगेन विना सोमक्रयस्योत्पत्तिवाक्यं श्रुतम्। तदुत्पन्ने च क्रये अरुणाऽऽदिवाक्यानि गुणविधय एव संपद्यन्ते। ततश्च कुतः प्रतिवाक्यं क्रयस्य विधिः, कुतस्तरां तस्य पुनर्विधानं, कुतस्तमां तस्य भेदः। अशक्यत्वाच्च। नहि एकस्यैव सोमद्रव्यस्य एकेनैव क्रयेण निवृत्तपरस्वत्वस्य प्राप्तात्मस्वत्वस्य पुनः क्रयः संभवति, स्वद्रव्यस्य परस्वत्वापादनेन परद्रव्यस्य आत्मस्वत्वापादने द्रव्यविनिमये क्रीणातेर्वृत्तेः। क्रयभेदाभ्युपगमे 'क्रयणेषु तु विकल्पः स्यादेकार्थत्वात्' 'समुच्चयो वा प्रयोगे द्रव्यसमवायात्' इति द्वादशिकचतुर्थपादीयाधिकरणस्य (३) अनुन्मेषप्रसङ्गाच्च। तत्र हि क्रयसाधनेष्वजाऽऽदिद्रव्येषु विकल्पः स्यात् एकक्रयार्थत्वात् इति पूर्वपक्षयित्वा, सोमक्रयस्य प्रयोगे अनुष्ठाने द्रव्याणां समवायस्योपपत्तेः समुच्चयः एव। विक्रेतुर्हि आनतिरत्र संपाद्या, सा च बहुभिः सूपपादा। अतः कार्यप्रधानत्वात् पदार्थानां सौकर्यमालोच्य द्रव्यविधीनां सापेक्षत्वकल्पनात् समुच्चयः, इति सिद्धान्तयिष्यते। क्रयाणामनेकत्वे तु अजाऽऽदीनामेकार्थत्वाभावात् पूर्वपक्षस्यैवानुन्मेषात् तदसंगतिः स्पष्टैव।

**यत्तु तन्त्ररत्नादौ** द्रव्यासंयुक्तक्रयोत्पत्तिवाक्याऽनुपलम्भोपन्यासेन क्रयभेदं प्रसाध्य क्रयाणामेव विकल्पसमुच्चयविचारपरतया तत् सूत्रद्वयं व्याख्यातं, **तदपि** उक्तयुक्त्यैव परास्तम्। द्रव्यविकल्पसमुच्चयपरतयैव **भाष्ये** व्याख्यातत्वाच्च **प्राभाकरैरनुमोदितत्वाच्च,** सूत्रे 'क्रयणेषु' इत्यनेन द्रव्याणामेवोपादानाच्च करणशब्दस्य करणल्युडन्तत्वात्, भावसाधनत्वे हि 'क्रयेषु' इत्येवावक्ष्यत्। 'द्रव्यसमवायात्' इत्यनेन स्पष्टमेव द्रव्यसमुच्चयवचनाच्च। 'क्रयपरिक्रयसंस्कारेषु द्रव्यसमुच्चयः' **इत्यापस्तम्बसत्याषाढभारद्वाजकात्यायनादयः।** किंच 'गवा ते क्रीणानि' 'अजया ते क्रीणानि' 'हिरण्येन ते क्रीणानि' इत्येवमादिमन्त्रेण एकैकस्मिन् द्रव्ये सोमविक्रयिणं प्रति प्रापिते अन्त्यवर्जं प्रतिद्रव्यं प्रतिवचनं सोमविक्रयिणो विहितं 'भूयो वा अतः सोमो राजाऽर्हति इति सर्वेषु पणनेषु सोमविक्रयी प्रत्याहासंपदः' इति। आ संपदः कृत्स्नमूल्यसंपत्तिपर्यन्तं अन्तिमद्रव्यसंपत्तेः प्राक्, इत्युक्तं भवति। एवं च एकैकेन

द्रव्येण एकैकः क्रयः इत्यनुपपन्नं, इत्येकहायन्यनादि-वाक्येषु वाक्यान्तरोत्पन्नैकक्रयानुवादेन गुणविधिः इत्येव युक्तम्। **न च** एवं सति अरुणावाक्ये प्राप्तक्रयानुवादेन अनेकगुणविधाने वाक्यभेदः इति **वाच्यम्**। अभ्युदये-ष्ट्यधिकरणे हि 'ये मध्यमाः स्युस्तानग्नये दात्रे पुरोडाश-मष्टाकपालं कुर्यात्' इत्यादिवाक्येषु प्रकृतद्रव्योद्देशेन अग्न्यादिदेवतानां दातृत्वादिगुणानां च विधौ वाक्यभेद-माशङ्क्य अग्निदात्रादिशब्दानां विशिष्टैकार्थप्रतिपादक-तया विशिष्टमेव एकैकमग्न्यादिदेवताकारकं विधीयते इति न वाक्यभेदः इति समाहितम्। तथाऽत्रापि आरुण्य-विशिष्टैकहायनीविधानात् न वाक्यभेदः। **न च** तत्र सामानाधिकरण्यात् विशिष्टार्थप्रतिपादकत्वं युक्तं, इह तु अरुणैकहायनीपदयोः सामानाधिकरण्यबाधात् कथं विशिष्टै-कार्थप्रतिपादकत्वं इति पृथग्विध: एव क्रियाऽन्वयः स्यादिति वाक्यभेदो दुर्वारः इति **वाच्यम्**। अत्रापि सामानाधिकर-ण्यस्य सत्त्वात्। तथाहि, 'गुणवचनेभ्यो मतुपो लुगिष्टः' इति मतुपो लुग्विधानात्, शुक्लादिशब्दानां द्रव्ये लाक्षणिकत्वे तद्वैयर्थ्यात्, उक्तन्यायेन च केवलगुणवाचकानां द्रव्ये शक्त्यनुपपत्तेः निरूढलक्षणैव तेषामभ्युपगन्तव्या। उक्तं च वार्तिके 'मतुब्लोपश्च अत्यन्तलक्षणावशात् अन्वाख्यायते' इति (पृ. ६८३) 'इह केषु चिद-र्थेषु अभिधानवदेव लक्षणाऽपि (लक्षणाशक्तिरपि इति मूले) अनादिकालप्रवृत्तिकत्वेन (प्रवृत्तत्वेन–इति मूले) निरूढा यथा शुक्लादिषु' (पृ. ६८३) इति च। निरूढलक्षणा च निरूढशक्तितुल्ययोगक्षेमत्वात् न मुख्यार्थे तात्पर्यानुपपत्तिप्रतिसंधानमपेक्षते। ततश्च अरुणाशब्दस्य पिङ्गाक्ष्येकहायनीशब्दयोरिव द्रव्ये श्रुति-वृत्तत्वतुल्ययोगक्षेमतया सामानाधिकरण्यसत्त्वेन विशिष्टै-कार्थप्रतिपादकतया युगपदेव क्रीणातौ अन्वयात् न वाक्यभेदः। **न च** अरुणापदे विशेष्यापेक्षया प्रथमोपस्थितत्वात् आरुण्यस्यैव करणतयोपस्थितिः इति **वाच्यम्**। क्रयं प्रति अयोग्यत्वेन तथोप-स्थितेरसंभवात्। **न च** साक्षात्करणत्वस्य अयोग्यत्वेऽपि एकहायनीद्वारा तत्करणत्वसंभवः इति **वाच्यम्**। व्याघा-तात्। करणत्वं हि साधकतमत्वं, तच्च साक्षात्साधनत्वमेव।

नहि एतत् परंपरया साधकत्वं कथमपि घटते। नापि व्यापारवत्कारणत्वमपि करणत्वं आरुण्यस्य संभवति। तज्जन्यस्तज्जन्यजनको हि व्यापारः। स च एकहायनी वा तत्परिच्छेदो वा? नाद्यः, तस्याः आरुण्यजन्यत्वा-भावात्, एकहायनीकार्यक्रयजनकत्वाभावाच्च आरुण्यस्य क्रयजननायोग्यत्वात्। न द्वितीयः, द्रव्यपरिच्छेदस्य क्रयं प्रति जनकत्वस्य साक्षादसंभवात्। **न च** द्रव्यद्वारा परि-च्छेदस्य क्रयजनकत्वमिति **वाच्यम्**। द्रव्यस्य गुणकृतपरि-च्छेदजन्यत्वाभावात्। अनरुणद्रव्यात् व्यावृत्ततया एक-हायन्याः प्रतीतिरेव हि आरुण्यकृतः परिच्छेदः इत्युच्यते। **न च** गुणतः परिच्छेदात् द्रव्ये सामर्थ्यविशेष उत्पद्यते, तद्द्वारा परिच्छेदस्य क्रयजनकत्वं, तादृशपरिच्छेदद्वारा च आरुण्यस्य क्रयं प्रति साधनत्वात् करणत्वसंभवः इति **वाच्यम्**। आरुण्यगुणतः परिच्छेदात् एकहायन्यां जायमानः सामर्थ्यविशेषो हि न दृष्टरूपः, अनरु-णाया अपि एकहायन्याः क्रयनिष्पत्तिक्षमत्वात्। यदि अदृष्टरूपः, तर्हि अदृष्टद्वारा आरुण्यस्य क्रयसाधनत्वमायाति। तत् वरं अरुणाशब्दस्य निरूढ-लक्षणयाऽपि द्रव्यपरत्वमेव स्वीकृत्य गुणविशिष्टैकहायन्याः एव क्रये करणतया विधानम्। किंच परिच्छेदस्य इहा-नुपादानात् कथं तद्द्वारा आरुण्यस्य क्रये करणतया अन्वयः?। अध्याहारे च गौरवम्। न चाक्षेपात् तल्लाभः। नहि एकहायनी परिच्छेदमाक्षिपति, आरुण्य-गुणेनापरिच्छिन्नाया अपि क्रयनिष्पत्तिक्षमत्वात्। नापि आरुण्यात् तदाक्षेपः। आरुण्यं हि द्रव्यपरिच्छेदं विना-ऽपि क्व चित् क्रियायामन्वेति, यथा 'घटेऽरुणोऽस्ति' इत्यादौ। अतो न तस्य स्वरूपेण क्रियाऽन्वये द्रव्यपरि-च्छेदापेक्षा, किंतु साधनत्वरूपेण क्रियाऽन्वये एव तद-पेक्षा। ततश्च क्रयसाधनत्वे आरुण्यस्यावगते तदन्यथाऽ-नुपपत्त्या परिच्छेदलाभः, लब्धे च परिच्छेदे क्रयसाध-नत्वावगमः इत्यन्योन्याश्रयः। किंच गुणस्य द्रव्यपरि-च्छेदमुखेन साधनतया क्रियाऽन्वये 'नीलमुत्पलमानय' इत्यत्र 'नीलेन' इति तृतीया स्यात्, नीलगुणस्य उत्पल-रूपकर्मकारकपरिच्छेदमुखेन आनयनक्रियायां साधन-त्वात्। किंच गुणगुणिनोः परस्परानपेक्षमेव प्रथमं क्रिया-

न्वयितया परस्परान्वयसामर्थ्याभावात् ‘नीलोत्पलमानय’ ‘नीलघटेन जलमाहर’ इत्यत्र समासानुपपत्तिः। न च पार्ष्ठिकपरस्परान्वयात् सामर्थ्यमुपपाद्यं, तस्यैव दुर्वचत्वात्। नहि पार्ष्ठिकः परस्परान्वयबोधः शाब्दः, सकृदुच्चारितस्य गुणशब्दस्य क्रियायां द्रव्ये च पर्यायेणान्वयासंभवात्, शब्दबुद्धिकर्मणां विरम्य व्यापाराभावात्। **न च** प्रथमं शाब्दमर्यादया गुणगुणिनोः क्रियाऽन्वयेऽवगते पश्चात् तयोः परिच्छेदकपरिच्छेद्याकाङ्क्षावशात् परस्परान्वयानुसंधानं मानसिकं कल्प्यते इति **वाच्यम्**। गुणगुणिनोः परस्परान्वयो हि समासप्रयोजकः, तथाविधशब्दयोरेव समासविधानात्। तद्वाचकनीलघटशब्दयोस्तु श्रूयमाणयोः क्रियाऽन्वितत्वात् न परस्परमन्वयः। अतः कल्पितयोस्तयोः पार्ष्ठिकान्वयात् श्रूयमाणयोरपि सामर्थ्यं वक्तव्यम्। तत्र किं गुणगुणिवाचकयोः शब्दयोः विभक्त्यन्तयोरेव कल्पनं, उत विभक्तिरहितयोः, किंवा समस्तयोः? नाद्यः विभक्त्यन्तयोः कारकविशिष्टप्रतिपादकयोस्तयोः मिथःसंबन्धायोगात्। **न** द्वितीयः, विभक्तिरहितयोः प्रयोगानर्हत्वात् समासानुपयुक्तत्वाच्च, ‘सुप् सुपा’ इत्यधिकृत्य विहितस्य कर्मधारयसमासस्य नीलघटशब्दयोः असुबन्तयोरनुपपत्तेः। न तृतीयः, समस्तपदानुसंधानेन परस्परान्वयरूपं सामर्थ्यं ज्ञेयं, सामर्थ्यज्ञानाधीनश्च समासः इत्यन्योन्याश्रयात्। अपिच सर्वत्र तादृशबोधद्वयकल्पने तदनुरोधेन कार्यकारणभावद्वयकल्पने पुनःकल्पितशब्दान्तरानुसंधानकल्पने च महत् गौरवं, इति अरुणाशब्दस्यापि शक्तितुल्यनिरूढलक्षणया गुणविशिष्टपरत्वं स्वीकृत्य क्रयानुवादेन विशिष्टकारकस्य विधानात् न कोऽपि दोषः। **न च** अरुणाशब्दस्य गुणविशिष्टपरत्वे कथं एतदधिकरणप्रवृत्तिः इति **वाच्यम्**। तत्प्रवृत्तेरपि सूपपादत्वात्। तथाहि, अरुणाशब्दस्य गुणविशिष्टे द्रव्ये लाक्षणिकत्वमात्रावलम्बेन पूर्वपक्षप्रवृत्तिः पूर्ववदेवोपपाद्या, शक्तितुल्यलक्षणासाधनेन सिद्धान्तप्रवृत्तिः।

सूत्रं तु एवं योज्यम्— ऐककर्म्यात् क्रियापदस्यैकत्वात् अर्थैकत्वे एकवाक्यत्वे सति वाक्यभङ्गो न न्याय्यः। अतो द्रव्यगुणयोः द्रव्यप्रधानस्य एकहायनीशब्दस्य गुणोपलक्षणारुणाशब्दस्य च नियमः सामानाधिकरण्येन विशिष्टैकार्थप्रतिपादकयोः क्रये अन्वयः स्यात्। इति दिक्। सोऽयं प्राभाकर-वैयाकरण- याज्ञिकानुमतः पन्थाः। **कु.** ३।१।६।१२ पृ. २५४-२५९. * ‘अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति’ इति वाक्ये द्रव्यानुक्तेः आरुण्यस्य स्ववाक्योपात्तद्रव्ये एव अन्वयप्रतिपादकं **अरुणाधिकरणम्**। **भूषणसारे** धात्वर्थनिर्णये कारिका २. * **अरुणाऽधिकरणे** (३।१।६।१२) गुणस्य विनियोगः कथ्यते। स च श्रुत्या। **वा.** ३।१।४।७ पृ. ६६५. * अरुणाऽधिकरणे गुणानां श्रुतशेषिसंयोगेन व्यवस्था अभिहिता। **के.** * अरुणाऽधिकरणे नियम्यमानस्य स्वशब्देनोपादानं न न्यायशरीरान्तर्गतम्। किंतु यथाकथंचिदुपादानमेव। **बाल.** पृ. १६७. * उक्तं च भवदेवेन **अरुणाधिकरणे** अभिधानशक्तेरेव अभिधेयाविनाभावोपस्थापितार्थतात्पर्यायाः लक्षणाशक्तित्वं इति। **भाट्टालंकारे** पृ. ३१. * ननु अरुणाधिकरणे दण्डविधानमुक्तं भाष्यकारेण ‘उपसर्जनार्थो विधीयते’ इति। उच्यते। प्रकरणात् सर्वार्थे प्राप्तं प्रैषानुवचनयोर्निर्दिश्यते, एवं नास्ति विरोधः। **वा.** ४।२।६।१८ पृ. १२३७. *ननु आग्नेयता इति भावप्रत्ययात् संबन्धस्यापि अविभक्तता उक्ता प्रतिभाति। सा च संबन्धवाच्यत्वस्य अरुणाऽधिकरणे निषेत्स्यमानत्वात् अयुक्ता इत्याशङ्क्याह। **सु.** पृ. ४६२. * नहि विधीयमानावस्थः क्रयः गुणेन संबध्यमानं द्रव्यं विशिनष्टि इत्युक्तं अरुणाऽधिकरणे। **वा.** ३।१।७। १४ पृ. ७१५. * सामानाधिकरण्यगम्यस्यान्वयस्य अरुणाऽधिकरणे वाक्यीयत्वाभिधानात्। **सु.** ३।७ पृ. ७०, * पञ्चमप्रयोगस्थः ‘तद्विशेषणैः संबध्यमानत्वात्’ इति हेतुः, जातिगुणशब्दानां ‘गौः शुक्लः, अरुणा स्त्री’ इति व्यक्तिद्रव्यविशेषणगुणलिङ्गान्वयिनामपि **आकृत्यरुणाऽधिकरणयोः** व्यक्तिद्रव्यवाचित्वनिरासात् अनैकान्तिकः। **पृ.** १४६०. * **यदपि** गम्यमानस्य विशेषणसंबन्धो नास्ति अतस्तत्संबन्धदर्शनात् अभिधानमिति **तदपि** आकृत्यरुणाऽधिकरणयोः उभयथाऽपि दर्शनात् निराकृतम्। **वा.** ३।४।४।१३ पृ. ९४०, * संबन्धश्रवणे सति संशयाक्षेपपरिहारौ **अरुणाऽधिकरणवत्** ( अभिक्रमणाधिकरणे ३।१।१०।१९-२० ) द्रष्टव्यौ, कर्मणोऽमूर्तत्वात् वाक्येन

च स्वसंबन्धोपादानात् । ३।१।१०।१९ पृ. ७२९. * अरुणाऽधिकरणवार्तिके बहुव्रीहिरन्यपदार्थे शक्तिरेव, न तु लक्षणा इति व्यवस्थापितम्। **सोम.** ३।२।२०. * विशेषणविभक्तेः साधुत्वार्थकत्वं इत्यपि असंबद्धं, अभेदार्थकत्वस्य नैयायिकैः, प्रत्येकमन्वयस्य च मीमांसकैः **अरुणाऽधिकरणसिद्धस्याभ्युपगमात्** । **अद्वैत.** २।२।५१८–५१९.

* **न चारुणाधिकरणन्यायोऽत्र ( स्वरे )**, स्वरान्तरस्य स्वाध्यायसिद्धस्य द्वितीयस्य अदृष्टार्थताप्रसङ्गात्। **टुपू.** १२।३।८।२१. ***अरुणाऽधिकरणन्यायेन*** 'ऐककर्म्यान्नियमः स्यात्' ( अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्यात् ३।१।६।१२ ) इत्यनेन आरुण्यस्य एकहायन्येकसंख्ययोश्च अन्योन्यनियमात् समुच्चयः। **बाल.** पृ. १६६. * अरुणाऽधिकरणन्यायेन करणेतिकर्तव्यतयोः संबन्धः । **टुपू.** १।१।१।१ पृ. १६३७. * एकहायनीपिङ्गाक्षीशब्दाभ्यां यौगिकाभ्यां उक्तस्य द्रव्यस्य गोशब्दोक्तायाश्च जातेः अरुणाऽधिकरणन्यायेन समुच्चयः। **बाल.** पृ. १६७. * शब्दवस्तुसामर्थ्ययोर्विरोधे अरुणाऽधिकरणन्यायेन शब्दसामर्थ्यादेव कथंचित् आपादितार्थसामर्थ्यानुगृहीतात् निर्णयो युक्तः (पूर्वपक्षे)। **कौ.** १।४।२०।३० पृ. २९९. * सामानाधिकरण्यं च द्वयोरपि एकविषयत्वे कल्प्येत, तेन यदि हि देवदत्तादयः सामान्यतः पचतिशब्देन अभिहिताः, ततस्तैः सामानाधिकरण्यं लभ्यते । लक्षणया आकृत्यरुणाऽधिकरणोक्तन्यायेन भविष्यति इति चेत् न, तण्डुलस्थेन पाकेन लक्षयितुमशक्यत्वात् । तत्समवेतमेव हि एकत्वादि लक्षयितुं शक्यते, नान्यसमवायि। **वा.** ३।४।४।१२ पृ. ९३०.